# चरक-संहिता।

**महामुनिना भगवताग्निवेशेन प्रणीता महर्षिचरकेण**

**दृढबलेन च प्रतिसंस्कृता**

चरकचतुरानन-श्रीमच्चक्रपाणिदत्तप्रणीतया आयुर्व्वेददीपिकाख्यटीकया
महामहोपाध्याय-श्रीगङ्गाधरकविरत्नकविराजविरचितया जल्प-
कल्पतरुसमाख्यया टीकया च समलङ्कृता।

---


कविराज-श्रीनरेन्द्रनाथसेनगुप्तेन

कविराज-श्रीबलाइचन्द्रसेनगुप्तेन च

सम्पादिता संशोधिता प्रकाशिता च।


चिकित्सित-कल्प-सिद्धिनामकस्थानत्रयसमन्वितः

## तृतीयः खण्डः।


प्रथमं संस्करणम्।

सि, के, सेन एण्ड कोम्पानी लिः।

२९ नं कलुटोला ष्ट्रीट्, कलिकाता।

---

कलिकातानगर्य्यां

कलुटोलावर्त्मावस्थितसप्ततिसंख्यकभवनस्थ-

धन्वन्तरि-इलेकट्रिक्-मेशिनयन्त्र

श्रीरङ्गलालमित्रेण मुद्रिता।

१८५५ तमशकाब्दीयज्यैष्ठपौर्णमास्याम्।

मूल्यमष्टरूप्यकमितम्।

# चिकित्सितस्थानस्य सूचीपत्रम्

## प्रथमोऽध्यायः ।



## द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः।

## षष्ठोऽध्यायः।

## दशमोऽध्यायः।



## एकादशोऽध्यायः।

## त्रयोदशोऽध्यायः।



## चतुर्द्दशोऽध्यायः।

## पञ्चदशोऽध्यायः।

## षोड़शोऽध्यायः।

## सप्तदशोऽध्यायः।



## अष्टादशोऽध्यायः।

## एकोनविंशोऽध्यायः।



## विंशोऽध्यायः।

# चिकित्सितस्थानस्य सूचीपत्रम्।



## चतुर्व्विंशोऽध्याय

## पञ्चविंशोऽध्यायः



## षड्विंशोऽध्यायः।

## ऊनत्रिंशोऽध्यायः ।



## त्रिंशोऽध्यायः ।

# कल्पस्थानस्य सूचीपत्रम् ।

## प्रथमोऽध्यायः ।



## द्वितीयोऽध्यायः ।

## कल्पस्थानस्य सूचीपत्रं समाप्तम्।

---

# सिद्धिस्थानस्य सूचीपत्रम्।

## प्रथमोऽध्यायः।

सिद्धिस्थानस्य सूचीपत्रं समाप्तम्।

# चरक-संहिता।

## चिकित्सितस्थानम्

### प्रथमोऽध्यायः।

अथातोऽभयामलकीयं रसायनपादं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः॥ १॥

गङ्गाधरः—अथ सामान्यतश्चिकित्सायां हेतुभूतानि यावन्ति भवन्ति तावन्ति श्लोक-निदान-विमान-शारीरेन्द्रियाणां स्थानेषु पञ्चसूपदेशानन्तरमतः प्रतिरोगं हेतुलिङ्गौषधज्ञानार्थं स्वस्थातुरपरायणौषधज्ञानार्थञ्च श्लोकस्थाने कृतोद्देशश्चिकित्सितस्थानमारभमाण आचार्य्यस्तत्रोद्दिष्टरसायनाद्यध्यायानुक्रमेण चिकित्सितमुपवर्णयितुं तत्रोद्दिष्टमभयामलकीयादिकरसायनपादानु

चक्रपाणिः—पूर्व्वस्थानोक्तलक्षणाभावेनावधारितायुष्मद्भावेन चिकित्सा धर्म्मार्थयशस्करी कर्त्तव्या इत्यनन्तरं चिकित्साभिधायकं स्थानमुच्यते। रसायनवाजीकरणसाधनमिति यथा चिकित्सोच्यते, तथानन्तरमेव वक्ष्यति; तथापि ज्वरादिचिकित्सायाः प्राक् रसायनवाजीकरणयोर्महाफलत्वेन

चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम्।
प्रायश्चित्तं * प्रशमनं प्रकृतिस्थापनं हितम्॥
विद्याद् भेषजनामानि भेषजं द्विविधञ्च तत्।
स्वस्थस्यौजस्करं † किञ्चित् किञ्चिदार्त्तस्य रोगनुत्॥ २॥

क्रमेण वक्तुं प्राथमिकत्वादभयामलकीयरसायनपादमाह—अथेत्यादि। रसायनाख्यस्याध्यायस्य पादं चतुर्थांशं व्याख्यास्याम इत्यादिकं पूर्व्ववद्व्याख्येयम्॥१॥

गङ्गाधरः—तत्र प्रथमतश्चिकित्सां लक्षयति—चिकित्सितमित्यादि। कित निवासे रोगापनयने संशये चेत्यस्य कितधातो रोगापनयनार्थे स्वार्थे सनन्तत्वे करणे क्तान्तप्रयोगः। रोगापनयनसाधनमित्यर्थः। रोगनिवृत्ति जनकव्यापारकरणमित्यर्थः। अत एव व्याधिहरं व्याधीन् हरति यत् तत्। पथ्यं पथिषु स्रोतःसु हितं। साधनं प्रकरणात् रोगाः साध्यन्ते निवर्त्त्यन्तेऽनेनेति साधनम् औषधम् ओषधिभिर्निष्पन्नं व्याधिहितं, तदुपलक्षणत्वात् सर्व्वं चिकित्सितमौषधं रूढ़म्। प्रायश्चित्तं दुःखेषु प्रायो योऽग्निरिव तत् प्रायश्चित्तं चित्यो ह्यग्निरुच्यते। प्रशमनं प्रकर्षेण शमयति येन तत्। प्रकृतिस्थापनं प्रकृतौ लोकानां धातून् स्थापयति येन तत्। हितं पोषकत्वात्। भेषजं भिषजां रोगापनयनार्थमिदं यत् तत्। भेषजं पर्य्यायैश्चिकित्सितादिभिरेभिः शब्दैर्यत्

आदावभिधानम्, द्वयोरपि रसायनमेव वर्षसहस्रायुर्वृद्ध्यादिकारणतया महाफलमिति तदभिधीयते, तत्रापि चाभयामलकीयश्चिकित्सास्थानार्थसूत्राभिधायकतयाग्रेऽभिधीयते॥ १॥

चक्रपाणिः—तत्रादौ व्यवहारार्थं स्थानाभिधेयस्य भेषजस्य पर्य्यायानाह—चिकित्सितमित्यादि। करोति चैवमादौ प्रधानाभिधेयपर्य्यायाभिधानम्, यथा निदाने हेतुरूपादिपर्य्यायकथनम्; एतच्च पर्य्यायाभिधानं प्राधान्येन चतुष्पादस्यैव भेषजस्य; यदुक्तम्—"चतुष्पादं षोड़शकलं भेषजमिति भिषजो भाषन्ते।" एवमुक्तभेषजाङ्गरूपतया तु स्थावरजङ्गमरूपद्रव्यस्य भेषजस्य भेषजत्वमेवावान्तरस्य व्यवहारकृतं ज्ञेयम्; 'प्रायश्चित्तम्' इति भेषजसंज्ञा प्रायश्चित्तवद्भेषजस्याधर्म्मकार्य्यव्याधिहरत्वेन। द्वैविध्यं विवृणोति—स्वस्थस्येत्यादि। किञ्चिदिति न सर्व्वम्; स्वस्थत्वेन व्यवह्रियमाणस्य पुंसो जरादिस्वाभाविकव्याधिहरत्वेन तथा प्रहर्षव्यवायक्षयित्वानुपचितशुक्रत्वाद्य-

* प्रायश्चित्तमिति च पाठो दृश्यते। † "ऊर्जस्करम्" इति पाठश्चक्रसम्मतः।

**अभेषजञ्च द्विविधं बाधनं सानुबाधनम् ॥ ३ ॥**
**स्वस्थस्यौजस्करं यत् तु तद् वृष्यं तद्रसायनम् ।**
**प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम् ।**
**प्रायःशब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत् ॥ ४ । ५ ॥**

अभिधीयते तत् । भेषजलक्षणमुक्त्वा विभजते भेषजं द्विविधञ्च तदिति । किं द्विविधमित्यत आह —स्वस्थस्येत्यादि । ओजस्करं प्राधान्यादोज इत्युपलक्षणं, तेन ओजआदिकरं पूर्व्वाध्यायेऽप्युक्तं "किञ्चिद् दोषप्रशमनं किञ्चिद्धातुप्रदूषणम् । स्वस्थवृत्तौ मतं किञ्चित् त्रिविधं द्रव्यमुच्यते" इति । तत्र स्वस्थवृत्तौ यदुक्तं तदिदं स्वस्थस्यौजस्करमाह, तत्र दोषप्रशमनं यदुक्तं तदत्रार्त्तस्य रोगनुत् उच्यते ॥ २ ॥

गङ्गाधरः—तत्र यच्च धातुप्रदूषणमुक्तं तदेवात्र विवृणोति —अभेषजञ्चेत्यादि । अभेषजं धातुप्रदूषणं बाधनं सद्यःप्राणहरतया बाधकारकं यथा त्वविज्ञातभेषजं विषाग्निवज्रशस्त्रादिकम् । सानुबाधनं कालानुबन्धेन बाधकरं दूषीविषादि ॥ ३ ॥

गङ्गाधरः—भिन्नाधिकारत्वात् तन्न विवृत्य स्वाधिकारत्वात् स्वस्थस्यौजस्करं विवृणोति—स्वस्थेत्यादि । स्वस्थस्यौजस्करमपि द्विविधं वृष्यं रसायनञ्चेति । प्रतिलोमतन्त्रयुक्त्या रसायनस्य वृष्यतो भेदमाह प्राय इत्यादि । द्वितीयं रसायनं प्रायो रोगाणां प्रायेण प्रशमे मतम्, प्रथमन्तु न तथा । परन्तु यत् तद्वक्ष्यतेऽत्रैव वाजीवेत्यादिना । ननु द्वौ प्रायःशब्दौ किमर्थावित्यत आह — प्राय इत्यादि । प्रायःशब्दो विशेषार्थ एकः परस्तु बाहुल्यार्थोपचरित एवेतीत्युक्तेः । तथा च रसायनं प्राचुर्य्येण रोगाणां विशेषेण प्रशमकं स्वस्थस्यौजस्करञ्च,

प्रशस्तशारीरभावहरत्वेन 'ऊर्ज्जः' प्रशस्तं भावमादधातीति स्वस्थस्योर्ज्जस्करम् ; 'आर्त्तस्य रोगनुद्' इति विशेषणेन ज्वरादिनार्त्तस्य ज्वरादिहरम् ; 'रोगनुद्' इति वचनेनैव आर्त्तविशेषणतायां लब्धायां यद् "आर्त्तस्य' इति करोति, तेन सहजजरादिकृतां पीडामनुद्वेजिकां परित्यज्य ज्वरादिना अस्वाभाविकेन रोगेण पीड़ितस्येति दर्शयति ॥ २ ॥

चक्रपाणिः—भेषजप्रसङ्गात् अभेषजद्वैविध्यमाह—अभेषजमित्यादि । बाधनमिह तदात्वमात्रबाधकम्, यथा—स्वल्पमपथ्यम् ; सानुबाधनञ्च दीर्घकालावस्थायिकुष्ठादिविकारकारि ॥ ३ ॥

चक्रपाणिः—द्विविधं भेषजमुक्तं विभजते, स्वस्थेत्यादि । 'तद्वृष्यं तद्रसायनं प्रायः' इति च्छेदः । तद्वृष्यं प्रायो भवति तथा रसायनं तत् प्रायो भवति ; आर्त्तस्य रोगहरं यद् बाहुल्येन, स्वस्थोर्ज्जस्करमुच्यते, यत् तु द्वितीयमार्त्तरोगहरम्, तत् प्रायेण ज्वरादिशमनं रसायनं वाजीकरणञ्च

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः।
प्रभावर्णस्वरौदार्य्य-देहेन्द्रियबलं परम्॥
वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात्।
लाभोपायो हि शस्तानां रसादीनां रसायनम्॥ ६॥

वृष्यन्तु न प्रायेण रोगाणां विशेषेण प्रशमकं किन्तु प्रशमकमिति रसायन-वृष्ययोर्भेदः। तदाह—द्व्यभयमित्यादि। उभयं रसायनं वृष्यञ्चेति द्वयमेव यस्मादुभयार्थकृत् रोगहरणस्वस्थौजस्करणार्थकृत्, तस्मात् तयोर्भेदार्थं प्रायः-शब्दोऽत्र विशेषार्थ इति बोध्यम्॥ ४। ५॥

गङ्गाधरः—ननु रसायनं किं तत् स्यादित्यत आह—दीर्घमित्यादि। दीर्घमित्यायुरिति योज्यं. लिङ्गविपरिणामात् स्मृत्यादिष्वपि योज्यम्, अन्यथा स्मृतिमेधादिमन्तः सर्व्वे जन्तवो भवन्ति कश्चास्य गुणप्रकर्ष इति। औदार्य्य-मुदारता महत्त्वमित्यर्थः। दीर्घायुःस्मृत्यादयो व्यस्तसमस्ता रसायनाल्लभ्या न तु समस्ता एव; तथा च दीर्घायुःस्मृत्यादिकवत्त्वं रसायनत्वम्। ननु कुतो दीर्घायुःस्मृत्यादिलाभोऽस्मात् कुतो वा रसायनेति-संज्ञत्येत आह—लाभेत्यादि। हि यस्मात्। शस्तानां प्रशस्तानां यथायोगं वक्ष्यमाणशताधिकाद्यायुःपर्य्यन्ततारुण्यावस्थावस्थानानां रसादीनाञ्च रसकार्य्यरसरक्तादीनां धातूनामयनं लाभोपायो रसायनं, तस्माद् दीर्घायुः-स्मृत्यादिकं रसायनाल्लभते। तन्त्रान्तरे तु "यज्जराव्याधिविध्वंसि भेषजं तद्

भवति। यथा—क्षतक्षीणोक्तं सर्पिर्गुडादि रसायनं वृष्यञ्च भवति, तथा पाण्डुरोगोक्तो योगराजो रसायनत्वेनोक्तः, तथा कासाधिकारेऽगस्त्यहरीतकी रसायनत्वेनोक्तेत्याद्यनुसरणीयम्। रसायनोक्ता-नाञ्च ज्वरादिहरत्वमत्र सुव्यक्तमेव रसायनग्रन्थेष्वनुब्रुवते; यद्व्याधिहरं, तद्रसायनम्; किन्तु शरीरसंयोगदार्ढ्याद् दीर्घायुःकर्त्तृत्वमसाधारणधर्म्मयोगादुपचरितं व्याधिहराणां रसायनत्वमिहोच्यते इति। ननु यदि स्वस्थोर्जस्करमपि व्याधिहरं व्याधिहरञ्च स्वस्थोर्जस्करम्, तत् किं 'किञ्चिद्' इति पदेन भेषजकर्म्मव्यवस्थादर्शकेन क्रियताम्? ब्रूमः—बाहुल्येन स्वस्थोर्ज्जस्करत्वं व्याधिहरत्वञ्च व्यवस्थाप्यते, न चेह सर्व्वार्त्तरोगहरस्य स्वस्थोर्ज्जस्करत्वमिति प्रतिज्ञायते, येन पाठासप्तकादीना-मपि रसायनत्वम्; साधारणशक्तित्वादार्त्तरोगहरत्वेन यदुच्यते, तदपि रसायनं वाजीकरणञ्च भवतीति लवमात्रोपदर्शनं क्रियते, तत् स्वस्थार्त्तयोरुभयार्थकर्त्तृत्वम्; 'प्रायः'शब्दतात्पर्य्यं विवृणोति—प्राय इत्यादि। विशेषार्थ इति बाहुल्यार्थ इत्यर्थः॥ ४। ५॥

चक्रपाणिः—रसायनकार्य्यमाह—दीर्घमित्यादि। प्रभादीनां त्रयाणामौदार्य्यं योजनीयम्;

अपत्यसन्तानकरं यत् सद्यः सम्प्रहर्षणम् ।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
जीर्य्यतोऽप्यक्षयं शुक्रं फलवद् येन दृश्यते ॥
प्रभूतशाखः शाखीव येन चैत्यो यथा महान् ।
भवत्यसौ * बहुमतः प्रजानां सुबहुप्रजः ॥

रसायनम्" इति। तत् कश्चिद् व्याचष्टे—जराव्याध्योर्विध्वंसीति, तन्न, दीर्घायुः-स्मृत्यादिकररसायनेऽव्याप्तेः। यत् तु जरैव व्याधिर्जराव्याधिस्तस्य विध्वंसीति, तन्न, व्याधिहररसायनेऽव्याप्तेः। जराशब्देनात्र दीर्घायुःस्मृत्यादिकमुच्यते चेत् तदा पूर्व्वकल्पः साधुः साधुश्च येनैव जरा विध्वस्यते तेनैवावश्यं दीर्घायुःस्मृत्यादयो जन्यन्ते इति व्याप्त्या जराविध्वंसकरत्वेनैवैकान्ततो दीर्घायुःस्मृत्यादिकरत्वप्राप्तेरिति। कपालरञ्जनादिकन्तु भेषजं न रसायनं, पलितमात्रं हि न जरा, परन्तु वलिपलितादि इति ॥ ६ ॥

गङ्गाधरः—रसायनशब्दार्थमुक्त्वा वृष्यार्थमाह—अपत्येत्यादि। अपत्यानां सन्तानं समूहस्तत्करं यत्। यत् सद्यः सम्प्रहर्षणं सद्यः सम्यक् प्रकर्षेण हर्षयति पुनःपुनः कामोद्दीपनेन ग्राम्यधर्म्मशक्त्या लिङ्गोद्गमं हर्षं जनयति। येन कृतव्यवायोऽपि पुनः कामोद्दीपनेनाप्रतिहतः पुनर्ग्राम्यधर्म्मे जातशक्तिः वाजीवाश्व इवातिबलोऽतिशयकामवेगः स्त्रियो याति नारीर्गच्छति सुतरामतिरति-शक्त्या स्त्रीणामतिशयेन प्रियो येन भवति। येन च भेषजेन जीर्य्यतोऽपि जराम् आपद्यमानस्यापि शुक्रं पुनःपुनः कृतव्यवायत्वेऽपि अक्षयं सद् उपचीयते वर्द्धते—यनस्तु तदुपदेशः कः। न केवलमक्षयं शुक्रमुपचीयते येन च भेषजेन शुक्रं फलवत् पुत्राद्यपत्यफलजनकं दृश्यते। चैत्यो यथा प्रभूतशाखः शाखी यथा च महान प्रजानां बहुमतः बहुभिः पूजितो भवति, तथासौ पुमान येन भेषजेन

वाक्सिद्धिः,—यदुच्यते तदवश्यं भवतीत्यर्थः। प्रणतिर्लोकवन्द्यता। कथमेतद्रसायनेन क्रियते इत्याह—लाभेत्यादि। रसादिग्रहणेन स्मृत्यादयोऽपि गृह्यन्ते ॥ ६ ॥

चक्रपाणिः—वाजीकरणकार्य्यमाह—अपत्येत्यादि। अपत्यसन्तानोऽपत्यपरम्परा, तेन पुत्र-पौत्रकरमित्यर्थः, वाजीकरणजनितात् शुक्राज्जातः पुत्रः पुत्रजननसमर्थो भवतीत्यर्थः। अति-

* भवत्यर्च्यो इति पठ्यते चक्रेण।

सन्तानमूलं येनेह प्रेत्य चानन्त्यमश्नुते।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत् ॥ ७ ॥
स्वस्थस्यौजस्करं त्वेतद् द्विविधं प्रोक्तमौषधम्।
यद् व्याधिनिर्घातकरं वक्ष्यते तच्चिकित्सिते ॥
चिकित्सितार्थ एतावान् विकाराणां यदौषधम्।
रसायनविधिश्चाग्रे वाजीकरणमेव च ॥ ८ ॥
अभेषजमिति ज्ञेयं विपरीतं यदौषधात्।
तदसेव्यं निषेव्यन्तु प्रवक्ष्यामि यदौषधम् ॥ ९ ॥

सुबहुप्रजो भवन् बहुमतो भवति, यच्च सन्तानमूलं समूहापत्यादीनां मूलम्। येन इह लोके प्रेत्य च परं लोकं गत्वा चानन्त्यमच्युतं यशः श्रियं बलं पुष्टिश्चाश्नुते, तदेव वाजीकरणं वृष्यमित्यर्थः। तथा चापत्यसन्तानादिकरत्वं वाजीकरणत्वम्। सुश्रुतेऽप्युक्तम्। "सेवमानो यदौचित्याद् वाजीवात्यर्थवेगवान्। नारीस्तर्पयते तेन वाजीकरणमुच्यते।" ननु कुतो वाजीकरणसंज्ञेत्यत आह— येनेत्यादि। अधिकं पुनःपुनर्नारीषु व्रजेत्। व्यज्यते इति पाठे येन नारीषु सामर्थ्यं मैथुनशक्तिरधिकं व्यज्यते इत्यर्थः। येनावाजीव नरो वाजीव क्रियतेऽवाजिनं वाजिनमिव करोति यत् तद् वाजीकरणमिति। वाजः शुक्रं तद् अस्यास्तीति वाजी, अवाजिनं वाजिनं करोतीति वाजीकरणमित्यन्ये। स्वस्थेत्यादिना उपसंहारः ॥ ७-९ ॥

प्रियत्वञ्चेहोपचितशुक्रतया निरन्तरव्यवायकर्तृत्वात्; यदुक्तम्,—"विरूपमपि योद्धारं भृत्यमिच्छन्ति पार्थिवाः। व्यवायव्यायतं मूर्खं धृष्टं पतिमिव स्त्रियः"। उपचीयत इति पुष्टिं प्राप्नोति; अक्षयमिवाक्षयम्। फलवदिति गर्भजनकम्। चैत्यो देवतायतनम्। अर्चणीयोऽर्च्यः। आनन्त्यमिवानन्त्यं दीर्घसन्तानतामित्यर्थः। चिकित्सित इति ज्वरादिचिकित्सिते। ननु रसायनवाजीकरणे अपि ज्वरादिचिकित्सिते एव, तत् किं विशिष्योच्यते—'वक्ष्यते तच्चिकित्सिते' इत्यादि, सत्यम्, रसायनं वाजीकरणञ्च ज्वरादिव्याधिहरत्वात् 'चिकित्सित' शब्देनोच्यत इति। अथ व्याधिहरत्वाच्चिकित्सिते वक्तव्यत्वाच्च, रसायनवाजीकरणे क्व नु वक्तव्ये इत्याह— रसायनेत्यादि। विधिर्विधानं रसायनाभिधानमित्यर्थः। अग्र इत्यनन्तरम्। वाजीकरणञ्चाग्रेऽभिधास्यत इति शेषः। अभेषजमपि पूर्वोद्दिष्टं विवृणोति—अभेषजमित्यादि। विपरीतं रोगजननलक्षणार्थकारि ॥ ७—९ ॥

रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकञ्चैव वातातपिकमेव च ॥ १० ॥
कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते ।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्म्मणाम् ॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे ।
दिशि पूर्व्वोत्तरस्याञ्च सुभूमौ कारयेत् कुटीम् ॥

गङ्गाधरः—अथ रसायनप्रयोगविधोच्यते—रसायनानामित्यादि। कुटीप्रावेशिकमिति निर्व्वातातपगृहं कुटी। कुटीप्रवेशेन निर्वृत्तः प्रयोगः कुटीप्रावेशिकस्तं, वातातपिकमिति वातातपोपसेवनेनापि निर्वृत्तः प्रयोगो वातातपिकस्तं विदुरित्यन्वयः। अत्राचार्य्येणासम्यगुपयोगाभिप्रायेण सर्व्वेषामधिकार इति कृत्वा रसायनाधिकारिणो नोक्ताः। सुश्रुतेन सम्यगुपयोगप्रतिषेधाभिप्रायेण अनधिकारिणो रसायनस्योक्ताः। तद् यथा—अथ सप्त पुरुषा रसायनं नोपयुञ्जीरन्। तद् यथा। अनात्मवान् अलसो दरिद्रः प्रमादी व्यसनी पापकृद् भेषजापमानी चेति। सप्तभिरेव कारणैर्न सम्पद्यते। अज्ञानादनारम्भादस्थिरचित्तत्वाद् दारिद्र्यादनायत्तत्वादधर्म्मादौषधालाभाच्चेति। एभ्योऽन्येऽधिकारिण इति बोध्यम् ॥ १० ॥

गङ्गाधरः—ननु कथं कुटीप्रावेशिकं प्रयुञ्जीतेत्यत आह—कुटीत्यादि। नृपेत्यादि। नृपादीनां निवासे पुरे नगरे। निर्भये सर्पचौरदस्युवह्न्यादिभयरहिते शस्ते जलाद्यापन्ने प्राप्योपकरणे यदा यदा यद् यद् उपकरणमावश्यकं भवत्युपयोगे तत्तत् तदा तत्रैव प्राप्यं यत्र तस्मिन् पुरे नृपादिवासनगरे हि वणिक्प्रभृतिबहुप्रसारिजनसद्भावादित्यर्थः। तथाविधे च नगरे तन्नगरात् पूर्व्वोत्तरस्यां पूर्व्वस्यां वोत्तरस्यां वा दिशि सुभूमौ साधुभूभागयुक्ते देशे कुटीं कारयेत्। भूमिप्रविभागः सुश्रुतेनोक्तः। श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत, तस्यां जातमपि क्रिमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं

चक्रपाणिः—कुटीप्रवेशेन यत् क्रियते, तत् कुटीप्रावेशिकम्; वातातपसेवयापि यत् क्रियते

विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम्।
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम्॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम्।
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम्॥ ११॥

पृथ्ववगाढ़मूलमुदीच्याश्च औषधमाददीत। इत्येवं भूमिपरीक्षाविशेषः सामान्यः। विशेषतस्तु तत्राश्मवती स्थिरा गुर्व्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा। स्निग्धा शीतलासन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाम्बुगुणभूयिष्ठा। नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहा अग्निगुणभूयिष्ठा। रूक्षा भस्म-रासभ-समवर्णा तनुवृक्षकोटराल्परसवृक्षप्रायाऽनिलगुणभूयिष्ठा। मृद्वी समाश्वभवत्यव्यक्तरसजला सर्व्वतोऽसारवृक्षा महापर्व्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठेति। एतद् भूमिप्रविभागवचनं सुश्रुतस्य द्रव्यग्रहणार्थमपि गुणज्ञापकं भवति, तेन तत्पुरुषस्योपयुक्तगुणवद्भूमिरनेनोपदेशेन परीक्ष्या भवति।

ननु कुटीं कीदृशीं कारयेदित्यत आह—विस्तारेत्यादि। कुटीं विस्तारश्च तिर्य्यक्। उत्सेधात् उच्चतः सम्पन्नां सम्पूर्णरूपेण गुणवतीम्। त्रिगर्भां वामदक्षिणतः सम्मुखपश्चाद्भागतश्च त्रीणि गर्भकोष्ठानि यस्यास्ताम्। इति चतसृभिर्भित्तिभिस्त्रिकोष्ठा भवति। सूक्ष्मलोचनाम् ऊर्द्ध्वतो भित्त्यां प्रकाशार्थम् अतिक्षुद्रक्षुद्रच्छिद्रवतीं बहुतरवायुप्रवेशानर्हच्छिद्रवतीम्। घनभित्तिं दृढ़भित्तिम् ऋतुसुखां यदा यो वा ऋतुः स्यात् तत्रैव सुखमुपलभ्यते यत्र ताम्। सुस्पष्टां बृहत्कोष्ठगर्भत्वेन सप्रकाशरूपाम्। अशस्तानां शब्दादीनामगम्यामिति कुट्या बृहत्त्वगुणेन तत्स्थानगुणेन च बोध्यम्। यत्र कुटीं कुर्य्यात् तत्र निकटेऽप्रशस्तशब्दादिकारिजनपश्वादिभावा न वर्त्तन्त इति भावः। यद्यागन्तुकाश्चेदशस्तशब्दादयः स्युस्तदा बृहत्प्रमाणगुणेन कुट्या निवार्य्या भवन्तीति भावः। सज्जवैद्यादिकां तत्र कुट्यां वैद्यौषधद्विजान् सर्व्वदा वासयेत्। औषधन्तु तस्य संशोधनादिक्रियार्थ-तद्व्यापत्प्रतीकारार्थ-तत्पुरुषोपभोगार्थादिकं यावद् भवति द्विजश्चाथर्व्ववेदविन्माङ्गलिकः, वैद्यश्च प्राणाभिसरः स्वगुणसम्पन्नः॥ ११॥

तद् वातातपिकम्। त्रिगर्भां प्रथममेकं गृहम्, तस्याभ्यन्तरे द्वितीयम्, तस्याभ्यन्तरे तृतीयम्, एवं त्रिगर्भास्त्रयो गर्भा अन्तराणि यस्यां सा। सूक्ष्मलोचनामिति अल्पद्वारजालिकाम्।

अथोदगयने शुक्ले तिथिनक्षत्रपूजिते ।
मुहूर्त्तकरणोपेते प्रशस्ते कृतवापनः ॥
धृतिस्मृतिबलं कृत्वा श्रद्दधानः समाहितः ।
विधूय मानसान् दोषान् मैत्रीं भूतेषु चिन्तयन् ॥
देवताः पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम् ।
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम् ॥ १२ ॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः ।
रसायनं प्रयुञ्जीत तत् प्रवक्ष्यामि शोधनम् ॥ १३ ॥

गङ्गाधरः—अथेत्यादि। एवंविधां कुटीं कृत्वाऽथानन्तरं उदगयन उत्तरायणे शुक्ले पक्षे तिथिनक्षत्रपूजिते शुभतिथिशुभनक्षत्राभ्यां पूजिते शुभे मुहूर्त्तकरणोपेते शुभलग्नकरणयुक्ते प्रशस्ते चन्द्रताराादिशुद्धदिने कृतवापनः कृतक्षौरकर्म्मा धृतिस्मृतिबलं कृत्वा साहसं कृत्वा श्रद्दधानः श्रद्धान्वितः सन् समाहितः अवधानवान् सन् मानसान् दोषान् रागद्वेषादीन् विधूय त्यक्त्वा भूतेषु सर्व्वेषु प्राणिषु मैत्रीं मित्रतां चिन्तयन् देवता गणेशादीन् देवानग्रे पूजयित्वा ततो द्विजातींश्च ब्राह्मणादीन् यथार्हं पूजयित्वा देवगोब्राह्मणान् प्रदक्षिणं कृत्वा ततस्तां कुटीं प्रविशेत् ॥ १२ ॥

गङ्गाधरः—ननु कुटीं प्रविश्य किं कुर्य्यादित्यत आह—तस्यामित्यादि। संशोधनैर्वक्ष्यमाणैरत्र हरीतक्यादिभिरपरैर्वा तद्विधैरतिदोपसद्भावे तु पञ्चभिश्च कर्म्मभिः शुद्धः सन् पुनर्जातबलः सन् सुखी यदा भवति तदा रसायनं प्रयुञ्जीत, न त्वजातबलो दुःखी वा। संशोधनशुद्धवचनेन बालवृद्धयो रसायनप्रयोगे प्रतिषेधो बोध्यः, संशोधनस्य बालवृद्धे प्रतिषेधात्। सुश्रुतेऽप्युक्तम्—पूर्व्वे वयसि मध्ये वा मनुष्यस्य रसायनम्। प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा। अविशुद्धशरीरस्य युक्तो रासायनो विधिः। न भाति वाससि म्लिष्टे रङ्गयोग इवार्पितः॥ इति। एवमन्यत्र जरापक्कशरीरस्य व्यर्थमेव रसायनम् इति। तथा च

सज्जा वैद्यादयः स्थिता यस्यां सा तथा। शुक्ले शुक्लपक्षे। नक्षत्रपूजित इति शुभनक्षत्रयोगात् पूजिते। कृतवापन इति कृतक्षौरः। मानसान् दोषानिति कामक्रोधादीन्। संशोधनैरिति वमनविरेचनास्थापनशिरोविरेचनैः। सुखीत्यरोगः। जातबल इति संशोधनायासहतबलतया संसर्जनादिक्रमेण पुनर्जातबलः। यद्यपीह संशोधनैरिति बहुवचनप्रयोगात् सर्व्वाण्येव संशोधनानि सम्मतानि,

हरीतकीनां चूर्णानि सैन्धवामलकं गुड़म्।
वचां विड़ङ्गं रजनीं पिप्पलीं विश्वभेषजम्।
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः॥ १४॥
तेन शुद्धशरीराय कृतसंसर्ज्जनाय च।
त्रिरात्रं यावकं दद्यात् पञ्चाहं वापि सर्पिषा।
सप्ताहं वा पुराणस्य यावच्छुद्धेः सुवर्च्चसः॥ १५॥

यावनारम्भात् प्रभृति षष्टिवर्षवयो यावद्रसायनं प्रयुञ्जीतेति बोध्यम्। ननु वृद्धस्य यदि न रसायनविधिस्तत् कथं भार्गवरसायनादौ श्रूयते—"लभेत जीर्णोऽपि कुटीप्रवेशात् जराकृतिं रूपमपास्य सर्व्वम्, बिभर्त्ति रूपं नवयौवनस्य" इति? उच्यते, चरकाचार्य्यस्याभिप्रायोऽयं न खलु रसायनप्रयोगो व्यथः स्यात् वृद्धानां बालानाञ्च संशोधनासहत्वे रसायनप्रयोगासम्यक्त्वम्। यस्तु वृद्धो बालो वा नातिबलहीनः संशोधनसहः स स रसायनाधिकारी चेत्यतः पूर्व्वे वयसीत्यादि-नियमो नोक्तः, सुश्रुतादौ पुनरेवमेवाभिप्रायः, न तु बालवृद्धौ प्रतिषिद्धौ प्रयोग-सम्यक्तानपायाभिप्रायेण पूर्व्वे वयसीत्यादुरुक्तम्, तथा च च्यवनादिवृद्धानां संशोधनसहत्वाद् रसायनेन युवत्वं बभूव का च तत्रानुपपत्तिः। न च तपःप्रभाव-सहायत औषधस्याशीर्व्वादे भेषजफलत्वेन वक्तुमुचिता स्यादिति॥ १३॥

गङ्गाधरः—ननु शोधनं किमित्यत आह हरीतकीत्यादि। गुड़ं पुरा-तनमैक्षवं विड़ङ्गमपि पुरातनं पिप्पलीञ्च पुरातनीम्। यदुक्तम्—द्रव्याण्यभि-नवान्येव प्रशस्तानि क्रियाविधौ। ऋते गुड़घृतक्षौद्र-धान्यकृष्णाविड़ङ्गतः॥ इति। स्नेहस्वेदोपपादितो जन्तुर्यथादोषबलं हरीतकीचूर्णानि सैन्धवादिविश्वभेषजान्तैः अष्टभिः समानि बहुवचनात्। उष्णोदकेन पिबेत्। तेन विरेचनेन शुद्धशरीराय कृतसंसर्ज्जनाय जातायां बुभुक्षायां पीतपेयादिकाय तस्मै पुरुषाय परं त्रिरात्रं पञ्चाहं सप्ताहं वापि सर्पिषा संस्कृतं पुराणस्य यावकं पुराणयवस्य यवागू

तथापीह रसायने विशेषेण यौगिकहरीतक्यादिप्रयोग एवोक्तः। अन्ये तु हरीतक्यादिप्रयोगेणैव संशोधनं कर्त्तव्यमित्याहुः। संशोधनैरिति बहुवचनं पुनर्यावच्छुद्धैर्हरीतक्यादिप्रयोगस्यैव करणं दर्शयति॥ १०—१३॥

चक्रपाणिः—यावकमिति यवान्नम्; त्रिरात्रादिविकल्पत्रयं हीनमध्योत्तमशुद्धिविषयम्। यद्यपि द्रव्यान्तराणि दशवर्षशतायुष्कर-रसायनाधिकृतानि सन्ति, तथापि हरीतक्यामलकयोरेव रोगहरत्वा-

शुद्धकोष्ठन्तु तं ज्ञात्वा रसायनमुपाचरेत् ।
वयःप्रकृतिसात्म्यज्ञो यौगिकं यस्य यद् भवेत् ॥ १६ ॥
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ।
दोषानुलोमिनीं लघ्वीं विद्याद् दीपनपाचनीम् ॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम् ।
सर्व्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम् ॥ *

दद्यात् वर्च्चसः सुशुद्धेर्यावत् । ततस्तं पुरुषं शुष्ककोष्ठं जातबल सुखिनञ्च ज्ञात्वा स्वस्वप्रकृतिञ्च ज्ञात्वा यस्य यद् रसायनं यौगिकं भवेत् तच्च ज्ञात्वा तदेव रसायनम् उपाचरेत् । इति सर्व्वरसायनप्रयोगे पूर्व्वकर्त्तव्यविधिः ॥ १४—१६ ॥

गङ्गाधरः—प्राक् प्रयोगविधिमुपदिश्य प्रयोक्तुं हरीतकीगुणमाह—हरीतकीमित्यादि । तन्त्रान्तरे तु हरस्य भवने जाता हरितेति स्वभावतः । हरते सर्व्वरोगांश्च तेन नाम्ना हरीतकी ॥ पीयूषं पिबतस्त्रिपिष्टपपतेर्ये बिन्दवो निर्गतास्तेभ्योऽभूदभया दिवाकरकरश्रेणीव दोषापहा । कालिन्दीव बलप्रमोदजननी गौरीव शूलिप्रिया वह्नेर्द्योतकरी हुताहुतिरिव क्षौणीव नानारसा ॥ जीवन्ती रोहिणी चैव विजया चाभयामृता । पूतना कालिका चेति पथ्या सप्तविधा मता ॥ सुवर्णवर्णा जीवन्ती रोहिणी कपिलद्युतिः । अलाबूवृन्ता विजया पञ्चांशा चाभया स्मृता । स्थूलमांसामृता ज्ञेया पूतनाऽस्थिमती मता । त्र्यंशा च कालिकेत्येवं सप्तजातिर्हरीतकी । स्नेहपाकेषु सर्व्वेषु जीवन्ती च प्रशस्यते । रोहिणी क्षतरोगेषु विजया सर्व्वकर्म्मसु । पूतना लेपने ज्ञेया अमृता तु विरेचने । अभया नेत्ररोगेषु गन्धयुक्तौ तु कालिका ॥ इति जातिभेदेन कर्म्मभेदवचनं प्राचुर्य्याभिप्रायेण, परन्तु सर्व्वासामेव सर्व्वकर्म्मकरत्वं:लवणवर्ज्जपञ्चरसत्वादुष्णवीर्य्यत्वात् प्रभावाच्च। तस्मादत्र न जातिविशेषो विवक्षितः उष्णामुष्णवीर्य्यां प्रभावात् । अलवणां लवणरसरहितां मधुराम्लकटुतिक्तकषायरसां शिवां मङ्गलकरीं वयसः स्थापनीं वयः-

युष्करत्वरूपोभयधर्म्मयोगादध्यायादौ गुणकर्म्मभ्यामुच्यते ; तत्रापि "यद्यपि आमलकं वयःस्थापनानाम्" इत्युक्तम्, तथापि रोगहरत्वे हरीतक्येवोत्कर्षवतीति कृत्वा हरीतक्यग्रेऽभिहिता । हरीतक्यादिषु पञ्चरसत्वाद्युत्पादोऽदृष्टवशाद् भूतसन्निवेशविशेषप्रभावकृतः ; तेन नात्रोपपत्तयः क्रमन्ते ।

* बुद्धिस्मृतिबलप्रदामिति चक्रधृतः पाठः ।

कुष्ठं गुल्ममुदावर्त्तं शोषं पाण्डामयं मदम्।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम्॥
हृद्रोगं सशिरोरोगमतीसारमरोचकम्।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम्॥
कफप्रसेकं वैस्वर्य्यं वैवर्ण्यं कामलां क्रिमीन्।
श्वयथुं तमकं छर्दिं क्लैब्यमङ्गावसादनम्॥
स्रोतोविबन्धान् विविधान् प्रलेपं हृदयोरसोः।
स्मृतिबुद्धिप्रमोहञ्च जयेच्छीघ्रं हरीतकी॥ १७॥
अजीर्णिनो रुक्षभुजः स्त्रीमद्यविषकर्षिताः।
सेवेरन्नाभयामेते क्षुत्तृष्णोष्णार्दिताश्च ये॥ १८॥
तान् गुणांस्तानि कर्म्माणि विद्यादामलकेष्वपि।
यान्युक्तानि हरीतक्या वीर्य्यस्य तु विपर्य्ययः॥ १९॥

शब्देन प्राधान्याद् यौवनमुच्यते। शोषं राजयक्ष्माणम्। नवं कफप्रसेकं नवप्रतिश्यायम्। स्मृतिबुद्ध्योः प्रमोहं स्मृतिप्रमोहं बुद्धिप्रमोहञ्च॥ १७।१८॥

गङ्गाधरः—हरीतकीगुणकर्म्मणी उक्त्वा आमलकीगुणकर्म्मणी आह—तान् गुणानित्यादि। हरीतक्या ये गुणाः पञ्चरसा लघुत्वादय उक्ता यानि च कर्म्माणि शिवत्वदोषानुलोमित्वदीपनपाचनत्वायुष्यत्वादीन्युक्तानि तान् गुणान् तानि च कर्म्माण्यामलकेष्वलवणेषु विद्यात्। वीर्य्यस्य तु विपर्य्ययः। हरीतक्या वीर्य्यमुष्णमामलकस्य तु तद्विपर्य्ययः शीतं वीर्य्यमिति।

शिवामिति कल्याणकारिणीं प्रशस्तगुणयुक्तत्वात्। सर्व्वरोगप्रशमनीमिति संयोगसंस्कारादिना। सर्व्वरोगहरत्वमभिधायापि कुष्ठादिहन्तृत्वाभिधानं विशेषेण कुष्ठादिहन्तृत्वोपदर्शनार्थम्। प्रवर्त्तकत्वेऽप्यतीसारग्रहणीहरत्वं विरुद्धदोषप्रवर्त्तकतया ज्ञेयम्, यदुक्तम्—"स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते। अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत्॥" इति। बुद्धिस्मृतिप्रदत्वमभिधायापि

अतश्चामृतकल्पानि विद्यात् कर्म्मभिरीदृशैः।
हरीतकीनां शस्यानि भिषगामलकानि च * ॥ २० ॥
ओषधीनां परा भूमिर्हिमवान् शैलसत्तमः।
तस्मात् फलानि तज्जानि ग्राहयेत् कालजानि तु ॥
आपूर्णरसवीर्य्याणि काले काले यथाविधि।
आदित्यसलिलच्छाया-पवनप्रीणितानि च ॥
यान्यदग्धान्यपूतीनि निर्व्रणान्यगदानि च।
तेषां प्रयोगं वक्ष्यामि फलानां कर्म्म चोत्तमम् ॥ २१ ॥

ततो हेतोश्च हरीतकीनां शस्यानि फलास्थिविवर्ज्जितवल्कलरूपाणि, आमलकानि च आमलकीशस्यानि च अमृतकल्पानि विद्यात् ॥ १९ । २० ॥

गङ्गाधरः—हरीतक्यामलकीफलानि च कीदृशरूपाणि ग्राह्याणि प्रशस्तानि निरुक्तगुणकर्म्मवन्ति भवन्तीत्यभिप्रायेणाह—ओषधीनामित्यादि। परा सर्व्वभूमिभ्य उत्कृष्टा भूमिरुत्पत्तिस्थानम्। तस्माद्धिमवतः शैलसत्तमात् तज्जानि हिमवतापर्व्वतजवृक्षजानि स्वकालजानि न त्वकालजानि काले परिणतिकाले आपूर्णरसवीर्य्याणि सम्यग् जातरसवीर्य्याणि न त्वकाले आपूर्णरसवीर्य्याणि न वाप्यजातरससम्पूर्णरसवीर्य्याणि काले स्वस्वकाले आदित्यसलिलच्छायापवनैः प्रीणितानि च दिवा सूर्य्यकरैः जुष्टानि वर्षासु वृष्टिजलजुष्टानि रात्रौ चन्द्रकरजुष्टानि तत्पत्रादिच्छायाजुष्टानि च कदाचित् पवनजुष्टानि च प्रायेण यानि प्रीणितानि भवन्ति तानि अदग्धानि वनाग्निदग्धानि न चेद्भवन्ति अपूतीनि जलकर्दमादितो वान्यथा वा क्लिन्नानि भूतानि न चेत्, निर्व्रणानि पक्ष्यादिभिः क्षतानि न चेत्, अगदानि केनचित् फलव्याधिनानुपतापितानि चेत्, तदा तानि हरीतक्यामलक्योः फलानि यथाविधि शुचिर्भूत्वा ग्राहयेत्। तेषामित्यादि। तेषां फलानां हरीतक्यामलक्योः फलानां प्रयोगं रसायनप्रयोगं वक्ष्यामि उत्तमञ्च कर्म्म वक्ष्यामि ॥ २१ ॥

स्मृतिबुद्धिप्रमोहहरत्वाभिधानं तत्र विशिष्टशक्त्युपदर्शनार्थम्। वीर्य्यस्य विपर्य्ययः इत्यनेनामलकस्य शीतवीर्य्यत्वमुक्तम्। शस्यानीति अस्थिरहितानि फलानि ॥ १४—२० ॥

चक्रपाणिः—यद्यपि "हिमवानौषधभूमीनाम्" इत्युक्तम्, तथापि रसायने हिमवतः प्रभावेणैवमेव भेषजानि ग्राह्याणीति दर्शयितुम्, 'औषधीनाम्' इत्याद्यभिधानम्; काले काले इति फलपाककालमित्यर्थः; यथाविधीति यथा भेषजग्रहणं मङ्गलदेवतार्च्चनादिपूर्व्वकम्, तथावश्यं रसायनं कर्त्तव्यम्। अगदानीत्यनेन पवनदहनाद्यदोषं फलस्य दर्शयति ॥ २१ ॥

* "आमलकस्य च" इति वा पाठः।

पञ्चानां पञ्चमूलानां भागान् दशपलोन्मितान्।
हरीतकीसहस्रञ्च त्रिगुणामलकं नवम्॥
विदारीगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम्।
विद्याद् विदारीगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम्॥
बिल्वाग्निमन्थश्योनाकं काश्मर्य्यमथ पाटलीम्।
पुनर्नवां सूर्पपर्ण्यौ बलामेरण्डमेव च॥
जीवकर्षभकौ मेदां जीवन्तीं सशतावरीम्।
शरेक्षुदर्भकाशानां शालीनां मूलमेव च॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत्।
भागान् यथोक्तान् तत् सर्व्वं साध्यं दशगुणेऽम्भसि॥

गङ्गाधरः—प्रयोगमाह—पञ्चानामित्यादि। पञ्चानां पञ्चमूलानामत्रैव वक्ष्यमाणानां मिलितानां पञ्चपञ्चानां दशपलोन्मितान् भागान् समुदायेन पञ्चाशत्-पलोन्मितान्, हरीतकीसहस्रम् आकृतिमानेन सहस्रगुड़कानि हरीतकीफलानि, त्रिगुणामलकं त्रिगुणं हरीतकीसहस्रात् त्रिगुणमामलकं यत्र तच्च नवं न तु पुराणं, तेनामलकीफलानि सहस्रत्रयगुड़कोन्मितानि इत्युक्तान् भागान् पञ्चानां पञ्चमूलानामुपकल्पयेत्। ननु कानि पञ्च पञ्चमूलानीत्यत आह—विदारीत्यादि। विदारीगन्धा शालपर्णी निदिग्धिका कण्टकारी श्वदंष्ट्रा पञ्चमी यत्र तं गणं विदारिगन्धाद्यं कनीयः पञ्चमूलं विद्यात्। बिल्वेत्यादिपञ्चकं बिल्वादिगणं वृहत्पञ्चमूलं विद्यात्। पुनर्नवामिति श्वेतपुनर्नवां सूर्पपर्ण्यौ मुद्गपर्णीमाषपर्ण्यौ बलां वाट्यालकम् एरण्डं गन्धर्व्वहस्तकम्। इत्येतत् पञ्चकं गणं वल्लीपञ्चमूलम्। जीवकेत्यादिकं पञ्चकं गणं कण्टकीपञ्चमूलम्। शरेत्यादिकं पञ्चकं तृणपञ्चमूलम्, अत्र दर्भः कुशः। मूलमेव चेति विदारिगन्धादिभिः सर्व्वैः योज्यम्। इत्येषां पञ्चानां पञ्चमूलानां पञ्चविंशतिद्रव्याणां यथोक्तान् भागान् प्रत्येकं पलद्वयोन्मानेन पञ्चकस्य दशपलोन्मितान् भागान् मिलित्वा पञ्चाशत्-

चक्रपाणिः—पञ्चानामित्यादौ प्रतिद्रव्यं दशाम्रग्रहणम्, उक्तं हि जतूकर्णे—"इति पञ्चपञ्चमूलानि, तेषां प्रतिद्रव्यं दशपलानि" इति। हरीतकीसहस्रमिति हरीतकीफलसहस्रम्; सूर्पपर्ण्यौ

दशभागावशेषन्तु पूतं तद् ग्राहयेद् रसम् ।
हरीतकीश्च ताः सर्व्वाः सर्व्वाण्यामलकानि च ॥
तानि सर्व्वाण्यनस्थीनि फलान्यापोथ्य कूर्च्चनैः ।
विनीय तस्मिन् निर्य्यूहे चूर्णानीमानि दापयेत् ॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च ।
मुस्तानां सविड़ङ्गानां चन्दनागुरुणोस्तथा ॥
मधुकस्य हरिद्राया वचायाः कनकस्य च ।
भागांश्चतुःपलान् कृत्वा सूक्ष्मैलायास्त्वचस्तथा ॥
सितोपलासहस्रञ्च चूर्णितं तुलयाधिकम् ।
तैलस्य द्व्याढ़कञ्चात्र दद्यात् त्रीणि च सर्पिषः ॥
साध्यमौडुम्बरे पात्रे तत् सर्व्वं मृदुनाग्निना ।
ज्ञात्वा लेह्यमदग्धञ्च शीतं चौद्रेण संसृजेत् ॥

पलोन्मितानुपकल्पयेत्। तत् सर्व्वं पञ्चाशत्पलोन्मितपञ्चविंशतिकं द्रव्यं कुट्टयेत्, तत्र तद्दशगुणं पञ्चशतपलोन्मितमम्भः पलोल्लेखाद् द्विगुणीकृतं दत्त्वा पचेत्। हरीतकीसहस्रमेकमामलकीनां त्रीणि सहस्राणि च तुलयित्वा यावन्मितानि भवन्ति तद्दशणगुणं तेषां नवत्वेनार्द्रत्वात् द्विगुणीकृतं यावन्मितञ्च भवति सर्व्वमम्भ एकीकृत्य तत्राम्भसि तत् सर्व्वं कुट्टितपञ्चपञ्चमूलं निक्षिप्य गुड़करूपाणि च हरीतक्यामलकफलानि चतुःसहस्राणि वस्त्रपोट्टलं वद्धा तत्र जले निक्षिप्य साध्यं, मन्दमन्दाग्निना क्वाथार्थं पाक्यं दशभागावशेषन्तु तत् क्वथितं जलं पूतं वस्त्रेण गालयित्वा रसं क्वाथं ग्राहयेत्। ताश्च स्विन्नाः सर्व्वा हरीतकीस्तानि च स्विन्नाणि सर्व्वाण्यामलकानि फलानि सर्व्वाण्यनस्थीनि अस्थिहीनानि कृत्वा कूर्च्चनैः आपोथ्य कुट्टयित्वा वक्ष्यमाणतिलतैलात् सर्पिषः किञ्चिदष्टाशतपलोन्मिताधिकं सितोपलासहस्रं पलानि सितशर्करायाः शतपलाधिकसहस्रपलानि तस्मिन् निर्य्यूहे क्वाथे दत्त्वा गोलयित्वा वस्त्रेण गालयित्वा तस्मिन्नेव ससितोपले क्वाथे प्रक्षिप्य ताम्रपात्रे साध्यं, तैलस्य तिलतैलस्य द्व्याढ़कं द्रवद्वैगुण्यात् द्वात्रिंशच्छरावं दद्यात्। सर्पिषो गव्यघृतस्य त्रीणि चाढ़कानि द्रवद्वैगुण्यादष्टचत्वारिंशच्छरावाणि

मुद्गमाषपर्ण्यौ। (वीरा जालन्धरं शाकम्) कूर्च्चनं जर्ज्जरीकरणसाधनं शिलापुत्रकमूषलादि।

क्षौद्रप्रमाणं स्नेहार्द्धं तत् सर्व्वं घृतभाजने।
तिष्ठेत् संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत्॥
या नोपरुन्ध्यादाहारमेकं मात्रा जरां प्रति।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते॥
वैखानसा वालिखिल्यास्तथा चान्ये तपोधनाः।
रसायनमिदं प्राप्य * वभूवुरमितायुषः॥
मुक्त्वा जीर्णं वय † आग्र्यमवापुस्तरुणं वयः।
वीततन्द्राक्लमश्वासा निरातङ्काः समाहिताः॥

अत्रैव दद्यात्। ततस्तत्सर्व्वमौडुम्बरे ताम्रमये पात्रे मृदुनाग्निना साध्यम्। आसन्नपाके तु तत्र इमानि मण्डूकपर्ण्यादीनां दशानां द्रव्याणां चूर्णानि प्रत्येकं चतुःपलान् भागान् कृत्वा दापयेत्। अत्र मण्डूकपर्णी दन्तिमूलं, कनकं हेमचाम्पेयं नागकेशरपुष्पमिति यावत्। ततः पाकवित् तत् सर्व्वं लेह्यं लेहार्हमदग्धञ्च ज्ञात्वावतारयेत्। ततः शीतं यदा भवति तदा स्नेहार्द्धमानेन तैलघृतयोरर्द्धमानेन चत्वारिंशच्छरावमितेन क्षौद्रेण संसृजेत् मेलयेत्। ततस्तत्-सर्व्वं सम्मूर्च्छितं दर्व्व्या संघट्टनेन मिश्रितं कृत्वा मृद्भाजने तिष्ठेत् स्थापयेत्। एवं प्रस्तुतस्य तस्यौषधस्य मात्रां तां काले उपयोगकाले प्रातःकाले प्रयोजयेत्, कालेऽप्यनुक्ते दिवसस्य पूर्व्वमित्युक्तेः। या मात्रा जरां प्रति जीर्णकाल-पर्य्यन्तमेकं प्रथमाहारकाले क्षुधया आहारं नोपरुन्ध्यादाहारोपरोधं न कुर्य्यात्। ततः प्रथमाहारकालोत्तरकालम् अत्रौषधे जीर्णे सति षष्टिक ओदनः पयसा गोदुग्धेन शृतेन भोजनमिष्यते, इत्थञ्चैककालमाहारमपराह्णे कुर्य्यादिति भावः। एवं यावत् नैरुज्यवलवर्णादिसम्पत् प्रयोज्यमिति। अस्याशिषमाह—पुराकल्पेन वैखानसा इत्यादि। वैखानसादयो मुनयो रसायनमिदं प्राप्यामितायुषो वभूवुः। जीर्णञ्च वयः जीर्णवपुः मुक्त्वा त्यक्त्वाग्र्यं श्रेष्ठं वातातपवर्षादिसहिष्णु तरुणं वयोवपुरवापुः वीतन्द्रादयश्च

* प्राप्येति वा पाठः। † वपुरिति क्वचित् पठ्यते।

मेधास्मृतिबलोपेताश्चिररात्रं तपोधनाः ।
ब्राह्मं तपो ब्रह्मचर्य्यं चेरुश्चात्यन्तनिष्ठया ॥
रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयेत् ।
दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते ॥ २२ ॥

इति ब्राह्मरसायनप्रयोगः । १ ।

यथोक्तगुणानामामलकानां सहस्रं पिष्ट्वा स्वेदनविधिना * पयस उष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत् । तदामलकसहस्रस्वरसपरिपीतं, † स्थिरा-पुनर्नवा-जीवन्ती-नागबला-ब्रह्मसुवर्च्चला- -मण्डूकपर्णी- -शतावरी-शङ्खपुष्पी-पिप्पली-वचा-

सन्तश्चिररात्रं चिरदिनमत्यन्तनिष्ठया ब्राह्मं तपो ब्रह्मचर्य्यश्च चेरुराचरितवन्त इत्यर्थः । ब्राह्मरसायनं ब्राह्मतपश्चारणहेतुत्वात् ॥ २२ ॥

गङ्गाधरः—प्रयोगान्तरमाह यथोक्तेत्यादि । यथोक्तगुणानामिति ब्राह्मरसायनगुणांस्तानि कर्म्माणीत्यादुक्तानामाकृतिमानेन सहस्रं दशशतगुड़कं पिष्ट्वा गोदुग्धं बृहद्भाण्डे दत्त्वा तद्भाण्डमुखे वस्त्रं बद्ध्वा तदुपरि तदामलकं दत्त्वा किंवा बृहद्भाण्डे दुग्धं दत्त्वा तद्भाण्डमुखे प्रचुरच्छिद्रयुक्तं भाण्डमन्यत् निधाय तत्र भाण्डे तदामलकं दत्त्वा चुल्ल्यां निधायाग्निनाधस्ताज्ज्वाला देया । इत्येवं पयस उष्मणा दुग्धवाष्पेण स्वेदनविधिना सुस्विन्नं तदामलकमनातपशुष्कं छायायां संशोष्य निरस्थि अस्थीनि त्यक्त्वा चूर्णयेत् । तदामलकसहस्रचूर्णं स्वरसपरिपीतं तस्यामलकान्तरसम्भूतस्य स्वरसः परि सर्व्वतोभावेन भावनाविधिना पीतो येन तत् तथा. अर्थात् आमलकस्य रसेन परिप्लाव्य अनातपे संशोष्य पुनस्तद्रसेन परिप्लाव्यानातपे संशोष्य रसं सप्तधा भावितं तत्. स्थिरादीनां

विर्नायेति प्रक्षिप्य ; प्लवः कैवर्त्तमुस्तकम् ; कनकं नागकेशरम् ; त्वक् गुड़त्वक् ; औडुम्बर इति ताम्रमये ; स्नेहार्द्रमिति सर्पिस्तैलार्द्रम् । एकमनपराह्णिकमाहारम् ॥ २२ ॥

चक्रपाणिः—पिष्टस्वेदनविधिनेति यथा पिष्टकं तोयपरिपूरितपात्रोपरिदत्तं तृणादिसंस्थितं स्वेद्यते, तथा तत् स्वेदनीयमित्यर्थः । स्वरसपरिपीतमिति स्वरसभावितम् । ब्रह्मसुवर्च्चलाद्यौषधान्यायुर्व्वेद-

* पिष्टस्वेदनविधिनेत्यन्यत्र पाठः । 　　† तदामलकसहस्रम् इति बहुषु ग्रन्थेषु पाठः ।

विडङ्ग-स्वयंगुप्ताऽमृता-चन्दनागुरु--मधुक-मधूकपुष्पोत्पल--पद्म-मालती-युवती-यूथिकाचूर्णाष्टभागसंयुक्तं, पुनर्नागबलासहस्र-पलस्वरसपरिपीतम् अनातपशुष्कं द्विगुणसर्पिषा क्षौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ दृढे घृतभाविते कुम्भे भस्मराशेरधः स्थापयेत्, अन्तर्भूमेः पक्षं कृतरक्षाविधानमथर्ववेदविदा। पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रबालकालायसचूर्णाष्टमभाग-संयुक्तमर्द्धकर्षवृद्ध्या यथोक्तेन विधिना प्रातःप्रातः प्रयुञ्जानो-ऽग्निबलमभिसमीक्ष्य, जीर्णे च षष्टिकं पयसा ससर्पिष्कमुप-सेवमानो यथोक्तान् गुणान् समश्नुते इति ॥ २३ ॥

द्वाविंशतिद्रव्याणां प्रत्येकं चूर्णस्याष्टभागसंयुक्तं तदामलकचूर्णादष्टमांशमितेन स्थिरादीनां प्रत्येकं समचूर्णेन संयुक्तं, पुनर्नागबलाया गोरक्षतण्डुलायाः सहस्र-पलस्वरसः पूर्व्वविधिना परिपीतो येन तत्, चूर्णमनातपशुष्कं द्विगुणित-सर्पिषा तच्चूर्णाद् द्विगुणितेन गोघृतेन द्विगुणेन क्षौद्रसर्पिषा वा समक्षौद्रेण समसर्पिषा च मर्द्दयित्वा क्षुद्रगुडाकृतिं बदरास्थिमानां गुडिकां कृत्वा शुचिदृढघृतभाण्डे निधाय गोमयस्य भस्मराशेरधस्तात् भूमेरन्तः खनयित्वा पक्षं पञ्चदशदिनं स्थापयेत्, अथर्व्ववेदविदा कृतरक्षाविधानं तद्भाण्डं पक्षं पञ्चदशदिनं स्थापयेदिति प्रक्रिया। अत्र स्थिरा शालपर्णी, नागबला, गोरक्षतण्डुला, ब्रह्मसुवर्च्चला स्वनामख्याता, स्वयंगुप्ता शूकशिम्बी, मधूकपुष्पं गुडपुष्पस्य पुष्पं, युवती प्रियङ्गुः। अथ पक्षात्यये तदौषधभाण्डमुद्धृत्य कनकादीनां स्वर्णादीनां पञ्चानां शोधितमारितानां चूर्णेन प्रत्येकं समेन तदौषधस्याष्टम-भागैकभागेन संयुक्तम् अर्द्धकर्षवृद्ध्या अग्निबलमभिसमीक्ष्य प्रथमदिनमात्रा-मवधार्य्य युक्त्या क्रमेण प्रत्यहमर्द्धकर्षं न्यूनं वा वर्द्धयित्वा प्रातःप्रातर्यथोक्तेन विधिना कुटीं प्रविश्य संशोध्य जातबलः सन् प्रयुञ्जानः तस्मिन् भुक्ते चौषधे जीर्णे षष्टिकादिकं सेवेतेत्यर्थः। तेन यथोक्तमिह वक्ष्यन्ते ये गुणास्तान्

समुत्थानीये वक्ष्यमाणानि। युवतिर्नवमालिका। अष्टमो भागोऽष्टभागः। क्षुद्रगुडाकृतिमिति फाणिताकृतिम्। अर्द्धकर्षवृद्धेरिति अर्द्धकर्षात् प्रभृति वर्द्धयेत्। यथोक्तविधिनेति कुटीप्रावेशिकेन विधिना।

भवन्ति चात्र ।

इदं रसायनं ब्राह्मं महर्षिगणसेवितम् ।
भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः ॥
कान्तप्रजो * ना सिद्धार्थश्चन्द्रादित्यसमद्युतिः ।
श्रुतं धारयते सत्त्वमार्षञ्चास्य प्रवर्त्तते ॥
धरणीधरसारश्च वायुना समविक्रमः ।
स भवत्यविषश्चास्य गात्रे सम्पद्यते विषम् ॥ २४ ॥

ब्राह्मरसायनं द्वितीयो योगः । २ ।

विल्वाग्निमन्थश्योनाकं काश्मर्य्यः पाटलिर्बला ।
पर्णाश्चतस्रः पिप्पल्यः श्वदंष्ट्रा वृहतीद्वयम् ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु ।
अभया साम्रृता ऋद्धिर्जीवकर्षभकौ शटी ॥
मुस्तं पुनर्नवा सैला मेदे चन्दनमुत्पलम् ।
विदारी वृषमूलानि काकोली काकनासिका ॥

गुणान् समश्नुते। तान् गुणानाह भवन्तीत्यादि। इदमित्यादिनास्य रसायनस्य गुणाः ॥ २३ । २४ ॥

इति द्वितीयो ब्राह्मरसायनयोगः । २ ।

गङ्गाधरः—विल्वाग्निमन्थेत्यादि। अग्निमन्थो गणिकारिका। काश्मर्य्यो गाम्भारी, पर्ण्यश्चतस्रः शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी; शृङ्गी कर्कटशृङ्गी, तामलकी भूम्यामलकी, मेदे मेदा महामेदा च। काकनासिका

यथोक्तान् गुणानिति पूर्व्वप्रयोगफलश्रुतिपठितान् । धरणीधरसार इति धरणीधराः पर्व्वताः, तेषां सारो लोहम्, तद्वत्सार इत्यर्थः। अविषमिति अविषमविकारि ॥ २३ । २४ ॥

चक्रपाणिः—पर्ण्यश्चतस्र इति शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी । तामलकी भूम्यामलकी ।

* कान्तः प्रजानामिति च पाठो दृश्यते ।

एषां पलोन्मितान् भागान् शतान्यामलकस्य च।
पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥
पलद्वादशके भृष्ट्वा दत्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूताया लेहवत् साधु साधयेत् ॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुःपलं तुगाक्षीर्य्याः पिप्पलीद्विपलं तथा ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनः ॥

केऽयाठो ऽटीति लोके। एषां द्रव्याणां प्रत्येकं पलपरिमिता भागा आमलकस्य गुड़कानां पञ्चशतानि वस्त्रे वद्धा जलद्रोणे चतुःषष्टिशरावजले दत्वा सर्व्वम् ऐकध्यं विपाचयेत्। एतान्यौषधानि गतरसानि पादावशेषे निर्गतरसानि भवन्तीति ज्ञात्वा तं रसं तच्च स्विन्नमामलकमुद्धृत्य वस्त्रेण संघृष्य निष्कुलं सिरास्थिरहितं कृत्वा मिलिततैलसर्पिषोर्द्वादशपले भृष्ट्वा ; मत्स्यण्डिकाया विपुलभाजने स्थितगुड़स्य मध्ये स्वयं दृढ़ीभूतरूपायाः पूताया अर्द्धतुलां तस्मिन् रसे गोलयित्वा ; वस्त्रपूतं तं रसं कृत्वा तस्मिन् भृष्टे त्वामलके दत्वा लेहवत् साधु साधयेत्। लेहीभूते तस्मिंस्तुगाक्षीर्य्याश्चतुःपलं पिप्पल्याश्चूर्णं द्विपलं त्वगेलातेजपत्रनागकेशराणां चतुर्णां मिलित्वा समभागेन पलमेकं प्रत्येकं कर्षमानं प्रक्षिपेत्। प्रक्षिप्य सम्यगालोड्यावतारयेत्। इत्येवं सिद्धे शीते मधुनः षट्पलं दत्वा सम्यङ् मेलयेत्। इत्ययं च्यवनप्राशो नाम परं रसायनम् उक्तम् कासादिषु शस्तश्च। ततः कुटीं प्रविश्य यथोक्तविधिना रसायनस्यास्य

काकनासा वासाफलका, काकतुण्डक इत्यन्ये। गतरसत्वमिह द्रव्याणां चतुर्भागस्थितजले भवति। निष्कुलमिति निरस्थि। तैलसर्पिषोरिति समासनिर्द्देशादुभाभ्यामेव द्वादश पलानि पृथक् पृथक।

स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चाप्यपकर्षति॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा॥
मेधां स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम्॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य सर्व्वं बिभर्त्ति रूपं नवयौवनस्य॥ २५॥

इति च्यवनप्राशः।

अथामलकहरीतकीनाम् आमलकविभीतकानाम् आमलक-हरीतकीविभीतकानां वा पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलस्विन्नानामकूलकानां पलसहस्रमुदूखले संपोथ्य दधिघृत-मधुपललतैलशर्करासंप्रयुक्तं भक्षयेदनन्नभुग् यथोक्तेन विधिना।

मात्रां प्रयुञ्जीत। या मात्रा अशिता प्रथमभोजनोपरोधं न करोति तां मात्रां प्रयुञ्जीत। शेषं स्पष्टार्थम्॥ २५॥ इति च्यवनप्राशः।

गङ्गाधरः—अथामलकहरीतकीनामित्यादि। आमलकहरीतकीनां समान-संख्याफलानाम्। अथवामलक-विभीतकानामथवामलक-हरीतकी-विभीतकानां पलाशवृक्षवल्कलेन बद्धानां मृत्तिकया लिप्तानां कुकूले वहुक्षुद्रच्छिद्रहण्डि-कायां वारिपूर्णहण्डिकोपरिधृतायां स्थापितानामधस्तादग्निं प्रज्वाल्य स्विन्नानां सिरास्थिहीनीकृतानां छायाशुष्काणां पलसहस्रमुदूखले संकुट्य कृतं चूर्णं तत्-समानदधिघृतमधु-तिलतैल-शर्कराभिः संयुक्तं भक्षयेत् यथाग्निबलं भक्षयेदनन्नभुक्

मत्स्यण्डिका खण्डसंहतिः। अत्र पट्पलत्वेन समयोरपि मधुसर्पिषोर्द्रव्यान्तरयुक्तत्वेन अविरुद्धम्॥ २५॥

चक्रपाणिः—कुकूलकः करीषाग्निः। अकुलकानामिति अनस्थ्नाम्। दध्यादीनामत्र मानं नोक्तम्, तेन प्रधानस्य चूर्णस्य दध्यादिभिर्मिलितैः समानमानत्वम्। पललं तिलचूर्णम्। किंबा प्रत्येकमेव

तस्यान्ते यवाग्वादिभिः प्रकृत्यवस्थापनम् * अभ्यङ्गोत्सादनं सर्पिषा यवचूर्णैश्च। अयश्च रसायनप्रयोगप्रकर्षो द्विस्तावदग्निबलमभिसमीक्ष्य प्रतिभोजनं यूषेण पयसा वा षष्टिकः ससर्पिष्कोऽतः परं यथासुखविहारः कामभक्तः स्यात्। अनेन प्रयोगेण ऋषयः पुनर्युवत्वमवापुर्बभूवुश्चानेकवर्षशतजीविनो निर्व्विकाराः परमशरीर-*-बुद्धीन्द्रियबलसमुदिताश्चेरुश्चात्यन्तनिष्ठया तप इति॥ २६॥

इति चतुर्थामालकरसायनम्।

हरीतक्यामलकविभीतकपञ्चपञ्चमूलनिर्यूहेण पिप्पलीमधुकमधूककाकोली-क्षीरकाकोल्यात्मगुप्ताजीवकर्षभक-क्षीरशुक्लाकल्कसंप्रयुक्तेन विदारीस्वरसेन क्षीराष्टगुणसंप्रयुक्तेन सर्पिषः कुम्भं

यथाविधिना कुटीं प्रविश्य यावत् प्रयोगं तावन्नान्नं भुञ्जीत बुभुक्षायां फलमूल दुग्धादिकं भुञ्जीत। तस्यान्ते सर्व्वपरिमिततदौषधभक्षणान्ते। यवाग्वादिभिः मण्डपेयाविलेपीः क्रमेण अशित्वा प्रकृतेः स्वभावस्यावस्थापनं कार्य्यम्। अभ्यङ्गोत्सादनं यवचूर्णैः सर्पिषा च कार्य्यं नान्यैः। ततस्तु अग्निबलं वीक्ष्य द्विरशनं यूषेण पयसा ससर्पिष्कः षष्टिकः। अतःपरं यथासुखविहारः सन् स्वेच्छया भक्षणं कुर्य्यादिति। अनेनेत्यादिनास्याशीः॥ इति चतुर्थो रसायनप्रयोग एक एवामलकयोगो न त्रयो योगाः॥ २६॥

गङ्गाधरः—हरीतकीत्यादि। क्षीरशुक्ला क्षीरविदारी, पुराणस्य गव्यसर्पिषः

दध्यादीनां चूर्णसमत्वम्। भक्षयेद् इति वचनं लेह्येऽपि अल्पाभ्यवहरणमात्रार्थत्वमुपपन्नम्। अनन्नभुगिति सर्व्वथा आहारान्तराभुक्। तस्यान्त इति एतत्प्रयोगपरित्यागकाले। प्रत्यवस्थापनमिति यवाग्वादिक्रमविशेषणम्, तेन प्रयोगान्ते यदा अभ्यङ्गोत्सादनं कर्त्तव्यम्, तदा यवाग्वादिक्रमेणेत्युक्तस्यार्थस्य प्रत्यवस्थापनं क्रियत इत्यर्थः। यूषेण पयसा वेति विकल्पोऽग्निबलापेक्षया॥ २६॥

चक्रपाणिः—अत्र हरीतक्यादौ क्षीरशुक्लाः क्षीरविदारिकाः; अत्र हरीतक्यादिक्काथस्य त्वेकभागः,

* प्रत्यवस्थापनमिति चक्रः।

साधयित्वा प्रयुञ्जानोऽग्निबलं समवेक्ष्य। जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमुष्णोदकानुपानमश्नन् जराव्याधिपाप्माभिचारव्यपगतभयः शरीरबुद्धीन्द्रियबलमतुलमुपलभ्याप्रतिहतसर्व्वारम्भः परमायुराप्नुयादिति ॥ २७ ॥

इति पञ्चमो हरीतकीयोगः।

हरीतक्यामलकविभीतक-हरिद्रा-स्थिरा-वचा-*-विड़ङ्गामृतवल्लीविश्वभेषज-मधुकपिप्पलीसोमवल्कसिद्धेन क्षीरसर्पिषा मधु-

कुम्भं चतुःषष्टिशरावम्। हरीतकीप्रभृतीनां समानांशानां कल्कं मिलित्वा सर्पिःपादिकं. सर्पिर्गर्भे दत्त्वा क्षीरमष्टगुणं दत्वा विदारीस्वरसेन सर्पिःसमेन मन्दानलेन पाचयेत् इति। एवं सर्पिः साधयित्वाऽग्निबलं समवेक्ष्य पिबन तस्मिन जीर्णे क्षीरसर्पिर्भ्यां शालिषष्टिकान्नमुष्णोदकानुपानमश्नन जराव्याधीत्यादुक्ताशिषमाप्नुयात् ॥ २७ ॥

गङ्गाधरः—हरीतक्यामलकेत्यादि। सोमवल्कः श्वेतखदिरः। हरीतक्यादिसोमवल्कान्तानां क्वाथेन चतुर्गुणेन तेषामेव कल्केन सर्पिषः पादिकेन क्षीरोत्थं सर्पिः प्रस्थमितं पाचयेत्। मानेऽप्यनुक्ते समता विधेया। कल्कक्वाथावनिर्द्देशे गणात् तस्मात् प्रयोजयेत्। इति सुश्रुतवचनं तदेवानुसृत्य कश्चिद् वृद्धवैद्यः पद्येनोवाच। यत्राधिकरणे नोक्तिर्गणे स्यात् स्नेहसंविधौ। तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिनेति। अस्य चायमर्थः। भेषजानामधिकरणे ग्रन्थे स्नेहसंविधौ यत्र गणे साधनद्रव्यसमूहे कल्कनिर्यूहयोरुक्तिर्न स्यात् तत्रैव गणे कल्कनिर्य्यूहावुभौ स्नेहवेदिना वैद्येनेष्येते। इति तुल्यं सुश्रुतोक्तेन। इत्येवमर्थमविद्वान व्याचष्टे। यत्र स्नेहसंविधौ गणेऽधिकरणेन सप्तम्यन्तेन स्यादुक्तिस्तत्रैव कल्कनिर्य्यूहावुभौ, करणेन यत्रोक्तिस्तत्र कल्कस्य स्नेहेन सह साक्षात् पाकात् प्राधान्यान्निर्य्यूहरूपस्य परम्परया पाकादप्राधान्यात् कल्क एवेष्यते न क्वाथो न वोभयमिति। तदसत् अनार्षत्वात्। यच्चान्यो व्याचष्टे अधिकरणेनेत्यधिकारतया गणे यत्रोक्तिरिति यमेव द्रव्यगणमेकस्मिन योगे

क्षीरस्याष्टौ भागाः, सर्पिष एको भागः। कुम्भो द्रोणद्वयम्, वचनं हि—"द्रोणस्तु द्विगुणः सूर्पो विज्ञेयः कुम्भ एव च" ॥ २७ ॥

* बलेति वा पाठः।

शर्कराभ्यामपि च संनीय आमलकस्वरसशतपलपीतम् आमलक-चूर्णम् अयश्चूर्णचतुर्भागसंप्रयुक्तं पाणितलमात्रं प्रातःप्रातः प्राश्य यथोक्तेन विधिना सायं मुद्गयूषेण पयसा वा ससर्पिष्कं शालि-षष्टिकम् अश्नीयात्। त्रिवर्षप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति श्रुतमवतिष्ठते सर्व्वामयाः प्रशाम्यन्ति विषमविषं भवति गात्रे गात्रमश्मवत् स्थिरीभवत्यधृष्यो भूतानां भवतीति ॥ २८ ॥

भवन्ति चात्र।

यथामराणाममृतं यथा भोगवतां सुधा।
तथाभवन्महर्षीणां रसायनविधिः पुरा ॥
न जरां न च दौर्ब्बल्यं नातुर्य्यं निधनं न च।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा ॥

विधायापरेऽपि योगास्तेनैव यत्र विहितास्तत्रैव कल्कनियूहावुभाविष्येते नान्यत्रेति। तदप्यसत् अनार्षत्वात् सुश्रुतविरोधाच्च निर्य्यूहाभावे स्वल्पगुण-त्वापत्तेश्चेति। क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः। इति। तेन सिद्धेन सर्पिषा मिलिताभ्यां मधुशर्कराभ्यां तत् सर्पिःपादिकाभ्याञ्च संनीय मिश्रीकृतेन मारितपुटितलौह-चूर्णचतुर्थांशयुक्तमामलकचूर्णमामलकस्वरसेन सप्ताहं भावितं संनीय मिश्रयित्वा पाणितलं कर्षमात्रं यथाविधि कुटीं प्रविश्य प्रातःप्रातः प्राश्य सायं रात्रौ मुद्गयूषेण पयसा वा ससर्पिष्कं शालिषष्टिकान्नमश्नीयात्। अस्य त्रिवर्ष-प्रयोगादित्यादिनाशीः ॥ २८ ॥ इति षष्ठो रसायनप्रयोगः।

गङ्गाधरः रसायनस्य सामान्यतो गुणमाह भवन्ति चात्रेत्यादि। यथा मराणामित्यादि। अमराणां यथा अमृतं यथा च नागानां सुधा, तथा महर्षीणां रसायनविधिः पुराऽभवन्न त्वनृषीणाम्। न जरामित्यादि। पुरा

चक्रपाणिः अमृतवल्ली गुडूची, सोमवल्को विट्खदिरः, क्षीरसर्पिर्मधुशर्कराणामयश्चूर्णस्य चतुर्थभागः, यत एतदयश्चूर्णचतुर्थभागः, अत एवास्मिन् प्रयोगे जतूकर्णेन "अयश्चूर्णपादयुक्तम्" इति कृतम्। अमराणाममृतं जरादिहरं नागानाञ्च सुधा जरामरणहरीत्युभयोपादानं दृष्टान्ते,

**न केवलं दीर्घमिहायुरश्नुते रसायनं यो विधिवन्निषेवते ।**
**गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैति चाक्षरम् ॥२९॥**

तत्र श्लोकः ।

**अभयामलकीयेऽस्मिन् षड् योगाः परिकीर्त्तिताः ।**
**रसायनानां सिद्धानामायुर्यैरनुवर्त्तते ॥ ३० ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने प्रथमाध्याये अभयामलकीयं नाम रसायनपादः प्रथमः ॥ १ ॥**

रसायनपरा महर्षयः वर्षसहस्राणि जरादिकं न जग्मुः । तर्हि किं रसायनाद् दीर्घायुरेव स्यान्नान्यदित्यत उच्यते—न केवलमित्यादि । यो विधिवद् रसायनं निषेवते, स केवलं न दीर्घायुरेवेह भूलोकेऽश्नुते, देवर्षिनिषेवितां शुभां गतिश्च प्रपद्यते । तथा अक्षरं ब्रह्म चैति निर्व्वाणमुक्तिं प्राप्नोति इति ॥ २९ ॥

गङ्गाधरः—पादार्थमुपसंहरति—तत्र श्लोक इति । अभयामलकीयेऽस्मिन रसायनपादे षड् योगा रसायनानां परिकीर्त्तिताः । यै रसायनयोगैरायुरनुवर्त्तते । इति ॥ ३० ॥

पादं समापयति—अग्नीत्यादि ।

वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सितस्थाने अभयामलकीये रसायनपादः प्रथमः ॥ १ ॥

ब्रह्म मोक्षः, मोक्षसाधनत्वञ्चेह रसायनविशुद्धसत्त्वकर्त्तृतयोच्यते । अभयेत्यादिना सन्देहनिरासार्थमुक्तप्रयोगसंख्यां दर्शयति । एवमन्यत्रापि संख्याप्रणयनमन्ते ज्ञेयम् ॥ २८—३० ॥

इति महामहोपाध्याय-चरकचतुरानन श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायामभयामलकीयरसायनपाद-व्याख्या नाम प्रथमः पादः ॥ १ ॥

## अथातः प्राणकामीयं रसायनपादं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

प्राणकामाः शुश्रूषध्वमिदमुच्यमानम् अमृतमिवापरमदितिसुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसः स्थापनं निद्रा-तन्द्रा-श्रमक्लमालस्यदौर्ब्बल्यापहरमनिलकफपित्तसाम्यकरं स्थैर्य्यकरमवद्धमांसहरमन्तरग्निसन्धुक्षणं प्रभावर्णस्वरोत्तमकरं रसायनविधानम्। अनेन च्यवनादयो महर्षयः पुनः युवत्वमापुः नारीणाञ्चेष्टतमा बभूवुः स्थिरसमसुविभक्तमांसाः सुसंहतस्थिरशरीराः सुप्रसन्नबलवर्णेन्द्रियाः सर्व्वत्राप्रतिहतपराक्रमाः सर्व्वक्लेशसहाश्च ॥ २ ॥

गङ्गाधरः—अथात इत्यादि। अथाभयामलकीयरसायनपादव्याख्यानन्तरमतोऽवधि प्राणकामीयं प्राणकाममधिकृत्य कृतं रसायनपादं व्याख्यास्यामः ॥ १ ॥

गङ्गाधरः—प्राणकामा इत्यादि। भोः प्राणकामाः! मयोच्यमानमिदमदितिसुतहितकरमादितेयानां देवानां हितकरममृतमिवापरं रसायनविधानमचिन्त्याद्भुतप्रभावमित्येवमादिरूपं शुश्रूषध्वम्। अनेन च्यवनादयश्च्यवनवंश्यमुन्यादयः। इष्टतमा अभिमततमाः। स्थिरसमसुविभक्तमांसाः स्थिरमश्लथं समं यत्राङ्गे यदुचितं तत्र तथारूपेण न विषमत्वेन सुष्ठु शोभनतया विभक्तं विभागीभूतं मांसं शरीरेषु येषां ते तथा। सुसंहतस्थिरशरीराः शोभमानं संहतं संघातीभूतं स्थिरं दृढं शरीरं येषां ते तथा ॥ २ ॥

चक्रपाणिः—पूर्व्वपादे ह्यामलकरसायनान्युक्तानि, इहाप्यामलकरसायनानि सन्तीति प्राणकामीयमनन्तरमुच्यते। प्राणकामशब्दमधिकृत्य कृतमिति प्राणकामीयम्। निद्राहरत्वं रसायनस्य वैकारिकनिद्राहरत्वेन, किंवा देववत् सर्व्वदा प्रबुद्धो निद्रारहितो भवति। तन्द्रालक्षणं तन्त्रान्तरे—"इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः। निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥" इति। अबद्धमांसमनिविड़मांसम्। उत्तमानि प्रभादीनि करोतीति प्रभावर्णस्वरोत्तमकरम्, एवंजातीयकश्च पूर्व्वनिपातानियमोऽप्रतिबन्धेन चरके अस्ति मयूरव्यंसकादिपाठे द्रष्टव्यः। 'अनेन हि' इत्यादिना

सर्व्वे शरीरदोषा भवन्ति ग्राम्याहारादम्ललवणकटुकक्षार-शुष्कशाकमाषतिलपललपिष्टान्नभोजिनां विरूढ़नवशूकशमी-धान्य-विरुद्धासात्म्यरुक्षाभिष्यन्दिभोजिनां क्लिन्नगुरुपूतिपर्य्युषितभोजिनां विषमाशनाध्यशनप्रियाणां दिवास्वप्नस्त्रीमद्य-नित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां भयक्रोध-लोभमोहशोकायासबहुलानाम् । अतो निमित्ताद्धि शिथिलीभवन्ति मांसानि विमुच्यन्ते सन्धयो विदह्यते रक्तं विष्यन्दते चानल्पं मेदो न सन्धीयतेऽस्थिषु मज्जा शुक्रं न प्रवर्त्तते क्षयमुपैत्योजः । एवम्भूतो ग्लायति सीदति निद्रातन्द्रालस्यसमन्वितोऽनारतम् आशु चैव श्वसित्यसमर्थश्चेष्टानां शारीरमानसानां नष्टस्मृति-बुद्धिच्छायो * न सर्व्वमायुरवाप्नोति। तस्मात् एतान् दोषानवेक्षमाणः सर्व्वान् यथोक्ताहितानपास्य आहारविहारान्

गङ्गाधरः—पुरावृत्तमुक्त्वा रसायनस्यास्य सेवायां प्रवृत्तिकारणमाह—सर्व्वे इत्यादि । सर्व्वे शरीरदोषा वातपित्तकफाः ग्राम्याहाराद्भवन्ति । ग्राम्याहारान् विवृणोति—अम्ललवणेत्यादि । विरूढ़ेत्यादि । विरूढमङ्कुरितं नवं नूतनं शूकधान्यादिकं तत्कृतान्नादिकं तथा विरुद्धं संयोगतः परस्परं विरुद्धं यज्जः-पुरुषीयोक्तम्, असात्म्यं सात्म्यीभूताहारादन्यमाहारं, रुक्षम् अभिष्यन्दिनं स्रोतःक्लेदीकरञ्चाहारं भोजिनाम् । तथा क्लिन्नादिभोजिनां तथा विषमाशनम् अकाले बहु चाल्पं वा भुक्तन्तु विषमाशनम्, अध्यशनं पूर्व्वदिनाहाराजीर्णे यद्भोजनं तदध्यशनं तयोः प्रियाणाम् । अतोऽम्ललवणादितो निमित्तात् तेषाम् अनल्पमधिकं मेदो विष्यन्दते अस्थिषु मज्जा च न सन्धीयते ओजश्च क्षयमुपैति । एवम्भूतः शिथिलीभूतमांस इत्येवमादिरूपः सन् ग्रामीणो ग्लायतीत्येवमादि । अनारतं सततमाशु श्वसिति शारीरमानसानाञ्च इष्टानाम् असमर्थो भवति। तस्माद् ग्रामवासी एतान् शिथिलीभूतमांसत्वादीन् सर्व्वानवेक्ष-

पुरावृत्तिकथनेन रसायनानि वक्ष्यमाणानि प्रवृत्त्यर्थं स्तौति । रसायनप्रयोगे वर्ज्जनीयं ग्राम्याहारादि-

* रोगाणामधिष्ठानभूतः इत्यधिकः पाठः क्वचित् ।

रसायनानि प्रयोक्तुमर्हति। इत्युक्त्वा भगवान् पुनर्व्वसुरात्रेय उवाच।—आमलकानां सुभूमिजानां कालजानामनुपहत-गन्ध-वर्णरसानाम् आपूर्णरसप्रमाणवीर्य्याणां स्वरसेन पुनर्नवाकल्क-पादसंप्रयुक्तेन सर्पिषः साधयेत् आढ़कम्। अतः परं विदारीस्वर-सेन जीवन्तीकल्कसंप्रयुक्तेन। अतः परं चतुर्गुणेन पयसा बलाति-बलाकषायेण शतावरीकल्कसंयुक्तेन। अनेन क्रमेणैकैकं शत-

माणः सन्निहितान् यथोक्तमम्ललवणादीनाहारविहारान् सर्व्वानपास्यापक्षिप्य रसायनानि प्रयोक्तुमर्हतीति। रसायनमाह—आमलकानामित्यादि। सुभूमिजानां हिमवत्पर्व्वतजानां वा यथोक्ता ये भूमिविभागास्तत्र या भूमिः साधुस्तत्र जातानाम् अनुपहतगन्धादीनामामलकानां स्वरसेन साध्यसर्पिषश्चतुर्गुणेन चतुःषष्टि-शरावोन्मितेन श्वेतपुनर्नवाकल्केन साध्यसर्पिषः पादिकेन चतुःशरावोन्मितेन आर्द्रत्वेऽप्यद्विगुणेन संप्रयुक्तेन सर्पिषः पुराणस्य गव्यस्याढ़कं द्रवत्वेन द्वैगुण्यात् षोड़शशरावोन्मितं मृदुना अग्निना साधयेत्। द्रवावसाने सति तत्कल्कमपनीय अतः परं विदारीस्वरसेन तद्घृतचतुर्गुणेन जीवन्तीकल्केन तद्घृतपादिकेन संप्र-युक्तेन पुनः साधयेत्। पुनस्तद् द्रवक्षये सति तत्कल्कमपनीयातः परं तद्घृताच्चतु-र्गुणेन पयसा गव्यदुग्धेन चतुर्गुणेन बलातिबलयोः पीतश्वेतवाट्यालकयोः कषायेण शतावरीकल्केन तद्घृतपादिकेन सह संप्रयुक्तेन तत्सर्पिष आढ़कं पुनः साधयेत्। "जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्। तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम्" इति वचनेनात्र सर्पिषः सम्पूर्णप्रयोगमानज्ञापनार्थम् आढ़कमानमुक्तं, तस्य चतुर्गुणं द्रवं पादिकश्च कल्कः सिध्यति, तेन तृतीयपाके पयसो बलातिबलाकषाययोः प्रत्येकं चतुर्गुणमानं न लभ्यते तद्वचनबाधकेन। "पञ्च प्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्व्वाक् च स्यात्

दूषणत्वेन निर्दिशन्नाह—सर्व्व इत्यादि। तिलः सुचूर्णितस्तिलः, पललं तिलचूर्णम्। अतो निमित्त-मिति ग्राम्याहारादिकारणकम्। शुक्रं न प्रवर्त्तत इति नोत्पद्यते शुक्रमित्यर्थः॥ २।३॥

पाकं सहस्रपाकं वा शर्कराक्षौद्रचतुर्भागसंप्रयुक्तं सौवर्णे राजते मार्त्तिके वा शुचौ दृढ़े घृतभाविते कुम्भे स्थापयेत् । तद् यथोक्तेन विधिना यथाग्नि प्रातःप्रातः प्रयोजयेत् । जीर्णे च क्षोरसर्पिर्भ्यां शालिषष्टिकमश्नीयात् । अस्य * प्रयोगाद्वर्षशतं वयोऽजरं तिष्ठति श्रुतमवतिष्ठते सर्व्वामयाः प्रशाम्यन्त्यप्रतिहतगतिश्च स्त्रीष्वपत्यवान् भवति ॥ ३ । ४ ॥

चतुर्गुणम्" इति वचनेन मिलितयोर्द्वयोः सर्पिश्चतुर्गुणमानलाभात् । वचनेन ह्यनेन खलु पञ्चप्रभृतिद्रवाणां प्रत्येकं स्नेहसमानत्वम् अर्व्वाक् पञ्चद्रवाच्चतुर्द्रवं वा त्रिद्रवं वा द्विद्रवं वाप्येकद्रवं वा यदि स्यात् तदा मिलित्वा चतुर्गुणं ग्राह्यमिति परिभाषितम् । तथैवोक्तमन्यत्र । "एकेनापि चातुर्गुण्यं द्वाभ्यामपि चातुर्गुण्यं त्रिभिरपि चातुर्गुण्यं चतुर्भिः समम्" इति । प्रत्येकं तेन च फलितं मिलित्वा चतुर्गुणमिति न विरोध इति । अत एवान्ये चतुःप्रभृतीति पठन्ति । तस्मादत्र पयसो बलातिबलाकषाययोर्विशेषोक्तिश्चतुर्गुणेनेति । एतेनानयोर्मिलित्वा चातुर्गुण्यं नाशङ्क्यम् । एवं त्रिपाकं घृतं शर्करां मधु च मिलित्वा घृतपादिकं प्रक्षिप्य तत्र मिश्रीकृतं सौवर्णादिकुम्भे स्थापयेत् । इति त्रिधापाकेनैको योगः । एषु चैककम् एकैकशोऽपि प्रथमपाकविधानेनैव शतपाकं, द्वितीयपाकविधिना च शतपाकं, तृतीयपाकविधिना च शतपाकं, शतधा पाको यस्य तत् तथाविधं घृतं शर्कराक्षौद्रयोस्तद्घृताच्चतुर्थभागैकभागसंप्रयुक्तं सौवर्णादिकुम्भे घृतभाविते दृढ़े शुचौ स्थापयेत् इति त्रयो योगाः । अथवानेनैव क्रमेण प्रथमपाकविधिना सहस्रपाकं द्वितीयपाकविधानेन सहस्रपाकं तृतीयपाकविधानेन वा सहस्रपाकं घृतं शर्कराक्षौद्रचतुर्थभागसंप्रयुक्तं सौवर्णादिकुम्भे घृतभाविते स्थापयेत् इति त्रयो योगाः । तद् घृतं यथोक्तविधिना कुटीं प्रविष्टः शुद्धतनुर्यथाग्निबलं प्रातःप्रातः प्रयोजयेत् ।

चक्रपाणिः—एकैकशः शतपाकमित्यर्थः । एकैकपाकसाधनं पृथक् कर्त्तव्यम्, तेन त्रिशतधा पाको भवति । अत्र च कल्कोपलेपादिनोपक्षीणमपि यदवशिष्टं भवति, तदेव ग्राह्यं वचनबलात् ।

* त्रिवर्षप्रयोगात् इति चक्रः ।

भवति चात्र।

वृहच्छरीरं गिरिसारसारं स्थिरेन्द्रियञ्चातिबलेन्द्रियञ्च।
अदृश्य-*-मन्यैरतिकान्तरूपं प्रशस्तपूजासुखचित्तताभाक्॥
बलं महद्द वर्णविशुद्धिरग्र्या स्वरो घनौघस्तनितानुकारी।
भवत्यपत्यं विपुलं स्थिरञ्च समश्नतो योगमिमं नरस्य॥५॥

इत्यामलकघृतम्।

आमलकसहस्रं पिप्पलीसहस्रसम्प्रयुक्तं पलाशतरुभस्मनः† क्षारोदकोत्तरं तिष्ठेत्। तदनुगतक्षारोदकमनातपशुष्कमनस्थि चूर्णीकृतं चतुर्गुणाभ्यां मधुसर्पिर्भ्यां संनीय शर्कराचूर्णचतुर्भाग-संप्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमेः। तस्य

अप्रतिहतगतिः स्त्रीष्वित्यन्वयः। गिरिसारसारं लोहवत्त्वगादिसारम्। अन्यैः अदृश्यम्॥ ३—५॥

गङ्गाधरः—प्रयोगान्तरमाह—आमलकेत्यादि। आमलकानां यथोक्तगुणानां सुभूमिजानां गुड़कसहस्रं पिप्पलीगुड़कसहस्रेण संप्रयुक्तं पलाशतरोः सवल्कलकाष्ठं दग्ध्वा कृतस्य भस्मनः क्षारोदकोत्तरं षड़्गुणे वा चतुर्गुणे वा जले तद्भस्म गोलयित्वा वस्त्रेणैकविंशतिवारं परिस्राव्य गृहीतमुदकमुत्तरं तदामलकपिप्पलीपरिप्लावनयोग्योन्मितं यत्र तत् तथा, तेन क्षारोदकेनाप्लाव्य तिष्ठेत् स्थापयेत्। अनुगतक्षारोदकं तदामलकसहस्रं पिप्पलीसहस्रयुक्तम् अनातपशुष्कं छायायां शुष्कीकृत्य अनस्थि आमलकसहस्रमस्थिहीनं कृत्वा पिप्पलीसहस्रसहितमेव चूर्णीकृतं मिलित्वा चतुर्गुणाभ्यां मधुसर्पिर्भ्यां संनीय मिश्रीकृत्य शर्करायाश्चूर्णस्यामलकपिप्पलीसहस्रयोश्चूर्णस्य चतुर्भागैक-भागोन्मानेन संप्रयुक्तं घृतभाजनस्थं कृत्वा षण्मासान् अन्तर्भूमेर्भूमौ गर्त्तं कृत्वा

सौवर्णादिपात्रेषु यथापूर्व्वं वरगुणत्वम्, अन्यथा समानगुणत्वे सर्व्वेषां मृत्पात्रस्य सुलभत्वे अति-दुर्लभं सौवर्णपात्रं नोपदिशेदिति। यथोक्तेन विधिनेति कुटीप्रावेशिकेन। गिरिसारो लौहम्॥ ४।५॥

चक्रपाणिः—पलाशतरुणस्तरुणपलाशः। अनेन बालवृद्धपलाशवर्ज्जनमुच्यते। क्षारोदकोत्तरमिति

* अदृश्यमिति वा पाठः। † पलाशतरुणक्षारोदकोत्तरमिति चक्रधृतः पाठः।

उत्तरकालमग्निबलसमां मात्रां खादेत् पौर्व्वाह्निकः प्रयोगः सात्म्यपथ्यश्चाहारविधिर्नापराह्निकः। अस्य प्रयोगाद् वर्षशतमजरं वयस्तिष्ठति, समं पूर्व्वेण ॥ ६ ॥

इत्यामलकावलेहः ।

आमलकचूर्णाढ़कमेकविंशतिरात्रमामलकसहस्रस्वरसपरिपीतं मधुघृताढ़काभ्यां द्वाभ्याम् एकीकृतमष्टभागपिप्पलीकं शर्कराचूर्णचतुर्भागसंयुक्तं घृतभाजनस्थं प्रावृषि भस्मराशौ

तद्वृत्तं स्थापयेत्। उत्तरकालं षण्मासादूर्द्धमुद्धृत्य अग्निबलसमां यथाग्निबलं मात्रां परिकल्प्य पौर्व्वाह्निकः प्रयोगोऽस्य भेषजस्य सात्म्यापेक्षश्चाहारविधिः जीर्णे सति माध्याह्निको न त्वापराह्निकः। समं पूर्व्वेणेति वर्षशतमजरन्तिष्ठति इत्याद्युक्तं सर्व्वं पूर्व्वयोगफलमस्यापि बोध्यमित्यर्थः। क्षारोदकविधिस्तु "पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम्। स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे" इति वचनेन बोध्यः॥ ६ ॥

इत्यामलकावलेहः चतुर्थयोगः ।

गङ्गाधरः—अपरयोगमाह—आमलकेत्यादि। सुभूमिजानां यथोक्तगुणानामामलकानामनातपशुष्काणां चूर्णस्याढ़कं शरावाष्टकमामलकानां तादृशानां सहस्रस्य गुड़कतया गृहीतस्य स्वरसविधिना स्वरसं विधाय एकविंशतिरात्रमल्पाल्पं दत्त्वा तत् तावदामलकस्वरसेन भावनयाऽनातपशोषेण शुष्कीकृतमित्यामलकसहस्रस्वरसपरिपीतमित्यस्यार्थः। ततो मधुघृताभ्यां संवत्सरातीताभ्यां द्वाभ्यां मिलित्वाढ़काभ्यां प्रत्येकमेकैकाढ़काभ्याम् एकीकृतं तदामलकचूर्णाढ़कम् अष्टभागपिप्पलीकं पिप्पलीचूर्णस्यैकशरावयुक्तम्। शर्करायास्तदामलकचूर्णस्य चतुर्भागैकभागसंयुक्तञ्च कृत्वा घृतभाजने निधाय प्रावृषि आषाढ़श्रावणान्यतरमासि भस्मराशौ करीषभस्मराशौ तद्भाजनं

यथा क्षारोदकमामलकोपरि भवति, तथा कर्त्तव्यमिति दर्शयति। चतुर्भागः पादः। समानं पूर्व्वेणेति पूर्व्वयोगफलश्रुत्यैतदपि युक्तमित्यर्थः॥ ६ ॥

निदध्यात् तद्वर्षान्ते सात्म्यपथ्याशी प्रयोजयेत्। अस्य प्रयोगाद् वर्षशतमजरमायुस्तिष्ठतीति, समानं पूर्व्वेण ॥ ७ ॥

इति आमलकचूर्णम्।

विड़ङ्गतण्डुलचूर्णानामाढ़कं * पिप्पलीतण्डुलानामध्यर्द्धाढ़कं सितोपलायाः सर्पिस्तैलमध्वाढ़कैः षड़्भिरेकीकृतं घृतभाजनस्थं प्रावृषि भस्मराशाविति सर्व्वं समानं पूर्व्वेण यावदाशीः ॥ ८ ॥

यथोक्तगुणानामामलकानां सहस्रमार्द्रपलाशद्रोण्यां सपिधानायां वाष्पम् अनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्।

स्थापयेत्। तच्चूर्णं वर्षान्ते प्रावृट्कालातीते न तु संवत्सरातीते। सात्म्यपथ्याशी कुटीं प्रविश्य यथाग्निबलं मात्रां प्रयोजयेत्। जीर्णे सात्म्यमाहारम् आहरेत्। आशीःसमानं पूर्व्वेण पूर्व्वयोगेण। इति पञ्चमो योगः ॥ ७ ॥

गङ्गाधरः—योगान्तरमाह—विड़ङ्गेत्यादि। विड़ङ्गानि उदूखले किञ्चिदाहत्य तण्डुलान् कृत्वा चूर्णयेत् तच्चूर्णानामाढ़कं शरावाष्टकम्। पिप्पलीतण्डुलचूर्णस्य चाढ़कमष्टशरावम्। सितोपलाया अध्यर्द्धाढ़कं सार्द्धाढ़कं द्वादशशरावम्। सर्पिषः संवत्सरातीतस्याढ़कद्वयं द्वात्रिंशच्छरावं वत्सरानतीतस्य तिलतैलस्य द्वात्रिंशच्छरावं वत्सरातीतस्य मधुनश्च द्वात्रिंशच्छरावं द्रवत्वेन द्वैगुण्यादिति सर्पिस्तैलमधूनां मिलित्वा षड़्भिराढ़कैरेकीकृतं विड़ङ्गतण्डुलचूर्णादित्रयं घृतभाजनस्थं कृत्वा प्रावृषि आषाढ़श्रावण-श्रावणभाद्रान्यतरैकस्मिन्नृतौ मासद्वयं भस्मराशौ निदध्यात्। प्रावृड़न्ते सात्म्यपथ्याशी कुटीं प्रविश्य यथाग्निबलं प्रयोजयेत्। इत्यादि पूर्व्वेण पूर्व्वयोगेण समानं वर्षशतमायुरजरं तिष्ठतीत्यादिकं यावत्फलं तुल्यमिति षष्ठो योगः ॥ ८ ॥

गङ्गाधरः—योगान्तरमाह—यथोक्तगुणानामित्यादि। आमलकानां सहस्रं गुड़कसहस्रम्। आर्द्रपलाशद्रोण्याम् अशुष्कपलाशवृक्षकाष्ठमयीं द्रोणीं

चक्रपाणिः—वर्षान्ते वर्षाकालान्ते। यावदाशीरिति आशीः फलश्रुतिः। तेन 'तद्वर्षान्ते' इत्यादिग्रन्थयोगविधानं समानं पूर्व्वेणेति पूर्व्वयोगफलश्रुतिपर्य्यन्तं पूर्व्वयोगेण समानमित्यर्थः ॥७।८

* आढ़कम् इत्यधिकः पाठः क्वचित्।

तानि सुस्विन्नशीतानुद्धृतकुलकान्यापोथ्याढ़केन पिप्पली-चूर्णानामाढ़केन च विड़ङ्गतण्डुलचूर्णानामध्यर्द्धेन चाढ़केन शर्कराया द्वाभ्यां द्वाभ्यामाढ़काभ्यां तैलस्य मधुनः सर्पिषश्च संयोज्य शुचौ दृढ़े घृतभाविते कुम्भे स्थापयेदेकविंशतिरात्रम्। अत ऊर्द्ध्वं प्रयोगः। अस्य प्रयोगाद् वर्षशतमजरं वयः तिष्ठति। समं पूर्व्वेण॥ ६॥

इत्यामलकावलेहोऽपरः।

धन्वनि कुशास्तीर्णे स्निग्धमधुरकृष्णमृत्तिके सुवर्णवर्ण-मृत्तिके वा व्यपगतविषश्वापदपवनसलिलाग्निदोषे कर्षण-

सपिधानां मुखाच्छादनसहितां निर्म्माय यथा वाष्पं नोपप्रसरेत्, तस्यां द्रोण्यां तत् सहस्रमामलकानि निधाय वाष्पं यथा नोपसृजेत् तथा तेन पिधानेन मुखमपिधाय आरण्यकरीषाग्निना उपस्वेदयेत् स्विन्नानि कारयेत्। ततस्तानि सहस्रमामलकानि सुस्विन्नानि भवन्ति स्वाङ्गशीतानि यदा स्युस्तदा उद्धृत-कुलकानि निष्कुलानि अस्थिसिरारहितानि कृत्वा आपोथ्य कुट्टयित्वा तावन्ति गृहीत्वा पिप्पलीतण्डुलचूर्णानामाढ़कमष्टशरावं विड़ङ्गतण्डुलचूर्णानामाढ़कमष्ट-शरावं शर्कराया अध्यर्द्धाढ़कं द्वादशशरावं तैलस्यानतीतवत्सरस्याढ़कद्वयं द्वात्रिंशच्छरावम् वत्सरातीतस्य मधुनश्चाढ़कद्वयं द्वात्रिंशच्छरावं सर्पिषश्च वत्सरातीतस्याढ़कद्वयं द्वात्रिंशच्छरावमिति षड्भिस्तैलमधुसर्पिषामाढ़कैः संयोज्य शुचौ घृतभाजने एकविंशतिरात्रं स्थापयेत्। यद्यपि न चोक्त ऋतु-विशेषस्तथापि पूर्व्वस्य योगस्यानन्तरमोक्तया प्रावृष्येव एकविंशतिरात्रं न चात्र भस्मराशाविति योज्यम्। कश्चिदृतुविशेषं नाह सर्व्वर्त्तावेकैकविंशतिरात्रं स्थापयेदिति व्याचष्टे, अत एकविंशतिरात्रादूर्द्ध्वं यथाग्निबलतोऽस्य प्रयोगः। सात्म्याशी कुटीं प्रविश्य खादेदित्यर्थः। इति सप्तमो योगः॥ ९॥

गङ्गाधरः—योगान्तरमाह—धन्वनीत्यादि। धन्वनि देशे जाङ्गले देशे। देशोऽल्प-वारिद्रुवनो जाङ्गलः परिकीर्त्तित इति। कीदृशे धन्वनि देशे? कुशास्तीर्णे कुशैर्व्याप्ते स्निग्धादिमृत्तिकायुक्ते च व्यपगतविषादिदोषे च कर्षणादिवर्ज्जिते च।

वल्मीकश्मशानचैत्योषररसवर्ज्जिते देशे यथर्त्तुसुखपवनसलिला-दित्यसेविते जातान्यनुपहतान्यनध्यारूढ़ान्यबालान्यजीर्णानि अविगतवीर्य्याणि शीर्णपुराणपर्णान्यसंजातफलानि * तपसि तपस्ये वा मासि शुचिः प्रयतः कृतदेवार्च्चनः स्वस्ति वाचयित्वा द्विजातीन् बले मुहूर्त्ते नागबलामूलान्युद्धरेत्। तेषां सुप्रक्षालितानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टम् आलोड्य पयसा प्रातःप्रातः प्रयोजयेच्चूर्णीकृतानि वा पिबेत्

ऊषररसः क्षाररसः। यथर्त्तुसुखं शीताद्यृतुगुणविपरीतगुणैः पवनादिभिः सेविते च। जातानि नागबलामूलानि यान्यनुपहतानि कीटादिभिर्न व्यापन्नानि अनध्या-रूढ़ानि मूलान्तरं यानि नारूढ़ानि अबालानि नाभिनवानि अजीर्णानि नातिपुरातनानि अविगतवीर्य्याणि शुष्कत्वादिदोषेण विगतवीर्य्यभिन्नानि शीर्णपुराणपर्णानि विगलितपुराणपत्रवृक्षसम्बन्धीनि, एतेन वसन्ते पत्रपतना-न्तरकालः ख्यापितः। असंजातफलानि अजातफलतद्वृक्षसम्बन्धीनि नागबला-मूलानि गोरक्षतण्डुलनामकवृक्षस्य मूलानि. तपसि माघे मासि तपस्ये फाल्गुने वा मासि सति गलितपर्णत्वे भिषक् शुचिः प्रयतः संयतः सन् कृतगणेशादि-देवार्च्चनः द्विजातीन् ब्राह्मणान् स्वस्ति वाचयित्वा बले बलवति मुहूर्त्ते उद्धरेत्। तेषां तथाविधानां तथोद्धृतानां नागबलामूलानां सुप्रक्षालितानां मध्यस्थकाष्ठं हित्वा त्वचं गृहीत्वा तत्त्वचः आम्रमात्रं पलमात्रं पयसा श्लक्ष्णपिष्टमतिसूक्ष्म-चिक्कणरूपेण पिष्ट्वा पिण्डं पिण्डिताकारं गोपयसैवालोड्य प्रत्यहं प्रातः-प्रातश्चतुर्दण्डाभ्यन्तरे प्रयोजयेत् निर्हृतदोषं यथोक्तकुटीं प्रवेश्य पाययेत्। चूर्णीकृतानि वा श्लक्ष्णचूर्णानि कृत्वा वा पलमात्रं चतुर्गुणेन पयसा पिबेत्

चक्रपाणिः—धन्वनीति जाङ्गलदेशे। कर्षणं हलादिना। अनध्यारूढ़ानीति न महता पार्श्वस्थेन वृक्षेणाक्रान्तानि। तपसि माघे। तपस्य इति फाल्गुने। बले सुमुहूर्त्त इति ऐन्द्रे मुहूर्त्ते। आम्रमात्र-मिति पलपरिमाणम्॥ ९।१०॥

* असञ्जातान्यपर्णानि इति वा पाठः।

पयसा मधुसर्पिर्भ्यां संयोज्य भक्षयेत् । जीर्णे च * शालिषष्टिकम् अश्नीयात् । संवत्सरप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति । सर्व्वं समानं पूर्व्वेण ॥ १० ॥

इति नागवलारसायनम् ।

बलातिबलाचन्दनागुरु-धवतिनिसखदिर-शिंशपासनस्वरसाः पुनर्नवान्ताश्चौषधयो दश ये वयःस्थापना व्याख्याताः, तेषां † स्वरसा नागबलावत् । स्वरसानामलाभे त्वयं स्वरसविधिश्चूर्णानाम्

इति योगान्तरम् । मधुसर्पिर्भ्यां वत्सरातीताभ्यां संयोज्य गुड़ीकृत्य पलमानेन वा तानि चूर्णीकृतानि भक्षयेत् । इति योगान्तरम् । जीर्णे चौषधे शालिषष्टिकं गोपयसाश्नीयात् । कुटीप्रवेशादिकं पूर्ववत् ॥ ११ ॥

इति नागवलारसायनं योगत्रयम् ।

गङ्गाधरः—योगान्तरमाह—बलातिबलेत्यादि । बला पीतपुष्पवाट्यालकम् । अतिबला श्वेतपुष्पवाट्यालकम् । चन्दनं रक्तचन्दनम् । अगुरु कृष्णागुरु । धवः स्वनामको वृक्षः धओ इति लोके । तिनिसः नेमिः आवलुश् इति लोके । खदिरः श्वेतखदिरः । शिंशपा शिशु इति ख्यातः । असनः पीतशालः । एषां स्वरसाः । मूलाद्यङ्गानि किञ्चिज्जलं दत्त्वा क्षोदयित्वा वस्त्रेण गालयित्वा ग्राह्याः । स्वरसाभावे विधिर्वक्ष्यते । पुनर्नवान्ता अर्थात् पुनर्नवास्वरसान्ता दश चौषधयः । अमृतेत्यादयो दश वयःस्थापनगणः । नागबलावत् नागबलामूलप्रयोगे ये प्रकारास्ते चात्र जीर्णे शालिषष्टिकाशनः संवत्सरप्रयोगाजरवर्षशतवयःस्थितिरूपा भावा व्याख्यातास्तद्वत् व्याख्याता इत्यर्थः । तेन अमृतादिपुनर्नवान्तानां वयःस्थापनानां दशानां बलाद्यसनान्तानां नवानामित्येकोनविंशतेः अन्यतमस्वरसं पलमात्रं प्रातःप्रातः प्रयोजयेत् । जीर्णे शालिषष्टिकमश्नीयात् । संवत्सरप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति । समानं पूर्व्वेण । गुणान्तरं श्रुतमवतिष्ठते सर्व्वामयाः प्रशाम्यन्तीत्यादि पूर्व्वोक्तं बोध्यम् । इत्येते एकोनविंशतियोगाः । स्वरसानामलाभे विधिमाह—स्वरसानामित्यादि । चूर्णानां

चक्रपाणिः—पुनर्नवान्ता दश षड्विरेचनशताश्रितीये,—"अमृताभया धात्री मुक्ता श्रेयसी श्वेताऽतिरसा मण्डूकपर्णी स्थिरा पुनर्नवा" इति सर्व्वा वयःस्थापनोक्ताः । नागबलया व्याख्याता

* क्षीरसर्पिर्भ्याम् इत्यधिकः पाठो क्वचिद् दृश्यते ।

† ये वयःस्थापना व्याख्यातास्तेषां स्वरसा नागबलावत् इत्यत्र नागबलया व्याख्याता इति ग्रन्थान्तरे पाठः ।

आर्द्रकम् आर्द्रकमुदकस्याहोरात्रं स्थितं मृदितपूतं स्वरसवत् प्रयोज्यम् ॥ ११ ॥

भल्लातकान्यनुपहतान्यनामयान्यापूर्ण-रस-प्रमाण-वीर्य्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे संगृह्य यवपल्वे माषपल्वे वा निधापयेत्। तानि चतुर्म्मासस्थितानि सहसि सहस्ये वा मासे प्रयोक्तुमारभेत शीतस्निग्धमधुरोपस्कृत-शरीरः पूर्व्वं दश भल्लातकानि आपोथ्याष्टगुणेनाम्भसा साधु साधयेत्। तेषां रसमष्टभागावशेषं पूतं सपयस्कं पिबेत्

श्लक्ष्णकुट्टितानामार्द्रकमष्टशरावमुदकस्याढकं षोड़शशरावमेकीकृत्याहोरात्रं स्थितं प्रातः पुनर्मृदितं मर्द्दितं कृत्वा पूतं वस्त्रेण गालितं यद्भवति तत् स्वरसवत् प्रयोज्यम्। संवत्सरप्रयोगे कर्त्तव्ये षोड़शशरावे पीते पुनरेवंरूपेण स्वरसो विधिर्यावत् संवत्सरं पूर्य्यते। एवमन्यत्रापि स्वरसाभावे विधिः बोध्यः ॥ ११ ॥

इति दश योगाः।

गङ्गाधरः—योगान्तरमाह—भल्लातकेत्यादि। शुचौ मासे आषाढ़े मासे शुक्रे वा ज्यैष्ठे मासे यवपल्वे यवानां राशौ माषपल्वे वा माषाणां राशौ वा निधापयेत्। तानि भल्लातकानि यथोक्तरूपाणि यवपल्वे माषपल्वे वा चतुर्मासस्थितानि ज्यैष्ठे स्थापितानि भाद्रान्ते आश्विने आषाढ़े स्थापितानि कार्त्तिके वा उद्धृत्य रक्षेत्। ततः आश्विनोद्धृतानि भल्लातकानि सहसि मार्गशीर्षे मासि कार्त्तिकोद्धृतानि सहस्ये पौषे मासे प्रयोक्तुमारभेत। ननु केन प्रकारेण प्रयोगं कुर्य्यादित्यत आह—शीतेत्यादि। मार्गशीर्षपौषयोः कालस्वभावशीतेन तत्कालोचिताचरणीयस्निग्धमधुराहारेण चोपस्कृतशरीरः पुमान् पूर्व्वं दश भल्लातकगुड़कान् आपोथ्य कुट्टयित्वा तत्तुलया धृतमानेनाष्ट-गुणजलेन मन्दाग्निना साधयेत्। तेषामष्टभागावशेषं रसं पूतं वस्त्रेण गालितं सपयस्कं समानगोदुग्धेन मिलितं कृत्वा पिपासुर्मुखमन्तः सर्पिषाभ्यज्य पिबेत्।

इति नागबलावत् तेषामपि प्रयोगः। बलादीनां स्वरसेनैव विधानम्। नागबलावद् भोजनादिकं ज्ञेयम्। स्वरसालाभेऽनुकल्पमाह—स्वरसानामित्यादि ॥ ११ ॥

चक्रपाणिः—शुचिर्ज्यैष्ठः, शुक्रस्त्वाषाढः, सहोऽग्रहायणः, सहस्यः पौषः, एतच्च भल्लातकं मासचतुष्टयस्थितं यवपल्यादौ उद्धृतमात्रं न प्रयोज्यम्, किन्तु शीतल एव काले शीत-

सर्पिषान्तर्म्मुखमभ्यज्य । तान्येकैकभल्लातकोत्कर्षापकर्षेण दश भल्लातकान्यात्रिंशत् प्रयोज्यानि । नातः परमुत्कर्षः प्रयोग-विधानेनासहस्रपरो भल्लातकप्रयोगः । जीर्णे च सर्पिषा

द्वितीयदिने त्वेकादश भल्लातकानि, तृतीयेऽह्नि द्वादश, चतुर्थे त्रयोदश, पञ्चमेऽह्नि चतुर्द्दश, षष्ठेऽह्नि पञ्चदश, सप्तमेऽह्नि षोड़शाष्टमेऽह्नि सप्तदश, नवमेऽह्नि त्वष्टादश दशमेऽह्नि एकोनविंशतिः, एकादशेऽह्नि विंशतिः, द्वादशेऽह्नि एकविंशतिः, त्रयोदशेऽह्नि द्वाविंशतिः, चतुर्द्दशेऽह्नि त्रयोविंशतिः, पञ्चदशेऽह्नि चतुर्व्विंशतिः, षोड़शेऽह्नि पञ्चविंशतिः, सप्तदशेऽह्नि षड़्विंशतिः, अष्टादशेऽह्नि सप्तविंशतिः. एकोनविंशेऽह्नि अष्टाविंशतिः, विंशेऽह्नि एकोनत्रिंशत्, एकविंशेऽह्नि त्रिंशत् । इति तानि भल्लातकगुड़कानि एकैकभल्लातकोत्कर्षेण आत्रिंशद्भल्लातकानि त्रिंशद्भल्लातकपर्य्यन्तं प्रयोज्यानि, नातस्त्रिंशतः परमूर्द्ध्वमुत्कर्षो वृद्धिर्व्वास्ति । ततस्त्वपकर्षेण एकैकभल्लातकापकर्षेण आदश भल्लातकानि प्रयोज्यानि । इति । आङ्शब्दस्योभयत्र योजना । भल्लातकानीत्यस्य पदस्य तानीत्यत्र दशेत्यत्र त्रिंशदित्यत्र च योजना । दशेत्यस्य तानीत्यत्रापकर्षेणेत्यत्र च योजना । तथा चापकर्षेण द्वाविंशेऽह्नि त्रिंशत्, त्रयोविंशे चतुर्व्विंशे पञ्चविंशे षड्विंशे सप्तविंशे च त्रिंशत् । अष्टाविंशेऽह्नि एकोनत्रिंशद्भल्लातकानि एकोनत्रिंशेऽष्टाविंशतिः । त्रिंशेऽह्नि सप्तविंशतिः, एकत्रिंशाहे षड्विंशतिः, द्वात्रिंशाहे पञ्चविंशतिः, त्रयस्त्रिंशाहे चतुर्व्विंशतिः, चतुस्त्रिंशाहे त्रयोविंशतिः, पञ्चत्रिंशाहे द्वाविंशतिः, षट्त्रिंशाहे एकविंशतिः, सप्तत्रिंशाहे विंशतिः, अष्टत्रिंशाहे एकोनविंशतिः, एकोनचत्वारिंशाहेऽष्टादश, चत्वारिंशाहे सप्तदश, एकचत्वारिंशाहे षोड़श, द्वाचत्वारिंशाहे पञ्चदश, त्रयश्चत्वारिंशाहे चतुर्द्दश, चतुश्चत्वारिंशाहे त्रयोदश, पञ्चचत्वारिंशेऽह्नि द्वादश, षट्चत्वारिंशेऽह्नि एकादश, सप्तचत्वारिंशाहे दशैवमष्टचत्वारिंशेऽपि दशेत्युत्कर्षापकर्षाभ्यामेकीकरणे सहस्रभल्लातकानि भवन्ति । जीर्णे भल्लातकक्काथे एकवारं सर्पिषा

गुणयुक्ते शरीरे च । मुखदाहपरिहारार्थं सर्पिषाऽन्तर्म्मुखमभ्यज्येति । नातः परमिति त्रिंशतः परेण प्रयोगो न भल्लातकस्य । सहस्रपरो भल्लातकप्रयोग इति उपयुक्तभल्लातकसंपूरणं यदा सहस्रं पूर्य्यते तदैवोपरमः कर्त्तव्यः, सहस्रादर्व्वागपि च प्रयोगपरित्यागः प्रकृत्याद्यपेक्षया भवत्येव सहस्रसंख्यापूरणञ्चेहैकेन वर्द्धनह्रासक्रमेण भवति, तेन पुनर्व्वृत्त्या च त्रिंशत्पर्य्यन्तम्, तदा हि भल्लातकप्रयोगेऽभ्यासेन चास्य सहस्रसंख्यापूरणं भवति, अनया रीत्या परित्यागः कर्त्तव्यः । अन्ये त्वत्र सुश्रुते अर्शश्चिकित्सितोक्तशतपर्य्यन्तं भल्लातकप्रयोगेण समं विरोधं पश्यन्तः सुश्रुत-

पयसा शालिषष्टिकाशनमुपचारः, प्रयोगान्ते च द्विस्तावत् पयसैवोपचारः। तत्प्रयोगाद् वर्षशतमजरं वयस्तिष्ठतीति, समानं पूर्व्वेण ॥ १२ ॥

इति भल्लातकक्षीरम्।

भल्लातकानां जर्ज्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकण्ठं निखातस्य स्नेहभावगतस्य दृढ़स्योपरि कुम्भस्यारोप्योडुपेनापिधाय कृष्णमृत्तिकावलिप्तं गोमयाग्निभिः सम्यगुपस्वेदयेत्। तेषां यः स्वरसः कुम्भं प्रपद्यते, ततोऽष्टभागमधुसंप्रयुक्तं द्विगुणघृतमद्यात्। तत्प्रयोगाद् वर्षशतमजरं वयस्तिष्ठति, सर्व्वं समानं पूर्व्वेण ॥ १३ ॥

इति भल्लातकक्षौद्रम्।

पयसा शालिषष्टिकाशनमिति। सहस्रभल्लातकप्रयोगान्ते पयसैव द्विवारं शालिषष्टिकाशनमित्येतावत् सप्तचत्वारिंशद्दिनानि दशभल्लातकावसानपर्य्यन्तं न त्वन्योपचारस्ततो यथेष्टमुपचारः। इति भल्लातकक्षीरम्। अस्याशिषमाह—तत्प्रयोगादित्यादि स्पष्टम् ॥ १२ ॥

अपरयोगमाह—भल्लातकानामित्यादि। उक्तरूपाणां भल्लातकानां जर्ज्जरीकृतानां सम्यक्कुट्टितानां पिष्टस्वेदनं सच्छिद्रभाण्डं पिष्टं भल्लातकमुत्स्विद्यते यत्र तत् पिष्टस्वेदनं. स्नेहभावगतस्य घृतादिस्नेहेन चिरभावनया स्निग्धत्वम् आपन्नस्य उडुपेन मुखाच्छादनपात्रेण तथा च—भूमौ गर्त्तं कृत्वा स्नेहभावितं दृढ़ं कुम्भमाकण्ठं तत्र गर्त्ते निखातीकृत्य तद्भाण्डस्य मुखोपरि भाण्डान्तरं स्थापयित्वा तन्मध्ये तले च्छिद्रं कृत्वा तत्र च्छिन्नकेशगुच्छं प्रलम्बितं कृत्वा निवेश्य तत्र भाण्डे पूर्व्वयोगोक्तानुपहतादिगुणयुक्तप्रचुरभल्लातकानि सम्यक् कुट्टयित्वा तानि निक्षिप्य पूरयित्वा आरोप्योडुपेन तद्भाण्डमुखमपिधाय कृष्णमृत्तिकया तद्भल्लातकपूर्णभाण्डमवलिप्य गोमयाग्निभिश्चतुर्दिक्षु उपस्वेदयेत्। तेषां भल्लातकानां यः स्वरसस्तेनोपस्वेदनेन स्नेहभावितं तत्कुम्भं प्रपद्यते,

प्रयोगस्याप्यन्यथा व्याख्यानेन त्रिंशत्कमात्रं प्रयोगमिच्छन्ति, तच्च व्याख्यानं नातिसङ्गतम्, किञ्च सहस्रद्वयस्य तत्रोपयोगो विहितः, अत्र सहस्रपर्य्यन्तः प्रयोगः, तेन व्याधिविषयोऽन्य एव प्रयोगः, अयन्तु रसायनविषयः ॥ १२ ॥

भल्लातकतैलपात्रं सपयस्कं मधुकेन कल्केनाक्षमात्रेण शतपाकं कुर्य्यात् । समानं पूर्व्वेण ॥ १४ ॥

इति भल्लातकतैलम् ।

भल्लातकक्षीरं भल्लातकक्षौद्रं भल्लातकतैलमेवं गुड़-भल्लातकं भल्लातकयूषो भल्लातकसर्पिर्भल्लातकपललं भल्ला-

ततः स्वरसादष्टभागैकभागं मधु संवत्सरातीतं तत्स्वरसाद् द्विगुणं वत्सरातीतं गोघृतं तत्स्वरसे प्रक्षिप्य मिश्रीकृत्याद्यात् । भल्लातकमानं पूर्व्वयोगोक्तं दशकमारभ्य प्रत्यहमेकैकोत्कर्षेण त्रिंशद् यावदेकैकापकर्षेण पुनर्द्दशकं यावदिति सप्तचत्वारिंशता दिनैः सहस्रभल्लातकानि भवन्ति । तथा सहस्रभल्लातकस्त्रं हं क्रमेणोत्कर्षापकर्षाभ्यां विभज्य तावन्ति दिनानि भक्षयेदिति । जीर्णे शालिषष्टिकाशनं सर्पिषा पयसेत्युपचार एकवारं प्रयोगान्ते द्विस्तावत् पयसैवोपचार इति । तत्प्रयोगात् तस्य निरुक्तस्य भल्लातकस्वरसमधुघृत-समुदायात्मकस्य कुटीं प्रविश्य प्रयोगात् । समानं पूर्व्वेण प्रथमप्रयोगोक्त-फलेन ॥ १३ ॥ भल्लातकक्षौद्रम् ॥

गङ्गाधरः—योगान्तरमाह भल्लातकतैलपात्रमित्यादि । पूर्व्वोक्तविधिना भल्लातकानां तैलं निष्पाद्य तस्य पात्रमाढ़कं द्रव्यद्वैगुण्यात् षोड़शशरावमितं कटाहे निधाय मन्दाग्निना तापयित्वा निष्फेनं कृत्वावतार्य्य शीतीकृत्य सपयस्कं चतुर्गुणगव्यदुग्धमिश्रं मधुकेन यष्टिमधुकल्केनाक्षमात्रेण कर्षमात्रेण पचेत् क्षीरक्षये तत्कल्कं गालयित्वा वस्त्रेण पुनरेवं पचेत् । इत्येवं शतपाकं शतवाराः पाका यस्य तत् तथेति । एवं निष्पन्नस्य भल्लातकतैलपात्रस्य कुटीं प्रविश्य यथाग्निदेहबलं प्रयोगः । जीर्णे सर्पिषा पयसा शालिषष्टिकाशनमेकवारम् इत्युपचारः । प्रयोगान्ते च पयसैव तावद् द्विरशनमित्युपचारः । इति समानं पूर्व्वेण तत्प्रयोगाद् वर्षशतमजरं वयस्तिष्ठति श्रुतमवतिष्ठते इत्यादयः सर्व्वे पूर्व्वोक्ता अत्र भवन्ति ॥ १४ ॥ भल्लातकतैलम् ॥

चक्रपाणिः—पिष्टस्वेदनं तत्, यत्रस्थं पिष्टकमुपस्वेद्यते, तदुपरि विधानमात्रम्, तस्य सन्धिलेपो न कार्य्यः, अन्यथोपरिस्थस्य भल्लातकस्य तापाच्छिद्रात् स्नेहो नाधो याति । भल्लातकतैलमिति अनन्तरोक्तविधानेन गृहीतो भल्लातकस्नेहः ॥ १३ । १४ ॥

चक्रपाणिः—भल्लातकसर्पिरित्यादयो दश प्रयोगाः । अत्र च यथायोग्यतया भल्लातकसर्पिरादीनां संस्कारः संयोगश्च ज्ञेयः । यदुक्तं जतूकर्णे—"भल्लातकसंयुक्तसंस्कृतानि च घृतक्षीरक्षौद्रगुड़पिष्ट-

तकसक्तवो भल्लातकलवणं भल्लातकतर्पणमिति भल्लातकविधानमुक्तम् ॥ १५ ॥ इति भल्लातकविधिः।

भवन्ति चात्र।

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥
एते दशविधास्त्वेषां प्रयोगाः परिकीर्त्तिताः।
रोगप्रकृतिसात्म्यज्ञस्तान् प्रयोगान् प्रकल्पयेत् ॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन।
यं न भल्लातकं हन्याच्छीघ्रं मेधाग्निवर्द्धनम् ॥
प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः।
रसायनैः शिवैरेतैर्बभूवुरमितायुषः ॥
ज्ञानं तपो ब्रह्मचर्य्यमध्यात्मं ध्यानमेव च।
दीर्घायुषो यथाकामं संभृत्य त्रिदिवं गताः ॥
तस्मादायुःप्रकर्षार्थं प्राणकामैः सुखार्थिभिः।
रसायनविधिः सेव्यो विधिवत् सुसमाहितैः ॥ १६ ॥

गङ्गाधरः—भल्लातकयोगमुपसंहरति—भल्लातकक्षीरमित्यादि स्पष्टम् ॥ १५ ॥

गङ्गाधरः—भल्लातकानां प्रभावमाह—भवन्ति चात्रेत्यादि। एते दशविधा भल्लातकक्षीरमित्यादय उक्ताः। न विबन्धोऽस्तीति मूत्रपुरीषादीनां कश्चन विबन्धो नास्ति। अत्र पुरावृत्तमाह—प्राणकामा इत्यादि। जीर्णा जरायुक्ताः

यूषतैलसक्तुलवणतर्पणानि" इति। एवञ्च सर्पिःक्षीरयूषतैलानां संस्कारो यथान्यायं भल्लातकेन, क्षौद्रपललसक्तुतर्पणनतां भल्लातकेन योगः। गुड़लवणयोस्तु संस्कारः संयोगो वा तैले। लवणसंस्कारपक्षे हि लवणसमं भल्लातकमन्तर्द्धूमदग्धं ग्राह्यम्। अन्ये तु सर्पिरादीनां सर्व्वेषामेव भल्लातकेन संस्कारं व्याख्यानयन्ति। इह सक्तुप्रयोगो द्रवोत्तरत्वादिविशेषेण कर्म्मणा भेदनीयः ॥ १५ ॥

चक्रपाणिः—अग्निसमानीति दाहस्फोटकर्त्तृतया। संभृत्येति निष्पाद्य। पादानुसंग्रहे सप्तत्रिंशत्-

तत्र श्लोकः ।

**रसायनानां संयोगाः सिद्धा भूतहितैषिणा ।**
**निर्दिष्टाः प्राणकामीये सप्त चैवं दशर्षिणा * ॥ १७ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने प्रथमाध्याये प्राणकामीयरसायनपादो द्वितीयः ॥ २ ॥**

च्यवनाद्याश्च्यवनवंशजा ये पूर्व्वपादोक्तरसायनपरायणास्तेभ्योऽन्ये। तस्मान्न पुनरुक्तं दृष्टफलत्वात् ॥ १६ ॥

गङ्गाधरः—पादार्थमुपसंहरति तत्र श्लोक इत्यादि। सप्त च एवं भल्लातकयोगा दश। अथ सुश्रुते मेधायुष्कामीये यथा। मेधायुष्कामः श्वेतावल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुड़ेन सह समालोड्य स्नेहकुम्भे सप्तरात्रं धान्यराशौ निदध्यात्। सप्तरात्रादुद्धृत्य हृतदोषस्य यथाबलं पिण्डं प्रयच्छेदनुदिते सूर्य्ये, उष्णोदकश्चानुपिबेत्। भल्लातकविधानवच्चागारप्रवेशः, जीर्णे पथ्यश्चापराह्णे हिमाभिरद्भिः परिषिक्तगात्रः शालीनां षष्टिकानाञ्च पयसा शर्करामधुरेणौदनमश्नीयात्। एवं षण्मासानुपयुज्य विगतपाप्मा बलवर्णोपेतः श्रुतनिगादी स्मृतिमानरोगो वर्षशतायुर्भवति। कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोमूत्रेणालोड्यार्द्धपलिकं पिण्डं विगतलौहित्ये सवितरि पाययेदपराह्णे चालवणेनामलकयूषेण सर्पिष्मन्तमोदनमश्नीयात्। एवं मासमुपयुज्य स्मृतिमानरोगो वर्षशतायुर्भवति। १। एष एवोपयोगश्चित्रमूलानां रजन्याश्चित्रकमूले विशेषो द्विपलिकं पिण्डं परं प्रमाणम् शेषं पूर्व्ववत्। २। हृतदोष एव प्रतिसंसृष्टभक्तो यथोक्तमागारं प्रविश्य मण्डूकपर्णीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलं पयसा आलोड्य पिबेत् पयोऽनुपानं वा। तस्यां जीर्णायां यवान्नं पयसोपयुञ्जीत तिलैर्वा सह भक्षयित्वा त्रीन मासान पयोऽनुपानम्; जीर्णे पयःसर्पिरोदन इत्याहारः। एवमुपयुञ्जानो ब्रह्मवर्चसः श्रुतनिगादी भवति, वर्षशतमायुरवाप्नोति। त्रिरात्रोपोषितश्च त्रिरात्रमेनं भक्षयेत् त्रिरात्रादूर्द्ध्वं पयःसर्पिरिति चोपयुञ्जीत। विल्वमात्रं पिण्डं वा पयसालोड्य पिबेदेवं दशरात्रमुपयुज्य मेधावी वर्षशतायुः

* सप्तत्रिंशन्महर्षिणा इति चक्रः ।

भवति। ३। हृतदोष एवागारं प्रविश्य प्रतिसंसृष्टभक्तो ब्राह्मीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत, जीर्णौषधश्चापराह्णे यवागूम् अलवणां पिबेत्, क्षीरसात्म्यो वा पयसा भुञ्जीत। एवं सप्तरात्रमुपयुज्य ब्रह्मवर्च्चसी मेधावी भवति। द्वितीयं सप्तरात्रमुपयुज्य ग्रन्थमीप्सितमुत्पादयति। नष्टञ्चास्य प्रादुर्भवति। तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति। एवमेकविंशतिरात्रमुपयुज्यालक्ष्मीरपक्रामति, मूर्त्तिमती चैनं वाग्देव्यनुप्रविशति, सर्व्वाश्चैनं श्रुतय उपतिष्ठन्ति। श्रुतधरः पञ्चवर्षशतायुर्भवति। ४। ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विड़ङ्गतण्डुलानां कुड़वं द्वे द्वे पले वचात्रिवृतयोः द्वादश हरितक्यामलकविभीतकानि श्लक्ष्णपिष्टान्यावाप्यैकध्यं साधयित्वा स्वनुगुप्तं निदध्यात्। ततः पूर्व्वविधानेन मात्रां यथाबलमुपयुञ्जीत। जीर्णे पयःसर्पिरोदन इत्याहारः। एतेनोर्द्धमधस्तिर्य्यक् क्रिमयो निष्क्रामन्ति, अलक्ष्मीरपक्रामति, पुष्करकर्णः स्थिरवयाः श्रुतिनिगादी त्रिवर्षशतायुर्भवति। एतदेव कुष्ठविषमज्वरापस्मारोन्मादविषभूतग्रहेष्वन्येषु च महाव्याधिषु च संशोधनम् आदिशन्ति। ५। हृतदोष एवागारं प्रविश्य हैमवत्या वचायाः पिण्डमामलकमात्रमभिहुतं पयसालोड्य पिबेत्, जीर्णे पयःसर्पिरोदन इत्याहारः। एवं द्वादशरात्रमुपयुञ्जीत। ततोऽस्य श्रोत्रं विव्रियते द्विरभ्यासतः स्मृतिमान् भवति त्रिरभ्यासतः शतमादत्ते चतुर्द्वादशरात्रमुपयुज्य सर्व्वं तरति किल्विषं तार्क्ष्यदर्शनमुत्पद्यते शतायुश्च भवति। ६। द्वे द्वे पले इतरस्या वचाया निःक्वाथ्य पिबेत् पयसा, समानं भोजनं समाः पूर्व्वेणाशिषश्च। ७। वचाशतपाकं वा सर्पिर्द्रोणमुपयुज्य पञ्चवर्षशतायुर्भवति, गलगण्डापचीश्लीपदस्वरभेदांश्चापहन्ति इति ॥ ८—१७ ॥

वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सितस्थाने प्राणकामीयरसायनपादो द्वितीयः ॥ २ ॥

प्रयोगा उक्ताः, तत्र बलादिभिरष्टाभिः पुनर्नवान्तैश्च दशभिरष्टादश प्रयोगाः। अपरे त्वामलकघृतादयो व्यक्ता एव ॥ १६ । १७ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां प्राणकामीयरसायनपादव्याख्या ॥ २ ॥

अथातः करप्रचितीयं रसायनपादं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां माघे फाल्गुने वा मासे त्रिःसप्तकृत्वःस्वरसपरिपीतानां पुनःशुष्कचूर्णितानामाढ़कमेकं ग्राहयेत्। अथ जीवनीयानां बृंहणीयानां स्तन्यजननानां शुक्रवर्द्धनानां वयःस्थापनानां षड्विरेचनशताश्रितीयोक्तानाम् औषधगणानां चन्दनागुरुधव-खदिरशिंशपासनसाराणाञ्च अणुशश्छिन्नानां निहितानाम् अभयाविभीतकपिप्पलीवचाचव्यचित्रकविड़ङ्गानाञ्च समस्तानाम् आढ़कमेकं दशगुणेन अम्भसा साधयेत्।

गङ्गाधरः—अथ प्राणकामीयरसायनपादव्याख्यानन्तरमुद्दिष्टं करप्रचितीयम्। करप्रचितानामित्यत्रोक्तकरप्रचितार्थमधिकृत्य कृतं रसायनपादं व्याख्यास्यामः इत्यादि सर्व्वं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—करप्रचितानामित्यादि। करेण प्रचितानां यथोक्तगुणानाम् अभयामलकीयोक्तगुणानां त्रिःसप्तकृत्व इत्येकविंशतिवारान् स्वरसपरिपीतानां यथोक्तगुणानामेवामलकानां स्वरसेन भावितानां यथोक्तगुणानामामलकानां पुनःशुष्कचूर्णितानामाढ़कमेकमष्टशरावं ग्राहयेत्। अथानन्तरं जीवनीयादीनां पञ्चानां दशकानां चन्दनादीनामासनान्तानां षण्णां साराणामणुशः सूक्ष्मसूक्ष्मखण्डशश्छिन्नानां क्षिप्तानां कुट्टितानामभयादीनां विड़ङ्गान्तानां सप्तानाञ्च समस्तानां मिलित्वाढ़कमष्टशरावं दशगुणेनाम्भसा दशाढ़केन जलेन द्रव्य

चक्रपाणिः—आमलकरसायनत्वसाम्यादनन्तरं करप्रचितीयमुच्यते। 'करप्रचितानाम्' इतिपदं स्वयंपतितग्रहणं निषेधयते। माघे फाल्गुने वेति ग्रहणवचनात् तथैव गृहीतानामित्यधिकार इत्यागमाद्गम्यते। स्वरस इहामलकस्यैव भवत्यधिकारात्। शाको बृहत्पत्रस्तरुः। क्षिप्तानामिति छिन्नानाम्।

तस्मिन्नाढ़कावशेषे रसे सुपूते तान्यामलकचूर्णानि दत्त्वा गोमयाग्निभिर्वंशविदलशरतेजनाग्निभिर्वा साधयेत्। यावत् अपनयाद्रसस्य तमनुपदग्धमुपहृत्यायसीषु पात्रीष्वास्तीर्य्य शोषयेत्, सुशुष्कं तत् कृष्णाजिनस्योपरि दृशदि श्लक्ष्णपिष्टमयःस्थाल्यां निधापयेत् सम्यक्। तच्चूर्णमयश्चूर्णाष्टभागसंप्रयुक्तं मधु-सर्पिर्भ्यामग्निबलमभिसमीक्ष्य प्रयोजयेदिति॥ २॥

तत्र श्लोकाः।

एतद्रसायनं पूर्व्वं वसिष्ठः कश्यपोऽङ्गिराः।
यमदग्निर्भरद्वाजो भृगुरन्ये च तद्विधाः॥
प्रयुज्य प्रयता मुक्त-श्रमव्याधिजराभयाः।
यावदैच्छंस्तपस्तेपुस्तत्प्रभावान्महाबलाः॥

द्वैगुण्यात् षष्ठ्युत्तरशतशरावोदकेन मन्दाग्नौ साधयेत्। तस्मिन्नाढ़कावशेष षोड़शशरावशिष्टे सुपूते वस्त्रगालिते रसे क्वाथे तानि पूर्व्वगृहीतानि आमलक स्वरसभावितानि चूर्णितान्यामलकानि दत्त्वा क्षिप्त्वा गोमयाग्निभिर्व्वन्य-करीषाग्निभिरथवा वंशविदलशराभ्यां तेजनैः प्रज्वालितैरग्निभिः साधयेत्। रसस्य तत्क्वाथस्यापनयात् क्षयात् यावत् तं चूर्णं पक्वमनुपदग्धं किञ्चिदार्द्र-त्वेनावशिष्टमुपहृत्य अवतार्य्यायसीषु पात्रीषु आस्तीर्य्य विस्तीर्य्य शोषयेत्। ततः सुशुष्कं तं पक्वं चूर्णं कृष्णाजिनस्य कृष्णसारचर्म्मण उपरि दृशदि खल्वशिलायां श्लक्ष्णपिष्टमयःस्थाल्यां निधापयेत् स्थापयेत् तच्चूर्णमयो लौहं कान्तादिसंज्ञं पुटितं मारितं लौहशास्त्रोक्तविधिना मारितश्च स्वर्णं तच्चूर्णा-नामष्टभागैकभागं पृथक् गृहीत्वा त्रयं मिश्रीकृत्य मधुसर्पिर्भ्यां यथाग्निबलं यथोक्तं कुटीं प्रविश्य प्रयोजयेत् यावत् तदौषधावसानमिति। जीर्णे शालिषष्टि-काशनमेकवारं सर्पिषा पयसा॥ २॥

गङ्गाधरः—अस्य पुरावृत्तमाह—तत्र श्लोका इत्यादि। एतदित्यादि। वसिष्ठा-दयो महर्षय एतद्रसायनं प्रयताः सन्तः प्रयुज्य श्रमादितो मुक्ताः सन्तो

इह गोमयाग्न्याद्युपकरणानियमेनैव शतक्रतुकर्पो भवतीति ऋषिवचनाद्गम्यते, यदुक्तं—"ऋषयस्त्वेव जानन्ति योगसंयोगजं फलम्" इति। एवमन्यत्रापि इतिकर्त्तव्यतानियमो व्याख्येयः। कृष्णाजिनस्य

तपसा ब्रह्मचर्य्येण ध्यानेन प्रशमेन च ।
रसायनविधानेन कालयुक्तिर्न * चायुषा ॥
स्थिता महर्षयः पूर्व्वं न हि किञ्चिद् रसायनम् ।
ग्राम्याणामन्यकार्य्याणां सिद्धिश्चाप्रयतात्मनाम् ॥
इदं रसायनं चक्रे ब्रह्मा वार्षसहस्रिकम् ।
जराव्याधिप्रशमनं बुद्धीन्द्रियबलप्रदम् ॥ ३ ॥

आमलकायसं ब्रह्मरसायनम् ।

संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत् सदा ।
सावित्रीं मनसा ध्यायन् ब्रह्मचारी जितेन्द्रियः † ॥

महाबलाश्च सन्तो यावत् तप ऐच्छन् तावत् तपस्तेपुः, तपसा पुनर्ब्रह्मचर्य्यादिना च रसायनविधानेन चायुषा सह कालयुक्तिर्न च तेषाम् अपरिमितकालप्रमाणमायुरित्यर्थः । ननु महर्षीणां पूर्व्वं किं न तथाविधमायुरित्यत आह—स्थिता इत्यादि । पूर्व्वं हि महर्षयः स्थिताः रसायनं किञ्चिदवस्थित ग्राम्याणामन्यकार्य्याणां तपःपरत्वादिरहितानामप्रयतात्मनां तेषां सिद्धिश्च न स्थिता, तेषान्तु सिद्ध्यर्थं तदिदं रसायनं वर्षसाहस्रिकादिकं ब्रह्मा चक्रे ॥३॥

इत्यामलकायसम् ।

गङ्गाधरः—संवत्सरमित्यादि । पयोवृत्तिर्गव्यदुग्धमात्राहारः सन् संवत्सरं गवां मध्ये सदा दिवारात्रं वसेत् । किं कुर्व्वन् वसेदित्यत आह—सावित्रीमित्यादि । सावित्रीं वेदोक्तां ब्रह्मगायत्रीं मनसा ध्यायन् जपन् । ब्रह्मचारी व्यवायरहितः जितेन्द्रियः मनःसंकल्परहितः तथा वसन् ।

इति कृष्णसाराजिनस्य । सम्प्रति रसायनस्य तपोब्रह्मचर्य्यध्यानादियुक्तस्यैव महाफलत्वं भवतीति दर्शयन्नाह—तपसेत्यादि । कालयुक्तेन चायुषेति अनियतकालयुक्तेन चायुषेत्यर्थः, नियतकालायुषं प्रति तु न रसायनं फलवदित्युक्तमेव । स्थिता इति दीर्घकालजीविनः । विपर्य्ययेण तपःप्रभृतिविरहे रसायनस्याफलतामाह—न हीत्यादि ॥ १—३ ॥

चक्रपाणिः—ब्रह्मचारित्वेनेन्द्रियनियमे लब्धेऽपि यतेन्द्रियपदसम्बन्ध इन्द्रियनियमातिशय्योप-

* कालयुक्तेन इति पाठान्तरम् ।  † यतेन्द्रिय इति चक्रः ।

संवत्सरान्ते पौषीं वा माघीं वा फाल्गुनीं तिथिम्।
त्र्यहोपवासी शुक्लस्य प्रविश्यामलकीवनम्॥
बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलम्।
गृहीत्वा पाणिना तिष्ठेज्जपन् ब्रह्मामृतागमात्॥
तदा ह्यवश्यममृतं वसत्यामलके क्षणम्।
शर्करामधुकल्पानि स्नेहवन्ति मृदूनि च॥

संवत्सरान्ते पौषीं माघीं फाल्गुनीं वा शुक्लपक्षस्य तिथिं पौर्णमासीम्। त्र्यहम् उपवासी भूत्वा परदिने पौषीं शुक्लां तिथिं पौणमासीं माघीं फाल्गुनीं वामलकी-वनं प्रविश्य बृहत्फलाढ्यं द्रुममामलकीवृक्षमारुह्य स्वयं शाखागतं फलं पाणिना गृहीत्वा ब्रह्म प्रणवं कतिधा जपन् तिष्ठेदा अमृतागमात् तत्र फले अमृता-गमनपर्य्यन्तं यावदमृतागमनं तत्र फले भवति तावज्जपेत्। नन्वमृतागमनं यदि न स्यादित्यत आह—तदा हीत्यादि। हि यस्मात्। तदा तथाविधपुरुषस्य तत्र प्रणवजपकाले अवश्यं तत्रामलके अमृतं क्षणं कालं वसति न तु तत्र तद्व्यभिचारः। ननु तत्रामृतावासः कथं बुध्येतेत्यत आह—शर्करेत्यादि। तान्यामलकफलान्यमृतसंयोगात् कषायाम्लादिरसान् त्यक्त्वा शर्करामधुकल्पानि मधुराणि भवन्ति। ननु तर्हि किं पुनःपुनस्तत्फलभक्षणेन परीक्षेतामृतवासः? यत् तु फलं भक्षणेन शर्करामधुकल्पं नास्वाद्यते तत् फलं त्यक्त्वा पुनःपुनर्ब्रह्म जपेदिति। रसतस्तदमृतवासलक्षणमुक्त्वा प्रत्यक्षलक्षणमाह—स्नेहवन्तीत्यादि। तथा च यावता कालेन तदामलकफलं स्निग्धमपूर्व्वं मृदु च लक्ष्यते तावत् प्रणव जपेत्, ततः स्निग्धमृदु च दृष्ट्वा तत् फलं पाणिना प्रचिनुयात् ततोऽपरफले तथा जपेदिति। क्षणकालेन यावन्ति फलानि भवन्ति तावन्ति प्रचिनुयात् क्षणादूर्द्ध्वममृतं हि तत्र नावतिष्ठेत् "वसत्यामलके क्षणम्" इत्युक्तेः। पूर्व्वप्रचित-फलं यावता स्निग्धत्वं मृदुत्वं न त्यजेत् तावत् कालं यावन्ति फलानि सम्भवन्ति

दर्शनार्थः। पौषादिषु संवत्सरान्तत्वं नियमाद्दिनगणनमारभ्य वर्षपूरणेन ज्ञेयम्। फाल्गुनीमित्यस्यान्ते प्राप्येति शेषः। "न द्रुममारोहेद्" इत्यस्य इह 'आरुह्य द्रुमम्' इति वचनेनापवादः। जपन् ब्रह्मेति

भवन्त्यमृतसंयोगात् तानि यावन्ति भक्षयेत् ।
जीवेद् वर्षसहस्राणि तावन्त्यागतयौवनः ॥
सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः ।
स्वयञ्चास्योपतिष्ठन्ते श्रीर्वेदा वाक् च रूपिणी * ॥ ४ ॥

इति केवलामलकरसायनम् ।

त्रिफलाया रसे मूत्रे गवां क्षारे च लावणे ।
क्रमेण चेङ्गुदीक्षारे किंशुकक्षार एव च ॥
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि वापयेत् ।
चतुरङ्गुलदीर्घाणि तिलोत्सेधसमानि च ॥

तावन्ति फलानि प्रचिनुयादिति निष्कर्षः । तस्याशिषमाह—तानीत्यादि । तान्यामलकफलानि यावन्ति यावत्संख्यकानि भक्षयेत् तावन्ति वर्षसहस्राणि आगतयौवनः सन् जीवेत् । एषामुक्तानामामलकफलानां सौहित्यं यावत् क्षुधं भुक्त्वा तृप्तिं गत्वा स पुमान् अमरसन्निभो भवति अस्य तदामलकफल-सौहित्यं गतस्यास्य श्रीर्लक्ष्मीः स्वयमुपतिष्ठते वेदाः स्वयमुपतिष्ठन्तेऽधीताभ्यस्त-वदुपस्थिता भवन्ति । वाक् सरस्वती रूपिणी मूर्त्तिमती च देवी स्वयमुप-तिष्ठते । इत्यर्थः ॥ ४ ॥ इति केवलामलकरसायनम् ॥

गङ्गाधरः—योगान्तरमाह—त्रिफलेत्यादि । चतुरङ्गुलदीर्घाणि तिलोत्सेध समानि पत्तलीकृतानि तीक्ष्णायसस्य पत्राणि वह्नौ तापयित्वाग्निवर्णानि कृत्वा पूर्व्वं त्रिफलायाः रसे क्वाथे वापयेत् क्षिपेत् । ततः उद्धृत्य पुनर्वह्नौ दग्ध्वा वह्निवर्णानि कृत्वा गोमूत्रे वापयेत् क्षिपेत् । तत उद्धृत्य पुनर्वह्नौ दत्त्वा वह्निवर्णानि कृत्वा क्षारे यवक्षारोदके क्षिपेत् । तत उद्धृत्य पुनस्तानि तीक्ष्णायसपत्राणि वह्नौ दत्त्वा वह्निवर्णानि कृत्वा लावणे सैन्धवलवणोदके क्षिपेत् । तत उद्धृत्य पुनस्तानि वह्नौ दत्त्वा वह्निवर्णानि कृत्वा इङ्गुदीक्षारे जीवपुत्रिककाष्ठक्षारोदके क्षिपेत् । तत उद्धृत्य पुनस्तानि वह्नौ दत्त्वा वह्निवर्णानि कृत्वा किंशुकक्षारे पलाशकाष्ठ

ओंकारं जपन् । अमृतागमादिति अमृतागमपर्य्यन्तम् । सौहित्यमेषामिति करणे षष्ठी । वेदवाक्य-रूपिणीति तदधिष्ठात्री देवता ॥ ४ ॥

चक्रपाणिः—क्षार इति परिस्राविणि क्षारोदके । क्षारे लावण इति ज्योतिष्मत्याः क्षारे । साधयेत्

* वेदवाक्यरूपिणी इति चक्रः ।

ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्।
तानि चूर्णानि मधुना रसेनामलकस्य च॥
युक्तानि लेहवत् कुम्भे स्थितानि घृतभाविते।
संवत्सरं निधेयानि यवपल्वे तदेव च॥
दद्यादालोड़नं मासे सर्व्वत्रालोड़यन् बुधः।
संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा॥
प्रातःप्रातर्बलापेक्षी सात्म्यं जीर्णे च भोजनम्।
एष एव च लोहानां प्रयोगः संप्रकीर्त्तितः॥
अनेनैव विधानेन हेम्नश्च रजतस्य च।
आयुःप्रकर्षकृत् सिद्धः प्रयोगः सर्व्वरोगनुत्॥

भस्मक्षारोदके क्षिपेत्। एवं क्रमेण शोधयेत्। ततस्तानि तीक्ष्णायसपत्राण्यञ्जनाभानि ज्ञात्वा सूक्ष्मचर्णानि कारयेत्। तान्यायसस्य सूक्ष्मचूर्णानि मधुना संवत्सरातीतमधुनामलकस्य स्वरसेन च समेन मेलयित्वा लेहवत् युक्तानि कृत्वा घृतभावितकुम्भे स्थितानि कृत्वा यवपल्वे यवपल्वराशौ संवत्सरं निधेयानि कारयेत्। तच्च लेहवदौषधं बुधो भिषक् मासे मासे सर्व्वत्रालोड़यन् सन् आलोडनं सममधु आमलकरसं दद्यात्। ततः संवत्सरात्यये तस्य सिद्धस्यायसस्य मधुसर्पिषा मात्रया प्रयोगः कुटीप्रविष्टेन संशुद्धदेहेन स्वबलापेक्षिणा प्रातः-प्रातः कार्य्यः। जीर्णे च सति भुक्ते तल्लौहे सात्म्यं भोजनम्। एष एव लौहानाञ्च सिद्धः प्रयोग आयुःप्रकर्षकृत् सर्व्वरोगनुत्। अनेन विधानेन हेम्नश्च स्वर्णस्य रजतस्य च रूप्यस्य एष एव सिद्धः प्रयोगः आयुःप्रकर्षकृत् सर्व्वरोगनुच्च। एतेन स्वर्णस्य रूप्यस्य च चतुरङ्गुलदीर्घाणि तिलोत्सेधसमपत्तलानि पत्राणि त्रिफलारसगोमूत्रादिषु शोधयेत्। ततोऽञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्। ततस्तानि मधुनामलकरसेन च समेन युक्तानि कृत्वा घृतभावितकुम्भे संस्थाप्य यवपल्वराशौ संवत्सरं निधापयेत् मासे मासे सर्व्वत्र आलोडयन्नालोडनं सममध्वामलकरसं दद्यात्। वत्सरान्ते तस्य मधुसर्पिषा प्रातःप्रातः पुरुषस्य कुटीप्रविष्टस्य संशुद्धदेहस्य बलापेक्षिमात्राप्रयोगः।

नाभिघातैर्न चातङ्कैर्जरया न च मृत्युना ।
स बाध्यः * स्याद् गजप्राणः सदा चातिबलेन्द्रियः ॥
धीमान् यशस्वी वाक्सिद्धः श्रुतधारी महाबलः † ।
भवेत् समां प्रयुञ्जानो नरो लौहरसायनम् ॥ ५ ॥

इति लौहादिरसायनम् ।

ऐन्द्री मत्स्याक्षिको ब्राह्मी वचा ब्रह्मसुवर्च्चला ।
पिप्पल्यो लवणं हेम शङ्खपुष्पी विषं घृतम् ॥
एषां त्रियवकान् भागान् हेमसर्पिर्विषैर्विना ।
द्वौ यवौ तत्र हेम्नस्तु तिलं दद्याद् विषस्य च ॥

जीर्णे च सात्म्यमायुष्यभोजनमिति ख्यापितम् । ननु कियन्ति दिनान्यस्य प्रयोगः कर्त्तव्य इत्यत आह—नाभिघातैरित्यादि । इदं लौहरसायनं हेमरसायनं रजतरसायनं वा समां संवत्सरं व्याप्य प्रयुञ्जानो नरो नाभिघातैः संप्रहरण-वज्रादिप्रहारैर्न चातङ्कैर्व्याधिभिर्न च जरया न च मृत्युना मरणेन बाध्यः स्यात् गजवत् प्राणादिश्च स्यादिति । लौहरसायनं हेमरसायनं रजतरसायनञ्च ॥ ५ ॥

गङ्गाधरः—ऐन्द्रीत्यादि । ऐन्द्री गोरक्षकर्कटी मत्स्याक्षिको तण्डुलीयमूलं ब्राह्मी शाकविशेषः वचा ब्रह्मसुवर्च्चला सूर्य्यभक्ता ; सुश्रुते तल्लक्षणमुत्पत्तिस्थानञ्चोक्तं—"कनकाभा जलान्तेषु सर्व्वतः परिसर्पति । सक्षीरा पद्मिनीप्रख्या ज्ञेया ब्रह्मसुवर्च्चला" ॥ इति । पिप्पल्यो मगधोद्भवाः । लवणं सिन्धूद्भवम् । हेम सुवर्ण, तस्य च उपयोगार्थं पूर्व्वोक्तविधानेन चूर्णं कर्त्तव्यम् शङ्खपुष्पी चोरपुष्पी विषं मौलविषं वत्सनाभादिकं यौगिकं, न चायौगिकं कालकूटादिकम् । (घृतम्) । एषामेकादशानां हेमसर्पिर्विषैर्विनाष्टानां द्रव्याणां प्रत्येकं त्रियवकान् यवत्रयमितान् भागान् तत्र हेम्नो द्वौ यवौ विषस्य च तिलं

इति निर्व्वापयेत् । तदेवेत्यामलकरसम् । लौहानाम् इत्यनेनैव लौहान्तर्निविष्टयोः सुवर्णरजतयोः आद्ययोर्ग्रहणे सिद्धे पुनस्तयोर्वचनं तयोर्विशेषेणादरोपदर्शनार्थम् । रसायनप्रभावादेव महाधनत्वमिति ज्ञेयम् ॥ ५ ॥

चक्रपाणिः—मत्स्याख्यको मच्छुरिति लोके ख्यातः, अन्ये तु ऐन्द्रीभेदं मत्स्याख्यक-

* धृष्य इति वा पाठः ।　　† महाधनः इति चक्रः ।

सर्पिषश्च पलं दद्यात् तदैकध्यं प्रयोजयेत्।
घृतप्रभूतं सक्षौद्रं जीर्णे चान्नं प्रशस्यते॥
जराव्याधिप्रशमनं स्मृतिमेधाकरं परम्।
आयुष्यं पौष्टिकं बल्यं स्वरवर्णप्रसादनम्॥
परमूर्ज्जस्कर-*-श्चैतत् सिद्धमैन्द्रं रसायनम्।
नैनं प्रसहते कृत्या नालक्ष्मीर्न विषं न रुक्॥
श्वित्रं सकुष्ठं जठराणि गुल्माः प्लीहा पुराणो विषमज्वरश्च।
मेधास्मृतिज्ञानहराश्च रोगाः शाम्यन्त्यनेनातिबलाश्च वाताः॥६॥

इत्यैन्द्ररसायनम्।

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥

तिलपरिमाणं भागं सर्पिषश्च वत्सरातीतस्य पलमष्टतोलकं तोलकप्रमाणन्तु दशरक्तिकमानमाषकाष्टकं तथाविधाष्टतोलकं पलं दद्यात्। सर्व्वमेतदैकध्यं मिश्रीकृत्य संशुद्धतनोः कुटीं प्रविष्टस्य प्रयोजयेत्। जीर्णे च तस्मिन्नौषधे घृतप्रभूतं घृताढ्यं सक्षौद्रमन्नं शालिषष्टिकान्नं प्रशस्यते। एनमैन्द्ररसायनपरं पुरुषं कृत्या न प्रसहते नाक्रमते न चालक्ष्मीर्न च विषं न च रुक्। अस्यापि संवत्सरप्रयोगो बोध्यः प्रकरणात्॥ ६॥ ऐन्द्ररसायनम्।

गङ्गाधरः—योगान्तरमाह—मण्डूकपर्ण्या इत्यादि। मण्डूकपर्ण्या दन्त्याः स्वरसः प्रयोज्यः। प्रयोगविधिराशिषश्च मण्डूकपर्ण्याः सुश्रुतोक्ताः पूर्व्वं लिखिता मया। यष्टीमधुकस्य चूर्णं क्षीरेण प्रयोज्यं यथोक्तागारप्रवेशादिपूर्व्वक-क्षीरसर्पिरोदनाशनस्येति। एवं गुडूच्याः स्वरसो यथाबलं संशुद्धदेहेन कुटीं प्रविश्य प्रयोज्यः। जीर्णे सर्पिःक्षीरोदनाशनं विधेयमिति। शङ्खपुष्प्याः समूलपुष्प्याः कल्को यथाबलं शुद्धतनुना कुटीं प्रविश्य प्रयोज्यः। जीर्णे

माहुः। लियवकानिति लियवप्रमाणतुल्यान्। घृतप्रभूतमित्यन्नविशेषणम्। कृत्याभिचारः॥ ६॥

* परमोजस्करश्चैतत् इति च पाठः।

आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी ॥७॥

इति मेधाकररसायनानि ।

पञ्चाष्टौ * सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ८ ॥
तिस्रस्तिस्रस्तु पूर्व्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षार-भाविता घृतभर्ज्जिताः ॥
प्रयोज्या मधुसर्पिर्भ्यां रसायनगुणैषिणा ।
जेतुं कासं क्षयं श्वासं शोषं हिक्कां गलामयान् ॥

क्षीरसर्पिःशालिषष्टिकोदनाशनं विधेयम् । एषां मण्डूकपर्णीवद् वा प्रयोगः कार्य्यः । समानाशिष्टात् दिनमानं मण्डूकपर्णीवदिति । मेध्या विशेषेणातिशयेन शङ्खपुष्पी मण्डूकपर्ण्यादिषु मध्ये बोध्या ॥ ७ ॥ मेधाकररसायनानि ।

गङ्गाधरः—योगान्तरमाह—पञ्चेत्यादि । पञ्च वा पिप्पलीः अष्टौ वा पिप्पलीः सप्त वा पिप्पलीदश वा पिप्पलीश्चूर्णीकृताः कल्कीकृता वानुरूपेण मधुसर्पिषा वत्सरातीतेन देहबलापेक्षया संशुद्धतनुः कुटीं प्रविश्य रसायन-गुणान्वेषी समामेकामेकवत्सरं व्याप्य प्रयोजयेत् जीर्णे च क्षीरशालिषष्टि-काशनमद्यात् ॥ ८ ॥

गङ्गाधरः—कल्पान्तरमाह—तिस्र इत्यादि । रसायनगुणैषिणा पुंसा किंशुकक्षारभाविताः पलाशक्षारोदकेन सप्तधा भाविताः पिप्पल्यो घृत-भर्ज्जिता वत्सरातीतघृतेन किञ्चिद्भ्रष्टारितस्रः कल्कीकृताश्चूर्णिता वा मधुसर्पिर्भ्यां वत्सरातीताभ्यां पूर्व्वाह्णे प्रयोज्याः । तथाविधाश्च तिस्रस्तथैव प्रकारेण भोजनस्याग्रे च प्रयोज्याः । पुनस्तथाविधास्तिस्रः पिप्पल्यस्तेनैव प्रकारेण भुक्त्वा भोजनस्यान्ते च प्रयोज्याः । भोजनन्तु क्षीरसर्पिरोदन इति ।

चक्रपाणिः—मण्डूकपर्ण्या इत्यादयश्चत्वारो योगाः ॥ ७ ॥

चक्रपाणिः—पञ्चेत्यादौ संख्याव्यतिक्रमेणानुक्तसंख्यानामपि पिप्पलीनामुपयोगं सूचयति । यद्यपि "त्रीण्यपि द्रव्याणि नात्युपयुञ्जीत पिप्पलीक्षारलवणानि" इत्युक्तम्, तथापीह द्रव्यान्तर-

* अष्टावित्यत्र पट् इति बहुषु ग्रन्थेषु पाठः ।

अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम्।
वैस्वर्य्यं पीनसं शोफं गुल्मं वातबलासकम्॥ ६॥

इति पिप्पलीरसायनम्।

क्रमवृद्धया दशाहानि दशपैप्पलिकं दिनम्।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः॥
जीर्णेऽजीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः॥

वत्सरं यावत् प्रयोगः शुद्धतनुना कुटीं प्रविश्य विधेयः। शोफं श्वयथुम्॥ ९॥

गङ्गाधरः—प्रकारान्तरमाह—क्रमेत्यादि। दश पिप्पल्यो यत्र दिने तद् दशपैप्पलिकं दिनं, क्रमेण वृद्धया दशपैप्पलिकं दिनं यथा स्यात् तथा पयसा सार्द्धं सह दशाहानि वर्द्धयेत् तथा दशाहानि क्रमापकर्षेण पुनरपनयेत् ह्रासयेत् पयसा सार्द्धमेव। जीर्णे चास्मिन्नौषधेऽजीर्णे वास्मिन्नौषधे क्षीरसर्पिषा षष्टिकमन्नं भुञ्जीत। एवमेकोनविंशतिदिनप्रयोगे एकीकरणे यावद्भवति तदाह—पिप्पलीनामित्यादि। ननु पयोवृद्धिः कियन्मानेन कर्त्तव्या किं तन्त्रान्तरप्रोक्तमानेन? तद् यथा। हारीतः—त्रिपञ्चसप्तदश वा प्रकुञ्चपयसा सह। पिवेत् क्रमात् त्रैदोषिकः पित्तवातकफान् जयेत् इति। भोजश्च त्रिपञ्चसप्तदश वा पिप्पल्यः पयसा सह। प्रकुञ्चवृद्धेन पिवेन्नरः प्रोक्तान् गदान् जयेत् इति। इति चेन्न, तयोर्हि पञ्चसप्तपिप्पलीप्रयोगदृष्टत्वात् योगान्तरत्वात्। परन्तु पिप्पल्यनुरूपेण क्रमवृद्धपयसा सार्द्धं बोध्यमिति कश्चित्। प्रत्यहं पलमानेन दुग्धवृद्धया पयोबाहुल्ये तथा कार्य्यमिति व्यवस्था। दशदशवृद्धया षट्षट्पिप्पलीवृद्धया वा त्रित्रिपिप्पलीवृद्धया वा चरकाचार्य्य-

संयुक्तानां पिप्पलीनामभ्यासे न विरुद्धम्। किंवा उक्तपिप्पलीरसायनव्यतिरेकेणोत्सर्गापवादन्यायात् स निषेधो ज्ञेयः। किंशुकः पलाशः॥ ९॥

चक्रपाणिः—पिप्पलीवर्द्धमानमाह—क्रमवृद्धेत्यादि। दश पिप्पल्यो यत्र वर्द्धन्ते तद्दिनं दशपिप्पलिकम्, तेन प्रत्यहं दश पिप्पल्यो वर्द्धनीया इत्यर्थः। ततश्चोनविंशतिदिनैर्वृद्धिह्रासक्रमेण

पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ।
चूर्णीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट्प्रकीर्त्तितः ।
प्रयोगो यस्त्रिपर्य्यन्तः स कनीयान् स चावलैः ॥

वचनात् । ननु पिप्पल्यः कथंकारं प्रयोक्तव्या इत्यत आह—पिष्टा इत्यादि । बलिभिर्बलवद्भिः पुरुषैः पिष्टास्ताः पिप्पल्यः प्रयोज्याः । मध्यबलैः शृताः षोड़शगुणेन जलेन पक्त्वा चतुर्थांशशेषमष्टावशिष्टं वा कृत्वा पयसा मिश्रीकृत्य पेयाः । ( ह्रस्वबलैः शीतीकृत्य शीतकषायं कृत्वा योज्याः । ) ननु दशपिप्पलीः उपयोक्तुमसमर्थाः किं कुर्य्युरित्यत आह—दशेत्यादि । षट् प्रकीर्त्तिताः पिप्पल्यो यत्र षट्प्रकीर्त्तितः स मध्यमः प्रयोगः । तथा च प्रथमदिनं दश पिप्पलीः पयसालोड्य पिबेत्, द्वितीयेऽह्नि विंशतिं, तृतीये त्रिंशतं, चतुर्थे चत्वारिंशतं, पञ्चमे पञ्चाशतं, षष्ठे षष्टिं, सप्तमे सप्ततिम्, अष्टमे अशीतिं, नवमे नवतिं, दशमे शतम् इति वृद्धिस्ततो ह्रासः । एकादशे नवतिं, द्वादशे अशीतिं, त्रयोदशे सप्ततिं, चतुर्द्दशे षष्टिं, पञ्चदशे पञ्चाशतं, षोड़शाहे चत्वारिंशतं, सप्तदशाहे त्रिंशतम्, अष्टादशाहे विंशतिम्, एकोनविंशाहे दश इति दशवृद्ध्या प्रयोगः समाप्तः। षट्पिप्पलीवृद्ध्या तु ।प्रथमाहे षट् पिप्पल्यः, द्वितीये द्वादश, तृतीये अष्टादश, चतुर्थे चतुर्व्विंशतिः, पञ्चमे त्रिंशत्, षष्ठे षट्त्रिंशत्, सप्तमे द्विचत्वारिंशत्, अष्टमे अष्टचत्वारिंशत्, नवमे चतुःपञ्चाशत्, दशमे षष्टिः, एकादशे षट्षष्टिः, द्वादशे द्वासप्ततिः, त्रयोदशे अष्टासप्ततिः इति क्रमात् षट्षट्पिप्पलीवृद्ध्या समुदायेन षट्चत्वारिंशदुत्तराणि पञ्चशतानि भवन्ति । ततश्चतुर्द्दशदिने षट्पिप्पलीह्रासेन द्विसप्ततिः, पञ्चदशाहे षट्षष्टिः, षोड़शाहे षष्टिः, सप्तदशाहे चतुःपञ्चाशत्, अष्टादशाहेऽष्टाचत्वारिंशत्, एकोनविंशाहे द्वाचत्वारिंशत्, विंशाहे षट्त्रिंशत्, एकविंशाहे त्रिंशत्, द्वाविंशाहे चतुर्व्विंशतिः, त्रयोविंशाहे अष्टादश, चतुर्व्विंशाहे द्वादश, पञ्चविंशाहे षट् इति, एकीभूय चतुर्द्दशोत्तरं पिप्पलीसहस्रं भवति ; न चाधिक्ये प्रयोगहानिः अत एव दशवृद्ध्या पिप्पलीनां सहस्रस्य प्रयोगे यथा तथा षड़्वृद्ध्या चतुर्द्दशोत्तरपिप्पलीसहस्रप्रयोगोऽयं रसायनः । एवं त्रिवृद्ध्या-

एकेनैव सहस्रं पूर्णं भवति । चूर्णीकृता इत्यत्र शीतीकृता वा पाठः । पिप्पलीवर्द्धमानक्रमयुक्तमुत्कृष्टं दर्शयन्नपरमपि वर्द्धमानक्रमद्वयं मध्यमत्वावरत्वाभ्यामाह—दशेत्यादि । प्रकीर्त्तित इति

वृंहणं स्वर्य्यमायुष्यं प्लीहोदरविनाशनम्।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम्॥ १०॥

इति वर्द्धमानपिप्पलीरसायनम्।

त्रिनवत्युत्तर पिप्पलीसहस्रप्रयोगोऽयं रसायन इत्युन्नेयम्। एवं त्रित्रिपिप्पली वृद्ध्या ;यथा—प्रथमदिने तिस्रः पिप्पल्यः, द्वितीयाहे षट्, तृतीये नव, चतुर्थे द्वादश, पञ्चमे पञ्चदश, षष्ठे अष्टादश, सप्तमेऽहन्येकविंशतिः, अष्टमे चतुर्व्विंशतिः, नवमे सप्तविंशतिः, दशमे त्रिंशत्, एकादशे त्रयस्त्रिंशत्, द्वादशे षट्त्रिंशत्, त्रयोदशे एकोनचत्वारिंशत्, चतुर्दशे द्वाचत्वारिंशत्, पञ्चदशे पञ्चचत्वारिंशत्, षोड़शेऽष्टाचत्वारिंशत्, सप्तदशे त्वेकपञ्चाशत्, अष्टादशे चतुःपञ्चाशत्। इति त्रित्रिपिप्पली-वृद्ध्या त्रयोदशोत्तराणि पञ्चशतानि। एकोनविंशाहेऽपि चतुःपञ्चाशत्। ततो विंशाहे ह्रासादेकपञ्चाशत्, एकविंशाहे अष्टाचत्वारिंशत्, द्वाविंशाहे पञ्चचत्वारिंशत्, त्रयोविंशाहे द्वाचत्वारिंशत्, चतुर्व्विंशाहे एकोनचत्वारिंशत्, पञ्चविंशाहे षट्त्रिंशत्, षड्विंशाहे त्रयस्त्रिंशत्, सप्तविंशाहे त्रिंशत्, अष्टाविंशाहे सप्तविंशतिः, एकोनत्रिंशाहे चतुर्व्विंशतिः, त्रिंशाहे एकविंशतिः, एकत्रिंशाहेऽष्टादश, द्वात्रिंशाहे पञ्चदश, त्रयस्त्रिंशाहे द्वादश, चतुस्त्रिंशाहे नव, पञ्चत्रिंशाहे षट्, षट्त्रिंशाहे तिस्रः। इति एकीभूय षड्विंशत्युत्तरस्य पिप्पलीसहस्रस्य प्रयोगोऽयं कनीयान् स चावलैः प्रयोज्यः। एतेन पिप्पलीवर्द्धमानप्रयोगस्य तुल्याशिष एव, त्रिधाप्रयोगस्त्रिधापुरुषाभिप्रायेण। तत्रापि कल्कशृतचूर्णीकृतत्वेन त्रिधाप्रयोगः प्रवरमध्यबलावलानामुत्कर्षमध्यमापकर्षभेदेनाचार्य्येणोक्त इति बोध्यम्। चूर्णीकृता इत्यत्र शीतीकृता इत्येव पाठो युक्तः ह्रस्वबलैरुपयुक्तत्वेनोक्तत्वात्। अन्यथा बलिभिः पिष्टा इत्यनेन चूर्णतुल्यबलाभेऽबल-बलिनोस्तुल्यप्रयोगः स्यादिति चूर्णापेक्षया शीतकषायस्याल्पवीर्य्यत्वात् मध्यबलस्य पञ्च सप्त वा पिप्पल्यः क्रमवृद्ध्योपयुज्यन्ते। यदुक्तं हारीत-भोजाभ्यां तदनेनाप्रतिषिद्धम्॥ १०॥ इति वर्द्धमानपिप्पलीरसायनम्।

षट्वृद्ध्या पूर्व्वाचार्य्यैरुक्तः। विपर्य्यन्त इत्यस्यान्ते पिप्पलीवयावस्थानात् पिप्पलीलिकेणैव वृद्धिर्भवति, ततो दशपिप्पलीके दशैवान्ते भवन्ति॥ १०॥

जरणान्तेऽभयामेकां प्रागभुक्ते द्वे विभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च ॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ।
जीवेद् वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ ११ ॥
त्रैफलेनायसीं पत्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत् चौद्रोदकाप्लुतम् ॥
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चैव समाः शतम् ॥ १२ ॥

गङ्गाधरः—जरणान्ते इत्यादि। रसायनमिच्छुः पुमान पूर्व्वं शुद्धतनुः सन यथोक्तमागारं प्रविश्य सर्पिःक्षीरशालिषष्टिकाशनः पूर्व्वदिनाहारस्य जरणान्ते अर्थात् प्रातःकाले। यावत् पूर्व्वदिनाहारपाकशङ्का तावन्नाभयां प्रयोजयेदिति ख्यापनाय जरणान्ते इत्युक्तम्। तथा च पूर्व्वदिनाहारे जीर्ण प्रातःकाले ऊर्द्ध्वं वाभयामेकां गुड़कां पिष्ट्वा वा संचर्ण्य मधुसर्पिर्भ्यां वत्सरातीताभ्यां लिहेत्। प्राग भुक्ते भोजनात् पूर्व्वकाले तथैव द्वे विभीतके फले मधुसर्पिर्भ्यां लिहेत्। ततो भोजनोत्तरमाचम्य चत्वार्य्यामलकानि फलानि तथैव मधुसर्पिर्भ्यां लिहेत्। एकां समाम् एकवत्सरं व्याप्य। एवंप्रकारेण प्रयोजयेदिति ॥ ११ ॥

गङ्गाधरः—त्रैफलेनेत्यादि। नवामायसीं कान्तादिलौहमयीं पत्रीं प्रातःकाले त्रैफलेन समभागीकृतत्रिफलाकल्केन आलेपयेत्। तल्लेपनमहोरात्रस्थितं पुनः प्रातःकाले तत्पत्रादुद्धृत्य क्षौद्रोदकाप्लुतं मधुमिश्रितजलेनाप्लुतीकृत्य शुद्धतनुः पुमान कुटीं प्रविश्य यथाबलं पिबेत्। तत्रौषधे जीर्णे सति प्रभूतस्नेहं स्नेहाढ्यमशनमायुष्यक्षीरशाल्याद्यशनं प्रशस्यते। एवं प्रत्यहमुपयोगेन समाभ्यासात् समां संवत्सरं व्याप्याभ्यासादजरोऽरुक सन समाः शतं वर्षशतं जीवेदिति ॥ १२ ॥

चक्रपाणिः—जरणान्त इत्यादौ मधुसर्पिर्भ्यामिति अभयां विभीतके आमलकानीत्यनेन च

मधुकेन तुगाक्षीर्य्या पिप्पल्या क्षौद्रसर्पिषा।
त्रिफला सितया चापि युक्ता सिद्धं रसायनम्॥ १३॥
सर्व्वलौहैः सुवर्णेन वचया मधुसर्पिषा।
विड़ङ्गपिप्पलीभ्याञ्च त्रिफला लवणेन च॥
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा।
भवत्यायुःप्रदा धन्या जरारोगनिवर्हिणी॥ १४॥

इति त्रिफलारसायनानि।

अनम्लञ्च कषायञ्च कटु पाके शिलाजतु।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः॥

गङ्गाधरः—मधुकेनेत्यादि। त्रिफला चूर्णीकृता कल्कीकृता वा मधुकेन यष्टीमधुचूर्णेन समानाः शुद्धतनोः कुटीप्रविष्टस्यायुष्यक्षीरसर्पिरोदनाद्याहाराशनस्य संवत्सर युक्त्या यथाग्निबलं प्रयुक्तं सिद्धं रसायनं भवति। एवं तुगाक्षीर्य्या वंशलोचनया सह त्रिफला सिद्धं रसायनं भवति। तथा पिप्पल्या सह त्रिफला युक्त्या प्रयुक्ता सिद्धं रसायनं भवति। एवं क्षौद्रसर्पिषा वत्सरातीतेन प्रयुज्य तथा सितया वा त्रिफला प्रयुक्ता तथा भवति। इति पञ्च योगाः॥ १३॥

गङ्गाधरः—सर्व्वेत्यादि। संशुद्धतनोः कुटीप्रविष्टस्यायुष्यक्षीरसर्पिरोदनाद्याहाराशनस्य त्रिफला सर्व्वलौहैः सह समानांशेन मिलिता मेधादिप्रदादिर्भवति। केवलेन मारितसुवर्णेन सह वा त्रिफला तथाविधा भवति। वचया वा सह त्रिफला तथाविधा स्यात्। मधुसर्पिषा सह वा त्रिफला तथाविधा स्यात्। विड़ङ्गपिप्पलीभ्यां वा त्रिफला तथाविधा स्यात्। लवणेन सैन्धवेन वा सह त्रिफला तथार्थकरी स्यात् इति षड़् योगास्त्रिफलायाः। इत्येवं द्वादश योगास्त्रिफलायाः॥ १४॥ त्रिफलारसायनानि।

गङ्गाधरः—अथ शिलाजतुप्रयोगमाह अनम्लमित्यादि। अनम्लमितीषदम्लं न त्वम्लरसरहितं कषायमित्युक्त्या तल्लाभे अनम्लमिति वचनस्य वैयर्थ्यात्।

युज्यते। मधुकेनेत्यादिरेकः प्रयोगः। सर्व्वलौहैरित्याद्यपरः। 'लौहैः' इत्युक्ते सुवर्णे प्राप्ते 'सुवर्णेन' इतिपदं लौहत्वेनाप्रसिद्धस्य ग्रहणनिषेधार्थम्॥ ११—१४॥

चक्रपाणिः—शिलाजतुरसायनं दर्शयितुं शिलाजतुनोऽभ्यर्हितस्य गुणानेव तावदाह—अनम्ल-

हेम्नः स रजतात् ताम्राद् वरं * कृष्णायसादपि ।
रसायनं तद्विधिभिस्तद् वृष्यं तच्च रोगनुत् ॥
वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम् ।
वीर्य्योत्कर्षं परं याति सर्व्वैरेकैकशोऽपि वा ॥
प्रक्षिप्योद्धृतमावानं † पुनस्तत् प्रक्षिपेद् रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥
पूर्व्वोक्तेन विधानेन लौहैश्चूर्णीकृतैः सह ।
तत् पीतं पयसा दद्याद् दीर्घमायुः सुखान्वितम् ॥

पाके विपाके कटु। ननु तर्हि किं वीर्य्येणेदमुष्णं कटुपाकित्वादिति चेन्न, यच्चोष्णं कटुकं तयोरित्युक्तौ विपाके कटुकत्वेऽपि रसे कटुकत्वाभावात्। ननु तर्हि किंवीर्य्यमिदमित्यत आह—नात्युष्णशीतमिति। ननु कुतोऽस्य सम्भव इत्यत आह—धातुभ्य इत्यादि। चतुर्भ्य इति विवृणोति—हेम्न इत्यादि। स इति शिलाजतुः पुंक्लीवोभयलिङ्गत्वात्। ननु किं कर्म्म चास्य तदाह—रसायनमित्यादि। यद्यपीदं स्वत एव यथाविधिभिः प्रयोगात् रसायनं वृष्यं रोगनुच्च, तथाप्यस्य कर्म्मोत्कर्षार्थं संस्कारमाह—वातेत्यादि। सर्व्वैर्वातपित्तकफघ्नैरेकैकशो वा वातपित्तकफघ्नैर्वातपित्तकफरोगहरणार्थं निर्य्यूहैः क्वाथैः सुभावितं सत् परमुत्कृष्टं वीर्य्योत्कर्षं कर्म्मकरणशक्त्युत्कर्षं याति। न तेनात्युष्णशीतवीर्य्यत एवौत्कर्ष्यं याति, क्रियते येन या क्रिया तद्वीर्य्यमित्युक्तेः। ननु कथं भावयेदित्यत आह—प्रक्षिप्येत्यादि। शिलाजतु कोष्णे वातहरादिक्वाथे प्रक्षिप्य अथैनं रौद्रे शोषयेत् पीततत्क्वाथमुद्धृतं पुनरपि तद्रसे तत्क्वाथे कोष्णे प्रक्षिपेत् एतेन विधिना सप्ताहं तस्य शिलाजतुनो भावना। एवं भावितस्य शिलाजतुनो योगमाह—पूर्व्वोक्तेनेत्यादि। पूर्व्वोक्तेन त्रिफलाया रसे मूत्रे इत्याद्युक्तेन विधिना चूर्णीकृतैर्लौहैः सह समानमानतो मिलितं तत् वातादिहरक्वाथभावितं शिलाजतु पयसालोड्य शुद्धतनुना कुटीप्रविष्टेन पुंसा

मित्यादि। वरादिति श्रेष्ठात्। सुश्रुते यद्यपि त्रपुसीसम्भवं प्रक्षिप्य षड्विधशिलाजतु सामान्येन रोगे रसायनाधिकारे चोक्तम्, तथापीह रसायनाधिकारे तदधिकृतचतुर्व्विधमेवोक्तम्। शिलाजतुभावनाविधिमाह—प्रक्षिप्तेत्यादि। प्रक्षिप्तानन्तरमुद्धृतं प्रक्षिप्तोद्धृतम्। लौहैः सहेति

* वरादिति चक्रः।　　† प्रक्षिप्तोद्धृतमप्येनमिति पाठान्तरम्।

जराव्याधिप्रशमनं देहदार्ढ्यकरं परम्।
मेधास्मृतिकरं बल्यं क्षीराशी तत् प्रयोजयेत् ॥
प्रयोगः सप्त सप्ताहास्त्रयश्चैकश्च सप्तकः।
निर्द्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा।
मात्रा पलन्त्वर्द्धपलं स्यात् कर्षस्तु कनीयसी ॥ १४ ॥
जातेर्विशेषं सविधिं तस्य वक्ष्याम्यतः परम्।
हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः ॥
जत्वाभं मृदु मृत्स्नाभं * यन्मलं तच्छिलाजतु।
मधुरश्च सतिक्तश्च जवापुष्पनिभश्च यः।

क्षीरशालिषष्टिकाशनेन यथाग्निबलं पीतं सदस्मै पीतवते सुखान्वितं सुखसंज्ञकं दीर्घमायुर्दद्यात्। अस्य च जराव्याधिप्रशमनादिकरं भवति। ननु कियन्ति दिनानि प्रयोजयेदित्यत आह—प्रयोगः सप्त सप्ताहा इत्यादि। सप्त सप्ताहा एकोनपञ्चाशतं दिनानि व्याप्य प्रयोगः परः श्रेष्ठः। त्रयः सप्ताहाः प्रयोगो मध्यः। एकश्च सप्तकः सप्ताहः प्रयोगोऽवरः कनीयानिति त्रिविधस्तस्य शिलाजतुनः प्रयोगः। सप्ताहा इति द्वितीयार्थे प्रथमा छान्दसत्वात्। मात्रामाह—मात्रेत्यादि। परा मात्रा पलम्। मध्यमा मात्रा तु अर्द्धपलं स्यात्। कनीयसी तु मात्रा कर्ष इति। कनीयसीतिवचनेन ख्यापितं प्रबलमध्यमावरपुरुषान् प्रति क्रमादिति बोध्यम् ॥ १४ ॥

गङ्गाधरः—अथ तस्य शिलाजतुनो जातिविशेषात् स्वविधिमतः परं वक्ष्यामि। तत्रादावस्योत्पत्तिक्रममाह—हेमाद्या इत्यादि। आद्यपदेन रजतताम्रलौहधातुत्रयं गृह्यते। तस्य चिह्नमाह—जत्वाभमित्यादि। जत्वाभं स्पर्शतो जत्वाभं लाक्षासमं न वर्णतः। मृत्स्नाभं मृत्तिकाभं मृदु। जातिभेदमाह—

भागानियमे लौहसमानभागता शिलाजतुनः। प्रयोगः सप्त सप्ताहा इति सप्तसप्ताहव्यापकप्रयोग इत्यर्थः, एवं त्रयश्चैकश्च सप्तक इत्यपि बोद्धव्यम् ॥ १४ ॥

चक्रपाणिः—सविधिमिति विधानसहितम्। शिलाजतुविधानञ्च 'यथाक्रमं वातपित्ते" इत्यादि ग्रन्थेन वक्तव्यम्। हेमादिशब्देनेह हेमादिसम्भवस्थानभूतशिलोच्यते, यतः, न साक्षात् सुवर्णादिभ्य

* मृदुमृत्स्नाच्छम् इति वा पाठः।

कटुर्विपाके शीतश्च स सुवर्णस्य निस्रवः ॥
रूप्यस्य कटुकः श्वेतः शीतः स्वादुर्विपच्यते ।
ताम्रस्य वर्हिकण्ठाभस्तिक्तोष्णः कटु पच्यते ॥
यस्तु गुग्गुलुकाभासस्तिक्तको लवणान्वितः ।
कटुर्विपाके शीतश्च सर्व्वश्रेष्ठः स चायसः ॥
गोमूत्रगन्धयः सर्व्वे सर्व्वकर्म्मसु यौगिकाः ।
रसायनप्रयोगे च पश्चिमस्तु विशिष्यते ॥
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ।
विशेषतः प्रशस्यन्ते मला हेमादिधातुजाः ॥

मधुर इत्यादि। कटुर्विपाके प्रभावात् शीतश्चान्यथा मधुरत्वेन मधुरपाकः शीतश्च कषायत्वेन कटुर्विपाक उष्णश्च स्यात्। रूप्यस्येत्यादि। रूप्यस्य निस्रवः शिलाजतुः कटुको रसे प्रभावात् तु शीतो वीर्य्यतः स्वादुर्मधुरश्च विपच्यते। ताम्रस्येत्यादि। ताम्रस्य निस्रवः शिलाजतुः तिक्तो रसे वीर्य्ये तूष्ण इति तिक्तोष्णः कटु च पच्यते। यस्त्वित्यादि। यस्तु शिलाजतुर्लवणान्वितस्तिक्तको रसे शीतश्च प्रभावात् स चायसोऽयसो निस्रवः। सर्व्वश्रेष्ठ इति सौवर्णादिभ्यस्त्रिभ्यः श्रेष्ठः।

ननु तर्हि किं सौवर्णादयस्त्रयोऽयौगिका इत्यत आह—गोमूत्रेत्यादि। सौवर्णादयः सर्व्वे शिलाजतवो गोमूत्रगन्धयः स्युस्ते सर्व्वेऽपि सर्व्वकर्म्मसु रसायनवाजीकरणरोगहरणेषु यौगिका भवन्ति। तत्र पश्चिमायसस्तु शिलाजतुः सर्व्वश्रेष्ठत्वाद् रसायनप्रयोगेषु विशिष्यते विशिष्टफलदत्वात् श्रेष्ठ उच्यते।

नन्वस्त्वायसस्य जातिविशेषवचनप्रयोजनमेतत् सौवर्णादेर्जातिभेदवचनप्रयोजनं किमित्यत आह—यथाक्रममित्यादि। वातपित्ते न वाते वा पित्ते वा सौवर्णः शिलाजतुर्विशिष्यते। श्लेष्मपित्ते न श्लेष्मणि वा पित्ते वापि रौप्यशिलाजतुः। कफे ताम्रः शिलाजतुस्त्रिषु वातपित्तकफेषु आयस इत्यतश्च सर्व्वश्रेष्ठः। हेमादिधातुजा हेमरजतताम्रलौहजाः।

एव शिलाजतु भवति। मृत्स्नं मसृणम्, अच्छं स्वच्छम्। यस्तु रूप्यभवे कटुरसे विरुद्धः स्वादुः पाक उक्तः, स उत्सर्गापवादन्यायेन ज्ञेयः। उष्णस्य ताम्रभवस्य तथा लवणाञ्च शीतत्वयुक्तानाम्, अत्युष्णशीतवीर्य्यताया अवकाशो नास्ति, यतः, सामान्यगुणकथने 'नात्युष्णशीतम्' इति पदेन

शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च।
वर्ज्जयेत् सर्व्वकालन्तु कुलत्थान् परिवर्ज्जयेत्॥
ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम्।
लोकदृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते॥
पयांसि * शुक्तानि रसाः सयूषास्तोयं समूत्रं विविधाः कषायाः।
आलोड़नार्थं गिरिजस्य शस्तास्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम्॥
न सोऽस्ति रोगो भुवि साध्यरूपः
शिलाह्वयं यं न जयेत् प्रसह्य।
तत् कालयोगैर्विधिभिः प्रयुक्तं
स्वस्थस्य चोर्ज्जां विपुलां ददाति॥ १५॥

शिलाजतुरसायनम्।

नन्वस्य प्रयोगे किं सेव्यं किमसेव्यमित्यत आह—शिलाजत्वित्यादि। सर्व्वकालं यावज्जीवम् अश्मनः प्रस्तरस्य सदृशः प्रस्तरसम्भवश्चायं प्रस्तरमयः प्रस्तरस्वभावस्तस्मादस्य प्रयोगेषु च कुलत्थाः सर्व्वकालं वर्ज्ज्या विदाह्यादीनि प्रयोगानन्तरं यदृच्छया सेव्यानि इति भावः।

नन्वश्मनो भेदनाः कुलत्थाः कथमुपलभ्यन्ते इत्यत आह—लोकदृष्टा इति। लोके प्रत्यक्षमेव दृष्टाः कुलत्था अश्मभेदनास्तस्मात् तेषां कुलत्थानां प्रयोगः प्रतिषिध्यते शिलाजतुप्रयोगेष्वित्यर्थः।

नन्वस्य प्रयोगः केन कथं कार्य्य इत्यत आह—पयांसीत्यादि। गव्यदुग्धादिना शिलाजतुमालोड्य पाययेत् इति भावः। तनुशोधनकुटी-प्रवेशादिविधिनायं प्रयोगः श्रेष्ठः। अस्याशिषमाह—न सोऽस्तीत्यादि। प्रसह्येति स्तुतिः। शिलाजतुरसायनम्।

उष्णस्य शीतस्य च वीर्य्यस्य प्रकर्षो निषिध्यते, तेन नात्युष्णशीतत्वं विधीयते, ततश्च शिलाजतुन वीर्य्यं शीतम् उष्णं वाभिहितमपि न बलवद् भवतीति लभ्यते॥

शिलाजतुप्रयोगेष्विति बहुवचनालोचनाद् भेदेन प्रयोगभेदो बुद्धिस्थीकृत्य ज्ञेयः।

* तक्राणि इति वा पाठः।

सुश्रुतेऽपरे रसायनयोगाः दृश्यन्ते। तद् यथा। अथायुःकामीयं वक्ष्यामः। मन्त्रौषधसमायुक्तं संवत्सरफलप्रदम्। विल्वस्य चूर्णं पुष्ये तु हुतं वारान् सहस्रशः॥ श्रीसूक्तेन नरः कल्ये ससुवर्णं दिने दिने। सर्पिर्मधुयुतं लिह्यादलक्ष्मीनाशनं परम्। त्वचं विल्वस्य मूलस्य कृत्वा क्वाथं दिने दिने। प्राश्नीयात् पयसा सार्द्धं स्नात्वा हुत्वा समाहितः। दशसाहस्रमायुष्यं स्मृतं युक्तरथं भवेत्॥ हुत्वा विशालाक्वाथन्तु मधुलाजैश्च संयुतम्। अमोघं शतसाहस्रं युक्तं युक्तरथं स्मृतम्॥ सुवर्णपद्मवीजानि मधु लाजाः प्रियङ्गवः। गव्येन पयसा पीतमलक्ष्मीं प्रतिषेधयेत्॥ नीलोत्पलदलक्वाथो गव्येन पयसा शृतः। ससुवर्णस्तिलैः सार्द्धमलक्ष्मीनाशनः स्मृतः॥ गव्यं पयः सुवर्णञ्च मधूच्छिष्टञ्च माक्षिकम् पीतं शतसहस्राभिहुतं युक्तरथं स्मृतम्। वचाघृतसुवर्णञ्च विल्वचूर्णमिति त्रयम्। मेध्यमायुष्यमारोग्य-पुष्टिसौभाग्यवर्द्धनम्। वासामूलतुलाक्वाथे तैलमावाप्य साधितम्। हुत्वा सहस्रमश्नीयान्मेध्यमायुष्यमुच्यते॥ यावकांस्तावकान् भक्षेदभिभूय यवांस्तथा। पिप्पलीमधुसंयुक्तान् शिक्षाचरणवद् भवत्॥ मध्वामलकचूर्णानि सुवर्णमिति च त्रयम्। प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात्॥ शतावरीघृतं सम्यगुपयुक्तं दिने दिने। सक्षौद्रं ससुवर्णञ्च नरेन्द्रं स्थापयेद् वशे॥ गोचन्दना मोहनिका मधुकं माक्षिकं मधु। सुवर्णमिति संयोगः पेयः सौभाग्यमिच्छता॥ पद्मनीलोत्पलक्वाथे यष्टीमधुकसंयुते। सर्पिरासादितं गव्यं ससुवर्णं सदा पिबेत्। पयश्चानुपिबेत् सिद्धं तेषामेव समुद्भवे। अलक्ष्मीघ्नं सदायुष्यं राज्याय सुभगाय च॥ यत्र नोदीरितो मन्त्री योगेष्वेतेषु साधने। शब्दिता तत्र सर्व्वत्र गायत्री त्रिपदा भवेत्॥ पाप्मानो नाशयन्त्येता दद्युश्चौषधयः श्रियम्॥ कुर्य्युर्वर्णबलञ्चापि मनुष्यममरोपमम्॥ सतताध्ययनं वादः परतन्त्रावलोकनम्। तद्विद्याचार्य्यसेवा च बुद्धिमेधाकरो गणः॥ आयुष्यं भोजनं जीर्णे वेगानाञ्चाविधारणम्। ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्ज्जनम्॥ इति॥ १५॥

शिलाजतुप्रयोगे गुरुनिषेधेऽपि विशेषवचनात् क्षीरादिप्रयोगः। सर्व्वकालमिति यावद्रसायनाद्दिता

तत्र श्लोकः।

करप्रचितिके पादे दश षट् च महर्षिणा।
रसायनानां सिद्धानां संयोगाः समुदाहृताः॥ १६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने प्रथमाध्याये
करप्रचितीयरसायनपादस्तृतीयः॥ ३॥

गङ्गाधरः—पादं समापयति। तत्र श्लोकः—करेत्यादि॥ १६॥
अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सित-
स्थाने करप्रचितीयरसायनपादस्तृतीयः॥ ३॥

गुणाः सन्ति। केचित् तु यावज्जीवं कुनखस्यैव वर्जनमाहुस्तन्त्रान्तरोक्तम्—"यावज्जीवितं कुनखांश्च विवर्जयेत्" इति। शिलाजतुप्रयोगं स्तौति—न सोऽस्तीत्यादि॥ १५। १६॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां
करप्रचितीयरसायनपादव्याख्या॥ ३॥

अथात आयुर्व्वेदसमुत्थानीयं रसायनपादं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः साम्पन्निका मन्दचेष्टा नातिकल्याश्च प्रायेण बभूवुः । ते सर्व्वासामितिकर्त्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतं दोषं * मत्वा पूर्व्वनिवासमपगतग्राम्यदोषं मत्वा शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिः गङ्गाप्रभवममरगन्धर्व्वयक्ष-किन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्ध-चारणानुचरितं दिव्यतीर्थौषधिप्रभवम् अतिशरण्यं हिम-

गङ्गाधरः—अथेत्यादि । उद्देशानुक्रमत्वात् करप्रचितिक रसायनपादव्याख्या-नन्तरमायुर्व्वेदसमुत्थानीयं रसायनस्याध्यायस्य चतुर्थपादं व्याख्यास्यामः । आयुर्व्वेदसमुत्थानमधिकृत्य कृतम् आयुर्व्वेदसमुत्थानीयम् ॥ १ ॥

गङ्गाधरः—ननु कुतः कथमायुर्व्वेदस्य समुत्थानमिति तदाह—ऋषय इत्यादि । कदाचिदिति कस्मिन्नपि काले खलु भृगुप्रभृतय ऋषयः शालीनाः कर्म्मविशेष-परिग्रहात् ग्रामीणजनानां सदृशा यायावराः पुनःपुनर्वक्रगमनशीलाश्च ग्राम्यौष-ध्याहारा ग्रामीणजनानां ये तण्डुलशाकादिमयाहारास्तानाहारान् कृतवन्तः सन्तः साम्पन्निका अर्थादिसम्पत्त्या देहगौरवेणालसाश्च भूत्वा मन्दचेष्टाश्च सन्ध्या-वन्दनादिषु कर्म्मसु अल्पचेष्टाश्च नातिकल्याश्च प्रायेण बभूवुः । ते पुनरृषयः सर्व्वासां तपसे उचितानामितिकर्त्तव्यतानां क्रियाणां करणेऽसमर्थाः सन्तः ग्राम्यवासकृतं ग्रामवासजनितं निजानां दोषं मत्वा पूर्व्वनिवासं हिमवन्तं पर्व्वतम् अपगतग्राम्यदोषं नानाविधाकुशलाहारविहारादिनानाविधामङ्गलकारणरहितं मत्वा जग्मुः । अपगतग्राम्यदोषत्वे हेतुमाह—शिवमित्यादि । शिवं शिवकरं शिवकरशिवनामकपरमदेवताध्युषितत्वात्, ततश्च पुण्यं मेध्यम् असुकृतिभिरधर्म्म-वद्भिरगम्यं गन्तुमशक्यं दिव्यानां तीर्थौषधीनां गङ्गासोमादीनां प्रभवमुत्पत्ति-

चक्रपाणिः—आयुर्व्वेदसमुत्थानीयो नाम रसायनपादः पारिशेष्यादुच्यते । आयुर्व्वेदसमुत्थान-मस्मिन्नस्तीति मत्वर्थे 'छ'-प्रत्ययेणायुर्व्वेदसमुत्थानीयः । शालीनत्वं यायावरत्वञ्च कर्म्मणकर्म्म-विशेषापरिग्रहात् । सम्पन्नमनु उपयुज्यन्त इति साम्पन्निकाः । नातिकल्या इति नातिनीरोगाः ।

* आत्मदोषं इति वा पाठः ।

वन्तम् अमराधिपतिगुप्तं जग्मुः भृग्वङ्गिरोऽत्रिवशिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगोतमप्रभृतयो महर्षयः ॥ २ ॥

तानिन्द्रः सहस्रदृगमरवरोऽब्रवीत् स्वागतं ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणामस्ति वो * ग्लानिरप्रभावत्त्वं वैस्वर्य्यं वैवर्ण्यञ्च ग्राम्यवासकृतमसुखमसुखानुबन्धं ग्राम्यो हि वासो मूलमप्रशस्तानां तत् कृतः पुण्यकृद्भिरनुग्रहः प्रजानां स्वशरीरम् अरक्षिभिः। कालश्चायमायुर्व्वेदोपदेशस्य ब्रह्मर्षीणामात्मनः

स्थानममराधिपतिगुप्तमिन्द्रेण पालितम्। के त ऋषय इत्यत आह—भृग्वित्यादि ॥ २ ॥

गङ्गाधरः—तानित्यादि। तान् हिमवन्तं गतवतो भृग्वादीन् महर्षीन्। किमब्रवीत् तदाह—स्वागतमित्यादि। स्वागतं सुखेनागतमागमनमभूदिति समागमे प्रथमकुशलजिज्ञासा ततः प्रश्नान्तरमिति साधूनां व्यवहारविधिः। ततः प्रश्नस्तु ब्रह्मविदामित्यादि। वो युष्माकं ब्रह्मविदां ग्लानिरहर्षः अप्रभावत्त्वं प्रभाशालित्वहानिरित्यादि सर्व्वमसुखं तथा असुखमनारोग्यम् अनुबध्नाति यत्; असुखमनारोग्यं ग्राम्यवासकृतमेव। हि यस्मात्। ग्राम्यो वासोऽप्रशस्तानाममङ्गलानां मूलं तत् अप्रशस्तानां मूलेन ग्राम्यवासेन कृतमसुखमसुखानुबन्धश्च यत् कर्म्मजातं तत् प्रजानां ग्रामवासशीलानाम् अप्रशस्तकारणं ग्रामवासं सततं कुर्व्वतामनुग्रहः स्वशरीरमरक्षिभिः पुण्यकृद्भिर्भवद्भिः कृतः। इत्युक्त्वा तेषामारोग्योपायमाह—कालश्चेत्यादि। अयं साम्प्रतिको यः कालः स आयुर्व्वेदोपदेशस्य कालो भवति यदायुर्व्वेदादधिगम्यौषधिविशेषसेवनयोग्योऽयं कालो वर्त्तते। तत्र यदि भवद्भिरपृष्टोऽहं कस्मात् स्वयमायुर्व्वेदमुपदिशामीत्याशङ्क्य तदाब्रवीत् ब्रह्मर्षीणामित्यादि। प्रजापतिरश्विभ्यां प्रायच्छदित्यह्य तथा प्रजापतये ब्रह्मा प्रायच्छदिति चोह्यम्।

इतिकर्त्तव्यता व्यापारः। इन्द्रपर्य्यायकथनं स्तुत्यर्थम्, स्तुतिश्चेयमिन्द्रस्यायुर्व्वेदप्रकाशकत्वात्। असुखानुबन्धमिति रोगरूपम् असुखमनुबध्नातीत्यसुखानुबन्धम्। मूलमिति कारणम्। कृतः प्रजानुग्रह इति ग्रामे स्थित्वा आयुर्व्वेदोक्तारोग्यसाधनधर्म्मादिसाधनप्रकाशनेन प्रजानुग्रहः

* मनोग्लानिरिति चक्रः।

प्रजानाञ्चानुग्रहार्थमायुर्व्वेदमश्विनौ मह्यं प्रायच्छतां, प्रजापतिः अश्विभ्यां, प्रजापतये ब्रह्मा। * प्रजानामल्पमायुर्जराव्याधिबहुलम् असुखमसुखानुबन्धम्, अल्पत्वादल्पतपोदमनियमदानाध्ययनसञ्चयं मत्वा, पुण्यतममायुःप्रकर्षकरं जराव्याधिप्रशमनमूर्ज्जस्करम् अमृतं शिवं शरण्यमुदारं भवन्तो मत्तः श्रोतुमर्हन्तुपधारयितुं प्रकाशयितुं प्रजानुग्रहार्थम्। आर्षं ब्रह्म च † मैत्रीं कारुण्यम् आत्मनश्चानुत्तमं पुण्यमुदारं, ब्राह्ममक्षयं कर्म्मेति। तत् श्रुत्वा विबुधपतिवचनमृषयः सर्व्वे एवामरवरमृग्भिस्तुष्टुवुः प्रहृष्टास्तद्वचनमभिननन्दुश्चेति॥ ३॥

ननु कस्माद् ब्रह्मा प्रजापतये प्रायच्छत् प्रजापतिरश्विभ्यामश्विनौ मह्यं प्रायच्छतामिति चेत् तत्राह—ब्रह्मर्षीणामात्मनः प्रजानाञ्च ग्रामवासिनामनुग्रहार्थमायुर्व्वेदं प्रायच्छताम्। किमर्थं प्रजानामित्यत आह—प्रजानामित्यादि। प्रजानामल्पमायुस्तच्च जराव्याधिबहुलमसुखं दुःखम् असुखानुबन्धं दुःखानुबन्धञ्च तस्य चाल्पत्वात् अल्पतपोदानादिसञ्चयं मत्वा प्रायच्छदिति पूर्व्वेणान्वयः। एवं परेण चान्वयः। तथा च प्रजानामल्पमायुरित्यादि मत्वा पुण्यतममित्यादिकमायुर्व्वेदं भवन्तो महर्षयो मत्तोऽपि श्रोतुमर्हन्ति योग्या भवन्ति उपधारयितुं प्रकाशयितुञ्चार्हन्ति। ननु कथं योग्या भवाम इत्यत आह—प्रजानुग्रहार्थमिति।

ननु कस्माद् वयं प्रजानुग्रहं विदधाम इत्यत आह—आर्षमित्यादि। आर्षम् ऋषीणां स्वाभाविकधर्म्मो ब्रह्म, तच्च ऋषित्वधर्म्मो ब्रह्म हि मैत्रीं प्रति मित्रतायाः भागे वर्त्तते। कारुण्यं प्रति आत्मनश्चानुत्तममुदारं पुण्यं प्रति च वर्त्तते। ननु कस्मादित्यत आह—ब्राह्मं कर्म्माक्षयमिति। तत् श्रुत्वेत्यादि॥ ३॥

कृत एवेत्यर्थः। 'अयम्'शब्द उभाभ्यां 'काल'शब्दाभ्यां योजनीयः। प्रजापतये ब्रह्मेति च्छेदः। प्रजानामल्पायुर्मत्वेति योजना। अल्पत्वादायुष इति शेषः। अल्पस्तपःप्रभृतीनां सञ्चयोऽस्मिन्नायुषि तत् तथा। 'प्रति'शब्दो मैत्र्यादिभिः प्रत्येकं सम्बध्यते। 'अथ'शब्दश्चाधिकारे। तेन मैत्रीकारुण्यमधिकृत्य यं ब्रह्मा प्रजापतयेऽदात्, तमनुश्रोतुमर्हथेति योजना॥ १—३॥

* अत्र अथ इत्यधिकश्चक्रसम्मतः पाठः।　　† ब्रह्म चेत्यत्र ब्रह्मचर्य्यं प्रति इति पाठान्तरम्।

अथेन्द्रस्तदायुर्व्वेदामृतमृषिभ्यः संक्रमय्योवाचैतत् सर्व्वम् अनुष्ठेयम्। अयञ्च शिवः कालो रसायनानां दिव्याश्चौषधयो हिमवतः प्रभावात् * प्राप्तवीर्य्याः ॥ ४ ॥

तद् यथा—ऐन्द्री ब्राह्मी पयस्या क्षीरपुष्पी श्रावणी महाश्रावणी शतावरी विदारी जीवन्ती पुनर्नवा नागबला स्थिरा वचा च्छत्रातिच्छत्रा मेदा महामेदा जीवनीयाश्चान्याः पयसा प्रयुक्ताः। षण्मासात् परममायुर्वयश्च तरुणमनामयत्वं स्वरवर्ण-

गङ्गाधरः—अथेन्द्र इत्यादि। संक्रमय्य सम्यक्क्रमात् ॥ ४ ॥

गङ्गाधरः—ऐन्द्रीत्यादि। ऐन्द्री गोरक्षकर्क्कटी। ब्राह्मी शाकविशेषः स्वनामख्याता। पयस्या क्षीरकाकोली। क्षीरपुष्पी स्वनामख्याता। श्रावणी महाश्रावणी अनयोर्लक्षणं सुश्रुते—"श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा। अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितैः। पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः। श्रावणी महती ज्ञेया कनकाभा पयस्विनी। गोलोमी चाजलोमी च महती श्रावणी तथा। वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते॥" इति। शतावरी शतमूली। विदारी क्षीरविदारी। जीवन्ती शाकविशेषः। पुनर्नवा रक्ता श्वेता तु वर्षाभूः। नागबला गोरक्षतण्डुला। स्थिरा शालपर्णी। वचा हैमवती वान्या वा। छत्रा अतिच्छत्रा च सुश्रुतेनोक्ता—"छत्रातिच्छत्रके विद्याद् रक्षोघ्ने कन्दसम्भवे। जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते॥" इति। श्वेतकापोतिसमसंस्थानाकृतिमाना। मेदा महामेदा जीवनीयाश्चान्या ओषधय इति जीवकर्षभककाकोलीमुद्गपर्णीमाषपर्णीयष्टीमधुकानीति षट्। मेदामहामेदाक्षीरकाकोलीजीवन्तीनां चतसृणामोषधीनां जीवनीयान्तर्गतानामुक्तत्वात्। एता ओषधयः प्रत्येकं सुश्रुतदर्शनात् शुद्धतनुना कुटीप्रविष्टेन क्षीरसपि

चक्रपाणिः—यद्यपि च ऋषिभिर्भरद्वाजद्वारापि इन्द्रादधिगतायुर्व्वेदः, तथापि ग्रामवासकृतमनो ग्लान्या न तथा स्फुटार्थो वर्त्तत इति शङ्कया पुनरिन्द्रस्तमुपदिशति। महाश्रावणी अलम्बुषा शीतपुष्पा। अतिच्छत्रा मधुरिका ॥ ४। ५ ॥

* हिमवत् प्रभवाः इति वा पाठः।

सम्पद*मुपचयं मेधां स्मृतिमुत्तमबलमिष्टांश्च परान् भावान् आवहन्ति सिद्धाः ॥ ५ ॥

इतीन्द्रोक्तं रसायनम् ।

ब्रह्मसुवर्च्चला नामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा । आदित्यपर्णी नामौषधिर्या सूर्य्यकान्तेति विज्ञायते सुवर्ण-क्षीरा सूर्य्यमण्डलाकारपुष्पा । नारी नामौषधिरश्वबलेति विज्ञायते या पुनरजसदृशपत्रा † । काष्ठगोधा नामौषधिः गोधाकारा । सर्पा नामौषधिः सर्पाकारा । सोमो नामौषधिराजः

रोदनाशनेन प्रातर्यथाबलं कल्किताश्चूर्णिता वा पयसा गव्यदुग्धेन प्रयुक्ताः षण्मासात् इत्यादिकान् अपरान् भावानावहन्ति । सिद्धाः सिद्धफलत्वात् ॥ ५ ॥

गङ्गाधरः—अपराणां महौषधीनां महाफलानां योगान् आह—ब्रह्मेत्यादि । हिरण्यक्षीरा सुवर्णवर्णक्षीरा, पुष्करसदृशपत्रा पद्मपत्रसदृशपत्रा। सुश्रुतेऽप्युक्तं— "कनकाभा जलान्तेषु सर्व्वतः परिसर्पति । सक्षीरा पद्मिनीप्रख्या देवी ब्रह्म-सुवर्च्चला । देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे । दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्च्चला ॥" इति। सूर्य्यकान्ता नाम लोके । सुश्रुतेऽप्युक्तं—"मूलिनी पञ्चभिः पत्रैः सुरक्तांशुककोमलैः । आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी। आदित्य-पर्णिनी ज्ञेया तत्रैव हि हिमक्षये ॥" इति । तत्रैवेति देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे । हिमक्षये वसन्तादौ। नारीत्यादि। अश्वबलेति नाम लोके अजसदृशपत्रा यावद्भिः पत्रैर्भवति । तदुक्तं सुश्रुते च—"कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः । कन्दजा काञ्चनक्षीरा कन्या नाम महौषधिः । काश्मीरे तु सरो दिव्यं नाम्ना क्षुद्रकमानसम् । करेणुस्तत्र कन्या च च्छत्रातिच्छत्रके तथा।" काष्ठेत्यादि । गोधाकारा । गोधा जन्तुविशेषः । सर्पा नामौषधिः सर्पाकारा । सुश्रुते तु अज-गरीत्युक्ता । तद् यथा—"मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी । पञ्चारत्नि-

चक्रपाणिः—ब्रह्मसुवर्च्चलाप्रभृतयोऽत्रोक्तलक्षणा दिव्यौषधयो नातिप्रसिद्धाः । आदित्यपर्णीं सूर्य्यावर्त्तमेव देशविशेषजातं केचिद् वर्णयन्ति । अश्वबलेति ज्ञायत इति ऋषिभिरेवानेन नाम्ना

* स्वरवर्णसम्पदाम् इति वा पाठः । † वल्वजसदृश पत्रा इति वा पाठः ।

पञ्चदशपर्णाः सोम इव हीयते च वर्द्धते च। पद्मा नामौषधिः

प्रमाणा वा विज्ञेयाजगरी बुधैः। दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥" इति। सोमेत्यादि। सुश्रुतेऽप्युक्तः। "ब्रह्मादयोऽसृजन् पूर्व्वममृतं सोमसंज्ञितम्। जरामृत्युविनाशाय विधानं तस्य वक्ष्यते। एक एव खलु भगवान् सोमः स्थाननामाकृतिवीर्य्यविशेषैश्चतुर्व्विंशतिधा भिद्यते। तद् यथा—"अंशुमान् मुञ्जवांश्चैव चन्द्रमा राजतप्रभः। दूर्व्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः। प्रतानवांस्तालवृन्तः करवीरोऽंशुमानपि। स्वयंप्रभो महासोमो यश्चापि गरुड़ाहृतः। गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा। अग्निष्टोमो रवतश्च यथोक्त इति संज्ञितः। गायत्र्यस्त्रिपदा युक्तो यश्चोड़ुपतिरुच्यते। एते सोमाः समाख्याता वेदोक्तैर्नामभिः शुभैः। सर्व्वेषामेव चैतेषामेको विधिरुपासने। सर्व्वे तुल्यगुणाश्चैव विधानं तेषु वक्ष्यते"। इति। पञ्चदशपर्ण इति। ननु पञ्चदशपत्रवान् सन् किं सर्व्वदैव वर्त्तते न वेत्यत आह—सोम इत्यादि। सोम इव चन्द्र इव कृष्णपक्षे प्रतिपदादिषु एकैकतिथिषु उत्तरोत्तरमेकैककलया यथा चन्द्रो हीयते तथा पञ्चदशपर्णः सोमो नामौषधिराजः कृष्णपक्षे प्रतिपदादितिथिष्वेकैकपत्रेणोत्तरोत्तरं हीयते। तथा शुक्लपक्षे वर्द्धते चन्द्र इवेति बोध्यम्। सुश्रुते चोक्तं—"सर्व्वेषामेव सोमानां पत्राणि दश पञ्च च। तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च। एकैकं जायते पत्रं सोमस्याहरहस्तदा। शुक्लस्य पौर्णमास्यान्तु भवेत् पञ्चदशच्छदः। शीर्य्यते पत्रमेकैकं दिवसे दिवसे पुनः। कृष्णपक्षक्षये चापि लता भवति केवला। अंशुमानाज्यगन्धस्तु कन्दवान् राजतप्रभः। कदल्याकारकन्दस्तु मुञ्जवानसमच्छदः। चन्द्रमाः कनकाभासो जले चरति सर्व्वदा। गरुड़ाहृतनामा च श्वेताक्षश्चापि पाण्डुरौ। सार्पनिर्म्मोकसदृशौ तौ वृक्षाग्रावलम्बिनौ। तथान्यैर्मण्डलैश्चित्रैश्चित्रिता इव भान्ति ते। सर्व्वे एव तु विज्ञेयाः सोमाः पञ्चदशच्छदाः। क्षीरकन्दलतावन्तः पत्रैर्नानाविधैः स्मृताः। हिमवत्यर्व्वुदे सह्ये माहेन्द्रे मलये तथा। श्रीपर्व्वते देवगिरौ गिरौ देवसहे तथा। पारिपात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा। उत्तरेण वितस्तायाः

ज्ञायते न लौकिकैर्लोकाप्रसिद्धत्वात्। सोम इव वर्द्धते हीयत इति यथा सोमवृद्धिक्षयौ तथ

पद्माकारा पद्मरक्ता पद्मगन्धा च । अजा नामौषधिरजशृङ्गीति ज्ञायते । नीला नामौषधिर्नीलक्षीरपुष्पा लताप्रतानबहुला । इत्यासामष्टानामोषधीनां यां यामेवौषधिञ्च लभते तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायाम् आर्द्रपलाशद्रोण्यां सपिधानायां दिग्वासाः शयीत । तत्र

प्रवृद्धा ये महीधराः । पश्च तेषामधो मध्ये सिन्धुनामा महानदः । हठवल्लक्ष्यते तत्र चन्द्रमाः सोमसत्तमः । तस्योद्देशेषु वाप्यस्ति मुञ्जवानंशुमानपि । काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् । गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा । तत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः । न तान् पश्यन्त्यधर्म्मिष्ठाः कृतघ्नाश्चापि मानवाः । भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा ॥" इति । एषां प्रयोगश्च वक्ष्यते । पद्मेत्यादि पद्माकारा पद्मवद्रक्तवर्णा पद्मगन्धा च । अजेत्यादि । अजशृङ्गीति नाम लोकेऽसा च नीला नीलवर्णा इत्यादि । सुश्रुतेऽप्युक्ता "अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी । अजा महौषधिर्ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥" इति चाजानाम्नी जातिभेदा श्वेतपीतबलावत् । नीला जतूकर्णतन्त्रे लिखिता सुश्रुते तु श्वेता जातितो न विरोधः । सर्व्वास्ता एव चौषध्यः सोमे चैवार्व्बुदे गिरौ । सशृङ्गैर्देवचरितैरम्बुदानीकभेदिभिः । व्याप्तस्तीर्थैश्च विख्यातः सिद्धर्षिसुरसेवितैः । गुहाभिर्भीमरूपाभिः सिंहोन्नादितकुक्षिभिः । गजालोड़िततोयाभिरापगाभिः समन्ततः । विविधैर्धातुभिश्चित्रैः सर्व्वत्रैवोपशोभितः । नदीषु शैलेषु सरःसु चापि पुण्येषु वान्येषु तथाश्रमेषु । सर्व्वत्र सर्व्वाः परिमार्गितव्याः सर्व्वत्र भूमिहि वसूनि धत्ते ॥" इति । इत्यासामष्टानाम् इत्यादि । ब्रह्मसुवर्च्चलादित्यपर्णिनीनारीकाष्ठगोधिकासर्पासोमपद्माजानामष्टानामोषधीनां मध्ये यां यामेव लभते तस्यास्तस्याः स्वरसस्य सौहित्यम् आ तृप्तितो यावन्मानं भवति तावन्मानं स्वरसं पीत्वा पूर्व्वं स्नेहैस्तैलादिभिर्भावितायां भावनया स्निग्धीकृतायां पलाशद्रोण्यां पलाशकाष्ठमय्यां पुरुषप्रमाणायां द्रोण्यां सपिधानायां तदुपर्य्याच्छादनपटले स्नेहभावितपलाशकाष्ठमये न वाताद्यप्रवेशो यथा भवति तथाच्छादयेत् दिग्वासा नग्नीभूय शयीत । तेन

प्रलीयते षण्मासेन पुनः सम्भवति तस्याजं पयः प्रत्यवस्थापनम्। षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः। स्वयञ्चास्य सर्व्ववाचोगतानि प्रादुर्भवन्ति दिव्यञ्चास्य चक्षुः श्रोत्रं भवति योजनसहस्रगतिः दशवर्षसहस्राणि चायुरनुपद्रवञ्चेति ॥ ६ ॥

इति द्रोणीप्रावेशिकरसायनम्।

भवन्ति चात्र।

दिव्यानामोषधीनां यः प्रभावः स भवद्विधैः।
शक्यः सोढुमशक्यस्तु स्यात् सोढुमकृतात्मभिः॥
ओषधीनां प्रभावेण तिष्ठतां स्वे च कर्म्मणि *।
भवतां निखिलं श्रेयः सर्व्वमेवोपपत्स्यते॥

तत्र द्रोण्यां प्रलीयते षण्मासेन पुनः सम्भवति सर्व्वाङ्गावयवशाली भवति तदा तस्य प्रत्यवस्थानार्थमाजं पयश्छागं दुग्धं दातुमुपर्य्याच्छादनपटल पूर्व्वकृतं शयानस्य मुखमनुसृत्य च्छिद्रं यत् तेन च्छिद्रेण मुखे किञ्चित् किञ्चिच्छागदुग्धं शनैःशनैर्दद्यात् सर्व्वाङ्गावसेचनञ्चाजेनैव पयसा स्तोकं स्तोकं कुर्य्यादित्येवं करणे सति स पुरुषः प्रत्यवतिष्ठते। ततः षण्मासेन पुनः क्रमेण वयोवर्णादिभिः देवतानुकारी भवति। अस्य च स्वयमेव सर्व्ववाचोगतानि सर्व्वा वाचो गतानि अतीतानि वक्तुं प्रादुर्भवन्ति चक्षुश्च देवानामिव दिव्यं दर्शनं श्रोत्रञ्च दिव्यं देवानामिव योजनसहस्रगतिश्च भवति॥ ६॥

गङ्गाधरः—अत्राहाधिकार्थं भवन्तीत्यादि। दिव्यानां ब्रह्मसुवर्च्चलादीनां यः प्रभावः स भवद्विधैः सुकृतात्मभिः सोढुं शक्यः। अकृतात्मभिः असु-

तत्कालमेव तस्य वृद्धिक्षयौ भवतः, प्रलीयत इति हृतो भवति, अन्ये तु मूर्च्छतीति वर्णयन्ति। प्रत्यवस्थापनमिति आहारसेवायां योग्यमित्यर्थः। सर्व्ववाचोगतानि सर्व्ववाक्यविशेषाः॥ ६॥

चक्रपाणिः—एतद् दिव्यं रसायनमृषिभिस्तद्विधैर्वा सेव्यमिति दर्शयन्नाह—दिव्यानामित्यादि।

* वर्त्मनि इति वा पाठः।

वानप्रस्थैर्गृहस्थैश्च प्रयतैर्नियतात्मभिः ।
शक्या ओषधयो ह्येताः सेवितुं विषयाभिजाः ॥
तास्तु क्षेत्रगुणैस्तेषां मध्यमेन निकर्म्मणा * ।
मृदुवीर्य्यतरास्तासां विधिर्ज्ञेयः स एव तु ॥ ७ ॥
पर्य्येष्टुं ताः प्रयोक्तुं वा ये समर्थाः सुखार्थिनः ।
रसायनविधिस्तेषामयमन्यः प्रशस्यते ॥
बल्यानां जीवनीयानां बृंहणीयाश्च या दश ।
वयसः स्थापनानाञ्च खदिरस्यासनस्य च ॥

कृतात्मभिस्तु स सोढुमशक्यः । ननु अस्माभिरेव सोढुं शक्यइचेत् तदान्येषां किं विधानमित्यत आह—वानप्रस्थैरित्यादि । विषयाभिजाः दृश्यप्रचरदेशे जाताः ता एतास्तु सुवर्च्चलादय ओषधयस्तेषां दृश्यलोकप्रचरदेशानां क्षेत्रगुणैर्मध्यमेन निकर्म्मणा निकृष्टकर्म्मणा मृदुवीर्य्यतरा वानप्रस्थैर्गृहस्थैश्च सेवितुं शक्या भवन्ति । ननु तासां सेवनविधिः कीदृगित्यत आह—तासामित्यादि । स एव तु पूर्व्वोक्त एव विधिर्न त्वन्यो विधिः ॥ ७ ॥

गङ्गाधरः—नन्वेवमस्तु ताश्चेदन्वेषणां कर्त्तुं ये त्वसमर्थाः स्युः प्रयोक्तुं वा ये चासमर्थाः स्युस्तेषां किं रसायनं कार्य्यमित्यत आह—पर्य्येष्टुमित्यादि । पर्य्येष्टुमन्वेषणां कर्त्तुम् । तान् रसायनविधीनाह—बल्यानामित्यादि । षड्विरेचनशताश्रितीयोक्तानां बल्यानां दशानामोषधीनां जीवनीयानाञ्च दशानां याश्च तत्रोक्ता दश बृंहणीया ओषधयः तत्रोक्तानाञ्च वयःस्थापनानां दशानां

विषयाभिजा इति स्वोचितपुण्यदेशे जाता इत्यर्थः, अपुण्ये तु देशे दिव्यौषधिजन्मैव न भवति, भवन्त्योऽपि निर्व्वीर्य्या भवन्तीति भावः ॥ ७ ॥

चक्रपाणिः—सम्प्रति ब्रह्मसुवर्च्चलादीनां यथा मृदुवीर्य्यत्वं भवति, तदाह—तास्त्वित्यादि । क्षेत्रगुणैरिति हिमालयादिप्रशस्तदेशव्यतिरिक्तक्षेत्रधर्म्मैः । तेषामिति ऋषिव्यतिरिक्तानां वानप्रस्थादीनाम् । मध्यमेन च कर्म्मणेति असम्यक्प्रयोगेण, किंवा अनतिमहादृष्टेन ॥ ७ ॥

* मध्यमेन च कर्म्मणा इति पाठान्तरम् ।

खर्ज्जूराणां मधूकानां मुस्तानामुत्पलस्य च।
मृद्वीकानां विड़ङ्गानां वचायाश्चित्रकस्य च॥
शतावर्य्याः पयस्यायाः पिप्पल्या जोङ्गकस्य च।
ऋद्ध्या नागबलायाश्च हरिद्राया * धवस्य च॥
त्रिफलाकण्टकार्य्योश्च विदार्य्याश्चन्दनस्य च।
इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च॥
रसाः पृथक् पृथग् ग्राह्याः पलाशक्षार एव च।
एषां पलोन्मितान् भागान् पयो गव्यं चतुर्गुणम्॥
द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः।
तत् साध्यं सर्व्वमेकत्र सुसिद्धं स्नेहमुद्धरेत्॥

खदिरस्य सोमवल्कस्य असनस्य पीतशालस्य। खर्ज्जूराणां पिण्डखर्ज्जूरफलानां मधूकानां पुष्पाणां मुस्तानां भद्रमुस्तककन्दानाम् उत्पलस्य पुष्पस्य मृद्वीकानां द्राक्षाणां विड़ङ्गानां विड़ङ्गतण्डुलानां चित्रकस्य मूलस्य पयस्यायाः क्षीरकाकोल्याः जोङ्गकस्य काकनासिकाया विदार्य्याः क्षीरविदारिकन्दस्य (शतमूलीनां शतमूलस्य मूलानाम्)। एषां रसाः क्वाथाः पृथक् पृथक् चतुर्गुणजले संसाध्य प्रत्येकं स्नेहसमाना ग्राह्याः। तद् यथा। वल्यादीनां द्रव्याणां प्रत्येकं द्वात्रिंशच्छरावानष्टगुणे जले पक्त्वा चतुर्थांशशेषश्चतुःषष्टिशरावा ग्राह्या इति। पलाशक्षारश्चैव षड्गुणजलेनैकविंशतिवारान परिस्राव्य ग्राह्यः। एषां क्षारान्तानाम् एकोनसप्ततेर्द्रव्याणां प्रत्येकेन पलोन्मितान् कल्कान् गव्यं पयश्चतुर्गुणं तैलघृतयोर्मानात् तच्च द्रव्यद्वैगुण्यात् षट्पञ्चाशदुत्तरं शरावशतद्वयं तिलतैलस्य द्वे पात्रे द्रव्यद्वैगुण्यात् द्वात्रिंशच्छरावं गव्यस्य सर्पिषः संवत्सरातीतस्य द्वे च पात्र द्रव्यद्वैगुण्यात् द्वात्रिंशच्छरावमिति तैलघृतयोर्मिलितयोश्चतुःषष्टिशरावं स्नेहमानं साध्यं मन्दमन्दाग्निना पाच्यं सुसिद्धं शब्दोपरमे फेनोपरमे च गन्धवर्ण-

चक्रपाणिः—वल्यानामित्यादौ जोङ्गकमगुरु। द्वारदा शाकतरुः कपिकच्छुर्वा। श्रीपर्णी गाम्भारी।

* हरिद्राया इत्यत्र द्वारदाया इति क्वचित् पठ्यते।

तत्रामलकचूर्णानामाढ़कं शतभावितम् ।
स्वरसेनैव दातव्यं क्षौद्रस्याभिनवस्य च ॥
शर्कराचूर्णपात्रञ्च प्रस्थमेकं प्रदापयेत् ।
तुगाक्षीर्य्याः सपिप्पल्याः स्थाप्यं संमूर्च्छितञ्च तत् ॥
सुचौक्षे मार्त्तिके कुम्भे मासार्द्धं घृतभाविते ।
मात्रामग्निसमां तस्य तत ऊर्द्धं प्रयोजयेत् ॥
हेमताम्रप्रबालानामयसः स्फटिकस्य च ।
मुक्तावैदूर्य्यशङ्खानां चूर्णानां रजतस्य च ॥
प्रक्षिप्य षोड़शीं मात्रां विहायायासमैथुनम् ।
जीर्णेऽजीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥

रसादीनां सम्पत्तौ सत्यां बोध्यम् । तत्र सुसिद्धे तैलघृतयमके आमलक्याः स्वरसेनैव शतवारान् भावितमामलकचूर्णानामाढ़कमष्टशरावं दातव्यम् । अभिनवस्य क्षौद्रस्य चाढ़कं षोड़शशरावं शर्कराचूर्णपात्रं चूर्णीभूतशर्करायाः पात्रम् अष्टशरावम् । तुगाक्षीर्य्या वंशलोचनायाः सपिप्पल्याः एकं प्रस्थं शरावद्वयं पिप्पल्याश्च चूर्णिताया एकशरावं वंशलोचनाया एकशरावमिति यावत् तत्रैव तैलघृतयमके प्रदापयेत् । ततः सम्मूर्च्छितञ्च दर्व्या सम्यगालोड्य मिश्रितं तत् तैलघृतयमकं सुचौक्षे दृढ़निर्म्मलशुचौ घृतभाविते स्निग्धे मार्त्तिके मृन्मयकुम्भे मासार्द्धं पञ्चदशदिनं व्याप्य स्थाप्यम् । तत ऊर्द्धं पक्षादूर्द्धं मग्निसमामग्निबलापेक्षया मात्रां तस्यौषधस्य प्रयोजयेत् ।

ननु केन प्रकारेण प्रयोजयेदित्यत आह—विहाय इत्यादि । विहायायासमैथुनं पुमान् समर्थादिवक्ष्यमाणरूपश्चेत् तदा कुटीं प्रविश्य शुद्धतनुः सन् तस्मादेव तैलाघृतात्मकादौषधात् स्वाग्निबलानुरूपेण औषधमात्रां गृहीत्वा तत्र हेमादीनां नवानां शुद्धपुटितमारितानां चूर्णानां प्रत्येकं तदौषधात् षोड़शीं षोड़शभागैकभागमात्रां तत्रौषधे प्रक्षिप्य प्रयोजयेदिति भावः । तस्मिन्नौषधे जीर्णे वाप्यजीर्णे वा षष्टिकमन्नं क्षीरसर्पिषा भुञ्जीत, आयासमैथुने

सर्व्वरोगप्रशमनं वृष्यमायुष्यमुत्तमम्।
सत्त्वस्मृतिशरीराग्नि-बुद्धीन्द्रियबलप्रदम्॥
परमूर्ज्जस्करञ्चैव वर्णस्वरकरं तथा।
विषालक्ष्मीप्रशमनं सर्व्ववाचोगतप्रदम्॥
सिद्धार्थताञ्चाभिनवं वयश्च प्रजाप्रियत्वञ्च यशश्च लोके।
प्रयोज्यमिच्छद्भिरिदं यथावद् रसायनं ब्राह्ममुदारवीर्य्यम्॥ ८॥

इतीन्द्रोक्तरसायनम्।

वर्ज्जयेत्। भेषजजीर्णे भोजने च नियमोऽस्ति। सत्त्वादीनां बुद्धीन्द्रियाणां बलस्य च प्रदमित्यर्थः। सर्व्ववाचोगतस्यातीतस्य वचनशक्तिप्रदम् ईदृशं ब्राह्ममिदं रसायनं सिद्धार्थतादिकमिच्छद्भिः पुरुषैर्यथावद् यथाविधि प्रयोज्यम्। इति इन्द्रोक्तं ब्राह्मरसायनम्।

सुश्रुते तु सोमादीनामन्यासाञ्च महौषधीनां प्रयोगोऽन्यथा प्रोक्तस्तद् यथा—"चतुर्व्विंशतिधा सोमा व्याख्याता ये पुरा मया। अतोऽन्यतमं सोममुपयुयुक्षुः सर्व्वोपकरणपरिचारकोपेतः प्रशस्तदेशे त्रिवृत्तम् आगारं कारयित्वा हृतदोषः प्रतिसंसृष्टभक्तः प्रशस्तेषु तिथिकरणनक्षत्रमुहूर्त्तेषु अंशुमन्तमादायाध्वरकल्पेनाहृतमभिष्टुतमभिहुतञ्चान्तरागारे कृतमङ्गलः सोमकन्दं सुवर्णसूच्या विदार्य्य पयो गृह्णीयात् सौवर्णे पात्रेऽञ्जलिमात्रं ततः सकृदेवोपयुञ्जीत नास्वादयन। तत उपस्पृश्य शेषमप्स्ववसाद्य यमनियमाभ्याम् आत्मानं संयोज्य वाग्यतोऽभ्यन्तरतः सुहृद्भिरुपास्यमानो विहरेत्। रसायनं पीतवांस्तु निवाते तन्मनाः शुचिः। आसीत तिष्ठेत् क्रामेच्च न कथञ्चन संविशेत्। सायं वा भुक्तवान श्रुतशान्तिः कुशशय्यायां कृष्णाजिनोत्तरायां सुहृद्भिरुपास्यमानः शयीत। तृषितो वाशीतोदकमात्रां पिबेत्। ततः प्रातः उत्थायोपश्रुतशान्तिः कृतमङ्गलो गां स्पृष्ट्वा तथैवासीत। तस्य जीर्णे सोमे च्छर्द्दिरुत्पद्यते ततः शोणिताक्तं क्रिमिव्यामिश्रं छर्द्दितवतः सायं शृतशीतं क्षीरं वितरेत्। ततस्तृतीयेऽह्नि क्रिमिव्यामिश्रमतिसार्य्यते। स तेनानिष्टप्रतिग्रहभुक्तप्रभृतिभिर्विशेषैर्मुक्तः शुद्धतनुर्भवति। ततः सायं स्नातस्य पूर्व्ववदेव क्षीरं वितरेत्। क्षौमवस्त्रास्तृतायाञ्चैनं शय्यायां शाययेत्। ततश्चतुर्थेऽहनि तस्य

पलाशक्षारः पलाशक्षारोदकम्। सुचौक्ष इति सुविशुद्धे। अग्निसमामिति अग्न्यनुरूपाम्। षोड़शीं मात्रामिति आमलकादिचूर्णयुक्तघृतापेक्षया षोड़शभागो हेमादिचूर्णात् ग्राह्यः॥ ८॥

श्वयथुरुत्पद्यते। ततः सर्व्वाङ्गेभ्यः क्रिमयो निष्क्रामन्ति। तदहश्च शय्यायां पांशुभिरवकीर्य्यमाणः शयीत। ततः सायं पूर्व्ववदेव क्षीरं वितरेत्। एवं पञ्चम-षष्ठयोर्दिवसयोर्वर्त्तेत। केवलमुभयकालमस्मै क्षीरं वितरेत्। ततः सप्तमेऽहनि निर्म्मांसत्वगस्थिभूतः केवलं सोमपरिग्रहादेवोच्छ्वसिति। तदहश्च क्षीरेण सुखोष्णेन परिषिच्य तिलमधुकचन्दनानुलिप्तदेहं पयः पाययेत्। ततोऽष्टमेऽहनि प्रातरेव क्षीरपरिषिक्तं चन्दनप्रदिग्धगात्रं पयः पाययित्वा पांशुशय्यां समुत्सृज्य क्षौमास्तृतायां शय्यायां शाययेत्। ततो मांसमाप्यायते त्वक् चावदलति। दन्तनखरोमाणि चास्य पतन्ति। तस्य नवमदिनात् प्रभृत्यणुतैलाभ्यङ्गः सोमवल्ककषायपरिषेकः। ततो दशमेऽहन्येतदेव वितरेत्। ततोऽस्य त्वक् स्थिरतामुपैति। एवमेकादशद्वादशयोर्वर्त्तेत। तत्र त्रयोदशात् प्रभृति सोमवल्ककषायपरिषेकः। एवमा षोड़शाद् वर्त्तेत। ततः सप्तदशाष्टादशयोर्दिवसयोर्दशना जायन्ते शिखरिणः स्निग्धवज्रवैदूर्य्यस्फटिकनिकाशाः समाः स्थिराः सहिष्णवः। तदाप्रभृति चानवैः शालितण्डुलैः क्षीरयवागूमुपसेवेत यावत् पञ्चविंशतिरिति। ततोऽस्मै दद्याच्छाल्योदनं मृदूभयकालं पयसा। ततोऽस्य नखा जायन्ते विद्रुमेन्द्रगोपकतरुणादित्यप्रकाशाः स्थिराः स्निग्धा लक्षण-सम्पन्नाः, केशाश्च जायन्ते त्वक् च नीलोत्पलातसीपुष्पवैदूर्य्यप्रकाशाः। ऊर्द्धश्च मासात् केशान् वापयेत्। वापयित्वा चोशीरचन्दनकृष्णतिलकल्कैः शिरः प्रदिह्यात् पयसा वा स्नापयेत्। ततोऽस्यानन्तरं सप्तरात्रात् केशा जायन्ते भ्रमराञ्जन-निभाः कुञ्चिताः स्निग्धाः। ततस्त्रिरात्रात् प्रथमपरिसरात् निष्क्रम्य मुहूर्त्तं स्थित्वा पुनरेवान्तः प्रविशेत्। ततोऽस्य बलातैलमभ्यङ्गार्थेऽवचार्य्यम्। यवपिष्टमुद्वर्त्त-नार्थे। सुखोष्णश्च पयः परिषेकार्थे। अजकर्णकषायमुत्सादनार्थे। सोशीरं कूपोदकं स्नानार्थे। चन्दनमनुलेपनार्थे। आमलकरसविमिश्राश्चास्य यूषसूप-विकल्पाः। क्षीरमधुकसिद्धश्च कृष्णतिलमवचारणार्थे। एवं दशरात्रं, ततोऽन्यद् दशरात्रं द्वितीये परिसरे वर्त्तेत। ततस्तृतीये परिसरे स्थिरीकुर्व्वन्नात्मानम् अन्यदशरात्रं वर्त्तेत। किञ्चिदातपपवनान् वा सेवेत पुनश्चान्तः प्रविशेत्। न चात्मानमादर्शेषु वा निरीक्षेत रूपशालित्वात्। ततोऽन्यददशरात्रं क्रोधादीन् परिहरेत्। एवं सर्व्वेषामुपयोगः। विशेषतस्तु वल्लीप्रतानक्षुपादयः सोमा भक्षयि-तव्याः। तेषान्तु प्रमाणमर्द्धचतुर्मुष्टयः। अंशुमन्तं सौवर्णे पात्रेऽभिषुणुयात्। चन्द्रमसं राजते चोपयुज्याष्टगुणमैश्वर्य्यमवाप्येशानं देवमनुप्रविशति। शेषांस्तु ताम्रमये मृन्मये वा रोहिते वा चर्म्मणि वितते शूद्रवर्ज्जं त्रिभिर्वर्णैः सोमा

उपयोक्तव्याः। ततश्चतुर्थे मासे पौर्णमास्यां शुचौ देशे ब्राह्मणानर्च्चयित्वा कृतमङ्गलो निष्क्रम्य यथोक्तं व्रजेदिति। ओषधीनां पतिं सोममुपयुज्य विचक्षणः। दशवर्षसहस्राणि नवां धारयते तनुम्। नाग्निर्न तोयं न विषं न शस्त्रं नास्त्रमेव च। तस्यालमायुःक्षपणे समर्थाश्च भवन्ति हि। भद्राणां षष्टिवर्षाणां प्रस्रुतानामनेकधा। कुञ्जराणां सहस्रस्य बलं समधिगच्छति। क्षीरोदं शक्रसदनमुत्तरांश्च कुरूनपि। यत्रेच्छति स गन्तुं वा तत्राप्रतिहता गतिः। कन्दर्प इव रूपेण कान्त्या चन्द्र इवापरः। प्रह्लादयति भूतानां मनांसि स महाद्युतिः। साङ्गोपाङ्गांश्च निखिलान् वेदान् विन्दन्ति तत्त्वतः। चरत्यमोघसंकल्पो देववच्चाखिलं जगत्॥"

सर्व्वेषामेव सोमानामेकविध एवैष प्रयोगविधिः सुश्रुतेनोक्तो ज्ञेयस्तथा-अन्यासामष्टादशानामोषधीनामपि प्रयोग एवम् उक्तस्तद् यथा। अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या च्छत्राऽतिच्छत्रा करेणुरजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्च्चला श्रावणी महाश्रावणी गोलोमी चाजलोमी महावेगवती चेत्यष्टादश सोमसमवीर्य्या महौषधयो व्याख्याताः। तासां सोमवत् क्रियाशीःस्तुतयः शास्त्रेऽभिहिताः। तासामागारेऽभिहुतानां याः क्षीरवत्यस्तासां क्षीरकुड़वं सकृदेवोपयुञ्जीत। यास्त्वक्षीरा मूलवत्यस्तासां प्रदेशिनीप्रमाणानि त्रीणि काण्डानि प्रमाणम् उपयोगे। श्वेतकापोती समूलपत्रा भक्षयितव्या। गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतश्च सकृदेवोपयुञ्जीत। चक्रकायाः पयः सकृदेव, ब्रह्मसुवर्च्चलायाः सप्तरात्रम् उपयोक्तव्यम्। भक्ष्यकल्पेन शेषाणां पञ्च पलानि क्षीरादकक्वथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत। सोमवदाहारविहारौ व्याख्यातौ केवलन्तु नवनीतमभ्यङ्गार्थं, शेषं सोमवदा निर्गमादिति। भवन्ति चात्र। युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनम्। कुर्य्युरेताः क्रमेणैव द्विसहस्रायुषं नरम्। अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः। चरत्यमोघसंकल्पो नभस्यम्बुददुर्गमे। व्रजन्ति पक्षिणो येन जललम्बाश्च तोयदाः। गतिः सौषधिसिद्धस्य सोमसिद्धगतिः परा। अथ वक्ष्यामि विज्ञानमोषधीनां पृथक् पृथक्। मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी। पञ्चारत्निप्रमाणा वा विज्ञेयाजगरी बुधैः। निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता। सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते॥ द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलाम्। द्व्यरत्निमात्रां

जानीयाद् गोनसीं गोनसाकृतिम् ।। सक्षीरां रोमशां मृद्वीं रसेनेक्षुरसोपमाम् । एवंरूपरसाश्चापि कृष्णकापोतिमादिशेत् ।। कृष्णसर्पस्वरूपेण वाराही-कन्दसम्भवा । एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ।। छत्रातिच्छत्रे पूर्व्वं व्याख्याते ।। कन्या च नारीणामोषधिसंज्ञायां व्याख्याता । करेणुः सुबहु-क्षीरा कन्देन गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ।। अजा व्याख्याता ।। श्वेतां विचित्रकुसुमां काकादन्याः समक्षपाम् । चक्रका-मोषधीं विद्याज्जरामृत्युविनाशिनीम् ।। मूलिनी पञ्चभिः पत्रैः सुरक्तांशुक-कोमलैः । आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनीति पूर्व्वमुक्ता ।। ब्रह्म सुवर्चला च व्याख्याता ।। पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः । श्रावणी महती ज्ञेया कनकाभा पयस्विनी ।। श्रावणी पाण्डुराभासा महाश्रावणि-लक्षणा ।। गोलोमी चाजलोमी च रोमशैः कन्दसम्भवैः । हंसपादीव विच्छिन्नैः पत्रैर्मलसमुद्भवैः । अथवा शङ्खपुष्प्या च समाना सर्व्वरूपतः ।। वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा । एषा वेगवती नाम जायते ह्यम्बुदक्षये ।। सप्तादौ सर्परूपिण्यो या ह्योषध्यः प्रकीर्त्तिताः । तासामुद्धरणं कार्य्यं मन्त्रेणा-नेन सर्व्वदा । महेन्द्ररामकृष्णानां ब्राह्मणानां गवामपि । तपसा तेजसा वापि प्रशाम्यध्वं शिवाय वै । मन्त्रेणानेन मतिमान् सर्व्वानप्यभिमन्त्रयेत् ।। अश्र-द्दधानैरलसैः कृतघ्नैः पापकर्म्मभिः । नैवासादयितुं शक्याः सोमाः सोम-समास्तथा ।। पीतावशेषममृतं देवैर्ब्रह्मपुरोगमैः । निहितं सोमवीर्य्यासु सोमे चाप्योषधीपतौ ।। एषां प्रायेण प्राप्तिस्थानं पूर्व्वमुक्तम् । गोलोमी चाजलोमी च महती श्रावणी तथा । वसन्ते कृष्णसर्पाभा गोलोमी च प्रदृश्यते ।। कौशिकीं सरितं तीर्त्वाञ्जयन्त्यास्तु पूर्व्वतः । क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयम् ।। विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु । मलये नलसेतौ च वेगवत्योषधिर्ध्रुवा । कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत् तामुपोषितः । सोमवच्चात्र वर्त्तेत फलं तावच्च कीर्त्तितम् ।। रसा-यनाधिकारस्तु न सप्तानां पुंसाम्, तदुक्तं सुश्रुतेन—अथ सप्त पुरुषा रसायनं नोपयुञ्जीरन् । तद् यथा—अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद् भेषजापमानी चेति । सप्तभिरेव कारणैर्न सम्पद्यते । अज्ञानादनारम्भादस्थिरचित्तत्वाद् दारिद्र्यादनायत्तत्वादधर्म्मादौषधा-लाभाच्चेति ।। ८ ।।

समर्थानामरोगाणां धीमतां नियतात्मनाम्।
कुटीप्रवेशः क्षमिणां * परिच्छदवतां हितः॥
अतोऽन्यथा तु ये तेषां सौर्य्यमारुतिको विधिः।
ताभ्यां श्रेष्ठतरः पूर्व्वो विधिः स तु सुदुष्करः॥ ९ ॥
रसायनविधिभ्रंशाज्जयेरन् व्याधयो यदि।
यथास्वमौषधं तेषां कार्य्यं मुक्त्वा रसायनम्॥ १० ॥

गङ्गाधरः—ननु चतुष्पादेषूक्तानां रसायनानां द्विविधः प्रयोगो भवता व्याख्यातः कुटीप्रावेशिको वातातपिकश्च; सर्व्वे तु पुरुषाः किं द्विविधमेव प्रयोगं कुर्य्युरथान्यथेत्यत आह—समर्थानामित्यादि। समर्थानां शक्तिमतां नियतात्मनां कामक्रोधादिविरहेण निश्चित्य यमशीलतया स्थिरमनसां क्षमिणां क्षमाशीलानां परिच्छदवतां धनजनादिभिः सम्पन्नानां कुटीप्रवेशो हितः। अतोऽन्यथा तु सामर्थ्यरहितानां रोगिणामबुद्धिमतां कामादिभिरस्थिरचित्तानाम् अक्षमिणां धनजनादिसम्पद्रहितानाञ्च सौर्य्यमारुतिको वातातपिको विधिर्हितः। नन्वेवं चेत् कस्मात् कुटीप्रवेशः कार्य्यः समर्थादिभिरपि सौर्य्यमारुतिको विधिः क्रियेतेत्यत आह—ताभ्यामित्यादि। श्रेष्ठतर इति सम्यक्फलनिष्पादकत्वात् पूर्व्वः कुटीप्रवेशो वै श्रेष्ठतरः। असम्यक्फलनिष्पादकत्वात् तु परो वातातपिको विधिः श्रेष्ठो रोगहरभेषजेभ्यः। नन्वेवं चेत् समर्थासमर्थाः सर्व्वे कुटीप्रवेशं कस्मान्न कुर्य्युरित्यत आह—स तु सुदुष्कर इति। स तु कुटीप्रवेशो विधिः सुदुष्करः। बहुक्लेशजनको यस्मात् तस्मात् समर्थादीनां हितो नासमर्थादीनामिति बोध्यम्॥ ९॥

गङ्गाधरः—ननु कुटीप्रवेशे कृते यदि दैवाद् विधितो भ्रश्यते रोगाश्च तेन यदि भवन्ति तदा किं कार्य्यमित्यत आह—रसायनविधिभ्रंशादित्यादि। व्याधय इति ये व्याधयो भवन्ति तेषां व्याधीनामौषधं कार्य्यमित्यर्थः॥ १०॥

चक्रपाणिः—कुटीप्रावेशिकरसायनविषयान् वातातपिकरसायनविषयांश्च पुरुषानाह—समर्थानामित्यादि। क्षणिनामिति व्यापारकरणं प्रति स्वतन्त्राणाम्। सूर्य्यमारुतसेवयापि क्रियत इति

* क्षणिनाम् इति चक्रः।

सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात्।
अहिंसकमनायासं प्रशान्तं प्रियवादिनम्॥
जपशौचपरं धीरं दाननित्यं तपस्विनम्।
देवगोब्राह्मणाचार्य्य-गुरुवृद्धार्च्चने रतम्॥
आनृशंस्यपरं नित्यं नित्यं कारुण्यवेदिनम् ❀।
समजागरणस्वप्न-नित्यं क्षीरघृताशिनम्॥
देशकालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम्।
शस्ताचारमसङ्कीर्णमध्यात्मप्रबलेन्द्रियम्॥
उपासितारं वृद्धानामास्तिकानां जितात्मनाम्।
धर्म्मशास्त्रपरं विद्यान्नरं नित्यरसायनम्॥
गुणैरेतैः समुदितैः प्रयुङ्क्ते यो रसायनम्।
रसायनगुणान् सर्व्वान् यथोक्तान् स समश्नुते॥ ११॥

इत्याचाररसायनम्।

ननु कस्य पुना रसायनमेकान्तेन सिध्यतीत्यत आह—सत्यवादिनमित्यादि। मद्यमैथुनान्निवृत्तं नित्यम् आनृशंस्यपरम् अखलत्वे तत्परं नृशंसा तु खलता। नित्यं कारुण्यवेदिनं दयावेत्तारम्। नातिजागरणनातिस्वप्नौ नित्यौ यस्य तं समजागरणस्वप्ननित्यम्। असङ्कीर्णं नानाधर्म्ममेलकेन सङ्कीर्णभावरहितम्। अध्यात्मे प्रबलानीन्द्रियाणि यस्य तम् अध्यात्मप्रबलेन्द्रियम्। वृद्धादीनामुपासितारम्। नित्यरसायनमिति सर्व्वदाचरितरसायनमित्यर्थः। रसायनाधिकारिणमाह—एतैः समुदितैः गुणैर्यो रसायनं प्रयुङ्क्ते स सर्व्वान रसायनगुणान् यथोक्तान समश्नुते॥ ११॥

इत्याचाररसायनम्।

सौर्य्यमारुतिकः। सामान्येनरसायनविषयपुरुषगुणान् उक्त्वा विशेषेण गुणानाह—सत्यवादिनमित्यादि। करुणया सत्त्वानि पश्यतीति करुणवेदी। असङ्कीर्णः कुलजः। नित्ययोगेन रसायनप्रयोगो यस्य स नित्यरसायनः॥ ९—११॥

❀ करुणवेदिनम् इति चक्रः।

यथास्थूलमनिर्व्वाह्य दोषान् शारीरमानसान्।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन॥ १२॥
योगा ह्यायुःप्रकर्षार्था जरारोगनिवर्हणाः।
मनःशरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम्॥ १३॥
तदेतन्न भवेद् वाच्यं सर्व्वमेव हतात्मसु।
अरुजेभ्योऽद्विजातिभ्यः शुश्रूषा येषु नास्ति च॥ १४॥
ये रसायनसंयोगा वृष्ययोगाश्च ये मताः।
यच्चौषधं विकाराणां सर्व्वं तद् वैद्यसंश्रयम्॥

गङ्गाधरः—ननु के रसायनगुणान सर्व्वानाप्नुवन्तीत्यत आह—यथेत्यादि। शारीरमानसान दोषान् अनिर्वाह्य शारीरमानसदोषनिर्व्वाहं न कृत्वा जन्तुः यथास्थूलं स्थूलान गुणानतिक्रम्य सूक्ष्मै रसायनगुणैर्न कदाचन युज्यते स्थूलगुणांस्तु लभते। स्थूलगुणास्तु असम्यग्रूपेणायुर्हितत्वानल्पजीविताारोग्यादयः॥ १२॥

गङ्गाधरः—ननु तर्हि केषां रसायनादीनि सिध्यन्तीत्यत आह—योगा इत्यादि। मनःशरीराभ्यां दोषतः शुद्धानाम्॥ १३॥

गङ्गाधरः—अथ रसायनयोगानां गुह्यत्वमाह—तदेतदित्यादि। तदेतत् सर्व्वमेव रसायनं हतात्मसु साङ्गवेदवचनैर्व्वानिष्ठादिभिर्हतमनोबुद्धिस्वभावेषु न वाच्यं भवेत्। रसायनफलानिष्ठाभावात् अरुजेभ्योऽद्विजातिभ्यः शूद्रेभ्यश्च न वाच्यं भवेत्। येषु रसायनगुणशुश्रुषा श्रवणेच्छा नास्ति तेषु च वाच्यं न भवेत्। तेषां हि प्रायो न सत्यतया रसायनादिचमत्कारवत्त्वेषु प्रत्ययोऽस्ति स्वयं विज्ञाभिमानित्वात्॥ १४॥

गङ्गाधरः—ननु के पुनरेतत् सर्व्वौषधविदः स्युरित्यत आह—ये इत्यादि। वैद्यसंश्रयमिति वैद्या हि धर्म्मार्थकामाभिलाषिण औषधगुणेषु सत्यतया प्रत्ययवन्तस्तत्फलेन हि स्वगुणविख्यातियशोऽर्थलाभादयः। यदि सर्व्वं रसायन

चक्रपाणिः—शुद्धैरेव प्रयतात्मतायां लब्धायां पुनस्तदभिधानमितरमानसगुणेषु प्रयतात्मताया अभ्यर्हिततोपदर्शनार्थम्। अरजोभ्योऽद्विजातिभ्यः शुश्रुषा येषु पुरुषेषु नास्ति, तेषु च तन्न वाच्यमिति योजना॥ १२—१४॥

चक्रपाणिः—सम्प्रति रसायनादिसिद्धिर्वैद्याधीना, तेन वैद्यस्तुतिमारभते—य इत्यादि।

प्राणाचार्य्यं बुधस्तस्माद् धीमन्तं वेदपारगम् ।
अश्विनाविव देवेन्द्रः पूजयेदतिशक्तितः ॥ १५ ॥
अश्विनौ देवभिषजौ यज्ञवाहाविति स्मृतौ ।
यज्ञस्य * हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम् ॥
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टे भगस्य च ।
वज्रिणश्च भुजस्तम्भस्ताभ्यामेव चिकित्सितः ॥
चिकित्सितस्तु शीतांशुर्गृहीतो राजयक्ष्मणा ।
सोमान्निपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी ॥
भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः ।
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा ॥
एतैश्चान्यैश्च बहुभिः कर्म्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥
ग्रहाः स्तोत्राणि मन्त्राणि तथा नाना हवींषि च ।
धूमाश्च पशवस्ताभ्यां प्रकल्प्यन्ते द्विजातिभिः ॥

संयोगवृष्ययोगरोगघ्नौषधं वैद्यसंश्रयं न त्वन्यत्र वाच्यं, तदा तस्मादेव सुतरां बुधः पण्डितो धीमन्तं वेदपारगमायुर्व्वेदपारगं प्राणाचार्य्यं वैद्यं शक्तितः पूजयेत् । अश्विनाविव देवेन्द्रः । देवेन्द्रो यथाश्विनौ स्वर्व्वैद्यौ पूजितवान् तथेत्यर्थः । इति ॥ १५ ॥

गङ्गाधरः—ननु कथं कस्माच्च देवेन्द्रेणाश्विनौ पूजितावित्यत आह—अश्विनावित्यादि । यज्ञवाहाविति विवृणोति—यज्ञस्य हीत्यादि । यज्ञस्य दक्षप्रजापतेः क्रतोः । सोमात् सौम्यभावात् । ग्रहा ग्रहणार्थं विधयः । ताभ्याम्

प्राणाचार्य्यमित्यत्र प्राणिवर्य्यमिति वा पाठः, तत्र प्राणिनां वर्य्यः श्रेष्ठः प्राणिवर्य्यः । यज्ञं वहत इति यज्ञवाहौ, तद्यज्ञवाहत्वमेव दर्शयति—दक्षस्य हीत्यादि । पूष्णः सूर्य्यस्य । भगोऽपि सूर्य्यभेदः । सोमाभिपतित इति सोमाभिपातनरोगेण पीड़ित इत्यर्थः, अतिपत्चित इति वा पाठः, तत्राप्यतिपत्चनेन सोमपानातियोगं दर्शयति । ग्रहाः सोमपानपात्राणि । स्तोत्राणि स्तवाः स्तावकवाचः । शस्त्राणीति कृत्वा केचित्, शस्यतेऽनेनेति सामगव्यतिरिक्तं स्तोत्रमाहुः, शस्त्राणि अस्त्राण्येव, वषट्युक्तानि

* यज्ञस्य इत्यत्र दक्षस्य तथा सोमान्निपतित इत्यत्र सोमाभिपतितः इति चक्रसम्मतः पाठः ।

प्रातश्च सवने सोमं शक्रोऽश्विभ्यां सहाश्नुते।
सौत्रामण्याञ्च भगवानश्विभ्यां सह मोदते॥
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः।
स्तूयन्ते वेदवाक्येषु न तथान्या हि देवताः॥
अमरैरजरैस्तावद्विबुधैः साधिपैर्ध्रुवैः।
पूज्येते प्रयतैरेवमश्विनौ भिषजाविति॥ १६॥
मृत्युव्याधिजरावश्यैर्दुःखप्रायैः सुखार्थिभिः।
किं पुनर्भिषजो मर्त्त्यैः पूज्याः स्युर्नातिशक्तितः॥ १७॥
शीलवान् मतिमान् युक्तस्त्रिजातिः शास्त्रपारगः।
प्राणिभिर्गुरुवत् पूज्यः प्राणाचार्य्यः स हि स्मृतः॥ १८॥

अश्विनीकुमारद्वयाय द्विजातिभिः ग्रहादयः कल्प्यन्ते। स च शक्रः प्रातःकाले सवने अश्विभ्यां सह सोममश्नुते। सौत्रामण्याञ्च यज्ञे भगवान् जिष्णुरश्विभ्यां सह मोदते। द्विजैः प्रायशो वेदवाक्येषु इन्द्राग्नी च अश्विनौ चैते एव यथा स्तूयन्ते तथा नान्या हि देवताः स्तूयन्ते। अमरादिभिः एवं पूज्येते एवाश्विनौ देवभिषजौ॥ १६॥

गङ्गाधरः—मर्त्यानां वैद्यपूजनमाह—मृत्युव्याधीत्यादि। अमरैरजरैर्यद्येवं वैद्यः पूज्यते, तत्र मर्त्त्यैर्मरणशीलैः मृत्युव्याधिजराभिर्वश्यैः दुःखप्रायैः सुतरां सुखार्थिभिर्नातिशक्तितः न शक्तिमतिक्रम्य यथाशक्तितः भिषजो पुनः किं न पूज्याः स्युस्तत्र किं ब्रूम इति भावः॥ १७॥

गङ्गाधरः—ननु कस्माद् वैद्यः पूज्य उच्यते, इत्यत आह—शीलवानित्यादि। युक्तः युक्तिमान् त्रिजातिः ब्राह्मणमूर्द्धाभिषिक्ताम्बष्ठान्यतमो ब्राह्मणः क्षत्रियमाहिष्यान्यतरः क्षत्रियो वैश्यो वेति षण्णामन्यतमः संस्कारात् द्विजन्मवान्। स पुनः शास्त्रपारगः वेदवेदाङ्गपारं गतः त्रिजातिर्वक्ष्यते। एवम्भूतो वैद्यो यः स हि प्राणार्थं प्राणवद्भिः गुरुवत् आचार्य्यवत् पूज्यस्तस्मात् प्राणाचार्य्य इति स्मृतः॥ १८॥

शस्त्राणि च यज्ञे कल्प्यन्त एव। धूम्राश्च पशव इति धूम्रवर्णपशवः, एवंवर्णाश्च पशवः श्रेष्ठा भवन्ति। सवन इति यज्ञस्थाने। सौत्रामणी यज्ञविशेषः। अतिशक्तित इति निजशक्तेरप्यतिरेकेण॥ १५—१८॥

विद्यासमाप्तौ भिषजस्तृतीया जातिरुच्यते ।
अश्रुते वैद्यशब्दो न, न वैद्यः पूर्व्वजन्मतः ॥
विद्यासमाप्तौ ब्राह्मं वा सत्त्वमार्ष्यमथापि वा ।
ध्रुवमाविशति ज्ञानात् तस्माद् वैद्यस्त्रिजः स्मृतः ॥ १६ ॥
नाभिध्यायेन्न चाक्रोशेदहितं न समाचरेत् ।
प्राणाचार्य्यं बुधः कश्चिदिच्छन्नायुरनित्वरम् * ॥ २० ॥

गङ्गाधरः—ननु तर्हि कथं द्विजातित्वं न कथ त्रिजातित्वं किं तावदिति आह—विद्येत्यादि। साङ्गानां वेदानामध्ययनेन यज्ज्ञानं सा विद्या। सा च द्विधा परा चापरा च। उक्तं हि मण्डूकोपनिषदि "द्वे विद्ये वेदितव्ये परा चापरा च। तत्रापरा ऋग्वेदः सामवेदो यजुर्व्वेदोऽथर्व्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् इति। अथ परा यया तदक्षरमधिगम्यते यत्तदद्रश्यमगोत्रमवर्ण्यमित्यादि। तद्द्विविधाविद्याया अध्ययनेन समाप्तौ सत्यां भिषजस्तृतीया जातिः वैद्यत्वे, न पुनर्ज्जन्मत उच्यते। तेन अश्रुतेऽनधीतसाङ्गवेदे ब्राह्मणादौ द्विजातिषट्के, उपनयनेनैव द्विजातित्वमात्रे न तु वैद्यपर्य्यायभिषक्प्राणाचार्य्यादिशब्दो वैद्यशब्दो वर्त्तते न वा सावित्र्यां पूर्व्वजन्मतो वैद्यः स्यात्। अत एव ब्राह्मणानां षड्विधानामुपनयनसंस्कारवेदारम्भ इव वैद्यत्वे तेषां वेदाध्ययनसमाप्तिश्चेत् तदा तेषां ब्राह्मणत्वादिवद्वैद्यत्वं भवतीति त्रिजन्मत्वम्।

ननु कस्माद् विद्यासमाप्तौ तृतीया जातिः स्यादित्यत आह—विद्यासमाप्तावित्यादि। ब्राह्मं सत्त्वं मनः अथवार्षं सत्त्वं मनः ज्ञानात् तत्त्वज्ञानात् समाप्तविद्यं पुरुषं ध्रुवं निश्चितमाविशति यस्मात्, तस्माद् द्विजो ब्राह्मणादिर्वैद्यत्वरूपेण जन्मान्तरात् वैद्यस्त्रिजो द्विजेषु श्रेष्ठः स्मृतः ॥ १९ ॥

गङ्गाधरः—अत एव बुधः कश्चिदनित्वरम् अगत्वरमायुरिच्छन् प्राणाचार्य्यं

चक्रपाणिः—वैद्यशब्दद्विजशब्दयोः प्रवृत्तिनिमित्तमाह—विद्येत्यादि। तेन विद्यायोगाद् वैद्यत्वं तथा विद्यासमाप्तिलक्षणजन्मना त्रिजत्वं भवतीत्युक्तं भवति। ब्राह्मं वा आर्षं वा इति विकल्पो वैद्यविशेषाभिप्रायाद् भवति, तयोर्यो नैष्ठिकचिकित्सार्थः, तस्य ब्राह्मम्, इतरस्य तु लोकानुग्राहिण आर्षमिति व्यवस्था ॥ १९।२० ॥

* इतःपरं चिकित्सितशरीरं यो न निष्क्रीणाति दुर्म्मतिः। स यत् करोति सुकृतं तत् फलं भिषगश्नुते ॥ इत्यधिकः पाठः क्वचिद् दृश्यते।

चिकित्सितस्तु संश्रुत्य यो वासंश्रुत्य मानवः।
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः॥
भिषगप्यातुरान् सर्व्वान् स्वसुतानिव यत्नवान्।
आबाधेभ्यो हि संरक्षेदिच्छन्नायु-*-रनुत्तमम्॥ २१॥
धर्म्मार्थश्चार्थकामार्थमायुर्व्वेदो महर्षिभिः।
प्रकाशितो धर्म्मपरैरिच्छद्भिः स्थानमक्षयम्॥
नार्थार्थं नापि कामार्थमथ भूतदयां प्रति।
वर्त्तते यश्चिकित्सायां स सर्व्वमतिवर्त्तते॥ २२॥

वैद्यं नाभिध्यायेत् तद्धनादिविषयस्पृहां न कुर्य्यात्, न चाक्रोशेत्, नाप्यहितं समाचरेत्॥ २०॥

गङ्गाधरः—वैद्यानां पूज्यत्वमुक्त्वा येन चिकित्सितो यो भवति तस्य तं वैद्यं प्रति यथा कर्त्तव्यं तदाह—चिकित्सित इत्यादि। यो मानवो येन वैद्येन चिकित्सितस्तस्योपकारविषयं संश्रुत्यासंश्रुत्य वा वैद्याय नोपाकरोति उपकारं न करोति इह जगति उभयस्मिन् लोके तस्य निष्कृतिर्नास्ति। चिकित्सितपुरुषस्य वैद्यं प्रत्याचरणमुक्त्वा वैद्यस्याप्यातुरं प्रत्याचारमाह—भिषगपि इत्यादि। अपिशब्दोऽत्र पूर्व्वश्लोकार्थप्रतिरूपे। चिकित्सितः पुमान् यथा वैद्याय उपाकुर्य्यात् तथा भिषगपि यत्नवान् सन् उत्तममायुः स्वस्येच्छन् सर्व्वानातुरान् आबाधेभ्यो व्याधिपीड़ाभ्यः स्वसुतानिव संरक्षेत्॥ २१॥

गङ्गाधरः—आयुर्व्वेदप्रकाशफलमाह—धर्म्मार्थमित्यादि। धर्म्मार्थं धर्म्मनिमित्तमर्थकामार्थश्च अर्थार्थं कामार्थश्च अक्षयं स्थानं ब्रह्मलोकमिच्छद्भिर्धर्म्मपरैर्महर्षिभिरायुर्व्वेदः प्रकाशितः, न महर्षिभिरर्थार्थं नापि कामार्थमायुर्व्वेदः प्रकाशितः किन्तु धर्म्मार्थमर्थकामार्थं च प्रकाशितः। ननु कथं धर्म्मः स्यादित्यत आहाथेत्यादि। चिकित्सायां यो भूतदयां प्रति वर्त्तते भूतेषु दयां कृत्वार्थकामौ हित्वा चिकित्साकरणे यत् फलं वर्त्तते स धर्म्मरूपः सर्व्वं फलमतिवर्त्तते अतिक्रामति॥ २२॥

चक्रपाणिः—संश्रुत्येति प्रतिज्ञाय॥ २१।२२॥

* धर्म्ममिति पाठान्तरम्।

कुर्व्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।
ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते ॥ २३ ॥
दारुणैः कृष्यमाणानां गदैर्वैवस्वतक्षयम् ।
छित्त्वा वैवस्वतान् पाशान् जीवितञ्च प्रयच्छति ॥
धर्म्मार्थदाता सदृशस्तस्य नेहोपलभ्यते ।
न हि जीवितदानाद्धि दानमन्यद् विशिष्यते ॥
परो भूतदया धर्म्म इति मत्वा चिकित्सया ।
वर्त्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते ॥ २४ ॥

गङ्गाधरः—धर्म्मार्थ चिकित्साफलमुक्त्वा वृत्त्यर्थं चिकित्साफलमाह—कुर्व्वते इत्यादि । वृत्त्यर्थं धनार्थम् । चिकित्सायाः पण्येन इयन्मितं धनं मह्यं त्वं दास्यसि इत्युक्तोऽथाहं तद् दास्यामीति प्रतिश्रुत्य पणं कारयित्वा ये विक्रयं कुर्व्वते ते काञ्चनं राशिं स्वर्णस्य राशिं त्यक्त्वा पांशुराशिम् उपासत भजन्ते यथा तथा सर्व्वातिवर्त्तिधर्म्मं विहायाथ लभन्ते इति भावः ॥ २३ ॥

गङ्गाधरः ननु भूतेषु दयया चिकित्सायां कथं सर्व्वातिवर्त्ती धर्म्मो वर्त्तते इत्यत आह—दारुणैरित्यादि । दारुणैर्गदैः वैवस्वतक्षयं यमराजभवनं कृष्यमाणानां प्राणिनां छित्त्वा वैवस्वतान् पाशान् यमपाशं मोचयित्वा जीवितं भिषक् धर्म्मार्थं प्राणिभ्यः प्रयच्छति यस्मात् तस्मात् तस्य चिकित्सकस्य सदृशो धर्म्मार्थदाता इह त्रिलोक्यां नोपलभ्यते । ननु कस्मादित्यत आह—न हीत्यादि । हि यस्मात् । जीवितदानादन्यद् दानं न हि विशिष्यते । भूतेषु दयया चिकित्सायाः फलान्तरमाह—पर इत्यादि । भूतदया भूतेषु दया पर उत्कृष्टो धर्म्म इति मत्वा यश्चिकित्सया वर्त्तते स सिद्धार्थः सन्नत्यन्तं सुखं ब्रह्म निर्व्वाणमश्नुते अन्तातिक्रान्तं सुखन्तु आनन्दमयस्य भवतीति ॥ २४ ॥

चक्रपाणिः—चिकित्सैव पण्यं विक्रेतव्यमिति चिकित्सापण्यम् ; ते हित्वेत्यादौ धर्म्मार्थं क्रियमाणचिकित्सा महाफलत्वेन काञ्चनराशितुल्या, इतरा त्वसारकल्पा पांशुराशितुल्या ॥ २३ ॥

चक्रपाणिः—वैवस्वतक्षयमिति यमगृहम् ॥ २४ ॥

तत्र श्लोकौ।

आयुर्व्वेदसमुत्थानं दिव्यौषधिविधिः शुभः।
अमृताल्पान्तरगुणं सिद्धं रत्नरसायनम्॥
सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः।
आयुर्व्वेदसमुत्थाने तत् सर्व्वं सम्प्रकाशितम्॥ २५॥

इति चिकित्सितस्थाने प्रथमाध्याये आयुर्व्वेदसमुत्थानीय-रसायनपादश्चतुर्थः।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने रसायनो नाम प्रथमोऽध्यायः॥ १॥

गङ्गाधरः—पादार्थमुपसंहरति—तत्र श्लोकावित्यादि। अमृताल्पान्तरगुणं अमृतात् किञ्चिद्धीनगुणम्॥ २५॥

गङ्गाधरः—पादं समापयतीतीत्यादि। अध्यायं समापयति अग्नीत्यादि।

इति वद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सित-स्थाने आयुर्व्वेदसमुत्थानीयरसायनपादश्चतुर्थः।
समाप्तश्च प्रथमोऽध्यायः॥ १॥

चक्रपाणिः—संग्रहे रत्नरसायनमिति हेमादिरत्नसंयुक्तं रसायनम्; आयुर्व्वेदसमुत्थानं प्रकाशित-तया; दिव्यौषधिविध्यादि यदुवाच ब्रह्मचारिभ्योऽमरेश्वरः तत् प्रकाशितमिति योजना॥ २५॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायामायुर्व्वेदसमुत्थानीयरसायनपाद-श्चतुर्थः। समाप्तश्चायं प्रथमाध्यायः॥

## द्वितीयोऽध्यायः ।

अथातः संयोगशरमूलीयं वाजीकरणपादं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

वाजीकरणमन्विच्छेत् पुरुषो नित्यमात्मवान् ।
तदायत्तौ हि धर्म्मार्थौ प्रीतिश्च यश एव च ॥
पुत्रस्यायतनं ह्येतद् गुणाश्चैते सुताश्रयाः ।
वाजीकरणमग्र्यञ्च क्षेत्रं स्त्री या प्रहर्षिणी ॥ २ ॥

गङ्गाधरः—अथ रसायनाध्यायानन्तरमतः स्वस्थविध्यधिकारादुद्देशानुक्रमात् वाजीकरणमाह—अथात इत्यादि । संयोगशरमूलीयमिति स्त्रीसौभाग्यस्य आदौ वाजीकरणत्वं वक्ष्यते तत् सुभगस्त्रीसंयोगं योगादौ । शरमूलेक्षुमूलानीत्यादि-वक्ष्यमाणवाक्यैकदेशं शरमूलञ्चाधिकृत्य कृतो वाजीकरणपादस्तं तथा ॥ १ ॥

गङ्गाधरः—वाजीकरणमित्यादि । आत्मवान् पुरुषो नित्यं वाजीकरणद्रव्य-मन्विच्छेत् वाजीकरणद्रव्यान्वेषणां कुर्य्यात् । कस्मादित्यत आह—तदायत्ता-वित्यादि । हि यस्मात् । धर्म्मार्थौ द्वौ तदायत्तौ वाजीकरणद्रव्याधीनौ । प्रीतिश्च यशश्चैव द्वे तदायत्ते । हि यस्माच्च एतद्वाजीकरणद्रव्यं पुत्रस्यापत्यस्यायतनम् । ननु वाजीकरणसेवनेन को धर्म्मः कथं वा स्यादर्थश्च कथं स्यादेवं प्रीत्यादयश्च कथं स्युरित्यत आह—गुणाश्चेत्यादि । एते च गुणा धर्म्मार्थप्रीतियशांसि

चक्रपाणिः—स्वस्थौजस्करसामान्यात् रसायनमनु वाजीकरणं वाच्यम्, तत्रापि वाजीकरणे प्रवृत्त्युपदर्शकप्रकरणयुक्तत्वादादौ संयोगशरमूलीय उच्यते । संयोगः शरमूलानामस्मिन्नस्तीति संयोगशरमूलीयः ॥ १ ॥

चक्रपाणिः—अवाजी वाजीवात्यर्थं मैथुने शक्तः क्रियते येन तद् वाजीकरणम् । उक्तं हि—"वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियम्" इत्यादि ; अन्विच्छेदिति रसायनात् महाफलात् तदपेक्षयाल्पफलं वाजीकरणं पश्चादिच्छेत् । "पुरुषः" इति पदेन तरुणपुरुषग्राहिणा बालवृद्धौ निषिद्धव्यवायौ निराकरोति ; उक्तं हि—"अतिबालोऽह्यसम्पूर्ण-सर्व्वधातुः स्त्रियो व्रजन् । उपतप्येत सहसा तड़ागमिव काजलम् ॥ शुष्कं रुक्षं यथा काष्ठं जन्तुदग्धं विजर्ज्जरम् । स्पृष्टमाशु विशीर्य्येत तथा वृद्धः स्त्रियो व्रजन् ॥" इति । 'नित्यम्' इत्यनेन न रसायनवत् सकृत्प्रयोगो वृष्यस्य, किन्त्वाहारवत् सर्व्वदा सर्व्वोऽपि प्रयोग इति दर्शयति । आत्मवानित्यनेन दुरात्मनो वृष्यकरणं निषेधति ; स हि वृष्ययोगादुपचितधातुः सन्नगम्यागमनमपि कुर्य्यात् । धर्म्मादयो वृष्यायत्ता एव

इष्टा ह्येकैकशोऽप्यर्थाः परं प्रीतिकराः स्मृताः।
किं पुनः स्त्रीशरीरे ये संघातेन व्यवस्थिताः॥
संघातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते।
स्त्र्याश्रयो हीन्द्रियार्थो यः स प्रीतिजननोऽधिकः॥ ३॥

सुताश्रयाः। वाजीकरणसेवनेन पुत्रे जाते सुपुत्रत्वादितः पितृलोकादिहितकर्म्मसम्भवात् धर्म्मार्थप्रीतियशसामवश्यम्भावित्वमिति भावः। तस्मादात्मवान् पुरुषो वाजीकरणमन्विच्छेत्। वाजीकरणस्य लक्षणं फलञ्च रसायनाध्याये विस्तरेण पूर्व्वमुक्तं ; सुश्रुतेनाप्युक्तम्। "कल्यस्योदग्रवयसो वाजीकरणसेविनः। सर्व्वेष्वृतुष्वहरहर्व्यवायो न निवारितः। स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम्। योषित्प्रसङ्गात् क्षीणानां क्लीवानामल्परेतसाम्। विलासिनामर्थवतां रूपयौवनशालिनाम्। नृणाञ्च बहुभार्य्याणां योगा वाजीकरा हिताः। सेवमानो यदौचित्याद् वाजीवात्यर्थवेगवान्। नारीस्तर्पयते तेन वाजीकरणमुच्यते॥" इति। तत्रादौ श्रेष्ठं वाजीकरणमाह—वाजीकरणमित्यादि। अग्र्यं श्रेष्ठं वाजीकरणं क्षेत्रम्। क्षेत्रमाह—स्त्रीत्यादि। प्रहर्षिणी या स्त्री तत् क्षेत्रं तच्च श्रेष्ठं वाजीकरणम्॥ २॥

गङ्गाधरः—ननु केवलं स्त्रीमात्रं प्रहर्षकरमुतान्यदित्यतः कुतश्च स्त्री प्रहर्षकरीत्यतश्च आह—इष्टा हीत्यादि। हि यस्मात्। इष्टा अभिमता अर्थाः शब्दस्पर्शरूपरसगन्धा एकैकशोऽपि परं प्रीतिकराः सर्व्वत्रैव वस्तुषु स्मृताः। तत्र स्त्रीशरीरे संघातेन अनेकशो व्यवस्थिता ये इष्टा अर्थास्तेषु पुनः प्रीतिकरत्वे किं वचः। ननु कथं स्त्रीमात्रमग्र्यं वाजीकरणमन्येष्वपि वस्तुषु इष्टार्था वर्त्तन्ते इत्यत आह—संघात इत्यादि। हि यस्मात्। इष्टानामिन्द्रियार्थानां शब्दादीनां संघातः समुदायः स्त्रीष्वेव विद्यते नान्यत्र अर्थानामिष्टानां संघातो वर्त्तते। यदि चान्यत्रार्थानां संघातो वर्त्तते न तर्हि इष्टानामर्थानां संघातः, यदि चेष्टा अर्था वर्त्तन्ते न च तर्हि इष्टानामर्थानां संघातस्त्वन्यत्र वर्त्तते, तस्मात्

यथा भवन्ति, तदाह—पुत्रस्येत्यादि। आयतनं कारणम्; एते गुणा इति धर्म्मादयः। वृष्यप्रयोगजनितः पुत्रो पितुः धर्म्मादीन् सम्पादयतीत्यर्थः। वाजीकरणं यच्चेहोक्तम्, तदृतुकाले यथाविधिकृतमैथुनप्राधान्येनाभिप्रेतम्, तेन त्रिस्रैषणीये "त्रय उपस्तम्भाः" इत्यादिग्रन्थेन ब्रह्मचर्य्यं यदुक्तम्, तद् ऋतुकाले यथाविधिकृतमैथुनाप्रतिषेधकमिति न विरोधः। सर्व्ववाजीकरणेभ्यः प्रधानरूपं वाजीकरणमाह—वाजीत्यादि। क्षेत्रमिव क्षेत्रम्, तत्र शुक्ररूपबीजप्ररोहणात्। अर्था

स्त्रीषु प्रीतिर्विशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम् ।
धर्म्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः ॥ ४ ॥
सुरूपा यौवनस्था या लक्षणैर्या विभूषिता ।
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा स्मृता ॥ ५ ॥
नानाभुक्त्या * तु लोकस्य दैवयोगाच्च योषिताम् ।
तं तं प्राप्य निवर्त्तन्ते नरं रूपादयो गुणाः ॥ ६ ॥

या स्त्री प्रहर्षिणी तत् क्षेत्रं श्रेष्ठं वाजीकरणमिति। ननु सर्व्वासु स्त्रीषु नेष्टार्थानां संघातो वर्त्तते इत्यत आह—स्त्र्याश्रय इत्यादि। हि यस्मात्। स्त्र्याश्रयः स्त्री आश्रयो यस्य स स्त्र्याश्रयः। स्त्रीशरीरे यः शब्दस्पर्शादिरर्थो वर्त्तते स प्रीतिजननोऽधिको भवेत् क्षेत्रत्वात् कामाधिकरणत्वात् ॥ ३ ॥

गङ्गाधरः—ननु कथमधिकप्रीतिकरः स्त्र्याश्रयोऽर्थः स्यादित्यत आह—स्त्रीष्वित्यादि। विशेषेण वस्त्वन्तरापेक्षयाधिक्येन। ननु कथं विशेषेणेत्यत आह—स्त्रीष्वपत्यमित्यादि। अपत्यन्तु परमप्रेमास्पदं पितृलोकादिहितत्वेन धर्म्मार्थप्रतिष्ठानं तदाकरत्वात् स्त्रीष्वपि धर्म्मार्थौ प्रतिष्ठितौ। यतो धर्म्मार्थौ स्त्रीषु प्रतिष्ठितौ ततो लक्ष्मीश्च स्त्रीषु प्रतिष्ठिता यतो लक्ष्मीस्ततश्च धर्म्मार्थौ सुतरां स्त्रीषु लोका अपि प्रतिष्ठिता भवन्ति ॥ ४ ॥

गङ्गाधरः—एवञ्च स्त्रीमात्रं क्षेत्रं श्रेष्ठं वाजीकरणं, तासु मध्ये विशेषमाह—सुरूपेत्यादि। या च स्त्री सुरूपा तत्र या च यौवनस्था तत्र च या लक्षणैः शोभनचिह्नैर्युक्ता तत्रापि या विभूषिता नानालङ्कारैर्भूषिता तत्रापि विशेषरूपेण भूषिता तत्रापि या वश्या तत्रापि या शिक्षिता रतिशास्त्रविधिषु शिक्षावती, सा वृष्यतमा वृषाय हिततमा स्मृता ॥ ५ ॥

गङ्गाधरः—नानेत्यादि। लोकस्य नानाभुक्त्या बहूपभोगेन दैवयोगाच्च योषितां रूपादयः सुरूपमूर्त्त्यादयो गुणाः तं तं तादृशं तादृशं स्वगुणसदृशरूपादिगुणवन्तं नरं पुरुषं प्राप्य निवर्त्तन्ते। अन्यथा तु न निवर्त्तन्ते ॥ ६ ॥

इति शब्दादयः, ते च स्त्रीगताधररसकलविङ्करुतरूपादयः प्रसिद्धा एव ; धर्म्मार्थौ स्त्रीष्विति सहैव पत्न्या धर्म्मश्चरर्य इत्याद्युपदेशाद धर्म्मः, तथानुरक्ता स्त्री गृहिणी अर्थरक्षणादि करोतीत्यर्थः ; श्रिया लक्ष्म्याः संयोगे धनसम्पद भवतीति स्त्रीषु लक्ष्मीः प्रतिष्ठिता इत्यर्थः ; वश्या आयत्ता ; शिक्षितेति कामशास्त्रोक्तगीतवादित्रलास्यादिचतुःषष्टिकलाशिक्षिता ॥ २—५ ॥

चक्रपाणिः—रूपादिव्यतिरेकेणापि कर्म्मवशाद वृष्या स्त्री भवतीति दर्शयन् आह—नानेत्यादि।

* नानाभक्त्या इति पाठान्तरम् ।

वयोरूपवचो-*-हावैर्या यस्य परमङ्गना।
प्रविशत्याशु हृदयं दैवाद् वा कर्म्मणोऽपि वा ॥
हृदयोत्सवरूपा या या समानमनःश्रया †।
समानसत्त्वा या वश्या या यस्य प्रीयते प्रियैः ॥
या पाशभूता सर्व्वेषामिन्द्रियाणां परैर्गुणैः।
यया वियुक्तो निस्त्रीकमरतिर्मन्यते जगत् ॥
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः।
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ॥
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव याम्।
अपूर्व्वमिव यां याति नित्यहर्षातिवेगतः ॥

गङ्गाधरः—ननु सर्व्वा स्त्री किं सर्व्वस्य पुंसो हृष्यतमेत्यत आह—वय इत्यादि। याङ्गना स्त्री वयोरूपादिभिर्यस्य पुंसो हृदयं मन आशु परमुत्कृष्टं प्रविशति, दैवाद् भाग्याद् वाशु परं हृदयं यस्य प्रविशति, कर्म्मणोऽपि वा शरीरवाक्चेष्टातोऽपि वा यस्य हृदयम् आशु परं प्रविशति, या स्त्री यस्य हृदयोत्सवरूपा, या समानमनःश्रया या स्त्री यस्य पुंसो मनसः समानमनस आश्रया, या स्त्री यस्य पुंसः सत्त्वस्य समानसत्त्वा, या स्त्री यस्य पुंसो वश्या, या स्त्री यस्य पुंसः प्रियैर्भावैः प्रीयते, या स्त्री परैरुत्कृष्टैर्गुणैः स्वस्या रूपलावण्यादिभिः यस्य पुंसः सर्व्वेषामिन्द्रियाणां पाशभूता बन्धनार्थरज्जुरूपा, यया स्त्रिया वियुक्तो वियोगयुक्तः पुनर्यः पुमान अरती रती रमणं तद्रहितः सन् जगत् निस्त्रीकं स्त्रीरहितं मन्यते, यस्या ऋते इन्द्रियैः शून्यमिव, यस्यां स्त्रियां सर्व्वेन्द्रियाणि समर्प्य सर्व्वेन्द्रियशून्यवत् शरीरं यः पुमान् धत्ते, यां स्त्रियं दृष्ट्वा प्राप्तैः शोकोद्वेगारतिभयैर्नाभिभूयते यः पुमान, यः पुमान् यां स्त्रियं प्राप्य विस्रम्भं विश्वासं याति, यां स्त्रियं दृष्ट्वा यः पुमान् अतीव हृष्यति, नित्यहर्षवेगतोऽविश्रान्तकामवेगात् यः पुमान् अपूर्व्वमिव पूर्व्वं यथा न यातस्तथा यां

दैवयोगादिति प्राक्तनकर्म्मवशात्; निवर्त्तन्त इति निष्पन्नाः सम्पद्यन्ते; हावो नरं प्रति स्त्रीणां श्रृङ्गारचेष्टाविशेषः; उक्तञ्च भरतेन—"प्रकाशरूपकं सत्त्वं सत्त्वोत्प्लवाः समुद्गताः। तेभ्यो हावादिनिष्पत्तिरित्याहुः परमर्षयः ॥" इति। दैवादिति प्राक्तनकर्म्मणः। कर्म्मण इति ऐहिकात्

* वयोरूपमृजाहावैरिति वा पाठः। † समानमनःशया इति वा पठ्यते क्वचित्।

गत्वा गत्वापि बहुशो यां तृप्तिं नैव गच्छति।
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः ॥ ७ ॥
अतुल्यगोत्रां वृष्याञ्च प्रहृष्टां निरुपद्रवाम्।
शुद्धस्नातां व्रजेन्नारीमपत्यार्थी निरामयः ॥ ८ ॥
अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः।
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ॥
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः।
निष्प्रजस्तृणपूलीति ज्ञातव्यः पुरुषाकृतिः ॥

स्त्रियं याति गच्छति, यां स्त्रियं बहुशोऽपि गत्वा गत्वा यः पुमान् तृप्तिं नैव गच्छति, सा सा स्त्री तस्य तस्य पुंसो वृष्यतमा वृषाय हिततमा। वृषस्तु खलु शुक्रधातुः। कस्मात् तस्य तस्य सा सा वृष्यतमेत्यत आह—नानेत्यादि। मानवाः पुमांसो हि यस्मान्नानाभावा न तु तुल्यभावाः। यो यावद्भावः पुमान् तस्य तावद्भावा स्त्री वृष्यतमेति भावः ॥ ७ ॥

गङ्गाधरः—नन्वेवं चेत् तुल्यभावा या या स्त्री भवति सैव गम्या किं स्यात्, स्याच्चेत् तदा तदायत्तो हि धर्म्मार्थावित्यादिकं न स्यात्, परदारसगोत्रादीनां स्त्रीणां गमने धर्म्मादिविरोधादित्यत आह—अतुल्येत्यादि। अतुल्यगोत्रां यथाविधि स्वोढ़ाम्। निरुपद्रवामिति अरोगाम्। शुद्धस्नातामित्यनेन रजस्वलां त्रिरात्रात् ऊर्द्ध्वं यदा शुद्धस्नाता भवति तदा यावदृतुसद्भावस्तावद् गम्यैव, न तु तदूर्द्ध्वं न वा तदानीम् गम्या रागात् तु गम्या ॥ ८ ॥

गङ्गाधरः—ननु पुमान् यद्यनपत्यः स्यात् तदा किं स्यादित्यत आह—अच्छाय इत्यादि। एकशाखस्तु द्रुमः अच्छायो निष्फलश्च यथा भवति, तथा एको नरः स्त्रियं विना अनिष्टगन्धोऽग्राह्यो निरपत्यश्च। अनपत्यस्य पुंसो निन्द्यत्वं दर्शयति—चित्रदीप इत्यादि। निष्प्रजो निरपत्यः

प्रीतिकरणादिकर्म्मणः; मनःशयः कामः; पाशभूतेति मनइन्द्रियबन्धहेतुत्वात्; नानाभावा हि मानवाः इत्यनेन रूपादिगुणयोगेन न सर्व्वपुरुषान् प्रति स्त्रीणां प्रियत्वमिति दर्शयति ॥ ६—८ ॥

चक्रपाणिः—सम्प्रति वृष्यप्रयोगसाध्यपुत्रस्योपादेयतां दर्शयन् आह—अच्छाय इत्यादि। एकशाख इत्येकस्वरूप इत्यर्थः। चित्रलिखितदीपश्चित्रदीपः। अधातुर्धातुसन्निभ इति सुवर्णादिवदाभासते

अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते ॥ ६ ॥
बहुमूर्त्तिर्बहुमुखो बहुव्यूहो बहुक्रियः।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ॥
मङ्गल्योऽयं प्रशस्तोऽयं धन्योऽयं वीर्य्यवानयम्।
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः ॥
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विभवः * कुलम्।
यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिताः ॥

पुमान् चित्रदीपश्चित्रीकृतदीपरूपो नालोककरः, शुष्कं सर इव लोकानाम् अतृप्तिकरः, अधातुः कनकादिधातुभिन्नः सन् धातुसन्निभोऽकनकादिधातुवत् अपुरुष एव पुरुषाकृतिः तृणपूलीति तृणगुच्छकृतमूर्त्तिवज्ज्ञातव्यः। अप्रतिष्ठश्चेत्यादि। प्रतिष्ठारहितः पुमान् निष्क्रियः। क्रियाहीनः नग्नः दिगम्बरः पुमान् निष्क्रियः। शून्यः स्त्रीरहितः पुमान् निष्क्रियः। एकेन्द्रियः प्राधान्यादेकचक्षुर्ना पुमान् निष्क्रियः। यस्य पुंसोऽपत्यं न विद्यते सोऽपि निष्क्रियो मन्तव्यः ॥ ९ ॥

गङ्गाधरः—बह्वपत्यपुरुषं स्तौति—बहुमूर्त्तिरित्यादि। बहुप्रजः पुरुषः बहुमूर्त्तिरित्यादिरूपो भवति। ननु तेन किमित्यत आह—मङ्गल्योऽयमित्यादि। बहुप्रजो बह्वपत्यो ना पुरुषो मङ्गल्योऽयमित्यादिरूपेण लोके स्तूयते। अपत्यप्रशंसामाह—प्रीतिरित्यादि। लोका इन्द्रलोकब्रह्मलोकादिस्वर्लोकाः परत्र, इह च काश्यादिलोकाः, राजधान्यादिलोकाश्च ये सुखोदर्काः सुखमुत्तरफलं यत्र ते उत्तरकाले सुखफलकाः लोका इत्यर्थः। एते सर्व्वे प्रीत्यादयोऽपत्यसंश्रिताः।

या जातुषकङ्कणादिः; पूलि नपुंसकधर्म्मित्वात्; तृणपुरुषाकृतिरिति परिभाषया पुरुषार्थक्रियाविरहित्वं दर्शयति ॥ ९ ॥

* विपुलं कुलम् इति च पाठः।

तस्मादपत्यमन्विच्छन् गुणांश्चापत्यसंश्रितान् ।
वाजीकरणनित्यः स्यादिच्छन् कामसुखानि च ॥ १० ॥
उपभोगसुखान् सिद्धान् वीर्य्यापत्यविवर्द्धनान् ।
वाजीकरणसंयोगान् प्रवक्ष्याम्यत उत्तरम् ॥ ११ ॥
शरमूलेक्षुमूलानि काण्डेक्षुं सेक्षुबालिकम् ।
शतावरीं पयस्याञ्च विदारीं कण्टकारिकाम् ॥
जीवन्तीं जीवकं मेदां वीराञ्चर्षभकं बलाम् ।
ऋद्धिं गोक्षुरकं रास्नामात्मगुप्तां पुनर्नवाम् ॥
पृथक् त्रिपलिकान् कृत्वा माषाणामाढ़कं नवम् ।
विपाचयेज्जलद्रोणे चतुर्भागञ्च शेषयेत् ॥
तत्र पेष्याणि मधुकं द्राक्षा फल्गूनि पिप्पली ।
आत्मगुप्ता मधूकानि खर्ज्जूराणि शतावरी ॥

तस्मात् पुमान् अपत्यमन्विच्छन्नपत्यसंश्रितान् गुणांश्चान्विच्छन् कामसुखानि चान्विच्छन् वाजीकरणनित्यः स्यात् ॥ १० ॥

गङ्गाधरः—ननु किं स्त्रीमात्रमेव वाजीकरणमुतान्यदस्तीत्यत आह—उपभोगेत्यादि। सिद्धान् सिद्धफलान् ॥ ११ ॥

गङ्गाधरः—तान् कानित्यत आह—शरमूलेत्यादि। शरमूलम्, इक्षुमूलं, काण्डेक्षुर्लटा इति लोके तस्य मूलम्, इक्षुबालिका कसाड़ इति लोके तस्य मूलं, पयस्या क्षीरकाकोली, वीरा शालपर्णी। एषामेकोनविंशतेर्द्रव्याणां प्रत्येकं त्रिपलिकान् भागान् कृत्वा माषाणामाढ़कमष्टशरावं, नवं नतनं, मानस्य नवत्वासम्भवेऽपि माषाणां नवत्वमिति ज्ञेयम्। सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे ; यथा शिखी विनष्टः पुरुषो न नष्ट इति। सर्व्वं जलद्रोणे जलस्य चतुःषष्टिशरावे एकध्यं विपाचयेत् चतुर्भागं चतुर्थभागं षोड़शशरावं शेषयेत्। तच्च सर्व्वं वस्त्रेण परिस्राव्य तत्र क्वाथे मधुकादीनि

चक्रपाणिः—कामसुखानि चेत्यनेन पुत्रोत्पादातिरिक्तं नातिश्लाघ्यं फलं दर्शयति ; कामसुखानि

विदार्य्यामलकेक्षूणां रसस्य च पृथक् पृथक्।
सर्पिषश्चाढ़कं दद्यात् क्षीरद्रोणञ्च तद् भिषक्॥
साधयेद् घृतशेषञ्च सुपूतं योजयेत् पुनः।
शर्करायास्तुगाक्षीर्य्याश्चूर्णैः प्रस्थोन्मितैर्भिषक्॥
पलैश्चतुर्भिर्मागध्याः पलेन मरिचस्य च।
त्वगेलाकेशराणाञ्च चूर्णैरर्द्धपलोन्मितैः॥
मधुनः कुड़वाभ्याञ्च द्वाभ्यां तत् कारयेद् भिषक्।
पलिका गुड़िकाः कृत्वा * ता यथाग्नि प्रयोजयेत्॥
एष वृष्यः परो योगो वृंहणो बलवर्द्धनः।
अनेनाश्व इवोदीर्णो लिङ्गमर्पयते स्त्रियाम्॥ १२॥

इति वृंहणी गुड़िका।

शतावर्य्यन्तानि अष्टौ पेष्याणि कल्कान्। विदार्य्या रसस्याढ़कं षोड़शशरावम्, आमलकस्य च रसस्याढ़कं षोड़शशरावम्, इक्षूणाञ्च रसस्याढ़कं षोड़शशरावं, सर्पिषः संवत्सरातीतस्य गव्यघृतस्याढ़कं षोड़शशरावं, निष्फेनीकृतं क्षीरद्रोणं गव्यदुग्धस्य चतुःषष्टिशरावञ्च दत्त्वा। भिषक् तत् मन्दमन्दाग्निना घृतशेषं साधयेत्, पक्त्वा घृतमात्रमवशेषयेत्। सुपूतं वस्त्रेण परिस्रुतं तद् घृतं पुनः शर्करायाः प्रस्थोन्मितैः शरावद्वयोन्मितैः चूर्णैस्तुगाक्षीर्य्या वंशलोचनायाश्च प्रस्थोन्मितैः चूर्णैर्मागध्याः पिप्पल्याश्चतुर्भिः पलैश्चूर्णैर्मरिचस्य चूर्णस्य पलेन त्वचो गुड़त्वचश्चूर्णैरर्द्धपलोन्मितैः एलायाश्चूर्णैरर्द्धपलोन्मितैः केशराणां नागकेशरपुष्पाणां चूर्णैरर्द्धपलोन्मितैः सह योजयेत् मेलयेत्। शीते वत्सरातीतस्य मधुनो द्वाभ्यां कुड़वाभ्याञ्च एकशरावेण योजयेत्। युक्तं तत् सर्व्वं भिषक् पलिका अष्टतोलकमिता गुड़िकाः कारयेत्, कृत्वा च ता गुड़िका यथाग्नि प्रयोजयेत्। अनेन भेषजेनाश्व इव उदीर्णः सन् स्त्रियां लिङ्गमर्पयते॥ १२॥

इति वृंहणी गुड़िका व्याख्याता।

हि ऐहिकान्येव परं न पुत्रवदुभयलोकोपकारकाणि। उपभोगेन मैथुनेन सुखं कुर्व्वन्तीत्युपभोगसुखाः; किंवा उपभोक्तुं सुखाः उपभोगसुखाः; वीर्य्यं शुक्रम्॥ १०। ११॥

चक्रपाणिः—काण्डेक्षुर्वृहदीक्षुरः; तुगाक्षीरी वंशलोचना, अन्ये वंशरोचनानुकारिपार्थिव-

* स्याना इति वा पाठः।

माषाणामात्मगुप्ताया बीजानामाढ़कं नवम्।
जीवकर्षभकौ मेदां वीरामृद्धिं शतावरीम्॥
मधूकश्चाश्वगन्धाश्च साधयेत् कुड़वोन्मिताम्।
रसे तस्मिन् घृतप्रस्थं प्रस्थमिक्षुरसस्य च॥
विदारीणां रसप्रस्थं गव्यं दशगुणं पयः।
दत्त्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत्॥
शर्करायास्तुगाक्षीर्य्याः क्षौद्रस्य च पृथक् पृथक्।
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत् पलम्॥
पलं पूर्व्वमतो लीढ्वा ततोऽन्नमुपयोजयेत्।
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम्॥ १३॥

इति वाजीकरणं घृतम्।

गङ्गाधरः—वृष्ययोगान्तरमाह—माषाणामित्यादि। माषाणां नूतनानामाढ़कमष्टशरावं, नूतनस्य चात्मगुप्तायाः फलस्याढ़कमष्टशरावम्। वीरा शालपर्णी। मधूकं मधूकपुष्पं फलं वा। एषां जीवकादीनामश्वगन्धान्तानामष्टानां प्रत्येकं कुड़वं मिलितं चतुःशरावम्। सर्व्वमेकीकृत्य यावन्मितं भवति ततोऽष्टगुणे जले साधयेत्। तथा च माषादीनां दशानां द्रव्याणां शरावं विंशतिर्भवति तत्सर्व्वमेकध्यं षष्ट्युत्तरशतशरावे जले मन्दमन्दाग्निना पक्त्वा चत्वारिंशच्छरावं क्वाथमवशेषयेत्। तस्मिंश्चत्वारिंशच्छरावमिते रसे क्वाथे वत्सरातीतं घृतप्रस्थं गव्यघृतस्य चतुःशरावम्, इक्षुरसस्य च प्रस्थं द्वैगुण्याच्चतुःशरावम्, विदारीणां भूमिकुष्माण्डानां रसप्रस्थं स्वरसस्य चतुःशरावम्, गव्यं पयश्च घृताद्दशगुणं चत्वारिंशच्छरावं दत्त्वा मृद्वग्निना साध्यं पाच्यम्। शब्दे व्युपरमे फेनस्योपरमे गन्धवर्णरसादीनां सम्पत्तौ च तत् सर्पिः सिद्धं भवति, तदानीमवतार्य्य श्लक्ष्णवस्त्रेण गालयित्वा निधापयेत् पात्रे स्थापयेत्। अकल्कमिदं घृतम्। तत्र सिद्धे घृते सितायाः शर्करायाश्चतुःपलान् भागान्, तुगाक्षीर्य्या वंशलोचनायाश्चतुःपलान् भागान्, पिप्पल्याश्च पलमेकं चूर्णमावपेत्। सर्व्वमालोड्य मिश्रीकृत्य सुशीते नवस्य क्षौद्रस्य चतुःपलान् भागान् तत्रावपेत्। ततो मिश्रीभूतमेतदौषधं सुनिगुप्त

शर्करा माषविदलास्तुगाक्षीरी पयो घृतम्।
गोधूमचूर्णषष्ठानि सर्पिःषूत्कारिकां पचेत् ॥
तां नातिपक्कां मृदितां कौक्कुटे मधुरे रसे।
सुगन्धे प्रक्षिपेदुष्णे यथा सान्द्रीभवेद् रसः ॥
एष पिण्डरसो वृष्यः पौष्टिको बलवर्द्धनः।
अनेनाश्व इवोदीर्ण-बलो लिङ्गं समर्पयेत्।
शिखितित्तिरिहंसानामेवं पिण्डरसो मतः ॥ १४ ॥

इति वाजीकरणपिण्डरसाः।

रक्षेत्। अत औषधात् पलमष्टतोलकं पूर्व्वं न प्रातःकाले किन्तु भोजनकाले पूर्व्वमेतदौषधपलं लीढ्वा ततोऽनन्तरमन्नमुपयोजयेत् ॥ १३ ॥

इति वाजीकरणं घृतम्।

गङ्गाधरः—शर्करेत्यादि। शर्करा च माषविदलाश्च तुगाक्षीरी च गव्यं पयश्च गव्यघृतञ्चैतानि गोधूमचर्णषष्ठानि यथायोग्यानि मानतो नीत्वा तेषु मध्ये सर्पिषि प्रथमं गोधूमचूर्णमाषविदलौ किञ्चिद् भृष्ट्वा ततोऽनन्तरं शर्करादीनि त्रीणि दत्त्वा उत्कारिकां पचेत् यथा नातिद्रवा भवेत्। तां नातिद्रवां पक्कां करेण मृदितां कौक्कुटे कुक्कुटमांसस्य रसे शर्करादियोगेन मधुरे एलादिचर्णयोगेन सुगन्धे च उष्णे च प्रक्षिपेत् यथा स रसः सान्द्रीभवेत्। एष पिण्डरसः पिण्डीभूतो रसः। ०। शिखीत्यादि। एवं शर्करादीनां षण्णां पूर्व्वयोगोक्तानां पञ्च द्रव्याणि पूर्व्ववद् घृतेषूत्कारिकां नातिद्रवां पक्त्वा विमृद्य पूर्व्ववत् मधुरे सुगन्धे चोष्णे च शिखिमांसरसे वा तित्तिरिमांसरसे वा हंसमांसरसे वा यथा रसः सान्द्रीभवेत् तथा प्रक्षिपेत्। इत्येवं पिण्डरसो मतः ॥ १४ ॥

इति वाजीकरणपिण्डरसाः।

द्रव्यतालभीति वदन्ति। स्त्याना इति घनाः। द्वितीयप्रयोगे रस इति क्वाथे। उत्कारिका मूषिकोत्कारा। शिखितित्तिरिहंसानां व्यस्तसमस्ताश्चत्वारः पिण्डरसाः ॥ १२—१४ ॥

घृतं माषान् सवस्ताण्डान् साधयेन्माहिषे रसे ।
भर्ज्जयेत् तं रसं पूतं फलाम्लं नवसर्पिषि ॥
ईषत् सलवणं युक्तं धान्यजीरकनागरैः ।
एष वृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः ॥ १५ ॥

चटकांस्तित्तिरिरसे तित्तिरीन् कौक्कुटे रसे ।
कुक्कुटान् बर्हिणरसे हांसे बर्हिणमेव च ॥
नवसर्पिषि सन्तप्तान् फलाम्लान् कारयेद् रसान् ।
मधुरान् वा यथासात्म्यं गन्धाढ्यान् बलवर्द्धनान् ॥ १६ ॥

इति वृष्यरसाः ।

गङ्गाधरः—घृतमित्यादि । माहिषमांसरसं कृत्वा तत्र रसे घृतं माषान् वस्ताण्डैश्छागानामण्डकोषफलैः सह साधयेत् पचेत् । ततस्तं रसं पूतं वस्त्रेण गालितं नूतनघृते भर्ज्जयेत् सन्तलयेत् । ततस्तत्र दाड़िमाम्रफलामलकादीनां फलरसं दत्त्वा तं रसमम्लं कृत्वा ईषत् सैन्धवं दत्त्वा धन्याकजीरकनागराणां चूर्णैरीषद्युक्तं कुर्य्यादित्येष रसोत्तमो वृष्यादिर्भवति ॥ १५ ॥

गङ्गाधरः—चटकानित्यादि । तित्तिरिमांसं जले पक्त्वाच्छमच्छतरं वा रसं कृत्वा वस्त्रेण गालयित्वा तत्र रसे चटकानां मांसं साधयेत् । ततो वस्त्रपूतं तं रसं नवसर्पिषि सन्तप्तं संभृष्टं कुर्य्यात् । ततः फलाम्लं दाड़िमादिस्वरसेनाम्लं यथासात्म्यं शर्करादियोगेन मधुरं वा कृत्वा एलादिचूर्णयोगेन गन्धाढ्यं कुर्य्यात् । एवं तित्तिरीन् तित्तिरिमांसानि कौक्कुटे रसे । कुक्कुटान् कुक्कुटमांसानि बर्हिणरसे मयूरमांसरसे । बर्हिणं मयूरमांसं हांसे हंसमांसरसे साधयित्वा पूत्वा तं रसं नवसर्पिषि संभृष्टं फलाम्लं यथासात्म्यं मधुरं वा कृत्वा गन्धाढ्यञ्च कृत्वा योजयेदित्यर्थः ॥ १६ ॥ इति वृष्यरसाः ।

तृप्तिं चटकमांसानां गत्वा योऽनुपिबेत् पयः।
न तस्य लिङ्गशैथिल्यं स्यान्न शुक्रक्षयो निशि ॥ १७ ॥

इति वृष्यमांसम्।

माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम्।
पयः पिबति रात्रिं स कृत्स्नां जागर्त्ति वेगवान् ॥ १८ ॥

न ना स्वपिति रात्रीषु निस्तब्धेन * च शेफसा।
तृप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि ॥ १९ ॥

गङ्गाधरः—तृप्तिमित्यादि। चटकमांसानां न तु तेषां रसस्य। केवलं चटकमांसं पक्वान्नं न भुक्त्वा तन्मांसमात्रमेव आतृप्तितो भुक्त्वा तदनु गव्यं पयो यो नरः पिबेत् तस्य निशि लिङ्गशैथिल्यं न स्यात् तावद्रात्रिं व्याप्य लिङ्गमुद्गम्य वर्त्तते शुक्रक्षयश्च न स्यात् इत्यर्थः ॥ १७ ॥

गङ्गाधरः—माषेत्यादि। यः पुमान् घृताढ्यं षष्टिकौदनं माषयूषेण भुक्त्वा तदनु पयः पिबति स कृत्स्नां रात्रिं वेगवान् कामवेगवान् सन् जागर्त्ति ॥ १८ ॥

गङ्गाधरः—न नेत्यादि। नक्ररेतसि कुम्भीरशुक्रे भृष्टानां कुक्कुटमांसानां तृप्तो ना पुरुषः निस्तब्धेन शेफसा रात्रीषु न स्वपिति ॥ १९ ॥

---

* नित्यं स्तब्धेन इति वा पाठः।

निस्राव्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत् ।
हांसबार्हिणदाक्षाणि * चैवमण्डानि भक्षयेत् ॥ २० ॥

इति वृष्यरसः ।

भवतश्चात्र ।

स्रोतःसु शुद्धेष्वमले शरीरे वृष्यं यदाद्यं हि तदत्ति काले ।
वृषायते तेन परं मनुष्यस्तद् बृंहणञ्चैव बलप्रदन्तु ॥
तस्मात् पुरा शोधनमेव कार्य्यं बलानुरूपं न हि सिद्धियोगाः † ।
सिध्यन्ति देहे मलिने प्रयुक्ता म्लिष्टे यथा वाससि रागयोगाः ॥२१॥

तत्र श्लोकौ ।

वाजीकरणसामर्थ्यं क्षेत्रं स्त्री चैव यस्य या ।
ये दोषा निरपत्यानां गुणाः पुत्रवताञ्च ये ॥

गङ्गाधरः—निःस्राव्येत्यादि । मत्स्याण्डरसं मत्स्यडिम्बं जले पक्त्वा रसं कृत्वा वस्त्रेण निस्राव्य सर्पिषि नूतने भृष्टं संभृष्टं सहान्नेन भक्षयेत् । एवं हंसानामण्डानि जले पक्त्वा रसं कृत्वा वस्त्रेण निःस्राव्यान्नेन सह भक्षयेत् । तथा बर्हिणामण्डानि साधयित्वा तथा दक्षाणां कुक्कुटानामण्डानि साधयित्वा रसं परिस्राव्यान्नेन सह भक्षयेत् । हंसस्येदं हांसं बर्हिण इदं बार्हिणं दक्षस्येदं दाक्षं तानि च अण्डानि इत्यन्वयः ॥ २० ॥

इति वृष्यरसः ।

गङ्गाधरः—श्लोकद्वयं संग्राहकम् । वाजीकरणयोगानां सिद्ध्यर्थं प्रयोगविधिमाह—भवतश्चेत्यादि । स्रोतःस्वित्यादि । स्रोतःसु रसादिवहेषु शुद्धेषु सत्सु शरीरे चामले संशोधनेन निर्हृतमले सति शुद्धे यद् वृष्यमौषधं यस्य हितमयं खाद्यं भवति स तदौषधं कालेऽत्ति । स च मनुष्यस्तेनौषधेन परमुत्कृष्टं

चक्रपाणिः—निशीत्यनेन सकलनिशां मैथुनेऽपीति दर्शयति । हंसेति हंसबर्हिदक्षाणामण्डादिप्रयोगाः यद्यपि भिन्नाः, तथापि प्रयोगापेक्षया एक एवायं प्रयोगः, एवं संग्रहोक्ताः हंसबर्हिदक्षाणामेकप्रयोगेण पञ्चदश प्रयोगाः पूर्य्यन्ते । संग्रहे यस्य चैव येति यस्य या वृष्येत्यर्थः ।

* हंसबर्हिणदक्षाणामिति चक्रधृतः पाठः ।　　† वृष्ययोगाः इति पठन्ति केचित् ।

दश पञ्च च संयोगाः वीर्य्यापत्यविवर्द्धनाः।
दृष्टास्ते शरमूलीये पादे पुष्टिबलप्रदाः॥ २२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
द्वितीयाध्याये संयोगशरमूलीयो नाम
वाजीकरणपादः प्रथमः॥ १॥

वृषायते वृष इवाचरति। तस्माद्धेतोर्वाजीकरणमुपयुयुक्षुणा पुंसा बलानुरूपं शोधनं वमनं विरेचनञ्च पुरा कार्य्यम्। कस्मादित्यत आह—न हीत्यादि। हि यस्मात् सिद्धयोगा देहे मलिने सति प्रयुक्ता न सिध्यन्ति, यथा वाससि वस्त्रे म्लिष्टे रङ्गयोगो न दीप्तया सिध्यति॥ २१।२२॥

गङ्गाधरः—पादं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सित-
स्थाने संयोगशरमूलीयवाजीकरणपादः प्रथमः॥ १॥

वृष्ययोगाश्च शुद्धदेहैरेव कर्त्तव्या इति दर्शयन्नाह—स्रोतःस्वित्यादि। नामितमिति मितिमिति यावत्; म्लिष्ट इति म्लाने॥ १७—२२॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां वाजीकरणाध्याय-
व्याख्यायां संयोगशरमूलीयपादव्याख्या।

अथात आसिक्तक्षीरीयं वाजीकरणपादं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

आसिक्तक्षीरमापूर्णमशुष्कं शुद्धषष्टिकम् ।
उलूखले समापोथ्य पीड़येत् क्षीरमोदितम् ॥
क्षुण्णं विमृदितं क्षीरे पीड़येत् सुसमाहितः ।
गृहीत्वा तं रसं पूतं गव्येन पयसा सह ॥
बीजानामात्मगुप्ताया धान्यमाषरसेन च ।
बलायाः सूर्प्यपर्ण्योश्च जीवन्त्या जीवकस्य च ॥

अथ संयोगशरमूलीयवाजीकरणपादव्याख्यानन्तरमतो वाजीकरणप्रकरणाद्धेतोरासिक्तक्षीरीयं वाजीकरणपादमाह । पादादौ आसिक्तक्षीरमिति पदार्थमधिकृत्य कृतं वाजीकरणपादं व्याख्यास्यामः ॥ १ ॥

गङ्गाधरः—आसिक्तेत्यादि । आसिक्तक्षीरमिति क्षेत्रेऽच्छिन्नं षष्टिकं षष्टिकधान्यमापूर्णमीषत् पूर्णक्षीराभशस्यमशुष्कमार्द्रमेव क्षेत्रात् छित्त्वानीय शुद्धं धूलिरहितं गव्यक्षीरे आसिक्तं गोदुग्धे क्षिप्तं यदा क्षीरमोदितं तत्क्षीरेण स्विन्नवत् पुष्टं भवति तदा उदूखले समापोथ्य कुट्टयित्वा पीड़येत् । पीड़यित्वा रसं गृहीत्वा ततः परं पुनः क्षुण्णं तत् षष्टिकं क्षीरे गोक्षीरे विमृदितं मर्दयित्वा सुसमाहितः पुनः पीड़येत् वस्त्रेण रसं गालयेत् । पूतं तं रसं गृहीत्वा तद्रसे तुल्येन गव्येन पयसा सह मात्रया तद्रसतुल्येन आत्मगुप्ताया बीजानां रसेन क्काथेन सह, धान्यस्य धान्यकस्य रसेन तद्रसतुल्येन सह, माषस्य च क्काथेन तद्रसतुल्येन, बलायाश्च क्काथेन तद्रसतुल्येन, सूर्प्यपर्ण्यौ मुद्गमाषपर्ण्यौ रसेन तद्रसतुल्येन, जीवन्त्या रसेन तद्रसतुल्येन, जीवकस्य रसेन तद्रसतुल्येन,

चक्रपाणिः—आसिक्तक्षीरवृष्याभिधानप्रसङ्गात् पादाद्यस्य विशिष्टसम्बन्धावयवतयोच्यते आसिक्तक्षीरी, तत्र स्वार्थिकः 'क'प्रत्ययः ; किंवा, ठक्प्रत्ययेन "वैशेषिक" शब्दवत् आसिक्तक्षीरिक इति साधनीयम् । आसिक्तक्षीरमिति क्षीरसेकवृद्धम् । यदुक्तं जतूकर्णे—'क्षीरसेकवृद्धषष्टिकं पक्वम्'

ऋद्धॄषभककाकोली-श्वदंष्ट्रामधुकस्य च।
शतावर्य्या विदार्य्याश्च द्राक्षाखर्ज्जूरयोरपि॥
संयुक्तं मात्रया वैद्यः साधयेत् तत्र चावपेत्।
तुगाक्षीर्य्याः समानानां शालीनां षष्टिकस्य च॥
गोधूमानाञ्च चूर्णानि यैः स सान्द्रीभवेद् रसः।
सान्द्रीभूतञ्च तं कुर्य्यात् प्रभूतमधुशर्करम् ❀॥
गुड़िका बदरैस्तुल्यास्ताश्च सर्पिषि भर्ज्जयेत्।
ता यथाग्नि प्रयुञ्जानः क्षीरमांसरसाशनः।
पश्यत्यपत्यं विपुलं वृद्धोऽप्यात्मजमक्षयम्॥ २॥

ऋद्धेश्च रसेन तद्रसतुल्येन, ऋषभकस्य रसेन तद्रसतुल्येन, काकोल्याश्च रसेन तद्रसतुल्येन, श्वदंष्ट्रायाश्च रसेन तद्रसतुल्येन, मधुकस्य यष्टीमधुकस्य क्वाथेन तद्रसतुल्येन, शतावर्य्याश्च रसेन तद्रससमेन, विदार्य्याः भूमिकुष्माण्डस्य रसेन तद्रससमेन, द्राक्षायाः क्वाथेन तद्रसतुल्येन, खर्ज्जूरस्य च क्वाथेन तद्रसतुल्येन सह संयुक्तं कृत्वा वैद्यः साधयेत् मृद्वग्निना पचेत्। पादशेषे तत्र तुगाक्षीर्य्या वंशलोचनायाः समानानां शालीनां चूर्णानि तुगाक्षीर्य्या समानस्य षष्टिकस्य च तण्डुलस्य चूर्णानि तुगाक्षीर्य्याः समानानां गोधूमानाञ्च चूर्णानि आवपेत् प्रक्षिपेत्। यैर्यावन्मितैस्तुगाक्षीर्य्यादीनां चूर्णैः स रसः सान्द्रीभवेत् तावन्मानेन तुगाक्षीर्य्यादिचूर्णानि समानमानोन्मितानि तत्र रसे प्रक्षिपेदिति भावः। ततः सान्द्रीभूतं तं रसं प्रभूतमधुशर्करं भूरिमधुना तुल्येन शर्करया मधुरं कुर्य्यात्। ततो बदरैस्तुल्या गुड़िकाः कुर्य्यात्। ततस्ताश्च गुड़िका नवे सर्पिषि भर्ज्जयेत्। ता गुड़िकास्तिस्रो वा चतस्रः पञ्चादिका वा यथाग्नि प्रयुञ्जानः क्षीरमांसरसाभ्याम् अशनशीलः स्यात् नान्यैः। वृद्धोऽपि एतत् प्रयुञ्जानः क्षीरमांसरसाशनः सन् आत्मजमपत्यमक्षयं इत्यादि। शुद्धषष्टिकमिति गौरषष्टिकम्। मात्रा बलादिरसानां तुल्यमानता; किंवा 'मात्रा'शब्दस्य अल्पवचनत्वाद् बलादिरसमल्पमात्रम्। प्रक्षेपचूर्णप्रमाणमाह— यैः स सान्द्रीभवेद् रस इति। यावता तेन चूर्णेन रसस्य सान्द्रता भवति, तावन्मात्रं चूर्णं ग्राह्यम्; प्रततत्वं मधुशर्करयोर्यावतात्यर्थमधुरत्वं स्यात् तावज्ज्ञेयम्। अत्र च प्रयोगमहिम्नैव मधुयुक्तस्यापि प्रयोगस्य भर्ज्जनक्रियायामग्नि-

❀ प्रभूतेत्यत्र प्रततेति पाठान्तरम्।

चटकानां सहंसानां दक्षाणां शिखिनां तथा।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत्॥
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि।
षष्टिकानाञ्च चूर्णानि चूर्णं गौधूमिकं तथा॥
एभ्यः पूपलिकाः कार्य्याः शष्कुल्यो वर्त्तिकास्तथा।
पूपा धानाश्च विविधा भक्ष्याश्चान्ये पृथग्विधाः॥
एषां प्रयोगाद् भक्ष्याणां स्तब्धेनापूर्णरेतसा।
शेफसा वाजिवद् याति यावदिच्छं स्त्रियो नरः॥ ३॥

इति वृष्यपूपलिकयोगः।

आत्मगुप्ताफलं माषान् खर्ज्जूराणि शतावरीम्।
शृङ्गाटकानि मृद्वीकां साधयेत् प्रस्थसम्मितम्॥

दीर्घजीविन विपुलं बहुसङ्ख्यं पश्यति। एतेन वृद्धस्य तादृशपुत्रजननशक्तिवत् दीर्घायुष्ट्वं ख्यापितम्। अन्यथा कथं जनयेदिति नोक्त्वा पश्यतीत्युक्तम्॥ २॥

इत्येकयोगोऽपत्यकरः षष्टिकादिगुड़िका।

गङ्गाधरः—चटकानामित्यादि। चटकहंसकुक्कुटमयूरशिशुमारकुम्भीराणां शुक्राणि रेतांसि गव्यं नवं सर्पिर्वृष्यत्वात्। वराहकुलिङ्गयोर्वसा स्नेहविशेषः। षष्टिकतण्डुलचूर्णगोधूमचूर्णानि युक्त्या नीत्वा उत्कारिकां पक्त्वा पूपलिकाः शष्कुल्यो वा वर्त्तिकाः वटका वा पूपा वा धाना वा अन्ये वा विविधा भक्ष्याः कार्य्याः। एषां भक्ष्याणां प्रयोगात् आपूर्णरेतसा स्तब्धेन दृढ़ाशिथिलेन शेफसा॥ ३॥

इति वृष्यपूपलिकयोगः।

गङ्गाधरः—आत्मगुप्तेत्यादि। प्रस्थसम्मितमिति आत्मगुप्ताफलादीनां

संयोगो न विरोधमावहति; तथा हि सुश्रुतेऽपि त्रिफलायस्कृतौ मधुनोऽग्निसम्बन्धो भवत्येव; आत्मजमिति हर्षभूतात्मजं शुक्रमिति यावत्॥ १। २॥

चक्रपाणिः—दक्षः कुक्कुटः। शुक्राणीति यद्यप्युक्तम्, तथापि चटकादिशुक्रस्य ग्रहणस्याशक्यत्वात्

क्षीरप्रस्थं जलप्रस्थमेतत् प्रस्थावशेषितम्।
शुद्धेन वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः॥
शर्करायास्तुगाक्षीर्य्याः सर्पिषोऽभिनवस्य च।
तत् पाययेत सक्षौद्रं षष्टिकान्नञ्च भोजयेत्॥
जरापरीतोऽप्यबलो योगेनानेन बिन्दति।
नरोऽपत्यं सुविपुलं युवेव च स हृष्यति॥ ४॥

अपत्यकरः स्वरसः।

खर्ज्जूरीमस्तकं माषान् पयस्यां सशतावरीम्।
खर्ज्जूराणि मधूकानि मृद्वीकामजड़ाफलम्॥
पलोन्मितानि मतिमान् साधयेत् सलिलाढके।
तेन पादावशेषेण क्षीरप्रस्थं विपाचयेत्॥
क्षीरशेषेण तेनाद्याद् घृताढ्यं षष्टिकौदनम्।
सशर्करेण संयोग एष वृष्यः परं स्मृतः॥ ५॥

इति वृष्यक्षीरम्।

मृद्वीकान्तानां षण्णां प्रस्थो मिलित्वा द्विशरावं, क्षीरप्रस्थं गोदुग्धस्य चतुःशरावं, जलप्रस्थं जलस्य चतुःशरावं, सर्व्वमैकध्यं साधयेत् मृद्वग्निना पचेत्। प्रस्थावशेषं चतुःशरावशेषे सति अवतारयेत्। ततः शुद्धेन वाससा वस्त्रेण पूतं तं क्वाथं शर्करायाः त्रिभिः प्रसृतैः षड़्भिः पलैस्तुगाक्षीर्य्याः षड़्भिः पलैरभिनवस्य वृष्यतरत्वात् नूतनस्य सर्पिषः षड़्भिः पलैर्योजयेत् मेलयेत्। तत् रसं सक्षौद्रम् अनुरूपेण मधुना नवेन सह युक्तं कृत्वा यथाग्निबलं संशुद्धतनुं भिषक् पाययेत। अथ षष्टिकान्नं वृष्यावचारणया भोजयेत्॥ ४॥ अपत्यकरस्वरसः।

<u>गङ्गाधरः</u>—खर्ज्जूरीत्यादि। खर्ज्जूरीमस्तकं खर्ज्जूरवृक्षस्य मस्तकं पयस्यां क्षीरकाकोलीं खर्ज्जूराणि खर्ज्जूरफलानि मधूकानि मधूकफलानि वृष्यत्वात् अजड़ाफलं आत्मगुप्ताफलम्। एषां प्रत्येकं पलोन्मितानि सलिलाढ़के षोड़शशरावजले मृद्वग्निना साधयेत्। पादावशेषेण चतुःशरावावशेषेण तेन क्वाथेन

समानगुणानि तदण्डान्यपीह गृह्यन्ते। वर्त्तिका वर्त्तकाकारा भक्ष्याः; अयं तुल्यद्रव्यतया विविधभक्ष्यरूपोऽप्येक एव योगः। अजड़ा शूकशिम्बी॥ ३—५॥

जीवकर्षभकौ मेदां जीवन्तीं श्रावणीद्वयम् ।
खर्ज्जूरं मधुकं द्राक्षां पिप्पलीं विश्वभेषजम् ॥
शृङ्गाटकीं विदारीञ्च नवं सर्पिः पयो जलम् ।
सिद्धं घृतावशेषं तच्छर्कराक्षौद्रपादिकम् ॥
षष्टिकान्नेन संयुक्तमुपयोज्यं यथाबलम् ।
वृष्यं बल्यञ्च वर्ण्यञ्च कण्ठ्यं वृंहणमुत्तमम् ॥ ६ ॥

इति वृष्यं घृतम् ।

दध्नः सरं शरच्चन्द्र-सन्निभं दोषवर्ज्जितम् ।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्य्या च बुद्धिमान् ॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे ।
मार्ज्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने ॥

क्षीरप्रस्थं चतुःशरावं विपाचयेत् । क्षीरशेषेण तेन तत्पक्वेन तेन शिष्टक्षीरेण सशर्करेण घृताढ्यं षष्टिकौदनमद्यात् ॥ ५ ॥　　　　इति वृष्यक्षीरम् ।

गङ्गाधरः—जीवकेत्यादि । जीवकादीनां विदार्य्यन्तानां त्रयोदशानां मिलित्वा घृतात् पादिकं कल्कम् । नवं सर्पिरनुक्तत्वात् प्रस्थम् । पयो गव्यदुग्धं प्रस्थम् । जलं प्रस्थत्रयमित्येतत् सर्व्वमेकध्यं पचेत् । घृतावशेषं तद् यदा भवति तदा सिद्धं भवति, तदावतार्य्य वस्त्रेण गालयित्वा तदा शर्करां घृतादष्टमांशां प्रक्षिपेत् शीते च मधु चाष्टमांशं प्रक्षिपेत् खजेन मेलयित्वा तद् घृतं यथाबलं मात्रां नीत्वा षष्टिकान्नेन संयुक्तं भोजनकाले शुद्धतनुना पुंसोपयोज्यम् ॥६॥

इति वृष्यं घृतम् ।

गङ्गाधरः—दध्नः सरमित्यादि । शरच्चन्द्रसन्निभं मलिनत्वरहितं दोषवर्ज्जितं गन्धरसादिभिरहृद्यत्वदोषरहितं दधिसरं युक्त्या यथा नातिमधुरं नातिकटुकञ्च भवति तथानुरूपैः शर्करादिभिर्युक्तं कृत्वा यथा सुगन्धि भवेत् तथा सूक्ष्मैलाचूर्णयुक्तञ्च कृत्वा नवे नूतने शुचौ कुम्भे शुचौ च पटे मार्ज्जितं

चक्रपाणिः—जीवकेत्यादौ विदार्य्यन्तैः कल्कैः क्षीरजलाभ्यां घृतं साधनीयम् । युक्तेरति यथा

पिबेन्मात्रां रसालायास्तं भुक्त्वा षष्टिकौदनम्।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ॥ ७ ॥

इति वृष्यदध्यादि।

चन्द्रांशुकल्पं पयसा घृताढ्यं षष्टिकौदनम्।
शर्करामधुसंयुक्तं प्रयुञ्जानो वृषायते ॥ ८ ॥

इति वृष्यदुग्धादि।

तप्ते सर्पिषि नक्राण्डं ताम्रचूड़ाण्डमिश्रितम्।
युक्तं षष्टिकचूर्णेन सर्पिषाभिनवेन च ॥
पक्त्वा पूपलिकाः खादेद् वारुणीमण्डपो नरः।
य इच्छेदश्ववद् गन्तुं प्रसेक्तुं गजवच्च यः ॥ ९ ॥

इति नक्राण्डपाकवृष्ययोगः।

भवतश्चात्र।

आसिक्तक्षीरिके पादे योगा ये परिकीर्त्तिताः।
अष्टावपत्यकामैस्ते प्रयोज्याः पौरुषार्थिभिः ॥

कृत्वा छानयित्वा नवकुम्भे प्रक्षिपेत्। नवकुम्भमुखे शुचिपटं विस्तीर्य्य तद् दधिसरं छानयेत्। ततो वस्त्ररन्ध्रेण कुम्भे पततीति भावः। ततो नवकुम्भात् तं यथाबलं पानार्हं तस्मान्मात्रया नीत्वा शीते घृताक्ते षष्टिकौदने प्रक्षिपेत्। तं पटघृष्टशर्करादियुक्तं दधिसरषष्टिकौदनं भुक्त्वा उपरिष्टात् रसालाया मात्रां पिबेत्। रसाला तु—"सचतुर्जातकाजाजि सगुड़ार्द्रकनागरम्। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि ॥" इति ॥ ७ ॥ इति वृष्यदध्यादि।

गङ्गाधरः—चन्द्रांश्वित्यादि। चन्द्रांशुकल्पं निर्म्मलम्। शेषं स्पष्टम् ॥ ८ ॥

गङ्गाधरः—तप्तेत्यादि। सर्पिषि तप्ते नक्राण्डं कुम्भीराण्डं ताम्रचूड़ाण्डमिश्रितं क्षिप्त्वा तप्तं कृत्वा तन्मध्यस्थं यत् तं षष्टिकतण्डुलचूर्णेन तप्तोदकमृदितेनावृत्य पूपलिकाः पूपाख्यपिष्टकं नाम लोके तदाकृतीः कृत्वाभिनवेन सर्पिषा पक्त्वा भृष्टाः खादेत्। तदनु वारुणीमण्डं नरः पिबेदित्यभिप्रायेण वारुणीमण्डपः खादेदित्युक्तम् ॥ ९ ॥

गङ्गाधरः—एतत्पादोक्ताष्टयोगानां विषयमाह—भवतश्चेत्यादि। अत्र पादे

कटुत्वाद्यधिकं न भवति तथा मरिचादियोगः कर्त्तव्यः। मार्जितमिति सुघृष्टम्। रसालालक्षणम्,—"सचातुर्जातकाजाजि सगुड़ार्द्रकनागरम्। रसाला स्याच्छिखरिणी सुघृष्टं ससरं दधि ॥" इति ॥ ७ ॥

एतैः प्रयोगैर्विविधैर्वपुष्मान् स्नेहोपपन्नो बलवर्णायुक्तः।
हर्षान्वितो वाजिवदष्टवर्षं भवेत् समर्थश्च वराङ्गनासु ॥ १० ॥
यद् यच्च किञ्चिन्मनसः प्रियं स्याद्
रम्या वनान्ताः पुलिनानि शैलाः ।
इष्टाः स्त्रियो भूषणगन्धमाल्यं
प्रिया वयस्याश्च तदत्र योग्यम् ॥ ११ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने द्वितीयाध्याये आसिक्तक्षीरीयो नाम वाजीकरणपादो द्वितीयः ॥ २ ॥

येऽष्टौ योगा उक्ताः तेऽष्टौ योगा अपत्यकामैः प्रयोज्याः। फलान्तरमाह—एतैरित्यादि। अष्टवर्षम् इत्यष्टवत्सरं व्याप्यास्यौषधस्य वीर्य्यसद्भावाद् वराङ्गनासु समर्थो भवेदित्यर्थः ॥ १० ॥

गङ्गाधरः—अनुक्तवाजीकरणमुपसंहरति—यद् यच्चेत्यादि। वनान्ता रम्या लिङ्गविपरिणामात् पुलिनानि रम्याणि शैलाश्च रम्याः। इष्टा मनोऽभीष्टाः स्त्रियो भूषणगन्धमाल्यञ्चेष्टमिति लिङ्गविपरिणामेन योज्यं, वयस्याः सखायश्च प्रिया एव, तच प्रिया अत्र योग्यमित्यनेन स्वातन्त्र्येणैषां वाजीकरणत्वं किन्तु वृषाय हितत्वमात्रमिति ख्यापितम्। सुश्रुतेऽप्युक्तम्—भोजनानि विचित्राणि पानानि विविधानि च। वाचः श्रोत्रानुगामिन्यस्त्वचः स्पर्शसुखास्तथा। यामिनी सेन्दुतिलका कामिनी नवयौवना। गीतं श्रोत्रमनोहारि ताम्बूलं मदिराः स्रजः। मनसश्चाप्रतीघातो वाजीकुर्व्वन्ति मानवम् ॥" इति ॥ ११ ॥

गङ्गाधरः—पादं समापयति—इतीत्यादि ॥

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सितस्थाने आसिक्तक्षीरीयवाजीकरणपादो द्वितीयः ॥ २ ॥

चक्रपाणिः—चन्द्रांशुकल्पमिति अत्यर्थशुक्लम्। पौरुषार्थिभिरिति शुक्रार्थिभिः। अत्र योग्यमिति वृष्यप्रयोगसमर्थम् ॥ ८—११ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां वाजीकरणाध्यायव्याख्यायाम् आसिक्तक्षीरीकवाजीकरणपादव्याख्या ॥ २ ॥

अथातो माषपर्णभृतीयं वाजीकरणपादं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

माषपर्णभृतां धेनु गृष्टिं पुष्टां चतुःस्तनीम्।
समानवर्णवत्साञ्च जीववत्साञ्च बुद्धिमान् ॥
रोहिणीमथवा कृष्णामूर्द्ध्वशृङ्गीमदारुणाम्।
इक्ष्वादामर्ज्जुनादां वा सान्द्रक्षीरञ्च धारयेत् ॥
केवलन्तु पयस्तस्याः शृतं वाशृतमेव वा।
शर्करामधुसर्पिर्भिर्युक्तं तद्वृष्यमुत्तमम् ॥ २ ॥

इति वृष्यकेवलक्षीरप्रयोगः।

गङ्गाधरः—अथासिक्तक्षीरिकवाजीकरणपादव्याख्यानानन्तरमतो वाजीकरणाधिकारात् हेतोर्माषपर्णभृतीयं वाजीकरणपादमाह—अथात इत्यादि। माषपर्णभृतीयमिति माषपर्णभृतामिति पदं पादादौ प्रयुक्तं तदधिकृत्य कृतं वाजीकरणपादं व्याख्यास्यामः। शेषं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—माषपर्णभृतामित्यादि। माषपर्णभृतां धेनुमिति माषाणां पर्णैः पत्रैर्भृतां माषपर्णाहारेण पालितां धेनु पुष्टां न तु कृशां, गृष्टिमेकवारप्रसूतां प्रथमप्रसूतामित्यर्थः। चतुःस्तनीं न तु न्यूनातिरिक्तस्तनीम्, समानवर्णवत्सां रोहिणीं लोहितवर्णामथवा कृष्णवर्णामदारुणां दुर्दान्तत्वरहितां नातिस्वल्पनातिबृहच्छरीराञ्च, ऊर्द्ध्वशृङ्गीं न त्वितरथाशृङ्गीम्, इक्ष्वादाम् इक्षुदण्डभक्षाम् अज्जुनादामज्जनाख्यवृक्षपर्णादिभक्षाञ्च, सान्द्रक्षीरं घनदुग्धं धारयेत् दुह्यात्। गृष्ट्यादिलक्षणा धेनुर्माषपर्णाहारेण इक्षुदण्डाहारेण वा अज्जुनपर्णाद्याहारेणापि वा घनदुग्धधारणं करोति। तस्या माषपर्णाहारेण इक्षुदण्डाहारेण वा अज्जुनपत्राद्याहारेण वा धृतघनदुग्धाया घनं पयः केवलं द्रव्यान्तरयोगं विना शृतमर्द्धावशिष्टपक्कमशृतं धारोष्णमपक्कं वानुरूपतया शर्करानूतनमधुसर्पिर्भिः युक्तं पाययेत् शुद्धतनुमुत्तमं वृष्यम् ॥ २ ॥ इति वृष्यकेवलक्षीरप्रयोगः।

चक्रपाणिः—माषपर्णभृतीयसम्बन्धोऽपि पूर्व्ववत्। गृष्टिमेकवारप्रसूताम्; चतुःस्तनीमित्यनेन सम्पूर्णचतुःस्तनीं दर्शयति। रोहिणीमिति लोहितवर्णाम्। ऊर्द्ध्वशृङ्गत्वं विशुद्धबहुक्षीराया एव भवतीति वचनाज्ज्ञेयम्। इक्ष्वादेति इक्षुदण्डभक्षा। अर्ज्जुनादा अर्ज्जुनवृक्षपत्रभक्षा। इक्ष्वादा वा अर्ज्जुनादा

शुक्रलैर्जीवनीयैश्च बृंहणैर्बलवर्द्धनैः।
क्षीरसंजननैश्चापि पयः सिद्धं पृथक् पृथक्॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम्।
पर्य्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयम्॥ ३॥

इति वृष्यक्षीरप्रयोगः।

मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम्।
माषान् श्वदंष्ट्रां क्षीरिकां गोधूमान् शालिषष्टिकान्॥
पयस्यर्द्धोदके पक्त्वा कार्षिकानाढ़कोन्मिते।
विवर्ज्जयेत् पयः शेषं तत् पूतं क्षौद्रसर्पिषा॥

गङ्गाधरः—शुक्रलैरित्यादि। शुक्रलैः शुक्रजननैर्दशभिर्जीवकर्षभककाकोली क्षीरकाकोलीमुद्गमाषपर्णीमेदावृक्षरुहाजटिलाकुलिङ्गा इत्येतैः; जीवनीयैः दशभिः जीवकर्षभकौ मेदा महामेदा काकोली क्षीरकाकोली मुद्गमाषपर्ण्यौ जीवन्ती मधुकमित्येतैः; बृंहणैर्बृंहणीयैर्दशभिः क्षीरिणीराजक्षवकबलाकाकोली क्षीरकाकोलीवाट्यायनीभद्रौदनीभारद्वाजीपयस्यर्ष्यगन्धा इत्येतैः; बलवर्द्धनैरिति बल्यैर्दशभिः ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणीबलातिबलेत्येतैः; क्षीरसंजननैः स्तन्यजननैर्दशभिः वीरणशालिषष्टिकेक्षुबालिकादर्भकुशकाशगुन्द्रेत्कटकत्तृणमूलमित्येतैश्च। पृथक् पृथक् दशभिर्दशभिः सिद्धं दुग्धादष्टमांशैश्चतुर्गुणजलेन गृष्ट्यादुक्तलक्षणाया धेन्वा माषपर्णभृताया इक्ष्वादाया अर्ज्जुनादाया वा क्षीरं पक्त्वा जलक्षयेऽवशिष्टं पयो युक्त्या गोधमचर्णेन घृतक्षौद्रशर्कराभिश्च युक्तं पर्य्यायेण क्रमेण प्रयोक्तव्यं शुद्धतनुना॥ ३॥

गङ्गाधरः—मेदामित्यादि। क्षीरिकां राजादनम् एतान् प्रत्येकं कार्षिकान्

वा माषपर्णभृता वेति विकल्पत्रयम्। पयः शृतमशृतं वेति द्वौ योगौ। शर्कराक्षौद्रसर्पिर्भिर्युक्तं तदिति तृतीयः। एतत्प्रयोगोऽपि जतूकर्णे—"तस्याः क्षीरं शर्कराक्षौद्रयुक्तं वा केवलं शृतमशृतं वा" इति। पर्य्यायेणेति पृथक् पृथक् प्रयोक्तव्यम्, तेन "पञ्च येऽमी गणैः" इत्यादिग्रन्थोक्तयोगाः॥ १—३॥

युक्तं सशर्करं पीत्वा वृद्धः साप्ततिकोऽपि वा।
विपुलं लभतेऽपत्यं युवेव च स हृष्यति॥ ४॥
मण्डलैर्जातरूपस्य तस्या एव पयः शृतम्।
अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम्॥ ५॥
त्रिंशत् सुपिष्टाः पिप्पल्यः प्रकुञ्चे तैलसर्पिषोः
भृष्टाः सशर्करक्षौद्राः क्षीरधारावदोहिताः॥
पीत्वा यथाबलञ्चोर्द्ध्वं षष्टिकं क्षीरसर्पिषा।
भुक्त्वा न रात्रिमस्तब्धं लिङ्गं पश्यति नाक्षरत्॥ ६॥

आढ़कोन्मितेऽर्द्धोदके पयसि गृष्ट्यादुक्तलक्षणाया धेन्वा माषपर्णभृताया इक्ष्वादाया अर्ज्जुनादाया वा द्विभागदुग्धम् एकभागं जलं मिलित्वा षोड़शशरावोन्मिते पक्त्वा अवशिष्टं यदा पयो भवति तदा तान् मेदादीनां किट्टान् विवर्ज्जयेत् वस्त्रेण गालयित्वा तान् त्यजेत्। शेषं पयो मधुसर्पिःशर्कराभियुक्तं पीत्वा शुद्धतनुः पुमान। साप्ततिकोऽपि वृद्धः अपिशब्दादन्योऽपि पुमान्॥ ४॥

गङ्गाधरः—मण्डलैरित्यादि। तस्या गृष्ट्यादिलक्षणाया धेन्वा माषपर्णभृताया इक्ष्वादाया अर्ज्जुनादाया वा एव न त्वन्यस्याः पयो दुग्धं जातरूपस्य सुवर्णस्य मण्डलैर्मण्डलाकारैश्चक्रिकारूपैस्तद्दुग्धाभ्यन्तरे निक्षिप्तैः शृतं पक्वमर्द्धावर्त्तितम् अनुरूपेण घृतक्षौद्रशर्करायुक्तं पीतं सिद्धं वाजीकरणमिदमपत्यजननम् इति॥५॥

गङ्गाधरः—त्रिंशदित्यादि। त्रिंशत् गुड़िकाः पिप्पल्यः सुपिष्टास्तैलस्य सर्पिषश्च प्रकुञ्चे मिलित्वा तैलसर्पिषोः पलमाने भृष्ट्वा तत्रानुरूपेण शर्करामधुनी दत्त्वा दोहनपात्रे क्षिप्ताः गृष्टिसंज्ञकादिलक्षणाया धेन्वा माषपर्णभृताया इक्ष्वादाया अर्ज्जनादाया वा क्षीरधारयाऽवदोहितं यासु ताः क्षीरधारावदोहितास्तैलसर्पिःप्रकुञ्चे भृष्टाः सक्षौद्रशर्कराः सुपिष्टाः त्रिंशद्गुड़िकाः पिप्पल्यः यथाबलं तत्समुदायात्मकमौषधं शुद्धतनुः ना पुमान् पीत्वा

चक्रपाणिः—विवर्ज्जयेति मेदादिकल्कं वर्ज्जयेत्। वृद्धः सप्ततेरर्व्वागिति ज्ञेयम्; साप्ततिकस्य तु यद्यपि शुक्रनिवृत्तिरुक्ता, तथापि वृष्यप्रभावाद् भवतीति विज्ञेयम्। जातरूपस्येति सुवर्णस्य। मण्डलरूपाकृतिरिह सुवर्णस्य प्रभावाद् वृष्यप्रयोगोपकारिणी भवतीति वचनाज्ज्ञेयम्। तस्या एवेति माषपर्णभृतधेन्वाः। प्रकुञ्चः पलम्। क्षीरधारावदोहिता इति पिप्पलीकल्कादुपरिक्षीरधारावदोहः कर्त्तव्यः; क्षीरञ्च तावद् दोह्यम्, यावता पानयोग्याः पिप्पल्यः भवन्ति॥ ४। ६॥

श्वदंष्ट्राया विदार्य्याश्च रसे क्षीरचतुर्गुणे ।
घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥ ७ ॥
फलानां जीवनीयानां स्निग्धानां रुचिकारिणाम् ।
कुड़वश्चूर्णितानां स्यात् स्वयंगुप्ताफलस्य च ॥
कुड़वश्चैव माषाणां द्वौ द्वौ च तिलमुद्गयोः
गोधूमशालिचूर्णानां कुड़वः कुड़वो भवेत् ॥

तदूर्द्ध्वं क्षीरसर्पिषा षष्टिकमन्नं भुक्त्वा रात्रिं व्याप्य क्षरत् शुक्रक्षरत् अस्तब्धश्च लिङ्गं न पश्यति। एवंप्रयोगात् काले नरो रात्रिं व्याप्य अक्षरच्छुक्रं स्तब्धश्च लिङ्गं पश्यतीति भावः ॥ ६ ॥

गङ्गाधरः—श्वदंष्ट्रेत्यादि। माषाणां तुषरहिता विदलाः षष्टिकतण्डुलाश्च द्वयोर्यावन्मानं तस्य समे श्वदंष्ट्राया रसे तत्समे च विदार्य्याः स्वरसे गृष्ट्यादि-लक्षणाया माषपर्णभृताया इक्ष्वादाया अर्जुनादाया वा धेन्वाः क्षीरचतुर्गुणे साधितः पायसः पुनर्घृताढ्यः सर्पिर्बहुलप्रक्षेपेणाढ्यो वृष्यः। शीते तु तत्र पायसे केचिन्मधुशर्करे अनुरूपे ददति ॥ ७ ॥

गङ्गाधरः—फलानामित्यादि। जीवनीयानां जीवकर्षभकमेदामहामेदा-काकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीजीवन्तीमधुकानां दशानां फलानाम्। स्निग्धानां स्नेहोपगानां मृद्वीकामधुकमधुपर्णीमेदाविदारीकाकोलीक्षीरकाकोली-जीवकजीवन्तीशालपर्णीनां दशानां फलानाम्। रुचिकारिणां हृद्यानामाम्रा-म्रातकनिचुलकरमर्दकवृक्षाम्लाम्लवेतसकुवलबदरदाड़िममातुलुङ्गानां दशानां फलानाम्। चूर्णितानां दशशो मिलित्वा कुड़वः। स्वयंगुप्ताफलस्य त्वगादि-रहितस्य चूर्णकुड़वः। माषाणां तुषरहितानां विदलानां चूर्णस्य कुड़व एक

चक्रपाणिः—फलानामित्यादि। फलानामिति जीवनीयानामित्यादीनां त्रयाणां प्रत्येकमभि-सम्बध्यते। जीवनीयानामिति षट्ककषायवर्गोक्तानां जीवकर्षभादीनां दशानाम्। स्निग्धानामिति स्नेहोपगानां मृद्वीकादीनां दशानां सप्तककषायवर्गोक्तानाम्। तथा रुचिकारिणामिति चतुष्ककषाय-वर्गोक्तानामाम्रादीनां हृद्यानां दशानामिति। एषां जीवनीयप्रभृतीनां फलानां चूर्णितानां मिलित्वा कुड़वो ग्राह्यः। (अन्यदतिरोहितार्थम्), तथा ह्ययं प्रयोगो जतूकर्णे च पठ्यते— "द्राक्षाखर्जूरमाषाजड़ा-

सर्पिषः कुडवश्चैकस्तत्सर्व्वं क्षीरसंयुतम्।
पक्त्वा पूपलिकाः खादेद् बह्व्यः स्युर्यस्य योषितः॥ ८॥
घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्र-युक्तं तद् वृष्यमुत्तमम्॥ ९॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमांशिकम्।
प्रयुङ्क्ते यः पयश्चानु नित्यवेगः स ना भवेत्॥ १०॥

एव। तुषरहितयोः कृष्णतिलसुवर्णमुद्गयोः प्रत्येकं चूर्णितयोः द्वौ द्वौ कुडवौ प्रत्येकमेकैकशरावम्। गोधूमशालितण्डुलानां चूर्णितानां प्रत्येकं कुडवः। सर्पिष इति नवस्य गोघृतस्य कुडव एकः। तत् सर्व्वमेकत्र मर्द्दयित्वा पूपलिकाः निर्म्माय गृष्ट्यादिलक्षणाया माषपर्णभृताद्यन्यतमाया धेन्वाः क्षीरे पक्त्वा खादेत् यथाग्निबलं शुद्धतनुरिति॥ ८॥

गङ्गाधरः—घृतमित्यादि। घृतं नव्यं गव्यघृतमनुक्तमानात् प्रस्थोन्मितं शतावरीकल्कगर्भं ततो घृतात् पादिकं शतमूलीकल्कं गर्भं तस्य घृतस्याभ्यन्तरे दत्त्वा तस्माच्च घृतात् दशगुणे गृष्ट्यादिलक्षणाया माषपर्णभृताद्यन्यतमाया धेन्वाः क्षीरे पचेत्। क्षीरक्षये शब्दव्युपरमे सति अवतार्य्य वस्त्रेण पूत्वा सुशीते तत्र घृते प्रक्षिप्तैः शर्करापिप्पलीक्षौद्रैर्युक्तं तद् घृतमुत्तमं वृष्यमिति। अत्र शर्करादीनां प्रक्षेपः समानमानेन लभ्योऽपि घृतात् पादिको मिलित्वा देयः। पुनर्युक्त्या पिप्पलीचूर्णप्रक्षेपो बोध्यो यथा नातिव्यक्तकटुकत्वं भवति, तेन पलमेकं पिप्पलीचूर्णस्य सार्द्धत्रिपलं शर्करायाः सार्द्धत्रिपलञ्च क्षौद्रस्येति मिलित्वाष्टपलं घृतात् पादिकं भवतीति॥ ९॥

गङ्गाधरः—कर्षमित्यादि। घृतस्य च कर्षः क्षौद्रस्य च कर्षस्ताभ्यां मधुकचूर्णस्य कर्षं लेहविधानेन यः शुद्धतनुः प्रयुङ्क्ते तदनु पयश्च गृष्ट्यादि-लक्षणाया माषपर्णभृताद्यन्यतमाया धेन्वा दुग्धं प्रयुङ्क्ते स ना पुमान् नित्यवेगः अक्षयकामवेगः स्यात्॥ १०॥

गोधूमशालिघृतानां कुडवः, तिलमुद्गौ द्विकौडविकौ चूर्णयित्वा" इत्यादि। घृतं शतावरीत्यादौ शर्करादीनां प्रक्षेपणम्, अन्यतो दृष्टयायात् घृतस्य प्रास्थिकत्वम्॥ ७—९॥

घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा ।
संकल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥ ११ ॥
कृतैककृत्याः सिद्धार्था ये चान्योन्यानुवर्त्तिनः ।
कलाः सुवाह्या ये तुल्याः सत्त्वेन वयसा च ये ॥
कुलमाहात्म्यदाक्षिण्य-शीलशौचसमन्विताः ।
ये कामनित्या ये हृष्टा ये विशोका गतव्यथाः ॥
ये तुल्यशीला ये भक्ता ये प्रिया ये प्रियंवदाः ।
तैर्नरः सह विस्रब्धः सुवयस्यैर्वृषायते ॥ १२ ॥

गङ्गाधरः—घृतेत्यादि । घृतक्षीराभ्यां केवलाभ्यामशनशीलो यो युवा निर्भीर्निर्व्याधिश्च सङ्कल्पप्रवणः सततं मनसा रमणं संकल्पते यत् तद्रति-संकल्पनं संकल्पोऽत्र प्रकरणात् स प्रवणो यस्य स संकल्पप्रवणः । स नरो नित्यं स्त्रीषु वृषायते वृष इव ताभिर्मैथुनमाचरति ॥ ११ ॥

गङ्गाधरः—कृतैकेत्यादि । तैः सुवयस्यैः सह विस्रब्धः सम्यग्विश्वासालापा-मोदयुक्तो नरो वृषायते । ये सुवयस्याः कृतैककृत्याः कृतमेकम् एकविधं कृत्यं कर्म्म यैस्ते । ये च वयस्याः सिद्धार्थाः सिद्धाः सर्व्वेऽर्थाः प्रयोजनानि येषां ते । ये च वयस्या अन्योन्यानुवर्त्तिनः स्वयं तेष्वनुवर्त्ती स्वस्मिंश्च तेऽनुवर्त्तिन इति परस्परानुवर्त्तिनः, अनुवर्त्तित्वं तदभिमताचरणशीलत्वम् । कलाः सुवाह्याः, कामानां नानाविधकौतुकादिनानाकला यैर्वयस्यैः सुवाह्याः सुवहनीयाः । ये च वयस्याः सत्त्वेन मनसा वयसा च तुल्याः । ये च वयस्याः तेषां स्वस्वकुलमाहात्म्यं दाक्षिण्यं दक्षिणाचारः कुशलाचरणस्वभावः, शीलं सुस्वभावः, शौचं शुचित्वं, तैः समन्विताः । ये च वयस्याः कामनित्याः कामुकाः । ये च हृष्टाः नित्यं हर्षयुक्ताः । ये च विशोका वयस्याः । ये च वयस्या गतव्यथा रोगादिदुःखरहिताः । ये च वयस्यास्तुल्यशीलाः स्वतुल्याचार-

चक्रपाणिः—कर्षमित्यादिकान्तपञ्चदशप्रयोगाः । 'घृतक्षीराशनः' इत्यादिना तु वृष्य-त्वाच्चिर्चताहाराचाराभिधानम् । नित्यमित्यनेन व्यावायनित्यतया शुक्रमार्गानवरोधेन व्यवायशक्तिं दर्शयति । कृतमेकं कृत्यं यैस्ते तथा, एतच्च अन्योऽन्यार्थरागकारणम् । सिद्धार्था इति

अभ्यङ्गोत्सादनस्नान-गन्धमाल्यविभूषणैः।
गृहशय्यासनसुखैर्वासोभिरहतैः प्रियैः॥
विहङ्गानां रुतैरिष्टैः स्त्रीणाञ्चाभरणस्वनैः।
संवाहनैर्वरस्त्रीणामिष्टानाञ्च वृषायते॥ १३॥
मत्तद्विरेफाचरिताः सपद्माः सलिलाशयाः।
जात्युत्पलसुगन्धीनि शीतगर्भगृहाणि च॥
नद्यः फेनोत्तरीयाश्च गिरयो नीलसानवः।
उन्नतिर्नीलमेघानां रम्यचन्द्रोदया निशाः॥
वायवः सुखसंस्पर्शाः कुमुदाकरगन्धिनः।
रतिभोगक्षमा रात्र्यः सङ्कोचागुरुवल्लभाः॥

स्वभावाः। ये च वयस्या भक्ताः स्वभक्तिमन्तः। ये प्रियाः प्रियंवदाश्च ये वयस्यास्ते ते सर्व्वे सुवयस्यास्तैः सह विस्रब्धो नरो वृषायते॥ १२॥

गङ्गाधरः—वयस्यवृष्यमुक्त्वा परानाह—अभ्यङ्गेत्यादि। इष्टैरिति पदम् अभ्यङ्गादिषु सर्व्वत्र योज्यम्। संवाहनैरिति स्त्रीजनकर्त्तृकैः पाणिस्पर्शसुख-जनकर्त्तृकैर्वा पादाद्यङ्गाभिमर्द्दनैर्नरो वृषायते॥ १३॥

गङ्गाधरः—मत्तेत्यादि। नराणामिह तत् सर्व्वमात्मजस्य कन्दर्पस्यायुधमस्त्रम्। ननु किं सर्व्वं कन्दर्पस्यायुधमित्यत आह—मत्तेत्यादि। मत्तैर्द्विरेफैराचरितं यत्र ते, सपद्माश्च सलिलाशयाः कन्दर्पस्यायुधम्। जात्युत्पलैः सुगन्धीनि चन्दनोशीरादिसिक्तजलजलधारादिभिः। शीतानि च गर्भेऽभ्यन्तरदेशे यानि गृहाणि। फेनोत्तरीयाश्च नद्यः। नीलसानवो गिरयः नीलवर्ण-शोभितसमदेशाः पर्व्वताः। रम्यचन्द्रोदयाश्च निशाः। सुखसंस्पर्शाः कुमुदाकर गन्धिनश्च वायवः। रात्र्यः पुना रतिभोगक्षमा मन्दमन्दपतज्जलधरजलबिन्दु चारुशब्दादिना रतेर्भोगाय क्षमा योग्या रात्र्यः। सङ्कोचाः प्रविरला अगुरुवल्लभा गुरवो मातापित्रादयो वल्लभा भर्त्तृकर्त्रादयश्च तद्रहिताः। सिद्धसाध्याः। कृतार्था ह्यव्याकुलमनसः कामक्षमाः। वृषायत इत्युपचितप्रवृत्त्युन्मुखशुक्रो भवति॥ १०—१३॥

चक्रपाणिः—'मत्तद्विरेफाचरिताः' इत्यादि 'गृहाणि च' इत्यन्तं योग्यतया ऋतुविभागेनानुक्तमपि ग्रीष्म एव ज्ञेयम्। तथा मेघानामित्यन्तं प्रावृषि, तथा 'गन्धिनः' इत्यन्तं शरदि।

सु ाः सहायाः परपुष्टघुष्टाः फुल्ला वनान्ता विशदान्नपानाः।
गान्धर्व्वशब्दाश्च सुगन्धमाल्याः सत्त्वं विशालं निरुपद्रवञ्च॥
सिद्धार्थता चाभिनवश्च कामः स्त्री चायुधं सर्व्वमिहात्मजस्य।
वयो नवं जातमदश्च कालो हर्षस्य योनिः परमा नराणाम्॥१४॥

भवति चात्र।

प्रहर्षयोनयो योगा व्याख्याता दश पञ्च च।
माषपर्णभृतीयेऽस्मिन् पादे शुक्रबलप्रदाः॥ १५॥

इति चिकित्सितस्थाने द्वितीयाध्याये माषपर्णभृतीय-वाजीकरणपादस्तृतीयः॥ ३॥

प्रविरलभावो गुरुवल्लभराहित्यञ्च। सुखाः सुखदाश्च सहायाः। परपुष्टानां कोकिलानां घुष्टं यत्र तेऽथवा परपुष्टैः घुष्टा नादिताः फुल्ला नानाविध-पुष्पलताप्रतानैः प्रफुल्लाश्च विशदान्नपानं यत्र तथाविधाश्च गन्धर्व्वशब्दाश्च सुगन्धमाल्याश्च वनान्ताः। विशालं विपुलसत्त्वगुणं निरुपद्रवञ्च सत्त्वं मनः। सिद्धार्थता सम्पादितस्वप्रयोजनसमूहता। अभिनवश्च कामः नवोऽभिलाषः कन्दर्पो वा। स्त्री च निरुक्ता। एतत् सर्व्वं नराणामात्मजस्य कन्दर्पस्यायुधम् इत्यर्थः। तत्र हर्षकारणमाह—वयो नवमित्यादि। नवं वयो जातमदः कालो वसन्तादिः नराणां हर्षस्य लिङ्गोद्गमस्य परमा योनिः॥ १४॥

गङ्गाधरः—पादार्थमुपसंहरति—भवति चात्र इत्यादि। प्रहर्षयोनय इति। दश पञ्च चेति पञ्चदश योगाः॥ १५॥

गङ्गाधरः—पादं समापयति इतीत्यादि।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सित-स्थाने माषपर्णभृतीयवाजीकरणपादस्तृतीयः॥ ३॥

'वल्लभाः' इत्यन्तस्य विधानं हेमन्तशिशिरयोर्ज्ञेयम्। सङ्कोचं कुङ्कुमम्, सङ्कोचागुरुणोः समालभनार्थं वल्लभा यासु निशासु तास्तथा। सुखा इत्यादि ग्रन्थविधानं वसन्ताभिप्रायाभिधानमन्यकाल्यविरुद्धार्थं। आत्मजस्येति मन्मथस्य। जातमदः कालो वसन्तादिः॥ १४। १५॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां वाजीकरणाध्यायव्याख्यायां माषपर्णभृतीयपादव्याख्या॥

अथातः पुमान्जातबलादिकं वाजीकरणपादं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

पुमान् यथा जातबलो यावदिच्छन् स्त्रियो व्रजेत्।
यथा चापत्यवान् सद्यो भवेत् तदुपदेक्ष्यते ॥ २ ॥
न हि जातबलाः सर्व्वे नराश्चापत्यभागिनः।
वृहच्छरीरा बलिनः सन्ति नारीषु दुर्ब्बलाः ॥
सन्ति चाल्पायुषः स्त्रीषु बलवन्तो बहुप्रजाः।
प्रकृत्या चाबलाः सन्ति सन्ति चामयदुर्ब्बलाः ॥

गङ्गाधरः—अथ माषपर्णभृतीयवाजीकरणपादव्याख्यानानन्तरमतो वाजीकरणाधिकाराद्धेतोः पुमानजातबलादिकं वाजीकरणपादमाह—अथात इत्यादि। पुमान्जातबल इत्यादि अधिकृत्य कृतं वाजीकरणपादं व्याख्यास्यामः। शेषं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—पुमानित्यादि। यथा येन प्रकारेण जातबलः जातं बलं मैथुनसामर्थ्यं यस्य स जातबलः सन् स्त्रीणां यावद् गन्तुमिच्छन् भवति तावतीः स्त्रियो व्रजेत्, यथा यस्मिन् प्रकारे च सद्योऽपत्यवान् अमोघवीर्य्यवान् मैथुनमात्रेण गर्भाधानकृद् भवेत् तदुभयं वाजीकरणमुपदेक्ष्यते ॥ २ ॥

गङ्गाधरः—ननु कथं देहबलकरं नोपदेक्ष्यते मैथुनबलकरं सद्योऽपत्यकरञ्च वा पृथङ् नोपदेक्ष्यते इत्यत आह—न हीत्यादि। हि यस्मात्। सर्व्वे नरा न जातबला न स्त्रीणां यावदिच्छन्तो मैथुनसमर्थाः, सर्व्वे जातबलादयोऽपि नापत्यभागिनः। नन्वेवं कुत्र तदाह—वृहदित्यादि। वृहच्छरीराः बलिनश्च देहबलवन्तश्च सन्ति पुरुषाः परन्तु नारीषु मैथुने दुर्ब्बलाः। सन्ति च केचित् पुरुषा नारीषु बलवन्तो बहुप्रजाश्च किन्तु अल्पायुषः। केचित् पुरुषा नारीषु

चक्रपाणिः—पारिशेष्यात् पुमान्जातबलादिकमुच्यते, पुमान् जातबलादयः शब्दा अस्मिन् विद्यन्ते इति पुमान्जातबलादिकः, आसिक्तक्षीरिकवच्छब्दसिद्धिः। जातबलत्वे सत्यपि नावश्यमतिभोगित्वं भवतीति कृत्वा 'यथा जातबलः' इत्युक्तेऽपि 'यथा चापत्यवान् भवति' इत्युक्तम्। तदेव शुक्रबलं स्फोटयति—न हीत्यादि। 'न हि जातबलाः सर्व्वे' इत्येकः पक्षः, तथा 'नापत्यभागिनः सर्व्वे' इति द्वितीयः पक्षो ज्ञेयः। एतच्छुक्रबलप्रसङ्गादपरानपि शुक्रबलविशेषानाह— वृहच्छरीरा इत्यादि। अल्पबला अल्पशरीरा एते च शुक्रसारत्वेन

* चाल्पबलाः इति पाठश्च दृश्यते ॥

नराश्वटकवत् केचिद्‌ व्रजन्ति बहुशः स्त्रियम् ।
गजवच्च प्रसिञ्चन्ति केचिन्न बहुगामिनः ॥
कामयोगबलाः * केचित् केचिदभ्यसनध्रुवाः ।
केचित् प्रयत्नैर्वाह्यन्ते वृषाः केचित् स्वभावतः ॥
तस्मात् प्रयोगान् वक्ष्यामो दुर्ब्बलानां बलप्रदान् ।
सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान् ॥ ३ ॥
पूर्व्वं शुद्धशरीराणां निरूहान् सानुवासनान् ।
बलापेक्षी प्रयुञ्जीत शुक्रापत्यादिवर्द्धनान् ॥ ४ ॥

प्रकृत्या स्वभावेन दुर्ब्बलाः सन्ति, सन्ति चापरे पुरुषा नारीषु आमयदुर्ब्बलाः व्याधितो मैथुने दुर्ब्बलाः। केचिच्च पुरुषाश्वटकवत् अचिराच्चलच्छुक्रा बहुशः पुनःपुनः स्त्रियं व्रजन्ति न चिरं स्तब्धशुक्रा न वा बहुशुक्रसेकिनः। अन्ये केचिन्नरा गजवद् दृढ़मैथुना बहुशुक्राणि प्रसिञ्चन्ति न बहुगामिनो बह्वीः स्त्रियो गन्तुं न शीलवन्तो न वा पुनःपुनः स्त्रीगमनशीलवन्तः। केचिन्नराः कामयोगबलाः यदा नानाप्रकारोद्दीपनहेतुभिः कन्दर्पयोगो भवति तदा तेन बलवन्तः स्युः। केचिन्नरा अभ्यसनध्रुवाः अभ्यासेन मैथुनसमर्थाः। अभ्यशनेति पाठे सम्यगाहारादिना बलपुष्टितो मैथुनसमर्थाः भवन्ति। अव्यसनेति पाठे शोकादिव्यसनाभावे सति मैथुनसमर्थाः। केचिन्नराः प्रयत्नैः स्त्रीमुखचुम्बनालिङ्गनकुचमर्द्दनशेफःसंस्पर्शनसंयोजनादिभिः प्रयत्नैर्वाह्यन्ते स्त्रीषु कामोद्रेकतो मैथुनसामर्थ्यमिति शेषः। केचित् स्वभावतो वृषाः मैथुनसमर्थाः। न च कश्चिज्जातबलो यावदिच्छन् स्त्रियो व्रजेत् नापि चापत्यवान् स्यात्। तस्मात् स्त्रीषु मैथुने दुर्ब्बलानां बलप्रदान् सुखोपभोगान् स्त्रीषु मैथुने बलिनां भूयोबलवर्द्धनान् वाजीकरणयोगानुपदेक्ष्यामः इति ॥ ३ ॥

गङ्गाधरः—तत्रादौ कर्त्तव्यमाह—पूर्व्वमित्यादि। पूर्व्वं वमनविरेचनाभ्यां शुद्धशरीराणां नराणां बलापेक्षी भिषक् शुक्रापत्यविवर्द्धनान् शुक्रवर्द्धनद्रव्य-निर्म्मितान् अपत्यकरद्रव्यनिर्म्मितांश्च सानुवासनान् निरूहान् प्रयुञ्जीत ॥ ४ ॥

नारीषु बलवन्तो बहुप्रजा भवन्ति। गजवच्च प्रसिञ्चन्तीति शुक्रं बहु विसृजन्ति। कालयोगेन हेमन्तादिकालसम्बन्धेन व्यवाये बलवन्तो भवन्तीति कालयोगबलाः। अभ्यसनध्रुवा इति

* कालयोगबलाः इति पाठान्तरम्।

घृततैलरसक्षीर-शर्करामधुसंयुताः।
वस्तयः संविधातव्याः क्षीरमांसरसाशिनाम्॥ ५॥
पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे।
कोलवद्द् गुड़िकाः कृत्वा तप्ते सर्पिषि भर्ज्जयेत्॥
भर्ज्जनस्तम्भितास्ताश्च * प्रक्षेप्याः कौक्कुटे रसे।
घृताढ्ये गन्धपिशुने दधिदाड़िमसाधिते †॥
यथा न भिन्द्याद्द् गुड़िकास्तथा तं साधयेद्द् रसम्।
तं पिबन् भक्षयंस्ताश्च लभते शुक्रमक्षयम्॥ ६॥

वृष्या मांसगुड़िकाः।

गङ्गाधरः—निरूहांश्चाह—घृतेत्यादि। सिद्धिषु यावन्तो वस्तयो निरूह-वस्तयोऽनुवासनवस्तयश्च वक्ष्यन्ते, ते सर्व्वे वस्तयो घृतादिसंयुक्ताः क्षीरमांस-रसेन विधातव्यास्तेन शुक्रापत्यविवर्द्धना भवन्तीति भावः। एवंसंस्कृत-शरीराणां वक्ष्यमाणयोगान्यतमं यथार्हयोगं प्रयुञ्जीत ततः सिध्यति॥ ५॥

गङ्गाधरः—तं तं वाजीकरणयोगमाह—पिष्ट्वेत्यादि। वराहमांसानि निरस्थीनि पिष्ट्वा तत्रानुरूपे मरिचसैन्धवे चूर्णिते दत्त्वा कोलवत् वृहद्बदरवद् गुड़िकाः कृत्वा नवे तप्ते गोः सर्पिषि भर्ज्जयेत्। भर्ज्जन-स्तम्भिताः सर्पिषि भर्ज्जनेन वटकवद्दृढ़रूपेण स्तम्भिताश्च ता मांसगुड़िकाः स्युः। पूर्व्वन्तु कुक्कुटमांसं दध्ना म्रक्षयित्वा घृते सन्तलनं कृत्वा यावता जलेन स्वच्छरसो भवति तावता जलेन पक्त्वा पुनर्दधिदाड़िम-रसौ दत्त्वा तं रसं साधयेत् तथा, यथा बहुघृते रसे तस्मिन् प्रक्षिप्तास्ता मांस-गुड़िका न भिन्द्यात् तथा कृते कौक्कुटे रसे ता मांसगुड़िकाः प्रक्षिपेत्। तं रसं पिबन् ताश्च मांसगुड़िका भक्षयन्नक्षयं शुक्रं लभते। प्रयोगकालोऽत्र फलोदयं यावत्॥ ६॥ इति वृष्यमांसगुड़िकाः।

व्यवायाभ्यासेन व्यवायसमर्था भवन्ति। एवं प्रयत्नैर्भवन्तीति। निरूहानुवासनाभिधाना वस्तयः॥ १—५॥

चक्रपाणिः—वर्त्तनस्तम्भिता इति वर्त्तनेन कठिनीकृताः। दधिदाड़िमसाराभ्यां संस्कृतं

* वर्त्तनस्तम्भितास्ताश्च इति वा पाठः। † दधिदाड़िमसारिके इति क्वाचित्कः पाठः।

मांसानामेवमन्येषां मेध्यानां कारयेद्भिषक् ।
गुड़िकाः सरसास्तासां प्रयोगः शुक्रवर्द्धनः ॥ ७ ॥
माषानङ्कुरितान् शुद्धान् निस्तुषान् सजड़ाफलान् ।
घृताढ्ये माहिषरसे दधिदाड़िमसाधिते * ॥
प्रक्षिपेन्मात्रया युक्तो धान्यजीरकनागरैः ।
पीतो भुक्तश्च स रसः कुरुते शुक्रवर्द्धनम् ॥ ८ ॥

वृष्यमाहिषरसः ।

आर्द्राणि मत्स्यमांसानि भृष्टाश्च शफरीश्च वा ।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् ॥ ९ ॥

वृष्या घृततलितमत्स्याः ।

गङ्गाधरः—मांसानामित्यादि। मेध्यानां मेधाहितानां हंसादीनाम्। एवमुक्तप्रकारेण सरसा गुड़िकाः कारयेत् ॥ ७ ॥

गङ्गाधरः—माषानित्यादि। जले पूर्व्वनिर्व्वापितान् सम्यगार्द्रान् माषान् पुनस्तज्जलादुत्थापितान् ततोऽङ्कुरितान् पुनर्जलेन धौतीकरणात् शुद्धान् तुषरहितान् माषान् सजड़ाफलान् आत्मगुप्ताफलानि तथा निस्तुषाणि शुद्धानि समानमानेन नीत्वा तत्र मिश्रीकृतान् दधिदाड़िमसाधिते माहिषरसे घृताढ्ये प्रक्षिपेत्। ततोऽनुरूपेण धान्यजीरकनागरचूर्णैः सह युक्तः स रसो मात्रया यथाबलं पीतः। भुक्तश्च स सजड़ाफलमाषः शुक्रवर्द्धनं कुरुते ॥ ८ ॥

वृष्यमाहिषरसः ।

गङ्गाधरः—आर्द्राणीत्यादि। मत्स्या रोहितादयः। मांसानि वराहमहिषादीनाम्। आर्द्राणि सद्यस्कानि। शफरी चार्द्रा। एषामन्यतममेकं यथेष्टं तप्ते सर्पिषि भृष्ट्वा यः खादेदित्यर्थः ॥ ९ ॥

वृष्यघृततलितमत्स्यमांसे

दधिदाड़िमसारिकम्। दाड़िमसारश्च दाड़िमरसः। मांसानामित्यादि। अतिदेशयोगो द्वितीयः। मेध्यानामिति मेदुराणाम्। अजड़ा शूकशिम्बी। भुक्तः पीतश्चेति पूर्व्वयोगवत्। घनभागस्य

* दधिदाड़िमसारिके इति पाठान्तरम् ।

घृतभृष्टान् रसे छागे रोहितान् फलसाधिते * ।
अनुपीतरसान् सिद्धान् अपत्यार्थी प्रयोजयेत् ॥ १० ॥
गर्भाधानकरो योगः ।

कुट्टकं मत्स्यमांसानां हिङ्गुसैन्धवधान्यकैः ।
युक्तं गोधूमचूर्णेन घृते पूपलिकाः पचेत् ॥
माहिषे च रसे मत्स्यान् स्निग्धाम्ललवणान् पचेत् ।
रसे चानुगते मत्स्यान् पोथयेत् तत्र चावपेत् ॥
मरिचं जीरकं धान्यमल्पं हिङ्गु नवं घृतम् ।
माषपूपलिकानां तद् गर्भार्थमुपकल्पयेत् ॥
एतौ पूपलिकायोगौ बृंहणौ बलवर्द्धनौ ।
हर्षसौभाग्यदौ पुत्र्यौ परं शुक्राभिवर्द्धनौ ॥ ११ ॥
वृष्यौ पूपलिकायोगौ ।

गङ्गाधरः—घृतेत्यादि। रोहितान् रोहितमत्स्यस्य बहून् खण्डान् सद्यस्कान् घृते भृष्टान् फलसाधिते दाडिमफलदधिसाधिते छागे रसे प्रक्षिप्य पूर्व्वं तान् खादित्वाऽनुरसं पिबेदित्येवं प्रयोजयेदिति भावः ॥१०॥ गर्भाधानकरो योगः ।

गङ्गाधरः—कुट्टकमित्यादि। मत्स्यानां मांसानां वा कुट्टकं खण्डखण्डीकृतं हिङ्ग्वादियुक्तं मर्दितं गोधूमचूर्णावेष्टितं कृत्वा तप्ते घृते पूपलिकाः पचेत्। माहिषे च मांसरसे स्निग्धाम्ललवणान् घृतदाडिमसैन्धवयोगेन मत्स्यान् स्निग्धाम्ल-लवणीकृत्य पचेत्। स च माहिषमांसरसः पाकात् तन्मत्स्ये शुष्कीभूतोऽनुगतो यदा स्यात् तदा तान् मत्स्यान् पोथयेत् कुट्टयेत्। कण्टकादिरहितेषु तत्र मत्स्येषु मरिचादिचूर्णानि नवञ्च घृतम् आवपेत् दत्त्वा मिश्रीकृत्य माषपिष्टरचिते पूपलि-कार्थं वेष्टनगर्भं दत्त्वा पूपलिका घृते पचेत्। इत्येवं माषपूपलिकानां गर्भार्थं तत् उपकल्पयेदित्यर्थः। तद्गर्भं कृत्वा माषपूपलिकाः कारयेदिति भावः। एतौ कुट्टकमित्यादिना पचेदित्यन्त एकः, माहिषे च रसे मत्स्यानित्यादिना त्वपर इत्येतौ पुत्र्यौ पुत्राय हितौ ॥ ११ ॥ वृष्यौ पूपलिकायोगौ ।

भोजनं द्रवस्य पानं ज्ञेयम्। 'मत्स्य'शब्देन प्रधानकल्पनया रोहितं वदन्ति। फलसारिके इति दाडिमामलकादिफलसारसंस्कृतम्। कुट्टकमिति कुट्टनेनाणुशः कृतम् ॥ ६—११ ॥

* फलसारिके इति वा पाठः ।

माषात्मगुप्तागोधूम-शालिषष्टिकयष्टिकम्।
शर्कराया विदार्य्याश्च चूर्णानि तुरकस्य * च॥
संयोज्य मसृणे क्षीरे घृते पूपलिकाः पचेत्।
पयोऽनुपानास्ताः शीघ्रं कुर्व्वन्ति वृषतां परम्॥ १२॥

वृष्या माषादिपूपलिकाः।

शर्करायास्तुलैका स्यादेका गव्यस्य सर्पिषः।
प्रस्थो विदारीचूर्णानां पिप्पल्याः प्रस्थ एव च॥
अर्द्धाढ़कं तुगाक्षीर्य्याः क्षौद्रस्याभिनवस्य च।
तत् सर्व्वं मूर्च्छितं तिष्ठेन्मार्त्तिके घृतभाजने॥
मात्रामग्निसमां तस्य प्रातःप्रातः प्रयोजयेत्।
एष वृष्यः परं योगः कण्ठ्यो वृंहण एव च॥ १३॥

वृष्ययोगः।

गङ्गाधरः—माषेत्यादि। यष्टिकमिति मधुयष्टिकम्। क्षुरकस्य कोकिलाक्षस्य। माषादीनां षष्टिकान्तानां पञ्चानां निस्तुषाणां चूर्णानि। षष्टिकादीनां चूर्णानि मसृणे निर्म्मले क्षीरे संयोज्य मर्द्दितानि कृत्वा निगर्भाः पूपलिका घृते पचेत्। ता भक्षयित्वा पयोऽनुपिबेत्॥ १२॥　　वृष्या माषादिपूपलिकाः।

गङ्गाधरः—शर्कराया इत्यादि। शर्कराया एका तुला सार्द्धद्वादशशरावं, गव्यस्य सर्पिषश्चैका तुला सार्द्धद्वादशशरावं, नात्र द्वैगुण्यं "न द्वैगुण्यं तुलामाने पलोल्लेखागते तथा" इति वचनात्। विदारीचूर्णानां प्रस्थः शरावद्वयं, पिप्पल्याश्चर्णितायाः प्रस्थ एव च शवारद्वयमिता एव, तुगाक्षीर्य्या अर्द्धाढ़कं चतुःशरावं, क्षौद्रस्याभिनवस्य चार्द्धाढ़कं द्रवद्वैगुण्यादष्टशरावम्, तत् सर्व्वं सम्यगालोड़नेन मिश्रीकृतं घृतभाविते मार्त्तिके भाजने तिष्ठेत् स्थापयेत्। अग्निसमां यथाग्निबलं मात्रां तस्य प्रयोजयेत्॥ १३॥

वृष्ययोगः।

* इक्षुरकस्येति चक्रः।

शतावर्य्या विदार्य्याश्च तथा माषात्मगुप्तयोः।
श्वदंष्ट्रायाश्च निक्काथ-लल्वणेषु * पृथक् पृथक् ॥
साधयित्वा घृतप्रस्थं पयस्यष्टगुणे पुनः।
शर्करामधुसंयुक्तमपत्यार्थी प्रयोजयेत् ॥ १४ ॥

अपत्यकरं घृतम्।

घृतपात्रं शतगुणे विदारीस्वरसे पचेत्।
सिद्धं पुनः शतगुणे गव्ये पयसि साधयेत् ॥
शर्करायास्तुगाक्षीर्य्याः क्षौद्रस्येक्षुरसस्य च।
पिप्पल्याः सजड़ायाश्च भागैः पादांशिकैर्युतम् ॥

गङ्गाधरः—शतावर्य्या इत्यादि। पृथक् पृथक् वचनात् प्रत्येकं शतावर्य्यादीनां लल्वणं मिलित्वा बहुलल्वणेषु अर्थात् पञ्चसु द्रोणेषु। अत्र द्रवद्वैगुण्यात् शतावर्य्याः स्वरसोऽपि चतुःषष्टिशरावोन्मितः। विदार्य्याश्च स्वरसः चतुःषष्टिशरावोन्मितः। आर्द्रायाः शतावर्य्या नित्यप्रयोगेण न द्वैगुण्यम्, तस्याः स्वरसस्तु द्रवत्वेन द्विगुण इष्टः। माषात्मगुप्तयोः पृथक् क्काथद्वयं प्रत्येकं द्रोणमानं श्वदंष्ट्रायाश्च निक्काथो लल्वणमितः। एषु पञ्चसु द्रवेषु पञ्चद्रोणेषु घृतप्रस्थमेकं साधयित्वा पुनरष्टगुणे चतुःषष्टिशरावे गव्यदुग्धे साधयित्वा द्रवक्षये सति अवतार्य्य शीते शर्कराया अर्द्धशरावं मधुनश्च अर्द्धशरावं मिलित्वा घृतपादिकं प्रक्षिप्याग्निबलापेक्षया अपत्यार्थी प्रयोजयेत् ॥ १४ ॥ अपत्यकरं घृतम्।

गङ्गाधरः—घृतपात्रमित्यादि। शतगुणे चतुःशतपात्रे शरावषोड़शशतमिते अकल्कं साधयित्वा पुनः शतगुणे षोड़शशतशरावमिते गव्ये पयसि अकल्कं साधयेत्। ततो द्रवक्षय अवतार्य्य शर्करायाः तुगाक्षीर्य्याः तथेक्षुरसस्यच च

चक्रपाणिः—इक्षुरकः कोकिलाक्षः। शर्करामधुसंयुक्तमित्यत्र प्रक्षेपन्यायात् पादिकत्वं शर्करामधुनोः ॥ १२—१४ ॥

* निष्क्काथं जलेषु च इति क्वचित् पठ्यते।

गुड़िकाः कारयेद् वैद्यो यथास्थूलमुड़ुम्बरम् ।
तासां प्रयोगात् पुरुषः कुलिङ्ग इव हृष्यति ॥ १५ ॥

वृष्यगुड़िका ।

सितोपलापलशतं तदर्द्धं नवसर्पिषः ।
क्षौद्रपादेन संयुक्तं साधयेज्जलपादिकम् ॥
सान्द्रं गोधूमचूर्णानां पादं स्तीर्णे शिलातले ।
शुचौ श्लक्ष्णे समुत्कीर्य्य मर्द्दनेनोपपादयेत् ॥
शुद्धा उत्कारिकाः कार्य्याश्चन्द्रमण्डलसन्निभाः ।
तासां प्रयोगाद् गजवन्नारीः सन्तर्पयेन्नरः ॥ १६ ॥

वृष्या लप्सिकाः ।

यत्किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्व्वं तद् वृष्यमुच्यते ॥ १७ ॥

पिप्पल्याश्च जड़ाया आत्मगुप्ताया निस्तुषफलचूर्णस्य मिलित्वा चतुःशरावैर्युतं तद् घृतं गुड़िकाः कारयेत् ॥ १५ ॥　　वृष्यगुड़िका ।

गङ्गाधरः—सितोपलेत्यादि । नवसर्पिषो नूतनस्य गव्यघृतस्य तदर्द्धं पञ्चाशत्पलम् । क्षौद्रपादेन क्षौद्रस्य सितोपलायाः पादेन पञ्चविंशतिपलेन संयुक्तम् । जलं पादिकं यत्र तत् । सर्व्वं पलशतमित्यस्य विशेषणम् । सान्द्रं यथा स्यात् तथा सितोपलायाः पलशतमुक्तमानघृतादियुक्तं साधयेत् । स्तीर्णे विस्तृते गोधूमचूर्णानां पादः सितोपलापलशतात् पादो भागस्तत् सर्व्वं श्लक्ष्णे स्तीर्णे शिलातले खल्वगह्वरे शुचौ समुत्कीर्य्य सम्यगुत्कारिकारूपेण मर्द्दनेन उपपादयेत् । ताः शुद्धा उत्कारिकाः कार्य्याः ॥ १६ ॥　　वृष्या लप्सिकाः ।

गङ्गाधरः—अनुक्तान वृष्यानुपसंहरति—यत्किञ्चिदित्यादि । यतो मधुरादिकं यत्किञ्चिद् द्रव्यं तत् सर्व्वं वृष्यम् ॥ १७ ॥

चक्रपाणिः—पादांशिकैरिति घृतापेक्षया पादप्रमाणैः । समुत्कीर्य्येति विस्तीर्य्य, उत्कारिकाः कार्य्या इत्यत्र पुनःपाकेनैवोत्कारिकाकरणम् ॥ १५ । १६ ॥

द्रव्यैरेवंविधैस्तस्माद् भावितः प्रमदां व्रजेत्।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः॥
गत्वा स्नात्वा पयः पीत्वा रसं वानु शयीत च।
तथास्याप्यायते भूयः शुक्रञ्च बलमेव च॥ १८॥
यथा मुकुलपुष्पस्य सुगन्धो नोपलभ्यते।
लभ्यते तद्विकाशात् तु तथा शुक्रं हि देहिनाम्॥

गङ्गाधरः—तस्माद्धेतोरेवंविधैरुक्तमधुरादिभिर्द्रव्यैर्भावितः संस्कृतदेहः पुमान् प्रमदां व्रजेत्। कथंप्रकारेण व्रजेदित्यतआह—आत्मेत्यादि। आत्मवेगेन स्वतो जातकामवेगेन उदीर्णः उद्गतलिङ्गः, पुनः स्त्रीगुणैश्च मधुरालापहावभावादिभिः प्रहर्षितो जातहर्षः सन् स्त्रियं गत्वा मैथुनं कृत्वा अनन्तरं स्नात्वा पयः पीत्वा रसं मांसरसं वा पीत्वानु पश्चात् शयीत। तथा तस्मिन् प्रकारेऽस्य कृतसुरतस्य पुंसो भूयः पुनरपि भूयिष्ठं शुक्रञ्च बलञ्चैवाप्यायते वर्द्धते इति॥ १८॥

गङ्गाधरः—अथ शुक्रप्रकाशप्रकारमाह—यथेत्यादि। मुकुलपुष्पस्य कलिकारूपपुष्पस्य सुगन्धो यथा नोपलभ्यते विकाशात् तु पुष्पकलिकाप्रस्फुटत्वात् तु पुष्परूपत्वे सुगन्धो लभ्यते उपलभ्यते—प्रादयो हि द्योतकाः, धातुवाच्यमेवार्थं द्योतयन्ति, तस्माच्च विनाप्युपसर्गम् उपसर्गद्योत्यं स्वार्थं धातवोऽभिदधतीति—तथा देहिनां शुक्रं मुकुलपुष्पस्य सुगन्ध इव। देहिनां वृद्धानां बालानाञ्च शुक्रं नोपलभ्यते उपलभ्यते च यूनां मध्यमानाञ्च

ननु वृद्धानां बालानाञ्च तर्हि किं शुक्रं न वर्त्तते पुष्पमुकुलेषु च सुगन्धश्च किं न वर्त्तते इति चेन्न। उक्तं हि सुश्रुते। यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नैव नास्तीत्यथवास्ति सतां भावानाम् अनभिव्यक्तिरिति कृत्वा केवलं सौक्ष्म्यान्नाभिव्यज्यते। स एव गन्धो विवृत-

चक्रपाणिः—अनुक्तवाजीकरणं संगृह्णन् आह—यत्किञ्चिदित्यादि। भावित इति वचनात्, प्रयोगेण शरीरभावनायां सत्यां स्त्रीसेवा सम्भवतीति दर्शयति। आत्मवेगेनेति सङ्कल्पजातेनात्मवेगेन।

नर्त्ते वै षोड़शाद् वर्षात् सप्तत्याः परतो न च ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥
अतिबालो ह्यसम्पूर्ण-सर्व्वधातुः स्त्रियो व्रजन् ।
उपतप्येत सहसा तड़ागमिव काजलम् ॥ १६ ॥
शुष्कं रुक्षं यथा काष्ठं जन्तुजग्धं विजर्ज्जरम् ।
स्पृष्टमाशु विशीर्य्येत तथा वृद्धः स्त्रियो व्रजन् ॥ २० ॥
जरया चिन्तया शुक्रं व्याधिभिः कर्म्मकर्षणात् ।
क्षयं गच्छत्यनशनात् स्त्रीणाञ्चातिनिषेवणात् ॥ २१ ॥

पत्रकेशरैः कालान्तरेणाभिव्यक्तिं गच्छति, एवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति। रोमराज्यादयोऽथार्त्तवादयश्च विशेषान्नारीणां रजसि चोपचीयमाने शनैःशनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति। स एवान्नरसो वृद्धानां जरापरिपक्वशरीरत्वान्न प्रीणनो भवति यस्माच्च खल्वाहारपरिणामजात् रसाद् रक्तं ततो मासं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रस्य सम्भवः॥ तत्र रस गतौ धातुः, अहरहर्गच्छतीति रसः, स खलु त्रीणि त्रीणि कलासहस्राणि पञ्चदश वा कला एकैकस्मिन् धाताववतिष्ठते। एवं मासेन रसः शुक्रो भवति स्त्रीणाञ्चार्त्तवमिति। रसादेव स्त्रिया रक्तं रजःसञ्ज्ञं प्रवर्त्तते। तद् वर्षाद् द्वादशाद् वृद्धिं याति पञ्चाशतः क्षयमिति। अत एवाह—नर्त्ते इत्यादि। आयुष्काम इति अर्व्वाक् षोड़शवर्षादपि बालो नाभिव्यक्त-शुक्रत्वेन मैथुनसमर्थोऽपि न स्त्रीसंयोगं कुर्य्यादायुरहितत्वात्। एवमतीत-सप्ततिकोऽपि। अतिबालातिवृद्धयोर्मैथुने दोषमाह—अतिबाल इत्यादि। उपतप्येतेति रसादिमज्जान्तधातुशोषात् तन्मये च देहे पुमानुपतप्येतेति भावः। काजलमिति दृष्टान्त ईषत्सर्व्वधातुत्वख्यापकासम्पूर्णसर्व्वधातुरित्यर्थः॥ १९ ॥

गङ्गाधरः—शुष्कमित्यादिना वृद्धस्य स्त्रीसंयोगे दोषमाह। स्पष्टार्थः श्लोकोऽयम् ॥ २० ॥

गङ्गाधरः—ननु वृद्धस्य सर्व्वसम्पूर्णधातोः कस्मादेव विशीर्णता स्यादित्यत आह—जरयेत्यादि। शुक्रं हि तैर्जरादिभिर्हेतुभिः क्षयं गच्छतीत्यतो वृद्धश्चिन्तार्त्तो

बालस्य तड़ागदृष्टान्तेन शुक्रं शुष्यति न पुनरपि शुक्रसद्भावं कफप्राधान्यञ्च दर्शयति।

क्षयाद् भयादविस्रम्भाच्छोकात् स्त्रीदोषदर्शनात्।
नारीणामरसज्ञत्वादभिचाराद * असेवनात् ॥
तृप्तस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते।
देहसत्त्वबलापेक्षी हर्षः शक्तिश्च हर्षजा ॥ २२ ॥
रस इक्षौ यथा दध्नि सर्पिस्तैलं तिले यथा।
सर्व्वत्रानुगतं देहे शुक्रं संस्पर्शने तथा ॥ २३ ॥

व्याधियुतो भारवहनादिकर्म्मकर्षितोऽनशनक्षीणः स्त्रीष्वतिप्रसक्त्या क्षीणशुक्रश्च स्त्रियो व्रजन् शुष्कादिकाष्ठवदाशु विशीर्य्यतेति बोध्यम् ॥ २१ ॥

गङ्गाधरः—ननु विशीर्णाभावात् तु जरातुरादयः परं मैथुनेशक्ता भवन्ति किं न वेत्यत आह—क्षयादित्यादि। धातूनां विशेषतः शुक्रस्य च क्षयात् नरस्य स्त्रियो गन्तुं न शक्तिरुपजायते। जरादिरहितस्य यूनश्च भयादपि स्त्रियो गन्तुं शक्तिर्न जायते। न वा अविश्रम्भात् लज्जया। नापि शोकात्। न च स्त्रीदोषदर्शनात्। न वा नारीणामरसज्ञत्वात्। नाप्यभिचारात्। न चापि चिरं स्त्रीणामसेवनात्। न वा तृप्तस्य मैथुनेन तृप्तस्य च स्त्रियो गन्तुं शक्तिर्भवति। नन्वेभ्यः कारणेभ्यः कथं स्त्रियो गन्तुं शक्तिर्नरस्य न जायते इत्यत आह—देहसत्त्वेत्यादि। हर्षो लिङ्गोद्गमहेतुस्तु देहबलसत्त्वबलोभयापेक्षी, न हि केवलदेहबलाद् भवति न वा केवलमनोबलाद्भवति। शक्तिश्च मैथुनशक्तिर्लिङ्गोद्गमाक्रमादिरूपा हर्षजा, स च हर्षो न धातूनां शुक्रस्य वा क्षयाद्भवति सति च मनोबले देहबलाभावात्। भयाच्चाविश्रम्भादिभ्यश्च हर्षो न भवति सत्यपि देहबले मनोबलाभावात् ॥ २२ ॥

गङ्गाधरः—ननु तर्हि किं शुक्रं शरीरे मनसि च वर्त्तते इत्यत आह—रस इक्षावित्यादि। ननु तर्हि किं इक्ष्वादिषु सर्व्वदेहेषु रसादिवत् सर्व्वदेहेषु शुक्रं

वृद्धस्य तु जन्तुजग्धत्वादिदृष्टान्तेन न विनष्टस्य पुनर्भावं शुक्रस्य तथाऽभूयिष्ठतां दर्शयति। ननु तृप्तस्य शरीरबलं भवत्येव, तत् किं तृप्तस्य स्त्रियो गन्तुमसामर्थ्यमित्याह—देहेत्यादि। एतेन सत्यपि तृप्तिजनितबले क्षयादिना देहमनसोरुपहतत्वाद् हर्षो न भवति, हर्षाभावाद् व्यवायशक्तिर्न भवतीत्युक्तं भवति ॥ १७—२२ ॥

चक्रपाणिः—सम्प्रति, सम्भवति शुक्रं यथा देहे, स्थितं यथा च प्रवर्त्तते, तदाह—रस

* अविचारात् इति पाठश्च दृश्यते।

तत् स्त्रीपुरुषसंयोगे चेष्टासंकल्पपीड़नात् ।
शुक्रं प्रच्यवते स्थानाज्जलमार्द्रात् पटादिव ॥ २४ ॥
हर्षात् सरत्वात् * सौक्ष्म्याच्च पैच्छिल्याद् गौरवादपि ।
अनुप्रवनभावाच्च † द्रुतत्वान्मारुतस्य च ॥

वर्त्तते इत्यत आह—संस्पर्शने। देहे संस्पर्शनं त्वक् विशेषत उपस्थं तत्र सर्व्वत्र शुक्रमनुगतं मनश्च त्वक्समवायिव्यापकश्च भवतीति ॥ २३ ॥

गङ्गाधरः—ननु त्वग्गतं शुक्रं कथं प्रच्यवते मैथुनान्न चान्यत इत्यत आह—तदित्यादि। तत् त्वग्गतं शुक्रं स्त्रीपुरुषसंयोगे सति तयोर्द्वयोश्चेष्टया शरीरदोलायितत्वादिव्यापारेण सङ्कल्पेन मनसोऽप्यत्युत्साहरमणवासनादिकर्म्मणः पीड़नात् शुक्राधिष्ठानस्पर्शनात् देहस्थत्वक् विशेषतोऽप्युपस्थं योनिशेफसी तेषां पीड़नात् निपीड़नात् स्थानात् स्वस्थानात् शुक्रं प्रच्यवते। आर्द्रात् पटाज्जलमिव। यथार्द्रवस्त्रस्थं जलं पीड़ककरादिव्यापारेण वस्त्रस्य पीड़नात् तद्वस्त्राज्जलं प्रच्यवते तथेत्यर्थः। सुश्रुतेऽप्युक्तम्। "तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद् वायुरुदीरयति। ततः तदुदीर्णं तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रपद्यते" इति ॥ २४ ॥

गङ्गाधरः—ननु शरीरचेष्टामनःसङ्कल्पाभ्यां पीड़नात् धात्वन्तरं न कथं प्रच्यवते इत्यत आह—हर्षादित्यादि। हर्षादिति मनसो रत्युद्दीपननिमित्तमोदात् अनुप्लवनं प्रचलनम्, तदनुप्लवनभावाच्चेति हर्षस्य मनःस्थितत्वात् सरत्वादयो द्रुतत्वान्ताः षड्धर्म्माः शुक्रस्य नैसर्गिकाः। मारुतस्य च द्रुतत्वादित्यन्वयाः स्त्रीपुरुषसंयोगे शरीरचेष्टामनःसङ्कल्पपाभ्यां मारुतस्य द्रुतत्वात् द्रुतगमनशीलत्वात् संस्पर्शनयोनिलिङ्गसंघर्षणकुचोपमर्द्दनचुम्बनादितः संहर्षात् सरत्वादिषड़्गुणं

इत्यादि। इक्ष्वादिदृष्टान्तत्रयेण अनतिप्रयत्नाल्पप्रयत्नमहाप्रयत्नप्रवाह्यशुक्रान् पुरुषान् यथाक्रमं दर्शयति। संस्पर्शन इति संस्पर्शनवति, तेन केशादौ संस्पर्शनाव्याप्तेः शुक्रमपि नास्तीति दर्शयति। स्त्रीपुरुषसंयोगो मिश्रीभावः। चेष्टा व्यवायचेष्टा, सङ्कल्पो योषिदनुरागः। पीड़नं नारीपुरुषयोः परस्परसंमूर्च्छनम्। अत्र च नारीपुरुषसंयोगः प्रधानं कारणम्। तत्सहकारीणि चेष्टादीनि। आर्द्रपटदृष्टान्तेनाश्रयानुपघातेन शुक्रस्रवणं दर्शयति ॥ २३।२४ ॥

चक्रपाणिः—अपरमपि शुक्रप्रवृत्तिहेतुमाह—हर्षादित्यादि। हर्षः सङ्कल्पपूर्व्वकशुक्रोद्रेकध्वजोच्छ्रायादिकारीच्छा, तर्षो वनिताभिलाषः। सरत्वमस्थैर्य्यम्। अणुप्रवणभावोऽणुत्वे सति वहि-

* हर्षात् तर्षात् सरत्वात् इति कुत्रचित् पठ्यते।    † अणुप्रवणभावाच्चेति वा पाठः।

अष्टभ्य एभ्यो हेतुभ्यः शुक्रं देहात् प्रसिच्यते।
चरतो विश्वरूपस्य रूपं द्रव्यं * यदुच्यते॥ २५॥
बहलं मधुरं स्निग्धमविस्रं गुरु पिच्छिलम्।
शुक्रं च बहु यच्छुक्रं फलवत् तदसंशयम्॥ २६॥
येन नारीषु सामर्थ्यं वाजिवल्लभते नरः।
व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत्॥ २७॥

शुक्रं तद्व्यायामजद्रुतवायुना द्रवीभूतं कृत्वा खधः प्रतिक्षेपात् सरत्वादिगुणैः समुदितेभ्य एभ्यो हेतुभ्यो देहात् शुक्रं प्रसिच्यते इति भावः। अपत्य-जनकत्वे शुक्रस्य स्वरूपलिङ्गमाह—चरत इत्यादि। शरीरे चरतस्तु विश्वरूपस्य पञ्चभूतोपाधिप्रत्यगात्मन एव यद् रूपं या मूर्त्तिः यद् द्रव्यं तद्द्रव्यमयं शुक्रम्। प्रजा हि विश्वमुच्यते चेतनत्वात् सर्व्ववेदाधिकरणत्वात् कर्म्मपुरुषत्वात्, घटादिकन्तु न विश्वमचेतनत्वाद् वेदानधिकरणत्वादकर्म्मकत्वाच्च॥ २५॥

गङ्गाधरः—ननु कुतस्तद् विश्वरूपं प्रजाहेतुत्वात् न हि सर्व्वं शुक्रं प्रजनयतीत्यत आह—बहलमित्यादि। बहलं सान्द्रम् अविस्रमनामगन्धि शुक्रं श्वेतवर्णं बहु नाल्पं तत् शुक्रमसंशयं फलवदपत्यकरमित्यर्थः॥ २६॥

गङ्गाधरः—ननु वाजीकरणं नाम किमर्थमित्यत आह—येनेत्यादि। सामर्थ्यं व्यवायार्थम्। अधिकमिति कालतो वारतो नारीतश्च वेगबलतश्चाधिकम्

निर्गमनस्वभावम्। द्रुतत्वान्मारुतस्य चेति शुक्रप्रेरकस्य वायोरभिद्रवणशीलत्वादित्यर्थः। एते यद्यपि हेतवस्तथापि प्राधान्यात् प्रथमप्रतिपादितस्त्रीपुरुषसंयोगादिरूपहेतूनां समष्टौ नैवाष्टौ गणिताः। चरत इति नानामानुषपश्वादिजातिषु भ्रमतः। विश्वरूपस्येत्यात्मनः। तथा ह्यात्मपर्य्यायेषूक्तम्,—"स विश्वकर्म्मा स च विश्वरूपः" इति। रूपद्रव्यमिति प्राक्तनकारणम्। एतेन अव्यक्तस्यात्मनो व्यक्तशरीरनिर्वृत्तौ शुक्रं हेतुरित्युक्तं भवति। शुक्रञ्चेह प्रकरणागतत्वेन उक्तम्। तेन आर्त्तवमप्यात्मनो रूपद्रव्यं ज्ञेयम्॥ २५॥

चक्रपाणिः—प्रशस्तशुक्रगुणानाह—बहलमित्यादि। वाजीकरणशब्दनिरुक्तिमाह—येनेत्यादि। व्रजेच्चाभ्यधिकमिति पुनःपुनः गच्छेत्। व्यज्यत इति वा पाठः। तत्रापि भूयोगमनेन नारीषु पुंस्त्वेन व्यज्यते। व्यज्यादिति पाठेऽपि स एवार्थो विद्वद्भिः सुचिन्तनीयः। अनेन

* रूपद्रव्यम् इति पाठान्तरम्।

मिति यद्यपि पूर्व्वमुक्तं वाजीवातिवलो येनेत्यादिना तेनात्र न पौनरुक्तयम्। अत्र वाजीकरणपदस्य निरुक्तयभिप्रायेणेदं हि वचनमिति। सुश्रुते च वाजीकरण-योगा अपरे यथा—तिलमाषविदारीणां शालीनां चूर्णमेव च। पौण्ड्रकेक्षुरसेनार्द्रं मर्द्दितं सैन्धवान्वितम्। वराहमेदसा युक्तं घृतेनोत्कारिकां पचेत्। तां भक्षयित्वा पुरुषो गच्छेत् तु प्रमदाः शतम्। १। वस्ताण्डसिद्धे पयसि भावयेदसकृत् तिलान्। शिशुमाररसैः पक्वाः शष्कुलीस्तैस्तिलैः कृताः। यः खादेत् स पुमान् गच्छेत् स्त्रीणां शतमपूर्व्ववत्। २। पिप्पलीलवणोपेतं वस्ताण्डं क्षीरसर्पिषा। साधितं भक्षयेद् यस्तु स गच्छेत् प्रमदाः शतम्। ३। पिप्पलीमाषशालीनां यवगोधूमयोस्तथा। चूर्णभागैः समैस्तैस्तु घृते पूपलिकां पचेत्। तां भक्षयित्वा पीत्वा तु शर्करामधुरं पयः। नरश्चटकवद् गच्छेद् दश वारान् निरन्तरम्। ४। चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम्। सर्पिर्मधुयुतं लीढ्वा दश स्त्रीरधिगच्छति। ५। एवमामलकं चूर्णं स्वरसेनैव भावितम्। शर्करामधुसर्पिर्भिर्युतं लीढ्वा पयः पिबेत्। एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति ।६। पिप्पलीलवणोपेते वस्ताण्डे घृतसाधिते। शिशुमारस्य वा खादेत् ते तु वाजीकरे भृशम्। ७। कुलीर-नक्रकूर्म्माणामण्डान्येवन्तु भक्षयेत्। ८। महिषर्षभवस्तानां पिबेच्छुक्राणि वा नरः। ९। अश्वत्थफलमूलत्वक्-शुङ्गासिद्धं पयो नरः। पीत्वा सशर्कराक्षौद्रं कुलिङ्ग इव हृष्यति। १०। विदारीमूलकल्कन्तु घृतेन पयसा नरः। उडुम्बर-समं पीत्वा वृद्धोऽपि तरुणायते। ११। माषाणां फलमेवन्तु संयुक्तं क्षौद्रसर्पिषा। अवलिह्य पयः पीत्वा तेन वाजीभवेन्नरः। १२। क्षीरपक्वांस्तु गोधूमानात्मगुप्ता-फलैः सह। शीतान् घृतयुतान् खादेत् ततः पश्चात् पयः पिबेत्। १३। नक्रमूषिक-मण्डूक-चटकाण्डकृतं घृतम्। पादाभ्यङ्गेन कुरुते बलं भूमिन्तु न स्पृशेत्। यावत् स्पृशति नो भूमिं तावद् गच्छेन्निरन्तरम्।१४। स्वयंगुप्ताक्षुरकयोः फलचूर्णं सशर्क-रम्। धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत्। १५। उच्चटाचूर्णमप्येवं क्षीरे-णोत्तममिष्यते। १६। शतावर्य्युच्चटामूलं पेयमेवं बलार्थिना। स्वयंगुप्ताफलैर्युक्तं माषयूषं पिबेन्नरः।१७। गुप्ताफलं गोक्षुरकाच्च वीजं तथोच्चटां गोपयसा विपाच्य। खजाहतं शर्करया च युक्तं पीत्वा नरो हृष्यति सर्व्वरात्रम्। १८। माषान् विदारीमपि सोच्चटाश्च क्षीरे गवां क्षौद्रघृतोपपन्नाम्। पीत्वा नरः शर्करया सुयुक्तां कुलिङ्गवद् हृष्यति सर्व्वरात्रम्। १९। गृष्टीनां वृद्धवत्सानां माषपर्णभृतां गवाम्। यत् क्षीरं तत् प्रशंसन्ति बलकामेषु जन्तुषु। क्षीरमांसगणः सर्व्वः काकोल्यादिश्च पूजितः। वाजीकरणहेतोर्हि तस्मात् तन्तु प्रयोजयेत्। एते

तत्र श्लोकौ।

हेतुर्योगोपदेशस्य योगा द्वादश चोत्तमाः।
यत् पूर्व्वं मैथुनात् सेव्यं सेव्यं यन्मैथुनादनु॥
यथा हि सेव्याः * प्रमदाः कृत्स्नः शुक्रविनिश्चयः।
निरुक्तञ्चेह निर्दिष्टं पुमान्जातबलादिके॥ २८॥

इति चिकित्सितस्थाने द्वितीयाध्याये पुमान्जातबलादिक-
वाजीकरणपादश्चतुर्थः।
इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
वाजीकरणं नाम द्वितीयोऽध्यायः॥ २॥

वाजीकरा योगाः प्रीत्यपत्यबलप्रदाः। भोज्या विशुद्धोपचित-देहैः कालाद्यपेक्षया। इति॥ २७॥

गङ्गाधरः—पादार्थमुपसंहरति—तत्र श्लोकावित्यादि। पुमान् यथा जातबल इत्यादिना हेतुर्योगोपदेशस्य। पिष्ट्वेत्यादिना सन्तर्पयेन्नर इत्यन्तेन द्वादश योगाः। यत्किञ्चिदित्यादि महार्पित इत्यन्तेन मैथुनात् पूर्व्वं यत् सेव्यम्। गत्वा स्नात्वेत्यादिना एकश्लोकेन मैथुनादनु यत् सेव्यम्। यथेत्यादिना हर्षजा इत्यन्तेन प्रमदा यथा सेव्याः। रस इत्यादिनाऽसंशयमित्यन्तेन कृत्स्नः शुक्रविनिश्चयः। येन नारीष्वित्यनेन वाजीकरणशब्दस्य निरुक्तम्॥ २८॥

गङ्गाधरः—पादं समापयति—इतीत्यादि। अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चिकित्सितस्थाने पुमानजातबलादिकवाजीकरणपादश्चतुर्थः।
समाप्तश्च द्वितीयोऽध्यायः॥ २॥

निरुक्तेन त्रिविधमपि वृष्यमवरुध्यते, यथा—शुक्रवृद्धिकरं माषादि, तथा स्रुतिकरं सङ्कल्पादि, तथा शुक्रस्रुतिवृद्धिकरं क्षीरादि। यदुक्तमन्यत्र—"शुक्रस्रुतिकरं किञ्चित् किञ्चिच्छुक्रविवर्द्धनम्। स्रुतिवृद्धिकरं किञ्चित् त्रिविधं वृष्यमुच्यते॥" त्रिविधमपि हीदं व्यावाये बलवत्त्वं पुनःपुनर्व्यवायशक्तिञ्च करोति॥ २६। २७॥

चक्रपाणिः—हेतुरित्यादि। संग्रहो व्यक्तः॥ २८॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां पुमान्जातबलादिक-वाजीकरणपादश्चतुर्थः॥ समाप्तश्च द्वितीयोऽध्यायः॥ २॥

* यथा न सेव्याः इति चक्रधृतः पाठः।

अथातो ज्वरचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

विज्वरं ज्वरसन्देहं पर्य्यपृच्छत् पुनर्व्वसुम् ।
विविक्ते शान्तमासीनमग्निवेशः कृताञ्जलिः ॥

गङ्गाधरः—अथ स्वस्थचिकित्सितव्याख्यानन्तरमतः स्वस्थस्योजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत् । द्विविधं भेषजं प्रोक्तम्; तत्र स्वस्थस्योजस्करं द्विविधं रसायनं वाजीकरणञ्च तदनेनाध्यायद्वयेनोक्त्वा व्याधितस्य व्याधिहरं भेषजस्य शेषत्वाद्धेतोः प्रथमं ज्वरचिकित्सितं व्याख्यायते—अथात इत्यादि । सर्व्वं पूर्व्ववत् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—आत्रेयस्य ज्वरचिकित्सिते त्विह प्रवचने संगतिं प्रश्नमाह—विज्वरमित्यादि । निदानस्थाने ज्वरशब्दस्य व्याधिसामान्यपर्य्यायत्वेनोक्तत्वादत्र विज्वरं शारीरमानसव्याधिभ्यो निर्म्मुक्तं पुनर्व्वसुं शान्तं सर्व्वतोनिवृत्तं जीवन्मुक्तमित्यर्थः, विविक्ते निर्ज्जने आसीनं गुरुं कृताञ्जलिः अग्निवेशः शिष्योत्तमो ज्वरसन्देहं ज्वरनाम्नो व्याधिविशेषस्य सन्देहं पर्य्यपृच्छत् । कं

चक्रपाणिः—स्वस्थोर्जस्करमभिधाय व्याधिनिर्घातकरचिकित्सितवक्तव्यत्वेन सर्व्वरोगप्रधानत्वेन ज्वरस्यैवादौ चिकित्सितमुच्यते, ज्वरस्य च यथा प्राधान्यम्, तथाऽत्रैव वक्ष्यति । ज्वरचिकित्सिताभिधायकाध्यायो ज्वरचिकित्सितमुच्यते, अभिधानाभिधेययोरभेदोपचारात्; एवमुत्तराध्यायेष्वपि व्याख्येयम् ॥ १ ॥

चक्रपाणिः—विज्वरमिति । 'विज्वर'शब्दो नीरोगोपदर्शकः, यतो 'ज्वरशब्देन चात्र गदसामान्ये रोगोऽभिमतः; नीरोगत्वेनेह रोगप्रशमनपृच्छां श्रुत्वा यतो गुरुर्ब्रवीति—"ज्वरो विकारो रोगश्च" इत्यादि । ज्वरसन्देहमिति ज्वरनिदानोक्तातिरिक्तज्वरधर्म्मविषयं सन्देहम् । विविक्त इत्यादिना एवं गुरवः प्रष्टव्या इति दर्शयति ।

देहेन्द्रियमनस्तापी सर्व्वरोगाग्रजो बली।
ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा॥
तस्य प्राणिसपत्नस्य ध्रुवस्य प्रलयोदये।
प्रकृतिश्च प्रवृत्तिश्च प्रभावं कारणानि च॥
पूर्व्वरूपमधिष्ठानं बलकालात्मलक्षणम्।
व्यासतो विधिभेदञ्च * पृथग् भिन्नस्य चाकृतिम्॥
लिङ्गमामस्य जीर्णस्य चौषधं सक्रियाक्रमम्।
विमुञ्चतः प्रशान्तस्य चिह्नं यच्च पृथक् पृथक्॥

ज्वरसन्देहं पप्रच्छत् तमाह—देहेन्द्रियेत्यादि। ननु भगवता त्वया पुरा निदानस्थाने ज्वरस्तु खलु महेश्वरकोपप्रभव इत्यादिना प्राणानादत्ते इत्यन्तेन समासतो रोगाणां प्रधानतया देहेन्द्रियमनस्तापितया सर्व्वरोगाग्रजतया बलितया च ज्वरो नाम व्याधिविशेष उक्तः। तस्येत्यादि। तस्य प्रोक्तलक्षणस्य ज्वरस्य प्राणिसपत्नस्य प्राणिशत्रोः प्राणिनां प्रलयोदये मरणे च जन्मनि च ध्रुवस्य निश्चितस्य प्रकृतिं समवायिकारणम्, प्रवृत्तिं प्रथमतः प्रकाशविस्तारम्, प्रभावम् अचिन्त्यक्रियां, कारणानि अभिव्यक्तिहेतून्, अधिष्ठानमाश्रयमधिकरणमिति यावत्, बलस्य कालश्चात्मलक्षणं स्वरूपलक्षणम्, व्यासतो विस्तरतो विधिभेदं प्रकारभेदं, पृथक् भिन्नस्य विस्तारतः प्रकारैर्भिन्नस्य तस्य ज्वरस्य पृथक् प्रकारभेदेन आकृतिं लक्षणम्, आमस्य तस्य लिङ्गं जीर्णस्य च तस्य लिङ्गम्, आमस्य तस्यौषधं जीर्णस्य च तस्यौषधम्; अत्र जीर्णवचनेन विषमाणाञ्च संग्रहः, क्रियाक्रमं ययानुपूर्व्या येन क्रमेण या क्रिया तं ततः क्रियाक्रमं विमुञ्चतः।

चक्रपाणिः—देहेन्द्रियमनस्तापीत्यादि हेतुगर्भं ज्वरप्रधानत्वे विशेषणम्, केचिद् देहमात्रतापिनो-ऽर्ब्बुदादयः, केचिन्मनस्तापिन एवास्मित्वाभिनिवेशादयः, केचिदिन्द्रियतापिन एव तिमिरादयः, अयन्तु त्रितयतापी, वक्ष्यति हि—"ज्वरेणाविशता भूतं न हि किञ्चिन्न तप्यते" तत्र शरीरतापित्वं सन्तापादिना, मनइन्द्रियतापित्वञ्च 'वैचित्त्यम्' इत्यादिना वक्ष्यति; सर्व्वरोगाग्रज इति शारीर-सर्व्वरोगाग्रजः; मानसास्तु रोगा ज्वरादेः प्रागवस्थिता एव सत्ययुगादावपि। बलित्वञ्चास्य भूरिविकारकर्त्तृत्वात्। प्रधानत्वञ्च देहमनस्तापित्वादिधर्म्मयोगात्। प्राणिसपत्नस्येति मारकत्वेन

* विधिभेदाञ्च इति पाठान्तरम्।

ज्वरावसृष्टो रक्ष्यश्च यावत्कालं यतो यतः ।
प्रशान्तः कारणैर्यैश्च पुनरावर्त्तते ज्वरः ॥
याश्चापि पुनरावृत्तं क्रियाः प्रशमयन्ति तम् ।
जगद्धितार्थं तत् सर्व्वं भगवन् वक्तुमर्हसि ॥ २ ॥
तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
ज्वराधिकारे यद् वाच्यं तत् सौम्य निखिलं शृणु ॥ ३ ॥
ज्वरो विकारो रोगश्च व्याधिरातङ्क एव च ।
एकार्थनामपर्य्यायैर्विविधैरभिधीयते ॥ ४ ॥

स्याग कुर्व्वतः । तस्य चिह्नं प्रशान्तस्य च तस्य चिह्नम् । ज्वरावसृष्टो ज्वरान्मुक्तः पुरुषो यतो यतो भावात् यावत्कालं रक्ष्यः पालयितव्यः । प्रशान्तश्च ज्वरो यैः कारणैः पुनरावर्त्तते । प्रशान्तं पुनरावृत्तं तं ज्वरं याश्च क्रियाः प्रशमयन्ति । गुरुः पुनर्व्वसुः । सौम्य हे सोमार्ह ॥ २ । ३ ॥

गङ्गाधरः—ज्वर इत्यादि । सामान्यरोगपर्य्यायः । तस्य निखिलस्य

प्राणिशत्रोः । ध्रुवस्येत्यवश्यम्भाविनः । प्रलयोदये मरणे जन्मनि । अत्र च तमोरूपो ज्वरो ज्ञेयः । वक्ष्यति हि "ज्वरप्रभावो जन्मादौ निधने च महत्तमः" इति । प्रकृत्यादयः समस्ताध्याय-व्याकरणीया यथावसरं व्याख्येयाः । बलञ्च कालश्चात्मलक्षणञ्चेति बलकालात्मलक्षणम् इति द्वन्द्वः । व्यासतो विधिभेदाच्चेति प्रपञ्चेन विधितेदात् । यत इति येभ्यो व्यवायादिभ्यो रक्ष्यः, द्वितीयो 'यतः'शब्दो येन हेतुना रक्षणीय इत्यर्थः । 'जगद्धितार्थम्' इत्यनेन, यच्च श्रुत्वा जगद्धितं चिकित्साप्रवर्त्तनं करिष्यामीत्यग्निवेशः कारुणिकतां शिष्यगुणेपूपादेयामात्मनो दर्शयति ॥ २ । ३ ॥

चक्रपाणिः—ज्वरो विकार इत्यादिर्निर्द्देशग्रन्थः । ज्वरो विकार इत्यादिप्रश्नग्रन्थसूचितस्यापि पर्य्यायकथनं वृत्तमेव, तथापि पुनः प्रकरणवशादभिधानमिति न पुनरुक्तिदोष इति ब्रुवते, किंवा ज्वरस्यैवाधिकृतस्यैतत् पर्य्यायकथनम् । विकारादयश्च यद्यपि सामान्येन रोगाभिधायिनः तथापि प्रकरणाज्ज्वर एव विशिष्टे व्याध्यौ ते । तस्मिंश्च व्याख्याने ज्वरादिपर्य्यायाभिधेयरूपा विकृतिः ज्वरो विकारः इत्यादिना उच्यते इति नापि पुनरुक्तिशङ्का । 'नाम'शब्दः प्रकाशने, तेन एकोऽर्थो नाम ज्वरलक्षणो रोगलक्षणो वा पर्य्यायैरुच्यत इत्यर्थः । पर्य्याया एकार्थाभिधायिनो भिन्नजातीयाः शब्दाः, किंवा नामपर्य्यायैरिति नामरूपैः पर्य्यायैर्व्यवह्रियमाणैः पर्य्यायैरित्यर्थः ; यतः पर्य्यायो

**तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः।**
**देहिनं न हि निर्दोषं ज्वरः समुपसेवते ॥ ५ ॥**

व्याधेर्ज्वरादेः प्रकृतिरुद्दिष्टा श्लोकस्थाने महारोगाध्याये—द्विविधा पुनः प्रकृतिरेषामागन्तुनिजविभागादिति। तत्र संक्षेपेणोक्ताः पुनः शारीरदोषा मानसदोषाश्चेति विस्तरेण प्रकारान्तरेण चेति। अतस्तेनैव ज्वरस्य रोगविशेषस्यापि प्रकृतिरुक्ता या विक्रियमाणा यद् रूपान्तरमापद्यते तस्य सा प्रकृतिरित्यर्थः। ज्वराख्यस्य व्याधिविशेषस्य शारीरदोषा मानसदोषाः प्रकृतिरुद्दिष्टा। द्विविधा पुनः प्रकृतिरेषा।

ननु आगन्तुनिजविभागादिति यदुक्तं तदनेन विरुध्यते इति चेन्न, तत्र शारीरव्याध्यभिप्रायेणागन्तुनिजविभागात् इत्युक्तत्वात्।

ननु ज्वरस्याप्यागन्तुजत्वमस्ति तस्य प्रकृतिस्त्वनेन लभ्यते इति चेन्नात्र शारीरपदेन शारीरागन्त्वाद्यभिघातजादेर्मानसपदेन मानसागन्तोः कामशोकजादेः संग्रहात्। आगन्तुर्हि व्यथापूर्व्वोऽष्टमो ज्वरो भवति स किञ्चित् कालमागन्तुः केवलो भूत्वा पश्चान्निजैर्दोषैरनुबध्यते, तस्मात् तत् किञ्चित् कालमागन्तुजानां कैवल्यं भेदमकिञ्चित्करं मत्वा शारीरत्वं स्वीकृतम्। न च यः किञ्चित्कालमागन्तुः केवलो वर्त्तते तत्काले क्रियाकरणे न सम्पद्यते चेत् तथापि तदुत्तरकालं दोषसम्बन्धोऽपि न दोषोचिता तत्र क्रिया कार्य्या स्यात्। परन्तु भूताभिचारादुपचिता क्रिया कार्य्या तत् कथमकिञ्चित्करं तत् कैवल्यं भवतीति, वाच्यं, सति ह्येवं भूताभिचारादनुगतलक्षणत्वेऽपि शारीरमानसदोषाणामागन्तौ तत्तदागन्तुजनकादृष्टविशेषेण फलोन्मुखेनागन्तुव्याध्युत्पत्तेः पूर्व्वमेव प्रकोपितत्वं मन्तव्यम्। ननु कस्मात् तन्मन्तव्यमित्यत आह—देहिनं न हीत्यादि। हि यस्मात् निर्दोषं देहिनं ज्वरो व्याधिः कोऽपि न समुपसेवते, तस्मादागन्तोरप्युत्पत्तेः पूर्व्वमागन्तुहेत्वदृष्टविशेषेण शारीरमानसदोषदुष्टिः अवश्यमन्तव्या भवति।

व्यवह्रियमाणोऽपि भवति, यथा आयुषि नित्यगानुबन्धशब्दरूपो पर्य्यायावुक्तौ। 'प्रकृति'-शब्देनेह स्वभावः। तथा यत्कारणमयं कार्य्यं भवति, तदुच्यते। तत्र प्रत्यासन्नकारणरूपां प्रकृतिमाह—तस्येत्यादि। उद्दिष्टेति संक्षेपाभिहिता। दोषाणां ज्वरप्रकृतित्वे हेतुमाह—देहिनमित्यादि। सर्व्वदोषाव्यभिचारात् ज्वरस्य दोषप्रकृतित्वं सिद्धमिति भावः। 'देहि'शब्देन शरीरवान् पुरुषोऽभिप्रेतः, न केवलम् आत्मा, तस्य निर्व्विकारत्वात्; 'समुपसेवते' इति भाषया भूतविशेषस्वरूपस्य

**क्षयस्तमो ज्वरः पाप्मा मृत्युश्चोक्तोऽयमात्मजः * ।**
**कर्म्मभिः क्लिश्यमानानां पञ्चत्वप्रत्ययान्नृणाम् ॥ ६ ॥**

नन्वेवमस्तु महारोगाध्यायेऽपि रोगप्रकृतिर्मानसदोषो नोक्तस्ततोऽपि विरुध्यते इति ;चेन्न, तत्र हि निजशब्देन सत्त्वशरीरदोषसंग्रहोऽभिप्रेतः। ननु तर्हि त्रिसूत्रैषणीये कथं त्रयो रोगा इति निजागन्तुमानसा इत्युक्तमिति चेन्न, तत्र तथैवोक्त्वा पुनर्विवृतं स्वयमेव तत्र निजः शरीरदोषसमुत्थ इत्यादिना। तस्यायमभिप्रायः निजपदेन मानसरोगलाभाशङ्कया पुनरुक्तिप्रसङ्गा-शङ्कानिरास इति ; आचार्य्याणां हीयं रीतिः शिष्याणां विविधविशिष्टज्ञानार्थं विविधवर्त्मना प्रयोगं दर्शयतीति ॥ ४ । ५ ॥

गङ्गाधरः—ननु आगन्तुरोगोत्पत्तेः पूर्व्वकाले तदागन्तुरोगानुबन्धक-दोषकोपकादृष्टपरिणामः कुतो लभ्यते इत्यतो ज्वरपर्य्यायमाह—क्षय इत्यादि। यद्यपि ज्वरस्य पर्य्याया न पृष्टास्तथापि निदानस्थाने तत्र व्याधिरामय इत्यादिपर्य्यायैर्य्यावान् व्याधिरुक्तस्तावद्व्याधिव्यवच्छेदार्थं व्याधिविशेषस्य ज्वरेतिनाम्नः पर्य्याय उच्यते। क्वचित् सामान्यवाचिशब्दो विशेषेऽपि वर्त्तते, यथा तृणशब्दस्तृणजातौ तृणविशेषे कत्तृणे च वर्त्तते। न तु निखिलव्याधेरेवकप्रकृतिलख्यापनार्थं पुनरयं व्याधिपर्य्याय उक्तः। वेदविद्भिः ज्वरोऽयं व्याधिः क्षयः क्षयकर उक्तः तमोऽप्युक्तः पाप्मा चोक्तः मृत्युर्मृत्यु-हेतुरुक्तः आत्मजः स्वयंकृतदुष्कर्म्मजनिताधर्म्मजत्वादुक्तः, सुतरां पाप्मा पाप-सम्भवादिति कस्मादुक्त इत्यत आह—कर्म्मभिरित्यादि। नृणां कर्म्मभिः स्वकृतकर्म्मजाधर्म्मैरेव क्लिश्यमानानां नानाविधदुःखलक्षणव्याधिभिरेव क्लेशम्

ज्वरस्यावेशं दर्शयति। विग्रहश्च ज्वरस्य स्वतन्त्रे वक्तव्य एव, 'ज्वरस्त्रिपादस्त्रिशिराः" इत्यादिनोक्तः ॥ ४ । ५ ॥

चक्रपाणिः—स्वभावरूपां ज्वरप्रकृतिमाह—क्षय इत्यादि। देहक्षयहेतुत्वात् क्षयः, मोह-कर्त्तृत्वात् तमः, पापनिर्व्वर्त्तत्वात् पाप्मा, मृत्युकारणत्वात् मृत्युर्ज्वर एवोच्यते। अत्र च 'उक्ताः' इति, तथा 'यमात्मकाः' इति बहुवचनमेकस्मिन्नर्थे ज्वरे क्षयकर्त्तृत्वादिधर्म्मभेदविवक्षया ज्ञेयम्। यमात्मका इति यमस्वरूपाः, यमो हि यथा मारकः, तथामी मारका इत्यतो यमात्मका इत्यर्थः ; किंवा यमात्मजा इति पाठः ; अत्रापि यमपुत्रत्वेन पितृसमानक्रियाकर्त्तृत्वमुच्यते। किञ्च क्षयादयः स्वनामप्रसिद्धा यमस्वरूपा भिन्ना एव ज्वरात्, इह ज्वरस्य तु यमात्मकत्वाभिधानप्रसङ्गात् तेऽप्युच्यन्ते। अस्मिन् व्याख्याने 'मृत्यु'शब्देन मृत्युसूचकं रिष्टमुच्यते ; यतः, मृत्युरेव न

* मृत्युश्चोक्ता यमात्मकाः इति पाठान्तरम्।

इत्यस्य प्रकृतिः प्रोक्ता प्रवृत्तिस्तु परिग्रहः *।
निदाने पूर्व्वमुद्दिष्टा रुद्रकोपात् सुदारुणात् ॥ ७ ॥
द्वितीये हि युगे सर्व्वमक्रोधव्रतमास्थितम्।
दिव्यं सहस्रं वर्षाणामसुरा अभिदुद्रुवुः ॥
तपोविघ्नं शमीकर्त्तुं † तपोविघ्नं महात्मनाम्।
पश्यन् समर्थश्चोपेक्षां चक्रे रुद्रः प्रजापतिः ॥

आपद्यमानानामेव पञ्चत्वप्रत्ययात् मृत्युदर्शनात्। स्वकर्म्मकृताधर्म्मं विना न क्लेशः, क्लेशं विना च न मृत्युरिति तत्त्वं ख्यापितमिति ॥ ६ ॥

गङ्गाधरः—इत्यस्येति ज्वराख्यस्य व्याधेः। प्रवृत्तिस्तस्य ज्वराख्यव्याधेः परिग्रहः आद्यप्रकाशः। सा निदाने ज्वरस्तु खलु महेश्वरकोपप्रभव इत्यनेन सुदारुणात् रुद्रकोपाद् पूर्व्वमुद्दिष्टा संक्षेपेणोक्ता ॥ ७ ॥

गङ्गाधरः—ननु विस्तरेण कथमित्यत आह—द्वितीये हीत्यादि। हि यस्मात्। द्वितीये युगे त्रेतायां सर्व्वं महेश्वरमक्रोधं व्रतं शान्तिनियमव्रतम्। असुरास्तदा तपोविघ्नं यथा स्यात् तथाभिदुद्रुवुरभिद्रवं चक्रुः। रुद्रः प्रजापतिः महात्मनां देवदेवर्षिब्रह्मर्षिसिद्धादीनां तैरसुरैः क्रियमाणं तपोविघ्नं पश्यन् शमीकर्त्तुं समर्थश्च समर्थोऽप्युपेक्षां चक्रे तपोविघ्नं न शमीचकार, अक्रोधव्रतास्थित-

मृत्युकरो भवति। दमात्मकत्वे हेतुमाह—'पञ्चत्वप्रत्ययान्नृणां क्लिश्यतां स्वेन कर्म्मणा' इति। एतेन यथा यमः स्वकर्म्मक्लिश्यमानानां प्राणिनां पञ्चत्वे हेतुर्भवति, तथा क्षयादयोऽपि प्राक्तनकर्म्मणा क्लिश्यमानान् मारयन्तीत्यर्थः। पञ्चत्वप्रत्यया इति वा पाठः, तत्रापि स एवार्थो ज्ञेयः ॥ ६ ॥

चक्रपाणिः—क्रमागतां प्रवृत्तिमाह—प्रवृत्तिस्त्वित्यादि। प्रवृत्तिः प्रथमाविर्भावः। परिग्रहादिति जनपदोद्ध्वंसनीये "भ्रश्यति तु कृतयुगे" इत्यादिना परिग्रहात् ज्वरादिप्रवृत्तिमुक्तां स्मारयति। तथा रुद्रकोपात् सुदारुणाद् या प्रवृत्तिर्ज्वरस्य, सा निदाने पूर्व्वमुद्दिष्टा,—"ज्वरस्तु खलु महेश्वरकोपप्रभवः" इति ग्रन्थेन निदाने सङ्क्षेपेणोक्तेत्यर्थः। 'पूर्व्वम्' इतिपदेन, रुद्रकोपप्रभवा प्रथमा, परिग्रहप्रभवा तु द्वितीया प्रवृत्तिरिति दर्शयति ॥ ७ ॥

चक्रपाणिः—यतश्च परिग्रहभवत्वं विस्तरोक्तम्, रुद्रकोपभवत्वञ्च सङ्क्षेपोक्तम्; अतः रुद्रकोपोद्भवत्वमेव विवृणोति—द्वितीय इत्यादि। विना क्रोधं चर्य्यते यत्, तदक्रोधम्।

* परिग्रहात् इति पाठान्तरम्। † तपोविघ्नाशनान् कर्त्तुं इति चक्रसम्मतः पाठः।

पुनर्माहेश्वरं भागं ध्रुवं दक्षः प्रजापतिः ।
प्रायो न कल्पयामास प्रोच्यमानः सुरैरपि ॥
पाशुपत्य ऋचो याश्च शैव्यश्चाहुतयश्च याः ।
यज्ञसिद्धिकृत-*-स्ताभिर्हीनञ्चैव स इष्टवान् ॥
अथोत्तीर्णव्रतो देवो बुद्धा दक्षव्यतिक्रमम् ।
रुद्रो रौद्रं पुरस्कृत्य भावमात्मविदात्मनः ॥
स्पृष्ट्वा ललाटे नयनं दग्ध्वा तानसुरान् प्रभुः ।
बालं क्रोधाग्निसन्दीप्तमसृजत् शत्रुनाशनम् † ॥
ततो यज्ञः स विध्वस्तो व्यथिताश्च दिवौकसः ।
दाहव्यथापरीताश्च भ्रान्ता भूतगणा दिशः ॥

स्यात् तपोविघ्नशमीकरणे क्रोधसम्भवेन व्रतभङ्गः स्यात् । ततः परं पुनर्दक्षः प्रजापतिर्यज्ञे ध्रुवं वेदैः कृतनिश्चितं माहेश्वरं शिवस्य भागं प्रायो न कल्पयामास । पाशुपतीभिर्ऋग्भिस्ताः शैवीराहुतीर्न महेश्वराय ददौ ।

ननु तदथ देवाः किं किमपि नोचुरित्यत आह—प्रोच्यमान इत्यादि । ननु कथं यज्ञसिद्धिः कृता इत्यत आह—पाशुपत्य इत्यादि । यज्ञसिद्धिकृतो यज्ञसिद्धिकारिण्य ऋचस्ताभिः शैवीभिर्ऋग्भिराहुतिभिश्च हीनमेव यथा स्यात् तथा । स दक्षः प्रजापतिरिष्टवान् यज्ञं कारितवान् । अथेत्यादि । अथानन्तरं देवो रुद्रो महेश्वरः । आत्मवित् प्रभुः उत्तीर्णव्रतः अक्रोधव्रतादुत्तीर्णः सन् दक्षव्यतिक्रमं पाशुपतीभिर्ऋग्भिः शैवाहुतिदानाकरणं बुद्धात्मनः स्वस्य रौद्रमुग्रं भावं पुरस्कृत्य ललाटे नयनं स्पृष्ट्वा तांस्तपोविघ्नकरान् अभिद्रवकारकानसुरांस्तल्ललाटनयनाग्निना दग्ध्वा क्रोधाग्निसन्दीप्तं बालमसृजद् वीरभद्रम् । ततस्तस्मादेव देवदेवरुद्रात् क्रोधाग्निसन्दीप्तात्

तपोविघ्नाशनास्तपोविघ्नोपजीविनः, ध्रुवमित्यवश्यदेयम् । सत्वनाशनमिति यज्ञनाशनम् । शैव

* यज्ञसिद्धिप्रदाः इति वा पाठः । † सत्वनाशनम् इति च पाठः ।

अथेश्वरं देवगणाः सह सप्तर्षिभिर्विभुम् ।
वाग्भिः स्तुवन् स्थितो यावच्छैवे भावे शिवः स्थितः ॥८॥
शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ।
क्रोधाग्निरुक्तवान् देवमहं किं करवाणि ते ॥ ९ ॥
तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि ।
जन्मादौ निधने च त्वमपि चावान्तरेषु च * ॥

बालात् स दक्षस्य पाशुपतीभिर्ऋग्भिः शैवीभिराहुतिभिश्च हीनतया क्रियमाणो यज्ञो विध्वस्तो विनष्टः । दिवौकसश्च सर्व्वे देवा व्यथिताः । भूतगणाः प्राणिनः दाहव्यथापरीता दिशो भ्रान्ता दिग्भ्रान्ताश्च बभूवुः । अथेत्यादि । अथानन्तरं सप्तर्षिभिः सह देवगणस्तमीश्वरं विभुं रुद्रम् ऋग्भिः पाशुपतीभिस्तावत् स्तुवन् सन् स्थितो यावत् शिवः शैवे भावे शान्तभावे अक्रोधभावे स्थितो बभूव ॥ ८ ॥

गङ्गाधरः—शिवमित्यादि । ततो भूतानां शिवाय शैवे भावे स्थितं शिवं ज्ञात्वा कृताञ्जलिः सन् क्रोधाग्निर्बालो वीरभद्रो देवं शिवमुक्तवानहं ते तव किं करवाणि ॥ ९ ॥

गङ्गाधरः—तमित्यादि । तं क्रोधं क्रोधाग्निरूपं बालमीश्वरः शिव उवाच । त्वं लोके ज्वरो भविष्यसि । ननु कस्यामवस्थायां ज्वरोऽहं भवितास्मीत्यत आह—जन्मादावित्यादि । निधने च मरणकालेऽपि अवान्तरेषु च जीवत्कालेऽपि । इति ज्वरस्य प्रवृत्तिरुक्ता । अथ प्रश्नानुक्रमिकत्वादस्य ज्वरस्य प्रभावम्

इति कल्याणकरे । अपचारान्तरेष्विति ज्वरनिदानसेवासु । अत्र च सत्ययुगेऽपि जन्ममरणयोः मोहरूपज्वरस्य विद्यमानत्वात् द्वितीययुगेऽपि जन्ममरणयोर्भवनमपि न ज्वरस्यानुपपन्नम् । तेन अत्र जन्मादौ निधने च व्यवस्थितः ; स इदानीमपचारान्तरेषु भविष्यसीति योजनीयम् । किंवा सत्ययुगे च जन्ममरणयोर्मोहरूपज्वरो निष्कल्मषाणां पुरुषाणां नासीदेवेति मन्तव्यम् । कल्याणकरस्वरूपस्यापि शिवस्य प्राणिपीड़ाकरज्वरविसर्गः प्राणिनामेवाधर्म्मप्रभावादवश्यमुपभोग्यां

* त्वमपचारान्तरेषु च इति पाठान्तरम् । इतः परमयमधिकः श्लोकः क्वचित्,—"त्रिपाद्भस्मप्रहरणस्त्रिशिरा नवलोचनः । ज्वालामालाकुलो रौद्रो ह्रस्वजङ्घोदरः क्रमात् ॥" इति ।

सन्तापः सारुचिस्तृष्णा साङ्गमर्दो हृदि व्यथा।
ज्वरप्रभावो जन्मादौ निधने च महत् तमः॥ १०॥
प्रकृतिश्च प्रवृत्तिश्च प्रभावश्च प्रदर्शितः।
निदाने कारणान्यष्टौ पूर्व्वोक्तानि विभागशः॥ ११॥

आह—सन्ताप इत्यादि। जातस्य जीवितकाले सन्तापादिपञ्चको ज्वरप्रभावः स्वाभाविकाः ज्वरस्य कर्म्माणि सन्तापादयो भवन्ति। जन्मादौ जन्ममात्रं बालस्य निधने मरणकाले च महत् तमो महामोहः स्यात्। निदानेऽप्युक्तं सर्व्वे प्राणभृतश्च सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते स महामोहः तेनाभिभूताः प्राग्दैहिकं देहिनः कथञ्चित् किञ्चिदपि न स्मरन्ति सर्व्वप्राणिनां ज्वर एवान्ते प्राणानादत्ते इति महत् तमो देहान्तरप्राप्तिं विना तद्देहे पुनर्भवे पूर्व्वार्थविस्मरणम् अवान्तर-कालेषु च ज्वरप्रभाववातिकादिभेदेन यानि यानि लिङ्गानि वाच्यानि तानि तान्येवेत्यतो नात्रोपदिष्टानि॥ १०॥

गङ्गाधरः—उपसंहरति—प्रकृतिरित्यादि। अथ ज्वरस्य कारणं वक्तु-मर्हसीति प्रश्नोत्तरमाह—निदाने इत्यादि। निदानस्थाने अथ खल्वष्टभ्यः कारणेभ्यो ज्वरः संजायते नृणां, तद् यथा वातात् पित्तात् कफाद् वातपित्ताभ्यां वातकफाभ्यां पित्तश्लेष्मभ्यां वातपित्तश्लेष्मभ्य आगन्तोरष्टमात् कारणादिति

पीड़ां सृजतीति मन्तव्यम्। सन्ताप इत्यादिना प्रभावमाह। प्रभावश्चानौपाधिका शक्तिरुच्यते। सन्तापादीनां प्रभावव्यपदेशः; यतश्चायं रोगप्रभावः, ततः, वातश्लेष्मकृतेऽपि ज्वरेऽनुष्णरूपस्तापो भवति, तथा जन्मादौ निधने च महत्तमोरूपत्वं ज्वरप्रभाव इत्यर्थः। प्रकृतिश्चेत्यादिना प्रकरण-संग्रहं करोति। 'इत्यस्य प्रकृतिः प्रोक्ता' इत्यनेन प्रस्तावसंग्रहः कृतः। अध्यायान्ते त्वध्यायार्थ-संग्रहं करिष्यति। एतच्च पुनःपुनः संग्रहकरणं तन्त्रधर्म्मत्वात् प्रशिष्यबुद्धिसमाधानार्थं कृतं ज्ञेयम्। निदान इत्यादिना कारणमाह—अष्टौ कारणानीति रूक्षादयस्त्रयो ज्वरारम्भक-वातादिकर्त्तृत्वेनोक्ताः, तथा 'यथोक्तानां हेतूनां मिश्रीभावात्' इत्यादिना तु द्वन्द्वानां सन्निपातस्य च कारणमुक्तम्, तथा आगन्तूनां कारणं तत्र कण्ठरवेणैवोक्तम्। अन्ये तु वातादीनेव ज्वरा-रम्भकसम्प्राप्तिप्राप्तान् "इह खल्वाष्टाभ्यः कारणेभ्यो ज्वरः सञ्जातः" इत्यादिग्रन्थेन निदानोक्तानि 'कारणानि' इतिपदेन ग्राहयन्ति, 'प्रकृति'शब्देन तु बीजभूता अव्यवहितसम्बद्धा दोषा गृह्यन्ते। रूक्षादयस्तु दोषप्रकोपकारणभूता न ज्वरकारणानीति वदन्ति; तस्मिन् पक्षे रूक्षादीनां ज्वरे हेतुभूतानामिहाग्रहणं स्यात्, रूक्षादीनान्तु ज्वरे हेतुत्वं दोषप्रकोपावान्तरव्यापारत्वेन भवत्येव, यथा—योगस्य स्वर्गकर्त्तृत्वोक्तम्। द्विविधञ्च कारणं रोगाणाम्—व्यवहितं रूक्षादि, प्रत्यासन्नञ्च

आलस्यं नयने सास्रे जृम्भणं गौरवं क्लमः।
ज्वलनातपवाय्वम्बु भक्तिद्वेषावनिश्चितौ ॥
अविपाकास्यवैरस्यं हानिश्च बलवर्णयोः।
शीलवैकृतमल्पश्च ज्वरलक्षणमग्रजम् ॥ १२ ॥
केवलं समनस्कञ्च ज्वराधिष्ठानमुच्यते।
शरीरं बलकालस्तु निदाने सम्प्रदर्शितः ॥ १३ ॥

विभागशोऽष्टौ ज्वरस्य कारणानि अव्यवहितपूर्व्ववर्त्तीनि यानि पूर्व्वोक्तानि तान्यत्रापि ज्वरस्य कारणानि नान्यानि सन्ति ॥ ११ ॥

गङ्गाधरः—अथ पूर्व्वरूपं ज्वरस्य वक्तुमर्हसीति प्रश्नोत्तरमाह—आलस्यमित्यादि। यद्यपि निदानस्थाने मुखवैरस्यमित्यादीनि पूर्व्वरूपाण्युक्तानि तथाप्यत्र शिष्यव्यवसायार्थं पद्येन पुनः पूर्व्वरूपाण्युक्तानीति न पुनरुक्तदोषः। उक्तं हि निदाने "पूर्व्वोक्तो यः पुनः श्लोकैरर्थः समुपगीयते। तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गह्यते ॥" इति ॥ १२ ॥

गङ्गाधरः—अथ ज्वरस्याधिष्ठानं वक्तुमर्हसीति प्रश्नोत्तरमाह—केवलमित्यादि। केवलं कृत्स्नं समनस्कञ्च शरीरं ज्वराधिष्ठानम्। वातादिदोषजदण्डाद्यभिघातादिजज्वराणामधिष्ठानं केवलं शरीरम्, कामशोकभयादिजज्वराणामधिष्ठानं समनस्कं शरीरमुच्यते। अन्यबलकाललक्षणं वक्तुमर्हसीति प्रश्नोत्तरमाह—बलकालश्चेत्यादि। निदानस्थाने बलकालविशेषः पुनर्व्याधीनामूर्ध्वहोरात्राहारकालविधिविनियतो भवतीत्यनेन संप्रदर्शितः ॥ १३ ॥

दोषा इति शास्त्रसिद्धान्त एव; 'निदाने' इति पदेनैव पूर्व्वत्वे लब्धे 'पूर्व्वोक्तानि' इति पदमिह वक्तव्यज्वरनिदानव्युदासार्थम् ॥ ८—११ ॥

चक्रपाणिः—यद्यपि निदानेऽपि पूर्व्वरूपाण्युक्तानि तथापीह प्रकरणवशाद् यानि प्रायः प्रादुर्भवन्ति तानि पठ्यन्ते। आलस्यमित्यादि। केवलमिति कृत्स्नम्, तेन बाह्येन्द्रियाणामप्यवरोधः; अनेन देहमनसी अप्यवश्यं ज्वरेण ताप्येते इत्युक्तम्। बलस्याभिवृद्धिलक्षणस्य ज्वराभ्यागमनलक्षणस्य वा कालो बलकालः, स च निदाने "दिवसान्ते घर्म्मान्ते जरणान्ते वा ज्वरागमनमभिवृद्धिर्वा" इत्येवम्प्रकारग्रन्थेनोक्तः ॥ १२। १३ ॥

ज्वरप्रात्यात्मिकं लिङ्गं सन्तापो देहमानसः।
ज्वरेणाविशता भूतं न हि किञ्चिन्न तप्यते॥ १४॥

गङ्गाधरः—अथास्य लक्षणं ज्वरस्य वक्तुमर्हसीति प्रश्नोत्तरमाह—ज्वर इत्यादि। आत्मा आत्मा इति प्रत्यात्मं तस्येदं प्रात्यात्मिकम्। प्रतिज्वरं यल्लिङ्गं सर्व्वत्र देहमानसः सन्तापः ज्वरस्यात्मलक्षणमित्यर्थः। ननु देहमानसः सन्तापो व्यभिचरतीत्यत आह—ज्वरेणेत्यादि। भूतं प्राणिनमाविशता ज्वरेण हि यस्मात् प्राणिनः किं मनःप्रभृतिकं किञ्चिन्न तप्यते तन्न अपि तु सर्व्वमेव शरीरं मनश्च तप्यत इति। तस्माद् देहमानसः सन्तापः सर्व्वत्रैव बोध्यः। विस्तरेण निदानस्थाने ज्वरस्त्वेक एव सन्तापलक्षण इत्यत्र व्याख्यातम्॥ १४॥

चक्रपाणिः—ज्वरप्रत्यात्मिकं लिङ्गमित्यादिना आत्मलक्षणमाह। आत्मलिङ्गम् इत्यव्यभिचारि-लक्षणम्। इह 'सन्ताप' शब्देन, सामान्येन पीड़ा वक्तव्या, सा च देहविशेषणाभिधानात् तापलक्षणैव भवति, मनसि तु तथा चेन्द्रियेषु देहगुणहीनेषु वैचित्त्यादिरूपा "वैचित्त्यम्" इत्यादिग्रन्थवक्तव्या ज्ञेया। ज्वरप्रभावे सन्तापोऽचिन्त्यकार्य्यतयोक्तः। इह तु ज्वराव्यभि-चारित्वेनेति विशेषः। अन्ये तु, अरुच्यादियुक्तः सन्तापः प्रभावो भवति, अरुच्यादिरहितः स्वात्मलक्षणं भवतीति वर्णयन्ति। सन्तापस्य प्रत्यात्मलक्षणत्वे हेतुमाह—ज्वरेणेत्यादि। 'भूत' शब्देन सर्व्वप्राणिन उच्यन्ते; ततश्च ज्वरेण भूतमाविशता न किञ्चिन्मनुष्यादि न तप्यते किन्तु तप्यत एव। ततो ज्वराव्यभिचारितया ज्वरलक्षणमेव तदुपपन्नमिति भावः। अत्र पक्ष गजादिष्वपि 'कूटपाकलादि'शब्दाभिधेयेषु ज्वरेष्वन्तर्दाहरूपा वेदना भवतीति ज्ञेयम्। किंवा अत्र देहसन्तापमनःसन्तापौ मिलितौ वा पर्य्यायेण वा ज्वरात्मलिङ्गं भवेताम्। न तावत् पर्य्यायेण, तथा हि सति क्वचिज्ज्वरे देहसन्तापः क्वचिज्ज्वरे मनःसन्ताप एव भवतीति वाच्यम्, ततश्चानयोर्व्यभिचारान्नाव्यभिचारिलिङ्गत्वम्। तस्मान्मिलितावेव देहमनःसन्तापावात्मलक्षणं ज्वरस्येति वाच्यम्। एवं व्यवस्थिते कस्मात् सर्व्वज्वरेषु देहमनस्तापौ भवत इत्याह—ज्वरेणेत्यादि। ज्वरेण भूतमाविशता न हि किञ्चिच्छरीरं मनो वा न तप्यते, किन्तु तप्यत एव, अतो देहमनस्तापः सर्व्वज्वरेषूपपन्न इत्यर्थः। अस्मिंश्च पक्षे शारीरमानसज्वरभेदोपदर्शने "शारीरो जायते पूर्व्वं देहे" इत्यादिना शारीरस्य यद् देहमात्राश्रयत्वं मानसस्य यन्मनोमात्राश्रयत्वं वक्तव्यं तत् सूक्ष्मकालाभिप्रायेण, तस्मिंश्च सूक्ष्मकाले ज्वर उभयतापकोऽप्यनन्तरोत्पद्य-मानोभयतापित्वधर्म्मापेक्षया भवत्येव देहमनस्तापी, यथा प्रथमक्षणोत्पन्नं द्रव्यं निर्गुणम्, अनन्तरोत्पद्यमानं सगुणं द्रव्यमुक्तं द्रव्यलक्षणे॥ १४॥

द्विविधो विधिभेदेन ज्वरः शारीरमानसः।
पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव च॥
अन्तर्व्वेगो वहिर्व्वेगो द्विविधः पुनरुच्यते।
प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च॥
पुनः पञ्चविधो दृष्टो दोषकालबलाबलात्।
सन्ततः सततोऽन्येद्यु स्तृतीयकचतुर्थकौ॥

गङ्गाधरः—अथ ज्वरस्य व्यासतो विधिभेदश्च वक्तुमर्हसीति प्रश्नोत्तरमाह—द्विविध इत्यादि। निदानस्थाने ज्वरस्त्वेकविध एवेत्यादिना यो यो विधिभेद उक्तस्ततो विवरणविधिभेदत्वात् शारीरमानस इत्यादिविधिभेदो न विरुध्यते। अत्र मानसः समनस्कशारीरो न तु मानसदोषमात्रजाः कामक्रोधादयः परन्तु शोकादिज इति। तथा कुत्र च एक एव खलु देहमानसः सन्तापलक्षणो ज्वरः शीताभिप्रायो दाहज्वरः, उष्माभिप्रायः शीतज्वर इति द्विविधो निजश्चागन्तुजश्चेति द्विविधश्च। तत्र पुनर्निजं द्विविधमुवाच तस्येदं विवरणं शारीरं निजं मानसञ्च निजमिति द्विविधं, सौम्यमाग्नेयञ्च शारीरमिति द्विविधम्, अन्तर्व्वेगो वहिर्व्वेगश्चेति द्विविधश्च, प्राकृतं शारीरं वैकृतञ्च शारीरमिति द्विविधं, साध्यञ्च शारीरमसाध्यञ्च शारीरमिति द्विविधम्। एवमागन्तुजोऽपि शारीरो दण्डादभिघातादिजः शोकादिजस्तु मानसशारीरः। कामशोकादिजश्च वातानुवन्धत्वात् सौम्य आगन्तुजः। क्रोधादिजश्चाग्नेय आगन्तुजः पित्तानुवन्धत्वात्। तथान्तर्व्वेगो वहिर्व्वेगश्च। तथा प्राकृतो वैकृतश्च। तथा साध्यश्चासाध्यश्चेति। त्रिविधं निजं ज्वरं तत्र विधृतवानहमग्रे एकदोषजद्विदोषजत्रिदोषजभेदात्। चतुर्व्विधश्च ज्वरं तत्र विवृतवानहं साध्यासाध्यमृदुदारुणभेदात् सुखसाध्यकृच्छ्रसाध्ययाप्यासाध्यप्रत्याख्येयभेदाच्च। पुनर्दोषबलेन कालबलात् दोषाबलेन कालाबलाच्च भेदात् पञ्चविधो ज्वरो

चक्रपाणिः—द्विविध इत्यादिना विधिभेदमाह। एते च भेदा विवरणे व्यक्ता भवन्ति। सौम्य इति शीतकारणारम्भत्वेन सोमदेवताकः। आग्नेयोऽप्युष्णकारणारम्भत्वेनाग्निदेवताकः। पुनः पञ्चविधो दृष्ट इत्यत्र न पञ्चविधेन भेदेन सर्व्वज्वरव्याप्तिः; यतः प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वर इति च वक्ष्यति। ततश्च केवलवातादिज्वराणां न सन्ततादिभेदेन ग्रहणम्, तथा सन्ततादीनां कालनियमो वक्तव्यः। ततश्च ये कालानियताः ते सन्ततादिभिन्ना एव। तस्माद

पुनराश्रयभेदेन धातूनां सप्तधा मतः ।
भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः ॥ १५ ॥
शारीरो जायते पूर्व्वं देहे मनसि मानसः ॥
वैचित्त्यमरतिर्ग्लानिर्मनसस्तापलक्षणम् ।
इन्द्रियाणाञ्च वैकृत्यं देहे सन्तापलक्षणम् ॥ १६ ॥

दृष्टः । किं पञ्चविधं इत्यत आह—सन्तत इत्यादिनामकः । पुनश्चाश्रयभेदेन रसादिसप्तधातुगतत्वेन सप्तविधः । पुनः कारणभेदेन वातपित्तकफ-वातपित्त-वातकफ-पित्तकफ-सन्निपातागन्तुभेदात् अष्टविधो ज्वरः । तत्र निजः सप्तविधः आगन्तुज एकविध आगन्तुसामान्यात् ॥ १५ ॥

गङ्गाधरः—ननु देहमानससन्तापलक्षणो ज्वर उक्तस्तस्य शारीरत्वमानसत्वे को भेद इत्याकाङ्क्षायां कृतस्य पृथग् भिन्नस्य चाकृतिं वक्तुमर्हसीत्यस्य प्रश्नस्य उत्तरं वक्तुं शारीरमानसज्वरलक्षणमाह—शारीर इत्यादि । ज्वरो देह-

दोषकालबलाबलात् ये ज्वरा भवन्ति, ते पञ्चविधा एवेति वाक्यार्थः । दोषकालबलाबलादिति दोषकृतात् कालबलाबलात् । कालबलाबले ज्वरकालप्रकर्षाप्रकर्षौ । तत्र सन्तते ज्वरे बलवता दोषेण सप्ताहादिप्रकृष्टत्वाद् बलवान् कालो नियम्यते, सततके तु सन्ततकालापेक्षया हीनबलेन दोषेण अबलो ज्वरकालः ; स ह्यहोरात्रे द्विकालेनात्र व्यापको भवति । तथा अयमेव सततज्वरकालो हीनबलकालान्येद्युष्कापेक्षया बलवान् भवति । एवमन्येद्युष्कादिज्वरकालोऽपि व्याख्येयः । किंवा, दोषकालो दुष्टिकालः ज्वरकाल इत्यर्थः, अस्य बलाबलात् प्रकर्षाप्रकर्षादित्यर्थः । कालप्रकर्षाप्रकर्षनियमाश्च व्याख्याता एव । अन्ये तु दोषश्च कालश्च दोषकालौ, तयोर्बलाबलादिति वदन्ति । तत्र दोषबलात् कालबलाच्च सन्ततो भवति, यदुक्तम्—"कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम्" इत्यादिना दोषकालबलञ्च विवरणग्रन्थेनोक्तम्, तथा दोषस्याबलत्वञ्च सप्रत्यनीकतया सततकादिषु भवति, तथा ज्वरवेगविगमे च सततकादौ कालस्याबलत्वं भवति । अत्र पक्षे दोषकालबलाबलाभ्यां सर्व्वज्वरा व्याप्यन्ते । ततश्च सन्ततादिपञ्चज्वरनियमो दुर्घटः स्यात् । अन्ये तु व्युत्क्रमाभिधानेन 'दोषबलाबलकालात्' इति कृत्वा व्याख्यानयन्ति ; एतच्चाशब्दं व्याख्यानम् । तृतीयकचतुर्थकाविति समासनिर्द्देशेन तृतीयकचतुर्थकयोरागन्त्वनुबन्धत्वादिसाधारणधर्म्मयोगितां दर्शयति ॥ १५

चक्रपाणिः—"पृथगभिन्नस्य चाकृतिम्" इति प्रश्नस्य क्रमागतमुत्तरं शारीर इत्यादि । पूर्व्वमितिवचनादुत्तरकालं शारीरो ज्वरो मनस्यपि भवति, एवं मनस्युत्पादानन्तरं देहेऽपि

मानससन्तापलक्षणः सन्नपि यः पूर्व्वं देहे जायते स शारीरः, यस्तु पूर्व्वं मनसि जायते स मानस इति भेदः। तथा च शोकादिजो ज्वरः पूर्व्वं मनसि भूत्वा पश्चान्निजैर्दोषैरनुबन्धो हि शारीरो भवति। वातादिजो दण्डाद्यभिघातादिजश्च पूर्व्वं देहे भूत्वा पश्चान्मानसदोषैरनुबन्धो मानसं सन्तापं जनयतीति समनस्कं कृत्स्नं शरीरं ज्वरस्याधिष्ठानमुक्तं न तु प्रत्येकमिति। ननु किं किं मनसः सन्तापज्ञाने लक्षणमित्यत आह—वैचित्त्यमित्यादि। वैचित्त्यमन्यविपर्यचिन्ताकुलत्वं मनसः, अरतिर्मनसोऽनवस्थितत्वम्, ग्लानिरहर्षः, तैरनुमीयते मनःसन्तापः। इति त्रयं मनःसन्तापस्य लक्षणमनुमानकरणमित्यर्थः। ननु चेन्द्रियदेहसन्तापलक्षणं किमित्यत आह—इन्द्रियाणाञ्च इत्यादि। इन्द्रियाणां वैकृत्यं विकृतत्वमिन्द्रियसन्तापलक्षणं श्रवणदर्शनस्पर्शनस्वादनाघ्राणगमनादानमेहनोत्सर्गवाचां शब्दादिध्वानाध्वानाश्रवणादि पीतशुक्लादिदर्शनादर्शनादि स्पर्शसुखेन सुखं स्पर्शासुखेनासुखमित्यादि स्वाद्वास्वादुतादि शुभाशुभगन्धान्यथात्वादि इत्येवमादिभिर्वैकृतैरनुमीयते श्रोत्रादीन्द्रियाणां सन्तापः, एवं देहे वैकृतत्वं कृशत्वस्तम्भत्वोष्णत्वशीतत्वादिकं देहे सन्तापलक्षणम्। तैरनुमीयते देहे सन्ताप इति देहेन्द्रियसन्तापः शारीरो ज्वरः। पूर्व्वं देहे देहेन्द्रियेषु जायते देहेन्द्रियाणां समुदायो हि देह उच्यते। ननु तर्हि कथमिन्द्रियाणां देहस्य च पृथक् सन्तापलक्षणमुच्यते निदानस्थाने देहेन्द्रियमनस्तापकरः इत्युक्तं, प्रश्नश्च देहेन्द्रियमनस्तापीति, तथा ज्वरस्य चात्मलक्षणं वक्तुमर्हसीतिप्रश्नोत्तरे तु सन्तापो देहमानस इत्युक्तमतो विरोधाशङ्का सम्भवति तन्निरासार्थमिन्द्रियाणां सन्तापलक्षणमाह—इन्द्रियाणाञ्चेत्यादि। इन्द्रियाणां वैकृत्यमिन्द्रिये देहे च वैकृत्यं देहे च सन्तापलक्षणं देहसन्तापेन्द्रियसन्तापो मनःसन्तापलक्षणञ्चोपदर्शितमेतत्त्रिकः एकः शारीरो ज्वरः ख्यापित इति भावः॥ १६॥

भवतीति ज्ञेयम्। एवञ्च यद्यपि सर्व्वज्वराणां देहमनोऽधिष्ठानत्वम्, तथापि यो देहाश्रयी प्रथमं शरीरदोषेण बलवता प्रारब्धः स्यात्, स तद्दोषचिकित्सयैव चिकित्स्यः, एवं मानसोऽपि मानसदोषचिकित्सयैव चिकित्स्य इति दर्शयितुं शारीरमानसभेदोपदर्शनं साधु। ननु शारीरस्य ज्वरस्य सन्तापलक्षणं व्यक्तम्, मानसस्य तु ज्वरस्य कथं सन्तापः यत् तस्य लक्षणं भवतीत्याह—वैचित्त्यम् इत्यादि। वैचित्त्यादयो 'मानससन्ताप'शब्देनोच्यन्ते, 'ताप'शब्दस्य 'पीड़ा'वचनत्वादित्यर्थः। मनस्तापप्रस्तावेन, 'देहेन्द्रियमनस्तापी' इत्यत्र य इन्द्रियतापो ज्वरस्योक्तः, स च व्याचक्ष्यते—इन्द्रियाणाञ्चेत्यादि। वैकृत्यमिति स्वभावान्यथात्वम्, तच्चार्थाग्रहणाद्यनुमेयम्॥ १६॥

वातपित्तात्मकः शीतमुष्णं वातकफात्मकः।
इच्छत्युभयमेतत् तु ज्वरो व्यामिश्रलक्षणः॥ १७॥

गङ्गाधरः—सौम्याग्नेयत्वभेदेन द्विधा तु ज्वरस्य यदुक्तं तयोराग्नेयः शीतेच्छया सौम्य उष्णेच्छया ज्ञेयः किं शीतभवः सौम्य उष्णभव आग्नेय इत्युभयथापि यदीष्टः स्यात् तदा वातात्मकः शीतभव उष्णमिच्छत्याग्नेयश्च पित्तात्मक उष्णभव शीतमिच्छतीति सौम्यश्च कफात्मकः शीतभवत्वेन उष्णमिच्छतीति भवतु वातपित्ताद्यात्मकास्तु के इत्यतः सौम्याग्नेयज्वरं भाष्येण लक्षणेन च विवरीतुमाह—वातपित्तेत्यादि। वातात्मकादीनामुक्तरूपेण सुगमत्वात् सौम्याग्नेयत्वं नोपदर्श्य वातपित्तात्मकादेः सौम्यत्वं किम् औष्ण्यत्वमिति सन्देहः स्यात् तत्राह—वातपित्तात्मकः ज्वर उष्णभवत्वेन शीतमिच्छतीति न सौम्यः, कारणत आग्नेयः। एवं वातकफात्मकस्तु ज्वरः शीतभवत्वेन सौम्य उष्णमिच्छतीति नाग्नेयः, कारणतः सौम्य इति। व्यामिश्रलक्षणः पित्तकफात्मकः सन्निपातात्मकश्च एतदुभयं शीतोष्णं द्वयमेवेच्छतीति सौम्याग्नेय उच्यते न त्वधिकः प्रत्येकतो हि भेदो न समुदायस्य, यथा नपुंसकस्य द्विरेतस्त्वं न तु शुक्रशोणिताभ्यामधिकमस्य किञ्चिद् रेतोऽस्तीति॥ १७॥

चक्रपाणिः—सौम्याग्नेयभेदयोः प्रतिलोमव्याख्याक्रमेण विवरणम्—वातपित्तात्मक इत्यादि। वातपित्तात्मक इति वातपित्तकारणकः। अत्र च केवलवातारब्धः, तथा केवलकफारब्धश्च शीतस्वभावकारणतया सौम्येनोष्णमिच्छति, तथा वातकफात्मकोऽप्युपलभ्यते। तथा केवलपित्तात्मकोऽपि आग्नेयत्वादनुष्णाभिप्राय इति वक्तव्यम्। तेन इदानीं वातपित्तात्मकः शीतेन वातेन पित्तेन चोष्णेन कृतः, तस्य दुरुपपन्नायामाग्नेयतायां ब्रूते—वातपित्तात्मक इति। एवंव्यवस्थितवातपित्तज्वरे चेद् वायुः संयोगमहिम्ना विपरीतानुकारी दृष्टः, तत् कफसंयुक्तोऽपि वायुः किं विपरीतमर्थं करोतीत्याशङ्क्याह—उष्णं वातकफात्मक इति। वातकफात्मको विशेषेणोष्णमिच्छतीत्यर्थः। व्यामिश्रलक्षण इति उक्तव्यामिश्रदोषलक्षणज्वरव्यतिरिक्तः कफपैत्तिकः सान्निपातिकश्च, स चोष्णशीताभिप्रायतया सौम्याग्नेयज्वरद्वयातिरिक्त एव ज्वरः, यथा—अङ्गुलीद्वयव्यतिरिक्तं द्व्यङ्गुलम्; एवं शारीरमानसमिश्रीभावेऽपि चिन्तनीयम्। ज्वर इच्छतीति वचनं ज्वरयुक्तपुरुषेच्छया ज्वरे उपचाराज् ज्ञेयम्॥ १७॥

योगवाहः परं वायुः संयोगादुभयार्थकृत्।
दाहकृत् तेजसा युक्तः शीतकृत् सोमसंश्रयात् ॥ १८ ॥
अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः।
सन्ध्यस्थिशूलमस्वेदो दोषवर्च्चोविनिग्रहः ॥
अन्तर्व्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ॥
सन्तापोऽभ्यधिको वाह्यस्तृष्णादीनाञ्च मार्द्दवम्।
वहिर्व्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥ १९ ॥

गङ्गाधरः—ननु रूक्षः शीत इत्यादिना वायुः शीत उक्तस्तत् कथं वातपित्तात्मकः शीतमिच्छेद् वातकफात्मकस्तृष्णामिच्छेदित्यत आह—योगवाह इत्यादि। योगं येन सह वायोः संयोगस्तस्य गुणानुरूपेण गुणं वहतीति योगवाहस्तस्मात् संयोगात् उभयार्थकृत् दाहशीतोभयकृत् सम्भवति। तद् भाष्येण विवृणोति—दाहकृदित्यादि। वहिश्चरोऽपि वायुरनुभूयते तेजसा यदा युक्तो वाति तदा उष्णकृत् सोमसंश्रयात् जलादि-सोम्यभावेन यदा युक्तो वाति तदा शीतकृदिति। तथान्तश्चरोऽपीति भावः। एषां लक्षणानि अष्टविधत्वविवरणेन वाच्यानीत्यतोऽत्र नोक्तानि ॥ १८ ॥

गङ्गाधरः—अथान्तर्वहिर्व्वेगयोर्लक्षणान्याह—अन्तर्दाह इत्यादि। अधिकोऽन्तः शरीराभ्यन्तरे दाहः। दोषाणां पित्तादीनां वर्च्चसश्च। तेषां विनिग्रहोऽप्रवृत्तिः। मूत्रस्य तु अप्रवृत्तिर्न प्रतिषिद्धा। अत ऊर्द्ध्वं वहिर्व्वेगस्य सुखसाध्यत्ववचनादस्य कष्टसाध्यत्वं स्थापितम्। सन्ताप इत्यादिना वहिर्व्वेगस्य लक्षणम्। वाह्यः सन्ताप उत्तापोऽत्यधिकस्तृष्णादीनाम्

चक्रपाणिः—वातपित्तज्वरे शीताभिप्रायतामुपपादयितुं वायोर्योगवाहितामाह—योगवाह इत्यादि। योगाद् योगिनो गुणं वहतीति योगवाहः। परमत्यर्थम्। संयोगादिति उष्णेन शीतेन च संयोगात्। उभयार्थकृदिति यथासंख्यमिह उष्णशीतार्थकारी। एतदेव विभजते—दाहकृत्-इत्यादि। 'पित्तेन' इति वक्तव्ये यत् 'तेजसा' इति करोति, तेन वाह्येनाप्यातपादिना युक्तो वायुर्दाहं करोतीति लोकप्रसिद्धमर्थं दृष्टान्तार्थं सूचयति। शीतकारित्वन्तु वायोः शीतत्वेनैव यत् सिद्धं, तत् सोमरूपककफपानीयादियोगाद् विशेषेण भवतीति ज्ञेयम्। अन्तर्दाह इत्यादिना अन्तर्व्वेग-वहिर्व्वेगविवरणम् ॥ १८। १९ ॥

**प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः ।**
**कालप्रकृतिमुद्दिश्य प्रोच्यते प्राकृतो ज्वरः ॥ २० ॥**
**उष्णामुष्णेन संवृद्धं पित्तं शरदि कुप्यति ।**
**चितः शीते कफश्चैवं वसन्ते समुदीर्य्यते ॥**

अन्तर्व्वेगोक्तानां तृष्णाप्रलापश्वसनभ्रमसन्ध्यस्थिशूलास्वेददोषवर्च्चोविनिग्रहाणां मार्द्दवमल्पत्वम् । सुखसाध्यत्वमेव चेत्यनेनान्तर्व्वेगस्य दुःखसाध्यत्वमिति ख्यापितम् ॥ १९ ॥

गङ्गाधरः—क्रमिकत्वात् प्राकृतो वैकृतश्चैवेति यो द्विविधज्वर उक्तस्तद् द्वयं भाष्येण विवृणोति—प्राकृत इत्यादि । सुखसाध्यस्तु प्राकृतो वसन्तशरदुद्भवो निखिलो व्याधिः । ननु तत्र कथं वसन्तशरदुद्भवो ज्वरः स्यादित्यत आह—कालप्रकृतिमुद्दिश्य प्राकृतो ज्वरोऽत्र प्रोच्यते ॥ २० ॥

गङ्गाधरः—ननु कथं ज्वरो निर्द्दिष्टव्यो भवतीत्यत आह—उष्णमित्यादि । पित्तमुष्णं पूर्व्वं वर्षासु संवृद्धं सञ्चितमुष्णेनोष्णेनाहारेण च संवृद्धं शरदि प्रकुप्यति । कफश्च शीतः शीते तु काले कालस्य शीतस्वभावेन शीताहारेण च चितः सञ्चितः सन वसन्ते सूर्य्यसन्तापेन विलयनात् समुदीर्य्यते प्रकुप्यति ।

चक्रपाणिः—प्राकृत इत्यादिना प्रकरणेन प्राकृतवैकृतविवरणम् । तत्रह कालस्वभावप्रकुपितदोषः प्रकृतिरुच्यते, तज्जातीयाच्च दोषादुद्भूतो ज्वरः प्राकृत उच्यते । यद् वक्ष्यति—"कालप्रकृतिमुद्दिश्य निर्द्दिष्टः प्राकृतो ज्वरः" इति । एवमपि वर्षाकालप्रकृतिभूतेन कृतो ज्वरः प्राकृतः स्यादिति । तन्निषेधायाह—"सुखसाध्यस्तु वसन्तशरदुद्भवः" इति । तु-शब्दो अवधारणे । तेन य एव सुखसाध्यः वसन्तशरदुद्भवः प्राकृतः, स एवेह 'प्राकृत'शब्देनोच्यत इत्यर्थः । वर्षाकालभववातिकस्तु न सुखसाध्य इति, तेन नासौ प्राकृत उच्यते । प्राकृतवैकृतसंज्ञाव्यवहारो हि यथाक्रमं सुखसाध्यासाध्यबोधप्रयोजनकः । तद् यदि कृच्छ्रेऽपि वातजे प्राकृतत्वं स्यात्, तदा किं प्राकृतव्यवहारेण ? यतश्च वसन्तशरदुद्भवावेव प्राकृतौ, तेन तयोरेव 'उष्णम्' इत्यादिना ग्रन्थेन विवरणं प्रपञ्चेन करिष्यति न वातिकस्येति ; अतार्थे जतूकर्णे—"सौम्याग्नेयौ उष्णशीतकामौ, जीर्णस्त्रयोदशे दिवसे, वसन्तशरदोः प्राकृतोऽन्यत्र वैकृतः" इति । यद्यपि वसन्तजः पूर्व्वमुक्तः, तथापि प्रतिलोमव्याख्यया 'उष्णम्' इत्यादिना शरदुद्भवं निर्द्दिशति । उष्णं पित्तं चितं वर्षासु शरदुदीर्णेनातपेन कुप्यतीति विज्ञेयम् । शीत इति हेमन्ते । उष्णमित्यादिना निर्द्दिष्टस्य । वर्षास्वित्यादि भाष्यम् ।

वर्षास्वम्लविपाकाभिरद्भिरोषधिभिस्तथा।
सञ्चितं पित्तमुद्रिक्तं * शरद्यादित्यतेजसा॥
ज्वरं संजनयत्याशु तस्य चानुबलः कफः।
प्रकृत्यैव विसर्गाच्च † तत्र नानशनाद् भयम्॥
अद्भिरोषधिभिश्चैव मधुराभिश्चितः कफः।
हेमन्ते सूर्य्यसन्तप्तः स वसन्ते प्रकुप्यति॥

ननु कथं पूर्व्वं संवृद्धं पित्तं ज्वरयतीत्यत आह—वर्षास्वित्यादि। वर्षासु भूवाष्पादिना कालस्वभावेन अम्लविपाकाभिरद्भिः तथाम्लविपाकाभिरोषधिभिराहारद्रव्यजातिभिः उष्णादुष्णं पित्तं सञ्चितं भवत् शरदि आदित्यतेजसा उष्णेन सामान्यादुद्रिक्तं कुपितं सत् आशु ज्वरं संजनयति, तस्य चानुबलोऽनुबन्धरूपो भवति कफः। कालस्वभावात् वायोः प्रशान्तत्वात् कफस्य च चयारम्भात् कफ एवानुबध्यते न तु वायुरित्यर्थः। नन्वित्थं शरदुद्भवः प्राकृतः पैत्तिको ज्वरः कथं सुखसाध्य इत्यत आह—प्रकृत्यैवेत्यादि। तत्र शरदि प्राकृते ज्वरे प्रकृत्या ज्वरारम्भकयोः पित्तकफयोः द्रवस्वभावेन शरद ऋतोर्विसर्गाच्च सोमस्याव्याहतबलेन प्राणिनामुपचितबलतयाप्यायमानत्वाच्च। अनशनाल्लङ्घनान्न भयं कफपित्तहरणौषधेषु श्रेष्ठतमत्वाल्लङ्घनस्य यथेष्टविधेयत्वेन सुखेनैव शरदुद्भवः प्राकृतज्वरः साध्यते इति भावः।

ननु वसन्तोद्भवः कफज्वरश्च कथं सुखसाध्यः स्यादित्यत आह—अद्भिरित्यादि। हेमन्ते शीते मधुराभिर्मधुरपाकाभिर्मधुररसाभिश्चाद्भिस्तथा रसे पाके

ननु यदि वर्षास्वम्लविपाकित्वं सर्व्वासामोषधीनाम्, तदा प्रतिद्रव्याभिहितविपाकस्याव्यवस्था स्यात् तस्य कालवशेनाम्लत्वदर्शनात्; मैवम्, यथानिष्ठापाकेन यन्मधुरं द्रव्यं तद् यथा आवस्थिकेन पाकेनाम्लं भवति, यदुक्तं "परन्तु पच्यमानस्य विदग्धस्याम्लभावता" इत्यादिना, तथेहापि कालमहिम्नाम्लविपाकित्वमपि भविष्यति। एवं हेमन्ते यन्मधुरपाकित्वमोषधीनाम्, तत्रापि व्याख्येयम्। अन्ये तु वर्षासु वह्निमान्द्याद् विदाहनिमित्तमोषधीनामम्लविपाकित्वमिति ब्रुवते; यदुक्तं "वर्षासु विदहत्यन्नं तथा सर्व्वमेवाम्लं प्रायो ह्यस्य विदह्यते" इति; एवमपि तैर्हेमन्तेन मधुरपाकित्वमुक्तमेव। तस्मात् कालमहिम्नैव पाकान्तरमोषधीनां साधु। आश्विति। पित्तस्याशुकारित्वाच्छीघ्रं जनयति। अनुबल इति अनुबन्धनरूपः कफो भवति। एवं ज्वरस्य लङ्घनीयतामाह—प्रकृत्यैवेत्यादि। विसर्गस्य प्रकृत्येति विसर्गरूपकालजया प्रकृत्या सौम्यादिरूपयानशनाद्

* उत्क्लिष्टमिति वा पाठः। † विसर्गस्य इति पाठान्तरम्।

तस्माद् वसन्ते कफजो ज्वरः समुपजायते ।
आदानमध्ये तस्यापि वातपित्तं भवेदनु ॥
आदावन्ते च मध्ये च ज्ञात्वा दोषबलाबलम् ।
शरद्वसन्तयोर्विद्वान् ज्वरस्य प्रतिकारयेत् ॥ २१ ॥

च मधुराभिरोषधिभिः नवान्नादिभिश्चितः सञ्चितः कफः स वसन्ते सूर्य्यसन्तप्तः सूर्य्यतापेन घृतवत् विलायितः सन् प्रकुप्यति। ततः प्रसरणात् तस्य तद्रूपेण वसन्ते कफकोपादादानमध्ये वसन्ते कफजो ज्वरः समुपजायते। वसन्तो ह्यादानमध्यम ऋतुः सूर्य्यकरसहस्रेण प्राणिनां स्नेहादानतो मध्यमत्वेन मध्यबलत्वात् रौक्ष्यौष्ण्याभ्यां तस्यापि ज्वरस्यानु अनुबन्धरूपं वातपित्तं भवेत्। तत्र प्राणिनां मध्यमबलत्वेन वातपित्तानुबन्धत्वेन लङ्घनसाध्यकफस्य प्रतिकारार्थं लङ्घनं बलाविरोधेन विधातुं नातिभयमित्यतः कफजप्राकृतो ज्वरः सुखसाध्यः।

नन्वेतयोः प्रतिकारं कथं कुर्य्यादित्यत आह—आदावित्यादि। विद्वान् वैद्योऽस्य प्राकृतस्य ज्वरस्य शरद्वसन्तयोरादौ वाप्यन्ते वा मध्ये वा जातस्य आरम्भकदोषबलाबलं ज्ञात्वा प्रतिकारयेत्। शरद्वसन्तयोराद्यन्तमध्यजातत्वेन ज्ञानाद्धि पुरुषस्य दोषस्य च बलाबलज्ञानं भवति। यथा शरदः प्रथमभागे प्राणिनां बलं तथा वसन्तान्तभागे, यथा शरदोऽन्तभागे तथा वसन्तादिभागे, मध्ये द्वयोस्तुल्यं तयोर्वृद्धिह्रासाभ्यां बलस्यारम्भात् ॥ २१ ॥

भयं न भवति; विसर्गो हि सौम्यः स्निग्धः, तत्र बलवन्तः पुरुषाश्च; तेन तत्रोत्पन्नो ज्वर आमाशयसमुत्पन्नत्वेन लङ्घनार्हो लङ्घनीय एव। किंवा प्रकृत्यैव विसर्गाच्चेति पाठः। तदा प्रकृत्येति ज्वरकारणेन कफपित्तरूपेण लङ्घनहेतुना, तथा विसर्गाच्च कालात्। लङ्घने भयं नास्ति, उक्तं हि—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति। हेमन्ते चितः कफो वसन्ते कुप्यतीति युक्तमेव, यतः दोषचयादिक्रमः शिशिरे नास्त्येव; आदानमध्ये तस्यापि वातपित्तं भवेदनु इति तस्यापि वसन्ते कफज्वरस्य वातपित्तमनु अनुबन्धरूपं भवेत्, तदा वसन्तादौ दुर्बलं वातपित्तम्, मध्ये तु मध्यम्, अन्ते तु प्रबलं भवति। एवं शरद्यपि कफो भवति। तदेतान् विशेषान् बुद्ध्वा चिकित्सा कर्त्तव्येति दर्शयन्नाह— आदावित्यादि। शरद्वसन्तयोरादौ मध्ये चान्ते च ज्वरस्य दोषबलाबलं बुद्ध्वेति योजना ॥ २१ ॥

कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः।
प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः।
हेतवो विविधास्तस्य निदाने संप्रदर्शिताः॥ २२॥

गङ्गाधरः—ननु प्राकृतसंज्ञेयं किं प्राणिनां प्रकृतिभूतदोषजत्वेनाथवा वातादीनां प्रकृत्यवस्था प्रकृतिस्तज्ज्वरः प्राकृतः किं वान्यथेति चेत् तत्राह—कालप्रकृतिमित्यादि। कालस्यर्त्तुरूपस्य प्रकृतिं स्वभावमुद्दिश्य प्राकृतो ज्वरो निर्दिष्टः न तु पुरुषाणां दोषप्रकृतिमुद्दिश्य न वा सुखसाध्यपरत्वेन। ननु प्राकृतत्वं ज्वरस्य कालप्रकृत्या कुपितदोषजत्वं तत् किं कालप्रकृतितः कुपितदोषः प्रकृतिस्तज्जातत्वं प्राकृतत्वं तच्चेदिष्टं तदा कालान्तरस्यापि प्रकृत्या दोषः कुप्यति तद्दोषजोऽपि प्राकृतो न किं भवतीत्यत आह—प्रायेणेत्यादि। अनिलजः प्राकृतो निखिलो व्याधिः प्रायेण दुःखः कष्टसाध्यः। प्रायशब्देनानिलजः प्राकृतो ज्वरः सुखः। कालेष्वन्येषु हिमादिषु शरद्वसन्तप्रावृट्सु च निदानोक्तकारणकुपितदोषजो व्याधिर्वैकृतः सोऽपि दुःखः।

ननु कियन्तःशिरसीयेऽप्युक्तम्। "चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्। भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु। गतिः कालकृता चैषा चयाद्या पुनरुच्यते" इति, तेन यथा पित्तस्य वर्षासु चयः शरदि प्रकोपः शीते प्रशमस्तथा कफस्य शीते चयो वसन्ते प्रकोपो ग्रीष्मे प्रशमस्तथा वायोर्ग्रीष्मे चयः प्रावृषि प्रकोपो वर्षासु प्रशमः इति यत्, पित्तस्य वसन्ते चयो ग्रीष्मे प्रकोपः प्रावृषि प्रशमस्तथा कफस्य प्रावृषि चयो वर्षासु प्रकोपः शरदि प्रशमः तथा वायोः शरदि चयः शीते प्रकोपो वसन्ते प्रशम इत्यपि कालप्रकृतिर्दृश्यते, ततः किं ग्रीष्मवर्षाशीतभवाः पित्तकफवातजाः प्राकृता न भवन्तीति चेत्, न ; चयप्रकोप-

चक्रपाणिः—कालप्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वर इति प्राकृतज्वराधिकारपरिभाषा। कालप्रकृतिमिति कालस्वभावसम्बन्धं दोषम् ; उद्दिश्येति कारणत्वेन लक्ष्यीकृत्य। नन्वेवमपि वर्षाकालप्रकृतिना वातेन कृतो ज्वरः प्राकृतः स्यादित्याह—प्रायेणानिलजो दुःख इति, अनिलजो ज्वरो वातप्रकृतिसमानोऽपि दुःखो भवति विरुद्धोपक्रमत्वात्। यतः ज्वरस्यामाशयोत्थत्वेन लङ्घनादि पथ्यम्, तच्च वायोरपथ्यमिति विरुद्धोपक्रमत्वाद् दुःखत्वेन न प्राकृतत्वं वातिकस्य। यतः प्राकृतत्वेऽपि यः सुखसाध्यः, स एव प्राकृत उच्यत इति भावः। एवं तावत् सर्व्वो वातजो वैकृतः, तथा वसन्तशरद्व्यतिरिक्तकालभवः कफजस्तथा पैत्तिकोऽपि वैकृत एवेति दर्शयन्नाह—कालेष्वन्येषु वैकृत इति। कफजः पित्तज इति शेषः।

बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः॥ २३ ॥

प्रशमा इत्यादिवचनस्य एकैकश इत्यनेन पुनरावृत्त्या चयप्रकोपप्रशमानिरासात्। "प्रावृट्शरद्वसन्तेषु वातपित्तकफैः क्रमात्। प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः" इति। प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृत इति ख्यापितः। सुश्रुतेऽप्युक्तम्—"इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड् ऋतवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम्, ते तु भाद्रपदादेन द्विमासिकेन व्याख्याताः; तद् यथा—भाद्रपदाश्वयुजौ वर्षाः कार्त्तिकमार्गशीर्षौ शरदित्यादिना द्वाभ्यां द्वाभ्यां मासाभ्यां षडृतूनुक्त्वा वर्षाशरद्धेमन्तेषु क्रमात् पित्तस्य चयप्रकोपप्रशमाः कफस्य तु हेमन्तवसन्तग्रीष्मेषु वायोस्तु ग्रीष्मप्रावृड्वर्षासु यथा भवन्ति तत् कारणोपदेशेन व्याख्यातम्। प्रकोपणव्याख्याने तु—"स शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषतः। प्रत्यूषस्यपराह्ने च जीर्णेऽन्ने च प्रकुप्यति॥ तदुष्णैरुष्णकाले च मेघान्ते च विशेषतः। मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति॥ स शीतैः शीतकाले च वसन्ते च विशेषतः। पूर्व्वाह्ने च प्रदोषे च भुक्तमात्रे प्रकुप्यतीति पुनर्यदुक्तं तत् कालप्रकृत्या चयं विना प्रकोपाभिप्रायेण, अत्र तु कालप्रकृत्या चयपूर्व्विका दोषप्रकोपजाता रोगाः प्राकृता न तु दोषकोपाज्जाता इति। तेष्वन्येषु शरद्वसन्तप्रावृड्भिन्नेषु पञ्चस्वृतुषु हेमन्तवसन्तग्रीष्मप्रावृड्वर्षासु स्वकारणकुपितात् पित्ताज्जाताः, ग्रीष्मप्रावृड्वर्षाशरद्धेमन्तेषु तु स्वहेतुकोपात् कफाज्जाताः, वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु स्वनिदानकुपिताद् वाताज्जाताश्च रोगा वैकृताः ते च दुःखाः प्रायेण भवन्ति। हेतव इत्यादि॥ २२॥

गङ्गाधरः—तत्र सुखसाध्यलक्षणमाह—बलवत्स्वित्यादि। अल्पदोषेषु बलवत्सु जनेषु ज्वरः सुखसाध्यः, एवंभूताश्च सर्व्वे प्रायेण सुखसाध्या भवन्ति। इति सर्व्वेषां रोगाणां स्वस्वाधिकारे प्रायशब्दार्थं सुखसाध्यलक्षणेन विवरीष्यते स्वयमेव। ननु शरदि बहुकारणकुपितात् पित्तात्, वसन्ते च बहुकारणकुपितात् कफात्, प्रावृषि च बहुनिदानकुपिताद् वाताद् यदि रोगा

अथ वैकृतस्य ज्वरस्य को हेतुरित्याह—हेतव इत्यादि। अन्ये तु ब्रुवते—वर्षाकाले वातजोऽपि प्राकृतः, किन्त्वयं कृच्छ्रः, वसन्तशरदुद्भवस्तु प्राकृतः सुखसाध्यो भवतीति विशेषः। तथाच वाग्भटेन, "प्राकृतश्चानिलोद्भवः" इति कृतमिति॥ २२॥

चक्रपाणिः—बलवत्स्वित्यादिना साध्यज्वरविवरणम्; ज्वरोपद्रवा यद्यपि साक्षान्न पठिताः, तथापि सामान्योपद्रव उक्तलक्षणयुक्ता रोगाः; इह यदुक्तम् "उपद्रवस्तु खलु रोगो रोगान्तर-

जायन्ते, तर्हि तेऽपि किं वसन्तशरदुद्भवाः सुखसाध्याः वातजाः कृच्छ्रसाध्याः स्युरिति चेन्न, यतः "उष्णमुष्णेन संवृद्धं पित्तं शरदि कुप्यति" इत्युक्त्वा स्वकारण-कट्वम्लोष्णादिभिः संवृद्धपित्तप्रकोपाशङ्कानिवारार्थं तद्भाष्येण व्याख्यातं वर्षास्वम्लविपाकाभिरित्यादिना ; एवं चितः शीते कफश्चैवेत्यादुक्त्वा स्निग्धमधुरादिस्वकारणकुपितकफनिरासार्थं तद्भाष्येण व्याख्यातमद्भिश्चैव इत्यादिना। तस्मात् कालप्रकृतिजात् वर्षास्वम्लविपाकिजलादितः सञ्चित-पित्तस्य शरद्यादित्यतेजसाभिव्यक्तितो जाता रोगाः सुखसाध्याः न तु स्वकारणकुपितात् पित्तात्। एवं कफस्यापि व्याख्येयम्। ननु प्रावृषि वायोरप्येवं चयपूर्व्वकव्याधिजनकत्वात् कथं तज्जा दुःखाः उक्तं हि सुश्रुते—"ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च। ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति। स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति" इति नाशङ्क्यम्। तथा सञ्चयपूर्व्वकत्वेऽपि वायुप्रकोपस्य कारणानि हि भूमेर्जलक्लिन्नता देहस्य ततः क्लिन्नता शीतवातवर्षाणि च तथा स्वयमुक्तं तस्याशितीये—"आदानदुर्ब्बले देहे पक्ता भवति दुर्ब्बलः। स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः। भूवाष्पान्मेघनिष्यन्दात् पाकादम्ला-ज्जलस्य च। वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः॥ इति। तेन पित्तकफयोः शरदि वसन्ते च सूर्य्यसन्तापमात्रस्य प्रेरकत्वमिव प्रावृषि वायोः प्रेरका बहवः तथा पित्तकफयोश्च कुपितयोः संसर्ग इति प्रावृषि वातप्राकृता दुःखाः। शरदि पित्तस्यानुबल एकः कफः, तस्यापि प्रेरकः सूर्य्यसन्तापो नाधिकस्तथा वसन्तेऽपि वातपित्तयोर्द्वयोः संसर्गेऽपि प्रेरक एक एव सूर्य्यसन्तापः इति। वसन्तशरदुद्भवाः प्राकृताः ऐकान्त्येन सुखसाध्याः, अनिलजास्तु प्रायेण दुःखाः। प्रायपदेन भूमेर्जलप्रक्लिन्नत्वशीतवातवर्षादीनां प्रेरकाणामल्पत्वे तु ज्वरः सुख-साध्य इति ख्यापितम्। विशिष्टव्याधिषु ज्वरस्य प्राधान्याज्ज्वरमधिकृत्य प्राकृतवैकृतवचनं सर्व्वं सर्व्वेष्वेव रोगेषूपलक्षणीयमिति। जतूकर्णस्तु। "भवेद् वसन्तशरदोः प्राकृतोऽन्यत्र वैकृतः" इति यदुवाच तन्न, प्रावृषि वातप्राकृतत्व-सामान्याभावाभिप्रायेण परन्तु उक्तरूपेण प्रेरकबाहुल्यादनुबन्धबाहुल्याच्च दुःखसाध्यत्वात् वातस्यैव पित्तकफयोश्च प्राधान्येन प्रकोपात् तद्भवत्वेन

कालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा रोगात् पश्चाज्जायत इत्युपद्रवसंज्ञः" इति। तन्त्रान्तरे-

वैकृतत्वमङ्गीकृत्य। तन्त्रेऽस्मिन् सुश्रुते च यत् प्राकृतत्ववचनं तद् ग्रीष्मे वातस्य चयपूर्व्वकत्वेन प्रावृषि प्रकोपेण व्याधिहेतुत्वात् पित्तकफयोस्तदानीमेव विना चयं प्रकोपेण व्याधिहेतुत्वाद्वैकृतत्वं नाङ्गीकृत्य प्राकृतत्वाङ्गीकारादिति न विरोधः। यच्चास्मिंस्तन्त्रे प्रावृषि वातजस्य प्राकृतत्ववचनं नास्ति जतूकर्णश्च प्राकृतत्वं न मन्यते इति व्याख्यातं तत् प्रमादेन भ्रमेण वा। प्रायेणानिलजो दुःख इत्यस्य वैकृत इत्यनेन योजनाकरणाद्बोध्यम्। एवं प्रावृषि प्राकृतानाम् अन्यरोगाणां दुःसाध्यत्वं ज्वरस्य तु सुखसाध्यत्वं प्रभावात्। तन्त्रान्तरे हि "ज्वरे तुल्यर्त्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्" इति यद् व्याख्यातं तदपि प्रमादादेव। ज्वरे हि तुल्यर्त्तुदोषत्वेऽपि वसन्तशरदुद्भवयोरेवैकान्त्येन सुखसाध्यत्वं सम्पद्यते। शीतोष्णत्वाभ्यां साधारणत्वेन शरदस्तत्र च दोषौ पित्तमुष्णं शीतः कफ इति तुल्यता। वसन्ते च शीतोष्णसाधारणे प्रधानकफः शीतोऽनुबन्धश्च वायुः शीतः पित्तमुष्णमिति साधारणत्वेन तुल्यत्वमृतुदोषयोः प्रावृषि च शीतोष्णसाधारणत्वेन वातपित्तकफानाञ्च शीतोष्णत्वाभ्यां तुल्यत्वेऽपि प्रेरकहेतुबाहुल्याबाहुल्याभ्यां दुःखसुखसाध्यत्वे सम्पद्येते। अतस्तुल्यर्त्तुदोषत्वन्तु तुल्यौ ऋतुश्च स्वल्पहेतुकुपितो दोषश्च यत्र स तुल्यर्त्तुदोष इत्यभिप्रेत्य उक्तमिति बोध्यम्। क्वचिदुक्तं "वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्। वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः। वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्। कुर्य्यात् पित्तञ्च शरदि तस्य चानुबलः कफः। तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद् भयम्। कफो वसन्ते तमपि वातपित्तं भवेदनु॥" इति यत् तत्रापि वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः प्रायेणेति व्याख्येयम्। वर्षास्विति प्रावृषि पर्य्यायत्वात् न तु श्रावणभाद्ररूपे वर्षर्त्तौ। चयप्रकोपप्रशमानान्तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृडित्येवंरूपेष्वृतुषु सुश्रुतेन स्फुटमुक्तत्वात्; तस्याशितीये यदुत्तरदक्षिणायनयोः शिशिरवसन्तग्रीष्मात्मकवर्षाशरद्धेमन्तात्मकयोः प्रत्येकमृतुचर्य्या प्रोक्ता, तत्र प्रावृड्विधिवर्षाविधिभेदो नास्ति, तयोर्दक्षिणायनावधिमासद्वयात्मकत्वेन पुनरेकत्वात्। हेमन्तशिशिरयोश्च भेदेन किञ्चिद्विशेषणमुक्तं दक्षिणायनस्य शेषमासद्वयात्मको हि हेमन्त उत्तरायणस्य प्रथममासद्वयात्मकश्च शिशिर इति, न च तत्र चयादिप्रतिषेधरूपेण चर्य्या प्रोक्ता। परन्तु वातप्राबल्यप्रतीकारविधिरूपेण प्रायस्तुल्यविधिरुक्तः;

"हिक्काश्वासकासतृष्णाच्छर्द्द्यतीसारमूर्च्छाङ्गभेदारोचककृच्छ्रविट्कता वेति दशोपद्रवा ज्वरमुपद्रवन्ति" इत्युक्ताः॥ २३॥

हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः।
ज्वरः प्राणान्तकृद् यश्च शीघ्रमिन्द्रियनाशनः ॥ २४ ॥

तस्मात् ज्यैष्ठाषाढ़रूपे ग्रीष्मे यो विधिरुक्तः स्वादुशीतद्रवस्निग्धादिर्देहबलस्निग्धत्वादिकरो वातपित्तहरश्च सोऽपि न ग्रीष्मशेषमासे प्रावृट्प्रथममासरूपे वायुचयकाले विरुध्यते। तथा प्रावृट्शेषमासे श्रावणेऽपि वायुचयकाले यः श्रावणभाद्ररूपवर्षाविधिः साधारणस्तु विधिरुक्तः सोऽपि न विरुध्यते त्रिदोषहरत्वात्। इति विस्तरेण तत्र व्याख्यातम्।

ननु कालेष्वन्येषु वैकृत इति यदुक्तं तत्र किं कालप्रकृतिर्न कारणं, कारणं चेत् तर्हि प्राकृत एव भवति कुतो वैकृत उच्यते इत्याशङ्कायां पूर्व्वमुक्तं हेतव इत्यादि। तस्य वैकृतस्य ज्वरस्य विविधा हेतवो निदाने निदानस्थाने दर्शिताः। एवमन्यरोगाणां स्वस्वाधिकारे दर्शिता दर्शयितव्याश्च बोध्याः। अथ साध्यश्चासाध्य एव चेति यद् द्वैविध्यमुक्तं तद् भाष्येण विवृणोति—बलवत्स्वित्यादि। अल्पदोषेषु दोषाश्रयतो वांशतो वाप्यल्पा यत्र तेषु पुरुषेषु बलवत्सु अनुपद्रवो यो ज्वरः स साध्यः। ज्वरस्य तूपद्रवास्तत्रान्तरे प्रोक्ताः—"श्वासो मूर्च्छारुचिच्छर्द्दि-तृष्णातीसारविड्ग्रहाः। हिक्काकासाङ्गभेदाश्च ज्वरस्योपद्रवा दश" ॥ इति ॥ २३ ॥

गङ्गाधरः—साध्यज्वरमुक्त्वाथासाध्यज्वरमाह—हेतुभिरित्यादि। बलिभिबहुभिर्हेतुभिः ज्वरकरभावैर्जातो ज्वरो बहुलक्षणश्चेत् तदा उत्पन्नमात्रं चिकित्स्यमानोऽपि बहुलिङ्गो न तूपशयात् बहुलिङ्गस्तु प्राणान्तकृद् भवति। ननु बलिभिर्बहुभिर्हेतुभिर्जातो व्याधिर्बहुलक्षण एव भवति तत् कथं पुनर्बहुलक्षण इत्युक्तमिति? अत्र कश्चिद् भाषते—स्वस्वकारणेभ्यः कुपिता दोषाः सर्व्वेषामेव व्याधीनां जनका भवितुमर्हन्ति, न च तत्रास्ति प्रतिनियामकः कश्चिदन्तरेण यथा प्राक्तनकर्म्मणः तस्माद् यदा स्वहेतुकुपितो दोषः प्राक्तनकर्म्मविशेषचोदितः सन् विशिष्टां दुष्टिमासाद्य यद् व्याधिजनकस्थानसंश्रयदूष्यसंयोगादिकां विशिष्टां सामग्रीमासादयति तदा तद् व्याधिविशेषमभिनिर्व्वर्त्तयति। इत्यतो बलवद्बहुहेतुजोऽप्यदृष्टविशेषादल्पलक्षणो बहुलक्षणोऽपि

चक्रपाणिः—बलिभिर्बहुभिश्च हेतुभिर्जातो बहुलक्षण एव भविष्यति, तत् किं 'बहुलक्षणः' इतिपदेन? उच्यते, पुरुषस्याग्निबलादिविशेषेण दोषहेतवो यथोक्तदोषगुणा वापि न बहुलक्षणं रोगं कुर्व्वन्ति, तथा सम्प्राप्तिविशेषाभावाच्च न बहुलक्षणत्वं भवति, यदुक्तम् "एकं द्वौ त्रीन्

भवतीति। परे तु "एकं द्वौ त्रीन् बहून् वापि देहे धात्वादियोगतः। दर्शयन्ति विकारांस्तु कुपिताः पवनादयः" इति तन्त्रान्तरवचनमुपन्यस्य दूष्यादिसहकारिकारणाधिक्ययोगायोगाभ्यां बहुलक्षणं स्वल्पलक्षणञ्च कुर्व्वन्ति दोषाः, न तु स्वमानाधिक्यादिति। अन्ये तु विकृतिविषमसमवायादल्पहेतुकश्च बहुलक्षणो भवति बहुहेतुकश्चाल्पलक्षणो भवतीत्याहुस्तन्मतत्रयं न मनोरममेव। यत्र हि बहुकारणोपपत्तिन ऊहासम्भवस्तत्रादृष्टविषमसमवायादयः कल्प्यन्ते, नवज्वरादौ च रसधात्वतिरिक्तधातुद्वयादिसान्निध्यञ्च न वर्त्तते, तेन किं धातुगतज्वरं विना बहुलक्षणो न स्यात्? न चास्ति नियमः, नवज्वरादिष्वपि बहुलक्षणादिदर्शनात्। तस्माद् ब्रूमः। ज्वरस्य निमित्तार्थकारिण्या प्राक्तनकर्म्मजातया विकृत्या विज्ञेयमरिष्टलक्षणं पूर्व्वरूपीयेन्द्रिये व्याख्यातम्। "प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना। स घोरं ज्वरमासाद्य न जीवेन्न च मुच्यते।" इति। अत्र तु पुनरिदमरिष्टलक्षणन्तु लक्ष्यानिमित्तया विकृत्या विज्ञेयम्, उक्तं हि वर्णस्वरीयेन्द्रिये—लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तनिदानेषु इति। निदानव्याख्याने लक्षणस्यास्य प्रदर्शनात्, इन्द्रियस्थाने च प्रदर्शनात्। अस्यास्तु बहुलक्षणत्वरूपाया विकृतेर्निमित्तन्त्विदमुपलभ्यते। निदानस्थाने ज्वरनिदानानि यानि प्रोक्तानि तैर्बहुभिर्बलिभिर्हेतुविशेषैर्गुणरसवीर्य्यविपाकप्रभावविशेषेण दूषणविशेषकासम्भ्वासादितत्तद्व्याधिसम्प्राप्तिजनकं तत्तद्व्याधिनियतस्थानसंश्रयणमापन्नो दोष एकैकशविभागेण कृत्वा तत्तद्व्याधिरूपाणि लक्षणानि जनयति। व्याख्यातञ्च स्वयमेवेत्थं शोषनिदाने, तथा सति बहुभिर्बलिभिर्हेतुभिरल्पलक्षणजनकदोषदुष्टिविशेषकरैर्जातो रोगोऽल्पलक्षणो भवति इति। तन्निरासार्थं बहुलक्षण इत्युक्तम्। अल्पैश्च हेतुभिर्बहुलक्षणजनकदोषदुष्टिविशेषकरैर्जातोऽपि रोगो बहुलक्षणो भवति स च न प्राणान्तकृद् भवतीति ख्यापनार्थं बहुभिरित्युक्तम्। अबलिभिश्च बहुभिर्हेतुभिरल्पैर्वा हेतुभिर्बहुलक्षणजनकदोषदुष्टिकरैर्जातोऽपि बहुलक्षणो भवति। तत्र बहुभिरबलिभिर्हेतुभिर्जातो बहुलक्षणो ज्वरो न प्राणान्तकृद् भवतीत्युक्तं बलिभिरिति तत्त्वम्। एवं यस्तु शीघ्रम् इन्द्रियनाशनो ज्वरः शीघ्रमुत्पन्नमात्रं चिकित्स्यमानोऽपि दशानां श्रोत्रादीनां बुद्धिकर्म्मेन्द्रियाणां स्वस्वक्रियाश्रवणादिशक्तिं शीघ्रं नाशयति, न तूपेक्षया कालान्तरेण वा; स प्राणान्तकृत्। उपेक्ष्यमाणास्त्वन्ये रोगा इन्द्रियनाशकाः

बहून् वापि देहे धात्वादियोगतः। दर्शयन्ति विकारांस्तु कुपिताः पवनादयः" इति। शीघ्रमित्युत्पन्नमात्र एव ॥ २४ ॥

सप्ताहाद् वा दशाहाद् वा द्वादशाहात् तथैव च।
सप्रलापभ्रमश्वासस्तीक्ष्णो हन्याज्ज्वरो नरम्॥ २५॥
ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः।
असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः॥ २६॥

प्राणान्तकृतश्च, ज्वरस्त्वशीघ्रमिन्द्रियनाशनो न प्राणान्तकृदिति भावः। शीघ्रञ्चेन्द्रियनाशेऽपि निदानोक्तहेतुविशेषाणां गुणरसवीर्य्यविपाकप्रभावविशेषेण शीघ्रेन्द्रियनाशकदोषदुष्टिविशेषकरेण दूषितदोषो हेतुरुन्नेयः। एवं परत्रापि सर्व्वत्र रोगाधिकारेऽरिष्टलक्षणवैचित्र्योत्पादनिमित्तमुन्नेयम्। यस्त्वत्र इन्द्रियशब्देन मनोऽपि व्याचष्टे सुश्रुतदर्शनात् तन्न, यतोऽस्मिंस्तन्त्रे स्वमते मनस इन्द्रियाणां चेष्टाप्रत्ययभूतत्वादिवचनैरिन्द्रियतः पृथगुपदेशदर्शनात्॥ २४॥

गङ्गाधरः सप्ताहाद् वेत्यादि। तीक्ष्णोऽत्युग्रवेगो ज्वरो यदि प्रलापभ्रमश्वासैस्त्रिभिर्मिलितैर्युक्तस्तदा वातिकः सप्ताहात् पैत्तिको दशाहात् श्लैष्मिको द्वादशाहान्नरं हन्यात्। वा-शब्द एवमेवं दोषभेदमर्य्यादाज्ञापनार्थम्। त्रिषु दोषेषु वायोः शीघ्रकारित्वात् सप्ताहनियमस्ततोऽल्पशीघ्रत्वात् पित्तस्य दशाहनियमः श्लेष्मणश्चिरकारित्वात् द्वादशाहनियम इति बोध्यम्॥ २५॥

गङ्गाधरः—ज्वरः क्षीणस्येत्यादि। क्षीणस्य क्षीणमांसबलस्य शूनस्य ज्वरोऽसाध्यः। गम्भीरोऽन्तर्व्वेगो ज्वरोऽसाध्यः। गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया। आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च॥ इति सुश्रुतवचनेन सह अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः। सन्ध्यस्थिशूलमस्वेदो दोषवर्च्चोविनिग्रहः। अन्तर्व्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् इतिस्ववचनस्य तुल्यार्थत्वात्। कश्चिदन्तर्धातुस्थो ज्वरो गम्भीर इत्याह।

चक्रपाणिः—सप्ताहाद्वेत्यादि। सप्ताहाद् वातोत्तरः सप्रलापभ्रमश्वासस्तीक्ष्णो हन्ति। एवंगुण एव पैत्तिको दशाहात्, तथैवंगुण एव कफजो द्वादशाहाद्धन्ति शीघ्रतमशीघ्रतरशीघ्रविकारकारित्वाद् वातपित्तकफानामिति वर्णयन्ति। 'वा'शब्दो विकल्पार्थः, तेन सप्ताहादिष्वपि अर्व्वागपि ज्वरेण त्वहननं लक्ष्यते। अन्ये तु सप्ताहात् सप्रलापः, दशाहात् सभ्रमः, द्वादशाहात् सश्वासो हन्तीति व्याख्यानयन्ति॥ २५॥

चक्रपाणिः—गम्भीरोऽन्तर्व्वेगः, किंवा गम्भीरधातुस्थः। दैर्घरात्रिको दीर्घकालानुबन्धी किंवा दीर्घां रात्रिं मरणरूपां करोतीति दैर्घरात्रिकः॥ २६॥

स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः ।
सर्व्वदेहानुगाः स्तब्धाः कुर्व्वते सन्ततज्वरम् ॥
दशाहं द्वादशाहं वा सप्ताहं वा सुदुःसहः ।
स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ॥

परे तु गम्भीर इव यत्र वातादीनां निश्चयो न कर्त्तुं शक्यते इत्याहुः। तद्द्वयं न साधु। दैर्घरात्रिको ज्वरोऽसाध्यः। दीर्घरात्रानुबन्धी ज्वरो दैर्घरात्रिक इत्येके, दीर्घां मरणरूपां रात्रिमनुवर्त्तते इति दैर्घरात्रिको मृत्युकृदित्यर्थः। तेन क्षीणस्य शूनस्य ज्वरो दैर्घरात्रिको मृत्युकृत्; 'गम्भीरो ज्वरो दैर्घरात्रिको मृत्युकृदित्यर्थः। यश्च बलवान् केशसीमन्तकृत् स ज्वरोऽसाध्य इत्यन्वयः इत्यपर आह। केशसीमन्तकृदिति। अनिमित्तं केशेषु यस्य सीमन्तो भवति स ज्वरी म्रियते इत्यर्थः। सुश्रुतेऽप्यसाध्यज्वरलक्षणमुक्तं—"हतप्रभेन्द्रियं क्षामं दुरात्मानमुपद्रुतम्। गम्भीरतीक्ष्णवेगार्त्तं ज्वरितं परिवर्ज्जयेत् ॥" तथा। "केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ। लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥" इति ॥ २६ ॥

गङ्गाधरः—अथ पुनः पञ्चविधो दृष्ट इत्यादिना सन्ततादिभेदेन ये पञ्च भेदा उक्तास्तान् दर्शयति—स्रोतोभिरित्यादि। गुरवो दोषा एकैकोल्वणास्त्रयो दोषा रसवाहिभिः स्रोतोभिः विसृताः कृतप्रसरणाः सन्तः सर्व्वदेहानुगाः सर्व्वदेहं सुतरामनुगता भूत्वा स्तब्धा दुष्टिस्वभावाद् दशाहादिनिश्चलाश्च भूत्वा सन्ततज्वरं कुर्व्वते। इति सन्ततज्वरस्य सम्प्राप्तिमुक्त्वा लिङ्गमाह—दशाहमित्यादि। स कालदूष्यप्रकृतितुल्यदोषजः सन्ततो ज्वरः दोषदूष्याणां निःशेषेण संशोधनाभावात् संशोधनाच्च दशाहं, सर्व्वशः संशोधनात् तथा संशोधनाभावाद् द्वादशाहं, सर्व्वशः संशोधनात् संशोधनाभावाच्च सप्ताहं व्याप्य सुदुःसहः शीघ्रकारित्वात्

चक्रपाणिः—स्रोतोभिरित्यादिना सन्ततादिभेदमाह। गुरव इति वृद्धाः। दशाहमित्यादि। दशाहादीन् वाप्य सुदुःसहो भवतीति शेषः। शीघ्रमिति दशाहादय एव प्रभूततरकालान्तरापेक्षया 'शीघ्र' शब्दवाच्याः। दशाहादिविकल्पश्च यथाक्रमं पित्तकफानिलोत्तरसन्निपातारब्धत्वात् सन्ततज्वरस्य ज्ञेयः। यदुक्तमन्यत्रापि—"पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात्। हन्ति विमुञ्चति वाशु ज्वरोष्मा धातुमलपाकात् ॥" तथा "दशद्वादशसप्ताहैः पित्तश्लेष्मानिलाधिकः। दग्धोष्मणा धातुमलान् हन्ति मुञ्चति वा ज्वरः ॥" इति; हननमोचनविकल्पस्तु

कालदूष्यप्रकृतिभिर्दोषस्तुल्यो हि सन्ततम्।
निष्प्रत्यनीकं कुरुते तस्माज्ज्ञेयः सुदुःसहः॥

शीघ्रं प्रशमं याति हन्ति वा। वाद्धयव्यवस्थया पित्ताधिको यो भवति स दशाहं व्याप्य श्लेष्माधिको यो भवति स द्वादशाहं व्याप्य वाताधिको यो भवति स सप्ताहं व्याप्य सुदुःसहः शीघ्रकारित्वात् शीघ्रं प्रशमं याति शीघ्रं हन्ति वेति। यदा तु नातिशुध्यन्तीति वक्ष्यमाणवचनात्। अतिदुःखेन सोढुं शक्यः सुदुःसहः शीघ्रकारित्वात् तीक्ष्णत्वेन शीघ्रफलजनकत्वात् शीघ्रं प्रशमं मलपाकात् प्रशान्तिं याति शीघ्रं वा धातुपाकाद्धन्तीति हन्तृत्वमस्य प्रागुक्तं सप्ताहाद् वेत्यादिना। सुश्रुतेनापि गम्भीरतीक्ष्णवेगार्त्तमिति तीक्ष्णवेगशब्देनास्य मारकत्वमुक्तम्। एतेन दशाहं वा द्वादशाहं वा सप्ताहं वा व्याप्य सन्ततं योऽविसर्गी स सन्ततज्वरः। सुश्रुतेनाप्युक्तं सप्ताहं वा दशाहं वा द्वादशाहमथापि वा। सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते इति। प्रशमं याति हन्ति वेत्यत्र मलधातुपाको हेतुर्बोध्यः। उक्तं हि "पित्तकफानिलवृद्ध्या दशदिवसद्वादशाह-सप्ताहात्। हन्ति विमुञ्चति वाशु त्रिदोपजो धातुमलपाकात्॥" इति। सुतरां प्रलापभ्रमश्वासैः सन्ततज्वरे धातुपाको ज्ञेयोऽन्यथा तु मलपाक इति। कश्चिद् व्याचष्टे, उत्तरोत्तरव्याधिपरिवृद्धिबलह्रासाभ्यां शुक्रादिधातुसहितमूत्रत्वा-दिना धातुपाको ज्ञेयोऽन्यथा तु मलपाक इति, तन्न, तथात्वे जीवनदर्शनात्।

नन्वेष कथं सुदुःसह इत्यत आह—कालेत्यादि। कालो वसन्तादिर्दूष्यश्च रसधातुः प्रकृतिः पुरुषस्य वातलत्वादिः। कालदूष्यप्रकृतिभिः व्यस्ताभिः समस्ताभिर्वा तुल्यो दोषः प्राधान्येन कुपितः सन् निष्प्रत्यनीकं प्रत्यनीकभेषज-

रसादीनामप्यशुद्ध्या शुद्ध्या च वक्तव्यः। कस्मादेवमयं दुःसहः शीघ्रकारी सन्ततो भवतीत्याह—काल इत्यादि। कालो वर्षादिः, दूष्यो रसादिः, प्रकृतिर्देहप्रकृतिः श्लेष्मप्रकृत्यादिका।

ननु कालादितुल्यता दोषस्य कदाचिदेव सम्भवति, यथा—वसन्ते श्लेष्मप्रकृतौ मेदसि दूष्ये कफो दोषः, एवं शरदि पित्तमपि ज्ञेयम्, इतरेषान्तु त्रिदोषादीनां कालादितुल्यत्वं दुष्प्राप्यम्। अतस्तत्कृतसन्ततः कथं भवतु, सन्ततश्च द्वादशाश्रयत्वेन त्रिदोषज एव वक्तव्यः; उच्यते—'तुल्यः' इत्यभिधायापि यत् 'निष्प्रत्यनीकः' इति करोति, तेन कालाद्यनुगुणत्वमेव कालादितुल्यतां स्फोरयति। कालादीनाञ्चासमानानामपि बलवता दोषेण परिगृहीतानां प्रतीपार्थकरणासामर्थ्येनानुगुणत्वैव भवति; यथा—बलवतो राज्ञो हृदयेन प्रतिकूला अपि विपक्षा राजानोऽनुगुणा एव भवन्ति। किञ्च, त्रिदोषारब्ध एवास्मन्मते सन्ततः, तस्य चान्यतरं दोषं प्रति प्रतिकूलकालादीनां

यथा * धातूंस्तथा मूत्रं पुरीषञ्चानिलादयः।
युगपच्चानुपद्यन्ते नियमात् सन्तते ज्वरे † ॥
स शुद्ध्या वाप्यशुद्ध्या वा रसादीनामशेषतः।
सप्ताहादिषु कालेषु प्रशमं याति हन्ति वा ॥

हीनं सन्ततं ज्वरं कुर्य्यात् तस्मात् सुदुःसहो ज्ञेयः। न केवलमेतेन सुदुःसहः परन्तु हेत्वन्तरमप्यस्तीत्यतः सुदुःसहत्वे हेत्वन्तरमाह—यथेत्यादि। कालादिभिस्तुल्यदोषजस्य निष्प्रत्यनीकत्वं सुदुःसहत्वञ्च, तथा सन्ततज्वरेऽनिलादयो दोषाः कारणवैचित्र्यात् विचित्रदुष्टा नियमात् यथा धातून् रसादीन् अनुपद्यन्ते अनुगच्छन्ति तथा तेनैव प्रकारेण मूत्रं तथा पुरीषञ्च युगपदेकदैवानुपद्यन्ते तस्माच्च सुदुःसहो ज्ञेयः। अत्र यदि धातून् रसादीन् दोषाः पचन्ति तदा हन्ति यदि मूत्रपुरीषे पचन्ति तदा प्रशाम्यति इति भावः। ननु कालदृष्ट-प्रकृतिभिस्तुल्यदोषजत्वेन निष्प्रत्यनीकत्वात् प्रशमं याति एकान्ततस्तु हन्ति इत्यत आह—स शुद्ध्येत्यादि। रसादीनां संशोधनभेषजैः शुद्ध्या वाप्यशुद्ध्या वा स सन्ततो ज्वरः सप्ताहादिषु कालेषु पुरुषस्य दैववशात् स्वभावादेव मलपाकात् प्रशमं याति दुर्दैववशात् स्वभावादेव धातुपाकात् हन्ति वेति निष्प्रत्यनीकत्वं भेषजप्रतिकार्य्यत्वाभावात्।

तुल्यत्वं सम्भवत्येव; 'तस्माज्ज्ञेयः सुदुःसहः' इति। अतोऽनन्तरं 'यथा धातुम्" इत्यादि पठन्ति; इतश्च, 'प्रायः प्रागपतर्पणैः' इत्यन्तं पठित्वा 'रक्ताश्रयः' इत्यादिना सततकादिलक्षणं पठन्ति। अन्ये तु—"सुदुःसहः" इति पठित्वा सततान्येद्युष्कलक्षणे पठन्ति, तदनु "यथा धातुम्" इत्यादिग्रन्थम्, ततः पुनराचार्य्यान्तरमतेन अन्येद्युष्कादिज्वरत्रयलक्षणं पठन्ति; तत्र प्रथमपाठक्रमे 'यथा धातुम्' इत्यादिना 'सन्ततः स्यात्' इत्यादिक्रमं ब्रुवते। धातुमिति रसादिधातुसप्तकम्। रसदुष्ट्यभिधानेन विशेषेण रसदुष्टिर्ज्ञेया। यथेति येन प्रकारेण। युगपदित्यादि। युगपदित्येक-कालम्। अनुपद्यन्त इति सर्व्वानेव धात्वादीन् सर्व्वे एव दोषाश्चानुपद्यन्ते। स शुद्ध्या वेत्यादि। सन्ततः, यदा सर्व्वे रसादयः सर्व्वथा विशुद्धा भवन्ति, तदा प्रशाम्यति सप्ताहादिषु, यदा रसादयः

* यथा धातु "इति पाठान्तरं।

† अनुबध्नाति युगपद्वश्यं सन्तते ज्वरे इति पाठान्तरम्।

यदा तु नातिशुध्यन्ति न वा शुध्यन्ति सर्व्वशः।
द्वादशैते समुद्दिष्टाः सन्ततस्याश्रयास्तदा॥
विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते॥

ननु दशाहादिविकल्पेन कथमस्य विसर्गमारणविकल्पः स्यादित्यत्त आह—यदा त्वित्यादि। यदा सन्ततस्य ज्वरस्य दोषदूष्या नातिशुध्यन्ति अर्थात् किञ्चित् शुध्यन्ति अथवा सर्व्वशो न शुध्यन्ति तदा एते द्वादशादिदिवसा आश्रयाः समुद्दिष्टाः। ननु सन्ततस्य ज्वरस्य यदा दोषदूष्या नातिशुध्यन्ति निःशेषेण न शुध्यन्ति तदा श्लेष्माधिकस्य द्वादशदिनव्यापित्वं किं न स्यात् इति? किञ्चिच्छुद्ध्या निःशेषतः शुद्ध्या वा सर्व्वशो वाप्यशुद्ध्या पित्तोल्वणस्य दशाहव्यापित्वं वातोल्वणस्य सप्ताहव्यापित्वं वा किं न स्यादिति च नेष्यते तर्हि संशुद्ध्या वाप्यशुद्ध्या वेति पूर्व्ववचनं विरुध्यत इत्यत आह—विसर्गमित्यादि। द्वादशानां पूरण इति द्वादशः। मर्य्यादाया न शेषत्वेन द्वादशदिवसमर्य्यादामाश्रित्य प्रोक्तं. श्लैष्मिकस्य सन्ततज्वरस्य दोषदूष्या यदा न निःशेषेण संशोध्य किञ्चिच्च शुद्धा भवन्ति अथवा सर्व्वशो न शुद्धा भवन्ति न च धातुपाकान्मारयन्ति तदा श्लैष्मिको मलपाकात् द्वादशे दिवसे विसर्गं त्यागं कृत्वा अव्यक्तलक्षणो भूत्वा दुर्लभोपशमः सन् दीर्घमपि कालं द्वादशादूर्द्ध्वमनुवर्त्तते। एवं पैत्तिकस्य सन्ततस्य दोषदूष्या यदा निःशेषतो न संशोध्य किञ्चिच्छुद्धा भवन्ति अथवा सर्व्वतोऽशुद्धा भवन्ति न च दैवाद् धातुपाकान्मारयन्ति तदा स पैत्तिकः सन्ततो मलपाकात् दशाहे विसर्गं कृत्वाऽव्यक्तलक्षणः सन् दुर्लभोपशमश्च सन ऊर्द्ध्वं दशाहाद् दीर्घमपि कालमनुवर्त्तते। एवं वातोल्वणस्य सन्ततो यदि दोषदूष्या निःशेषेण न संशोध्य किञ्चिच्छुद्धा भवन्ति सर्व्वशो वाप्यशुद्धा भवन्ति

सर्व्वे सर्व्वथा वा अविशुद्धा भवन्ति, तदा घ्नन्तीत्यर्थः। अथ यदा स्तोका शुद्धिस्तदा का विधेत्याह—यदा त्वित्यादि। नातिशुध्यन्तीति सर्व्व एव नातिशुद्धा भवन्ति सावशेषदोषा भवन्तीत्यर्थः। न वा शुध्यन्ति सर्व्वश इति रसादिषु मध्ये कतिचित् शुध्यन्ति, कतिचिच्चाविशुद्धा निवर्त्तन्त इत्यर्थः। द्वादशेति सप्त धातवः त्रयो दोषा मूत्रं पुरीषञ्च। दोषाणाञ्चेह शुद्धिः प्रकृतिगमनेन ज्ञेया। द्वादशाश्रयत्वेन सन्ततस्यकदोषारब्धत्वं यदुच्यते, तन्निरस्तमेव ज्ञेयम्। विसर्गमिति परित्यागम्। विसर्गस्वरूपमाह—अव्यक्तलक्षणमिति, अव्यक्तं लक्षणं यस्य, तमव्यक्तलक्षणं विसर्गम्; एतेन, तदापि ज्वरे लीनस्यैव परं लक्षणानि यस्य व्यक्तानि न भवन्तीति दर्शयन्ति। तदनु त्रयोदशदिनादारभ्य

इति बुद्ध्वा ज्वरं वैद्यः सन्ततं समुपाचरेत् ।
क्रियाक्रमविधौ युक्तः प्रायः प्रागपतर्पणैः ॥ २७ ॥

न च दैवविशेषाद् धातुपाकाभावेन मारयन्ति तर्हि स वातोल्वणः सन्ततो मलपाकात् सप्तमदिवसे विसर्गं कृत्वा अव्यक्तलक्षणः सन् दुर्लभोपशमश्च सन् सप्ताहे त्यागं कृत्वा सप्ताहादूर्द्ध्वं दीर्घमपि कालमनुवर्त्तते। एतेनेदं ज्ञापितम् । यदि दोषदूष्या निःशेषेण शुद्धा भवन्ति न च दैवाद् धातुपाकमापद्यन्ते तदा मलपाकाद् वातोल्वणः सप्ताहे पित्तोल्वणो दशाहे कफोल्वणो द्वादशाहे विसर्गं कृत्वा प्रशमं याति न चोर्द्ध्वं किमपि कालमनुवर्त्तेत । दैववशाद् यदि धातुपाकमापद्यन्ते तदा वातोल्वणः सप्ताहे पित्तोल्वणो दशाहे कफोल्वणो द्वादशाहे हन्ति, इति निःशेषतः शुद्ध्या वाप्यशुद्ध्या वा नियमतो हि विसर्गत्वं मारकत्वं व्याख्यातम् । ख्यापितश्चानेन मुक्तानुबन्धित्वेनास्य विषमज्वरत्वमिति । उक्तश्च सुश्रुते—"प्रसक्तश्चाभिघातोत्थश्चेतनाप्रभवस्तु यः । रात्र्यह्नोः षट्सु कालेषु कीर्त्तितेषु यथा पुरा । प्रसह्य विषमोऽभ्येति मानवं बहुधा ज्वरः । स चापि विषमो देहं न कदाचिद् विमुञ्चति । ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते । वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते । धात्वन्तरस्थो लीनत्वात् सौक्ष्म्यान्नैवोपलभ्यते । अल्पदोषेन्धनः क्षीणः क्षीणेन्धन इवानलः । दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः । धातुमन्यतमं प्राप्य करोति विषमज्वरम् । सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः । मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः । कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम् । केचिद् भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् । सप्ताहं वा दशाहं वा द्वादशाहमथापि वा । सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते । अहोरात्रे सततको द्वौ कालावनुवर्त्तते । अन्येद्युष्कस्त्वहोरात्रेनैककालं प्रवर्त्तते । तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः । वातेनोद्धूयमानस्तु यथा पूर्य्येत सागरः । वातेनोदीरितास्तद्वद् दोषाः कुर्व्वन्ति वै ज्वरान् । यथा वेगागमे वेलां छादयित्वा महोदधेः । वेगहानौ तदेवाम्भस्तत्रैवान्तर्णिधीयते । दोषवेगोदये तद्वदुदीर्य्येत ज्वरोऽस्य वा । वेगहानौ प्रशाम्येत यथाम्भः सागरे तथा ॥" इति ।

दीर्घकालमनुवर्त्तते ; ततो दुर्लभोपशमो भवतीति युक्त इत्युक्तम् । एभिर्धात्वादिद्वादशाश्रयित्व-दशाहादिव्यापकत्वादिभिर्धर्म्मैः सन्ततो भिन्न एव वातादिज्वरेभ्यः कालानियमेन द्वित्रिदिनेषु व्यवच्छेदेनानुषक्तेभ्यः । यस्तु तन्त्रान्तरे "तथा सन्तत एवान्यः स्वल्पदुर्ब्बलकारणः । एकदोषो

रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम् ।
सप्रत्यनीकं कुरुते कालवृद्धिक्षयात्मकः ॥
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ।
कालप्रकृतिदूष्याणां प्राप्यैवान्यतमाद् बलम् ॥ २८ ॥

अथास्य प्रयोजनमाह इति बुद्ध्येत्यादि । प्रागपतर्पणैः पूर्व्वं लङ्घनैः प्रायः क्रियाक्रमविधौ वक्ष्यमाणं कर्त्तव्यं सन्ततं समुपाचरेत् ॥ २७ ॥

गङ्गाधरः सन्ततमुक्त्वा सततमाह रक्तेत्यादि । प्राय इत्यनेन सम्प्राप्ति-विशेषेणान्येद्युष्कमपि सततं ज्वरं कुरुते रक्ताश्रयो दोष इति ख्यापितम् । तदन्येद्युष्कलक्षणं वाच्यमत्रैव । सप्रत्यनीकं प्रत्यनीकभेषजवन्तम् । कालवृद्धिक्षयात्मक इति दोषविशेषणम् । रक्ताश्रयो वातोल्वणो वा पित्तोल्वणो वा कफोल्वणो वा दोषः स्वस्वकाले वृद्धिः परकाले क्षय इत्येतौ आत्मानौ स्वभावौ यस्य स तथा, स्वकाले ज्वरं वर्द्धयति परकाले क्षपयति । ननु सततोऽयं कथं प्रवर्त्तते इत्यत आह अहोरात्रे इत्यादि । ननु कथमहोरात्रे द्वौ कालावित्यत आह कालेत्यादि । यस्मात् कालः ऋतुरेष्वन्यतमः, प्रकृतिः पुरुषस्य वातादि-दोषानुशयिता, दूष्यश्चात्र रक्तं, तेषामन्यतमात् बलं प्राप्यैव द्वौ कालौ अहन्येकं कालं रात्रावेकं कालमनुवर्त्तते वेगं कुरुते । केचित् "अहनि द्वौ कालौ रात्रौ च द्वौ कालाविति" व्याचक्षते, तन्न ; सततान्येद्युष्कतृतीयकचतुर्थकानामुत्तरोत्तर-मेकैककालापोहेन वेगदर्शनानुभवाभावात् । अन्येद्युष्कं ज्वरमपि शोणितं संश्रित्य दोषो ज्वरं सततं कुर्य्यात् स चाहोरात्रं द्वौ कालावनुवर्त्तते ॥ २८ ॥

द्विदोषो वा स्वल्पोपद्रवलक्षणः । "अतुल्यदूष्यप्रकृतिः" इत्यादिना ग्रन्थेनोच्यते, स तस्मादन्य एवेति । तन्त्रान्तरेऽपि 'अन्य'शब्दप्रयोगात् प्रतिपादितमिति न विरोधः ॥ २७ ॥

चक्रपाणिः सततकं विवृणोति रक्तधात्वाश्रय इत्यादि । 'प्रायः'ग्रहणात् सततको रक्तव्यतिरिक्तमांसं मांसादिधातुमपि आश्रयत इति दर्शयति । सप्रत्यनीक इति कालादिषु मध्ये अन्यतमः प्रत्यनीकः । कालवृद्धिक्षयात्मकमिति स्वोचिते काले वृद्धिक्षयोचितकाले वृद्धिः क्षयश्च यस्य स कालवृद्धिक्षयात्मा । तेन दोषानुगुणे काले ज्वरो भवति, दोषानुगुणकालव्यतिरिक्ते च काले क्षयो भवति । ज्वरस्य कालप्रकृतिदूष्याणां मध्ये अन्यतमाद् बलप्राप्तौ सत्यामपि दोषसम्प्राप्ति-महिम्ना हि कालः प्रधान इति नियमो ज्ञेयः ॥ २८ ॥

अन्येद्युष्कं ज्वरं कुर्य्यादपि संश्रित्य शोणितम् ।
अन्येद्युष्कं ज्वरं दोषो रुद्ध्वा मेदोवहाः सिराः † ॥
सप्रत्यनीकं जनयत्येककालमहर्निशम् ।
अन्येद्युष्कः प्रतिदिनं दिनं क्षिप्त्वा तृतीयकः ॥ २९ ॥
नातिप्रकुपितो दोष एककालमहर्निशम् ।
मांसस्रोतस्यनुगतो जनयेत् तु तृतीयकम् ॥ ३० ॥

गङ्गाधरः—ननु कस्मात् कालाद्यन्यतमाद् बलं प्राप्यैव द्वौ कालानुवर्त्तते, कालादितो बलहीनत्वे किं न तथेत्यत आह—अन्येद्युष्कमित्यादि। शोणितं संश्रित्य दोषो बलहान्या अन्येद्युष्कमपि ज्वरं कुर्य्यात्। एतेन कालप्रकृतिदूष्याणामन्यतमात् असामान्यात् बलहानो मेदोवहाः सिरा रुद्ध्वा दोषोऽन्येद्युष्कं ज्वरं कुर्य्यादिति भावः। ननु तर्हि किमल्पबलो दोष एवान्येद्युष्कं कुर्य्यान्नान्यो दोष इत्यत आह—अन्येद्युष्कमित्यादि। रक्ताश्रयो दोषोऽल्पबलः सन् मांसमपि गत्वा मेदोवहाः सिरा रुद्ध्वा अन्येद्युष्कं ज्वरं सप्रत्यनीकं भेषजसाध्यम् अहर्निशम् अहोरात्रम् एककालं दिवा वा रात्रौ वा एकवारं जनयति। मेदोवहसिरारोधो हि मांसगमनं विना न सम्भवति, मांसानन्तर्य्यान्मेदस इति। नन्वहर्निशमेककालं तृतीयकादिज्वरोऽपि स्यादित्यत आह—अन्येद्युष्क इत्यादि। अन्येद्युष्को ज्वरः प्रतिदिनमहर्निशमेककालं प्रवर्त्तते। तृतीयकस्तु दिनमेकं क्षिप्त्वा न भूत्वा अनन्तरदिनमहर्निशमेककालं प्रवर्त्तते इति भेदः ॥ २९ ॥

गङ्गाधरः ननु तर्हि किं रक्ताश्रयो दोष एवाल्पबलः सन् मेदोवहाः सिरा रुद्ध्वा प्रतिदिनमन्येद्युष्कं दिनं क्षिप्त्वानन्तरदिने तृतीयकमपि करोतीत्याकाङ्क्षायामाह—नातीत्यादि। अन्येद्युष्कारम्भको दोषोऽनातिप्रकुपितोऽहर्निशम् एककालं ज्वरं जनयति। स एव चेत् मांसस्रोतस्यनुगतो नातिप्रकुपितो दोषस्तदा तृतीयकं दिनमेकं क्षिप्त्वा तृतीयदिने ज्वरं जनयेदिति, अन्येद्युष्कन्तु नातिप्रकुपितो दोषः प्रतिदिनमेककालमहर्निशं जनयेदिति भेदः। ननु सुश्रुते

चक्रपाणिः—मेदोवहा इत्यत्र मेदोवहनाडीरोधादेव मेदोदुष्टिर्ज्ञेया ; उक्तं हि—"तेषां स्रोतसां

† "दोषो मेदोवहा रुद्ध्वा नाडीरन्येद्युष्कं ज्वरम्" इत्येवं चक्रेण पठ्यते।

संश्रितो मेदसो मार्गं दोषश्चापि चतुर्थकम् * ।
दिनद्वयं यो विश्राम्य प्रत्येति स चतुर्थकः ॥ ३१ ॥
अधिशेते यथा भूमिं वीजं कालेऽवरोहति ।
अधिशेते तथा धातून् दोषः कालेऽवकुप्यति ॥

मेदोगतस्तृतीयेऽह्नि इत्युक्तमत्र तु मांसस्रोतस्यनुगत इत्युक्त्या विरुध्यते इति चेन्न। मांसस्रोतोऽनुगतेन दोषेणानन्तरमेदोवहसिरारोधस्तु तत्सिरापर्य्यन्तगतिं विना कर्त्तुं न शक्यते इति मेदोधातुप्राप्त्यभिप्रायेण मेदोगतस्तृतीयेऽह्नीति सुश्रुतवचनात् ॥ ३० ॥

गङ्गाधरः—क्रमिकत्वाच्चतुर्थकज्वरमाह—संश्रित इत्यादि। मेदसो मार्गं स्रोतः संश्रितो दोषश्चतुर्थकं ज्वरं जनयेत्। चकारात् अस्थिमज्जगतोऽपि दोषश्चतुर्थकं जनयेत्। स चतुर्थको बहूपद्रवकरः स्यात्। उक्तं हि सुश्रुतेन—"अस्थिमज्जगतः पुनः। कुर्य्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम्" इति। मेदःस्रोतोगतस्तु न चान्तकं रोगसङ्करं चतुर्थकं जनयेदित्यतो मेदोगतो नातिप्रकुपितदोषस्तु यं चतुर्थकं जनयति स नातिकष्ट इति बोध्यम्। ननु चतुर्थकः कीदृशः स्यादित्यत आह—दिनद्वयमित्यादि। यो ज्वरो दिनद्वयं विश्रम्य न भूत्वा प्रत्येति पुनरागच्छति स चतुर्थकः ॥ ३१ ॥

गङ्गाधरः—ननु कथं शरीरे सर्व्वदा अवस्थितत्वेऽपि दोषाणां द्विकालादिप्रवर्त्तकत्वं स्यादित्यत आह—अधिशेते इत्यादि। वीजं यथा भूमिमधिशेते न च तदैव सर्व्वदैव वावरोहति परन्तु काले कालपरिणामेऽवरोहति तथा दोषोऽपि विचित्रतन्निदानकुपितो धातून् रक्तादीन् अधिशेते न च तदा सर्व्वदा वा कुप्यति परन्तु काले स्वस्वकालपरिणामेऽवकुप्यति प्रतिकुप्यति।

रोधात् स्थानस्थाश्चैव मार्गगाश्च दोषाः प्रकोपमापद्यन्ते" इति। 'मांसस्रोतांस्यनुगतः' इत्यादि तृतीयचतुर्थकलक्षणं केचित् पठन्ति ; अत्रापि स्रोतोदुष्ट्या धातुदुष्टिरवगन्तव्या। ये तु तृतीयकचतुर्थकयोर्दूष्यप्रतिपादकं ग्रन्थं न पठन्ति, तेषां तन्त्रान्तरप्रत्ययाद् दूष्यावरोधः ; तृतीयकचतुर्थकसंज्ञयैव तृतीयदिनचतुर्थदिनभावित्वं ज्ञेयम् ॥ २८—३१ ॥

चक्रपाणिः—ज्वराणां विच्छेदाभ्यासे दृष्टान्तमाह—अधिशेत इत्यादि। अधिशेत इत्यधिष्ठाय तिष्ठति। धातुनिति सततकादिदूष्यत्वेन पठितं रक्तादिधातुम्। काल इति स्वकाले। यदि स्वकाले

* इतःपरम्—अस्थिमज्जोभयगतो जनयेत् तु सुदारुणम् इत्यधिकः पाठः क्वचिद् दृश्यते।

स वृद्धिं बलकालञ्च प्राप्य दोषस्तृतीयकम्।
चतुर्थकञ्च कुरुते प्रत्यनीकं बलक्षयात्॥
कृत्वा वेगं गतबलाः श्लेष्मस्थाने * व्यवस्थिताः।
पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः॥ ३२॥

तृतीयकचतुर्थकयोरसाध्यत्वमाह—स वृद्धिमित्यादि। स तृतीयकारम्भको दोषः स्वस्य बलकालं प्राप्य वृद्धिञ्च प्राप्य तदा आतुरस्य बलक्षयात् प्रत्यनीकं नाशकं तृतीयकं कुरुते। एवं चतुर्थकारम्भकश्च दोषः स्वबलकालं प्राप्य वृद्धिञ्च प्राप्य तदा आतुरस्य बलक्षये सति चतुर्थकं प्रत्यनीकं तदातुरस्य मारकं कुरुते इत्यर्थः। द्विकालादिनियमेन ज्वरवेगकरणे उपपत्त्यन्तरमाह—कृत्वेत्यादि। स्वस्वनिदानविशेषजनितकोपविशेषेण जातस्वभावविशेषा मला दोषाः श्लेष्मस्थाने आमाशये हृदये कण्ठे शिरसि च व्यवस्थिताः सन्तो यथाक्रमं द्विकालमेककालं दिनैकं क्षिप्त्वा एककालं, दिनद्वयं क्षिप्त्वा एककालं, वेगं कृत्वा क्रमेणामाशयं प्राप्य ज्वरं कृत्वा कृतवेगत्वात् तद्दिनमेव पुनः स्वस्थानं गत्वा च गतवला हीनबलाः सन्तो वै तत्र वर्त्तन्ते, पुनश्च स्वभावात् विवृद्धाः सन्तः स्वे काले प्रतिदिन-

ज्वरं करोति दोषः, तदा तृतीयकचतुर्थकयोः किमिति विश्रामदिनेऽपि दोषानुगुणे पूर्व्वाह्णादिकाले न करोतीत्याह—स वृद्धिञ्चेत्यादि। न केवलं कालमात्रमपेक्षते, किन्तु वृद्धिमप्यपेक्षते तृतीयकादिकरणे दोषः। सा च वृद्धिस्तृतीयके त्र्यहेण, चतुर्थके चतुरहेणैव भवतीति भावः। प्रत्यनीकस्य कालाकृत्यादेर्दोषविरुद्धस्य बलक्षयः, तेन दोषवृद्ध्या यदा प्रत्यनीकस्य क्षयो भवति, तदा ज्वरयतीत्यर्थः।

अथ सततकादौ यथा वृद्धो दोषो ज्वरवेगं जनयति, तस्य यथोपशमो भवति, तदाह—कृत्वेत्यादि। सततकादौ दोषा वेगं कृत्वा गतबला भवन्ति, गतबलाश्च पुनः स्वे स्वे रक्तादौ स्थाने स्थिता भवन्ति, पुनस्त एव वृद्धाः स्वे काले ज्वरयन्ति। अत्र च ऋत्वादिहेत्वन्तरे रक्तादिधातूनामुत्तरोत्तरं गत्वा दोषो यदा सूक्ष्मस्रोतांसि याति, तदा तदाश्रयिज्वरो ज्वरपरावृत्तिश्च भवति। ऋतुबलाद् यथा—वातोत्तरसततको वर्षाकालजः प्रत्यनीकां शरदं प्राप्यान्येद्युष्कादिरूपो भवति। अहोरात्रबलाबलात् कालविशेषप्राप्तिर्यथा—वसन्तस्य मध्येषु अहोरात्रेषु वातिकश्चातुर्थको जातो यः, स वसन्तस्य पश्चिमान्यहोरात्राणि प्राप्य बलवान् तृतीयकादिरूपो भवति, तथोक्तदिनेष्वेव श्लैष्मिकः सततको जातः शेषदिनेषु श्लेष्मप्रत्यनीकेषु अन्येद्युष्कादिरूपो जायते। दोषबलाद् दुष्टहेतुसेवाभूतात् ज्वरपरावृत्तिश्च व्यक्तैव। मनोबलात् सततज्वरो मनोनिवृत्त्यादिना

* स्वे स्वे स्थाने इति पाठान्तरम्।

द्विकालैककालदिनैकक्षिप्तैककालदिनद्वयक्षिप्तैककाले नरं ज्वरयन्ति। एवमेव सुश्रुतेनाप्युक्तं "क्षामाणां ज्वरमुक्तानां मिथ्याहारविहारिणाम्। दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः। सततान्येद्युष्कत्र्याख्य-चातुर्थान् सप्रलेपकान्। कफस्थानविभागेन यथासङ्ख्यं करोति हि। अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते। ततश्चामाशयं प्राप्य घोरं कुर्य्याज्ज्वरं नृणाम्। तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः। दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत्।" इति। तथा चामाशयस्थो दोषो यदा स्वकाले कालस्वभावात् वृद्धिमेति तदा ज्वरयति दिने कालमेकं, ततः पुनर्गतबलः परकाले वर्त्तते, पुनः स्वकाले वृद्धिं गतः पुनर्निशायामेकं कालं ज्वरयतीति द्विकालमेव न तु सर्व्वदा आमाशयसंयोगे सत्यपि। एवं मांसाश्रितो दोषो मेदोवहाः सिरा रुद्ध्वा हृदयस्थः एव वर्त्तते, स च हृदयादामाशयं यदा गच्छति तत्रावान्तरमेकं स्वकालम् आमाशयस्थानसंश्रयकरणात् आगतीतो भवति, ततः परदिने स्वकाले त्वामाशयं प्राप्य ज्वरयतीति प्रतिदिनमेककालं ज्वरोऽयमन्येद्युष्काख्यः स्यात्। दोषाणां हि दिने ह्येकः प्रकोपकालो रात्रौ चैक इति। एवं मांसगतो दोषो मेदोवहाः सिरा रुद्ध्वा मेदः संश्रित्य कण्ठेऽवतिष्ठते। स कण्ठस्थो दोषोऽहोरात्रमेकं कण्ठात् आगत्य हृदयं तिष्ठति तद्दिने ज्वरं न करोति। ततः परदिने त्वामाशयमागत्य ज्वरयतीति दिनमेकं मध्ये क्षिप्त्वा तृतीयदिने ज्वरयतीति स ज्वरस्तृतीयकः। एवं मेदोमार्गसंश्रितो वास्थिमज्जगतो दोषो मूर्द्ध्नि तिष्ठति। स च मूर्द्धस्थो दोष एकमहोरात्रं शिरसः कण्ठमागच्छति तद्दिनं न ज्वरयति, ततः परश्चाहोरात्रं कण्ठादागत्य हृदयमधितिष्ठति, तद्दिनञ्च ज्वरयति, ततश्चतुर्थेऽहोरात्रे हृदयादागत्यामाशयं प्राप्य स्वकाले ज्वरयती चतुर्थे दिने भवत्यात्

अन्येद्युष्कादिज्वरवान् भवति; मनोदौर्ब्बल्याद् भयादिना चतुर्थकादिज्वरी तृतीयकादिज्वरवान् भवति। कर्म्मवशात् ज्वरपरावृत्तौ—शुभकर्म्मणा दुःसहो यो ज्वरः परावृत्त्या सुखः स भवति; पापकर्म्मणा सुखो यः स दुःसहदुःखकरज्वरो भवतीति ज्ञेयम्। एते पञ्चापि ज्वराः केषाञ्चिद् विषमज्वरत्वेन सम्मताः। तथाह—विषमत्वं विषमकालत्वेन भवति। यदुक्तमन्यत्र—"विषमो विषमारम्भः क्रियाकालोऽनुषङ्गवान्" इति। सन्तते तु द्वादशाहविसर्गेण त्रयोदशाहे पुनरनुबन्धात् कालवैषम्यमस्ति, तेन सोऽपि विषम इति। अन्ये तु सन्ततं परित्यज्य सततकादींश्चतुरो विषमज्वरान् इच्छन्ति; यतः, सन्तते कालवैषम्यं तादृशं नास्ति; उक्तञ्च खरनादेन—"ज्वराः पञ्च मयोक्ता ये पूर्व्वं सन्ततकादयः। चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमा ज्वराः॥" इति। अन्ये तु तृतीयकचतुर्थकावेव विषमौ; विषमाणां चिरेण चोत्पादात्। यदाह दारुवाहः—"सूक्ष्मसूक्ष्म-

कफपित्तात् त्रिकग्राही पृष्ठाद् वातकफात्मकः ।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः ॥ ३३ ॥

चातुर्थक इत्युच्यते । प्रलेपकश्च सर्व्वसन्धिरूपकफस्थानगतेन दोषेण जन्यते । सर्व्वदैव सन्धिश्चामाशयेऽपि वर्त्तते ततो न कश्चिदपि कालं विरमति ॥ ३२ ॥

गङ्गाधरः—ननु कथमेवं तावदहोरात्रमविच्छेदेन ज्वरयति दिवसेऽपि त्रिदोषकालास्त्रयो दिनभागा रात्रावपि त्रयो भागा इति तस्मादाह—कफपित्तात् इत्यादि । तृतीयको ज्वरस्त्रिदोषजोऽपि त्रिविधः स्वभावात् त्रिधाप्रभावत्वात् । एकः कफपित्तात् कफपित्तोल्वणात्रिदोषात् रक्ताश्रयो जायते । स च तृतीयको ज्वरः कुतोऽनुमीयते इत्यत आह—त्रिकग्राहीति । स त्रिकग्राही त्रिकं वेदनया पूर्व्वं गृहीत्वा सर्व्वशरीरं व्याप्नोतीति वातस्थानत्रिकगतं कफपित्तं परस्थानगतत्वेनातिप्रकुपितं तेन दिनं क्षिप्त्वाहनिशमेककालं ज्वरयति । एवं पृष्ठाद् वातकफात्मकः वातकफोल्वणत्रिदोषजो द्वितीयस्तृतीयकः । स कुतोऽनुमीयते इत्यत आह—पृष्ठादिति । अत्र ल्यब्लोपे पञ्चमी । पृष्ठात् पृष्ठं पित्तस्थानं तद्गतत्वेन वातकफयोरतिप्रकुपितत्वात् तज्ज्वरः पूर्व्वं तत् पृष्ठं वेदनया गृहीत्वा सर्व्वं शरीरं व्याप्नोति । एवं वातपित्तात् वातपित्तोल्वणत्रिदोषजस्तृतीयस्तृतीयकः । स च कुतोऽनुमीयते इत्यत आह—शिरोग्राहीति । शिरोग्राही शिरस्तु कफस्थानं तत्स्थानगतत्वेन वातपित्तयोरतिप्रकुपितत्वात् तज्जो ज्वरः पूर्व्वं शिरो वेदनया गृहीत्वा सर्व्वशरीरं व्याप्नोतीति तृतीयको ज्वरः स्वभावात् त्रिविधो न त्वधिकः । स्वस्थानस्थहेतुदोषाणामनन्तकारित्वादिकं स्यादिति कश्चित् । ननु कृत्वा वेगं गतबलाः श्लेष्मस्थाने व्यवस्थिता इत्यादिना वचनेन सर्व्वस्यैव तृतीयकस्य प्रभवदोषः श्लेष्मस्थानगत उक्तः । कथमत्र वचने कफपित्तादीनां त्रिकादिकमन्यस्थानमुक्तं विरोधश्च भूयानुपलभ्यते इति चेन्न, तृतीयकारम्भकस्तु कफपित्तोल्वणादित्रिदोषः श्लेष्मस्थाने कण्ठे एवावतिष्ठमान एकदिनं कण्ठात् आगत्य हृदये तिष्ठति । परदिने त्वामाशयं प्राप्य यदा ज्वरयति तदा सर्व्वशरीर-

तरास्वेषु दूरदूरतरेषु च । दोषो रक्तादिमार्गेषु शनैरल्पं चिरेण यत् । याति देहं न वा शेषं भूयिष्ठं प्रतिपद्यते । क्रमाद् यत् तेन विच्छिन्न-सन्तापो लक्ष्यते ज्वरे ॥" इत्याहुः ॥ ३२ ॥

चक्रपाणिः—दोषोद्रेकविशेषेण तृतीयकप्रभावमाह—कफपित्तादित्यादि । पृष्ठमभीति पृष्ठात्

चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः।
जङ्घाभ्यां श्लैष्मिकः पूर्व्वं शिरस्तोऽनिलसम्भवः ॥ ३४ ॥

व्यापनकाले त्वनतिप्रकुपितत्वस्वभावाच्च पूर्व्वं परस्थाने त्रिके एव स्वप्रभावं दर्शयति, ततः सर्व्वाङ्ग एवं सर्व्वत्र बोध्यम् ॥ ३३ ॥

गङ्गाधरः—तृतीयकस्य विधामुक्त्वा चातुर्थकस्य विधामाह—चतुर्थक इत्यादि। द्विविधमिति तृतीयकस्य स्वभावात् त्रैविध्यमिव चतुर्थकस्य द्वैविध्यं बोध्यम्। जङ्घाभ्यामिति श्लैष्मिकः श्लेष्मोल्वणत्रिदोषजः एकश्चतुर्थकः। स श्लैष्मिकः कुतोऽनुमीयते इत्यत आह—जङ्घाभ्यामिति। पूर्व्वं जङ्घाभ्यां द्वे जङ्घे पूर्व्वं वेदनया गृहीत्वा पश्चात् सर्व्वाङ्गं व्याप्नोति। जङ्घा च वातस्थानम्। एवं शिरस्तोऽनिलसम्भव इति वातोल्वणत्रिदोषजश्चतुर्थकः। नन्वयं कुतोऽनुमीयते इत्यत आह—शिरस्त इति। अत्रापि ल्यब्लोपे पञ्चमी। तेन शिरः कफस्थानं पूर्व्वं वेदनया गृहीत्वा सर्व्वाङ्गं व्याप्नोतीति द्विविधं व्याधिस्वभावात् प्रभावं स्वकर्म्म दर्शयति। न त्वन्यथा रूपमधिकमिति। अत्रापि पूर्व्ववत् सर्व्वं कफस्थाने व्यवस्थितत्वेन जङ्घादिगतत्वादिकं व्याख्यातव्यम्। ननु पैत्तिकश्चतुर्थकः किं न स्यात्? न स्यादतो नोक्तः। नागभत्त तन्त्रे तु "ऊर्द्ध्वं कायन्तु यः पूर्व्वं गृह्णाति सोऽनिलात्मकः। मध्यकायन्तु गृह्णाति पूर्व्वं यस्तु स पित्तजः। पूर्व्वं गृह्णात्यधःकायं श्लेष्मवृद्धश्चतुर्थकः॥" इति। अत्र कश्चिद्व्याचष्टे कफवातोल्वणाभ्यां चतुर्थकद्वैविध्यं भवति, पित्तोल्वणस्तु क्वचिद्भवति न त्वेकान्तत इति प्रायशोऽसम्भवात् पैत्तिको नोक्तश्चरकहारीतभेलैः। हारीतस्तु "चतुर्थको नाम गदो दारुणो विषमज्वरः। शोषणः सर्व्वधातूनां बलवर्णाग्नि-नाशनः। त्रिदोषजो विकारः स्यादस्थिमज्जगतोऽनिलः। कुपितं पित्तमेवन्तु कफश्चैवं स्वकालतः। शीतदाहकरस्तीव्रस्त्रिकालश्चानुवर्त्तते। सन्निपातात् तु सम्भूतो विषमो विषमज्वरः। ऊर्द्ध्वं कायन्तु गृह्णाति यः पूर्व्वं सोऽनिलात्मकः। पूर्व्वं गृह्णात्यधःकायं श्लेष्मवृद्धश्चतुर्थकः॥" इति ऊर्द्ध्वं कायादिवत् पित्तजस्य स्थानानुक्तत्वात् पित्तानुबन्धत्वेन दाहकरत्वमित्यन्ये व्याचक्षते। तच्च न साध्विति कश्चिदुल्वणपित्तलिङ्गदर्शनात् मध्यकायश्च पित्तस्थानम् भेल-दर्शनाच्च। भेले हि "आमाशयस्थः पवनो ह्यस्थिमज्जगतोऽपि वा। कुपितः

पृष्ठग्राहीत्यर्थः, किंवा पृष्ठादिति ल्यब्लोपे पञ्चमी, तेन पृष्ठमधिष्ठायेत्यर्थः। जङ्घाभ्यां पूर्व्वमिति जङ्घयोः प्रथमं पीड़ां करोति। अत्र च न पित्तप्रधानः पैत्तिकश्चतुर्थकः पित्तगृध्रसावद् भवत्येव-

विषमज्वर एवान्यश्चातुर्थकविपर्य्ययः।
त्रिविधो धातुरेकैको द्विधातुस्थः करोति यम् ॥ ३५ ॥
प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः।
सन्निपाते तु यो भूयान् स दोषः परिकीर्त्तितः ॥ ३६ ॥

कोपयत्याशु श्लेष्माणं पित्तमेव च" इति सम्प्राप्तिने तु विधावचनं दृश्यते। इति सन्ततादिषु पञ्चसु ज्वरेषु मध्ये तृतीयकचातुर्थकयोः प्रभावविधाप्रदर्शनेन सन्ततसततान्येद्युष्काणां त्रयाणां प्रभावविधा नास्ति स्वस्वस्वभावादिति ज्ञापितम् ॥ ३४ ॥

गङ्गाधरः—ननु सन्ततादिपञ्चविधज्वरादध्यतिरिक्तज्वरो विपर्य्ययचातुर्थको दृश्यते तत् कथं पञ्चविधो दृष्ट इत्युक्तमित्यत आह—विषमज्वर एवान्य इत्यादि। अन्यश्चातुर्थकविपर्य्ययो ज्वरः पञ्चविधात् ज्वरादन्योऽपि विषमज्वर एव विषमत्वसामान्याद् विषमाख्य एव, न तु क्रमेण रसादिपञ्चधातुगतत्रिदोषजत्वसामान्यात्। ननु तर्हि चातुर्थकविपर्य्ययं किंधातुस्थो दोषः करोतीत्यत आह—त्रिविध इत्यादि। यं ज्वरं द्विधातुस्थोऽस्थिमज्जोभयधातुस्थ एकैको वातः पित्तं कफश्चेति प्रत्येकं धातुर्न तु मिलितः सन् करोति। यस्मादस्थिमज्जगताद् वातादेकोऽस्थिमज्जगतात् पित्तात् द्वितीयः अस्थिमज्जगतात् कफात् तृतीयो विपर्य्ययचातुर्थको भवति, तस्माद् विषम एव वैषम्यसामान्यात् पञ्चभ्योऽन्य एव च ॥ ३५ ॥

गङ्गाधरः—ननु कुतोऽन्यस्तेभ्यः पञ्चभ्यस्तेऽपि हि पञ्च च ज्वराश्चैकैकदोषजा विषमाश्चेत्यत आह—प्रायश इत्यादि। पञ्चविधः सन्ततादिज्वरः

भिधानात् इति मन्तव्यम्। हारीते तु पित्तजन्यत्वं यदुक्तं तदनुबन्धरूपपित्तजन्यत्वं प्रभावाकर्त्तृत्वान्न हि चतुर्थकप्रभावाभ्युपगमविरोधि ॥ ३३। ३४ ॥

चक्रपाणिः—सम्प्रति मध्ये अहनी ज्वरयत्यादावन्ते च यो मुञ्चति, स चातुर्थकविपर्य्ययत्वेन चातुर्थकग्रहणगृहीत एवेति दर्शयन्नाह—विषम इत्यादि। त्रिविधो धातुरिति वातादिः। द्विधातुस्थ इति अस्थिमज्जगतः। अयञ्च विषमज्वर एवेति सामान्येनोक्तम्, तथापि चातुर्थकस्य प्रकाररूपविषमज्वर एवेति मन्तव्यम्। अत्र तन्त्रान्तरम्—"अस्थिमज्जगतश्चान्यश्चातुर्थकविपर्य्ययः। त्राहाद् द्व्यहं ज्वरयति आदावन्ते च मुञ्चति॥" इति ॥ ३५ ॥

चक्रपाणिः—चतुर्थकविपर्य्ययेण संयुक्तपञ्चविधज्वराणां समानं धर्म्ममाह—प्रायश इत्यादि।

प्रायशः सन्निपातेन एकैकरसादिधातुस्थेन त्रिदोषेण दृष्टः। चातुर्थकविपर्य्ययस्तु अस्थिमज्जोभयस्थेन एकैकवातादिदोषेण दृष्ट इति पञ्चभ्योऽन्यः, परन्तु विषम एव वैषम्यसामान्यादिति भावः। ननु कफपित्तात् त्रिकग्राहीत्यादि-द्विदोषादिना त्वयोक्तः कथं सन्निपातेन दृष्ट इत्यत आह—सन्निपाते त्वित्यादि। सन्निपाते रोगे यो दोषो भूयान् उल्वणः स एव दोषः कीर्त्तितः। तेन कफपित्तात् इत्यादौ कफपित्तोल्वणादित्येवमादिकाभिप्रायेण दोषः प्रकीर्त्तित इति बोध्यम्। यदि कदाचिदेकादिदोषाज्जायन्ते सन्ततादयस्तेन न हानिः। प्रायशः सन्निपाते दृष्टः पञ्चविधो ज्वर इति वचनात् न त्वेकान्ततः सान्निपातिकत्वेन। चातुर्थकविपर्य्ययस्तु एकान्तत एवास्थिमज्जोभयधातुस्थैकैकदोषेण जन्यते इति तेभ्योऽन्य एव। एतेन सन्ततादिपञ्चविधत्वोपदेशेन प्रलेपकवात बलासकशीतादिदाहादिरात्रिज्वरादयो ज्वरा न प्रतिपध्यन्ते न चोपादिश्यन्ते तन्त्रबाहुल्यभयात्। परन्तु अनयैव दिशा महाबुद्धिभिः अनुसर्त्तव्या अल्प-बुद्धिभिस्तु प्रायेणानेन व्यवसेया इति।

सुश्रुते तु अन्येद्युष्कतृतीयकचातुर्थकानां विपर्य्ययाख्याश्च त्रयो विषमज्वरा उक्ताः। तद् यथा "कफस्थानेषु वा तिष्ठन् दोषो द्वित्रिचतुर्षु वा। विपर्य्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान्॥" इति। व्याख्यायते चैतद्वचनम्। आमाशयहृदयकण्ठशिरांसीति चत्वारि स्थानानि कफस्य। तथा हि यो दोषो निदानविशेषप्रभावात् कुपितोऽन्येद्युष्कविपर्य्ययं कुरुते स तत्तन्निदानविशेषप्रभावजानितद्विधाभूतत्वकफद्विस्थानस्थितत्व-स्वभावः दिने चैकस्मिन् द्विःपरित्यागसर्व्वाहोरात्रव्यापित्वस्वभावञ्चाप्नोति। तेन च कफस्थानानां तेषां चतुर्णां मध्ये द्वयोरामाशयहृदययोस्तिष्ठन् दोष एकस्मिन्नेव दिने पूर्व्वं यो दोषभागः स ज्वरयितुं स्वबलानुत्कर्षादशक्तः कमपि कालमेकं ज्वरयन् निवृत्तवेगो वर्त्तते, ततश्च यदा हृदयस्थो दोषभागः आमाशयमागच्छति तदा लब्धबलो ज्वरयति। स्वबलानुरूपं दीर्घं कालं व्याप्नोति द्विकालं दैर्घ्येण व्यापीत्यल्पकालत्यागी ज्वरः स्यात्। अन्येद्युष्कस्तु अहोरात्रमेकवारं कालमल्पं व्याप्य ज्वरयति सर्व्वा-होरात्रपरित्यागीति विपर्य्ययः परस्परमनयोः। अल्पकालं ज्वरयन् दीर्घं कालमेकवारं परित्यागीत्यन्येद्युष्कविपर्य्ययाद्भिन्न एव। एवं यश्च तृतीयक-

प्रायशोग्रहणात् सततकादीनां द्वन्द्वादिजन्मत्वमपि सूचयति। ननु यदि सन्निपातारब्धत्वमेषां तर्हि यदुच्यते चातुर्थके श्लैष्मिकत्वादि, तत् कथमिवेत्याह—सन्निपाते तु यो भूयानित्यादि।

विपर्य्ययज्वरं करोति सोऽपि दोषो निदानविशेषप्रभावात् त्रिधाभूतत्व-कफत्रिस्थान-स्थायित्वैक-दिनोत्तरैकदिन-दीर्घकाल-व्यापि-ज्वरकरत्वादिस्वभावानाप्नोति। तेन ह्येकं दिनं विहायैकस्मिन् परदिने दीर्घकालं व्याप्य ज्वरयति। आमाशयहृदयकण्ठेषु त्रिषु स्थानेषु त्रिधाभूय तिष्ठंस्तृतीयक-विपर्य्ययकरो दोषस्तृतीयकविपर्य्ययं करोति। आमाशयस्थदोषभागः स्वबलात्यनुत्कर्षात् ज्वरयितुमशक्तो वर्त्तते, यदा हृदयस्थदोषभागो हृदयात् आमाशयमेति तद्दिने किञ्चिद्बलमादत्ते न च ज्वरयितुं प्रभवति, तद्दिने तृतीयो हि कण्ठस्थदोषभागः कण्ठादागत्य हृदये तिष्ठति। ततः परदिने स तृतीयदोषभागो हृदयादामाशयमेत्यापरभागद्वयेन मिश्रीभूय पूर्णबलो ज्वरयतीत्येवं सर्व्वमहोरात्रं दीर्घकालं व्याप्य वर्त्तते, तृतीयकस्तु अल्पकालं व्याप्येति परस्परं भेदस्तृतीयकतद्विपर्य्ययोः। तद्दिने एव कृतवेगत्वात् स्वस्वस्थानं गत्वा निवृत्तवेगो वर्त्तते, वर्त्तते चामाशयस्थो दोषभागोऽपि निवृत्तवेग एव। परदिनन्तु तथैव हृदयस्थदोषभागो हृदयादामाशयमेति, कण्ठस्थश्च कण्ठाच्च हृदयमेति, न च तद्दिने ज्वरयितुं प्रभवतीति। पुनः परदिनं तृतीयभागः आमाशयमेत्य भागद्वयेन मिश्रीभूय पूर्णबलो ज्वरयतीत्येकदिनं न भूत्वा परदिनं दीर्घकालव्यापी ज्वरो भवतीति भावः।

एवं यश्च दोषश्चातुर्थकं कुरुते सोऽपि निदानविशेषप्रभावात् कुपितश्चतुर्द्धा भूत्वामाशयहृदयकण्ठशिरःसु चतुर्षु कफस्थानेषु तिष्ठन् आमाशयस्थदोषभागोऽत्यनुत्कर्षात् स्वबलस्य ज्वरयितुमशक्तो वर्त्तते। हृदयस्थो दोषभागस्त्वपरदिने हृदयादामाशयमेति, तद्दिने किञ्चिद्बलमादत्ते न च ज्वरयितुं प्रभवति, तद्दिने च कण्ठस्थो दोषभागः कण्ठाच्च हृदयमेति शिरःस्थश्च कण्ठमेति, ततः परदिने कण्ठस्थो हृदयं हृदयस्थो दोषभाग आमाशयं गत्वा त्रिपादबलमाददानो न ज्वरयति। ततः परदिने तच्चतुर्थदोषभागो हृदयादामाशयमेत्य पूर्णबलः सन् ज्वरयति, तद्दिन एव कृतवेगत्वात् स्वस्वस्थानं गत्वा निवृत्तवेगो वर्त्तते। वर्त्तते चामाशयस्थोऽपि निवृत्तवेग एव। इति दिनद्वयं न भूत्वा परदिने भवति। तद्विपर्य्ययस्तु दिनद्वयं निरन्तरं भूत्वा परदिनं न भवतीति चतुर्थकतद्विपर्य्यययोरस्ति भेद इति व्याचक्ष्महे। नितरां चरकाचार्य्यश्चातुर्थकविपर्य्ययमेवोक्तवान् जतूकर्णोऽपि तृतीयकचातुर्थकविपर्य्ययावुक्त्वाभिहितम्—"विषमज्वरास्त्रिदोषजत्वेऽप्यधिकदोषलब्धाख्याः" इति ॥ ३६ ॥

**ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात्।**
**कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते ॥ ३७ ॥**

न चान्येद्युष्क-तृतीयकविपर्य्ययौ। स्वल्पदोषकालव्यापकत्वन्तु निदान-विशेषेण बलस्य न्यूनाधिक्याद् भवतीति भावः। कश्चिच्च सौश्रुतं व्याचष्टे,— आमाशयहृदयस्थो दोषभागोऽन्येद्युष्कविपर्य्ययम्, आमाशयहृदयकण्ठस्थः तृतीयकविपर्य्ययम्, आमाशयहृदयकण्ठशिरःस्थश्चतुर्थकविपर्य्ययं कुरुते। तत्रामाशयस्थो भागोऽनुत्कर्षबलान्न ज्वरयति। हृदयस्थो दोषभाग आमाशय-मागत्य ज्वरयति। एकं दिनं न भूत्वा परदिने भवतीति अन्येद्युष्कविपर्य्ययः। एवम् आमाशयहृदयकण्ठस्थानां दोषभागाणामामाशयस्थो भागस्तथैव न ज्वरयति। हृदयस्थभागस्तु एकदिनमामाशयमेत्य ज्वरयति, कण्ठस्थश्च हृदय-मेति परदिने च स भागो हृदयादामाशयमेत्य ज्वरयतीति दिनद्वयं भूत्वा एकदिनं न भवति। एवम् आमाशयहृदयकण्ठशिरःस्थानां दोषभागाणामामाशयस्थो भागस्तथैव न ज्वरयति। हृदयस्थश्चामाशयमेत्य ज्वरयति कण्ठस्थश्च हृदयमेति शिरःस्थः कण्ठमेति, ततः परदिने हृदयादामाशयमेत्य कण्ठस्थभागो ज्वरयति, कण्ठस्थश्च हृदयमेति। ततः परदिने स भागो हृदयादेत्यामाशयं ज्वरयतीति दिन-त्रयंभूत्वैकदिनं न भवतीति चातुर्थकविपर्य्ययश्चरकोक्तचातुर्थकविपर्य्ययानैक्य-वाक्यः। तृतीयकविपर्य्ययश्च चरकोक्तचातुर्थकविपर्य्ययैकवाक्यः स्यात्। आमाशयस्थदोषभागेण च ज्वरोत्पत्तिश्च द्वितीयादिभागैरिवेति। तत्रान्तरे त "अस्थिमज्जोभयगते चातुर्थकविपर्य्ययः। मध्ये अहनी ज्वरयत्यादावन्ते च मुञ्चति॥" तथा पराशरोऽपि "अस्थिमज्जोभयगते चातुर्थकविपर्य्ययः। त्र्यहाद् द्व्यहं ज्वरयति आदावन्ते च मुञ्चति॥" इति तद्व्याख्या न साध्वी॥ ३६॥

गङ्गाधरः—एषाञ्च ज्वराणां हेत्वन्तरतो लब्धबलत्वे पूर्व्वपूर्व्वबलवज्ज्वरत्वं सम्पद्यते, तदाह—ऋत्वहोरात्रेत्यादि। सन्ततादिज्वरपञ्चकान्यतमस्तु ज्वरः अर्थ-वशात् तस्य पुरुषस्य प्राक्तनकर्म्मवशात् ऋत्वहोरात्रदोषमनसां बलाबलात् तं तं बलवदबलवज्ज्वरस्य कालं सप्ताहाद्यादिरूपं चतुर्थाहादिकश्च प्रपद्यते। तथा हि सन्ततादयः पञ्च उत्तरोत्तरं दुर्ब्बलाः, तत्र दुर्ब्बलो यो ज्वरः स ऋत्वहोरात्र-

चक्रपाणिः—सम्प्रति सन्ततज्वर एव यथा सततकादिरूपो भवति, तथा सततकादयः सन्ततादि-रूपा भवन्ति, तदाह—ऋत्वहोरात्रेत्यादि। बलाबलादिति मनोऽन्तेन सम्बध्यते, बलञ्चाबलञ्च बलाबलम्; ऋत्वादीनां बलात् तथा ऋत्वाद्यबलाज्ज्वरस्तं तं सततादिज्वरोक्तं कालं प्रतिपद्यते,

दोषमनसां बलात् प्रबलः सन् पूर्व्वपूर्व्वप्रबलज्वरकालं प्राप्नोति, तेन च स एव ज्वर उच्यते तथाकालत्वात् । ऋत्वादीनामबलात् तु क्रमेण ह्रासमाप्नोति उत्तरोत्तरदुर्व्वलज्वरकालं प्रपद्यते, तदा च स एव ज्वर उच्यते तथाकालत्वात् । एवं सन्ततः प्रबलः स पुनरतिबलः स्यादृत्वादिबलात् सर्व्वपूर्व्वत्वात् । चतुर्थकस्तु दुर्व्वलो ज्वरः सर्व्वान्त्यत्वादृत्वाद्यबलादतिदुर्व्वलो वा नष्टो वा स्यात् । एवं सति वातप्रधानो यश्चातुर्थको वा तृतीयको वाप्यन्येद्युष्को वा सततो वा स प्रावृट्कालं प्राप्य लब्धबलः पूर्व्वपूर्व्वज्वरत्वमापद्यते, पित्तप्रधानस्तु शरत्-कालं प्राप्य लब्धबलस्तथा स्यात्, कफप्रधानस्तु वसन्तं प्राप्य लब्धबलस्तथा स्यात्, सततस्त्वतिबलः स्यात् । तथान्यत्तेषु च दोषमनुसृत्य बोध्यम् । एवं यदि वातप्रधानः सन्ततो वा सततो वान्येद्युष्कस्तृतीयकश्च वर्त्तते, तदा स स शरदं वा वसन्तं वा प्राप्यालपबलः सन् सततादीनां कालमापद्यते, पित्त-प्रधानस्तु वसन्तं वा हेमन्तादिकं वा प्राप्यालपबलः संस्तथा स्यात्, कफ-प्रधानस्तु ग्रीष्मं वा शरदं वा प्राप्यालपबलस्तथा स्यात् । चतुर्थकश्चेदेवम् अतिक्षीणो वा नष्टो वा स्यादिति । अथाहोरात्रबलात् चतुर्थकादिस्तृतीय-कादिभावमापद्यते । अहोरात्रस्याबलात् सन्ततादिः सततादिभावमेति । तद् यथा रुक्षोष्णगुणे कुपितवातप्रधानो यदि चातुर्थकादिः वर्त्तते तदा स स ग्रीष्मस्यर्त्तोरह्नो बलाल्लब्धबलस्तृतीयकादिभावमापद्यते । शीतगुणे कुपित-वातजस्तु बलहीनः स्यात्, पित्तप्रधानस्तु शरद्वत्त्वहोरात्रबलाल्लब्धबलस्तथा स्यात्, कफप्रधानस्तु हेमन्तवसन्तत्त्वहोरात्रबलाल्लब्धबलस्तथा स्यात्, सन्ततश्चातिबलः स्यात् । तथा सन्ततादिर्वातप्रधानस्तु शरद्वसन्ताहोरात्रस्य अबलाद्धीनबलः सततादिभावमापद्यते । पित्तप्रधानस्तु शीतत्त्वहोरात्रा-बलाद्धीनबलस्तथा स्यात् । कफप्रधानश्च ग्रीष्मेऽहोरात्राबलाद्धीनबलस्तथा स्यात् । अहोरात्रस्तु कतिपय एव गृह्यते न ह्येकैकस्याहोरात्रस्य बलाबलाभ्यां बलाबले स स भवति, भवति च यत्किञ्चित् ततो नान्यत्वमापद्यते तत्तद्बलाबले च भवतः ।

अथ वातप्रधानो यदि चातुर्थकादिवर्त्तते तर्हि व्यायामापतर्पणरुक्ष-लघ्वादिनिदानानि सेवमानस्य वातबलाल्लब्धबलस्तृतीयकादिभावमापद्यते । पित्तप्रधानश्च कट्वम्लादिसेवमानस्य पित्तबलाल्लब्धबलस्तथा स्यात् । कफ

तत्र ऋतुबलाद् यो वर्षाभूतश्चातुर्थकः, स शरदं प्राप्य बलवान् तृतीयकादिर्भवति ; अर्थवशादिति कर्म्मवशात् यथोक्तदिने च ज्वरयतीति ब्रुवते ॥ ३७ ॥

प्रधानश्च गुरुमधुरादिसेवमानस्य कफबलाल्लब्धबलस्तथा स्यात्। तथा वातप्रधानः सन्ततादिर्यदि मधुराम्लगुर्व्वादिसेवमानस्य वायोर्दुर्ब्बलाद्धीनबलः सततादिः स्यात्। पित्तप्रधानस्तु तिक्तमधुरकषायादिसेवमानस्य पित्ताल्पबलाद्धीनबलस्तथा स्यात् एवं कफप्रधानश्च कटुतिक्तकषायादिसेवमानस्य कफाल्पबलाद्धीनबलस्तथा स्यात्। मनसश्चेति पृथक्पदकरणात् मनसो बलाद्व्याधेरबलत्वं मनसस्त्वबलात् व्याधेर्बलवत्त्वं हि विषादो रोगवर्द्धनानाम् इत्युक्तेः। न तु ऋतुत्वादर्बलाद्व्याधिबलम् अबलाद्व्याधेरबलमिव मनसो बलाद्व्याधिबलमबलाद्व्याधेरबलमिति ख्यापितम्। तथाच सन्ततादिज्वरी यदि धनबन्धुपुत्रपौत्रादिनानाहर्षकरभावेणातिप्रमोदितचित्तः स्यात् तदा मनसः प्रबलत्वात् सततादिज्वरी स्यात् यदि धनबान्धवपुत्रपौत्रादिविनाशादिविविधदुःखकरभावेण विषण्णचित्तः स्यात् तदा चातुर्थकादिज्वरी तृतीयकादिज्वरी स्यान्मनसो दुर्ब्बलत्वात्। एतेन बुद्धेर्बलादपि सन्ततादिः सततादिभावम् आपद्यते। बुद्धेर्बले हि जाते प्रज्ञापराधो न स्यात्, तदा बलिमङ्गलदानस्वस्त्ययनपूजोपहारदेवगुरुवृद्धसिद्धर्षीणां भेषजानाञ्चोपसेवा भवति। बुद्धेरबलात् तु तद्विपरीतसेवनं भवति तेन चातुर्थकादिस्तृतीयकादिभावमापद्यते इति लभ्यते। मनःस्था हि बुद्धिर्विद्याविद्यात्मिका।

अथवशात् पूर्व्वकृतकर्म्मपरिणामादपि सन्ततादिः सततादिभावमापद्यते चातुर्थकादिस्तृतीयकादिभावमापद्यते। तद् यथा सन्ततादिज्वरिणो यदि सततादिज्वरकरकर्म्मपरिणामः स्यात् तदा सन्ततादिज्वरी सततादिज्वरी स्यात्। यदि च चातुर्थकादिज्वरी तृतीयकादिज्वरकरकर्म्मपरिणाममापद्यते तदा तृतीयकत्वादिमापद्यते इति। यद्यपि सर्व्वत्रैव कर्म्मपरिणामो हेतुस्तथापि यत्र कारणान्तराभावे सति कार्य्यं भवति तत्रैव कर्म्मत्वं निर्दिश्यते न तु सर्व्वत्रेति। अथैषां सन्ततादीनां दोषात्कदेहेऽपि तत्कालनियमे हेतव उत्पत्तौ च दोषा उक्ताः सुश्रुतेन यथा। "परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः। आगन्तुश्चानुबन्धो हि प्रायशो विषमज्वरे॥" इति। "वाताधिकत्वात् प्रवदन्ति तज्ज्ञास्तृतीयकञ्चापि चतुर्थकञ्च। औपत्यके मद्यसमुद्भवे च हेतुं ज्वरे पित्तकृतं वदन्ति। प्रलेपकं वातबलासकञ्च कफाधिकत्वेन वदन्ति तज्ज्ञाः। मूर्च्छानुबन्धा विषमज्वरा ये प्रायेण ते द्वन्द्वसमुत्थितास्तु।" इति। एवमन्येऽपि विषमज्वरा उक्ताः। "त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे। तयोः प्रशान्तयोः पित्तमन्ते दाहं

**गुरुत्वं शीतमुद्वेगः सदनं छर्द्यरोचकौ ।**
**रसस्थिते वहिस्तापः साङ्गमर्दो विजृम्भणम् ॥ ३८ ॥**

करोति च। करोत्यादौ तथा पित्तं त्वकस्थं दाहमतीव च। तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः। द्वावेतौ दाहशीतादी ज्वरौ संसगजौ स्मृतौ। दाहपूर्व्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः। प्रलिम्पन्निव गात्राणि घर्म्मेण गौरवेण वा। मन्दज्वरविलेपी च सशीतः स्यात् प्रलेपकः। नित्यं मन्दज्वरो रुक्षः शनकस्तेन सीदति। स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी। समौ वातकफौ यस्य हीनपित्तस्य देहिनः। प्रायो रात्रौ ज्वरस्तस्य दिवा हीनकफस्य च। विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते। तेनार्द्धं शीतलं देहे चार्द्धञ्चोष्णं प्रजायते। काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः। उष्णत्वं तेन गात्रस्य शीतत्वं हस्तपादयोः। काये श्लेष्मा यदा दुष्टः पित्तमन्ते व्यवस्थितम्। शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः।" इति। "वातेनोद्धूयमानस्तु यथा पूर्य्यते सागरः। वातेनोदीरितास्तद्वद् दोषाः कुर्व्वन्ति वै ज्वरान्। यथा वेगागमे वेलां छादयित्वा महोदधिः। वेगहानौ तदेवाम्भस्तत्रैवान्तर्णिधीयते। दोषवेगोदये तद्वदुदीर्य्यते ज्वरस्य वा। वेगहानौ प्रशाम्यते यथाम्भः सागरे तथा।" इति ॥ ३७ ॥

गङ्गाधरः—अथोद्दिष्टपञ्चविधज्वरानुक्त्वा पुनराश्रयभेदेन धातूनां सप्तधा मत इति यदुद्दिष्टं तज्ज्वरस्य धात्वाश्रयभेदेन सप्तविधत्वं दर्शयति—गुरुत्वमित्यादि। एतानि तु दोषाणां रसादिधात्वाश्रितत्वे भवन्ति न च वातादिलिङ्गानि परिभूय भवन्ति, तेन वातादिजानां ज्वराणां यानि यानि लक्षणानि उक्तानि तानि चैतानि च दोषाणां यथाबलं भवन्ति। उक्तं ह्यन्यत्र "वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा। तथा तेषां भिषग् ब्रूयाद् रसादिष्वपि बुद्धिमान् ॥" इति। अस्यायं भावः—वातादिदोषः कुपितः सन् रक्तादिदूषणमन्तरेण न ज्वरमुत्पादयति तत्र रसादिदूष्यभवाणीमानि वातादिदोषभवाणि निदानस्थाने प्रोक्तानि वक्ष्यमाणानि चात्रापि बोध्यानि। ननु "संसृष्टाः सन्निपतिताः पृथग् वा कुपिता मलाः। रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च।" इत्यादिना ज्वरस्य सम्प्राप्तिर्वक्ष्यते, तत्र रसधात्वन्वयमन्तरेण ज्वरोत्पत्तिर्नोक्ता कथं रक्ताद्याश्रितत्वं वातादीनां सम्भवतीति चेन्न। पूर्व्वं वातादयः पृथग् द्वन्द्वाः सन्निपतिता वा रसधातुमन्वेत्यैव ज्वरमुत्पादयन्ति तदामरससम्बन्धात्।

रक्तोत्था पिड़का तृष्णा सरक्तं ष्ठीवनं मुहुः।
दाहरागभ्रममदाः प्रलापो रक्तसंस्थिते॥ ३६॥
अन्तर्दाहोऽधिकस्तृष्णा सम्लानिः * सृष्टविट्कता।
दौर्गन्ध्यं गात्रविक्षेपो ज्वरे मांसस्थिते भवेत्॥ ४०॥
स्वेदस्तीव्रः पिपासा च प्रलापारत्यभीक्ष्णशः †।
सगन्धास्यासहत्वञ्च मेदःस्थे ग्लान्यरोचकौ॥ ४१॥

अरुचिश्चाविपाकश्चेत्यादीन्यधिकानि लक्षणानि तथा गुरुत्वादीनीमानि रसस्थदोषज्वरलक्षणानि तथा वातादिदोषलक्षणानि भवन्ति यथाबलं रसदोषामरसानाम्। निरामत्वे तु रसस्य दुष्टस्यैतानि गुरुत्वादीनि वातादिदोषलक्षणानि च भवन्ति। तत्र यदि रसच्युतकस्य दोषा रक्तं दूषयन्ति तदा रक्तोत्था पिड़केत्यादीनि लक्षणानि दोषलक्षणानि च भवन्ति, यदि वा मांसादिकं दूषयन्ति तदान्तर्दाहादीनि दोषलक्षणानि च भवन्तीति निष्कर्षः। गुरुत्वं गात्रस्य शीतञ्च। उद्वेगश्छर्द्द्युद्वेगस्तेन च मनस उद्वेगश्च दैन्यमिति यावत्। रसस्य हृदयस्थत्वेन हृदयोत्क्लेशस्यान्यत्र तन्त्रे दर्शनात्। रसस्थिते इति ज्वरे इत्युक्ते सर्व्वत्र रसालाभात् तद्व्यावर्त्तनाय कश्चित् तु सर्व्वत्रैव ज्वरे रसदूषणे सत्यप्येतद्वचनं विशेषतो रसदुष्टिख्यापनार्थमित्याह। विजृम्भणमिति विशिष्टजृम्भा, न तु वातमात्रजवेगवती जृम्भा॥ ३८॥

गङ्गाधरः—रक्तोत्थेत्यादि। रक्तोत्था न तु पित्तादुत्थता॥ ३९॥

गङ्गाधरः—अन्तर्दाह इत्यादि पिण्डिकोद्वेष्टनञ्च बोध्यं तन्त्रान्तरदर्शनात्। तन्त्रान्तरे च बहिरुष्णा व्याख्यायते तच्च मांसस्याभ्यन्तरस्वात् तद्गतदोषस्य अन्तरेव दाहकरत्वानुभवात्॥ ४०॥

गङ्गाधरः—स्वेद इत्यादि मेदःस्थस्य। तीव्रः स्वेदो भृशस्वेदः। प्रलापश्च अरतिश्च तत् समाहारत्वादेकवचनम्। सगन्धास्यश्चासहत्वञ्च तत्, असहत्वम् असहिष्णुता॥ ४१॥

* अन्तर्दाहः सतृण्मोहैरिति पाठान्तरम्।
† प्रलापो वम्यभीक्ष्मशः इति वा पाठः।

विरेकवमने चोभे सास्थिभेदं सकूजनम् ।
विक्षेपणञ्च गात्राणां श्वासश्चास्थिगते ज्वरे ॥ ४२ ॥
हिक्का श्वासस्तथा कासस्तमसश्चापि दर्शनम् ।
मर्म्मच्छेदो वहिः शैत्यं दाहोऽन्तश्चैव मज्जगे ॥ ४३ ॥
शुक्रस्थानगते शुक्र-मोक्षं कृत्वा विनाश्य च ।
प्राणं वाय्वग्निसोमैस्तु स च गच्छत्यसौ विभुः ॥ ४४ ॥
रसरक्ताश्रितः साध्यो मांसमेदोगतश्च यः ।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थः सिद्ध्यते न हि ॥ ४५ ॥

गङ्गाधरः—विरेकेत्यादि अस्थिगतस्य। विरेकश्च वमनञ्चेति द्वे युगपद् भवतः ॥ ४२ ॥

गङ्गाधरः—हिक्केत्यादि मज्जगतस्य। तमसो दर्शनमन्धकारप्रविष्टस्येवासंवित्। मर्म्मच्छेदो वक्षसश्छेदवत् पीड़ा। वहिः शैत्यमन्तर्दाहश्च ॥ ४३ ॥

गङ्गाधरः—शुक्रस्थानगते इत्यादि। शुक्रस्थानगते शुक्रमेव स्थानं न तु शुक्रस्य स्थानं शुक्रगतत्वार्थालाभात् शुक्रस्य स्थाननियमाभावाच्च। उक्तं हि सुश्रुते—“यथा पयसि सर्पिस्तु गुड़श्चेक्षूरसे यथा। तथा सर्व्वशरीरेषु शुक्रं पुंसाञ्च वर्त्तते ॥” तत्र गते दोषे यो ज्वरस्तत्र ज्वरेऽसौ विभुरात्मा शुक्रमोक्षं विशेषेण कृत्वान्यानपि धातून् मोचयित्वा प्राणं विनाश्य च वाय्वग्निसोमैः पञ्चभिभूतैः सह देहाद् गच्छति म्रियते इत्यर्थः। वाय्वग्निसोमैरित्यनेन कैवल्यं न गच्छतीति ख्यापितमपि गङ्गाकाश्यादिषु मरणात् कैवल्यं न प्रतिषिध्यते। शुक्रस्थानगते हि ज्वरे मरणमेव, न तु कैवल्यमिति भावः ॥ ४४ ॥

गङ्गाधरः—एषां सप्तानां साध्यासाध्यभावमाह—रसरक्तेत्यादि। रसादिमेदोगतान्ताश्चत्वारः साध्याः। अस्थिमज्जगतौ द्वौ कृच्छ्रसाध्यौ। शुक्रस्थस्तु न सिध्यते। पुनरेतद्वचनं साध्यासाध्यप्रकरणानुरोधेन बोध्यम् ॥ ४५ ॥

हेतुभिर्लक्षणैश्चोक्तः पूर्व्वमष्टविधो ज्वरः ।
समासेनोपदिष्टस्य व्यासतः शृणु लक्षणम् ॥ ४६ ॥
लोमहर्षश्च दाहश्च पर्व्वभेदः शिरोरुजा ।
कण्ठास्यशोषो वमथुस्तृष्णा मूर्च्छा भ्रमोऽरतिः ।
स्वप्ननाशोऽतिवाक् जृम्भा वातपित्तज्वराकृतिः ॥ ४७ ॥
शीतको गौरवं तन्द्रा स्तैमित्यं पर्व्वणाञ्च रुक् ।
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ ४८ ॥

गङ्गाधरः—अथोद्दिष्टं भिन्नः कारणभेदेन पुनरष्टविधो ज्वर इति तदुदाहरति—हेतुभिरित्यादि। पूर्व्वं निदानस्थाने। वातपित्तकफानां विस्तरेण ज्वरकरहेतूनुक्त्वा लिङ्गान्युक्त्वा द्वान्द्विकसान्निपातानां लिङ्गानि यथोक्तानां वातजादिज्वरलिङ्गानां मिश्रीभावविशेषदर्शनात् द्वान्द्विकमन्यतमं ज्वरं सान्निपातिकं वा विद्यादित्यादि सङ्क्षेपेण प्रोक्तं समासेनोपदिष्टस्य द्वन्द्वसान्निपातिकस्य ज्वरचतुष्टयस्य व्यासतो लक्षणं शृणु। आगन्तोश्च संक्षेपेणोपदिष्टस्य च लक्षणं शृणु। पृथग्जानां लक्षणानि तु न वक्ष्याम इति भावः ॥ ४६ ॥

गङ्गाधरः—लोमहर्ष इत्यादि। वातपित्तयोर्विकृतिविषमसंयोगाल्लोमहर्षादीनि लिङ्गानि भवन्ति न त्वन्यस्मिन् वातपित्तजव्याधौ ॥ ४७ ॥

गङ्गाधरः—शीतक इत्यादि। शीतकः शीतम्। स्वेदाप्रवर्त्तनं स्वेदस्य आ समन्तात्कारेण प्रवर्त्तनमतिस्वेद इत्यर्थः। विकृतिविषमसमवायेन वातकफयोः संयोगात् स्वस्वलक्षणादधिकलिङ्गानि हि भवन्ति। हारीतेऽपि "शिरोग्रहः स्वेदभवश्च कासः" इति दृश्यते। मध्यवेगो नातितीक्ष्णो नातिमृदुः ॥ ४८ ॥

चक्रपाणिः—सम्प्रति अष्टविधज्वराकृतौ वक्तव्यमाह—हेतुभिरित्यादि। हेतवोऽपि ज्वरविशेषगमकत्वेनाकृतिरूपा भवन्त्येवेति कृत्वा हेतुकथनमपि यत् कृतं तदप्युचितम्। पूर्व्वमिति निदाने, "समासेनोपदिष्टस्य" इत्यादिना ये निदाने द्वान्द्विकसान्निपातिकागन्तवः समासेनोक्ताः, तेषामिह विस्तरेण लक्षणं ब्रवीति। ये पुनरेकदोषजन्या वातज्वरादयः, ते तत्रैव प्रपञ्चेनोक्ता इति नेह पुनर्वक्तव्याः। भ्रमो येन चक्रस्थितमिवात्मानं मन्यते; किंवा भ्रमो भ्रान्तिः। शीतकः

मुहुर्दाहो मुहुः शीतं स्वेदः स्तम्भो * मुहुर्म्मुहुः।
मोहः कासोऽरुचिस्तृष्णा श्लेष्मपित्तप्रवर्त्तनम्॥
लिप्ततिक्तास्यता तन्द्रा श्लेष्मपित्तज्वराकृतिः।
इत्येते द्वन्द्वजाः प्रोक्ताः सन्निपातज उच्यते॥ ४९॥
सन्निपातज्वरस्योर्द्ध्वं त्रयोदशविधस्य च।
प्राक्सूत्रितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक्॥ ५०॥
भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक्।
वातपित्तोल्वणे विद्याल्लिङ्गं मन्दकफे ज्वरे॥ ५१॥
शैत्यं कासोऽरुचिस्तन्द्रा पिपासादाहरुग् † व्यथाः।
वातश्लेष्मोल्वणे व्याधौ लिङ्गं पित्तावरे विदुः॥ ५२॥

गङ्गाधरः—मुहुर्दाह इत्यादि। पित्ताद् दाहः कफात् शीतमिति, सुतरां मुहुर्दाहो मुहुः शीतं भवति। स्वेदो घर्म्मः। स्तम्भः स्वेदस्य न प्रवृत्तिः। पित्तात् घर्म्मप्रवृत्तिः कफात् घर्म्मस्य स्तम्भः, सुतरां मुहुर्म्मुहुर्घर्म्मो मुहुर्म्मुहुर्घर्म्मावरोधः। अन्यत्रापि "तथा स्तम्भश्च संस्वेदः कफपित्तप्रवर्त्तनम्" इति। मोह इन्द्रियमोहः। श्लेष्मपित्तप्रवर्त्तनमिति कफपित्तवमनमित्यर्थः। लिप्ततिक्तास्यता कफेन लिप्तं पित्तेन तिक्तमास्यं यस्य तस्य भावस्तथा॥ ४९॥

गङ्गाधरः—अत ऊर्द्ध्वं काश्मीराः पठन्ति। सन्निपातज्वरस्योर्द्ध्वं त्रयोदशविधस्य हि इत्यादिना त्रयोदशविधस्य सन्निपातज्वरस्य लक्षणानि काश्मीरा यत् पठन्ति, तन्न युक्तिसिद्धम्। प्रकृतिसमसमवायेन दोषजानां व्याधीनां प्रत्येकशो हि पाठो नाचार्य्याणां रीतिर्ग्रन्थगौरवात्, दोषभेदविकल्पेन तेषां सर्व्वेष्वेव व्याधिषु भिषग्भिरुन्नेयत्वात्। विकृतिविषमसमवायेन तु

शीतपित्तम्। स्तैमित्यमिति आर्द्रवस्त्रावगुण्ठितत्वमिव। सन्तापो मध्यवेग इति नातितीव्रः सन्तापः। स्वेदस्तम्भ इति स्वेदाप्रवर्त्तनम्॥ ४६—४९॥

चक्रपाणिः—सन्निपातज्वरस्योर्द्ध्वमित्यत्र 'ऊर्द्ध्व'शब्देनाधिक्यवाचिना प्रकृतिसमसमवायारब्धसन्निपातज्वराद् यानि विकृतिविषमसमवायारब्धज्वरस्य लक्षणानि, तानि वक्ष्यामीत्यर्थः। केचिद

* स्वेदस्तम्भ इति पाठान्तरम्। † हृदव्यथाः इति पाठान्तरम्।

छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना।
मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्वणे ॥ ५३ ॥
सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः।
वातोल्वणे स्याद् द्व्यनुगे तृष्णा कण्ठास्यशुष्कता ॥ ५४ ॥
रक्तविण्मूत्रता दाहः स्वेदस्तृड् बलसंक्षयः।
मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि ॥ ५५ ॥
आलस्यारुचिहृल्लास-वमिदाहतृषाभ्रमैः *।
कफोल्वणं सन्निपातं तन्द्रा कासेन चादिशेत् ॥ ५६ ॥
प्रतिश्या च्छर्दिरालस्यं तन्द्रारुच्यग्निमार्दवम्।
हीनवाते पित्तमध्ये लिङ्गं श्लेष्माधिके मतम् ॥ ५७ ॥
हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः।
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥ ५८ ॥
शिरोरुग् वेपथुः श्वासः प्रलापच्छर्द्यरोचकाः।
हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् ॥ ५९ ॥
शीतको गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक्।
हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके मतम् ॥ ६० ॥
पर्वभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः।
कफहीने मध्यवाते लिङ्गं पित्ताधिके मतम् ॥ ६१ ॥
श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक्।
कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम् ॥ ६२ ॥

* दाहवम्यरतिभ्रमैरिति पाठान्तरम्।

क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि दर्शने॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम्।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा।
स्वेदमूत्रपुरीषाणां चिराद् दर्शनमल्पशः॥

यद् यल्लक्षणं भवति तदेवाचार्य्याः प्रायेण पठन्ति; तस्मादत ऊर्द्ध्वं विकृतिविषमसमवायारब्धसन्निपातज्वरस्य लक्षणमाह—क्षणे दाह इत्यादि। अस्थ्यादीनां रुजा शूलम्। दर्शने नेत्रे द्वे सास्रावे अश्रुपूर्णे, कलुषे आविले विवर्णे वा, रक्ते रक्तवर्णे, निर्भग्ने भुग्नत्वान्निर्गते विस्फारिते इत्यर्थः, अन्तःप्रविष्टे इत्यन्ये, कोटराक्षे वा अतिकुटिले इति कश्चित्। कर्णौ च सस्वनादी। शूकैः शूकवद्भिर्धान्यशूकशिम्ब्यादिभिरावृत इव कण्ठः। जिह्वा च परिदग्धा दग्धवत् कृष्णवर्णा, खरस्पर्शा गोजिह्वावदमसृणस्पर्शा च। स्रस्ताङ्गता निःसहायाङ्गावयवता। कफेनोन्मिश्रितस्य रक्तपित्तस्य रागतो रक्तवर्णत्वापन्नस्य पित्तस्य ष्ठीवनं मुखेन स्वल्पोद्गिरणम्। शिरसो लोठनम् इतस्ततः शिरसश्चालनम्। हृदि व्यथा वक्षःशूलम्। स्वेदादीनामल्पदर्शनमल्पप्रवृत्तिश्चिरात् दोषाणां व्याख्यानयन्ति; यत्—सास्रावकलुषनिर्भुग्नलोचनत्वादीह वक्तव्यम्, न तत् पृथग्वातादिज्वरलक्षणमेलके भवति, किन्तु विकृतिविषमसमवायारब्धज्वरसंयोगमहिम्ना भवतीति; वयन्तु ब्रूमः—यदि 'ऊर्द्ध्व' शब्देन विकृतिविषमसमवायारब्धज्वरलक्षणाभिधानमिह प्रतिज्ञायते, तदा यत् प्रत्येकदोषलक्षणमेलकेनोपपन्नं लक्षणम्—"क्षणे दाहः क्षणे शीतम्" इत्यादि, तदिहानभिहितं स्यात्, सामान्येन यान्यत्र प्रायः प्रादुर्भवन्ति, तानि विकृतिविषमसमवायारब्धानि तथा प्रकृतिसमसमवायारब्धानि च लक्षणान्युच्यन्ते। अत ऊर्द्ध्वमिति पदस्य चातः परेणेत्यर्थः॥ ५०—६२॥

<u>चक्रपाणिः</u>—निर्भुग्ने इति अतिकुटिले। परिदग्धा दग्धवत् कृष्णावर्णा; खरस्पर्शा गोजिह्वावत्। स्रस्ताङ्गता निःसहायावयवता; ष्ठीवनं रक्तस्य पित्तस्य वा मुखेन

कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम्।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम्॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च।
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः॥ ६३॥
दोषे विबद्धे नष्टेऽग्नौ सर्व्वसम्पूर्णलक्षणः।
सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा॥ ६४॥

चिरेण पाकात्। अत एव दोषपूर्णत्वात् गात्राणां नातिकृशत्वम्। प्रततं निरन्तरं कण्ठकूजनम्। श्यावरक्तानां धूम्ररक्तवर्णानां कोठानां दर्शनं प्रवृत्तिः। श्यावरक्तानां मण्डलानाञ्च दर्शनम्। कोठस्तु भालुकिना पठितः—"वरटीदष्ट-नीकाशः कण्डुमान् लोहितोऽस्रकफपित्तात्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" इति। मण्डलो मण्डलाकारः शोफविशेषः। मूकत्वम् अवचनं स्वल्पवचनत्वं वा। स्रोतसां मुखनासिकादिमहारन्ध्राणां पाकः पचनम्। उदरस्य गुरुत्वम्। दोषाणाञ्च चिरात् पाकस्त्रयाणां दोषाणां विषम-समवायारम्भातिसामत्वाभ्यां भवति। एतानि चिह्नानि प्रायोभावित्वेनोक्तानि तेन चकारेणान्यान्यपि बोध्यानि॥ ५०—६३॥

गङ्गाधरः—ननु कथं चरकाचार्य्यस्तानि लक्षणानि नापाठीदित्यतस्तस्य सन्निपातजज्वरस्यासाध्यत्वादिलक्षणमाह—दोषे इत्यादि। पित्तादिदोषा-प्रवृत्तौ सत्यां सति चाग्नौ जाठरे नष्टे यदि क्षणेदाहादि-चिरदोषपाकान्तलक्षणैः सर्व्वैः सम्पूर्णलक्षणो भवति तदा उक्त एव सन्निपातज्वरोऽसाध्यो भवति, एत-दधिकलक्षणस्तु न तथा स्यादेव। ततोऽन्यथा क्षणेदाहादिचिरदोषपाकान्तेभ्यो

स्वल्पोद्गिरणम्; शिरसो लोठनमिति इतस्ततो नयनम्; कृशत्वं नातिगात्राणां दोषपूर्णत्वेन; प्रततं निरन्तरम्; कोठो भाल्लुकीये—"वरटीदसष्टङ्काशः कण्डूमान् लोहितोऽस्रकफ-पित्तात्। क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः॥" इति; मूकत्वं मन्दवचनत्वम्, अवचनता वा॥ ६३॥

चक्रपाणिः—सन्निपातस्यावसाध्यताकृच्छ्रसाध्यतालक्षणमाह—दोष इत्यादि। अत्र 'दोष'शब्दो विबद्धोपपदात् मले वर्त्तते; आहारापाकान्नष्टेऽग्नावित्यर्थः; सर्व्वाणि च सम्पूर्णानि बलीयांसि लक्षणानि यस्य स सर्व्वसम्पूर्णलक्षणः; असाध्यकृच्छ्रसाध्याभिधानेन सुखसाध्यो न भवतीति

निदाने त्रिविधा प्रोक्ता या पृथगज-ज्वराकृतिः।
संसर्गसन्निपातानां तया चोक्तं स्वलक्षणम्॥ ६५॥
आगन्तुरष्टमो यस्तु स निर्द्दिष्टश्चतुर्व्विधः।
अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः॥ ६६॥

लक्षणेभ्यः चेदन्यथा अल्पलक्षणः सर्व्वसम्पूर्णलक्षणः सन् वा न दोषा विबद्धा न वा नष्टोऽग्निस्तदा कृच्छ्रसाध्य इति ख्यापनार्थमधिकानि लक्षणानि नापाठीत्॥ ६४॥

गङ्गाधरः—नन्वेवं चेत् सन्निपातज्वरस्तर्हि किं प्रकृतिसमसमवायारब्धोऽयं किंनु विकृतिविषमसमवायारब्ध इत्याशङ्क्य विकृतिविषमसमवायारब्धत्व-ज्ञापनायाह—निदाने इत्यादि। निदानस्थाने पृथगजानां वातजपित्तजकफ-जानां ज्वराणां या आकृतिरुक्ता तयैवाकृत्या संसर्गाणां नवानां त्रयोदशानां सन्निपातानाञ्च प्रकृतिसमसमवेतानां स्वलक्षणमुक्तम्। यस्य दोषस्य न्यूनाधिक-मध्यत्वानि तद्दोषलक्षणानां न्यूनाधिकमध्यत्वैरभिव्यक्तिस्तथाविधलक्षणानां दर्शनेन च तथा संसर्गान् सन्निपातांश्च ज्वरान् भिषगादिशेत् चिकित्सेच्च। वातादीनां हि प्रकृतीनां समसमवायेनाधिकलक्षणासम्भवः। विकृतिविषम-समवायेन तु भवन्त्यधिकलिङ्गानि च न चास्ति नियमस्तस्मात् द्वन्द्वजा-स्त्रयः सन्निपातश्चैको विकृतिविषमारब्धाश्चत्वारः साक्षात् पठिताः इति भावः॥ ६५॥

गङ्गाधरः—अष्टानां सप्त ज्वरा उक्ताः, पारिशेष्यादष्टममागन्तुज्वरमाह—आगन्तुरित्यादि। निदाने यस्त्वष्टम आगन्तुज्वर उक्तः स चतुर्व्विधश्च निर्द्दिष्टः अभिघाताभिषङ्गाभ्यां द्वौ अभिचाराभिशापतश्च द्वौ इति चतुर्व्विधः॥ ६६॥

दर्शितम्; यदुक्तम्—"सन्निपातो दुश्चिकित्स्यानाम्" इति, तथा च भालुकिना—"मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता" इति॥ ६४॥

चक्रपाणिः—निदान इत्यादि। ज्वरनिदाने प्रोक्ता—"तत्र यथोक्तानां लिङ्गानाम्" इत्यादिना ग्रन्थेन प्रागुक्तेत्यर्थः, पुनः प्रकरणागतत्वादुच्यन्त इति पुनः पौनरुक्त्यम्; तया चोक्तं स्वलक्षणमिति तया द्वन्द्वरूपया द्वन्द्वलक्षणं तथा सन्निपातरूपया सन्निपातलक्षणमित्यर्थः॥ ६५॥

चक्रपाणिः—आगन्तुं चतुर्व्विधं विभजन्नाह—आगन्तुरित्यादि॥ ६६॥

शस्त्रलोष्टकशाकाष्ठ-मुष्ट्यरत्नितलद्विजैः।
तद्विधैश्च हते गात्रे ज्वरः स्यादभिघातजः॥
तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन्।
सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम्॥ ६७॥
कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः॥

गङ्गाधरः—तत्राभिघातज्ज्वरमाह—शस्त्रेत्यादि। शस्त्रादिभिरभिहते गात्रे सति अभिघातजज्वरः स्यात्। शस्त्रं शक्तिशूलादि। कशा अश्वताड़नरज्जुवत्। अरत्निर्हस्तस्तस्य तलं करतलम्। द्विजा दन्ताः। तद्विधः वान्यैरभिहननयोग्य-दण्डादिभिः। नन्वभिहते त्वेभिर्गात्रे कथमुत्पद्यते ज्वर इत्यत आह—तत्राभि-घातज इत्यादि। सुश्रुतेऽपि "श्रमक्षयाभिघातेभ्यो देहिनां कुपितोऽनिलः। पूरयित्वाखिलं देहं ज्वरमापादयेद् भृशम्"॥ इति॥ ६७॥

गङ्गाधरः—अभिषङ्गजज्वरमाह—कामेत्यादि। अभिषङ्गज्वरस्तु स यः कामाभिषक्तस्य यश्च शोकाभिषक्तस्य यश्च भयाभिषक्तस्य यश्च क्रोधाभिषक्तस्य यश्च भूताभिषक्तस्य शारीरदोषसञ्चयादिनिमित्तमन्तरेण कामादिकारणाभि-षङ्गमात्राद् भवति, न तु पूर्व्वं कामाद्यभिषक्तस्य। पश्चादपचारमासेवमानस्य कालान्तरेण यो ज्वरः स्यात् स च शारीर एवोच्यते। यदि कामादिरपि तत्र हेतुः स्यात् तदा तल्लक्षणमपि स्यात्, तदा दोषागन्तुज उच्यते। नन्वभिघाताद् वायुः कुपित एव ज्वरं कुरुते कथमागन्तुज्वरः उच्यते, भवति हि वातजत्वाच्छारीर इति चेन्न, आगन्तुर्हि व्यथापूर्व्वो जायते पश्चान्निजैर्दोषैरनुबध्यते इत्युक्तौ पूर्व्वमेवाभिघातादस्फुट एव ज्वरो भवति पश्चाद्वायुः प्रकोपमापन्नो रक्तं प्रदूषयन् सव्यथादिलक्षणज्वरं कुरुतेऽभिव्यज्यति। एवं कामादिजेषु व्याख्येयम्।

चक्रपाणिः—कशा सार इति ख्याता; अत्र मुष्टिः 'कील' इति ख्यातः; हते अभिहते; प्रायो रक्तमिति अत्यर्थं रक्तं दूषयन् मांसादि चाल्पं दूषयतीत्यर्थः; यद्यपि निदानेऽपि "तत्राभिघातजेन वायुना दुष्टशोणिताधिष्ठानेन" इत्युक्तम्, तथापीह रक्तस्य साक्षाद् दुष्टिः, यथा मांसादीनां मनागदुष्टिरुच्यत इति विशेषः॥ ६७॥

चक्रपाणिः—अभिषङ्गज्वरेषु दोषविशेषमाह—कामेत्यादि। ननु निदाने—"अभिषङ्गजः पुनर्वातपित्ताभ्यामनुबध्यते" इत्युक्तम्, तत् किमिह भूताभिषङ्गजस्य त्रिदोषानुबन्धः? उच्यते,

कामशोकभयाद् वायुः क्रोधात् पित्तं त्रयो मलाः ।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः ।
भूताधिकारे व्याख्यातं तदष्टविधलक्षणम् ॥ ६८ ॥

ननु कामादितस्तु को दोष इत्यत आह—कामशोकभयाद्वायुः इत्यादि। सुश्रुते तु "कामजे चित्तविभ्रंशस्तन्द्रालस्यमभक्तरुक्। हृदये वेदना चास्य गात्रञ्च परिशुष्यति। भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः। भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम्।" इति, कथं क्रोधजे पित्तकोपाद् वेपथुः स्यात् न हि कम्पो वायुना विना स्यादिति चेन्न। कामशोकभयाद् वायुरेव क्रोधात् पित्तं वायुश्चानुवर्त्तते एव पश्चान्निर्देशात्। विदेहेन ह्युक्तं "क्रोधशोकौ स्मृतौ वातरक्तपित्तप्रकोपणौ।" इति। अस्तु शोकादपि पित्तम्। न हि समासनिविष्टकामभयपदं हित्वा शोकपदान्वयः सम्भवति। पित्तेन सहेति चेन्न, कामादिभिर्वायुः प्राधान्येन कुप्यति, क्रोधात् पित्तं प्राधान्येन कुप्यति, तत्राप्राधान्येन शोकात् पित्तरक्तकोपः क्रोधाद्वायुकोप इत्यभिप्रायेणात्राचार्य्यः क्रोधाद्वायोः शोकात् पित्तरक्तयोः कोपं नोक्तवान् न चैतावता प्रतिषेधति। भूताभिषङ्गात् त्रयो मलाः कुप्यन्ति। ननु तर्हि किं भूताभिषङ्गजस्त्रिदोषजलक्षण इत्याशङ्क्याह—भूतसामान्यलक्षणा इति। येन भूतेनाभिषक्तस्य ज्वरो भवति तस्य यल्लक्षणं तल्लक्षणसामान्येन समानतया लक्षणं येषां ते तथा, न तु स्वस्वलक्षणवन्त इत्यर्थः।

ननु भूतानां मध्ये कस्य भूतस्य किं लक्षणमित्यत आह—भूताधिकारे इत्यादि। भूताधिकारे भूतोन्मादमधिकृत्य तदष्टविधं भूतानामष्टानाम् अष्टविधलक्षणं व्याख्यातं देवोन्मत्तं गुरुवृद्धाद्युन्मत्तं पितृग्रहोन्मत्तं गन्धर्व्वोन्मत्तं यक्षोन्मत्तं राक्षसोन्मत्तं ब्रह्मराक्षसोन्मत्तं पिशाचोन्मत्तमिति। उरगोन्मत्तमस्मिंस्तन्त्र तु नोक्तवान् सुश्रुते तु तमुक्तवान् न ब्रह्मराक्षसोन्मत्तमिति विरोधस्तदधिकारे परिहार्य्यः ॥ ६८ ॥

न तत्र कामाद्यभिषङ्गजे यः प्रायो भवति, तदभिप्रायेणोक्तं "वातपित्ताभ्यामनुबध्यते" इति, कामादिकेषु हि क्वचिद् वातः, क्वचित् पित्तमिति वातपित्तानुबन्धो ज्ञेयः। भूतसामान्यलक्षणा इति देवस्वरूपादयोऽष्टौ उन्मादे अष्टौ भूता उक्ताः। तेषां मध्ये आवेशकर्त्तृभूतस्य यल्लक्षणं, तेन समान्यत्व

विषवृक्षानिलस्पर्शात् तथान्यैर्विषसम्भवैः।
अभिषक्तस्य चाप्याहुर्ज्वरमेकेऽभिषङ्गजम्।
चिकित्सया विषघ्न्यैव स शमं लभते ज्वरः * ॥ ६९ ॥
अभिचाराभिशापाभ्यां सिद्धानां यः प्रवर्त्तते।
सन्निपातज्वरो घोरः स विज्ञेयः सुदुःसहः॥
सन्निपातज्वरस्योक्तं लिङ्गं यत् तस्य तत् स्मृतम्।
चित्तेन्द्रियशरीराणामार्त्तयोऽन्याश्च नैकशः॥ ७० ॥

गङ्गाधरः नन्वेतावन्मात्रं कामशोकभयक्रोधभूतैरभिषक्तस्य ज्वरमेवाभिषङ्गज्वरमिच्छन्ति किमान्यमित्यत आह—विषेत्यादि। विषवृक्षानिलस्पर्शाद् यो ज्वरस्तथान्यैश्चम्पकाद्योषधिगन्धाद्यैस्तथा विषसम्भवैर्वस्तुभिरभिषक्तस्य यो ज्वरस्तमपि ज्वरमभिषङ्गजमेके भिषजः आहुः। अयञ्चाप्रतिषिद्धत्वादनुमत एव। सुश्रुते ह्युक्तं "श्यावास्यता विषकृते दाहातीसारहृद्ग्रहाः। अभक्तरुक् पिपासा च तोदो मूर्च्छा बलक्षयः। ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा।" इति मतमेतत् स्वीकृत्यैवाह—चिकित्सयेत्यादि। अत्रायं भावः—तत्तद्विषज्वरचिकित्सया नरस्य स तत्तद्विषादिज्वरः शमं लभते यद्येवं तदा तत्तद्विषादिलिङ्गमेव तत्तज्ज्वरो न तु पृथक् ज्वररोग उच्यते इति चेत् तन्न, मूर्च्छामोहमदग्लानि भूयिष्ठं विषसम्भवे इति वक्ष्यमाणलक्षणस्यासङ्गतेः॥ ६९ ॥

गङ्गाधरः—अभिचाराभिशापजौ ज्वरावाह—अभिचारेत्यादि। सिद्धानां गुरुवृद्धसिद्धर्षीणामभिचाराद‌भिशापाद्वा यो ज्वरः प्रवर्त्तते स सन्निपातः त्रिदोषजो घोरो ज्वरः सुदुःसहो विज्ञेयः। नन्वेतयोः किं लक्षणमित्यत आह सन्निपातज्वरस्येति। ननु तर्हि सन्निपातज्वरादनयोः को भेद इत्यत आह—चित्तेत्यादि। चित्तेन्द्रियशरीराणामन्याश्चार्त्तयोऽनेकशो भवन्ति॥७०॥

दोषलक्षणानि भूतज्वरे भवन्ति। अत्र काश्मीराः विषवृक्षानिलस्पर्शादित्यादिग्रन्थं विषज्वराभिधायकं पठन्ति। तेन विषजोऽप्यभिषङ्गज एव प्रविशति ; ये तु न पठन्ति, तन्मतेऽप्यभिषङ्गज एव विषौषधिगन्धजस्याप्यवरोधः ; अन्ये तु विषजं विषजनितपित्तकृतत्वेन दोषज एव क्षिपन्ति॥६८।६९॥

चक्रपाणिः अभिचारो हिंसार्थाथर्व्वमन्त्रहोमादिः। अभिशापो अभिशपनमेव। सिद्धा

* प्रशमं लभते नरः इति चक्रकृतः पाठः।

प्रयोगन्त्वभिचारस्य दृष्ट्वा शापस्य चैव हि ।
स्वयं श्रुत्वानुमानेन लक्ष्यते प्रशमेन च ॥
वैविध्यादभिचारस्य शापस्य च तदात्मके ।
यथाकर्म्मप्रयोगेण लक्षणं स्यात् पृथग्विधम् ॥ ७१ ॥
ध्यानं निश्वासबहुलं लिङ्गं कामज्वरे स्मृतम् ।
शोकजे वाष्पबहुलं त्रासप्रायं भयज्वरे ॥
क्रोधजे बहु रम्भं भूतावेशे त्वमानुषम् ।
मूर्च्छामोहमदग्लानि-भूयिष्ठं विषसम्भवे ॥ ७२ ॥
केषाञ्चिदेषां लिङ्गानां सन्तापो जायते पुरः ।
पश्चात् तुल्यन्तु केषाञ्चिदेषु कामज्वरादिषु ॥ ७३ ॥

गङ्गाधरः—ननु कथमाभिचारिकमाभिशापिकं वा लक्षयेदित्यत आह—प्रयोगमित्यादि। अभिचारस्य प्रयोगं दृष्ट्वा अभिशापस्य च तथात्वं श्रुत्वा स्वयं वानुमानेन वा प्रशमन च लक्ष्यते। तर्हि किं तुल्यलक्षणमनयोः स्यादित्यत आह—वैविध्यादित्यादि। अभिचारस्य वैविध्यात् विविधत्वात् अभिशापस्य च वैविध्यात् तदात्मके अभिचारात्मके ज्वरेऽभिशापात्मके च ज्वरे यथाकर्म्मप्रयोगेण यथाभिचारकर्म्मप्रयोगः क्रियते यथाचाभिशापप्रयोगः क्रियते, तथैव लक्षण स्यादिति पृथग्विधं लक्षणं स्यात्। तस्माल्लक्षणमनुगम्योपदेष्टुं न शक्यते ॥७१॥

गङ्गाधरः—ननु कामादिजेषु ज्वरेषु किं किं लक्षणं भवतीत्यत आह—ध्यानमित्यादि। ध्यानं चिन्ता निश्वासबाहुल्यञ्च स्यात्। शोकजे तु वाष्पबहुलं लक्षणं स्यात्, वाष्पः शोकजास्रपातः। भयज्वरे त्रासबहुलं भयबहुलम्। क्रोधजे ज्वरे बहुसंरम्भं लक्षणं, संरम्भस्त्वारभटी। भूतावेशज्वरे तु अमानुषं मनुष्यचेष्टाकृतिविपरीतं तत्तद्भूतलक्षणं भवति। विषवृक्षानिलस्पर्शादिसम्भवे ज्वरे तु मूर्च्छादिभूयिष्ठं लक्षणं भवति। मूर्च्छा इन्द्रियमोहः। मोहो हीन्द्रियमनोमोहस्तेन व्यस्तत एते द्वे लक्षणे भवतो न तु युगपदिति ॥ ७२ ॥

गङ्गाधरः—एषां लिङ्गानां प्राक्पश्चाद्भावित्वनियममाह—केषाञ्चिदित्यादि।

मन्त्रौषधतपःशमादिसिद्धाः। 'सन्निपातज्वरस्योक्तम्' इत्यादिग्रन्थमत्र काश्मीराः पठन्ति, स च नातिप्रसिद्धः ॥ ७०—७३ ॥

कामादिजानामुद्दिष्टं ज्वराणां यद् विशेषणम्।
कामादिजानां रोगाणामन्येषामपि तत् स्मृतम्॥ ७४॥
मनस्यभिद्रुते पूर्व्वं कामाद्यैर्न तथा बलम्।
ज्वरः प्राप्नोति कामाद्यैर्मनो * यावन्न दुष्यति॥ ७५॥
ते पूर्व्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः।
हेत्वौषधविशिष्टाश्च भवन्त्यागन्तवो ज्वराः॥ ७६॥

एषु कामादिज्वरेषु एषां लिङ्गानां ध्यानादीनां पुरोऽग्रे सन्तापो जायते। पश्चादिति। केषाञ्चित् पुंसां ध्यानादेः पश्चात् सन्तापो जायते। केषाञ्चित् पुंसां तुल्यं युगपदेव ध्यानादिः सन्तापश्च जायते॥ ७३॥

गङ्गाधरः—प्रसङ्गात् कामादिजानामन्येषां रोगाणामपि विशेषमाह—कामादिजानामित्यादि। कामादिज्वराणां ध्याननिश्वासबहुलादि यद् यद् विशेषणम् उद्दिष्टं विशेष उक्तः, कामादिजानामन्येषामपि रोगाणां तदेव ध्यानादिविशेषणं विशेषः स्मृतम्॥ ७४॥

गङ्गाधरः—ननु कामादयश्च पुंसां प्रायो दृश्यन्ते न कथं ज्वरः स्यादिति चेन्न, सम्प्राप्तिं विना ज्वरानुत्पत्तेः। ननु तर्हि किं कामादिषु जातेषु कस्मात् सम्प्राप्तिर्न भवतीत्यत आह—मनस्यभीत्यादि। पूर्व्वं कामाद्यैः अभिद्रुते चञ्चलीकृते मनसि नरस्य ज्वरो न जायते, स खलु तथा न तावत् बलं प्राप्नोति, यावत् कामाद्यैर्मनो न दुष्यति। यावच्च कामाद्यैर्मनो न दुष्यति तावच्च ज्वरसम्प्राप्तिकारणञ्च कामादिभ्यो न जायते, यदा मनो दुष्यति तदा कामादिजा आगन्तवो ज्वराः स्युः॥ ७५॥

गङ्गाधरः—ननु यदा मनो दुष्यति तदा किं नागन्तुजा इत्यत आह—ते पूर्व्वमित्यादि। ते ज्वरा मनोदूषणात् पूर्व्वं केवलाः शुद्धकामादिजा आगन्तवो ज्वराः, पश्चात् मनोदूषणानन्तरं ते आगन्तवो ज्वराः, निजैः कामाद् वायुः शोकाद् वायुः भयाद् वायुः क्रोधात् पित्तं प्रकोपमापद्यते, तत्र तत्र

चक्रपाणिः—आगन्तोर्निजाद् भेदकं धर्म्ममाह—ते पूर्व्वमित्यादि। केवला इति निजदोष-

* मनःस्थाने देह इति क्वचित् पाठः।

संसृष्टाः सन्निपतिताः पृथग् वा कुपिता मलाः।
रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च॥
स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम्।
स्रोतांसि रुद्ध्वा संप्राप्ताः केवलं देहमुल्वणाः॥

तद्वाय्वादीनां लिङ्गैर्ध्याननिश्वासबहुलादिभिः कामादिजैश्च लिङ्गैर्व्यामिश्र-लक्षणाः सन्तो हेत्वौषधविशिष्टाः कामादिहेतूनां शारीरहेतुवातादीनां प्रत्यनीकैरौषधैर्विशिष्टाश्च भवन्ति॥ ७६॥

गङ्गाधरः—ननु वातादिजानां यानि यानि लक्षणान्युक्तानि तेषां किञ्चिल्लक्षणं सन्तापरूपं केवलान्वयि सर्व्वेषु ज्वरेष्वन्वयात्। कानिचिल्लक्षणानि निद्रानाशादीनि अन्वयव्यतिरेकीणि वातादिज्वरे ह्यन्वयीनि कफादिज्वरे व्यतिरेकीणि। तैश्चानुमीयतां ज्वरः। यानि च व्याध्यन्तरे चान्वयीनि सन्ति कथम् अनुमीयते ज्वरः ऐकान्तिकत्वाभावादिति चेत् तत्र सम्प्राप्तिमाह—संसृष्टा इत्यादि। मला वातपित्तकफाः शरीरमलिनीकरणात् ते पृथग्ज्वरनिदानस्थानोक्तस्वस्वनिदानत एकशः कुपिता वा तन्निदानद्वयतः संसृष्टाः द्विशो वा कुपितास्तन्निदानत्रयतः सन्निपतितास्त्रय एव वा कुपिता रसाख्यं धातुं रसनामानमाद्यं धातुमाहारपरिणामजमाद्यं धातुमन्वेत्यानुगम्य पक्तिमुष्माणं जाठराग्निं स्थानान्निरस्य कोष्ठाभ्यन्तरात् शरीरे वाह्यत उत्क्षिप्य तेनोष्मणा सह देहोष्माणं मिश्रीकृत्य देहोष्मणो बलं कृत्वा स्रोतांसि

रहिताः। निजैरिति निजदोषलक्षणैः। हेत्वौषधविशिष्टाश्चेति निजाज् ज्वराद् विशिष्टहेतवो विशिष्टौषधाश्च भवन्ति। तत्र विशिष्टो हेतुरभिघातादिः। भेषजञ्च परिषेकमन्त्रादि॥ ७४—७६॥

चक्रपाणिः—संसृष्टा इत्यादिना सर्व्वज्वरसाधारणसम्प्राप्तिं ब्रूते। सम्प्राप्तिरपि हि सर्व्वज्वराणामाकृतिरेव, तेन नोत्सूत्रमस्याभिधानम्। किंवा क्रमप्राप्ते सामज्वरलक्षणे वक्तव्येऽरुच्यादीनां सामज्वरलक्षणानामुत्पादे उपपत्तिं दर्शयितुं सम्प्राप्तिरुच्यते। संसृष्टा इति युग्मभूताः। सन्निपतिता इति त्रयो मिलिताः। पक्तिमिति पक्तिहेतुतया जाठराग्निं ब्रूते। स्थानादिति ग्रहण्याः, ग्रहणी जाठराग्निस्थानम्। स्वेनेति दोषोष्मणा, तेनेति जाठराग्न्युष्मणा। देहोष्मण इति सकलदेहव्यापिणः प्राकृतोष्मणः। वातश्लेष्मणोस्तु यद्यपि पित्तवदुष्मा नास्ति, तथापि तयोर्भूतत्वे उष्मा योऽस्ति, स इह ग्राह्यः। वक्तव्यं हि ग्रहण्यध्याये—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः" इति। किंवा तेनेति दिव्यरूपज्वराभिधानप्रभावकृतं दोषाणामुष्माणं

सन्तापमधिकं देहे जनयन्ति नरस्तदा।
भवत्यत्युष्णसर्व्वाङ्गो ज्वरितस्तेन चोच्यते॥
स्रोतसां संविबद्धत्वात् स्वेदं ना नाधिगच्छति।
स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे॥ ७७॥
अरुचिश्चाविपाकश्च गुरुत्वमुदरस्य च।
हृदयस्याविशुद्धिश्च तन्द्रा चालस्यमेव च॥

पुरीषमूत्रस्वेदादिवहानि वर्त्मानि रुद्धा उल्वणाः स्वमानतोऽधिकमानास्त दोषाः केवलं कृत्स्नं देहं संयाताः सङ्गताः सन्तः देहेऽधिकं सन्तापं जनयन्ति, नरस्तु खलु तदात्युष्णसर्व्वाङ्गो भवति ; तेन हेतुना ज्वरित एव स नर उच्यते। इति व्याधीनां नियतस्वस्वलक्षणेनानुमानं स्यात्। अधिकदोषेण ह्यनुमानश्च भवत्येव। यद्धि लक्षणं व्याध्यन्तरे चानुगतं तेन प्रतिनियतसन्तापनिद्रानाशादि-लक्षणसहचरितेन ज्वरानुमानाव्याघातात्। यदा हि तन्मात्रमेव लिङ्गं भवति न च यावद्विशिष्टं चिह्नमुत्पद्यते न तावद्विशिष्टव्याधित्वेनानुमानमुपपद्यते, इति तदुपदेशश्च दोषबलाबलावधारणार्थं कृत्स्नाकृत्स्नलक्षणज्ञानार्थश्च चिह्न-कात्स्न्र्याकात्स्न्र्याद्धि साध्यासाध्यभावज्ञानं भवति। अत एवोक्तं "लिङ्गञ्चैक-मनेकस्य तथैकस्यैकमुच्यते। बहून्येकस्य च व्याधेर्बहूनां स्युर्बहूनि च॥" इति निदानस्थाने। स च ना ज्वरितो नरः स्रोतसां संविबद्धत्वात् तरुणे ज्वरे प्रायशो न स्वेदं घर्म्ममधिगच्छति। प्रायश इत्यनेन पित्तादिज्वरे स्वेदाधिगमनं भवतीति ख्याप्यते॥ ७७॥

गङ्गाधरः—इति पृथग् भिन्नस्य चाकृतिमिति प्रश्नोत्तरमुक्त्वा लिङ्गमामस्य भगवन् वक्तुमर्हसीति प्रश्नोत्तरमाह। तत्र ज्वरस्य सम्प्राप्तिमन्तरेण आमताज्ञानं न सम्पद्यत इत्यतः पूर्व्वं ज्वरसम्प्राप्तिमुक्त्वा तरुणज्वरलक्षणमाह—अरुचिः इत्यादि। अग्नौ तज्जाठराग्नौ स्वस्थानात् पक्तिस्थानात् प्रच्युते सति दुर्ब्बल अरुचिस्तस्य भवति। वह्निप्रबलत्वे हि प्राणिभ्य आहारो रोचते एवं विपच्यते च

ग्राहयति। किंवा ज्वरसामान्यसम्प्राप्तिप्राप्तपित्तोष्माणं निर्द्देशयति। सर्व्वत्र हि ज्वरे पित्त-मवश्यं भवति, यदुक्तम्—"उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना" इति। केवलमिति समस्तम्। स्वेदं ना नाधिगच्छतीत्यत्र प्राय इति योज्यं, क्वचिज ज्वरे स्वेदस्याप्यभिहितत्वात्।

ज्वरोऽविसर्गी बलवान् दोषाणामप्रवर्त्तनम् ।
लालाप्रसेको हृल्लासः क्षुन्नाशोऽविशदं मुखम् ॥
स्तब्धसुप्तगुरुत्वञ्च गात्राणां बहुमूत्रता ।
न विड् जीर्णा न च ग्लानिर्ज्वरस्यामस्य लक्षणम् * ॥७८॥

लघुत्वञ्च भवत्युदरस्य विशुध्यति च हृदयं न च भवन्ति तन्द्रालस्यादीनि। तस्माज्जाठराग्नौ स्थानात् प्रच्युतेऽरुच्यादीन्येतानि भवन्ति। हृदयस्याविशुद्धत्वं हृदयजाड्यम्। तन्द्रा निद्रावत् क्लान्तिः। आलस्यं कर्म्मस्वनुत्साहः। ज्वरश्चाविसर्गी अपरित्यागी बलवांश्च। दोषाणां हृदयादितः श्लेष्मपित्तादीनां मलानामप्रवर्त्तनमनिर्गमः वह्निना दुर्ब्बलेन स्तम्भभङ्गाभावात्। लालाप्रसेको हृदयस्थस्य रसस्य लालारूपेण प्रवृत्तेः। हृल्लासश्चामरसान्वितस्य हृदयस्थदोषस्योपस्थितवमनमिव प्रवृत्तिः। क्षुन्नाशश्चाग्निदुर्ब्बलत्वात्। मुखञ्चाविशदं सपिच्छिलम् अविशुद्धमित्यर्थः। गात्राणां स्तब्धसुप्तगुरुत्वञ्च गात्रस्तम्भो गात्राणामस्पन्दप्रायः, गात्रसुप्तिः स्पर्शाभिज्ञानाभावः। बहुमूत्रता च रसाधिक्यात्। न च जीर्णा पक्वा विड् भवति न च ग्लानिर्भवति। इदं सर्व्वमामस्य तरुणस्य ज्वरस्य लक्षणम्। सुश्रुतेऽपि। "दोषाः प्रकुपिताः स्वेषु कालेषु स्वैः प्रकोपणैः। व्याप्य देहमशेषेण ज्वरमापादयन्ति हि। दुष्टाः स्वहेतुभिर्दोषाः प्राप्यामाशयमुष्मणा। सहिता रसमागत्य रसस्वेदप्रवाहिणाम्। स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनम्। निरस्य वहिरुष्माणं पक्तिस्थानाच्च केवलम्। शरीरं समभिव्याप्य स्वकालेषु ज्वरागमम्। जनयन्त्यथ वृद्धिञ्च स्ववर्णञ्च त्वगादिषु।" इत्यारभ्य हेतुमुक्त्वा "तैर्वेगवद्भिर्बहुधा समुद्भ्रान्तैर्विमार्गगैः। विक्षिप्यमाणोऽन्तरग्निर्भवत्याशु वहिश्चरः। रुणद्धि चाप्यपां धातुं यस्मात् तस्माज्ज्वरातुरः। भवत्यत्युष्णगात्रश्च न च स्विद्यति सर्व्वशः॥" इति॥ ७८॥

'ना' इति पुरुषः। अविसर्गीति नित्यानुषक्तः। दोषाणामिति मलसम्बन्धानां दोषाणाम्। अप्रवर्त्तनमविसर्गः। क्षुन्नाश इति बुभुक्षाभावः। न विड् जीर्णेति न पुरीषं पक्वम्। न ग्लानिरिति न क्षीणमांसता॥ ७७।७८॥

* इतःपरं ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः। मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम्॥ इति श्लोकोऽधिकः क्वचित् पठितः।

क्षुत् क्षामता लघुत्वञ्च गात्राणां ज्वरमार्द्दवम्।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम्॥ ७९॥

गङ्गाधरः—आमज्वरस्य लिङ्गमुक्त्वा जीर्णस्य ज्वरस्य लिङ्गं वक्तुमर्हसीति प्रश्नोत्तरमाह—क्षुत् क्षामतेत्यादि। क्षुत् क्षुधा। क्षामता क्षीणत्वं गात्राणाम् लघुत्वम्। ज्वरमार्द्दवं ज्वरस्याल्पता। दोषप्रवृत्तिरिति वह्निप्रबलतायां सत्यां दोष-विबन्धच्छेदात् श्लेष्मपित्तादीनां मलानामूर्द्ध्वाधःप्रवर्त्तनम्। अष्टाहोऽपि लिङ्गमेकं क्षुधाद्यनुत्पत्तावप्यष्टाहो निरामत्वं ज्ञापयति क्षुधाद्युत्पत्तौ पुनरष्टाहं विनापि निरामत्वमिति ज्ञापनार्थं क्षुधादिलिङ्गानि चाष्टाहकालञ्च लिङ्गत्वेनोपदिदेशेति। एतेनाष्टाहकालस्य निरामलिङ्गवचनेनासप्तरात्रं तरुणं ज्वरमाहुर्मनीषिण इति चानुमतम्। अर्व्वागपि सप्ताहादूर्द्ध्वञ्च तरुणं यावत् क्षुत्क्षामतादि न स्यादिति च क्षुत्क्षामतादिवचनेन ख्यापयता दूषितञ्च उक्तञ्चान्यत्र। "सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः। निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" इति प्राय॥ इत्यनेन रसाधिक्ये ततः परतोऽपि सामता वर्त्तते इत्युक्तम्। कश्चित्तु दोषा-मताष्टाहकालप्राप्त्यापैति रसामता तु ततोऽपूर्द्ध्वमनुवर्त्तते इति ज्ञापनार्थमष्टाह इति लिङ्गमेकं क्षुत्क्षामतादीनि च लक्षणानि दर्शयामासेत्याह। तत्र ब्रूमः किं तावद्दोषस्य सामत्वं किञ्च रसस्येति "उष्मणोऽल्पबलत्वेन धातुमाद्य-मपाचितम्। दुष्टमामाशयगतं रसमामं प्रचक्षते। आमेन तेन संयुक्ता दोषा दूष्याश्च दूषिताः। सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः" इति चेत् तर्हि रसामतापायमन्तरेण कथं दोषस्य निरामत्वं सम्पद्यते दोषामता ह्यामरसान्वयात्

चक्रपाणिः—क्षुत्क्षामतेत्यादिना निरामज्वरलक्षणमाह। अत्र च क्षुदादयो दोषपाकाद् भवन्तो विनाप्यष्टाहं निरामदोषारब्धज्वरलक्षणं भवति। अष्टाहस्तु क्षुदादीन् विना दोषपाके सत्यपि भेषजदानयोग्यां ज्वरस्य व्याधेर्निरामतां ब्रूते, अत एव "पाचनं शमनीयं वा कषायं पाययेत् तु तम्" इति विकल्पद्वयेन। यदाष्टाहक्षुधादिदोषपाकलक्षणानुदयः, तदा दोषपाकार्थं पाचनीयं देयम्, अथ क्षुधादिसमुदयोऽपि जातः, तदा शमनीयं देयम्, सर्व्वथा निरामस्य ज्वरस्य एतामेव सर्वथा-निरामतामुपदिशति। खरनादेनोक्तम्— यत्—"न च निःसप्ततैवैका निरामज्वरलक्षणम्। चिरादपि हि पच्यन्ते सन्निपातज्वरे मलाः। सप्तरात्रातिवृद्धञ्च क्षामतादिस्वलक्षणम्। तस्मादेतद्द्वयं दृष्ट्वा निरामज्वरमादिशेत्॥" इति। अष्टाहादर्व्वाग् दोषपाकजनितक्षुदादिदर्शनान्निरामता सुश्रुतेनाष्टा हात् अर्व्वाग् भेषजदानं दर्शयता प्रतिपादिता; यदुक्तम्—"अर्व्वागपि च देयं स्यात् भेषजं दोष-पाकतः" इति; तस्मात् क्षुदादयोऽष्टाहश्च लक्षणं यथोक्तन्यायाज् ज्ञेयम्॥ ७९॥

**नवज्वरे दिवास्वप्न-स्नानाभ्यङ्गान्नमैथुनम् ।**
**क्रोधप्रवातव्यायाम-कषायांश्च विवर्ज्जयेत् ॥ ८० ॥**

उक्ता तस्माद् रसामतापायेनैव दोषामतापाय इत्यनुभवात् युगपदेव रसदोषयोः सामता निरामता च तुल्यकारणरिति ।

ननु ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः । मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् इति तन्त्रान्तरे त्वामनिरामव्यतिरिक्ता पच्यमानावस्था प्रोक्ता, सा तु कथं नोक्ता ? उच्यते, आमनिरामयोरन्तरालावस्था व पच्यमानावस्था निरामत्वस्य प्रागवस्थैव, यथा तण्डलं पचतीति तण्डुलपाकारम्भे तण्डुलस्त्वाम एव मध्यावस्थायां पच्यमानावस्था प्रतिनियतक्रियाभावा चात्र नोक्ता । सुश्रुतेऽपि "मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च । पक्वं दोषं विजानीयाज् ज्वरे देयं तदौषधम् । दोषप्रकृतिवैकृत्यादेकेषां पक्वलक्षणम् । हृदयोद्वेष्टनं तन्द्रा लालास्रुतिररोचकः । दोषाप्रवृत्तिरालस्यं विबन्धो बहुमूत्रता । गुरूदरत्वमस्वेदो न पक्तिः शकृतोऽरतिः । स्वापः स्तम्भो गुरुत्वश्च गात्राणां वह्निमार्दवम् । मुखस्याशुद्धता ग्लानिः प्रसक्ती बलवान् ज्वरः । लिङ्गैरेभिर्विजानीयाज्ज्वरमामं विचक्षणः ॥" इति ॥ ७९ ॥

<u>गङ्गाधरः</u>—लिङ्गमामस्य जीर्णस्येत्यस्य प्रश्नस्योत्तरमुक्त्वा औषधं सक्रियाक्रमं वक्तुमर्हसीति प्रश्नोत्तरमाह । तत्रादौ "सङ्क्षेपतः क्रियायोगो निदानपरिवर्ज्जनम्" इति ज्ञापनाय ज्वरनिदानवर्ज्जनरूपमौषधमाह—नवज्वरे इत्यादि । नवज्वरे निरामलक्षणानुदये ज्वरे दिवास्वप्नश्च स्नानश्चाभ्यङ्गश्चान्नश्च मैथुनश्च क्रोधश्च प्रख्यातं प्रसिद्धं वातश्च न तु कृत्रिमवातश्च व्यायामश्च कषायश्च रसमेव वर्ज्जयेत्, न तु स्वरसादिपञ्चकषायं वर्ज्जयेत् । वक्ष्यते ह्यत्रैव "स्तभ्यन्ते न विपच्यन्ते कुर्व्वन्ति विषमज्वरम् । दोषा बद्धाः कषायेण स्तम्भित्वात् तरुणे ज्वरे । न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते । यः कषायः कषायः स्यात्

चक्रपाणिः—"सौषधञ्च क्रियाक्रमम्" इत्यनेन यद्यप्यौषधमादावुक्तं, तथापि तस्य क्रियाक्रमविशेषणतया औषधमतिक्रम्य 'नवज्वरे' इत्यादिना क्रियाक्रमं ब्रूते । तत्राप्यहितस्यैव प्रथमं निषेधः ; अन्नशब्देन गुर्व्वन्नमभिधत्ते । हारीतेन हि—"नवज्वरे व्यायामादि प्रत्येकं दोषकोपणम् । गुर्व्वन्नभोजनञ्चापि विष्टम्भि दोषकोपणम्" इत्युक्तम् । कषायांश्चेति जातौ बहुवचनम् ; तेन कषायं वर्ज्जयेदित्यर्थः ; उक्तं ह्यत्र जतूकर्णेन,—"कषायरसगुरूष्णस्निग्धान्नस्नानाभ्यङ्गान् नवज्वरे वर्ज्जयेत्" इति ॥ ८० ॥

ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात्।
क्षयानिलभयक्रोध-कामशोकश्रमोद्भवात्॥

स वर्ज्ज्यस्तरुणे ज्वरे" इति। तेन कषायकषायवर्ज्जनेन कषायरसस्यापि वर्ज्जनमुक्तं भवति॥ ८०॥

गङ्गाधरः—ननु तर्हि किं मधुरकषायाम्लकषायकटुकषायतिक्तकषायाणां न प्रतिषेधो नवज्वरे स्यादिति चेत्? उच्यते—ज्वरे लङ्घनमित्यादि। ज्वरे इति सप्तमी विषये, विषयश्चात्र साध्याख्यश्चोद्देश्याख्यश्च, तेन ज्वरे जाते सत्यादौ प्रथमतः लङ्घनमेवोपदिष्टं ब्रह्मादिभिः वेदैर्नान्यद् भेषजं स्वरसकषायादिकं विहितम्। लङ्घनमत्र दशविधेषु लङ्घनेषु मध्ये वमनादीनां चतुर्णां संशोधनानां पाचनानाञ्च कालविशेषे विधानस्य वक्ष्यमाणत्वात्। मारुतव्यायामयोर्वर्ज्जनात् पिपासायां जलविधानाच्चातपस्य पित्तविरुद्धत्वाच्च पारिशेष्यादनशनमेव बोध्यम्। ननु किं सर्व्वेष्वेव ज्वरेषु लङ्घनमेवोपदिष्टमित्यत आह—ऋते ज्वरादित्यादि। क्षयाद्धातुक्षयात् कुपित एवानिलः क्षयानिलस्तस्मादुद्भूताज्ज्वरादृते एवं भयादुद्भूताच्च, न तु क्षयोद्भूतादनिलोद्भूतादित्यादिज्वरादृते। जीर्णज्वरे पुनः सामे सामे वातेऽपि लङ्घनमिति तन्त्रान्तरवचनेन वातजतरुणज्वरेऽपि लङ्घनविधानादिति कश्चित्। सुश्रुते तु—"न लङ्घयेन्मारुतजे क्षयजे मानसे तथा" इति वचनात् क्षयोद्भवादनिलोद्भवादित्यादिज्वरादृते इत्येवार्थः। अत्रेदञ्च वक्तव्यं "नत् तु मारुतक्षुत्तृष्णामुख-शोषभ्रमान्विते। कार्य्यं न बाले वृद्धे वा न गर्भिण्यां न दुर्व्वले" इति कश्चित्। एषु हि लङ्घनं दोषबलापेक्षया सम्यग्लङ्घनलक्षणोदयाभावेन लङ्घनं विहितमित्यभिप्रायेणाचार्य्यो न मुक्तकण्ठेन तद्वचनमवोचत्। लङ्घनबृंहणीयाध्याये च "एत एव यथोद्दिष्टा येषामल्पबला

चक्रपाणिः—ज्वर इत्यादौ 'लङ्घन'शब्देनेहानशनं विवक्षितम्। "चतुष्प्रकारा संशुद्धिः" इत्यादिना लङ्घनबृंहणीये दशविधमेव लङ्घनमुक्तम्, तथापि तेषामिहावस्थाविशेषेण विनियोगात् लङ्घनमेवेति नियमोऽपवादविषयं त्यक्त्वा समुद्रीयमानावधारणे ज्ञेयः; यथा—"नरञ्च नारायणमेव योभौ सुतौ तौ जनयाम्बभूव" इत्यत्र; तेन अवस्थायां वमनमपि भवति वक्ष्यमाणम्। यत् तु लङ्घनबृंहणीये कफपित्तज्वरच्छर्द्यादिषु मध्ये ज्वरं पठित्वा उक्तम्—"पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" इति, तत्र भेषजप्रयोगस्यादौ पाचनं कर्त्तव्यमिति ब्रूते न ज्वरादौ, तेन इहादौ लङ्घनाभिधानं न विरुध्यते। हारीते तु "पित्तश्लेष्मविशुद्ध्यर्थं कुर्य्याद् वमनमादितः" इति यदुक्तम्, तत् "कफप्रधानान्" इत्यादिवक्ष्यमाणावस्थायां ज्ञेयम्; 'क्षय'शब्देन धातुक्षयकृतं ज्वरं, किंवा राजयक्ष्मज्वरं गृह्णाति। 'अनिल'शब्देन निरामानिलग्रहणम्, किंवा 'क्षयानिल'-

लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले।
विज्वरत्वं लघुत्वञ्च क्षुच्चैवास्योपजायते॥

गदाः। पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत्" इत्युक्तम्। सुश्रुते चोत्तरतन्त्रे ज्वरचिकित्सिते "आनद्धस्तिमितैर्दोषैर्यावन्तं कालमातुरः। कुर्य्यादनशनं तावत् ततः संसर्गमाचरेत्। न लङ्घयेन्मारुतजे क्षयजे मानसे तथा। अलङ्घ्याश्चापि ये पूर्व्वं द्विव्रणीये प्रकीर्त्तिताः॥" इति; द्विव्रणीये तु "दोषोच्छ्रयोपशान्त्यर्थं दोषानद्धस्य देहिनः। अवेक्ष्य दोषं प्राणञ्च कार्य्यं स्यादपतर्पणम्। ऊर्द्ध्वं मारुततृष्णाक्षुन्मुखशोषभ्रमान्विते। न कार्य्यं गर्भिणीवृद्ध-बालदुर्ब्बल-भीरुभिरिति। ननु सुश्रुते "ज्वरस्य पूर्व्वरूपेषु वर्त्तमानेषु बुद्धिमान्। पाययेत घृतं स्वच्छं ततः स लभते सुखम्। विधिर्मारुतजे त्वेष पैत्तिकेषु विरेचनम्। मृदु प्रच्छर्द्दनं तद्वत् कफजेषु विधीयते। सर्व्वं द्विदोषजेषूक्तं यथादोषं विकल्पयेत्। अस्नेहनीयोऽशोध्यश्च संयोज्यो लङ्घनादिना। रूपप्राग्रूपयोर्विद्यात् नानात्वं वह्निधूमवद्" इति। दृश्यते वातजे स्वच्छघृतपानं पैत्तिके विरेचनं कफजे मृदु वमनं तत्तदयोग्येषु लङ्घनादिकं द्वन्द्वसन्निपातजेषु स्वच्छपानादिकं दोषानुरूपं मिलितं कर्त्तव्यम्। कथमत्र लङ्घनमेवेति सम्पद्यते इति चेत्? सत्यम्; अत्र न ह्येवशब्द उत्पन्नज्वराभिप्रायेणावधारणार्थः प्राग्रूपिज्वराभिप्राये तु समुच्चयार्थः ततः सामार्थः तेन प्राग्रूपे स्वच्छस्नेहादिकं लङ्घनमिव वर्त्तमानज्वरे तु आदौ लङ्घनमिव स्वेदादिकमित्यर्थः।

नन्वनेन लङ्घनेन कथं नवज्वरो निवर्त्तते इत्यत आह—लङ्घनेनेत्यादि। नवज्वरोत्पादकः सामो दोषो जाठराग्निश्च मन्दः। लङ्घनेन तु तस्मिन् दोषे क्षयं नीतेऽनले च सन्धुक्षिते प्रदीपिते सति विज्वरत्वादयः स्युर्लङ्घनं ह्यनवस्थितदोषाग्नेः पुरुषस्य दोषपाचनं वह्निदीपनञ्च तस्माच्च ज्वरहरं पानाहाराकाङ्क्षाकरं शरीरलाघवकरञ्चेति। सुश्रुतेऽप्युक्तम्—"अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम्। ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम्"। इति, तेन चकाराद् रुचिश्चास्योपजायते इति वाच्यम्।

शब्देन धातुक्षयकुपितानिलग्रहणम; यदुक्तम्—'वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति। यस्तु मार्गावरणेन वायुः कुप्यति, स आवरकधर्म्मितया प्रायेण सामो भवति, तस्य च लङ्घनं मात्रया कर्त्तव्यमेव; यदुक्तम्—"सामे वातेऽपि लङ्घनं कुर्य्यादेव मलपक्तयर्थं युक्त्या, तत् तु यथा कफे" इति। अनिलज्वरमुक्त्वापि कामादिज्वराभिधानम्, कालान्तरेण वातसम्बन्धो भवति; तेन, प्रथममपि वातासम्बन्धे कामादिज्वराणामलङ्घनीयत्वोपदर्शनार्थम्। लङ्घनफलमाह— लङ्घनेनेत्यादि।

प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत्।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः॥ ८१॥
लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः।
पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे॥ ८२॥

ननु कियन्तं कालं ज्वरे लङ्घनं कर्त्तव्यमित्यत आह—प्राणाविरोधिनेत्यादि। अत्र प्राणो बलम्। तस्याविरोधिना लङ्घनेन एनं प्राग्रूपिवर्त्तमानान्यतरज्वरिणमुपपादयेदुपाचरेत्। कुत इत्यत आह—बलाधिष्ठानमित्यादि। बलमधितिष्ठत्यस्मादिति बलाधिष्ठानमारोग्यं न तु बलस्याधिष्ठानमात्रमारोग्यं सुखसंज्ञकं ह्यारोग्यमुक्तं धातुसाम्यञ्च न च तद्द्वयं बलाधिष्ठितिरपि तु ते बलाधिष्ठानेनानुमीयेते सुखं धातुसाम्यञ्चेति। बलक्षये च लङ्घनेन कथमारोग्यं स्यात्। न चास्त्वारोग्यमिति न प्रयोजनम् अस्य लङ्घनादिचिकित्साक्रियाक्रमश्च। तदाह—यदर्थ इति। अयं तावल्लङ्घनादिः क्रियाक्रमः यदर्थः यदारोग्यमर्थोऽस्य स आरोग्यार्थ एवायं लङ्घनादिः क्रियाक्रमस्तस्मात् प्राणाविरोधिना लङ्घनेन चकारात् वक्ष्यमाणेन वमनादिना च प्राणाविरोधिनैनमुपपादयेदित्यर्थः। सुश्रुतेऽपि "आनद्धस्तिमितैर्दोषैर्यावन्तं कालमातुरः। कुर्य्यादनशनं तावत् ततः संसर्गमाचरेत्" इति, संसर्ग पेयादिकसेवनमिति। लङ्घनस्य सम्यक्कृताकृतातिकृतलक्षणानि लङ्घनबृंहणीयाध्याये वातमूत्रपुरीषाणां विसर्ग इत्यादिना प्रोक्तेन जानीयात्। सुश्रुते च "सृष्टमारुतविण्मूत्रं क्षुत्पिपासासहोदयम्। प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम्। बलक्षयस्तृषाशोषस्तन्द्रानिद्राभ्रमक्लमाः। उपद्रवाश्च श्वासाद्याः सम्भवन्त्यतिलङ्घनात्" इति॥ ८१॥

गङ्गाधरः—ननु ज्वरे तूत्पन्ने लङ्घनमिव तावद्दोषपाचनमन्यत् किमित्यत आह—लङ्घनमित्यादि। स्वेदनं स्वेदः। कालोऽष्टाहरूपः। यवाग्वः पेयामण्डविलेपी चेति त्रिधाभिप्रायेण बहुवचनम्, ताश्चौषधसिद्धा एव न तु निरौषधाः। तिक्तको

प्राणाविरोधिनेति बलाविरोधिना, विरोधश्च अतिक्षयकरत्वेनेहोच्यते। आरोग्यं बलवत एव भवतीति बलाधिष्ठानमारोग्यमुक्तम्। 'यत्' इत्यारोग्यं प्रत्यवमृशति॥ ८१॥

चक्रपाणिः—प्रकृतस्य लङ्घनस्य पाचनतां दर्शयन्नपराण्यपि स्वेदादीनि पाचनान्याह—लङ्घनमित्यादि। काल इत्यष्टाहः। तिक्तको रसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः। स्वतन्त्रभेषजप्रयोगस्तरुणे निषिद्ध एव। उक्तञ्च—"भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्"

**तृष्यते सलिलञ्चोष्णं दद्याद् वातकफज्वरे ।**
**मद्योत्थे पैत्तिके चाथ शीतलं तिक्तकः श्रृतम् ॥**

रस इति स्वरसादिकषायाणां संशमनानां नवज्वरे प्रतिषेधात् तोयपेयादि-साधने शुण्ठ्यादीनां कट्वादिरसानामपि प्रयोगाच्च तद्व्यतिरिक्तव्यञ्जनादि-रूपेण प्रयोगे तिक्तको रसो दोषपाचन इत्यर्थः। सम्यग्लङ्घिते बालवृद्धादिषु च नवज्वरे व्यञ्जनोपयोगसम्भवात्। दोषाणामविपक्कानामिति दोषाणाम् अविपक्कत्वं सामरससम्बन्धवत्त्वम्। तस्य पाचनानि आमरसपाकेन दोषपाक-कराणि। तरुण ज्वरे इति दोषाणामपक्कत्वानपायेऽपि सन्निपातज्वरे तथान्यत्र ज्वरे, चास्तब्धे सामे सप्ताहं यावत्तरुणत्वम्। अष्टाहावधि मध्यत्वादि। तत्र दोषपाचनानि न केवलं लङ्घनादीनि स्वरसकल्कादीन्यपि भवन्तीति तरुणे ज्वरे लङ्घनादीन्येव पाचनानि नान्यानीति अवधारणार्थमविपक्कानां दोषाणामित्युक्तत्रापि पुनस्तरुणे ज्वरे इत्युक्तम्। तेनेदं ज्ञापितं "सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं हितम्। निरामे शमनं स्तब्धे सामे नौषध-माचरेत्" इति। अत्र पाचनं यथोक्त पाचनरूपं स्वरसश्रृतादिकं न तु लङ्घना-दिकमिति, शमनं स्वरसश्रृतादिकमिति ॥ ८२ ॥

गङ्गाधरः—ननु नवज्वरे यदि तृष्णा स्यात् तदा किं लङ्घनविशेषं पिपासा-निग्रहं कुर्य्यादित्यत आह—तृष्यते इति। उष्णमिति क्वाथ्यमानन्तु यत् तोयं निष्फेनं निर्म्मलीकृतम्। भवत्यर्द्धावशेषन्तु तदुष्णोदकमुच्यते इत्यग्निवेश-वचनादर्द्धावशिष्टं अहिमं स्पर्शतो यज्जलं वर्त्तते, तज्जलं वातकफाभ्यां व्यस्त-समस्ताभ्यां जाते ज्वरे दद्यात्। मद्योत्थे ज्वरे पैत्तिके च ज्वरे तिक्तकैस्तिक्त-रसद्रव्यैः श्रृतमर्द्धावशिष्टं पक्वं सलिलं तृष्यते दद्यात् पातुमिति शेषः। अत्र सलिलमिति वचनेन तोयसंस्कारे द्रव्यजलयोर्मानं वृद्धवैद्या वदन्ति। "यदप्सु श्रृतशीतासु षड़ङ्गादि प्रयुज्यते। कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि" इति। अत्र मद्योत्थे ज्वरे मद्यकृतपित्तजत्वात् पैत्तिकेऽन्तर्भावेऽपि पृथगुक्त्या

इति। 'अविपक्कानां दोषाणाम्' इति कृत्वापि 'तरुणे ज्वरे' इति यत् करोति, तेन अष्टाहावृद्ध्वम् अतरुणे ज्वरे अपक्केषु दोषेषु प्राधान्येन कषायपानं पाचनमधिकृतम्, न लङ्घनादय इति दर्शयति ॥८२॥

चक्रपाणिः—लङ्घनादिकाले एव अवस्थाविशेषे देयं जलमाह—तृष्यत इत्यादि। वातकफ-ज्वर इति वातज्वरे कफज्वरे वातकफज्वरे च। मद्योत्थे कफादिज्वरेऽपि शीतलं जलं देयम्। तिक्तकैः श्रृतमिति वक्ष्यमाणमुस्तादिभिः श्रृतम्। उभयमित्युष्णं तथा तिक्तकश्रृतशीतञ्च।

दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत्।
स्रोतसां शोधनं बल्यं रुचिस्वेदकरं परम्॥ ८३॥

मद्यस्य तीक्ष्णस्य विपरीतस्तिक्तको रसः पित्तस्यापीति ज्ञापितम्। तेन सर्व्वत्रैव मद्योत्थव्याधिषु तिक्तको रसो विहित इति गम्यते। दीपनं वह्निदीपनं पाचनमामदोषपाचनञ्चैव तदुभयम् उष्णजलं तिक्तकैः शृतशीतजलञ्चेत्युभयं जलम्। यत् तु दीपनं तदेव पाचनं भवतीति नाशङ्क्यम्। घृतं हि दीपनमपि नामदोषपाचनम्। अस्तु च यत् तु पाचनं तदेव दीपनमिति सत्यं संशमनः शृतादिकषायस्तु दीपनोऽपि न पाचनः सामे तदुपयोगनिषेधादगम्यते। ननु वातपित्तजे पित्तकफजे सन्निपातज च किं जलं देयमिति? उच्यते। वायोर्योगवाहत्वात् पित्तसंयोगेन दाहकर्त्तृत्ववचनात् पित्तवद्व्यवस्था, वातपित्तजे पित्तकफजे तु तिक्तकरसस्य पित्तकफयोर्विपर्य्ययात् तिक्तकशृतशीतमेव व्यवस्थीयते। तत्र पित्ताधिक्यञ्चेच्छीतमेव, कफाधिक्ये तु तिक्तकैः शृतमुष्णमेवेति व्यवस्था। अथवा विमानस्थाने प्रोक्तम्—किं नु खलु ज्वरितेभ्यः पानीयमुष्णं प्रयच्छति इत्यादिना साधारण्येन ज्वरहिततया यदुक्तमुष्णं जलं तदेव पैत्तिकज्वरमद्योत्थज्वरव्यतिरिक्तज्वरेषु व्यवस्थेयमिति। ननु कषायांश्च विवर्ज्जयेदित्युक्तं कथमत्र तिक्तकैः शृतं जलं विधीयते? उच्यते। कषायरसस्य तरुणज्वरे वर्ज्जनात अविरुद्धत्वात् तिक्तकशृतशीतलसलिलविधिरेतेन तिक्तकैः शृतवचनेन ज्ञापितम्। कषायरसयोनिव्यतिरिक्तस्वरसकल्कचूर्णावलेहगुड़िकाशीतफाण्ट-क्राथकषायादिरूपः कषायो न नवज्वरे वर्ज्ज्य इति औषधसाधितसलिलसाध्यत्वात् पेयादीनामपि। अत एव वृद्धाः सलिलविधानमूचुर्यदप्सु शृतशीतास्वित्यादुक्त्वा तथाहुश्च। "मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे। तोयपेयादिसंस्कारे निर्दोषं तेन भेषजम्" इति। तेन तोयपेयादिसंस्कारार्थं प्रयुज्यमानं द्रव्यं गौणभेषजं शोधनशमनार्थन्तु प्रयुज्यमानं द्रव्यं मुख्यभेषजमिति। सुश्रुतेऽप्युक्तं "सप्तरात्रात् परं केचित् मन्यन्ते देयमौषधम्। दशरात्रात् परं केचिद् दातव्यमिति निश्चिताः। पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि

त्रिदोषकफपित्तज्वरयोस्तु यद्यपीह पानीयं नोक्तं, तथापि सामान्येन विमानस्थाने यदुक्तम्—"किं नु खलु ज्वरितेभ्यः पानीयमुष्णं प्रयच्छन्ति" इत्यादिना तत्प्रामान्यादुष्णमेव जलं देयम्। वातपैत्तिके तु ज्वरे अत्यर्थदाहादिकारके शीतलमेव देयमित्यपि विमान एव "अत्यर्थोत्सन्नपित्ते" इत्यादिना ग्रन्थे सूचितम्॥ ८३॥

मुस्तपर्पटकोशीर-चन्दनोदीच्यनागरैः ।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ ८४ ॥

देयं स्याद् दोषपाकतः । भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् । शोधनं शमनीयन्तु करोति विषमज्वरम्" इति । तेन शोधनसंशमनमौषधं मुख्यभेषजं तरुणज्वरे निषिद्धमिति ॥ ८३ ॥

गङ्गाधरः—ननु कैस्तिक्तकैरित्यत आह—मुस्तेत्यादि । चन्दनेति रक्तचन्दनकाष्ठं । आहुश्च वृद्धाः । उक्ते चन्दनशब्दे तु गृह्यते रक्तचन्दनम् । लवणे सैन्धवं विद्यात् मूत्रे गोमूत्रमिष्यते । पयःसर्पिःप्रयोगे च गव्यमेव विधीयते । शकृद्रसे गोमयरसः सिद्धार्थे श्वेतसर्षपः" । इति । तथा सारः स्यात् खदिरादीनां निम्बादीनां त्वचस्तथा । फलन्तु दाड़िमादीनां पटोलादेश्छदस्तथा । फलप्रधानवृक्षाणां फलं सर्व्वत्र गृह्यते । पुष्पप्रधाने पुष्पं स्यादुत्पले नीलमुत्पलम् । अङ्गेऽप्यनुक्ते विहितन्तु मूलं कालेऽप्यनुक्ते दिवसस्य पूर्व्वम् । द्रवेऽप्यनुक्ते जलमेव देयं भागेऽप्यनुक्ते समता विधेया ।" इति । उदीच्यं वालकम् । नागरं शुण्ठी । तत् तु तिक्तकं यद्यपि न भवति तथाप्यत्रामाशयदुष्टिकफवह्निमान्द्यज्वराणां हितत्वाद विहितम् । तीशटाचार्य्यस्तु शुण्ठीमपठन् पद्मकाष्ठं पठति । एतानि द्रव्याणि नूतनानि गृह्णीयादुक्तं हि "द्रव्याण्यभिनवान्याहुः प्रशस्तानि क्रियाविधौ । ऋते गुड़घृतक्षौद्रधान्यकृष्णाविड़ङ्गतः" इति । शृतशीतमिति अर्द्धावशिष्टं पक्वमत्र शृतमुच्यते जलमित्युक्त्या जलसंज्ञत्वात् । शीतमिति पूर्व्वं पक्वं परं तु वाताहतं कालेन शीतीभूतमिति शृतशीतम् । तदपि दिवाशृतं दिवैव देयं रात्रिशृतं तद्रात्रावेव देयम्, नान्यत्र गुरुत्वात् । तदुक्तं "दिवाशृतन्तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् । रात्रौ शृतं दिवा चापि गुरुत्वमधिगच्छति" इति । पिपासाज्वरयोः शान्तये इत्यर्थः ॥ ८४ ॥

चक्रपाणिः—मुस्तेत्यादिः पानीयसाधकः षड़ङ्गप्रयोगः । अत्र शुण्ठी अतिक्ता च आमाशयदुष्टिकारकज्वरहितत्वाद् विहिता । अत्र 'शृतशीतं जलं दद्यात्' इति जलसंस्कारश्रुते क्वाथपरिभाषया न क्वाथकरणम्, किन्तु संस्कारकपरिभाषया । परिभाषा च स्वतन्त्रानुक्तापि वृद्धव्यवहारसिद्धा प्रमाणीभूतैव । सा च "यदप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते । कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि । अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ" इति, परिभाषार्थश्च व्यक्त एव ॥ ८४ ॥

कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान्।
बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत्॥
अनुपस्थितदोषाणां वमनं तरुणे ज्वरे।
हृद्रोगं श्वासमानाहं मोहञ्च कुरुते भृशम्॥
सर्व्वदेहानुगाः सामा धातुस्था दुर्व्विनिर्हराः *।
दोषाः फलेभ्य आमेभ्यः स्वरसा इव सात्ययाः॥ ८५॥

गङ्गाधरः—लङ्घनविधौ संशोधनमपि लङ्घनविशेष इत्यतो ज्वरे वमनविधिमाह—कफप्रधानान् इत्यादि। कफः प्रधानो येषु दोषेषु तान्। उत्क्लिष्टान् हृदयामाशयाभ्यामूर्द्ध्वं गच्छन्तः क्लिश्यन्ति उपतिष्ठन्ति हृल्लासवेगेन ये ते तान्, वहिर्गमनोन्मुखान्। आमाशयस्थितान् न तु कण्ठमात्रस्थितान् ज्वरकरान् दोषानेवं बुद्ध्वा वम्यानां वमनार्हाणां न तु चिकित्साप्राभृतीयोक्तवमनप्रतिषिद्धानां गर्भिण्यादीनाम्। काले वलादिसद्भावादुत्क्लेशकाले, न तु दौर्व्वल्यादौ। वमनैर्वमनयोगैः कल्पस्थानोक्तैर्ज्वरहरैर्हरेद् वामयेत् भिषगिति शेषः।

उक्तावस्थां विना वमने व्यापत्तिमाह—अनुपस्थितदोषाणामिति। अनुपस्थिता अनुत्क्लिष्टा दोषा येषां पुंसां तेषाम्। एतेनाकफप्रधाना काला वम्यानां वमनप्रतिषेधोऽपि व्याख्यातो भवति। ननु कस्मादनुपस्थितदोषाणां ज्वरे वमनं न विहितमित्यत आह—हृद्रोगमित्यादि। ननु कस्मादनुपस्थितदोषाणां वमनान्नवज्वरे हृद्रोगादयः स्युरित्यत आह—सर्व्वदेहानुगा इत्यादि। प्रकरणान्नवज्वरे दोषाः क्रुद्धा यस्मात् सर्व्वदेहानुगा

चक्रपाणिः—अविशेषेण तरुणातरुणज्वरेऽवस्थाविधेयं वमनमाह—कफप्रधानानित्यादि। कफः प्रधानो येषां ते कफप्रधानाः। उत्क्लिष्टानिति हृल्लासादिना वहिर्गमनोन्मुखान्। आमाशयस्थितानित्यनेन सर्व्वशरीरं परित्यज्यामाशयगमनं दर्शयति। ज्वरकरानित्यनेन ज्वरकरान् हि दोषानेवंविधानेव नवज्वरे तु वमनैर्हरेत्, नान्यथेति दर्शयति। काल इति यथोक्तायामवस्थायाम्। वमनैरिति बहुवचनैः प्रकृत्याद्यपेक्षया बहूनां वमनप्रयोगाणां प्रयोगं दर्शयति। वम्यानामित्यनेन अवम्यगर्भिण्यादिषु वमनं निषेधयति। अत्र च वमने स्वयमेवोत्क्लिष्टत्वाद् दोषस्य दोषोत्क्लेशप्रयोजनकौ स्नेहस्वेदौ न क्रियेते अल्पौ वा क्रियेते। उक्तावस्थाव्यतिरेकेण वमने दोषमाह—अनुपस्थितेत्यादि। सर्व्वदेहानुगा इति सूक्ष्मशिरात्वगाद्यनुगताः। सामा इति सामत्वेन

* असुनिर्हरा इति वा पाठः।

वमितं लङ्घितं काले यवागूभिरुपाचरेत्।
यथास्वौषधसिद्धाभिर्मण्डपूर्व्वाभिरादितः ॥

धातुस्था रसधातुस्थाश्च तस्माद् देहाद् दुःखनिर्हरणाः सात्ययया हृद्रोगादि-व्यापदुपात्ययान्विताः। आमेभ्योऽपक्वेभ्यः फलेभ्यः स्वरसा इव दुःख-निर्हरणाः सात्ययाश्च ॥ ८५ ॥

गङ्गाधरः—लङ्घनवमनानन्तरं किं कर्त्तव्यमित्यत आह—वमितमित्यादि। उक्तावस्थायां वमितं लङ्घितमित्युभयम्। वमनावस्थाभावे क्षयानिलादिज्वरित-त्वाभावे च लङ्घितं वा सम्यग्वमनलङ्घने कृतवन्तं ज्वरितं कालेऽन्नदानयोग्यकाले आदितः प्रथमतः क्रियान्तरमकृत्वा यथास्वौषधसिद्धाभिः—यस्य यस्य ज्वरस्य यद्यदौषधं वाच्यं यस्य ज्वरस्य च यद् यद् भेषजं कषायादिविधौ वाच्यं तत्र तत्र ज्वरे तैस्तैरौषधैरर्द्धशृतेन तोयेन सिद्धाभिः कृताभिर्न्नौषधं विना केवलतण्डुलकृताभिर्मण्डपूर्व्वाभिर्मण्डपेयाविलेपीतिक्रमयुक्ताभिर्यवागूभिः दोषाल्पत्वेन द्वित्रिदिनलङ्घनेन सम्यग्लङ्घितः स्यात् तदा मण्डादिक्रमेण उपाचरेत्। यद् यत् स्वमिति वीप्सायां स्वमनतिक्रम्येति अनतिक्रमे वाव्ययीभावे यथास्वमिति। कश्चित् तु मण्डः पूर्व्वः प्रधानोऽच्छतया यासां ताभिर्यवागूभिरिति व्याख्याय बहुद्रवत्वेन मण्डप्राधान्याद् यवागूशब्देन पेयामाह; परे तु मण्डः पूर्व्वः प्रथममादौ पेयो यासां ताभिर्यवागूभिरिति व्याख्याय अभ्यवहारकाले पूर्व्वं स्वच्छभागं पीत्वा पश्चाद् घनभागं खादेदिति

स्त्यानाः प्रबलाश्च। धातुस्था इति धातुषु अत्यन्तानुप्रवेशव्यवस्थिताः। न सुखेन निर्ह्रियन्ते इति असुनिर्हराः; किंवा असून् प्राणान् निर्हरन्तीति असुनिर्हराः। अत्रार्थे फलानामित्यादिना दृष्टान्तमाह—आमानां फलानां यथा स्वरसा निर्हरणे सात्यया भवन्ति, तथा यथोक्ता अपि दोषा इत्यर्थः, सात्यया इति अत्ययदाः ॥ ८५ ॥

चक्रपाणिः—वमनलङ्घनयोरनन्तरं यद् विधेयं तदाह—वमितमित्यादि। वमितं लङ्घित-मिति अवस्थावशात् कदाचिद् वमितं कदाचित् लङ्घितं कदाचिच्च वमितलङ्घितम्; वमनानन्तरं हि यदा सम्यग्विशुद्धिर्न भूता, तदा तदहर्लङ्घनमपि क्रियते। काल इत्यन्नदानयोग्ये काले। यथास्वौषधसिद्धाभिरिति यथास्वौषधं यस्यां यवाग्वां यद्भेषजं पिप्पलीनागरादि वक्तव्यम् तत्-सिद्धाभिः; किंवा यस्मिंश्च ज्वरे यद् भेषजं पाचनञ्च वक्तव्यं तत्सिद्धाभिः। उक्तं हि सुश्रुते—"अन्नकाले हिता पेया यथास्वं पाचनैः कृता" इति। यद् यत् स्वं यथास्वमिति वीप्सायामव्ययीभावः।

यावज्ज्वरमृदूभावात् षड़हं वा विचक्षणः।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः॥
ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपिकाः।
वातमूत्रपुरीषाणां विवन्धस्यानुलोमिकाः॥
स्वेदनाय द्रवोष्णत्वाद् द्रवत्वात् तृट्शमाय च।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च॥

वदन्ति। तदुभयमेवायुक्तं यावज्ज्वरमृदूभावादिति ह्युत्तरवचनं न संगच्छते। कियन्तं कालं ताभिर्यवागूभिरुपाचरेदित्याकाङ्क्षायां ह्युक्तं यावज्ज्वरमृदूभावादित्यादि। ज्वरस्य यावत् कालं मृदुत्वं न भवति तावन्तं कालं प्रथमं मन्दाग्नौ मण्डस्ततः किञ्चिदग्निबले वृद्धे पेया ततोऽग्निबले वृद्धे विलेपीति। यदि षष्ठाहे ज्वरस्य मृदुत्वं स्यात् तदा षड़हं वा यावत् विचक्षणो वैद्यस्ताभिः यवागूभिरुपाचरेत्। किमेवं करणे प्रयोजनमित्यत आह—तस्याग्निरित्यादि। तस्य सम्यग्वमितस्य लङ्घितस्य वा ज्वरितस्याग्निर्जाठराग्निरताभिर्मण्डपूर्व्वाभिः यथास्वौषधसिद्धाभिर्यवागूभिः समिद्भिः पावको लौकिकाग्निरिव दीप्यते इत्यर्थः। यवागूभिरिति वहुवचनप्रयोगोऽपि संगच्छते, पूर्व्वव्याख्याने त्वनर्थः स्यादिति "सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता। विलेपी बहुसिक्था स्याद् यवागूर्विरलद्रवा॥" इति त्रिधा यवागूः। ननु कस्मात् ता जाठराग्निदीपिका भवन्तीत्यत आह—ताश्चेत्यादि। भेषजसंयोगाद्धि यवागूनां लघुत्वं तेनाग्निदीपकत्वं वातादिविवन्धानुलोमत्वन्तु भेषजसंयोगादेव न तु लघुत्वात्। लघुत्वाच्चाग्निदीपनेनाग्निना वातादिविवन्धध्वंसेऽपि लघुगुणेनानुलोमीकरणायोगात्। यद्यपि मण्डो वातानुलोमन इत्युक्तं तत् पेयाद्यपेक्षया विशेषेण वातानुलोमनो मण्ड इत्यभिप्रायेण, न तु पेयादीनां वातानुलोमत्वप्रतिषेधाभिप्रायेण।

नन्वेवमन्यदप्यस्ति यत् तत् कथं नोपाचरेदित्यत आह—स्वेदनायेत्यादि।

मण्डपूर्व्वाभिरिति मण्डप्रधानाभिः। तत्र प्रथमं मण्डं पीत्वा तदनु घनभागो योज्यः। यावज्ज्वर-

अयञ्च षड़हः किं पेयादिनात् प्रभृति भवतु, आहोस्वित् ज्वरोत्पाददिनादिति पक्षद्वयमुत्तरत्र "ज्वरितं षड़हेऽतीते" इत्यत्र निर्लोचयिष्यामः। स्वेदनायेत्यादौ भवन्तीति शेषः। ज्वरसात्म्यत्वमभिधाय

ज्वरघ्नो ज्वरसात्म्यत्वात् तस्मात् पूर्व्वं समाचरेत् *।
यवागूभिर्ज्वरान् विद्वानृते मद्यसमुत्थितात् ॥ ८६ ॥

द्रवोष्णत्वात् स्वेदनाय यवाग्वो भवन्ति, यद् यद् द्रव्यं द्रवमुष्णञ्च तत्तत् सर्व्वं द्रवोष्णत्वाभ्यां स्रोतोऽनुप्रविश्य तद्गतदोषं विच्छेद्य उष्णत्वेन स्वेदं प्रवर्त्तयतीति ज्ञापितम्। द्रवत्वाच्च तृट्शमाय यवाग्वो भवन्ति। यद् यद् द्रव्यं द्रवं तत् सर्व्वमाप्यत्वात् तैजसीं तृष्णां शमयति इति ज्ञापितम्। आहारभावादिति। यो यो वैध आहाररूपः स प्राणकर इति ज्ञापितम्। प्राणे बलं प्राणानां सत्ता च। सरत्वादिति। यद् यद् द्रव्यं सरं तत्तच्छरीरस्य लाघवकरमिति। ज्वरघ्न इति ज्वरव्याधिहारिका ज्वरसात्म्यत्वात् ज्वरे सति ज्वरितस्यात्मना सहात्मीभावात् ज्वरसात्म्यत्वञ्च यवागूनां प्रभावात्। तस्मादिति। ज्वरे जाते जाठराग्निर्मन्दस्तत्र दीपनमौषधं विहितम्। वातमूत्रपुरीषाणाञ्च विबन्धः स्यात् तत्र तेषामानुलोमिकमौषधं हितम्। तथा प्रायेण स्रोतोरोधाद् घर्म्माप्रवृत्तिस्तत्र स्वेदकरमौषधं युज्यते। प्रायो ज्वरे जाते तृष्णा भवति तत्र तृष्णाहरमौषधं युक्तम्। प्रथमतो रससत्त्वेन क्षुद्बोधाभावाल्लङ्घनेन क्षुधायां जातायाम् आहारं विना प्राणक्षयादाहारोऽपि युज्यते। क्षुद्बोधनेऽपि ज्वरसत्त्वाद्देहस्य गौरवं वर्त्तते तत्र सरद्रव्यं हितं भवति। ज्वरस्य च प्रशमनं प्रयोजनं तन्नाशार्थं जरघ्नञ्च भेषजं विधीयते। एतत्सर्व्वरूपाश्च यवाग्वः स्युस्तस्मादग्निदीपकादिभावाज्ज्वरे वमितं लङ्घितं पुमांसं पूर्व्वं विद्वान् भिषक् यवागूभिः समाचरेच्चिकित्सेदित्यर्थः। ननु किं सर्व्वान् नवज्वरान् यवाग्वो घ्नन्ति ? समाचरेच्च किं यवागूभिः सर्व्वेष्वेव ज्वरेषु ? इत्यत आह—ज्वरान् मद्यसमुत्थिताद्दते इति। बहुवचनेन निर्द्देशाद्धि यवाग्वास्त्रैविध्यं ज्ञापितम्। तद् यथा—द्रवसिक्थसमन्विता यवागूः, सा सिक्थकहीनो मण्डः, सिक्थकयुक्ता पेया, बहुसिक्थकविरलद्रवा विलेपीति त्रिधा, न चातिरिक्तास्ताभ्यो यवाग्वः। सुश्रुतेऽपि "यवागूमुचिताद्भक्ताच्चतुर्भागकृतां वदेत् ॥" इति। अत्र भक्तोचिततण्डुलापेक्षया चतुर्थभागकभागरूपक्षद्रीकृततण्डुलकृतामित्यर्थः। एतान्त्रिविधयवागूविधानार्थं क्षुद्र-

यवागूनाम् अविषयं ज्वरितमाह—ऋत इति। ऋते मद्यसमुत्थितादिति मद्यकारणे ज्वरे निषेधः।

---

* पेयामेवादितः इति पाठो दृश्यते क्वचित्।

मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके।
ऊर्द्ध्वगे रक्तपित्ते च यवागूर्न हिता ज्वरे ॥ ८७ ॥

तण्डुलजलयोर्मानमप्युक्तमन्यत्र। "अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे। मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि ॥" इति। अत्र यवागूः पेया पेयासाधनजलमानानुक्तेमण्डविलेपीपेयातिरिक्तयवाग्वा अभावाच्च ॥ ८६ ॥

गङ्गाधरः—ननु मद्यकृतादन्यस्मिन् सर्व्वस्मिन्नेव ज्वरे तर्हि किं यवागूर्हिता इत्यत आह—मदात्यये इत्यादि। मदात्यये व्याधौ सति यदि ज्वरः स्यात् तर्हि तत्र ज्वरे यवागूर्न हिता उष्णत्वात्। एवं मद्यनित्ये सततमद्यपानशीले पुंसि यो ज्वरस्तत्र ज्वरे च न हिता उष्णत्वात्। एवं ग्रीष्मे काले यो ज्वरः स्यात् तत्र ज्वरे च। तथा पित्तकफाधिके पित्ताधिके ज्वरे च न हितोष्णत्वात्। एतेन क्रोधजज्वरेऽपि पित्तान्वयान्न यवागूर्हिता भवति। कफाधिके च ज्वरे न हिता द्रवत्वात्। तदुभयाधिके च ज्वरे यवागूर्न हिता द्रवोष्णत्वात्। उक्तञ्चान्यत्र "पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्द्दमम्। तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धनी ॥" इति। एवमूर्द्ध्वगे रक्तपित्ते च यो ज्वरो भवति तस्मिंश्च ज्वरे यवागूर्न हितेति। कफानुगत्वेनोर्द्ध्वगस्य रक्तपित्तस्य यवागूरुष्णद्रवत्वाद्विरुध्यते इत्यर्थः। एभ्योऽन्येषु क्षयानिलभयकामशोकश्रमजज्वरेषु प्रथमत एव विनापि वमनलङ्घने समाचरणं ख्याप्यते। क्षयजादिभ्योऽन्यत्र तु वमिते लङ्घिते सति यवागूर्विधीयते ॥ ८७ ॥

तथा मदात्ययेऽपि व्याधौ, तथा मद्यनित्ये मद्यपे अन्यहेतुजोऽपि यो ज्वरः, तथा ग्रीष्मे, तथा पित्तकफाधिके यो ज्वरः, तथोर्द्ध्वरक्तपित्तिनो यो ज्वरः, तेषु सर्व्वेषु पेया न देया। इह मदात्ययादीनां पेयार्हेषु जातोऽपि ज्वरः पेयानर्हः। 'पित्तकफाधिके' इत्यनेन पित्तकफयोरतिमात्रोद्गमे सति पेयाया अदानं बोधयति। तेन कफजे ज्वरे पित्तजे ज्वरेऽनुद्भूतदोषे पेया दातव्या। तथा हि तन्त्रान्तरे— "कफजेऽपि यदा क्षीणो लङ्घनादिक्रमात् कफः। शस्ता एव यवाग्वस्तु तत्र पित्तेऽप्ययं क्रमः ॥" इति। तथात्रैव—"पैत्तिके वाथ शीतां मधुयुतां पिबेद् यवागूम्" इत्यनेन पित्तेऽपि यवागूं वक्ष्यति ; यदुक्तम्—"पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्द्दमम्। तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धनी" इति हारीतेनोक्तम्, तदतिवृद्धकफविषयं ज्ञेयम्। अन्ये तु मिलितपित्तकफाधिके पुरुषे यवागूप्रतिषेधमिच्छन्ति। यदि तु 'ऊर्द्ध्वगे कफपित्ते च' इति पाठस्तदा वातज्वरिणोऽपि ऊर्द्ध्वगं कफपित्तं वमनेन नायाति स्वयम्, तदापि पेया न देयेत्यर्थः। सुश्रुते तु "कफपित्तपरीतस्य ऊर्द्ध्वाऽसृक्पित्तिनस्तथा। मद्यनित्यस्य न हिता यवागूः" इत्युक्तम्। तेन 'ऊर्द्ध्वगे रक्तपित्ते' इति पाठो युक्तः ॥ ८६ । ८७ ॥

तत्र तर्पणमेवाग्रे प्रदेयं लाजशक्तुभिः ।
ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥
द्राक्षादाड़िमखर्ज्जूर-पियालैः सपरूषकैः ।
तर्पणार्हेषु कर्त्तव्यं तर्पणं ज्वरशान्तये ॥ ८८ ॥
ततः सात्म्यबलावेक्षी भोजयेज्जीर्णतर्पणम् ।
तनुना मुद्गसूपेन * जाङ्गलानां रसेन वा ॥ ८९ ॥

गङ्गाधरः—ननु मद्योत्थादिषूक्तेषु अग्रे तर्हि किं विधीयते इत्यत आह—तत्रेत्यादि। तपर्णं द्रवेणालोड़िताः शक्तवः। ननु कस्य शक्तुः केन च द्रवेण तर्पणं विधेयमित्यत आह—लाजशक्तुभिरिति। एवकारेण भोजनार्थमन्नादिव्यवच्छेदः। अग्रे इति लङ्घनवमनार्हेषु लङ्घनवमनानन्तरमन्नकाले तदनर्हेषु तु प्रथमत एवं यावज्ज्वरमृदुभावात् षड़हं वेति। समधुशर्करमिति स्वाद्वनुरूपेण मधुशर्करे देये। ननु ज्वरापहानि कानि फलानीत्यत आह—द्राक्षेत्यादि। दाड़िममिति मधुरं यत् तदेव त्रिदोषहरत्वात्। परूषकं परसफलेति लोके। तर्पणार्हेषु इति ऊर्द्ध्वगरक्तपित्ते कफान्वयादादौ लङ्घनं कर्त्तव्यं न च तस्य प्रथमतस्तर्पणार्हत्वं, क्षयानिलजादयश्चेत् मदात्ययादिमतां भवन्ति तदाग्रमेव तर्पणार्हत्वात् तर्पणं कर्त्तव्यमिति ज्ञापनार्थं पुनस्तर्पणार्हेष्विति पदम् ॥ ८८ ॥

गङ्गाधरः—ननु कियन्तं कालमेवं तर्पणेन चाचरितव्यमित्यत आह—तत इत्यादि। ततस्तर्पणेन समाचरणानन्तरम्। जीर्णं तपर्णं यस्य तं जीर्णतर्पणं मद्योत्थादिज्वरिणं सात्म्यबलावेक्षी मद्योत्थादिज्वरवतः सात्म्यं तज्ज्वरस्योपशयं बलञ्चावेक्षमाणो भिषक् ज्वरमृदुभावे सति तनुना स्वच्छेन अघनेन मुद्गसूपेन यूषेण वा वक्ष्यमाणजाङ्गलमांसरसेन वान्नकालेषु भोजयेत् वक्ष्यमाणतण्डुलान्नमिति शेषः ॥ ८९ ॥

चक्रपाणिः—"ऊर्द्ध्वगे तर्पणं पूर्व्वम्" इति वचसा यवागूं बाधित्वा ऊर्द्ध्वगे रक्तपित्ते तर्पणं यद्यपि विहितमेव, तथापि ऊर्द्ध्वगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमविधानम्। एतत् तर्पणं तोयपरिप्लुताः शक्तवः; ज्वरापहानि फलानि द्राक्षादाड़िमादीनि; वचनं हि—"द्राक्षादाड़िमखर्ज्जूर-पियालैः सपरूषकैः। तर्पणार्हेषु कर्त्तव्यं तर्पणं ज्वरनाशनम् ॥" इति ॥ ८८ ॥

चक्रपाणिः—जीर्णं तर्पणं यस्य तं जीर्णतर्पणम्। मुद्गयूषस्य जाङ्गलरसस्य विकल्पः सात्म्यबलापेक्षश्च ज्ञेयः। दुर्ब्बलो हि दुर्ब्बलाग्निः प्रायो भवति, तस्य मुद्गयूषो लघुत्वेन देयः, इतरस्य तु जाङ्गलो रसः ॥ ८९ ॥

* "मुद्गयूषेण" इति चक्रधृतः पाठः ।

अन्नकालेषु चाप्यस्मै विधेयं दन्तधावनम्।
योऽस्य वक्त्ररसस्तस्माद् विपरीतं प्रियश्च यत्॥
तदस्य मुखवैशद्यं प्रकाङ्क्षाञ्चान्नपानयोः।
धत्ते रसविशेषाणामभिज्ञत्वं करोति यत्॥
विशोध्य द्रुमशाखाग्रैरास्यं प्रक्षाल्य चासकृत्।
मस्त्विक्षुरसमद्याद्यैर्यथाहारमवाप्नुयात्॥ ९० ॥
पाचनं शमनीयं वा कषायं पाययेद् भिषक्।
ज्वरितं षड़हेऽतीते लघ्वन्नप्रतिभोजितम्॥

गङ्गाधरः—भोजनकाले रोचनार्थं दन्तधावनमाह—अन्नकालेष्वित्यादि। चशब्दस्तुकारार्थे, अपिशब्दः समुच्चये। तेन प्रातःकालेऽपि दन्तधावनं विधेयं न तु प्रतिषिध्यते। ननु किंरसद्रव्येण दन्तधावनं कस्माद्वा हेतोर्विधेयमित्यत आह—योऽस्येत्यादि। अस्य ज्वरितस्य ज्वरे जाते तदा यो वक्त्ररसः तस्माद्रसाद्विपरीतरसं यद् द्रव्यं तस्य ज्वरितस्य मुखप्रियश्च यद् द्रव्यं भवति तद् द्रव्यमस्य ज्वरितस्य मुखवैशद्यं मुखप्रसादमन्नपानयोश्च प्रकाङ्क्षां धत्ते। रसविशेषाणामभिज्ञत्वञ्च तत् यत् यस्माद्धेतोः करोति। ननु किमीदृशद्रव्येण काष्ठादिना वा दन्तधावनं विधेयं तदनन्तरञ्च किं कृत्वा भोजयेदित्यत आह—विशोध्येत्यादि। द्रुमशाखाग्रैः ज्वरितस्य मुखरसविपरीतरसवद्भिः प्रियैश्च वृक्षशाखाग्रैर्दन्तधावनेनास्यं विशोध्य मुखदन्तमलानपहृत्यासकृद्वारं वारं जलेनोष्णेन प्रक्षाल्य कवलीकृत्य धौतीकृत्य मस्तुना वा इक्षुरसेन वा मद्येन वा आद्यशब्देन मुद्गसूपजाङ्गलमांसरसशाकव्यञ्जनैश्च यथाहारं यस्य य आहारः स तमाहारमवाप्नुयात्॥ ९० ॥

गङ्गाधरः—नन्वेवमस्त्वाहारविधिर्यवागूतर्पणानन्तरं ज्वरलघूभावे किमन्यद् भेषजं विधेयं न वा अनेनैवाहारविधिना किं ज्वरः शाम्यतीत्यत आह—पाचनमित्यादि। भिषक् ज्वरितं क्षयानिलादिजज्वरव्यतिरिक्तं सम्यग्-

चक्रपाणिः—सम्प्रति कषायपानविषयमाह—पाचनमित्यादि। पाचनमित्यामदोषपाचनम्। शमनीयमिति पक्वदोषोपशमनम्। एतच्च विकल्पद्वयं योग्यतया यथाक्रममामदोषविषयं तथा पक्वदोषविषयं ज्ञेयम। षड़हेऽतीत इति ज्वराहादारभ्य षड़हेऽतिक्रान्ते। अतः सप्तमेऽहनि लघ्वन्न

लङ्घितं वमनार्हत्वे च वामितं ततो मण्डादिक्रमेणोपचरितं क्षयानिलजादि-ज्वरितश्च मण्डादुपचरितं, मद्योत्थज्वरितादिन्तु तर्पणेनोपचरितं, तरुण-ज्वरित पाचनं कषायं पाययेत्। वस्तिदिनपरिहारवजज्वरारम्भदिनं त्यक्त्वा षड़हं यावज्ज्वरमृदूभावात् एवंरूपेण षड़हेऽतीतेऽर्थात् सप्तमेऽहन्यतीते सति अष्टमेऽहनि यदि निरामश्चेत् तदा लघ्वन्नमतिभोजितं ज्वरहितवक्ष्यमाणतण्डुलानां लघ्वन्नं मुद्गसूपजाङ्गलमांसरसादिना तत्तज्ज्वरे प्रतिदोषविपरीतरूपेण भोजितमिति प्रतिभोजितं भिषजा भुञ्जानं प्रयोजितं निरामज्वरितं शमनीयं तत्तज्ज्वर-दोषाणां शमनस्येदमिति शमनीयं क्काथादिकषायं पाययेत्। यदि सप्ताहं यावदुक्तरूपेण लङ्घनादिक्रमेण पाचनकषायेण नवज्वरस्य नैराम्यं न भवति तदा यावज्ज्वरमृदूभावात् सप्ताहात् परतोऽपि तथैवाग्निबलमपेक्ष्य यथास्वौषध-सिद्धयवाग्वादीन् पाययेत्। पाचनमामदोषपाचकं क्काथादिकषायञ्चैव पाययेत्,

मात्रया स्वरूपेण च यत्, तत्प्रतिभोजितं ज्वरितमष्टमेऽहनि कषायं पाययेत् इति वाक्यार्थः। एवञ्च पूर्व्वोक्ताष्टाहकृतनिरामताव्यवस्थया पाचनस्य शमनीयस्य वा उपयोग उपपन्नो भवति। ननु पेयाप्रयोगे "यावज्ज्वरमृदूभावात् षड़हे वा विचक्षणः" इत्युक्तम्, ततश्च पेययैव तावत् षड़हो व्याप्यते, पूर्व्वञ्च ज्वरादौ लङ्घनमुक्तम्, तच्चानिर्दिष्टकालमपि 'लङ्घनेन क्षयं नीते' इत्यादि-ग्रन्थोक्तलङ्घितफलं यावता कालेन भवति, तावत्कालं कर्त्तव्यम्। हारीतेन तु कालोऽपि दर्शितः, यथा—'लङ्घनं लङ्घनीयानां कुर्य्याद् दोषानुरूपतः। त्रिरात्रमेकरात्रं वा षड्रात्रमथवा ज्वरे॥' इति। तेन ज्वरलङ्घनदिने तथा षड़हेनैव समं ज्वराहादारभ्याष्टाहातिक्रमोऽपि भवति, ततश्च ज्वराहा-दारभ्याष्टाहे पाचनशमनीयकषायो भवतु। तस्मात् पेयाप्रयोगषड़हेऽतीते "पाचनं शमनीयं वा कषायं पाययेत्" इत्यभिप्रायः। तथा "ज्वरे पेयां कषायांश्च सर्पिः क्षीरं विरेचनम्। षड़हे षड़हे देयं वीक्ष्य दोषबलाबले" इत्यनेन ग्रन्थेनापि पेयाप्रयोगषड़हादूर्द्ध्वं कषायषड़ह उक्तः। न तु ज्वरोत्पादादिषड़हादूर्द्ध्वम्; अत्र ब्रूमः—"यावज्ज्वरमृदूभावात् षड़हं वा विचक्षणः" इत्यनेनापि ज्वरोत्पाददिनादारभ्य षड़हपर्य्यन्तं पेयाप्रयोग उच्यते, पेया ज्वरे प्राधान्येन दोषपाचनार्थं प्रयुज्यते। यदुक्तम्,—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः। पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे॥" इति। लङ्घनादिपाचनीयत्वं दोषाणामष्टाहादर्व्वागेव, अष्टाहादूर्द्ध्वन्तु कषायेणैव पाचनमुक्तम्। तत्र लङ्घनीये वातज्वरे आदिदिनप्रभृति पेया षड़हमपि प्राप्नोति, एकद्वित्रिदिनलङ्घिते ज्वरे पेया पञ्चचतुस्त्रिदिनप्रयोगेण ज्वरदिनादारभ्य षड़हपर्य्यन्तं कर्त्तव्या। यत्र तु दोषाणामपि सामतया तरुणवातज्वरे लङ्घनमेव षड्रात्रादिक्रमेण वा क्रियते, तत्र प्रादेशिके विधौ नायं पेयाषड्रात्रनियम औत्सर्गिकः प्रवर्त्तते। किञ्चातिमात्रलङ्घनप्रयोगे पेया न दोष-पाचनार्थं क्रियते, भूरिलङ्घनक्षपिताग्नेः सन्धुक्षणार्थम्, तत्र अग्निसन्धुक्षणे जाते पुनरौषध-पानमेव भवति। "ज्वरे पेया कषायाश्च" इत्यादौ पेया समानकार्य्याणां लङ्घनादीनामुप-

न तु शमनीयं वा संशोधनीयं वा दशाहं यावत् आज्वरमृदूभावात्। ततो दशाहातीते नैराम्ये सति शमनीयं संशोधनीयं वा कषायं पाययेदित्यर्थः। सुश्रुतेऽपि एतदभिप्रायेणोक्तं "सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्। दशरात्रात् परं केचिद् दातव्यमिति निश्चिताः। पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि देयं स्याद् दोषपाकतः॥" इति। यत्र तु "ह्यामदोषस्य भिषग् यो जयति ज्वरम्। शोधनं शमनीयन्तु करोति विषमज्वरम्॥" इति। यत् तु भिषक् ज्वरितमिति सर्व्वमेव षड़हेऽतीते सति अर्थात् सप्तमेऽहनि गतेऽष्टाहे सामेऽस्तब्धे दोषे पाचनं निरामे शमनीयं कषायं स्वरसकल्कशृतशीतफाण्टान्यतमं पाययेदिति वाशब्दात् स्तब्धे सामे दोषे सति न पाचनं न वा शमनीयं पाययेत् यथोक्तार्हेषु यवागूभिः तर्पणैश्चोपाचरेत् यावज्ज्वरमृदूभावादित्युक्तेः तदभिप्रायेणैव कश्चिदभियुक्त आह स्म "सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं हितम्। निरामे शमनं स्तब्धे सामे नौषधमाचरेत्॥" इति।

लक्षणभूता, यतश्च पेया यत्र प्रतिषिद्धा मद्योत्थज्वरादौ, तत्र तर्पणादिक्रमेणापि षड़हो ग्राह्यः। तेन प्रथमषड़हे उत्सर्गतो लङ्घनादि पाचनं कर्त्तव्यमिति पेया षड़हे देयेति वचनमुच्यते। तथा हि सुश्रुते—"लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते। तदा तं मुखवैरस्य-तृष्णारोचकनाशनैः। कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्" इत्युक्त्वा कषायपानकालनियमे प्रोक्तम्—"सप्तरात्रात् परं केचित् मन्यन्ते देयमौषधम्" इत्यादि; ततश्च लङ्घनादिषड़हेऽतिक्रान्ते सप्तरात्राद् भेषजदानं सुश्रुतेनास्थाप्याप्रतिषेधादनुमतमेव। तथा चरके "लङ्घनं स्वेदनम्" इत्यादिना तरुणज्वरे लङ्घनादि विहितम्। तरुणता ज्वरस्य सप्ताहमात्रं भवति; यदुक्तं पुष्कलावते—"आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः। मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम्॥" इति; सप्ताहादूर्द्ध्वमतरुणे ज्वरे उत्सर्गतस्तावत् लङ्घनपेयादि न विहितमेव। चरकेणापि तथा हारीतेनापि लङ्घनाच्छोदकमुस्तादिजलपानपेयाभिधानानन्तरमुक्तम् "एतां क्रियां प्रयुञ्जीत षड्रात्रात् सप्तमेऽहनि। पिबेत् कषायसंयोगान् ज्वरघ्नान् सिद्धसाधितान्॥" इति। तथा खरनादेनापि—"लङ्घितालङ्घितं तस्माद् वामितम् वा ज्वरार्द्दितम्। तत्सात्म्यत्वादतस्तस्मिन्नादौ ज्वरमुपाचरेत्। यवागूभिर्यथादोषम्" इत्यादि। जतूकर्णेनापि यवाग्वादिक्रमञ्चाभिधायोक्तम्—"इति षाड्रात्रिकः प्रोक्तो नवज्वरहरो विधिः। ततः परं पाचनीयं शमनं वा ज्वरे हितम्॥" इति। तन्त्रान्तरे च यदेतत् सप्तमेऽहनि कषायपानविधानम्, तत् षड़हे विहितकषायपानेन समं ज्वरदिनारब्धत्वान्न विरोध इति मन्तव्यमिति, तस्माज्ज्वराहादारभ्य षड़हेऽतीते लघ्वन्नप्रतिभोजिते कषायपानं तथा षड़हेऽतीते यवागूपचार इति ज्वरे पेया कषायांश्चेत्यादय उत्सर्गविधयः, तेनैषां क्वचिद्बाधनमपि भवतीति युक्तमेव।

स्तभ्यन्ते न विपच्यन्ते कुर्व्वन्ति विषमज्वरम्।
दोषा बद्धाः कषायेण स्तम्भित्वात् तरुणे ज्वरे ॥
न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते।
यः कषायकषायः स्यात् स वर्ज्ज्यस्तरुणज्वरे ॥ ६१ ॥

अथ नवज्वरे कषायरसप्रयोगे दोषमाह—स्तभ्यन्ते इत्यादि। कषायांश्च विवर्ज्जयेदिति वचनेन यत् कषायप्रतिषेधेऽप्युक्ते ह्यो तद्वचनं तद्व्यापज्ज्ञापनार्थम्। तरुणे ज्वरे सप्ताहं यावज्ज्वरे दोषाणां सामत्वेन स्रोतोविबन्धकत्वं सर्व्वदेहानुगत्वं धातुस्थत्वञ्चेति, तादृशदोषाः कषायरसस्य स्तम्भित्वात् तेन कषायेण तरुणे ज्वरे उपयुक्तेन बद्धाः सन्तः स्तभ्यन्ते स्तब्धा अनिर्गमशीलाः क्रियन्ते न च ते दोषाः पच्यन्ते विषमज्वरञ्च कुर्व्वन्तीति व्यापदः। ननु किं मधुरादिरसयोनिकानां सर्व्वेषां स्वरसादीनां कषायाणां स्तम्भित्वं, न च तदुपपद्यते तेषां सरत्ववचनश्चात्रेयभद्रकाप्यीये दृश्यते इत्यत आह—न त्वित्यादि। कल्पनमुद्दिश्य पञ्चविधाः कषायकल्पना इति यत् कल्पन तदुद्दिश्य नायं कषायः प्रतिषिध्यते, कषायो रस एव प्रतिषिध्यते। ननु तर्हि पञ्च कषाययोनयो मधुराम्लकटुतिक्तकषाया इति यदुक्तं तत्र च कषायरसयोनिश्च कल्कादिकषायोऽस्ति स च किं न प्रतिषिध्यते इत्यत आह—यः कषायकषाय इति। कषायरसयोनिर्यः कल्कः शृतो वा स्वरसो वा शीतो वा फाण्टो वा कषायः स कषायः कषायस्तरुणज्वरे स्तम्भित्वादुक्तदोषस्तम्भादिव्यापत्-

चक्रपाणिः—सम्प्रति 'कषाय'शब्दसामान्येन नवज्वरनिषिद्धकषायस्य महात्ययकारकस्य नवज्वरे प्रयोगे दोषमाह—स्तभ्यन्त इत्यादि। स्तभ्यन्त इति अविचलितधर्म्माणो भवन्ति। न विपच्यन्त इति चिरेणापि न सुखं पच्यन्ते। स्तम्भित्वादिति स्तम्भनस्वभावत्वात्; उक्तं हि—"कषायः स्तम्भनः शीतः" इति। अयमर्थो हारीतेऽप्युक्तः—"न कषायं प्रशंसन्ति नराणां तरुणे ज्वरे। कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः॥" इति। पूर्व्वं षड्विरेचनशताश्रितीये पञ्चरसकृतेष्वपि स्वरसादिषु 'कषाय'शब्द उक्तः। तदिह यदि 'कषाय'शब्देन सामान्येन मधुरादिकृतानां स्वरसादीनां प्रतिषेधः स्यात्, तदा षडङ्गपानीयस्य पञ्चविधकल्पनायामवरोधनिवेशनीयस्य तथा यवागूसाधनार्थस्य च पाठेन तत्तद्द्रव्यस्य निषेधः स्यात्। येन षडङ्गस्य यवागूसाधनद्रव्यस्य च प्रयोगोऽत्र पञ्चविधकल्पनायामन्तर्भावनीयः। भेषजप्रयोगस्य पञ्चविधकल्पनार्थस्यान्तर्भावात् अतः सर्व्वकल्पनाकषायप्रतिषेधो मा स्यादित्याह—न त्वित्यादि। न तु कल्पनमुद्दिश्येति स्वरसकल्कशृतशीतफाण्टरूपकल्पनं लक्षीकृत्य। 'यः कषायः कषायः' इति

करत्वात् निषिद्ध एवोक्तवचनेन न तु कल्पनान्तर्गतत्वेन विहित इत्यर्थः। तत्र यद्यपि मधुराम्लकटुतिक्तानां न स्तम्भित्वं तथापि मधुरस्य वातपित्ताविरोधित्वेन पैत्तिकवातिकज्वरयोरेव युक्तस्तद्योनिः कषायः। अम्लयोनिस्तथा कटुकयोनिश्च कषायो यद्यपि सर्व्वत्र ज्वरे पित्तसम्बन्धेन पित्तविरोधवर्ज्जनं विधेयमित्यतो न युज्यते। उक्तं हि "उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्॥" इति। तथापि भूयसा तिक्तकेन द्रव्यान्तरेण योगे पिप्पल्यन्यादिकटुकानामपि दाड़िमामलकादम्लानामपि पित्तकफाविरोधित्वं सम्पद्यते तिक्तादिवहुभिबह्वंशक्षयश्च कट्वम्लाल्पद्रव्येणाल्पांशवृद्धौ चाधिकांशह्रास एव निर्व्वर्त्तते आमक्षयश्च कट्वम्लोष्ण्येन भवति। तिक्तयोनिस्तु पित्ते कफे च युक्तो वाते तु सामे रससम्बन्धेन पित्तानुबन्धाच्च वायोर्योगवाहित्वात् युक्त एव भवति इत्यव्यभिचारेण सर्व्वथा सर्व्वज्वरे दोषामतापाचनत्वेन तिक्तको रस इत्युक्तम्। ननु पाचनं तोयपेयादि पाययेत् षड़हं यावज्ज्वरमृदूभावाद्वा षड़हऽतीते शमनीयं कषायं पाययेदित्यर्थ इति चेन्न ; न तु कालं समुद्दिश्येत्यादि वचनासंगतेः। ननु सुश्रुते "भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्। शोधनं शमनीयन्तु करोति विषमज्वरम्" इति यदुक्तम्—तेन भेषजमात्रस्य तरुणे ज्वरे प्रतिषेधः ज्वरस्य भूयोज्वलनात्, तत्रापि संशोधनशमनयोस्तु विषमज्वरकरत्वात्मकव्यापत्त्या च प्रतिषेधः ख्याप्यते। तर्हि कथं तरुणे ज्वरे मण्डादिवत् पाचनकषायो युज्यते कथं यथास्वौषधैः सिद्धा यवाग्वो वा षड़ङ्गपानीयादिकानि च युज्यन्ते इति ? तत्राहुर्वृद्धाः "मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे। तोयपेयादिसंस्कारे निर्द्दोषं तेन भेषजम्॥" इति। ननु वृद्धा यदेवं वदन्ति तत्र का युक्तिः कस्माद् वा मुख्यभेषजमामदोषस्य भूयो ज्वलयति कस्माद्वा तोयपेयादिसंस्कारभेषजं न ज्वलयतीति ? तत्रोच्यते। शोधनन्तु भेषजं सामस्य सर्व्वदेहगधातुस्थदोषस्य आकर्षणे सम्यङ् न प्रभवति तस्मादामदोषस्य ज्वरं भूयो ज्वलयति, शमनीयन्तु भेषजमामदोषस्यातिबलवत्तया शमयितुं न शक्नोति परन्तु शमनाय चेष्टते

यैः कषायैरामलकादिभिः स्वरसादिरूपः कषायः स निषिध्यत इत्यर्थः। न चानेन कषायरसकृतस्वरसादिनिषेधेन मधुरादिकृतस्वरसादीनां तरुणज्वरे प्रयोगो भवति। स्वरसादिभेषजस्य अतिगुरोस्तरुणज्वरेऽविधानात् ; तेन कषायकषायप्रतिषेधेन तिक्तद्रव्यकृतषड़ङ्गादिकल्पनाकषायस्य विहितस्याविरोधः साध्यते, न तु अविहितस्वरसादिविधानं क्रियते। स्वरसादिगुरुभेषजस्य तरुणज्वरे निषेधवचनम्,—"भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्।" अन्ये तु ब्रुवते—

तस्मात् काले शान्तौ च ज्वरस्य शेषत्वाद्विषमत्वं यातीति। नन्वेवं युक्तिवन्न चास्ति तोयपेयादिसंस्कारभेषजस्यामदोषज्वरभूयोज्वलनकरत्वयोरभावे युक्तिविशेष इति चेन्न। अस्ति चात्र युक्तिः, तोयपेयादिसंस्कारद्रव्याणाम् आमदोषपाककरत्वान्न भूयो दोषामताप्रज्वालकत्वं न वा ज्वरवैषम्यकरत्वं स्वल्पमानत्वात् सम्भवतीति, तस्माद् वृद्धवचनमप्येवं व्याख्येयं—मुख्यभेषजस्य संशोधनस्य शमनीयस्य च सम्बन्धो निषिद्धस्तरुणे ज्वरे तस्मात् तोयपेयादिसंस्कारे यद् भेषजं प्रयुज्यते तदामदोषपाचकत्वात् शोधनसंशमनकरत्वाभावात् निर्द्दोषमिति। ततस्तु स्वरसशृतकल्कादिकः पाचनकषायो न प्रतिषिद्धो भवतीति। एवं सुश्रुतवचनमपि "शोधनं भेषजमामदोषस्य ज्वरं भूयो ज्वलयति, शमनीयन्तु भेषजं विषमज्वरं करोति" इति व्याख्येयम्। एवं हारीतेन पेयादिकमुक्त्वा "एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽहनि। पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान" इति यदुक्तं तदपि ज्वरारम्भदिनं त्यक्त्वा षड्रात्रं यावत् लङ्घनमण्डादिकं पाचनकषायञ्च प्रयुञ्जीत, सप्तमेऽह्नि ज्वरघ्नान् कषायसंयोगान् शमनीयकषायान् पिबेदिति व्याख्येयम्। तथा। "इति षाड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः। ततः परं पाचनीयं शमनं वा ज्वरे हितम्" इति खरनादवचनेऽपि ततः परं पाचनीयमिति सप्ताहात् परतोऽपि सामे पाचनीयं निरामे शमनं हितमेतेनार्व्वाक् षड्रात्रात् पाचनं हितमिति चोक्तं भवति। ननु पीताम्बुर्लङ्घितः क्षीणोऽजीर्णी भुक्तः पिपासितः। न पिबेदौषधं जन्तुः संशोधनमथेतरदिति वचनात् कथं लङ्घनकाले पाचनकषायो युज्यते ? उच्यते, प्रथमं लङ्घनमारभ्य प्राक् सम्यग्लङ्घनलक्षणोदयात् पुरुषो न लङ्घितो भवति न च तदा पाचनकषायो विहितः सम्यग्लङ्घनलक्षणोदये तु लङ्घितः क्षीणः स्यात् तदा मण्डादिकञ्च पिबति ततः परं पाचनकषायञ्च पिबतीति न काप्यनुपपत्तिः। ननु तरुणज्वरे वमनमुक्तं सुश्रुते तु शोधनं प्रतिषिद्धमिति विरोध इति चेन्न ; तरुणज्वरे कफप्रधानोत्क्लिष्टदोषस्य वमनं विधेयं तदितरस्य प्रतिषिद्धं, विरेचनञ्च सर्व्वस्यैव प्रतिषिद्धमिति बोध्यमिति ॥ ९१ ॥

यत्—षड्रात्रात् परतः सप्तमे दिवसे कषायदानं विहितम्,—"पाचनं शमनीयञ्च" इत्यादिना स्वतन्त्रेण, तत्र सप्तमे दिवसे तरुण एव ज्वरो भवति, तरुणे च ज्वरे कषायपानं निषिद्धमिति विरोधं पश्यन् मधुरादिद्रव्यकृतकषायस्य सप्तमेऽहनि अप्रतिषेधः, कषायकषायस्य तु सप्तमेऽह्नि प्रतिषेध इत्युपदर्शनार्थं 'न तु कल्पनम्' इत्यादि कृतम्, ततश्च ज्वरादिपञ्चाहे सर्व्वकषायप्रतिषेध एव, सप्तमदिवसप्राप्ते तु तरुणे कषायद्रव्यमात्रप्रतिषेध इति वाक्यार्थो भवति ॥ ९१ ॥

यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः।
दशाहं यावदश्नीयाल्लघ्वन्नं ज्वरशान्तये ॥ ९२ ॥
अत ऊर्द्धं कफे मन्दे वातपित्तोत्तरे ज्वरे।
परिपक्वेषु दोषेषु सर्पिःपानं यथामृतम् ॥ ९३ ॥

गङ्गाधरः—ननु प्रतिभोजितं कैः कियन्तं दिवसमित्यत आह—यूषैरित्यादि। दाड़िमामलकादिभिः ज्वरहितैरम्लैरम्लीकृतैर्यूषैरम्लकामम् अनम्लकामन्त्वनम्ल-यूषैर्हितैर्मुद्गमसूरचणककुलत्थमुकुष्टकविदलकृतैः शम्बरैणलावादिमांससम्भवैश्चानम्लैः रसैर्लघ्वन्नं संवत्सरातीतशालिषष्टिकान्नं ज्वरशान्तये दशाहं यावत् सप्ताहे नैराम्ये सत्यश्नीयात्; नैराम्ये तु यद्दिनं नैराम्यं भवति ततः परदिनमश्नीयादिति व्याख्येयं यावज्ज्वरमृदुभावादित्युक्तेः ॥ ९२ ॥

गङ्गाधरः—अत ऊर्द्धं नैराम्ये सति तदुत्तरमष्टमाहादि त्रिदिनं यूषादिभिः लघ्वन्नं प्रतिभोजितं शमनीयकषायपानादनन्तरमेकादशाहादितः। कफे मन्देऽल्पत्वमापन्ने परिपक्वेषु सर्व्वतोभावेन पक्वेषु दोषेषु सर्पिः संस्कृतं वक्ष्यमाणं यज्ज्वरहितं घृतं तत् पानम्। ज्वराः कषायैर्वमनैः लङ्घनैर्लघुभोजनैः। रुक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितमिति तन्त्रान्तरेऽप्युक्तम् ॥ ९३ ॥

चक्रपाणिः—यवागूत्तरकालं भोजनसाधनमाह—यूषैरित्यादि। यदि कफप्रबलता बलवदग्निश्च, तदा यूषैः, वातप्राबल्ये तु दुर्ब्बलत्वे च रसैरिति व्यवस्था। अम्लविकल्पोऽपि सात्म्यापेक्षया च ज्ञेयः। वक्ष्यति हि—"मन्दाग्नयेऽम्लसात्म्याय तत् स्तोकमपि कल्पयेत्" इति। अम्लञ्चात्र ज्वरघ्नदाड़िमाद्यैश्च कार्य्यम्। लघ्विति मात्रालघु प्रकृतिलघु च रक्तशाल्यादिकम् ॥ ९२ ॥

चक्रपाणिः—दशाहात् परतः प्रायः कर्त्तव्यमाह—अत इत्यादि। कफे मन्दे ज्वर इति मन्दकफे। यदि तु कफो नास्त्येव दोषरूपः, तदा सर्पिष्पाणं कर्त्तव्यमित्यर्थः। परिपक्वेष्विति सर्व्वथा पक्वेषु। सर्पिरिति वक्तव्ये सर्पिष्पाणग्रहणेनानुवासनाभ्यङ्गादिना सर्पिष उपयोगमस्मिन् काले निषेधयति। अनुवासनाभ्यङ्गौ हि पश्चात्कालवक्तव्यौ। इयञ्च मन्दकफवातपित्तोत्तरस्वरूपावस्था प्रायेण दशाहादूर्द्ध्वं कालमहिम्नैव सर्व्वज्वरे व्यक्ता भवति, यथा—वृद्धे पुरुषे प्रबलवातत्वम्, तरुणज्वरे सामदोषता, तथामाशयसमुत्थे कफप्रबलत्वं भवति, तथैव दशाहादुत्तरं लङ्घनादिना कफः क्षीणो भवति, ज्वरसन्तापेन च रुक्षेण धातुशोषणाच्च वातपित्ते वर्द्धेते। यत् तु पेयाकषायसर्पिःक्षीरविरेचनानां षड़हे देयत्वम्, तत् प्रायिकम्। तेन दशाहादूर्द्ध्वं द्वितीयषड़ह एवावस्थाविशेषप्राप्तौ सर्पिर्दानं न विरोधि ॥ ९३ ॥

निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ।
न सर्पिः पाययेत् प्राज्ञः कषायै-*-स्तमुपाचरेत् ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन च ।
भवत्यलं निग्रहाय दोषाणां बलकृच्च तत् ॥ ६४ ॥

गङ्गाधरः—ननु कफश्चेन्न दशमाहात् परं मन्दः स्यात् तदा किं कर्त्तव्यमित्यत आह—निर्दशाहमित्यादि। दशाहान्निर्गतमपि ज्वरितं कफोत्तरमलङ्घितं ज्ञात्वा तं न सर्पिः पाययेत् कषायैः पाचनशमनीयस्तमुपाचरेत्। ननु कियन्तं दिवसं कषायं दद्यात् किञ्चास्मा अशनं दद्यादित्यत आह—यावल्लघुत्वादित्यादि। कफस्य यावल्लघुत्वं स्यात् तावत् कफोत्तरमलङ्घितं ज्वरितं निर्दशाहमपि कषायैः शमनीयः शोधनीयैर्वा उपाचरेत्। मांसरसेन चास्मा अशनं लघ्वन्नभोजनं दद्यात्। ननु कस्मान्मांसरसेनाशनं दद्यादित्यत आह—भवत्यलमित्यादि। तन्मांसरसेनाशनं दोषाणां निग्रहायालं समर्थं भवति ज्वरितस्य बलकृच्च भवति। बलं ह्यलमिति पाठे तन्मांसरसेनाशनञ्च ज्वरितस्य बलकृत् बलं हि दोषाणां निग्रहायालं समर्थमित्यर्थः ॥ ९४ ॥

चक्रपाणिः—उक्तसर्पिष्पाणापवादविषयमाह—निर्दशाहमित्यादि। निर्गतो दशाहो निर्दशाहः। अलङ्घितमिति असञ्जातलङ्घितलक्षणम्, इयञ्चावस्था प्रबलसामदोषारब्धत्वाज्ज्वरस्य तथाऽसम्यक उपचाराच्च भवतीति ज्ञेयम्। शमनैस्तु कफोत्तरमलङ्घितञ्चोपाचरेत्। यावल्लघुत्वादिति च्छेदः। लघुत्वे तु जाते यावत् कफोत्तरताऽलङ्घिता च नापयाति, न तदा सर्पिष्पाणमेवानुवृत्तं कर्त्तव्यम् इत्यर्थः। यावदिति यावल्लघुत्वात् लघुत्वपर्य्यन्तं शमनैरुपाचरेत्, लघुत्वे सति सर्पिषः पानम्। अथवा यावत् तावत् नित्ययोगित्वात् लघुत्वात् यावल्लघुत्वपर्य्यन्तं शमनैरुपाचरेत्, तावन्मांसरसेनाशनं निर्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि देयमित्याहुः—अशनं दद्यान्मांसरसेनेति। ननु कफोत्तरेऽलङ्घितेऽपि निर्दशाहज्वरे मांसरसेन किमर्थमेवाशनं कफविरुद्धं देयमित्याह—बलं हीत्यादि। बलकृच्च तदिति मांसरसेनाशनं बलकारकमित्यर्थः ॥ ९४ ॥

* शमनैरिति चक्रधृतः पाठः ।

दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम्।
बद्धप्रच्युतदोषं वा निरामं पयसा जयेत्॥ ९५॥
क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः।
अक्षीणबलमांसस्य शमयेत् तं विरेचनैः॥ ९६॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम्।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान्॥ ९७॥

गङ्गाधरः—सर्पिःपानानन्तरं दाहादिषु सर्पिरजेयेषु किं कार्य्यमित्यत आह—दाहतृष्णेत्यादि। वातपित्तोत्तरं न तु कफप्रधानं बद्धप्रच्युतदोषं शरीरे बद्धा न वहिर्निर्गताः किन्तु प्रच्युताः स्वस्थानतो हि क्षरिता दोषाः पित्तादयो यत्र ज्वरे तं ज्वरं निरामं न तु सामं पयसा यथास्वौषधसिद्धेन॥ ९५॥

गङ्गाधरः—एतेनापि ज्वरस्याप्रशान्तौ किं कार्य्यमित्यत आह—क्रियाभिरित्यादि। आभिः प्रथमतो लङ्घनं ततो वमनार्हस्य वमनं ततो यथास्वौषधसिद्धमण्डपेयाविलेप्यस्तथा पाचनकषायश्च। ततो निरामे मुद्गादियूषजाङ्गलमांसरसेन लघ्वन्नं शमनीयकषायाश्च ततो मन्दकफे सर्पिषः पानम्। तत्र दाहतृष्णावति दुग्धं विधाय यस्य ज्वरो न शाम्यति स यद्यक्षीणबलमांसः स्यात् तदा तस्य विरेचनैरूर्द्ध्वाधःशोधनैस्तं ज्वरं शमयेत्॥ ९६॥

गङ्गाधरः—ननु ज्वरक्षीणस्य केन शमयेदित्यत आह—ज्वरक्षीणस्येत्यादि। पयसा किञ्चिद्विरेचनद्रव्यसाधितेनोष्णेन वा निरूहैर्विरेचनवस्तिभिर्वा॥९७॥

चक्रपाणिः—दाहेत्यादिना क्षीरावस्थामाह। बद्धप्रच्युतदोषं वेत्यत्र बद्धदोषत्वमप्रवर्त्तमानदोषत्वम्, प्रच्युतदोषत्वन्तु स्तोकेन प्रवर्त्तमानदोषत्वम्, तत्र क्षीरं तावत् बद्धप्रवर्त्तकं भवति, तथा प्रच्युतेऽपि विविधदोषप्रवर्त्तकतयोपकारकं भवति, अत एव क्षीरगुणेषु—"पुरीषे ग्रथिते पथ्यमतीसारे तथा स्मृतम्" इत्युक्तम्। किंवा बद्धदोषे गव्य क्षीरं सरत्वाद् देयम्, प्रच्युते तु संग्राहित्वाच्छागं देयम्॥ ९५॥

चक्रपाणिः—'आभिः क्रियाभिर्यदा न प्रशमं याति ज्वरस्तदा विरेचनैः शमयेत्' इति भाषया विरेचनबहुव्यापत्तिकतया इतरकर्म्मासिद्धावेव कर्त्तव्यतां दर्शयति। विरेचनैरिति बहुवचनम् विरेचनप्रयोगविवरणे वमनविरेचनयोगांश्चाभिधास्यतीति॥ ९६॥

चक्रपाणिः—ज्वरेणाक्षीणस्य शोधनमुक्त्वा ज्वरक्षीणस्य शोधनमाह—ज्वरक्षीणस्येत्यादि। पयसा वेति पयःपानेन। पयस्त्वनुलोमकतया दोषहरं भवति, अनुलोमकत्वञ्च विरेचनत्वेन न

निरूहो बलमग्निश्च विज्वरत्वं मुदं रुचिम् ।
परिपक्वेषु दोषेषु प्रयुक्तः शीघ्रमावहेत् ॥
पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् ।
स्रंसनस्त्रीन् मलान् वस्तिर्हरेत् पक्वाशयस्थितान् ॥ ६८ ॥

गङ्गाधरः—निरूहकर्म्माण्याह—निरूह इत्यादि। मुदं हर्षम्। कस्मादेवं स्यादित्यत आह—पित्तं वेत्यादि। पित्ताशयगतं पित्तं वा कफपित्तं वा हरेत्। स्रंसनो वस्तिः पक्वाशयस्थितान् त्रीन् मलान् वातपित्तकफान् हरेत्। ननु "ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम्। षड़हे षड़हे देयं कालं वीक्ष्यामयस्य च" इति तन्त्रान्तरे यदुक्तं तत् कथमुपपद्यते? यदि ज्वरे लङ्घनमेवादौ ततो यावज्ज्वरमृदुभावात् षड़हं वा यवागूपाचनकषायाश्च ततो दशाहं यावल्लघ्वन्नयूषमांसरसाशनं शमनीयकषायश्च ततो दशाहादूर्द्ध्वं सर्पिस्तत्र दाहतृष्णावति क्षीरमिति विधीयते। आभिः क्रियाभिरप्रशान्ते ज्वरे अक्षीणबलमांसस्य विरेचनमिति च विधीयते इति चेन्न तन्त्रान्तरवचने हि षड़हे षड़हे इति यदुक्तं तद्दिनसीमाख्यापनार्थं सामान्यवचनम्, तेन पेयानियमात् परं कषायास्त्रयोदशदिनात् परं सर्पिस्ततो दुग्धमेकोनविंशतिदिनं यावत्, ततो विंशतिदिनावधि विरेचनमित्याह सामान्यतोऽथ विशेषार्थमुक्तं कालं वीक्ष्यामयस्य चेति, तेन सप्ताहात् परं दशाहं यावत् संशमनकषायेण यस्य कफक्षयो भवति तस्य दशाहादूर्द्ध्वं सर्पिः, यस्य कफोत्तरत्वं तस्य निर्द्दशाहत्वेऽपि न सर्पिरिति त्रयोदशादूर्द्ध्वं खरनादेन सर्पिः व्यवस्थापितं सामान्यतः एवं सति न विरोध इति; जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपममिति यदुक्तम्, तेनापि समं न दाहतृष्णेति वचनं विरुध्यते। अत्र हि निरामपदं दशाहं यावत् शमनीयकषायविधानादूर्द्ध्वं सर्पिविधानमुक्त्वा तत्रापि कफोत्तरत्वे मांसरसाशनशमनकषायव्यवस्थां यावल्लघुत्वादुक्त्वा व्यवस्थाकरणात् चतुर्द्दशदिनावधिकालं ज्ञापयति, न तु सप्ताहादूर्द्ध्वं कालमिति ॥ ९८ ॥

व्यवह्रियत इति विरेचनादेयत्वे क्षीरं युक्तम्। अत्र क्षीरस्य पूर्व्वोक्तविपर्य्ययेणैव गुणानां लब्धत्वात् अवशिष्टं निरूहगुणमाह—निरूह इत्यादि ॥ ९७ ॥

चक्रपाणिः—विरेचनास्थापनयोर्दोषभेदेन च विषयमाह—पित्तमित्यादि। वमनस्य तु दोषभेदेन स्थानेन च विषयः "कफप्रधानान्" इत्यादिनैवोक्त इति नेह पुनरुच्यते, परं पूर्व्वमवस्था-

ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये।
रूक्षबद्धपुरीषाय प्रदद्यादनुवासनम्॥ ९९ ॥
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम्॥ १०० ॥
अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सावगाहनान्।
विभज्य शीतोष्णकृतान् * दद्याज्जीर्णज्वरे भिषक्॥

गङ्गाधरः—नन्वेवं विरेचनेनाक्षीणबलमांसस्य ज्वरक्षीणस्य तु पयसा निरूहेण वा यदि मलनिःसरणं सम्यङ् न स्यात् तथा मलपित्तकफक्षयेऽपि यदि ज्वरो न शाम्येत्, तस्य किं कार्य्यमित्यत आह—ज्वरे पुराणे इत्यादि। कफपित्ते संक्षीणे सति प्रबलवायौ च सति दृढाग्नये ज्वरिताय रूक्षाय तथा बद्धं पुरीषं यस्य तस्मै चानुवासनं ज्वरहरं दद्यात्॥ ९९ ॥

गङ्गाधरः—एवं कृते यदि शिरसो गौरवं शूलञ्च वर्त्तते, वर्त्तन्ते च विबद्धानीन्द्रियाणि, तदा यत् कार्य्यं तदाह—गौरव इत्यादि। जीर्णज्वरे त्रयोदशदिनात् परं शीर्षविरेचनं दद्यान्नतु पूर्व्वमिति॥ १०० ॥

गङ्गाधरः—एवं कृते अभ्यन्तरदोषक्षये वहिर्मार्गत्वगादिगतदोषे वर्त्तमाने ज्वरो यदि न शाम्यति, तदा यत् कार्य्यं तदाह—अभ्यङ्गांश्चेत्यादि। अभ्यङ्गान् स्नानकाले स्नेहाभ्यङ्गं विना कालान्तरे ज्वरहरतैलाभ्यङ्गान् सस्नेहान् सावगाहनान् प्रदेहांश्च ज्वरहरतैलादिस्नेहमिश्रितान् प्रदेहान् प्रदिह्य ततोऽवगाहान् काथादीन् काथादिष्वथवा रसादिष्ववगाह्य प्रदेहान् शीतोष्णकृतान् विभज्य शीतज्वरे जीर्णे उष्णैरगुर्व्वादिभिर्द्रव्यैः कृतान्, उष्णे दाहप्रबले जीर्णज्वरे

विहितं वमनं स्वयमुत्क्लिष्टदोषे ज्ञेयम्, एतच्च जीर्णज्वरविहितं वमनं स्नेहस्वेदाभ्यां दोषमुत्क्लेश्य कर्त्तव्यमिति विशेषः। पित्ताशय आमाशयाधोभाग एव। स्रंसनमिति च्छेदः॥ ९८॥

चक्रपाणिः—अनुवासनविषयमाह—ज्वर इत्यादि। प्रकरणागतायामपि पुराणतायां 'पुराणे' इति पदमत्यर्थपुराणतामाह। गौरव इत्यादिना शिरोविरेचनविषयमाह। शिरस इति पूर्व्वेणोत्तरेण च योज्यम्। इन्द्रियाणां विबद्धत्वं स्वविषयप्रवृत्तिरहितत्वम्॥ ९९। १००॥

चक्रपाणिः—अन्तःपरिमार्ज्जनमभिधाय वहिःपरिमार्ज्जनमाह—अभ्यङ्गांश्चेत्यादि। प्रदेहः सामान्येन बहलोऽबहलश्च गृह्यते। ये तु सुश्रुतमतेन बहलं विशोषिणं प्रदेहं ग्राहयन्ति, तन्मतेन

* शीतोष्णतया कुर्य्यादिति पाठान्तरम्।

तैराशु प्रशमं याति वहिर्म्मार्गगतो ज्वरः ।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ १०१ ॥
धूपनाञ्जनयोगैश्च यान्ति जीर्णज्वराः शमम् ।
त्वङ्मात्रशेषो येषाञ्च भवत्यागन्तुरन्वयः ॥ १०२ ॥
इति क्रियाक्रमः सिद्धो ज्वरघ्नः संप्रकाशितः ।
तेषान्त्वेष क्रमस्तानि द्रव्याण्यूर्द्ध्वं मतः शृणु ॥ १०३ ॥
रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥ १०४ ॥

शीतैश्चन्दनादिभिः द्रव्यैः कृतान् दद्यात् । तश्चाभ्यङ्गादिभिः वहिर्म्मार्गगतो ज्वरः आशु प्रशमं याति ॥ १०१ ॥

गङ्गाधरः—एवमेव सम्यगाचरिता अपि ज्वरा यदि न शाम्यन्ति, तदा किं कार्य्यं तदाह—धूपनेत्यादि । ननु धूपनाञ्जनयोगैः किं सर्व्व एव दोषजा जीर्णज्वराः शाम्यन्तीत्यत आह—त्वङ्मात्रेत्यादि । केवले चर्म्मणि शेषो ज्वर-शेषो वर्त्तत इति त्वङ्मात्रशेषः । येषां जीर्णज्वराणां त्वङ्मात्रे शेषो वर्त्तते, येषाञ्च जीर्णज्वराणामागन्तुभूताद्यावेशोऽन्वयो योगस्ते च जीर्णज्वराः शमं यान्ति ॥ १०२ ॥

गङ्गाधरः—अथोपसंहरति—इतीत्यादि । ननूक्तानां यवाग्वादीनां कानि द्रव्याणीत्यत आह—तेषामित्यादि । तेषां यवाग्वादिक्रियाक्रमाणां तानि द्रव्याणि अत ऊर्द्ध्वं क्रमात् शृणु ॥ १०३ ॥

गङ्गाधरः—रक्तशाल्यादय इत्यादि । समातीतं गुणोत्तरमिति वचनात्

दाहप्रशमने न लेपोऽपि बहलः कर्त्तव्यः स्यात्, स च तनुरेव कर्त्तव्यः । उक्तं हि—"श्लक्ष्ण-पिष्टघनो लेपश्चन्दनस्यापि दाहकृत्" इत्यादि । विभज्येति शीतोष्णकृतमिति उष्णाभिप्रायं शीताभिप्रायञ्च विभज्य यथासंख्यं शीतकृतं तथोष्णकृतम्, वक्ष्यति हि—"अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत् । यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम् ॥" इति । शीतोष्णता च द्रव्यमहिम्ना संस्कारेण च ज्ञेया ॥ १०१ ॥

चक्रपाणिः—त्वङ्मात्रशेषा इति धात्वन्तरत्यागेन त्वङ्मात्रावस्थितदोषजन्याः । येषां वा आगन्तुर्भूतरूपोऽन्वयः कारणं भवति ज्वराणाम्, ते धूपादिना शमं यान्ति ॥ १०२ ॥

चक्रपाणिः—क्रमप्राप्तौषधप्रश्नस्योत्तरमाह—येषामित्यादि । "रक्तशाल्यादयः शस्ताः शालयः

लाजपेयां सुखजरां पिप्पलीनागरैः शृताम्।
पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः ॥ १०५ ॥
अम्लाभिलाषी तामेव दाडिमाम्लां सनागराम्।
सृष्टविट् पैत्तिको वाथ शीतां मधुयुतां पिबेत् ॥ १०६ ॥
पेयां वा रक्तशालीनां पार्श्वबस्तिशिरोरुजि।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरां पिबेत् ॥ १०७ ॥

वत्सरातीतरक्तशालिषष्टिकादयः अन्नपानादिकोक्ताः। यवाग्वो मण्डपेया-विलेप्यः, ओदनोऽन्नम् ॥ १०४ ॥

गङ्गाधरः—ननु यथास्वौषधसिद्धा यवाग्वस्तु विहितास्ताः किं रक्तशाल्यादि-कृततण्डुलैः कर्त्तव्या उतान्यैरित्यत आह—लाजेत्यादि। ज्वरितः प्रथमतो लङ्घनं सम्यगाचर्य्य यदा क्षुद्वान् भवति, तदाल्पाग्निर्यस्मात्, तस्मादादितः सुखजरां ज्वरहराञ्च पिप्पलीनागरैः कल्करूपैः क्वाथरूपैर्वा कृतक्वाथैः शृतां पक्कां लाजपेयां लाजकृतां यवागूं मण्डरूपां पिबेत्, अग्निबलापेक्षया पेयां वा विलेपीं वा ॥ १०५ ॥

गङ्गाधरः—अम्लेत्यादि। यदा तु स ज्वरितोऽम्लाभिलाषी स्यात् तदा तामेव लाजपेयां सनागरां शुण्ठीमात्रक्वाथकल्कान्यतरपक्कां दाडिमरसेनाम्ली-कृतां पिबेत्। तत्र यदि स ज्वरितः सृष्टविट् भवति पैत्तिको वा भवति शीतां लाजपेयां नागरशृतां मधुयुतां पिबेत्। तत्र पार्श्वबस्तिशिरोरुजि श्वदंष्ट्रा-कण्टकारीभ्यां क्वाथकल्कान्यतररूपाभ्यां सिद्धां पक्कां रक्तशाल्यादीनां पुराणानां पेयां वा ज्वरहरां पिबेत् ॥ १०६ । १०७ ॥

षष्टिकैः सह" इति केचित् पठन्ति, पुनरुक्त 'शालयः' इति पदेन यवकादीनां निरासः क्रियते। यद्यपि "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते" इत्युक्तमेव, तथापि प्रमादादपुराणग्रहणनिषेधार्थं 'पुराणाः' इति पदम् ॥ १०३—१०४ ॥

चक्रपाणिः—लाजपेयामित्यादिका दश यवाग्वः, तत्र प्रथमा श्लेष्मणीति हरिश्चन्द्रः। किंवा लाजपेयां सुखजराम् इत्येका, तथा पिप्पलीनागरैः शृतामिति द्वितीया, एवं शेषाभिः सहैकादश पेयाः। सनागरां सृष्टविट् पिबेदिति योजना, सनागरामेव शीतां मधुयुतां पिबेत्, पैत्तिक इत्यपरा। शुण्ठ्यास्तु मधुरपाकित्वेन पाचनत्वेन च पित्ते प्रयोगः। इह

ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः ।
शालपर्णी-*-बला।विल्व-नागरोत्पलधान्यकैः ॥ १०८ ॥
शृतां विदारीगन्धाद्यैर्दीपनीं स्वेदनीं नरः ।
कासी श्वासी च हिक्की च यवागूं ज्वरितः पिबेत् ॥ १०९ ॥
विबद्धवर्च्चाः सयवां पिप्पल्यामलकैः शृताम् ।
सर्पिष्मतीं पिबेत् पेयां ज्वरी दोषानुलोमनीम् ॥ ११० ॥
कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी ।
मृद्वीकापिप्पलीमूल-चव्यामलकनागरैः ॥ १११ ॥
पिबेत् सविल्वां पेयां वा ज्वरे सपरिकर्त्तिके ।
बलावृक्षाम्लकोलाम्ल-कलशीधावनीशृताम् ॥ ११२ ॥

गङ्गाधरः—ज्वरातिसारीत्यादि। यदि चात्र स ज्वरितो नरो ज्वरातिसारी भवति, तर्हि शालपर्णीबलाविल्वशलाटुनागरनीलोत्पलधन्याकैः कल्कैः क्काथरूपैः वा शृतां रक्तशालीनां पुराणानां पेयां साम्लां दाड़िमेनाम्लीकृतां पिबेत् ॥१०८॥

गङ्गाधरः—शृतामित्यादि। तत्र ज्वरितः कासी वा श्वासी वा हिक्की वा चेद्भवति, तदा विदारिगन्धाद्यैः शालपर्ण्यादैः "विदारीगन्धां वृहतीं पृश्निपर्णीं निदिग्धिकाम्। विद्याद्विदारीगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम् ॥" इति। तैः कल्कैः क्काथरूपैर्वा शृतां यवागूं दीपनीं स्वेदनीं यस्मात् तस्मात् पिबेत् ॥ १०९ ॥

गङ्गाधरः—विबद्धेत्यादि। यो ज्वरी विबद्धवर्च्चाः स सयवां रक्तशालीनां पुराणानां यवागूं यवसमानरक्तशालीतण्डुलानामेकीकृत्य पिप्पल्यामलकैः क्काथरूपैः कल्करूपैर्वा शृतां पेयां सर्पिष्मतीं सर्पिषि गव्ये सन्तलितामनुलोमनीं यस्मात् तस्मात् पिबेत् ॥ ११० ॥

गङ्गाधरः—कोष्ठ इत्यादि। ज्वरी कोष्ठे पक्वामाग्न्याद्याशये विबद्धे सरुजि च। मृद्वीका द्राक्षा। द्राक्षापिप्पलीमूलचव्यामलकशुण्ठीभिः पञ्चभिः क्काथरूपैः कल्करूपैर्वा शृतां रक्तशालीनां पुराणानां पेयां पिबेत् ॥ १११ ॥

गङ्गाधरः—पिबेदित्यादि। सपरिकर्त्तिके गुदे कर्त्तनवत् पीड़ायुक्ते ज्वरे

विदारीगन्धाद्यं पञ्चमूलम्। सयवामितिपदेन षड्गुणतण्डुलकार्य्यां पिबेदिति। सविल्वाम्

* शालपर्णीस्थाने पृश्निपर्णीति केचित् पठन्ति।

अस्वेदनिद्रस्तृष्णार्त्तः पिबेत् पेयां सशर्कराम्।
नागरामलकैः सिद्धां घृतभृष्टां ज्वरापहाम्॥ ११३॥

ज्वरितः पुमान् बला वृक्षाम्लं तिन्तिडीकं कोलं शुष्कवृहद्बदरफलं तदेवाम्लं कलशी शालपर्णी धावनी पृश्निपर्णी एताभिः पञ्चभिः कल्कक्काथान्यतररूपाभिः श्रृतां पुराणरक्तशालीनां पेयां सविल्वां विल्वशलाटुचूर्णयुक्तां वा पिबेत्॥ ११२॥

गङ्गाधरः—अस्वेदेत्यादि। यस्तु ज्वरी अस्वेदनिद्रः घर्म्मनिद्राभ्यां रहितः तृष्णार्त्तश्च भवति, तदा नागरामलकैः कल्कक्काथकतररूपः सिद्धां पक्कां रक्तशालीनां पुराणानां पेयां गव्यघृते भृष्टां सन्तलितां ततः सशर्करामनुरूपेण शर्करां प्रक्षिप्य ज्वरहरां पिबेत्। पेयासाधनार्थं द्रव्यमानमाहुर्वृद्धाः। "कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्। विनीय पाचयेद् युक्त्या वारिप्रस्थेन चापराम्॥" इति। अत्र कणाशुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षणं कल्कद्रव्यस्य वा पलमिति मृदुद्रव्यपरम्, तेन मिश्रितमध्यमवीर्य्ययोरुभयभागित्वाद् अर्द्धपलं त्रिकर्षं वा गृहीत्वा कुट्टयित्वा कर्पटे पोट्टले बद्ध्वा, तण्डुलश्च मण्डादिषु कर्त्तव्येषु वारिप्रस्थो यथा चतुर्दशपट्चतुर्गुणो भवति तावन्मानं बद्ध्वा क्षिप्त्वा

इत्यादिना धावनीश्रृतामित्यन्तेनैका यवागूः। परिकर्णिका परिकर्त्तिकाकारा वेदना। कलशी सिंहपुच्छम्। धावनी कण्टकारी। अत्र च यवागूनां साधनद्रव्यजलतण्डुलपरिमाणे वृद्धवैद्यव्यवहाराः पूजिताः प्रमाणीकर्त्तव्याः। अत्राग्निवेशसंहितायामधीयते 'क्वाथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढ़के। पादशेषेण तेनास्य यवागूरुपकल्पयेत्। कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्। विनीय पाचयेद् युक्त्या वारिप्रस्थे न चापराम्॥" इति। अपरामिति क्काथसाध्ययवाग्वा उक्तया भिन्नां कल्कसाध्यामित्यर्थः; एवञ्च कल्कपदेन या तत्र यवागूसाधनपरिभाषा, सा इहापि द्रव्यपलकल्केन यवागूसाधनमुपदिशतानुमतैव, तथापि जीवन्त्यादियवाग्वामष्टाभिर्द्रव्यैः पलप्रमाणैः साधनमुक्तम्। यत् तु तत्र वृक्षाम्लयुक्तेत्याद्युक्तम्, तदम्लतामात्रार्थं वृक्षाम्लदानम्, न तदष्टमाषकप्रमाणम्, किंवा तदस्याष्टमाषकमानप्रमाणमस्तु, तथाप्यदूरार्थम् इतरार्थतया कल्कपलसाधनोपदेशिका परिभाषानुमतैव भवत्यष्टमाषकाधिकपलकल्कसाधनोपदेशेन, उक्तं हि—"जीवन्त्यजाजीपुष्कराह्वैः सकारवीदीप्यकविल्वमध्यैः। सयावशूकैर्बदरप्रमाणैर्वृक्षाम्लयुक्ता घृततैलभृष्टा। अर्शोऽतिसारानिलगुल्मशोफ-हृद्रोगमन्दाग्निहिता यवागूः। या कल्कसाध्या विधिनैव तेन सिद्धा भवेत् सापि हितार्थिना च" इति; तस्मादेतद्यवागूमानलिङ्गदर्शनात् कल्कपलसाध्ययवाग्वभिधायिका परिभाषाऽनुमतैव, तदन्या अतत्सहचरिता कर्षार्द्धकणाशुण्ठीमानदर्शिकाऽनुमतैव। क्वाथसाध्ययवाग्वादिद्रव्यमाने तु वृद्धव्यवहारपूजितेयं परिभाषा—"यदप्सु श्रृतशीतासु

मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान् ।
यूषार्थे यूषसात्म्याय ज्वरिताय प्रदापयेत् ॥ ११४ ॥
पटोलपत्रं सफलं कूलकं * पापचेलिमम् † ।
कर्कोटकं कठिल्लञ्च विद्याच्छाकं ज्वरे हितम् ॥ ११५ ॥
लावान् कपिञ्जलानेणांश्चकोरानुपचक्रकान् ।
कुरङ्गान् कालपुच्छांश्च हरिणान् पृषतः शशान् ॥

पचेत् । इति कल्कसाध्या यवागूः । क्काथश्च वारिप्रस्थे तत्तन्मानं कणादिकं कुट्टयित्वा पक्त्वार्द्धशेष परिस्राविते चतुर्दशादिगुणे तत्र क्काथे क्षुद्रतण्डुलं दत्त्वा मण्डादियवागूः पाक्या इति क्काथसाध्या यवागूः ॥ ११३ ॥

गङ्गाधरः—ननु सूपयूपार्थं किं किं शमीधान्यं ज्वरे हितमित्यत आह—मुद्गानित्यादि । मुकुष्टको वनमुद्गः । यूषसात्म्याय न तयूपसात्म्याय न वा सूपरूपेण दद्यात् ॥ ११४ ॥

गङ्गाधरः—ननु शाकसात्म्याय कस्कः शाको ज्वरे हित इत्यत आह—पटोलपत्रमित्यादि । पापचेलिमं कारकेन्वकम् ॥ ११५ ॥

गङ्गाधरः—ननु जाङ्गलैर्वा रसरिति यदुक्तं तज्जाङ्गलाः के इत्यत आह—लावान् इत्यादि । लाअभेटा इति लोके ख्यातः पक्षिविशेषः । कपिञ्जलान् वाअइ इति लोके चटकवत् पीतवर्णमस्तकः पक्षिविशेषः । एणान् कृष्णसारादीन् हरिणान् । चकोरान् प्रसिद्धांश्चकोरपक्षिणः । उपचक्रकान् कयेर इति लोके पक्षिविशेषान् । कुरङ्गान् स्वल्पहरिणान् । कालपुच्छान् कृष्णपुच्छहरिणविशेषान् । हरिणान् प्रसिद्धान् । पृषतो वाताट् हरिणान् । शशान् शशक इति लोके ।

षडङ्गादि प्रयुज्यते । कर्षमात्रं ततो दत्त्वा साधयेत् प्रास्थिकेऽम्भसि । अर्द्धश्टतं प्रयोक्तव्यं पाने पेयादिसंविधौ ॥" इति । 'आदि'शब्देनात्र यूपरसादिग्रहणम् ; "क्काथ्यद्रव्याञ्जलिं क्षुण्णम्" इत्यादिपरिभाषायास्तथानुक्तपरिभाषायाश्च कर्त्तव्यव्यवस्था तथा सकलयवागूसाधनतण्डुल-जलादिमानव्यवस्थाव्यभिचारश्चापामार्गतण्डुलीय एव निर्लोचितोऽनुसरणीयः ॥ १०५—११३ ॥

चक्रपाणिः—मुद्गानित्यादि ज्वरहितयूषद्रव्यसंग्रहः । यूषकरणमिति यवागूसाधनवत् । मुद्गः स्वनामप्रसिद्धः ; कुलकं कारवेल्लकम् ; पापचेलिका पाठाशाकम् ; कठिल्लकं रक्तपुनर्नवा । कपिञ्जलो गौरतित्तिरिः, एणः कृष्णसारः, उपचक्रकश्चकोरः ; कालपुच्छो हरिणविशेषः ; हरिणस्ताम्रवर्णः ;

* वार्त्ताकुमिति वा पाठः । † पापचेलिकामिति पाठान्तरम् ।

प्रदद्यान्मांससात्म्याय ज्वरिताय ज्वरापहान्।
ईषदम्लाननम्लान् वा रसान् काले विचक्षणः॥
कुक्कुटांश्च मयूरांश्च तित्तिरिक्रौञ्चवर्त्तकान्।
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः॥ ११६॥
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्।
भिषङ् मात्राविकल्पज्ञो दद्यात् तानपि कालवित्॥ ११७॥
घर्म्माम्बु चानुपानार्थं तृषिताय प्रदापयेत्।
मद्यं वा मद्यसात्म्याय यथादोषं यथाबलम्॥ ११८॥

अत्र रोचकार्थमेषां मांसस्य रसान् दाड़िमाम्लेनाल्पाम्लीकृतान् अनम्लान् अम्लहीनान् वा विचक्षणो दद्यात्। कुक्कुटानित्यादि। क्रौञ्चा वकाः। वर्त्तकाः वटेर इति लोके॥ ११६॥

गङ्गाधरः—अथ यद्यपि मांसरसस्य कालोऽग्रे तर्पणानन्तरं सप्ताहानन्तरं दशाहं यावत् दशाहानन्तरमपि कफोत्तरालङ्घितेऽपि चोक्तस्तथाप्यत्र विषयान्तरमाह—लङ्घनेनेत्यादि। तान् लावादीन् मांसरसान् तस्मै लङ्घनेन बलवदनिलाय ज्वरितायापि कालवित् मात्राविकल्पज्ञो तदनिलबलापेक्षया मात्रया दद्यात्। पूर्व्वोक्तरूपाय च दद्यादिति अपिशब्देन ज्ञाप्यते॥ ११७॥

गङ्गाधरः—ननु यवाग्वादिसमुपाचरतेऽनुपानार्थं किं देयमित्यत आह—घर्म्माम्बु इत्यादि। अर्द्धाशिष्टमुष्णाम्बु तृषितायानुपानार्थं प्रदापयेत्। मद्यसात्म्याय तु यथादोषं मद्यं वा यथाबलं परिमितं यवागूं पिबते तृषिताय लघ्वन्नं भुञ्जानाय वा तृषितायानुपानार्थं प्रदापयेत्॥ ११८॥

पृषतो बिन्दुचित्रितो हरिणः। रसकरणस्य शास्त्रम्—"पलानि द्वादश प्रस्थे घनेऽथ तनुके तु षट्। मांसस्य वटकं कुर्य्यात् पलमच्छतरे रसे॥" इति। यत्र तु मांसस्य द्रव्यान्तरेण साधनम्, तत्र यवागूवत् साधनं व्याख्येयम्। "मात्राविकल्पज्ञः" इत्यनेन तावत्या मात्रया तेन च संस्कृतेन विकल्पेनानुष्णलघुलावादयो देयाः, येन गौरवादग्निवधमुष्णत्वाद् वा ज्वरावृत्तिं न जनयन्तीति दर्शयति॥ ११४—११७॥

चक्रपाणिः—घर्म्माम्बु उष्णाम्बु। घर्म्माम्ब्वादिश्लोकं शोधनार्थं वदन्ति, अनुपानव्यवस्थायाम् उष्णपानीयमद्ययोरहितत्वं पूर्व्वमुक्तमेवेति तदुपादानम्, तथाच तन्त्रान्तरे—"ज्वरे पिबेदनुष्णाम्बु

गुरूष्णस्निग्धमधुरान् कषायांश्च नवज्वरे ।
आहारान् दोषपक्त्यर्थ प्रायशः परिवर्ज्जयेत् ॥ ११६ ॥
अन्नपानक्रमः सिद्धो ज्वरघ्नः संप्रकाशितः ।
अत ऊर्द्ध्वं प्रवक्ष्यन्ते कषाया ज्वरनाशनाः ॥ १२० ॥
पाक्यं शीतकषायं वा मुस्तपर्पटकं पिबेत् ।
सनागरं पर्पटकं पिबेद् वा सदुरालभम् ॥

गङ्गाधरः—अथानुक्ताहारमुपसंहर्त्तुमाह—गुरूष्णेत्यादि । नवज्वरे गुरून् आहारान् उष्णवीर्य्यान् आहारान् स्निग्धानाहारान् मधुरान् आहारान् कषायांश्च-आहारान् दोषपक्त्यर्थं प्रायशः परिवर्ज्जयेत् । प्रायश इत्यनेन क्षयानिलजादिषु ज्वरेषु गुरूष्णस्निग्धमधुरानप्याहारान् दापयेत् कषायांस्त्वाहारान् सर्व्वत्रैव वर्ज्जयेदिति ज्ञापनार्थं पृथक् पदं कषायांश्चेति ॥ ११९ ॥

गङ्गाधरः—उपसंहरति—अन्नपानेत्यादि । सिद्धो देशकालमात्रार्त्तबल-दोषाग्निबलानुरूपेण प्रयोजितोऽप्रतिहतवीर्य्येण ज्वरघ्नत्वेन सिद्धफलः । अथ लङ्घनानन्तरं यथा यवाग्वादयः प्रयोक्तव्यास्तथा पाचनकषायादयश्च प्रयोक्तव्यास्ते के इत्यत आह—अत ऊर्द्ध्वमित्यादि । ज्वरनाशना ज्वराणां दोषपाचनशमनाभ्यां नाशकाः ॥ १२० ॥

गङ्गाधरः—के ते कषाया इत्यत आह—पाक्यमित्यादि । मुस्तश्च पर्पटकश्च पाक्यं पाकेन निष्पाद्यं क्वाथरूपमित्यर्थः । शीतकषायं वेति पाक्यं

मद्यसात्म्यस्तु यो भवेत् । तस्मै दोषबलं दृष्ट्वा युक्त्या मद्यं विधीयते ॥" इति । गुरूष्णेत्यादिना गुरूष्णाद्यनिषेधः, पूर्व्वन्तु कषायनिषेधो यद्यपि सामान्येन कृतः, तथापीहान्नप्रतिषेधप्रस्तावादभ्य-र्हितप्रतिषेधश्च पुनः क्रियते ॥ ११८—१२० ॥

चक्रपाणिः—पाक्यमिति पूतम् ; शीतकषायस्तु द्रव्यं संक्षुण्णमुष्णोदके प्रक्षिप्य निशास्थितम् । अत्र शीतकषायपरिभाषा—"द्रव्यादापोथितात् तोये प्रतप्ते निशि संस्थितात् । कषायो योऽभिनिर्य्याति स शीतः समुदाहृतः ॥" इति । अत्रापि यद्यपि द्रव्यस्य पानीयस्य च मानं नोक्तम्, तथापि क्वाथ-द्रव्यसमं द्रव्यं ग्राह्यम्, पानीयन्तु यावन्मानः पेयः क्वाथो भवति, तावन्मानं ग्राह्यम्, न ह्यत्र पानीयं क्वाथद्रववद् ग्राह्यं बाहुल्यतः पानाशक्यत्वात् ; किंवा परिभाषयैव जलं देयम् ;—"षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः । आप्लुतं भेषजपलं रसाख्यया पलद्वयम् ॥" शीत-

किराततिक्तकं मुस्तं गुड़ूचीं विश्वभेषजम्।
पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये॥
ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः।
तृष्णाऽरुचिप्रशमना मुखवैरस्यनाशनाः॥ १२१॥

क्राथा हिमाश्च।

शीतकषायं वेत्यधिकारः कफवातानुबन्धे पित्ताधिकेऽयं योगः। सनागरमित्यादिनापरो योगः सर्व्वेष्वेव ज्वरेषु पाक्यं शीतकषायं वा। किरातेत्यादिना तृतीयो योगः श्लोकेनैकेन सर्व्वेष्वेव ज्वरेषु पाक्यं शीतकषायं वा। एषामाशिष्टमाह—ज्वरघ्ना इत्यादि। ज्वरघ्ना इति ज्वरसंशमनाः। दोषपाचना इति

कषायः स्वल्पवीर्य्यतया शत्यगुणयोगाच्चाल्पदोषे दाहाभिभूते च देयः। पर्पटकं सदुरालभं वेति तृतीयो योगो मन्दाग्निपित्तकफे। किराततिक्तादिश्चतुर्थो वातकफे। पाठादिश्च पित्ते। किराततिक्तादिनैव मेलके सति पाठासप्तकं जतूकर्णप्रत्ययात् कफपित्ते तदिति; उक्तं हि तत्र—"भूनिम्बघनगुड़ूचीशुण्ठ्युदीच्योशीराह्वयपाठाः" इति। अत्र क्राथकरणे द्रव्यादिमानस्यानुक्तत्वात् न्यायतो मानव्यवस्था, तत्रेह यद्यपि क्राथसंविधानं विशेषेण नोक्तम्, तथापि रोगभिषग्जितीये क्राथकरणसंविधानमुक्तम्, "छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिञ्चेत्" इत्यादिना "गतरसेष्वौषधेषु स्थालीमवतार्य्य परिपूतं कषायम्" इत्यन्तेन, तदेव सर्व्वकषायकरणसंविधानं ज्ञेयम्। अत्र हि यद्यपि क्राथ्यद्रव्यमानं तथा द्रवमानं स्थाप्यकषायमानं नोक्तम्, तथापि यावता जलेन पक्वं सत् गतरसं भवति, तावति जले तावद्द्रव्यं देयमिति लभ्यते, तथा यावता क्राथशेषेण गतरसान्यौषधानि भवन्ति, तावान् क्राथः स्थाप्यत इति च लभ्यते, एतच्चौषधानां गतरसत्वं द्रवभागत्रयक्षयादेव भवतीति दृश्यते, तेन चतुर्भागावशिष्टता सर्व्वक्राथे विशेषवचनं विना कर्त्तव्या; क्राथार्थजलदानन्तु द्रव्यापेक्षया भवति; अत्र मृदुनि द्रव्ये चतुर्गुणेन जलेन, कठिनेऽष्टगुणेन, कठिनतरे षोड़शगुणेन पाके सति चतुर्भागावशेषे गतरसत्वं भवति, तथा मृद्वन्यल्पे द्रव्ये भूरि जलं दीयते, स्तोकेन जलेन क्राथ्यद्रव्यस्य गतरसत्वाभावात्। तेन कर्षादारभ्य पलपर्य्यन्तक्राथेऽत्र मृद्वन्यपि षोड़शगुणं जलं दीयते, पलादूर्द्ध्वन्तु कुड़वपर्य्यन्तमष्टगुणं दीयते। तदेवमनिर्द्दिष्टद्रव्यजलशेषमानेनाप्याचार्य्येण गतरसत्वादिकाभिधानात् सर्व्वकषायद्रव्यादिपरिमाणमुक्तं स्यात्, यदि हि द्रव्यादीनां नियतं प्रमाणं ब्रूयात् तदा द्रव्यापेक्षया तथा स्नेहसाधनापेक्षया च यद्भिन्नं परिमाणं तद् गृहीतं स्यात्; यदर्थाभिधायिका स्वतन्त्रान्तरे परिभाषा लिख्यते पातव्यकषाये कृष्णात्रेयेण—"क्राथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम्" इति; अन्यत्राप्युक्तम्—"क्राथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते" इति, तथा "कर्षादौ तु पलं यावद् दद्यात् षोड़शिकं जलम्। ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत्॥" इति। सुश्रुते च स्नेहादिक्राथपरिभाषा—"चतुर्गुणेनाष्टगुणेन षोड़शगुणेनाम्भसा अभ्यासिच्य

आमदोषाणां पाचनास्तेन तरुणे ज्वरे निरामे च प्रयोक्तव्या इति। क्काथा हिमाश्च ॥ १२१ ॥

चतुर्भागावशिष्टं क्काथयित्वावतारयेत्'' इत्यादिपाठभेदाच्चतुर्गुणाष्टगुणषोड़शगुणजलदायिकाः श्रूयन्ते, ताः कठिनादिद्रव्यभेदाद् बोद्धव्याः ; यदुक्तम्—"मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं तथा। कठिनात् कठिनतरे देयं षोड़शिकं जलम् ॥" एवं तन्त्रान्तरपरिभाषायाञ्च व्यवस्था कर्त्तव्या ; अग्निवेशे हि श्रूयते—"द्रव्यमापोथितं क्काथ्यं दत्त्वा षोड़शिकं जलम्। पादशेषञ्च कर्त्तव्यमेष क्काथविधिः स्मृतः। चतुर्गुणेनाम्भसा वा द्वितियः समुदाहृतः" इति, मध्यविधयाष्टगुणत्वम् अपि पानीयस्य लभ्यते, तेनाप्युक्तम्—"द्रव्याणां मध्यपाकार्थं यत्र मात्रा न दर्शिता। पादांशात् औषधात् तत्र जलं दद्याच्चतुर्गुणम्। चतुर्भागावशिष्टञ्च कषायं कारयेद् भिषक्" इति ; एवमन्या अपि तन्त्रान्तरपरिभाषाऽविरोधता ज्ञेया ; अत्रैव यदेतद् रोगभिषग्जितीये कषायकरणमुद्दिष्टम्, तन्निरूहाधिकारे तद्विशिष्टार्थविषयमेव ; तथाविधकषायकरणं नान्यत्र, यथा बलातैले—"बलाशतं गुड़ूच्याश्च पादं रास्नाष्टभागिकम्। जलाढ़कशते पक्त्वा" इत्याद्युक्तं मानं न क्काथान्तरे याति, किन्तु तत्रैव नियतम् ; मैवम्, विषयविशेषविहितोऽपि विधिर्विषयान्तरेऽपि वृद्धवैद्यव्यवहारानुमत्या तथा तन्त्रान्तरपरिभाषासंवादेन च विषयतन्त्वं दृष्ट्वा समानत्वेनैव व्यवस्थाप्यते, यथा इक्ष्वाकुकल्पे उक्तम्—"यावत् स्यात् तन्तुमत तोये पतितन्तु न शीर्य्यते" इत्यादि स्नेहपाकलक्षणं विषयविशेषोक्तं विषयान्तरेऽपि साधारणं भवति ; अत्र पेयक्काथमात्रापि तु तया नोक्ता, तस्याः पुरुषाद्यपेक्षया नानात्वात्, सामान्येन च यदुक्तं—"दोषप्रमाणानुरूपो हि भैषज्यप्रमाणविकल्पे बलप्रमाणविशेषापेक्षो भवति" इति ; एतेन यावन्मात्रमौषधं बलाग्न्याद्यपेक्षयोपपद्यते यस्य पुरुषस्य, किं न भवति तावन्मात्रमौषधं तस्य देयमित्युक्तं स्यात् ; उक्तञ्चान्यत्र "मात्रायाः नास्त्यवस्थानं दोषमग्निं बलं वयः। व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत् ॥" इति ; तत्राह—यावती मध्यपुरुषाभिप्रायेण मात्रा भवति, सा स्वतन्त्रे पूर्व्वं सूचितैव ;—"पलं कसेरुबीजस्य श्रपयित्वा रसं पिबेत्" इत्यादिना, तथा पटोलादेऽपि "पलमेषां सह चूर्णितानां कल्केन तद्दोषहरं पिबेत्" इत्यादिना ; सुश्रुतेऽप्युक्तम्—"व्याध्यादिषु तु साध्येषु क्काथस्याञ्जलिरिष्यते" इति रसे क्काथे षोड़शपलस्य पादशेषितायाञ्च चतुःपलरूपोऽञ्जलिरेव भवति ; दारुकोऽप्याह—"जघन्या द्विपला प्रोक्ता मात्रा मध्या चतुःपला। उत्तमा षट्पला प्रोक्ता क्काथस्नेहौषधेषु च ॥" इति। ननु अन्यत्रोक्तम्—"उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमा। जघन्यस्य पलार्द्धेन स्नेहक्काथौषधेषु च" इति ; एताश्च दूरान्तरार्था बलाग्न्यादिमाने व्यवह्रियमाणैव परिभाषा। अन्यच्चिन्त्यते—यदेतच्चतुर्गुणत्वादिना जलमुक्तम्, तत् किं कृतद्वैगुण्यं सर्व्वत्र ग्रहीतव्यम्, उक्तं हि—"शुष्कद्रव्येष्विदं मानं द्विगुणन्तु द्रवार्द्रयोः" इति ? मैवम्, सुनिषण्णकादेर्घृतद्रव्यस्य द्वात्रिंशपलपरिमाणे द्रवप्रस्थे सिद्धेऽपि यदयम्—"त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः" इति जतूकर्णे ; तेन तन्त्रान्तरे परिभाषानुमतं कुड़वादावेव माने द्वैगुण्यं भवति ; कृते च पूर्व्वमाने तु द्रवार्द्राणां द्वैगुण्यं नास्तीति दर्शयति ; येन, पूर्व्वपरिभाषयैव द्वैगुण्ये लब्धे यत् पुनः

द्वात्रिंशत्पलप्रस्थकीर्त्तनम्, तत् पूर्व्वपरिभाषाऽव्यभिचारे सति क्वचिद् द्वैगुण्यं वा व्यर्थम्; तेन रक्तिकादौ तत्परिभाषार्थव्यभिचारस्तन्त्रान्तरप्रमाणादुन्नीयते;—तथाचात्रेयः—"द्विगुणं कुडवादौ न शुष्के मानं द्रवस्य तु। आर्द्रस्य चाल्पवीर्य्यत्वाज्ज्ञयमन्यत्र तत् समम्" इति; तथा जतूकर्णेऽप्युक्तम्—"आर्द्राणाञ्च द्रवाणाञ्च द्विगुणाः कुडवादयः" इति, अन्यत्राप्युक्तम्—"रक्तिकादिषु मानेषु यावन्न कुडवो भवेत्। शुष्के द्रवार्द्रयोश्चैव तुल्यं मानं प्रकीर्त्तितम्॥" इति; एवञ्च कुडवादिमानयोग्यस्यापि यत्र द्रव्यस्य पलोल्लेखमानं गृह्यते, तत्रापि न द्वैगुण्यम्; तेन "रास्नासहस्रनिर्य्यूहे तैलद्रोणं विपाचयेत्" इत्यादिषु पलोल्लेखेन जलं गृह्यमाणं न द्विगुणं भवति; क्वचित् पलोल्लेखमानविधानेऽपि तन्त्रान्तरदर्शनात् कुडवादिविवक्षां कृत्वा पलोल्लेखागतेऽपि द्वैगुण्यं भवति; यथा क्षतक्षीणचिकित्सिते "मधुकाष्टपलं द्राक्षाप्रस्थकाथः" इत्यादिना यः प्रयोग उक्तः, स जतूकर्णे "द्राक्षाया मधुकस्यार्द्धप्रस्थक्काथः" इत्यादिना ग्रन्थेन पठितः; तेन जतूकर्णे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कृतद्विगुणमेव जलं देयम्; अन्ये तु, 'कुडवादाविति अतद्गुणसंविज्ञानबहुव्रीहिणा कुडवे न द्वैगुण्यमस्ति' इति ब्रुवते; ततश्च सुश्रुते, "स्नेहकुडवे साध्ये भेषजपलकल्कमिष्टम्" इत्युक्तम्, तत् कुडवे स्नेहचतुःपले भेषजपलं भवतीति कृत्वा स्नेहप्रस्थेऽष्टपलकल्कदानव्यवहार उपपन्नः; यदि तु कुडवेनाष्टौ पलानि स्नेहस्य गृह्यन्ते, तदा प्रस्थे चतुःपलकल्कदानञ्च व्यवहारसिद्धं स्यात्, एतन्नातिसाधीयः; यतस्तत्रैव स्नेहकुडवे साध्ये काथ्यद्रव्यप्रस्थो विधेय इत्युक्तम्, तत्र यदि कुडवेन स्नेहपलचतुष्टयं गृह्यते, तदा चतुःपले स्नेहे षोड़शपलकाथ्यग्रहणं स्यात्, न च तथा व्यवहरति, काथ्यषोड़शपलं हि अष्टपले स्नेह एव गृह्यते; तस्मात् असाधकमेतत् कुडवाद्द्वैगुण्यस्येति द्वैगुण्यं कुडवे युक्तम्; यथागस्त्यहरीतक्यां मधुनः कुडवं यत् इहोक्तम्, तत् तन्त्रान्तरे "मधुनश्च पलाष्टकम्" इति पठ्यते; तथा तन्त्रान्तरे—"त्रायमाणा चतुःपलं दशकेऽम्भसि शोषिते। कुडवे कुडवान् सर्पिःक्षीरधात्रीरसान् पचेत्" इति श्रूयते; तत्र यदि चतुःपलः कुडवः स्यात्, तदा चरकोक्तत्रायमाणाघृतेन सह विरोधः स्यात्, उक्तं हि—"जले दशगुणे साध्यं त्रायमाणाचतुःपलम्" इत्यादि, यावत् "रसस्यामलकानाञ्च क्षीरस्य च घृतस्य च। पलानि पृथगष्टौ च दत्त्वा सम्यग्विपाचयेत्" इति; अन्यत्राप्युक्तम्—"आर्द्रद्रव्यद्रवद्रव्यपलैरष्टाभिरेव च। शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः॥" इति; तस्मात् कुडवद्वैगुण्यं साधु; आर्द्रद्वैगुण्ये तु, येषां द्रव्याणां शुष्काणामुपयोग उक्तः, तेषामार्द्रप्रयोगे द्वैगुण्यं भवति; ये तु नित्यमार्द्रा एवोपयुज्यन्ते, न तेषां द्वैगुण्यम्, यदुक्तम्—"वासाकुटजकुष्माण्ड-शतपुष्पा सहामृता। प्रसारण्यश्वगन्धा च शतपुष्पा सहाचरा। नित्यमार्द्रा प्रयोक्तव्या न तेषां द्विगुणं भवेत्॥" इति; एतत् सर्व्वं पेयकाथप्रसङ्गेनोक्तं स्नेहपाकेऽपि चिन्तनीयम्। स्नेहपाके तु स्नेहात् पादिकः कल्को देयः; तथाहि वक्ष्यति, तन्त्रान्तरे च "जलस्नेहौपधानान्तु प्रमाणं यत्र नेरितम्। तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम्॥" इति; चतुर्गुण एव स्नेहो द्रवत्वेऽपि न द्वैगुण्यात् कल्कात् अष्टगुणो भवति; अन्यत्राप्युक्तम्—"काथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः॥" इति; यत् तु अष्टपल एव स्नेहे कल्कस्य पलमानत्वम्, तदागमसिद्धमपि न व्यवह्रियते, उक्तं हि कृष्णात्रेये—"स्नेहस्य कुडवं तत्र पचेत् कल्कपलेन

वत्सकारग्वधौ पाठां षड्ग्रन्थां कटुरोहिणीम् ।
मूर्व्वामतिविषां निम्बं पटोलं धन्वयासकम् ॥
वचामुस्तमुशीराणि मधुकं त्रिफलां बलाम् ।
पाक्यं शीतकषायं वा पिबेज्ज्वरहरं नरः ॥ १२२ ॥

वत्सकादिः क्वाथो हिमश्च ।

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी ॥
निम्बः पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥

गङ्गाधरः—वत्सकेत्यादिभ्यां द्वाभ्यामेको योगः पाक्यरूपेण शीतकषायेण वा । अत्र षड्ग्रन्थां श्वेतवचां वचां पीतवचां मधुकं यष्टीमधु । एष क्वाथो हिमश्च प्रकरणात् सर्व्वज्वरसंशमनः ॥ १२२ ॥

गङ्गाधरः—सर्व्वज्वराणां क्वाथान् हिमांश्च कषायानामानां निरामाणाञ्चोक्त्वा विषमाणां ज्वराणां कषायानाह—कलिङ्गका इत्यादि । अर्द्धश्लोकेनैकैकक्वाथ-कषायः सततादिज्वरेषु क्रमेण देयः । कलिङ्गकादिभिस्त्रिभिर्द्रव्यैः कृतः क्वाथः सन्ततज्वरं शमयति पटोलादिभिः पञ्चभिर्द्रव्यैः सततज्वरम्, निम्बादिभिरष्टभिर्द्रव्यैरन्येद्युष्कज्वरम्, किराततिक्तादिभिश्चतुर्भिर्द्रव्यैस्तृतीयकज्वरम्,।

तु" इति ; तथा सुश्रुतेऽपि स्नेहकुडवे कल्कपलमुक्तम् ; तदेतदल्पकल्कसाध्यत्वं स्नेहस्य स्वरसेनाष्टगुणसाध्ये स्नेहे व्यवस्थापनीयम् ; द्रव्यस्य हि ससारत्वनिःसारत्वाभ्यां कल्कस्य अल्पत्वभूयस्त्वे दृष्टे ; यदुक्तं शौनकवचनमनुवदता वाग्भटेन—"स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथस्वरसैः क्रमात् । कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्" इति ( तथा "शणस्य कोविदारस्य कर्व्वुदारस्य शाल्मलेः । कल्काढ्यत्वात् पुष्पकल्कं प्रशंसन्ति चतुःपलम्" इति ; अत्र स्नेहप्रस्थापेक्षया चतुःपलं कल्कं स्नेहादष्टमभाग एव भवतीत्यादि विशेषवचनेन "कल्कश्च स्नेहपादिकः" इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहतीति ; ) भवतु, अलमतिप्रपञ्चेन, सर्व्वथा व्यवहारानुगतमेव सर्व्वं प्रमाणीकर्त्तव्यम् ॥ १२१ ॥

चक्रपाणिः—वत्सकारग्वधमित्यादि बलामित्यन्तेन केचिद् योगद्वयं केचिदेकमेव योगं वदन्ति ॥ १२२ ॥

गुड़ूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः।
कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान्।
सन्ततसततान्येद्युस्तृतीयकचतुर्थकान्॥ १२३॥

विषमज्वरेषु काथाः।

मधूकमुस्तमृद्वीका-काश्मर्य्याणि परूषकम्।
त्रायमाणामुशीराणि त्रिफलां कटुरोहिणीम्।
पीत्वा निशि स्थितं जन्तुर्ज्वराच्छीघ्रं विमुच्यते॥ १२४॥

विषमज्वरे हिमः।

वृहत्यौ वत्सकं मुस्तं देवदारु महौषधम्।
कोलवल्ली च योगोऽयं सन्निपातज्वरापहः॥ १२५॥

सन्निपातज्वरे काथः।

जात्यामलकमुस्तानि तद्वद् धन्वयवासकम्।
विबद्धदोषो ज्वरितः कषायं सगुड़ं पिवेत्॥ १२६॥

गुड़ूच्यामलमुस्तैश्चतुर्थकज्वरम्। एष योगो यद्यप्यर्द्धश्लोकेन नोक्तस्तथापि पूर्व्वेषां चतुर्णां योगानामर्द्धश्लोकसमापनत्वेन ज्ञापनार्थमर्द्धश्लोकसमापना इत्युक्तम्। कषाया इति काथरूपाः। अन्ये काथा हिमाश्चेत्याहुस्तन्नानन्तरं हि पाक्यं शीतकषायं वेत्युक्तः॥ १२३॥

गङ्गाधरः—मधूकेत्यादि। मधूकं गुड़पुष्पस्य वृक्षस्य सारम्। मृद्वीका द्राक्षा काश्मर्य्यं गम्भारीफलं परूषकं परूषफलं त्रिफलां पथ्याक्षधात्रय इति त्रयीम्। निशि स्थितमिति शीतकषायं ज्वरादिति प्रकरणात् सर्व्वस्माद्विषमज्वरात् मुच्यते इत्यनेन शमनत्वमस्योक्तं भवति॥ १२४॥

गङ्गाधरः—वृहत्यावित्यादि। द्वे वृहत्यौ वृहतीकण्टकार्य्यौ वत्सकं कुटजवीजम्। कोलवल्ली गजपिप्पली। एष योगः काथरूपः सन्निपातज्वरसंशमनः॥ १२५॥

गङ्गाधरः—जात्येत्यादि। जाती वृहदामलकम्, आमलकं क्षुद्रामलकम्,

चक्रपाणिः—पञ्च पञ्चविधं ज्वरमिति यथासंख्यं सन्ततादिषु कलिङ्गादयो ज्ञेयाः; अन्ये तु पञ्चसु पञ्चैव यौगिकानाहुः। निशिस्थितमिति शीतकषायम्। जात्यादौ जाती जातिपल्लवः। सगुड

त्रिफलां त्रायमाणाञ्च मृद्वीकां कटुरोहिणीम्।
पित्तश्लेष्महरस्त्वेष कषायोऽत्यानुलोमिकः।
त्रिवृताशर्करायुक्तः पित्तश्लेष्मज्वरापहः॥ १२७॥
शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा।
गुडूची नागरं पाठा किरातं कटुरोहिणी॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्ति-श्वासतन्द्रासु शस्यते॥ १२८॥

सन्निपातज्वरे क्काथः।

वृहत्यौ पौष्करं भार्गी शटी शृङ्गी दुरालभा।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी॥
वृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः।
कासादिषु च सर्व्वेषु दद्यात् सोपद्रवेषु च॥ १२९॥

सन्निपातज्वरे क्काथः।

अथवा जाती जातीफलम्, मुस्तञ्च, धन्वयवासकं दुरालभा; एषां कषायं क्काथं सगुड़ं प्रक्षेपविधिना पुराणगुड़युक्तं तद्वत् सन्निपातज्वरापहं विवद्धदोषो ज्वरितः पिवेत्। दोषसंसनशमन एष योगः॥ १२९॥

गङ्गाधरः—त्रिफलामित्यादि। त्रिफलादीनां षण्णां द्रव्याणां क्काथः पित्तश्लेष्महरः प्रकरणात् पित्तश्लेष्मज्वरसंशमनः। तु पुनरेष कषायः क्काथस्त्रिवृताशर्करायुक्तः त्रिवृताशर्करे यद्यत्र प्रक्षिपेत् तदात्यानुलोमिकः पित्तश्लेष्मज्वरहरश्चेत्यर्थः। एवं सति एतद् योगद्वयम्॥ १२७॥

गङ्गाधरः—शटीत्यादि। वर्ग इत्यनेन यथालाभमेव क्काथादिरूप एव प्रकरणात्॥ १२८॥　　सन्निपातज्वरे क्काथः।

गङ्गाधरः—वृहत्यावित्यादि वृहतीद्वयम्, पौष्करं पुष्करमूलं तदभावे कुष्ठम्। गण इत्यनेन यथालाभमेषां क्काथः संशमनः॥ १२९॥　　सन्निपातज्वरे क्काथः।

पिवेदेत्यत्र गुड़स्य प्रक्षेपत्वेन क्काथ्यद्रव्यापेक्षया पादिकत्वम्। एवमन्यत्रापि प्रक्षेपे बोद्धव्यम्। अत्र

कषायाश्च यवाग्वश्च पिपासाज्वरनाशनाः।
निर्द्दिष्टा भेषजाध्याये भिषक् तानपि योजयेत्॥ १३०॥
ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः।
रुक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम्॥ १३१॥

गङ्गाधरः—अतिदिशति—कषाया इत्यादि। भेषजाध्याये भेषजचतुष्के षड्विरेचनशताश्रितीये पञ्चाशन्महाकषायेषु ये दश दशावयवाः पिपासानाशनाः तृष्णानिग्रहणाः नागरधन्वयवासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्रीवेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहाणीति व्याख्याताः। ज्वरनाशनाश्च ये दशावयवाः शारिवाशर्करापाठामञ्जिष्ठाद्राक्षापीलुपरूषकाभयामलकविभीतकानीति दशेमानि ज्वरहराणीति व्याख्यातास्ते कषायाः। तथापामार्गतण्डुलीयेऽध्याये—मृद्वीकाशारिवालाज-पिप्पलीमधुनागरैः। पिपासाघ्नी विषघ्नी च यवागूरुपसाधिता। इति या चोक्ता; या च गव्यमांसरसैः साम्ला विषमज्वरनाशिनीत्यनेन यवागूरुक्ता ता अपि भिषग् योजयेदित्यर्थः॥ १३०॥

गङ्गाधरः—एवंचिकित्सया ज्वरस्यानिवृत्तौ दशाहानन्तरं मन्दकफे सर्पिःपानं यदुक्तं तदाह—ज्वरा इत्यादि। उक्तैर्लङ्घनैर्वमनैः सामे निरामे च कषायैर्लघुभोजनैः रुक्षस्य ये ज्वरा न शाम्यन्ति, तेषां ज्वराणां सर्पिर्वक्ष्यमाणं ज्वरहरमन्यच्च सर्पिर्भिषग्जितं भेषजं न त्वरुक्षस्य। एतेन यावद्रौक्ष्यं स्यात् तावत् कषायोपयोगः कार्य्यः, रुक्षे सर्पिःप्रयोग इति ज्ञापितम्॥ १३१॥

कषायप्रकरणागतत्वात् सन्निपातचिकित्सावसरमप्युल्लङ्घ्य सन्निपातहरौ शठ्यादिकबृहत्यादिकप्रयोगौ पठन्ति॥ १२३—१२९॥

चक्रपाणिः—भेषजाध्याय इति भेषजचतुष्केऽपि हि अधीयन्तेऽस्मिन्नर्था इति कृत्वा 'अध्याय'-शब्दो वर्त्तत एव योगमात्रेण, तत्र षड्विरेचनशताश्रितीये ज्वरघ्नतृष्णाघ्नौ महाकषायावुक्तौ, तयोश्च प्रत्येकद्रव्यकृताः कषाया बहवो भवन्तीति कषाया इति बहुवचनं साधु। यवाग्वश्चापामार्गतण्डुलीये प्रोक्ताः॥ १३०॥

चक्रपाणिः—सर्पिःप्रयोगानभिधातुं सर्पिषो विषयमाह—ज्वरा इत्यादि। वमनैरित्यनेनेह अवस्थाविधेयवमनप्रयोगान् सर्पिःषड़हपूर्व्वभाविनो दर्शयति। 'लङ्घनैः' इति वचनेनैव लङ्घनसमानफलाः स्वेदादयो गृह्यन्ते। रुक्षस्येतिवचनेन कषायादिप्रयोगे सत्यपि सामतानुबन्धात् कफोत्तरतया वा यत्र रुक्षत्वं न भवति तत्र सर्पिर्न दातव्यमिति दर्शयति। अत्र कषायैरिति असमासनिर्देशेन व्यस्तैः समस्तैरपि कषायादिप्रयोगैः रुक्षस्य सर्पिःपानं कर्त्तव्यमिति दर्शयति॥१३१

रुक्षं तेजो ज्वरकरं तेजसा रुक्षितस्य च ।
यः स्यादनुबलो धातुः स्नेहसाध्यः * स चानिलः ॥१३२॥

गङ्गाधरः—ननु ज्वरस्तु खलु रुद्रकोपाग्निसम्भूतत्वात् तैजसः स्नेहश्च तेजोवर्द्धकः कथं ज्वरं शमयेदित्यत आह—रुक्षमित्यादि। तेजो रुक्षं, तच्चेत् ज्वरकरं, तर्हि तेन तेजसा रुक्षण रुक्षितस्य च पुंसो यस्तत्तेजोधातुर्यस्यानिलस्यानुबलोऽनुबन्धः स चानिलो रुक्षः स्नेहसाध्यः स्यादतस्तेषां सर्पिर्भिषग्जितमित्यर्थः ॥ १३२ ॥

चक्रपाणिः—ननु अविशेषेण सर्व्वज्वरेषु कषायानन्तरं सर्पिरुच्यते, तत् कथमुपपन्नं भवतु इत्याह—रुक्षं तेज इत्यादि। तत्र तेजःशब्दो यद्यपि पित्तानलस्नेहशक्तिद्युतिधामघर्म्मोष्मेषु भवति, तथापीह तेजःशब्देनोष्माभिधीयते, तेन रुक्षस्वरूप उष्मा सर्व्वत्र ज्वरकर इत्युक्तं भवति, स चोष्मा आमाशयविक्षिप्तस्याग्नेस्तथा देहभवः, तथा ज्वरप्रभावकृतश्च ज्वररूपो ज्ञेयः ; यदुक्तम्—"स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणो बलम्। स्रोतांसि रुद्ध्वा सम्प्राप्ताः केवलं देहमुल्वणाः। सन्तापमधिकं देहे जनयन्ति" इत्यादि। अयञ्च उष्मा सूक्ष्मविचारेण यद्यपि पित्तस्य भवति, यदुक्तम्—"उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना", पित्तञ्च—"सस्नेहमुष्णं तीक्ष्णम्" इत्यादिना ग्रन्थेन स्निग्धमुक्तम्, तथाप्यवस्थावशात् पित्तं निरामं सत् निःस्नेहं भवति, स्नेहश्च पित्तगुणे द्रवयोगनिमित्तकः, न सांसिद्धिकः। तेन स्नेहागमः पित्तस्य वाद्यत एवावस्थायामेव। निःस्नेहस्य पित्तस्योष्मा रुक्ष एव भवति। इयञ्च व्याध्यवस्था व्याधिप्रभावादेवाजीर्णावस्थायां भवति, यथा मदात्ययेऽपि वातपित्तम्। यदुक्तम्—"पित्तमारुतपर्य्यन्तः प्रायेण हि मदात्ययः" इति। क्षारपाणिनाप्युक्तम्—"ज्वरोष्मणा रुक्षितेषु धातुषु बलवान् मारुतो ज्वरानुबन्धं विषमज्वराणां योऽन्यतमं कुर्य्यात्" इत्यादि। तत्र रुक्षेण ज्वरेण तेजसा ज्वरकालसम्बन्धाद् रुक्षितस्य ज्वरिणो योऽनुबलो धातुरनिलः स्यात्, स च स्नेहबध्य इति सर्पिःस्थितस्नेहगुणबध्य इत्यर्थः। 'च'-कारात्, रुक्षं तेजो यत् ज्वरकरम्, तदपि सर्पिःस्थितस्नेहबध्यमिति समुच्चिनोति। 'धातुः' इति विशेषणेन वायोर्धारणात्मकतोच्यते, ततश्च धारणात्मकस्य वायोः प्रकोपो महात्यय इति सूचयति। अनु पश्चाद् बलं भवति यस्य सोऽनुबलः। एतेन सर्व्वज्वरेषु कषायादिना द्वादशाहेन च कालेनामकफांशपरिक्षये सति ज्वरोष्मा वृद्धो भवति, तद्विरुक्षणाच्च वायुरपि वृद्धो भवति, अत्र ज्वरोष्मणि पित्तधर्म्मे सर्पिस्तावत् शैत्याद्विहितं भवतीति प्रसिद्धत्वान्नोक्तम्। स्नेहांशेनैव तु सर्पिर्यथा पित्तोष्माणं ज्वरकरं रुक्षस्वरूपं तथानिलञ्च स्नेहात् शमयति, तत् "रुक्षं तेजः" इत्यादिना श्लोकेनोक्तं भवति। अन्ये तु 'तेजः'शब्देनेह पित्तमेव ग्राहयन्ति। पित्तं हि द्विविधम्—सद्रवं निर्द्रवञ्च ; यत् सद्रवम्, तत् सस्नेहञ्च तु लङ्घनादिना क्षपितमधोभागेन निर्हरद् रुक्षं भवति। यदि "रुक्षं तेजः" इत्यनेन पित्तमुच्यते, तदा "यः स्यादनुबलो धातुः" इत्यनेनानुबन्धरूपकफं ग्राहयन्ति, ततोऽनुबन्धः कफः, रुक्षं पित्तम्, वातश्च स्नेहसाध्यो भवतीत्यर्थः

* स्नेहबध्यः इति वा पाठः ।

**कषायाः सर्व्व एवैते सर्पिषा सह योजिताः।**
**प्रयोज्या ज्वरशान्त्यर्थमग्निसन्धुक्षणाः शिवाः॥ १३३॥**

गङ्गाधरः—ननु के के स्नेहा इत्यत आह—कषाया इत्यादि। पाक्यं शीतकषायं वेत्यादिभिर्ये व्याख्याताः कषायाः कषायद्रव्याणि, ते सर्व्वे एव यथैकैकयोगं क्वाथं सर्पिषा पुराणसर्पिषा सह योजिताः कल्कीकृत्य सर्पिश्चतुर्गुणं दत्त्वा पक्वा प्रयोक्तव्याः। "यत्राधिकरणेनोक्तिगणे स्यात् स्नेहसंविधौ। तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना" इति परिभाषया गणाधिकाराभावात् कल्कः एवैषां सर्पिःसाधने हि सर्पिषा सहैषां कल्कीभूतत्वेन प्रक्षेपे साक्षात् सम्बन्धेन मुख्यता। कषायरूपतया तु स्वरूपतोऽप्रक्षेपेण न मुख्यता, मुख्ये हि कार्य्यसम्प्रत्यय इति न कषाय एषाम्। एवं पिप्पल्याद्यं घृतमपि व्याख्येयम्, तथान्यच्च यद्यदेवं भवतीति कश्चिदाह, तन्न सम्यगनार्षत्वात्। सुश्रुते हि "कल्कक्वाथावनिर्द्देशे गणात् तस्मात् प्रयोजयेत्" इत्युक्तं तद्वचनेन योऽर्थः सम्पद्यते तथैव यत्राधिकरणेनोक्तिरिति वचनव्याख्यानं कर्त्तव्यम्। तद् यथा। यत्राधिकरणे यद्योगनिर्द्देशाधिकरणे वचने स्नेहसंविधौ द्रव्याणां गणे कल्कक्वाथयोः नोक्तिर्न निर्द्देशस्तत्रैव कल्कनिर्य्यूहौ स्नेहवेदिनेष्येते। इति व्याख्यानं सुश्रुतवचनार्थेन तुल्यं भवति। अधिकारितयेति व्याख्याने विरोधः स्यादतो न तद्व्याख्यानं साधु। तस्मात् त्रिप्रभृतिद्रव्येण योगे तेषामेव द्रव्याणां कल्कक्वाथौ प्रयोजयेदिति एवं पिप्पल्याद्यघृतादौ कल्कक्वाथौ बोध्यौ। इति॥ १३३॥

'स्नेह'शब्देन च प्रकरणात् सर्पिरुच्यते। सर्पिषः कफहरश्च संस्कारश्च भवति। यदुक्तम्—"घृतं तुल्यगुणं दोषं संस्काराच्च जयेत् कफम्" इति। किञ्च, "अत ऊर्द्ध्वं कफे मन्दे" इत्यादिना त्रिष्वपि दोषेषु सर्पिःप्रयोगोऽनुमतः; तदिहापि लय एव दोषा यथोक्तव्यस्तथा सर्पिर्विषयाः प्रतिपादिता भवन्तीति। अस्माकन्तु पूर्व्व एव व्याख्याने स्वरसः; अन्ये तु—'रूक्षे तेजो ज्वरकरम्' इति पठन्ति, रूक्ष इति कषायादिभिः रूक्षीकृतशरीर इति ज्ञेयम्, शेषं पूर्व्ववत्। अयञ्च पाठः पूर्व्वटीकाकृद्भिर्भीमदत्त-स्वामिदास-ओपाध्याय(धर्म्म)प्रभृतिभिरपि व्याख्यातत्वान्न प्रतिक्षेपणीयः। खरनादेनापि समानोऽयं पाठः, उक्तं हि तत्र—"कषायपानाद् वमनाल्लङ्घनाल्लघुभोजनात्। रूक्षितानां ज्वरत्यागे सर्पिःपानमुदीक्षते। रूक्षे तेजोऽधिके देहे" इत्यादिना॥ १३२॥

चक्रपाणिः—सम्प्रति सर्पींषि प्राह—कषाया इत्यादि। य एते ज्वरघ्ना उक्ताः, ते सर्पिषा सह योजिता इति सर्पिःसाधनत्वेन प्रयुक्ताः प्रयोज्याः यथोक्तकषायद्रव्यैः, स्वविषय एव सर्पींषि साधयित्वा प्रयोज्यानीति वाक्यार्थः; अन्ये तु, कषायाणां सर्पिषा मिश्रीकृतानामनेन वचसा प्रयोगमिच्छन्ति॥ १३३॥

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।
कलिङ्गकास्तामलकी शारिवातिविषा स्थिरा ॥
द्राक्षामलकविल्वानि त्रायमाणा निदिग्धिका ।
सिद्धमेतद्घृतं सद्यो जीर्णज्वरमपोहति ॥

गङ्गाधरः—पिप्पल्य इत्यादि । कलिङ्गका इन्द्रयवाः । तामलकी भूम्यामलकी । स्थिरा शालपर्णी । विल्वमिति विल्वमूलत्वक् । त्रायमाणा जलवहला । एतैः कल्कीभूतैः क्वथितैश्च । तत्र क्वाथो जलेन कार्य्यः । द्रवकार्य्येऽप्यनुक्ते तु सर्व्वत्र सलिलं मतमिति वक्ष्यमाणवचनात् । जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम् । तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणमिति वक्ष्यमाणवचनाच्च । स्नेहचतुर्गुणः क्वाथः स्नेहपादः कल्कः । तथा । अनिर्द्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते इति वचनाच्च । पयःसर्पिःप्रयोगे तु गव्यमेव विधीयते इति वचनाच्च पुराणं

चक्रपाणिः—पिप्पल्यादौ घृते पिप्पल्यादीनां विशेषानुक्तेः कषायत्वं कल्कत्वञ्च के व्रुवन्ति । अन्ये तु कल्कत्वमेवेच्छन्ति । द्रवकार्य्यन्तु द्रवस्यानुक्तत्वात् तोयेनैव कर्त्तव्यम्, "द्रवकार्य्ये त्वनुक्ते तु सर्व्वत्र सलिलं स्मृतम्" इति वचनात् । ननु यत्र कल्कत्वेन द्रव्यश्रुतिर्द्रवञ्च न श्रुतम्, तत्र जलं कर्त्तव्यम्, यथा—"त्रूषणत्रिफलाकल्के विल्वमात्रे गुडात् पले । सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानले पिबेत् ॥" इति । यत्र तु कषायत्वं कल्कत्वं वा नोक्तम्, तत्र क्वाथकल्कावेव कर्त्तव्यौ, यदुक्तं सुश्रुते—"कल्कक्वाथावनिर्द्देशे गणात् तस्मात् समाहरेत्" इति । नैवम्, सुश्रुतोक्तपरिभाषा हीयं गणविषयैव, "गणात् तस्मात् समाहरेत्" इति वचनात्, न च पिप्पल्यादयोऽमी गणत्वेनोक्ताः । गणेऽपि यत्राधिकरणेन श्रुतिः तत्रैव क्वाथकल्ककरणम् । यदुक्तमन्यत्र—"यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ । तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना ॥" इति । किञ्च सामान्येन द्रव्यस्य स्नेहसाधनाभिधाने यदि कल्ककषायौ स्याताम्, तदा बलातैलादौ "बलाकषायकल्काभ्यां तैलं क्षीरसमं पचेत्" इति न कुर्य्यात्, कल्ककषाययोरुपादानसामान्यसाधनवचनेनैव लब्धत्वात् । तस्मात् कल्कमात्रेणैव पिप्पल्यादिद्रव्यं जलं चतुर्गुणं देयम्, एवमन्यत्रापि बोद्धव्यम् । अत्र च पक्तव्यघृतस्य प्रमाणानिर्द्देशादव्यवस्थितमानमेव सर्पिरिच्छातः पक्तव्यम् । यत्र तु प्रस्थादिमाननिर्द्देशं करोति, तत्र तावन्मात्रेणैव स्नेहेन प्रायो रोगोपशमो भवतीति ज्ञेयम् । तथा हि वातव्याध्यादौ भूयःस्नेहसाध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति, तथा प्रपौण्डरीकाद्यनस्ययोगितया कुडवमानं स्नेहं वक्ष्यति । कुष्ठे तिक्तषट्पलादौ तु अत्यल्पघृतपाकसंविधानेन तथैव पक्वस्य घृतस्य कार्य्यकर्त्तृत्वं भवतीति भेषजप्रभावदर्शी महर्षिर्बोधयति । तत्र यदि कुष्ठस्य दीर्घरोगतया भूयसा षट्पलेन प्रयोजनम्, तदा पुनःपुनः षट्पलमानं पक्तव्यं घृतम्, "यथा कुर्व्वन्ति, स उपायः" इति वचनात् । एवं पानीयकल्याणागस्त्यहरीतक्यादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम् ।

क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम्।
अंसाभितापमग्निश्च विषमं सन्नियच्छति॥ १३४॥

जीर्णज्वरे पिप्पल्याद्यं घृतम्।

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम्।
पक्त्वा तेन कषायेण पयसा द्विगुणेन च॥

गव्यं घृतं चतुःशरावः क्वाथः षोड़शशरावः पिप्पल्यादिकं सर्व्व प्रत्येकसमं मिलित्वा स्नेहपादिकं शरावमितमित्यर्थः ॥१३४॥ जीर्णज्वरे पिप्पल्याद्यं घृतम्।

गङ्गाधरः—वासां गुड़ूचीमित्यादि। तेन कषायेणेत्येकवचननिर्देशत्वाद् वासादीनां मिलितानामेकः क्वाथः। स्नेहात् तोयं चतुर्गुणमिति वचनात् तथा पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्व्वाक् च स्याच्चतुर्गुणमिति वचनाच्च वासादिकषायदुग्धाभ्यां मिलिताभ्यां स्नेहचतुर्गुणो द्रवो व्यवतिष्ठते। तत्र दुग्धस्य द्वैगुण्यवचनात् वासादिक्वाथोऽपि द्विगुण इति चतुर्गुणो द्रवः। अत्र क्षीरस्य वीर्य्याधानार्थं केचित् "क्षीरमस्त्वारनालानां पाको नास्ति विनाम्भसा। सम्यग् वीर्य्यं न मुञ्चन्ति जलं तस्माच्चतुर्गुणम्" इत्याहुः। तत्रान्ये वदन्ति—क्षीरमस्त्वारनालानां नायं पाकः, परन्तु स्नेहस्य क्षीराद्यैः पाक इति। तत्र चापरे भाषन्ते—"स्वरसक्षीरमस्त्वाद्यैः पाको यत्रेरितः क्वचित्। जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत्॥" इति। तत्राप्याह कश्चित्—यत्र द्रवान्तरं नास्ति तत्र क्षीरं चतुर्गुणम्। द्रवान्तरप्रयोगे तु क्षीरं स्नेहसमं मतम् इति वचनात् द्रवान्तरायोगेन क्षीरस्य पाके सम्यग् वीर्य्यं भवत्येवेति द्रवान्तराभावे चतुर्गुणक्षीरे जलमपि स्नेहाच्चतुर्गुणं न तु क्षीरादिति तस्माद् याद‍ृच्छिकमाचार्य्यस्य क्वचिन्मानाभिधानमनभिधानञ्च क्वचिदिति। तामलकी भूम्यामलकीति ख्याता। हलीमकः कामलाभेदः। सन्नियच्छतीति समं करोति॥ १३४॥

चक्रपाणिः—वासाद्ये घृते क्वाथस्य परिमाणं यद्यप्यनुक्तम्, तथापि द्विगुण एव क्वाथो ग्राह्यः, यतः स्नेहपाके चतुर्गुणमेव द्रवम् "स्नेहात् तोयं चतुर्गुणम्" इति वचनेन 'तोय'शब्दश्च द्रवोपलक्षणतयोक्तः। अत्र "द्वाभ्यामपि चातुर्गुण्यम्" इति परिभाषया यद्यपि क्षीरं कषायश्च द्विगुणमेव लभ्यते, तथापि विविधशिष्यबुद्धिहिततया स्पष्टार्थं क्षीरद्वैगुण्याभिधानमिति ब्रुवते। तत्र क्षीरस्य हि मानानुक्तौ "क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसमं क्षीरं कल्कश्च स्नेहपादिकः" इति वचनात् क्षीरस्य द्रवान्तरसान्निध्ये सति स्नेहसमत्वमेव स्यात्, ततश्च कषायभागत्रयं क्षीरस्यैकभाग इति कृत्वा द्वाभ्यामपि चातुर्गुण्यमिति परिभाषा सूचिता

पिप्पलीमुस्तमृद्वीका-चन्दनोत्पलनागरैः ।
कल्कीभूतैश्च विपचेद् घृतं जीर्णज्वरापहम् ॥ १३५ ॥

वासाद्यं घृतम् ।

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम् ।
निम्बञ्च पर्पटं मुस्तं त्रायमाणां दुरालभाम् ॥
कृत्वा कषायं पेष्यार्थे दद्यात् तामलकीं शटीम् ।
द्राक्षां पुष्करमूलञ्च मेदामामलकानि च ॥
घृतं पयश्च तत् सिद्धं सर्पिर्ज्वरहरं परम् ।
तृष्णाकासशिरःशूल-पार्श्वशूलांसतापनुत् ॥ १३६ ॥

बलाद्यं घृतम् ।

यत् तन्न। पिप्पलीत्यादिभिः षड्भिः कल्कीभूतैः स्नेहपादिकैः घृतं वासादीनां क्वाथैर्द्विगुणैः पयसा च द्विगुणेन पचेत् ॥ १३५ ॥

गङ्गाधरः—बलामित्यादि। कलसीं शालपर्णीं, धावनीं पृश्निपर्णीं, स्थिरामपि शालपर्णीविशेषं शालपर्ण्या भागद्वयं वा। बलादीनि एकादश द्रव्याणि अष्टगुणे जले पक्त्वा पादावशिष्टं कषायं घृतात् त्रिगुणं कृत्वा दद्यात् पयश्च घृतसमं दद्यात्। पेष्यार्थं कल्कार्थं तामलक्यादीनि घृतपादिकानि दद्यात्। तत्र घृते सर्व्वमिदं दत्त्वा पचेत्। कर्षादौ तु पलं यावद् दद्यात् षोड़शिकं जलम्। ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत्। चतुर्गुणमतश्चोर्द्ध्वं प्रस्थादिश्रुतिमानतः। चतुर्गुणन्त्वष्टगुणं द्रवद्वैगुण्यतो भवेदिति वचनात् ॥ १३६ ॥

स्यात्, तस्मात् कर्त्तव्यं क्षीरद्वैगुण्यवचनम्। अन्ये तु—'द्वाभ्यामपि चातुर्गुण्यम्' इति परिभाषया प्रत्येकमेव द्रवेण चातुर्गुण्यमिच्छन्ति। ततश्चेह कषायस्य चातुर्गुण्यम्, क्षीरस्य तु द्वैगुण्यं भवति। तन्न, एकेनापि चातुर्गुण्यं द्वाभ्यामपि चातुर्गुण्यं त्रिभिरपि चातुर्गुण्यं चतुर्भिः सममिति वचनेन चतुर्भिः स्नेहसमताभिधानेन स्नेहाच्चातुर्गुण्यमेव द्रवस्योक्तम्। अतो द्वाभ्यां त्रिभिरपि तथा चातुर्गुण्यं कर्त्तव्यम् यथा स्नेहाच्चतुर्गुणं स्यात्, तथाच मिलित्वैव चातुर्गुण्यं भवति, न प्रत्येकम्। चतुर्गुणद्रवपरिभाषा तु पञ्चप्रभृतिद्रवसान्निध्ये विशेषवचनाद् बाध्यते। वचनं हि—"पञ्चप्रभृति यत्र स्युः द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्व्वाक् च स्यात् चतुर्गुणम् ॥" इति। बलाद्येऽपि घृते क्वाथपयसोः पूर्व्वोक्तक्वाथक्षीरसाहचर्य्यात् प्रत्येकं द्विगुणत्वं ज्ञेयम् ॥ १३५। १३६ ॥

ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वञ्चाधश्च बुद्धिमान्।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ १३७ ॥
मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा।
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये ॥
क्षौद्राम्बुणा रसेनेक्षोरथवा लवणाम्बुना।
ज्वरे प्रच्छर्द्दनं शस्तं मद्यैर्वा तर्पणेन वा ॥ १३८ ॥
मृद्वीकामलकानां वा रसं प्रच्छर्द्दनं * पिबेत्।
रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥ १३९ ॥

ज्वरहरं वमनम्।

गङ्गाधरः—ननु क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः। अक्षीणबलमांसस्य शमयेत् तं विरेचनैः" इति यदुक्तं, तद्विरेचनं कैर्योगैः कार्य्यमित्यत आह—ज्वरिभ्य इत्यादि। बहुदोषेभ्यो न त्वल्पदोषेभ्यः। अल्पदोषेभ्यस्तु मृदुसंशोधनं दद्यात्। कल्पे कल्पस्थाने ॥ १३७ ॥

गङ्गाधरः—अत्रापि संशोधनार्थं ज्वरहितान् वमनविरेचनास्थापनादीन् योगानाह—मदनमित्यादि। मदनं मदनफलं पिप्पलीभिः सह कल्कीकृत्य उष्णाम्बुना मात्रया पेयम्। अथवा कलिङ्गैरिन्द्रयवैः सह मदनफलं कल्कीकृत्य मात्रयोष्णाम्बुना पेयम्। अथवा मधुकेन यष्टिमधुना सह मदनफलं कल्कीकृत्य मात्रयोष्णाम्बुना पेयमिति त्रयो वमनयोगाः। क्षौद्रेत्यादि। क्षौद्रमिश्रेणोष्णाम्बुना, मदनमिति सर्व्वत्राधिकारः। अथवा इक्षोः रसेन मदनमिति द्वितीयो योगः। अथवा लवणाम्बुना सैन्धवलवणमिश्रेणाम्बुना मदनमिति तृतीयः। मद्यैर्वा मदनमिति चतुर्थः। तर्पणेन वा तद्दोषहरद्रव्यक्काथेनालोड़ितलाजसक्तुना मदनं प्रच्छर्द्दनं ज्वरे शस्तमिति सर्व्वत्रान्वेतव्यमिति पञ्चमो योगः ॥ १३८ ॥

गङ्गाधरः—मृद्वीकामलकानां रसं क्काथं मदनयुक्तं ज्वरापहं प्रच्छर्द्दनं पिबेत्।

चक्रपाणिः—सम्प्रति क्रमसूचितवमनविरेचनयोगानाह—ज्वरिभ्य इत्यादिना। बहुदोषेभ्यः' इत्यनेन अल्पदोषेषु संशोधनं निषिद्धमिति स्फारयति। काल इति यथोक्तवमनविरेचनयोग्यज्वरावस्थायाम्। कल्प इति कल्पस्थाने। मदनं पिप्पलीयुक्तं कफे, कलिङ्गयुक्तं पित्तश्लेष्मणि,

* प्रस्कन्दनमिति वा पाठः।

लिह्याद् वा त्रैवृतं चूर्णं संयुक्तं क्षौद्रसर्पिषा ।
पिबेद् वा क्षौद्रमावाप्य सघृतं त्रिफलारसम् ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥
ज्वराद् विमुच्यते पीत्वा मृद्वीकाभिः सहाभयाम् ।
पयोऽनुपानमुष्णं वा पीत्वा द्राक्षारसं नरः ॥ १४० ॥
कासाच्छ्वासाच्छिरःशूलात् पार्श्वशूलाच्चिरज्वरात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ १४१ ॥

आमलकानां रसं वा मदनफलकल्कयुक्तं घृतभृष्टं ज्वरापहं प्रच्छर्दनं पिबेत् । योगद्वयमिति ॥ १३९ ॥

गङ्गाधरः—ऊर्द्ध्वतः शोधनयोगानुक्त्वाधः शोधनानाह—लिह्याद् वेत्यादि । क्षौद्रसर्पिर्भ्यां त्रिवृताचूर्णलेह एकयोगः । त्रिफलारसं सघृतं क्षौद्रमावाप्य प्रक्षिप्य पिबेदेति द्वितीयः । आरग्वधं सम्पाकस्य फलमध्यनिर्य्यासं पयसा उष्णेन पिबेदित्येकः । मृद्वीकानां रसेन क्वाथेनारग्वधफलमध्यं वा पिबेदिति द्वितीयः । त्रिफलां चूर्णीकृतां पयसा पिबेत् । त्रिवृतामिति पाठे त्रिवृतां चूर्णीकृतां कल्कीकृतां पयसा पिबेदिति तृतीयः । त्रायमाणां वा चूर्णीकृतां पयसा पिबेदिति चतुर्थः । ज्वरित इति सर्व्वत्रान्वेतव्यम् । ज्वरक्षीणस्य कामन्तु पयसा तु मलान् हरेदिति यदुक्तं तत् पयोविरेचनमाह—ज्वरादित्यादि । मृद्वीकाभिः सहाभयां निःक्वाथ्य पयोऽनुपानं पीत्वा ज्वरी ज्वरात् मुच्यते । द्राक्षारसं द्राक्षाक्वाथमुष्णं पयोऽनुपानम् उष्णगव्यदुग्धानुपानं पीत्वा नरो ज्वरान्मुच्यते । उष्णं द्राक्षाक्वाथं पीत्वा गव्यदुग्धमप्युष्णमेवानुपिबेदिति भावः ॥ १४० ॥

गङ्गाधरः—कासादित्यादि । पञ्चमूलीकृतं विल्वादिपञ्चानां मूलानां कल्केन

मधुकयुक्तं दाहप्राये । क्षौद्रयोगान्मधुरीकृतमम्बु क्षौद्राम्बु । लवणयोगाल्लवणीकृतमम्बु लवणाम्बु । प्रस्कन्दनं विरेचनम् । आस्वाद्य त्युपयोज्य । किंवा आसाद्येति पाठः ॥ १३७—१४० ॥

चक्रपाणिः—क्रमागतक्षीरप्रयोगानाह—कासादित्यादि । अत्र पञ्चमूल्यादिद्रव्यस्य तथा क्षीरस्य पानीयस्य च मानानुक्तौ वृद्धव्यवहारसिद्धया परिभाषया मानकल्पनम् । यदुक्तम्—"द्रव्यादष्टगुणं

एरण्डमूलोत्क्वथितं ज्वरात् सपरिकर्त्तिकात्।
पयो विमुच्यते पीत्वा तद्वद् विल्वशलाटुभिः॥ १४२॥
त्रिकण्टकबलाव्याघ्री-गुड़नागरसाधितम्।
वर्च्चोमूत्रविबन्धघ्नं शोफज्वरहरं पयः॥ १४३॥
सनागरं समृद्वीकं सघृतक्षौद्रशर्करम्।
शृतं पयः सखर्ज्जूरं पिपासाज्वरनाशनम्॥ १४४॥

पादिकेन चतुर्गुणजलेन पक्वं गव्यं पयः पीत्वा ज्वरितः कासादित्यादितो मुच्यते॥ १४१॥

गङ्गाधरः—एरण्डेत्यादि। एरण्डमूलोत्क्वथितं पयः पीत्वा सपरिकर्त्तिकात् गुदे कर्त्तनवत्पीड़ायुक्तात् ज्वराद् विमुच्यते। विल्वशलाटुभिः आमविल्वानाञ्च शुष्काणां कल्कैरुत्क्वथितं पयस्तद्वत् पीत्वा सपरिकर्त्तिकात् ज्वराद्-विमुच्यते॥ १४२॥

गङ्गाधरः—त्रिकण्टकेत्यादि। त्रिकण्टकं गोक्षुरं बला पीतपुष्पा बला व्याघ्री कण्टकारीमूलं नागरं शुण्ठी एभिः कल्कैरष्टमांशैः जले चतुर्गुणे साधितं पयः पुराणगुड़ं प्रक्षिप्य पीतं वर्च्चोमूत्रविबन्धघ्नं शोथज्वरहरं भवति॥ १४३॥

गङ्गाधरः—सनागरमित्यादि। नागरमृद्वीकाखर्ज्जूरैः कल्कीकृतः शृतं चतुर्गुणे तोये पक्वं पयः शीतीभूतं घृतक्षौद्रशर्करायुक्तं पिपासाज्वर-नाशनम्॥ १४४॥

क्षीरं क्षीरात् तोयं चतुर्गुणम्। क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः॥" इति। एतच्च द्रव्यार्द्ध-पले क्षीरपलचतुष्टयं पानीयपलानि षोड़श दत्त्वा क्षीरावशेषः पाकः कर्त्तव्यः। एवम्प्रकारा मान-व्यवस्था। ननु यत्र माषपर्णभृतीये—"मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम्। माषान् श्वदंष्ट्रां क्षीरिकां गोधूमान् शालिषष्टिकान्। पयस्यर्द्धोदके पक्त्वा कार्षिकानाढकोन्मिते। विवर्ज्जयेत् पयःशेषम्" इत्यादिना क्षीरद्रव्यादिमानमुक्तम्, तत् तत्रैव विषये ज्ञेयम्, तन्त्रान्तर-परिभाषागृहीतत्वादस्य मानस्य। प्रदेशान्तरयोगोक्तं हि मानं तदेव प्रदेशान्तरेऽपि मानलिङ्गं भवति, यत् परिभाषानुगतं भवति, यत् तु परिभाषाबाधितम्, तत् स्वविषये एवावतिष्ठते। यथा "शुद्धशुष्करसोनस्य चतुःपलं क्षीरोदकेऽष्टगुणे पचेत् क्षीरशेषञ्च पाययेत्" इति, एवमन्यदपि तन्त्रान्तरपरिभाषाविरुद्धमानकथनं तत्रैव प्रयोगे व्यवस्थितं ज्ञेयम्। परिकर्त्तिका कर्त्तनाकारा गुदादिवेदना। सनागरमित्यादौ क्षीरक्षौद्रस्य पाकानर्हत्वेनोत्तरकालं द्रव्यान्तरतुल्यमानस्यैव

चतुर्गुणेनाम्भसा वा शृतं ज्वरहरं पयः ।
धारोष्णं वा पयः सद्यो वातपित्तज्वरं जयेत् ॥ १४५ ॥
जीर्णज्वराणां सर्व्वेषां पयः प्रशमनं परम् ।
पेयं तदुष्णं शीतं वा यथास्वैरौषधैः शृतम् ॥ १४६ ॥
प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान् ।
पक्वाशयगते दोषे सिद्धौ यानुपदेक्ष्यते ॥ १४७ ॥
पटोलारिष्टपत्राणि सोशीरं चतुरङ्गुलम् ।
ह्रीवेरं रोहिणी तिक्ता श्वदंष्ट्रामदनानि च ॥

गङ्गाधरः—चतुर्गुणेनेति । केवलेन जलेन कल्कं विनापि शृतं पयो ज्वरहरमिति । चतुर्गुणेनेत्यनेन सर्व्वत्र पयःपाके चतुर्गुणं जलं ज्ञापितम् । तदुक्तमन्यत्र । "द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम् । क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥" इति । धारोष्णं वेति । गोदोहनमात्रं यत् स्वभावत उष्णं दुग्धं तद् वातपित्तज्वरं सद्यो जयेत्, न तु कफपित्तजं कफवातजं वा । दाहतृष्णापरीतस्येत्यादिना यत् पयोविधानमुक्तं, तत्र सनागरमित्यादियोगेन तृष्णावतो दुग्धम् । कासादित्यादिना निरामज्वराणां धारोष्णं वेत्यादिना वातपित्तज्वरस्य, ततः सर्व्वबद्धप्रच्युतदोषे शृतं पयो विहितम् ॥ १४५ ॥

गङ्गाधरः—जीर्णज्वराणामित्यादि । सर्व्वेषामिति वातादिजानां सर्व्वेषामेव जीर्णज्वराणां क्षीणकफानां यथास्वैः स्वीयैः स्वीयैरौषधैः शृतं पक्वं पयः परं प्रशमनम् । तच्च दुग्धमुष्णं वा शीतं वा पेयं वातकफेऽप्युष्णं वातपित्ते शीतम्, सर्व्वत्र सर्व्वं वा यथास्वौषधसिद्धत्वान्न विरुध्यते ॥ १४६ ॥

गङ्गाधरः—निरूहैर्वा मलान् हरेदिति यदुक्तं तन्निरूहयोगानाह—प्रयोजयेदित्यादि । सिद्धौ सिद्धिस्थाने । तथाति ऊर्द्ध्वञ्च यान् ज्वरहरान् सानुवासनान् निरूहानुपदेक्ष्यते तान् ज्वरितस्य क्षीणस्य पक्वाशयगते दोषे प्रयोजयेत् ॥ १४७

गङ्गाधरः—के योगा अत्रोपदेक्ष्यन्ते इत्याह—पटोलेत्यादि । पटोलारिष्टयोः

प्रक्षेपो ज्ञेयः । उष्णं शीतं वेति विकल्प इच्छाविशेषकृतः । किंवा प्रबलवाते उष्णम्, पित्तेऽतिबले शीतम् ॥ १४१—१४७ ॥

चक्रपाणिः—निरूहविधौ ज्वरहरानिति वचनेन ज्वरहरैर्द्रव्यैर्निरूहानुवासनकल्पनां दर्शयति ।

स्थिरा बला च तत् सर्व्वं पयस्यर्द्धोदके शृतम्।
क्षीरावशेषं निर्य्यूहं संयुक्तं क्षौद्रसर्पिषा॥
कल्कैर्मदनमुस्तानां पिप्पल्या मधुकस्य च।
वत्सकस्य च संयुक्तं वस्तिं दद्याज्ज्वरापहम्॥
शुद्धे मार्गे हृते दोषे विप्रसन्नेषु धातुषु।
गताङ्गशूलो लघ्वङ्गः सद्यो भवति विज्वरः॥ १४८॥

वस्तिः।

आरग्वधमुशीराणि मदनस्य फलानि च।
पर्ण्यश्चतस्रो मधुकं निर्य्यूहमुपकल्पयेत्॥
प्रियङ्गुर्मदनं मुस्तं शताह्वा मधुयष्टिका।
कल्कः सर्पिर्गुड़ः क्षौद्रं ज्वरघ्नो वस्तिरुत्तमः॥ १४९॥

वस्तिः।

पत्राणि। रोहिणी तिक्तेति कटुरोहिणी। स्थिरा शालपर्णी। अर्द्धोदके अर्द्धमुदकं यत्र तस्मिन्नर्द्धोदके पयसि गोक्षीरे द्विभागे भागैकं जलं दत्त्वा तयोर्द्वयोरष्टमांश पटोलादीनां कल्कं दत्त्वा पक्त्वा क्षीरावशेषं तं निर्य्यूहं क्षौद्रसर्पिषानुरूपेण संयुक्तं कृत्वा तथा मदनफलमुस्तकपिप्पलीयष्टीमधुकवत्सकवीजानां कल्कैर्युक्तं कृत्वा वस्तिं निरूहवस्तिं ज्वरापहं दद्यात्। अनेन शुद्धे मार्गे स्रोतसि इत्यादौ सति सद्यो विज्वरो भवति। एकोऽयं निरूहवस्तिः॥ १४८॥

गङ्गाधरः—आरग्वधमित्यादि। आरग्वधस्य फलमध्यं, पर्ण्यश्चतस्र इति शालपर्णी पृश्निपर्णी माषपर्णी मुद्गपर्णीति चतस्रः पर्ण्यः। आरग्वधादीनि द्रव्याण्यष्टौ क्वाथविधिना निर्य्यूहं क्वाथमुपकल्पयेत् साधयेत्। तत्र क्वाथे पूते प्रियङ्गुमदनफलमुस्तकशताह्वायष्टीमधुकानां पञ्चानां कल्कं गव्यं सर्पिः पुराणगुड़ं पुराणमधु च दत्त्वा आलोड्य वस्तिर्विधेयः। इति द्वितीयो निरूहवस्तिः॥१४९॥

पटोलाद्यैर्निरूहे 'पयस्यर्द्धोदके शृतम्' इत्यनेन क्षीरतुल्यस्य जलस्य ग्रहणम्, 'अर्द्ध'शब्दस्य समप्रविभागवचनत्वाज्ज्ञेयम्। अत्र च क्वाथकल्कस्नेहादिमानव्यवस्थितिः सिद्धिस्थाने वक्तव्यैव बोद्धव्या॥ १४८। १४९॥

गुडूचीं त्रायमाणाञ्च चन्दनं मधुकं वृषम् ।
स्थिरां बलां पृश्निपर्णीं मदनञ्चेति साधयेत् ॥
रसं जाङ्गलमांसस्य रसेन सहितं भिषक् ।
पिप्पलीफलमुस्तानां कल्केन मधुकस्य च ॥
ईषत्सलवणं युक्तं निरूहं क्षौद्रसर्पिषा ।
ज्वरप्रशमनं दद्याद् बलस्वेदरुचिप्रदम् ॥ १५० ॥　　वस्तिः ।
जीवन्तीं मधुकं मेदां पिप्पलीं मदनं वचाम् ।
ऋद्धिं रास्नां बलां विल्वं शतपुष्पां शतावरीम् ॥
पिष्ट्वा क्षीरं जलं सर्पिस्तैलञ्च विपचेद् भिषक् ।
आनुवासनिकं स्नेहमेतद् दद्याज्ज्वरापहम् ॥ १५१ ॥

अनुवासनम् ।

गङ्गाधरः—गुडूचीमित्यादि । वृषं वासकमूलम् । मदनं मदनफलम् । इति गुडूच्यादि-मदनान्तानि नव द्रव्याणि क्वाथविधिना रसं क्वाथं साधयेत् भिषक् । रसं तं क्वाथं, जाङ्गलानां हरिणादीनां मांसस्य रसं साधयित्वा तेन मांसरसेन सहितं, पिप्पलीमदनफलमुस्तकयष्टिमधुकानां कल्केन च युक्तम्, ईषत्सलवणं सैन्धवलवणेन सहितमीषल्लवणरसं क्षौद्रसर्पिषा युक्तं कृत्वा निर्म्मथ्य निरूहं दद्यात् । एवं तृतीयवस्तिः ॥ १५० ॥

गङ्गाधरः—अथ रूक्षबद्धपुरीषाय प्रदद्यादनुवासनमिति यदुक्तं तदनुवासनमाह—जीवन्तीमित्यादि । जीवन्तीं शाकविशेषम् । मेदां स्वनामख्यातां तदभावेऽश्वगन्धाम् । मदनमपि सर्व्वत्र फलमेव ग्राह्यम् । ऋद्धिं स्वनामख्यातां तदभावे बलां दद्यात् । विल्वं विल्वमूलत्वक् । एतानि जीवन्त्यादीनि शतावर्य्यन्तानि द्वादश द्रव्याणि स्नेहपादिकमानेन पिष्ट्वा कल्कीकृत्य पुराणं सर्पिस्तैलञ्च नवं तिलप्रभवं मिलित्वा प्रस्थं मन्दाग्निना पक्त्वा मूर्च्छयित्वा तत्र शीतीभूते पूर्व्वोक्तं कल्कं दत्त्वा क्षीरञ्च तत्स्नेहसमं जलं तत्स्नेहात् त्रिगुणं दत्त्वा ऐकध्यं विपचेत् भिषक् । एतदानुवासनिकं ज्वरहरं स्नेहं दद्यात् ॥ १५१ ॥　　अनुवासनम् ।

चक्रपाणिः—गुडूच्यादौ साधयेद् रसमिति क्वाथं कुर्य्यात् । ईषत्सलवणमिति ईषत्क्षौद्र-सर्पिषा युक्तमिति योज्यम् । जीवन्त्याद्ये अनुवासनयमके क्षीरं स्नेहसमम्, जलन्तु त्रिगुणमिति

पटोलपिचुमर्द्दाभ्यां गुडूच्या मधुकेन च।
मदनैश्च शृतः स्नेहो ज्वरघ्नमनुवासनम्॥ १५२॥

अनुवासनम्॥

चन्दनागुरुकाश्मर्य्य-पटोलमधुकोत्पलैः।
सिद्धः स्नेहो ज्वरहरः स्नेहवस्तिः प्रशस्यते॥ १५३॥

स्नेहवस्तिः।

यदुक्तं भेषजाध्याये विमाने रोगभेषजे।
शिरोविरेचनं कुर्य्याद् युक्तिज्ञस्तज्ज्वरापहम्॥

( नस्यम्। )

गङ्गाधरः—पटोलेत्यादि। पटोलपत्रनिम्बपत्रगुडूचीयष्टिमधुमदनफलानि इति पञ्च कल्कीकृत्य चतुर्गुणजले शृतः पक्वः स्नेहः श्रेष्ठत्वात् घृतमधिकारात् सर्पिस्तैलञ्चेति वा चतुःस्नेहानामन्यतमो वा॥१५२॥ द्वितीयोऽनुवासनयोगः।

गङ्गाधरः—चन्दनेत्यादि। चन्दनादीनि षड् द्रव्याणि कल्कीकृत्य चतुर्गुणे जले सिद्धः स्नेहः पूर्व्ववदेकः सर्पिरादिः पक्वः ज्वरहरः स्नेहवस्तिः अनुवासनवस्तिः॥ १५३॥

गङ्गाधरः—अनुवासनमुक्त्वा गौरवे शिरसः शूले इत्यादिना यच्छीर्षविरेचनविधानमुक्तं तस्य योगानाह—यदुक्तमित्यादि। भेषजाध्याये भेषजचतुष्कान्तर्गतेऽपामार्गतण्डुलीयेऽध्यायेऽपामार्गस्य बीजानीत्यारभ्य ज्योतिष्मतीं नागरञ्चेत्यन्तेन यच्छिरोविरेचनमुक्तं, विमाने रोगभेषजे इति विमानस्थाने रोगभिषग्जितीयेऽध्याये सर्व्वशेषे शिरोविरेचनद्रव्याणि पुनरपामार्गपिप्पलीमरिचेत्यारभ्य शिरोविरेचनार्थमुपदिशन्तीत्यन्तेन यच्च शिरोविरेचनमुक्तं, युक्तिज्ञो भिषक् तेषु मध्ये यज्ज्वरापहं शिरोविरेचनं तद् बुद्ध्या युक्त्या ज्वरे कुर्य्यात्।

स्नेहाच्चातुर्गुण्यं द्रवस्य कार्य्यम्। 'मदनैश्च शृतः स्नेहः' इत्यनन्तरोक्तसर्पिस्तैलरूप एव यमकस्नेहो बोद्धव्यः। एवं 'सिद्धः स्नेहः' इत्यत्रापि ज्ञेयम्॥ १५०—१५३॥

चक्रपाणिः—यदुक्तमित्यादिना शिरोविरेचनद्रव्यमाह। भेषजाध्याय इत्यपामार्गतण्डुलीये।

यच्च नावनिकं तैलं धूमवर्त्तिश्च या पुरा।
मात्राशितीये निर्द्दिष्टा प्रयोज्या सा ज्वरेष्वपि ॥ १५४ ॥
अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत्।
यथाभिलाषं शीतोष्णां विभज्य द्विविधं ज्वरम् ॥ १५५ ॥
सहस्रधौतं सर्पिर्वा तैलं वा चन्दनादिकम्।
दाहज्वरप्रशमनं दद्यादभ्यञ्जनं भिषक् ॥ १५६ ॥

अथ चन्दनादितैलमुपदेक्ष्यामः। तद् यथा—चन्दन-शैलेय-भद्रश्रिय- कालानुसार्य्य-भण्डी-कालीय-पद्मापद्मकोशीर-शारिवा-

यच्चेत्यादि। सूत्रस्थाने स्वस्थचतुष्के मात्राशितीयेऽध्याये यच्च नावनं नावनीयमणुतलं नाम चन्दनागुरुणी इत्यादिना यथोक्तान् अश्नुते गुणानित्यन्तेन पदेन पुरा निदिष्टं तत् तैलं, तथा तत्रैवाध्याये या च धमवर्त्तिः शिरोविरेचनार्था निर्दिष्टा, सा च ज्वरेष्वपि प्रयोज्या ॥ १५४ ॥

गङ्गाधरः—अथाभ्यङ्गांश्च प्रदेहांश्चेत्यादिना यदभ्यङ्गादिविधानमुक्तं तेषां योगानाह—अभ्यङ्गांश्चेत्यादि। यथाभिलाषं शीतज्वरे उष्णमभिलषति उष्णदाहज्वरे शीतमभिलषतीत्यभिलाषमनतिक्रम्य शीतोष्णं द्विविधं ज्वरं विभज्य शीते ज्वरे उष्णान् अभ्यङ्गादीन उष्णज्वरे शीतान् अभ्यङ्गादीन् कारयेत् ॥ १५५

गङ्गाधरः—ननु कैर्द्रव्यैरित्यत आह—सहस्रधौतमित्यादि। सहस्रधौतं सर्पिश्चन्दनादिकं तैलञ्च दाहज्वरप्रशमनम् अभ्यञ्जनं दद्यात् ॥ १५६ ॥

गङ्गाधरः—ननु किम्भूतं चन्दनादिकं तैलमित्यत आह—अथेत्यादि। चन्दनेत्यादि। पित्तप्रशमनत्वादत्र चन्दनं रक्तम्। शालेयं मिषिजः। भद्रश्रियं श्रीखण्डचन्दनं श्वेतचन्दनमित्यर्थः। कालानुसार्य्यं शैलजम्। भण्डी भाण्डीति

यच्च नावनिकं तैलमित्यणुतैलम्। अभ्यङ्गांश्चेत्यादिना क्रमागतं वहिःपरिमार्जनमाह। यथाभिलाषमिति यथेच्छम्। शीतोष्णं विभज्येति शीतसमुत्थमुष्णसमुत्थञ्च ज्वरं विभज्य, तत्र शीतसमुत्थे उष्णाभ्यङ्गादयः उष्णे शीताः कर्त्तव्याः। अत्र च प्रतिलोमव्याख्यया शीताभिप्रायिणेऽभ्यङ्गादीनाह—सहस्रधौतमित्यादि। 'सहस्र'शब्दो विपुलार्थः। तेन अनेकधा धौतं सर्पिरित्यर्थः ॥ १५४—१५६ ॥

चक्रपाणिः—सूचितं चन्दनाद्यं तैलं ब्रूते—अथेत्यादि। 'अथ'शब्दोऽधिकारे। चन्दनाद्येन द्रव्येण संस्कृतं तैलमपि चन्दनाद्यमुच्यते। चन्दनं रक्तचन्दनम्। भद्रश्रियं श्वेतचन्दनम्। कालानुसार्य्यं

मधुकप्रपौण्डरीकनागपुष्पोदीच्य-वल्य-*-पद्मोत्पलनलिन-कुमुद-सौगन्धिक-पुण्डरीक-शतपत्र-विसमृणालशालूकशैवाल-कशेरुकानन्ता-कुशकाशेक्षुदर्भशरनलशालिमूल - जम्बू-वेत्र-वेतस-वानीर-गुन्द्रा-ककुभासनाश्वकर्ण-स्यन्दन- -वातपोथ- -शाल-ताल- -धव-तिनिश--खदिर--कदर--कदम्ब--काश्मर्य्य--फल--सर्ज्ज- प्लक्ष-कपीतनोडुम्बराश्वत्थ-न्यग्रोध-लोध्र-धातकी-दूर्व्वेत्कट- शृङ्गाटक-मञ्जिष्ठा-ज्योतिष्मती पुष्करवीज-क्रौञ्चादन-वदरी-कोविदारक-

लोके। कालीयं कालीयकाष्ठम्। पद्मा भार्गी। पद्मकं पद्मकाष्ठम्। उशीरं वीरणमूलम्। शारिवा अनन्तमूलम्। मधुकं यष्टीमधु। प्रपौण्डरीकं पुण्डरीयकाष्ठम्। नागपुष्पं नागकेशरपुष्पम्। उदीच्यं वालकम्। वल्यानि वलहितानि दश ऐन्द्र्यपभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणीवलातिबला इति पञ्चाशन्महाकषायोक्तानि। पद्मं प्रसिद्धम्। उत्पलं नीलोत्पलम्। नलिनं सहस्रपत्रं पद्मम्। कुमुदं श्वेतजलजपुष्पमात्रम्। सौगन्धिकं कह्लारपुष्पं सुँधीति लोके। पुण्डरीकं श्वेतपद्मम्। शतपत्रं पद्मम्। विसं मृणालम्। मृणालं पद्मादीनां कन्दप्रभवं क्षुद्रमृणालम्। शालूकं पद्मादीनां कन्दः। शैवालः शैवलः। कशेरुः केशुर इति लोके। अनन्ता अनन्तमूलम्। कुशकाशयोर्मूलम्। इक्षुः प्रसिद्धस्तस्य मूलम्। दर्भ उलुस्तस्य मूलम्। शालिर्हैमन्तिकधान्यं तस्य मूलम्। जम्बूः प्रसिद्धा। वेत्रश्च प्रसिद्धम्। वेतसः पानीयामलकम्। वानीरं तस्य प्रभेदः। गुन्द्रा गुड़ूची गुड़ारोचनी वा। ककुभोऽर्ज्जनः। असनः पीतशालः। अश्वकर्णः क्षुद्रशालः। स्यन्दनो नेमिवृक्षः। वातपोथः किंशुकः। शालः प्रसिद्धः। एवं तालधवश्च। तिनिशः स्यन्दनभेदः। खदिरो वावरीति प्रसिद्धः। कदरः श्वेतखदिरः खयेर इति प्रसिद्धः। कदम्बः प्रसिद्धः। काश्मर्य्यं गम्भारीफलम्। फलं मदनफलम्। सर्ज्जो वृहद्वृक्षः शालः। प्लक्षो जटी नाकड़ इति लोके। कपीतनम् आम्रातकः। इत्कटेति एँकड़ इति लोके। शृङ्गाटकं पानीयफलम्। ज्योतिष्मती लतापुटकी। पुष्करवीजं पद्मवीजम्।

शीतला। नलिनं पद्मभेदः। मृणालम् सुगन्धि मूलम्। वेतसः। अश्वकर्णः शालभेदः। (प्ररोहो वटः।) स्यन्दनो नेमीवृक्षः। वातपोथः पलाशः। तिनिशो वञ्जुलः। कदरः खदिरः। कपीतनो गन्धमुड़ इति ख्यातः। वटोऽप्ररोहो वटः न्यग्रोधस्तु प्ररोहवान् वटः। ज्योतिष्मती

---

* चव्य इति वा पाठः।

कदली-संवर्त्तकारिष्टक-शतपर्व्वा-शीतकुम्भिका-शतावरीश्रीपर्णी-रोहिणी--श्रावणी-महाश्रावणी-शीतपाक्योदनपाकी-काला-बला-पयस्या-विदारी-जीवकर्षभक--क्षुद्रसहा--मेदा--महामेदा- मधुरसर्ष्यप्रोक्ता -तृणशून्य--मोचरसाटरूषक--वकुल-कुटज-पटोल-निम्ब-शाल्मली-नारिकेल-खर्ज्जूर-मृद्वीका-पियाल-प्रियङ्गु- धन्व-नात्मगुप्ता-मधूकानामन्येषाञ्च शीतवीर्य्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण द्विगुणितपयसा तेषामेव कल्केन कषायार्द्धमात्रं मृद्वग्निना साधयेत् तैलम्। तत् तैलमभ्यङ्गादेव

क्रौञ्चादनो घोञ्चुलुकः। बदरी त्रिधा। कोविदारः काञ्चनपुष्पम्। कदली सुप्रसिद्धा। संवर्त्तको मुस्तकम्। अरिष्टकं निम्बः। शतपर्व्वा दूर्व्वाभेदः। शीतकुम्भिका कुम्भाड़लता। श्रीपर्णी गाम्भारी। रोहिणी कटुरोहिणी। श्रावणी रक्तमुण्डेरी। महाश्रावणी श्वेतमुण्डेरी। शीतपाकी शीतला। ओदनपाकी नीलझिण्टी। काला नीलीति लोके। बला पीतबला। पयस्या क्षीरकाकोली क्षीरविदारी वा। विदारी भूमिकुष्माण्डः। जीवकः ऋषभकः स्वनामप्रसिद्धः। क्षुद्रसहा मुद्गपर्णी। मेदा महामेदा च प्रसिद्धा। मधुरसा मूर्व्वा। ऋष्यप्रोक्ता पीतबला शूकशिम्बा वा। तृणशून्यं मल्लिका। मोचरसं शाल्मलीवेष्टकम् अटरूषकं वासकः। वकुलादयः स्पष्टाः। धन्वनं धन्वननामा वृक्षः। आत्मगुप्ता शूकशिम्बा। मधूको मधूद्रुमः। अन्येषाञ्च शीतवीर्य्याणाम् आमलकादीनां यथा-लाभं कषायं क्वाथविधिना क्वाथं कारयेत्। तेन कषायेण तैलाद् द्विगुणेन पयसा च गव्येन द्विगुणेन सुतरां कषायार्द्धमानं तैलं तिलप्रभवं स्नेहं तेषामेव चन्दनादीनां यथालाभकल्केन तैलात् पादिकेन साधयेत्। तत् तैलं घृतवत्

काङ्गिनिका। संवर्त्तको विभीतकः। अरिष्टः पर्व्वतीयनिम्बम्। शतपर्व्वा श्वेतदूर्व्वा। शीतकुम्भिका काष्ठपाटला। महाश्रावणी अलम्बुषा स्थूलफला। शीतपाकी गन्धदूर्व्वा। ओदनपाकी नीलझिण्टी। काला काकोली। ऋष्यप्रोक्ता वृद्धिः शतावरी वा, पीतबला वा। तृणशून्यं केतकी। यथालाभमित्यनेन दुःखप्राप्यभेषजपरित्यागेनापि चन्दनादिपाकं दर्शयति। द्विगुणं पयोऽस्मिन् क्वाथे, तेन द्विगुणपयसा क्वाथेन। अत्र कल्कमानानिर्द्दिष्टेऽपि

सद्यो दाहज्वरं प्रशमयति। एतैरेव चौषधैः श्लक्ष्णपिष्टैः शीतैः प्रदेहं कारयेत्। एतैरेव च शृतशीतं सलिलमवगाहपरिषेकार्थं प्रयुञ्जीत ॥ १५७ ॥

इति चन्दनादि तैलादि।

मद्यारनाल-क्षीर-सौवीर-दधिघृतसलिलसेकावगाहाश्च सद्यो दाहज्वरमपनयन्ति शीतस्पर्शत्वादिति ॥ १५८ ॥

तैलपाकोऽपि तैले फेनोऽधिको मत इति लक्षणेन सम्यक् पक्वमवतार्य्य अभ्यङ्गार्थम्। एतदभ्यङ्गाद्धि सद्यो दाहज्वरं प्रशमयति।

दाहज्वरेऽभ्यङ्गमुक्त्वा प्रदेहादीनाह—एतैरेवेत्यादि। एतैरुक्तैश्चन्दनादिभिरौषधैर्जलेन श्लक्ष्णपिष्टैः सुशीतैः प्रदेहं कारयेत् दाहज्वरप्रशमन :एष प्रदेहः। परिषेकाद्यर्थं जलमाह—एतैरेवेत्यादि। एतैरुक्तैरेव चन्दनादिभिरौषधैः शृतशीतञ्च सलिलमर्द्धशृतं जलमवगाहार्थं परिषेकार्थञ्च प्रयुञ्जीत ॥ १५७ ॥

इति दाहज्वरे चन्दनादीनि तैलादीनि।

गङ्गाधरः—सेकावगाहान्तरमाह—मद्येत्यादि। सौवीरं तुषोदकम् ॥१५८॥

स्नेहपादिकत्वं कल्कस्य "कल्कश्च स्नेहपादिकः" इति वचनात्। सद्य इति शीघ्रम्। अत्र यद्यपि तैलमुष्णं घृतञ्च शीतलं, शीतञ्च दाहप्रशमने प्रशस्तम्, तथापि सूक्ष्ममार्गानुसारितया व्यवायितया च तथा स्पर्शनेनाधिकवातहरतया तैलमेवाभ्यङ्गेऽधिकृतम्, न घृतम्। अन्ये तु—घृतादपि तैलं संस्कारवाहितरमिति कृत्वा तैलमिहोक्तमिति ब्रुवते। ननु 'चन्दनाद्यम्' इति संज्ञाकरणे किं प्रयोजनम्? प्रदेशान्तरे व्यवहारार्थमिति चेत्, न, विनापि संज्ञाकरणात् प्रदेशान्तरे यौगिकसंज्ञाव्यवहारो दृष्टः, यथा—"षट्पलं वा पिबेत् सर्पिः" तथा "वासाघृतं दाक्षिकं वा पिबेत्" इति, 'मृत्रपणाद्यम्' इत्यादौ तथाकृतायामपि संज्ञायां व्यवहारो न दृश्यते। यथा च 'एतत् पारुषिकं सर्पिः' इति, तथा षड्भागकषायकादिसंज्ञां कृत्वा न वा ताभिः प्रदेशान्तरे व्यवहारः कृतः। मैवम्। पारुषिकादिसंज्ञाया यद्यपि शास्त्रे व्यवहारो नास्ति, तथापि तद्विद्यानां वैद्यानां तया संज्ञया व्यवहारो भविष्यति, एतदर्थं संज्ञाकरणम्। संज्ञानाञ्च प्रयोगकथनसमये अकारणोपयोगसिद्धाः संज्ञा भवन्त्येव षट्पलादिकाः। तेन प्रदेशान्तरेऽपि यौगिकसंज्ञाव्यवहारो भवति क्वचित् क्वचिच्चान्यथोपादेयतया वैद्यप्रसिद्ध्या च प्रयोगसमय एव संज्ञा क्रियत इति न क्वचित् क्षतिः। एवमन्यत्रापि संज्ञाकरणं व्याख्येयम्। 'अश्लक्ष्णपिष्टैः' इति वचनेन श्लक्ष्णपिष्टलेपस्य दाहकर्त्तृतां सूचयति। यदुक्तम्,—"श्लक्ष्णपिष्टघनो लेपश्चन्दनस्यापि दाहकृत्। त्वग्गतस्योष्मणो रोधात् शीतकृत् त्वन्यथागुरोः" इति ॥ १५७। १५८ ॥

भवन्ति चात्र।

पौष्करेषु सुशीतेषु पद्मोत्पलदलेषु च।
कदलीनाञ्च * पत्रेषु क्षौमेषु विमलेषु च॥
चन्दनोदकशीतेषु दाहार्त्तः संविशेत् सुखम्।
हिमाम्बुपूर्णे † सदने शीते धारागृहेऽपि वा॥ १५९॥
हेमशङ्खप्रवालानां मणीनां मौक्तिकस्य च।
चन्दनोदकशीतानां ना संस्पर्शान् रसान् ‡ स्पृशेत्॥१६०॥
स्रग्भिर्नीलोत्पलैः पद्मैर्व्यजनैर्विविधैरपि।
शीतवातकरैर्वीज्यश्चन्दनोदकवर्षिभिः॥ १६१॥

गङ्गाधरः—अथ दाहज्वरे योगान्तरानाह श्लोकैः—पौष्करेष्वित्यादि। पुष्करं वृक्षविशेषस्तस्य दलेषु च पद्मदलेषु च उत्पलदलेषु च कदलीनां पत्रेषु कोमलेषु क्षौमेषु विमलेषु वस्त्रेषु सर्व्वेषु चन्दनोदकशीतेषु श्वेतचन्दनघर्षणेन कृतोदकसिक्तेषु संविशेत् शयीत। हिमेत्यादि। हिमाम्बुपूर्णे हिमाम्बुभिः पूर्णः कोष्ठो यस्य सदनस्य तत्र सदनेऽथवा शीते सदनेऽथवा धारागृहे यन्त्रनालेन जलधारया युक्ते गृहे शयीत॥ १५९॥

गङ्गाधरः—हेमेत्यादि। हेम्नः सम्यक्स्पर्शान् वातपित्तोत्तरजीर्णज्वरी पुरुषः स्पृशेत्। अथवा शङ्खस्य संस्पर्शानथवा प्रवालस्य संस्पर्शानथवा मणीनां संस्पर्शानथवा मौक्तिकस्य संस्पर्शानथवा श्वेतचन्दनघर्षणजोदकशीतानां द्रव्याणां संस्पर्शान् रसान् द्रवान् स्पृशेत्॥ १६०॥

गङ्गाधरः—स्रग्भिरित्यादि। तथा नीलोत्पलैः पद्मैर्वा कृताभिः स्रग्भिः मालाभिः। विविधैस्तालवृन्तमय-कदलीपत्र-माणपत्र-निम्बपत्र-पद्मपत्र-चामरादिभिर्व्यजनः शीतवातकरैः शीतमेव वातं कर्त्तुं शीलवद्भिश्चन्दनोदकसिक्तैरेव चन्दनोदकवर्षिभिश्चन्दनोदकघर्षणशीलैः वीज्यः व्यजनीकार्य्यः स ज्वरी ना स्यात्॥ १६१॥

चक्रपाणिः—संस्पर्शानुरसान् स्पृशेदिति वचनात्र चिरं धारयेदिति दर्शयति। चिरधारणे

* कह्लाराणाञ्चेति पाठान्तरम्।　　† सिक्ते इति पाठान्तरम्।

‡ संस्पर्शानुरसान् पिबेदिति चक्रधृतः पाठः।

नद्यस्तड़ागाः पद्मिन्यो ह्रदाश्च विमलोदकाः।
अवगाहे हिता दाह-तृष्णाग्लानिज्वरापहाः॥ १६२॥
प्रियाः प्रदक्षिणाचाराः प्रमदाश्चन्दनोक्षिताः।
शान्तयेऽस्युः * परैः कामैर्मणिमौक्तिकभूषणाः॥ १६३॥
शीतानि चान्नपानानि शीतान्युपवनानि च।
वायवश्चन्द्रपादाश्च शीता दाहज्वरापहाः॥ १६४॥

अथोष्णाभिप्रायाणां ज्वरितानाम् अभ्यङ्गादीनुपक्रमाननुव्याख्यास्यामः। अगुरु-कुष्ठ-तगर-नलद-पत्र-शैलेयक-ध्यामक-

गङ्गाधरः—नद्य इत्यादि। तस्य दाहतृष्णावतो वातपित्तोदीर्णज्वरिणोऽवगाहे पद्मिन्यो नद्यस्तड़ागाश्च पद्मिनो ह्रदाश्च विमलोदका हिता दाहादिहराश्च स्युः॥ १६२॥

गङ्गाधरः—प्रिया इत्यादि। तस्य दाहादीनां शान्तये परैरुत्कृष्टैः कामैर्मदनविह्वलचित्तेन लालसाभिः प्रमदाः प्रकृष्टं मदवत्यः स्त्रियो युवतयो याः प्रिया भवन्ति प्रदक्षिणाचाराः प्रकर्षेण दाक्षिण्यमानुकूल्यम् आचरितुं शीलवत्यश्च भवन्ति, ताश्चन्दनोक्षिताः म्रक्षितचन्दनाङ्गास्तथा मणिमौक्तिकभूषणाः सत्यस्तं ज्वरिणमयुगच्छेयुः॥ १६३॥

गङ्गाधरः—शीतानीत्यादि। तथास्य ज्वरिणः शीतानि चान्नानि वाय्यन्नादीनि शीतानि पानानि नारिकेलोदकादीनि शीतानि पुष्पकदल्यादीनां कृत्रिमवनानि च शीताश्च वायवश्चन्द्रपादाश्चन्द्रस्य ज्योत्स्ना शीतदाहज्वरापहाः। इति शीताभिप्रायज्वरितस्याभ्यङ्गादीनि व्याख्यातानि॥ १६४॥

गङ्गाधरः—अथोष्णाभिप्रायज्वरितस्य अभ्यङ्गादयो व्याख्यास्यन्ते—अथेत्यादि। उष्णाभिप्रायाणां शीतार्त्तानां ज्वरितानाम्। आदिना प्रदेहावगाहपरिषेकान्। अगुर्व्वित्यादि। अगुरु कृष्णागुरु। कुष्ठम्। तगरं तगरपादिकम्। नलदम्

हि तेषामप्युष्णता स्यात्। वायवश्चन्द्रपादाः शीता इति अत्र चाकृतोष्णत्वदर्शनात् शीता इति विशेषणेन चन्द्रपादानां तेषां सर्व्वदा शीतत्वम्। किंवा, चन्द्रपादा अपि अत्युष्णकाले रजनीषु अनुष्णा एवोष्णसम्पर्कादुष्णा भवन्ति, तन्निरासार्थं शीता इति॥ १६०—१६४॥

* सान्त्वयेयुः इति चक्रादिधृतः पाठः साधीयान्।

हरेणुक-स्थौणेयक-क्षेमकैला--वराङ्गदल-पुर-तमालपत्र-भूतीक-रौहिष-सरल-शल्लकी-देवदार्व्वग्निमन्थ-विल्वश्योनाककाश्मर्य्य-पाटला-पुनर्नवा-वृहती-कण्टकारिका-वृश्चीर-शालपर्णी-पृश्निपर्णी-माषपर्णी-मुद्गपर्णी-गोक्षुरकैरण्ड-शोभाञ्जनक-वरुणार्कचिरविल्व-तिल्वक--शटी--पुष्करमूल-गण्डीरोरुवूक--पत्तूराक्षीवाश्मान्तक-शिग्रु-मातुलुङ्ग-मूषकपर्णी- * -तिलपर्णी-पीलुपर्णी-मेषशृङ्गी-हिंस्रा-दन्तशठ भल्लातकैरावतकास्फोत-काण्डीरात्मगुप्ता काकाण्डै-षीका-करञ्ज-धान्याजमोद-पृथ्वीका-सुमुख-सुरस-कवक-कण्डीर-कुठेरक कालमालक पर्णास-क्षवक फणिज्झक-भूस्तृण-शृङ्गवेर-

उशीरम् । पत्रं तेजपत्रम् । ध्यामकं कत्तृणम् । हरेणुकं रेणुकमिति लोके । स्थौणेयं ग्रन्थिपर्णम् । क्षेमकं हरिद्रा, चोरकाष्ठ इत्यन्ये । एला स्थूलैला । वराङ्गदलं प्रियङ्गुपत्रम् । पुरो गुग्गुलुः । तमालपत्रम् । भूतीकं यमानी । रौहिषं कत्तृणभेदः । सरलम् । शल्लकी शिलारसः । देवदारु । अग्निमन्थो गणेरी । श्योनाकदीनि षट् स्पष्टानि । वृश्चीरः श्वेतपुनर्नवा । शालपर्ण्यादीनि अर्कान्तानि नव स्पष्टानि । चिरविल्वो नक्तमालः नाटा इति लोके । तिल्वकं लोध्रम् । पुष्करं स्वनामख्यातं तस्य मूलं तदभावे कुष्ठम् । गण्डीरो दूर्व्वा । उरुवको रक्तैरण्डमूलम् । पत्तूरा षकम इति लोके । अक्षीबो रञ्जनवृक्षः । अश्मान्तको लोहचर इति लोके । शिग्र रक्तशोभाञ्जनम् । मातुलुङ्गं जम्वीरभेदः । मूषकपर्णी दन्ती । तिलपर्णी रक्त-चन्दनम् । पीलुपर्णी, मेषशृङ्गी अजास्तनयुगवद्युग्मफला । हिंस्रा कालियाकड़ । दन्तशठो जम्बीरः । भल्लातकं प्रसिद्धम् । ऐरावतं हस्तिशुण्डी । आस्फोता आकर-मल्ली । काण्डीरः श्वेतदूर्व्वा । आत्मगुप्ता शूकशिम्वी । ऐषीका शरमूलम् । करञ्जो डहरकरञ्जामूलम् । धान्यकं धनीयकम् । अजमोदं वनयमानी । पृथ्वीका सूक्ष्मैला । सुमुखं पर्णासः । सुरसः पर्णासः । कवकः । कण्डीरः । कुठेरकः श्वेतपर्णासः ।

चक्रपाणिः—अगुर्व्वाद्ये क्षेमकश्चोरकः । रौहिषो रामकर्पूर इति ख्यातः । शिग्रुः शोभाञ्जनभेदः । मूलपर्णी गुग्गुलुः । तिलपर्णी तिलोत्तम इति ख्यातः, रक्तचन्दनमित्यन्ये । काण्डीरः कारवेल्ली । मोरटा मूर्व्वेत्यन्ये शमठभेदः । स हि जलजस्थलजभेदाद् द्विविधः । आत्मजा पुत्रञ्जरा ख्याता । एकैषिका त्रिवृता । सुमुखादयः पर्णासभेदाः । सहा वृक्षसहाः ।

* मूलपर्णी इति पाठान्तरम् ।

**पिप्पली-सर्षपाश्वगन्धा-रास्ना रुहावरोहा-बलातिबला-वचा-गुडूची-शतपुष्पा-शीतवल्ली-नाकुली*गन्धनाकुली-श्वेता-ज्योतिष्मती-चित्रकाध्यण्डाम्लचाङ्गेरी-तिल-बदर-कुलत्थानाम्, एवंविधाना-मन्येषाञ्चोष्णवीर्य्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण तेषाञ्चैव कल्केन सुरासौवीरतुषोदकमैरेयमेदकदधि-मण्डारनालकट्वरप्रतिविनीतेन तैलपात्रं विपाचयेत्। तेन सुखोष्णे-नोष्णाभिप्रायं ज्वरितमभ्यज्यात्, तस्य शीतज्वरः प्रशाम्यति।**

कालमालकः। पर्णासः कृष्णपर्णासः। क्षवकः हाँचियामूलम्। फणिज्झक आस्फोतभेदः। भूस्तृण उलुयामूलम्। शृङ्गवेरादीनि चत्वारि स्फुटानि। रुहा स्वनामख्यातवृक्षः। अवरोहा वटावरोहः। बलादीनि त्रीणि स्पष्टानि। गुडूची पद्मगुडूची। शीतवल्ली। नाकुली रास्नाभेदः धारुया इति लोके। गन्धनाकुली सुगन्धीति ख्याता। श्वेता श्वेतापराजिता। ज्योतिष्मती घोषकभेदः। चित्रकम्। अध्यण्डा। अम्लचाङ्गेरी आमरुलिः। तिलादीनि त्रीणि स्पष्टानि। एवंविधाना-मुष्णवीर्य्याणाम् अन्येषाञ्च द्रव्याणां चव्यमरिचादीनाम्। यथालाभमिति "समस्तं वर्गमर्द्धं वा यथालाभमथापि वा। गणोक्तानां प्रयुञ्जीत द्रव्याणि मति-मान् भिषक्" इति परिभाषा ख्यापिता। कषायं काथविधिनाष्टगुणे जले पक्त्वा क्वाथं कारयेत्। तेन कषायेण तैलसमेन तेषामेवागुर्वादीनां कल्केन च तैलपादि-केन सुरादीनां प्रत्येकमष्टानां तैलसममानेन तैलपात्रं द्विगुण्यात् षोड़शशरावमितं तैलं विपचेत्। सुरा प्रसिद्धा। सौवीरं काञ्जिकभेदः सतुषधान्यकृतमम्लजलम्। तुषोदकं सतुषयवकृतमम्लजलम्। मैरेयकं मदिराभेदः। मेदकश्च मद्यभेदः। दधिमण्डो दधिमस्तु। आरनालं काञ्जिकम्। कट्वरं ससारकतक्रम्। प्रतिविनीतेन प्रत्येकं समांशेनावापितेन। "पञ्च प्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्व्वाक् च स्याच्चतुर्गुणम्" इति परिभाषा बोध्या। तेन पक्वेन तैलेनाभ्यङ्गकाले सुखोष्णीकृत्य उष्णाभिप्रायमुष्णाभिलाषं ज्वरितमभ्यज्यात्।

रोहाश्चलिकारिका। शीतपर्णी वृक्षकलम्बूका। नाकुली चविका। गन्धनाकुली रास्नाभेदः। अध्यण्डा शूकशिम्बी। अन्येषाञ्चेत्यनेन रोगभिषग्जितीयोक्तोष्णद्रव्याणि ग्राहयन्ति। सौवीरकतुषोदके विवृतकल्पे वक्ष्यमाणे। मैरेयं सुराकृतसुरा। मेदको जगलः। कट्वरं सस्नेहदधिद्रवः। पात्रम्

* शीतपर्णीति वा पाठः।

एतैरेव चौषधैः श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं कारयेत् । एतैरेव शृतं सुखोष्णं सलिलमवगाहार्थं परिषेकार्थञ्च प्रयुञ्जीत । शीतज्वरं प्रशमयति ॥ १६५ ॥

शीतज्वरेऽगुर्व्वादि तैलादि ।

भवन्ति चात्र ।

त्रयोदशविधः स्वेदः स्वेदाध्याये निदर्शितः ।
मात्राकालविदा युक्तः स च शीतज्वरापहः ॥ १६६ ॥
सा कुटी तच्च शयनं तच्चावच्छादनं ज्वरम् ।
शीतं प्रशमयन्त्याशु धूपाश्चागुरुजा घनाः ॥ १६७ ॥

उष्णाभिप्रायज्वरितस्याभ्यङ्गमुक्त्वा प्रदेहादीनाह—एतैरेवेत्यादि । एतैरगुर्व्वादिभिरुक्तैः । एतैरेवागुर्व्वादिभिरुक्तैर्द्रव्यैः शृतं पक्कं सलिलं क्वाथं सुखोष्णमीषदुष्णमवगाहार्थं परिषेकार्थञ्च प्रयुञ्जीत ॥ १६५ ॥

शीतज्वरेऽगुर्व्वादि तैलादि ।

गङ्गाधरः—शीतज्वरे योगान्तरमाह—भवन्तीत्यादि । त्रयोदशेत्यादि । मात्राकालविदा प्रयुक्तः स त्रयोदशविधः स्वेदः शीतज्वरापहः ॥ १६६ ॥

गङ्गाधरः—सा कुटीत्यादि । सा कुटीप्रावेशिकरसायनविधौ या कुटी पूर्व्वमुक्ता सैव कुटीति केचित् । शीतर्त्तुविहिता तस्याशितीयोक्ता या कुटी सा कुटी । तथा तच्च शयनं तत्रैवाध्याये शीतर्त्तु विहिता या शय्या तच्छयनम् । तच्चावच्छादनं तत्रैवोक्तं शीतर्त्तूचितं तद् यदाच्छादनं

आलकम् । अत्र सर्व्वाण्येव कषायादीनि द्रवद्रव्याणि स्नेहसमानि प्रत्येकं कर्त्तव्यानि । यदुक्तम्—"पञ्च प्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमान्याहुः" इति ॥ १६५ ॥

चक्रपाणिः—स्वेदाध्याये त्रयोदशविधस्यैवोक्तत्वात् पुनस्त्रयोदशविधवचनं सर्व्वेषामेव करणार्थम् । किंवा अधिकाग्निस्वेदनिषेधार्थम् । त्रयोदशविधस्वेदान्तर्गतापि कुटी विशेषेण हितत्वात् पुनरुच्यते । 'तच्च शयनम्' इति कुटीपरिकरतया प्रतिपादितं शयनम् । एवं अवच्छादनम्

चारूपचितगात्राश्च तरुण्यो यौवनोष्मणा।
आश्लेषाच्छमयन्त्याशु प्रमदाः शिशिरं ज्वरम्॥ १६८॥
स्वेदनान्यन्नपानानि वातश्लेष्महराणि च।
शीतज्वरं जयन्त्याशु संसर्गबलयोजनात्॥ १६९॥

प्रावरणादिकम्। तानि सर्व्वाणि शीतं ज्वरश्चाशु प्रशमयन्ति। धूपाश्च घना बहला अगुरुजा अगुरुकाष्ठचूर्णमङ्गारे ज्वलति क्षिप्त्वा कृताः शीतं ज्वरश्चाशु प्रशमयन्ति॥ १६७॥

गङ्गाधरः—चार्व्वित्यादि। प्रमदाः काममदप्रकर्षास्तरुण्यो द्वात्रिंशद्वर्षान्त-षोड़शवर्षाधिकवयस्काः स्त्रियश्चारूपचितगात्राः सुमनोहराकारेण नातिस्थूलतया नातिकृशतया प्रवृद्धदेहा आश्लेषादालिङ्गनाद् यौवनोष्मणा शिशिरज्वरं प्रशमयन्त्याशु॥ १६८॥

गङ्गाधरः—स्वेदनानीत्यादि। स्वेदनानि यद्यपि त्रयोदशविधः स्वेद इत्यनेन स्वेद उक्तस्तथापि तदितरानग्निस्वेदानामातपश्वासरोधादिजानां संग्रहार्थं पुनरत्र स्वेदनानीत्युक्तम्। अन्नपानानि वातश्लेष्महराणि वातहरश्लेष्महर-तदुभयहरविल्वादिपञ्चमूलादिकृतानि, संसर्गबलयोजनात् संसर्गबलेन तत्तद्वात-श्लेष्महरद्रव्याणां संयोगबलेन योजनात् शीतं ज्वरमाशु जयन्ति॥ १६९॥

अपि। एतच्च शयनाच्छादनं पृथगप्यत्र हितमिति पृथक्पाठं दर्शयति। घना इति बहलाः। स्वेदनानि उष्णानि कुक्कुटमदिराकुलत्थादीनि। संसर्गबलयोजनादित्यत्र अन्तरोक्त एवोष्णाभिप्रायः ज्वरकरो वातकफसंसर्गः 'संसर्ग'शब्देन गृह्यते। तेन वातकफसंसर्गे यदि वातो बलवान्, तदा गुरूष्णस्निग्धभूयिष्ठमनुपानम् यदा कफो बलवान्, तदा लघूष्णरूक्षप्रायं विधेयमित्यर्थः। अयञ्च वातकफजे ज्वरे विशेषेण वायोय गवाहितया शीतो भवतीति कृत्वेहोक्तिः। तेन केवलकफजः केवलवातजोऽपि शीताभिप्रायो ज्ञेय एव॥ १६६—१६९॥

निरामे वातजे चैव पुराणे क्षयजे ज्वरे ।
लङ्घनं न हितं विद्याच्छमनैस्तमुपाचरेत् ॥ १७० ॥ *
सामा ये ये च कफजाः कफपित्तज्वराश्च ये ।
लङ्घनं लङ्घनीयोक्तं तेषु कार्य्यं प्रति प्रति ॥ १७१ ॥

गङ्गाधरः—दाहादि-शीतादिभेदेनोक्तज्वरयोश्चिकित्सामुक्त्वा वातादिभेदन चोक्तानां ज्वराणां चिकित्सामाह—निरामे इत्यादि। पूर्व्वं ज्वरादृते क्षयानिलभयेत्यादिना वातजे क्षयजे च ज्वरे सामे यो लङ्घनप्रतिषेधः कृतः। अत्र निरामेऽपि लङ्घनं प्रतिषेधयति। निरामे सर्व्वस्मिन्नेव ज्वरे नैराम्ये मध्यावस्थायां वातजे च सर्व्वावस्थे एव पुराणे द्वादशदिनादूर्द्ध्वञ्च सर्व्वस्मिन्नेव ज्वरे क्षयजे च ज्वरे सर्व्वासु सामाद्यवस्थासु लङ्घनं हितं न विद्यात्। अत्र दोषज्वरप्रकरणाद् भयादिजे त्वागन्तुजे दोषजे सामवातज्वरे च तदेव ज्वरे पूर्व्वं यल्लङ्घनं निषिद्धं तन्नात्रोक्तम् ॥ १७० ॥

गङ्गाधरः—ननु तर्हि कस्मिन् ज्वरे लङ्घनं कार्य्यमित्यत आह—सामा ये

चक्रपाणिः—सम्प्रति वातजादीनां ज्वराणां पूर्व्वनिषिद्धं लङ्घनमुल्लेख्य विशेषचिकित्सामाह—वातज इत्यादि। शमनैरिति कषायसर्पिःपानादिभिः शमनैः ॥ १७० ॥

चक्रपाणिः—सम्प्रति वातजादीनामप्यवस्थायां लङ्घनं, तथा कफजादीनामपि स्वरूपेणैव

* इतःपरम् अधिकानि खल्वेतानि पद्यानि कुत्रचित् दृश्यन्ते। तद् यथा—

विक्षिप्यामाशयोष्माणं यस्माद् गत्वा रसं नृणाम्। ज्वरं कुर्व्वन्ति दोषास्तु हीयतेऽग्निबलं ततः ॥
यथा प्रज्वलितो वह्निः स्थाल्यामिन्धनवानपि। न पचत्योदनं सम्यगनिलप्रेरितो बहिः ॥
पक्तिस्थानात् तदा दोषैरुष्मा क्षिप्तो वह्निर्नृणाम्। न पचत्यभ्यवहृतं कृच्छ्रात् पचति वा लघु ॥
अतोऽग्निबलरक्षार्थं लङ्घनादिक्रमो हितः। सप्ताहेन हि पच्यन्ते सप्तधातुगता मलाः ॥
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि। उदीर्णदोषस्त्वल्पाग्निरश्नन् गुरु विशेषतः ॥
मुच्यते सहसा प्राणैश्चिरं क्लिश्यति वा नरः। एतस्मात् कारणाद् विद्वान् वातिकेऽप्यादितो ज्वरे ॥
नातिगुर्व्वति वा स्निग्धं भोजयेत् सहसा नरम्। ज्वरे मारुतजे त्वादावनपेक्ष्यापि हि क्रमम् ॥
कुर्य्याच्चिरनुबन्धानामभ्यङ्गादीनुपक्रमान्। पाययित्वा कषायञ्च भोजयेद् रसभोजनम् ॥
जीर्णज्वरहरं कुर्य्यात् सर्व्वशश्चाप्युपक्रमम्। श्लेष्मलानामवातानां ज्वरोऽनुष्णे कफाधिकः ॥
परिपाकं न सप्ताहे नापि याति मृदूष्मणाम्। तं क्रमेण यथोक्तेन लङ्घनाल्पाशनादिना।
आदशाहमुपक्रम्य कषायादैरुपाचरेत् ॥ इति।

वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम्।
ज्वरानुपाचरेद् धीमान् कफपित्तानिलोद्भवान् ॥ १७२ ॥
संसृष्टान् सन्निपतितान् बुद्ध्वा तरतमैः समैः।
ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत् ॥
वर्द्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य च।
कफस्थानानुपूर्व्व्या वा सन्निपातज्वरं जयेत् ॥ १७३ ॥

इत्यादि। ये च सामजाः कफजा ज्वराश्चकारात् ये च सामपित्तजाः ये च सामजाश्च कफपित्तज्वरास्तेषु ज्वरेषु प्रति प्रति प्रत्येकं प्रत्येकं लङ्घनीयोक्तं लङ्घनीयतया निर्द्दिष्टस्य पुरुषस्यैवोक्तं लङ्घनं कार्य्यम् ॥ १७१ ॥

गङ्गाधरः—ततः किं कार्य्यं तदाह—वमनैश्चेत्यादि। कफोद्भवं ज्वरं वमनैः पित्तोद्भवं विरेकैः वातोद्भवं वस्तिभिरिति ज्वरान् बुद्धिमानुपाचरेदिति। संसृष्टान् इत्यादि। संसृष्टान् वातपित्तजान् वातकफजान् पित्तकफजांश्च तथा सान्निपातिकान् ज्वरान् तरतमैः न्यूनमध्याधिकैः समैश्च दोषैरारम्भकैर्बुद्ध्वा दोषक्रमापेक्षी भिषक् तन्न्यूनमध्याधिकसमदोषक्रममपेक्ष्य यथोक्तैर्वमनादिभिः पूर्व्वोक्तैश्च पाचनैः शमनैश्चौषधैः जयेत्। तत्रैकदोषस्योच्छ्रितस्य क्षपणेन वापरोऽनुच्छ्रितो दोषो यथा न वर्द्धते तथा कृत्वा जयेदिति भावः। सन्निपातज्वरस्य प्रकारान्तरेण दोषक्षपणमाह—वर्द्धनेनेत्यादि। कफस्थानानुपूर्व्व्या "सन्नि-

सामान्येन लाघवकरं लङ्घनमाह—सामा इत्यादि। सामा इत्यनेनापि वातिकस्यापि सामस्य लङ्घनीयत्वं न केवलं सामपित्तस्य ब्रूते। उक्तं ह्यन्यत्र—"सामे वातेऽपि लङ्घनम्" इति। कफज तु निरामेऽपि लङ्घनमिति कफजं पृथगुच्यते। "कफपित्तज" शब्देन कफयुक्तपित्तजस्यैव लङ्घनीयत्वम्, न केवलनिरामपित्तजस्य, सामपित्तस्य तु आमक्षयार्थं लङ्घनं शस्यत एव। यदुक्तम् अन्यत्र—"सामे पित्ते लङ्घनं कुर्य्यादेवामपक्त्यर्थम्" इति। यदुक्तम्—"कफपित्ते द्रवे धातू सहेते लङ्घनं महत्" इति, तदपि सामान्येन सद्रवपित्तापेक्षया, क्षीणद्रवांशे तु पित्ते लङ्घनं न कर्त्तव्यमेव लङ्घनीयोक्तवचनेन। लङ्घनबृंहणीयोक्तदशविधलङ्घनं अवस्थानिषिद्धवमनादि सर्व्वथानिषिद्ध-व्यायामादिसहितं च ग्राह्यम् ॥ १७१ ॥

चक्रपाणिः—पूर्व्वं यद् "वमनाद्" इत्युक्तम्, तत् संसृष्टज्वरदोषेषु कफाधिकेषु। सम्प्रति एकैकदोषजे वमनैश्चेत्यादिना वमनादीनि प्राह इति न पौनरुक्त्यम्। संसर्गसन्निपातचिकित्सा-सूत्रमाह—संसृष्टानित्यादि। तरतमैः समैरिति संसर्गे एकोल्वणोल्वणतरे सन्निपाते च वृद्धतर-

वृद्धतमदोषारब्धे। मध्यो दोषानुसारेणैव ज्ञेयः। तथा द्व्युल्बणतरेऽपि सन्निपाते द्वौ दोषौ तरेणैव ज्ञेयौ। वृद्धवृद्धतरवृद्धतमदोषारब्धे च त्रिदोषे अत्यर्थवृद्धदोषास्तु तमैर्ज्ञेयाः। येन, "त्रिषु तमः" इति यदुक्तम्, तत् त्रिषु मध्ये एकस्य प्रकर्षावधारणे भवति। यदा तु त्रिषु द्वौ प्रकृष्टौ विवक्षितौ, तदा एकप्रकृष्टापेक्षया द्वयोस्तरेणेत्यस्यैव विषयः। समैस्तु समदोषारब्धः संसर्गः सन्निपातश्च ज्ञेयः। दोषक्रमापेक्षीति अनेकसङ्कीर्णदोषगतवृद्धिवृद्धितरवृद्धितमत्वादिविशेषे चिकित्सितोपयुक्ते अपेक्षणीयत्वमुक्तम्। क्रमापेक्षीत्यनेन च ज्वरितचिकित्सितोक्तलङ्घनादिक्रमोऽपेक्षणीय इति दर्शितम्। यथोक्तैरौषधैरिति लङ्घनादिभिरन्नपर्य्यन्तैः। ननु च त्रिदोषजे ज्वरे चिकित्सा नोपपद्यते, यतो न त्रिदोषशमनं प्रायो द्रव्यं भवति। यद्धि वाते सुपथ्यम् तत् श्लेष्मण्यपथ्यम्, यत् पित्ते पथ्यम् तत् प्रायः श्लेष्मण्यपथ्यम्। यद्वा तिक्तकषायं कफपित्तहरं तद् वातकरम्, यच्च मधुरं वातपित्तहरं तत् कफकरम्, यत् तु त्रिदोषहरमामलकादि तत् स्तोकं प्रतिनियतरोगविषयं बलवर्णरक्षायौगिकम्। सन्निपातश्चायं महात्ययिकः, तत् कथमस्य चिकित्सा कर्त्तव्येत्याह—वर्द्धनेनेत्यादि। पञ्चविंशतिप्रकारोऽत्र सन्निपात उच्यते "द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट्" इत्यादिना। तत्र, स्वमानक्षीणेषु सन्निपातेषु द्वादशसु ज्वरारम्भकत्वं नास्ति, क्षीणदोषाः स्वलिङ्गहानिमात्रविकारा नाधिकं ज्वरं कर्त्तुं समर्थाः, शेषेषु तु त्रयोदशसु त्रिदोषहरद्रव्यस्याभावात् अभ्यर्हितदोषापेक्षया द्वयोश्चिकित्सोच्यते गत्यन्तराभावात्। तत्र, वर्द्धनेनैकदोषस्येत्यनेन एकदोषस्य वर्द्धनेनापीत्यर्थः। 'एक'शब्देन च वृद्धो दोष एवापेक्षितः, न वृद्धतरो नापि वृद्धतमः। तयोर्हि सतोर्वृद्धयोर्वर्द्धनेनातिवृद्ध्या अत्यहितमेव स्यात्। वर्द्धनेनैकदोषस्येति वृद्धतरवृद्धतमदोषक्षयेण एकदोषवर्द्धनेन, यथा वृद्धे कफे वृद्धतरयोश्च वातपित्तयोर्मधुरम्, तद्धि वृद्धतरवातपित्तक्षपकतया कफं क्षीणं वर्द्धयदपि ज्वरं बलवद्दोषहन्तृतया हरति। तथा वृद्धे कफे वृद्धतरे च वाते वृद्धतरे च पित्ते मधुरयोगो ज्ञेयः। एवमुदाहरणान्तराणि ज्ञेयानि। अतस्त्वत्र वर्द्धनेनैकदोषस्येत्यनेन, द्व्युल्बणानां त्रयाणां तथा हीनमध्याधिकदोषाणां सन्निपातानां चिकित्सोक्ता। क्षपणेनैकदोषस्येत्यनेन च क्षीणद्वयसंवर्द्धकमपि यन्महात्ययवृद्धतरवृद्धतमदोषक्षपकं भवति, तद् भेषजं कर्त्तव्यम्, वृद्धतमो ह्यतिकुतः सद्यो हन्ति, तत्प्रक्रियायाञ्च क्षीणयोर्वृद्धिरत्यल्पायासक्रमेण प्रतिकर्त्तव्येति भावः। अनेनैकोल्बणास्त्रयः सन्निपाताः चिकित्सिताः। अस्मिन्नर्थे तन्त्रान्तरे "न्यूनैकदोषसंवृद्धिरेकवृद्धजयोऽपि वा। सन्निपातेषु कर्त्तव्यः सन्निपातवशेन तु"। परिशिष्टसमसन्निपातचिकित्सामाह—कफस्थानानुपूर्व्या वेति। 'वा'शब्दो व्यवस्थितविकल्पवाची। कफस्थानम् आमाशयोर्द्धभाग इत्यर्थः। आनुपूर्व्यमनुक्रमः। तेन, कफस्थानानुपूर्व्या जयेदिति कफस्थानं प्रथमं जयेत्, स्थानग्रहणेन स्थानिनः कफस्यापि ग्रहणम्, कफजयस्तु साक्षान्नोक्तः। तत्स्थानस्यैवामाशयस्य ज्वरारम्भकदोषेण दुष्टस्य चिकित्सोपदर्शनार्थम्। उक्तं हि—"ज्वरो ह्यामाशयसमुद्भवः" इत्यादि। एवञ्च समा अपि दोषा ज्वरारम्भका यस्मादामाशयं विशेषेण दूषयित्वा ज्वरं कुर्व्वन्ति, तस्मात् स्थानानुगुणैश्च ज्वरे प्रथमं चिकित्सा कर्त्तव्या। स्थानिदोषापेक्षया हि स्थानमेव प्रथमं चिकित्स्यम्; यदुक्तम्—"स्थानं जयेद्धि पूर्व्वम्" इति; स्थानं तस्य कफस्य स्थानम्। तत्र लघ्वन्नपाचनादिक्रिया ज्वरे प्रथमप्रतिपादिता क्रियत एव; एतच्च यद्यपि सर्व्वज्वरस्य साधारणं चिकित्सितम्, तथापि सन्निपाते बलवत्तरवाते चिकित्सा पूर्व्वज्वरचिकित्सा-

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥

पातज्वरे पूर्व्वं कुर्य्यादामकफापहम्। ततः श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ" इति ख्यापितम्। पूर्व्वं कफं जयेत् ततः पित्तं ततो वातमित्यर्थः ॥ १७३ ॥

गङ्गाधरः—सप्तविधदोषजज्वरस्य चिकित्सामुक्त्वा सन्निपातज्वरोपद्रवमाह—सन्निपातज्वरस्यान्ते इत्यादि। यद्यपि दृश्यते ज्वरस्य सहजो मध्यजश्च कर्णमूलशोथस्तथापि तस्य तस्य शोथस्यान्यज्वरोपद्रवत्वात्

प्रसक्तिनिरासार्थं समसन्निपाते प्रोच्यते; ज्वरादन्यत्र हि सन्निपाते सम एव वातः पूर्व्वं चिकित्स्यते; उक्तं हि—"वातस्यानु जयेत् पित्तं पित्तस्यानु जयेत् कफम्" इत्यादि। यत्र कफस्थानानुपूर्व्व्या तु चिकित्सिते क्रियमाणे यो दोष उल्वणो भवति, तत्र वर्द्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा इति चिकित्सा कार्य्या। एतदेव भेलेनोक्तम्;—"सन्निपातज्वरे पूर्व्वं कुर्य्यादामकफापहम्। पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ" इति; तत्र च पित्तानुपूर्व्व्या जयेदित्यर्थः। तदर्थानुवादकरञ्च सुश्रुते वचनं पठन्ति,—शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु। दुर्निवारतमं तद्धि ज्वरार्त्तेषु विशेषतः" इति, तत्र एतदभिधानं हि स्पष्टार्थम्, पित्तानुपूर्व्व्यैव जयेत्; सुश्रुतवचनं हि जीर्णत्रिदोषज्वर[illegible]ेण ज्ञेयम्, एतच्च प्रथमोत्पन्नसन्निपातज्वरचिकित्सितं कफस्थानानुपूर्व्व्या ज्ञेयम्। ये तु कफश्च स्थानञ्चेति द्वन्द्वं कुर्व्वते, तेषां मतेन कफस्यामाशयस्य च ज्वरस्थानस्य पूर्व्वं जयः कर्त्तव्य इत्यर्थः; स च षष्ठीतत्पुरुषेऽपि स्थानस्यामाशयस्य स्थानिकफापेक्षया क्रियमाण चिकित्सापि लभ्यत एवेति नार्थविरोधः। इयञ्चैकदोषवर्द्धनादिरूपा सन्निपातचिकित्सा यद्यपि न विशुद्धा, यदुक्तम्—"प्रयोगः शमयेद् व्याधिं यद्यप्यन्यमुदीरयेत्। नासौ विशुद्धः शुद्धस्तु शमयेन्न प्रकोपयेत्"; तथापि सन्निपातचिकित्सायां गत्यन्तरासम्भवे सति, अल्पदोषबहुगुणतया क्रियते इति ज्ञेयम्। अन्ये तु, 'वर्द्ध'च्छेदन इत्यस्मात् 'वर्द्धनम्' इति साधयित्वा 'वर्द्धन'शब्देन च मूलच्छेदकारकं संशोधनमुच्यते, 'एक'ग्रहणेन च न युगपद्वातादीनां वम्यादि शोधनं कर्त्तव्यम्, किन्त्वेकैकेनेति दर्शयति; क्षपणेनोच्छ्रितस्येत्यनेन संशोधनाविषये संशमनम् उच्यते, शेषस्य तु व्याख्या पूर्व्ववत्। अनेन श्लोकेन त्रयोदशविधसन्निपातारब्धे ज्वरे चिकित्सितम् उक्तं भवति। क्षीणवृद्धदोषविकल्पकृतषड्विधसन्निपातेषु यो ज्वरस्तत्र स्वमानक्षीणस्य तु न ज्वरारम्भकत्वमेव, तेन, न केवलं तत्र वृद्धस्य दोषद्वयस्यैकस्य वा वृद्धस्य ज्वरारम्भकस्य चिकित्सा कार्य्या, किन्तु स्वमानक्षीणवर्द्धनमपि तत्र कर्त्तव्यं भवतीति स्वमानक्षीणद्वादशसन्निपातस्य ज्वरारम्भकत्वमेव ॥ १७२।१७३ ॥

चक्रपाणिः—सन्निपातप्रस्तावात् तज्जं त्रिशोथीयोक्तशोथमनूद्य चिकित्सामाह—सन्निपातेत्यादि। कश्चिदेव प्रमुच्यते इत्यनेन दारुणत्वमस्य दर्शयति। उक्तं हि "सन्ति ह्येवंविधा रोगाः साध्या

रक्तावसेचनैः पूर्व्वं सर्पिःपानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्नावनैः कवड़ग्रहैः ॥ १७४ ॥
शीतोष्णस्निग्धरुक्षाद्यैर्ज्वरो यस्य न शाम्यति ।
शाखानुसारी तस्याशु मुञ्चेद् बाह्वोः क्रमात् सिराम् ॥ १७५ ॥

सन्निपातज्वरस्याप्युपद्रवत्वेऽपि दारुणत्वं प्रायशोऽसाध्यत्वाभावात्तु नोपदेशः कृतः। सन्निपातज्वरस्यान्ते प्रशमानन्तरं यः कर्णमूले शोथः संजायते स दारुणस्तेन च कश्चिदेव प्रमुच्यते प्रायेण म्रियते न तु प्रायेण मुच्यते कश्चित् म्रियते इति। ननु यः कश्चिन्मुच्यते स किं स्वयमेव मुच्यते किं भेषजेनेत्यत आह—रक्तेत्यादि। पूर्व्वं जातमात्रमग्रे रक्तावसेचनैः जलौकापातनेन शृङ्गालाब्वादिना रक्तमोक्षणैस्तथा सर्पिषां पिप्पल्यादिघृतादीनां ज्वरोक्तानां पानैः कफपित्तघ्नैः प्रदेहैः कफपित्तघ्नैः नावनैः कफपित्तघ्नः कवड़ग्रहैश्च तं शोथं जयेत् ॥ १७४ ॥

गङ्गाधरः—नन्वेवमुपक्रान्ते यस्य ज्वरो न शाम्यति तस्य किं कार्य्यमित्यत आह—शीतोष्णेत्यादि। यस्य ज्वरः उष्णकृतः शीताभिप्रायो ज्वरो यस्य शीतस्निग्धादिभिः कर्म्मभिर्न शाम्यति, शीतकृतश्चोष्णाभिप्रायो ज्वरो यस्य उष्णरुक्षादिभिः कर्म्मभिर्न शाम्यति तस्य शाखानुसारी रक्तानुसारी स ज्ञेयः, रक्तस्य अवसेकात् बाह्वोः सिरां क्रमात् विद्ध्वा रक्तस्य मोक्षणं कुर्य्यात्; तेनाशु स ज्वरः प्रशाम्यति ॥ १७५ ॥

दारुणसम्मताः। ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः" इति; किंवासाध्य एवायं रोगो भवति, कश्चित् तु कृच्छ्रसाध्य इति। ननु त्रिशोथीये "ज्वरान्ते दुर्ज्जयोऽन्ताय शोफस्तस्योपजायते" इत्यनेनानुपक्रमणीयत्वमस्योक्तम्, इह तु कश्चिदेव प्रमुच्यते इत्युक्तम्, तत् कथं न विरोधः? नैवम्, तथाहि तत्रापि दुर्ज्जयो भवति अन्तायैवेत्यर्थोऽतो न विरोधः ॥ १७४ ॥

चक्रपाणिः—"शाखानुसारी" इत्यत्र यद्यपि "शाखा रक्तादयो धातवः" इत्युक्तम्, तथापीह रक्तदूषको विशेषेण ज्वरो ज्ञेयः। रक्ताश्रय एव दोषे रक्तमोक्षस्य विशेषेण समर्थत्वात् रक्तमोक्षस्य स्थानं बाहुमध्यञ्च ज्ञेयम्, यदुक्तमन्यत्र "शीतोष्णस्निग्धरुक्षाद्यैर्ज्वरो यस्य न शाम्यति। शाखानुसारी तस्याशु विध्येद् बाह्वोः क्रमाच्छिराः" इति; शीतोष्णसेवादिवचनात्, सकलदोषानुरूपचिकित्सादिक्रमे सति रक्तदुष्टैरेव प्रायो ज्वरानुबन्धो भवतीति दर्शयति ॥ १७५ ॥

विसर्पेणाभिघातेन यश्च विस्फोटकैर्ज्वरः।
तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत् ॥ १७६ ॥
दौर्ब्बल्याद् देहधातूनां ज्वरो जीर्णोऽनुवर्त्तते।
बल्यैः संवृंहणैस्तस्मादाहारैस्तमुपाचरेत् ॥ १७७ ॥
कर्म्म साधारणं जह्यात् तृतीयकचतुर्थकौ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ॥ १७८ ॥

गङ्गाधरः—सर्पिःपानसाध्यत्वसाधर्म्म्यादाह—विसर्पेणेत्यादि। विसर्पो रोगविशेषो वक्ष्यते तेन रोगेण यो ज्वरो भवति, अभिघातेन च यो ज्वरो भवति, विस्फोटकश्च वक्ष्यमाण रोगविशेषैर्यो ज्वरो भवति, तत्र तेषु विसर्पाभिघातविस्फोटजेषु ज्वरेषु आदौ पूर्व्वं जातमात्रं सर्पिषः स्वच्छस्य पानम्; इदं वातोत्तरत्वे ज्ञापयति—कफपित्तोत्तरो न चेदिति ॥ १७६ ॥

गङ्गाधरः—दोषजज्वराणां मध्यस्थावस्थाचिकित्सामुक्त्वा जीर्णावस्थाचिकित्सामाह—दौर्ब्बल्यादित्यादि। एवमुपक्रान्तेऽपि यदि जीर्णज्वरो देहधातूनां रक्तादीनां दौर्ब्बल्यादनुवर्त्तते न शाम्यति, तदा बल्यैर्बलकरैराहारैः संवृंहणैः सम्यग्धातुवृद्धिकरैश्चाहारैस्तं ज्वरमुपाचरेत्। तेन शाम्यति स ज्वरः ॥ १७७ ॥

गङ्गाधरः—अथ वैषम्यावस्थाचिकित्सामाह—कर्म्म साधारणमित्यादि। साधारणं कर्म्म शारीरत्वात् दैवयुक्तिव्यपाश्रयम् न तु ज्ञानविज्ञानधैर्य्यस्मृतिसमाधयश्च दैवयुक्तिव्यपाश्रयञ्चेत्युभयम्। जह्यादिति हापयेदित्यर्थोऽन्तर्भूतणिजन्तप्रयोगात्। साधारणं कर्म्म दैवयुक्तिव्यपाश्रयक्रिया तृतीयकचतुर्थकौ हापयेत् ज्वरितमिति शेषः। ननु निजज्वरयोस्तृतीयकचतुर्थकयोः कथं दैवव्यपाश्रयक्रिया युज्यते इत्यत आह—आगन्तुरित्यादि। आगन्तुरत्र भूताभि-

चक्रपाणिः—विकारान्तरानुबन्धज्वरचिकित्सामाह—विसर्पेणेत्यादि। कफोत्तरश्च पित्तोत्तरश्चेति कृत्वैकशेषात् कफपित्तोत्तरत्वं ज्ञेयम्; किंवा कफपित्तयोः प्रत्येकमिति तयोरुत्तरत्वं ज्ञेयम्, तेनानुत्तरे कफे पित्ते च देयमेव सर्पिः ॥ १७६ ॥

चक्रपाणिः—दौर्ब्बल्यादित्यादौ 'देह'ग्रहणेनात्मादीन् व्यावृत्य रसादिषु 'धातु'शब्दं प्रवर्त्तयति। रसादय एव हि विशेषेण देहधारकाः। वृंहणं पुष्टिजननम् ॥ १७७ ॥

चक्रपाणिः—भूतानुबन्धिनोस्तृतीयकचतुर्थकयोश्चिकित्सामाह—कर्म्मेत्यादि। साधारणमिति भूतानुबन्धे दोषे साधारणी चिकित्सा दैवव्यापाश्रया बलिमङ्गलादिरूपा, युक्तिव्यपाश्रया तु दोषानु-

वातप्रधानं सर्पिर्भिर्वस्तिभिः सानुवासनैः ।
स्निग्धोष्णैरन्नपानैश्च * शमयेद् विषमज्वरम् ॥ १७९ ॥
विरेचनेन पयसा सर्पिषा संस्कृतेन च ।
विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् ॥ १८० ॥
वमनं पाचनं रुक्षमन्नपानं विलङ्घनम् ।
कषायोष्णञ्च विषमे ज्वरे शस्तं कफोत्तरे ॥ १८१ ॥
योगाः पराः प्रवक्ष्यन्ते विषमज्वरनाशनाः † ।
प्रयोक्तव्या मतिमता दोषादीन् प्रविभज्य ते ॥ १८२ ॥

षङ्गः प्रायशो विषमज्वरेऽनुबन्धोऽनुगतो भवति। तस्माद् दैवव्यपाश्रयेण कर्म्मणा विहितेन स प्रशाम्यति दोषश्च युक्तिव्यपाश्रयेणेति बोध्यम् ॥ १७८ ॥

गङ्गाधरः—ननु किं तत्र युक्तिव्यपाश्रयं कर्म्मेत्यत आह—वातेत्यादि। वातप्रधानं विषमं ज्वरं सर्पिर्भिर्विषमज्वरहरः घृतैः पानविधिना युक्तैः शमयेत्। सानुवासनैः वस्तिभिः स्नेहवस्ति-विरेचनवस्तिभिश्च शमयेत्। स्निग्धोष्णैरन्नैः पानैः पानीयैश्च शमयेत् ॥ १७९ ॥

गङ्गाधरः—विरेचनेनेत्यादि। पित्तोत्तरं विषमं ज्वरन्तु विरेचनेन पयसा पित्तहरद्रव्यशृतेन दुग्धेन संस्कृतेन पित्तहरद्रव्यैः पक्वेन सर्पिषा पित्तहरद्रव्यैः पक्वदुग्धसमुत्थेन च सर्पिषा तिक्तशीतैश्चान्नपानैश्च जयेत् ॥ १८० ॥

गङ्गाधरः—वमनमित्यादि। कफोत्तरे विषमज्वरे तु वमनं शस्तं पाचनं दोषपाचनं रुक्षश्चान्नं पानञ्च रुक्षम्। विलङ्घनमिति बुभुक्षाया अल्पत्वेऽल्पलङ्घनम् असद्भावे सम्यग्लङ्घनमिति पाचनेऽन्तर्भूतत्वेऽप्यस्य पुनर्वचनं न केवलं रुक्षमन्नपानं परन्तु कषायोष्णञ्च पानञ्च तथा रुक्षञ्चोक्तं शस्तमिति ॥ १८१ ॥

गङ्गाधरः—क्रियाक्रममुक्त्वा विषमज्वराणां शमनीयान् योगान् प्रतिजानीते—योगाः परा इत्यादि। ननु यदि सामान्यतो वक्ष्यन्ते कथं वातादिषु प्रयोक्तव्या

रूपकषायपानादिरूपा। 'विषमज्वर'शब्देनेह—तृतीयकचतुर्थकावेवाभिमतौ, न चतुर्थकविपर्य्ययौ। तिक्तशीतैरनुपानैर्भेषज्यैश्चेति विज्ञेयम्। कषायोष्णमिति उष्णकषायः। दोषादीनिति—दोषकालदेशप्रकृत्यादीनि, दोषाद्यपेक्षया यद् यत्र यौगिकम्, तत् तत्र कार्य्यमित्यर्थः ॥ १७८—१८२ ॥

* अनुपानैश्च इति पाठान्तरम्।

† वक्ष्यामि विविधान् योगान् विषमज्वरनाशनान् इति क्वचित् पाठः।

सुरा समण्डा पानार्थे भक्ष्यार्थे चरणायुधाः।
तित्तिरिश्च मयूराश्च प्रयोज्या विषमज्वरे ॥ १८३ ॥
पिवेद् वा षट्पलं सर्पिरभयां वा प्रयोजयेत्।
त्रिफलायाः कषायं वा गुडूच्या रसमेव वा ॥ १८४ ॥
नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम्।
पिवेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ॥ १८५ ॥
सर्पिषो महतीं मात्रां पीत्वा वा च्छर्दयेत् पुनः।
उपयुज्यान्नपानं वा प्रभूतं पुनरुल्लिखेत् ॥ १८६ ॥

इत्यत आह—प्रयोक्तव्या इत्यादि। मतिमता भिषजा दोषादीन् तस्य पुरुषस्य तस्य ज्वरस्यारम्भकदोषान् अनुबन्ध्यानुबन्धरूपान् रक्तादिकांश्च धातून् प्रविभज्य तदनुरूपेण वितर्क्य ते वक्ष्यमाणा विविधा विषमज्वरनाशनाः योगाः प्रयोक्तव्याः, न तु सर्व्वे योगाः सर्व्वेषां पुंसां सर्व्वविषमज्वरे प्रयोक्तव्याः ॥ १८२ ॥

गङ्गाधरः—सुरेत्यादि। पानार्थं समण्डा सुरा प्रयोज्या। भक्ष्यार्थे भोजन-व्यञ्जनार्थं रसार्थ च चरणायुधाः कुक्कुटास्तित्तिरिश्च मयूराश्चैते पक्षिणः प्रयोक्तव्याः ॥ १८३ ॥

गङ्गाधरः—पिवेदित्यादि। षट्पलं सर्पिर्वक्ष्यमाणम्। अभयां वा केवलाम्। त्रिफलाकषाय वा पथ्याक्षधात्र्यस्त्रिफलाः तस्याः कषायं क्वाथम्। गुडूच्या रसमिति क्वाथं स्वरसं वा ॥ १८४ ॥

गङ्गाधरः—नीलिनीमित्यादि। नीलिनीं वननीलस्य मूलम्। अजगन्धां यमानीम्। चत्वारि द्रव्याणि क्वाथयित्वा पूर्व्वं स्नेहस्वेदाभ्यामुपपादितः ज्वरस्य आगमनदिने पिवेत् ॥ १८५ ॥

गङ्गाधरः—सर्पिष इत्यादि। अथवा स्वच्छस्य सर्पिषो विलायितस्य

चक्रपाणिः—षट्पलमिति गुल्मे वक्ष्यमाणम्। नीलिनी नीलिका, नीलबुह्ना वा; नीलिन्यादिश्च विरेचनयोगो ज्वरागमनदिने विरेकात् कार्य्यकरो भवति, प्रभावात्। महती मात्रा अहोरात्रपरिणामिनी या, अन्यत्र तु षट्पली महती मात्रोक्ता। अन्यत्र च 'अन्येद्युष्को द्व्यह-

सान्नं मद्यं प्रभूतं वा पीत्वा वा तदहः स्वपेत्।
आस्थापनं यापनं वा कारयेद् विषमज्वरे ॥ १८७ ॥
पयसा वृषदंशस्य शकृद् वेगागमे * पिबेत्।
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ॥ १८८ ॥
पिप्पल्यास्त्रिफलायाश्च दध्नस्तक्रस्य सर्पिषः।
पञ्चगव्यस्य पयसः प्रयोगो विषमज्वरे ॥ १८९ ॥

महतीं मात्रां पीत्वा पाययित्वा च्छर्दयेत्। अथवा प्रभूतमन्नपानमुपयुज्य पुनरुल्लेखयेत् छर्दयेत् ॥ १८६ ॥

गङ्गाधरः—सान्नं मद्यमित्यादि। अथवा सान्नमन्नसहितं मद्यं प्रभूतं बहुलं पीत्वा तदहः ज्वरस्यागमनदिने स्वपेत् सुप्यात्। आर्षमिदं पदमुत्सर्गस्य शपो लुगकरणात् सिद्धम्। अथवा सिद्धिस्थाने वक्ष्यमाणं यापनसंज्ञकमास्थापनं निरूहं विषमज्वरे कारयेत् ॥ १८७ ॥

गङ्गाधरः—पयसेत्यादि। वृषदंशस्य विड़ालस्य शकृत् पुरीषं शुष्कं चूर्णीकृतं दोषानुरूपं कर्षादिमानं पयसा गव्येन उष्णदुग्धेन वेगागमे दिने पिबेत्। अथवा वृषस्य पुंगवस्य शकृत् ससैन्धवं दधिमण्डेन मस्तुना सुरया वा ज्वरवेगागमदिने पिबेत् ॥ १८८ ॥

गङ्गाधरः—पिप्पल्या इत्यादि। विषमे ज्वरे पिप्पल्याः प्रयोगो रसायनोक्त-वर्द्धमानक्रमेण कर्त्तव्यः। त्रिफलायाश्च प्रयोगो मानम् उत्तरोत्तरं वर्द्धयित्वा कर्त्तव्यः। तथा दध्नश्च प्रयोगस्तथा तक्रस्य प्रयोगः। पञ्चगव्यस्य सर्पिषो वक्ष्यमाणस्य प्रयोगः। तथा पयसो गव्यदुग्धस्य प्रयोगः कर्त्तव्यः ॥ १८९ ॥

प्राहौ तृतीयकचतुर्थकौ इत्यारभ्य यावद् "अनागते चिकित्सान्तु बलकालौ विजानता" इत्यन्तेन वेगदिनात् प्राग् या चिकित्सोक्ता, सा हि एतादतरोक्ता वमनादिव्यतिरिक्ता ज्ञेया। वमनादयस्त्विह प्रकोपदिने क्रियमाणाः प्रकुपितस्य दोषस्य कोष्ठमागतस्य सम्यक्सिद्धा भवन्तीति कृत्वा ज्ञेयाः। सान्नं प्रभूतं मद्यं वा पुनरुल्लिखेदिति योजना, तथा पीतमात्रमद्यस्तदहः स्वपेदिति योजना। यापना मुस्तादिका वस्तयो वक्ष्यमाणाः ॥ १८४—१८७ ॥

* वा तदहः इति क्वचित् पठ्यते।

लसुनस्य सतैलस्य प्रागभक्तमुपसेवनम्।
मेध्यानामुष्णवीर्य्याणामामिषाणाञ्च भक्षणम्॥ १९० ॥
व्याघ्री वसा हिङ्गुसमा नस्तः कार्य्यं ससैन्धवा।
पुराणसर्पिः सिंहस्य वसा तद्वत् ससैन्धवा॥ १९१ ॥
सैन्धवं पिप्पलीनाञ्च तण्डुलं समनःशिलम्।
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे॥ १९२ ॥
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी।
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम्॥ १९३ ॥

गङ्गाधरः—लसुनस्येत्यादि। लङ्घनयरहितस्य लसुनस्य तिलतैलमिश्रितस्य दृशदि पिष्टस्य कल्कस्योपसेवनं प्रागभक्तं भोजनात् पूर्व्वं विषमज्वरे कार्य्यम्। मेध्यानां वाराहादीनामुष्णमेध्यमांसानां तथा मत्स्यानाञ्च मेध्यानामुष्णवीर्य्याणां भक्षणं विषमज्वरे कार्य्यम्। आमिषशब्दो मांसमत्स्यपरः सर्व्वत्र॥ १९० ॥

गङ्गाधरः—व्याघ्रीत्यादि। वैयाघ्री वसा। क्वचिन्न वृद्धिराद्यस्य णिति तद्धिते च्छान्दसत्वात्। व्याघ्रस्य शरीरस्नेहः समहिङ्गुः समसैन्धव एकीकृत्य नस्तः नस्यं कार्य्यम्। तथा पुराणसर्पिः, सिंहस्य वसा देहस्नेहः ससैन्धवा समभागेन त्रीणि मेलयित्वा तद्वत् नस्तः कार्य्यमधिकारात् विषमज्वरे॥ १९१ ॥

गङ्गाधरः—सैन्धवमित्यादि। सैन्धवं पिप्पलीतण्डुलं मनःशिला चेति त्रयं तैलपिष्टं तिलतैलेन पिष्टं नेत्राञ्जनं विषमज्वरे शस्यते॥ १९२ ॥

गङ्गाधरः—पालङ्कषेत्यादि। सर्षपाः श्वेतसर्षपाः। समभागेन पलङ्कषादीन्यष्टौ द्रव्याणि कुट्टयित्वा ज्वलदङ्गारोपरि किञ्चित् किञ्चित् दत्त्वा वस्त्रावृतं ज्वरितं धूपयेदिति। धूपनमधिकारात् विषमज्वरनाशनं सर्व्वज्वरनाशनं वा॥ १९३ ॥

चक्रपाणिः—वृषदंशो विडालः ; वृषस्येत्यत्रापि शकृदिति सम्बन्धः। मेध्यानामिति मेदुराणाम्, किंवा पवित्राणाम्। व्याघ्रीत्यत्र लिङ्गमेव प्रयोजकं वचनादुन्नीयते, सिंहो व्याघ्र एवेति वदन्ति। 'अनूज व्यक्तिम्रक्षणगतिषु' इति पाठात् म्रक्षणमात्रेऽप्यञ्जनं स्यादित्यत आह— नेत्राञ्जनम्,

ये धूमा धूपनं यच्च नावनञ्चाञ्जनञ्च यत्।
मनोविकारे निर्द्दिष्टं कार्य्यं तद्‌ विषमज्वरे ॥ १९४ ॥
मणीनामोषधीनाञ्च मङ्गल्यानां विषस्य च।
धारणादगदानाञ्च सेवनान्न भवेज्ज्वरः ॥ १९५ ॥
सोमं सानुचरं देवं समातृगणमीश्वरम्।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ १९६ ॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्।
स्तुवन् नामसहस्रेण ज्वरान् सर्व्वान् व्यपोहति ॥ १९७॥

गङ्गाधरः—ये धूमा इत्यादि। मनोविकारे उन्मादापस्मारयोरधिकारे ये धूमाः पानार्था धूपनञ्च यत् नावनं नस्यञ्च यत् तथाञ्जनञ्च यत् निर्द्दिष्टम् इत्यनेन यत्र यत्र तन्त्रे ब्रह्मादिभिः पुरा निगदितं तत् सर्व्वं विषमज्वरे कार्य्यम् ॥ १९४ ॥

गङ्गाधरः—मणीनामित्यादि। मङ्गल्यानां पद्मरागादीनां मणीनां धारणात् तथा मङ्गल्यानामोषधीनामपामार्गादीनां धारणात् तथा विषस्य मौलविषस्य यौगिकस्य न तु हालाहलादेः धारणात् तथा अगदानामगदसंज्ञकयोगानां धारणात् ज्वरो न भवेदित्यनुत्पन्नज्वरस्य पुंसो ज्वरो न भवेत् उत्पन्नज्वरस्य पुंसो ज्वरो विनश्येदित्यर्थः ॥ १९५ ॥

गङ्गाधरः—सोममित्यादि। ईश्वरं देवं शिवं सोमम् उमया सहितं सानुचरं नन्द्यादिभिरनुचरैः सहितं समातृगणं मातृकाभिर्ब्राह्मीमाहेश्वर्य्यादिभिः अष्टभिः सहितं प्रयतः प्रकृष्टयत्याचारः सन् पूजयन् विषमज्वरात् शीघ्रं मुच्यते। विष्णुमित्यादि। सहस्रमूर्द्धानं सहस्रशीर्षं पुरुषं विष्णुं परमात्मानं चराचरपतिं विभुं सर्व्वगतं तस्मात् तं नामसहस्रेण महाभारतान्तर्गतशान्तिपर्व्वणि यद्‌ विष्णोर्नामसहस्रं स्तोत्रं तेन स्तुवन् सर्व्वान् ज्वरान् व्यपोहति ॥ १९६ । १९७ ॥

इति। मनोविकार इति उन्मादेऽपस्मारे च। धारणादिति च्छेदः। अगदानाञ्च सेवनादिति योजना ॥ १८८—१९५ ॥

चक्रपाणिः—दैवव्यपाश्रयचिकित्सामाह—सोममित्यादि। सोममिति उमया सह सोमम्। सानुचरमिति नन्द्यादिगणयुक्तम्। समातृगणमिति समातृसमूहम्। प्रयतः पवित्रः। "सहस्र-

ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ।
गङ्गां मरुद्गणांश्चेष्टान् पूजयन् जयति ज्वरान् ॥ १९८ ॥
भक्त्या मातुः पितुश्चैव गुरूणां पूजनेन च ।
ब्रह्मचर्य्येण तपसा सत्येन नियमेन च ॥ १९९ ॥
जपहोमप्रदानेन वेदानां श्रवणेन च ।
ज्वराद् विमुच्यते शीघ्रं साधूनां दर्शनेन च ॥ २०० ॥
ज्वरे रसस्थे वमनमुपवासञ्च कारयेत् ।
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च ॥ २०१ ॥
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ।
अस्थिमज्जगते देया निरूहाः सानुवासनाः ॥ २०२ ॥

गङ्गाधरः—ब्रह्माणमित्यादि । ब्रह्माणं हिरण्यगर्भं नारायणं हुतभक्षं हुताशनं हिमाचलं हिमगिरिम् इष्टांश्च देवान् पूजयन् ज्वरान् जयति । भक्त्येत्यादि । सत्येन वाक्येन नियमेन आहारविहारयोः नियमेन साधूनां भगवद्भक्तानां तत्त्वविदाम् ॥ १९८—२०० ॥

गङ्गाधरः—विषमज्वरहरयोगानुक्त्वा सप्तधातुगतज्वरचिकित्सामाह—ज्वरे इत्यादि । रसस्थे इति रसधातुगते दोषे यो ज्वर उक्तस्तत्र, न तु प्रथमतो रसाश्रयदोषेण जाते ज्वरेऽयमधिकारस्तत्र हि विधानमुक्तम् ; इह रसस्थे वमनोपवासौ यथा रक्तस्थे सेकप्रदेहौ यथा तथा रसस्थे संशमनानि यानि निरामज्वरे प्रोक्तानि संशमनानि तानि तथा रक्तस्थे च संशमनानि इति व्याख्येयम् । विरेचनमित्यादि । मांसमेदःस्थिते ज्वरे सोपवासं विरेचनं हितं न तु मांसस्थे विरेचनं मेदःस्थे तूपवास इति यथाक्रमम् । अस्थिमज्जगते ज्वरे सानुवासना निरूहाः बहुवचनान्न त्वेकवारनिरूहप्रयोगेण ज्वरशान्तिः स्यादिति ज्ञापितम् । शुक्रस्थे ज्वरे मरणमिति तद्भेषजोपदेशोऽनर्थक इति तन्नोक्तम् ॥ २०१ । २०२ ॥

मूर्द्धा" इत्यादि वेदप्रतिपादितम् ; नामसहस्रेणेति महाभारतोक्तेन नामसहस्रेण । इष्टेयति यजन ॥ १९६—२०२ ॥

शापाभिचाराद्‌ भूतानामभिषङ्गाच्च यो ज्वरः ।
दैवव्यपाश्रयं तत्र सर्व्वमौषधमिष्यते ॥ २०३ ॥
अभिघातज्वरो नश्येत् * पानाभ्यङ्गेन सर्पिषः ।
रक्तावसेकैर्मेध्यैश्च सात्म्यैर्मांसरसौदनैः ॥ २०४ ॥
पानाद् वा † मद्यसात्म्यानां मदिरारसभोजनैः ।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥ २०५ ॥
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥ २०६ ॥

गङ्गाधरः—दोषज्वराणां चिकित्सामुक्त्वागन्तुचिकित्सामाह—शापेत्यादि। अभिशापाद् वा अभिचाराद् वा भूताभिषङ्गाद् वा यो ज्वरो जायते, तत्र दैवव्यपाश्रयं बलिमङ्गलादिकं कर्म्म सर्व्वम् औषधमिष्यते ॥ २०३ ॥

गङ्गाधरः—अभिघातेत्यादि। सर्पिषः स्वच्छस्य पक्वस्य च पानाभ्यङ्गेन नश्येत् नाशं गच्छेत्। तथा रक्तावसेचनैरभिहतप्रदेशात् रक्तमोक्षणैर्जलौकादिभिर्यथायोग्यं मेध्यैर्मेधाहितैः शङ्खिन्यादिभिः मांसरसौदनैश्च नश्येत् नाशं गच्छेत्। पानाद् वेत्यादि। मद्यपानाद् यो ज्वरः स मद्यसात्म्यानां मदिरारसभोजनैर्नश्येदिति पूर्व्वेणान्वयः। क्षतानां यो ज्वरो भवति स क्षतचिकित्सया नश्येत्। व्रणितानाञ्च यो ज्वरो भवति स व्रणचिकित्सया नश्येत्। क्षत उरःक्षतः। व्रणः शरीरवहिःक्षतम् ॥ २०४। २०५ ॥

गङ्गाधरः—आश्वासेनेत्यादि। कामशोकभयज्वरा वातजा मानसा अत एवाश्वासेन तथेष्टलाभेन हर्षणैश्च भावैर्मनःप्रसादः स्यात् वायोः प्रशमनेन

चक्रपाणिः—शापेत्यादिना आगन्तुज्वरचिकित्सामाह। न स्यादिति प्रशाम्यतीत्यर्थः। सानाह इति अभिघातज्वर एव सानाहः। क्षतानामित्युरःक्षतानाम्। क्षतचिकित्सया व्रणचिकित्सया च व्रणिनां ज्वरोऽपैतीत्यर्थः। अयं ह्युपद्रवरूपो ज्वरः। उपद्रवः स मूलव्याधिचिकित्सयैव शाम्यतीति भावः ॥ २०२—२०५ ॥

चक्रपाणिः—वायोः प्रशमनेनेति कामादिज्वरे वातानुबन्धादुपपन्नम्। सद्वाक्यैरिति शोभनैः

* न स्यादिति वा पाठः।　　† सानाह इति चक्रः।

काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ।
सद्वाक्यैश्च शमं याति ज्वरः क्रोधसमुद्भवः ॥ २०७ ॥
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुद्भवः ॥ २०८ ॥
ज्वरस्य वेगं कालञ्च चिन्तयन् ज्वर्य्यते तु यः ।
तस्येष्टैश्च विचित्रैश्च विषयैर्नाशयेत् स्मृतिम् ॥ २०९ ॥
ज्वरप्रमोक्षे पुरुषः कूजन् वमन् विचेष्टते ।
श्वसन् विवर्णः स्विन्नाङ्गो वेपते शीयते * मुहुः ॥ २१० ॥

स्नेहादिना वायोः शान्तिः स्यादिति त्रयाणामेवैका क्रिया। काम्यैरित्यादि। क्रोधसमुद्भवो ज्वरो मानसः पित्तानुबन्धस्तस्मात् काम्यैर्मनोज्ञैः चार्थैर्वस्तुभिः सद्वाक्यैश्च क्रोधोपशमात् पित्तघ्नैश्च शीतमधुरादिभिरुपक्रमैः पित्तप्रशमात् शमं याति ॥ २०६ । २०७ ॥

गङ्गाधरः—कामादीनामपि परस्परोपघातित्वात् परस्परभेषजत्वमाह—कामादित्यादि। ताभ्यां कामक्रोधाभ्यामुभाभ्यां भयशोकसमुद्भवो ज्वरो नाशं याति। कामाद् भयज्वरः क्रोधाच्छोकज्वर इति क्रमेणान्वयवारणाय उभाभ्यामिति ॥ २०८ ॥

गङ्गाधरः—अथ सर्व्वज्वरसाधारणे क्रियाविशेषमाह—ज्वरस्येत्यादि। चिन्तयन् स्मरन्। तस्य पुंसो ज्वरवेगविस्मरणहेतुभिः ज्वरागमनकालविस्मरणहेतुभिश्च विचित्रैरिष्टैः विषयैः ज्वरवेगस्य स्मृतिं ज्वरागमनकालस्य स्मृतिञ्च नाशयेत् ॥ २०९ ॥

गङ्गाधरः—इति ज्वरस्य सक्रियाक्रमम् औषधं यत् पृष्टं तदुत्तरमुक्त्वा विमुञ्चतः प्रशान्तस्य चिह्नं यच्च पृथक् पृथगिति यत् पृष्टं तत् तत्र विमुञ्चतो ज्वरस्य यच्चिह्नं पृष्टं तदुत्तरमाह—ज्वरप्रमोक्षे इत्यादि। ज्वरस्य प्रमोक्षे मोक्षारम्भे। कूजन् वमन् सन् विचेष्टते निश्चेष्टो भवति, ततः श्वसन् सन् विवर्णो

वाक्यैः। कामादीनां प्रतिद्वन्द्वेन चिकित्सामाह— कामादित्यादि। ज्वरकालचिन्ताजोऽपि ज्वरः कामादिमानसापचाराद् भवतीति तच्चिकित्सामाह—ज्वरस्येत्यादि ॥ २०६—२०९ ॥

चक्रपाणिः—सम्प्रति औषधमभिधाय 'विमुञ्चतः' इति प्रश्नस्योत्तरमाह—ज्वरेत्यादि।

* लीयते इति चक्रः।

प्रलपत्युष्णसर्व्वाङ्गः शीताङ्गश्च भवत्यपि ।
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्षते ॥ २११ ॥
सदोषशब्दश्च शकृद् द्रवं सृजति वेगवत् ।
लिङ्गान्येतानि जानीयाज्ज्वरमोक्षे विचक्षणः ॥ २१२ ॥
बहुदोषस्य बलवान् प्रायेणाभिनवो ज्वरः ।
स क्रियादोषपक्त्या चेद् विमुञ्चति सुदारुणम् ॥२१३॥
कृत्वा दोषवशाद् वेगं क्रमादुपरमन्ति ये ।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥ २१४ ॥

भूत्वा स्विन्नाङ्गोऽखिलाङ्गे स्वेदप्रवाहो भूत्वा मुहुर्वपते मुहुः शीयते स्वयमेव तदुद्वेगात् शयनमाश्रयते न तु स्वाभिप्रायेण शेते च, मुहुर्म्मुहुः प्रलपति मुहुरुष्णसर्व्वाङ्गः मुहुः स्वेदार्द्रत्वात् शीताङ्गश्च भवति। ज्वरवेगार्त्तः सन् विसंज्ञः संज्ञाहीनश्च भवति। यदा वीक्षते तर्हि सक्रोध इव पश्यतीति लक्ष्यते। तथा शकृत् पुरीषं सदोषशब्दं सदोषं पित्तकफयुक्तं सशब्दश्च द्रवश्च वेगवच्च सृजति त्यजति। ज्वरमोक्षे ज्वरेण मोक्षे ज्वरितशरीरत्यागे क्रियमाणे एतानि लिङ्गानि जानीयात् ॥ २१०—२१२ ॥

गङ्गाधरः—नन्वेवंलक्षणानि न सर्व्वस्य दृश्यन्ते इत्यत आह—बहुदोषस्येत्यादि। बहुदोषस्य पुंसोऽभिनवो ज्वरः प्रायेण बलवान् भवति। स ज्वरो बहुदोषजत्वेन बलवत्त्वात् क्रियादोषपक्त्या क्रियया निरुक्तया लङ्घनादिना दोषाणां पक्त्या पाकेन चेद् यदि विमुञ्चति तदवमुक्तरूपं दारुणं विमुञ्चति। ये च ज्वराः क्रमात् कालेन दोषपाकवशात् वेगं कृत्वा क्रमादुपरमन्ति नाशं यान्ति तेषां चिरकारिणां ज्वराणां मोक्षोऽदारुण एवंरूपेण न दारुण इत्यर्थः ॥२१३।२१४॥

शीयत इति मुह्यति ; उष्णसर्व्वाङ्गः शीताङ्गश्च भवत्यपीति उष्णसर्व्वाङ्गो वा शीतसर्व्वाङ्गो वा भवति इत्यर्थः। सदोषशब्दमिति सदोषं सशब्दञ्चेति। एतानि लक्षणानि सन्निपातज्वर एव भवन्तीति ज्ञेयम् नान्यत्र, अदर्शनादेव ; अत एव "बहुदोषस्य बलिनः" इत्यादिग्रन्थं कोचत् पठन्त्येवात्र।

विगतक्लमसन्तापमव्यथं विमलेन्द्रियम्।
युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम्॥ २१५॥
सज्वरो ज्वरमुक्तश्च विदाहीनि गुरूणि च।
असात्म्यान्यन्नपानानि विरुद्धानि च वर्ज्जयेत्॥ २१६॥
व्यवायमतिचेष्टाश्च स्नानमत्यशनानि च।
तथा ज्वरः शमं याति प्रशान्तो जायते न च॥ २१७॥

गङ्गाधरः—विमुञ्चतो ज्वरस्य चिह्नप्रश्नोत्तरमुक्त्वा प्रशान्तस्य ज्वरस्य यच्चिह्नं पृष्टं तदुत्तरमाह—विगतेत्यादि। क्लमः क्लान्तिः मनःशरीरयोर्ग्लानिः इत्यर्थस्तयोर्विगमः। अव्यथं शारीरमानसव्यथयोस्तज्ज्वरजयोः नास्तित्वं, विमलमिन्द्रियं ज्ञानेन्द्रियं यस्य तं, प्रकृतिसत्त्वेन तस्य पुरुषस्य स्वाभाविकं यादृशं मनस्तेन मनसा युक्तं तं पुरुषम् अज्वरं ज्वरमुक्तं विद्यात्॥ २१५॥

गङ्गाधरः—अथ पृष्टं ज्वरावसृष्टो रक्ष्यश्च यावत् कालं यतो यत इति यत् तदुत्तरमाह—सज्वर इत्यादि। सज्वर इति अपृष्टोऽपि दिवास्वप्नादिवद् विदाह्यादीन्यपि नवज्वरर्य्यादिभिर्वर्ज्ज्यानि न चोक्तानीत्यतः समानवचनतो लाघवेनवोच्यन्ते। सज्वरः पुरुषो विदाह्यादीनि वर्ज्जयेत्। उक्तञ्चान्यत्र "गुर्व्वभिष्यन्द्यकाले च ज्वरी नाद्यात् कथञ्चन। न हि तस्याहितं भुक्तमायुषे वा सुखाय वा" इति। ननु ज्वरितोऽहितमश्नीयाद् यद्यप्यस्यारुचिर्भवेत्। अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽपि वा" इति वचनादहितमप्यशनं विहितं कथं विदाह्यादीनां वर्ज्जनमुपदिश्यते इति चेन्न, तद्वचने हि हितमेवाश्नीयादेव इत्यर्थो युक्तः, अन्यथा "सातत्यात् स्वाद्वभावाद् वा पथ्यं द्वेष्यत्वमागतम्। कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः" इति वचनमनर्थकं स्यादिति।

एतानि लक्षणानि ज्वरमोक्षकाले क्षीणेनापि दोषेण क्रियन्ते, यथा निर्व्वास्यता दीपेन आलोको महान् क्रियते॥ २१०—२१५॥

चक्रपाणिः—सम्प्रति 'प्रशान्तज्वरलक्षण'-प्रश्नोस्योत्तरम्—विगतेत्यादि। प्रकृतिसत्त्वेनेति सहजसत्त्वेन। ज्वरावसृष्टो रक्ष्यश्च यावत् कालं यतो यत इति प्रश्नस्योत्तरं सज्वर इत्यादि। 'तथा ज्वरः शमं याति प्रशान्तो न च जायते' इत्यनेन, 'यतः' इति प्रश्नस्य ज्वरमुक्तसेव्यहेतुप्रश्नरूपस्योत्तरं ज्ञेयम्।

व्यायामश्च व्यवायश्च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥ २१८ ॥
असंजातबलो यस्तु ज्वरमुक्तो निषेवते ।
वर्ज्ज्यमेतन्नवस्तस्य पुनरावर्त्तते ज्वरः ॥ २१९ ॥
दुर्हृतेषु च दोषेषु यस्य वा विनिवर्त्तते ।
स्वल्पेनाप्यपचारेण तस्य व्यावर्त्तते पुनः ॥ २२० ॥
चिरकालपरिक्लिष्टं दुर्ब्बलं दीनचेतसम् ।
अचिरेणैव कालेन संहन्ति पुनरागतः ॥ २२१ ॥

ज्वरमुक्तश्च तानि वर्ज्जयेत्। तथा तेन प्रकारेण ज्वरः प्रशाम्यति तेन च प्रकारेण प्रशान्तश्च पुनर्न जायते ॥ २१६ । २१७ ॥

गङ्गाधरः—ननु कियन्तं कालमेव ज्वरमुक्तो रक्ष्य इत्यत आह—व्यायामश्च इत्यादि। चकारैर्विदाहीनि गुरूणि च विरुद्धानि चासात्म्यानि चान्नपानान्यपि ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेदित्यर्थः। प्रशान्तः कारणैर्यैश्च पुनरावर्त्तते ज्वर इति प्रश्नोत्तरमाह—असजातबल इत्यादि। वर्ज्ज्यमेतदिति विदाहीनीत्यादिनात्यशनानि चेत्यन्तेन यावद्वर्ज्जनीयमुक्तं तदेतद् यद्यसंजातबलो यो ज्वरमुक्तो निषेवते तस्य ज्वरः पुनर्भवतीत्यर्थः ॥ २१८ । २१९ ॥

गङ्गाधरः—शान्तस्य पुनरावर्त्तने हेत्वन्तरमाह—दुर्हृतेषु इत्यादि। यस्य पुंसो ज्वरारम्भकेषु दोषेषु दुर्हृतेष्वसम्यङ्निर्हृतेषु ज्वरो विनिवर्त्तते शाम्यति तस्य पुंसोऽल्पेनाप्यपचारेण ज्वरः पुनर्व्यावर्त्तते ॥ २२० ॥

गङ्गाधरः—पुनरावर्त्तज्वरस्य मारकत्वमाह—चिरेत्यादि। यो ज्वरितः पुमान् चिरकालं पूर्व्वं परिक्लिष्टः दुर्ब्बलश्च तथा दीनचेताः तं ज्वरितं मुक्त्वा ज्वरः पुनरागतश्चेत् तदा अचिरेण कालेन संहन्ति ॥ २२१ ॥

व्यवायमतिचेष्टाश्चत्यस व्यवायं कृत्वापि पुनः व्यायामश्चेत्यादौ 'व्यवाय'पाठेन व्यवायस्यात्यर्थनिषिद्धतोच्यते। अन्ये तु प्रमादपाठ एवायमित्याहुः। स्नानमूर्ज्जस्करमपि प्रभावात् ज्वरं प्रत्यानयति, यदुक्तमन्यत्र—"स्नानमाशु ज्वरं कुर्य्यात् ज्वरमुक्तस्य देहिनः। तस्मान्मुक्तज्वरः स्नानं विषवत् परिवर्ज्जयेत्" इति। अनन्तरम् "असञ्जातबलो यस्तु" इत्यादिग्रन्थं काश्मीराः पठन्ति, तेन प्रकृत्यादिसूत्रेऽप्यस्यानुगुणं प्रश्नग्रन्थं पठन्ति ॥ २१६—२२१ ॥

अथवा विपरीपाकं धातुष्वेव क्रमान्मलाः।
यान्ति ज्वरमकुर्व्वन्तस्ते तथाप्यपकुर्व्वते ॥ २२२ ॥
दीनतां श्वयथुं ग्लानिं पाण्डुतां नान्नकामताम्।
कण्डूरुत्कोठपिड़काः कुर्व्वन्त्यग्निश्च ते मृदुम् ॥ २२३ ॥
एवमन्येऽपि च गदा व्यावर्त्तन्ते पुनर्गताः।
अनिर्घातेन दोषाणामल्पैरप्यहितैर्नृणाम् ॥ २२४ ॥
निवृत्तेऽपि ज्वरे तस्माद् यथावस्थं यथाबलम्।
यथाप्राणं हरेद् दोषं प्रयोगैर्वा शमं नयेत् ॥ २२५ ॥
मृदुभिः शोधनैः शुद्धिर्यापना वस्तयो हिताः।
हिताश्च लघवो यूषा जाङ्गलामिषजा रसाः ॥ २२६ ॥

गङ्गाधरः—यदि चायुषः शेषत्वान्न संहन्ति अथ तर्हि धातुष्वेव रक्तादिषु क्रमान्मला विपरीपाकं विपाकं यान्ति ज्वरमकुर्व्वन्तस्तेऽपि मलास्तथाप्यपकुर्व्वते। किं किमपकुर्व्वते तदाह—दीनतामित्यादि। नान्नकामतामनन्नकामताम् अग्निञ्च मृदुं मन्दाग्निं ते ज्वरमकुर्व्वन्तोऽपि धातुषु विपरिपाकं गता मला अपकुर्व्वन्ति ॥ २२२। २२३ ॥

गङ्गाधरः—प्रसङ्गात् सर्व्वव्याधीनामपि पुनरावर्त्तनमाह—एवमित्यादि। एवं ज्वर इवान्येऽपि गदा अतिसाररक्तपित्तादयः सर्व्वे रोगा दोषाणामनिर्घातेन निःशेषेण हरणाभावेन गताश्चाल्पैरप्यहितैर्नृणां पुनर्व्यावर्त्तन्ते चकारान्निदानसेवनैश्चेत्यर्थः ॥ २२४ ॥

गङ्गाधरः—ननु तर्हि किं कर्त्तव्यं तदाह—निवृत्तेऽपि इत्यादि। यदि पूर्व्वं दुर्हृतं दोषं मन्येत अथवा सञ्चितमहतश्च मन्येत, तदा तस्मात् पुनरावर्त्तनभयात् निवृत्तेऽपि ज्वरे यथावस्थं यथाबलं यथाप्राणं पुंसो दोषं हरेत् प्रयोगैः संशमनैर्वा शमं नयेदिति ॥ २२५ ॥

गङ्गाधरः—अथ याश्चापि पुनरावृत्तं क्रियाः प्रशमयन्ति तमिति प्रश्नोत्तरमाह—मृदुभिरित्यादि। यापना वस्तयो वक्ष्यन्ते सिद्धिस्थाने।

अभ्यङ्गोद्वर्त्तनस्नान-धूपनान्यञ्जनानि च ।
हितानि पुनरावृत्ते ज्वरे तिक्तघृतानि च ॥ २२७ ॥
गुर्व्वभिष्यन्द्यसात्म्यानां भोजनात् पुनरागते ।
लङ्घनोष्णोपचारादि-क्रमः कार्य्यश्च पूर्व्ववत् ॥ २२८ ॥
किराततिक्तकं तिक्ता-मुस्तपर्पटकामृताः ।
घ्नन्ति पीतानि चाभ्यासात् पुनरावर्त्तकं ज्वरम् ॥ २२९ ॥
तस्यां तस्यामवस्थायां ज्वरितानां विचक्षणः ।
ज्वरक्रियाक्रमापेक्षी कुर्य्यात् तत्तच्चिकित्सितम् ॥ २३० ॥
रोगराट् सर्व्वभूतानामन्तकृद् दारुणो ज्वरः ।
तस्माद् विशेषतस्तस्य यतेत प्रशमे भिषक् ॥ २३१ ॥

लघवो यथा मुद्गादीनां जाङ्गलामिषाणां मृगपक्षिणां मांसरसाः । अभ्यङ्गादीनि उक्तानि तिक्तघृतानि पञ्चतिक्तघृतादीनि ॥ २२६ । २२७ ॥

गङ्गाधरः—तत्र विशेषमाह—गुर्व्वभिष्यन्दीत्यादि । पूर्व्ववत् नवज्वरादिषु यथा यथा कर्त्तव्यस्तथा तथा लङ्घनादिक्रमः कार्य्यः ॥ २२८ ॥

गङ्गाधरः—सर्व्वज्वरस्य पुनरावृत्तौ योगानाह—किरातेत्यादि । घ्नन्तीति बहुवचनात् समस्तव्यस्तानीमानि चत्वारि पीतानि इति क्वाथविधिना निष्पादितानि । अभ्यासात् सततोपयोगात् ॥ २२९ ॥

गङ्गाधरः—नन्वेवमेव पुनरावृत्ते ज्वरे किमावस्थिकः क्रियाविशेषोऽस्ति वा न वेत्यत आह—तस्यां तस्यामित्यादि । ज्वरितानां पुनरावृत्तिज्वरवतां तस्यां तस्याम् आमपच्यमानपक्वादौ अवस्थायां उक्तरूपेण ज्वरस्य यः क्रियाक्रमः तमपेक्षी तत्तदवस्थामपेक्ष्य तत्तच्चिकित्सितं कुर्य्यात् न तु सर्व्वदैव पुराणरूपतां मत्वा चिकित्सितं कुर्य्यात् ॥ २३० ॥

गङ्गाधरः—अथ ज्वरप्रतिक्रियायां प्रयत्नावश्यकत्वं वैद्यस्याह—रोगराडित्यादि । तस्य ज्वरस्य प्रशमे विशेषतो यतेत न त्ववहेलया चिकित्सेत् ॥२३१॥

चक्रपाणिः—उक्तानुक्तचिकित्सापरिग्रहणार्थमाह—तस्यामित्यादि । ज्वरचिकित्सायां बलं

तत्र श्लोकः।

यथाक्रमं यथाप्रश्नमुक्तं ज्वरचिकित्सितम्।
आत्रेयेणाग्निवेशाय भूतानां हितमिच्छता ॥ २३२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
ज्वरचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

गङ्गाधरः—ज्वरे सर्व्वप्रश्नोत्तरमुक्त्वा अध्यायार्थमुपसंहरति—तत्र श्लोक इति। यथाक्रममित्यादि स्पष्टम् ॥ २३२ ॥

गङ्गाधरः—अध्यायं समापयति अग्नीत्यादि। सर्व्वं पूर्व्ववत्।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ
षष्ठस्कन्धे चिकित्सितस्थानजल्पे ज्वरचिकित्सित-
जल्पाख्या तृतीया शाखा ॥ ३ ॥

कारयितुमाह—रोगराडित्यादि। यथाक्रममित्यध्यायार्थसंग्रहश्लोकः। भूतानां हितकाम्ययेत्यनेन सर्व्वभूतहितेयं चिकित्सेति दर्शयति ॥ २२२—२३२ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां ज्वरचिकित्सितं
नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

विहरन्तं यतात्मानं पञ्चगङ्गे पुनर्व्वसुम् ।
प्रणम्योवाच निर्म्मोहमग्निवेशोऽग्निवर्च्चसम् ॥
भगवन् रक्तपित्तस्य हेतुरुक्तः सलक्षणः ।
वक्तव्यं यत् परं तस्य वक्तुमर्हसि तद् गुरो ॥ २ ॥

गुरुरुवाच ।

महागदं महावेगमग्निवच्छीघ्रकारि च ।
हेतुलक्षणविच्छीघ्रं रक्तपित्तमुपाचरेत् ॥ ३ ॥
तस्योष्णं तीक्ष्णमम्लञ्च कटूनि लवणानि च ।
घर्म्मश्चान्नविदाहश्च हेतुः पूर्व्वञ्च दर्शितः ॥ ४ ॥

गङ्गाधरः—अथात इत्यादि । पूर्व्ववत् सर्व्वम् ॥ १ ॥

गङ्गाधरः—विहरन्तमित्यादि । पञ्चगङ्गे विहरन्तं यतात्मानं निर्म्मोहमग्निवर्च्चसं पुनर्व्वसुं गुरुं प्रणम्याग्निवेश उवाच । भगवन्नित्यादि । उक्त इति निदानस्थाने रक्तपित्तनिदाने उक्तः । तदधिकं यत् रक्तपित्तस्य वक्तव्यं तद् वक्तुमर्हसीति ॥ २ ॥

गङ्गाधरः—गुरुरुवाचेति । पृष्टो गुरुरुवाच । महागदमित्यादि । महावेगत्वाद् अग्नेरिव शीघ्रकारित्वान्महागदं रक्तपित्तं हेतुलक्षणवित् शीघ्रमुपाचरेत् । तस्य रक्तपित्तस्य हेतुरुष्णं, तीक्ष्णमम्लं, कटु लवणानि च द्रव्याणि, घर्म्म

चक्रपाणिः—व्याध्युत्पत्तौ ज्वरसन्तापाद् रक्तपित्तोत्पत्तेर्ज्वरचिकित्सितमनु रक्तपित्तचिकित्सितम् अभिधीयते। पञ्चगङ्गो देशविशेषः । वक्तव्यं यत् परमिति उक्तरक्तपित्तहेतुलक्षणातिरिक्तं चिकित्सितमित्यर्थः ॥ १ । २ ॥

चक्रपाणिः—निदाने यद्यपि रक्तपित्तस्य हेतुलक्षणानि प्रतिपादितान्येव, तथापीह चिकित्सापरिवारतया प्रकरणवशाद् हेतवः, सङ्क्षेपेण लक्षणानि च प्रायःप्रादुर्भवाणि पुनः कथ्यन्ते । धर्म्म आतपः । अन्नविदाहश्च स्वरूपविदाहिवेणुजादिभक्षणाद् भवति, तथा पित्तेनान्नवहस्रोतसो

तैर्हेतुभिः समुत्क्लिष्टं पित्तं रक्तं प्रपद्यते।
तद्योनित्वात् प्रपन्नश्च वर्द्धते तत् प्रदूषयत्॥
तस्योष्मणा द्रवो धातुर्धातोर्धातोः प्रसिच्यते।
स्विद्यतस्तेन संवृद्धिं भूयस्तदधिगच्छति॥
संयोगाद् दूषणात् तत्र सामान्याद् गन्धवर्णयोः।
रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः॥ ५॥

आतपः, अन्नविदाहोऽपरिपाकः अर्द्धपाको वा। तथा पूर्व्वञ्च निदानस्थाने हेतुर्दर्शितः॥ ३।४॥

गङ्गाधरः—हेतुमुक्त्वा सम्प्राप्तिं निरुक्तिश्चाह—तैरित्यादि। तैरिहोक्तैः पूर्व्वं रक्तपित्तनिदाने चोक्तैर्हेतुभिः समुत्क्लिष्टम् उपस्थितवेगं पित्तं रक्तं द्वितीयं धातुं प्रपद्यते, रक्तप्रपन्नञ्च पित्तं तद्योनित्वात् तस्य रक्तस्य योनिर्योनिर्यस्य तत्त्वात् रक्तसमयोनिकत्वसामान्यात् तद्रक्तं प्रदूषयत् सत् वर्द्धते, तस्य वृद्धस्य सरक्तपित्तस्योष्मणा स्विद्यतः स्विन्नीभवतो धातोर्धातोर्यो द्रवो धातुः द्रवोऽंशः स तस्मात् तस्माद् धातोर्धातोः प्रसिच्यते तेन स्वोष्मणा स्विद्यतः सर्व्वधातुतः सिक्तेन द्रवेणांशेन मिलित्वा भूयोऽधिकं संवृद्धिमधिगच्छति। तत्र पित्ते, रक्तस्य संयोगात् पित्तेन दूषणाच्च पित्तेन सह गन्धवर्णयोश्च रक्तस्य सामान्यात् मनीषिभिः पित्तमेव रक्तपित्तमाख्यातम्॥ ५॥

दुष्टत्वाद् विदाहो हितभोजनेनापि भवति; यदुक्तमन्यत्र—"स्रोतस्यन्नवहे पित्तं पक्तौ वा यदि तिष्ठति। विदाहिभुक्तमन्यद् वा तस्याप्यन्नं विदह्यते॥" इति॥ ३।४॥

चक्रपाणिः—तैर्हेतुभिरित्यादिना सम्प्राप्तिमाह। रक्तं प्रपद्यते गच्छतीत्यर्थः। यद्यपि पित्तञ्च, "स्वेदो रक्तं लसीका अन्तराधिरामाशयश्च पित्तस्य स्थानम्" इति वचनेन स्वभावादेव रक्तं याति, तथापि रक्तपित्तसम्प्राप्तौ प्रधानस्थानादामाशयरूपाद् रक्तगमनं पित्तस्येह ज्ञेयम्। रक्तगमनञ्च पित्तस्य सम्प्राप्तिमहिम्ना भवति। तद्योनित्वादिति—तद्योनित्वं हेतू रक्तप्रपन्नस्य पित्तस्य वर्द्धने ज्ञेयं; तेन यस्माद् रक्तयोनि पित्तम्, तस्माद् रक्तं प्राप्य वर्द्धत इत्यर्थः; उक्तं हि "असृजः पित्तं कफम्" इति। तदिति रक्तं प्रदूषयत्। द्रवधातुरिति द्रवरूपोऽंशः। धातोर्धातोरिति रसादेः। प्रसिच्यते इति क्षरति। स्विद्यतस्तेनेति पित्तोष्मणा स्विद्यमानधातुभ्यः च्युतेन द्रवरूपेण धातुना युक्तं सत् पित्तं भूयोऽतितरां वृद्धिं गच्छतीति योजना। 'रक्तपित्त'-संज्ञानिमित्तमाह—संयोगादित्यादि। रक्तस्य संयोगात् तथा रक्तस्य दूषणात् तथा रक्तस्य गन्धवर्णयोः पित्ते सामान्यात् पित्तं रक्तपित्तमुच्यत इति वाक्यार्थः॥ ५॥

प्लीहानञ्च यकृच्चापि तदधिष्ठाय वर्त्तते।
स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम्॥ ६॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितम्।
श्यावारुणं सफेनञ्च तनु रुक्षञ्च वातिकम्॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम्।
मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम्।
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम्॥ ७॥

गङ्गाधरः—ननु कुत एव वर्त्तते इत्यत आह—प्लीहानमित्यादि। तत् पित्तं प्लीहानं यकृच्च रक्तस्थानद्वयं नाड़ीद्वयमधिष्ठाय देहिनां स्रोतांसि रक्तवाहीनि तन्मूलानि प्लीहयकृन्मूलानि रक्तवाहीनि स्रोतांसि चाधिष्ठाय वर्त्तते प्रवर्त्तते, हि यस्मात्॥ ६॥

गङ्गाधरः—अथ दोषभेदेन चिह्नमाह—सान्द्रमित्यादि। अर्द्धश्लोकेन कफान्वितम्। पुनरर्द्धश्लोकेन वातान्वितम्। पुनरेकश्लोकेन पित्तप्रधानम्। मेचकं मदनाञ्जनपिण्डवत् कृष्णम्। द्वित्रिदोषजान्याह—संसृष्टेत्यादि॥ ७॥

चक्रपाणिः—रक्तपित्तस्य स्थानमाह—प्लीहानमित्यादि। वर्त्तते इति तयोर्मध्ये चयति। वर्द्धते इति वा पाठः। कस्माद् यकृत्प्लीह्नोरेव तद् वर्द्धत इत्याह—स्रोतांसीत्यादि। यस्मात् रक्तस्यापि यकृत्प्लीहानावेव स्थानं प्रधानम्, तेन, संयोगादिनिष्पन्नस्य रक्तपित्तस्यापि तदेव स्थानमिति भावः॥ ६॥

चक्रपाणिः—तस्य दोषसम्बन्धविशेषेण लिङ्गमाह—सान्द्रमित्यादि। कषायवत् आभा यस्य तत् कषायाभं पाटलमित्यर्थः। कृष्णवस्त्रादेः सतालगन्धकादिभिः मसृणीकृतस्य यो वर्णः स मेचकः। ननु पित्तमेव रक्तपित्तमित्युक्तम्, तत् कथं श्लैष्मिकं भवतु? उच्यते, सामान्यसम्प्राप्तौ पित्तमेव रक्तपित्तनिर्व्वर्त्तकम्, यथा सर्व्वगुल्मेषु वायुः, यथा सर्व्वज्वरेषु पित्तमारम्भकम्, तदेव तु यदा उल्वणेन कफेन स्वलक्षणकारिणा युक्तं रक्तपित्तकरं भवति, तदा सामान्यसंप्राप्तिप्राप्तपित्तमुत्सृज्य श्लेष्मणैव सम्बन्धात् स्वलक्षणकारिणा व्यपदिश्यते 'श्लैष्मिकरक्तपित्तम्' इति। यथा श्लैष्मिके गुल्मे सामान्यसम्प्राप्त्यन्तर्गतवातं परित्यज्य श्लेष्मणैव व्यपदेशो भवति, यथा वा कफज्वरे सर्व्वज्वरारम्भककारणमनादृत्य विशेषलक्षणकारिणा श्लेष्मणैव व्यपदेशो भवति, एवं वातिके रक्तपित्ते व्याख्येयम्। यत् तु कफवातविरहितेन केवलेनैव पित्तेन बलवता जनितं रक्तपित्तं पैत्तिकरक्तपित्तलक्षणयुक्तं भवति, तत् पैत्तिकमुच्यते। लक्षणेन हि दोषव्यपदेशो भवति; तेन, यद्दोषजनितलक्षणयुक्तं रक्तपित्तं भवति, तत् तज्जनितमिति व्यपदिश्यते, श्लैष्मिकादिरक्त-

एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ।
यत् त्रिदोषमसाध्यं तन्मन्दाग्नेरतिवेगवत् ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ ८ ॥
गतिरूर्द्ध्वमधश्चैव रक्तपित्तस्य दर्शिता ।
ऊर्द्ध्वा सप्तविधद्वारा द्विद्वारा त्वधरा गतिः ॥

गङ्गाधरः—अस्य साध्यासाध्यत्वे आह—एकदोषत्यादि । मन्दाग्नेर्जनस्य अतिशयवेगवत् सर्व्वं रक्तपित्तम् असाध्यं स्यात् । यच्च रक्तपित्तं व्याधिभिः अन्यः क्षीणदेहस्य वृद्धस्य वा अनश्नतश्च वा, तत् सर्व्वमसाध्यं स्यात् ॥ ८ ॥

गङ्गाधरः—गतिरिति निदानस्थाने रक्तपित्तनिदाने दर्शिता । तत्र दर्शिता तूर्द्ध्वगरक्तपित्तस्य गतिः सप्तविधद्वारा भवति अधरा तु गतिर्द्विद्वारा ।

पित्तापेक्षया पैत्तिके रक्तपित्ते उल्वणं पित्तं भवति, यतस्तत्रैव पित्तं स्वलक्षणानि करोति, नान्यत्र । एवं व्यवस्थिते यदुच्यते केवलपैत्तिकस्य रक्तपित्तस्य मार्गो नास्ति, यतो वातारब्धमधो याति, कफारब्धमूर्द्ध्वमिति प्रतिपादितम् ; तदपि न । यतः पैत्तिकस्यापि ऊर्द्ध्वगमनमधोगमनं वा भवत्येव । परं पैत्तिकं यदूर्द्ध्वं याति, तन्मार्गमहिम्ना कफसंयुक्तं भवति, यच्चाधो याति, तद् वातस्थान-सम्बन्धाद् वातानुगतं भवति । मार्गसम्बन्धानुगतश्च दोषः स्वलक्षणकारकत्वान्नानुबन्धः । तेनासौ पैत्तिके रक्तपित्तेऽपि "एकदोषानुगं साध्यम्" इत्यादिवचनेषु न गृह्यते, यतः स्वतन्त्रो व्यक्तलिङ्गश्च दोषोऽनुबन्ध्यः, तद्विपरीतस्त्वनुबन्धः । तेन, यथोक्तलक्षणकारिणा दोषेणानुबन्ध्येन वातिकादि व्यपदेशो रक्तपित्तेषु, न मार्गसम्बन्धानुगतेन च लक्षणकारिणानुबन्धरूपेणेति । अन्ये तु, प्रदेशान्तरचितेन पित्तेन यदोत्तरकालं रक्तपित्तसम्बन्धो भवति, तदा पैत्तिकं रक्तपित्तं भवतीति ब्रुवते ॥ ७ ॥

चक्रपाणिः—सम्प्रति साध्यासाध्यविभागमाह—एकेत्यादि । एकदोषानुगमिति उक्तैक-दोषलक्षणयुक्तम् ; एवं द्विदोषमपि दोषद्वयलक्षणयुक्तम् । एवं त्रिदोषमपि ज्ञेयम् । ननु मार्ग-सम्बन्धानुगतमपि दोषं प्रक्षिप्य द्विदोषत्वं त्रिदोषत्वं वा गणनीयम्, तथाहि केवलं रक्तपित्तं याप्यं स्यादेवेति । तथा सम्प्राप्तिप्राप्तं दोषं गृहीत्वा मार्गसम्बन्धानुगतेन वायुना कफेन वा योगाद् द्विदोषजत्वमेव सर्व्वदा स्यात्, तथा 'एकदोषानुगं साध्यम्' इति यदुक्तं तन्न स्यात् । तस्माद् यथोक्तमेव साधु । मन्दाग्नेरतिवेगवदिति पृथगेवासाध्यलक्षणम् । व्याधिभिः क्षीणदेहस्येत्यादि च पृथगेव ॥ ८ ॥

चक्रपाणिः—गतिकृतं साध्यादिभेदं दर्शयितुं गतिभेदमेवाह—गतिरूर्द्ध्वमित्यादि । गति-

सप्त च्छिद्राणि शिरसि द्वे चाधः साध्यमूर्द्ध्वगम्।
याप्यन्त्वधोगं मार्गौ तु द्वावसाध्यं प्रवर्त्तते ॥ ९ ॥
छिद्रेभ्य एभ्यः सर्व्वेभ्यो लोमकूपेभ्य एव च।
वर्त्तते तामसंख्येयां गतिं तस्याहुरान्तिकीम् ॥ १० ॥
यच्चोभयाभ्यां मार्गाभ्यामतिमात्रं प्रवर्त्तते।
तुल्यं कुणपगन्धेन रक्तं कृष्णमतीव च ॥
संयुक्तं कफवाताभ्यां कण्ठे सज्जति चापि यत्।
यच्चाप्युपद्रवैः सर्व्वैर्यथोक्तैः समभिद्रुतम् ॥
हारिद्रनीलहरित-ताम्रवर्णैरुपद्रुतम्।
क्षीणस्य कासमानस्य यद्वा तच्च न सिध्यति ॥ ११ ॥

तत्र सप्त द्वाराण्याह—सप्तेत्यादि। शिरसि मुखच्छिद्रमेकं, नासिकाच्छिद्रे द्वे, द्वे च्छिद्रे चक्षुषोः, द्वे च्छिद्रे कर्णयोरिति सप्त च्छिद्राणि ऊर्द्ध्वाया गतेर्द्वाराणि। अधोगतेस्तु द्वे च्छिद्रे गुदोपस्थयोर्द्वे द्वारे। यद्यपि स्त्रीणामेकम् अधिकं योनिद्वारं तच्च चकारेण संगृहीतम्। तत्र साध्यमूर्द्ध्वगं याप्यन्त्वधोगम्, तत्र कारणमुक्तं निदानस्थाने। मार्गौ तु द्वौ यत् प्रवर्त्तते तदसाध्यम् ॥ ९ ॥

गङ्गाधरः—छिद्रेभ्य इत्यादि। एभ्यः सर्व्वेभ्यो मुखनासानेत्रकर्णगुदोपस्थानां छिद्रेभ्यस्तथा लोमकूपेभ्यश्च यद् रक्तपित्तं वर्त्तते प्रवर्त्तते तस्य रक्तपित्तस्य तां गतिमसङ्ख्येयामाहुः। आन्तिकीमन्तकरीम् ॥ १० ॥

गङ्गाधरः असाध्यलक्षणान्तरमाह—यच्चेत्यादि। यच्च रक्तपित्तमुभाभ्यां मार्गाभ्यामतिमात्रं प्रवर्त्तते, यच्च रक्तं कुणपगन्धेन शवगन्धेन तुल्यम्, अतीव च कृष्णञ्च, कफवाताभ्यां संयुक्तञ्च. यद् रक्तं कण्ठे सज्जति लगति न प्रायेण निःसरति, यच्च रक्तपित्तं यथोक्तैः सर्व्वैरुपद्रवैर्न तु न्यूनाधिकैः समभिद्रुतम्, हारिद्रादिवर्णैर्यदुपद्रुतं रक्तं न तु शरीरम्, यद् वा क्षीणस्य कासमानस्य रक्तपित्तम्, तच्च सर्व्वं रक्तपित्तं न सिध्यति ॥ ११ ॥

प्रकारान्तरमप्यसाध्यमाह—सप्त च्छिद्रेत्यादि। यच्चोभयाभ्यामित्यादिना कृष्णमतीव चेत्यन्तेनासाध्यतालक्षणमाह। अत्र मार्गाभ्यामित्यनेन यौगपद्येन मार्गप्रवृत्तिर्व्यवस्थिता। किन्तु प्रत्येकं मार्गद्वयप्रवृत्तस्य साध्यत्वं पूर्व्वमेवोक्तत्वात्। कुणपगन्धेनेति शवगन्धेन। कण्ठे सज्जतीति कण्ठाद् वहिर्न याति। यथोक्तैरिति निदानोक्तैः। तदाह। उपद्रवाः खलु दौर्ब्बल्यारोचकादयः स्वरभेदान्तोक्ताः।

यद्द द्विदोषानुगं यद्द वा शान्तं भूयः प्रवर्त्तते।
मार्गान्मार्गं चरेद्द यद्द वा याप्यं पित्तमसृक् च तत्॥ १२॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम्।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम्॥ १३॥
स्निग्धोष्णमुष्णरुक्षञ्च रक्तपित्तस्य कारणम्।
अधोगस्योत्तरं प्रायः पूर्व्वं स्यादूर्द्ध्वगस्य तु॥ १४॥

गङ्गाधरः अन्यथा तु सिध्यतीति किं न वेत्यत आह—यद् रक्तपित्तं द्विदोषानुगं तच्च रक्तपित्तं, यच्च शान्तं भूत्वा भूयोऽपि प्रवर्त्तते तत्, यद् वा रक्तपित्तं मार्गात् एकस्मात् छिद्रात् प्रवर्त्तते कालान्तरेण तन्मार्गं हित्वान्यं मार्गं चरेत्, तत्तत् सर्व्वं पित्तमसृक् रक्तपित्तं याप्यम्॥ १२॥

गङ्गाधरः—तर्हि किमतोऽन्यत् साध्यमित्यत आह—एकमार्गमित्यादि। याप्यन्त्वधोगमित्युक्त्या ऊर्द्ध्वमार्गमेव। सुखे काले प्राकृतकाले न तु वैकृते॥१३॥

गङ्गाधरः—सम्प्रति संग्रहेण कारणमाह—स्निग्धोष्णमित्यादि। पदभेदो गतिभेदेन कारणत्वख्यापनार्थं, तद् दर्शयति—अधोगस्येत्यादि। अधोगस्य रक्तपित्तस्य कारणं। प्रायस्तयोः पूर्व्वं स्निग्धोष्णमूर्द्ध्वगस्याधोगस्य तूत्तरम् उष्णरुक्षम्॥१४॥

हारिद्रवर्णादिभिर्युक्तं क्षीणस्य कासिनो न सिध्यतीति सिद्धम्। यद् द्विदोषानुगमित्यनेनानुबन्धरूपदोषद्वययोगाद् याप्यत्वमुच्यते। यत् पूर्व्वं द्विदोषजं याप्यमित्युक्तं तदनुबन्धिदोषद्वयजन्याभिप्रायेणेति न पौनरुक्त्यम्। मार्गान्मार्गं चरेदिति ऊर्द्ध्वगं मुखं परित्यज्य नासां यातीत्यादिरूपं ज्ञेयम्। ऊर्द्ध्वगस्य त्वधोगमनेऽधोगत्वाद् याप्यत्वं भवति। अधोगं मार्गान्तरमगच्छदपि स्वत एव याप्यम्। तस्मादूर्द्ध्वाधोमार्गपरिवर्त्तोऽत्र विवक्षितः॥ ९—१२।

चक्रपाणिः—एकमार्गमित्यादिना साध्यलक्षणम्। एकमार्गमिति सामान्यवचनेऽप्यूर्द्ध्वमार्ग एव पूर्व्वं लभ्यते। अधोगस्यैकमार्गगस्यापि याप्यत्वान्न ग्रहणम्। सुखे काले इति हेमन्ते शिशिरे च। अत्र मार्गेण तथा दोषेण तथा लक्षणेन साध्यासाध्ययाप्यभेदाः पृथगुक्ताः। अत्र च साध्यलक्षणयाप्यलक्षणमेलके याप्यत्वमेव। याप्यासाध्यमेलकेऽसाध्यत्वमेव। यथा एकदोषं यदधोगतं तदेकदोषत्वात् साध्यम्, किन्त्वधोगतत्वाद् याप्यम्। यत् त्रिदोषमधोगतत्वेन याप्यं किन्तु त्रिदोषत्वात् असाध्यमेवेति ज्ञेयम्। यदुक्तं—"नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्' इति। 'साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा' इति च॥ १३॥

चक्रपाणिः—स्निग्धोष्णमित्यादि। निदानोक्तमपि प्रायिकत्वाद् विशेषोपदर्शनार्थं पुनरिहोच्यते। प्रायःशब्देन कदाचिद् रुक्षोष्णमपि उत्तरमूर्द्ध्वगस्य हेतुर्भवति; तथा स्निग्धोष्णमपि अधोगस्येति दर्शयति। एवञ्च निदानमार्गानियमे सति मार्गौ दोषानुबन्धत्वं निदानं प्रसमीक्ष्य च इत्यत्र

ऊर्द्धगं कफसंसृष्टमधोगं मारुतानुगम् ।
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्त्तते ॥ १५ ॥
अक्षीणबलमांसस्य रक्तपित्तं यदश्नतः ।
तद्दोषदुष्टमुत्क्लिष्टं नादौ स्तम्भनमर्हति ॥
गलग्रहं पूतिनस्यं मूर्च्छायमरुचिं ज्वरम् ।
गुल्मं प्लीहानमानाहं किलासं मूत्रकृच्छ्रताम् ॥
कुष्ठान्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम् ।
बुद्धीन्द्रियोपरोधञ्च कुर्य्यात् स्तम्भितमादितः ॥
तस्मादुपेक्ष्यं बलिनां बलदोषौ प्रपश्यता ।
रक्तपित्तं प्रथमतः प्रारब्धं सिद्धिमिच्छता ॥ १६ ॥

गङ्गाधरः—अत एवाह—ऊर्द्धगमित्यादि । स्निग्धोष्णकारणत्वादूर्द्धगं रक्तपित्तं कफसंसृष्टं स्निग्धेन कफवृद्ध्या उष्णेन पित्तवृद्धत्वात् । अधोगं मारुतानुगम् उष्णरूक्षत्वकारणस्य उष्णगुणेन पित्तवृद्धेः रूक्षगुणेन वायुवृद्धेरिति । द्विमार्गमिति उभाभ्यां कारणाभ्यां स्निग्धोष्ण-रूक्षोष्णाभ्यां कफवातयोः पित्तस्य च कोपात् कफवाताभ्यां संसृष्टं द्विमार्गं रक्तपित्तं भवति ॥ १५ ॥ इति रक्तपित्तनिदानम् ।

गङ्गाधरः—अथास्य चिकित्सितमाह—अक्षीणेत्यादि । अक्षीणबलमांसस्य पुंसो यद् रक्तपित्तं प्रवर्त्तते, यच्च रक्तपित्तम् अश्नतो भुक्तवतः तत्क्षणं प्रवर्त्तते, तद् रक्तपित्तं दोषदुष्टं कफादिदोषेण दुष्टं न त्वेकस्मात् प्रवृत्तं रक्तं यत उत्क्लिष्टं सवेगमेव तदापि वर्त्तते, तस्मादादौ तद्रक्तपित्तं स्तम्भनं नार्हति । कस्मात् ? गलग्रहादुपद्रवकरत्वात् । तानाह—गलग्रहमित्यादिद्वाभ्याम् । आदितः स्तम्भितं रक्तपित्तं गलग्रहमित्यादिकान् कुर्य्यात् बुद्धेरिन्द्रियाणाञ्च दशानामुपरोधमप्रसादम् । यस्मादेतान् कुर्य्यात् तस्मात् बलदोषौ प्रपश्यता

मार्गादिपञ्च पठितुं यदि अधोगे इह रूक्षोष्णमेव परं हेतुः स्यात् तस्मादधोगेऽपि स्निग्धोष्णं कदाचित् कारणं भवति । स्निग्धकृतश्च कफोऽपि अधोगे भवति । एवमूर्द्धगेऽपि चिन्तनीयम् । ऊर्द्धगं कफसंसृष्टमित्यादावपि प्रायःशब्दसम्बन्धाद् व्यभिचारो ज्ञेयः । अश्नतइत्यनेन संतर्पणोत्थितं दर्शयति । उत्क्लिष्टमिति प्रवृत्त्युन्मुखं दोषरूपमलाश्रितम् । बलदोषविचारिणेति—यत्र बलहासं

प्रायेण तु समुत्क्लिष्टमामदोषाच्छरीरिणाम्।
वृद्धिं प्रयाति पित्तासृक् तस्मात् तल्लङ्घ्यमादितः॥
मार्गौ दोषानुबन्धश्च निदानं प्रसमीक्ष्य च।
लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्॥ १७॥
ह्रीवेरचन्दनोशीर-मुस्तपर्पटकैः शृतम्।
केवलं शृतशीतं वा दद्यात् तोयं पिपासवे॥ १८॥

पुंसो बलाधिक्यं दोषस्य च रोगादिकं पश्यता भिषजा बलिनां पुंसां प्रथमतः प्रारब्धं प्रवृत्तं रक्तपित्तमुपेक्ष्यम्। प्रथमतो न स्तम्भनीयं, केन भिषजा? येन सिद्धिमिच्छता॥ १६॥

गङ्गाधरः—ननपेक्ष्य किं कर्त्तव्यमित्यत आह—प्रायेणेत्यादि। समुत्क्लिष्टं पित्तासृक् प्रायेणामदोषाद् वृद्धिं प्रयाति यस्मात् तस्मादादितो लङ्घ्यं लङ्घनेन आचर्य्यम्। ननु तर्हि किं सर्व्वेष्वेव रक्तपित्तेषु प्रथमतो लङ्घनमेवोपमुपदिश्यते इत्यत आह—मार्गावित्यादि। मार्गाविति द्विवचनं व्यस्तसमस्तार्थम्। लङ्घन-बृंहणीये हि ये येन लङ्घनीया उक्तास्तत्रोक्तरूपेण वमनविरेचनोपवासात्मकं लङ्घनं रक्तपित्ते आदौ प्रयोजयेत् अपतर्पणादैरधोगे च तर्पणं वा प्रयोजयेत्॥ १७॥

गङ्गाधरः—तत्र पिपासायां जलार्थमाह—ह्रीवेरेत्यादि। षडङ्गपरिभाषया ह्रीवेरादिभिः शृतं तोयमथवा केवलं तोयं शृतशीतं पिपासवे रक्तपित्तिने दद्यात्॥ १८॥

संपश्यति हीनदोषत्वं वा तदैव स्तम्भनं कार्य्यम्। संप्रति कृत्नं लङ्घनहेतुमाह—मार्गावित्यादि। तत्रोर्द्ध्वमार्गः, सामं पित्तं, कफश्च दोषः, स्निग्धोष्णं निदानं, लङ्घनं प्रयोजनम्। तद्व्यतिरिक्तन्तु मार्गादि, भोजनं तर्पणं वा प्रयोजयेदिति। तर्पयतीति तर्पणमशनम्। यवागूतर्पणं वा ग्राह्यम्। ये तु सक्तुतर्पणं ग्राहयन्ति तेषां यवागूदानपक्षो न संगृहीतः स्यात्॥ १४—१७॥

चक्रपाणिः—केवलमिति ह्रीवेरादिरहितम्। जलमेवकं केवलमौषधद्वेषिणे पुरुषाय देयम्।

ऊर्द्ध्वगे तर्पणं पूर्व्वं पेयां पूर्व्वमधोगमे ।
कालसात्म्यानुबन्धज्ञो दद्यात् प्रकृतिकल्पवित् ॥ १९ ॥
जलं खर्ज्जूरमृद्वीका-मधुकैः सपरूषकैः ।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥
तर्पणं सघृतक्षौद्रं लाजचूर्णैः प्रदापयेत् ।
ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥
मन्दाग्नयेऽम्लसात्म्याय तत् साम्लमपि कल्पयेत् ।
दाड़िमामलकैर्विद्वानम्लार्थञ्चानुदापयेत् ॥ २० ॥

गङ्गाधरः—ननु लङ्घनोत्तरं किं कर्त्तव्यमित्यत आह—ऊर्द्ध्वगे इत्यादि। सम्यगलङ्घितस्य ऊर्द्ध्वगे रक्तपित्ते पूर्व्वं तर्पणं दद्यात्। अधोगमेऽपि सन्तर्पणोत्थ रक्तपित्ते सम्यग्लङ्घिताय पुंसे पूर्व्वं पेयां दद्यात्। तथा यदि लङ्घनार्हो न भवति अपतर्पणोत्थश्च रक्तपित्तश्चोर्द्ध्वगं भवति, तदा तूर्द्ध्वगेऽपि पूर्व्वं तर्पणं दद्यात्। एवं यद्यपतर्पणोत्थमधोगं रक्तपित्तं भवति न च पुमान् लङ्घनार्हो भवति, तदा त्वधोगरक्तपित्ते पूर्व्वं पेयां दद्यादित्यभिप्रायेण न विशेषेणोक्तम् ऊर्द्ध्वगे इत्यादि ॥ १९ ॥

गङ्गाधरः—अथ तर्पणार्थं जलमाह। एवमूर्द्ध्वगे तर्पणमधोगे पेया, विरेचनमूर्द्ध्वगे वमनमधोगे कार्य्यं ; तदुत्तरकालं तर्पणपेययोर्विधानं वक्ष्यते। तर्पणमित्यादि। लाजचूर्णैः खर्ज्जूरादिशृतशीतं सशर्करं जलं सघृतक्षौद्रमेकीकृत्य यथानुरूपं गोलयित्वा यद्रूपं द्रवं भवति तत् तर्पयतीति तर्पणं प्रदापयेत्। द्रवेणालोड़िताः सक्तवस्तर्पणमिति लक्षणं ज्ञापितम्। तत् पीतं काल एव रक्तपित्तमूर्द्ध्वगं व्यपोहति न तु तत्क्षणमिति भावः।

मन्दाग्नये इत्यादि। तत्र यद्यम्लसात्म्यः पुमान् भवति, मन्दाग्निर्वा

पूर्व्वमिति पदेन पश्चाद्बलह्रासकारकं निषेधयति। कालो हेमन्तादिः। अनुबन्धो दोषानुबन्धः। प्रकृतिः स्वाभाविकी द्रव्याणां गुरुलाघवादिकल्पना। कल्पनं संस्कार इत्यर्थः। एतेन कालं दोषानुबन्धञ्च ज्ञात्वा यस्य यत्स्वभावं द्रव्यं युक्तं भवति तेन तर्पणं यवागूर्वा कार्य्येत्यर्थः। खर्ज्जूरादिना जलं षड़ङ्गविधानेनैव कर्त्तव्यम्। एतच्च जलमत्र मधुरमपि ऊर्द्ध्वगे कफसंसृष्टेऽपि रक्तपित्ते यौगिकं भवति रक्तपित्तव्याधिप्रत्यनीकत्वात् ॥ १८—२० ॥

शालिषष्टिकनीवार-कोरदूषप्रसातिकाः।
श्यामाकाश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम्॥
मुद्गा मसूराश्चणकाः समुकुष्टाढ़कीफलाः।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम्॥
पटोलनिम्बवेत्राग्र-प्लक्षवेतसपल्लवाः।
किराततिक्तकं शाकं गण्डीरं सकठिल्लकम्॥
कोविदारस्य पुष्पाणि काश्मर्य्याश्चाथ शाल्मलेः।
अन्नपानविधौ शाकं यच्चान्यद् रक्तपित्तनुत्॥

भवति, तदा तस्मै पुंसे तत् तर्पणं साम्लमपि कल्पयेत्। ननु केनाम्लेन तत् साम्लं कल्प्यमित्यत आह—दाड़िमेत्यादि। अनुरूपेण दापयेत्॥ २०॥

गङ्गाधरः—ननु लाजार्थं पेयार्थञ्च के के शालय इष्यन्तेऽस्मिन् रोगे इत्यत आह—शालीत्यादि। शालयो हैमन्तिकधान्यानि शूकसंज्ञानि। षष्टिकं ग्रैष्मिकं धान्यं शूकाख्यमेव। नीवार इति उड़िधान्यम्। कोरदूषः कोद्रवः। प्रसातिका कङ्गुः। द्वे चैव ते धान्ये कुधान्याख्ये भवतः। तथा श्यामाकोऽपि तृणधान्यं श्यामाघास इति लोके, तस्य वीजम्। प्रियङ्गुश्च कुधान्यं स्वनामाख्यम्। भोजनमित्यनेन तर्पणपेयादिरूपेण ज्ञापितम्। तत्र सूपयूषार्थमाह—मुद्गा इत्यादि। मुद्गः स्वर्णमुद्गः। मुकुष्टको वनमुद्गः। आढ़कीफला इत्यारहर इति लोके। सूपार्थे यूषार्थे चेति सूपयूषार्थे। सूपो घनद्रवरूपः, यूषोऽष्टादशगुण चतुर्दशगुणे वा तोये पादावशिष्टः स्वच्छरूपः।

शाकार्थमाह—पटोलेत्यादि। पटोलनिम्बयोः फलं पत्रञ्च वेत्राग्रं प्लक्षस्य पत्रं वेतसस्य पानीयामलकस्य पल्लवाः किराततिक्तस्य शाकं पत्रं गण्डीरं दूर्व्वा कठिल्लकं सुनिषण्णकं कोविदारस्य काञ्चनस्य पुष्पाणि काश्मर्य्याश्च पुष्पाणि अथ शाल्मलेश्च पुष्पाणि। यच्चान्यदिति। रक्तनुत्

चक्रपाणिः—शालीत्यादिनान्नमाह। नीवाराः प्रशातिका जलमध्ये प्रायो भवन्ति। प्रियङ्गुः कङ्गुः। कोरदूषस्य रक्तपित्तहेतुत्वं निष्पावमाषसूपादियुक्तस्यैव महिम्ना निदाने प्रोक्तम्। अयन्तु कषायमधुरलघुत्वात् कोरदूषो रक्तपित्तहर एव इतीह पठ्यते। एवं गण्डीरोऽपि निदाने स्वरसादि-युक्त एव हेतुत्वेनोक्तः। स तु केवलो हित एव। किंवा गण्डीरो द्विविधः, तत्र हरितादिपठितो यः स

शाकार्थं शाकसात्म्यानां तच्छस्तं रक्तपित्तिनाम् ।
स्विन्नं वा सर्पिषा भृष्टं यूषवद् वा विपाचितम् ॥
पारावतान् कपोतांश्च लावान् रक्ताख्यवर्त्तकान् ।
शशान् कपिञ्जलानेणान् हरिणान् कालपुच्छकान् ॥
रक्तपित्ते हितान् विद्याद् रसांस्तेषां प्रयोजयेत् ।
ईषदम्लाननम्लांश्च घृतभृष्टान् सशर्करान् ।
कफानुगे यूषशाकं दद्याद् वातानुगे रसम् ॥ २१ ॥

पित्तनुच्च यत् पर्पटकगुडूचीपत्रकारवेल्लादिकम् । शाकसात्म्यानां न तु शाकासात्म्यानां देयम् । ननु केन प्रकारेण तत् शाकमुपकल्प्यमित्यत आह—स्विन्नमित्यादि । तत्तत् शाकं स्विन्नं किञ्चिज्जलं दत्त्वा उत्स्वेद्य पश्चात् सर्पिषा भृष्टं शस्तम् । अथवा स्विन्नं तन्निष्पीड्य किञ्चिद् यूषवत् जलं दत्त्वा पक्वम् । मांसाशिनो मांसान्याह—पारावतानित्यादि । कपोता घुघु इति लोके । लावा इति सातुभायेरा इति लोके । रक्ताख्यवर्त्तकान् रक्तवटेर इति लोके । एवमेव सर्व्वेऽन्नपानादिकेऽध्याये नामतः प्रोक्तास्तत्र द्रष्टव्याः । नन्वेषां मांसमेव पक्त्वा भक्षणार्थं देयं न वेत्यत आह—रसांस्तेषामिति । न तु मांसानि । तत्राम्लसात्म्यासात्म्यानां रोचनार्थमाह—ईषदित्यादि । दाड़िमामलकाम्लेन तेषां पारावतादीनां मांसरसानीषदम्लीभूतान् अनम्लान् केवलान् वा किन्तु द्विविधानेव घृतभृष्टान् गव्ये घृते सन्तल्य शर्करां प्रक्षिप्य प्रयोजयेत् । ननु किं सर्व्वस्मिन्नेव रक्तपित्ते प्रयोजयेदित्यत आह—कफानुगे इत्यादि । कफानुगे रक्तपित्ते यूषशाकं न तु मांसरसं प्रयोजयेत् । वातानुगे रक्तपित्ते तु मांसरसं दद्यान्न तु यूषशाकम् ॥ २१ ॥

निदानं भवति, इतरस्तु जलज एव शाकवर्गे पठितो यः स इह कफाधिके रक्तपित्ते ज्ञेयः । यूषवद् वा विपाचितमिति यूषो दाड़िमाद्यम्लद्रव्ययुक्तो विपाच्यते तथायमपीत्यर्थः । किंवा यूषयुक्तं यद् भवति तथा विपाचितमित्यर्थः । रक्ताक्षश्चोरकः । यूषश्च शाकञ्च इति यूषशाकम् ॥ २१ ॥

रक्तपित्ते यवागूनामतः कल्पः प्रवक्ष्यते ।
पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियङ्गुका ।
जले साध्या रसे तस्मिन् पेया स्याद्र रक्तपित्तिनाम् ॥
चन्दनोशीरलोध्राणां रसे तद्वत् सनागरे ।
किराततिक्तकोशीर-मुस्तानां तद्वदेव च ॥
धातकीधन्वयासाम्बु-विल्वानां वा रसे शृताः ।
मसूरपृश्निपर्ण्योर्वा स्थिरा मुद्गरसेऽथवा ॥
रसे हरेणुकानां वा सघृते सबलारसे ।
सिद्धाः पारावतादीनां रसे वा स्युः पृथक् पृथक् ॥
इत्युक्ता रक्तपित्तघ्नाः शीताः समधुशर्कराः ।
यवाग्वः कल्पना चैषां कार्य्या मांसरसेष्वपि ॥ २२ ॥

गङ्गाधरः—अत ऊर्द्ध्वं रक्तपित्ते यवागूनां कल्पः प्रवक्ष्यते। पद्मेत्यादि। पङ्कवदेतानि चत्वारि जले संसाध्यार्द्धशिष्टे तस्मिन् रसे क्वाथे पेया साध्या स्यात्। अपरामाह- चन्दनेत्यादि। तद्वच्चन्दनादीनि चत्वारि क्वाथयित्वा तस्मिन् रसे क्वाथे पेया साध्या स्याद्रक्तपित्तिनामित्यर्थः। अपरामाह— किरातेत्यादि। अपरामाह— धातकीत्यादि। विल्वं विल्वशलाटुः तन्मूलत्वग्वा। अपरामाह – मसूरेत्यादि। मसूरपृश्निपर्ण्योः क्वाथे एका पेया। 'स्थिरा शालपर्णी तस्या मुद्गस्य च क्वाथं कृत्वा परैका पेया। अपरामाह— रसे इत्यादि। हरेणुकान् क्वाथयित्वा बलाञ्च क्वाथयित्वा द्वौ क्वाथौ पुनरेकीकृत्य घृतमनुरूपं तत्र प्रक्षिप्य पेया साध्या स्यात्। अपरामाह—सिद्धा इत्यादि। पारावतादीनामुक्तानां पारावतादीनां कालपुच्छान्तानां नवानां पृथक् पृथक् प्रत्येकमांसस्य रसे सिद्धाः पेयाः स्युः। वाशब्दः पूर्व्वयोगापेक्षया। उपसंहरति इत्युक्ता— इत्यादि। इति रक्तपित्तघ्न्यो यवाग्व उक्तास्ताः सर्व्वा एव शीताः शीतीकृत्य समधुशर्कराः प्रयोक्तव्याः। न केवलमेवं कल्पा यूषादिषु ज्ञेयाः। एषां पद्मोत्पलकिञ्जल्कादीनां क्वाथरूपेण कल्पना च मांसरसेष्वपि उक्तानां पारावतादीनां मांसरसेषु कर्त्तव्येषु च कार्य्या, न केवलमांसं पक्त्वा रसः कार्य्यः॥ २२॥

**शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तिनाम्।**
**वातोल्वणे तित्तिरिः स्यादुडुम्बररसे शृतः॥**
**मयूरः प्लक्षनिर्य्यूहे न्यग्रोधस्य च कुक्कुटः।**
**रसे विसोत्पलादीनां * वर्त्तकक्रकरौ हितौ॥ २३॥**
**तृष्यते तिक्तकैः सार्द्धं तृष्णाघ्नं वा फलोदकम्।**
**सिद्धं विदारिगन्धाद्यैः शृतशीतमथापि वा॥ २४॥**

गङ्गाधरः—अधिका च कल्पना काचिदुच्यते—शश इत्यादि। वास्तुकशाकं शशमांसञ्चैकत्र पक्त्वा कृतो रसः विबन्धे मलविबन्धे शस्तः। उडुम्बरफलरसे शृतः पकस्तित्तिरिमांसरसः वातोल्वणे हितः। मयूर इत्यादि। प्लक्षस्य पकत्याः क्वाथे मयूरमांसं पक्त्वा कृतो रसो वातोल्वणे, न्यग्रोधस्य च क्वाथे पक्त्वा कुक्कुटमांसकृतो रसो वातोल्वणे, मृणालोत्पलादीनां क्वाथे वर्त्तकमांसं क्रकरमांसं वा पक्त्वा कृतो रसो वातोल्वणे हितः॥ २३॥

गङ्गाधरः—अथ जलमाह—तृष्यत इत्यादि। तृष्यते रक्तपित्तिने तिक्तकैस्तिक्तरसद्रव्यैः सार्द्धं तृष्णाघ्नं तृष्णानिग्रहणदशकं जलेन साधयित्वा दद्यात्। अथवा फलोदकं फलं वटोडुम्बरकाश्मर्य्यद्राक्षाखर्ज्जूरादीनां फलं तिक्तकद्रव्यञ्चैकत्र षडङ्गवत् क्वाथयित्वा यज्जलं भवति तत् तृष्यते दद्यात्। अथवा विदारीगन्धाद्यैः शालपर्ण्यादिभिः पञ्चभिरपि सार्द्धं फलोदकं सिद्धं कृतं तृष्णाघ्नं तृष्णायां तृष्यते दद्यात्॥ २४॥

चक्रपाणिः—रक्तपित्ते यवागूनामित्यादि। आवस्थिकं भोजनमाह—शश इत्यादि। अत्र शशः कषायत्वाद्रक्तपित्तहरो भवत्येव। विबन्धहरेण वास्तुकेन संस्कारत्वाद् विबन्धहरो भवति। एवं तित्तिरिमयूरादयो यद्यप्युष्णत्वेन वातहरास्तथापि रक्तपित्ते न हिता उष्णत्वेन; ततश्च तेषां स्वरसादयो रक्तपित्तहराः साधने नियुज्यन्ते। तथा सति वातं रक्तपित्तञ्च घ्नन्ति। प्रतिनियतसाधकद्रव्योपन्यासात् संयोगमहिम्नैव कार्य्यकरो भवतीति ज्ञायते। न शशः कषायोऽपि विबन्धं करोति। वास्तुकस्तु संस्कारत्वात् रक्तपित्तं कोपयेदित्यादि विपरीतफलसंभवो नास्ति संयोगशक्तेरचिन्त्यत्वात्। वास्तुकरसे एव शशस्य साधनप्रयोग इतरसाहचर्य्यात्। उक्तं हि 'विपचेत् तु वास्तुकरसे शशं विबन्धे पुरीषस्य' इति। इदानीं विदारिगन्धाद्यैः शृतमुदकमिति आदिशब्देन शालिपर्ण्यादिपञ्चमूलशृतम्॥ २२—२४॥

---

* बिल्वोत्पलादीनामिति केचित् पठन्ति।

ज्ञात्वा दोषावनुबलौ बलमाहारमेव च।
जलं पिपासवे दद्याद् बहुशो वाल्पशोऽपि वा * ॥ २५ ॥
निदानं रक्तपित्तस्य यत्किञ्चित् संप्रकाशितम्।
जीवितारोग्यकामैस्तदसेव्यं रक्तपित्तिभिः।
इत्यन्नपानमाख्यातं क्रमशो रक्तपित्तनुत् ॥ २६ ॥
वक्ष्यते बहुदोषाणां कार्य्यं बलवताञ्च यत्।
अक्षीणबलमांसस्य यस्य सन्तर्पणोत्थितम् ॥
बहुदोषं बलवतो रक्तपित्तं शरीरिणः।
काले संशोधनार्हस्य तद्धरेन्निरुपद्रवम्।
विरेचनेनोर्द्ध्वभागमधोगं वमनेन तु ॥ २७ ॥

गङ्गाधरः—ननु सर्व्वमाहारं जलञ्च किं सर्व्वस्मै दद्यादित्यत आह—ज्ञात्वेत्यादि। रक्तपित्ते अनुबलौ अनुबन्धौ दोषौ वातकफौ ज्ञात्वा पुंसो बलञ्च ज्ञात्वाहारमेव जलञ्च पिपासवे तस्मै बहुशो वा अल्पशो वा दद्यात् ॥ २५ ॥

गङ्गाधरः—अथास्य संक्षेपतः क्रियार्थं निदानवर्ज्जनमाह—निदानमित्यादि। निदानस्थाने रक्तपित्तनिदानेऽस्मिंश्चाध्याये यत्किञ्चित् रक्तपित्तस्य रोगस्य निदानं संप्रकाशितं, जीवितारोग्यकामैः रक्तपित्तिभिस्तत् सर्व्वमसेव्यम्। अन्नपाने उपसंहरति—इत्यन्नेत्यादि ॥ २६ ॥

गङ्गाधरः—वक्ष्यते इत्यादि। बहुदोषाणां न त्वल्पदोषाणां बलवताञ्च न तु दुर्ब्बलानाम्। यत्तद्वक्ष्यतेऽत ऊर्द्ध्वमित्यर्थः। अक्षीणेत्यादि। अक्षीणबलादेः शरीरिणो यस्य पुंसो बहुदोषं सन्तर्पणोत्थितं रक्तपित्तं निरुपद्रवं यद्

चक्रपाणिः—संप्रति पानीयदानविषयप्रकारमाह—ज्ञात्वेत्यादि। दोषाविति वातकफौ। पित्तन्तु नायकमेव नानुबलम्। विसर्गादिति विरतेर्यावदिच्छमित्यर्थः। पक्षान्तरमाह—अल्पशो वा स्तोकं स्तोकमित्यर्थः। अत्र यदि बलवानग्निः शरीरञ्च महत् तदा विसर्गपर्य्यन्तं जलं देयं, विपर्य्यये तु पानीयं नातिपथ्यं तेनाल्पशो देयम् ॥ २५ ॥

चक्रपाणिः—रक्तपित्तनिदानवर्ज्जनार्थमाह—निदानमित्यादि। वक्ष्यते इत्यादिना संशोधनानि प्रधानभेषजत्वादुच्यन्ते। अक्षीणबलमांसस्य इत्यनेन सहजा बलहानिरुच्यते। बलवत इत्यनेन

* विसर्गादल्पशोऽपि वा इति चक्रधृतः पाठः।

त्रिवृतामभयां प्राज्ञः फलान्यारग्वधस्य च।
त्रायमाणां गवाक्ष्या वा मूलमामलकानि वा॥
विरेचनं प्रयुञ्जीत प्रभूतमधुशर्करम्।
रसः प्रशस्यते तेषां रक्तपित्ते विशेषतः॥ २८॥
वमनं मदनोन्मिश्रं मन्थः सक्षौद्रशर्करः।
सशर्करं वा सलिलमिक्षूणां रस एव वा॥
वत्सकस्य फलं मुस्तं मदनं मधुकं मधु।
अधोगे रक्तपित्ते तु वमनं परमुच्यते॥ २९॥

भवति, संशोधनार्हस्य विरेचनानर्ह-वमनानर्हभिन्नस्य ऊर्द्ध्वभागं तद्रक्तपित्तं विरेचनेन हरेत् अधोगन्तु तद्रक्तपित्तं वमनेन हरेत्॥ २७॥

गङ्गाधरः—तत्र विरेचनयोगानाह—त्रिवृतामित्यादि। त्रिवृतादीनामेकशः प्रभूतमधुशर्करं चूर्णादिरूपं विरेचनं यथायोगं मात्रां बुद्ध्वा प्रयुञ्जीत। विशेषतो रक्तपित्ते पारावतादीनां मांसान्येषां त्रिवृतादीनामर्द्धशृते क्वाथे पक्त्वा रसः प्रशस्यते॥ २८॥

गङ्गाधरः—अधोगे वमनमाह—वमनमित्यादि। मन्थो द्रवेणालोड़ितः सक्तुः। द्राक्षादीनामर्द्धशृतक्वाथेन लाजादिसक्तून् आलोड्य क्षौद्रशर्करामदनफलकल्कान् यथार्हं मिश्रयित्वा यद्रूपं तद्वमनमधोगरक्तपित्तशान्तिकरं भवति। अथवा सशर्करं जलमुष्णमेव मदनकल्कमिश्रं वमनम्। अथवा मदनोन्मिश्र इक्षूणां रसो वमनः। योगान्तरमाह—वत्सकस्येत्यादि। इन्द्रयवमुस्तकयष्टिमधूनि त्रीणि क्वाथयित्वा उष्ण एव तत्र मदनफलकल्कं मधु च प्रक्षिप्य वमनार्थं पातुं दद्यात्। परमुत्कृष्टं वमनमिदमुच्यते॥ २९॥

कालकृतं बलमुच्यते। काले संशोधनयोग्येऽनत्युष्णशीतकाले। निरुपद्रवमिति क्रियाविशेषणम् किंवा रक्तपित्तविशेषणम्। विरेचनेनोर्द्ध्वभागमित्यादिना अनुलोमहरणं रक्तपित्ते निषेधयति। उक्तञ्च प्रतिमार्गहरणं रक्तपित्ते विधीयते इति। रक्तपित्ते विशेषत इत्यनेन रक्तपित्तादन्यत्र कल्कादयोऽपि एषां भवन्ति॥ २६—२८॥

चक्रपाणिः—वमनकारको योगो वमनमुच्यते। मदनस्य दोषाद्यपेक्षया कर्षादिका मात्रा कल्पे वक्ष्यमाणा ज्ञेया। सशर्करे सलिले तथेक्षुरसे मदनयोगादेव वमनकर्त्तृत्वं ज्ञेयम्। अधोगे

ऊर्द्धगे शुद्धकोष्ठस्य तर्पणादिक्रमो हितः ।
अधोगमे यवाग्वादिर्न चेत् स्यान्मारुतो बली ॥ ३० ॥
बलमांसपरिक्षीणं शोकभाराध्वकर्षितम् ।
ज्वलनादित्यसंतप्तमन्यैर्वा क्षीणमामयैः ॥
गर्भिणीं स्थविरं बालं रुक्षाल्पप्रमिताशिनम् ।
अवम्यमविरेच्यं वा यं पश्येद् रक्तपित्तिनम् ॥
शोषेण सानुबन्धं वा तस्य संशमनो क्रिया ।
शस्यते रक्तपित्तस्य परश्चातः प्रवक्ष्यते ॥ ३१ ॥

गङ्गाधरः—विरेचनानन्तरमूर्द्धगे किं कर्त्तव्यं तदाह—ऊर्द्धगे इत्यादि। विरेचनेन शुद्धकोष्ठस्य तर्पणादिक्रमो यः पूर्व्वमत्रवोक्तः स तदा हितः कार्य्य इति भावः। वमनानन्तरमधोगे किं कार्य्यमित्यत आह—अधोगमे इत्यादि। यवाग्वादिर्यस्त्वत्रैव पूर्व्वमुक्तः पेयादिक्रमः स त्वधोगमे वमनशुद्धकोष्ठस्य हितः कार्य्य इति भावः। तत्र चेद् यदि मारुतो बली न स्यात्। वातोल्वण तु तित्तिरिः स्यादित्याद्युक्तमांसरसो हित इति भावः ॥ ३० ॥

गङ्गाधरः—बहुदोषबलवतामक्षीणबलमांसानां विधानमुक्त्वा क्षीणबलादयत् कार्य्यं तदाह—बलेत्यादि। बलमांसपरिक्षीणं वा शोककर्षितं वा भारकर्षितं वा अध्वकर्षितं वा ज्वलनोऽग्निरादित्य आतपस्तयोरेकतरेण कर्षितं वा समस्तैः कर्षितं वा अन्यैर्वामयैर्ज्वरादिभिः क्षीणं पुरुषं गर्भिण्यादिकं वा अवम्य वमनायोग्यतया प्रतिषेध्यं वा अविरेच्यं विरेचनानर्हतया प्रतिषेध्यं वा यं रक्तपित्तिनं भिषक् पश्येत्, शोषेण यक्ष्मणा सानुबन्धं वा यं पश्येत्, तस्य रक्तपित्तिनः रक्तपित्तस्य संशमनी क्रिया शस्यते। सा चातः परं प्रवक्ष्यते ॥३१॥

इत्यत्रापि शुद्धकोष्ठस्यापि योऽयम्। न चेत् स्यान्मारुतो बलीत्यनेन यदि मारुतो बली स्यात् तदा मांसोदनमेव देयम्। इति ज्वरोक्तं विधिं सूचयति ॥ २९ । ३० ॥

चक्रपाणिः—संशमनविषयमाह—बलमांसेत्यादि। शोषेणति राजयक्ष्मणा ॥ ३१ ॥

अटरूषकमृद्वीका-पथ्याक्काथः सशर्करः ।
मधुमिश्रः श्वासकास-रक्तपित्तनिवर्हणः ॥ ३२ ॥
अटरूषकनिर्य्यूहे प्रियङ्गु मृत्तिकाञ्जने ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ३३ ॥
पद्मकं पद्मकिञ्जल्कं दूर्व्वां वास्तुकमुत्पलम् ।
नागपुष्पञ्च लोध्रञ्च तेनैव विधिना पिबेत् ॥ ३४ ॥
प्रपौण्डरीकं मधुकं मधु चाश्वशकृद्रसे ।
यवासभृङ्गरजसोर्मूलं वा गोशकृद्रसे ॥

गङ्गाधरः—अटरूषकेत्यादि । अटरूषकं वासकमूलत्वक् । त्रयाणां क्काथे शीते शर्करामधुनी प्रक्षिपेत् ॥ ३२ ॥

गङ्गाधरः—अटरूषकेत्यादि । अटरूषकमूलक्काथे प्रियङ्गुसौराष्ट्रमृत्तिका-रसाञ्जनलोध्राणि चत्वारि कल्कीकृत्य मधु च पञ्च क्काथ्यपादांशं प्रक्षिप्य पिबेत् ॥ ३३ ॥

गङ्गाधरः—पद्मकमित्यादि । उत्पलं नीलोत्पलम् पद्मकाष्ठादिलोध्रान्तं सप्तद्रव्यं कल्कीकृत्याटरूषकमूलत्वक्क्काथे प्रक्षिप्य मधु च प्रक्षिप्य पिबेदित्यर्थः । तेनैव विधिना पिबेदित्युक्तेः ॥ ३४ ॥

गङ्गाधरः—प्रपौण्डरीकमित्यादि । पुण्डरीयकाष्ठं यष्टीमधु च कल्कीकृत्याश्वशकृद्रसे पलमितं प्रक्षिप्य मधु च प्रक्षिप्य पिबेत् । अथवा यवासभृङ्गरजसोर्दुरालभाभृङ्गराजयोर्मूलं कर्षमात्रं कल्कीकृत्य गोशकृद्रसे पलमिते

चक्रपाणिः—आटरूषकमृद्वीकेत्यादि कामलाहरं केचिदाहुः । आटरूषकनिर्य्यूह इत्यादि प्रियङ्ग्वादीनां मिलितानां कल्केन कर्षः, क्षौद्रस्य च कर्षो ग्राह्यः परिभाषाबलात् । उक्तञ्चाग्निवेशेन—कर्षं चूर्णस्य कल्कस्य गुडिकानाञ्च सर्व्वशः । द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः । मात्रा क्षौद्रघृतादीनां क्काथस्नेहेषु चूर्णवदिति । अन्ये तु ब्रुवते चूर्णादीनां कर्षमानत्वं स्वतः प्रयोगे भवति । अत्र चाटरूषक्काथः क्काथपरिभाषया कार्य्यः कल्कश्च कल्कपरिभाषया कार्य्यः । एवंकृते भेषजभूयस्त्वं भवति ।

विनीय रक्तपित्तघ्नं पेयं स्यात् तण्डुलाम्बुना ।
युक्तं वा मधुसर्पिर्भ्यां लिह्याद् गोऽश्वशकृद्रसम् ॥ ३५ ॥
खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णानि मधुना लिह्याद् वा रक्तपित्तनुत् ॥
शृङ्गाटकानां लाजानां मुस्तखर्ज्जूरयोरपि ।
लिह्याच्चूर्णानि मधुना पद्मानां केशरस्य च ॥ ३६ ॥
रक्तं लिह्याद् धन्वजानां मधुना मृगपक्षिणाम् ।
सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावतं शकृत् ॥ ३७ ॥
उशीरकालीयकलोध्रपद्मक-प्रियङ्गुकाकट्फलशङ्खगैरिकाः ।
पृथक् पृथक् चन्दनतुल्यभागिकाः सशर्करास्तण्डुलधावनप्लुताः ॥

तण्डुलाम्बुना वा पलमितेन पेयम्। युक्तं वेत्यादि। गोऽश्वयोः प्रत्येकं द्वयोर्वा शकृद्रसं मधुसर्पिर्भ्यां युक्तं लिह्यात् ॥ ३५ ॥

गङ्गाधरः—खदिरस्येत्यादि। कोविदारो रक्तकाञ्चनम्। खदिरादीनां प्रत्येकं पुष्पचूर्णानि कर्षमानानि मधुना लिह्यात्। पद्मानां केशरस्य च चूर्णानि मधुना लिह्यात्। केचित् तु पद्मानां पुष्पचूर्णानि केशरस्य नागकेशरस्य च पुष्पचूर्णानि मधुना लिह्यादित्याहुः ॥ ३६ ॥

गङ्गाधरः—रक्तमित्यादि। धन्वजानां जाङ्गलदेशजानां मृगपक्षिणां मृगाणां पक्षिणां वा रक्तं मधुना लिह्यात्। यद्यपि रक्तं रक्तं वर्द्धयते तथापि विपर्य्यस्तार्थकारित्वात् रक्तपित्तं शमयेत् प्रभावात्। ग्रथिते रक्ते रक्तपित्ते पारावतशकृद् सक्षौद्रं पिबेत् ॥ ३७ ॥

गङ्गाधरः—उशीरेत्यादि। उशीरादयः गैरिकान्ताः अष्टौ प्रत्येकं रक्तचन्दनतुल्यभागेन चूर्णीकृत्य समशर्करया मिश्रीकृत्य तण्डुलोदकप्लुतीकृत्य

तेनाल्पमानस्य कर्षस्य कर्त्तव्यता। तेनैव विधिनेति आटरूषकनिर्य्यूहयुतम्। खदिरस्येत्यादौ बहुवचनान्तत्वाद रक्तपित्तनुदिति विशेषणं पुरुषस्य ज्ञेयम्। धन्वजानामिति जाङ्गलानाम् ॥ ३२—३७ ॥

चक्रपाणिः—उशीरादौ पृथक् पृथगिति वीप्सायां प्रत्येकमुशीराणां चन्दनसमानां प्रयोगं दर्शयति। तथाचाष्टौ प्रयोगा भवन्ति। सशर्करा इति वचनेनात्र शर्करा समभागा एव देया। उक्तं ह्यग्निवेशे—मापिकं हिङ्गु सिन्धूत्थं लवणाद्यास्तु शाणिकाः। सितोपलागुड़क्षाराः सामान्यैषां

रक्तं सपित्तं तमकं पिपासां दाहञ्च पीताः शमयन्ति सद्यः ।
किराततिक्तं क्रमुकं समुस्तं प्रपौण्डरीकं कमलोत्पले च ॥
ह्रीवेरमूलानि पटोलपत्रं दुरालभा पर्पटकं मृणालम् ।
धनञ्जयोडुम्बरवत्सकत्वङ्-न्यग्रोधशालेयवासकत्वक् ॥
तुगा लता केशरतण्डुलीयं ससारिवा मोचरसः समङ्गा ।
पृथक् पृथक् चन्दनयोजितानि तेनैव कल्पेन हितानि तत्र ॥
निशि स्थिता वा स्वरसीकृता वा कल्कीकृता वा मृदिताः शृता वा ।
एते समस्ता गणशः पृथग् वा रक्तं सपित्तं शमयन्त्युदीर्णम् ॥३८॥

पीताः अष्टौ योगा इमे सद्यो रक्तपित्तादिकान् शमयन्ति। किराततिक्तमित्यादि। क्रमुकं गुवाकं, प्रपौण्डरीकं पुण्डरीककाष्ठं, कमलं पद्मम्, उत्पलं नीलोत्पलं, ह्रीवेरं बालकं तस्य मूलानि, मृणालं पद्मानां ह्रस्वमृणालं न तूशीरं तस्योक्तत्वात्, धनञ्जयोऽर्जुनः, शालेयं जम्बूः, यवासकस्य दुरालभायास्त्वक्, तुगा वंशलोचना, लता श्यामलता, केशरं नागकेशरं, सारिवा अनन्तमूलं, समङ्गा वराहक्रान्ता मञ्जिष्ठा वा। एतानि पृथक् पृथक् चन्दनयोजितानि रक्तचन्दनयुक्तमेकैकं सशर्करं तण्डुलधावनतोयेन पीतं तत्र रक्तपित्ते हितमित्यर्थः। एषां कल्पनान्तराण्याह—निशीत्यादि। एते उशीरादयः समस्ताः समङ्गान्ता एकीभूताः, गणशो वा उशीरादिचन्दनान्त एको गणः, किराततिक्तादिचन्दनान्तस्तु अपरो गणः, इति द्वौ गणौ पृथक् पृथक्। अथवा उशीरादयः समस्ताः पृथक् पृथक् एकैकं द्रव्यं वा निशि स्थिताः शीतकषायीकृताः, किंवा स्वरसीकृता

प्रकल्पना। यत्र शर्करायाः प्रक्षेप्यत्वं प्रक्षेपन्यायेनैव शर्करा देया। किरातादयोऽपि पृथक् पृथक्। क्रमुकं पट्टिकालोध्रम्। धनञ्जयोऽर्जुनः। समङ्गा वराहक्रान्ता लज्जालुरिति। चन्दनयोजितानीत्यनेन समचन्दनत्वं प्रत्येकं द्रव्यप्रयोगाणाम्। तेनैव कल्पेनेत्यनेन सशर्करत्वं तण्डुलधावनाप्लुतत्वञ्चोच्यते। निशि स्थिता इत्यनेन किराततिक्तादीनां कल्पनामाह। निशि स्थितेत्यनेन शीतकषाय उच्यते। चूर्णग्रहणेन फाण्टग्रहणं क्रियते। यतः सुश्रुते पाठभेदाच्च पठ्यते। क्षीरं रसः कल्कमथो कषायः शृतश्च शीतश्च तथैव चूर्णम्। कल्पाः षडेते खलु भेषजानां यथोत्तरं ते लघवः प्रदिष्टा इति। एवं चूर्णमेव फाण्टस्थाने ब्रुवते। तत्र तत्र फाण्टग्रहणादेव स पाठः सुश्रुते प्रमाणं तदा चूर्णशब्देन च कल्पान्तरमेवोच्यते। इह तु फाण्टस्य श्रुतत्वात् कृष्णात्रेयादिति पठित एव फाण्टो ग्राह्यः। यदुक्तं 'क्षुण्णस्य सलिलात् तप्तात् मृदितादुद्धृतस्य च। यो रसानां द्रवस्तज्ज्ञैः स फाण्टः संप्रकीर्तितः'। तेनेह द्रवः कल्क एव स चूर्णशब्देनोच्यते फाण्टम्। सम्प्रति व्यस्तसमस्त-

मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन।
बलाजले पर्य्युषिताः कषायाः स रक्तपित्तं शमयत्युदीर्णम् ॥३९॥
वैदूर्य्यमुक्तामणिगैरिकाणां मृच्छङ्खहेमामलकोदकानाम्।
मधूदकस्येक्षुरसस्य चैव पानाच्छमं गच्छति रक्तपित्तम् ॥ ४० ॥
उशीरपद्मोत्पलचन्दनानां पक्वस्य लोष्टस्य च यः प्रसादः।
सशर्करः क्षौद्रयुतः सुशीतो रक्तातियोगप्रशमाय पेयः ॥ ४१ ॥
प्रियङ्गुकाचन्दनलोध्रशारिवा-मधूकमुस्ताभयधातकीजलम्।
समृत्प्रसादं सह षष्टिकाम्बुना सशर्करं रक्तनिवर्हणं परम् ॥४२॥

अथवा कल्कीकृता अथवा मृदिताः फाण्टीकृताः, अथवा शृताः कथिताः, सर्व्वथैव उदीर्णं रक्तपित्तं शमयन्ति ॥ ३८ ॥

गङ्गाधरः—मुद्गा इत्यादि। बलाजले वाट्यालकमूलक्वाथे मुद्गादीनि सप्त द्रव्याणि शीतकषायविधानेन पर्य्युषितानि कारयेत्। तस्मात् निःसृतो यः कषायः स उदीर्णं रक्तपित्तं शमयति ॥ ३९ ॥

गङ्गाधरः—वैदूर्य्येत्यादि। वैदूर्य्यमुक्तादीन्यामलकोदकान्तानि, प्रत्येकशः चूर्णीकृत्य जलेन पानात्। उदकमत्र बालकम्। तथा मधूदकस्य मधुमिश्रित-जलस्य पानात्। तथा इक्षुरसस्य पानात् इत्यन्वयः ॥ ४० ॥

गङ्गाधरः—उशीरेत्यादि। उशीरादीनां चतुर्णां कुट्टितानां जले स्थितानां यः प्रसादः स्वच्छक्वाथः स शर्करामधुयुक्तः पेयः। पक्वस्य अग्नौ क्षिप्त्वाग्नि-वर्णीभूतस्य लोष्टस्य जले निर्व्वापणीकृतस्य यस्तस्य प्रसादः स्वच्छभागः स सुशीतीकृत्य शर्करामधुयुक्तः पेयः ॥ ४१ ॥

गङ्गाधरः—प्रियङ्गुकादीनां धातक्यन्तानां कुट्टितानां जले स्थितानां निःसृत-निर्य्यासानां जलम्। मृत् सौराष्ट्रमृत्। जले प्रक्षेपेण यः प्रसादः स्वच्छरूपः स्यात् तेन सह। षष्टिकतण्डुलोदकशर्कराभ्यां युक्तं कृत्वा पिबेत् ॥ ४२ ॥

प्रयोगमेषामाह। गणश इति तुगादि इति उशीरादिगणश इति च। अत्र च प्रत्येकप्रयोगे समचन्दनत्वं श्रुतम्। तत्र पदान्तः प्रयोगो भवति। तथापि चन्दनस्य भागो देय इति व्याख्यानयन्ति वृद्धाः। बलाजल इति बलासाधितशीतजले। पर्य्युषिताः कषाया इति शीतकषायाः ॥ ३८। ३९ ॥

चक्रपाणिः—वैदूर्य्यादिसहस्थितं जलं वैदूर्य्यादिजलं ज्ञेयम्। उशीरादीनां शीतकषाय इत्यादिना। प्रसाद इति प्रसन्नं जलं ग्राह्यम्। प्रियङ्ग्वादावभयमुशीरम्। मृत्प्रसादमित्यत्र मृत्प्रसादोऽपि

कषाययोगैर्विविधैर्यथोक्तैर्दीप्तेऽनले श्लेष्मणि निर्जिते च ।
यद् रक्तपित्तं प्रशमं न याति तत्रानिलः स्यादनु तत्र कार्य्यम् ॥
छागं पयः स्यात् परमं प्रयोगे गव्यं शृतं पञ्चगुणे जले वा ।
सशर्करं माक्षिकसंप्रयुक्तं विदारिगन्धादिगणैः शृतं वा ॥
द्राक्षाशृतं नागरकैः शृतं वा बलाशृतं गोक्षुरकैः शृतञ्च ।
सजीवकं सर्षभकं ससर्पिः पयः प्रयोज्यं सितया शृतं वा ॥ ४३ ॥
शतावरीगोक्षुरकैः शृतं वा शृतं पयो वाप्यथ पर्णिनीभिः ।
रक्तं निहन्त्याशु विशेषतस्तु यन्मूत्रमार्गात् सरुजं प्रयाति ॥४४॥
विशेषतो विट्पथसंप्रवृत्ते पयो हितं मोचरसेन सिद्धम् ।
वटावरोहैर्वटशुङ्गकैर्वा ह्रीवेरनीलोत्पलनागरैर्वा ॥ ४५ ॥

गङ्गाधरः—एवं कषाययोगैर्यथोक्तैः श्लेष्मणि निर्जितेऽनले च दीप्ते सति यद् रक्तपित्तं न प्रशमं याति तत्रानिल उल्वणः स्यात्, तत्र वातोल्वणे सति अनु पश्चात् कार्य्यं यत् तदाह—छागमित्यादि। छागं पयः केवलं शृतं परमं स्यात्। शर्करामधुयुक्तं सर्व्वत्र बोध्यम्। प्रयोगे पञ्चगुणे जले शृतं क्षीरावशेषेण पक्वं गव्यञ्च पयः शीतीभूतं शर्करायुक्तं परमं स्यात्। अथवा विदारिगन्धादिगणैः शालपर्ण्यादिभिः पञ्चभिश्चतुर्गुणजले शृतं गव्यं पयः छागं वा शर्करामाक्षिकयुक्तं परमं स्यात्। द्राक्षेत्यादि। द्राक्षादिना प्रत्येकेन शृतं गव्यं पयः। तथा जीवकर्षभकचूर्णसर्पिःसिताभियुक्तं गव्यं पयः प्रयोज्यम्। केवलं शृतमावर्त्तितं दुग्धं जीवकादिभिश्चतुर्भिर्युक्तं प्रयोज्यम् ॥ ४३ ॥

गङ्गाधरः—शतावरीत्यादि। शतावरीगोक्षुराभ्यां शृतं गव्यं पयः पर्णिनीभिश्चतसृभिः शृतं पयो वा रक्तं रक्तपित्तम् ऊर्द्ध्वगमधोगञ्चाशु निहन्ति, तत्र विशेषतो मूत्रमार्गप्रवृत्तं सरुजं रक्तमाशु निहन्ति ॥ ४४ ॥

गङ्गाधरः—विशेषत इत्यादि। विट्पथप्रवृत्ते गुदतः प्रवृत्ते रक्ते मोचरससिद्धमेकं वटावरोहसिद्धं द्वितीयं वटशुङ्गसिद्धं तृतीयं ह्रीवेरादिसिद्धं चतुर्थं पयः ॥ ४५ ॥

प्रायश आन्तरं न तु प्रक्षेप्यः। एवं यष्टिकाप्रयोगोऽपि। तत्रानिलः स्यादिति तत्र बलवान् वातः स्यात्। प्रयोग इति अभ्यासे। सजीवकमित्यादौ सजीवकं सर्षभकं शृतं यत् सर्पिः प्रयोज्यं तथा

कषाययोगान् पयसा पुरा वा पीत्वा तु चाद्यात् पयसैव शालीन्।
कषाययोगैरथवा विपक्कमेतैः पिबेत् सर्पिरतिस्रवे च ॥ ४६ ॥
वासां सशाखां सफलां समूलां कृत्वा कषायं कुसुमानि चास्याः।
प्रदाय कल्कं विपचेद् घृतं तत् सक्षौद्रमाश्वेव निहन्ति रक्तम्॥४७

वासाघृतम्।

गङ्गाधरः—कषायेत्यादि। कषाययोगान् अटरूषकमृद्वीकेत्यादुक्तान् पयसा साधितान् पुरा वा पीत्वा तेनैव पयसा शालीनद्यात्। पूर्व्वापेक्षया वाशब्दः। एतैरेवाटरूषकमृद्वीकेत्यादिभिरुक्तैः कषाययोगैः क्वाथकल्करूपैः विपक्वं सर्पिरतिरक्तस्रवे पिवेत् ॥ ४६ ॥

गङ्गाधरः—घृतान्तरमाह—वासामित्यादि। शाखाफलमूलसहितां वासां क्वाथयित्वा चतुर्गुणं क्वाथं दत्त्वा वासायाः कुसुमानि कल्कं प्रदाय घृतं विपचेत्। पूत्वा शीते पादिकं मधु प्रक्षिप्य मेलयित्वा पिवेत्। अत्र पुष्पकल्कं न पादिकं दद्यादाढ्यत्वात्। तदुक्तं हि "शणस्य कोविदारस्य वृषस्य ककुभस्य च। कल्काढ्यत्वात् पुष्पकल्कं प्रस्थे पलचतुष्टयम्" इति। कश्चिदत्र मूलकठिनाकठिनद्रव्यसंघातेऽष्टगुणं जलं दत्त्वाष्टमांशशेषं क्वाथं चतुर्गुणं दत्त्वा। इति वासाघृतं नामेदम् ॥ ४७ ॥

सितया च युक्तया पेयमिति ज्ञेयम्। पर्णिन्यः पर्णिनीचतुष्टयम्। वटशुङ्गोऽविकसित-नववटपल्लवान्। कषाययोगानिति अटरूपकादीन् कल्कीकृतान् पयसा पीत्वेत्यर्थः। एतैरिति वक्ष्यमाणैः किंवा एतैरेव कषाययोगैर्यथायोग्यतया सर्पिः साधनीयम्। अतिस्रव इत्यतिमात्र-रक्तपित्तस्रुतौ ॥ ४० – ४६ ॥

चक्रपाणिः—आर्द्राया एव वासाया विधानानुकथनाद् द्वैगुण्यम्। वासाकुसुमकल्के च केचित् पुष्पकल्कस्यातीवालाभो भवतीति कृत्वा प्रस्थे वृत्ते चतुष्पलं पुष्पकल्कं वदन्ति। सक्षौद्रमिति वचनेन वृत्तात् पादिकत्वं तन्त्रातरप्रत्ययाज्ज्ञेयम्, उक्तं हि—"स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करा" इति। अग्निवेशेऽप्युक्तम्—'मात्रा क्षौद्रघृतानाञ्च स्नेहक्वाथेषु पूर्व्ववत्" इति पादिकम् ॥ ४७ ॥

पलाशवृन्तस्वरसेन सिद्धं तस्यैव कल्केन मधूद्रुमेण * ।
लिह्याद् घृतं वत्सककल्कसिद्धं तद्वत् समङ्गोत्पललोध्रसिद्धम् ॥४८॥
स्यात् त्रायमाणाविधिरेष एव सोदुम्बरे चैव पटोलपत्रे ।
सर्पींषि पित्तज्वरनाशनानि सर्व्वाणि शस्तानि च रक्तपित्ते ॥४९॥
अभ्यङ्गयोगाः परिषेचनानि सेकावगाहाः शयनानि वेश्म ।
शीतो विधिर्वस्तिविधानमग्र्यं पित्तज्वरे यत् प्रशमाय दृष्टम् ॥
तद् रक्तपित्ते निखिलेन कार्य्यं कालञ्च मात्राञ्च पुरा समीक्ष्य ।
सर्पिर्गुड़ा ये च हिताः क्षतानां ते रक्तपित्तं शमयन्ति सद्यः ॥५०

गङ्गाधरः—पलाशेत्यादि। पलाशपत्रवृन्तं प्रसववन्धनं तस्य स्वरसेन चतुर्गुणेन तस्यैव पलाशपत्रवृन्तस्य कल्केन पादिकेन सिद्धं घृतं लिह्यात्। मधूद्रुमेण मधूकपत्रवृन्तस्वरसेन चतुर्गुणेन तस्य कल्केन वत्सककल्केन पादिकेन सिद्धञ्च घृतं लिह्यात्। तद्वत् समङ्गादिभिस्त्रिभिः कल्कीभूतैस्तेषां चतुर्गुण-क्काथेन सिद्धं घृतं लिह्यादित्यन्वयः ॥ ४८ ॥

गङ्गाधरः—स्यादित्यादि। एष एव त्रायमाणाविधिः क्काथकल्काभ्यां त्रायमाणायाः सिद्धं घृतम्। तथोडुम्बरे चैष एव विधिः काठोडुम्बरक्काथकल्काभ्यां सिद्धं घृतम्। तथा पटोलपत्रे चैष एव विधिः पटोलपत्रक्काथकल्काभ्यां सिद्धं घृतम्। एतानि त्रीणि सर्पींषि तथा पित्तज्वरोक्तानि सर्व्वाणि ॥ ४९ ॥

गङ्गाधरः—अथाभ्यङ्गादयः शीतविधिवस्त्यन्ताः पित्तज्वरे प्रदर्शितास्तत् सर्व्वं रक्तपित्ते प्रशमाय दृष्टं निखिलेन कात्स्न्र्येन कार्य्यं पुरा मात्राञ्च कालञ्च

चक्रपाणिः—मधुद्रवेणेति पादिकेन मधुना द्रवीकृतम्। त्रायमाणायाः एवं सर्पिः पूर्ववदिति। उदुम्बरपटोलपत्राभ्याञ्चापरम्। पित्तज्वरनाशनानीत्यनेन सकलचिकित्सितवाक्यानि ज्वरहराणि ज्ञेयानि। घृतानि पित्तज्वरहन्तृतयेहोक्तानि, न जीर्णज्वरहन्तृतया। अन्ये तु यान्येव जीर्णज्वर-हराणि घृतानि तान्येव पित्तज्वरहराणि भवन्ति। तेषान्तु रूक्षं तेज इति ज्वरविषयतया समानत्वेन निर्दिष्टपित्तविषयत्वम्। प्रदेशान्तरेऽपि जले दशगुणे साध्यं त्रायमाणाचतुःपलमित्यादि यावत् पित्तगुल्मं विसर्पांश्च पैत्तिकज्वरमिति। तथा त्रायन्तिकामित्यादि यावद् वातरक्ते क्षतक्षीणे विसर्पे पैत्तिके ज्वरे इत्यादीनि सकलचिकित्सिते पित्तज्वरघृतानि कर्त्तव्यानि। अभ्यङ्गयोगादयः सर्व्वे ये दाहज्वरहरा उक्ताः पित्तज्वरप्रशमकत्वेन तानादिशन्ति ॥ ४८—५० ॥

* मधूद्रुमेणेत्यत्र मधुद्रवेण इति चक्रसम्मतः पाठः ।

कफानुबन्धे रुधिरे सपित्ते कण्ठागमे स्याद् ग्रथिते प्रयोगः।
युक्तस्य युक्त्या मधुसर्पिषोश्च क्षारस्य चैवोत्पलनालजस्य॥
मृणालपद्मोत्पलकेशराणां तथा पलाशस्य तथा प्रियङ्गोः।
तथा मधूकस्य तथा शणस्य क्षाराः प्रयोज्या विधिनैव तेन॥५१॥
शतावरीदाड़िमतिन्तिड़ीकं काकोलिमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूरकस्य घृतं पचेत् क्षीरचतुर्गुणेन॥
कासज्वरानाहविबन्धशूलं तद्‌ रक्तपित्तञ्च घृतं निहन्यात्।
यत् पञ्चमूलैरथ पञ्चभिर्वा सिद्धं घृतं तच्च तदर्थकारि॥५२॥

इति शतमूलादि घृतम्।

समीक्ष्य कार्य्यम्। ये च सर्पिर्गुड़ाः क्षतानां हिता उरःक्षताधिकारे वक्ष्यन्ते, ते च रक्तपित्तं सद्यः शमयन्ति॥ ५०॥

गङ्गाधरः—कफानुबन्धे इत्यादि। कण्ठागमे कण्ठदेशे ग्रथितरूपेण सरक्तपित्ते कफयुक्ते स्थिते सति, युक्तस्य उत्पलनालजस्य क्षारस्य मधुसर्पिषोः युक्त्या युक्तः प्रयोगः कार्य्यः। पद्मादीनां नालं दग्ध्वा क्षारं कृत्वा तत्क्षारस्य प्रयोगः। तथा मृणालपद्मनीलोत्पलनागकेशराणि दग्ध्वा क्षारं कृत्वा तस्य प्रयोगः। तथा पलाशपुष्पस्य क्षारप्रयोगः। तथा प्रियङ्गोः पुष्पक्षारस्य प्रयोगः। तथा मधूकस्य पुष्पक्षारप्रयोगः। तथा शणस्य पुष्पक्षारप्रयोगः। एते च क्षारास्तेनैव विधिना मधुसर्पिषोर्युक्त्या अतुल्याभ्यां मधुसर्पिर्भ्यां युक्ताः प्रयोज्याः॥ ५१॥

गङ्गाधरः—शतावरीत्यादि। शतावर्य्यादीनि फलपूरकस्य मातुलुङ्गस्य मूलञ्च पिष्ट्वा कल्कीकृत्य। यदित्यादि। पञ्चमूलैः पञ्चभिः स्वल्पवृहत्तृणकण्टकिवल्लीपञ्चमूलैः कल्कीभूतैर्जले च क्वाथयित्वा तस्मिंश्चतुर्गुणे। वाशब्दः पूर्व्वघृतापेक्षया॥ ५२॥

चक्रपाणिः—रुधिरे सपित्ते इति रक्तपित्ते। मधुसर्पिषोर्युक्तस्येति मात्रया युक्तस्य क्षारस्य प्रयोगः, युक्तिशब्दो मात्रावचने कल्कार्थप्रतिपादकः। यद्यपि क्षारस्तीक्ष्ण उक्तस्तथापि कण्ठस्थकफविलयार्थम् उत्पलनालादिकृतगुणानुविधानात् क्षारो दीयत एव। एवं रक्तपित्तहरत्वप्रभावादुत्पलनालादिक्षारो भवत्येव, येन तीक्ष्णानि द्रव्याणि परित्यज्योत्पलनालान्येव क्षारार्थमाह। उक्तञ्च वार्त्तिके क्षीरस्वामिदत्तेन—'शीतं जहाति भूयिष्ठं दग्धं सपदि सोमता'मिति चेद् दृष्टो हि भस्मन्यपि गुणोदय इति॥ ५१॥

चक्रपाणिः—फलपूरको बीजपूरकः। पञ्च पञ्चमूलानि रसायनोक्तानि। तदर्थकारीत्यनेनानन्तरोक्तशतावर्य्यादिघृतानुकारि॥ ५२॥

कषाययोगा य इहोपदिष्टास्ते चावपीड़े भिषजा प्रयोज्याः ।
घ्राणात् प्रवृत्तं रुधिरं सपित्तं यदा भवेन्निःसृतदुष्टदोषम् ॥
रक्ते प्रदुष्टे ह्यवपीड़बन्धे दुष्टप्रतिश्यायशिरोविकाराः ।
रक्तं सपूयं कुणपैः सगन्धं स्याद् घ्राणनाशः क्रिमयश्च दुष्टाः ॥५३॥
नीलोत्पलं गैरिकशङ्खयुक्तं सचन्दनं स्यात् तु सिताजलेन ।
नस्यं तथाम्रास्थिरसः समङ्गा सधातकी मोचरसः सलोध्रः ॥
द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्व्वास्वरसस्य चैव ।
यवासमूलानि पलाण्डुमूलं नस्यं तथा दाड़िमपुष्पतोयम् ॥

गङ्गाधरः—कषायेत्यादि। घ्राणात् प्रवृत्तं सपित्तं रुधिरं यदा निःसृतदुष्टदोषं निःशेषेण वहिःसृता दुष्टदोषाः पित्तकफवाता यस्य तद्रूपं स्यात् तदा य इह रक्तपित्ते अटरूषकमृद्वीकेत्यादिना प्रोक्ताः कषायास्ते चावपीड़े नस्यविधया भिषजा प्रयोज्याः। ननु कथं यदा भवेन्निःसृतदुष्टदोषं तदा प्रयोज्या इत्यत आह—रक्त इत्यादि। हि यस्मात्। प्रदुष्टे रक्ते सति अवपीड़बन्धे कृते दुष्टप्रतिश्यायादयः स्युस्तस्मात् निःसृतदुष्टदोषं यदा तदा ते प्रयोज्या इति भावः॥ ५३॥

गङ्गाधरः—अपरान् योगानाह—नीलोत्पलमित्यादि। चन्दनान्तं सर्व्वं नीलोत्पलादिकं कल्कीकृत्य सितामिश्रितजलेन नस्यम्। तथाम्रास्थिमज्जस्वरसेन नस्यम्। तथा सधातकीसमङ्गानस्यम्। तथा सलोध्रो मोचरसो नस्यम्। तथा द्राक्षारसनस्यम्। तथा इक्षुरसस्य नस्यम्। तथा क्षीरस्य नस्यम्। तथा दूर्व्वारसस्य च नस्यम्। तथा यवासेत्यादि दुरालभामूलानि, पलाण्डोश्च मूलं नस्यम्। तथा दाड़िमपुष्पं क्वाथयित्वा तत्क्वाथजलं नस्यम्।

चक्रपाणिः—घ्राणप्रवृत्तरक्तपित्तचिकित्सितमाह—कषाययोगा इत्यादि। उशीरकालीयकेत्यादिना ये कषाययोगा उक्तास्ते घ्राणप्रवृत्ते रक्तपित्ते न देयाः। अवपीडश्च द्रव्यमापोथितं कृत्वा पीडयित्वा रसो दीयते यः स उच्यते। अयञ्च निःसृते रक्तदोषे सति देयः। विपर्य्यये दोषमाह—

पियालतैलं मधुकं पयश्च सिद्धं घृतं माहिषमाजकञ्च।
आम्रास्थिपूर्व्वैः पयसा च नस्यंससारिवैः स्यात् कमलोत्पलैश्च ॥५४

भद्रश्रियं लोहितचन्दनञ्च प्रपौण्डरीकं कमलोत्पले च।
उशीरवानीरजलं मृणालं सहस्रवीर्य्या मधुकं पयस्या ॥
शालीक्षुमूलानि यवासगुन्द्रा मूलं नलानां कुशकाशयोश्च।
कुचन्दनं शैवलमप्यनन्ता कालानुसार्य्या तृणमूलमृद्धिः ॥
मूलानि पुष्पाणि च वारिजानां प्रलेपनं पुष्करिणीमृदश्च।
उडुम्बराश्वत्थमधूकलोध्राः कषायवृक्षाः शिशिराश्च सर्व्वे ॥
प्रदेहकल्पे परिषेचने च तथावगाहे घृततैलसिद्धौ।
रक्तस्य पित्तस्य च शान्तिमिच्छन् भद्रश्रियादीनि भिषक् प्रदद्यात्॥५५

पियालेत्यादि। पियालफलास्थि पीड़यित्वा तैलं यत् तस्य नस्यम्, मधुकञ्च जले पक्त्वा तत्क्वाथजलं नस्यम्, पयो गव्यं माहिषमाजकञ्च घृतञ्च, आम्रास्थिपूर्व्वैराम्रास्थ्यादिभिर्मधुकान्तैर्द्रव्यैः कल्कैः पयसा च चतुर्गुणेन सिद्धं पक्वं नस्यम्। तथा कमलोत्पलैः ससारिवैः कल्कैः पयसा सिद्धं माहिषमाजकञ्च घृतं नस्यं स्यात् ॥ ५४ ॥

गङ्गाधरः भद्रश्रियमित्यादि। भद्रश्रियं श्वेतचन्दनम्। वानीरं वेतसम्। सहस्रवीर्य्या दूर्व्वाभेदः। पयस्या क्षीरकाकोली। गुन्द्रा गुन्द्रारोचनी, कम्पिल्लकमित्यर्थः। नलकुशकाशानां मूलम्। कुचन्दनं वकम इति लोके। शैवलं शैवालम्। कालानुसारी श्यामलता। तृणमूलं गन्धतृणमूलम्। ऋद्धिः स्वनामख्याता। वारिजानां पद्मादीनां मूलानि पुष्पाणि च पुष्करिणीमृदश्च प्रलेपनम्। प्राधान्येनोडुम्बरादय उक्ता अपरे च कषायवृक्षा वटादयः शिशिराः शीतवीर्य्याः शीतस्पर्शाः सर्व्वे प्रदेहादिषु कल्पेषु भद्रश्रियादीनि प्रदद्यात्। तत्र घृततैलसिद्धौ क्वाथकल्कतया प्रदद्यात्, अवगाहे परिषेके च क्वाथतया, प्रदेहे कल्कतया ॥५५॥

रक्त इत्यादि। सिताजलेनेति शर्कराजलेन नीलोत्पलादीनि अवपीड़ितः स्यात्। पियालतैलमित्यादौ पियालतैलं मधुककल्केन पयसा द्रवेण साध्यम्। घृतं माहिषमित्यादावाम्रास्थिपूर्व्वैराम्रास्थिरसः। रस मार्गेत्यादियोगोक्तः शारिवाकमलोत्पलानि च कल्कः पयो द्रवः ज्ञेयम्। भद्रश्रियादीनि

धारागृहं भूमिगृहं सुशीतं वनञ्च रम्यं जलवातशीतम्।
वैदूर्य्यमुक्तामणिभाजनानां स्पर्शाश्च दाहे शिशिराम्बुशीताः॥
पत्राणि पुष्पाणि च वारिजानां क्षौमञ्च शीतं कदलीदलञ्च।
आच्छादनार्थं शयनासनानां पद्मोत्पलानाञ्च दलाः प्रशस्ताः॥
प्रियङ्गुकाचन्दनरूषितानां स्पर्शाः प्रियाणाञ्च वराङ्गनानाम्।
दाहे प्रशस्ताः सजलाः सुशीताः पद्मोत्पलानाञ्च कलापवाताः॥
सरिद्ध्रदानां हिमवद्दरीणां चन्द्रोदयानां कमलाकराणाम्।
मनोऽनुकूलाः शिशिराश्च सर्व्वाः कथाः सरक्तं शमयन्ति पित्तम्॥५६

गङ्गाधरः—धारागृहमित्यादि। धारागृहं जलोद्वमनयन्त्रेण जलधारापातो यस्मिन् गृहे तत्। भूमिगृहं मृद्गृहं, वनञ्च जलवाताभ्यां शीतं रम्यञ्च। वैदूर्य्यादीनां शिशिरवस्तूनां शीतीकृतभाजनस्पर्शा इति भावः। वारिजानां पद्मादीनां पत्राणि पुष्पाणि च क्षौमवस्त्रञ्च शीतं शय्यासनाच्छादनार्थं प्रशस्तं, तथा पद्मोत्पलानां दलाश्च शय्याद्याच्छादनार्थं प्रशस्ताः।

प्रियङ्गुकेत्यादि। प्रियङ्गुश्वेतचन्दनघर्षणपङ्कलिप्ताङ्गीनां प्रियाणां न त्वप्रियाणां वराङ्गनानां घनवर्त्तुलस्थूलस्तनीमृदुमसृणशीतस्निग्धनातिकृशनातिस्थूलाङ्गीनां नवयौवनेन गर्व्वितमदनोन्मत्तानां स्त्रीणां स्पर्शा दाहे प्रशस्ताः। तथा पद्मोत्पलानां सजलाः सुशीताश्च स्पर्शाः प्रशस्ताः। कलापवाताः मयूरपिच्छव्यजनकृतवाताश्च दाहे प्रशस्तास्तथा सरितां नदीनां ह्रदानां हिमवद्दरीणां महानदीनां चन्द्रोदयानां ज्योत्स्नासम्बन्धिनां कमलाकराणां सरसाञ्च वाताः दाहे प्रशस्ताः। सर्व्वा मनोऽनुकूलाः शिशिराश्च कथाः सरक्तं पित्तं शमयन्ति॥ ५६॥

प्रलेपार्थमाह। अमृणालमुशीरमेद एव सुगन्धिः कन्दलः कालानुसारि शीतलम्। पद्मोत्पलानाञ्च कलापवाता इति पद्मोत्पलसमूहजलकृतवाता इत्यर्थः। शिशिराश्च सर्व्वा इत्यनेन लेपविधानम्॥ ५३—५६॥

तत्र श्लोकौ।

हेतुं वृद्धिं संख्यास्थानं लिङ्गं पृथक् प्रदुष्टस्य।
मार्गौ साध्यमसाध्यं याप्यं कार्य्यं क्रमञ्चैव॥
पानान्नमिष्टमेव च वर्ज्यं संशोधनञ्च शमनञ्च।
गुरुरुक्तवान् यथावच्चिकित्सितं रक्तपित्तस्य॥ ५७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने रक्तपित्तचिकित्सितं नाम चतुर्थोऽध्यायः॥ ४॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोकावित्यादि। प्रदुष्टस्य रक्तपित्तस्येत्यन्वयः। गुरुरात्रेयो भगवान् पुनर्व्वसुः। यथावद् यथायोग्यमित्यर्थः॥ ५७॥

गङ्गाधरः—अध्यायं समापयति—अग्निवेशेत्यादि॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ चिकित्सितस्थाने षष्ठस्कन्धे रक्तपित्तचिकित्सितजल्पाख्या चतुर्थी शाखा॥ ४॥

चक्रपाणिः—हेतुमित्यादिनाध्यायार्थसंग्रहः। एतच्चाध्यायोक्तं व्यक्तमेव॥ ५७॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेद-दीपिकायां चरकतात्पर्य्य-टीकायां रक्तपित्तचिकित्सितं नाम चतुर्थोऽध्यायः॥ ४॥

## पञ्चमोऽध्यायः ।

अथातो गुल्मचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

सर्व्वप्रजानां पितृवच्छरण्यः पुनर्व्वसुर्भूतभविष्यदीशः ।
चिकित्सितं गुल्मनिवर्हणार्थं प्रोवाच सिद्धं वदतां वरिष्ठः ॥ २
विट्श्लेष्मपित्तातिपरिस्रवाद् वा तैरेव वृद्धैरपि पीड़नाद् वा ।
वेगैरुदीर्णैर्विहतैरधो वा वाह्याभिघातैरतिपीड़नाद् वा ॥

<u>गङ्गाधरः</u>—उद्देशानुक्रमात् रक्तपित्तचिकित्सितानन्तरं गुलमचिकित्सितमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

<u>गङ्गाधरः</u>—सर्व्वेत्यादि । भूतभविष्यदीश इति भूतभविष्यज्ज्ञातुमीशः । वदतामाप्तानां वरिष्ठः ॥ २ ॥

<u>गङ्गाधरः</u>—विडित्यादि । विट्श्लेष्मपित्तानामतिशयेन परिस्रवात् वमनविरेचनाभ्यामतिनिर्हरणात् । तैर्विट्श्लेष्मपित्तैर्वृद्धैरेवातिपीड़नात् कोष्ठे वायोर्यथावच्चलनरोधात् । वाशब्दैरेकशः कारणत्वं ज्ञापितम् । वेगैरुदीर्णैरुपस्थितैः पुरीषादीनां वेगैरधोविहतैरप्रवर्त्तनेन निरोधितैर्वा हेतुभिः । वाह्याभिघातैः दण्डाद्यभिहननैरतिपीड़नाद्वा न त्वतिपीड़नाजनकैर्दण्डाद्यभिघातैः ।

<u>चक्रपाणिः</u>—निदानोक्तक्रमानुरोधाद्रक्तपित्तमनु गुलमचिकित्सितं ब्रूते । सर्व्वप्रजानामित्यादिना गुरोः स्तुतिः । धर्म्मजनकतया तथोत्तरग्रन्थश्रद्धेयतया भूते भविष्ये चाव्याहतज्ञानतया प्रभुरेव भवतीति भूतभविष्यदीश इति सिद्धम् । साध्याव्यभिचारि सर्व्वमेव चिकित्सितं यद्यपि सिद्धमेव वक्तव्यं तथाप्यत्र प्रकरणे स्तुत्यर्थं सिद्धपदं ज्ञेयम् ॥ १ । २ ॥

<u>चक्रपाणिः</u>—अत्र यद्यपि निदाने एव गुल्मस्य हेतुलक्षणान्युक्तानि, तथापि प्रकरणवशात् पुनस्तान्यभिधीयन्ते । निदानोक्ताद् विशेषश्च कश्चिदुच्यते । निदाने वायोरेव कोपेन वृद्धैर्हेतुभिरावरणस्य

रुक्षान्नपानैरतिसेवितैर्वा शोकेन मिथ्याप्रतिकर्म्मणा वा।
विचेष्टितैर्वा विषमातिमात्रैः कोष्ठे प्रकोपं समुपैति वायुः ॥ ३ ॥
कफश्च पित्तञ्च स दुष्टवायुरुद्धूय मार्गान् विनिबध्य ताभ्याम्।
हृन्नाभिपार्श्वोदरवस्तिशूलं करोत्यधो याति न बद्धमार्गः ॥ ४ ॥
पक्वाशये पित्तकफाशये वा स्थितः स्वतन्त्रः परसंश्रयो वा।
स्पर्शोपलभ्यः परिपीड़नत्वाद् गुल्मो यथादोषमुपैति नाम ॥५॥

अतिसेवितैः रुक्षान्नपानैर्न त्वल्पसेवितैः। शोकेन वात्तिशयेन न त्वल्पेन। मिथ्याप्रतिकर्म्मणा यस्य व्याधेर्यत् प्रतिकर्म्म तस्यायथावत्करणेन। विषमातिमात्रैर्विचेष्टितैर्वा कदाचिन्न्यूनं कदाचिदधिकं यद्विचेष्टितं तद् विषमं विचेष्टितम्। यच्च सर्व्वदैवातिशयेन चेष्टते तदतिमात्रं चेष्टितम्। अन्यथा विषमत्वेनैवातिमात्रस्य लाभः स्यात् कुतः पुनरतिमात्रपदम्। कोष्ठ इत्यामाशयादौ। एभिर्हेतुभिः स दुष्टवायुः कफश्च पित्तञ्च उद्धय स्वस्थानादूर्द्ध्वं नीत्वा ताभ्यामुद्धृताभ्यां कफपित्ताभ्यां मार्गान् स्वस्य स्वभावतो गतेः पथो विनिबध्य बद्धान् कृत्वा हृन्नाभ्यादिषु शूलं करोति बद्धमार्गत्वान्न चाधो याति ॥ ३।४ ॥

गङ्गाधरः—नन्वेवं चेत् तदा वातज एव गुल्म एक एव भवति, च पित्तादिजः स्यादित्यत आह—पक्वाशये इत्यादि। स्थितः स्वतन्त्र इति यस्तथाविधः सन् स्वतन्त्रः परानधीनः संस्तिष्ठति स वातगुल्म इति कथ्यते। यः परसंश्रयः पित्तसंश्रयः संस्तथाविधो वायुतिष्ठति पित्ताशये स पित्तगुल्मः। यः कफसंश्रयः संस्तथाविधो वायुः कफाशये तिष्ठति स कफगुल्मः। पित्तकफोभयसंश्रयो वा यस्तथाविधो वायुः सर्व्वाशये तिष्ठति स सन्निपातगुल्म इत्यतो द्वन्द्वजगुल्मानामसम्भवः इति भावः।

उक्तम्। अतिपीडनैर्वेत्यनेन तदेवोच्यते। तैरेवेतीह श्लेष्मपित्तैः। मिथ्याप्रतिकर्म्म मिथ्याकृतं वमनादिकं पञ्चकर्म्म॥ ३ ॥

चक्रपाणिः—कफञ्च पित्तञ्चेत्यादिना संप्राप्तिमाह—इयञ्च शोणितजगुल्मव्यतिरिक्तानां चतुर्णां संप्राप्तिः। तत्र कफञ्च पित्तञ्चेति कदाचित् पित्तं कदाचित् कफं कदाचिद्‌द्वयमपि। तत्र कफजे स्वतन्त्रो वृद्धः कफः। पित्तजे स्वहेतुवृद्धं स्वतन्त्रं पित्तम्। सन्निपाते च यथोक्तगुणौ पित्तकफावुद्धूय गुल्मं वायुः करोति। वातगुल्मे स्वतन्त्रः प्रकुपितो वायुः प्रकृतिस्थौ पित्तकफावुद्धूय गुल्मं करोतीति ज्ञेयम्। मार्गानित्यूर्द्ध्वाधस्तिर्यङ्मार्गान्। अधो न यातीत्यत्र कारणं लुप्त-

वस्तौ च नाभ्यां हृदि पार्श्वयोर्वा स्थानानि गुल्मस्य भवन्ति पञ्च ।
पञ्चात्मकस्य प्रभवन्तु तस्य वक्ष्यामि लिङ्गानि चिकित्सितञ्च ॥६॥
रुक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥७॥

पित्तसंश्रये कफानुबन्धे वाते कफसंश्रये पित्तानुबन्धे वा वातेऽनुबन्धरूपेण वाते पित्तकफौ समाबप्रधानतया संश्रितौ। त्रयो द्वन्द्वजातवन्तोऽपि न गण्यन्तेऽनुबन्धेन गणनं ह्याचार्य्येन क्रियते, भेषजार्थन्तु तानपि प्रतिसन्दध्यादिति। नन्वस्य गुल्मस्य किमसाधारणस्वरूपचिह्नमित्यत आह—स्पर्शत्यादि। स्पर्शेन गुडीवत् गुड़काकार उपलभ्यते इति गुल्मो नाम यथादोषमुक्तरूपेण वातजादिनाम उपैति ॥ ५ ॥

गङ्गाधरः—ननु कुत्र कुत्र स्थाने गुल्मो भवतीत्यत आह—वस्तावित्यादि। पार्श्वयोरिति द्विवचनात् पार्श्वद्वयं स्थानद्वयं बोध्यम्। पञ्चेति नियमार्थं न त्वधिकम्। नन्वेवञ्चेत् गुल्मः किंलिङ्ग इत्यत आह—पञ्चात्मकस्येत्यादि। पञ्चात्मकस्य वातपित्तकफसन्निपातात्तवात्मकस्य ॥ ६ ॥

गङ्गाधरः—वातजादेः प्रत्येकं निदानमाह रुक्षान्नेत्यादि। रुक्षान्नादयो हेतवः सामान्येन विदग्धश्लेष्मपित्तातिपरिस्रवैरित्यादिभिर्ये उक्तास्त एवात्र वातगुल्महेतुत्वेन पुनरुच्यन्ते, नान्ये विशिष्टाः केचित् सन्ति ॥ ७ ॥

निर्द्दिष्टं, तेनोर्द्ध्वं न याति तिर्य्यङ् न यातीति ज्ञेयम्। किंवा वायोः कोष्ठस्याधोगमनमेव प्रायो भवति तेन तन्निषेधः साक्षादुक्तः। इतरमार्गगमननिषेधस्तु समानन्यायतया लभ्यते। आशये इति पक्वाशये। पित्ताशयामाशययोर्भागे एव स्वतन्त्रः। स्वतन्त्र इति वातगुल्मे, परसंश्रय इति पक्वाशये। पित्ताशयकफाशययोः कफजे पैत्तिके निचयगुल्मे च परसंश्रयो भवतीति ज्ञेयम्। परिपीड़ितत्वाद् गुल्म इत्यनेन यथाज्ञा अपि लतासमूहादौ संघातेन गुल्म इति व्यपदिशन्ति, तथेहापि सङ्घातेनावस्थानाद् गुल्मविधानं व्यपदिशेयुः। यथादोषमिति यथोल्वणं दोषम्। नामेति च संज्ञा वातजोऽयं पित्तजोऽयमित्यादिका ॥ ४ । ५ ॥

चक्रपाणिः—गुल्मस्थानमाह—वस्तावित्यादि। वस्त्यादिषु पञ्च स्थानान्येकरूपाणि भवन्ति। वस्त्यादीनीति पञ्चैव, तथापि पञ्चग्रहणमधिकस्थाननिषेधार्थम्। रौधिरस्यापि गुल्मस्य गर्भाशयस्य अपि पार्श्वस्थितत्वेन पार्श्वे एवाशये भवति। अन्ये च रौधिरव्यतिरिक्तानामेतत्पञ्चस्थानत्वं रौधिरस्य

यः स्थानसंस्थानरुजाविकल्पं विड़्वातसङ्गं गलवक्त्रशोषम्।
श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांसशिरोरुजञ्च॥
करोति जीर्णेऽभ्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च।
वातात् स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते॥ ८॥
कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष-क्रोधातिमद्यार्कहुताशसेवा।
आमाभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम्॥९॥
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्य्यति भोजने च।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम्॥१०॥

गङ्गाधरः—वातजस्य गुल्मस्य रूपाण्याह—य इत्यादि। स्थानविकल्पः—वस्त्यादिपञ्चसु स्थानेषु कदाचित् कुत्रचित् वर्त्तते न नियमत एकस्मिन् स्थाने। संस्थानविकल्पः—गुड़िकाकारस्य स्वरूपस्य कदाचित् ह्रस्वत्वं कदाचित् दीर्घत्वं कदाचित् वर्त्तुलत्वं कदाचित् पृथुलमेवमादिरूपः। रुजाविकल्पः—कदाचिद् वेदनायाः स्वल्पत्वं कदाचिन्महत्त्वं कदाचित् तीव्रत्वं कदाचिदनुपलभ्यमानत्वम् एवमादिः। श्यावारुणत्वं शरीरस्य। शिशिरज्वरं शीतज्वरम्। जीर्णे भुक्तान्ने जीर्ण सति। भुक्ते भुक्तमात्रे। अत्रोपशयानुपशयावाह—न चेत्यादि। रूक्षादि-विपरीतानि चोपशेरते इत्यर्थो लभ्यते॥ ८॥

गङ्गाधरः—कट्वम्लेत्यादि। आमाभिघात आमगर्भपातः। रुधिरं द्वितीय धातुर्न त्वार्त्तवम्॥ ९॥

गङ्गाधरः—पित्तजचिह्नमाह—ज्वरः पिपासेत्यादि। महच्छूलं स्यात्। भोजने च जीर्य्यति शूलं भवति। व्रणवत् व्रणशोथवत् स्पर्शासहः॥ १०॥

गर्भाशय एव विशिष्टं स्थानं भवति। संप्रति पृथक्त्वेन हेतुलिङ्गचिकित्साविधानं प्रतीयते। पञ्चात्मकस्येत्यादि पञ्चस्वरूपस्य कारणानि पञ्च वातपित्तकफसन्निपातरौधिररूपाणि। प्रभवत्यस्मा-दिति प्रभवः कारणम्। तिष्ठत्यस्मिन्निति स्थानमाकृतिः। रुजा पीड़ा। एषां विकल्पः क्षणेऽन्यथा-त्वम्। शिशिरज्वरः शीतज्वरः। करोतीति पूर्व्वेण सम्बध्यते। जीर्णेऽभ्यधिकं प्रकोपं समुपैति। यश्च न चोपशेते इति न सुखं जनयति॥ ६—८॥

चक्रपाणिः—कट्वम्लेत्यादिना पित्तगुल्ममाह। आमाभिघातशब्देनामाभिघातः पित्तजनको ज्ञेयः।

शीतं गुरु स्निग्धमचेष्टनञ्च संपूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसम्भवस्य सर्व्वस्तु दुष्टो निचयात्मकस्य ॥११॥
स्तैमित्यशीतज्वरगात्रसाद-हृल्लासकासारुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥१२॥
निमित्तलिङ्गान्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलञ्च ।
व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥१३॥

गङ्गाधरः—कफजहेतुमाह—शीतमित्यादि । शीतं वीर्य्यतः । अचेष्टनं सर्व्वदावस्थानम् । सम्पूरणं दध्यादिद्रवम् । सर्व्वस्तु वातपित्तकफानां गुल्मानां य इमे हेतव उक्ताः सर्व्व एव तेषां व्यस्तः समस्तो वा निचयात्मकस्य सन्निपातात्मकस्य हेतुरित्यर्थः ॥ ११ ॥

गङ्गाधरः—कफजलिङ्गमाह—स्तैमित्येत्यादि । शीतज्वरेतिवचनेन शीते लाभे शैत्यमिति देहस्य शीतताख्यापनार्थम् । कठिनोन्नतत्वं गुल्माकारस्य ॥ १२ ॥

गङ्गाधरः—अथानुबन्धतो द्वन्द्वत्वाङ्गीकारात् चिकित्साविशेषार्थमाह—निमित्तेत्यादि । द्वयोर्दोषयोर्वातपित्तयोर्वा वातकफयोर्वा पित्तकफयोर्वा उक्तनिमित्ताधिक्याल्पत्वाभ्यामुक्तलिङ्गाधिक्याल्पत्वाभ्यां दोषयोर्द्वयोर्बलाबलमुपलभ्य व्यामिश्रलिङ्गान् द्विदोषलिङ्गान् अपरानुद्देशाधिकान् त्रीन् वातपित्तज-

रुधिरञ्च दुष्टमित्यनेन दुष्टाद् रुधिरान्मलभूतस्य पित्तस्य जन्म दर्शयति । शीतमित्यादि कफगुल्महेतुलक्षणकथनम् । अत्रान्तरे हेतुत्रयकथनावसाने दोषत्रयमेलकस्य कार्य्यमाह—सर्वस्तु दुष्टो निचयात्मकस्येति । निचयात्मकः सान्निपातिकः । सान्निपातिकश्च निचयरूपगुल्मजन्यतया व्यपदेशेन विकृतिविषमसमवायात् संयोगमहिम्ना च दर्शयति ॥ ९—११ ॥

चक्रपाणिः—औत्पातिकं निचयगुल्ममभिधाय प्रकृतश्लेष्मगुल्मलक्षणमाह—स्तैमित्यमित्यादि । द्विदोषजगुल्महेतुलिङ्गातिदेशार्थमाह निमित्तेत्यादिना । दोषबलाबलञ्चेत्यनेनैकोल्वणं द्वन्द्वं ग्राहयति । त्रीनिति च वातपित्तपित्तकफवातश्लेष्मजान् । औषधकल्पनार्थमित्यनेन विकृतिविषमसमवायत्वात् स्वविलक्षणकार्य्यकर्त्तृतया प्रत्येकदोषे गुल्मा अभिनिविष्टा एव प्रत्येकोक्तचिकित्सामेलकेन चिकित्स्या इत्येतन्मात्रोपदर्शनार्थम् । एतेनाष्टौदर्य्योक्तपञ्चसंख्याविरोधोऽपि न भवति । द्वान्द्विकगुल्मभेदस्याप्रयोजनत्वात् सन्निपातगुल्मे तु प्रत्येकदोषजलक्षणादतिरिक्तानि लक्षणानि तत्प्रभावश्चासाध्यत्वादिर्वक्तव्य एवेति युक्तं तस्य भेदेनोपादानम् । ज्वरे अपि द्वन्द्वज्वराणां पृथक् लक्षणयोगेन द्वान्द्विकत्वं युक्तमिति ज्ञेयम् ॥ १२ । १३ ॥

**महारुजं दाहपरीतमश्मवद्-घनोन्नतं शीघ्रविदाहदारुणम्।**
**मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत्॥१४॥**
**ऋतावनाहारतया भयेन विरुक्षणैर्वेगविनिग्रहैश्च।**
**संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रिया रक्तभवोऽभ्युपैति॥१५॥**
**यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात् सशूलः समगर्भलिङ्गः।**
**स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः॥१६**

वातकफजपित्तकफजान् गुल्मानादिशेत्। कथमित्यत आह—औषधकल्पनार्थमिति। दोषानुबन्ध्यत्वानुबन्धत्वापेक्षो हि भेषजकल्पनाविधिरिति॥ १३॥

गङ्गाधरः—सन्निपातगुल्मलिङ्गमाह—महारुजमित्यादि। अश्मवत् प्रस्तरखण्डवत् घनश्चोन्नतश्च तम्। शीघ्रविदाहदारणमिति शीघ्रं पच्यते शीघ्रञ्च विदीर्य्यते। विदाहो विशेषेण क्रियाविधौ व्याख्यास्यते। असाध्यत्वकारणं निदाने व्याख्यातम्॥ १४॥

गङ्गाधरः—रक्तगुल्महेतुमाह—ऋतावित्यादि। ऋतौ इति स्त्रीणां रजसि मासान्ते प्रवर्त्तमानेऽनाहारेण भयेन च विरुक्षणैराहारविहारैः संस्तम्भनैश्चाहारविहारैरुल्लेखनैश्च वमनकरैश्च योनिदोषैर्वक्ष्यमाणैरभिर्हेतुभिर्निदानस्थाने गुल्मनिदाने चोक्तहेतुभिश्च स्त्रिया रक्तभवो गुल्मः आर्त्तवजो गुल्मोऽभ्युपैति। न तु द्वितीयधातुर्यो रक्तनामा तद्भवो गुल्मो भवति॥ १५॥

गङ्गाधरः—अस्य चिह्नमाह—यः स्पन्दत इत्यादि। यो गुल्मः पिण्डितः पिण्डाकार एव स्पन्दते न चाङ्गैः करचरणादिभिः। चिराच्च यः सशूलः स्पन्दते न तु हठात् वा निःशूलो वा। गर्भस्तु चरणकराद्यङ्गैरचिरात् निःशूलः स्पन्दते इति भेदे सति समगर्भलिङ्गो निदाने व्याख्यातः। स रौधिरो गुल्मः

चक्रपाणिः—महारुजमित्यादिना सन्निपातजलक्षणान्याह—केचिदेतल्लक्षणव्यतिरिक्तलक्षणस्तु यः प्रत्येकदोषजोक्तसंसर्गमात्रलक्षणः प्रकृतिसमसमवायसन्निपातजन्यः स साध्य एव गुल्मो वदन्ति। ऋतावित्यादिना शोणितगुल्ममाह—ऋतावित्ति पुष्पदर्शनकाले। स्त्रियमित्यनेन कुमारीमतिवृद्धाञ्च निषेधयति। पिण्डित एवेति गर्भस्त्वङ्गैः स्पन्दते। समगर्भलिङ्गः स्तनपीनत्वादिसमानं गर्भलिङ्गं भवति। स्त्रीभव एवेति पुरुषस्य गुल्मोत्पत्तिं निषेधयति। मासे व्यतीते दशमे चिकित्स्य इति प्रभावाद्दशमासातिक्रम एवास्य सुखा चिकित्सा भवति। अर्व्वाक् चिकित्सायान्तु शोणितातिस्रुतिगर्भाशयोपघातादि स्यात्। यदुच्यते गर्भसमानलिङ्गत्वेनास्य दशममासादूर्द्ध्वं रुधिरगुल्मावधारणं भवति तेनार्व्वाक्चिकित्सात्र नोक्ता। अत्र दशमासातिक्रमेणापि गर्भावस्थानदर्शनात्। उक्तं

क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम् ।
प्रवक्ष्याम्यत ऊर्द्धञ्च योगान् गुल्मनिवर्हणान् ॥ १७ ॥
रुक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम् ।
बद्धविण्मारुतं स्नेहैरादितः समुपाचरेत् ॥
भोजनाभ्यञ्जनैः पानैर्निरुहैः सानुवासनैः ।
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ॥

स्त्रीभव एव स्त्रीरक्तभव एव । रौधिरो न त्वन्यरक्तभवो रौधिरः । स्त्रिया रक्तभवो ऽभ्युपैतीत्युक्तेः स्त्रीशब्देन रक्तस्य रजःसंज्ञकत्वं ख्यापितं द्वितीयधातुरक्तस्य व्यावृत्तिश्च कृता । यस्तु स्त्रीशब्देनातिवृद्धबालानां व्यावृत्तिं व्याख्यातवान् तन्न युक्तं तयोरार्त्तवासम्भवात् । एवं भेदेऽपि गर्भार्त्तवगुल्मयोर्दशमे मासे व्यतीतेऽयमार्त्तवगुल्मश्चिकित्स्यः सुखसाध्यत्वात् । अर्व्वाग् दशममासादसुखसाध्यत्वाच्च । उक्तं हि रक्तगुल्मे पुराणत्वं सुखसाध्यत्वलक्षणमिति न तु गर्भाशङ्कया, दशममासादूर्द्ध्वमपि प्रसवकालवचनात् । नवमदशमैकादशद्वादशमासेषु प्रसूयतेऽत ऊर्द्ध्वं वैकारिक इति सुश्रुतवचनाच्च । सर्व्वमन्यत् साध्यासाध्यादिकं निदानस्थाने प्रोक्तम् ॥ १६ ॥

गङ्गाधरः—इति गुल्मनिदानमुक्त्वा चिकित्सितमाह—क्रियाक्रममित्यादि । अत ऊर्द्ध्वं गुल्मिनां गुल्मनाशनं क्रियाक्रमं प्रवक्ष्यामि । अतः क्रियाक्रमादूर्द्ध्वं योगान् प्रवक्ष्यामि । गुल्मनाशनमित्युक्तेऽपि पुनर्गुल्मिनामिति वचनं रोगान्तरोपद्रवरूपस्य च गुल्मस्य नायं क्रियाक्रमस्तस्य च तत्तत्प्रधानरोगीयः क्रियाक्रमो गुल्माविरोधेन कार्य्य इति ख्यापनार्थम् । योगाश्च सर्व्वत्रैव गुल्मे यथादोषमुक्ता इति ख्यापनार्थं पुनर्गुल्मनिवर्हणानित्युक्तम् ॥ १७ ॥

गङ्गाधरः—रुक्षेत्यादि । रुक्षजं व्यायामजं वा वातिकं स्नेहैर्यथायोग्यं घृतादिभिः स्नेहकर्म्मभिः भोजनाद्यैरादितः प्रथमतः समुपाचरेत् । स्नेहक्रियानन्तरं यत् कर्त्तव्यं तदाह—स्निग्धस्येत्यादि । सम्यक् स्निग्धस्य

हि—पुष्टो यदा वर्षगणैरपि स्यात् तया संपिण्डितस्य गर्भलक्षणाद्विरुद्धलक्षणयुक्तम् । तेन दशममासादर्व्वागपि शोणितगुल्मावधारणं भवत्येव । तस्मात् पूर्वोक्तमेव साधु ॥ १४—१६ ॥

चक्रपाणिः—अत ऊर्द्ध्वमिति क्रियाक्रमाभिधानानुत्तरम् । स्नेहैरिति चतुर्भिरपि स्नेहैः ।

स्रोतसां मार्द्दवं कृत्वा जित्वा मारुतमुल्वणम्।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ १८ ॥
स्नेहपानं हितं गुल्मे विशेषेणोर्द्ध्वनाभिजे।
पक्काशयगते वस्तिरुभयं जठराश्रये ॥ १९ ॥
दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्च्चसोः।
बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रयोजयेत् ॥
पुनःपुनः स्नेहपानं निरूहाः सानुवासनाः।
प्रयोज्या वातगुल्मेषु कफपित्तानुरक्षिणा ॥ २० ॥
कफवाते जितप्राये पित्तं शोणितमेव च।
यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते ॥

गुल्मिनः स्वेदो भिषजा गुल्मशान्तये कर्त्तव्यः। कथं स्वेदः शक्नोति तदाह— स्रोतसामित्यादि। विबन्धं पित्तकफाभ्यां यो विबन्धस्तम् ॥ १८ ॥

गङ्गाधरः—ननु भोजनादिरूपैः स्नेहैः सर्व्वानेव वातजान् गुल्मानुपाचरेत् किं न वेत्यत आह—स्नेहपानमित्यादि। ऊर्द्ध्वनाभिजे नाभेरूर्द्ध्वे हृदि वा पार्श्वयोर्वा जाते वातगुल्मे विशेषेण स्नेहपानं हितम्। पक्काशयगते नाभेरधोजाते वस्ताविति यावत् वातगुल्मे वस्तिः सानुवासनो निरूहः। उभयं जठराश्रये नाभिजे चामाशयगते च भवति नाभिजः, तत्र स्नेहपानं वस्तिश्चेत्युभयं हितम्। ततो दीप्तेऽग्नौ सति मूत्रवर्च्चसोर्विबन्धे च सति वातिके बृंहणान्नादीनि योजयेत्। न केवलं बृंहणान्नादीनि योजयेत्, उक्तरूपेण पुनः स्नेहपानसानुवासन-निरूहादयो योज्याः। तर्हि कफपित्तानुबन्धे तयोरविरोधेन निरनुबन्धे कफपित्ते अनुरक्षणं क ंशीलेन भिषजा न तु तयोः क्षयेण। यदा कफवातौ जितप्रायौ प्रायेण जितौ भवतस्तदा पित्तं शोणितञ्चैवं यदि कुप्यति

स्नेहोपयोगानाह—भोजनेत्यादि। विशेषेणेति वचनेन न सर्व्वं सर्व्वस्य। विशेषतस्तु स्नेहपानं नाभेरूर्द्ध्वं जाते गुल्मे। पक्काशयगत इति पक्काशयसन्धिपार्श्वगते। वस्तिरिति निरूहोऽनुवासनञ्च। जठराश्रय इति नाभिगते नाभिपार्श्वगतेऽपि। चोभयमपि स्नेहवस्ती। वात-गुल्मेति वचनाद्वातप्रधानेषु गुल्मेष्वपि यथोक्तं कर्त्तव्यं दर्शयति। उक्तं हि गुल्मिनामनिलशान्ति-रुपायैरित्यादि। कफपित्तानुरक्षिणेति तथा स्नेहः कर्त्तव्यो यथा कफपित्ते न वर्द्धेते। वात-चिकित्सया वृद्धकफपित्तरक्तचिकित्सामाह— कफवातेत्यादि। जितप्राय इति वचनात् कफादिवृद्धौ

यथोल्वणस्य दोषस्य तत्र कार्य्यं भिषग्जितम् ।
आदावन्ते च मध्ये च मारुतं परिरक्षता ॥ २१ ॥
वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि ।
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत् तु तम् ॥ २२ ॥
शूलानाहविबन्धेषु गुल्मे वातकफोल्वणे ।
वर्त्तिं चूर्णानि गुडिकाः कफवातहरा हिताः ॥ २३ ॥
पित्तं वा यदि संवृद्धं सन्तापं वातगुल्मिनः ।
कुर्य्याद् विरेच्यः स भवेत् सस्नेहैरानुलोमिकैः ॥ २४ ॥
गुल्मो यद्यनिलादीनां कृते सम्यग्भिषग्जिते ।
न प्रशाम्यति रक्तस्य सोऽवसेकात् प्रशाम्यति ॥ २५ ॥

अथवा तस्य पित्तस्य शोणितस्य वा चिकित्सिते क्रियमाणे यदि पित्तकफौ कुप्यतस्तदा यथोल्वणस्य दोषस्य उल्वणं दोषमनतिक्रम्य तत्र वातगुल्मे भिषग्जितं चिकित्सितं कार्य्यम्, किंवादौ च मध्ये चान्ते च सर्व्वदैव मारुतं रक्षता भिषजा न तु कदाचिदपि मारुतं क्षपयता। अथ यदि वातगुल्मे कफो वृद्धो भूत्वाग्निं हत्वा अरुचिहृल्लासादीन् जनयेत् तदा तं गुल्मिनमुल्लिखेत वमनेन कफं निर्हरेत्। वर्त्ति फलवर्त्तिं, चूर्णगुडिकाश्च वक्ष्यन्ते। अथ यदि वातगुल्मे पित्तं संवृद्धं भूत्वा सन्तापं ज्वरदाहादिकं कुर्य्यात् तदा सस्नेहैरानुलोमिकैर्व रेचनिकैर्विरेच्यः स्यात्। एवं सम्यक् कृतेऽनलादीनां भिषग्जिते यो गुल्मो न प्रशाम्यति स वातगुल्मो रक्तस्यावसेकात् सिराव्यधेन रक्तमोक्षात् प्रशाम्यति॥ १९—२५ ॥

वातो जितप्रायो न भवति तथा वातचिकित्सा कार्य्या। यथोल्वणस्येति वातचिकित्सयोल्वणो दोषो भवति कफादिः तस्य चिकित्सा कर्त्तव्या। तस्यामपि चिकित्सायां वातवृद्धिर्यथा न भवति तथा कर्त्तव्यमिति दर्शयन्नाह—आदावित्यादि ॥ १७—२१ ॥

चक्रपाणिः—गुल्मे यद्यपि वमनं निषिद्धं तथाप्यवस्थायां वमनं तदपवादरूपं दर्शयन्नाह—वातगुल्म इत्यादि। वर्त्तय इति फलवर्त्तयः। आनुलोमिकैरितिवचनेन तीव्रविरेचनं वातकोपनं निषेधयति। रक्तस्रावणे गुल्मप्रदेशे एव शृङ्गादिना रक्तग्रहणं यकृत्साधारणत्वाद् गुल्मस्य

स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम्।
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम्॥ २६॥
पित्तं वा पित्तगुल्मं वा ज्ञात्वा पक्वाशयस्थितम्।
कालविन्निर्हरेत् सद्यः सतिक्तैः क्षीरवस्तिभिः॥
पयसा वा सुखोष्णेन सतिक्तेन विरेचयेत्।
भिषगग्निबलापेक्षी सर्पिषा तैल्वकेन वा॥ २७॥
तृष्णाज्वरपरीदाह-शूलस्वेदाग्निमार्दवे।
गुल्मिनामरुचौ वापि रक्तमेवावसेचयेत्॥
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम्।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक्॥ २८॥

गङ्गाधरः—पित्तगुल्मक्रियाक्रममाह—स्निग्धोष्णेनेत्यादि। स्निग्धोष्णेन कारणेन उदिते जाते पैत्तिके गुल्मे स्रंसनं विरेचनं हितम्। रूक्षोष्णेन तु कारणेन सम्भूते पैत्तिके गुल्मे सर्पिः परं प्रशमनम्। यदि पित्तं किंवा पित्त-गुल्मः पक्वाशये तिष्ठति तदा कालवित् विरेचनार्हावस्थादिकाले सतिक्तैः क्षीर-वस्तिभिः तिक्तरसद्रव्य-क्षीराभ्यां विरेचनवस्तिं विधाय दत्त्वा सद्यस्तत्क्षणं पित्तं निर्हरेत्। अथवा सतिक्तेन सुखोष्णेन पयसा विरेचयेत्। अग्निबलञ्च अपेक्ष्य सर्पिषा तैल्वकेन वा तिल्वकघृतेन विरेचयेत्। पैत्तिकगुल्मिनां तृष्णादिषु रक्तमेवावसेचयेत्। छिन्नमूलाः स्थितिप्रदेशे संलग्ना गुल्माः शारीरोष्मरक्तसम्बन्धेन व्रणशोथवत् विपच्यन्ते, यद्येवंविरेचनक्षीरवस्त्यादिभिः पित्तादिनिर्हरणे कृते सिराव्यधनेन रक्तमोक्षे कृते स्थितिप्रदेशे संलग्नतारूपं मूलं छिन्नं येषां गुल्मानां भवति ते गुल्माः न विदह्यन्ते न पच्यन्ते क्षयं यान्ति। कस्मात्? हि यस्मात् रक्तं व्यम्लतां पाकं याति तच्च [illegible] सिरा-वेधेन मोक्षणान्नास्ति तदा रुक् च पाकादिकं नास्ति॥ २६—२८॥

बाहुशिराव्यधो न कर्तव्यः। रक्ताश्रयत्वादेव गुल्मस्येतरचिकित्साप्रशमो ज्ञेयः। रक्ताधिष्ठानस्वक्क गुल्मपाकप्रस्तावदर्शनार्थम्। रूक्षोष्णेन तु संभूते पैत्तिके इति योज्यम्; रूक्षोष्णतयैव पित्तं भवति। तैल्वकं सर्पिरुदरे वक्तव्यम्। तृष्णाज्वरेत्यादिना गुल्मविदाहोपक्रमे रक्तावसेचनं कृतं चेत् छिन्नमूला विदह्यन्ते इति च्छिन्नशोणिता इत्यर्थः। छिन्नमूलत्वमेव स्फुरयति—रक्तं हीत्यादि। तच्च नास्तीति शोणितमवसेकात् नास्तीत्यर्थः। तस्य रक्तस्याभावाद् रुगपि नास्ति।

हृतदोषं परिम्लानं जाङ्गलैस्तर्पितं रसैः ।
समाश्वस्तं सशेषार्त्तिं सर्पिरभ्यासयेत् पुनः ॥ २६ ॥
रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य च ।
यदि गुल्मो विदह्येत शस्त्रं तत्र भिषग्जितम् ॥ ३० ॥
गुरुः कठिनसंस्थानो गूढ़मांसोत्तराश्रयः * ।
अविवर्णः स्थिरः स्निग्धो ह्यपक्को गुल्म उच्यते ॥ ३१ ॥
दाहशूलार्त्तिसंक्षोभ-स्वप्ननाशारुचिज्वरैः ।
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत् ॥ ३२ ॥
विदाहलक्षणे गुल्मे † वहिस्त्वङ्के समुन्नते ।
श्यावे सरक्तपर्य्यन्ते संस्पर्शे वस्तिसन्निभे ॥

गङ्गाधरः—ततः किं कार्य्यमित्यत आह—हृतदोषमित्यादि। दोषनिर्हरणेन परिम्लानं क्षीणकान्त्यादिकं पित्तगुल्मिनं जाङ्गलैर्मांसरसैस्तर्पितं तृप्तीकृतं सशेषार्त्तिं समाश्वस्तं सम्यगाश्वासेनाश्वस्तीकृतं पुनः सर्पिरभ्यासयेत् ॥ २९ ॥

गङ्गाधरः—यदि चैवं क्रियां वैद्यो नोपलभते तदा रक्तपित्तयोरतिवृद्धत्वाच्च गुल्मः पित्तगुल्मो यदि विदह्येत पच्येत तत्र पक्वे पित्तगुल्मे शस्त्रं तस्य शस्त्रेण दारणं भिषग्जितम् ॥ ३० ॥

गङ्गाधरः—ननु को गुल्मः पक्वः को न पक्व इति कथं विज्ञायते इत्यत आमपक्वलक्षणमाह—गुरुरित्यादि। गुल्मस्याकारः कठिनः गूढ़मांसमुत्तरं प्रधानमाश्रयो यस्य स तथा। अविवर्णो वहिःप्रदेशे गात्रसवर्णः। स्निग्धश्चिक्कणः ॥३१॥

गङ्गाधरः—दाहेत्यादिना पच्यमानलक्षणम्। अस्यामवस्थायां पाकार्थं पाचकद्रव्यैस्तं गुल्ममुपनाहयेत्। संक्षोभेति गुल्मप्रदेशस्य निम्नभावेन विस्तारता ॥३२॥

गङ्गाधरः—विदाहेत्यादिना पक्वलक्षणम्। विदाहलक्षणे दाहशूलादिमति गुल्मे वहिर्वाह्यतस्त्वङ्के समुन्नते संस्पर्शे कृते वस्तिजलपूर्णदृतिस्तत्तुल्ये।

हृतदोषमिति। शोणितावसेकेन हृतदोषम्। परिम्लानमिति क्षीणक्रियम्। क्रियामिति शोणितावसेकरूपां क्रियाम्। विदह्येत पच्येत। गुरुः कठिनेत्यादिना अपक्वपच्यमानपक्वगुल्मलक्षणमाह। गूढमांसश्चासौ आन्तराश्रयश्चेति गूढ़मांसांतराश्रय इति। स्थिर इति उन्नतः ॥ २२–३१ ॥

चक्रपाणिः—तमुपनाहयेदिति उष्णद्रव्यव्यक्तेन लेपं पाचनार्थं दद्यादित्यर्थः। विदाहलक्षण

* गूढ़मांसान्तराश्रयः इति पाठान्तरम्।   † त्वन्ये इति वा पाठः।

निपीड़ितोन्नते स्तब्धे सुप्ते तत्पार्श्वपीड़नात्।
तत्रैव पिण्डिते शूले सम्पक्वं गुल्ममादिशेत्॥
तत्र धान्वन्तरीयाणामधिकारः क्रियाविधौ।
वैद्यानां कृतयोग्यानां व्यधशोधनरोपणे॥ ३३॥

निपीड़ितः समुन्नतो भवति स्तब्धश्च। सुप्ते सति यत्पार्श्वेन शेते तत्पार्श्व-पीड़नात् तत्रैव पार्श्वे पिण्डितो भवति शूलश्च यदि भवति, तथाविधे गुल्मे सति तं गुल्मं सम्यक्‌माादिशेत्। ननु सुश्रुते गुल्मो न पच्यते विद्रधिस्तु पच्यते इति दृश्यते; तद् यथा निदानस्थाने विद्रधिनिदाने।—"विशेषमथ वक्ष्यामि स्पष्टं विद्रधिगुल्मयोः। तुल्यदोषसमुत्थानाद् विद्रधेर्गुल्मकस्य च। कस्मान्न पच्यते गुल्मो विद्रधिः पाकमेति च। गुल्माकाराः स्वयं दोषा विद्रधिर्मांसशोणिते। विवरानुगतो ग्रन्थिरप्सु बुद्बुदको यथा। एवं-प्रकारो गुल्मस्तु तस्मात् पाकं न गच्छति। मांसशोणितबाहुल्यात् पाकं गच्छति विद्रधिः। मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति। गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते। विद्रधिः पच्यते तस्माद् गुल्मश्चापि न पच्यते।" इति। तथा गुल्मचिकित्सितेऽपि गुल्मवत्त्वाद् विशालत्वाद् गुल्म इत्यभिधीयते। स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः। अन्तः सरति यस्माच्च न पाकमुपयात्यतः। इति; कस्मादत्र गुल्मपाकवचनं न विरुध्यते इति चेत् न, यो हि गुल्मो गूढ़मांसोत्तराश्रयो न चान्तःस्रोतोविवरेऽनुसरति निश्चल एव वर्त्तते स यदि विरेचनादिक्रियया नोपक्रम्यते तदा रक्तपित्तयोरतिवृद्धत्वात् पाकमेति। य पुनर्न गूढ़मांसोत्तराश्रयो भवति स्वे दोषे तिष्ठति सरति चान्तःस्रोतोविवरेऽप्स्विव बुद्बुदवत् देहसंलग्नत्वाभावेन नायं पाकमेति, इत्यभिप्रायेणाचार्य्यद्वयवचनमविरुद्धं बोध्यम्। ननु तर्हि सुश्रुतस्य शल्याङ्गन्यूनतापत्तिर्गूढ़मांसोत्तराश्रयो हि नोक्त इति चोभयोस्तुल्य-दोषसमुत्थानादन्तर्विद्रधिरेव सोऽभिधीयते गुल्मवच्चिकित्सा च तुल्या नातो वस्तुतो हानिरिति। अथ पक्के गुल्मे क्रियाविधौ येषां भिषजामधिकारः श्रेष्ठः

त्वन्ये इति दाहादिष्वन्येष्वित्यर्थः। वहिस्तुङ्ग इति वाह्यत उन्नते। समुन्नते इति समत्वेनोन्नते न निम्नोच्चविभागेन। निपीड़ितानन्तरमुन्नते निपीड़ितोन्नते। पीड़नात् स्तब्धे इति वर्त्तुले। सुप्ते इति मन्दवेदने इत्यर्थः। धान्वन्तरीयाणामिति धन्वन्तरितन्त्राध्यायिनां शल्यविदामित्यर्थः। कृताः शस्त्रकर्म्मणि योगा यैस्ते कृतयोगाः। गुल्मस्य च पाकः सुश्रुते निषिद्धः "स यस्मात

अन्तर्भागस्य चाप्येतत् पच्यमानस्य लक्षणम् ।
हृत्क्रोड़शूनतान्तःस्थे वहिःस्थे पार्श्वनिर्गतिः ॥ ३४ ॥
पक्वः स्रोतांसि संक्लिद्य वहत्यूर्द्ध्वमधोऽपि च ।
स्वयंप्रवृत्तं तं दोषमुपेक्षेत हिताशनैः ॥
दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ।
तत ऊर्द्ध्वं हितं पानं सर्पिषः सविशोधनम् ॥

तानाह—तत्रेत्यादि । धान्वन्तरीयाणां धन्वन्तरिवंश्यानां वैद्यानां कृतयोग्यानाम् अभ्यासेन शस्त्रकर्म्मादिषु कृता योग्यता समर्थता यैस्तेषां यथा अधिकारः न तथा भारद्वाजीयानां मुनीनामकृतयोग्यानां भिषजामधिकारः ॥ ३३ ॥

गङ्गाधरः—लक्षणान्तरमप्याह—पच्यमानस्यास्य अन्तर्भागस्य अन्तर्गतस्य पच्यमानस्य गुल्मस्य एतदपि लक्षणम् । तद् यथा—अन्तःस्थे गुल्मे पच्यमाने हृत्क्रोड़शूनता हृदयोदरस्फीतता, वहिःस्थे तु गुल्मे पार्श्वनिर्गतिः पार्श्वतो निर्गमः स्फीतरूपेण निर्गच्छति ॥ ३४ ॥

गङ्गाधरः—पक्वः सन् गुल्मः स्रोतांसि संक्लिद्य ऊर्द्ध्वमधोऽपि वहति पूयमिति शेषः । यदि पक्वे गुल्मे दोषः पूयरूपः स्वयं प्रवर्त्तते, तदा स्वयंप्रवृत्तं तं दोषं हिताशनैर्दशाहं द्वादशाहं वा पूयस्रावावसानप्रायं यावत् अन्यान् उपद्रवान् रक्षन् यथान्ये तूपद्रवा न भवन्ति तथा सन् उपेक्षेत न रोपणार्थं भेषजं दद्यात् । ततो निःशेषपूयस्रावप्रायं दृष्ट्वा ऊर्द्ध्वं सर्पिःपानं पूयशोधनञ्च भेषजं हितम् ।

आत्मनि चयं गच्छत्यप्स्विव बुद्बुदः । अन्तः सरति यस्माच्च न पाकमुपयात्यतः" इति । तथापीह कृतवास्तुपरिग्रहस्य गुल्मस्य पाक उच्यते । यस्तु अकृतवास्तुपरिग्रहः स न पच्यत इति इहापि अनुगतम् । यस्त्वकृतवास्तुपरिग्रहतया पच्यत इति उच्यते विद्रधित्वेन पाको जायत इति संज्ञामात्रेण विसंवादः । अन्तर्भागस्येति कोष्ठमध्यस्थितस्य । यद्यपि सर्व एव गुल्मः कोष्ठस्थस्तथापीह वहिरुन्नतश्रितो न भवति । स इह तत्स्थोऽभिप्रेतः । हृत्क्रोड़शूनतान्तःस्थ इति अन्तःस्थपाके हृत्क्रोड़स्य शूनता भवति । वहिःस्थे पार्श्वनिर्गतिरिति पार्श्वनिर्गतिर्गुल्म एव दृश्यते । केचित् तु श्लोकमेनं न पठन्ति । व्रजत्यूर्द्ध्वमिति सशब्देनान्तःस्थेनाभिप्रेतः । उपेक्षेत हिताशनैरिति हिताशनास्तिष्ठेत् न किञ्चिद् भेषजं कुर्य्यात् । रक्षन् उपद्रवान् इत्युपद्रवेभ्यो

शुद्धस्य तिक्तं सक्षौद्रं प्रयोगे सर्पिरिष्यते।
अन्तर्विद्रधिवच्चात्र कार्य्यें शोधनरोपणे ॥ ३५ ॥
शीतलैर्गुरुभिः स्निग्धैर्गुल्मे जाते कफात्मके।
अवम्यस्याल्पकायाग्नेः कुर्य्याल्लङ्घनमादितः ॥ ३६ ॥
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥ ३७ ॥
उष्णैरेवोपचर्य्यश्च कृते वमनलङ्घने।
योज्यश्चाहारसंसर्गो भेषजैः कटुतिक्तकैः ॥ ३८ ॥

शुद्धस्येत्यादि। निःशेषण पूयनिःसरणात् शुद्धस्य तस्य भेषजप्रयोगे कर्त्तव्ये तिक्तं सर्पिः पञ्चतिक्तादिघृतं मधुना देयमिष्यते। इत्येवं शोधनं रोपणं विद्रधिवत्। इति पित्तगुल्मचिकित्सा ॥ ३५ ॥

गङ्गाधरः—अथ कफगुल्मस्य क्रियाक्रमः—शीतलैरित्यादि। शीतगुरुस्निग्धैः कारणैर्जाते कफात्मके गुल्मे अवम्यस्याल्पकायाग्नेः गुल्मिनो लङ्घनम् आदितः भिषगुपदिष्टं कुर्य्यात् ॥ ३६ ॥

गङ्गाधरः—मन्दोऽग्निरित्यादि। वेदना यातना मन्दाल्पा। तद् गुरु च स्तिमितमार्द्रमिव च कोष्ठं यस्य तस्य भावः। स वमनोपगः वमनमुपगन्तुं शीलवान्, तं वामयेदिति भावः। इति तु न वामयेत् तैमिरिकम् न गुल्मिनमिति सामान्यतो वमनप्रतिषेधापवादः। वमनश्चास्य मृदु कार्य्यम् ॥ ३७ ॥

गङ्गाधरः—उष्णैरेवोपचर्य्यश्च स शीतगुरुस्निग्धकफगुल्मी। शीतादिविपरीतं ह्यौष्ण्यम्। कटुतिक्तकैरिति तिक्तो रसो यद्यपि शीतवीर्य्यत्वान्न शीतविपरीतः तथापि गुरुस्निग्धविपरीतत्वेन भूयसा लघुरुक्षत्वेन शीतवीर्य्यकार्य्याविजयात

ज्वरादिभ्यो रक्षन्नित्यर्थः। सविशोधनमिति विशेषेण सर्पिःपानम्। तिक्तकमिति तिक्तद्रव्यसाधितम् ॥ ३३—३५ ॥

सानाहं सविबन्धश्च गुल्मं कठिनमुन्नतम् ।
दृष्ट्वादौ स्वेदयेद् युक्त्या स्विन्नश्च विलयेद् भिषक् ॥ ३९ ॥
लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ।
घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ॥ ४० ॥
स्थानादपसृतं ज्ञात्वा कफगुल्मं विरेचनैः ।
सस्नेहैर्वस्तिभिर्वापि शोधयेद् दाशमूलिकैः ॥ ४१ ॥
वृद्धेऽग्नावनिलेऽमूढ़े * ज्ञात्वा सस्नेहमाशयम् ।
गुड़िकाचूर्णनिर्य्यूहाः प्रयोज्याः कफगुल्मिनाम् ॥ ४२ ॥
कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ।
जयेत् कफकृतं गुल्मं क्षारारिष्टाग्निकर्म्मभिः ॥ ४३ ॥

उपयुज्यते । स्वेदयेदिति कम्बुकादिना गुल्मप्रदेशे सर्व्वाङ्गे च स्वेदः कार्य्यः । स्विन्नं सम्यक्स्निग्धश्च तं सानाहादिकं कफगुल्मं विलयेत् ॥ ३८ । ३९ ॥

गङ्गाधरः—विलयनश्च यथा कार्य्यं तदाह—लङ्घनेत्यादि । एवमुक्तरूपेण लङ्घनादौ कृतेऽग्नौ सन्धुक्षिते सति । सक्षारकटकं षड़षणयवक्षारसिद्धं घृतं पञ्चकोलयवक्षारसिद्धं वा घृतं पातव्यम् । तत् स्थानात् नियतसंलग्नावस्थानप्रदेशात् अपसृतं चलितं ज्ञात्वा विरेचनः सस्नेहैर्दाशमूलिकैः दशमूलक्काथतैलाभ्यां मिश्रिताभ्यां कृतैर्वस्तिभिर्वा शोधयेत् ॥ ४० । ४१ ॥

गङ्गाधरः—एवमुपाचरेण वृद्धेऽग्नौ सति वाते चामूढ़ेऽधोगे आशयं सस्नेहं ज्ञात्वा गुड़िकादयः प्रयोज्याः । तत्र कृतमूलादिलक्षणं कफगुल्मं क्षारादिभिर्जयेत् ॥ ४२ । ४३ ॥

चक्रपाणिः—शीतलैरित्यादिना कफगुल्ममनुसृत्य चिकित्साक्रममाह—सक्षारकटुकमिति । अपसृतमिति चलितम् । दाशमूलकैरिति दशमूलकृतवस्तयो वस्तिसूत्रीये वक्तव्याः । मूढ़े इति संमूर्च्छिते आवृते इति यावत् । गुडिकादय इति वक्तव्या गुड़िकाः । क्षारारिष्टाग्निकर्म्मभिरित्यत्र क्षारस्यात्र शस्ततया शल्यतन्त्रे एव तावदभिधानमत्रापि च ग्रहण्यध्याये क्षारा वक्तव्याः । अग्निकर्म्मात्रापि गुल्मस्थाने वक्तव्यम् । पराधिकारे विस्तरानभिधानात् ॥ ३६—४३ ॥

* मन्देऽग्नावनिले मूढ़े इति चक्राधृतः पाठः ।

दोषप्रकृतिगुल्मन्तु * योगं बुद्धा कफोल्वणे।
बलदोषप्रमाणज्ञः क्षारं गुल्मे प्रयोजयेत् ॥
एकान्तरं द्व्यन्तरं वा त्र्यहं विश्राम्य वा पुनः।
शरीरबलदोषाणां वृद्धिक्षपणकोविदः ॥
श्लेष्माणं मधुरं स्निग्धं मांसक्षीरघृताशिनः।
छित्त्वा भित्त्वाशयात् क्षारः क्षारत्वात् क्षारयत्यधः ॥ ४४ ॥
मन्देऽग्नावरुचौ सात्म्ये मद्ये सस्नेहमश्नताम्।
प्रयोज्याश्चामशुद्ध्यर्थमरिष्टाः कफगुल्मिनाम् ॥ ४५ ॥
लङ्घनोल्लेखनस्वेदैः सर्पिःपानैर्विरेचनैः।
वस्तिभिर्गुड़िकाचूर्ण-क्षारारिष्टगणैरपि ॥

गङ्गाधरः—दोषेत्यादि। बलदोषप्रमाणज्ञो भिषक् बलप्रमाणं दोषपरिमाणञ्च जानन् भिषक् दोषं प्रकृतिं गुल्मञ्च योगञ्च बुद्धा दोषबलं प्रकृतिं गुल्मबलं, योगस्य क्षारयोगो यो योज्यस्तस्य वीर्य्यं बुद्धा गुल्मे उक्तरूपे क्षारं प्रयोजयेत्। केन प्रकारेण क्षारं योजयेदित्यत आह—एकान्तरमित्यादि। शरीरादीनां वृद्धेः क्षपणस्य ह्रासस्य च कोविदः विद्वान् क्षारं सेवमानस्य मांसक्षीरघृताशिनो हि कफगुल्मे मधुरं स्निग्धं हि श्लेष्माणं क्षारत्वात् क्षार आशयात् तत्कफस्थानात् विच्छेदित्वात् क्षारयेत्। क्षारो हि रूक्षोष्णः स्निग्धमधुरविपीतः ॥ ४४ ॥

गङ्गाधरः—मन्देऽग्नावित्यादि। तत्र यदि मन्दाग्निररुचिश्च वर्त्तते, मद्यञ्च सात्म्यं तस्य वर्त्तते, तदा सस्नेहं सघृतादिस्नेहमश्नतां घृतादिस्नेहसहिताशनस्यारिष्टाश्च शुद्ध्यर्थं प्रयोज्याः ॥ ४५ ॥

गङ्गाधरः—लङ्घनेत्यादि। एवमुपक्रान्ते लङ्घनादिभिररिष्टगणान्तैर्यस्य

चक्रपाणिः—क्षारस्य महात्ययत्वेन दोषादिज्ञानपूर्व्विकामन्तरान्तरप्रवृत्तिमाह—दोषेत्यादि। तत्र क्षारानुगुणे दोषः कफः, प्रकृतिः श्लैष्मिकी, गुल्मश्च स्थिरः, ऋतुर्हेमन्तः शिशिरो वा। एकान्तरमित्यादि। दोषादिषु क्षारानुगुणेष्वेकान्तरं विश्राम्य स्नेहादिगुणेषु द्व्यन्तरं विश्राम्य गुणेषु त्र्यहं विश्राम्य। 'शरीरबलदोषाणां वृद्धिक्षपणकोविदः' इति शरीरस्य बलस्य दोषस्य च क्षयवृद्ध्योः पण्डितः। मांसक्षीरघृताशिन इत्यनेन मांसादिभोजनेन क्षारयोगे शरीरबलरक्षा

* "गुल्मन्तु" इति चक्रः।

श्लैष्मिकः कृतमूलत्वाद् गुल्मो यस्य न शाम्यति ।
तस्य दाहो हृते रक्ते शरलोहादिभिर्हितः ॥ ४६ ॥
तैक्ष्ण्यादौष्ण्याच्च शमयेदग्निर्गुल्मे कफानिलौ ।
तयोः शमाच्च संघातो गुल्मस्य विनिवर्त्तते ॥ ४७ ॥
दाहे धान्वन्तरीयाणामत्रापि भिषजां बलम् ।
क्षारप्रयोगे भिषजां क्षारतन्त्रविदां बलम् ॥ ४८ ॥
व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः ।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्मतः ।
सिद्धानतः प्रवक्ष्यामि योगान् गुल्मनिवर्हणान् ॥ ४९ ॥

गुल्मो न शाम्यति तस्य रक्ते हृते सति शरलोहादिभिः लोहशलाकादिभिः दाहो हितः ॥ ४६ ॥

गङ्गाधरः—कस्माद् दाहः कफगुल्मं शमयतीत्यत आह—तक्ष्ण्यादित्यादि। तयोरिति कफानिलयोः ॥ ४७ ॥

गङ्गाधरः—दाह इत्यादि। अग्निना दाहे धान्वन्तरीयाणां भिषजां बलम्। क्षारप्रयोगे क्षारतन्त्रं ये विदन्ति तेषामेव बलं सामर्थ्यं कर्म्मकरणे। इति कफगुल्मक्रियाक्रमः ॥ ४८ ॥

गङ्गाधरः—व्यामिश्रदोषे इत्यादि। यद्दोषोऽनुबन्धानुबन्ध्याभ्यां व्यामिश्र लक्षणो द्विदोषत्रिदोषलक्षणो गुल्मस्तद्दोषहरतया यः क्रियाक्रमस्तत्र द्वयोः त्रयाणाञ्च मिश्रीभावात् क्रियाक्रमो हितः। द्वन्द्वसन्निपातगुल्मोक्तदोषद्वयदोषत्रय-क्रिया मेलयित्वा तत्क्रमेण कार्य्यत्यर्थः। तेन "सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो

कर्त्तव्येति दर्शयति। शरलोहादिभिरित्यनेन रूक्षदाहं दर्शयति। दाहश्च गुल्मदेशे एव कर्त्तव्यः ॥ ४४—४६ ॥

चक्रपाणिः—दाहक्षारयोः पराधिकारत्वेन परबलस्याभिप्रेयत्वम्, तेन तत्परेणैव दाहक्षारयोग-माह—दाह इत्यादि। क्षारतन्त्रस्याष्टाङ्गवेदपृथगभिधानाच्छल्यतन्त्रमेवानु शस्त्रक्षारविधायकं क्षार-तन्त्रमुच्यते। व्यामिश्रदोष इति वातपित्ताद्यनुबन्धजो व्यामिश्रः। सम्प्रति सिद्धान् योगानाह—सिद्धानिति। वक्ष्यमाणयोगस्तुतिः शिष्यप्रवर्त्तिका ॥ ४७—४९ ॥

त्र्यूषणं त्रिफला धान्यं विडङ्गं चव्यचित्रकौ।
एषां कल्के घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ५० ॥

इति त्र्यूषणाद्यं घृतम्।

एत एव च कल्काः स्युः कषायः पाञ्चमूलिकः।
द्विपञ्चमूलिको वापि तद् घृतं गुल्मनुत् परम् ॥ ५१ ॥

इति त्र्यूषणाद्यमपरं घृतम्।

प्रसन्नया वा क्षीरोत्थं सुरया दाड़िमेन वा।
दध्नः सरेण वा कार्य्य घृतं मारुतगुल्मनुत् ॥ ५२ ॥
हिङ्गुसौवर्च्चलव्योष-गुड़दाड़िमदीप्यकैः।
पुष्कराजाजिधन्याक-वेतसक्षारचित्रकैः ॥

विधिमतः" इत्युक्तम्। इति गुल्मानां क्रियाक्रम उक्त एतस्मादूर्द्ध्वं सिद्धान् गुल्मनिवर्हणान् योगान् प्रवक्ष्यामि ॥ ४९ ॥

गङ्गाधरः—त्र्यूषणमित्यादि। क्षीरं चतुर्गुणम्। इति त्र्यूषणाद्यं घृतम् ॥५०॥

गङ्गाधरः—एत एवेत्यादि। एते त्र्यूषणादयो दश कल्काः पाञ्चमूलिको वृहत्पञ्चमूलकृतः कषायश्चतुर्गुणः। इत्येकं घृतम्। द्विपञ्चमूलिको वा कषायश्चतुर्गुणस्त्र्यूषणादयो दश च कल्का इत्यपरं घृतम्। घृतद्वयम् ॥ ५१ ॥

गङ्गाधरः—प्रसन्नयेत्यादि। समानया प्रसन्नया सह क्षीरं मथित्वा उत्थापितं घृतं कार्य्यम्। अथवा सुरया सहावर्त्तितं क्षीरं मथित्वोत्थापितं घृतं कार्य्यम्। अथवा दाड़िमफलस्वरसेन क्षीरं मथित्वोत्थापितं घृतं कार्य्यम्। अथवा दध्नः सरेण सह क्षीरं मथित्वा घृतं कार्य्यम् ॥ ५२ ॥

चक्रपाणिः— त्र्यूषणाद्ये द्रवान्तरानभिधानात् क्षीरमेव चतुर्गुणं भवति ॥ ५० ॥

चक्रपाणिः—एते एवेति त्र्यूषणादय इत्युक्ताः ॥ ५१ ॥

चक्रपाणिः—प्रसन्ना मद्यविशेषः। क्षीरोत्थम् इति क्षीरस्थाने प्रसन्ना देया। एवं

शटीवचाजगन्धैला-सुरसैश्च विपाचितम् ।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥ ५३ ॥

हिङ्गु सौवर्च्चलाद्यं सर्पिः ।

हवुषाव्योषवृश्चीर-चव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूल-दीप्यकैर्विपचेद् घृतम् ॥
मातुलुङ्गदधिक्षीर-कोलमूलकदाड़िमैः ।
रसैश्च वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥
योन्यर्शोग्रहणीदोष-कासश्वासारुचिज्वरान् ।
वस्तिहृत्पार्श्वशूलञ्च घृतमेतद् व्यपोहति ॥ ५४ ॥

हवुषाद्यं घृतम् ।

गङ्गाधरः—हिङ्ग्वित्यादि । वेतसमम्लवेतसम् । अजगन्धा यमानी । सुरसः श्वेतपर्णासः । एते कल्काः दध्ना चतुर्गुणेन सर्पिः विपाचितम् । हिङ्गु-सौवर्चालाद्यं घृतम् ॥ ५३ ॥

गङ्गाधरः—हवुषेत्यादि । हवुषा स्वनामख्याता । वृश्चीरं श्वेतपुनर्नवा । अजाजी जीरकम् । दीप्यकं यमानी । दीप्यकान्तैः कल्कैः मातुलुङ्गरस-दधि-क्षीर-शुष्कवदरकाथ-शुष्कमूलक-काथ-दाड़िमफलरसैः प्रत्येकं घृतसमैर्घृतं विपचेत् । हवुषाद्यं घृतम् ॥ ५४ ॥

स्वरसादिभिरपि क्षीरार्थो व्याख्येयः । हिङ्ग्वाद्यैरिति हिङ्ग्वादीनां कल्कः, दधि चतुर्गुणं द्रवम् ॥ ५२।५३ ॥

चक्रपाणिः—हवुषादिकल्कः मातुलुङ्गादीनि पञ्च द्रवाणि स्नेहसमानि । "पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ । तत्र स्नेहसमानि" इति वचनात् दाडिमस्यापि रसान्तरसान्निध्याद् द्रव एव ग्राह्यः । उक्तं हि विश्वामित्रे—"पृथ्वीकाजीरकव्योष-हपुषाजाजिसैन्धवैः । सचव्यपिप्पली-मूलैर्वह्निदीप्यकसंयुतैः । मूलदाडिमकोलानां रसे दध्नि पयस्यपि । सिद्धं घृतं जयेद् गुल्मं वह्नि-सन्दीपनं परम् ॥" इति ॥ ५४ ॥

पिप्पल्याः पिचुरध्यर्द्धो दाड़िमाद्द्विपलं पलम्।
धान्यात् प्रस्थं घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम् ॥
सिद्धमेतद्घृतं सद्यो वातगुल्मं चिकित्सति।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरम् ॥ ५५ ॥

पिप्पल्याद्यं घृतम्।

घृतानामौषधगणा य एते परिकीर्त्तिताः।
ते चूर्णयोगा वर्त्त्यस्ताः कषायास्ते च गुल्मिनाम् ॥ ५६ ॥
कोलदाड़िमघर्म्माम्बु-सुरामण्डाम्लकाञ्जिकैः।
शूलानाहनुदः पेया वीजपूररसेन च ॥ ५७ ॥

गङ्गाधरः—पिप्पल्या इत्यादि। पिप्पल्याः अध्यर्द्धोऽर्द्धाधिकः पिचुः कर्षः सार्द्धकर्ष इत्यर्थः। दाड़िमात् फलत्वचो द्विपलम्। धान्यकात् पलम्। घृतात् प्रस्थम्। शुण्ठ्याः कर्षः। क्षीरं घृतात्चतुर्गुणम्। पिप्पलीदाड़िमधन्याकशुण्ठ्यः कल्काः। पिप्पल्याद्यं घृतम् ॥ ५५ ॥

गङ्गाधरः—घृतानामित्यादि। त्र्यूषणादयो ये ये घृतानामौषधगणा एकैकयोगतया उक्तास्ते त एव एकैकयोगतया चूर्णीकृत्य योगा वर्त्तीकृत्य च योगाः क्वाथकषायविधिनापि योगा बोध्याः ॥ ५६ ॥

गङ्गाधरः—कोलेत्यादि। शुष्कबदरस्य क्वाथेन कल्केन पेया, दाड़िमरसेन द्वितीया पेया, घर्म्माम्बुना ग्रैष्मिकाम्बुणा वा पेया। पेया तूष्णैव पातव्या इत्यर्थः। सुरामण्डसिद्धा वा पेया, अम्लकाञ्जिकसिद्धा वा पेया। इत्येताः पेयाः शूलानाहनुदः। वीजपूरकस्य मातुलुङ्गस्य रसेन वा सिद्धा पेया तथा। षट् पेयाः ॥ ५७ ॥

चक्रपाणिः—पिचुः कर्षः। तेनाध्यर्द्धपिचुरिति सार्द्धः। अत्र च घृते कल्कभूयस्त्वं भवदपि कल्पनीयम् वचनादेव। उक्तं हि न्यायविद्भिः—"निर्देशः श्रूयते तत्र द्रव्याणां यत्र यादृशः। तस्मिन् स संविधातव्यः शब्दाभावे प्रसिद्धितः ॥" अत्र पुनर्घृतं सिद्धमिति। पिप्पल्यादीनां लेहत्वेन प्रयोगनिरासार्थम्। घृतसाधनार्थमुक्तम् ॥ ५५।५६ ॥

चक्रपाणिः—भेषजानां चूर्णादिष्वपि प्रयोगमाह—घृतानामित्यादि। वर्त्तिरिति फलवर्त्तिः।

चूर्णानि मातुलुङ्गस्य भावितानि रसेन वा ।
कुर्य्याद् वर्त्तीः सगुड़िका गुल्मानाहार्त्तिशान्तये ॥ ५८ ॥

हिङ्गु त्रिकटुकं पाठां हवुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिड़ीकाम्लवेतसौ ॥
दाड़िमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥
चूर्णमेतत् प्रयोक्तव्यमनुपानेष्वनत्ययम् ।
प्रागभक्तमथवा पेयं मद्येनोष्णोदकेन वा ।
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्डामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥
भावितं मातुलुङ्गस्य चूर्णमेतद् रसेन च ।
बहुशो गुड़िकाः कार्य्याः कार्म्मुकाः स्युस्ततोऽधिकम् ॥५९॥

हिङ्ग्वादि चूर्णं गुड़िका च ।

गङ्गाधरः—ननु वर्त्तयः कथं कार्य्या इत्यत आह—चूर्णानीत्यादि । उक्तानां त्र्यूषणादीनां योगानां चूर्णानि मातुलुङ्गरसेन भावितानि वर्त्तीः कुर्य्यात् । सा गुड़िका गुल्मादिशान्तये स्यात् ॥ ५८ ॥

गङ्गाधरः—हिङ्ग्वित्यादि । हवुषा स्वनामख्याता । अजमोदा यमानी । अजगन्धा वनयमानी । तिन्तिड़ीफलं पक्कम् । दाड़िमं फलत्वक् । द्वे लवणे सौवर्च्चलसैन्धवे । चूर्णप्रयोगमिमं मातुलुङ्गस्य रसेन भावितं कृत्वा बहुशो गुड़िकाश्च कार्य्यास्ततश्चूर्ण-रूपप्रयोगादधिककार्म्मुकाः कर्म्मकार्य्यैः स्युः । हिङ्ग्वादिचूर्णगुड़िके ॥ ५९ ॥

उक्तद्रव्याणां चूर्णत्वे कृतेऽनुपानार्थं चूर्णद्रव्यमाह—चूर्णमित्यादि । कषायकरणपक्षे विशेषविधानानुक्तेः सामान्यविधिनैव कषायकरणं ज्ञेयम् ॥ ५७।५८ ॥

चक्रपाणिः—हिङ्ग्वादौ अजमोदादीनि व्याख्यातानि । द्वौ क्षारौ सर्जिकायावशूकजौ । प्रागभक्तमिति भोजनस्य प्राक् । वयःपरिमाणेन वा न वा भोजनात् प्रत्यासन्नं भवति । बहुश इति सप्ताहं भावनायां, सप्ताहं भावनेति वचनात् । कार्म्मुका इति कर्म्मणि समर्थाः ॥ ५९ ॥

मातुलुङ्गरसो हिङ्गु दाड़िमं विड़सैन्धवम्।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम्॥ ६० ॥
शटीपुष्करहिङ्ग्वम्ल-वेतसक्षारचित्रकम्।
धान्यकञ्च यमानीञ्च विडङ्गं सैन्धवं वचाम्॥
सचव्यपिप्पलीमूलमजगन्धां सदाड़िमाम्।
अजाजीञ्चाजमोदाञ्च चूर्णं कृत्वा प्रयोजयेत्॥
रसेन मातुलुङ्गस्य मधुशुक्तेन वा पुनः।
भावितं गुड़िकां कृत्वा सुपिष्टां कोलसम्मिताम्॥
गुल्मं प्लीहानमानाहं श्वासं कासमरोचकम्।
हिक्कां हृद्रोगमर्शांसि विविधां शिरसो रुजाम्॥
पाण्डामयं कफोत्क्लेशं सर्व्वजाञ्च प्रवाहिकाम्।
पार्श्वहृद्वस्तिशूलञ्च गुड़िकैषा व्यपोहति॥ ६१ ॥
नागरार्द्धपलं पिष्ट्वा द्वे पले लुञ्चितस्य च।
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन ना पिबेत्।
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत्॥ ६२ ॥

गङ्गाधरः—मातुलुङ्गेत्यादि। हिङ्गु दाड़िमत्वक्चूर्णं। हिङ्ग्वादीनां समभागचूर्णं मातुलुङ्गरसेन भावयित्वा गुड़िकाः कृत्वा सुरामण्डेन पातव्यम्॥ ६० ॥

गङ्गाधरः—शटीत्यादि। क्षारम् यवक्षारम्। यमानीं क्षुद्रयमानीम्। अजगन्धां वनयमानीम्। अजमोदां क्षेत्रयमानीम्। एतदपि चूर्णं प्रयोजयेत्। मातुलुङ्गरसेन मधुशुक्तेन मधुकृतचुक्रसन्धानेन वा तत् चूर्णं भावयित्वा गुड़िकां कृत्वापि प्रयोजयेत्॥ ६१ ॥

गङ्गाधरः—नागरेत्यादि। शुण्ठ्या अर्द्धपलम्। लुञ्चितस्य घर्षणेन तुषरहितस्य तिलस्य द्वे पले। एकं गुड़स्य पलम्। पिष्ट्वा उष्णेन गव्येन क्षीरेण समुदिताच्चतुर्गुणेन ना पुमान् पिबेत्। वातगुल्मादीन् नाशयेत्॥ ६२ ॥

चक्रपाणिः—लुञ्चितस्येति निस्तुषीकृतस्य। अत्र चौषधप्रयोगो व्याधिहरमहिम्नैव भवतीति

पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् ।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ।
श्लेष्मण्यनुबले पूर्व्वं हितं पित्तानुगे परम् ॥ ६३ ॥
साधयेच्छुद्धशुष्कस्य लसुनस्य चतुःपलम् ।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च ना पिबेत् ॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमं ज्वरम् ।
हृद्रोगं विद्रधिं शोथं साधयत्याशु तत् पयः ॥ ६४ ॥

लसुनक्षीरम् ।

तैलं प्रसन्ना गोमूत्रमारनालं यवाग्रजम् ।
गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥ ६५ ॥

तैलपञ्चकम् ।

गङ्गाधरः—पिबेदित्यादि । तदेव तैलमेरण्डतैलम् । अस्य योगद्वयस्य दोषभेदे व्यवस्थामाह—श्लेष्मणीत्यादि । अनुबलेऽनुबन्धे श्लेष्मणि वातगुल्मे पूर्व्वं वारुणीमण्डमिश्रितमेरण्डतैलं हितम् । पित्तानुगे वातगुल्मे परं पयसा सहैरण्ड-तैलं हितमित्यर्थः ॥ ६३ ॥

गङ्गाधरः—साधयेदित्यादि । शुद्धशुष्कस्य त्वङ्मध्यगाङ्कुररहितस्य ततः पिष्ट्वा आतपे शुष्कस्य लसुनस्य चतुःपलमस्माच्चतुःपलादष्टगुणिते क्षीरोदके दुग्धस्य षोड़शपलं जलस्य चेति क्षीरोदके क्षिप्त्वा साधयेत् पचेत् । क्षीरशेषं ना पुमान् पिबेत् । क्षीरं षोड़शपलं जलञ्च षोड़शपलम् । इति लसुनक्षीरम् ॥ ६४ ॥

गङ्गाधरः—तैलमित्यादि । तैलं तिलतैलम् । प्रसन्ना मद्यभेदः । यवाग्रजं

ज्ञेयम् । पूर्व्वमिति पूर्व्वयोगोक्तमेरण्डतैलम् । परमित्युत्तरयोगोक्तमेरण्डतैलं पयोयुक्तं साधयेदित्यर्थः ॥ ६०—६३ ॥

चक्रपाणिः—साधयेदित्यादौ निस्तुषीकृतस्य शुद्धशुष्कस्य । उदकाष्टगुणिते क्षीरे इत्यत्र भागेऽनुक्ते समानविधानमिति वचनात् क्षीरं चतुर्गुणं षोड़श पलानि जलञ्च तथा । क्षीरावशिष्टम् । गुल्मस्य बहुभेषजसाध्यतया षोड़शपलक्षीरमानं भवति । क्षीररसोनयोश्च यद्यपि सहोपयोगो विरुद्धस्तथापि व्याधिनाशमहिम्ना महर्षिवचनादविवादः ॥ ६४ ॥

चक्रपाणिः—तैलं प्रसन्नेत्यादौ यौगिकत्वात् जतूकर्णसंवादादेरण्डतैलं ज्ञेयम् । उक्तं हि—आर-नालमूत्रक्षारैः संयोज्य तैलमैरण्डमित्यादि ॥ ६५ ॥

पञ्चमूलीकषायेण सक्षीरेण शिलाजतु।
पिबेत् तस्य प्रयोगेण वातगुल्माद् विमुच्यते॥ ६६॥

शिलाजतुप्रयोगः।

वाट्यं यूषेण पिप्पल्या मूलकानां रसेन वा।
भुक्त्वा स्निग्धमुदावर्त्ताद् वातगुल्माच्च मुच्यते॥ ६७॥
शूलानाहविबन्धार्त्तं स्वेदयेद् वातगुल्मिनम्।
स्वेदैः स्वेदविधावुक्तैर्नाड़ीप्रस्तरसङ्करैः॥ ६८॥
वस्तिकर्म्म परं विद्याद् गुल्मघ्नं तद्धि मारुतम्।
स्वस्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति॥

यवक्षारमनुरूपम्, न तु तैलाद्यन्यतमसमम्। पञ्चकर्मिदमेकत्र कृतं पीतं गुल्मादिकं साधयेत्। तैलपञ्चकम्॥ ६५॥

गङ्गाधरः—पञ्चमूलीत्यादि। विल्वादिपञ्चमूलीक्वाथेन सक्षीरेण समक्षीरेण चतुर्गुणेन शिलाजतु शोधितशिलाजतु पिबेत्। तस्य शिलाजतुनः प्रयोगेण। शिलाजतुप्रयोगः॥ ६६॥

गङ्गाधरः—वाट्यमित्यादि। वाट्यो यवमण्डः। मुद्गादिविदलकृतेन यूषेण पिप्पल्या रसेन मूलकानां रसेन वा स्निग्धं सघृतं भुक्त्वा पुमान् उदावर्त्तादितो मुच्यते॥ ६७॥

गङ्गाधरः—शूलानाहेत्यादि। स्वेदविधौ स्वेदाध्याये। वस्तिकर्म्मेत्यादि। परमुत्कृष्टं गुल्मघ्नं वस्तिकर्म्म विद्यात्। हि यस्मात् तद्वस्तिकर्म्म प्रथमं दत्तमात्रं

चक्रपाणिः—पञ्चमूलीत्यत्र प्रथमकल्पनया शालपर्ण्यादिपञ्चमूलीग्रहणं वाच्यम्॥ ६६॥

चक्रपाणिः—पिप्पलीप्रधानो यूषः पिप्पलीयूषः। नाड़ीप्रस्तरसङ्करैरित्यनेन गुल्मे स्वेदान्तरस्याप्रायौगिकत्वं सूचयति॥ ६७। ६८॥

तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः ॥६९ ॥
गुल्मघ्ना विविधा दृष्टाः सिद्धाः सिद्धिषु वस्तयः ।
गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके ॥
तानि मारुतजे गुल्मे पानाभ्यङ्गानुवासनैः ।
प्रयुक्तान्याशु सिध्यन्ति तैलं ह्यनिलजित् परम् ॥ ७० ॥
नीलिनीचूर्णसंयुक्तं पूर्व्वोक्तं घृतमेव च ।
समलाय प्रदातव्यं शोधनं वातगुल्मिने ॥
नीलिनीत्रिवृतादन्ती-पथ्याकम्पिल्लकैः सह ।
शोधनार्थं घृतं देयं सविड्क्षारनागरम् ॥ ७१ ॥

स्वस्थाने वातस्थाने पक्वाशये मारुतं जित्वा सद्यो गुल्ममपोहति, तस्मात् सानुवासनैर्निरूहैः अभुक्तवते निरूहं दत्त्वा भुक्तवतेऽनुवासनं दद्यादित्येवम् अभीक्ष्णशः प्रत्यहं प्रयुज्यमानैर्वाताद्यात्मका गुल्माः प्रशाम्यन्ति ॥ ६८ । ६९ ॥

गङ्गाधरः—ननु के च ते वस्तय इत्यत आह—गुल्मघ्ना इत्यादि। सिद्धिस्थानेषु वक्ष्यमाणाः सिद्धा गुल्मघ्ना वस्तयो दृष्टाः। वातरोगिके वातव्याधिचिकित्सितेऽध्याये गुल्मघ्नानि तैलानि वक्ष्यन्ते, तानि तैलानि सिध्यन्ति वातगुल्मं नाशयित्वा कृतकृत्यानि भवन्ति ॥ ७० ॥

गङ्गाधरः—नीलिनीत्यादि। पूर्व्वोक्तं घृतं त्र्यूषणाद्यघृतादिकं समलाय पुरीषादिमलयुक्ताय वातगुल्मिने शोधनं विरेचनम्।

नीलिनीत्रिवृतेत्यादि। घृतं पूर्व्वोक्तं त्र्यूषणाद्यादिकं नीलिन्यादिचूर्णैः सह विड्यवक्षारशुण्ठीचूर्णैश्च सह मिश्रयित्वा शोधनार्थं देयम्। नीलिनीत्यादिना शोधनार्थं घृतम् ॥ ७१ ॥

चक्रपाणिः—आशु सिध्यन्तीति शीघ्रं गुल्मं जयन्ति। तत्र हेतुमाह—तैलं ह्यनिलजित् परम्। यस्मात् तैलं वातजित् तस्माद् वातगुल्मं वातविकारं शीघ्रं जयति। अन्ये तु तैलन्त्वनिलजित्वरं नीलिनीचूर्णसंयुक्तं समलाय दातव्यम्, तथा पूर्व्वोक्तञ्च त्र्यूषणाद्यं नीलिनीचूर्णसंयुक्तं दातव्यमिति योजयन्ति। प्रथमव्याख्याने तु घृतमेवेतिशब्दो वक्ष्यमाणनीलिनीत्रिवृतेत्याद्येकद्रव्ये सिद्धं

नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम्।
पचेद् विडङ्गं व्याघ्रीश्च पलिकानि जलाढ़के॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च॥
ततो घृतपलं दद्याद् यवागूमण्डमिश्रितम्।
जीर्णे सम्यग्विरिक्तश्च भोजयेद् रसभोजनम्॥
गुल्मकुष्ठोदरव्यङ्ग-शोथपाण्ड्वामयज्वरान्।
श्वित्रं प्लीहानमुन्मादं घृतमेतद् व्यपोहति॥ ७२॥

इति नीलिन्याद्यं घृतम्।

कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्त्तकाः।
शालयो मदिरा सर्पिर्वातगुल्मचिकित्सितम्॥

गङ्गाधरः—नीलिनीमित्यादिकं पचेत्। कियन्मानमेषां कियन्मात्रे जले पचेदित्यत आह—पलिकानीति। नीलिन्यादीनां नवानां प्रत्येकमेकैकपलम् इति नव पलिकानि जलाढ़के षोड़शशरावजले पचेत्। तेन क्वाथेन पादावशेषेण चतुःशरावशिष्टेन दध्नः प्रस्थेन चतुःशरावेण सुधाक्षीरपलेन स्नुहीक्षीरस्य पलेन घृतप्रस्थमकल्कं पचेत्। पक्कस्य चास्य घृतस्य पलं यवाग्वा वा मण्डेन वा मिश्रितं जीर्णे पूर्व्वाहारस्य जीर्णतायां सत्यामर्थात् प्रातःकाले दद्यात्। रसभोजनं वक्ष्यमाणवातगुल्महितमांसरसेन भोजनमन्नं भोजयेत्। नीलिन्याद्यं घृतम्॥ ७२॥

गङ्गाधरः—वातगुल्महितभोजनमाह—कुक्कुटा इत्यादि। वर्त्तकान्ता जन्तवो

घृतं देयम्। नीलिनीमित्यादौ कल्को न श्रूयते। कल्काभावेन च पाकज्ञानं नास्ति। पाकस्य हि मृद्वादिना त्रैविध्यमुक्तम्। तदपि कल्कानभिधानेऽपि पाकज्ञानार्थमपि कल्को देयः। स च क्वाथद्रव्यैरेव योग्यतया सान्निध्याच्च देयमिति वदन्ति। नैवं विचिलत्वाद् घृतादिसाधनशक्तेः। यथोक्त यथोक्तमेव परं ज्ञेयम्, न त्वनुक्तं कल्पनीयम्। कल्पनायाञ्च युक्तिर्नास्त्येव। अतो विनापि कल्कदानं क्वाथादिद्रवेण स्नेहपाको भवत्येव। न च कल्कमात्रेण स्नेहपाकज्ञानस्योक्तत्वात्। तस्मादाचार्य्येण यथोक्तं तथैव कार्य्यम्। अत्र विरिक्तस्य पेयादिक्रममौत्सर्गिकं बाधयित्वा रसभोजनं प्रयोगसामान्यात् उच्यते। यथोदावर्त्तिनो घृतविरिक्तस्य काञ्जिकाकोद्रवान्नभोजनम्॥ ६९—७२॥

हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ।
समण्डवारुणीपानं पक्वं वा धान्यकैर्जलम् ॥ ७३ ॥
मन्देऽग्नौ वर्द्धते गुल्मो दीप्ते चाग्नौ प्रशाम्यति ।
तस्मान्नातिसौहित्यं कुर्य्यान्नातिविलङ्घनम् ॥ ७४ ॥
सर्व्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते ।
या क्रिया क्रियते सिद्धिं सा याति न विरुक्षिते ॥ ७५ ॥
भिषगात्ययिकं बुद्ध्वा पित्तगुल्ममुपाचरेत् ।
वैरेचनिकसिद्धेन सर्पिषा पयसापि वा ॥ ७६ ॥

मांसार्थाः । शालयो हैमन्तिकधान्यानि । द्रवमित्यनतिसान्द्रम् । समण्डेत्यादि । वारुणी मण्डसहितैव वारुणी पानम्, न तु मण्डहीना वारुणीति । धान्यकैः पक्वं जलं वा पानम् । पीयते यत् तत् पानम् । दीपनार्थमिति शेषः ॥ ७३ ॥

गङ्गाधरः—कस्मात् तच्च भुञ्जीत पिबेच्चेत्यत आह—मन्देऽग्नावित्यादि । यस्मान्मन्देऽग्नौ गुल्मो वर्द्धते दीप्ते चाग्नौ प्रशाम्यति, तस्मान्ना गुल्मी पुमान् अतिसौहित्यं न कुर्य्यादतिशयेनोदरं पूरयित्वा न भुञ्जीत अतिलङ्घनं च न कुर्य्यात् ॥ ७४ ॥

गङ्गाधरः—सर्व्वत्रेत्यादि । सर्व्वस्मिन् गुल्मे या क्रिया सिद्धिं याति, गुल्मप्रशमायामोघा भवति, सा न विरुक्षिते स्नेहस्वेदाभ्यामनुपपादिते तु न सिद्धिं याति । पित्तरक्तगुल्मयोस्तु स्वेदो नो युक्त इत्यत उक्तं न विरुक्षिते इति । पित्तरक्ताभ्यामन्यत्रादौ स्नेहः स्वेदश्च कार्य्यस्ततः परं क्रियान्तरम् ॥ ७५ ॥

गङ्गाधरः—पित्ते तु गुल्मे पूर्व्वं स्नेहः कार्य्यस्तत्र यदि गुल्ममात्ययिकमापातत एवात्ययं कुर्य्यात् स्नेहक्रियाकालो न अतिसहते, तदा किं कार्य्यमित्यत आह—भिषगित्यादि । पित्तगुल्ममात्ययिकं बुद्ध्वा स्नेहनार्थं विरेचनार्थञ्च वैरेचनिकसिद्धेन भेषजचतुष्कोक्तवैरेचनीयद्रव्यः कल्ककाथैः सिद्धेन पक्वेन सर्पिषा कल्करूपैस्तैः सिद्धेन पयसा वा भिषगुपाचरेत् ॥ ७६ ॥

चक्रपाणिः—कुक्कुटा इत्यादिना गुल्मिनेऽन्नपानं विधीयते । अतिसौहित्यमतिलङ्घनञ्चाभयोः

रोहिणी कटुकानिम्ब-मधुकत्रिफलात्वचः।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतोः पले॥
द्वे पले च मसूराणां साध्यमष्टगुणेऽम्भसि।
श्रृताच्छेषं घृतसमं सर्पिषश्च चतुष्पलम्॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः।
ज्वरस्तृष्णा च शूलश्च भ्रमो मूर्च्छारुचिस्तथा॥ ७७॥

इति रोहिण्याद्यं घृतम्।

जले दशगुणे साध्यं त्रायमाणाचतुःपलम्।
पञ्चभागं स्थितं पूतं कल्कैः संयोज्य कार्षिकैः॥

गङ्गाधरः—सूत्रमुक्त्वा स्नेहवैरेचनिकघृतान्याह—रोहिणीत्यादि। रोहिणी कटुका कटुरोहिणी। निम्बमधुके। त्रिफलात्वचः निरस्थित्रिफलाफलानि। षण्णां प्रत्येकं कर्षांशः, त्रायमाणा च कर्षांशा, पटोलत्रिवृतोः प्रत्येकं पले द्वे, मसूराणाञ्च द्वे पले, इत्येककर्षोणाष्टपलं द्रव्यं कल्कीकृत्याष्टगुणे द्वापष्टिपलमितेऽम्भसि पचेत्। न चात्र जलस्य द्रवत्वाद् द्वैगुण्यम्। न द्वैगुण्यं तुलामाने पलोल्लेखागते तथेति वचनात्। श्रृतात् पक्कात् क्काथात् तु शेषं घृतसमं चतुष्पलं शेष्टव्यं, तच्च चतुष्पलक्काथं पुरातनं सर्पिश्च चतुष्पलमित्यष्टौ पलानि। दण्डेन मथित्वा सम्यगेकीभूतं कृत्वा पिबेत् बलाग्निबलापेक्षया। रोहिण्याद्यं मूर्च्छित घृतम्॥ ७७॥

गङ्गाधरः—जले दशगुणे इत्यादि। त्रायमाणायाश्चतुष्पलं दशगुणे जले चत्वारिंशत्पलजले साध्यं पाच्यम्। पञ्चभागस्थितमष्टपलावशेषं तं क्काथं पूतं

अप्यग्निभ्रंशहेतुतया वर्ज्जनम्। यदुक्तं नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् इत्यादि। रोहिणी कटुरोहिणी। कर्षांशा इति कर्षप्रमाणाः। पटोलत्रिवृतोः पले इति वचनात् प्रत्येकं पलम्। अष्टगुण इति घृतादष्टगुणे। घृतं चतुःपलमेवोक्तम्। तेन क्काथघृताभ्यामष्टगुणं पेयम्, अष्टपली च मात्रा गुल्मोक्तत्वात् एव भवति। यदुक्तं—'गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये। तेषां मात्रा विनिर्द्दिष्टा पलान्यष्टौ विशेषतः' इति॥ ७३—७७॥

रोहिणीकटुका मुस्ता त्रायमाणा दुरालभा।
कल्कैस्तामलकीवीरा-जीवन्तीचन्दनोत्पलैः॥
रसस्यामलकानाञ्च क्षीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग् विपाचयेत्॥
पित्तरक्तभवं गुल्मं वीसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतद् घृतोत्तमम्॥ ७८॥

इति त्रायमाणाद्यं घृतम्।

रसेनामलकेक्षूणां घृतप्रस्थं * विपाचयेत्।
पथ्यापादं पिबेत् सर्पिस्तत् सिद्धं पित्तगुल्मनुत्॥ ७९॥

इति आमलकाद्यं घृतम्।

द्राक्षां मधूकं खर्ज्जूरं विदारीं सशतावरीम्।
परूषकाणि त्रिफलां साधयेत् पलसम्मिताम्॥
जलाढ़के पादशेषं रसमामलकस्य च।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम्॥

रोहिण्यादिकल्कैः प्रत्येकं कार्षिकैः सह संयोज्य आमलकरसं गव्यक्षीरं प्रत्येकमष्टपलं दत्त्वाष्टपलं घृतं सम्यग् विपाचयेत्। अत्र रोहिणीकटुका कटुरोहिणी। तामलकी भूम्यामलकी। वीरा शाल्पणीं॥ ७८॥　　त्रायमाणाद्यं घृतम्।

गङ्गाधरः—रसेनेत्यादि। घृतप्रस्थमामलकस्य द्विप्रस्थरसेन इक्षोश्च द्विप्रस्थरसेन पथ्याया हरीतक्याः कल्कं शरावमितं दत्त्वा विपाचयेत्॥ ७९॥

आमलकाद्यं घृतम्।

गङ्गाधरः—द्राक्षामित्यादि। द्राक्षा, मधूकं मधूकपुष्पम्। द्राक्षादीनां नवानां प्रत्येकं पलं मिलित्वा नव पलानि जलाढ़के षोड़शशरावजले साधयेत्। पादशेषं चतुःशरावावशेषं रसं क्वाथम् आमलकस्य च रसं चतुःशरावम्, इक्षुरसञ्च

चक्रपाणिः—चतुःपलायां त्रायमाणायां दशगुणं जलं चत्वारिंशत्पलानि। कल्कैरिति तामलकादिभिः। कटरोहिण्यादयश्च कल्का इति योजनीयम्॥ ७८॥

चक्रपाणिः—घृतपादमिति समुदितामलकेक्षुरसापेक्षया घृतस्य पादिकत्वम्। पथ्यापादम् इत्यत्र हरीतक्या गुरुत्वेन घृतापेक्षया पादत्वेनाष्टमो भागो भवतीति। एके तु "यस्माच्च पाद-

* घृतपादमिति पाठान्तरम्।

साधयेत् तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम्।
प्रयोगात् पित्तगुल्मघ्नं सर्व्वपित्तविकारनुत्॥ ८० ॥

इति द्राक्षाद्यं घृतम्।

वृषं समूलमापोथ्य पचेदष्टगुणेऽम्भसि।
शेषेऽष्टभागे तस्यैव पुष्पकल्कं प्रदापयेत्॥
तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत्।
रक्तपित्तज्वरश्वास-कासहृद्रोगनाशनम्॥ ८१ ॥

इति वासाघृतम्।

द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम्।
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत्॥

चतुःशरावं, क्षीरञ्च चतुःशरावमिति चतुर्गुणद्रवं, घृतं चतुःशरावमभयाकल्कपादिकं शरावमितमभयाकल्कं दत्त्वा साधयेत्। सिद्धं पक्वं तद् घृतं शर्कराक्षौद्रपादिकं सुशीते शर्करायाः कुड़वं मधुनश्च कुड़वं प्रक्षिप्य मथित्वा मेलयेत्॥८०॥

द्राक्षाद्यं घृतम्।

गङ्गाधरः—वृषमित्यादि। समूलं वासकं कुट्टयित्वाष्टगुणे जले पचेत् अष्टभागैकभागे शेषे घृतात् चतुर्गुणे तस्यैव वासकस्य पुष्पकल्कं घृतात् पादार्द्धं प्रदापयेत् कल्काढ्यत्वात्। तथा च समूलवासकं षोड़शशरावं जलमष्टाविंशत्युत्तरशतशरावं पक्त्वा षोड़शशरावमितं शेष्टव्यं। तेन षोड़शशरावक्काथेन चतुःपलवासकपुष्पकल्केन च सिद्धं चतुःशरावं घृतं शीतं शीतीकृतं सक्षौद्रं मधुनः एकशरावं प्रक्षिप्य मेलयेत्। इति वासाद्यं घृतम्॥ ८१ ॥

गङ्गाधरः—द्विपलमित्यादि। त्रायमाणाया द्विपलं जलस्य द्विप्रस्थेऽष्टशरावमितजले पचेत्। साधितं पक्वं तमष्टभागस्थितमेकशरावावशेषं पूतं वस्त्रे

निर्द्देशश्चतुर्भागस्ततस्तु सः” इति वचनाच्चतुर्थमेव भागं प्रस्थे घृतेऽष्टपलरूपं भवतीति वदन्ति। द्राक्षां मधूकमित्यादौ क्वाथशेषस्य प्रस्थस्य साहचर्य्याद् घृतादीनामपि प्रस्थमानत्वम्॥ ७९। ८०॥

चक्रपाणिः—वृषं समूलमित्यादौ क्वाथस्याष्टगुणजलदानेऽष्टभागशेषत्वमिति। रक्तपित्ते वासाघृताद् विशेषः। तत्र हि सामान्यपरिभाषया वृषाच्चतुर्गुणं जलं चतुर्भागावशिष्टञ्च गृह्यते। तेन

पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम् ।
तेन निर्हृततदोषस्य गुल्मः शाम्यति पैत्तिकः ॥ ८२ ॥

इति त्रायमाणायोगः ।

द्राक्षाभयारसं गुल्मे पैत्तिके सगुड़ं पिबेत् ।
लिह्यात् कम्पिल्लकं वापि विरेकार्थं मधुद्रवम् ॥ ८३ ॥
दाहप्रशमनोऽभ्यङ्गः सर्पिषा पित्तगुल्मिनाम् ।
चन्दनाद्येन तैलेन तैलेन मधुकस्य वा ॥ ८४ ॥
ये च पित्तज्वरार्त्तानां * सतिक्ताः क्षीरवस्तयः ।
हितास्ते पित्तगुल्मिभ्यो वक्ष्यन्ते ये च सिद्धिषु ॥ ८५ ॥

गालितं क्षीरसमम् एकशरावदुग्धमिश्रितं कोष्णमेव पिबेत् । तदुपरि च यथाबलमुष्णमेव क्षीरं पिबेत् । तेन योगेन विरेचनान्निर्हृततदोषस्य पुंसः पैत्तिकगुल्मः शाम्यति ॥ ८२ ॥　　त्रायमाणायोगः ।

गङ्गाधरः—द्राक्षेत्यादि । द्राक्षाभययोः क्वाथः । गुड़ः प्रक्षेप्यः । लिह्यादिति मधु द्रवं यत्र तत् कम्पिल्लकं लिह्यात् मधुना कम्पिल्लकचूर्णं कोष्ठानुरूपं लिह्यात् ॥ ८३ ॥

गङ्गाधरः—दाहेत्यादि । सर्पिषा अभ्यङ्गः, चन्दनाद्येन ज्वरोक्तेन तैलेन, मधुकस्य यष्टीमधुनः क्वाथकल्काभ्यां सिद्धेन तैलेन वाभ्यङ्गः दाहप्रशमनः ॥८४॥

गङ्गाधरः—ये चेत्यादि । पित्तज्वरार्त्तानामुक्ता ये सतिक्ताः क्षीरवस्तयस्ते पित्तगुल्मिभ्यो हिताः, ये च सतिक्ताः क्षीरवस्तयोऽत ऊर्द्ध्वं सिद्धिस्थाने वक्ष्यन्ते तेऽपि पित्तगुल्मिभ्यो हिताः ॥ ८५ ॥

प्रयोगान्तरत्वाद् रक्तपित्तोक्तवासाघृतातिदेशो न कृतः । क्षौद्रसंयुक्तमित्यनेन प्रक्षेपन्यायात् पादिकत्वं मधुनः । यथाबलमिति यथा विरेचनातियोगो न भवति ॥ ८१ । ८२ ॥

चक्रपाणिः—कम्पिल्लकं गुण्डारोचनिकाम् । तैलेन मधुकसाधितेन । पित्तज्वरहरा इत्यादौ यद्यपि पित्तज्वरहरत्वेन साक्षाद् वस्तयो नोक्तास्तथापि पटोलादय एव वस्तय उपयुक्तास्त एव पित्तज्वरहरा भवन्तीति कृत्वेहोक्तं पित्तज्वरहरा इति । किंवा पित्तहरा ये तन्त्रे सिद्धौ च वक्तव्यास्ते ज्वरहराः पटोलादयो ज्ञेयाः ॥ ८३—८५ ॥

* पित्तज्वरहराः इति चक्रसम्मतः पाठः ।

शालयो जाङ्गलं मांसं गव्याज्ये पयसी घृतम् ।
खर्ज्जूरामलकं द्राक्षां दाड़िमं सपरुषकम् ॥
आहारार्थं प्रयोक्तव्यं पानार्थं सलिलं शृतम् ।
बलाविदारिगन्धाद्यैः पित्तगुल्मं चिकित्सितम् ॥
आमान्वये पित्तगुल्मे सामे वा कफवातिके ।
यवागूभिः खडैर्यूषैः संधुक्ष्योऽग्निर्विलङ्घिते ॥ ८६ ॥
शमप्रकोपौ दोषाणां सर्व्वेषामग्निसंश्रितौ ।
तस्मादग्निं सदा रक्षेन्निदानानि च वर्ज्जयेत् ॥ ८७ ॥
वमनं वमनार्हाय प्रदद्यात् कफगुल्मिने ।
स्निग्धस्विन्नशरीराय गुल्मे शैथिल्यमागते ॥

गङ्गाधरः—शालय इत्यादि । गव्याज्ये पयसी गव्यं पय आज्यमाजञ्च पयः । घृतन्तु गव्यमेवानुक्तत्वात् । सलिलं शृतमित्यद्धेशिष्टं बलाविदारीगन्धादिभिः षड्भिः पक्वमित्यर्थः । अत्रामावस्थायां यत् कार्य्यमादौ तदाह—आमान्वये इत्यादि । आमान्वये सामे पित्तगुल्मे सति । कफवातिके गुल्मे विलङ्घिते । पूर्व्वं लङ्घनमाचरेत् । सम्यक् लङ्घितलक्षणोदये सति गुल्महरद्रव्यसिद्धाभिः यवागूभिः खडैश्च यूषैः अग्निर्गुल्मिनां जाठरोऽग्निः सन्धुक्ष्यः उद्दीपनीयः कार्य्यः ॥ ८६ ॥

गङ्गाधरः—ननु कस्मादित्यत आह—शमप्रकोपावित्यादि । यस्माद् दोषाणां शमप्रकोपौ अग्निसंश्रितौ जाठराग्नेर्बलाधिक्ये सति सर्व्वदोषाणां शमः स्याद् बलाल्पत्वे तु प्रकोपः स्यादिति. तस्माद्धेतोः सदाग्निं जाठराग्निं रक्षेत् निदानानि च सदा वर्ज्जयेत् । इति पित्तगुल्मप्रतिक्रिया ॥ ८७ ॥

गङ्गाधरः—अथ कफगुल्मे वमनमित्यादि । वमनार्हाय दौर्ब्बल्यादिरहिताय मन्दोऽग्निर्वदना मन्देत्यादिलक्षणान्विताय कफगुल्मिने स्निग्धस्विन्नशरीराय वमनं प्रदद्यात् । वमनेन तथा पुनः स्नेहस्वेदाभ्याञ्च शैथिल्यमागते प्राप्ते कफ-

चक्रपाणिः—शैथिल्यमागत इति शिथिलदोषतया शस्त्रनिर्हार्य्यदोषभूते । घटमुखे न्यसेत् ।

परिवेश्य प्रदीप्तांस्तु वल्वजानथवा कुशान् ।
भिषक् कुम्भे समावाप्य गुल्मं घटमुखे न्यसेत् ॥
स गृहीतो यदा गुल्मस्तदा घटमथोद्धरेत् ।
वस्त्रान्तरं ततः कृत्वा छिन्द्याद् गुल्मं * प्रमाणवित् ॥
विमार्गजं यदा पश्येद् यथालाभं प्रपीड़येत् ।
मृद्नीयाद् गुल्ममेवैकं न त्वत्र हृदयं स्पृशेत् ॥ ८८ ॥
तिलैरण्डातसीवीज-सर्षपैः परिलिप्य च ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद् भिषक् ॥ ८९ ॥
सव्योषक्षारलवणं दशमूलीशृतं घृतम् ।
कफगुल्मं जयत्याशु सहिङ्गुविड़दाड़िमम् ॥ ९० ॥

इति दशमूलीघृतम् ।

गुल्मे सति परिवेश्य गुल्मिनं पुमांसमुपविष्टं कृत्वा कुम्भे घटमध्ये प्रदीप्तान् वल्वजान् उलवाकतृणानि अथवा कुशान् वह्निना ज्वालयित्वा समावाप्य क्षिप्त्वा तद्घटमुखे गुल्मं न्यस्येत्, तद्वेगेन गुल्मो घटेनाकृष्य गृहीतो यदा भवति तदा घटमुद्धरेत् । ततोऽनन्तरं तमुत्थापितं गुल्मं वस्त्रान्तरं वस्त्रेण बद्धाभ्यन्तरे गतं कृत्वा प्रमाणविद् भिषक् शस्त्रेण छिन्द्यात् । यदा विमार्गजं पश्येत् तदा तं छिन्नं यथालाभं यावन्मात्रं गुल्मं हस्तेन लभते तावन्मात्रं गुल्मं प्रपीड़येत् प्रपीड़नलब्धञ्चैकमेव गुल्मं मृद्नीयात् । अत्र मर्दनकाले तु न हृदयं स्पृशेत् प्राणायतनत्वात् ॥ ८८ ॥

गङ्गाधरः—स्वेदार्थं योगमाह—तिलैरित्यादि । तिलादीनां त्रयाणां वीजानि सर्षपाणि च पेषयित्वा गुल्मोपरि परिलिप्य सुखोष्णैरयःपात्रैर्लौहमयपिण्डादिभिः श्लेष्मगुल्मं स्वेदयेत् ॥ ८९ ॥

गङ्गाधरः—कफगुल्मिनः स्नेहनार्थं स्नेहमाह—सव्योषेत्यादि । दशमूलीशृतमिति दशमूलैः कल्कीभूतैर्घृतात् पादिकैश्चतुर्गुणे च दशमूलक्वाथे

घटमन्थनयन्त्रेण सम्यग्गृहीत्वा प्रपीड़येद् भिन्द्यादिति योजना । अत्र हृदयस्य त्यागः स्फुटनादिभयात् ॥ ८६—८९ ॥

चक्रपाणिः सव्योषेत्यादि । दशमूलस्य क्वाथ व्योषादीनां शेषाणां कल्कैः साधितं

* छिन्द्यात् इत्यत्र भिन्द्यात् इति चक्रः ।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारिगन्धाद्यमापोथ्य सलिलाढ़के॥
पादशेषे रसे तस्मिन् पिप्पलीं नागरं वचाम्।
विड़ङ्गं सैन्धवं हिङ्गु यावशूकं विडं शटीम्॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमं भिषक्।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत्॥
एतत् भल्लातकघृतं कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वास-ग्रहणीरोगकासनुत्॥ ९१॥

भल्लातकाद्यं घृतम्।

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः।
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत्॥
क्षीरप्रस्थेन तत् सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम्॥ ९२॥

क्षीरषट्पलकं घृतम्।

घृतप्रस्थं पचदित्यर्थः। पक्त्वा तत्र घृते व्योपक्षारलवणघृतभृष्टहिङ्गुविड़लवणदाड़िमफलत्वक्चूर्णानि घृतात् पादिकानि प्रक्षिप्य मेलयेदिति बोध्यम्॥ ९०॥ दशमूलीघृतम्।

गङ्गाधरः—भल्लातकानामित्यादि। सुपक्वभल्लातकफलानां द्विपलं विदारिगन्धाद्यं पञ्चमूलं प्रत्येकं पलोन्मितं मिलित्वा सप्तपलमापोथ्य सलिलाढ़के षोड़शशरावजले साध्यम्। पादशेषे चतुःशरावमितेऽवशिष्टे तस्मिन् रसे क्वाथे सति पिप्पल्यादीनि रास्नान्तानि द्वादश द्रव्याणि प्रत्येकं कर्षसम्मितानि पिष्ट्वा कल्कीकृत्य पयसः प्रस्थं चतुःशरावञ्च दत्त्वा घृतप्रस्थं चतुःशरावं घृतं विपाचयेत्॥ ९१॥ भल्लातकाद्यं घृतम्।

गङ्गाधरः—पिप्पलीत्यादि। पिप्पल्यादीनि पञ्च यवक्षारञ्चेति षट् द्रव्याणि पलिकैः प्रत्येकमेषां पलं तेन चैतानि षट् मिलित्वा षट्पलिकानि

घृतं पिप्पल्याद्युक्तं षट्पलघृतसमेनैव श्रपणीयम्। तथैववचनादत्र त्रिगुणं जलं देयम्॥ ९०—९२॥

त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम् ।
जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसम् ॥
सर्पिरेरण्डतैलञ्च क्षीरञ्चैकत्र साधयेत् ।
स सिद्धो मिश्रकस्नेहः सक्षौद्रः कफगुल्मनुत् ॥
कफवातविबन्धेषु कुष्ठप्लीहोदरेषु च ।
प्रयोज्यो मिश्रकस्नेहो योनिशूलेषु चाधिकम् ॥ ९३ ॥

इति मिश्रकस्नेहः ।

कल्कीभूतानि दत्त्वा गव्यक्षीरञ्च प्रस्थं चतुःशरावं दत्त्वा जलं द्वादशशरावं दत्त्वा घृतप्रस्थं विपाचयेत् । तत् पक्वं सर्पिः कफात्मकगुल्मादिकं हन्ति ॥ ९२ ॥  क्षीरषट्पलकं घृतं, पञ्चकोलघृतमित्यन्ये ।

गङ्गाधरः—त्रिवृतामित्यादि । पलोन्मितमिति क्लीबनिर्द्दिष्टं प्रयोगेऽन्त्यगतलिङ्गसङ्गे प्रयुञ्जीतेति दशमूललिङ्गं प्रयुक्तं, परन्तु त्रिवृतादिषु सर्व्वत्रैव लिङ्गविपरिणामेनान्वेतव्यं ; तेन त्रिवृतादीनां पञ्चदशानां द्रव्याणां प्रत्येकं पलमानं चतुर्गुणे जले षष्टिपलजले पक्त्वा चतुर्भागैकभागसंस्थितं पञ्चदशपलशिष्टं स्थितं रसं क्वाथं सर्पिश्च पञ्चदशपलम् एरण्डतैलञ्च पञ्चदशपलं क्षीरञ्च पञ्चदशपलम् । भागे ह्यनुक्ते समभागविधानात् । चत्वार्य्येकल्कान्येकत्र पचेत् । स्नेहावशेषः सिद्धो मिश्रकस्नेहः । सर्पिरेरण्डतैलयोर्मेलनान्मिश्रकस्नेहः । शीतीकृतः सक्षौद्रः शीतेऽस्मिन् त्रिंशत्पले मिश्रकस्नेहे मधु पादिकं सार्द्धसप्तपलं प्रक्षिप्य मेलयेदित्यर्थः ॥ ९३ ॥  मिश्रकस्नेहः ।

चक्रपाणिः—त्रिवृतामित्यादौ पञ्चदश पलानि क्वाथ्यानि, तत्र चतुर्गुणं जलं देयं, पलोल्लेखविहितत्वात् षष्टिपलानि भवन्ति । क्षीरमपि साहचर्य्यात् पञ्चदशपलम् । एतदुभयद्रवपादस्नेहोऽत्र वक्तव्यः । किंवा स्नेहसमक्षीरमिति वचनात् स्नेहसमेन क्षीरेण क्वाथेन च पञ्चदशपलेन द्रवेण पञ्चपलः स्नेहः द्रवपादिकः कर्त्तव्यः । जतूकर्णाभिप्रायात् तु उत्क्वाथ्य त्रिवृतादिपञ्चपलात् प्रस्थमानोल्लेखने प्रस्थचतुष्टयं जलस्य देयम् । यतस्तेन सामान्येनैवोक्तं त्रिवृता-दन्ती-त्रिफला-दशमूलसमेनोरुबुकं तैलम् । सर्पिश्च श्रृतं पयसा सममुदावर्त्तशूलादौ ॥ ९३ ॥

यदुक्तं वातगुल्मघ्नं स्रंसनं नीलिनीघृतम् ।
द्विगुणं तद् विरेकार्थं प्रयोज्यं कफगुल्मिनाम् ॥ ९४ ॥
सुधाक्षीरद्रवे चूर्णं त्रिवृतायाः सुभावितम् ।
कार्षिकं मधुसर्पिर्भ्यां सुखं लीढ़ं विरेचयेत् ॥ ९५ ॥

विरेचनम् ।

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥
अष्टभागावशेषन्तु रसं पूतमपि क्षिपेत् ।
दन्तीसमं गुड़ं पूतं दद्यात् तत्राभयाश्च ताः ॥
तैलार्द्धकुड़वञ्चैव त्रिवृतायाश्चतुःपलम् ।
चूर्णितश्चार्द्धपलिकं पिप्पलीविश्वभेषजम् ॥

गङ्गाधरः—यदुक्तमित्यादि । द्विगुणमिति मात्रया द्विगुण प्रयोज्यम् । द्विगुणं द्रव्यं वा तत्साधने प्रयोज्यम् ॥ ९४ ॥

गङ्गाधरः—सुधेत्यादि । सुधा स्नुही, तस्याः क्षीरस्य पिच्छिलभागं त्यक्त्वा यद् द्रवं भवति तद्रूपे द्रवे त्रिवृतायाश्चूर्णं कार्षिकं भावितं शुष्कं कार्षिकमिति पूर्व्वयुगपुरुषाभिप्रायेण तेन यथाबलकोष्ठं माषकद्वयादिकं मधुसर्पिर्भ्यां लीढं सुखं विरेचयेत् ॥ ९५ ॥ विरेचनयोगः ।

गङ्गाधरः—जलद्रोणे इत्यादि । अभया आकृतिमानात् पञ्चविंशतिः वस्त्रे पोट्टलीकृताः, दन्त्या दन्तीमूलस्य तावन्ति पञ्चविंशतिः पलानि, चित्रकस्य मूलानि च तथैव पञ्चविंशतिः पलानि, इत्येतत्त्रयं जलद्रोणे चतुःषष्टिशरावजले पचेत् । अष्टभागावशेषन्तु अष्टशरावक्वाथावशेषन्तु पूतं तत्र पूते रसे पूतं गुड़ं पुराणं दन्तीसमं पञ्चविंशतिपलं क्षिपेत्, तेन क्वाथेन गोलयित्वा पूतं कुर्य्यात् । ततः परं ताश्च पोट्टलीबद्धास्विन्नाः पञ्चविंशतिरभयाश्च तैलार्द्धकुड़वञ्चेति रक्तिकादिषु मानेषु यावन्न कुड़वो भवेत् । आर्द्रद्रव्ये द्रवद्रव्ये न द्वैगुण्यं तथेष्यते । कुड़वेऽपि क्वचिद् द्वित्वं यथा दन्तीघृतादिषु इति वचनादत्राद्विगुण्यात् तिलतैलस्य चतुःष्पलं कटाहे दद्यात् मूर्च्छा तत्र तत्क्वाथं गुड़मिश्रं तत्र दत्त्वा पचेत् लेहवत्पाके

चक्रपाणिः—द्विगुणमिति द्विपलप्रमाणं तत्र द्विपलं पेयमुक्तम् । तैलार्द्धकुड़वमिति तैलं

तत् साध्यं लेहवत् शीते तस्मिंस्तैलसमं मधु ।
दद्याच्चूर्णपलञ्चैकं त्वगेलापत्रकेशरात् ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरेच्यते स्निग्धो दोषप्रस्थमनामयम् ॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम् ।
हृद्रोगं ग्रहणीदोषं कामलां विषमज्वरम् ॥
कुष्ठं प्लीहानमानाहमेषा हन्त्युपयोजिता ।
निरत्ययः क्रमश्चास्या द्रवो मांसरसौदनः ॥ ९६ ॥

दन्तीहरीतकी ।

सिद्धाः सिद्धिषु वक्ष्यन्ते निरूहाः कफगुल्मिनाम् ।
अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते ॥

सति तत्र त्रिवृतायाश्चूर्णं चतुष्पलं पिप्पलीचूर्णमर्द्धपलिकं विश्वभेषजचूर्णञ्चार्द्ध-पलिकं प्रक्षिप्यावतारयेत्। ततः शीते मधुनश्चतुष्पलं त्वगेलापत्रकेशरात् प्रत्येकं कर्षमानं मिलित्वा पलं दद्यात्। ततो लेहपलं खादेत्। हरीतकीञ्चैकां खादेत्। स्निग्धः स्विन्नश्च गुल्मी तेन सुखं दोषप्रस्थं पुरीषं विहाय पित्त-कफयोरर्द्धत्रयोदशपलं सुखं विरेच्यतेऽनामयमक्लेशं यथा स्यात् तथा। अस्निग्ध-स्विन्नश्चेत् खादेत्, तर्हि न तथा सुखं दोषप्रस्थं विरेच्यते। अस्या दन्तीहरीतक्या निरत्ययः आहारस्य क्रमः। द्रवो मांसरसौदनः मांसरसेन पक्वश्च द्रवीभूत ओदन इत्यर्थः। दन्तीहरीतकी ॥ ९६ ॥

गङ्गाधरः—सिद्धा इत्यादि। सिद्धिषु सिद्धिस्थाने कफगुल्मिनां सिद्धाः सिद्धफला निरूहा वक्ष्यन्ते। कफगुल्मिनां सिद्धाश्चारिष्टयोगा ग्रहण्यर्शश्चिकित्-

चतुःपलम्। लेहवदिति लेहपाकलक्षणेन पक्तव्यमित्यर्थः। इह चतुर्जातकान्मिलितात् पलम्। दोषप्रस्थमिति सार्द्धत्रयोदशपलम्। उक्तं हि भोजेन—"वमने च विरेके च तथा शोणितमोक्षणे। सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति। ग्रहण्याश्चिकित्सिते निर्दिष्टमित्यर्थः॥ ९४—९६ ॥

यच्चूर्णं गुड़िका याश्च विहिता वातगुल्मिनाम्।
द्विगुणक्षारहिङ्ग्वम्ल-वेतसास्ताः कफे हिताः ॥
य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम्।
सिद्धा निरत्ययाः शस्ताः दाहस्त्वन्ते प्रशस्यते ॥ ६७ ॥
प्रपुराणानि धान्यानि जाङ्गला मृगपक्षिणः।
कौलत्थो मुद्गयूषश्च पिप्पल्या नागरस्य च ॥
शुष्कमूलकयूषश्च बिल्वस्य तरुणस्य च।
चिरबिल्वाङ्कुराणाञ्च यमान्याश्चित्रकस्य च ॥
वीजपूरकहिङ्ग्वम्ल-वेतसक्षारदाड़िमैः।
तक्रेण तैलसर्पिर्भ्यां व्यञ्जनान्युपकल्पयेत् ॥ ६८ ॥

सिते वक्ष्यन्ते। अत्रैवाध्याये वातगुल्मिनां यच्चूर्णं याश्च गुड़िका विहितास्तत्र तत्र चूर्णं गुड़िकायाञ्च यावन्मानं यवक्षारं हिङ्गु चाम्लवेतसञ्चोक्तं तावन्मानाद् द्विगुणं दत्त्वा यदि तत्तच्चूर्णं सा सा गुड़िका वा क्रियते तदा कफगुल्मिनां कफे हिता भवन्ति। य एव ग्रहणीदोषे ग्रहणीरोगाध्याये ये ये क्षारा वक्ष्यन्ते, ते क्षारयोगाः कफगुल्मिनां निरत्ययाः सिद्धाः शस्ताः। कफगुल्मिनां गुल्मप्रदेशस्यान्ते उपरिदेशे दाहः लौहनिर्म्मितदण्डं दग्ध्वाग्निवर्णं कृत्वा तद्देशे दाहकरणं प्रशस्यते ॥ ६७ ॥

गङ्गाधरः—अथ पथ्यद्रव्याण्याह—प्रपुराणानीत्यादि। द्विवत्सरातीतानि धान्यानि शालिसंज्ञानि। जाङ्गला न तु ग्राम्याश्छागपारावतादयः। कौलत्थो यूषो मुद्गयूषश्च। चतुर्द्दशगुणे तोयेऽष्टादशगुणितेऽथवा। पक्त्वा पादावशेषन्तु यूषमाहुर्मनीषिण इति। पिप्पल्या नागरस्य च यूषः पिप्पलीक्वाथकल्कान्यतरेण यूषयोर्निर्विदलं पक्त्वा यूषः कार्य्यः। एवं शुष्कमूलकेन तरुणबिल्वेन चिरबिल्वस्य नक्तमालस्याङ्कुरपत्रेण यमान्या च चित्रकस्य मूलेन च यथायोग्यं यूषः कार्य्यः। अथ व्यञ्जनार्थमाह—वीजेत्यादि। वीजपूरकं मातुलुङ्गफलं तस्य द्रवेण हिङ्गुनाम्लवेतसेन क्षारं यवक्षारेण दाड़िमफलद्रवेण च तक्रेण च तैलेन

चक्रपाणिः—दाहस्त्वन्ते इति दाहरूपत्वात् क्रियान्तरासिद्धावन्ते एव कर्त्तव्यतामाह ॥ ९७ ॥

पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव च ॥ ९९ ॥
यमानीचूर्णितं तक्रं विड़ेनालवणीकृतम् ।
पिबेत् सन्दीपनं वात-मूत्रवर्च्चोऽनुलोमनम् ॥ १०० ॥
सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः सिरानद्धो यदा कूर्म्म इवोन्नतः ॥
दौर्ब्बल्यारुचिहृल्लास-कासवम्यरतिज्वरैः ।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥ १०१ ॥
गृहीत्वा सज्वरश्वासं छर्द्यतीसारपीड़ितम् ।
हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥ १०२ ॥

सर्पिषा वा संस्करणेन द्रव्येणैतावन्मात्रेण व्यञ्जनद्रव्याणि जाङ्गलमृगपक्षिपटोल-वार्त्ताकप्रभृतीनि पक्त्वा संस्कार्य्य व्यञ्जनानि कल्पयेत् यथा गुल्मिने रोचन्ते ॥ ९८ ॥

गङ्गाधरः—पानीयमाह—पञ्चमूलीत्यादि । पुराणं वारुणीरसं पुरातन-वारुणीसंज्ञमद्यद्रवं, काले पिपासाकाले न त्वकाले, जीर्णं पुरातनं माध्वीकं मधुकृतं मद्यम् ॥ ९९ ॥

गङ्गाधरः—अथानुलोमिकयोगमाह—यमानीत्यादि । आलवणीकृतं विड़-लवणयोगेनेषल्लवणीकृतम् ॥ १०० ॥

गङ्गाधरः—कफगुल्मान्तगुल्मचिकित्सितमुक्त्वा एषामसाध्यत्वावस्थामाह—सञ्चित इत्यादि । क्रमशः सञ्चितः सन् गुल्मो यदा महावास्तु स्वनिवासस्थानं महत् विपुलं परिगृह्णाति कृतमूलश्च भवति न चलति, सिराभिः सूक्ष्मान्त्रा-दिभिर्नद्ध आवृतः सन् बद्धो भवति, यदा वा स्वावस्थितिस्थाने कूर्म्म इव उन्नतो भवति, दौर्ब्बल्यादिभिश्च युज्यते यो गुल्मः स न सिध्यति ॥ १०१ ॥

गङ्गाधरः—अपरासाध्यलक्षणमाह—गृहीत्वेत्यादि । ज्वरश्वासच्छर्द्यती-सारयुक्तं गुल्मिनं हृन्नाभिहस्तपादेषु शोथो गृहीत्वा कर्षति मारयति ॥ १०२ ॥

चक्रपाणिः—प्रपुराणागी क्रमादसाध्यताप्राप्तं गुल्ममाह सञ्चित इत्यादिना । महा-वास्तुपरिग्रह इति भूरिदेशव्यापकः ॥ ९८—१०२ ॥

रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धविरेचनम्॥ १०३॥
पलाशक्षारपात्रे द्वे द्वे पात्रे * तैलसर्पिषोः।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रदापयेत्॥ १०४॥

गङ्गाधरः—एतल्लक्षणद्वयं वातपित्तकफसान्निपातगुल्मानामसाध्यत्वपरं न तु रौधिरगुल्मस्येति ज्ञापनाय अत ऊर्द्ध्वं रौधिरगुल्मचिकित्सितमाह—गर्भकालव्यतिक्रमे इति। ननु गर्भावस्थानकालस्तु द्वादशमासः, परन्तु वैकारिकगर्भस्य न कालनियमः। सुश्रुतेऽप्युक्तं—"नवमदशमैकादशद्वादशमासेषु प्रसूयतेऽतः परन्तु वैकारिकं विद्यात्।" अस्मिंश्चाध्याये स्वयमुक्तं "मासे व्यतीते दशमे चिकित्स्यः" इति कुतो ज्ञातव्यो गर्भकालव्यतिक्रमः? उच्यते, गर्भलक्षणव्यतिक्रमे निश्चितीकृतस्य रौधिरस्य गुल्मस्य गर्भाशङ्का यदि स्यात् तदा तदाशङ्कायां गर्भप्रसवकालात्ययापेक्षा कर्त्तव्या, नास्ति हि गर्भलक्षणाशङ्का स्तनमण्डलौष्ठपुटकृष्णत्वस्तन्यादीनां सामान्येऽपि करचरणादिभिरङ्गैर्निःशूलं स्पन्दनात् व्यतिक्रमेऽङ्गावयवकरचरणादिभिर्विना पिण्डाकारेण सशूलस्पन्दने सति गर्भाशङ्का नास्ति, तस्माद् गर्भाशङ्का-निरासार्थं नैतद् वचनम्। परन्तु गर्भप्रसवकालस्तु प्रायेण दशमो मासस्तत्कालस्य व्यतिक्रमे व्यतीते सति सुखसाध्यत्वं रक्तगुल्मस्य भवति। तदा स्निग्धस्विन्नशरीरायै स्त्रियै स्निग्धविरेचनमेरण्डतैलपयोघृतादिमिश्रं विरेचनमौषधं दद्यात्॥ १०३॥

गङ्गाधरः—पलाशक्षारेत्यादि। स्निग्धविरेचनानन्तरम्। पलाशतरुं दग्ध्वा भस्मीकृत्य क्षारं षड्गुणे तोये चतुर्गुणे वा एकविंशतिवारान् परिस्राव्य तस्य क्षारोदकस्य द्वे पात्रे द्वात्रिंशच्छरावमानं द्वैगुण्यात् तैलसर्पिषोश्च मिलित्वा द्वे पात्रे आढ़कद्वयं द्वैगुण्याद् द्वात्रिंशच्छरावं पक्त्वा स्नेहे शिष्टेऽवतार्य्य तस्य मात्रां दोषाग्निव्याधिबलापेक्षिणीं दद्यात् गुल्मशैथिल्यजननार्थम्॥ १०४॥

चक्रपाणिः—गर्भकालव्यतिक्रमे इति दशममासरूपस्य गर्भकालस्य व्यतिक्रमे॥१०३॥

चक्रपाणिः—क्षारपादे इति क्षारोदकपादद्वयम्। मात्रामिति योग्यप्रमाणमुक्तम्॥ १०४॥

---

* क्षारपादे द्वे द्वे पादे इति चक्रधृतः पाठः।

प्रभिद्यते न यद्येवं दद्याद् योनिविशोधनम्।
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः॥
ताभ्यां वा भावितान् दद्याद् योनौ कटुकमत्स्यकान्।
वराहमत्स्यपित्ताभ्यां लक्तकान् वा सुभावितान्॥
अधोहरैश्चोर्द्ध्वहरैर्भावितान् वा समाक्षिकैः।
किण्वं वा सगुड़क्षारं दद्याद् योनिविशोधनम्॥ १०५॥
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा।
लसुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रदापयेत्॥ १०६॥
वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम्।
अदृश्यमाने रुधिरे दद्याद् गुल्मप्रभेदनम्॥ १०७॥

गङ्गाधरः—प्रभिद्यत इत्यादि। यद्येवं स्नेहक्षारयोगेण रौधिरो गुल्मो न प्रभिद्यते तदा योनिविशोधनं दद्यात्। ननु योनिविशोधनं किं भवतीत्याह—क्षारेणेत्यादि। क्षारेण पलाशादिभस्मषड़्गुणचतुर्गुणान्यतरोदकं वस्त्रे स्थापनेन अधःपतितेन लवणवद्द्रव्येण पललं मांसस्य दीर्घाकारं खण्डं युक्तं कृत्वा तत्क्षारेण म्रक्षितं योनिद्वारेण प्रवेशयेत्। अथवा सुधायाः स्नुह्याः क्षीरेण म्रक्षितं तथाविधमांसखण्डं योनिद्वारेण प्रवेशयेत्। अथवा क्षारस्नुहीक्षीराभ्यां भावितान् कटुकमत्स्यकान् तिक्तपोष्ठीप्रभृतीन् मत्स्यान् योनौ दद्यात्। अथवा वराहमत्स्ययोः पित्ताभ्यां सुभावितान् लक्तकान् अलक्तकान् योनौ दद्यात्। अथवा अधोहरविरेचनिकद्रव्यक्काथैः समाक्षिकैस्तथोर्द्ध्वहरैर्वमनद्रव्यक्काथैः समाक्षिकः सुभावितान् लक्तकान् योनौ दद्यात्। अथवा किण्वं तिलकल्कं सगुड़क्षारं पुराणगुड़यवक्षारमिश्रां वर्त्तिं कृत्वा योनिविशोधनं दद्यात्। अथवा रक्तपित्तहरं क्षारं मधुसर्पिर्भ्यां लेहयेत्। तथास्यै लसुनं भक्षणार्थं तीक्ष्णां

चक्रपाणिः—पललं तिलपिष्टम्। क्षारश्चात्र पलाशक्षार एव प्रकृतत्वात्। ताभ्यामिति क्षारसुधाक्षीराभ्याम्। कटुकमत्स्यः शफरीशुष्कमत्स्यः। लक्तकान् वस्त्रावयवान्। किण्वं सुरावीजम्। रक्तपित्तहरं क्षारमिति नीलोत्पलक्षारम्॥ १०५-१०७॥

प्रवर्त्तमाने रुधिरे दद्यान्मांसरसौदनम्।
घृततैलेन साभ्यङ्गं पानार्थे तरुणां सुराम्॥ १०८॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरीं क्रियाम्।
कुर्य्याद् वातरुगार्त्तायाः सर्व्वा वातहरीः पुनः॥
घृततैलावसेकांश्च तित्तिरींश्चरणायुधान्।
सुरां समण्डां पूर्व्वञ्च पानमम्लस्य सर्पिषः॥
प्रयोजयेदुत्तरं वा जीवनीयेन सर्पिषा।
अतिप्रवृत्ते रुधिरे सतिक्तेनानुवासनम्॥ १०९॥

मदिराञ्च पातुं मत्स्यांश्च व्यञ्जनाय दद्यात्। अथवा दाशमूलिकं दशमूलक्वाथं गोदुग्धगोमूत्रयवक्षारयुक्तं कृत्वा मथित्वा योनौ वस्तिं दद्यात्। एवं कृतेऽप्यदृश्यमानं चेत् रुधिरं तदा गुल्मप्रभेदनं यद्यद् भेषजमुक्तं तत्तद् दद्यात्॥ १०५—१०७॥

गङ्गाधरः—प्रवर्त्तमान इत्यादि। एवं हि प्रवर्त्तमाने रुधिरे मांसरसौदनं पथ्यं दद्यात्। घृततैलेन चाभ्यङ्गमभ्यङ्गञ्च दद्यात्। पानार्थे तरुणां नवां सुरां दद्यात्॥ १०८॥

गङ्गाधरः—रुधिरेऽतीत्यादि। एवं कृते यद्यतिप्रवर्त्तते रुधिरं तदा रक्तपित्तहरीं क्रियां कुर्य्यात्। वातरोगश्चेद् भवति तदा वातहरीः सर्व्वाः क्रियाः कुर्य्यात्। घृतेत्यादि। अतिप्रवृत्ते रुधिरे। घृततैलावसेकांश्च वातहरान् उक्तान् कुर्य्यात्। मांसार्थं तित्तिरीन् चरणायुधान् कुक्कुटान् समण्डां सुरां प्रयोजयेत्। अम्लस्य सर्पिषश्च पानं पूर्व्वं प्रयोजयेत्। तत उत्तरं जीवनीयेन जीवनीयदशककाथकल्काभ्यां सिद्धेन सर्पिषानुवासनं प्रयोजयेत्। एवं सतिक्तेन तिक्तकघृतेनानुवासनं प्रयोजयेदिति॥ १०९॥

चक्रपाणिः—अम्लस्य सर्पिषः भोजनोत्तरकालपानम्। किंवोत्तरवस्तिः। जीवनीयं सर्पिर्वातरक्ते वक्तव्यम्। सतिक्तेन तिक्तकघृतेनानुवासनमिति॥ १०८—१०९॥

तत्र श्लोकाः।

स्नेहः स्वेदः सर्पिर्वस्तिश्चूर्णानि बृंहणं गुड़िकाः।
वमनविरेकौ मोक्षः क्षतजस्य च वातगुल्मवताम्॥
सर्पिः सतिक्तसिद्धं क्षीरं प्रस्रंसनं निरूहाश्च।
रक्तस्य चावसेचनमाश्वासनसंशमनयोगाः॥
उपनाहनं सशस्त्रं पक्कस्याभ्यान्तरप्रभिन्नस्य।
संशोधनसंशमने पित्तप्रभवस्य गुल्मस्य॥
स्नेहः स्वेदो भेदो लङ्घनमुल्लेखनं विरेकश्च।
सर्पिर्वस्तिर्गुड़िकां चूर्णमरिष्टाश्च सक्षाराः॥
गुल्मस्यान्ते दाहः कफजस्याग्रेऽपनीतरक्तस्य।
गुल्मस्य रौधिरस्य क्रियाक्रमः स्त्रीभवस्योक्तः॥
यथान्नपानसेवा हेतूनां वर्ज्जनं यथास्वञ्च *।
नित्यश्चाग्निसमाधिः स्निग्धस्य च सर्व्वकर्म्माणि॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोका इति। स्नेहः स्वेद इत्यादि। क्षतजन्यशोणितस्य मोक्षः। प्रस्रंसनं विरेचनम्। आश्वासनं समाश्वस्तं सशेषात्ति-मित्यादिना आश्वासवचनम्। उपनाहनं प्रलेपनम्। स्नेह इत्यादि। उल्लेखनं वमनं कफजस्येति छेदः। अग्रे पूर्व्वमपनीतरक्तस्य विरिक्तीकृतरक्तस्य रौधिरस्य गुल्मस्य स्त्रीभवस्य क्रियाक्रमः उक्तः। अथ वातादिगुल्मेषु यथास्वं पथ्यान्नपानसेवा, यथास्वं हेतूनाञ्च वर्ज्जनम्। नित्यश्चाग्निसमाधिरित्येतत् आमान्वये पित्तगुल्मे इत्यादिना प्रोक्तम्। स्निग्धस्य भिषजा तु स्वेद इत्यादिना

* "पथ्यान्न" इति पाठः साधीयान्।

हेतुर्लिङ्गं सिद्धिः क्रियाक्रमः साध्यता न च योगाश्च * ।
गुल्मचिकित्सितसंग्रह एतावान् व्याहृतोऽग्निवेशस्य ॥ ११० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
गुल्मचिकित्सितं नाम पञ्चमोऽध्यायः ॥ ५ ॥

स्निग्धस्य च सर्व्वकर्म्माण्युक्तानि। पूर्व्वं गुल्मानां हेतुर्लिङ्गं प्रोक्तं ततः सक्रियाक्रममतः सिद्धमित्यादिना सिद्धः क्रियाक्रमः। सञ्चितः क्रमश इत्यादिना न साध्यता उक्ताः। योगाश्च उक्ताः ॥ ११० ॥

गङ्गाधरः—अध्यायं समापयति—अग्निवेशेत्यादि ॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे
चिकित्सितस्थानजल्पे गुल्मचिकित्सितजल्पाख्या
पञ्चमी शाखा ॥ ५ ॥

चक्रपाणिः—स्नेह इत्यादिना पुनः संक्षेपेण संग्रहं करोति। साध्यतानुयोगाश्च एतेन प्रत्येकं वातादिगुल्मचिकित्सिते संगृहीतेऽपि पुनः संक्षेपसंग्रहाभिधानेन संगृहीता ॥ ११० ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां गुल्मचिकित्सितं
नाम पञ्चमोऽध्यायः ॥ ५ ॥

* साध्यतानुयोगाश्च इत्यन्यत्र पठ्यते।

## षष्ठोऽध्यायः।

### अथातः प्रमेहचिकित्सितं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः॥ १ ॥

**निर्म्मोहमानानुशयो निराशः पुनर्व्वसुर्ज्ञानतपोविशालः।**
**कालेऽग्निवेशाय सहेतुलिङ्गानुवाच मेहान् शमनञ्च तेषाम्॥ २ ॥**
**आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि।**
**नवान्नपानं गुड़वैकृतञ्च प्रमेहहेतुः कफकृच्च सर्व्वम्॥ ३ ॥**

गङ्गाधरः—अथोद्देशानुक्रमेण गुल्मचिकित्सितानन्तरं प्रमेहचिकित्सितमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद् व्याख्येयम्॥ १ ॥

गङ्गाधरः—निर्म्मोहेत्यादि। अनुशयोऽनुवृत्तिः। मोहमानानुशयाभ्यां निर्गतः। निराशः आशातो निर्गतः आशाशून्य इत्यर्थः। ज्ञानतपसी विशाले यस्य। काले प्रश्नकाले॥ २ ॥

गङ्गाधरः—तत्र हेतुमाह—आस्येत्यादि। आस्या आस्यते उपविश्यते इत्यास्या, तत्र सुखं सुखेनास्या इत्यर्थः। स्वप्नसुखं सुखेन निद्रा। ग्राम्यश्च औदकश्चानूपश्च तानि मांसानि तेषां रसाः। पयांसीति गव्यमाहिषादिदुग्धानि। नवानामन्नं भोजनं पानञ्चाथवा नवे चान्नपाने। गुड़वैकृतं गुड़कृतविकारः। सर्व्वं कफकृच्च द्रव्यम्। प्रमेहहेतुः कफप्रमेहहेतुरित्यर्थः। केचित् तु एतेन सर्व्वप्रमेहेषु कफानुबन्धः ख्यापितः, सामान्येनेदं हुक्तं, पूर्व्वं प्रमेहाणां निदानं त्रिदोषकोपकत्वात्, तन्न; निदानस्थाने हि त्रिदोषप्रकोपजाः सर्व्वे प्रमेहा उक्ताः, पुनः श्लेष्माद्याधिक्येन श्लैष्मिकादिप्रमेहाणां प्रत्येकं निदानमुक्तम्॥ ३ ॥

चक्रपाणिः—निदानोक्तसम्बन्धक्रमादेव गुल्मचिकित्सितादनु मेहचिकित्सितं समुच्यते। निर्गता मोहादयो यस्य स तथा, अनुशयः कोपः, निर्गता आशा यस्य स निराशः नीरागः। निदानोक्तमपि हेतुलिङ्गादि पुनः प्रकरणवशात् सकलमुच्यते। आस्यासुखमिति सुखजनिकास्या न दुःखजनिका। एवं स्वप्नसुखञ्च ज्ञेयम्। शय्यादिदोषेण दुःखस्वप्नं दुःखास्या च न प्रमेहहेतुः। गुडवैकृतञ्च इत्यादिना कफजादिमेहहेतुः। कफजा एव मेहाः मेहत्वेनादावुच्यन्ते॥ १—३ ॥

**मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो वस्तिगतं प्रदूष्य।**
**करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि॥**
**क्षीणेषु दोषेष्ववकृष्य वस्तौ धातून् प्रमेहान् कुरुतेऽनिलश्च।**
**दोषो हि वस्तिं समुपेत्य मूत्रं संदूष्य मेहान् कुरुते यथास्वम्॥४॥**
**साध्याः कफोत्था दश पित्तजाः षट् याप्या असाध्यः पवनाच्चतुष्कः।**
**समक्रियत्वाद् विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते॥५॥**

गङ्गाधरः—तत्र हायनकयवकेत्यादिना कफप्रमेहनिदानं यदुक्तं तथा दोषः श्लेष्मा दूष्याश्च बहुबद्धमेदःप्रभृतय इति तदनुसृत्य सम्प्राप्तिमाह—मेदश्चेत्यादि। एभिरास्यासुखादिभिः प्रकुपितः कफो दोषो मेदो मांसं शरीरजं क्लेदं चकारान्निदानस्थाने व्याख्यातं शुक्रं शोणितं वसां मज्जानं लसीकां रसञ्चौज इति सर्व्वं दूष्यं वस्तिगतं बहुबद्धं प्रदूष्य यथास्वं दशोदकमेहादीन् मेहान् करोति। पित्तञ्चोष्णैर्निदानस्थाने व्याख्यातैरुष्णाम्ललवणेत्यादिभिः समुदीर्णं सत् तानेव मेदश्च मांसञ्च शरीरजञ्च क्लेदं शुक्रञ्च शोणितञ्च वसाञ्च मज्जानञ्च लसीकाञ्च रसञ्चौजश्चेति सर्व्वान् परिदूष्य षट् प्रमेहान् यथास्वं क्षारमेहादीन् षट् करोति। क्षीणेष्वित्यादि। वातोऽपि निदानस्थाने व्याख्यातै र्वातप्रमेहनिदानैः कषायकटुतिक्तरूक्षलघुशीतेत्यादिभिः कुपितः सन् तानेव बहुमलिनमेदोमांसशरीरजक्लेदशुक्रशोणितवसामज्जलसीकौजोरसान् बद्धदूष्यान् अवकृष्य प्रमेहान् कुरुते। यतो दोषो वस्तिमुपेतान् दूष्यान् संदूष्य यथास्वं मेहानुदकमेहादीन् दश षट् चतुरो मेहान् कुरुते॥४॥

गङ्गाधरः—तत्र साध्यासाध्यत्वादीनाह—साध्या इत्यादि। कफोत्था दश प्रमेहाः साध्याः, प्रकृतिविकृतिभूतत्वात् समक्रियत्वाच्च। दोषो हि श्लेष्मा उष्णरूक्षादिसाध्यो, दूष्याश्च मेदोमांसादयो धातवोऽप्युष्णरूक्षादिसाध्या इति समक्रियत्वम्। यद्यपि शोणितमपि दूष्यं नोष्णरूक्षादिसाध्यं तथापि विरुद्धगुणसमवाये भूयसाल्पमवजीयते इति मेदोमांसादिभूयःसहचरितत्वेन भवत्येव

चक्रपाणिः—मेदश्च मांसञ्चेत्यनेन कफजादिमेहसम्प्राप्तिमाह। क्षीणेष्विति दोषेषु कफपित्तेषु, द्वयोश्च बहुवचनं व्यक्त्यपेक्षया ज्ञेयम्। क्षीणेष्विति वृद्धवातापेक्षया क्षीणेषु, तेन वृद्धकफपित्ते यो वायुः लङ्घनादिना क्रमेण वृद्धो भवति स नेहासाध्यमेहचतुष्टयकरणे विवक्षित इति दर्शयति। अत्र चिकित्साविधानात् साध्यत्वमस्ति, यदुक्तं—'या वातमेहान् प्रति पूर्व्वमुक्ता वातोल्वणानां विहिता क्रिया सा। वायुर्हि मेहेष्वतिकर्षितानां कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता' इति। धातूनिति वसामज्जौजोलसीकाख्यान्। सर्व्वत्र संशमनं

कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः ।
मज्जा रसौजः पिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ॥ ६ ॥
जलोपमञ्चेक्षुरसोपमं वा घनं घनञ्चोपरिविप्रसन्नम् ।
शुक्लं सशुक्रं शिशिरं शनैर्वा लालेव वा वालुकया युतं वा ॥

उष्णादिसाध्यमिति । पित्तजाः षट् याप्याः संसृष्टदोषमेदःस्थानत्वात् । पित्तदोषे स्निग्धशीतादिक्रिया मेदोमांसशरीरजक्लेदशुक्रशोणितवसामज्जलसीकौजोरसानां दूष्याणां क्रियया रुक्षोष्णादिरूपया विषमक्रियत्वात् । पवनाच्चतुष्कः प्रमेहोऽसाध्यस्तथैव विरुद्धोपक्रमत्वात् महात्ययत्वाच्च । महात्ययत्वन्तु मेदःप्रभृतिधातुदुष्ट्यां सत्यां वसामज्जलसीकौजसां गम्भीरधातूनामत्यपकर्षकवातजनितत्वेनाशुघातित्वमिति यथाक्रमम् अन्वयः ॥ ५ ॥

गङ्गाधरः—एषु सर्व्वेषु प्रमेहेषु दोषदूष्याणां संग्रहं सङ्ख्यासंग्रहञ्च दर्शयति—कफ इत्यादि । सपित्त इत्यनेन पृथक् पृथक् प्रमेहकरत्वमेषां निरस्तम् । सर्व्वत्रैव मेहेष्वेते त्रयो दोषा मेदःप्रभृतयः पिशितान्ता दशैव दूष्याः । अत्राम्बु शरीरजः क्लेदः । विंशतिरेव न त्वधिका मेहा भवन्ति ॥ ६ ॥

गङ्गाधरः—कफजान् दश प्रमेहान् नामतो लक्षणाथमाह—जलोपममित्यादि ।

दोषाणामुच्यत इत्याह—दोषो हीत्यादि । समक्रियत्वादिति कफस्य दोषस्य दूष्यस्य मेदःप्रभृतेः समानत्वात् कटुतिक्तादिक्रियायाः, विषमक्रियत्वादिति पित्तस्य संशमनादिचिकित्सायाः कट्वादिरूपाया विषमत्वात्, महात्ययत्वादिति मज्जादिगम्भीरधात्वपकर्षकत्वेन महाव्यापत्तिकर्त्तृत्वादाशुकारित्वाच्च । चकारान्निदानोक्तविषमक्रियत्वञ्च वातात्मकानां समुच्चिनोति । यथाक्रममिति यथासंख्यम् ॥ ४।५ ॥

चक्रपाणिः—कफ इत्यादिना सर्व्वमेहाणां दोषदूष्यसंग्रहमाह । रसश्च ओजश्चेति रसौजा ओजसोऽपि मधुमेहे दूष्यत्वात् । यद्यपि मेदःप्रभृतयो दूष्या इह उच्यन्ते, तथापि पूर्व्वं मेदोमांसशरीरजक्लेदानामवश्यम्भावितया परिग्रहः, मज्जादयश्च सर्व्वमेहे पुनरवश्यं दृश्यन्ते स्तोकं वा दृष्टा भवन्ति । किंवा सर्व्वमेहाणामेव त्रिदोषजत्वं तथा सकलदूष्यत्वञ्च कफः सपित्त इत्यादिना ग्रन्थेनोच्यते । मेदोमांसादीन्यत्यर्थदूष्योपदर्शनार्थं पृथगुक्तानि । यतः कियन्तःशिरसीये सकलमेहवाचकं मधुमेहं कथयता दोषत्रयप्रकोपोऽप्युक्तः । तथाहि—'समारुतस्य पित्तस्य कफस्य च मुहुर्म्मुहुः । दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः ।' इत्युक्तम्, तथा सुश्रुतोऽप्याह—'वातपित्तमेदोभिरन्वितः श्लेष्मा मेहान् जनयति ।' कफजादीनां ह्युल्वणादिसंसर्गस्यानन्त्येन प्रमेहसंख्याप्रसक्तिनिरासार्थमाह—विंशतिरेव मेहा इति ॥ ६ ॥

चक्रपाणिः—जलोपममित्यादिना दशभिः श्लेष्मगुणैः कृतान् दश प्रमेहानाह । एतच्च निदाने

विद्यात् प्रमेहान् कफजान् दशैतान् क्षारोपमं कालमथापि रक्तम्
हारिद्रमाञ्जिष्ठमथापि नीलमेतान् प्रमेहान् षड़ुशन्ति पैत्तान् ॥
मज्जौजसा वा वसयान्वितं वा लसीकया वा सततं विबद्धम्।
चतुर्व्विधं मूत्रयतेऽनिलेन शेषेषु धातुष्ववकर्षितेषु ॥ ७ ॥
वर्णं रसं स्पर्शमथापि गन्धं यथास्वदोषं भजते प्रमेहः।
श्यावारुणो वातकृतः सशूलो मज्जादिसाद्गुण्यमुपैत्यसाध्यः ॥८॥

जलोपममुदकमेहम्, इक्षुरसोपममिक्षुमेहं, घनं सान्द्रमेहं, घनश्चोपरिविप्रसन्नं सान्द्रप्रसादमेहं, शुक्लं शुक्रमेहं, सशुक्रं शुक्रमेहं, शिशिरं शीतमेहं, शनैरिति शनैर्मेहं, लालेवेति लालामेहं, वालुकया युतमिति सिकतामेहं ; दशैतान् कफजान् प्रमेहान् विद्यात्। लक्षणान्येषां निदाने प्रोक्तानि। अथ पित्तजान् षड़ाह—क्षारोपमित्यादि। क्षारोपमं क्षारमेहं, कालं कालमेहं रक्तं लोहितमेहं, हारिद्रमेहं, माञ्जिष्ठमेहञ्च, नीलं नीलमेहम् ; इत्येतान् षट् पैत्तान् प्रमेहानुशन्ति। अथ वातजान् चतुरः प्रमेहानाह—मज्जेत्यादि। मज्जमेहम्, ओजसा मधुमेहं, वसयान्वितं वसामेहं, लसीकया युतं हस्तिमेहं ; चतुर्व्विधमनिलेन शेषेषु मज्जादिधातुष्ववकर्षितेषु मूत्रयते ॥७॥

गङ्गाधरः—वर्णमित्यादि। एषु सर्व्वेषु प्रमेहेषु यथादोषं वर्णरसस्पर्शगन्धा भवन्ति। कस्य दोषस्य वर्णो न मज्जमेहेषु दृश्यते इत्यत आह—श्यावारुण इत्यादि। वातकृतश्च वर्णः श्यावारुणः सशूलः, मज्जादीनां मज्जवसालसीकौजसां साद्गुण्यं समरूपतां यस्मादुपैति तस्मादसाध्यो भवति। न तु कफस्य वर्णो न वा पित्तस्य वर्णः मेदःप्रभृतिदूष्यसाद्गुण्यमेति तस्मान्नासाध्यः ॥ ८ ॥

स्फुटमनुसर्त्तव्यम्। घनश्चोपरि विप्रसन्नमित्यनेन सान्द्रप्रसादमेहमाह। वातिको मज्जमेहः। ( ओजसा मधुमेहः )। वसया वसामेहः। लसीकया हस्तिमेह इति ज्ञेयाः। शेषेष्विति मज्जादिषु रसादियुक्तधातुव्यतिरिक्तेषु, अवकर्षितेषु इति क्षीणेषु। क्षयस्तेषां प्रमेहारम्भकेण वातेनैव उपोषणादिषु कर्षणाद्वा क्रियते ॥ ७ ॥

चक्रपाणिः—संक्षेपेण कफजादिप्रमेहलक्षणमाह—वर्णमित्यादि। तत्र कफजे श्वेतो वर्णो मधुरो रसः शीतस्पर्शः, आमश्च गन्धो भवति। एवं पित्तमेहेऽपि ज्ञेयाः। वायोस्त्वतिनिर्व्वर्णत्वेन प्राभाविकं कायवर्णनमाह—श्यावारुण इत्यादि। मज्जादिसाद्गुण्यं मज्ज-

स्वेदोऽङ्गगन्धः शिथिलाङ्गता च शय्यासनस्वप्नसुखे रतिश्च ।
हृन्नेत्रजिह्वाश्रवणोपदेहो घनाङ्गता केशनखाभिवृद्धिः ॥
शीतप्रियत्वं गलतालुशोषो माधुर्य्यमास्ये करपाददाहः ।
भविष्यतो मेहगदस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥ ६ ॥
स्थूलः प्रमेही बलवानिहैकः कृशस्तथैकः परिदुर्ब्बलश्च ।
संबृंहणं तत्र कृशस्य कार्य्यं संशोधनं दोषबलाधिकस्य ॥ १० ॥
स्निग्धस्य योगा विविधाः प्रयोज्याः कल्पोपदिष्टा मलशोधनाय ।
ऊर्द्ध्वं तथाधश्च मलेऽपनीते मेहेषु सन्तर्पणमेव कार्य्यम् ॥ ११ ॥

गङ्गाधरः—अस्य पूर्व्वरूपमाह—स्वेदोऽङ्गगन्ध इत्यादि। शिथिलाङ्गता अङ्गशैथिल्यम्। शय्यादिषु सुखे रतिः सेवा। हृदादीनामुपदेह उपलेपः। घनाङ्गता स्थूलाङ्गता। केशनखानामभिवृद्धिः स्वभावतो वृद्धेरतिवृद्धिः ॥ ९ ॥

गङ्गाधरः—संक्षेपतो मेहस्य निदानदोषदूष्योपदेशपूर्व्वकं संप्राप्तिसंख्यानामतोऽनुरूपलिङ्गानि पूर्व्वरूपाण्युक्त्वानन्तरमुपशयं वक्तुं चिकित्सितमाह—स्थूल इत्यादि। इह खलु प्रमेही पुरुषो द्विविधो भवति। तत्रैकः प्रमेही स्थूलो बलवान्, तथैकोऽपरः कृशः परिदुर्ब्बलश्च भवति। तत्र कृशस्य दुर्ब्बलस्य प्रमेहिणः संबृंहणं सम्यक् पुष्टिकरं भेषजं कार्य्यम्। दोषबलाधिकस्य स्थूलस्य बलवतः प्रमेहिणः संशोधनं विरेचनादिकं कार्य्यम् ॥ १० ॥

गङ्गाधरः—ननु कैर्योगैः कथं संशोधयेदित्यत आह—स्निग्धस्येत्यादि। स्निग्धस्येति न स्निग्धस्विन्नस्य, मधुमेहिनां स्थूलानां पित्तमेहिनाञ्च स्वेदप्रतिषेधात्। स्निग्धस्यैव कल्पोपदिष्टाः कल्पस्थाने वक्ष्यमाणा वमनविरे-

लसीकादिसमानगुणतां याति। यद्यपि वातिको मेहोऽसाध्य एवोक्तस्तथापि पुनरिहासाध्यवचनेन य एव उत्पत्तितः प्रभूताकृतिः स एव श्यावारुणत्वादि सकलं लक्षणं बिभर्त्ति। यस्तूत्तरकालं वानुबद्धः स साध्यो भवति। तत्र मज्जादिसादृगुण्यं नावश्यं भवतीति दर्शयति। किंवोत्तरकालमेव ये वातानुबन्धाः श्यावारुणवर्णादय उक्ता भवन्ति, तेऽप्यसाध्या भवन्तीति। तथा कफपित्तजा अपि मज्जादियोगादसाध्या एव, उक्तम्—'सर्व्व एव प्रमेहास्तु कालेनाप्रतिकारिणः। मधुमेहत्वमायान्ति तदासाध्या भवन्ति हि' ॥ स्वेदोऽङ्गगन्ध इत्यादिना पूर्व्वरूपमाह ॥ ८।९ ॥

चक्रपाणिः—परिदुर्ब्बलो हीनबलः। कृशस्य इति मांसकृशस्य, दोषबलाधिकस्य दोषेण बलेनाधिकस्य ॥ १० ॥

गुल्मः क्षयो मेहनवस्तिशूलं मूत्रग्रहश्चाप्यपतर्पणेन।
प्रमेहिणः स्युः परिबृंहणानि कार्य्याणि तस्य प्रसमीक्ष्य वह्निम् ॥१२
संशोधनं नार्हति यः प्रमेही तस्य क्रिया संशमनी प्रयोज्या।
मन्थाः कषाया यवचूर्णलेहाः प्रमेहशान्त्यै लघवश्च भक्ष्याः ॥१३॥
ये विष्किरा ये प्रतुदा विहङ्गास्तेषां रसैर्जाङ्गलजैर्मनोज्ञैः।
यवौदनं रूक्षमथापि वाट्यं मद्यान् सशक्तूनपि चाप्यपूपान् ॥
मुद्गादियूषैरपि तिक्तशाकैः पुराणशाल्योदनमाददीत।
दन्तोङ्गुदीतैलयुतं प्रमेही तथातसीसर्षपतैलयुक्तम् ॥

चनयोर्ये योगास्ते मलशोधनाय ऊर्द्ध्वतोऽधस्ताच्च कफपित्तपुरीषशोधनाय प्रयोज्याः। तैर्योगैः ऊर्द्ध्वं वमनेन कफादौ मलेऽपनीते तथाधश्च विरेचनेन पित्तादावपनीते निर्हृते सति सन्तर्पणं सन्तर्पणीयोक्तं तृप्तिकरं कर्म्म कार्य्यम् ॥ ११ ॥

गङ्गाधरः—कस्मात् संशुद्धमलस्य प्रमेहिणः सन्तर्पणं कार्य्यं न त्वपतर्पणमित्यत आह—गुल्म इत्यादि। प्रमेहिणः वान्तस्य विरिक्तस्य खल्वपतर्पणेन गुल्मादय एते स्युस्तस्माच्चापहृतमलस्य प्रमेहिणो वह्निं प्रसमीक्ष्य परिबृंहणानि च कार्य्याणि ॥ १२ ॥

गङ्गाधरः—संशोधनमित्यादि। यस्तु खलु प्रमेही कृशदुर्ब्बलादिः संशोधनं नार्हति तस्य संशमनी क्रिया प्रयोज्या। अथ संशमनानि प्रमेहिणामाह—मन्था इत्यादि। मन्था द्रवेणालोड़िताः सक्तवः। कषायाः पञ्च कषायरूपाः। यवश्च चूर्णश्च लेहश्च लघवश्च पुराणषष्टिकादिकृता विकारा भक्ष्याः प्रमेहशान्त्यै प्रयोज्याः ॥ १३ ॥

गङ्गाधरः—तत्रादौ मांसाद्यमाह—ये विष्किरा इत्यादि। अन्नपानादिकेऽध्याये ये विष्किरसंज्ञाः पक्षिणः प्रतुदसंज्ञाः पक्षिणश्चोक्तास्तेषां मांसरसैः मनोज्ञैर्जाङ्गलमांसजैश्च रसैः रूक्षं यवौदनं यवतण्डुलौदनमथवा वाट्यं यवमण्डम् आददीत। सशक्तून् यवशक्तूनप्यपूपानपि आददीत। मुद्गादिलघुविदलयूषैः तिक्तशाकैः पटोलपत्रादिभिः पत्रपुष्पफलकाण्डशाकैः पुराणशाल्योदनं वा आददीत। दन्तीत्यादि। दन्तीफलस्नेहेन इङ्गुदी पुत्रञ्जीवफलं तस्य स्नेहेन

चक्रपाणिः—क्षयो धातुक्षयः। क्षुण्णशुष्कयवानां मण्डरहितो यवौदनः, स एव मण्डो वाट्यः निस्तुषोष्णदलितानां यवानां भवति। अतसी ख्याता। ये तिलातसीति पठन्ति तेषां मनसि

सर्षपैष्टिकं स्यात् तृणधान्यमन्नं यवप्रधानन्तु भजेत् प्रमेही ।
यवस्य भक्ष्यान् विविधांस्तथाद्यात् कफप्रमेही मधुसंप्रयुक्तान् ॥१४
निशि स्थितानां त्रिफलाकषाये स्युस्तर्पणाः क्षौद्रयुता यवानाम् ।
तान् सीधुयुक्तान् प्रपिबेत् प्रमेही प्रायौगिकान् मेहवधार्थमेव ॥१५
ये श्लेष्ममेहे विहिताः कषायास्तैर्भावितानाञ्च पृथग् यवानाम् ।
शक्तूनपूपान् सगुड़ान् सधानान् भक्ष्यांस्तथान्यान् विविधांश्च खादेत्॥
खराश्वगोहंसकसंभृतानां * तथा यवानां विविधाश्च भक्ष्याः ।
देयास्तथा वेणुयवा यवानां कल्पेन गोधूममयाश्च भक्ष्याः ॥१६॥

युतं पुराणशाल्योदनमाददीत। तथा अतसी मसिना इति लोके, सर्षपश्च तयोस्तैलयुतं सर्षपैष्टिकं षाष्टिकधान्ययुक्तं तृणधान्यं कङ्गुकोद्रवादिकमन्नं भजेत्। किन्तु प्रमेही भक्षणविधौ यवप्रधानं भजेत् यवविकारबहुलाहारी स्यात्। इति सामान्यतः प्रमेहिणां संशमनायाहारार्थद्रव्याण्युक्त्वा कफप्रमेहादिभेदेनाह— यवस्येत्यादि। यवस्य भक्ष्यान् घृतपूरादीन् मधुसंमिश्रान् कफप्रमेही अद्यात् ॥ १४ ॥

गङ्गाधरः—निशीत्यादि। त्रिफलाकषाये त्रिफलाक्वाथे निशि स्थितानां यवानां सक्तुरूपाणां परदिने तेन त्रिफलाकषायेणालोडितानां क्षौद्रयुताः तर्पणाः स्युः। तान् तर्पणान् सीधुयुतान् प्रायोगिकान् सतताभ्यस्तान् प्रपिबेत् मेहवधार्थं प्रकरणात् कफमेहनाशार्थम् ॥ १५ ॥

गङ्गाधरः—ये श्लेष्ममेहे इत्यादि। ये श्लेष्ममेहेऽत्रैव विहिता अर्थात् वक्ष्यमाणाः श्लेष्ममेहक्वाथा वा ये तैः क्वाथैर्भावितानां यवानां सक्तूनपूपान् सगुड़ान् गुड़ेन मिश्रान् सधानान् धानानामकान् तथान्यांश्च भक्ष्यांस्तद्यवकृतान् विविधान् खादेत्। खराश्वेत्यादि। खराश्वादीनां मांसस्य तथा यवानां पूपादयो भक्ष्या विविधा देयास्तथा यवानां कल्पेन त्रिफलाकषाये निशि स्थितानां श्लेष्ममेहकषायभावितानां वेणुयवानां विविधा भक्ष्यास्तथा यवानां कल्पेन गोधूमानां विविधा भक्ष्या देया इत्यर्थः ॥ १६ ॥

फलरूपातसी विवक्षिता। तृणधान्यादीनि श्यामाकादीनि। अपूपान् यवपिष्टकृतान्। धानान् भृष्टयवान्। किंवा शकृद्धुतानां यवानां, वेणुयवा यवानां वंशफलानामित्यर्थः ॥ ११—१६ ॥

* हंसतृषद्भृतानां तथा धेनुकसंभृतानामिति पाठद्वयं दृश्यते ।

संशोधनोल्लेखनलङ्घनानि कालप्रयुक्तानि कफप्रमेहान्।
जयन्ति पित्तप्रभवान् विरेकः सन्तर्पणः संशमनो विधिश्च ॥१७॥
दार्व्वीसुराह्वात्रिफलाः समुस्ताः कषायमुत्क्वाथ्य पिबेत् प्रमेही।
क्षौद्रेण युक्तामथवा हरिद्रां पिबेद् रसेनामलकीफलानाम् ॥१८॥
हरीतकीकट्फलमुस्तलोध्रं पाठाविडङ्गार्ज्जुनधन्वनाश्च।
उभे हरिद्रे तगरं विडङ्गं कदम्बशालार्ज्जुनदीप्यकाश्च॥
दार्व्वी विडङ्गं खदिरो धवश्च सुराह्वकुष्ठागुरुचन्दनानि।
दार्व्व्यग्निमन्थौ त्रिफला सपाठा पाठा च मूर्व्वा च तथा श्वदंष्ट्रा॥
यमान्युशीराण्यभया गुडूची चव्याभयाचित्रकसप्तपर्णाः।
पादैः कषायाः कफमेहिनां ते दशोपदिष्टा मधुसंप्रयुक्ताः ॥१९॥

गङ्गाधरः—संशोधनं विरेचनम्। उल्लेखनं वमनम्। लङ्घनञ्चैतानि बलवतां स्थूलानां कालप्रयुक्तानि विरेचनादियोग्यकाले प्रयुक्तानि कफप्रमेहान् जयन्ति इत्यन्वयः। तथा पित्तप्रभवान् प्रमेहान् विरेकः सन्तर्पणः संशमनो विधिश्चैते जयन्तीत्यन्वयः ॥ १७ ॥

गङ्गाधरः—अथ सामान्यतः सर्व्वमेहे कषायावाह दार्व्वीत्यादि। दार्व्वी दारुहरिद्रा, सुराह्वा देवदारु, त्रिफला मुस्तञ्चेत्येतेषां कषाय एकः। क्षौद्रेण युक्ताम् आमलकीफलानां रसेन हरिद्रां कल्कीकृत्य पिबेत् ॥ १८ ॥

गङ्गाधरः—हरीतकीत्यादिभिः पादैर्दशभिः दश कषाया मधुसंप्रयुक्ताः कफमेहिनामुपदिष्टाः। लोध्रान्तैश्चतुर्भिर्द्रव्यैरेकः कषायः। पाठादिधन्वनान्तैर्द्वितीयः धन्वनो धाअन इति लोके। उभे हरिद्रे इत्यादिविडङ्गान्तैश्चतुर्भिस्तृतीयः कदम्बादिदीप्यकान्तश्चतुर्भिश्चतुर्थः। दार्व्वीत्यादिधवान्तैश्चतुर्भिः पञ्चमः सुराह्वादिचन्दनान्तैश्चतुर्भिः षष्ठः। दार्व्वीत्यादिपाठान्तैः षड्भिः सप्तमः पाठादिभिस्त्रिभिरष्टमः। यमानीत्यादि। यमान्यादिगुडूच्यन्तैश्चतुर्भिर्नवमः चव्यादिसप्तपर्णान्तैश्चतुर्भिः दशमः। कषाया इति कफमेहकषायाधिकारः ॥१९॥

चक्रपाणिः—संशोधनग्रहणेनैवोल्लेखे प्राप्ते पुनर्वमनस्य कफजयप्रधानत्वख्यापनार्थमुल्लेखनपदेन वाच्यम्। अन्ये तूल्लेखं कफमेहेषु निक्षेपणमाहुः। पित्तमेहानां याप्यत्वाज्जयन्तीतिपदेन पित्तमेवं प्रतिपादनमेवोच्यते किंवात्यन्तदुष्टे मेदसि पित्तजानामपि असाध्यत्वम्। साध्यास्तु मेदो यदि न प्रदुष्टमित्यनेन वक्तव्यास्तान् प्रति जयन्तीति साधु। दार्व्वी सुराह्वेत्यादुक्तं योगद्वयं

उशीरलोध्राञ्जनचन्दनानामुशीरमुस्तामलकाभयानाम् ।
पटोलनिम्बामलकामृतानां मुस्ताभयापद्मकवृक्षकाणाम् ॥
लोध्राम्बुकालीयकधातकीनां निम्बाञ्जनाम्रातनिशोत्पलानाम् ।
शिरीषसर्ज्जार्ज्जुनकेशराणां प्रियङ्गुपद्मोत्पलकिंशुकानाम् ॥
*अश्वत्थयासासनवेतसानां कटङ्कटेर्य्युत्पलमुस्तकानाम् ।
पत्तेषु मेहेषु दश प्रदिष्टाः पादैः कषाया मधुसंप्रयुक्ताः ॥ २० ॥
सर्व्वेषु मेहेषु हितौ तु पूर्व्वौ कषाययोगौ विहितास्तु सर्व्वे ।
मन्थस्य पाने यवभावनानां स्युर्भोजने पानविधौ पृथक् च ॥२१॥
सिद्धानि तैलानि घृतानि चैव योज्यानि मेहेष्वनिलात्मकेषु ।
मेदः कफश्चैव कषाययोगैः स्नेहैश्च वायुः शममेति तेषाम् ॥२२॥

गङ्गाधरः—अथ पित्तमेहकषायानाह—उशीरेत्यादि। षष्ठीबहुवचनान्तपादै रेकैकयोगः। दश योगाः। कषायाः कषायविधिना मधुयुक्ताः पित्तमेहेषु प्रयोज्याः। पद्मकं पद्मकाष्ठं, वृक्षकः कुटजत्वक्, अम्बु वालकं, कालीयकं कालीयकाष्ठम्, आम्रातमाम्रातकं, सर्ज्जो धूनकः, केशरं नागकेशरं, पद्मं पद्मकिञ्जल्कम्, उत्पलं नीलोत्पलम्, यासो दुरालभा, असनः पीतशालः, वेतसो नाम पानीयामलकम्, कटङ्कटेरी दारुहरिद्रा ॥ २० ॥

गङ्गाधरः—सर्व्वेष्वित्यादि। पूर्व्वौ दार्व्वीसुराह्वात्रिफलाः समुस्ता इत्येकः, क्षौद्रेण युक्तामित्यादिना द्वितीयः, इति द्वौ कषाययोगौ सर्व्वेषु कफपित्तवातकृतेषु प्रमेहेषु हितौ। सर्व्वे तु दार्व्वीत्यादिना द्वौ, कफमेहे दश, पित्तमेहे दश, कषाया इत्येते द्वाविंशतिः कषायाः। पृथक् यथादोषं मन्थस्य पाने पानीयार्थं गोधूमानाञ्च यवभावनानां पानीयार्थं भोजने पानीयार्थं पानविधौ पानीयार्थेश्च विहिताः ॥ २१ ॥

गङ्गाधरः—सिद्धानीत्यादि। उक्तैः सर्व्वैः कषाययोगैः क्वाथकल्करूपैः सिद्धानि पक्कानि तैलानि घृतानि चानिलात्मकेषु वातानुबन्धेषु न तु वातजेषु च

सर्व्वमेहेषु। सुराह्वा देवदारु। हरीतक्यादयो दश यथासंख्यं कफमेहेषु। किंवा सर्व्वे सर्व्वकफमेहेषु। उशीराद्यास्ताश्च पित्तमेहेषु सर्व्वेषु ज्ञेयाः। कटंकटेरी दारुहरिद्रा ॥ १७—२० ॥

चक्रपाणिः—मन्थस्य पान इति मन्थपानार्थं, भोजन इति भोज्यसंस्कारे, एवं पान-

"अश्वत्थपाठासन" इति चक्रधृतः पाठः।

कम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि।
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही॥
पिबेद् रसेनामलकस्य चापि कल्कीकृतान्यक्षसमानि काले।
जीर्णे च भुञ्जीत पुराणमन्नं मेही रसैर्जाङ्गलजैर्मनोज्ञैः॥ २३॥
दृष्ट्वानुबन्धं पवनात् कफस्य पित्तस्य वा स्नेहविधिर्विकल्प्यः।
तैलं कफे स्यात् स्वकषायसिद्धं पित्ते घृतं पित्तहरैः कषायैः॥२४॥

याप्यार्थं मेहेषु योज्यानि। तत्र फलमाह—मेद इत्यादि। तैः कषाययोगैः क्वाथकल्करूपैः सिद्धैः स्नेहैस्तेषां मेहिनां मेदः शममेति कफश्च शममेति स्नेहैस्तैलैर्घृतैर्वा वायुः शममेतीति मेदःकफवातास्तैः पक्वैस्तैलैर्घृतैर्वा शमं यान्तीत्यर्थः॥ २२॥

गङ्गाधरः—ननु पित्तानुबन्धादौ किं कार्यमित्यत आह—कम्पिल्लेत्यादि। कम्पिल्लं कमलागुडीति लोके तस्य, तथा सप्तच्छदशालयोस्तथा विभीतकादीनां चूर्णानि कपित्थपुष्पचूर्णानि च कफपित्तमेही लिह्यात्। पृथक्पदानि योगत्रयरूपापनार्थम्। शालान्त एकः, कौटजान्तो द्वितीयः, तृतीयः कपित्थपुष्पाणि। त्रीनेतान् योगान् कल्कीकृतान् अक्षमात्रान् आमलकस्य रसेनापि पिबेत्। तदौषधे जीर्णे पुराणशाल्यन्नाद्यन्नं मनोज्ञैः जाङ्गलैर्हरिणशशकादिमांसरसैर्मेही सर्व्वप्रमेही न तु कफपित्तमेही तदनुवृत्तौ पुनरुक्तत्वात् भुञ्जीत॥ २३॥

गङ्गाधरः—दृष्ट्वेत्यादि। कफस्य पित्तस्य वा पवनात् पवनेनानुबन्धं दृष्ट्वा स्नेहविधिस्तैलघृतविधिर्विकल्प्यः विभज्य कल्पयेत्। तद्विभागमाह—तैलमित्यादि। पवनानुबन्धे कफे स्वकषायसिद्धं कफमेहहरयोगोक्तद्रव्याणां कषायेण चतुर्गुणेन पादेन कल्केन सिद्धं तैलं योज्यं, पित्ते पवनानुबन्धे पित्तप्रमेहे पित्तहरैः पित्तप्रमेहहरैः कषायैश्चतुर्गुणक्वाथैः पादिकैः कल्कैश्च सिद्धं घृतं योज्यम्। कषायशब्देनात्र हि कफादिमेहोक्तकषाययोगा ये ये उक्तास्ते ते स्वैकैकयोगा

संस्कारेऽपि। सिद्धानि तैलानीति एतैरेव कषायैः सिद्धानि। अनिलात्मकेष्विति कफपित्तमेहेष्वेव क्रमादपि नानुबन्धेषु उत्पत्तिविशिष्टानिलजानामसाध्यत्वेनाचिकित्स्यत्वात्। कफमेही पित्तमेही च। कल्कीकृतानीति कम्पिल्लकादीनि कल्कीकृतानि च॥ २१—२३॥

चक्रपाणिः—अनुबन्धमिति पश्चादनुगमं, विकल्प्यः। कफे स्यादिति कफे वातानुबन्धे स्यादेवं

**त्रिकण्टकाश्मान्तकसोमवल्कैर्भल्लातकैः सातिविषैः सलोध्रैः ।**
**पाठापटोलार्ज्जुननिम्बमुस्तैर्हरिद्रया पद्मकदीप्यकैश्च ॥**
**मञ्जिष्ठया चागुरुचन्दनैश्च सर्व्वैः समुस्तैः कफवातजेषु ।**
**मेहेषु तैलं विपचेद् घृतन्तु पैत्तेषु मिश्रं त्रिषु लक्षणेषु * ॥ २५ ॥**

उच्यन्ते, तेषामेकैकयोगानां द्रव्यगणस्य तैलघृते कफपित्तयोः साध्ये इत्यर्थः । क्वाथकल्काभ्यां 'यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ । तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना' इति वचनादत्राधिकरणे गणे तैलघृतसाधनोक्तः ॥ २४ ॥

गङ्गाधरः—त्रिकण्टकेत्यादिभिः श्लोकपादैरुक्तैरेकैकयोगैः सर्व्वैः समुस्तैः मुस्तकसहितान् सर्व्वान् योगान् कृत्वा तदेकैकयोगद्रव्यगणस्य क्वाथकल्काभ्यां सिद्धं तैलं कफे वाते च मेहे विपचेत् । पैत्तेषु मेहेषु घृतं विपचेत् । त्रिषु लक्षणेषु वातपित्तकफानामनुबन्ध्यानुबन्धानां लक्षणवत्सु मेहेषु मिश्रं तैलं घृतञ्च मिश्रयित्वा विपचेत् । अश्मान्तकं स्वनामख्यातवृक्षविशेषः । सोमवल्कं श्वेतखदिरं, सोमवल्कान्त एकयोगः । लोध्रान्तो द्वितीयः । समुस्तः कार्य्यः । मुस्तान्तो योगस्तृतीयो नायं पुनः समुस्तः कार्य्यः समुस्तत्वात् । हरिद्रासहितदीप्यकान्तश्चतुर्थो योगः, सोऽपि समुस्तः कार्य्यः । चन्दनान्तः पञ्चमः, सोऽपि समुस्तः कार्य्यः । एतैः कल्कैश्चतुर्गणैः क्वाथैश्च तैलं तिलप्रभवस्नेहं कफवातेषु केवलकफेषु केवलवातेषु च विपचेत् । पैत्तेषु मेहेषु तैः कल्कैश्चतुर्गणक्वाथैश्च गव्यं घृतं विपचेत् । त्रिषु लक्षणेषु सान्निपातिकलक्षणेषु मिश्रं तैलं घृतञ्च मिश्रयित्वा तैः कल्कैश्चतुर्गुणक्वाथैश्च विपचेत् । ननु त्रिलक्षणः प्रमेहो नोक्तस्तत् कथं तच्चिकित्सा हि विहितेति चेत् उच्यते । त्रिषु लक्षणेषु इति वचनेन अनुबन्ध्यानुबन्धरूपाणां त्रयाणां दोषाणां

पित्तेऽप्युक्तम् । सर्व्वैरित्युक्तेऽपि सर्व्वैः स्नेहसाधनं स्यादत आह—समुस्तैरिति । मिश्रमिति तैलघृतयमकम् । त्रिषु लक्षणेष्विति त्रिदोषलक्षणे मेलके सति त्रिदोषत्वम् । अनुबन्ध्यानुबन्धकृतं कफपित्तमेहेष्वेव ज्ञेयम् । किंवा सर्व्वेषामेव मेहानां त्रिदोषजत्वात् त्रिदोषत्वाविर्भावः कदाचिद् भवतीति ज्ञेयम् ॥ २४ । २५ ॥

* इतः परम् "फलत्रिकं दारु निशा विशाला मुस्ता च निःक्वाथ्य निशा सकल्का । पिबेत् यं मधुसम्प्रयुक्तं सर्व्वप्रमेहेषु समुत्थितेषु ॥" इत्यधिकः श्लोकः चक्रदत्तधृतादर्शे दृश्यते ।

लोध्रं शटीं पुष्करमूलमेलां मूर्व्वां विडङ्गं त्रिफलां यमानीम् ।
चव्यं प्रियङ्गुं क्रमुकं विशालां किराततिक्तं कटुरोहिणीञ्च ॥
भार्गी नतं चित्रकपिप्पलीनां मूलं सकुष्ठातिविषं सपाठम् ।
कलिङ्गकान् केशरमिन्द्रसाह्वान् नखं सपत्रं मरिचं प्लवञ्च ॥
द्रोणेऽम्भसः कर्षसमानि दत्त्वा पूते चतुर्भागजलावशेषे ।
रसेऽर्द्धभागं मधुनः प्रदाय पक्षं निधेयो घृतभाजनस्थः ॥
लोध्रासवोऽयं कफपित्तमेहान् क्षिप्रं निहन्याद् द्विपलप्रयोगात् ।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या दोषं किलासं विविधञ्च कुष्ठम् ॥२६

इति लोध्रासवः ।

क्वाथः स एवाष्टपले च दन्त्या भल्लातकानाञ्च चतुष्पलं स्यात् ।
सितोपला त्वष्टपला विशेषः क्षौद्रञ्च तावत् पृथगासवौ तौ ॥२७॥

लक्षणेषु उल्वणकफाद्यन्यतमेष्वित्यर्थः । अत एवोक्तं दृष्ट्वानुबन्धं पवनात् कफस्य पित्तस्य वेति । एतत् तु विधिना द्व्यनुबन्धैकदोषजानाञ्च बोध्यम् ॥२५॥

गङ्गाधरः—लोध्रमित्यादिना लोध्रासवः । तत्र क्रमुको गुवाकः, कलिङ्गकानिन्द्रसाह्वानिति भागद्वयमिन्द्रयवस्येत्यर्थः । केशरं नागपुष्पस्य केशरं, नखं व्याघ्रनखं, प्लवः कैवर्त्तमुस्तकम् । एषामेकोनत्रिंशतो द्रव्याणां प्रत्येकं कर्षमानमम्भसो द्रोणे पक्त्वा चतुर्भागैकभागेऽवशिष्टे वस्त्रेण पूते तस्मिन् क्वाथे रसे षोड़शशरावमिते तदर्द्धमष्टशरावमितं मधु प्रदाय घृतभाजन एष मधुमिश्रितः क्वाथरसः पक्षं पञ्चदशादिनं निधेयो घृतभाजने निधाय स्थापयितव्य इति पक्षाज्जातरसः स लोध्रासवः । अयं द्विपलप्रयोगादित्युत्सर्गात् पुरुषव्याध्याद्यपेक्षया मात्राप्रयोगात् कफपित्तमेहान् निहन्ति । लोध्रासवः ॥ २६ ॥

गङ्गाधरः—अपरावासवावाह—क्वाथः स एवाष्टेत्यादि । स एव पूर्व्वोक्तानां लोध्रादीनामेकोनत्रिंशतो द्रव्याणां कर्षमानानां प्रत्येकं जलद्रोणे पक्त्वा षोड़शशरावावशेषो वस्त्रेण पूत एव गृहीतोऽत्र क्वाथे दन्त्याश्चूर्णस्याष्टपले अष्टपला सिता मधु च तावत् अष्टशरावमितं दत्त्वा पक्षं घृतभाजने स्थाप्यः ।

चक्रपाणिः—लोध्रमित्यादौ क्रमुकः पट्टिकालोध्रं पूगं वा, इन्द्रसाह्वा वीजपूरका ॥ २६ ॥
चक्रपाणिः—क्वाथः स एवेति तावन्मानजलेनैव दन्त्यष्टपलं भल्लातकचतुःपलं लोध्रादीनि

**सारोदकं वाथ कुशोदकं वा मधूदकं वा त्रिफलारसं वा ।**
**सीधुं पिबेद्वा निगदं प्रमेही माध्वीकमग्र्यं चिरसंस्थितं वा ॥**
**मांसानि शूल्यानि मृगद्विजानां खादेद्यवानां विविधांश्च भक्ष्यान् ।**
**संशोधनारिष्टकषायलेहैः सन्तर्पणोत्थान् शमयेत् प्रमेहान् ॥२८॥**
**भृष्टान् यवान् भक्षयतः प्रयोगान् शुष्कांश्च सक्तून् न भवन्ति मेहाः ।**
**श्वित्रश्च कृच्छ्रं कफजश्च कुष्ठं तथैव मुद्गामलकप्रयोगान् ॥२९॥**

इति दन्त्यासवः । एवं तस्मिन् क्वाथे भल्लातकानां पक्वानां जले क्षिप्तानां मग्नानामिष्टकाचूर्णेन घर्षितानां संसिद्धानामस्थि चतुष्पलं पेषयित्वा दत्त्वा सिता त्वष्टपला क्षौद्रञ्च तावदित्यष्टशरावमितं दत्त्वा पक्वं घृतभाजने स्थाप्यः । इति भल्लातकासवः । इति दन्तीसिताभ्यां लोध्रासवादस्य भेदो भल्लातकासवाच्चास्य भेदो भल्लातकाभावात् । भल्लातकासवस्य च दन्त्यासवाद्विशेषो दन्त्यभावात् इति । तौ द्वौ पृथगासवौ वा पूर्व्ववद्गुणौ बोध्यौ । दन्त्यासवो भल्लातकासवश्च ॥ २७ ॥

<u>गङ्गाधरः</u>—सारेत्यादि । सारस्य सर्व्ववृक्षाणां सारस्य प्रमेहहितत्वात् श्वेतखदिराणां सारस्येति केचित्, उदकं तत्सारस्य क्वाथं कुशोदकं कुशमूलस्य क्वाथं मधूदकं पुरातनमधुद्धजलं त्रिफलारसं पथ्यामलकविभीतकानां फलक्वाथं वा सीधुं वा चिरस्थितं पुराणं पुराणं माध्वीकं वा निगदमगदसंज्ञं भेषजं वा प्रमेही पिबेत् । मांसानीत्यादि । मृगाणां हरिणादीनां द्विजानां पक्षिणां मांसानि रसादिविधया तत्कृतशूल्यानि च शूलपक्वानि तेषां मांसानि प्रमेही खादेत् । यवानां भक्ष्यान् विविधान् खादेत् । संशोधनेत्यादि । कल्पस्थानोक्तवमनविरेचनयोगैः संसाध्य अरिष्टं अग्रण्यादुक्तं कषाया उक्ता लेहाश्च तैर्भेषजद्रव्यैः कार्य्या एतैः सन्तर्पणोत्थांस्तान् प्रमेहान् स्वस्वाधिकारोक्तैस्तैः शमयेत् ॥ २८ ॥

<u>गङ्गाधरः</u>—भृष्टानित्यादि । भृष्टान् यवान् भक्षयतो नरस्य मेहा न भवन्ति । प्रयोगान् यवप्रयोगान् भक्षयतश्च न मेहा भवन्ति । शुष्कांश्च सक्तून् भक्षतोऽपि

कर्षमाणानि दत्त्वा कर्त्तव्य इत्यर्थः । क्षौद्रञ्च तावदिति क्वाथापेक्षयाष्टभागमित्यर्थः । सारोदकमिति सारः प्रधानः खदिरादिसारे षडङ्गविधिना कृतमुदकं सारोदकं ज्ञेयम्, एवं कुशोदकं ज्ञेयम् । मधुना मधुरीकृतमुदकं मधूदकम् । शूल्यानीति शूलभृतानीत्यर्थः । मृगद्विजानामित्यत्र

सन्तर्पणोत्थेषु गदेषु योगा मेदस्विनां ये च मयोपदिष्टाः।
विरुक्षणार्थं कफपित्तजेषु सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ॥३०॥
व्यायामयोगैर्विविधैः प्रगाढ़ैरुद्वर्त्तनैः स्नानजलावसेकैः।
सेव्यत्वगेलागुरुचन्दनाद्यैर्विलेपनैश्चाशु न सन्ति मेहाः ॥ ३१ ॥
क्लेदश्च मेदश्च कफश्च वृद्धः प्रमेहहेतुः प्रसमीक्ष्य तस्मात्।
वैद्येन पूर्व्वं कफपित्तजेषु मेहेषु कार्य्याण्यपतर्पणानि ॥ ३२ ॥

न मेहा भवन्ति। न केवलं मेहा न भवन्ति तांस्तांश्च भक्षयतः पुरुषस्य श्वित्रादिकानि च न भवन्ति। तथा मुद्गामलकयोर्मिश्रितयोर्भक्ष्यविधया प्रयोगान् भक्षयतश्च पुरुषस्य मेहाः श्वित्रादीनि च न भवन्ति ॥ २९ ॥

गङ्गाधरः—सन्तर्पणेत्यादि। ये योगाः सन्तर्पणोत्थेषु गदेषु सूत्रस्थाने सन्तर्पणीयेऽध्याये शस्तमुल्लेखनं तत्रेत्यादिना पूर्व्वमुक्ताः तथा मेदस्विनां ये योगाः सूत्रस्थानेऽष्टौनिन्दितीयेऽध्याये गुडूचीभद्रमुस्तानां प्रयोग इत्यादिना पूर्व्वमुक्ताः विरुक्षणार्थे मया ते योगा अपि कफपित्तजेषु प्रमेहेषु सिद्धाः सिद्धफला अत एव प्रयोज्या इति ; न तु वातप्रमेहेषु रूक्षणार्थत्वात् ॥ ३० ॥

गङ्गाधरः—व्यायामयोगैरित्यादि। विविधैरश्वगमनमल्लक्रीड़ादिभिर्नानाविधैर्व्यायामैयत्तया युक्तैः। प्रगाढ़ैर्दृढ़पिष्टैः सेव्यादिद्रव्येण कृतैरुद्वर्त्तनैस्तथा सेव्यादिभिः क्वाथभूतैः स्नानेन तत्क्वाथजलाभिषेकेण च तथा सेव्यादिभिः विलेपनैः प्रमेहा आशु न सन्ति न वर्त्तन्ते विनश्यन्तीति भावः। तत्र सेव्यादिद्रव्यमाह—सेव्येत्यादि। सेव्यमुशीरम्, एला स्थूलैला, अगुरु कृष्णागुरु, चन्दनं श्वेतचन्दनम्, आद्यपदेन हरिद्रापत्रग्रन्थिपर्णादिकं बोध्यम् ॥ ३१ ॥

गङ्गाधरः—अथ सन्तर्पणोत्थगदेषु प्रमेहः सन्तर्पणीयेऽध्याये पठितः, तेन प्रमेहे किं पूर्व्वमपतर्पणं विधेयं किं न वेत्यत आह—क्लेदश्चेत्यादि। यस्मात् क्लेदो वसालसीकादिर्धातुर्मेदश्च कफश्च वृद्धः प्रमेहहेतुर्भवति, तस्मात् वैद्येन तान् वृद्धान् क्लेदमेदःकफान् प्रसमीक्ष्य कफपित्तजेषु मेहेषु पूर्व्वम् अपतर्पणानि

यौगिकत्वात् जाङ्गलमृगद्विजानामिति ज्ञेयम्। प्रयोगानित्यभ्यासान्। सन्तर्पणोत्थेषु गदेष्वित्यत्र सन्तर्पणीयाध्याये त्रिफलारग्वधपाठा इत्युक्ताः ॥ २१—३० ॥

चक्रपाणिः—सेव्यमुशीरं, चन्दनाद्यैरित्यत्र चन्दनादिग्रहणे हि सेव्यादीनाञ्च ग्रहणं स्यात्। सम्प्रति उत्सर्गतः कफपित्तप्रमेहाणामपतर्पणमाह। यद्यपि अपतर्पणेन गुल्मादिदोषो भवति, तथापि

या वातमेहान् प्रति पूर्व्वमुक्ता वातोल्वणानां विहिता क्रिया सा।
वायुर्हि मेहेष्वतिकर्षितानां कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता ॥३३
यैर्हेतुभिर्ये प्रभवन्ति मेहास्तेषु प्रमेहेषु न ते निषेव्याः।
हेतोरसेवा विहिता यथैव जातस्य रोगस्य भवेच्चिकित्सा ॥ ३४॥

कार्य्याणि। यादृशी क्लेदमेदःकफवृद्धिस्तदनुरूपेण पूर्व्वमपतर्पणं कार्य्य-मित्यर्थः ॥ ३२ ॥

गङ्गाधरः—ननु वातमेहस्त्वसाध्यः पूर्व्वमुक्तस्तत्र किमर्थं चिकित्सा विहितेत्यत आह—या वातमेहानित्यादि। वातमेहान् प्रति वातप्रमेहाणां चिकित्साक्रियासिद्धानि तैलानि इत्यादिना या पूर्व्वमत्रैवोक्ता, सा वातोल्वणानां कफमेहपित्तमेहानां विहिता। कस्मात् ते वातोल्वणाः स्युरित्यत आह—वायुर्हीत्यादि। मेहारम्भकं पूर्व्वं कफं पित्तं वा तत्-प्रमेहकर्षितानां येषां पुरुषाणां वायुः प्रवृद्धः सन् अनारम्भकोऽपि यदानुबन्धी-करोति तदा वायोः प्राधान्यात् तेषां कफजानां पित्तजानां वातोल्वणत्वे सा क्रिया विहिता, न तु वातप्रमेहाणां चतुर्णां क्रिया विहिता इति कफपित्त-वातजानां विंशतेः प्रमेहाणां वचनं न व्याहन्यते। तेषामेव चिकित्साविशेषार्थं परस्परानुबन्धः कल्पनीय इति ज्ञापनार्थं "हृद्यानुबन्धं पवनात् कफस्य पित्तस्य वा स्नेहविधिविकल्पः" इति वचनञ्चोक्तमिति। असाध्यान् रोगान् प्रति चिकित्सितुं क्रियाविशेषश्चिन्ता नास्ति तस्मात् तदसाध्यानां सा चिकित्सा नोक्तेत्यर्थः ॥ ३३ ॥

गङ्गाधरः—अथास्य निदानपरिवर्जनमाह—यैर्हेतुभिरित्यादि। यैर्हेतुभिः आस्यासुखं स्वप्नसुखमित्यादिभिर्हेतुभिः निदानस्थाने प्रमेहनिदाने हायनक-यवचीनकादिभिश्च कफमेहाः प्रभवन्ति, तेषु मेहेषु ते खल्वास्यासुखादयो हेतवो न सेव्यास्तथा पित्तमेहा उष्णाम्ललवणक्षारेत्यादिभिर्निदानस्थाने प्रमेहनिदानोक्तैर्हेतुभिः प्रभवन्ति, तेषु मेहेषु ते हेतवो न सेव्याः, एवं कषाय

गुल्मादिप्रादुर्भावो यथा न भवेत् तथापतर्पणं कर्त्तव्यमिति क्लेदश्च मेदश्चेत्यादिना दर्शयति। पूर्व्वचिकित्सितप्रमेहप्रयुक्तानि देयानि मेहेष्वनिलात्मकेष्वित्यादिनोक्तानि, तानि वातानुबद्धमेहविषयाणीति दर्शयन्नाह—या वातेत्यादि। वातोल्वणत्वमेव कुतः कफजेषु पित्तजेषु च भवतीत्याह—वायुरित्यादि। असाध्यानिति उत्पत्तितः। यैर्हेतुभिरित्यादिश्लोकार्द्धपरिभाषा सर्व्वरोगेष्वेवानुमता, इह प्रमेहस्य चिरकालानुबन्धितया हेतुसेवानिरासार्थमुच्यते ॥ ३३—३४ ॥

हारिद्रवर्णं रुधिरञ्च मूत्रं विना प्रमेहस्य हि पूर्व्वरूपैः।
यो मूत्रयेत् तं न वदेत् प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः ॥३५॥

कटुकतिक्तरूक्षेत्यादिभिर्हेतुभिर्वातप्रमेहाः प्रभवन्ति, ते हेतवस्तेषु प्रमेहेषु वातोल्वणेषु च न सेव्या इति। नन्वेवं निदानासेवनं कथं विधीयते निदानं ह्यदुष्टदोषाणां दुष्टिकरं न दुष्टदोषाणामित्याशङ्कायामाह—हेतोरित्यादि। शरीरस्वास्थ्यरक्षार्थं रोगाणां हेतोः असेवा यथा विहितैव तथा तत्तद्धेतोर्जातस्य रोगस्य चिकित्सा तत्तद्धेतोरसेवैव भवेत्। यो ह्यवृद्धं वर्द्धयति सामान्यात् स वृद्धमपि वर्द्धयति सामान्यात्। प्रकृत्यनुगुणैः केचिद्धेतवो दोषं वर्द्धयन्ति तद्गुणसामान्यात् प्रकृत्यननुगुणैश्च केचित् वर्द्धयन्ति तद्गुणसामान्यप्रभावाभ्याम् इति प्रकृतिसमसमवाये विकृतिविषमसमवायेऽपि निदानवर्ज्जनमुपयुक्तं भवति ॥ ३४ ॥

गङ्गाधरः—ननु रक्तप्रमेहमाञ्जिष्ठप्रमेहयोरयं सन्देहः, किमयं मूत्रमार्गप्रवृत्त रक्तप्रयोगं रक्तपित्तं नाम रोगः किमयं रक्तप्रमेहो माञ्जिष्ठप्रमेहो वेति तत्राह सन्देहो न कर्त्तव्यः कुत इति तद् दर्शयति—हारिद्रवर्णमित्यादि। प्रमेहस्य पूर्व्वरूपैः स्वेदोऽङ्गगन्ध इत्यादिभिरत्रोक्तैः निदानस्थाने प्रमेहनिदानाध्यायोक्तैश्च जटिलीभावं केशेष्वित्यादिभिर्विना हारिद्रवर्णं रुधिरञ्च मूत्रं यो मूत्रयेत् तं रोगं प्रमेहं न वदेत्, स हि रक्तस्य पित्तस्य प्रकोप इति वदेत्। यदि हि प्रमेहोऽभविष्यत्, कथं प्रमेहपूर्व्वरूपं नाभविष्यत्? पूर्व्वरूपं विना हि दोषजो व्याधिर्न भवति। तर्हि कथं रक्तपित्तस्य पूर्व्वरूपं विना सम्भव इति चेन्न, प्रमेहस्य हि पूर्व्वरूपैर्विनेति वचनेनैव ज्ञापितं रक्तपित्तपूर्व्वरूपपूर्व्वकं चेद्धारिद्रवर्णं रुधिरं वा यो विना प्रमेहपूर्व्वरूपैर्मूत्रयेत् तदा रक्तपित्तस्य प्रकोप इति वदेदिति। ननु पूर्व्वरूपन्तु तदानीं न वर्त्तते कथं तज्ज्ञानं स्यादिति चेदुच्यते। हारिद्रवर्णरुधिरमूत्रणात् पूर्व्वं किं प्रमेहपूर्व्वरूपं किं रक्तपित्तपूर्व्वरूपं तस्याभूदिति प्रतिसन्धाय यत्पूर्व्वरूपमभूत् तं व्याधिं वदेदिति। ननु तर्हि किं पूर्व्वरूपस्मरणं रक्तपित्तपित्तप्रमेहविज्ञाने कारणम्? यदि चेदेवं स्यात् तर्हि निदानस्थाने प्रोक्तं तस्योपलब्धिर्निदानपूर्व्वरूपलिङ्गोपशयसम्प्राप्तितश्चेति कथं व्याख्यते। पूर्व्वरूपस्मरणञ्चापि रूपोपलब्धिकारणं वाच्यं स्यादिति चेत् न, रूपावस्थायां हि

चक्रपाणिः—सम्प्रति प्रमेहलक्षणस्य रक्तपित्तलक्षणसाम्ये रक्तपित्ते प्रमेहचिकित्सा मा भूदिति कृत्वा प्रमेहरक्तपित्तभेदकं लक्षणमाह—हारिद्रेति ॥ ३५ ॥

दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद्द्विविधो विचारः।
क्षीणेषु दोषेष्वनिलात्मकाः स्युः सन्तर्पणाद्वा कफसम्भवाः स्युः॥

स्मर्य्यमाणं पूर्व्वरूपं वर्त्तमानं व्याधिं ज्ञापयति न तु भाविनम्, भाविन एव हि व्याधेर्बोधकं लिङ्गं पूर्व्वरूपं प्रोक्तमन्यथा भाविवर्त्तमानयोरुभयोर्बोधकं स्यादिति स्मृतं केवलं पूर्व्वरूपं न बोधयति व्याधिम्। पूर्व्वरूपस्मरणसहकृतं रूपन्तु बोधयति तदानीं हि पूर्व्वरूपासद्भावात्। वर्त्तमानं हि वस्तु वर्त्तमानस्य हि बोधकं भवति, न त्ववर्त्तमानं वर्त्तमानस्येति विस्तरेण निदानस्थाने व्याख्यातम्॥ ३५॥

गङ्गाधरः—अथ प्रमेहस्यावस्थान्तरमाह—दृष्ट्वेत्यादि। प्रमेहं मधुरं सपिच्छं मधूपमञ्च दृष्ट्वा वर्त्तमानस्य भिषजोऽस्मिन् प्रमेहे द्विधा विचारः स्यात्। ननु कस्को विचार इत्यत आह—क्षीणेष्वित्यादि। कषायवमनविरेचनाद्यति-योगात् पित्तकफमेदोमांसेषु धातुषु क्षीणेषु सत्सु मधुरस्वभावमोजस्तत् रौक्ष्याद्वायुना कषायत्वेनाभिसंसृज्य मूत्राशयेऽभिवहता कृता अनिलात्मकाः स्युरथ वा सन्तर्पणात् कफसम्भवाः स्युरिति द्विविधं मधुमेहविचारं कुर्य्यात्। सन्तर्पणात् गुरुस्निग्धाम्लादीनां कियन्तःशिरसीये व्याख्यातानां सेवनादति-वृद्धैस्तैः कफाधिक्यात् सम्भवन्ति, तत् कफावृतगतिना वायुना खल्वोज आदाय वस्तिं गत्वा कृताश्चेत् तर्हि अनिलात्मकाः स्युः सपिच्छा मधूपमा मधुराः प्रमेहाः कफसम्भवाः। इक्षुवालिकारसमेहाः शीतमेहाश्चेति द्विविधा इत्यपरं मधुमेहविचारं कुर्य्यात्। कश्चित् तु कफोद्भवौ द्वाविक्षुवालिकारसमेह-शीतमेहौ मधुररसत्वेन तद्विचारं न लिखित्वा "मधुमेहे मधुसमं जायते स किल द्विधा। क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा" इति, तत्र स्वनिदानैः क्रुद्ध क्षौद्रमेहो योऽसाध्य उक्तः स एको मधुमेहः। धातुक्षयात् सन्तर्पणैः वृद्धपित्तादिदोषावृतपथे वायौ तेन वायुना गृहीत्वा ओजो वस्तिं गत्वा यो मधुमेहः क्रियते तल्लक्षणञ्च पठितवान्। "आवृतो दोषलिङ्गानि सोऽनिमित्तं

चक्रपाणिः—दृष्ट्वेत्यादि। क्षीणेषु दोषेष्वतिक्षीणेषु कफमेदःप्रभृतिषु। क्षीणत्वञ्चेह दूष्ये विवक्षितेऽपि मेदआदौ तथापि दोषसम्बन्धात् दोषशब्दोऽत्र ज्ञेयः। किंवा कफदोषापेक्षया बहुवचनत्वम्। यदि हि वातिकः स्यात् तदा हेत्वभावात् कफोऽनुवृद्धः स्यादित्यर्थः। सन्तर्पणात् तु यदि ज्ञातं तर्पणजनितकफवृद्धत्वं तदा वातनिदानाभावान्नायं वातजः किन्तु कफज इत्यवधार्य्यत इति भावः॥ ३५। ३६॥

**सपूर्व्वरूपाः कफपित्तमेहाः क्रमेण ये वातकृताश्च मेहाः।**
**साध्या न ते पित्तकृतास्तु याप्याः साध्यास्तु मेदो यदि न प्रदुष्टम्॥**

प्रदर्शयन्। क्षणात् क्षीणः क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम्" इति। एतमेव मधुमेहं कियन्तःशिरसीये पठित्वा तेषाम् "उपेक्षयास्य जायन्ते पिड़काः सप्त दारुणाः" इति वचनेनासाध्यत्वप्रतिषेधः ख्यापितः, यदि ह्युपेक्षा नास्य क्रियते पिड़काश्च न जायन्ते इत्यर्थात् कृच्छ्रसाध्यत्वं दर्शितम्। तथा आचार्य्यश्चतुर्षु वातमेहेष्वपरमधुमेहमसाध्यं पठितवान्, इत्यतोऽत्र मधुमेहस्य साध्यत्वमात्रेणोक्तम्॥ २६॥

गङ्गाधरः—कफपित्तमेहानामसाध्यतामाह—सपूर्व्वरूपाः इत्यादि। सपूर्व्वरूपाः सर्व्वपूर्व्वरूपानुवृत्तिमन्तः किञ्चित्पूर्व्वरूपानुवृत्तिमन्तो वा कफमेहाः पित्तमेहाश्च व्याधिस्वभावादन्येषां हि सर्व्वपूर्व्वरूपानुवृत्तितोऽसाध्यत्वमुक्तमस्य तु पूर्व्वरूपानुवृत्तिमात्रेण वातकृतास्तु क्रमेण निदानस्थानोक्तानुपूर्व्व्या वातेन कृता ये मेहास्ते च सपूर्व्वरूपाः पूर्व्वरूपरहिता वाप्यसाध्या एव, चत्वारो हि वातकृता न साध्या भवन्ति विरुद्धोपक्रमत्वान्महात्ययत्वाच्च इति प्रागभिहितम्। लङ्घनादिक्रमेण ये कफारब्धाः पित्तारब्धाश्च वातोल्वणास्ते पूर्व्वरूपरहिताः याप्याः संसृष्टदोषमेदःस्थानत्वाद् विरुद्धोपक्रमत्वाच्च इति प्रागभिहितम्। सपूर्व्वरूपास्तु न साध्याः। ते पित्तकृतास्तु साध्या अपि स्युः यदि मेदो न तत्र मेहेषु पित्तेन दुष्टं स्यादिति। कफोत्थाश्च दश साध्या एवेति प्रागभिहितम्। तत्र

चक्रपाणिः—संप्रत्युक्तानुक्तप्रमेहाणां साध्यासाध्ययाप्योपदर्शनार्थमाह—सपूर्व्वरूपा इति। सह पूर्व्वरूपेण स्वेदाङ्गगन्धेत्यादिना वर्त्तन्ते इति सपूर्व्वरूपाः, तत्र कफमेहाः साध्या उक्तास्ते न पूर्व्वरूपेण साध्या भवन्ति। पित्तमेहा याप्या उक्तास्ते प्रत्याख्येया भवन्ति, साध्यावस्थायामपि पूर्व्वरूपयोगेण यद्यपि सर्व्वरोगाणामसाध्यत्वमुक्तम्। उक्तञ्च यथा—"अन्यस्यापि च रोगस्य पूर्व्वरूपाणि यं नरम्। विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्" इति। तथापि सर्व्वपूर्व्वरूपानुबन्धे यद्यपि सर्व्वरोगाणामसाध्यत्वमुक्तमिह तु असमस्तपूर्व्वरूपानुबन्धेऽप्यसाध्यत्वं भवतीति विशेषवचनाल्लभ्यते, तथा क्रमेण च ये वातकृतास्ते पूर्व्वरूपरहिता अप्यसाध्याः। क्रमेणेति यथोक्तनिदानक्रमेण, एतेन य एव निदानोक्तहेत्वादियोगेन वातजाश्चत्वारो जायन्ते ते मेहा असाध्याः, ये तु कफजाः पित्तजा वा वातानुबन्धत्वेन वातजास्ते साध्या याप्याश्च। अत एव तान् प्रति विहितानि सिद्धानि तैलघृतानि विहितानि। चिकित्सोक्तपूर्व्वरूपराहित्येन पित्तकृते प्रमेहे कदाचित् साध्यत्वमपि भवतीत्यपवादविधिं दर्शयितुमुत्सर्गप्राप्तां पैत्तिकयाप्यतामनुवदति—पित्तकृतास्तु याप्या इति। अवस्थासाध्यान् पैत्तिकानाह—साध्यास्त्वित्यादि। न प्रदुष्टमिति न प्रकर्षेण दुष्टम्।

जातप्रमेही * मधुमेहिनो वा न साध्य उक्तः स हि वीजदोषात् ।
ये चापि केचित् कुलजा विकारा भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥

य इक्षुबालिकारसमेह उक्तस्तत्र खलु कफस्य शीतपिच्छिलसान्द्रमधुरगुणैर्योगात् जातत्वादत्यर्थमधुरं शीतमीषत्पिच्छिलमाविलं काण्डेक्षुरससङ्काशं मूत्रं भवति। यश्च शीतमेह उक्तस्तत्रापि कफस्य माधुर्य्यशैत्यगुणाभ्यां योगेनात्यर्थमधुरं शीतं मूत्रं भवति। तयोरिक्षुबालिकारसमेहशीतमेहयोः कफे क्षीणे सति वातात्मकत्वेऽपि साध्यत्वं तदा बोध्यम्, यदि तत्रेक्षुबालिकारसमेहे शीतमेहे वा कफेन मेदो न प्रदुष्टं पूर्व्वं न वर्त्तते। यदि पूर्व्वं कफेन मेदो दुष्टं वर्त्तते तदा तौ चेक्षुबालिकारसमेहशीतमेहौ तत्कफमेदःसंसृष्टत्वात् न साध्यौ भवतः, कष्टसाध्यौ याप्यौ वा हि वातेन संसृष्टत्वेन विरुद्धोपक्रमत्वाद् भवत इति तात्पर्य्यार्थः। कियन्तःशिरसीये—गुरुस्निग्धाम्ललवणेत्यादिना खलूक्तं, गुरुस्निग्धादिभिः तैर्हेतुभिः श्लेष्मा पित्तञ्च मेदश्च मांसञ्च क्षीणमतिवर्द्धते। तैरुद्धरावृतगतिः वायुर्मधुरस्वभावमोज आदाय वस्तिं गत्वा मधुमेहं करोत्येव, स हि वायोर्वा पित्तस्य कफस्य वा चिह्नमनिमित्तं मुहुर्म्मुहुर्दर्शयति मुहुर्म्मुहुः क्षयं गत्वाप्यायते। तस्य मधुमेहस्योपेक्षया पिड़कानामत्र चिकित्साविधानात् धातुक्षये स्निग्धादिवृद्धदोषावृतवायुजो मधुमेहः कृच्छ्रसाध्य एव कफसम्भवास्तु साध्या एव मेदोदुष्टिं विनेति। द्विविधो मधुमेहो वातज एकः श्लेष्मजः त्वपरस्तत्र वातजो द्विविधः क्रमेण ओजोधात्वपकर्षणेन जात एकः क्षीणदोषेण गुरुस्निग्धादिवृद्धेनावृतगतिवातकृतेनौजोधात्वपकर्षणेनापर इति। तत्र पूर्व्वोऽसाध्यः शेषः कृच्छ्रसाध्य उक्तः क्षीणबलमांसस्यासाध्यश्च स्यात्। तदुक्तमन्यत्र "गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः। अचिकित्स्या भवन्त्येते बलमांसपरिक्षयात्" इति, न ह्यत्र मधुमेहशब्दो मेहमात्रवचनो नापि मधुमेहमात्रपरो निदानोक्तक्रमेण वातकृतमधुमेहश्च सर्व्वमेहाणामप्रतिकारे कालेन जायते। श्लेष्मजोऽपि द्विविध इक्षुबालिकारसमेहः शीतमेहश्चेति द्वौ मेदोदुष्टिं विना साध्यौ। मेदोदुष्टौ कष्टसाध्यौ याप्यौ वा। इत्थञ्च तत्र विशेषमाह—जातप्रमेहीत्यादि। जन्ममात्रं यः

अदुष्टमेदसः पैत्तिकाः साध्या भवन्तीत्यर्थः। किंवा प्रदुष्टाः कफपित्तमेहास्तावदसाध्याः। तथा कफपित्तमेहा ये धात्वपकर्षणाद् वातकृता भवन्ति तेऽपि सपूर्व्वरूपाः सन्तः साध्या भवन्ति, ये तु पूर्व्वरूपत्वेन कियन्तःशिरसीयोक्तं प्रमेहं विंशतिप्रमेहातिरिक्तं वर्णयन्ति, ते विंशतिरेव मेहा इति संख्याप्रतिनियमेनैव प्रयुक्ताः। मेहसाध्यताप्रकारत्वमाह—जात इत्यादि। प्रमेही यः प्रमेहिणो जातः सोऽप्यसाध्यो भवति अत्रापि हेतुमाह—स हि वीजदोषादिति। प्रमेहारम्भकदोषदुष्टवीजजातप्रमेहि-

* जातः प्रमेही इति वा पाठः।

**प्रमेहिणां याः पिड़का मयोक्ता रोगाधिकारे पृथगेव सप्त।**
**ताः शल्यहृद्भिः कुशलैश्चिकित्स्याः शस्त्रेण संशोधनरोपणैश्च ॥३९**

प्रमेही सहजप्रमेहवान् सोऽसाध्य उक्तः, कस्मात्? बीजदोषात्; गर्भारम्भकशुक्र-शोणितरसानां मेहकरद्रव्यप्रभवत्वात्। मधुमेहिनो वा जातो यो नर उत्तर-कालं मेही स्यात् सोऽपि न साध्य उक्तः बीजदोषात् मधुमेहदुष्टशुक्रारब्ध-शरीरत्वात्। केश्चिद् वाशब्दं पूर्व्ववचनापेक्षयेति मत्वा सहजमेही चात्र न व्याख्यायते। अत्र मधुमेहशब्द ओजोऽपकर्षकवातजद्विविधमधुमेहवाचकः अप्रतिकृतयाकाले मधुरत्वापन्नसर्व्वमेहवचनश्च, न तु कफजद्विविधमेहवाचकः तत्र शुक्रदुष्ट्यभावात्। ननु तर्हि किमन्ये रोगा बीजदोषात् साध्याः स्युरित्यत आह—ये चापि केचिदिति। कुलजा इति कुलशब्देन मातापित्रोः शोणितशुक्रमुच्यते, दृश्यते हि ये रोगाः पितुर्मातुर्वा ते रोगा नापत्यस्येति। ये च पितुर्मातुश्च वा तेऽपत्यानाञ्च दृश्यन्ते साध्यन्ते चेति ॥ ३७। ३८॥

गङ्गाधरः—प्रमेहचिकित्सामुक्त्वा तत्पिड़काचिकित्सामाह—प्रमेहिणाम् इत्यादि। पदार्थाख्यतन्त्रयुक्त्यात्र प्रमेहशब्देन मधुमेह उक्तो बोध्यः, मयोक्ता इति वचनेन कियन्तःशिरसीयमाधुमेहिकपिड़का उपस्थाप्यन्ते। ननु पिड़का माधुमेहिकीत्यत्र मधुमेहशब्दो मेहमात्रवचनो वाच्यः। सुश्रुते हि "सर्व्वेषु

त्वात्। मधुमेहशब्देनात्र मेहमात्रमुच्यते। यदि तु वातिक एव मधुमेह उच्यते तदेतरप्रमेहयुक्तमाता-पितृजनितप्रमेहिणो नासाध्यत्वं स्यात्। मधुमेहिनो जनितस्य मधुमेहित्वमेव कारणानुरूपतया युक्तम्। ततश्च मधुमेहिनो वा जातो न साध्य इति वक्तुमुचितम्। तस्मादपत्ये सामान्येन प्रमेहवचनेनापि तत्करणे पितरि कार्य्यानुरूपः प्रमेहो मधुमेहशब्दवाच्यो ज्ञेयः। मेहशब्दोऽयं सामान्येन सर्व्वमेहेषु वर्त्तत एव, यतः कियन्तःशिरसीये येषां पिड़का मधुमेहसम्बन्धित्वेन उक्तास्ता इह प्रमेहिणां याः पिड़का इत्यनेन सामान्यप्रमेहसम्बन्धितयाऽनुदितास्तस्मान्मधुमेहशब्दः सर्व्वप्रमेहे मधुमेह-विशेषे च वर्त्तते, यथा तृणशब्दः सर्व्वतृणे तृणविशेषे च वर्त्तते। प्रपञ्चितश्चायमर्थः कियन्तः-शिरसीये इति नेह प्रतन्यते। कुलजप्रमेहासाध्यताप्रसङ्गेनापरेषामकुलजानामसाध्यतामाह—ये चापीत्यादि। कुलजा इति पितृपितामहादिकारणोद्भूता अनेनैव सामास्येन वचनेन प्रमेहस्यापि कुलजस्यासाध्यतायां सिद्धायां पुनस्तद्वचनं सन्तानानुबन्धित्वोपदर्शनार्थम्। उक्तं हि—प्रमेहोऽनुसङ्गिनामिति ॥ ३७। ३८॥

चक्रपाणिः—प्रमेहपिड़काचिकित्सासूत्रमाह—प्रमेहिणामित्यादि। रोगाधिकारे इति रोग-चतुष्के। अत्र शल्याधिकारत्वऽन्याधिकारेषु न विस्तरोक्तिरिति वचनान्न विस्तरः कृतः॥ ३९॥

मेहेषु पिड़का भवन्ति" इति दृश्यते। तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैश्चानुगतधातोः प्रमेहिणो दश पिड़का जायन्ते, अपरञ्च मधुमेहिनो जातः कारणानुरूपतया मधुमेह्येव भवति तेन मधुप्रमेही मधुमेहिनो वा न साध्य उक्त इति कत्तमुचितं स्यादितिचेन्न; सुश्रुते हि वसामेदोभ्यामभिपन्नेत्यादिना प्रायेण मधुमेहिनो वसामेदोभ्यामभिपन्नशरीरत्वं त्रिदोषानुगतधातुत्वञ्च मत्वा यदि कदाचिदन्यमेहिनामपि वसामेदोऽभिपन्नदेहत्वादिकं स्यात् तदा तेषामपि स्युरित्यभिप्रायेण तल्लिखित्वा पुनः "पिड़कापीड़ितं गाढ़मुपसृष्टमुपद्रवैः। मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्त्तितः" इति लिखितम्। अत एवोक्तं विना प्रमेहमप्येता जायन्ते दुष्टमेदस इति। न तु सर्व्वेषां मेहिनां पिड़का भवन्ति। नन्वेवमस्तु सुश्रुते "सर्व्व एव प्रमेहास्तु कालेनाऽप्रतिकारिणः। मधुमेहत्वमायान्ति तदासाध्या भवन्ति हि" इत्युक्तं तेन सर्व्वमेहाणां मधुमेहावस्थायां पिड़का भवन्तीति मत्वा सर्व्वमेहवचन एवात्र प्रमेहिणामिति प्रमेहशब्दः कियन्तःशिरसीये पिड़का माधुमेहिकीति मधुमेहशब्दः प्रयुक्त इति चेत् सत्यं कियन्तःशिरसीये हि क्षीणैः पित्तादिभिर्गुरुस्निग्धादिसन्तर्पणेनातिवृद्धैरावृतगतिना वायुना मधुमेहमुपदर्श्य तदुपेक्षया सप्त पिड़का उक्तास्ताभिस्तु खलु दोषावृतगतिवायुजमधुमेहो पेक्षया यदा वसामेदोभ्यामभिपन्नदेहत्वं त्रिभिर्दोषैरनुगतधातुत्वं पुरुषस्य भवति तदा तस्योत्पन्नाभिः पिड़काभिर्गाढ़पीड़ितस्योपद्रवयुक्तस्य तदावृतगतिवातजमधुमेहस्य असाध्यत्वं पिड़कापीड़ितं गाढ़मित्यनेन सुश्रुतेनोक्तं सर्व्वमेहाणाञ्चाप्रतिक्रियया वातेन खल्वोजोऽपकर्षणेन मधुरत्वं प्रापितानामसाध्यत्वं सर्व्व एव प्रमेहास्त्विति वचनेनोक्तं, न चैतावता सर्व्वप्रमेहिणां मधुरत्वापन्नत्वे पिड़का भवन्त्येवेत्युक्तं भवतीति। तासां पिड़कानां प्रतिक्रियामाह—ताः शल्यविद्भिरित्यादि। ननु पिड़कापीड़ितस्य मधुमेहस्यासाध्यत्वमुक्तं तस्य चिकित्सोपदेशो वृथेति चेन्न; यावद्धि मधुमेहो नोपद्रवैर्युज्यते पिड़काभिश्च गाढ़ं न पीड्यते बलमांसे च न क्षीयेते तावत् कृच्छ्रेण मधुमेहोऽयं दोषावृतवायुजः सिध्यतीत्यभिप्रायेण चिकित्सोक्ता। पिड़कानां मधुमेहस्य दृश्यते। सुश्रुतेऽपि पिड़कापीड़ितमित्यनेनावृतगतिवायुजस्य तथैवाप्रतिकारेण कालान्तरे मधुमेहत्वापन्नानाञ्च असाध्यत्वमुक्त्वापि चिकित्सितस्थाने अथातो मधुमेहचिकित्सितं व्याख्यास्यामः, मधुमेहत्वमापन्नं भिषग्भिः परिवर्ज्जितम्। योगेनानेन मतिमान् प्रमेहिणमुपाचरेदित्यादिना चिकित्सितमुक्तमिति॥ ३९॥

तत्र श्लोकाः।

हेतुर्दोषो दूष्यं मेहानां साध्यतानुरूपश्च।
मेहो द्विविधो द्विविधं भिषग्जितं तल्लक्षणं * दोषः॥
आद्या यवान्नविकृतिर्मन्था मेहापहाः कषायाश्च।
तैलघृतलेहयोगा भक्ष्याः प्रवरासवाः सिद्धाः॥
व्यायामविधिर्विविधः स्नानान्युद्वर्त्तनानि गन्धाश्च।
मेहानां प्रशमार्थं चिकित्सिते दृष्टमेतावत्॥ ४०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
प्रमेहचिकित्सितं नाम षष्ठोऽध्यायः॥ ६॥

गङ्गाधरः—अथाध्यायार्थं संगृह्णाति श्लोकैः तत्र श्लोका इति। साध्यतानुरूपश्च मेहो द्विविध इति स्थूलः प्रमेही बलवानिहैकः कृशस्तथैकः परिदुर्ब्बलस्त्विति द्विविधम्। द्विविधं भिषग्जितमिति कृशस्य संबृंहणं दोषबलाधिकस्य संशोधनमिति, संशोधनान्ते सन्तर्पणं तस्याकरणे दोषश्च गुल्म इत्यादिना। आद्येत्यादिना या चकारात् या वातमेहान् प्रतीत्यादिकं यावदुक्तं तत् सर्व्वं संगृहीतम्॥ ३९॥

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजकल्पतरौ
षष्ठस्कन्धे चिकित्सितस्थानजल्पे प्रमेहचिकित्सित-
जल्पाख्या षष्ठी शाखा॥ ६॥

चक्रपाणिः—हेतुरित्यादि संग्रहः। भिषग्जितमिति संशोधनं संशमनं, निदानवर्ज्जनञ्च। आद्या इति भक्षणीयाः। शेषं सुगमम्॥ ३९॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां प्रमेहचिकित्सितं
नाम षष्ठोऽध्यायः॥ ६॥

* हेतुर्दोषो दूष्यं मेहानां साध्यतानुरूपञ्च। मेही द्विविधस्त्रिविधं भिषग्जितं तल्लक्षणम्। इति पाठान्तरं क्वचित्।

## सप्तमोऽध्यायः ।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

हेतुं द्रव्यं लिङ्गं कुष्ठानामाश्रयं प्रशमनञ्च ।
शृण्वग्निवेश सम्यग् विशेषतः स्पर्शनघ्नानाम् ॥ २ ॥
विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥

गङ्गाधरः—अथोद्देशानुक्रमात् प्रमेहचिकित्सितानन्तरं कुष्ठचिकित्सितमाह—अथात इत्यादि । कुष्ठस्य चिकित्सितं कुष्ठचिकित्सितम् । शेषं पूर्ववत् ॥ १ ॥

गङ्गाधरः—हेतुमित्यादि । हेतुं रुग्दोषोभयकारणम् । द्रव्यं गुणकर्म्माश्रितसमवायिकारणं घटादेर्मृत्तिकादिवत्, प्रकृतिभूतकारणमिति यावत् । स्पर्शनघ्नानामिति स्पर्शनेन्द्रियनाशनानां कुष्ठानाम् ॥ २ ॥

गङ्गाधरः—तत्रादौ रुग्दोषोभयहेतुमाह—विरोधीन्यन्नेत्यादि । विरोधीनि तु न मत्स्यान् पयसा सहाभ्यवहरेदित्यादिनोक्तानि, भजतामित्यन्वयः । आगतामुपस्थितवेगां छर्दिं प्रतिघ्नतां प्रतिघातं कुर्व्वतामन्यांश्च वेगान् मूत्रपुरीषादीनां नवेगानधारणीयोक्तानां वेगान् प्रतिघ्नताम् ।

चक्रपाणिः—स्नेहविप्रणाशान्मेहकुष्ठयोर्जन्म उक्तम्, तेन मेहमनु कुष्ठचिकित्सितमुच्यते । निदाने हेत्वादय उक्ता अपि चिकित्सोपकरणतया किञ्चिद्विशेषप्रतिपादनार्थं पुनरुच्यते । आश्रयमिति कोष्ठाधारम् । प्रशमनञ्चेति चकारात् पूर्व्वरूपसंप्राप्त्योर्वक्ष्यमाणयोर्ग्रहणम् । किंवा लिङ्गेन हेतुना च सम्प्राप्तिर्बोद्धव्या । अन्यान्यपि पिप्लुव्यङ्गादीनि स्पर्शनघ्नानि सन्ति, तेन विशेषतो यानि कुष्ठानि तेषां हेत्वादीनि शृणु किंवा कुष्ठानामानन्त्याद्यानि विशेषतः स्पर्शनघ्नान्यष्टादश तेषां हेत्वादि शृण्विति योजना । उक्तं हि कुष्ठानि सप्तविधान्यष्टादशान्यपरिसंख्येयविधानि चेति ॥ १ । २ ॥

चक्रपाणिः—विरोधीन्यात्रेयभद्रकाप्यीये—न मत्स्यान् पयसाभ्यवहरेदित्यादिनोक्तानि ।

व्यायाममति सन्तापमति भुक्त्वा निषेविणाम्।
शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणाम्॥
घर्म्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम्।
अजीर्णाध्यशिनाञ्चैव पञ्चकर्म्मापचारिणाम्॥
नवान्नदधिमत्स्याति-लवणाम्लनिषेविणाम्।
माषमूलकपिष्टान्न-तिलक्षीरगुड़ाशिनाम्॥
व्यवायञ्चाप्यजीर्णेऽन्ने निद्राञ्च भजतां दिवा।
विप्रान् गुरून् धर्षयतां पापं कर्म्म च कुर्व्वताम्॥

व्यायाममतीति। भुक्त्वा व्यायाममतिशयेन भुक्त्वा सन्तापमतिशयेन निषेविणाम्। व्यायाममति सन्तापमतीत्यतिशब्दयोगे द्वितीया, तेन निषेविणामित्येतयो-र्व्यायामसन्तापयोरतिनिषेविणां निषेवणशीलानामिति। कृद्योगे षष्ठी न प्राप्नोति कश्चित्, तन्न; कारकविभक्तेर्बलवत्त्वादतिशब्दयोगे द्वितीया बाध्या हि स्यात् कारकविभक्तया षष्ठ्या। वस्तुतो निषेविणामिति शीलार्थे णिनिस्तद्योगे षष्ठी खल्वपवादविधिसिद्धात्रोत्सर्गेण विधिना सिद्धया द्वितीयया वाधिता। एवं परत्रापि बोध्यम्। शीतोष्णादीन् क्रमं त्यक्त्वा निषेविणां यदा येन प्रकारेण शीतादीनां सेवनमुक्तं तत्क्रमविपर्य्ययेण शीतादीन् सेवनशीलानामित्यर्थः। घर्म्मेत्यादि। घर्म्मश्रमभयैरार्त्ताः सन्तो ये द्रुतं शीताम्बु सेवन्ते तेषामित्यर्थः। अत्र घर्म्म आतपो वह्निश्च। अजीर्णाध्यशिनामिति। अजीर्णं भुक्तमपक्वमन्नम्, अजीर्णं नैशाजीर्णं तन्निशायामजीर्णं दिवा पुनर्भोजनशीलानामधि च पूर्व्वदिनाहाराजीर्णे अशिनामशनशीलानाम्। पञ्चकर्म्मापचारिणामिति। क्रियमाणेषु पञ्चसु साङ्गेषु स्नेहस्वेदसहितेषु वमनविरेचननिरूहानुवासनशिरोविरेचनेषु यदुपचारो-ऽभिहितस्तदुपचारं विहायापचारं कर्त्तुं शीलानाम्। नवान्नदधीत्यादि। अत्राति-शब्दः सर्व्वैः संबध्यते। मसूरादिनिषेविणां तथा अजीर्णे विदग्धामविष्टब्धान्य-तरेऽन्ने सति व्यवायं मैथुनं भजतां, दिवा च भुक्तवतां निद्रां भजताम्, धर्षयतां

शीतोष्णेत्यादि। शीतोष्णादीनां यथाक्रमेण सेव्यत्वमुक्तम्—तद्विपरीतेन सेविनाम्, एवं लङ्घना-हारयोरपि ज्ञेयम्। घर्म्मादिभिरार्त्तत्वे द्रुतमविश्रम्य शीताम्बुसेविनामिति योज्यम्। अजीर्णाशन-मित्याममन्नं तद्भुञ्जानानाम् अध्यशनमित्याहारेऽपरिणते भुञ्जानानाम्। पञ्चकर्म्मापचारिणामिति पञ्चकर्म्मणि क्रियमाणेऽपचारः पञ्चकर्म्मापचारः। व्यवायञ्चाप्यजीर्णे इति विदग्धादिरूपेऽन्नेऽजीर्णे। पापं कर्म्म च कुर्व्वतामिति पापकर्म्मणैव विप्रादिधर्षणे लब्धे पुनस्तद्वचनं विशेषहेतुत्वोपदर्शनार्थम्।

**वातादयस्त्रयो दुष्टास्त्वग्रक्तमांसमम्बु च।**
**दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः॥ ३॥**

दर्पादिवाग्भिरन्यैश्च कर्म्मभिरभिभवताम्। पापं कर्म्म च कुर्व्वतामिति विप्रादिधर्षणे न पापकर्म्मकरणे लब्धे पुनर्विप्रानित्यादिवचनेन विप्रादिधर्षणस्य कुष्ठहेतुत्वं तद्व्यतिरिक्तपापविशेषस्य च न तु पापसाधारणस्य कुष्ठहेतुत्वमिति ज्ञापितम्। तदुक्तमन्यत्र कुष्ठ्यतिपातकीति। शीलार्थकृत्प्रत्ययैरेषां प्रायेण सातत्यनिषेवणं कुष्ठहेतुर्न क्वचित् किञ्चिन्निषेव्यमाणं कुष्ठहेतुर्भवतीति ज्ञापितम्। हेतुमुक्त्वा द्रव्यमाह—वातादय इत्यादि। एभिर्निषेवितेभ्यस्तेभ्यो विरोध्यन्नपानादिभ्यः कारणेभ्यो व्यस्तसमस्तेभ्यो हेतुभ्यो दुष्टास्त्रयो वातादयः त्वग्रक्तमांसमम्बु च स्वेदवसालसीकादिकं दूषयन्ति। इति स वै सप्तको वातादिदोषत्वगादिद्रव्यैः सप्तभिर्निष्पादितो गणः कुष्ठानां द्रव्यसंग्रहः। कर्म्मगुणाश्रयसमवायिकारणानां संग्रहः संक्षेप इत्यर्थः। अत्र वातादय इत्युक्तया त्रयाणां वातपित्तश्लेष्मणां लाभेऽपि त्रय इति पुनर्वचनं सर्व्वेषु कुष्ठेषु मिलितास्त्रयो वातपित्तकफा उक्तैर्हेतुभिर्दुष्टा भवन्तीति ज्ञापनार्थम्। तर्हि किं त्वग्रक्तमांसमम्बु चेति चत्वारो धातवश्चत्वार इति पदाभावात् पृथक् पृथक् दुष्टं भवन्ति? उच्यते, तैर्हेतुभिर्मिलितास्त्रयो दोषा दुष्टाः सन्तः पृथक् पृथगेव त्वगादीन् दूषयन्ति न तु युगपच्चतुरो दूषयन्ति। निर्देशादेव सप्तक इति लाभे सप्तक इति पदं सर्व्वत्र कुष्ठे सप्तानामेषां धातूनां नियमतो द्रव्यत्वख्यापनार्थं पुनरुक्तम्। ननु द्रव्यं कर्म्मगुणाश्रयसमवायिकारणं चेत् कथं वातादीनां त्रयाणां दोषाणामत्र कुष्ठे द्रव्यत्वं संगच्छते? न हि व्याधिषु समवायिकारणानि दोषा भवन्ति दोषनिर्हरणादिभिर्हि व्याधिप्रतिक्रिया शास्त्रे दृश्यते, प्रत्यक्षञ्च कथं समवायिकारणनाशात् कार्य्यनाशः स्यात् किं कपालमालानाशात् घटनाशः स्यात् तस्माद् दोषा आधारभूतनिमित्तकारणानि तन्नाशाद्धि कार्य्य-नाशो दृश्यते यथा वर्त्तितैलविनाशाद् दीपनाश इति प्रयुक्तश्चाचार्य्येणाधार भूतनिमित्तकारणे द्रव्यपदम्, रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथेति। नैवं वर्त्तितैलमल्लिकादयः किं दीपारम्भकास्तद्वदेव किं सप्तैते धातवः कुष्ठे

**द्रव्यमाह** वातादय इत्यादिना। वातादीनां त्रित्वे सिद्धेऽपि त्रय इति वचनं **सर्व्वकुष्ठेषु** त्रयाणामपि दुष्टिदर्शनार्थम्। द्रव्यसंग्रह इति कारणं संग्रहद्रव्याधारमारम्भकं **कारणमुच्यते**, सप्तकं सर्व्वत्र सप्तकनियममार्थमुक्तमपि पुनरुच्यते। यद्यपि विसर्पाणामुत्पादे

सर्व्वे एव दोषदूष्याः ? अस्त्वेवं दीपकलिका विवहिस्तद्वत् कोऽपरो व्याधिरूपः स्याच्छारीरो भाव इति। तत्र चेदुच्यते—दोषदुष्टधातुभ्यो विशिष्टापररूपो यः स एव व्याधिर्दोषास्तु तैलवर्त्तिवदिति। तत् कथं सप्तको द्रव्यसंग्रहः संगच्छते ? चतुष्क एव द्रव्यसंग्रहः स्यात्। यदि छत्रिणो गच्छन्ति माषराशिरिति स्यात् तर्हि सप्तको हेतुसंग्रह इत्युच्यताम्। किञ्च यदि वातादयो न द्रव्यभूतकारणानि भवन्ति कथं तर्हि पक्वव्रणशोथात् कफाद्यनेकं पूयं निःसृतं पश्यामः न हि तत्र शारीरो लसीकादिक्लेदो भवति पूयः, उक्तं हि नर्त्तेऽनिलाद्रुङ् न विना च पित्तं पाकः कफश्चापि विना न पूय इति। तथा सश्लेष्मा पवनः शुद्धः कसनात् कास उच्यते। तथा स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे। न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्ते तु ततो विशिष्टा इति। आगन्तुः तदात्वे तु व्यथापूर्व्वः केवलो भूत्वा पश्चान्निजैर्दोषैरनुबध्यते, कश्च स यः पूर्व्वं केवलो भवत्यागन्तुरिति चेदुच्यते. तद्दुःखमेव पूर्व्वं शारीरं वा मानसं वाभिघाताभिचारादिना पूर्व्वं शरीरे पश्चान्मनसि जायते तच्चाधिभौतिकं, यदुक्तं सुश्रुते प्रागभिहितं तद्दुःखसंयोगा व्याधय इति। तच्च दुःखं त्रिविधम् आध्यात्मिकमाधिभौतिकमाधिदैविकमिति। तत् तु सप्तविधे व्याधावुप-निपततीत्यादुक्त्वा संघातप्रवृत्ता य आगन्तवो दुर्व्वलस्य बलवद्विग्रहास्तेऽपि द्विविधाः शस्त्रकृता व्यालकृताश्च। त एवाधिभौतिका इत्युक्तम्। तत्र निपतितं दुःखमाधिभौतिकमिति। अत एवोक्तं स्वयं विकारो दुःखमेव स्थित। तदुत्तरकाल निजैर्दोषैरनुबध्यते न वाताद्यात्मकमित्यभिप्रायेणोक्तमागन्तवस्ते तु ततो विशिष्टा इति। अत्र दुःखवच्छारीरेऽपि यत् दुःखमाध्यात्मिकमुप-निपतति, तदेव व्याधिस्तदाधारभूतकारणं दोषादिकमिति चेत् सत्यं, सर्व्वेषां प्राणिनामात्मा हृदि निहितः स एव पुरुष एतत्स्थूलपुरुषरूपेण जायते तत्र शुक्रशोणितरसाः किमाधारभूता हेतव उत समवायिहेतवः ? आत्मा त्वविशेषः मनःशरीरसंयोगात् तु विशिष्टत्वेनोपलभ्यते। यतस्तु पञ्चमहाभूतशरीरिसमवायः पुरुषस्तद्वत् सर्व्वत्राशारीरव्याधेर्दोषदूष्यदुःखसमुदायात्मकत्वात् दोषा दूष्याश्च गुणकर्म्माश्रयाः समवायिहेतव इष्यन्ते, ते हि विकृतिमापन्नाः स्थानविशेष-संश्रया दूष्यविशेषं प्राप्य संयोगविशेषं तेन गत्वा दुःखविशेषमुपनिपातयन्तः

एतान्येव सप्त कारणानि, यदुक्तं—'रक्तं लसीका त्वङ् मांसं दूष्यं दोषास्त्रयो मलाः। विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः' इति, तथापि कुष्ठं चिरक्रियैः स्थिरैर्दोषैर्जन्यते। विसर्पस्तु विसरणशील इति विशेषः। अन्ये तु विसर्पा वातादिभिरेकैकशोऽपि भवन्तीत्याहुः।

तद्विशिष्टापरापूर्व्वस्वरूपा ज्वरातिसारादिरूपेण परिणमयन्ते, यथा मृज्जलवालुकादयो घटादिरूपेण। तेषां निर्हरणादिनाल्पीभावेऽल्पाकृतिबलो व्याधिः स्यात् ततोऽपि संशमनादिना प्रकोपशमनस्वस्थानगमनात् निश्चेष्टसमवायिकारणगुणविशेषसंयोगरूपसम्प्राप्तिनाशाद् विनाशः। यथात्मशरीरसंयोगेन जातस्य पुंसः समवायिकारणानामात्मशरीराणां संयोगभङ्गादतिमृत्युर्मुक्तिः उच्यते सूक्ष्मशरीरिशुक्रशोणिताहाररससंयोगात् स्थूलः पुमान् जायते तच्छुक्रशोणितरसजस्य स्थूलशरीरस्य लङ्घनरोगशोकादिवमनविरेचनादिभिः समवायिकारणशारीरभावाणामल्पत्वात् कृशत्वं सूक्ष्मशरीरिस्थूलशरीरसंयोगस्य निश्चेष्टसमवायिकारणस्य गुणविशेषस्य नाशादस्य स्थलपुरुषस्य मृत्युरिति। देवनरतिर्य्यग्योनिपशुपक्षिभेकादिपुरुषवद्विशिष्टो व्याधिः ज्वरातिसारशोथादिकः आत्मवत् सर्व्वत्र दुःखमुपनिपतति। अत एवाह ततः कुष्ठानि जायन्ते इत्यादि। तत इति जनिकर्त्तुः प्रकृतौ खल्वपादाने पञ्चमी न तु निमित्ते। ननु विसर्पेष्वप्येष सप्तको द्रव्यसंग्रहो दृश्यते यद् वक्ष्यते रक्तं लसीका त्वङ् मांसं दूष्यं दोषास्त्रयो मलाः। विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातव इति, तत्र लसीका चोदकधातुरुच्यते तत् कुतोऽनयोः कुष्ठविसर्पयोः भेदः स्यात् इति? उच्यते, कुष्ठं किञ्चिद्विकाशिगुणैश्चिरकारिस्थिरगुणबहुलैः विरोध्यन्नपानादिभिर्निषेवितैः दुष्टा दोषाश्चिरकर्म्मस्वभावाः स्थिरत्वगुणमापन्ना दूष्यान् दूषयित्वा अप्रबलरक्तपित्ततया जनयन्ति। विसर्पन्तु लवणाम्लकटूष्णद्रव्यस्लराग-षाड़वशुक्तसुरासौवीरादिभिः विकाशिगुणैरस्थिरगुणबहुलैर्निषेवितैर्दुष्टा दोषा आशुप्रसारस्वभावा अस्थिरत्वगुणमापन्ना दूष्यान् दूषयित्वा प्रबलरक्तपित्तात्मकतया जनयन्ति, विप्रगुरुधर्षणमपि कर्म्मणाञ्च कुष्ठहेतुत्वं सर्व्वत्रैवास्ति विसर्पे तु तन्न प्रतिनियतं दृश्यते इति भेदः। केचित् तु पृथक्त्रयस्त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रय इति वक्ष्यमाणवचनमुपन्यस्य एकादिदोषजो विसर्पः कुष्ठं सर्व्वं त्रिदोषजमेवेति भेदमाहुस्तन्न तद्वचनाद्धीत् पूर्व्वम्—स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुक इत्यर्द्धवचनेन सर्व्वेषां विसर्पाणां सप्तधातुकत्ववचनादुल्वणदोषेण तु कुष्ठवत् वातिकादिव्यपदेशात्॥ ३॥

यदुक्तं—'पृथक् त्रयः त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रयः' इति वचनाद्वर्णयन्ति। त्रिदोषत्वेऽपि विसर्पणान्नैकदोषजकुष्ठवत्। एकदोषतादिव्यपदेशस्तत्रोच्यते॥ ३॥

ततः कुष्ठानि जायन्ते सप्त चैकादशैव च।
न चैकदोषजं किञ्चित् कुष्ठं समुपलभ्यते ॥ ४ ॥
स्पर्शाज्ञत्वमतिस्वेदो न वा वैवर्ण्यमुन्नतिः।
कोठानां लोमहर्षश्च कण्डूस्तोदः श्रमः क्लमः ॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः।
सुप्तत्वमङ्गदाहश्च कुष्ठलक्षणमग्रजम् ॥ ५ ॥

अत ऊर्द्ध्वमष्टादशानां कुष्ठानां कपालोडुम्बरमण्डलर्ष्य-जिह्व-पुण्डरीक-सिध्मकाकणकुष्ठचर्म्माख्यकिटिमविपादिका-

गङ्गाधरः—द्रव्यमुक्त्वा लिङ्गमाह—सप्त चैकादशैव चेति। अष्टादशैव त्विति न कृत्वा पदभेदादिदं ज्ञापितं महाकुष्ठानि सप्तैव क्षुद्रकुष्ठान्येकादशैवेति। एषामुल्वण-दोषभेदेन च सङ्ख्या निदानस्थाने पूर्व्वमुक्ता तेन नात्रोक्ता। सम्प्राप्तिर्हि संख्या विधा च सम्प्राप्तिश्च विज्ञानलिङ्गं भवतीति संख्यापि लिङ्गमत्र बोध्यम्। सर्व्वेषां त्रिदोषजत्वं दर्शयति—न चैकदोषजमित्यादि। सुश्रुते हि सर्व्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि च भवन्त्युत्सन्नतस्तु दोषग्रहण-मभिभवादिति ॥ ४ ॥

गङ्गाधरः—पूर्व्वरूपमाह—स्पर्शाज्ञत्वमित्यादि। स्पर्शाज्ञत्वं त्वचि स्वापः स्पर्शज्ञानरहितत्वमित्यर्थः। अतिस्वेदो न वा स्वेद इति विकल्पेनातिस्वेदः। वैवर्ण्यं शरीरस्य। कोठानामुन्नतिः। एवमवस्थापन्नशरीरस्य गात्रे यदि कश्चिद् व्रणः स्यात् तदा व्रणानां यद्रूपसम्भव एवं तच्छूलानां तद्रूपशूलादधिकं शूलं स्यात्। एवं तत्र गात्रे व्रणानां शीघ्रोत्पत्तिः स्याद् रोहणश्च चिरेणैव स्याद् रक्तपित्तातिदुष्टदेहत्वादिति चिरस्थितिर्भवति। सुप्तत्वमङ्गे अङ्गप्रदेशानामक्रियत्वं दाहश्चेति। कुष्ठस्याग्रजलक्षणं पूर्व्वरूपम् ॥ ५ ॥

चक्रपाणिः—सप्त चेति विशेषविच्छेदपाठेन सप्तानां कुष्ठानां महाकुष्ठत्वम् एकादशानाञ्च क्षुद्रकुष्ठत्वं बोधयति। निदाने न विहितानामपि क्षुद्रकुष्ठानामिह चिकित्सार्थं विधानम् ॥ ४ ॥

चक्रपाणिः—स्पर्शेत्यादि पूर्व्वरूपं, न वा स्वेद इति सम्बन्धः, अतिस्वेदास्वेदौ तु स्वेदवहस्रोतो-ऽवरोधानवरोधकृतौ ज्ञेयौ। शीघ्रोत्पत्तिश्चिरस्थितिश्च व्रणानामेव ॥ ५ ॥

लसकदद्रुचर्म्मदलपामाविस्फोटशतारुर्विचर्च्चिकानां लक्षणा-न्युपदेक्ष्यामः ॥ ६ ॥

कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।
कपालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम् ॥ ७ ॥
रुग्दाहरागकण्डूभिः परीतं लोमपिञ्जरम् ।
उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत् ॥ ८ ॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥ ९ ॥

गङ्गाधरः—अत ऊर्द्ध्वमित्यादि—अष्टादशानां क्रमेण नामानि कपालेत्यादीनि ॥ ६ ॥

गङ्गाधरः—तत्रादौ सप्तमहाकुष्ठलक्षणान्याह—कृष्णारुणेत्यादि । कृष्णकपालवर्णमरुणकपालवर्णं वा, कपालं भग्नखर्परखण्डं, रूक्षं निस्नेहं, परुषं खरस्पर्शं, तनु अघनं, तोदबहुलं, कपालं नाम महाकुष्ठम् । तत् विषमम् असमरूपं स्मृतम् । कुष्ठमिदं द्विविधं—वाताधिकतरं पित्ताधिकतरञ्च । तत्र वाताधिकतरमरुणाधिकस्वल्पकृष्णवर्णकपालवर्णं, पित्ताधिकतरं स्वल्पारुणकृष्णवर्णकपालवर्णमित्युभयमेव कृष्णारुणकपालाभमित्यनेन अधिकतरवाताद् भवति तन्निदानस्थाने प्रोक्तम् । सुश्रुते च वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वापयुक्तान्यरुणानि इत्यरुणं नाम पठित्वा पित्तेन कृष्णकपालवर्णं कपालं नाम पठितं, यथा कृष्णकपालप्रकाशानि कपालकुष्ठानीति ॥ ७ ॥

गङ्गाधरः—रुग्दाहेत्यादि । लोमपिञ्जरं लोमभिः पिञ्जरं कपिलरोमभिरित्यर्थः । उडुम्बरफलाभासं स्पष्टम् । कुष्ठमिदमौडुम्बरं नाम निदानस्थाने पित्तेऽधिकतरे भवतीति प्रोक्तम् । सुश्रुते च पित्तेन पक्वोडुम्बरफलाकृतिवर्णान्यौडुम्बराणीति ॥ ८ ॥

गङ्गाधरः—श्वेतं रक्तमित्यादि । श्वेतं रक्तं पुण्डरीकपुष्पपत्रवत् श्वेतं रक्तं स्थिरमचलं कठिनं स्त्यानं घनम् उत्सन्नमण्डलमुच्चमण्डलाकारं कृच्छ्रं कृच्छ्रसाध्यम् अन्योन्यसंसक्तमेकमपरेण सम्मिलितमिति कुष्ठं मण्डलमुच्यते, निदान-

चक्रपाणिः—कपालः खर्परशकलः । विषमं दुश्चिकित्स्यम् । लोमपिञ्जरमिति कपिलम् ।

कर्कशं रक्तपर्य्यन्तमन्तःश्यावं सवेदनम्।
यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥ १० ॥
सश्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम्।
सोत्सेधञ्च सरागञ्च पुण्डरीकं तदुच्यते ॥ ११ ॥

स्थाने श्लेष्मण्यधिकतरे प्रोक्तम्। सुश्रुते त्वेतत् कुष्ठं पौण्डरीकं नाम पठितं यथा श्लेष्मणा पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि तेषामुत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वञ्चेति लिङ्गानीति ॥ ९ ॥

गङ्गाधरः—कर्कशमित्यादि। गोजिह्वावत् खरस्पर्शं रक्तपर्य्यन्तमन्ते रक्तवर्णमन्तःश्यावं मध्यभागे श्याववर्णं सवेदनम् ऋष्यजिह्वासंस्थानम् ऋष्यो नीलाण्डो हरिणस्तस्य जिह्वाकारं कुष्ठमृष्यजिह्वम् इदञ्च द्विविधं वातपित्तोत्तरं पित्तोत्तरञ्च। तत्र वातपित्ताधिकतरमिदं निदानस्थाने व्याख्यातम् अस्मिंस्तन्त्रे। सुश्रुते तु—पित्तेन ऋष्यजिह्वाप्रकारखरत्वानि ऋष्यजिह्वान्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानप्रपाकभेदित्वानि क्रिमिजन्म चेति लिङ्गानीति पठितम् ॥ १० ॥

गङ्गाधरः—सश्वेतमित्यादि। सश्वेतं रक्तपर्य्यन्तमन्ते श्वेतरक्तवर्णं मध्ये सरागञ्चेति ईषत् लोहितमिति। पुण्डरीकदलोपमं पद्मपुष्पदलाकारं सोत्सेधमुन्नतं सरागञ्चेति व्याख्यातम्। सदाहञ्चेति पाठान्तरे ईषद्दाहं पित्तकफोत्थत्वात्। इदञ्च पुण्डरीकं द्विविधं पित्तकफाधिकतरं कफाधिकतरञ्च तयोराद्यमस्मिंस्तन्त्रे निदानस्थाने चात्र च लिखितं, कफोत्तरन्तु सुश्रुते श्लेष्मणा पुण्डरीकपत्रप्रकाशानि पौण्डरीकाणि तेषामुत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानत्वञ्चेति। एतैर्लक्षणैस्तुल्यत्वान्मण्डलस्यैव नाम पौण्डरीकम्। अस्य तु पुण्डरीकस्य बहुबहलरक्तपूयलसीकादिलक्षणैर्भेदादस्य नाम न पौण्डरीकं सुश्रुते ॥ ११ ॥

उत्सन्नमण्डलमित्युद्गतमण्डलम्। ऋष्यो नीलाण्डो हरिणः, ऋष्यजिह्वासंस्थानमिति तज्जिह्वाकारम्। प्रायश्चोरसीत्युरसि बाहुल्येन भवति श्लेष्मप्रधानत्वात्, कदाचिदन्यत्रापि

श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति।
अलाबूपुष्पवर्णञ्च तत् सिध्मं भूयसोरसि ॥ १२ ॥
यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम्।
त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति ॥ १३ ॥

इति सप्त महाकुष्ठानि।

गङ्गाधरः—श्वेतं ताम्रमित्यादि। तनु चाघनं घृष्टं रजोरूपं चर्म्म मुञ्चति। क्वचिदलाबूपुष्पवत् श्वेतवर्णञ्च भूयसा प्रायेणोरसि ऊर्द्ध्वदेहे च भवति, तत् सिध्मं नाम महाकुष्ठम्। भूयसाग्रहणे क्वचिदधोदेहेऽपि भवति। ननु सुश्रुते—क्षुद्रकुष्ठेषु सिध्म पठितं "कण्डून्वितं श्वेतमपाकि सिध्म विद्यात् तनु प्रायश ऊर्द्ध्वदेहे" इति, कथमत्र महाकुष्ठेष्विति चेत् सत्यम्। निदानस्थानेऽधिकतरयोः श्लेष्ममारुतयोः सिध्मेत्युक्तं तत्र कफमारुताधिकतरं ताम्रवर्णवत् किञ्चिच्छ्वेतमिश्रितताम्रवर्णं बहुतरं स्थाने स्थाने भवति, अल्पपूयादिमच्च तनु च घृष्टं रजो मुञ्चत्येतदेकविधं, तत्र कफाधिक्ये अपरञ्चालाबूपुष्पवत् श्वेतमपाकि कण्डयुतमदाहं तनु च रजो घृष्टं मुञ्चति तत् प्रायेण वक्षसि चोर्द्ध्वदेहे वा भवति। द्विविधमेतत् त्वग्रक्तादिगतमवगाढं महाकुष्ठमस्मिंस्तन्त्रे पठितं तत् कफोत्तरमिति मत्वा सुश्रुते क्षुद्रकुष्ठे पठितं त्वङ्मात्राश्रितत्वेनानवगाढत्वादिति ॥ १२ ॥

गङ्गाधरः—यत् काकेत्यादि। काकणन्तिका गुञ्जाफलं तद्वर्णं मध्येऽतीवकृष्णमन्ते चातीवरक्तं मध्ये रक्तमन्ते कृष्णं वा त्रिदोषलिङ्गमिति। सर्व्वकुष्ठानां त्रिदोषजत्वेऽप्येकद्व्युल्वणव्यवच्छेदार्थं त्रिदोषलिङ्गमित्युक्तम्। इदञ्च द्विविधं त्रिदोषोल्वणमेकं यदिदं निदानस्थाने पठितं काकणन्तिकारणान्यादौ पश्चात् सर्व्वकुष्ठसमन्वितानि पापीयसां सर्व्वकुष्ठलिङ्गसम्भवेनानेकवर्णानि काकणकानीति विद्यादित्युक्तम्। सुश्रुते तु पित्तेन काकणन्तिकाफलसदृशान्यतीवरक्तकृष्णानि काकणकानि, तेषामप्योषचोषपरिदाहधूमायनानि क्षिप्रोत्थानपाकभेदित्वानि क्रिमिजन्म चेति लिङ्गानि। तत्रादिबलप्रवृत्तं पौण्डरीकं काकणकञ्चासाध्यमित्युक्तम्। तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठाङ्गः-

भवतीति भावः। काकणन्तिका गुञ्जा। कुष्ठत्वेनैव त्रिदोषलिङ्गत्वे सिद्धे पुनस्तद्वचनं प्रबलत्रिदोषलिङ्गत्वोपदर्शनार्थम् ॥ ६—१३ ॥

अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम्।
तदेककुष्ठं चर्म्माख्यं बहुलं हस्तिचर्म्मवत्॥
श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम्।
वैपादिकं पाणिपाद-स्फुटनं तीव्रवेदनम्॥

प्रभृतयस्तेऽपि द्विधा, मातृजाः पितृजाश्चेति। इति सप्त महाकुष्ठानि। महत्त्वञ्चैषां क्षिप्रमुत्तरोत्तरधात्ववगाहनबहुबहुलदोषजत्वक्रियाभूयस्त्वयोगित्वमिति॥ १३॥

गङ्गाधरः—अत ऊर्द्ध्वं क्षुद्रकुष्ठानि वक्ष्यन्ते—अस्वेदनमित्यादि। महावास्तु महास्थानं, मत्स्यशकलोपमं मत्स्यखण्डसदृशं* तदेककुष्ठं नाम क्षुद्रकुष्ठम्। वातकफाधिकमेतत्। सुश्रुते च कृष्णारुणं येन भवेच्छरीरं तदेककुष्ठं प्रवदन्त्यसाध्यम् इति। तथा अरुः ससिध्मं रकसा महच्च यच्चैककुष्ठं कफजान्यमूनीति, पुनः कफजत्वमुक्तमेककुष्ठस्य; तदत्र वक्ष्यमाणे चर्म्माख्यमेककुष्ठञ्च किटिमं सविपादिकम्। कुष्ठञ्चालसकं ज्ञेयं प्रायो वातकफाधिकमित्यत्र प्रायोग्रहणात् केवलकृष्णारुणशरीरत्वे कफाधिकत्वमस्वेदमहावास्त्वादिलक्षणे वातकफाधिकत्वमिति नाचार्य्ययोर्विरोधः। चर्म्माख्यन्तु बहुलं हस्तिचर्म्मवदिति हस्तिचर्म्मवद्बहलं घनं तस्माच्च तथा यत् तच्चर्म्माख्यं कुष्ठं क्षुद्रमेव। इदञ्च प्रायो वातकफाधिकमुक्तं तद्वक्ष्यमाणम्। श्यावमित्यादि। किणखरस्पर्शं किणो रूढ़व्रणस्थानवत् परुषं रुक्षम्। किटिममिदं वातकफाधिकं वक्ष्यते। सुश्रुते तु यत् स्रावि वृत्तं घनमुग्रकण्डु सस्निग्धकृष्णं किटिमं वदन्तीति, शेषाणि पित्तप्रभवाणि विद्यादित्युक्तेरस्य पित्ताधिकत्वं न विरुध्यते वक्ष्यमाणे प्रायोग्रहणात्। यत् किटिममेवंस्रावस्निग्धकृष्णादिलक्षणं स्यात् तत् पित्तोल्वणमेव स्यात्; पाको हि न पित्तं विना स्यादिति। वैपादिकमिति विपादिका स्वार्थिकस्त्वण्। पाणिपादस्फुटनम् पाणौ पादे च विदारिणं तीव्रवेदनञ्च। इदं प्रायो वातकफाधिकं वक्ष्यते। सुश्रुते तु पादगता विचर्च्चिका विपादिका नाम पठिता विचर्च्चिकाभेद एव न चयं विपादिका पठिता। कुष्ठानामपरिसङ्ख्येयविधत्वादपराणि च

चक्रपाणिः—महावास्त्विति महास्थानं, मत्स्यशकलोपममिति मत्स्यत्वक्सदृशं, किणवत् खरस्पर्शो यस्य तत् किणखरस्पर्शम्। किणो व्रणस्थानम्॥ १४॥

* "मत्स्यखण्डसदृशम्" इति लिपिप्रमादः, मत्स्यशल्कसदृशमिति पठनीयम्। शकलशब्दस्य खण्डं शल्कञ्चेति द्विविधोऽर्थो दृश्यते।

कण्डूमद्भिः सरागैश्च गण्डैरलसकं विदुः ।
सकण्डुरागपिड़कं दद्रुमण्डलमुद्गतम् ॥
रक्तं सशूलं कण्डूमत् सस्फोटं यद् दलत्यपि ।
तच्चर्म्मदलमाख्यातं संस्पर्शासहमुच्यते ॥
पामा श्वेतारुणश्यावाः कण्डूराः पिड़का भृशम् ।
स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ॥

च पठितानि यान्यत्र नोक्तानि परिसप-विसर्प-वकसेति । कण्डूमद्भिरित्यादि । गण्डैर्गण्डशोथवद्लपालपव्रणशोथैरलसकं नाम क्षुद्रकुष्ठम् । इदञ्च प्रायो वातकफाधिकं वक्ष्यते । सुश्रुते तु स्थूलारुष्कं नाम पठितं तुल्यलक्षणत्वात् । तद यथा । स्थूलानि सन्धिष्वतिदारुणानि स्थूलारुंषि स्युः कठिनान्यरूंषीति । तत्रैतत् कफजमुक्तम् । तत्रायमभिसन्धिः । यत् कण्डूमत् सरागस्वल्पगण्डरूपं तदलसं वातकफाधिकं, यत् तु सन्धिस्थाने दारुणस्थूलगण्डरूपं तत् कफाधिकं स्थूलारुष्कं नाम सुश्रुतेनोक्तमिति न विरोधः । सकण्डूरागेत्यादि दद्रुलक्षणम् । ननु सुश्रुते महाकुष्ठं दद्रुकुष्ठमुक्तमत्र तु क्षुद्रकुष्ठेषु पाठः कथं संगच्छते ? उच्यते,—सुश्रुते श्लेष्मणा अतसीपुष्पवर्णानि ताम्राणि वा विसर्पीणि पिड़कावन्ति च दद्रुकुष्ठानि, तेषाम् उत्सन्नता परिमण्डलता कण्डूश्चिरोत्थानञ्चेति लिङ्गानीत्येवं यद् दद्रुकुष्ठमुक्तं तदेव महाकष्टदत्वान्महाकुष्ठमुक्तम् । अत्रोक्तन्तु नातिकष्टत्वात् क्षुद्रकुष्ठमुक्तमिति न विरोधः कुष्ठानामपरिसङ्ख्येयविधत्वात् । रक्तमित्यादि । दलति विदीर्य्यते । चर्म्मदलमिदं कुष्ठं पित्तश्लेष्माधिकम् । सुश्रुते शेषाणि पित्तप्रभवाणीत्युक्तेः पित्तजमुक्तं "स्युर्येन कण्ड्वयथनौपचोषास्तलेषु तच्चर्म्मदलं वदन्ति" इति । करतले कण्ड्वादिमद् यच्चर्म्मविदारणं तत् पित्ताधिकं, यत् तु संस्पर्शासहशूलसस्फोटकण्डूमच्चर्म्मविदलनं तत् पित्तश्लेष्माधिकमिति न विरोधः । पामेत्यादि । श्वेतारुणश्यावर्णा पिड़का कण्डूरा भृशमत्यर्थं सा पामा । एतच्च कुष्ठं पित्तश्लेष्माधिकं वक्ष्यते । सुश्रुते शेषाणि पित्तप्रभवाणीत्युक्तया । सास्रावकण्डूपरिदाहवद्भिः पामाणुकाभिः पिड़काभिरुक्ता इति । अस्या एवावस्थान्तरं कच्छुनामोक्ता । स्फोटैः सदाहैरति सैव कच्छूः स्फिक्पाणिपादप्रभवैर्निरूप्येति । तत्र बहुस्रावा पामा पित्ताधिका, अल्पस्रावा

रक्तं श्यावं सदाहार्त्ति शतारुः स्याद् बहुव्रणम्।
सकण्डूपिड़काश्यावा बहुस्रावा विचर्च्चिका ॥ १४ ॥
इत्येकादश क्षुद्रकुष्ठानि।

वातेऽधिकतरे कुष्ठं कापालं मण्डलं कफे।
पित्ते त्वौडुम्बरं विद्यात् काकणन्तु त्रिदोषजम् ॥ १५ ॥
वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि चाधिके।
ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठञ्च जायते ॥ १६ ॥

पित्तकफाधिकेति न विरोधः। स्फोटा इत्यादि। तनुत्वक्श्यावारुणस्फोटो विस्फोटः। कुष्ठमिदमपि पित्तश्लेष्माधिकम्। सुश्रुते नायमुक्त एषोऽपि पित्तकफाधिक्यं वक्ष्यते। रक्तं श्यावमित्यादि। सदाहार्त्ति रक्तश्याववर्णं बहुव्रणं शतारुः, कुष्ठमिदञ्च पित्तकफाधिकं वक्ष्यते। सुश्रुते नेदं पठितम्। महाकुष्ठ-विसर्पपरिसर्पवकसेति चत्वारि चान्यानि पठित्वैकादश क्षुद्रकुष्ठानि व्याख्यातानि। तद् यथा। त्वक्कोचभेदस्वपनाङ्गसादाः कुष्ठे महत्पूर्व्वयुते भवन्ति। विसर्पवत् सर्पति सर्व्वतो यस्त्वग्रक्तमांसान्यभिभूय शीघ्रम्। मूर्च्छाविदा-हारतितोदपाकान् कृत्वा विसर्पः स भवेद् विकारः। शनैः शरीरे पिड़काः स्रवन्त्यः सर्पन्ति यास्तं परिसर्पमाहुः। कण्डून्विता या पिड़का शरीरे संस्रावहीना वकसोच्यते सेति। तान्यनुक्तान्यपि न विरुध्यन्ते। निदानस्थाने ह्युक्तं सप्तविधमष्टादशविधमपरिसङ्ख्येयविधञ्चेति। सकण्डित्यादि। विच-र्च्चिका कफप्राया। विचर्च्चिकेति वक्ष्यते। सुश्रुते शेषाणि पित्तप्रभवाणीत्युक्तया पित्तजा विचर्च्चिका ज्ञेया। राज्योऽतिकण्डूर्त्तिरुजः सुरुक्षा भवन्ति गात्रेषु विचर्च्चिकायाम्। कण्डूमती दाहरुजोपपन्ना विपादिका पादगतेयमेवेति। अल्पस्रावातिकण्डूर्त्तिरुजान्वितराजिमती विचर्च्चिका पित्तेन सस्रावा सकण्डू-श्यावपिड़कारूपा तु विचर्च्चिका श्लेष्मप्रायेति न विरोधः ॥ १४ ॥

गङ्गाधरः—अष्टादश कुष्ठलक्षणान्युक्त्वा आश्रयदोषमाह—वातेऽधिकतरे इत्यादि। स्पष्टार्थम् ॥ १५ ॥

गङ्गाधरः—वातपित्ते इत्यादि। यथाक्रमं वातपित्तेऽधिकतरे ऋष्यजिह्वम्, श्लेष्मपित्ते पुण्डरीकम्, वातश्लेष्मणि सिध्मकुष्ठम् ॥ १६ ॥

चक्रपाणिः चिकित्सार्थं वाताद्याधिक्यं कुष्ठेष्वाह—वात इत्यादि। ऋष्यजिह्वादिषु वात-पित्ताधिक्यादि यथासंख्यं ज्ञेयम् ॥ १५। १६ ॥

चर्म्माख्यमेककुष्ठञ्च किटिमं सविपादिकम् ।
कुष्ठञ्चालसकं ज्ञेयं प्रायो वातकफाधिकम् ॥ १७ ॥
पामा शतारुर्विस्फोटं दद्रुश्चर्म्मदलं तथा ।
पित्तश्लेष्माधिकं प्रायः कफप्राया विचर्च्चिका ॥ १८ ॥

गङ्गाधरः—चर्म्माख्यादिकानि पञ्च वातकफाधिकानि ॥ १७ ॥

गङ्गाधरः—पामादीनि पञ्च पित्तकफाधिकानि। विचर्च्चिका कफाधिका। प्रायोग्रहणादन्यथापि सर्व्वाणि भवन्तीति। ननु सुश्रुते धातुगतदोषजकुष्ठानि पठ्यन्ते, तानि कथमत्र न दृश्यन्ते ; तद् यथा। भवन्ति चात्र। यथा वनस्पतिर्जातः प्राप्य कालप्रकर्षणम्। अन्तर्भूमि विगाहेत मूलैर्द्रुम्विवर्द्धितैः। एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः। क्रमेण धातून् व्याप्नोति नरस्याप्रतिकारिणः। स्पर्शहानिः स्वेदनत्वमीषत्कण्डुश्च जायते। वैवर्ण्यं रुक्षभावश्च कुष्ठे त्वचि समाश्रिते। त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम्। कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते। बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिड़कोद्गमः। तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते। दौगन्ध्यमुपदेहश्च पूयोऽथ क्रिमयस्तथा। गात्राणां भेदनञ्चापि कुष्ठे मेदःसमाश्रिते। नासाभङ्गोऽक्षिरागश्च क्षते च क्रिमिसम्भवः। भवेत् स्वरोपघातश्च अस्थिमज्जसमाश्रिते। कौण्यं गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम्। शुक्रस्थानगते लिङ्गं प्रागुक्तानि तथैव च। स्त्रीपुंसयोः कुष्ठदोषाद् दुष्टशोणितशुक्रयोः। यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्। कुष्ठमात्मवतः साध्यं त्वग्रक्तपिशिताश्रितम्। मेदोगतं भवेद् याप्यमसाध्यमत उत्तरमिति ? उच्यते, निदानस्थाने साध्यानामपि उपेक्ष्यमाणानामित्यादि साधारण्येन प्रोक्तं तत् तु सर्व्वमित्थं व्याख्येयमिति। ब्रह्मस्त्रीसज्जनवध-परस्वहरणादिभिः। कर्म्मभिः पापरोगस्य प्राहुः कुष्ठस्य सम्भवम्। म्रियते यदि कुष्ठेन पुनर्जातोऽपि गच्छति। नातः कष्टतरो रोगो यथा कुष्ठं प्रकीर्त्तितम्। आहाराचारयोः प्रोक्तामास्थाय महतीं क्रियाम्। ओषधीनां विशिष्टानां तपसश्च निषेवणात्। यस्तेन मुच्यते जन्तुः स पुण्यां गतिमाप्नुयात्। प्रसङ्गाद् गात्रसंस्पर्शान्निश्वासात् सहभोजनात्। सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात्। कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च। औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरमिति। एतत् सर्व्वं वाच्यम्। इति ॥ १८ ॥

सर्व्वं त्रिदोषजं कुष्ठं दोषाणाञ्च बलाबलम् ।
यथास्वैर्लक्षणैर्बुद्ध्वा कुष्ठानां क्रियते क्रिया ॥
दोषस्य यस्य पश्येत् कुष्ठेषु विशेषलिङ्गमुद्रिक्तम् ।
तस्यैव शमं कुर्य्यात् ततः परञ्चानुबन्धस्य ॥ १९ ॥
कुष्ठविशेषैर्दोषा दोषविशेषैः पुनः कुष्ठानि ।
ज्ञायन्ते ते हेतुं * हेतुस्तांश्च प्रकाशयति ॥ २० ॥

गङ्गाधरः—निदानं लिङ्गमाश्रयञ्च कुष्ठानामुक्त्वा प्रशमनं विवक्षुरादौ परीक्ष्यमाह—सर्व्वं त्रिदोषजमित्यादि। सर्व्वं कुष्ठं त्रिदोषजम्। तत्र दोषाणां बलाबलं यथास्वैः स्वमनतिक्रम्यार्थात् स्वैः स्वैर्लक्षणैः बुद्ध्वा कुष्ठानां क्रिया चिकित्सा क्रियते। ननु दोषाणां बलाबलं बुद्ध्वा कीदृशी क्रिया कार्य्येत्यत आह—दोषस्येत्यादि। कुष्ठेषु यस्य दोषस्य उद्रिक्तं प्रबलं यल्लिङ्गविशेषं पश्येत्, तस्यैव दोषस्य बलवत्त्वादादौ शमं कुर्य्यात्, ततः परमनुबन्ध्यस्याप्रधानस्य दोषस्य शमं कुर्य्यादिति ॥ १९ ॥

गङ्गाधरः—ननु कैः के ज्ञातव्या इत्यत आह—कुष्ठेत्यादि। कुष्ठविशेषैः अत्रैवोपदिष्टैर्वातेन कापालमित्यादिदोषविशेषोपदेशपूर्व्वककापालादिभिर्दोषा वातादयो ज्ञायन्ते। पुनर्दोषविशेषेण वातादिना कृष्णारुणादिकर्म्मकृता कुष्ठानि ज्ञायन्ते। ते दोषविशेषा हेतुं प्रकाशयन्ति यादृशरुक्षशीतादि-हेतुसेवनैर्दुष्टा हि दोषविशेषा भवन्ति तादृशरुक्षादिलिङ्गानि कुर्व्वन्तीति। एवं हेतुश्च रुक्षादिधर्म्मा कट्वादिस्तान् दोषविशेषान् प्रकाशयति। यो हि

चक्रपाणिः—उक्तैकदोषजत्वादिना कुष्ठेष्वविरोधं दर्शयन्नाह—सर्व्वमित्यादि। त्रिदोषजत्वं सर्व्वकुष्ठेषु व्यवस्थितमेव। दोषबलाबलविवक्षया चिकित्सार्थं वा एकदोषजत्वादिव्यपदेश इति भावः। अनुबन्ध्यस्येति अप्रधानस्य ॥ १७—१९ ॥

चक्रपाणिः—सम्प्रति दुर्ज्ञातस्य कुष्ठविशेषस्य तथा कुष्ठजनकस्य च हेतोः परस्परविरोधकत्व-माह—कुष्ठविशेषैरित्यादि। कुष्ठविशेषैः कुष्ठं ज्ञात्वा, कुष्ठानि ज्ञायन्ते यैर्विशेषैस्ते कुष्ठविशेषास्तैः वाताधिकोऽयं पैत्तिकोऽयमिति कुष्ठदोषे प्रतिज्ञाते दोषविशेषज्ञानात् विशिष्टानि कुष्ठानि ज्ञायन्ते, यथा इदं वातोत्तरं कुष्ठं तस्मात् कापालमिदम्, पित्ताधिकत्वान्मण्डलमिदमित्यादि। तथा यः कुष्ठेष्वपरिज्ञातो हेतुः स दोषैर्ज्ञायते। यथा कुष्ठं वातोत्तरं दृष्ट्वा वातोत्तरकुष्ठजनकानि रुक्षविरुद्धाशनादीनि कारणानि ज्ञायन्ते हेतुभिश्च दोषविशेषकुष्ठानि ज्ञायन्ते। यस्मादनेन

* तैर्हेतुरिति चक्रधृतः पाठः।

रौक्ष्यं शोषस्तोदः शूलं सङ्कोचनं तथायासः ।
पारुष्यं खरभावो हर्षः श्यावारुणत्वञ्च ॥
कुष्ठेषु वातलिङ्गं ——————
——————दाहो रागः परिस्रवः पाकः ।
विस्रो गन्धः क्लेदस्तथाङ्गपतनञ्च पित्तकृतम् ॥
श्वैत्यं शैत्यं कण्डूः स्थैर्य्यं सोत्सेधगौरवस्नेहाः ।
कुष्ठेषु तु कफलिङ्गं जन्तुभिरभिभक्षणं क्लेदः ॥ २१ ॥
सर्व्वैर्लिङ्गैर्युक्तं मतिमान् विवर्ज्जयेदबलम् ।
तृष्णादाहपरीतं शान्ताग्निं जन्तुभिर्जग्धम् ॥ २२ ॥

दोषविशेषो गूढ़लिङ्गत्वान्न विशेषेण ज्ञातुं शक्यते, स खलु रूक्षकुपितश्चेद् रूक्षेण सेवितेन प्रकाशितः स्यादन्यैर्वान्यैर्व्यक्तं स्यादिति ॥ २० ॥

गङ्गाधरः—तस्मात् कुष्ठसाधरणे वातादिलिङ्गान्याह—रौक्ष्यमित्यादि। शोषः शरीरस्य मुखस्य च । तोदः सूचीवद्वेदना। शूलं वेदनामात्रम्। सङ्कोचनमङ्गुल्यादीनाम्। पारुष्यं काठिन्यम्। खरभावः कार्कश्यम्। हर्षो गात्राणां लोम्नाञ्च। इति कुष्ठेषु वातलिङ्गम्। दाह इत्यादिकं कुष्ठे पित्तकृतं लिङ्गम्। रागो रक्ताभता। परिस्रवः परिस्रावः। पाक इति पचनम्, तेन क्लेदस्रु तिः। विस्रो गन्ध आमगन्धः। क्लेदश्च पित्तकार्य्यः। श्वैत्यमित्यादि कफलिङ्गम्। कुष्ठेषु सोत्सेध उच्चत्वम्। क्लेदान्तं कफलिङ्गवचनम्। एतेषां वातादीनामेभिरधिकतमैर्लिङ्गैर्बलं विद्यादल्पतमलिङ्गैरबलं दोषं विद्यात ॥ २१ ॥

गङ्गाधरः—तेषाञ्च बलाबलाभ्यां कुष्ठस्य गुणमाह—सर्व्वैरित्यादि। त्रिदोषलिङ्गमबलं कुष्ठिनं मतिमान् विवर्ज्जयेत्। बलवन्तन्तु प्रत्याख्याय प्रतिकुर्य्यादिति भाष्यम्। तथा तृषादियुक्तं शान्ताग्निं कुष्ठे पतितक्रिमिं

वातोत्तरकुष्ठजनकं सेवितं तस्मादस्य वातोत्तरं कापालं कुष्ठं भविष्यतीति किंवा कुष्ठदोषयोः अन्योन्यगमकत्वं तत्कार्य्यकारणतया परस्परगमकत्वादुपपन्नमिति दर्शयन्नाह—तैरिति। तैः कुष्ठैः कार्य्यरूपैर्हेतुर्नामदोषः अनुमीयते, हेतुश्च दोषरूपस्थानकार्य्यरूपकुष्ठविशेषानवगमयतीत्यर्थः ॥ २० ॥

चक्रपाणिः—कुष्ठगतदोषज्ञानार्थं वातादिलिङ्गान्याह—रौक्ष्यमित्यादि। दाहादयः पित्तलिङ्गानि। चिकित्सानिबन्धनार्थं साध्यासाध्यकुष्ठान्याह—सर्व्वैरित्यादि ॥ २१ । २२ ॥

वातकफप्रबलं यद् यदेकदोषोल्वणं न तत् कृच्छ्रम्।
कफपित्तवातपित्तप्रबलानि तु कृच्छ्रकुष्ठानि॥ २३॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चाग्रे॥
वमनविरेचनयोगाः कल्पोक्ताः कुष्ठिनां प्रयोक्तव्याः।
प्रच्छनमल्पे कुष्ठे महति च शस्तं सिराव्यधनम्॥
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान्।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु॥ २४॥

कुष्ठिनं परिवर्ज्जयेत्। यद् यत् कुष्ठं वातकफप्रबलमेकदोषोल्वणञ्च तत् कुष्ठं न कृच्छ्रं, कफपित्तवातपित्तप्रबलानि यानि कुष्ठानि तानि सर्व्वाणि कृच्छ्राणि॥ २२। २३॥

गङ्गाधरः—साध्यासाध्यत्वमुक्त्वा क्रमेण क्रियाक्रममाह—वातोत्तरेष्वित्यादि। सर्पिर्वक्ष्यमाणं साधितं घृतम्। श्लेष्मोत्तरेषु कुष्ठेषु वमनम्, पित्तोत्तरेषु रक्तस्य मोक्षो विरेचनञ्च। अग्रे इति सर्व्वत्र योज्यम्। वमनविरेचनयोगानाह—वमनेत्यादि। कल्पस्थाने उक्ता अर्थाद्वक्ष्यन्ते ये योगाः कुष्ठहरत्वेन, ते कुष्ठिनां प्रयोक्तव्याः। अल्पेऽनवगाढ़कुष्ठे प्रच्छनं पाँचा इति लोके। महति अवगाढ़े सिराव्यधम्। बहुदोषः कुष्ठी संशोध्यः। तस्य प्राणान् बलादीन् बहुशोऽनुरक्षता भिषजा बहुशः स्तोकस्तोकनिर्हरणेन न त्वेकदा बहुदोषनिर्हरणेन पञ्चभिः कर्म्मभिः संशोधनीयः। कुतोऽस्य प्राणादीन् रक्षतेत्यत आह—दोषे हीत्यादि। हि यस्मात्। दोषेऽतिमात्रहृते वायुः प्रबलो भवति पुरुषश्चाबलः

चक्रपाणिः—यथाक्रमं चिकित्सामाह—वातोत्तरेष्विति। अग्रे इति सर्पिरादिषु योज्यम्। तेन वातोत्तरादिषु सर्पिः प्रथमं कर्त्तव्यम्। तदनु वक्ष्यमाणा चिकित्सा कार्य्या इति। बहुशः इति बलरक्षार्थं स्तोकंस्तोकं दोषनिर्हरणेन पुनःपुनः शोध्यः। एकदा हि भूरिदोषहरणे बलक्षयो महात्ययः स्यात्। अत एवाह—दोषे ह्यतिमात्रहृते इत्यादि। दोषे इति जातौ एकवचनम्। तेन कफपित्तयोरपि ग्रहणम्। किंवा दोष इति एकवचनेनैव एकदोषस्याप्यतिमात्रहरण वायुः

स्नेहस्य पानमिष्टं शुद्धे कोष्ठे प्रवाहिते रक्ते।
वायुर्हि शुद्धकोष्ठं कुष्ठिनमबलं विशति शीघ्रम्॥ २५॥
दोषोत्क्लिष्टे हृदये वाम्यः कुष्ठेषु चोर्द्ध्वभागेषु।
कुटजफलमधुकमदनैः सपटोलैर्निम्बरसयुक्तैः॥
शीतरसः पक्वरसो मधूनि च मधुकञ्च वमनानि।
कुष्ठे त्रिवृता दन्ती त्रिफला च विरेचने शस्ताः॥
सौवीरतुषोदकमालोड़नमासवांश्च सीधूनि।
शंसन्त्यधोहराणां यथाविरेकं क्रमश्चेष्टः॥ २६॥

स्यात्, अबलञ्च पुरुषं स खलु वायुर्हन्यादाशु। तस्मात् प्राणान् बहुशो रक्षता भिषजा बहुदोषः कुष्ठी संशोध्यः॥ २४॥

गङ्गाधरः—शुद्धे कोष्ठे सति किं विधेयमित्यत आह—स्नेहस्येत्यादि। शुद्धे कोष्ठे सति रक्ते प्रवाहिते स्नेहस्य पानमिष्टम्। कस्मादित्यत आह—वायुर्हीत्यादि। हि यस्मात् शुद्धकोष्ठं कुष्ठिनमबलं वायुः शीघ्रं विशति। तस्माद्वातशमनार्थं शुद्ध्यनन्तरं स्नेहपानमिष्टम्॥ २५॥

गङ्गाधरः—तत्रादौ वमनमाह—दोषोत्क्लिष्ट इत्यादि। दोषोत्क्लिष्टे हृदये सति ऊर्द्ध्वभागेषु कुष्ठेषु वाम्योऽन्यथा न वामनीयः। कैर्वाम्य इत्यत आह—कुटजेत्यादि। कुटजफलादीन् पटोलान्तान् कल्कीकृत्य शीतरसः शीतकषायः कार्य्यो वा पक्वरसः क्वाथकषायः कार्य्यः। तत्र निम्बं न कल्कीकुर्य्यात् किन्तु स्वरसं कृत्वा तत्र दातव्यम्। मधूनि क्षौद्राणि च तत्र दातव्यानि। मधुकं यष्टीमधु। विरेचनयोगमाह—कुष्ठ इत्यादि। विरेचनभेषजस्य आलोड़नद्रवमाह—सौवीरेत्यादि। यथाविरेकमिति सम्यग्योगायोगाद्यनुरूपः क्रमश्चाभीष्टः। सम्यग्योगादौ पेयालङ्घनादिर्यो यो विधिरुक्तः स स विधिः क्रमः कार्य्य इत्यर्थः॥ २६॥

न्यादिति। स्नेहस्य पानं ज्ञेयम्। अशुद्धकोष्ठस्य व्याधिवर्द्धनं भवति। उक्तं हि—शेषदोषे व्याधिरतिवर्द्धते इति। शोधनेन तु निःशेषे दोषे कृते सशेषदोषता नास्ति॥ २३—२५॥

चक्रपाणिः—कुटजेत्यादिना वमनद्रव्याण्याह। शीतरसः शीतकषायः। यथाविरेकं क्रमश्चेष्ट

दार्व्वीबृहतीसेव्यैः पटोलपिचुमर्द्दमदनकृतमालैः।
सस्नेहैरास्थाप्यः कुष्ठी सकलिङ्गफलमुस्तैः॥
वातोल्वणं विरिक्तं निरूढमनुवासनार्हमालक्ष्य।
फलमधुकनिम्बकुटजैः सपटोलैः साधयेत् स्नेहम्॥ २७॥
सैन्धवदन्तीमधुकं फणिज्झकं सपिप्पलीकरञ्जफलम्।
नस्यं स्यात् सविडङ्गं क्रिमिकुष्ठकफप्रदोषघ्नम्॥ २८॥
वैरेचनिकैर्धूमैः श्लोकस्थानेरितैः प्रशाम्यन्ति।
क्रिमयः कुष्ठकिलासाः प्रयोजितैरुत्तमाङ्गस्थाः॥ २९॥

गङ्गाधरः—कुष्ठिनामास्थापनमाह—दार्व्वीत्यादि। दार्व्वी दारुहरिद्रा, सेव्यमुशीरं, पटोलपत्रं, पिचुमर्द्दो निम्बत्वक्, मदनस्य फलं, कृतमालं शम्पाकफलमज्जा। एषां क्वाथैः सस्नेहैस्तैलादिमिश्रितैः कलिङ्गफलमुस्तककल्कमिश्रैश्च कुष्ठी नर आस्थाप्यः। पूर्व्वं विरिक्तं वातोल्वणं कुष्ठिनमेतेन सिद्धिस्थानोक्तनिरूहेण वा निरूढं पुरुषमनुवासनार्हमालक्ष्य। फलमधुकेत्यादिभिः कल्कैश्चतुर्गुणेन जलेन स्नेहं तैलादिकं साधयेत्। तेनानुवासयेदिति भाष्यम्, तदाह—वातेत्यादि। व्याख्यात एष श्लोकः पूर्व्वम्॥ २७॥

गङ्गाधरः—एवं चतुष्कर्म्मानन्तरं पञ्चमं नस्यमाह—सैन्धवेत्यादि। फणिज्झकं मदयन्तीमूलम्। विडङ्गान्त एष नस्ययोगः क्रिम्यादिघ्नः। वैरेचनिकैः धूमैः श्लोकस्थानोक्तैः क्रिमयः प्रशाम्यन्ति। उत्तमाङ्गस्थाः क्रिमयः कुष्ठकिलासाश्चेत्यन्वयः॥ २८। २९॥

इति प्रधानमध्यावरशुद्ध्यपेक्षया पेयादिक्रमः त्रिश एकशो वा कार्य्यः, उक्तं हि—'पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रीनुभयं तथैकम्। क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः' इति। आस्थापनानुवासने यद्यपि नास्थाप्या कुष्ठिन इत्यादिना कुष्ठे निषिद्धे, तथापि अस्थापनानुवासनैकसाध्यायामवस्थायां कर्त्तव्ये एव। यदुक्तं—'प्रवृत्तिनिवृत्तिलक्षणसंयोगे गुरु लाघवं सम्प्रधार्य्य सम्यगधिगच्छेत' इति। तेनाह वातोल्वणमित्यादि। आस्थापनानुवासनविधानं सेव्यम्॥ २६—२८॥

चक्रपाणिः—सूत्रस्थाने यद्यपि एक एव वैरेचनिको धूम उक्तस्तथापि तत्रोक्तद्रव्यैर्व्यस्तसमस्तैर्बहवो धूमा भवन्तीति बहुवचनमिह कृतम्॥ २९॥

स्थिरकठिनमण्डलानां स्विन्नानां प्रस्तरप्रणाड़ीभिः।
कूर्च्चै र्विघट्टितानां रक्तोत्क्लेशोऽपनेतव्यः॥
आनूपवारिजानां मांसानां पोट्टलः सुखोष्णैश्च।
स्विन्नोत्स्विन्नं विलिखेत् कुष्ठं तीक्ष्णेन शस्त्रेण॥
रुधिरागमार्थमथवा शृङ्गालावूभिराहरेद् रुधिरम्।
प्रच्छितमल्पं कुष्ठं विरेचयेद् वा जलौकोभिः॥ ३० ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवेत् तेषाम्॥ ३१ ॥
येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनानि यानि स्युः।
तेषु निपात्यः क्षारो रक्तं दोषश्च विस्राव्य॥ ३२ ॥

गङ्गाधरः—स्थिरकठिनमण्डलानामित्यादि। स्थिरकठिनमण्डलाकारान् स्वेदयित्वा प्रस्तरेण वा प्रणाड्या वा कुर्च्चैर्वा विघट्टयेत्। तेनोत्क्लिष्टं रक्तमपनेतव्यम्। केनापनेतव्यमिति तदाह—आनूपेत्यादि। आनूपवारिजं मांसं स्विन्नं कृत्वा सुखोष्णैः पोट्टलीकृतैः स्विन्नमुत्स्विन्नं मण्डलाकारं कुष्ठं तीक्ष्णेन शस्त्रेण विलिखेत् किञ्चित् किञ्चित् छिन्नं छिन्नं कुर्यात् रुधिरागमार्थम्। अथवा शृङ्गैरलावुभिर्वा आहरेद् रक्तम्। अल्पं कुष्ठं प्रच्छितं कृत्वा जलौकोभिर्विरेचयेद् वा॥ ३० ॥

गङ्गाधरः—अथ लेपमाह—ये लेपा इत्यादि। निर्हृतास्रदोषाणां निर्हृता अस्रश्च दोषाश्च येषां तेषां ये लेपाः युज्यन्ते, तेषां लेपानां सिद्धिस्तद्गुणकर्म्मकरणे फलोदये। तेषां संशोधिताशयानाम्। आशयशोधनात् सद्यः सिद्धिर्भवेत् न त्वनिर्हृतास्रदोषाणाम्। मलिनीभूताशयत्वेन तदौषधवीर्य्याधानं स्यात् यथा म्लिष्टे वाससि न रङ्गयोगः सम्यक् स्यात्॥ ३१ ॥

गङ्गाधरः—येष्वित्यादि। येषु कुष्ठेषु शस्त्रं न क्रमते शस्त्रचारणं न कर्त्तु शक्यते। कुष्ठानि चान्यानि स्पर्शनेन्द्रियनाशनानि स्युः। तेषु कुष्ठेषु क्षारो निपात्यः, रक्तं शृङ्गालावुभिर्जलौकोभिर्वा विस्राव्य वमनादिभिर्दोषं विस्राव्य च

चक्रपाणिः—नाड्येव नाडी पुष्करनाड़ी स्वेदाध्याये उक्ता। कूर्च्चं शस्त्रविशेषमाह—रक्तोत्क्लेश उत्क्लिष्टं रक्तं, स्विन्नत्वेनोत्स्विन्नम् स्विन्नोत्स्विन्नम्। रुधिरागमार्थमुल्लिखेदिति सम्बन्धः। निर्हृतोऽस्रदोषो येषां ते निर्हृतास्रदोषाः॥ ३० । ३१ ॥

चक्रपाणिः—न शस्त्रं क्रमत इति सिरादिसङ्कटत्वान्न शस्त्रं योग्यं भवति। स्पर्शेन्द्रिय-

पाषाणकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च।
पीतागदस्य कार्य्यो विषैः प्रदेहोऽगदैश्चानु ॥ ३३ ॥
स्तब्धानि सुप्त सुप्तान्यस्वेदनकण्डुलानि कुष्ठानि।
कूर्च्चैर्दन्तीत्रिवृताकरवीरकरञ्जकुटजानाम् ॥
जात्यर्कनिम्बजैर्वा पत्रैः शस्त्रैः समुद्रफेनेन।
घृष्टानि गोमयैर्वा ततः प्रदेहैः प्रदेह्यानि ॥ ३४ ॥
मारुतकफकुष्ठघ्नं कर्म्मोक्तं कुष्ठिनां कार्य्यम्।
कफपित्तरक्तहरणं तिक्तकषायैः प्रशमनञ्च ॥ ३५ ॥
सर्पींषि तिक्तकानि च यच्चोक्तं रक्तपित्तनुत् कर्म्म।
वाह्याभ्यन्तरमग्र्यं तत् कार्य्यं पित्तकुष्ठेषु ॥ ३६ ॥

अर्शोरोगोक्तविधिना साधितः क्षारो निपात्यः। पाषाणकठिनादौ कुष्ठे पीतागदस्य अगदं पाययित्वा अनु पश्चात् तैरगदैर्विषैः कुष्ठहरैः सर्व्वरोगहरैः वा प्रदेहः कार्य्यः। यानि कुष्ठानि स्तब्धादीनि कूर्च्चैर्दन्त्यादीनां पत्रैः (जात्यादीनां) शस्त्रैः समुद्रफेनेन वा घृष्टानि गोमयेन वा शुष्केण घृष्टानि प्रदेहैः प्रदेह्यानि कुर्य्यात् ॥ ३२—३४ ॥

गङ्गाधरः—अथ सर्व्वकुष्ठिनां वातकफकुष्ठघ्नमौषधमतिदिशति—मारुतेत्यादि। सर्व्वेषां कुष्ठिनां मारुतकफकुष्ठघ्नं यत् कर्म्म पूर्व्वमुक्तं तत् कार्य्यम्। एवं सर्व्वकुष्ठिनां कफपित्तरक्तहरणं कफादीनां त्रयाणां वमनविरेचनसिरावेधादिभिर्निर्हरणं, तिक्तकषायैस्तिक्तरसयोनिकषायैस्तेषां प्रशमनञ्च कार्य्यम् ॥ ३५ ॥

गङ्गाधरः—कफपित्तरक्तानामेव प्रशमन एकस्तिक्तको रसः कथं वातं प्रशमयेदित्यत आह—सर्पींषीति। तिक्तकानि वक्ष्यमाणानि पञ्चतिक्तादीनि सर्पींषि सर्व्वेषां दोषाणां रक्तस्य च प्रशमनत्वात् कार्य्याणि। तथा रक्तपित्तनुत् कर्म्म यदुक्तं रक्तपित्तचिकित्सिते वाह्यं वहिः परिमार्ज्जनञ्चाग्र्यं तत् पित्तकुष्ठेषु कार्य्यम् ॥ ३६ ॥

नाशनानीति त्वगिन्द्रियहराणि। सुप्तसुप्तानीति सुप्तवत् सुप्तानि अचेतनानि, सर्व्वथा स्पर्शाज्ञानीत्यर्थः। सर्पींषि तिक्तकानि। पित्तकुष्ठिनां रक्तपित्तहरादीनि कार्य्याणि इति योज्यम् ॥ ३२—३६ ॥

दोषाधिक्यविभागादित्येतत् कर्म्म कुष्ठनुत् प्रोक्तम् ।
वक्ष्यामि कुष्ठशमनं प्रायस्त्वग्दोषसामान्यात् ॥ ३७ ॥
दार्व्वीरसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम् ।
अभया प्रयोजिता वा मासं सव्योषगुड़तला ॥ ३८ ॥
मूलं पटोलस्य तथा गवाक्ष्याः पृथक् पलांशं त्रिफला त्रिवृच्च ।
स्यात् त्रायमाणा कटुरोहिणी च भागार्द्धिका नागरपादयुक्ता ॥
पलं तथैषां सहचूर्णितानां जले शृते दोषहरं पिबेन्ना ।
जीर्णे रसे धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥

गङ्गाधरः—उपसंहरति—दोषेत्यादि। इत्येतत् कर्म्म दोषाधिक्यविभागात् कुष्ठनुत् प्रोक्तम्। त्वग्दोषसामान्यादिति। सर्व्वेषु कुष्ठेषु त्वग्दोषोऽस्तीति सामान्यादेकयैव क्रियया सर्व्वाणि कुष्ठानि शाम्यन्ति इति भावः। दार्व्वी दारुहरिद्रा, तत्क्काथो घनीभूतो रसाञ्जनं वा गोमूत्रेण पानादिति शेषः। मासमिति उभययोगेनान्वितम्। अभयादिः द्वितीययोगः। प्रयोजिता पानेनेति शेषः ॥ ३७। ३८ ॥

गङ्गाधरः—मूलमित्यादि। पटोलस्य मूलं, गवाक्ष्याः गोरक्षकर्कट्या मूलं प्रत्येकं पलांशं, त्रिफला च प्रत्येकं पलांशा, त्रिवृच्च पलांशा, त्रायमाणा भागार्द्धिका अर्द्धपला, कटुरोहिणी चार्द्धपला, नागरस्य पादांशयुक्ता कर्षमित्यर्थः। सहचूर्णितानामेषां पटोलमूलादीनां

चक्रपाणिः—दार्व्वीरसाञ्जनं दार्व्वीक्काथकृतं रसाञ्जनम्। अभयाप्रयोगो गुडतैलयोः कुष्ठनिदानत्वेनोक्तयोरपि संयोगमहिम्ना हरीतक्या समं प्रयोगः कुष्ठघ्नो भवति ॥ ३७। ३८ ॥

चक्रपाणिः—मूलं पटोलस्येति। पटोलमूलम् तथा गवाक्ष्या अपि मूलं, पलांशः पलपरिमाणः। त्रिफला त्रिवृच्च प्रत्येकं पलांशा। यद्यपि च महातिक्तोक्तद्वितीयपृथक्शब्देन त्रिफलायाः प्रत्येकं भागः सर्व्वत्र व्यवस्थापितः, तथापि तस्यैवार्थस्य द्योतनार्थं पुनः पृथक्त्वं ग्राहयति। किंवा त्रायमाणायाः कटुरोहिण्याः पृथक् भागार्द्धकत्वं दर्शयति। त्रिफलायास्तु प्रसङ्गत एव पृथग्भागग्रहणं सिद्धम्। त्रायमाणाकटुरोहिण्योः प्रत्येकं पट्शाणमात्रं नागरस्य चोभयोरर्द्धभागपूरकत्वेनार्द्धपलापेक्षया चतुर्थपादद्वयेन चतुष्टयं भवति। एवं त्रायमाणाकटुरोहिणीनागरैः पलमेकं, पटोलमूलादिभिः पञ्च पलानीति मिलित्वा षट् पलानि, तथा सत्येषां पटोलादीनाम्। चूर्णी-

कुष्ठानि शोथं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकञ्च।
योगः प्रयोगेण निहन्ति चैषां हृद्बस्तिशूलं विषमज्वरञ्च॥ ३६॥

इति पटोलमूलादिचूर्णम्।

मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारु पञ्चमूल्यौ द्वे।
सप्तच्छदनिम्बत्वक् सविशाला चित्रको मूर्व्वा॥
चूर्णन्तु पलभागैर्नवभिः * संयोजितं समधृताज्यम्।
सिद्धं कुष्ठनिवर्हणमेतत् प्रायौगिकं भक्ष्यम्॥

जले शृते जले पक्वे दोषहरं पलमितं पिबेदिति। अस्मिन्नौषधे जीर्णे विरेकानन्तरं भेषजजीर्णलक्षणोदये सति पुराणशाल्योदनं धन्वमृगपक्षिणां मांसरसैराददीतार्थात् भुञ्जीत। पटोलमूलादिचूर्णम्॥ ३९॥

गङ्गाधरः—मुस्तमित्यादि। पञ्चमूल्यौ द्वे दशमूली। सप्तच्छदनिम्बयोस्त्वक्। विशाला गोरक्षकर्कटी। एषां नवभिः पलभागैश्चूर्णं कोष्ठाद्यपेक्षया

कृतानामिति जर्जरीकृतानाम्। षट्पलानां पलमाकृष्य जले शृतं पिबेदेवं षड्दिनं प्रयोज्यम्। षड्दिनप्रयोगेणैवास्य प्रायः कुष्ठहरत्वमुन्नीयते। एतद्व्याख्यानसङ्गतिप्रदतन्त्रान्तराणीह लिख्यन्ते। तथाह्यग्निवेशः "पटोलमूलं त्रिफला विशाला च पलोन्मिता। पलार्द्धं त्रायमाणा च तथा कटुकरोहिणी। कर्षार्द्धं नागरं दत्त्वा षट् पलान्यवचूर्णयेत्। जले शृतं पिबेत् कोष्णं चूर्णस्यास्य पलं पलम्" इत्यादि। तथा चक्षुष्येणाप्याह—"पटोलमूलं त्रिफला विशाला च पलांशिका। कटुका त्रायमाणा च पलार्द्धा पादनागरा। तस्मात् षड्भागमुत्क्वाथ्य जले दोषहरं पिबेद्" इति। अन्ये तु व्याख्यानयन्ति यत् पलांशशब्देन कर्ष उच्यते। तेन पटोलमूलस्य पृथक् कर्षः तथा गवाक्षीमूलस्य कर्षः त्रिफलायाः कर्षः। त्रायमाणा च नागरपादयुक्ता सती भागार्द्धिका कर्षप्रमाणा भवति। एवं कटुरोहिणी च नागरपादयुक्ता सती कर्षार्द्धा भवति। एवं मिलित्वा पलं चूर्णीकृतं जले शृतं पिबेदिति। एतच्च तन्त्रान्तरविरोधात्। तथा त्रिफलासमुदायभागस्य चान्यायसिद्धत्वान्नाति मधु।' जतूकर्णे—"पटोलमूलत्रिफला-गवाक्षीत्रिवृतापलैः। त्रायन्ती कटुका द्वाभ्यां कृत्वा नागरपादिकम्। चूर्णं पलं पिबेत् तस्माच्छृतम्" इत्यादिवचनविरोधात्। जीर्णे रसे इत्यादि। विरेकेऽत्र रसभोजनं प्रयोगत्वात् धन्वमृगद्विजानां रसे शाल्योदनमाददीतेति॥ ३९॥

* चूर्णं तर्पणभागैर्नवभिः इति पाठान्तरम्।

श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
ब्रध्नभगन्दरपिड़काकण्डूकोठांश्च विनिहन्ति ॥ ४० ॥

मुस्तादिचूर्णम् ।

त्रिफलातिविषाकटुकानिम्बकलिङ्गकवचापटोलानाम् ।
मागधिकारजनीद्वयपद्मकमूर्व्वाविशालानाम् ॥
भूनिम्बपलाशानां दद्याद् द्विपलं ततस्त्रिवृद्द्विगुणा ।
तस्याश्च पुनर्ब्राह्मी तच्चूर्णं सुप्तिनुत् परमम् ॥ ४१ ॥

सुप्तिकुष्ठे ।

नवनीतकप्रयोगो रसेन जात्याः समाक्षिकः परमः ।
सप्तदशकुष्ठघाती माक्षिकधातुश्च मूत्रेण ॥
गन्धकयोगात् * अथवा सुवर्णमाक्षिकयोगादेव ।
सर्व्वव्याधिविनाशनमद्यात् कुष्ठी रसञ्च निगृहीतम् ॥

मात्रया समध्वाज्यं संयोजितं सिद्धमेतत् कुष्ठनिवर्हणं प्रायोगिकम् अभ्यास्यं भक्ष्यम् । मुस्तादिचूर्णम् ॥ ४० ॥

गङ्गाधरः—त्रिफलेत्यादि । त्रिफलादीनां सप्तदशानां प्रत्येकं द्विपलं, सर्व्वचूर्णात् द्विगुणा त्रिवृत् चूर्णीकृता । तस्यास्त्रिवृतायाः द्विगुणा ब्राह्मी ब्राह्मीशाकचूर्णम् । एतच्चूर्णं सुप्तिनुत् स्पर्शानभिज्ञत्वनुत् । सुप्तिकुष्ठे त्रिफलादि चूर्णम् ॥ ४१ ॥

गङ्गाधरः—नवनीतक इत्यादि । नवनीतकेति नवनीताख्यगन्धकस्य प्रयोगः । जात्या धात्र्या रसेन माक्षिकेण सह गन्धकं शोधितं यथाग्निबलं कर्षमर्द्धकर्षं मर्दयित्वा भक्षणविधया प्रयोगः परमः सप्तदशकुष्ठघाती ; काकणकमसाध्यं न तस्य क्रिया विधीयते । एवं गोमूत्रेण माक्षिकधातोश्च प्रयोगः सप्तदशकुष्ठघाती । गन्धक-योगस्वर्णमाक्षिकयोगौ । गन्धकेत्यादि । गन्धकयोगात् सुवर्णमाक्षिकयोगाच्च निगृहीतं मारितं रसं पारदं कुष्ठी अद्यात् ।

चक्रपाणिः—तर्पणभागैरिति सक्तुभागैः संयोजितमिति सततोपयोज्यम् ॥ ४० ॥

चक्रपाणिः—त्रिफलेत्यादि योगश्च पठन्ति ॥ ४१ ॥

* गन्धकयोगसुवर्णमाक्षिकयोगलिलौहकयोगाच्च इति पाठान्तरम् ।

वज्रशिलाजतुसहितं सहितं वा योगराजेन।
सर्व्वव्याधिहरणार्थमद्यात् कुष्ठी निगृह्य नित्यञ्च ॥ ४२ ॥
खदिरसुरदारुसारं श्रपयित्वा तद्रसेन तोयार्थम्।
क्षौद्रप्रस्थे कार्य्यं कार्य्ये ते वाष्टपलिके च ॥
तत्रायश्चूर्णानामष्टपलं प्रक्षिपेत् तथामूनि।
त्रिफलैले त्वङ्मरिचं पत्रं कनकञ्च कर्षांशम् ॥
मत्स्यण्डिका मधुसमा तन्मासं जातमायसे भाण्डे।
मध्वासवमाचरतः कुष्ठकिलासे शमं यातः ॥ ४३ ॥

मध्वासवः।

वज्रशिलाजतुसहितं मारितहीरक-शोधितशिलाजतुभ्यां समभागाभ्यां सहितमद्यात् कुष्ठी। अथवा योगराजेन योगराजो नाम योगविशेषस्तेन सह मारितं पारदमद्यात्। पारदप्रयोगः ॥ ४२ ॥

गङ्गाधरः—खदिरेत्यादि। खदिरदेवदारुणोः सारं प्रत्येकमष्टपलिकं जलाढ़के श्रपयित्वा पादशेषेण तद्रसेन चतुःशरावेण सह क्षौद्रप्रस्थे तोयार्थं कार्य्यम् एतदासवसाधने द्रवकर्म्म कर्त्तव्यमित्यर्थः। क्वाथार्थं खदिरदारुणोर्मानमाह—भागानुक्तौ समे अष्टपलिके खदिरदारुणी कार्य्ये इति। तथाच खदिरसारमष्टपलं देवदारुसारमष्टपलं षोड़शशरावके जले पक्त्वा चतुःशरावे शेषे गालयित्वा शीतीकृत्य मधु चतुःशरावं मिश्रयित्वा तत्रायश्चूर्णं लौहचूर्णमष्टपलं त्रिफला-एलात्वङ्मरिचपत्रकेशराणां प्रत्येकं कर्षांशं मत्स्यण्डिका मधुसमा चतुःशरावमात्रा तत्र क्षिप्त्वा आयसे लौहमये भाण्डे मासात्मकं स्थापितं ततो जातरसं मध्वासवं विदुः। मध्वासवः ॥ ४३ ॥

चक्रपाणिः—जात्या इति आमलक्याः। लिलीहकः पाषाणभेदः औत्तरापथिक उच्यत इति निघण्टौ। 'आसीद् दैत्यो महाबाहुर्लिलिहानो महासुरः। योजनानां त्रयस्त्रिंशत् कायेनाच्छाद्य तिष्ठति। विष्णुचक्रेण संछिन्नो पपात धरणीतले। वसा तस्य समाख्याता लिलीहक इति क्षितौ' ॥ इत्यादि ॥ ४२ ॥

चक्रपाणिः—कार्य्ये ते चाष्टपालिके इति खदिरसुरदारुसारोक्तमाने मधुशर्करे इहापि ज्ञेयम् ॥ ४३ ॥

खदिरकषायद्रोणं कुम्भे घृतभाविते समावाप्य।
द्रव्याणि चूर्णितानि च षट्पलिकान्यत्र * देयानि॥
त्रिफलाव्योषविड़ङ्गरजनीमुस्ताटरूषकेन्द्रयवाः।
सौवर्णी च तथा त्वक् छिन्नरुहा चेति तन्मासम्॥
निदधीत धान्यमध्ये प्रातः प्रातः पिबेत् ततो युक्त्या।
मासेन महाकुष्ठं हन्त्येवाल्पन्तु पक्षेण॥
अर्शःश्वासभगन्दरकासकिलासप्रमेहशोषांश्च।
ना भवति कनकवर्णः पीत्वारिष्टं कनकबिन्दुम्॥ ४४॥

कनकबिन्द्वरिष्टम्।

कुष्ठेष्वनिलकफकृतेष्वेवं पेयस्तथापि पित्तेषु।
कृतमालक्वाथश्चाप्येष विशेषात् कफकृतेषु॥ ४५॥
त्रिफलासवश्च गौड़ः सचित्रकः कुष्ठरोगविनिहन्ता।
क्रमुकदशमूलदन्तीवराङ्गमधुयोगसंयुक्तः॥ ४६॥

गङ्गाधरः—खदिरकषाय इत्यादि। खदिरकषायद्रोणं खदिरसारं द्वात्रिंशच्छरावं, जलमष्टद्रोणं शेषं द्रोणं चतुःषष्टिशरावं, घृतभाविते कुम्भे कलसे प्रक्षिप्य त्रिफलादीनि मिलित्वा चूर्णितानि षट्पलिकानि दत्त्वा मुखं रुद्ध्वा धान्यराशौ मासं स्थापयेत्। मासादूर्द्ध्वं जातरसं तदरिष्टं यथाकोष्ठाग्निबलं प्रातःप्रातः पिबेत्। अत्राटरूषकं वासकस्य मूलत्वक्। सौवर्णीत्वक् शम्पाकवृक्षस्य त्वक्। कनकबिन्द्वरिष्टम्॥ ४४॥

गङ्गाधरः—त्वग्दोषसामान्याच्छमनमौषधमुक्त्वा दोषविशेषत औषधमाह—कुष्ठेष्वित्यादि। कृतमालक्वाथ इति शम्पाकक्वाथः। त्रिफलासवश्च गौड़ो गुड़कृतस्त्रिफलासवः। कीदृशः? सचित्रक इत्यादि। तेन त्रिफलाक्वाथः पादाव-

चक्रपाणिः—सौवर्णीत्वग् दारुहरिद्रा॥ ४४॥

चक्रपाणिः—त्रिफलासवश्च गौड इत्यादौ गौड़ इति शर्करास्थाने गुडेन कृतः गौड़ः। अत्र क्रमुकं पूगफलं, वराङ्गं गुग्गुलुः। अत्र त्रिफलादीनां मानेऽनुक्तेऽपि आसवान्तरोक्तद्रव्यमानविभागेन मानं ग्राह्यम्॥ ४५। ४६॥

* अष्टपलिकानीति पाठान्तरम्।

लघूनि चान्नानि हितानि विद्यात् कुष्ठेषु शाकानि च तिक्तकानि।
भल्लातकैः सत्रिफलैः सनिम्बैर्युक्तानि चान्नानि घृतानि चैव ॥
पुराणधान्यान्यथ जाङ्गलानि मांसानि मुद्गाश्च पटोलयुक्ताः।
शस्ता न गुर्व्वन्नपयोदधीनि नानूपमत्स्या न गुड़ास्तिलानि ॥४७॥

एला कुष्ठं दार्व्वी शतपुष्पा चित्रको विड़ङ्गश्च।
कुष्ठालेपनमिष्टं रसाञ्जनश्चाभया चैव ॥ ४८ ॥

चित्रकमेलां बिम्बीं वृषकं त्रिवृदर्कनागरकम्।
चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य ॥
क्षारेण गवां मूत्रस्रुतेनास्य मण्डलान्याशु।
भिद्यन्ते विलयन्ति च लिप्तान्यर्काभितप्तानि ॥ ४९ ॥

शिष्टः, तत्र गुड़श्चित्रकत्वक्चूर्णश्चार्द्धं, क्रमुकादीनां चूर्णं मधु च अनुरूपं मिश्रयित्वा मासं स्थाप्यः। क्रमुकं गुवाकं, वराङ्गं गुड़त्वक् ॥ ४५। ४६ ॥

गङ्गाधरः—कुष्ठानां पथ्यमाह—लघूनीत्यादि। शस्ता इत्यन्तो विच्छेदः। अपथ्यमाह—न गुर्व्वन्नेत्यादि तिलान्तम् ॥ ४७ ॥

गङ्गाधरः—कुष्ठे आलेपनमाह—एलेत्यादि। एलाद्यभयान्तं जलेन पिष्ट्वा लेपः ॥ ४८ ॥

गङ्गाधरः—चित्रकमित्यादि। चित्रकादिकं सप्तद्रव्यं चूर्णीकृत्य गोमूत्रस्रुतेन पलाशक्षारेणार्थात् पलाशक्षारं गोमूत्रे गोलयित्वा क्षारपरिभाषया एकविंशतिवारान् परिस्राव्य तद्द्रवेण सप्ताहं भावयितव्यं, तेन लिप्तानि मण्डलानि रौद्रेण पुरुषं स्थापयित्वार्कतप्तानि कारितानि आशु भिद्यन्ते विलयन्ति च। लेपः ॥ ४९ ॥

चक्रपाणिः—लघूनीत्यादिनाहारमाह ॥ ४७ ॥

चक्रपाणिः—एलेत्यादिना लेपानाह ॥ ४८ ॥

चक्रपाणिः—बिम्बी ओष्ठोपमफला, क्षारेणेति विलयन्तीत्यपयान्ति ॥ ४९ ॥

मांसी मरिचं लवणं रजनी तगरं सुधा गृहाद् धूमः।
मूत्रं गोः पित्तञ्च क्षारः पालाशः कुष्ठहा लेपः॥ ५०॥
त्रपु सीसमयश्चूर्णं मण्डलनुत् फल्गुचित्रको वृहती।
गोधारसः सलवणो दारु च मूत्रञ्च मण्डलनुत्॥ ५१॥
कदलीपलाशपाटलिनिचुलक्षाराम्भसा प्रसन्नेन।
मांसेषु तोयकार्य्यं कार्य्यं पिष्टे च क्लिन्ने च॥
तैर्मोदकः सुजातः किण्वैर्जनितः प्रलेपनं श्रेष्ठम्।
मण्डलकुष्ठविनाशनमातपसंस्थं क्रिमिघ्नञ्च॥ ५२॥

गङ्गाधरः—मांसीत्यादि। सुधा स्नुही, गृहाद् धूमो ग्राह्य इति शेषः। मूत्रं गोः, पित्तञ्च गोरेव। पालाशः क्षारः। एतैर्जलपिष्टैः दशभिर्लेपः। मांस्यादिलेपः॥ ५०॥

गङ्गाधरः—त्रपु वङ्गं, फल्गुः काष्ठोडुम्बरः। त्रप्वादीन् वृहत्यन्तान् चूर्णितान् एकीकृत्य पाययेत्। गोधारस इत्यादि। गोधामांसरसेन गोमूत्रेण च मिलितेन सैन्धवलवणं देवदारुचूर्णं समभागेन मिश्रितं पानविधिना पाययेत्॥ ५१॥

गङ्गाधरः—कदलीत्यादि। कदलीवृक्षवल्कलादीनां क्षारजलेन प्रसन्नेन स्वच्छरूपेण न त्वाविलरूपेण यथादोषहरं मांसं पक्तुं तोयकार्य्यं कार्य्यमर्थात् तेन मांसं पक्तव्यं न तु तोयेन। पिष्टं तण्डुलपिष्टं क्लिन्नं सुराक्लिन्नं तयोश्च तेनैव क्षारजलेन तोयकार्य्यं कार्य्यमर्थात् तेन क्षारजलेन पिष्टं क्लिन्नञ्च द्रवीकार्य्यम्। तैर्मांसपिष्टक्लिन्नैः कियद्भिर्दिनैः पर्य्युषितीभूतैः सुजातो मोदकाकारः सन् किण्वः कठिनो जनितः श्रेष्ठं लेपनं स्यात्। किंकर्म्मकरमित्यत आह—मण्डलेत्यादि। तेन प्रलेपेन प्रलिप्यातपसंस्थस्य मण्डलकुष्ठविनाशनं क्रिमिघ्नञ्च स्यात्। क्षारमोदकप्रलेपनम्॥ ५२॥

चक्रपाणिः—मांसेषु तोयकार्य्यमिति मांसप्रक्षालनात् पिष्टे च तोयकार्य्यं तथा क्लिन्ने च तोयकार्य्यं क्षाराम्भसा कार्य्यमिति योज्यम्। अत्र मांसपिष्टाभ्यां किण्वं कार्य्यम्। किण्वैश्च मोदकः साधनीय। मोदको जगलः सुजातः सञ्जनितः प्रलेपनमिति योज्यम्॥ ५०—५२॥

मुस्तं त्रिफला मदनं करञ्ज आरग्वधं कलिङ्गयवाः।
दार्व्वी सप्तपर्णा स्नानं सिद्धार्थकं नाम॥
एष कषायो वमनं विरेचनं वर्णकस्तथोद्घर्षः।
त्वग्दोषशोथकुष्ठप्रबाधनः पाण्डुरोगघ्नः॥ ५३॥
कुष्ठं करञ्जबीजान्येड़गजः कुष्ठसूदनो लेपः।
प्रपुन्नाड़बीजसैन्धवरसाञ्जनकपित्थलोध्राश्च॥
करवीरमूलवल्कः कुटजकरञ्जात् फलं त्वचो दार्व्व्याः।
सुमनःप्रबालयुक्तो लेपः कुष्ठापहः सिद्धः॥ ५४॥
लोध्रस्य धातकीनां वत्सकबीजस्य नक्तमालस्य।
कल्कश्च मालतीना कुष्ठघ्नुद्वर्त्तनालेपौ॥ ५५॥

गङ्गाधरः—मुस्तमित्यादि। कलिङ्गयव इन्द्रयवः। दार्व्वी दारुहरिद्रा। एषां कषायः कार्य्यः। स एष कषायः स्नानं, येन स्नाति तत् स्नानं सिद्धार्थकं नाम। येन च वमतीति स कषायो वमनं, स कषायो विरेचनश्च येन विरिच्यते। एष कषायो वर्णकरश्च तथोद्धर्षः तेन चर्णीकृतेन मुस्तादिना दशकेन खलूद्घर्षणं कार्य्यम् योग्यत्वान्न तु कषायः कार्य्यः उद्घर्षणायोग्यत्वात्। त्वग्दोषेत्यादिषु प्रबाधनयोग्यत्वादेष कषायः इत्येव। पाण्डुरोगघ्न इत्यपि एष कषाय इत्यन्वितम्॥ ५३॥

गङ्गाधरः—कुष्ठमित्यादि। त्रीणि कुष्ठादीनि जलेन पिष्ट्वा कुष्ठे लेपः। प्रपुन्नाड़बीजेत्यादि। कुटजात् फलमिन्द्रयवः। करञ्जात् फलम्। दार्व्व्यास्त्वक्। सुमनःप्रबालेति मालतीकलिका। प्रपुन्नाड़बीजादीनि दश जलेन पिष्ट्वा लेपः॥ ५४॥

गङ्गाधरः—लोध्रस्येत्यादि। लोध्रादीनां पञ्चानां प्रत्येकं कल्कः। स च कुष्ठेषूद्वर्त्तनं लेपश्च कार्य्यः॥ ५५॥

चक्रपाणिः—मुस्तमित्यादौ वर्णकमित्यालेपनं, त्वग्दोषशब्देन गोवलीवर्द्दन्यायेन किलासव्यङ्गादीनां ग्रहणम्॥ ५३॥

चक्रपाणिः—कुष्ठमित्यादिको योगो जलपिष्टको ज्ञेयः। तेनारग्वधीयोक्त-"करञ्जबीजैड़गजः सकुष्ठो गोमूत्रपिष्टश्च परः प्रदेहः" इत्यत्र गोमूत्रपिष्टत्वं विशेषः, तेन न पौनरुक्त्यम्। उद्वर्त्तनालेपौ इत्यादौ उन्मर्द्दनमुद्वर्त्तनं ज्ञेयम्॥ ५४। ५५॥

शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि।
पिष्ट्वा च काकमाची चतुर्व्विधः कुष्ठनुल्लेपः ॥ ५६ ॥

चत्वारो लेपाः।

दार्व्व्या रसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥
इति षट् कषाययोगाः कुष्ठघ्नाः सप्तमश्च तिनिशस्य।
स्नाने पाने च हितास्तथाष्टमश्चाश्वमारस्य ॥
आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः।
तैलघृतपाकयोगे चेष्यन्ते कुष्ठशान्त्यर्थम् ॥ ५७ ॥

अष्टौ कषायाः।

गङ्गाधरः—शरीषीत्यादि। शिरीषस्य त्वक्, कार्पास्या वनकार्पास्याः पुष्पं, राजवृक्षस्य पत्राणि, काकमाची चेति चत्वारि प्रत्येकं जलेन पिष्ट्वा लेपः। इति चत्वारो योगाः ॥ ५६ ॥

गङ्गाधरः—दार्व्व्या इत्यादि। दार्व्व्या दारुहरिद्राया रसाञ्जनस्य घनीभूतक्काथस्य शोषाद् रसाञ्जनसंज्ञस्य कषाययोग एकः। निम्बपटोलस्य निम्बवल्कलपटोलपत्रयोः कषाययोगो द्वितीयः। खदिरसारस्य कषाययोगस्तृतीयः। आरग्वधवृक्षकयोः राजवृक्षकुटजवल्कलयोः कषाययोगश्चतुर्थः। त्रिफलायाः पञ्चमः। षष्ठः सप्तपर्णस्य। सप्तमस्तिनिशवृक्षस्येति। तथाष्टमोऽश्वमारस्य करवीरमूलत्वचः। कषाययोगाः इमे स्नाने पाने च हिताः कुष्ठघ्ना एव क्काथरूपेण। एत एवाष्टौ कषायाः कल्करूपेणालेपनं प्रघर्षणमवचूर्णनञ्च कर्त्तव्याः। तैलघृतपाकयोगे चैत एवाष्टौ कषाया इष्यन्ते कल्कक्काथाभ्यामिति ॥ ५७ ॥

अष्टौ कषायाः।

चक्रपाणिः—शैरीषीत्वगादौ प्रत्येकद्रव्यकृतत्वेन चतुर्भिः प्रलेपो ज्ञेयः। अन्ये तु चतुर्भिरपि मिलितैरवचूर्णनोद्वर्त्तनजलपिष्टलेपनरसक्रियालेपनभेदेनेह चतुर्व्विधलेपं वदन्ति। एतच्च विधानचतुष्टयमन्यप्रयोगेष्वपि दृश्यते। तथाप्यालेपनसिद्धत्वान्नातिरमणीयम् ॥ ५६ ॥

चक्रपाणिः—दार्व्व्या इत्यादौ दार्व्वीसम्बन्धिनो रसाञ्जनस्यैको योगः। शेषास्तु षट्। सप्तकस्तिनिशस्याष्टमोऽश्वमारस्य। अश्वमारस्तु यद्यपि मूलत्वेनोक्तस्तथापि कुष्ठेषु विषमयोगस्यापि विहितत्वात् साधुः ॥ ५७ ॥

त्रिफलानिम्बपटोलं मञ्जिष्ठा रोहिणी वचा रजनी।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम्॥
एतैरेव च सर्पिः सिद्धं वातोल्वणं जयति कुष्ठम्।
एष च कल्पो दृष्टः खदिरसुरदारुनिम्बानाम् * ॥ ५८ ॥
कुष्ठार्कतुत्थकट्फलमूलकबीजानि रोहिणी कटुका।
कुटजफलोत्पलमुस्तं बृहतीकरवीरकाशीशम्॥
एडगजनिम्बपाठा दुरालभा चित्रको विडङ्गश्च।
तिक्तेक्ष्वाकुबीजं कम्पिल्लकसर्षपं वचा दार्व्वी॥
एतैस्तैलं सिद्धं कुष्ठघ्नं योग एष चालेपः।
उद्वर्त्तनं प्रघर्षणमवचूर्णनमेष एव चेष्टः॥ ५९ ॥

गङ्गाधरः—त्रिफलेत्यादि। निम्बस्य मूलत्वक् पटोलस्य पत्रम्। त्रिफलादिनवद्रव्यकषायः। इत्येको योगः। एतैरित्यादि। एतैरेव नवभिः कल्कक्काथरूपैः सिद्धं पक्वं सर्पिर्घृतम्। इति द्वितीयो योगः। एष चेत्यादि। खदिरादीनां त्रयाणामेष चेत्युक्त-त्रिफलादिर्यः कल्पः कषायरूप एकः, क्काथकल्काभ्यां पक्वघृतरूपो द्वितीयः॥ ५८॥

गङ्गाधरः—कुष्ठेत्यादि। कुष्ठादीनि पञ्च। रोहिणी कटुका कटुरोहिणी। चित्रको रोचनेति केचित्। कुष्ठादिभिस्त्रयोविंशत्या कल्कक्काथाभ्यां सिद्धं पक्वं तैलं कुष्ठघ्नं भवति। एष च त्रयोविंशतिद्रव्यकृत आलेपो योगः कुष्ठघ्नः। एष त्रयोविंशतिक इष्टो भवत्युद्वर्त्तनं प्रघर्षणमवचूर्णनमपीष्टः॥ ५९॥

तैलादि।

चक्रपाणिः—कुष्ठार्केत्यादि। एतैस्तैलं सिद्धमित्यत्र तिलतैलं ज्ञेयम्। यत्र तु विशेषस्तत्र सार्षपं वा, अन्ये तु कुष्ठे प्वालेपे सार्षपं ग्राहयन्ति। पाने तु विशेषानुक्ते तिलतैलमेव भवति॥ ५८।५९॥

* खदिरासनदारुनिम्बानामिति क्वचित् पाठः।

श्वेतकरवीरकरसो गोमूत्रं चित्रको विड़ङ्गश्च ।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥ ६० ॥

श्वेतकरवीराद्यं तैलम् ।

श्वेतकरवीरपल्लवमूलत्वग् वत्सको विड़ङ्गश्च ।
कुष्ठार्कमूलसर्षपशिग्रुत्वग् रोहिणी कटुका ॥
एतैस्तैलं सिद्धं कल्कैः पादांशिकैर्गवां मूत्रम् ।
दत्त्वा तैलचतुर्गुणमभ्यङ्गात् कुष्ठकण्डूघ्नम् ॥ ६१ ॥

श्वेतकरवीरपल्लवाद्यं तैलम् ।

तिक्तेच्वाका वीजं द्वे तुत्थे रोचना हरिद्रे द्वे ।
वृहतीफलमेरण्डः सविशालश्चित्रको मूर्व्वा ॥
कासीसहिङ्गुशिग्रुत्र्यूषणसुरदारुतुम्बुरुविड़ङ्गम् ।
लाङ्गलकं कुटजत्वक् कटुकाख्यरोहिणी चैव ॥

गङ्गाधरः—श्वेतकरवीरेत्यादि। चित्रको विड़ङ्गश्चेति द्वयं समभागेन पादिकं योगिकत्वात्, कटुतैलात् कल्कीकृत्य श्वेतकरवीररसो द्विगुणो गोमूत्रं द्विगुणमिति चतुर्गुणद्रवं कटुतैलं पचेत् ॥ ६० ॥ श्वेतकरवीरकतैलम् ।

गङ्गाधरः—श्वेतकरवीरपल्लवेत्यादि। श्वेतकरवीरस्य पल्लवश्च मूलत्वक् च। अर्कमूलम्। शिग्रुत्वक्। कटुकारोहिणी। एतैर्नवभिः कल्कैर्मिलितैः कटुतैलात् पादिकैः। गवां मूत्रं तैलाच्चतुर्गुणं दत्त्वा सिद्धं पक्वं तैलमभ्यङ्गात् कुष्ठकण्डूघ्नमिति ॥ ६१ ॥ श्वेतकरवीरपल्लवादितैलम् ।

गङ्गाधरः—तिक्तेत्यादि। तिक्तेक्ष्वाकुस्तिक्तालाबूस्तस्या वीजम्। द्वे तुत्थे तुत्थकरसाञ्जने। रोचना गोरोचना। द्वे हरिद्रे। कासीसं धातुकासीसम्।

चक्रपाणिः—श्वेतकरवीरेत्यादौ करवीररसगोमूत्रयोर्द्रवत्वम् ॥ ६० ॥

सर्षपतैलं कल्कैरेतर्मूत्रे चतुर्गुणे साध्यम्।
कण्डूकुष्ठविनाशनमभ्यङ्गाद् वातकफहन्तृ ॥ ६२ ॥

तिक्तेक्ष्वाकुतैलम्।

कनकक्षीरी शैला भार्गी दन्त्याः फलानि मूलञ्च।
जातीप्रवालसर्षपलसुनविड‌ङ्गं करञ्जत्वक् ॥
सप्तच्छदार्कपल्लवमूलत्वक्चित्रकास्फोताः।
गुञ्जैरण्डं वृहती मूलकसुरसाज्र्जकफलानि ॥
कुष्ठं पाठा मुस्तं तुम्बुरुमूर्व्वावचाः सषड्ग्रन्थाः।
एड‌्गजकुटजशिग्रु त्र्यूषणभल्लातकक्षवकाः ॥
हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासंज्ञः *।
सौराष्ट्री कासीसं दार्व्वीत्वक् सर्ज्जिकालवणम् ॥

शिग्रु शिग्रुत्वक्। लाङ्गलकमीषलाङ्गलिका। कटुकाख्यरोहिणी कटुरोहिणी। एभिस्त्रयोविंशत्या कल्कैर्गोमूत्रे चतुर्गुणे सार्षपतैलं साध्यम् ॥ ६२ ॥

तिक्तेक्ष्वाकुतैलम्।

गङ्गाधरः—कनकक्षीरीत्यादि। कनकक्षीरी स्वर्णक्षीरी। शैला मनःशिला। भार्गी। दन्त्याः फलानि मूलञ्च। जातीप्रवालः जात्या नवपत्रम्। सर्षपं श्वेतम्। करञ्जत्वक् नाटाकरञ्जत्वक्। सप्तच्छदस्य पल्लवं मूलत्वक् च। तथार्कस्य पल्लवं मूलं त्वक् च। चित्रकस्य आस्फोतायाः श्वेतापराजितायाश्च मूलम्। गुञ्जाफलमेरण्डफलञ्च। वृहतीफलम्। मूलकस्य वीजम्। सुरसाया वीजम्। अर्ज्जकस्य च वीजम्। सुरसार्ज्जकौ पर्णासभेदौ श्वेतकृष्णतुलस्यौ। वचा श्वेतवचा। षड्ग्रन्था वचा। एड्गजफलम्। कुटजशिग्र्वोस्त्वक्। भल्लातकफलम्। क्षवकः हाँचीया नाम। हरितालं वंशपत्राकारम्। अवाक्पुष्पी शताह्वा। तुत्थं। कम्पिल्लकं कमलागुंड़ीतिलोके। अमृतासंज्ञः खर्परः। सौराष्ट्री फटिकारी। कासीसं कसीश इति लोके। दार्व्वीत्वक् दारुहरिद्राया वल्कलम्। सर्ज्जिकालवणं सर्ज्जिकाक्षारम्। षट्-

चक्रपाणिः—तुत्थे इति कार्परिका तुत्थम्। श्वेतकरवीरेत्यादौ कल्कमानमस्य च तैलमानमपि समानम् ॥ ६१। ६२ ॥

* अमृतासङ्गमिति वा पाठः।

कल्कैरेतैस्तैलं करवीरकमूलपल्लवकषाये ।
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम् ॥
कटुकालाब्वां स्थाप्यं तत् सिद्धं तेन मण्डलान्याशु ।
भिन्द्याद् भिषगभ्यङ्गात् क्रिमींश्च कण्डूश्च विनिहन्यात् ॥६३

कनकक्षीरीतैलम् ।

कुष्ठं तमालपत्रं मरिचं समनःशिलं सकाशीसम् ।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥
तेनालिप्तं सिध्म सप्ताहाद् घर्म्मसेविनो व्येति ।
मासान्नवं किलासं स्नानं मुक्त्वा विशुद्धतनोः ॥ ६४ ॥

सिध्मलेपः ।

चत्वारिंशता द्रव्यैरेतैः कल्कैः सार्षपतैलस्य पादिकैः करवीरस्य मूलं पल्लवञ्च समभागेन गृहीत्वाष्टगुण जले क्वाथयित्वा चतुर्थभागशिष्टे कषाये तैलाच्चतुर्गुणे सार्षपतैलं साध्यम् । इत्येकं तैलम् । अथवा तैः षट्चत्वारिंशता द्रव्यैः कल्कैः पादिकैः गोमूत्रचतुर्गुणं सार्षपतैलं साध्यमित्यपरं तैलम् । एवं तैलद्वयं साधयित्वा कटुकालाब्वां तिक्तालाबूपात्रे स्थापयेत् । तेन तैलेनाभ्यङ्गादाशु मण्डलानि कुष्ठानि भिषग् भिन्द्यात् । इति कल्कतैलं द्विविधम् ॥ ६३ ॥

कनकक्षीरीतैलम् ।

गङ्गाधरः—कुष्ठमित्यादि । कुष्ठादि पञ्चद्रव्यं पेषयित्वा सार्षपेण तैलेन युक्तं ताम्रपात्रे सप्ताहं स्थापयेत् । सप्ताहानन्तरं तेन तैलेन लिप्तं सिध्मस्थानं रौद्रे समासीत । एवं सप्ताहात् सिध्मं व्येति । मासान्नवं किलासं व्येति । तावत्कालं स्नानं त्यजेत् । पूर्व्वञ्च वमनादिना शरीरं संशोधयेत् । तत्र तल्लेपः सिध्यति ॥ ६४ ॥

सिध्मलेपः ।

चक्रपाणिः—कनकक्षीरी स्वर्णक्षीरी । अवाक्पुष्प्यपामार्गः ॥ ६३ ॥

चक्रपाणिः—व्येति व्यपयाति । घर्म्मं इत्यातपे, स्नानं मुक्त्वेति स्नानं वर्ज्जयित्वा अयं प्रयोगः ॥ ६४ ॥

सर्षपकरञ्जकोषातकीनां तैलान्यथेङ्गुदीनाञ्च ।
कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरस्य ॥ ६५ ॥
जीवन्ती मञ्जिष्ठा दार्व्वी कम्पिल्लकं पयस्तुल्यम् ।
एष घृततैलपाकः सिद्धः सिद्धे च सर्ज्जरसो देयः ॥
समधूच्छिष्टो विपादिका तेन च शाम्यतीत्युक्तम् ।
चर्म्मैककुष्ठकिटिमं कुष्ठं शाम्यत्यलसकञ्च ॥ ६६ ॥

विपादिकाहरघृततैले ।

क्लिन्नं वराहरुधिरं पृथ्वीका सैन्धवञ्च लेपः स्यात् ।
लेपो योज्यः कुस्तुम्बुरूणि कुष्ठञ्च मण्डलनुत् ॥ ६७ ॥

मण्डलकुष्ठ लेपौ ।

गङ्गाधरः—सर्षपेत्यादि । केवलमपक्वं सार्षपं तैलं तथा गोकरञ्जवीजभवं तैलं तथा कोषातकीफलभवं तैलं तथेङ्गुदीनां जीवपुत्रिकाणां वीजभवं तैलं तथा खदिरवीजभवञ्च तैलम् । इति पञ्च तैलानि प्रत्येकं सर्व्वेषु कुष्ठेषु हितान्याहुर्महर्षयः ॥ ६५ ॥ इति तैलानि पञ्च ।

गङ्गाधरः—जीवन्तीत्यादि । जीवन्त्यादीनि चत्वारि द्रव्याणि पादिकानि कल्कीकृत्य तुल्यं पयो दत्त्वा पचेत् । सार्षपतैलमथवा गव्यं घृतं घृततैलोभयं वा मिलितं पचेत् । पाकः सिद्धो यथाविधि । पाके सिद्धे सति वस्त्रपूतं कृत्वोष्णे सति तत्र घृते तैले च मधूच्छिष्टसर्ज्जरसौ मिलित्वा पादांशौ दत्त्वा स्थापयेत् । तेनाभ्यङ्गाद् विपादिकादि कुष्ठं शाम्यतीत्युक्तम् । विपादिकादिषु तैलघृते ॥ ६६ ॥

गङ्गाधरः—क्लिन्नमित्यादि । पृथ्वीकां सैन्धवञ्च वराहरुधिरे क्षिप्त्वा स्थापयेत् आ क्लेदीभावात् । क्लिन्ने सति तेन लेपः स्यान्मण्डलनुत् । अपरो लेपः कुस्तुम्बुरुकुष्ठाभ्यां योज्यः मण्डलनुत् ॥ ६७ ॥ मण्डलकुष्ठे लेपौ ।

चक्रपाणिः—सर्षपकरञ्जेत्यादिना कुष्ठेष्वनुपानसाधने सार्षपतैलादीनि देयानि इति दर्शयति । अन्ये तु कुष्ठेषु सामान्येन तैलाद्युक्तौ सार्षपादीन्येव देयानि न तिलतैलमित्यनेन दर्शितम् इति वर्णयन्ति ॥ ६५ ॥

चक्रपाणिः—घृततैलपाक इति यमकपाकः । अत्र च सिद्धे स्नेहे क्षेप्ययोः सर्ज्जरसमधूच्छिष्टयोरपि कल्कार्थं दत्तजीवन्तीमञ्जिष्ठादिद्रव्याणां समानमानत्वं साहचर्य्याज्ज्ञेयम् । किंवा स्नेहादष्टमो भागः सर्ज्जरसमधूच्छिष्टयोरन्यत्र दृष्टत्वात् । तथाहि समूलाग्रैरण्डेत्यादौ द्विप्रस्थस्नेहपरिमाणे मधूच्छिष्टपलान्यष्टावुक्तानि ॥ ६६।६७ ॥

पूतीकदारुजटिलाः पक्कसुरा क्षौद्रमुद्गपर्ण्यौ च ।
लेपः सकाकनासो मण्डलकुष्ठापहः सिद्धः ॥ ६८ ॥

मण्डले लेपः ।

चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥
लाक्षारसाञ्जनैलापुनर्नवाश्चेति कुष्ठिनां लेपाः ।
दधिमण्डयुताः सर्व्वे देयाः षट् मारुतकफघ्नाः ॥ ६९ ॥

षट् लेपाः ।

एड़गजकुष्ठसैन्धवसौवीरकसर्षपैः क्रिमिघ्नैश्च ।
क्रिमिकुष्ठमण्डलाख्यं दद्रुकुष्ठश्च नाशयति ॥ ७० ॥

लेपः ।

गङ्गाधरः—पूतीकेत्यादि । पूतीकं नाटाकरञ्जमूलं देवदारु जटामांसी पक्कसुरा वकयन्त्रे पक्त्वा या पैष्टी सुरा भवति, क्षौद्रं मुद्गपर्णी चेति द्वौ, काकनासिका च । एतैः सप्तभिर्लेपः मण्डलाख्यकुष्ठापहः । मण्डले लेपः ॥ ६८ ॥

गङ्गाधरः—चित्रकेत्यादि । चित्रकमूलं शोभाञ्जनत्वक् इति द्वाभ्यां दधिमस्तुपिष्टाभ्यामेको लेपः । गुड़ूच्यपामार्गदेवदारुभिर्दधिमस्तुपिष्टैर्द्वितीयो लेपः । दधिमस्तुपिष्टैः खदिरैस्तृतीयो लेपः । दधिमस्तुपिष्टैः धवैश्चतुर्थो लेपः । श्याममूलत्रिवृन्नागदन्तीह्रस्वमूलदन्तीभिश्च दधिमस्तुपिष्टैः पञ्चमो लेपः । लाक्षा रसो रसाञ्जनमेला च पुनर्नवा चेति पञ्चभिर्दधिमस्तुपिष्टैः षष्ठो लेपः । एते षड़ लेपा मारुतकफजकुष्ठघ्नाः । षड़ लेपाः ॥ ६९ ॥

गङ्गाधरः—एड़गजेत्यादि । एड़गजो दद्रुघ्नः कुष्ठं सैन्धवं सर्षपा विड़ङ्गाः एतैः पञ्चभिः सौवीरपिष्टैर्लेपः क्रिम्यादीन् नाशयति । लेपः ॥ ७० ॥

चक्रपाणिः—पूतीत्यादौ पक्कसुरा गोरक्षकर्कटी ॥ ६८ ॥

चक्रपाणिः—षण्मारुतकफकुष्ठघ्ना इति । क्रिमं वराहरुधिरमित्यादुक्ताः षड् भवन्ति । अन्ये चित्रकादीनेव श्लोकपादोक्तान् षड् वर्णयन्ति ॥ ६९ । ७० ॥

एड्गजः सर्ज्जरसो मूलकवीजञ्च सिध्मकुष्ठानाम्।
काञ्जिकयुक्तन्तु पृथङ् मतमिदमुद्वर्त्तनं क्रमशः ॥ ७१ ॥
लेपाः।

वासा त्रिफला पाने स्नाने चोन्मर्द्दने प्रदेहे च।
बृहती सेव्यपटोलो ससारिवा रोहिणी चैव ॥
खदिरामयघातककुभ*रोहीतकलोध्रकुटजधवनिम्बाः।
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ॥ ७२ ॥
जलवाप्यलोहकेशरपत्रप्लवचण्डामृणालानि।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ ७३ ॥
यष्ट्याह्वलोध्रपद्मकपटोलपिचुमर्द्दचन्दनरसाश्च।
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठिभ्यः ॥ ७४ ॥

गङ्गाधरः—वासेत्यादि। वासा च त्रिफला चेति चत्वारि द्रव्याणि निःक्वाथ्य पाने स्नाने च कुष्ठिनां हितानि स्युः। पिष्ट्वा चोन्मर्द्दने प्रदेहे च हितानि स्युः। बृहतीत्यादि। एवं कुष्ठिनां स्नानपानेषु बृहत्यादयः शस्यन्ते। पटोली तिक्तपटोलम्। आमयघातो व्याधिघातः। रोहीतकः प्लीहशत्रुः, रहना इति लोके। धवः स्वनामख्यातः ॥ ७१। ७२ ॥

गङ्गाधरः—जलवाप्येत्यादि। जलं बालकं, वाप्यं कुष्ठं, लोहमगुरु, नागकेशरं, तेजपत्रं, प्लवः कैवर्त्तमुस्तकं, चण्डा चोरपुष्पी, मृणालम् उशीरम्। एतान्युत्तरोत्तरभागवृद्धानि नीत्वा पिष्ट्वा पित्तकफकुष्ठे प्रलेपनम् ॥ ७३ ॥

गङ्गाधरः—यष्ट्याह्वेत्यादि। यष्ट्याह्वादि-चन्दनान्तानां रसाः क्वाथाः सुशीताः पित्तकुष्ठिभ्यः स्नाने पाने च हिताः ॥ ७४ ॥

चक्रपाणिः—अवघातः कर्णिकाकारः, रोहीतको रोहिड इति ख्यातः ॥ ७२ ॥

चक्रपाणिः—वाप्यं कुष्ठं लोहमगुरु प्लवं कैवर्त्तमुस्तकं भागोत्तराणि यथोत्तरमेकभाग-वृद्धानि ॥ ७३ ॥

चक्रपाणिः—रसा इति क्वाथाः ॥ ७४ ॥

* खदिरावघातककुभा इति चक्रधृतः पाठः।

आलेपनं प्रियङ्गुर्हरेणुका वत्सकस्य च फलानि ।
सातिविषा च ससेव्या सचन्दना रोहिणी कटुका ॥ ७५ ॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्च ॥ ७६ ॥

अभ्यङ्गः ।

क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके सचर्म्मदले ।
शीताः प्रदेहसेका व्यधो विरेको घृतं तिक्तम् ॥
खदिरघृतं निम्बघृतं दार्व्वीघृतमुत्तमं पटोलघृतम् ।
कुष्ठेषु रक्तपित्तप्रबलेषु भिषग्जितं सिद्धम् ॥ ७७ ॥

गङ्गाधरः—आलेपनमित्यादि । प्रियङ्गुः । हरेणुका रेणुकः । वत्सकस्य फलानीन्द्रयवाः । ससेव्या सोशीरा । रोहिणी कटुका कटुरोहिणी । एतानि पिष्ट्वा पित्तकुष्ठिनामालेपनं हितम् ॥ ७५ ॥

गङ्गाधरः—तिक्तघृतैरित्यादि । दह्यमानकुष्ठेषु तिक्तघृतैः पञ्चतिक्तघृत-तिक्तषट्पलघृत-महातिक्तघृत-तन्त्रान्तरोक्तपञ्चतिक्तघृतैः अभ्यङ्गो हितः । तथा शतधौत सहस्रधौतादिघृतैरभ्यङ्गः । चन्दनमधुकप्रपौण्डरीकोत्पलैः कल्कैः सिद्धैश्च तैलैश्चाभ्यङ्गो हितो दह्यमानकुष्ठेषु । अभ्यङ्गः ॥ ७६ ॥

गङ्गाधरः—क्लेदे इत्यादि । कुष्ठिनामङ्गे क्लेदे जाते प्रपतिते च गलिते च दाहे विस्फोटयुते चर्म्मविदलने च शीताः प्रदेहाः शीताः सेकाश्च हिताः । सिराव्यधो विरेकश्च हितः । तिक्तं घृतं वक्ष्यमाणञ्च हितमिति । खदिरघृतमित्यादि । रक्तपित्तप्रबलेषु कुष्ठेषु वक्ष्यमाणं महा-खदिरघृतं निम्बघृतं वक्ष्यमाणं तिक्तषट्पलघृतं दार्व्वीघृतं दार्व्वीक्वाथ-कल्काभ्यां सिद्धं पटोलघृतं पटोलपत्रक्वाथकल्काभ्यां सिद्धमुत्तमं सिद्धं भिषग्जितं भवति ॥ ७७ ॥

चक्रपाणिः—तैलैरिति चन्दनादिभिः ॥ ७५ । ७६ ॥

चक्रपाणिः—खदिरघृतमित्यादौ खदिरादिभिर्घृतानि । तत्र च खदिरस्य सारः, निम्बस्य त्वक् पटोलस्य च पत्रं ग्राह्यं वृद्धव्यवहारात् । उक्तञ्च 'सारः स्यात् खदिरादीनां निम्बादीनां त्वचं तथा । फलन्तु दाड़िमादीनां पटोलादेर्दलं तथा' ॥ ७७ ॥

त्रिफलात्वचोऽर्द्धपलिकाः पटोलपत्रञ्च कार्षिकाः शेषाः ।
कटुरोहिणी सनिम्बा यष्ट्याह्वा त्रायमाणा च ॥
एष कषायः साध्यो दत्त्वा द्विपलं मसूरविदलानाम् ।
सलिलाढ़केऽष्टभागे शेषे पूतो रसो ग्राह्यः ॥
तत्र कषायेऽष्टपले * चतुःपलं सर्पिषश्च पक्तव्यम् ।
यावत् स्यादष्टपलं शेषं पेयं ततः कोष्णम् ॥
तद् वातपित्तकुष्ठं वीसर्पं वातशोणितं प्रबलम् ।
ज्वरदाहगुल्मविद्रधिविभ्रमविस्फोटकं हन्यात् ॥ ७८ ॥

त्रैफलकाथः ।

गङ्गाधरः—त्रिफलेत्यादि । त्रिफलाया अस्थीनि त्यक्त्वा त्वचोऽर्द्धपलिकाः प्रत्येकम् । पटोलपत्रञ्चार्द्धपलिकम् । शेषाः कटुरोहिण्यादयश्चत्वारः कार्षिकाः प्रत्येकम् । तत्र मसुरविदलानां द्विपलं दत्त्वा कषायः । एष सलिलाढ़केऽष्ट शरावे द्वैगुण्याभावविवक्षातः साध्यः । अष्टभागशेषेऽष्टपले शेषे पूतो वस्त्रपूतं कृत्वा रसो ग्राह्यः । तत्र शरावमिते कषाये घृतस्य चतुष्पलं पक्तव्यम्, शेषन्तु अष्टपलं कार्य्यम् । तदष्टपलं कोष्णं पेयं कुष्ठिभिः प्रतिदिनम् एवं कृत्वा कृत्वा पेयं बलदेहाग्निबलमवेक्ष्य न्यूनाधिक्यं मात्रायाः कार्य्यमिति युक्तिः । तदित्यादिराशीः । त्रैफलकाथः ॥ ७८ ॥

चक्रपाणिः—त्रिफलेति । निस्तुषमसूराणां विदलं न तु मसूरविदला अत्र श्यामा । उक्तं हि जतूकर्णे—पुंलिङ्गेन * * मसूरविदलात् पलमिति । अष्टभागे इति षोड़शपले । अत एवान्ते कषायाष्टपले इति प्रथमाद्विवचनान्तं षोड़शपलमाह । अत्र चाष्टाविंशत्युत्तरपलशतमानस्याष्ट-भागशेषे षोड़श पलानि भवन्ति । तच्च द्रवषोड़शपलमष्टपलशब्देनाकृतद्वैगुण्यमेवोच्यते, यदि पलोपरि द्रवद्वैगुण्यं स्यात् तदा षोड़शपलेन द्वात्रिंशत्पलानि स्युः । न चेह भागशेषे द्वात्रिंशत्पलत्वं किन्तु षोड़शपलत्वमेव, तेनैतत् स्यादष्टपलशब्देनाकृतद्वैगुण्याद् द्रवषोड़शपलग्रहणन्तु नोन्नीयते । यत्पलोल्लेखनाद् द्वैगुण्यं नास्ति किन्तु कुड़वादावेव द्रवद्वैगुण्यमिहानुमतम्, तन्त्रान्तरेऽपि सम्मतमिति । यावत् स्यादष्टपलमित्यनेन कषायचतुःपलेन सम्भूतस्याष्टपलं स्थाप्यं दर्शयति । यैषा च मात्रा कुष्ठिनां भूरिमात्रद्रव्यसाध्यत्वेनोत्तमा ज्ञेया ॥ ७८ ॥

* कषायाष्टपले इति चक्रः ।

निम्बपटोलं दार्व्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम् ।
कुर्य्यादर्द्धपलांशां पर्पटकं त्रायमाणाञ्च ॥
सलिलाढ़कसिद्धानां रसेऽष्टभागे स्थिते क्षिपेत् पूते ।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च ॥
मुस्तं वत्सकवीजं कल्कीकृत्यार्द्धकार्षिकान् भागान् ।
नवसर्पिषश्च षट्पलमेतत् तिक्तकं घृतं पेयम् ॥
कुष्ठज्वरगुल्माशोंग्रहणीपाण्डामयश्वयथुहारि ।
पामाविसर्पपिड़काकण्डूमदगण्डनुत् सिद्धम् ॥ ७६ ॥

तिक्तषट्पलकं घृतम् ।

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥
धन्वयवासं चन्दनमुपकुल्यां पद्मकं हरिद्रे द्वे ।
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ॥

गङ्गाधरः—निम्बपटोलमित्यादि। निम्बस्य वल्कलं पटोलस्य पत्रं, तिक्तकरोहिणी कटुकरोहिणी। पर्पटकं त्रायमाणा चेति। सर्व्वेषामेवार्द्ध-पलांशं कुर्य्यात्। सलिलाढ़के कृतद्वैगुण्यात् षोड़शशरावे सिद्धानामेषां निम्बादीनां रसेऽष्टभागस्थिते शरावद्वयस्थिते पूते वस्त्रपूतं कृत्वा तत्र क्वाथे चन्दनादिवत्सकवीजान्तान् षट् प्रत्येकं कार्षिकान् भागान् कल्कीकृत्य क्षिपेत्। नवसर्पिषश्च षट्पलं तत्रैव क्षिपेत्। पक्त्वा घृतावशेषमवतार्य्य पूत्वा मात्रया एतत् तिक्तकं षट्पलकं घृतं पेयम्। अस्याशीः कुष्ठज्वरेत्यादिः। तिक्तषट्-पलकं घृतम् ॥ ७९ ॥

गङ्गाधरः—सप्तच्छदमित्यादि। उपकुल्यां कृष्णजीरकम्। शारिवे चोभे इति

चक्रपाणिः—निम्बपटोलमित्यादिना तिक्तषट्पलकमाह। सर्पिश्चाप्यनवं हितमिति वचनस्य बाधकमिह योगमहिम्ना सर्पिषो नवत्वं ज्ञेयम्। प्रथमं सर्पिष इति पदं मानार्थं द्वितीयन्तु घृतमिति पदं पेयत्वोपदर्शनार्थम् ॥ ७९ ॥

वत्सकबीजं वासां मूर्व्वाममृतां किराततिक्तञ्च ।
कल्कान् कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥
कल्कश्चतुर्थभागो जलमष्टगुणं रसोऽमृतफलानाम् ।
द्विगुणो घृतात् प्रदेयस्तत् सिद्धं पाययेत् सर्पिः ॥
कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि ।
वीसर्परक्तपित्तं वातासृक्पाण्डुरोगञ्च ॥
विस्फोटकान् सपामानुन्मादं कामलां ज्वरं कण्डूम् ।
हृद्रोगगुल्मपिड़का असृग्दरं गण्डमालाञ्च ॥
हन्यादेतत् सर्पिः पीतं काले यथाबलं सद्यः ।
योगशतैरप्यजितान् महाविकारान् महातिक्तम् ॥
दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते वमने ।
स्नेहे काले युक्ते न कुष्ठमतिवर्त्तते साध्यम् ॥ ८० ॥

महातिक्तकं घृतम् ।

श्यामलतानन्तमूले द्वे। सप्तच्छदादीन् त्रायमाणान्तानेकत्रिंशतं कल्कान् कुर्य्यात्। समुदितकल्कस्तु घृताच्चतुर्थो भागः। जलञ्चाष्टगुणं घृतादेव। तथा अमृतफलानामालकफलानां रसो घृताद् द्विगुणः प्रदेयः। तत् पक्त्वा सिद्धं पूतं सर्पिः पाययेदिति। कुष्ठानीत्यादिरस्याशीः। अस्यैकान्ततः सिद्धि-प्रकारमाह—दोषे हृते इत्यादि। वमनादिना दोषे हृते। रक्तेऽपनीते सिराव्यधनेनाभ्यन्तरे रक्ते जलौकादिभिर्बाह्ये रक्तेऽपनीते वमने कृते काले युक्ते यथाकाले स्नेहे प्रयुक्ते साध्यं कुष्ठं नातिवर्त्तते निवर्त्तत एवेति। महातिक्तकं घृतम् ॥ ८० ॥

**चक्रपाणिः**—सप्तच्छदमित्यादि। महातिक्तघृतमाह। शम्पाक आरग्वधः। कल्कस्य चतुर्भाग इति घृताच्चतुर्थो भागः। एतच्च सामान्यपरिभाषासिद्धमिति स्पष्टार्थमुच्यते। अमृतफलानामिति गुडूचीफलानाम्। अत्रापि विसर्पवचनमेकं कल्कादिभागार्थं द्वितीयं पेयत्वोपदर्शनार्थं, तृतीयकं महातिक्तकसंज्ञादर्शनार्थम्। न कुष्ठमनुवर्त्तत इति साध्य एवेत्यर्थः ॥ ८० ॥

खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले ।
तुलार्द्धाः सर्व्व एवैते करञ्जारिष्टवेतसाः ॥
पर्प्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा ।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥
सप्तपर्णश्च संक्षुण्णा दशद्रोणेषु वारिणः ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढ़कं पचेत् ।
महातिक्तककल्कैस्तु यथोक्तैः पलसम्मितैः * ॥
निहन्ति सर्व्वकुष्ठानि पानाभ्यङ्गनिषेवणात् ।
महाखदिरमित्येतत् परं कुष्ठविकारनुत् ॥ ८१ ॥

महाखदिरं घृतम् ।

प्रपतत्सु लसीकाप्रस्नुतेषु गात्रेषु जन्तुजग्धेषु ।
मूत्रं निम्बविड़ङ्गे स्नानं पानं प्रदेहश्च ॥ ८२ ॥

गङ्गाधरः—खदिरस्येत्यादि। खदिरस्य सारस्य पञ्च तुलाः, शिंशपायास्तुलाऽसनस्य च तुलेति द्वयोर्द्वे तुले। एते वक्ष्यमाणाः करञ्जादयः सर्व्वे प्रत्येकं तुलार्द्धाः। एते मिलिताः सर्व्वे वारिणो दशद्रोणे पक्त्वाष्टभागावशिष्टं कषायमवतारयेत्। तत्र करञ्जो गोकरञ्जः। अरिष्टं निम्बम्। वेतसोऽशोकः। द्वे हरिद्रे। कृतमालो नाटाकरञ्जः। त्रिफलायाः प्रत्येकमर्द्धतुला। एकोनविंशतिः क्वाथ्याः। धात्रीरसञ्च सर्पिषस्तुल्यांशं, सर्पिषश्चाढ़कं पचेत्। महातिक्तकघृतस्य ये कल्का उक्ताः सप्तच्छदादित्रायमाणान्ता एकत्रिंशत्, तैः प्रत्येकं पलोन्मितैः कल्कैः पक्त्वा पाकसिद्धाववतारयेत्। अस्याशीर्निहन्ति इत्यादिः। इति महाखदिरघृतम्॥ ८१ ॥

गङ्गाधरः—प्रपतत्स्वित्यादि। कुष्ठिनां गात्रेषु जन्तुजग्धेषु क्रिमिभक्षितेषु प्रपतत्सु गलन्मांसेषु लसीकासु स्रतासु मूत्रं गोमूत्रं निम्बपत्रं विड़ङ्गञ्च क्वाथयित्वा

चक्रपाणिः—खदिरस्य तुला इत्यादिकं केचिदनार्षं वदन्ति। साधयेदित्यत्र सर्पिरिति शेषः। तत्र तु घृतमानानुक्तौ क्वाथशेषस्याढकाधिकद्रोणस्य नियतत्वात् तत्क्वाथचतुर्थभागप्रस्थाधिकाढकमात्रघृतं साध्यम्॥ ८१ ॥

* यथोक्तैस्तैस्तु साधयेदिति चक्रः।

वृषकुटजसप्तपर्णाः करवीरकरञ्जनिम्बखदिराश्च।
स्नाने पाने लेपे क्रिमिकुष्ठनुदः सगोमूत्राः ॥ ८३ ॥
पानाहारविधाने प्रसेचने धूपने प्रदेहे च।
क्रिमिनाशनं विडङ्गं विशिष्यते कुष्ठहा खदिरः ॥ ८४ ॥
एड़गजः सविड़ङ्गो मूलान्यारग्वधस्य कुष्ठानाम्।
उद्दालनं श्वदन्ता गोऽश्वव राहोष्ट्रदन्ताश्च ॥ ८५ ॥
एड़गजः सविड़ङ्गो द्वे च निशे राजवृक्षमूलञ्च।
कुष्ठोद्दालनमग्र्यं सपिप्पलीपाकलं योज्यम् ॥ ८६ ॥

तेन क्वाथेन स्नानं, तथा पानीयक्वाथविधिना क्वाथयित्वा तत्क्वाथस्य पानं, पिष्ट्वा च प्रदेहश्च कर्त्तव्यः। क्रिमिकुष्ठे ॥ ८२ ॥

गङ्गाधरः—वृषेत्यादि। कुटजस्य फलम्। वृषादयः सप्त मिलिता जलेन क्वथिताः सगोमूत्राः स्नाने पाने, पिष्टाः सगोमूत्रा लेपे, क्रिमिकुष्ठनुदः। वृषादिः ॥ ८३ ॥

गङ्गाधरः—पानाहारेत्यादि। पानविधाने आहारविधाने च। क्रिमिनाशनं विड़ङ्गं, कुष्ठहा खदिरश्च। क्रिमिकुष्ठनां विशिष्यते द्वयं मिलितमिति ॥ ८४ ॥

गङ्गाधरः—एड़गज इत्यादि। आरग्वधस्य मूलान्येतत्त्रयं कुष्ठानामुद्दालनं विनाशनं, तथा प्रत्येकं श्वदन्ताः कुक्कुरदन्ताः गोऽश्ववराहोष्ट्रदन्ताश्च प्रलेपेन कुष्ठानामुद्दालनाः ॥ ८५ ॥

गङ्गाधरः—एड़गज इत्यादि। एड़गजविड़ङ्गहरिद्रादारुहरिद्राशम्पाक-मूलानि पञ्चकमिदं सपिप्पलीपाकलं पिप्पलीकुष्ठसहितमग्र्यं कुष्ठोद्दालनं प्रलेपे योज्यमिति ॥ ८६ ॥

चक्रपाणिः—कुष्ठहन् खदिर इति कुष्ठहन्तृत्वेन खदिरश्च द्रव्यान्तरेषु विशिष्यते प्रकर्षवान् भवतीत्यर्थः ॥ ८२—८४ ॥

चक्रपाणिः—श्वदन्ता इति कुक्कुरदन्ताः ॥ ८५ ॥

चक्रपाणिः—उद्दालनमिति प्रशमनम्। पाकलं कुष्ठम् ॥ ८६ ॥

श्वित्राणां प्रशमार्थं प्रयोक्तव्यं सर्व्वतो विशुद्धानाम्।
श्वित्रे स्रंसनमग्र्यं मलपूरस इष्यते सगुड़ः॥
तं पीत्वा सुस्निग्धो यथाबलं सूर्य्यपादसन्तापम्।
संसेवेत विरिक्तस्त्र्यहं पिपासुः पिबेत् पेयाम्॥ ८७॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात्।
स्फोटेषु निःस्रुतेषु प्रातःप्रातः पिबेत् पत्तम्॥
मलपूमसनं प्रियङ्गुं शतपुष्पाञ्चाम्भसा समुत्क्वाथ्य।
पालाशं वा क्षारं यथाबलं फाणितोपेतम्॥

गङ्गाधरः—कुष्ठचिकित्सितमिदमुक्त्वा कुष्ठैकसम्भवत्वादत्रैवाधिकारे श्वित्र-चिकित्सितमाह श्वित्राणामित्यादि। श्वित्राणां प्रशमार्थं वक्ष्यमाणविधानम्। सर्व्वतो विशुद्धानामूर्द्धाधःप्रभृतितः शुद्धानाम्। अन्यथा प्रयोगो हि न सम्यक् सिध्यति। तत्रादित एवं कुर्य्यात्। तद् यथा। श्वित्रे स्रंसनं श्रेष्ठं, सगुड़ो मलपूरसः काष्ठोडुम्बररस इष्यते। तमित्यादि। पूर्व्वं सुस्निग्धः श्वित्री तं सगुड़ं मलपूरसं पीत्वा सूर्य्यपादसन्तापं रौद्रं संसेवेत। तेन विरिक्तः सन् पिपासुस्त्र्यहं पेयां पिबेत्॥ ८७॥

गङ्गाधरः—श्वित्रेऽङ्गे इत्यादि। मलपूरसपानादिना श्वित्रेऽङ्गे श्वित्रस्थाने ये स्फोटा जायन्ते तान् कण्टकेन भिन्द्यात्। स्फोटेषु निःस्रुतेषु निःशेषेण स्रुतेषु मलपूं कोटोडुम्बरमसनं पीतशालं प्रियङ्गुं शतपुष्पाञ्च समुत्क्वाथ्याम्भसा तं क्वाथं प्रातःप्रातः पिबेत्। अथवा पलाशक्षारं फाणितोपेतमर्द्धा-

चक्रपाणिः—त्वग्दोषाधिकारानुषङ्गात् त्वग्दोषविशेषस्य श्वित्रस्य चिकित्सामाह—श्वित्राणामित्यादि। नन्वपररोगाणां निदानमभिधाय चिकित्सोच्यते श्वित्रस्य तु प्रथमं चिकित्सा, अत्र कोऽभिप्रायः? उच्यते, येयं कुष्ठचिकित्सोक्ता सा त्वग्दोषाणामपि हन्त्रीति श्वित्रस्योच्यते तेन सा चिकित्सा श्वित्राणां सविशेषं प्रयोक्तव्या। यदेतत् कुष्ठोद्दालनमुक्तं कुष्ठनाशने, तत् श्वित्राणां सविशेषगाढतरं कर्तव्यमित्यर्थः। सर्व्वतो विशुद्धानामिति वमनादिभिः शुद्धानाम्। मलपूः काकोडुम्बरिका॥ ८७॥

यच्चान्यत् कुष्ठघ्नं श्वित्राणां सर्व्वमेतत् पथ्यम्।
खदिरोदकसंयुक्तं खदिरोदकपानमग्रं वा ॥ ८८ ॥
समनःशिलाविड़ङ्गं काशीसं रोचनां कनकपुष्पीम्।
श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात् ॥
कदलीक्षारयुतं वा खरास्थि दग्धं गवां रुधिरयुक्तम्।
हस्तिमदाध्युषितं वा मालत्याः क्षारकं क्षारम् * ॥
नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा।
मूलकवीजावल्गुजालेपः पिष्टो भवेद् गवां मूत्रे ॥
काकोडुम्बरिकावासावल्गुजचित्रका गवां मूत्रे।
पिष्टा मनःशिला वा संयुक्ता वर्हिपित्तेन ॥ ८९ ॥

श्वित्रे लेपाः।

वर्त्तितेक्षुरसोपेतं यथावलं प्रातःप्रातः पिवेत्। कुष्ठघ्नञ्च यदन्यदुक्तं तदेतत् सर्व्वं श्वित्राणां पथ्यमिति। श्वित्रे पानीयन्तु खदिरोदकसंयुक्तं जलमथवा खदिरोदकपानमग्रम् ॥ ८८ ॥

गङ्गाधरः—अथ श्वित्रे लेपमाह समनःशिलेत्यादि। मनःशिलाविड़ङ्ग-काशीसगोरोचनापीतयूथीपुष्पपत्राणि सैन्धवञ्च पिष्ट्वा श्वित्राणां प्रशमार्थं लेपनं दद्यात्। तथा कदलीक्षारसंयुक्तं खरास्थि दग्धं भस्म गवां रुधिरयुक्तं लेपनं दद्यात्। अथवा मालत्याः क्षारकं क्षारनिःसृतं जातं सारभागरूपं क्षारं हस्तिमदाध्युषितं हस्तिमूत्रे प्रक्षिप्य पर्य्युषितं लेपनं दद्यात्। अथवा नीलोत्पलं कुष्ठं सैन्धवञ्च हस्तिमूत्रेण पिष्टं लेपनं दद्यात्। अथवा मूलकवीजावल्गुजवीजानामालेपो गवां मूत्रे पिष्टो भवेत् श्वित्राणां प्रशमार्थम्। काकोडुम्बरिका काकोडुम्बरः वासाऽवल्गुजः चित्रकश्च गवां मूत्रे पिष्ट आलेपो भवेत्। अथवा वर्हिपित्तेन पिष्टा मनःशिला श्वित्राणां प्रशमार्थमालेपो भवेत् ॥ ८९ ॥

चक्रपाणिः—श्वित्रेऽङ्ग इति श्वित्रयुक्तेऽङ्गे ॥ ८८ ॥

चक्रपाणिः—कनकपुष्पी सुवर्णक्षीरी। मालत्याः क्षारकक्षारमिति मालतीमुकुलक्षारं, क्षारको मुकुल उच्यते ॥ ८९ ॥

* मालत्याः क्षारकक्षारमिति चक्रः।

लेपः किलासहन्ता बीजान्यवल्गुजानि लाक्षा च ।
गोपित्तमञ्जने द्वे पिप्पल्यः कृष्णलोहरजः ॥ ९० ॥
शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ ९१ ॥
दारुणं चारुणं श्वित्रं किलासं नामभिस्त्रिभिः ।
यदुच्यते तत् त्रिविधं त्रिदोषं प्रायशस्तु तत् ॥
दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते ।
श्वेतं मेदःश्रिते श्वित्रं गुरुता चोत्तरोत्तरम् ॥ ९२ ॥

गङ्गाधरः—अथ श्वित्रवत् किलासस्य चिकित्सितमाह—लेप इत्यादि। अवल्गुजबीजानि लाक्षा च गोपित्तं द्वे अञ्जने रसाञ्जनतुत्थके पिप्पली कृष्णलोहस्य रजः। एतानि पिष्टानि किलासहन्ता लेपः स्यात् ॥ ९० ॥

गङ्गाधरः—शुद्ध्येत्यादि। क्षीणपापस्य कस्यचिज्जनस्य श्वित्रं वमनादिशुद्ध्या शोणितमोक्षैर्विरूक्षणैः सक्तूनां भक्षणैः प्रशाम्यति। इति किलासचिकित्सितमुक्तं भवति ॥ ९१ ॥

गङ्गाधरः—अथ किलासप्रभेदानाह—दारुणमित्यादि। किलासं त्रिभिः दारुणचारुणश्वित्रैरिति त्रिभिर्नामभिर्यदुच्यते तत् त्रिविधमेव किलासम्। दारुणचारुणश्वित्रं प्रायशस्त्रिदोषं भवति। प्रायशोवचनेन क्वचिदन्यथापि स्यात्। तत्प्रभेदलक्षणान्याह—दोषे इत्यादि। किलासारम्भके दोषे रक्ताश्रिते रक्तं यत् किलासं तद् दारुणं नाम। मांससमाश्रिते दोषे यत् किलासं तत् ताम्रवर्णं चारुणं नाम स्यात्। मेदःश्रिते दोषे किलासं श्वेतं भवति तत् श्वित्रं नाम। तेषामुत्तरोत्तरं गुरु कष्टाधिकम् ॥ ९२ ॥

चक्रपाणिः—अञ्जने द्वे सौवीरं रसाञ्जनञ्च ॥ ९० ॥

चक्रपाणिः—कस्यचिदेव प्रशाम्यति इत्यनेन श्वित्राणां दुरुपगमतामाह ॥ ९१ ॥

चक्रपाणिः—नामभिरित्युक्तदारुणादिभिरेव। प्रायःशब्देनकदोषं द्विदोषञ्च भवति। दोष इत्यादिनोक्तं त्रैविध्यं विभजति। सुश्रुते तु त्वग्गतमेव किलासमपरिस्रावि च इत्युक्तं, न घनकुष्ठवद्रक्तादिकुष्ठलक्षणकारकं श्वित्रमित्यभिप्रायेणोक्तम्। इह तु यद्रक्ताद्याश्रयित्वं श्वित्रस्योच्यते

यत् परस्परतोऽभिन्नं बहु यद् रक्तलोमवत्।
यच्च वर्षगणोत्पन्नं तत् श्वित्रं नैव सिध्यति ॥ ९३ ॥

वचांस्यतथ्यानि कृतघ्नभावो निन्दा गुरूणां गुरुधर्षणञ्च।
पापक्रिया पूर्व्वकृतञ्च कर्म्म हेतुः किलासस्य विरोधि चान्नम् ॥९४॥

तत्र श्लोकाः।

हेतुर्द्रव्यं लिङ्गं विविधं ये येषु चाधिका दोषाः।
कुष्ठेषु दोषलिङ्गं समासतो दोषनिर्द्देशः ॥
साध्यमसाध्यं कृच्छ्रं कुष्ठं कुष्ठापहाश्च ये योगाः।
सिद्धाः किलासहेतुर्लिङ्गं गुरु लाघवं तथा शान्तिः ॥

गङ्गाधरः—तत्र श्वित्रस्यासाध्यतामाह यत् परस्परत इत्यादि। यत् श्वित्र परस्परतो भवत्यभिन्नमेकीभूतं मेलनेन तच्छ्वित्रं न सिध्यति। यच्च श्वित्रं बहु रक्तलोमयुक्तं तन्न सिध्यति। यच्च श्वित्रं वर्षगणोत्पन्नं बहुवर्षजातं तच्च नैव सिध्यति ॥ ९३ ॥

गङ्गाधरः—किलासस्य निदानमाह वचांसीत्यादि। अतथ्यानि असत्यानि वचांसि। कृतघ्नभावः। गुरूणां निन्दा, गुरूणां धर्षणञ्च। पापक्रिया। पूर्व्वकृतञ्च पापं कर्म्म। विरोधि चान्नञ्च किलासस्य हेतुः ॥ ९४ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोका इत्यादि। कुष्ठेषु हेतुर्निदानं, लिङ्गं विविधम्। येषु कुष्ठेषु ये दोषा अधिकास्तेषां दोषाणां लिङ्गं दोषलिङ्गं, समासतो दोषनिर्द्देशः येषु कुष्ठेषु ये दोषास्तेषां निर्द्देशः। यत् कुष्ठं साध्यं तस्य लक्षणं, यदसाध्यं तस्य च लक्षणं, यत् कृच्छ्रं कष्टसाध्यं तस्य च लिङ्गम्। ततोऽनन्तरं ये कुष्ठापहाः सिद्धयोगाः। किलासस्य हेतुर्लिङ्गं

तद्रक्तादिदोषमात्राभिप्रायेण, रक्तगतदोषं कुष्ठलक्षणकारितया, तेनात्रापि त्वङ्मात्रविकृतिकारकत्वं श्वित्रस्य सम्मतमेवेति न विशेषः। रक्तमित्यादिना साध्यकिलासलक्षणमाह ॥ ९२। ९३ ॥

चक्रपाणिः—वचांसीत्यादिना। वाङ्मानसं पापं कर्म्मोक्तम्। पापक्रियेत्यनेन जन्मान्तरकृतमधर्म्मं ग्राहयति ॥ ९४ ॥

चक्रपाणिः—हेतुर्द्रव्यमिति संग्रहश्लोकः। येषु येषु कपालादिषु ये ये वा अधिकाः

इति संग्रहः प्रणीतो महर्षिणा कुष्ठनाशनेऽध्याये ।
स्मृतिबुद्धिवर्द्धनार्थं शिष्याय हुताशवेशाय ॥ ९५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
कुष्ठचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥

गुरु लाघवं दारणादिभेदानां तथा शान्तिश्चिकित्सा। इत्येष संग्रहः कुष्ठनाशनाध्याये महर्षिणा पुनर्व्वसुना प्रणीतः शिष्यायाग्निवेशाय। स्मृतिबुद्धिवर्द्धनार्थं प्रणीत इति ॥ ९५ ॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे
चिकित्सितस्थानजल्पे कुष्ठचिकित्सितजल्पाख्या
सप्तमी शाखा ॥ ७ ॥

दोषास्तेषां निर्द्देशः दोषनिर्द्देशः। रौक्ष्यतोद इत्युक्तं दोषलिङ्गम्। गुरु लाघवमिति श्वित्रम्। गुरु तच्चोत्तरोत्तरमित्यनेनोक्तम् ॥ ९५ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां कुष्ठचिकित्सितं
नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

अथातो राजयक्ष्मचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥
दुहितॄणामसम्भोगाच्छेषाणाञ्च प्रजापतेः ।
क्रोधो निश्वासरूपेण मूर्त्तिमान् निःसृतो मुखात् ॥

गङ्गाधरः—अथोद्देशक्रमात् कुष्ठानन्तरं राजयक्ष्मचिकित्सितमाह—अथात इत्यादि । राजयक्ष्मेति शोषरोगस्य । शेषं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—निदानस्थाने शोषनिदाने यदुक्तं शोषस्य नाम राजयक्ष्मा । तद् यथा । तं सर्व्वरोगाणां कष्टतमत्वाद् राजयक्ष्माणमाचक्षते भिषजः । यस्माद् वा पूर्व्वमासीद् भगवतः सोमस्योडुराजस्य तस्माद् राजयक्ष्मेति । तत् सोमस्य यथायं शोषो नाम यक्ष्मा जातस्तत्पुरावृत्तमाह—दिवौकसामित्यादि । कामव्यसनसंयुक्ता शशिनं प्रति पौराणी कथा दिवौकसां कथयतां देवानां सकाशात् ऋषिभिः श्रुता । कीदृशी कथा श्रुता तदाह—रोहिण्यामित्यादि । अश्विन्यादिष्वष्टाविंशतौ दक्षसुतासु खल्विन्दोः सोमस्य रोहिण्यां रोहिणीनामिकायां भार्य्यायामतिसक्तस्य शरीरं नानुरक्षतो देहः स्नेहपरिक्षयात् अतिमैथुनेन स्नेहस्य शारीरस्य परिक्षयादल्पतामाजगाम । यदाल्पप्रभो देहोऽभूत् तदा तेनैव केवलेन नायं शोषो नाम रोगोऽभूत् कारणान्तरञ्चास्ति, तदाह दुहितॄणामित्यादि । प्रजापतेर्दक्षस्य रोहिण्याः

चक्रपाणिः—त्रिदोषत्वसामान्यात् कुष्ठमनु राजयक्ष्मचिकित्सितमुच्यते । उन्मादापस्मारौ दक्षाध्वरध्वंसोत्पन्नावपि आगन्तुत्वात् पश्चादुक्तौ । दिवौकसामित्यादिना प्रागुत्पत्त्यादिलक्षणं दर्शयति । प्रागुत्पत्त्या धातुक्षयो राजयक्ष्मणः प्रधानं कारणं, तथा भार्य्यास्वसमवर्त्तितस्य

प्रजापतेर्हि दुहितरष्टाविंशतिमंशुमान्।
भार्य्यार्थं प्रतिजग्राह न च सर्व्वास्ववर्त्तत ॥
गुरुणा तमवध्यातं भार्य्यास्वसमवर्त्तिनम्।
रजःपरीतमबलं यक्ष्मा शशिनमाविशत् ॥
सोऽभिभूतोऽतिबलिना गुरुक्रोधेन निष्प्रभः।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः।
प्रसादं कृतवान् सोमे ततोऽश्विभ्यां चिकित्सितः ॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः।
ओजसा वर्द्धितोऽश्विभ्यां सत्त्वं शुद्धमवाप च ॥ २ ॥

शयाणामश्विन्यादीनां दुहितॄणां सोमेनासम्भोगात् ताभिः पितुः सन्निधौ गत्वा आवितात् तासां पितुः प्रजापतेः क्रोधः श्वासरूपेण मूर्त्तिमान् सन् मुखान्निःसृतः। किमर्थमेवं क्रोधोऽभूदित्यत आह—प्रजापतेर्हीत्यादि। हि यस्मात्। प्रजापतेः दक्षस्याष्टाविंशतिं दुहितॄरंशुमांश्चन्द्रमा भार्य्यार्थं प्रतिजग्राह, न च सर्व्वासु भार्य्यासु समम्वर्त्तत, रोहिण्यामेवावर्त्तत। गुरुणा दक्षेण श्वशुरेण सर्व्वासु भार्य्यास्वसमवर्त्तिनं तं शशिनमवध्यातं शप्तं "शोषोऽस्य भवतु" इत्येवं शप्तं रजःपरीतमबलं शशिनं यक्ष्मा रोग आविशत्। अथ यक्ष्मणाविष्टः स शशी अतिबलिना गुरुक्रोधेनाभिभूतः सन् तेन च रोगेण निष्प्रभः सन् देवदेवर्षिसहितो गुरुं श्वशुरं दक्षं प्रजापतिं शरणं रक्षितारं जगाम। शरणापन्ने शशिनि प्रजापतिर्यत् कृतवांस्तदाह अथ चन्द्रमस इत्यादि। अथ शरणगतानन्तरं प्रजापतिर्दक्षश्चन्द्रमसः शुद्धां मतिं अश्विन्यादिषु सर्व्वासु समवर्त्तिनीं बुद्धिं बुद्ध्वा प्रसादं कृतवान् सोमे। ततोऽश्विभ्यां चन्द्रमाः चिकित्सितः।

अधर्म्मश्च कारणं भवतीति दृश्यते। कामव्यसनसंयुक्ता स्त्रीषु ससङ्गसम्बन्धा। देहे स्नेहपरिक्षयात् इति देहसारक्षयात्, स्नेहशब्देन हि सारवाचिना शुक्रौजसी ग्राह्ये। अवध्यातमिति क्रोधेन चिन्तितम्। गुरुक्रोधेनेति यक्ष्मरूपेण। शुभां मतिं बुद्ध्वेति स्वापराधजनितमात्मनः क्षयं बुद्ध्वा। चन्द्रमसः स्वभावदोषपरिहारार्थं शुद्धां बुद्धिं ज्ञात्वा। विमुक्तग्रह इति ग्रहेण यक्ष्माख्येन विमुक्तः। सत्त्वं मनः। शुद्धमिति निर्दोषम् ॥ १। २ ॥

क्रोधो यक्ष्मा ज्वरो रोग एकार्थो दुःखसंज्ञकः।
यस्मात् स राज्ञः प्रागासीद् राजयक्ष्मा ततो मतः॥ ३॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः।
लब्ध्वा चतुर्व्विधं हेतुं समाविशति मानवम्॥
अयथाबलमारम्भो वेगसन्धारणं क्षयम्।
यक्ष्मणः कारणं विद्याच्चतुर्थं विषमाशनम्॥ ४॥
युद्धाध्ययनभाराध्व लङ्घनप्लवनादिभिः।
पतनैरभिघातैर्वा साहसैर्वा तथापरैः॥
अयथाबलमारम्भैर्जन्तोरुरसि विक्षते।
वायुः प्रकुपितो दोषावुदीर्य्योभौ विधावति॥

विमुक्तग्रहो यक्ष्मग्रहो विमुक्तो येन स विमुक्तग्रहः सन् विशेषतो विरराज। अश्विभ्यामोजसा वर्द्धितः शुद्धं सत्त्वं सात्त्विकं मनोऽवाप च॥ २॥

गङ्गाधरः—नन्वत्र यक्ष्मशब्दः किमेतद्रोगविशेषाभिधायीत्यत आह—क्रोध इत्यादि। क्रोधो यक्ष्मा ज्वरो रोग इत्येकपर्य्यायः, स खलु दुःखसंज्ञकः। स रोगो यस्माद्धेतो राज्ञ उडुराजस्य प्रागासीत्, तस्माद् राजयक्ष्मा राजरोग इति मतः॥ ३॥

गङ्गाधरः—ननु स्वर्लोके चन्द्रस्यायं रोगोऽभूदिह कथं भवतीत्यत आह—स यक्ष्मेत्यादि। स राज्ञश्चन्द्रस्य यक्ष्मा रोगश्चिकित्साकालेऽश्विभ्यां हुङ्कृतः सन् ततो निःसृतो मानुषं लोकमागतः। चतुर्व्विधं हेतुं लब्ध्वा मानवं समाविशति। चतुर्व्विधं हेतुमाह अयथेत्यादि। अयथाबलं बलातिक्रमेण आरम्भः शरीरप्रवृत्तिः, वेगसन्धारणमधार्य्यवेगधारणम्, क्षयं धातूनां रक्तादीनाम्, चतुर्थं विषमाशनं यक्ष्मणः कारणं विद्यात्॥ ४॥

गङ्गाधरः—अयथाबलं विवृण्वन् यथा ततो राजयक्ष्मा भवति तदाह—युद्धेत्यादि। अध्ययनं सामाध्ययनम् अत्युच्चैर्भवति। प्लवनं नदीवेगाभिमुखसन्तरणम्। आदिना निदानस्थाने उक्तानि सर्व्वाणि। पतनैर्वात्युच्चतः। शिलाकाष्ठादिनाभिघातैस्तथा चापरैः साहसैरित्येभिरयथाबलमारम्भैर्जन्तोः

चक्रपाणिः—अयथाबलमारम्भादियक्ष्महेतुत्रये विहाररूपतया भिन्नजातीयत्वाद् विषमाशनं चतुर्थं पृथक् पठितम्। निर्देशादेव चतुष्के लब्धे चतुर्थमिति पदं साहसादीनां प्रधानानां बहुत्वेऽपि

स शिरःस्थः शिरःशूलं करोति गलमाश्रितः ।
कण्ठोद्‌ध्वंसञ्च कासञ्च स्वरभेदमरोचकम् ॥
पार्श्वशूलञ्च पार्श्वस्थो वर्चोभेदं गुदे स्थितः ।
जृम्भां ज्वरञ्च सन्धिस्थ उरःस्थश्चोरसो रुजम् ॥
क्षणनादुरसः कासात् कफं ष्ठीवेत् सशोणितम् ।
जर्ज्जरेणोरसा कृच्छ्रमुरःशूलातिपीड़ितः ॥
इति साहसिको यक्ष्मा रूपरेतैः प्रपद्यते ।
एकादशभिरात्मज्ञः सेवेतातो न साहसम् ॥ ५ ॥
ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् ।
वातमूत्रपूरीषाणां निगृह्णाति यदा नरः ॥

उरसि वक्षसि क्षते सति स्वप्रकोपणैः प्रकुपितो वायुरुभौ शेषौ पित्तकफौ दोषावुदीर्य्य विधावति। स पित्तश्लेष्मसहितो वायुः शिरःस्थः शिरःशूलं करोति। गलमाश्रितः कण्ठोद्‌ध्वंसं मुहुः कण्ठमुद्ध्वसत कासवत्। एवं कासञ्च करोति, स्वरभेदञ्च करोति, अरोचकञ्च करोतीति गलस्थवायुः। पार्श्वस्थश्च सपित्तकफो वायुः पार्श्वशूलं करोति। गुदे स्थितो वायुर्वर्च्चोभेदं करोति। सन्धिस्थो वायुः सपित्तकफो जृम्भां ज्वरञ्च करोति। उरःस्थो वायुरुरसो रुजं करोति। कासात् पुनः क्षतस्य उरसः क्षणनात् ततो जर्ज्जरेणोरसा उरःशूलप्रपीड़ितः सन कृच्छ्रं यथा स्यात् तथा सशोणितं कफं ष्ठीवेत्। इत्येवं साहसिको यक्ष्मा रोग एतैरेकादशभी रूपैलिङ्गैः प्रपद्यते। अतो हेतोरात्मज्ञः पुरुषो न साहसं सेवेत ॥ ५ ॥

गङ्गाधरः वेगसन्धारणहेतुकमाह ह्रीमत्त्वादित्यादि। व्याख्यातं निदानस्थाने सन्धारणं शोषस्यायतनमित्यादिना। राजादिसमीपेषु नरः पुरुषो ह्रीमत्त्वात् लज्जया घृणित्वाद् घृणया भयात् भयप्रसक्तेर्वा आगतं वातमूत्र-

चतुर्व्विधानतिक्रमोऽदर्शनार्थम्। निदानोक्तमपि राजयक्ष्महेत्वादि पुनः प्रकरणवशात् किञ्चिन्निदानोक्तविशेषविधित्सयोच्यते। उक्तं कारणचतुष्कं प्रपञ्चयति—युद्धेत्यादि। सहसा शक्तिमनालोच्य यानि क्रियन्ते तानि साहसानि। कफपित्तक्षणनादिव्याधिना रक्तकफनिष्ठीवनमेकमेव लक्षणमुरःशूलातिपीड़ित इत्यनेनोच्यते। शूलोरोरुकरक्तनिष्ठीवनविशेषणेनैव एकादशरूपत्वं पूर्य्यते ॥३—५॥

तदा वेगप्रतीघातात् कफपित्ते समीरयन् ।
ऊर्द्ध्वं तिर्य्यगधश्चैव विकारान् कुरुतेऽनिलः ।
प्रतिश्यायश्च कासश्च स्वरभेदमरोचकम् ।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्द्दनम् ॥
अङ्गमर्द्दो मुहुश्छर्द्दि र्वर्च्चोभेदं त्रिलक्षणम् ।
रूपाण्येकादशैतानि यक्ष्मा यैरुच्यते महान् ॥ ६ । ७ ॥
ईर्ष्योत्कण्ठाभयत्रास-शोकक्रोधातिकर्षणात् ।
अतिव्यवायानशनाच्छुक्रमोजश्च हीयते ॥

पुरीषादीनामधार्य्यं वेगं यदा निगृह्णाति तदा तद्वेगप्रतीघातात् कुपितोऽनिलः कफपित्ते समीरयन् सन् ऊर्द्ध्वं तिर्य्यगधश्च विकारान् कुरुते। यान् विकारान् कुरुते तानाह—प्रतिश्यायश्चेत्यादि। वर्च्चोभेदमतिसारम्। त्रिलक्षणमिति—प्रतिश्यायादिकमेकादशं त्रिदोषलक्षणं त्रिदोषजत्वात्। यैर्लिङ्गैर्महान् यक्ष्मोच्यते तान्येतान्येकादश रूपाणि भवन्ति ॥ ६ । ७ ॥

गङ्गाधरः—अथ क्षयहेतुकमाह—ईर्ष्योत्कण्ठेत्यादि। व्याख्यातश्च निदानस्थाने क्षयः शोषस्यायतनमित्यादिना। ईर्ष्यादिभिरतिकर्षणात्। अतिव्यवायानशनादिति यथायोग्यं शुक्रौजसोः क्षयहेतुत्वाद् यथाक्रमाद् वा। अतिव्यवायात् शुक्रं क्षीयते, अनशनादोजः क्षीयते, तथेर्ष्यादिभिरतिकर्षणादप्योजः क्षीयते। ओज इह हृदयस्थायी रस इति प्रोक्तं निदानस्थाने। तद्रसजत्वाद् द्रवत्वाच्च रस इत्युक्तमोज एव रसो हृदयस्थायी न त्वाहारजरसः स हि सर्व्वशरीरे सप्तभिर्नाडीशतैरुह्यते। ओजस्त्वर्द्धाञ्जलिपरिमितं यत् तत् खलु रसजत्वाद रसो हृदयस्थायी तत् क्षीयते न त्वष्टबिन्दुमात्रं तस्य क्षये मरणादिति कस्यचिद् व्याख्यानमयुक्तम्। ओजस्त्वर्द्धाञ्जलिमानमेवैकविधं न त्वधिकम्। अष्टबिन्दुमानमेवार्द्धाञ्जलिः कर्षमानं बिन्दुस्तत्पर्य्यायशब्दात्। तन्त्रान्तरविरोधश्च। तथा हि। कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु। अतिव्यवायिनो वापि क्षीणे

चक्रपाणिः—ह्रीमत्त्वादित्यादिना वेगसंधारणजमाह। वर्च्चोभेदं त्रिलक्षणमिति त्रिदोषलिङ्गमित्यर्थः पृथग्वातादिजनितम् ॥ ६ । ७ ॥

चक्रपाणिः—ईर्षेत्यादिना धातुक्षयजमाह। ओज इति रसः। रसेऽप्योजःशब्दो वर्त्तते, यदुक्तं—मलीभवति तत् प्रायः कल्पते किञ्चिदोजसे इति। किंवा ओजो देहस्य सारम्।

ततः स्नेहक्षयाद् वायुर्वृद्धो दोषावुदीरयन् ।
प्रतिश्यायं ज्वरं कासमङ्गमर्दं शिरोरुजम् ॥
श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् ।
करोति चांससन्तापमेकादशमहाग्रहः ॥
रूपाण्यावेदयन्त्येतान्येकादश महागदम् ।
संप्राप्तं राजयक्ष्माणं क्षयात् प्राणक्षयावहम् ॥ ८ ॥
विविधान्यन्नपानानि वैषम्येण समश्नताम् ।
जनयन्त्यामयान् घोरान् विषमान् मारुतादयः ॥

रेतस्यनन्तराः । क्षीयन्ते धातवः सर्व्वे ततः शुष्यति मानवः इति । विषमाशनजे रसस्य रुधिरभावापन्नत्वे वर्त्मरोधात् । सामान्योक्तस्य विशेषव्याख्या बोध्या । इत्येवमोजःक्षये शुक्रक्षये च यद्भवति तदाह—ततः स्नेहेत्यादि । ईर्ष्याद्यतिकर्षणानशनाभ्यां हृदयस्थरसक्षयादतिव्यवायाच्छुक्रक्षयाच्च शरीरस्नेहक्षयः स्यात् ततस्नेहक्षयाद् वायुर्वृद्धो भवति ; वृद्धश्च शेषौ दोषौ पित्तकफौ चोदीरयन् सन् प्रतिश्यायादि लिङ्गं करोति । एकादशमहाग्रह इति वायुविशेषणम् । गृह्णातीति ग्रहः । एकादश प्रतिश्यायादयो महान्तो ग्रहा यस्मात् स एकादशमहाग्रहहेतुर्वायुः । एतानि प्रतिश्यायादीन्येकादश रूपाणि महागदं राजयक्ष्माणं सम्प्राप्तं जातमावेदयन्ति । शुक्रौजसोः क्षयात् प्राणक्षयावहञ्च राजयक्ष्माणमावेदयन्तीति ॥ ८ ॥

गङ्गाधरः—विषमाशनहेतुकमाह—विविधानीत्यादि । विषमाशनं शोषस्य आयतनमित्यादिना निदानस्थाने व्याख्यातम् । विविधान्यन्नपानानीति पानाशनभक्ष्यलेह्योपयोगान् वैषम्येण समश्नताम् । प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयतो विषमानासेवमानानाम् । विषमा मारुतादयः । तेभ्यो विषमपानादिभ्यो वातपित्तश्लेष्माणो वैषम्यमापन्ना वृद्धा घोरान् आमयान्

स्नेहक्षयादिति देहसारशुक्रौजःक्षयात् । क्षयात् प्राणक्षयप्रदमित्यत्र क्षयहेतुत्वात् क्षयात् । प्राणक्षयावहमिति वा पाठः ॥ ८ ॥

चक्रपाणिः—विविधानीत्यादिना विषमाशनजमाह । वैषम्येणेति प्रकृतिकरणाद्यष्ट-

स्रोतांसि रुधिरादीनां वैषम्याद् विषमं गताः।
रुद्ध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः॥ ९॥
प्रतिश्यायं प्रसेकञ्च कासं छर्द्दिमरोचकम्।
ज्वरमंसाभितापञ्च छर्द्दनं रुधिरस्य च॥
पार्श्वशूलं शिरःशूलं स्वरभेदमथापि च।
कफपित्तानिलकृतं लिङ्गं विद्याद् यथाक्रमम्॥ १०॥
इति व्याधिसमूहस्य रोगराजस्य हेतुजम्।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्व्विधः॥ ११॥

जनयन्ति। यथा जनयन्ति तदाह स्रोतांसीत्यादि। विविधान्नपानानां वैषम्याद् विषमं गता मारुतादयः रुधिरादीनां स्रोतांसि सप्तशतनाड़ीभिः सर्व्वं देहं गतस्याहारजरसस्य रुधिरभावप्राप्तौ यानि स्रोतांसि रसस्य गमनस्य पन्थानस्तानि एवं रक्तादीनां परपरधातुत्वप्राप्तौ ये गतिपथास्तानि स्रोतांसि रुद्ध्वा वक्ष्यमाणप्रतिश्यायादयो रोगाय कल्पन्ते क्लृप्ता भवन्ति। ततश्च रुधिरादयो धातवो न पुष्यन्ति॥ ९॥

गङ्गाधरः— तत्र यो दोषो यं यं रोगं जनयति तदाह प्रतिश्यायमित्यादि। कफो दोषः प्रतिश्यायप्रसेककासच्छर्द्यरोचकान् करोति। पित्तन्तु ज्वरांसाभितापरुधिरच्छर्द्दनानि त्रीणि करोति। वायुः पार्श्वशूलशिरःशूलस्वरभेदान् करोतीत्येवं प्रतिश्यायादिकं सार्द्ध श्लोकोक्तं लिङ्गं यथाक्रमं कफपित्तानिलकृतं विद्यादिति॥ १०॥

गङ्गाधरः—उपसंहरति—इतीत्यादि। इत्येतदेकादशविधं रूपं व्याधिसमूहस्य प्रतिश्यायादिव्याधिसमूहलक्षणस्य रोगराजस्य राजयक्ष्मणो हेतुजं

विधाहा। वैषम्यात्। अतिप्रवृद्धा वातादयो वैषम्येणोन्मार्गेण गताः रुधिरादीनां स्रोतांसि रुद्ध्वा यक्ष्मरूपाय कल्पन्ते इति योजना। यथाक्रममिति प्रथमश्लोकार्द्धविहितं कफकृतं, द्वितीयश्लोकार्द्धविहितं पित्तकृतं, शेषन्तु वातकृतम्॥ ९। १०॥

चक्रपाणिः— अत्र प्रत्येकम् एकादशलक्षणपाठेन एकादशलक्षणयोगेनैव राजयक्ष्मणः सम्पूर्णत्वं प्रायो भवतीति दर्शयति। यत् तु षड्लक्षणत्वं त्रिलक्षणत्वं वा यक्ष्मणो वक्ष्यति, तत् सम्पूर्णलक्षणस्यैव ज्ञेयम्; न तु शेषाणाम्। अथ अयथाबलमारम्भादिभेदेन चातुर्व्विध्यभेदेन तान्येव लक्षणानि सर्व्वत्र भवन्ति। तथाच सर्व्वऽपि त्रिदोषजास्तेनैक-

पूर्व्वरूपं प्रतिश्यायो दौर्ब्बल्यं दोषदर्शनम्।
अदोषेष्वपि भावेषु काये वीभत्सदर्शनम्॥
घृणित्वमश्नतश्चापि बलमांसपरिक्षयः।
स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने॥

साहसादिप्रत्येकहेतुजमुक्तं चतुर्व्विधो हेतुश्चोक्त इति। ये तु व्याचक्षते—हेतुचतुष्टयान्मिलितादेव साहसादिचतुष्टयात् एव राजयक्ष्मा जायते न त्वेककस्मात् साहसादित इति, तदयुक्तं, यत इह निदानस्थाने च प्रत्येकहेतोस्त्रिदोषकोप एकादशरूपाणि सम्प्राप्तिश्चोक्ता इति॥ ११॥

गङ्गाधरः—पूर्व्वरूपाण्याह—पूर्व्वरूपमित्यादि। प्रतिश्यायादि—पततां यच्च दर्शनमित्यन्तं पूर्व्वरूपं व्याधिसमूहस्य रोगराजस्य भवति। तच्च बहुरूपस्य राजयक्ष्मणः प्राग्रूपं ज्ञेयम्। तत्र दोषदर्शनमदोषेष्वपि भावेषु। यत् द्रव्यादिकमदुष्टं तद् दुष्टवद् दृश्यते। काये स्वशरीरे वीभत्सदर्शनं निन्दितरूपदर्शनम्। घृणित्वमश्नतश्चापि, यदश्नाति तच्च घृणयाऽश्नाति। स्त्रीमद्यमांसप्रियता, स्त्रीषु मद्येषु मांसेषु भोगार्थं प्रियता भवति। अवगुण्ठने

रूपत्वाभिधानं युक्तम्। उक्तञ्च शल्ये—'एकप्रदेशानामेकत्र सान्निध्यात् तत्र क्रियायाश्चाविभागेन प्रायेण' इत्याद्यनेन च। 'एक एव मतः शोषः सन्निपातात्मको गदः' इतीहापि चोक्तम्। सर्व्वस्त्रिदोषजो यक्ष्मा इत्याद्युक्तं हेतुना लक्षणेन चतुर्णामपि भेदात् भिन्न एव इति युक्तम्। अत्र हेतवोऽयथाबलमारम्भादयः उक्ता एव, लिङ्गञ्च भिन्नं साहसजं, कण्ठोद्ध्वंस उरोरुक् जृम्भा च। वेगसन्धारणजे च अङ्गमर्द्दो मुहुश्छर्द्दिस्तथा वर्च्चोभेदस्त्रिलक्षणः। अन्यत्र हि वर्च्चोभेदस्त्रिलक्षणो न भवति। क्षयजे श्वासशूलसन्तापाः। विषमाशने छर्द्दनं रुधिरस्य, साहसजे प्रतिश्यायाभावः। शोषे तु प्रतिश्याय इत्यादिलक्षणभेदः। चिकित्सितभेदस्तु असाधारणलक्षणे कृत एव तस्माद् भेदो यक्ष्मणामित्र तन्त्रान्तरे स्थूलदृष्ट्या भेद उक्तः सूक्ष्मचिन्तायान्तु अयमेव भेदो युक्त्या ज्ञेयः। पुनश्च "इत्यादिना" दोषलक्षणानि वक्ष्यति तत् सामान्येन यक्ष्मणः प्रायोभाविलक्षणं चतुर्ष्वपि समुच्चित्योक्तमिति ज्ञेयम; तेन न पुनरुक्तम्॥ ११॥

चक्रपाणिः—सम्प्रति चतुर्णामपि साधारणं पूर्व्वरूपमाह—पूर्व्वरूपमित्यादि। प्रतिश्यायश्च रूपे पठितः। तेन प्रतिश्यायः पूर्व्वरूपं पूर्व्वरूपान्तरसहितं रूपमिति विशेषः। न चैक एव प्रतिश्यायः पूर्व्वरूपार्थोऽपि व्याध्यवस्थायां वर्त्तमानत्वाद् रिष्टं भवति पूर्व्वरूपाणि सर्व्वाणि इत्यादिना सर्व्वपूर्व्वरूपाणां रूपानुवर्त्तनाद् व्याधौ रिष्टं युक्तम्। काये वीभत्सदर्शनमिति

मक्षिकाघुणकेशानां तृणानां पतनानि च।
प्रायोऽन्नपाने केशानां नखानाञ्चाभिवर्द्धनम्॥
पतत्त्रिभिः पतङ्गैश्च श्वापदैश्चाभिधर्षणम्।
स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम्॥
जलाशयानां शैलानां वनानां ज्योतिषामपि।
शुष्यतां क्षीयमाणानां पततां यच्च दर्शनम्॥
प्रागरूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः।
रूपन्त्वस्य यथोद्देशं परं शृणु सभेषजम्॥ १२॥
यथास्वेनोष्मणा पाकं शारीरा यान्ति धातवः।
स्रोतसा च यथास्वेन धातुः पुष्यति धातुतः *॥

सुवस्त्रादिपरिच्छदे प्रियता च। प्रायोऽन्नपानेऽन्ने पाने मक्षिकादीनां पतनानि, केशानां नखानाञ्च छिन्नानामतिवर्द्धनम्। स्वप्ने पतत्त्रादिभिरभिधर्षणं दृश्यते। तथा केशराशीनामस्थिराशीनां भस्मनश्च राशीनां स्वप्नेऽधिरोहणम् आरोहणं दृश्यते। एवं स्वप्ने शुष्यतां क्षीयमाणानां जलाशयादीनां यच्च दर्शनं तत् पूर्व्वरूपमिति। रूपन्त्वस्येति। यथोद्देशं साहसक्षयवेगसन्धारणविषमाशनेभ्यो य उद्देशः संक्षेपोक्तिः कृतः तमनतिक्रम्यातः परं सभेषजं शृणु॥ १२॥

गङ्गाधरः—तत्र राजयक्ष्मण आहारपाको यथा भवति तदाह—यथास्वेनेत्यादि। सर्व्वेषां स्वस्थानामाहारात् जठराग्निना पक्वाज्जातरसादयः सर्व्वे शारीरा धातवो यथास्वेन स्वस्वस्थितेनोष्मणा पाकं यान्ति। यथा चतुर्व्विध आहारो जाठरेण अग्निना पाकं याति, प्रसादभागेन रसश्च जायते, किट्टेन मलमूत्रं,

विकृतिदर्शनम्। मक्षिकादीनां पतनानि अन्नपाने च योज्यम्। पतत्त्रादिभिरभिधर्षणं स्वप्ने ज्ञेयम्। पतत्त्रिणः पक्षिणः, श्वापदा व्याघ्रादयः, केशास्थिराशीनामित्यादौ यच्च दर्शनमित्यन्तेन स्वप्ने इत्यनुवर्त्तते। सम्प्रति यक्ष्मरूपाणि प्रपञ्चेन व्याख्यातुमाह—रूपं तस्येत्यादि। प्रपञ्चेन कथयिष्यामि॥ १२॥

चक्रपाणिः—रूपव्याकरणे कर्त्तव्ये यक्ष्मणः शरीरधातुपोषणविरोधकस्य धातुपोषणविरोधोपदर्शनार्थमाह—यथास्वेनेत्यादि। यथास्वेनोष्मणा त्रयोदशविधेन। धातुः पुष्यति धातुनेति—रसेन

* धातुना इति वा पाठः।

स्रोतसां सन्निरोधाच्च रक्तादीनाञ्च संक्षयात् ।
धातूष्मणाञ्चापचयाद् राजयक्ष्मा प्रवर्त्तते ॥ १३ ॥
तस्मिन् काले पचत्यग्निर्यदन्नं कोष्ठसंश्रितम् ।
मलीभवति तत् प्रायः कल्पते किञ्चिदोजसे ॥
तस्मात् पुरीषं संरक्ष्यं विशेषाद् राजयक्ष्मिणः ।
सर्व्वधातुक्षयार्त्तस्य बलं तस्य हि विड़्बलम् ॥ १४ ॥

तथा स रसः स्वस्मिन् स्थितेनोष्मणा क्रमात् पञ्चभिर्दिनैः पाकं याति, रक्तश्च प्रसादांशेन भवति, रक्तश्च स्वस्योष्मणा पाकं याति प्रसादांशेन मांसञ्च पञ्चाहेन जायते, इत्येवं रसादयो धातवः स्वेन स्वेनोष्मणा पाकं यान्ति यथास्वेन च स्रोतसा गच्छतः पूर्व्वपूर्व्वधातुतः परपरो धातुः पुष्यति । नैवं राजयक्ष्मिणः ; कस्मात् ? स्रोतसामित्यादि । आहारजा रसाः सप्तसु स्रोतःशतेषु गच्छन्तो येषु स्रोतःसु गत्वा रक्तानि भवन्ति तेषां स्रोतसां सन्निरोधान्न च रसो रक्तं जायते, ततो रक्तं न पुष्यति क्षयञ्च गच्छति, तस्य च मांसभावगतिपथरोधात् तत्क्षयान्मांसादीनाञ्च पोषणाभावात् क्षयो भवति । इत्येवं रक्तादीनां परपरधातुत्वप्राप्तौ स्रोतसां रोधात् संक्षयात् धातूष्मणाञ्चापचयो भवति, क्षीणे ह्याधारे भवत्याधेयोऽपि क्षीणः । ततो राजयक्ष्मा प्रवर्त्तते जायते ॥ १३ ॥

गङ्गाधरः—तस्मिन्नित्यादि । तस्मिन् राजयक्ष्मजन्मनः काले जाठरोऽग्निः कोष्ठसंश्रितमभ्यवहृतमन्नं यत् पचति तत् प्रायो मलीभवति मूत्रपुरीषं भवति, प्रसादांशस्तु किञ्चित् ओजसे कल्पते । अल्परसो भूत्वा यत्किञ्चित् स्रोतःपथेन गत्वा परपरधातुरल्पशो भूत्वा तेषां सारभागाय स खल्वोजसे क्लृप्तो भवति । तस्मात् इत्येवं यक्ष्मिणः पुरीषबहुलतयाहारपाकाद् विशेषात् पुरीषं भिषजा संरक्ष्यं यथा मलातिप्रवृत्तिर्न स्यात् तथा क्रियेत ।

धातू रक्तादिरूपः किंवा क्रमपरिणामपक्षे रसेन रक्तं रक्तेन मांसं पुष्यतीति ज्ञेयम् । एवं धातुपोषणक्रमं दर्शयित्वा यक्ष्मणि तद्विरोधमाह—स्रोतसामित्यादि । सन्निरोधादिति यक्ष्मकारकदोषेण निरुद्धत्वाद् रक्तादिसंक्षयोऽपि स्रोतोरोधात् तथा पोषकरसाप्राबल्याच्च ज्ञेयः । धातूष्मापचयोऽपि धातुक्षयाद् दोषप्रभावाच्च ज्ञेयः, यदा धातोः पोषकरसहानिर्भवति तदा ॥ १३ ॥

चक्रपाणिः—तस्मिन्नित्यादि । ओजसे इति सारभागाय रसायेति यावत् । विशेषाद् राजयक्ष्मिण इति वचनेन अन्येषामपि दुर्ब्बलानां पुरीषं रक्ष्यमिति सूचयति । विड्बलमिति विड़ाधारम् ॥ १४ ॥

रसः स्रोतःसु रुद्धेषु स्वस्थानस्थो विवर्द्धते।
स ऊर्द्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते॥
जायन्ते व्याधयश्चातः षड़ेकादश वा पुनः।
येषां संघातयोगेन राजयक्ष्मेति कल्प्यते॥ १५॥
कासोऽंसतापो वैस्वर्य्यं ज्वरः पार्श्वशिरोरुजा।
छर्द्दनं रक्तकफयोः श्वासो वर्च्चोगदोऽरुचिः॥
रूपाण्येकादशैतानि यक्ष्मिणः षड़िमानि तु।
कासो ज्वरः पार्श्वशूलं स्वरवर्च्चोगदोऽरुचिः॥ १६॥

किमर्थं पुरीषं संरक्ष्यमित्यत आह—सर्व्वधात्वित्यादि। सर्व्वधातुक्षयो हि यक्ष्मिणस्तस्य सर्व्वधातुक्षयात्तस्य विड़्बलमेव बलमिति॥ १४॥

गङ्गाधरः—ननु रसः सप्तसु स्रोतःशतेषु चरति येन स्रोतसा गच्छन् रक्तं भवति तत्स्रोतोरोधेन स्वस्रोतसां किं स्फीतता भवतीत्यत आह—रसः स्रोतःस्वित्यादि। रक्तभावगतो स्रोतःसु रुद्धेषु रस आहारजः स्वस्थानस्थ एव विवर्द्धते, न च रक्तपथेन गच्छति। स वृद्धो रसः बहुरूपः सन् कासवेगेन ऊर्द्ध्वं प्रवर्त्तते। एवं जायमाने राजयक्ष्मणि पुनरतः कारणात् षट् रूपाणि जायन्ते दोषस्य मध्यमबलेन कोपात्। अथवा सम्पूर्णबलेन कोपात् एकादश रूपाणि जायन्ते। यान्युक्तानि प्रागेकैककारणात् साहसादितः। येषाञ्च षण्णां वाप्येकादशानां संघातयोगाद् राजयक्ष्मेति कथ्यते, न त्वेकद्वियोगात॥ १५॥

गङ्गाधरः—ननु कानि तानि षट् रूपाणि चैकादश चेत्यत आह—कास इत्यादि। पार्श्वरुजा शिरोरुजा चेति द्वे रूपे। रक्तच्छर्द्दनं कफच्छर्द्दनञ्च। इत्येतान्येकादश रूपाणि यक्ष्मिणो भवन्ति। षड़िमानि। कासः ज्वरः पार्श्वशूलं स्वरगदः स्वरभङ्गः वर्च्चोगदोऽतिसारः अरुचिश्चेति षट् रूपाणि यानि त्वेकादश रूपाणि दोषभेदेनोक्तानि तेषु मध्ये यस्य दोषस्य यत् कार्य्यं तदिह चैकादशानां षण्णाञ्च तत् कार्य्यत्वं बोध्यम्॥ १६॥

चक्रपाणिः—यच्चापि रसबलमुपपद्यते तच्च धातून् न पुष्णाति किन्तु स्वस्थाने विवर्द्धते। स्वस्थानस्थ इति हृदयस्थः॥ १५।१६॥

सर्व्वैरर्द्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्व्वरूपोऽप्यतोऽन्यथा ॥ १७ ॥
घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा ।
मारुतध्मातशिरसो मारुतः श्यायते प्रति ॥

गङ्गाधरः—नन्वेवमेवं द्विविधसंघातयोगादेव किं राजयक्ष्मा भवत्यन्यथा वेत्यत आह—सर्व्वैरित्यादि । प्रतिकारणं यान्येकादश रूपाणि प्रोक्तानि तान्येव प्रतिसंस्कृत्येह चैकादशानि पुनः पठितानि । तैः सर्व्वैरेकादशभिः संघातयोगेन दोषाणां पूर्णबलेन, मध्यमबलेन च तेषां मध्ये यानि कानि च षट् रूपाणि तैः षड्भिः संघातयोगेन मध्यमबलात्, तेषामेकादशानां मध्ये यानि कानि च त्रीणि रूपाणि भवन्ति तैस्त्रिभिर्वा लिङ्गैः संघातयोगेनाधमबलाद् यो यक्ष्मा प्रवर्त्तते तैर्लिङ्गैर्युक्तो यक्ष्मा पुरुषस्य मांसबलयोः क्षये सति वर्ज्यो वर्ज्जनीयः स्यात् । अतो मांसबलक्षयादन्यथा मांसबलक्षयाभावे सति सर्व्व-रूपोऽपि एकादशरूपोऽपि षड्रूपो वा त्रिरूपो वा यक्ष्मा चिकित्स्यः स्यात् । एतेन षण्णां रूपाणां त्रयाणाञ्चानिर्द्देशः ख्यापितस्तेन सुश्रुतोक्तानि "भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् । स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ।" इति षड्रूपाणि; तथा "त्रिभिर्वा पीड़ितं लिङ्गैः श्वास-कासासृगामयैः" इति त्रिरूपाणि न विरुध्यन्ते । इति रूपाणि यक्ष्मणः साध्यस्य चासाध्यस्य चोक्तानि ॥ १७ ॥

गङ्गाधरः—तत्रैकादशानां प्रतिश्यायादीनां प्रत्येकं लक्षणान्याह प्रसङ्गात् प्रतिश्यायादिरोगोपदेशं चिकीर्षुराचार्य्यः—घ्राणमूल इत्यादि । घ्राणमूले नासिकामूले स्थितः श्लेष्मा तथा पित्तं वा रुधिरं वा मारुतो वा मारुत-ध्मातशिरसो वायुना ध्मातं शब्दितं शिरो यस्य तस्य प्रति श्यायते ।

चक्रपाणिः—सर्व्वैरित्येकादशभिः, अर्द्धैरिति षड्भिरेकादशस्य ज्येष्ठभागपरिग्रहात् षडेषामर्द्धं भवति । दृष्टा चैषा विधा, यथा—त्रिंशन्मता स्नेहा निरूहान्तरिताश्च षट् स्युरित्यनेनोक्तः । त्रिभि-रित्यादि । त्रीणि यक्ष्मणो रूपाणि ज्ञेयानि शृङ्गग्राहिकया निर्द्देशात् । अन्ये तु अंसपार्श्वाभि-तापश्चेत्यादि वक्ष्यमाणं लक्षणत्रयं वर्णयन्ति । केचित् तु अंसपार्श्वाभितापश्चेत्यादिकं यक्ष्मसम्बन्धं क्षयलक्षणं वदन्ति । अन्यथेति बलमांसयोगे सति ॥ १७ ॥

चक्रपाणिः—प्रतिश्यायं विवृणोति । घ्राणविप्लवो गन्धाघ्राणादिरूपः । यक्ष्मा खातः

प्रतिश्यायस्ततो घोरो जायते देहकर्षणः।
तस्य रूपं शिरःशूलं गौरवं घ्राणविप्लवः॥
ज्वरः कासः कफोत्क्लेशः स्वरभेदोऽरुचिः क्लमः।
इन्द्रियाणामसामर्थ्यं यक्ष्मा चातः प्रजायते॥ १८॥
पिच्छिलं बहुलं विस्रं हरितं श्वेतपीतकम्।
व्यापन्नं ष्ठीवति रसं कासन् यक्ष्मी कफानुगम्॥ १९॥
अंसपार्श्वाभितापश्च सन्तापः करपादयोः।
ज्वरः सर्व्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः॥ २०॥
वातात् पित्तात् कफाद् रक्तात् कासवेगात् सपीनसात्।
स्वरभेदो भवेद् वाताद् रुक्षः क्षामश्चलः स्वरः॥

ततो घोरो देहकर्षणः प्रतिश्यायो जायते। इति श्लैष्मिको रौधिरः पैत्तिको वातिकश्चेति चतुर्व्विधः प्रतिश्यायः। तस्य रूपं शिरःशूलादिकमेकादशविधम्। घ्राणविप्लवः क्लेदेन नासापुटपूर्णता। यक्ष्मा राजयक्ष्मा। इत्येवं प्रतिश्यायाद् यक्ष्मा जायते॥ १८॥

गङ्गाधरः—कथं कासो जायते तदाह—पिच्छिलमित्यादि। साहसाद्यन्यतमकारणदुष्टास्त्रयो दोषा यस्य त्वेवं प्रतिश्यायं कुर्व्वन्ति स यक्ष्मी व्यापन्नं रक्तभावगतिपथरुद्धं रसं पिच्छिलादिरूपं कफानुगं कासन् सन् ष्ठीवतीत्येवं यक्ष्मिणः कासो भवति॥ १९॥

गङ्गाधरः—ज्वरस्तु यथा भवति तदाह—अंसेत्यादि। अंसो भुजस्य उपरिभागः। तस्य सन्तापः शूलम्। एवं पार्श्वसन्तापः पार्श्वशूलम्। करपादयोः सन्तापो ज्वाला, विशेषेण सर्व्वाङ्गगश्च सन्ताप इति यस्य स राजयक्ष्मणो लक्षणं ज्वरः॥ २०॥

गङ्गाधरः—तस्य लक्षणं स्वरभेद उक्तस्तमाह—वातादित्यादि। वातादिषट्कारणात् स्वरभेदो राजयक्ष्मणो लक्षणं भवेत्, तत्र वातात् स्वरभेदे

प्रजायत इत्यनेनोक्तलक्षणप्रतिश्यायस्यैव पूर्व्वरूपतां सूचयति। स ऊर्द्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते यदुक्तं यक्ष्मरूपं तद्विवृणोति, पिच्छिलमित्यादि। राजयक्ष्मण क्षयस्य विशिष्टं लक्षणमाह। अंसेत्यादिलक्षणं राजयक्ष्मण इति॥ १८—२०॥

तालुकण्ठपरिप्लोषः पित्ताद् वक्तुमसूयते।
कफाद् भेदो विबन्धश्च स्वरः खुनखुनायते॥
सद्योरक्तविबन्धत्वात् स्वरः कृच्छ्रात् प्रवर्त्तते।
कासातिवेगात् करुणः * पीनसात् कफवातिकः॥ २१॥
पार्श्वशूलन्त्वनियतं सङ्कोचायामलक्षणम्।
शिरःशूलं ससन्तापं यक्ष्मिणः स्यात् सगौरवम्॥ २२॥
अतिखिन्ने † शरीरे तु यक्ष्मिणो विषमाशनात्।
कण्ठात् प्रवर्त्तते रक्तं श्लेष्मा चोत्क्लिष्टसञ्चितः॥

रुक्षश्च क्षामश्च स्वरो भवति। पित्तात् स्वरभेदे तालुकण्ठपरिप्लोषः। परिप्लोषो दाहः। वक्तुमसूयते वाक्यवचनेऽसूया भवति। कफात् स्वरस्य भेदो विबन्धश्च, स्वरः खुनखुनायते च। रक्तात् स्वरभेदे रक्तनिष्ठीवनं न भूत्वा यदा बन्धः स्यात् तदा स्वरः कृच्छ्रात् प्रवर्त्तते। कासातिवेगात् स्वरभङ्गे करुणः स्वरः कातरः स्वरः। पीनसात् स्वरभेदे कफवातिकः स्वरः॥ २१॥

गङ्गाधरः—एवंराजयक्ष्मणि पार्श्वशूलमाह—पार्श्वशूलमित्यादि। पार्श्वशूलं पार्श्वयोः सङ्कोच आयामो दैर्घ्यं लक्षणं यस्य तत् कदाचित् पार्श्वयोः सङ्कोचः कदाचिदायाम इत्यनियतम्। यक्ष्मणि शिरःशूलं शिरसः सन्तापसहितं गौरवमुच्यते॥ २२॥

गङ्गाधरः—छर्दनं रक्तकफयोरिति यदुक्तं तदाह—अतिखिन्न इत्यादि। यक्ष्मिणः शरीरेऽतिखिन्ने सति विषमाशनात् रक्तं कण्ठात् प्रवर्त्तते। इति रक्तच्छर्दनम्। तथा उत्क्लिष्टः सञ्चितः श्लेष्मा च कण्ठात् प्रवर्त्तते। इति

चक्रपाणिः—स्वरभेदं विभजते। वक्तुमसूयत इति वक्तुं नेच्छति। खुरखुरायते इति खुरखुरशब्दं करोति। सन्नोऽवसन्नः। कषण इति कण्ठं कषति हिनस्तीति यावत्॥ २१॥

चक्रपाणिः—पार्श्वशूलन्त्वनियतमिति न सङ्कोचरूपेण नियतम्। कदाचिदायामरूपं कदाचित् सङ्कोचरूपं न सर्व्वदा। भाविशिरःशूलत्वेन वायुम्, ससन्तापत्वेन पित्तम्, सगौरवत्वेन श्लेष्माणम् एवं त्रिदोषजन्यत्वं ज्ञेयम्॥ २२॥

चक्रपाणिः—सरक्तं कफमस्यतीति यदुक्तं तल्लक्षणं विवृणोति—अभिसन्न इति। अभितः सन्नोऽभिसन्नः। अभिष्यन्द इति पाठपक्षेऽभिष्यन्दगृहीत इत्यर्थः। किन्त्वभिपूर्व्वस्यन्दनेः

---

* कषण इति चक्रधृतः पाठः।　　† अभिसन्न इति चक्रः।

रक्तं विबद्धमार्गत्वान्मांसादीन् नानुपद्यते।
आमाशयस्थमुत्क्लिष्टं बहुत्वात् कण्ठमेति वा॥ २३॥
वातश्लेष्मविबन्धत्वादुरसः श्वासमृच्छति॥ २४॥
दोषैरुपहते चाग्नौ सपिच्छमतिसार्य्यते॥ २५॥
पृथग्दोषः समस्तैश्च जिह्वाहृदयसंस्थितैः।
जायतेऽरुचिराहारैर्द्विष्टैरर्थैश्च मानसैः॥

कफच्छर्दनम्। अथवान्यथा रक्तच्छर्दनं भवति तदाह—रक्तमित्यादि। रक्तं मांसादिभावप्राप्तौ विबद्धमार्गं तस्मान्मांसादीन् नानुपद्यते यच्च किञ्चित् जायते तदामाशये तिष्ठति। आमाशये स्थितं यदा बहु भवति तदोत्क्लिष्टं सत् कण्ठमेतीति वा रक्तच्छर्दनं भवति॥ २३॥

गङ्गाधरः—श्वासस्तु यक्ष्मिणो यथा स्यात् तदाह—वातश्लेष्मेत्यादि। वातश्लेष्मणोः मिलितयोरुरसि विबद्धत्वादुच्छ्वासपथरोधादुरसो वक्षसः श्वासमृच्छति यक्ष्मी॥ २४॥

गङ्गाधरः—वर्च्चोगदश्चैवं भवति—अग्नौ वातादिभिर्दोषैरुपहते सति सपिच्छं पिच्छासहितमतिसार्य्यते द्रवपुरीषमिति वर्च्चोगदो भवति॥ २५॥

गङ्गाधरः—अरुचिस्तु यक्ष्मिणस्त्वेवं भवति—पृथग्दोषैरित्यादि। जिह्वाहृदयसंस्थितैर्वातपित्तकफैर्दोषैः पृथक् समस्तैश्च यक्ष्मिण आहारेऽरुचिर्जायते।

कथं रूपसिद्धिर्भवतीति चिन्तनीया। सञ्चितोत्क्लिष्टमिति वक्तव्ये पूर्व्वनिपातनियमादुत्क्लिष्ट-सञ्चित इति कृतम्। केवलरुधिरच्छर्द्दनेन युक्तं विवृणोति—रक्तमित्यादि। विबद्धमार्गत्वादिति रक्तस्य मांसाद्यभिगमे यो मार्गः तन्निरोधात् मांसादीननभिगच्छद् रक्तमामाशये एव कृताधिष्ठानं प्रस्रवणजलमिव विबद्धमार्गत्वाद् बहु भवति। बहुत्वेनोत्क्लिष्टं द्वारान्तरागमनात् कण्ठमेति। एवं रक्तस्य पोषकरसेनासम्बन्धात् क्षीयमाणस्यामाशये एव बहुत्वं ज्ञेयम्। तेन रक्तादीनाञ्च संक्षयादित्यनेन रक्तक्षयो य उक्तः स उपपन्न एव॥ २३॥

चक्रपाणिः—रोगाधिकारे पञ्च भक्तस्यानशनस्थानानीति वातपित्तकफद्वषायासा इत्यनेन यद्यपि त्रिदोषजारुचिर्नोक्ता, तथापि चिकित्सार्थं द्वन्द्वजगुल्मवत् त्रिदोषजारुचिरुच्यते। वक्ष्यति—चतुरोऽरोचकान् हन्युः वातादेरेकजसर्व्वजानिति। इयञ्च त्रिदोषजारुचिः प्रकृतिसमसमवायारब्धा, तेन रोगाधिकारे प्रत्येकदोषजारुचिर्गृहीतैव। प्रकृतिसमसमवायारब्धत्वेनैव त्रिदोषजारुचेः

कषायतिक्तमधुरैर्विद्यान्मुखरसैः क्रमात् ।
वाताद्यैररुचिं जातां मानसीं दोषदर्शनात् ॥ २६ ॥
अरोचकात् कासवेगाद् दोषोत्क्लेशाद् भयादपि ।
छर्द्दिर्या सा विकाराणामन्येषामप्युपद्रवः ॥ २७ ॥
सर्व्वस्त्रिदोषजो यक्ष्मा दोषाणान्तु बलाबलम् ।
परीक्ष्यावस्थिकं वैद्यः शोषिणं समुपाचरेत् ॥ २८ ॥

मानसैर्द्विष्टैरर्थैर्मनोघ्नवस्तुभिश्चारुचिरागन्तुजो जायते। तत्र मुखस्य कषाय-रसेन वातजारुचिं विद्यात्। तिक्तरसेन पित्तजारुचिं, मधुररसेन कफजारुचिं, समस्तैश्च वाताद्यैर्जातामरुचिं समस्तमुखरसैः कषायतिक्तमधुरैर्विद्यात्। मानसीं मनोघ्नजामरुचिं दोषदर्शनाद् विद्यात्। स्वाभाविकश्च मुखं तत्र वर्त्तते न च रुचिराहारे स्यादिति। इत्येवं प्रतिश्यायजकासादीन्येकादश रूपाणि यक्ष्मिणो भवन्ति ॥ २६ ॥

गङ्गाधरः—तत्रोपद्रवश्छर्द्दिर्भवति तद् यथा स्यात् तदाह—अरोचकात् इत्यादि। यक्ष्मिणोऽरोचकादितो या छर्द्दिर्भवति सा तूपद्रवः। एवमन्येषां विकाराणां या छर्द्दिररोचकादितो जायते सापि तस्य तस्य रोगस्योपद्रव इति ॥ २७ ॥

गङ्गाधरः—इति राजयक्ष्मणो रूपाणां लक्षणान्युक्त्वा चिकित्साक्रममाह—सर्व्वस्त्रिदोषज इति। सर्व्वो यक्ष्मा त्रिदोषजस्तत्रापि दोषाणां बलाबलं पुंस आवस्थिकं बलाबलञ्च परीक्ष्य वैद्यः शोषिणं यक्ष्मिणं समुपाचरेत् ॥ २८ ॥

पृथक् लक्षणं नोक्तम्। अतो वातादिलक्षणमेलक एव तस्याः लक्षणम्। कषायमुखरसता वातजायां, तिक्तमुखरसता पैत्तिकायां, मधुरमुखरसता कफजायाम्। त्रिदोषजायान्तु त्रिदोष-मुखरसतोन्नेया। दोषदर्शनादिति द्विष्टदर्शनात् ॥ २४—२६ ॥

चक्रपाणिः—छर्द्दिं विभजतेऽरोचकादित्यादि। विकाराणामन्येषामपि उपद्रव इति—एवम्भूता छर्द्दिर्न यक्ष्ममात्रनियता किन्त्वन्येषामपि विकाराणामेवंभूता छर्द्दिर्भवति। किंवा एवम्भूता या छर्द्दिः सा भवति। तथारोचकादिभ्य उत्थिता छर्द्दिरन्येषामपि हिक्काराजयक्ष्मादीनामुपद्रवो भवतीत्यर्थः ॥ २७ ॥

चक्रपाणिः—सम्प्रति सर्व्वेषां यक्ष्मणां सामान्यरूपं त्रिदोषजत्वं प्रतिपाद्य दोषबलाबलभेदेन

प्रतिश्याये शिरःशूले कासे श्वासे स्वरक्षये।
पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु ॥ २९ ॥
पीनसे स्वेदमभ्यङ्गं धूममालेपनानि च।
परिषेकावगाहांश्च पानकं वाट्यमेव च ॥
लवणाम्लकटूष्णांश्च रसान् स्नेहोपबृंहितान्।
लावतित्तिरिदक्षाणां वर्त्तकानाञ्च कल्पयेत् ॥ ३० ॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम्।
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत्।
तेन षड् वै निवर्त्तन्ते विकाराः पीनसादयः ॥ ३१ ॥

गङ्गाधरः—तत्र क्रिया आह—प्रतिश्याय इत्यादि। प्रतिश्यायादिषु षट्सु साधारणीः क्रियाः शृणु ॥ २९ ॥

गङ्गाधरः—तद् यथा—पीनसे इत्यादि। प्रतिश्यायमन्तरेण नैते शिरःशूलादयः पञ्च जायन्ते। तस्मादादौ पीनसे प्रतिश्याये जाते स्वेदादिकं कल्पयेत्। पानकं पानीयद्रव्यं, वाट्यो यवमण्डः। लावतित्तिरिदक्षाणां वर्त्तकानाञ्च मांसस्य लवणाम्लकटूष्णांश्च रसान् स्नेहोपबृंहितान् वैद्यः कल्पयेत् ॥ ३० ॥

गङ्गाधरः—इति सूत्रमुक्त्वा तदुदाहरणमाह—सपिप्पलीकमित्यादि। पिप्पलीयवकुलत्थनागरदाडिमफलामलकफलानि षडङ्गपरिभाषया अर्द्धशृतं क्वाथं कृत्वा तत्र सुस्विन्नयोग्ये क्वाथेऽजमांसस्य रसे घने तनुकेऽच्छतरे च कर्त्तव्ये क्रमेण द्वादशपलषट्पलपलमात्रं नीत्वा पचेत् यावत् रसो घनादिरूपो भवेत्। ततः स्नेहेन संस्कृतं सम्भृत्य कुर्य्यात्। तद्रसं पिबेत्। तेन पीनसादयः प्रतिश्यायशिरःशूलकासश्वासस्वरक्षयपार्श्वशूलानि निवर्त्तन्ते। इत्येको योगः ॥ ३१ ॥

च भेदं सूचयित्वा सामान्याञ्च विशेषाञ्च चिकित्सां सूचयन्नाह—सर्व्वं इत्यादि। विविधा इति भिन्नाः। साधारणीरित्यनेनाभिन्नाश्च शृण्विति योज्यम्। तत्र विविधाः प्रत्येकं पीनसादिविहिता ज्ञेयाः। साधारणीस्तु षडङ्गरसादिरूपाः साधारणविहिता ज्ञेयाः ॥ २८—३० ॥

चक्रपाणिः—सपिप्पलीकमित्यादिके रसे यवागूसाधनवद्द्रव्यादिमानं ज्ञेयम्। मांसमानन्तु

मूलकाना कुलत्थाना यूषैर्वा सूपसंस्कृतैः ।
यवगोधूमशाल्यन्नैर्यथासात्म्यमुपाचरेत् ॥ ३२ ॥
पिबेत् प्रसादं वारुण्या जलं वा पाञ्चमूलिकम् ।
पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा ।
तामलक्याथ वा सिद्धं तेन चान्नानि कल्पयेत् ॥ ३३ ॥
कृशरोत्कारिकामाष-कुलत्थयवपायसैः ।
सङ्करस्वेदविधिना कण्ठं पार्श्वोरसी शिरः ॥
स्वेदयेत् पत्रभङ्गेण शिरश्च परिषेचयेत् ।
बलागुडूचीमधुक-शृतैर्वा वारिभिः सुखैः ॥

गङ्गाधरः—मांसरससमुच्चया यूषानाह मूलकानामित्यादि। मूलकानां शुष्काणां कुलत्थानाञ्च सूपसंस्कृतैर्मरिचादिना सुष्ठूपसंस्कृतैः यूषैः सूपैर्वा यवगोधूमशालीनां यथासात्म्यमन्नैरुपाचरेत् ॥ ३२ ॥

गङ्गाधरः—प्रतिश्यायादिषु षट्सु पानार्थमाह—पिबेदित्यादि। तेषु षट्सु वारुण्याः प्रसादमुपरितनस्वच्छांशं पिबेत्, अथवा पाञ्चमूलिकं विल्वादिपञ्चमूलस्य जलं षडङ्गपरिभाषयाद्धशृतं क्वाथं पिबेत्, अथवा चतसृभिः पर्णिनीभिः शालपर्णीपृश्निपर्णीमुद्गपर्णीमाषपर्णीभिः शृतं जलम्, अथवा धान्यनागरकेण शृतं पिबेत्, अथवा तामलक्या भूम्यामलक्या सिद्धं जलं पिबेत्। एवं तेन पञ्चमूल्यादिजलेन चान्नानि कल्पयेत् षडङ्ग-परिभाषयाद्धशृतेन ॥ ३३ ॥

गङ्गाधरः—स्वेदानाह—कृशरेत्यादि। कृशरं तिलकल्कः उत्कारिका माषकलायकुलत्थयवपायसैः सङ्करस्वेदविधानेन कण्ठं पार्श्वमुरः शिरश्च स्वेदयेत्। पत्रभङ्गेण पेषणघर्षणादिना कृतो द्रवः, इह तु शिरोरोगोक्तकुष्ठादि-द्रव्यं द्रवीकृत्य तद्द्रवैः शिरश्च परिषेचयेत्। बलादिशृतैर्वारिभिर्वा सुखैः

पलानि द्वादश। सूपसंस्कृतैरिति सुष्ठूपसंस्कृतैः। तेनेति पञ्चमूल्यादिसंस्कृतजलेन। तिलतण्डुल-मात्रैस्तु कृशरा ज्ञेया। पत्रभङ्गक्वाथेन पत्रभङ्गाश्च वातहरपल्लवाः। सवातिकैरिति तन्त्रान्तरे तु वातिकान्युत्तरवातिकानि च गुणेन पठितानि। यथा—विल्वाग्निमन्थकाश्मर्यं श्रेयसी पाटला घला। शालपर्णी पृश्निपर्णी बृहती कण्टकारिका। वर्द्धमानं मूलकञ्च वातिकान्यवतारयेत्। कारमर्दबदरं विल्वं कुलत्थान् शुष्कमूलकान्। श्वदंष्ट्रा वेणुपर्णी च माषगन्धा * * ।

वस्तमत्स्यशिरोभिर्वा नाड़ीस्वेदं प्रयोजयेत् ।
कण्ठे शिरसि पार्श्वे च पयोभिर्वा सवातिकैः ॥
औदकानूपमांसानि सलिलं पाञ्चमौलिकम् ।
सस्नेहमारनालं वा नाड़ीस्वेदं प्रयोजयेत् ॥ ३४ ॥
जीवन्त्याः शतपुष्पाया बलाया मधुकस्य च ।
वचाया वेशवारस्य विदार्य्या मूलकस्य च ॥
औदकानूपमांसानामुपनाहाश्च संस्कृताः ।
शस्यन्ते च चतुःस्नेहाः शिरःपार्श्वांसशूलिनाम् ॥ ३५ ॥
शतपुष्पा समधुकं कुष्ठं तगरचन्दने ।
आलेपनं स्यात् सघृतं शिरःपार्श्वांसशूलनुत् ॥ ३६ ॥

सुखोष्णैः शिरः परिषेचयेत् । एवं वस्तमत्स्ययोः शिरोभिरुत्क्वथितैर्नाड़ीस्वेदं प्रयोजयेत् । कण्ठे शिरसि पार्श्वे च प्रयोजयेदिति योजना । एवं सवातिकैर्वातघ्नभद्रदार्व्वादिभिः कल्कैश्चतुर्गुणजलेन शृतैः पयोभिर्नाड़ीस्वेदं प्रयोजयेत् । अथवा औदकमांसम् आनूपमांसञ्च एकत्रोत्क्वाथ्य नाड़ीस्वेदं प्रयोजयेत् । अथवा पाञ्चमूलिकसलिलं नाड़ीस्वेदं प्रयोजयेत् । अथवा सस्नेहमारनालं नाड़ीस्वेदं प्रयोजयेत् ॥ ३४ ॥

गङ्गाधरः—अथालेपनमाह—जीवन्त्या इत्यादि । जीवन्त्यादीनां प्रत्येकम् उपनाहाश्चतुःस्नेहयुक्ताः संस्कृता उष्णीकृताः शिरःपार्श्वांसशूलिनां शस्यन्ते । अथवा शतपुष्पामधुककुष्ठतगररक्तचन्दनैः सघृतमालेपनं शिरःपार्श्वांसेषु दत्तं शिरःपार्श्वांसशूलनुत् स्यात् ॥ ३५ । ३६ ॥

ऋष्यप्रोक्ता गुडूची च मधुकं शिग्रुरेव च । यवाग्वश्च * यच्चान्यत् किञ्चिदौषधम् । सर्व्वमेतद् विजानीयाद् भिषगुत्तरवातिकमिति । नाड़ीस्वेदं प्रयोजयेदिति नाड़ीस्वेदं यथायोग्यतया प्रयोजयेत् ॥ ३१—३४ ॥

चक्रपाणिः—जीवन्त्यादीनां प्रत्येकमुपनाहा ज्ञेयाः । वेसवारो यथा—'अनस्थिपिशितं पिष्टं स्विन्नं गुड़घृतान्वितम् । कृष्णामरीचसंयुक्तं वेसवार इति स्मृतः' इति ॥ ३५ । ३६ ॥

बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलम्।
पलङ्कषा देवदारु चन्दनं केशरं घृतम्॥
वीरा बला विदारी च कृष्णगन्धा पुनर्नवा।
शतावरी पयस्या च कत्तृणं मधुकं घृतम्॥
चत्वार एते श्लोकार्द्धैः प्रदेहाः परिकीर्त्तिताः।
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम्॥ ३७॥
नावनं धूमपानानि स्नेहाश्चौत्तरभक्तिकाः।
तैलान्यभ्यङ्गयोगश्च वस्तिकर्म्म तथापरम्॥
शृङ्गालाबूजलौकाभिः प्रदुष्टं व्यधनेन च।
शिरःपार्श्वांसशूलेषु रुधिरं तस्य निर्हरेत्॥ ३८॥

गङ्गाधरः—बलेत्यादि। शिरःपार्श्वांसशूलिनां संसृष्टदोषाणां शस्ता बलादिभिः श्लोकार्द्धैरेते चत्वारः प्रदेहाः परिकीर्त्तिताः। बलादिनीलोत्पलान्तैरेकः प्रदेहः, उष्णबहल उपलेपः। पलङ्कषादिघृतान्तैः द्वितीयः। वीरादिपुनर्नवान्तैस्तृतीयः। शतावर्य्यादिघृतान्तैश्चतुर्थ इति॥ ३७॥

गङ्गाधरः—प्रदेहानुक्त्वा धूमादीनाह—नावनमित्यादि। नावनं नस्यविशेषः। धूमपानानि स्नेहाश्चैते सर्व्वे औत्तरभक्तिका योज्याः। तैलानि वातकफहारिद्रव्यसिद्धानि। अभ्यङ्गयोगः। वस्तिकर्म्म च सिद्धिस्थानोक्तं योज्यं तथाऽपरं योज्यम्। तद्यथाह शृङ्गालाबजलौकाभिरित्यादि। शिरःपार्श्वांसशूलेषु तस्य यक्ष्मिणः प्रदुष्टं चेद् रक्तं वर्त्तते, तदा शृङ्गादिभिः सिराव्यधनेन च तत् प्रदुष्टं रुधिरं निर्हरेत्॥ ३८॥

चक्रपाणिः—पलङ्कषा गुग्गुलुः। पयस्या क्षीरकाकोली। शिरःपार्श्वांसशूलिनां शस्ता इति योज्यम्॥ ३७॥

चक्रपाणिः—शृङ्गालाबुजलौकोभिरित्यत्र पित्तदुष्टे जलौका, कफदुष्टे रक्तेऽलाबुः, वातदुष्टे तु शृङ्गं ज्ञेयम्। यदुक्तं—'पित्ताचितं जलौकोभिरलाब्वा तु कफान्वितम्। शोणितं वातदुष्टन्तु विषाणेनाशु निर्हरेत्'' इति। व्यधनन्तु सिराव्यधरूपम्॥ ३८॥

प्रदेहः सघृतश्चेष्टः पद्मकोशीरचन्दनैः।
दूर्व्वामधुकमञ्जिष्ठा-केशरैर्वा घृतप्लुतैः॥
प्रपौण्डरीकं पद्मस्य केशरं नीलमुत्पलम्। *
कशेरुकाः पयस्या च ससर्पिष्कं प्रलेपनम्॥ ३९॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा।
अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना॥
माहेन्द्रेण सुशीतेन चन्दनादिश्रृतेन वा।
परिषेकः प्रयोक्तव्य इति संशमनी क्रिया॥ ४०॥
दोषाधिकानां वमनं शस्यते सविरेचनम्।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम्॥

गङ्गाधरः—तद्रुधिरनिर्हरणानन्तरं प्रदेहश्च देय इति तदाह—प्रदेह इत्यादि। पद्मकोशीरचन्दनैः सघृतः प्रदेहश्चेष्टः। अथवा घृतप्लुतैः दूर्व्वादिभिः प्रदेह इष्टः। एवं प्रपौण्डरीकादि सर्पिरन्तं द्रव्यं प्रलेपनमिष्टम्। पुण्डरीयकाष्ठ-पद्मकिञ्जल्क-नीलोत्पल-कशेरुकाः पयस्या क्षीरकाकोली घृतञ्च इत्येतैर्लेपनं शोणितनिर्हरणानन्तरमिष्टम्॥ ३९॥

गङ्गाधरः—अथ संशमनक्रियासूत्राण्याह चन्दनादिनेत्यादि। ज्वराधिकारेऽभिहितेन चन्दनाद्येन तैलेनाभ्यङ्गः। शतधौतेन सर्पिषा वाभ्यङ्गः शस्तः। पयसा सेकः शस्तः। मधुकाम्बुना सेकश्च शस्तः। सुशीतेन माहेन्द्रेण जलेन सेकश्च शस्तः। चन्दनादिश्रृतेन वा ज्वराधिकारोक्तचन्दनादिद्रव्यश्रृतेन जलेन वा परिषेकः प्रयोक्तव्यः। इति राजयक्ष्मणः प्रतिश्यायादीनां संशमनी क्रिया॥ ४०॥

गङ्गाधरः—अथ राजयक्ष्मणः पुनरतिशयदोषे चिकित्सितमाह—दोषाधिकानामित्यादि। दोषाधिकानां यक्ष्मिणां स्नेहस्वेदोपपन्नानां सविरेचनं वमनं शस्यते। आदौ स्नेहकर्म्मस्वेदकर्म्मभ्यामुपपाद्य सस्नेहं वमनं कारयेत्, ततः परं सस्नेहञ्च विरेचनं कारयेत्। यद् वमनं विरेचनञ्च न शरीरस्य कर्षणं

* प्रपौण्डरीकनिर्गुण्डी-पद्मकेशरमुत्पलम्। इति चक्रधृतः पाठः।

शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि ।
अबलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते ॥ ४१ ॥
योगात् संशुद्धकोष्ठानां कासे श्वासे स्वरक्षये ।
शिरःपार्श्वांसशूलेषु सिद्धानेतान् प्रयोजयेत् ॥ ४२ ॥
बलाविदारिगन्धाभ्यां पिप्पल्या मधुकेन च ।
सिद्धं सलवणं सर्पिर्नस्यं स्वर्य्यमनुत्तमम् ॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ।
साधितं क्षीरसर्पिश्च तत् स्वर्य्यं नावनं घृतम् ॥ ४३ ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासनिवर्हणम् ।
प्रयुज्यमानं बहुशो घृतमौत्तरभक्तिकम् ॥
दशमूलेन पयसा सिद्धं मांसरसेन च ।
बलागर्भं घृतं सद्यो रोगानेतान् प्रबाधते ॥

भवति। कस्मात्? तत्राह शोषीत्यादि। शोषी राजयक्ष्मी पुरीषस्रंसनात् अपि गात्राणि मुञ्चति म्रियते। तत्राबलापेक्षिणीं मात्रां यो यक्ष्मी विरिच्यते तस्य पुनः किं? स तु गात्राणि झटित्येव मुञ्चति। तस्माद् बलापेक्षिणीं मात्रां यक्ष्मी विरिच्येत ॥ ४१ ॥

गङ्गाधरः—योगादित्यादि। योगात् सम्यग्योगात् दोषाधिकानां यक्ष्मिणां स्नेहस्वेदोपपन्नानां वमनविरेचनाभ्यां संशुद्धकोष्ठानां कासादिषु पञ्चसु एतान् सिद्धान् वक्ष्यमाणान् योगान् प्रयोजयेत् ॥ ४२ ॥

गङ्गाधरः तान् सिद्धान् योगानाह बलाविदारीत्यादि। बलाविदारिगन्धाशालपर्णीपिप्पलीयष्टीमधुकं सैन्धवञ्चेत्येतैः सिद्धं सर्पिर्नस्यं कृतं स्वर्य्यं भवति। प्रपौण्डरीकमित्यादि। क्षीरसर्पिः क्षीरोत्थनवनीतजातसर्पिः ॥ ४३ ॥

गङ्गाधरः शिरःपार्श्वांसेत्यादि। दशमूलेन कल्केन पयसा घृतसमानेन

चक्रपाणिः—यत्र कर्षणमित्यनेन मृदुवमनविरेचनं यत्र कर्षणाय इति दर्शयति। प्रपौण्डरीकम् इत्यादि क्षीरं द्रवम्। ये तु क्षीरसर्पिरित्येकपदेन पठन्ति ते क्षीरोत्थं सर्पिर्जलेनव पाचयन्ति। घृतञ्चौत्तरभक्तिकमित्युक्तमेव घृतं भक्तोत्तरं शिरःशूलहरं भवति। दशमूलेनेत्यत्रावान्तरसाहचर्य्याद्

भक्तस्योपरि मध्ये वा यथाग्न्यभ्यवचारितम् ।
रास्नाघृतं वा सक्षीरं सक्षीरं वा बलाघृतम् ॥ ४४ ॥
लेहान् कासापहान् स्वर्य्यान् श्वासहिक्कानिवर्हणान् ।
शिरःपार्श्वांसशूलघ्नान् स्नेहांश्चातः परं शृणु ॥ ४५ ॥
घृतं खर्ज्जूरमृद्वीका-मधुकैः सपरूषकैः ।
सपिप्पलीकैर्वैस्वर्य्य-कासश्वासनिवर्हणम् ॥ ४६ ॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकक्षौद्रं तत् परं स्वरविबोधनम् ।
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ॥ ४७ ॥

त्रिगुणेन मांसरसेन सिद्धं घृतं बहुशः पुनःपुनः औत्तरभक्तिकं भोजनादुत्तरं प्रयुज्यमानं शिरःपार्श्वांसशूलघ्नं कासश्वासनिवर्हणमिति। घृतान्तरमाह—बलागर्भमित्यादि। बलागर्भं बलाकल्कं घृतं चतुर्गुणजलसिद्धं भक्तस्योपरि मध्ये वा यथाग्नि भक्षितमेतान् शिरःपार्श्वांसशूलकासश्वासान् रोगान् सद्यो वै प्रबाधते। एवं रास्नाघृतं सक्षीरं रास्नाकल्कः क्षीरं चतुर्गुणं भक्तान्तमध्येऽभ्यवहृतमेतान् रोगान् प्रबाधते। एवं बलाघृतं सक्षीरं बलाकल्कः क्षीरं चतुर्गुणं सिद्धं यथाग्न्यभ्यवहृतमेतान् रोगान् प्रबाधते ॥ ४४ ॥

गङ्गाधरः—अतः परं लेहानाह लेहानित्यादि। कासादिघ्नान् लेहान् स्नेहांश्चातः परं शृण ॥ ४५ ॥

गङ्गाधरः—घृतमित्यादि। खर्ज्जूरादिपिप्पल्यन्तैः कल्कैश्चतुर्गुणजले शृतक्वाथे चतुर्गुणे सिद्धं घृतं वैस्वर्य्यादिनिवर्हणम् ॥ ४६ ॥

गङ्गाधरः—दशमूलेत्यादि। दशमूलं कल्कीकृत्य दुग्धं पक्तव्यं, पक्वात्

यथा बलाया एव कल्के दशमूलस्य क्वाथो ज्ञेयः। किंवा दशमूलेन पयसेति पाठः। तेन दशमूलसिद्धेन क्षीरेणेत्यर्थः। रास्नाघृतं वा रास्नाक्षीरं रोगानेतान् प्रबाधत इति योजना। तथा बलाघृतञ्च बलाक्षीरञ्च प्रबाधते इति योजना। रास्नाघृतं कासे वक्ष्यमाणं बलाघृतञ्च वातरक्ते वक्ष्यमाणं तत् क्षीरेण महोत्पलमेतान् रोगान् प्रबाधत इत्याचार्य्यो वक्ष्यति ॥ ३९—४६ ॥

चक्रपाणिः—सपिप्पलीकं सक्षौद्रमित्यत्र पिप्पलीक्षौद्रयोः प्रक्षेप्यत्वं ज्ञेयम् ॥ ४७ ॥

पञ्चभिः पञ्चभिर्मूलैः शृताद् यदुदियाद् घृतम्
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे।
सिद्धं सर्पिर्जयत्येतद् यक्ष्मणः सप्तकं बलम्। ४८॥
खर्ज्जूरं पिप्पली द्राक्षा पथ्या शृङ्गी दुरालभा।
त्रिफला पिप्पली मुस्तं शृङ्गाटगुड़शर्कराः॥
वीराशटीपुष्कराख्यं सुरसः शर्करा गुड़ः।
नागरं चित्रको लाजाः पिप्पल्यामलकं गुड़ः॥
श्लोकार्द्धैर्विहितानेतान् लिहेन्ना क्षौद्रसर्पिषा।
कासश्वासापहान् स्वर्य्यान् पार्श्वशूलापहांस्तथा॥ ४९॥

तत्क्षीरान्मथितात् यन्नवनीतं नवमुदियादुत्तिष्ठेत्, तन्नवं सर्पिः पिप्पलीचर्ण-मधुयुक्तं स्वरविबोधनं परमुत्कृष्टं [illegible] आदिष्टं कासाद्यपहरमिति॥ ४७॥

गङ्गाधरः—पञ्चभिरित्यादि। पञ्चभिः पञ्चमूलैः कल्कीकृतैः शृतात् क्षीराद् यद्घृतमुदियात्, तद् घृतं पुनः पञ्चपञ्चमूलक्वाथे साहचर्य्याच्च गुणे क्षीरचतुर्गुणे च सिद्धमेतत् सप्तकं यक्ष्मणो बलं स्वरभङ्गशिरःशूलपार्श्वशूलांसशूलकासश्वास-ज्वरं जयतीति॥ ४८॥

गङ्गाधरः—खर्ज्जूरमित्यादि। खर्ज्जूरादिदुरालभान्त एको लेहः। त्रिफलादिशर्करान्तो द्वितीयः। वीरादिगुड़ान्तस्तृतीयः। नागरादिगुड़ान्त-श्चतुर्थः। शृङ्गाटश्च गुड़श्च शर्करा चेति। शर्करा गुड़ इति पृथक् पदम्॥ ४९॥

चक्रपाणिः—पञ्चभिः पञ्चमूलैर्वा यद् घृतमुदियात् तत् सपिप्पलीकं सक्षौद्रं स्वरबोधनमित्यादि योजना। पञ्चानामित्यादिना योगान्तरमाह। क्षीरचतुर्गुण इति क्षीरेण समं घृतम्, पञ्चानां पञ्चमूलीनां रसचतुर्गुणेन, पञ्चमूलक्वाथस्त्रिगुणः घृतसमञ्च क्षीरं ज्ञेयम्। उक्तं हि जतूकर्णे—दशमूलशृतक्षीराजातं सर्पिर्नवञ्च पिप्पलीमधुयुक्तं यत् पञ्चपञ्चमूलकथितादुत्थितञ्च यत् कथिततुल्यपयस्कं पक्कमिति सप्तकं स्वरबोधनमित्यादि। फलश्रुतौ यक्ष्मणः सप्तकं बलम् इत्यनेन ये सप्त गदाः पठितास्ते ज्ञेयास्तेषु च हिक्का पठिता। सा च राजयक्ष्मलक्षणेषु यद्यपि न पठिता तथाप्युपद्रवरूपा ज्ञेया। पुष्कराख्यं पुष्करमूलम्॥ ४८। ४९॥

सितोपलातुगाक्षीरी-पिप्पलीबहुलात्वचः ।
अन्त्यादूर्द्ध्वं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा ॥
चूर्णितं प्राशयेद् वैतच्छ्वासकासज्वरापहम् ।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम् ॥ ५० ॥
हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्द्ध्वगे ।
वासाघृतं शतावर्य्या सिद्धं वा परमं हितम् ॥ ५१ ॥
श्वदंष्ट्रां सदुरालभां चतस्रः पर्णिनीर्बलाम् ।
भागान् पलोन्मितान् कृत्वा पलं पर्पटकस्य च ॥
पचेद् दशगुणे तोये दशभागावशेषिते ।
रसे सुपूते द्रव्याणामेषां कल्कान् समावपेत् ॥

गङ्गाधरः—सितोपलेत्यादि । षोड़शभागा सितोपला शर्करा, अष्टांशा तुगाक्षीरी वंशलोचना, चतुर्भागं पिप्पलीचूर्णं, द्विभागा बहुला एला, एकभागा त्वक्, इत्यन्त्यादूर्द्ध्वं द्विगुणितम् । क्षौद्रसर्पिषा लेहयेदथवा चूर्णं सुप्तजिह्वादिरोगिणं प्राशयेदिति । सितोपलालेहः ॥ ५० ॥

गङ्गाधरः—वासाघृतमित्यादि । वासकं कल्कीकृत्य शतावरीरसेन चतुर्गुणेन सिद्धं घृतं यक्ष्मिणः परमं हितम् ॥ ५१ ॥

गङ्गाधरः—श्वदंष्ट्रामित्यादिना गोक्षुराद्यं घृतम् । श्वदंष्ट्रादीनां बलान्तानां सप्तानां प्रत्येकं पलोन्मितान् भागान् पर्पटकस्य पलं कृत्वा दशगुणे तोये इति दशगुणवचनात् द्रव्याणां पलोल्लेखाद्दशगुण्ये पचेत् । दशभागैकभागशेषे अष्टपले

चक्रपाणिः—सितोपलादावन्त्यादूर्द्ध्वं द्विगुणितमित्यन्त्यायास्त्वच एको भागः, बहुलाया भागद्वयं, पिप्पल्या भागचतुष्टयं, तुगाक्षीरं वंशलोचनानुकारि पार्थिवं द्रव्यम्, तस्याष्ट भागाः, सितोपलायास्तु षोड़श । ऊर्द्ध्वशब्देन चेहातीततोच्यते विवक्ष्यमाणा । ऊर्द्ध्वाधोभागस्य स्थानात् तेन क्वचित् ऊर्द्ध्वमित्यादावपगतोऽपि ऊर्द्ध्वशब्दश्चरति ॥ ५० ॥

चक्रपाणिः—हस्तेत्यादिके वक्ष्यमाणवासाघृतं रक्तपित्तोक्तञ्च योनिव्यापच्चिकित्सितवक्ष्यमाणञ्च ॥ ५१ ॥

चक्रपाणिः—श्वदंष्ट्राद्य पचेद दशगुणे तोये इत्यनेन घृताद दशगुणतोयेनेति ज्ञेयम्; द्रव्याद

शटीपुष्करमूलानां पिप्पलीत्रायमाणयोः ।
तामलक्याः किरातानां तिक्तस्य कुटजस्य च ॥
फलानां शारिवायाश्च सुपिष्टान् कर्षसम्मितान् ।
साधयेत् तु घृतप्रस्थं क्षीरद्विगुणितं भिषक् ॥
ज्वरं दाहं भ्रमं कासमंसपार्श्वशिरोरुजम् ।
तृष्णाच्छर्दिमतीसारमेतत् सर्पिर्व्यपोहति ॥ ५२ ॥

गोक्षुराद्यघृतम् ॥

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
शटीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥
एतद्‌ व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ ५३ ॥

जीवन्त्याद्यघृतम् ।

रसे पूते क्षीरद्विगुणितं घृतप्रस्थञ्चेति सपादद्विगुणद्रवं वक्ष्यमाणानामेषां शट्यादीनां द्रव्याणां कल्कान् समावपेत्। किरातानां तिक्तस्य किराततिक्तस्य, कुटजस्य च फलानां कुटजफलानामिति। शट्यादीनां शारिवान्तानामष्टानां कर्षसम्मितान् सुपिष्टान् कल्कान् समावपेत्। इत्येवं घृतप्रस्थं साधयेत्। ज्वरमित्यादिनाशीः। गोक्षुराद्यं घृतम् ॥ ५२ ॥

गङ्गाधरः—जीवन्तीमित्यादि। जीवन्त्यादिपिप्पल्यन्तं चतुर्दशद्रव्यं समानभागेन पिष्ट्वा कल्कीकृत्य चतुर्गुणे जले घृतमनुक्तत्वात् प्रस्थं वैद्यो विपाचयेत्। व्याधिसमूहस्य रोगराजस्य समुत्थितमेकादशविधमेतत् सर्पिर्व्यपोहति। कुटजस्य फलानि। जीवन्त्याद्यं घृतम् ॥ ५३ ॥

दशगुणतोयेन क्वाथस्याल्पत्वं स्यात्। प्रस्थघृतात् तु दशगुणतोये दशभागावशिष्टे प्रस्थमानत्वं कषायस्य भवति, तच्च जतूकर्णानुमतम् ॥ ५२ ॥

चक्रपाणिः—जीवन्त्यादि पूर्वयोगोक्तं क्षीरयुक्तमेव द्रवमिच्छन्ति। टीकाकृतास्तु बहवो

बलां स्थिरां पृश्निपर्णीं बृहतीं सनिदिग्धिकाम्।
साधयित्वा रसे तस्मिन् पयो गव्यं सनागरम् ॥
द्राक्षाखर्ज्जूरसर्पिर्भिः पिप्पल्या च शृतं सह।
सक्षौद्रं ज्वरकासघ्नं स्वर्य्यञ्चैतत् प्रयोजयेत् ॥ ५४ ॥
आजस्य पयसश्चैवं प्रयोगो जाङ्गला रसाः।
यूषार्थं चणका मुद्गा मुकुष्टाश्चोपकल्पिताः ॥ ५५ ॥
ज्वराणां शमनीयो यः पूर्व्वमुक्तः क्रियाविधिः।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ॥ ५६ ॥
कफप्रसेके बलवान् श्लैष्मिकश्छर्दयेन्नरः।
पयसा फलयुक्तेन मधुकेन * रसेन वा ॥

गङ्गाधरः—बलामित्यादि। बलादीनि पञ्च द्रव्याणि प्रत्येकं समभागेन गृहीत्वाऽष्टगुणे जले पक्त्वा चतुर्थभागशेषे तस्मिन् रसे क्वाथे चतुर्गुणे गव्यं पयोऽष्टभागैकभागं मिलितनागरद्राक्षाखर्ज्जूरगव्यघृतपिप्पलीनां दत्त्वा सहैकध्यं शृतं क्षीरावशेषं पक्वं पूतं शीतं मधु पयसः पादिकं दत्त्वा मिश्रयेदिति। तत् पयः प्रयोजयेत् ज्वरकासघ्नं स्वर्य्यञ्चेति। एवमाजस्य पयसश्च प्रयोगः कल्पितः स्यात्, तथा जाङ्गलमांसरसाः कल्पिताः स्युः, तथा यूषार्थं चणका मुद्गा मुकुष्टकाश्च कल्पिताः स्युः ॥ ५४ । ५५ ॥

गङ्गाधरः—ज्वराणामित्यादि। ज्वरचिकित्सिते सर्व्वेषां ज्वराणां यो यः शमनीयः क्रियाविधिः पूर्व्वमुक्तः, स शमनीयो विधिः ससर्पिष्कः सर्पिस्तत्र प्रक्षिप्य संयोज्य यक्ष्मिणां ज्वरदाहेषु प्रशस्यते ॥ ५६ ॥

गङ्गाधरः—कफप्रसेक इत्यादि। यदि कफ आस्येनाधिकं प्रसिच्यते नरश्च यक्ष्मिपुरुषो बलवान् वर्त्तते, तदा स फलयुक्तेन मदनफलकल्कयुक्तेन पयसा कफं छर्दयेत्। अथवा मधुकेन रसेन यष्टीमधुक्वाथेन मदनफलकल्कयुक्तेन

जलमेव द्रवं पठन्ति। अत्र क्षीरे क्वाथकल्कसाध्ये चतुर्गुणक्षीरात् क्वाथ्यादिद्रव्यञ्चाष्टभागेन ज्ञेयम्। मधुकं प्रक्षेपार्थं योज्यम् ॥ ५३—५५ ॥

चक्रपाणिः—ज्वराणामित्याद्यावस्थिकं विधिमाह ॥ ५६ ॥

* मधुरेणेति चक्रः।

सर्पिष्मत्या यवाग्वा वा वामनीयोपसिद्धया ।
वान्तोऽन्नकाले लघ्वन्नमाददीत सदीपनम् ॥
यवगोधूममाध्वीक-सिध्मारिष्टसुरासवान् ।
जाङ्गलानि च शूल्यानि सेवमानः कफं जयेत् ॥ ५७ ॥
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्वान् स्निग्धोष्णेनैव निर्ज्जयेत् ॥ ५८ ॥
क्रिया कफप्रसेके या वम्यां सैव प्रशस्यते ।
हृद्यानि चान्नपानानि वातघ्नान्यगुरूणि च ॥ ५९ ॥

छर्दयेत् । अथवा सर्पिष्मत्या वामनीयद्रव्यसिद्धया यवाग्वा पेयामण्डविलेपीनामन्यतमया छर्दयेत् । सम्यग्वान्तो यदाचरितव्यं तदाह—वान्त इत्यादि । उक्तविधिना सम्यग्वान्तो यक्ष्मी अन्नकाले बुभुक्षायां जातायां सदीपन दीपनद्रव्यसाधितं लघ्वन्नमाददीत । तथा यवगोधूमविकारं माध्वीकं मधुकृतमद्यं सिध्म सिध्मलसंज्ञं सन्धानविशेषं तथा चारिष्टसंज्ञं सन्धानविशेषं सुराश्चासवञ्च जाङ्गलमांसानां शूल्यानि शूलपकानि सेवमानः प्रसिच्यमानं कफं जयेत् ॥ ५७ ॥

गङ्गाधरः कफप्रसेकस्यावस्थाविशेषप्रतिकारमाह—श्लेष्मण इत्यादि । श्लेष्मणोऽतिप्रसेकेन वायुर्यदि श्लेष्माणमस्यति क्षिपति तदा तं श्लेष्मप्रसेकं विद्वान् जानन् वैद्यः स्निग्धोष्णेन द्रव्येण निर्ज्जयेत् ॥ ५८ ॥

गङ्गाधरः यक्ष्मिणश्छर्दिर्यदि वर्त्तते तदा तच्चिकित्सामाह—क्रियेत्यादि । कफप्रसेके येयं क्रियोक्ता सैव क्रिया यक्ष्मिणो वम्यां प्रशस्यते । एवं हृद्यानि वातघ्नानि अगुरूणि चान्नपानानि वम्यां प्रशस्यन्ते ॥ ५९ ॥

चक्रपाणिः वामनीयानि मदनफलादीनि । सदीपनम् इति दीपनशुण्ठ्यादिसाधितम् ॥५७।५८॥

चक्रपाणिः—वम्यां सैव प्रशस्यत इत्यत्र कफप्रसेको द्विविधः स्वतन्त्रः कफकृतः तथा वातपराधीन उक्तः । एवं छर्द्दिमपि द्विधा विभज्य कफप्रसेकक्रियानुसारेण श्लेष्मप्रधानायां वमनादि, वातप्रधानायां स्निग्धसेवानुरूपा सा क्रिया शस्यत इति योज्यम् ॥ ५९ ॥

प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्य्यते।
प्राप्नोति चास्यवैरस्यं न चान्नमभिनन्दति॥
तस्याग्निदीपनान् योगानतीसारनिवर्हणान्।
वक्त्रशुद्धिकरान् कुर्य्यादरुचिप्रतिबाधनान्॥ ६० ॥
सनागराश्चेन्द्रयवाः पातव्यास्तण्डुलाम्बुना।
सिद्धां यवागूं जीर्णान्ते चाङ्गेरीतक्रदाड़िमैः॥ ६१ ॥
पाठां विल्वं यमानीश्च पातव्यं तक्रसंयुतम्।
दुरालभां शृङ्गवेरं पाठाञ्च सुरया सह॥ ६२ ॥
जम्ब्वाम्रमध्यं विल्वञ्च सकपित्थं सनागरम्।
सुरामण्डेन पातव्यमतीसारनिवृत्तये॥ ६३ ॥
एतानेव च योगांस्त्रीन् पाठादीन् कारयेत् खड़ान्।
सचुक्रधान्यान् सस्नेहान् साम्लान् सांग्राहिकान् परान्॥६४॥

गङ्गाधरः—यक्ष्मिणो वर्च्चोगदप्रतिकारमाह—प्रायेणेत्यादि। यक्ष्मी प्रायेण उपहताग्नित्वात् सपिच्छं पिच्छासहितमतिसार्य्यते, आस्यवैरस्यञ्च प्राप्नोति। ततोऽन्नं न चाभिनन्दति द्वेष्टि। तस्य यक्ष्मिणः खल्वग्निदीपनादीन् योगान् कुर्य्यात्॥ ६० ॥

गङ्गाधरः—अग्निदीपनादीन् योगानाह—सनागरा इत्यादि। नागरचूर्णसहिता इन्द्रयवचूर्णास्तण्डुलजलेन पातव्यास्तज्जीर्णान्ते चाङ्गेरीतक्रदाड़िमफलैः सिद्धां यवागूं मण्डपेयाविलेपीनामन्यतमां यथाग्निवलं पिवेत्॥ ६१ ॥

गङ्गाधरः—पाठामित्यादि। पाठां यमानीं विल्वशलाटूञ्च चूर्णीकृत्य तक्रसंयुतं पातव्यम्। दुरालभां शृङ्गवेरं शुण्ठीं पाठाञ्चेति त्रयं चूर्णीकृतं सुरया सह पातव्यम्। जम्ब्वाम्रयोरस्थ्नां मज्जानं विल्वशलाटुं कपित्थं नागरञ्च चूर्णीकृतमेकीकृत्य सुरामण्डेन पातव्यम्॥ ६२। ६३ ॥

गङ्गाधरः—एतानेवेत्यादि। एतान् पाठादीन् योगांस्त्रीन् खड़ान् कारयेत्। तद्यथा—सचुक्रधान्यानित्यादि। चुक्रमम्लवेतसं लोटकम् अम्लधान्यकचूर्ण

चक्रपाणिः—खड़ो व्याकृतः। अन्येऽपि वदन्ति—'पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः। मूलैश्च तिलकल्काम्ल-प्रायः काम्बलिकः स्मृतः' इति॥ ६०—६४ ॥

वेतसार्ज्जुनजम्बूनां मृणालीकृष्णगन्धयोः ।
श्रीपर्णीमदयन्त्योश्च यूथिकायाश्च पल्लवान् ॥
मातुलुङ्गस्य धातक्या दाड़िमस्य च कारयेत् ।
स्नेहाम्ललवणोपेतान् खड़ान् सांग्राहिकान् परान् ॥ ६५ ॥
चाङ्गेर्य्याश्चुक्रिकायाश्च दुग्धिकायाश्च कारयेत् ।
खड़ान् दधिसरोपेतान् ससर्पिष्कान् सदाड़िमान् ॥ ६६ ॥
मांसानां लघुपाकानां रसाः संग्राहकैर्युताः ।
व्यञ्जनार्थं प्रशस्यन्ते भोज्यार्थं रक्तशालयः ॥ ६७ ॥

घृतादिस्नेहं कपित्थाद्यम्लञ्च यथायोग्यं पाठादित्रिकान्यतमक्वाथे मुद्गादिविदलानि पक्त्वा तत्र दत्त्वा खड़ान् यूषान् परान् सांग्राहिकान् अतिसारस्तम्भकान् कारयेत् । इति त्रयः खड़ाः ॥ ६४ ॥

गङ्गाधरः—वेतसेत्यादि । वेतस इत्यम्लवेतसः । वेतसादीनां त्रयाणां पल्लवान् क्वाथयित्वा, मृणाली वीरणं कृष्णगन्धा शिग्रुस्तयोः पल्लवान् क्वाथयित्वा, श्रीपर्णीमदयन्त्योश्च पल्लवान् क्वाथयित्वा, यूथिकायाश्च पल्लवान् क्वाथयित्वा, मातुलुङ्गस्य पल्लवान् क्वाथयित्वा, धातक्याः पल्लवान् क्वाथयित्वा, दाड़िमस्य च पल्लवान् क्वाथयित्वा, अर्द्धशृतेन तेन तेनैकैकेन क्वाथेन मुद्गादिविदलानि पक्त्वा स्नेहाम्ललवणोपेतान् यूषान् खड़ान् कारयेत् । व्यक्ताम्लस्पष्टलवणा यूषाः खड़ाः । तान् परान् सांग्राहिकान् प्रकरणाद् यक्ष्मिणो वर्च्चोगदे । एते सप्त खड़ाः ॥ ६५ ॥

गङ्गाधरः—अपरान् खड़ानाह—चाङ्गेर्य्या इत्यादि । चुक्रिकाम्लवेतसः (लोटकः) । दुग्धिका । आसां प्रत्येकं पत्रेण दधिसरोपेतान् सर्पिर्युक्तान् दाड़िमाम्लसहितांस्त्रीन् खड़ान् यूषान् कारयेत् ॥ ६६ ॥

गङ्गाधरः—मांसानामित्यादि । लघुपाकानां शशकादीनां मांसस्य रसाः सांग्राहिकैर्विल्वशलाटुबालकादिभिर्युता अतिसारयुक्तयक्ष्मिणः व्यञ्जनार्थं प्रशस्यन्ते । भोज्यार्थम् अन्नयवागर्थं रक्तशालयः प्रशस्यन्ते ॥ ६७ ॥

स्थिरादिपञ्चमूलेन पाने शस्तं श्रृतं जलम्।
तक्रं सुरा सचुक्रीका दाड़िमस्याथवा रसः ॥ ६८ ॥
इत्युक्तं भिन्नशकृतां दीपनं ग्राहि भेषजम्।
वक्ष्याम्यूर्द्ध्वं रुचिकरं मुखवैरस्यनाशनम् ॥ ६९ ॥ *
द्वौ कालौ दन्तपवनं † भक्षयेन्मुखधावनम्।
तद्वत् प्रक्षालयेदास्यं धारयेत् कवलग्रहान् ॥
पिवेद्‌ धूमं ततो मृष्टमद्याद्‌ दीपनपाचनम्।
भेषजं पानमन्नञ्च हितमिष्टोपकल्पितम् ॥ ७० ॥
त्वङ्मुस्तमेला धान्यानि मुस्तमामलकं त्वचम्।
दार्व्वी त्वचो यमानी च तेजोह्वा पिप्पली तथा ॥

गङ्गाधरः—पानीयमाह—स्थिरादिपञ्चमूलेनेत्यादि। शालपर्ण्यादिपञ्चमूलेन अर्द्धश्रृतं जलं पानेऽतिसारयुक्तयक्ष्मिणः शस्तम्। अथवा तक्रं पाने शस्तम्। अथवा स चुक्रीका चुक्रिकासन्धानयुक्ता सुरा पाने शस्तम्। अथवा दाड़िमस्य रसः पाने शस्त इति ॥ ६८ ॥

गङ्गाधरः—उपसंहरति—इत्युक्तमित्यादि। भिन्नशकृतां वर्चोगदियक्ष्मिणाम्। वक्ष्याम्यत ऊर्द्ध्वं यक्ष्मिणोऽरुचिमतो रुचिकरं मुखवैरस्यनाशनमिति ॥ ६९ ॥

गङ्गाधरः—द्वौ कालावित्यादि। दन्तपवनं दन्तकाष्ठं मुखधावनं भक्षयेत् चर्व्वयेत्। तद्वदास्यं प्रक्षालयेत्। कवड़ग्रहान् धारयेत्। धूमं पिवेत्। ततो दीपनपाचनं द्रव्यं मृष्टं परिमृष्याद्यात्। एवं हितञ्च स्वाभीष्टञ्चोपकल्पितं भेषजं पानमन्नञ्च रुचिकरं स्यात् ॥ ७० ॥

गङ्गाधरः—तत्र भेषजमाह—त्वङ्मुस्तेत्यादि। त्वङ्मुस्तकैलाधान्यैः क्वथितैः मुखधावन एकः। मुस्तामलकत्वग्भिः क्वथिताभिर्द्वितीयो मुखधावनः। दार्व्वी च त्वचश्च यमानी चेति त्रयाणां क्वाथैस्तृतीयो मुखधावनः। तेजोह्वा चवी

चक्रपाणिः—सचुक्रिकेति चुक्रयुक्तसुरेत्यर्थः ॥ ६५—६८।

चक्रपाणिः—द्वौ कालाविति सायं प्रातः। अथवा पवनैरिति करञ्जककरवीरादभिरित्तिक्तकटुकैः। तद्वदिति तिक्तकटुकृतैर्जलैः ॥ ६९। ७० ॥

* दीपनं ग्राहि निर्द्दिष्टं भेषजं भिन्नवर्च्चसे। परं मुखस्य वैरस्य-नाशनं रोचनं श्रृणु" ॥ इति पाठान्तरम्।

† दन्तपवनैरिति चक्रः।

यमानी तिन्तिड़ीकश्च पञ्चैते मुखधावनाः।
श्लोकपादेष्वभिहिता रोचना मुखशोधनाः॥
गुड़िकां धारयेदास्ये चूर्णैर्वा शोधयेन्मुखम्।
एषामालोड़ितानाञ्च धारयेत् कवड़ग्रहान्॥ ७१॥
सुरामाध्वीकसीधूनि तैलस्य मधुसर्पिषोः।
कवलान् धारयेदिष्टान् क्षीरस्येक्षुरसस्य च॥ ७२॥
यमानीं तिन्तिड़ीकञ्च नागरं साम्लवेतसम्।
दाड़िमं बदरञ्चाम्लं कार्षिकञ्चोपकल्पयेत्॥
धान्यसौवर्च्चलाजाजी-वराङ्गञ्चार्द्धकार्षिकम्।
पिप्पलीनां शतैकञ्च द्वे शते मरिचस्य च॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम्॥

पिप्पली चैतयोः क्काथो मुखधावनश्चतुर्थः। यमानीतिन्तिड़ीकयोः क्काथः पञ्चमो मुखधावनः। इत्येते पञ्च मुखधावनाः श्लोकपादेषु पञ्चस्वभिहिता रोचना मुखशोधनाश्च। एषां पञ्चानां योगानां गुड़िकामास्ये धारयेत्। एषां पञ्चानां योगानाञ्च चूर्णैर्वा मुखं घृष्ट्वा शोधयेत्। एषां पिष्टानामालोड़ितानां कवड़ग्रहानास्ये धारयेत्॥ ७१॥

गङ्गाधरः—अन्यान् कवड़ग्रहानाह सुरामित्यादि। सुरादीनां चतुर्णामेकैकस्य मिलितयोर्मधुसर्पिषोः कवड़ानिष्टान् धारयेत्। क्षीरस्य कवड़ान् इक्षुरसस्य च कवड़ान् धारयेत्॥ ७२॥

गङ्गाधरः—अथारोचकहारिभक्ष्ययोगमाह यमानीमित्यादि। बदरञ्चाम्लं शुष्कम्। एषां षण्णां कार्षिकाणि, धान्यादीनां चतुर्णामर्द्धकार्षिकं, वराङ्गं त्वक्, पिप्पलीनामेकं शतं गुड़कानामाकृतिमानात्। मरिचस्य गुड़कस्य

चक्रपाणिः—तेजवती चविका। मुखशोधना इति मुखगतदोषशोधना इति॥ ७१॥

हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ ७३ ॥

यमानीषाड़वः।

तालीशपत्रं मरिचं नागरं पिप्पली शुभा।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीदोष-शोषप्लीहज्वरापहम्।
वम्यतीसारशूलघ्नं मूढ़वातानुलोमनम् * ॥
कल्पयेद् गुड़िकाञ्चैतच्चूर्णं पक्त्वा सितोपलाम्।
गुड़िका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा स्मृता ॥ ७४ ॥

तालीशाद्यं चूर्णं गुड़िका च।

आकृतिमानात् द्वे शते। शर्करायाश्चत्वारि पलानि। एकत्र चूर्णयेत्। तच्चूर्णम्। जिह्वाविशोधनमित्याद्याशीः। यमानीषाड़वः ॥ ७३ ॥

गङ्गाधरः—तालीशपत्रमित्यादि। पिप्पली, शुभेति पिप्पलीविशेषणमाहुरेके, तन्न। शुभा वंशलोचना। तथाच। तालीशपत्रस्यैकभागो मरिचस्य द्वौ भागौ नागरस्य त्रयः पिप्पल्याश्चत्वारः शुभायाः पञ्च। त्वचोऽर्द्धभाग एलायाश्चार्द्धभागः। पिप्पल्या अष्टगुणा द्वात्रिंशद्भागाः शर्कराया इत्येतत् सर्व्वं मेलयित्वा चूर्णं स्थापयेत् ॥ ० ॥ अथवा एतच्च चूर्णं सितोपलां जलेन गोलयित्वा पूत्वा पक्त्वा तत्र तन्तुलीभूते प्रक्षिप्यालोड्य गुड़िकां कल्पयेत्। तत्र विशेषमाह—गुड़िका हीत्यादि। अग्निसंयोगाद् गुड़िका चूर्णाल्लघुतरा

चक्रपाणिः—यवानीखाड़वे वराङ्गकं त्वक्, पिप्पलीनां शतमिति ॥ ७२ । ७३ ॥

चक्रपाणिः—तालीसाद्ये शुभा इति विशेषणं पिप्पल्याः। उक्तं हि हारीते—'तालीशमरिचं शुण्ठी पिप्पल्योऽक्षांशको शुभाः। त्वगेलार्द्धांशके दद्यात् शर्कराष्टपलं भवेत्' इत्यादि। तथा जतूकर्णः—"तालीसमरिचनागरकृष्णाः कर्षस्त्वगेले द्व्यंशे द्विकुडवसितं गुटिका विपाच्यताम्" इति। त्वगेलयोरर्द्धभागत्वम्। गुड़िकापक्षे समजलेन गुड़िकाः कुर्व्वन्ति वृद्धाः ॥ ७४ ॥

* उर्द्ध वातानुलोमनम् इति चक्रसम्मतः पाठः।

शुष्यतां क्षीणमांसानां कल्पितानि विधानवित् ।
दद्यान्मांसादमांसानि बृंहणानि विशेषतः ॥
शोषिणे बर्हिणं दद्याद् बर्हिशब्देन वा परान् ।
गृध्रान् नकुलान् भासांश्च * विधिवत् सूपकल्पितान् ॥
काकांस्तित्तिरिशब्देन बर्म्मिशब्देन चोरगान् ।
संभृष्टान् मत्स्यशब्देन दद्याद् गण्डूपदानपि ॥
लोपाकान् स्थूलनकुलान् विड़ालांश्चोपकल्पितान् ।
शृगालशावांश्च भिषक् शशशब्देन दापयेत् ॥
सिंहानृक्षांस्तरक्षूंश्च व्याघ्रानेवंविधांस्तथा ।
मांसादान् मृगशब्देन दद्यान्मांसाभिवृद्धये ॥

भवेद् यस्मात् तस्मादल्पाग्निजने गुड़िकां कल्पयेदिति। तालीशाद्यं चूर्णं गुड़िका च ॥ ७४ ॥

गङ्गाधरः— अथ शरीरक्षयनिवृत्तिभेषजमाह—शुष्यतामित्यादि। शुष्यतां क्षीणमांसानां यक्ष्मिणां विधानविद् वैद्यो मांसादमांसानि व्याघ्रादीनां मांसादानां मांसानि रसादिरूपेण कल्पितानि बृंहणानि दद्यात्। तत्रापि विशेषतः शोषिणे बर्हिणां मांसानि दद्यात्। अलाभे बर्हिणस्तु सूपकल्पितानपरान् गृध्रनकुलभासांश्चापरान् मांसादानभक्ष्यतया भोक्तुमशक्यत्वेन बर्हिशब्देन बर्हिमांसच्छलेन दद्यात्। तित्तिरिमांसशब्देन काकान् दद्यात्। बर्म्मि-मत्स्यशब्देन उरगान् दद्यात्। गण्डूपदानपि संभृष्टान् मत्स्यशब्देन दद्यात्। लोपाकान् क्षुद्रशृगालान् देशभेदे भामाख्यान् स्थूलनकुलान् देशभेदे नेउल इति ख्यातान् एवं विड़ालान् वृद्धशृगालशावांश्च शशमांस-शब्देन दापयेत्। तथा सिंहादीन् मृगमांसशब्देन दापयेत्। तत्र तरक्षुः

चक्रपाणिः—सूपकल्पितानिति सम्यक् संस्कारेण कृतान्। बर्म्मिशब्देन दीर्घो मत्स्य-

* गोधान् नकुलांश्चापांश्च इति पाठान्तरम् ।

गजखड्गितुरङ्गाणां वेशवारीकृतं भिषक्।
दद्यान्महिषशब्देन मांसं मांसाभिवृद्धये ॥ ७५ ॥
मांसेनोपचिताङ्गानां मांसं मांसकरं परम्।
तीक्ष्णोष्णलाघवाच्छस्तं विशेषान्मृगपक्षिणाम् ॥
मांसानि यान्यनिन्द्यानि सुस्वादूनि प्रयोजयेत् * ।
तेषूपधा सुखं भोक्तुं तथा शक्यानि तानि हि ॥
जानन् जुगुप्सां नैवाद्याज्जग्धं वा पुनरुल्लिखेत्।
तस्मात् सद्योऽपसिद्धानि मांसान्येतानि दापयेत् ॥ ७६ ॥

क्षुद्रव्याघ्रः। गजखड्गितुरङ्गाणां मांसं वेशवारं कृत्वा महिषमांसशब्देन मांसाभिवृद्धये दद्यात् ॥ ७५ ॥

गङ्गाधरः—कस्मादेषां मांसं विशेषतो मांसाभिवृद्धये दद्यादित्यत आह—मांसेनेत्यादि। मांसेनोपचिताङ्गानां मृगपक्ष्यादीनां प्राणिनां मांसं परं मांसकरम्। सर्व्वं हि मांसं मांसं वर्द्धयति सामान्यादित्यभिप्रायेण। मांसादमांसमप्युपयोगार्थमाह तीक्ष्णोष्णेत्यादि। मृगाणां सर्व्वेषां पक्षिणाञ्च मांसादानां मांसं तीक्ष्णोष्णलाघवाद् विशेषाच्छस्तम्। एवं यान्यनिन्द्यानि स्वादूनि मांसानि तानि प्रयोजयेत्। तेष्वनिन्द्येषु मांसेषूपधा सुखं नामतः सुखं नाश्रद्धाजनककुत्सितनाम तस्माद्भोक्तुं शक्यानि तानि मांसानि भवन्ति। ननु किमर्थं गोधादिमांसं बर्हिमांसादिनाम्ना दद्यादित्यत आह जानन्नित्यादि। उपधया नाम्ना जुगुप्सां जानन् नैवाद्यात्। यदि वाद्यात् तदा जग्धं तन्मांसं घृणयोल्लिखेत् वमेत्। तस्मादेतानि गृध्रादीनां मांसानि भोक्तुमशक्यानि सद्योऽपसिद्धानि तत्परिवर्त्तनशब्देन बर्हिप्रभृतिशब्देन दापयेद् यथोपधासुखेन भोक्तुं तानि शक्यन्ते न चोल्लिखेत् ॥ ७६ ॥

विशेषो ग्राह्यः सर्पाकारः। गण्डूपदो भूमिलता। लोपाकः अल्पश्रृगालो लाङ्गूलप्रधानः ॥ ७५ ॥

चक्रपाणिः—सम्प्रत्यन्यमांसप्रयोजनमाह मांसानीत्यादि। अनभ्यासादित्यभक्ष्यत्वेन। उपधेति चान्यशब्देन दानमिति यावत्। तथेति संज्ञोपादाने सुखं यथा भवति तथा भोक्तुं शक्यते। अभक्ष्यत्वे तु ज्ञाते दोषमाह जानन्नित्यादि ॥ ७६ ॥

* मांसानि यान्यनभ्यासादनिष्टानि प्रयोजयेत्। इति वा पाठः।

शिखितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः।
खरगोमहिषाणाञ्च मांसं मांसकरं परम्॥
योनिरष्टविधा प्रोक्ता मांसानामन्नपानिके।
तां परीक्ष्य भिषग् विद्वान् दद्यान्मांसानि शोषिणे॥ ७७॥
प्रसहा भूशयानूप-वारिजा वारिचारिणः।
आहारार्थं प्रयोक्तव्या मात्रया वातशोषिणे॥
प्रतुदा विष्किराश्चैव धन्वजाश्च मृगद्विजाः।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम्॥
विधिवत् सूपसिद्धानि मनोज्ञानि मृदूनि च।
रसवन्ति सुगन्धीनि मांसान्येतानि दापयेत्॥ ७८॥
मांसमेवाश्नतः शोषो माध्वीकं पिबतोऽपि वा।
नियतस्याल्पचित्तस्य चिरं काये न तिष्ठति॥

गङ्गाधरः—तत्र श्रेष्ठं मांसकरमांसमाह शिखीत्यादि। दक्षेति कुक्कुटः। योनिरष्टविधा मांसानामन्नपानादिकेऽध्याये या प्रोक्ता तां योनिं परीक्ष्य विद्वान् भिषक् शोषिणे मांसानि दद्यात्॥ ७७॥

गङ्गाधरः तत्र विशेषमाह प्रसहा इत्यादि। अन्नपानादिके संज्ञा कृता येषां प्रसहादिस्ते वातशोषिणे मात्रयाहारार्थं प्रयोक्तव्याः। प्रतुदा इत्यादि। येषां प्रतुदादिसंज्ञाः कृतास्ते मृगद्विजा मृगाः पक्षिणश्चाहारार्थं मात्रया कफपित्त-परीतानां शोषरोगिणां प्रयोज्याः। विधिवदित्यादि। एतानि यथाविहितानि मांसानि यथा मनोज्ञानि मृदूनि रसवन्ति स्वादुमन्ति सुगन्धीनि च भवन्ति तथैवोपसिद्धानि शोषरोगिणे दापयेत्॥ ७८॥

गङ्गाधरः न केवलमेषां मांसं मांसवर्द्धनं शोषरोगघ्नञ्च भवति तदाह—मांसमित्यादि। मांसमश्नतः शोषरोगिणो माध्वीकं पिबतो वा नियतस्य अल्पचित्तस्य शोषो राजयक्ष्मा काये चिरं न तिष्ठति अचिरादपैति। मद्यविशेष-

चक्रपाणिः—योनिरष्टविधेति प्रसहेत्यादिना॥ ७७। ७८॥

वारुणीमण्डनित्यस्य बहिर्मार्ज्जनसेविनः ।
अविधारितवेगस्य यक्ष्मा न लभते बलम् ॥ ७९ ॥
प्रसन्नां वारुणीं सीधुमरिष्टानासवान् मधु ।
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयेत् ॥
मद्यं तैक्ष्ण्यौष्ण्यवैशद्य-सूक्ष्मत्वात् स्रोतसां मुखम् ।
प्रमथ्य विवृणोत्याशु तन्मोक्षात् सप्त धातवः ।
पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यति ॥ ८० ॥
मांसादमांसस्वरसे सिद्धं सर्पिः प्रयोजयेत् ।
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥
सिद्धं मधुरकैर्द्रव्यैर्दशमूलकषायकैः ।
क्षीरमांसरसोपेतैर्घृतं शोषहरं परम् ॥
पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः ।
सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम् ।
रास्नाबलागोक्षुरकं स्थिरावर्षाभूसाधितम् ॥ ८१ ॥

प्रयोगानाह—वारुणीत्यादि । वारुणीमण्डो नित्यं यस्य तस्य बहिर्मार्ज्जनसेविनोऽविधारितवेगस्य यक्ष्मिणो यक्ष्मा बलं न लभते ॥ ७९ ॥

गङ्गाधरः प्रसन्नामित्यादि । यथार्हं मांसानि भक्षयेत् तदनुपानार्थं प्रसन्नादीनि च पिबेत् प्रकरणाद् यक्ष्मीति । मद्यमित्यादि । प्रसन्नादि यथोक्तमद्यं पीतं सत् तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वाद् यक्ष्मिणो दोषबद्धं स्रोतसां मुखं प्रमथ्य प्रविलोड्याशु विवृणोति विवृतं करोति, तन्मोक्षात् स्रोतसां मुखरोधमोक्षादाहारेण सप्त धातवः पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यतीति ॥८०

गङ्गाधरः—अथ प्रशमनयोगानाह—मांसादेत्यादि । मांसादमृगपक्षिणो मांसक्वाथे चतुर्गुणे सिद्धं सर्पिः प्रयोजयेत् । अथवा दशगुणेन पयसा सिद्धं सर्पिः शीते मधु पादिकं दत्त्वालोड्य प्रयोजयेत् । अथवा मधुरकैर्जीवनीयैः कल्कैर्दशमूलस्य कषायकैर्घृतात् सार्द्धगुणैः समक्षीरोपेतैः सार्द्धगुणमांसरसोपेतैश्च सिद्धं घृतं परं शोषहरं प्रयोजयेत् । पिप्पलीत्यादि । पञ्चकोलयवक्षारैः

चक्रपाणिः—सक्षौद्रमिति छेदः । पयसेत्यादि द्वितीयं घृतम् । मधुरकाणि यानि तानि चेह

जीवन्तीपिप्पलीगर्भं सक्षीरं शोषनुद् घृतम् ।
यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह ॥
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ।
शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ॥ ८२ ॥
वहिःस्पर्शनमाश्रित्य प्रवक्ष्यामि परं विधिम् ।
क्षीरस्नेहाम्बुकोष्ठे तं स्वभ्यक्तमवगाहयेत् ॥
स्रोतोविबन्धमोक्षाथं वलपुष्ट्यर्थमेव च ।
उत्तीर्णं मिश्रकैः स्नेहैः पुनराक्तैः * सुखैः करैः ।
मृद्नीयात् सुखमासीनं सुखश्चोत्सादयेन्नरम् ॥ ८३ ॥

कल्कश्चतुर्गुणक्षीरः शृतं घृतं स्रोतसां शोधनं प्रयोजयेत् । तथा रास्नादि साध्यं घृतं प्रयोजयेत् ॥ ८१ ॥

गङ्गाधरः—जीवन्तीत्यादि । जीवन्तीपिप्पलीगर्भमिति वचनाद् जीवन्ती पिप्पलीति द्वयं पादिकं चतुर्गुणं क्षीरं साधितं घृतं शोषनुत् । एषां प्रयोगमाह—यवाग्वेत्यादि । सिद्धानामेषां मांसादमांसस्वरससिद्धादीनां सर्पिषां मात्रां यवाग्वा सह पिबेत्, अथवा मधुना लिह्यात्, अथवान्नेन सहाद्यादिति त्रिविधः प्रयोगः । एष शुष्यतामाभ्यवहारिकः पानाहारादिको विधिर्निर्दिष्टः ॥ ८२ ॥

गङ्गाधरः—अथ वहिर्मार्ज्जनसेविन इति यदुक्तं तद्वहिर्मार्ज्जनयोगमाह—वहिःस्पर्शनमित्यादि । वहिःस्पर्शनं वहिर्मार्ज्जनमाश्रित्य परं विधिं प्रवक्ष्यामि । तद् यथा—क्षीरस्नेहाम्बुकोष्ठे तैलाभ्यक्तं तं यक्ष्मिणमवगाहयेत् । क्षीरं घृतादिस्नेहो जलञ्च समभागेन अथवा यथायोग्यं मेलयित्वा कोष्ठे स्थापयेत्, तत्रावगाहयेत् स्रोतोविबन्धमोक्षार्थं वलपुष्ट्यर्थमेव च । एवमवगाह्य तत उत्तीर्णं तं सुखमासीनं मिश्रकैः स्नेहैर्घृततैलादिभिर्मिश्रितैः आक्तैः सुखैः सुखस्पर्शैः करैः पाणितलैः मृद्नीयात् । एवमेव गात्रमर्द्दनानन्तरं तं नरमुत्सादयेदिति ॥ ८३ ॥

**कल्कार्थम् ।** पिप्पलीत्यादिना नियतमानं घृतं चतुर्गुणेन क्षीरेण साध्यते पट्पलीकद्रव्यघृतमानवत् ॥ ७९—८२ ॥

* पुनरुक्तैरिति चक्रधृतः पाठः ।

जीवन्तीं शतवीर्य्याञ्च विकशां सपुनर्नवाम्।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम्॥
विदारीं सर्षपं कुष्ठं तण्डुलानतसीफलम्।
माषांस्तिलांश्च विल्वञ्च सर्व्वमेकत्र चूर्णयेत्॥
यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम्।
एतदुत्सादनं कार्य्यं वर्णपुष्टिबलप्रदम्॥ ८४॥

उद्वर्त्तनम्

गौरसर्षपकल्केन गन्धैश्चापि सुगन्धिभिः।
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः॥
गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः।
स्पृश्यान् संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः॥
इष्टवर्णरसस्पर्श-गन्धवत् पानभोजनम्।
इष्टमिष्टैरुपहृतं हितमद्यात् सुखप्रदम्॥

गङ्गाधरः—तदुत्सादनयोगमाह—जीवन्तीमित्यादि। शतवीर्य्या श्वेतदूर्व्वा। विकशा मञ्जिष्ठा। विल्वं विल्वमूलम्। सर्व्वमिदं समभागेनैकत्र चूर्णयेत्। सर्व्वचूर्णाद् द्विगुणितं यवचूर्णं मधुदधिभ्यां द्रवीकृत्य गात्रे म्रक्षयेत्। एतद् यक्ष्मिणो बलपुष्टिवर्णप्रदमुत्सादनम्। जीवन्त्याद्युद्वर्त्तनम्॥ ८४॥

गङ्गाधरः—अपरञ्च बहिर्मार्जनमाह—गौरेत्यादि। गौरसर्षपकल्केन शृतैः शीतकाले। सुगन्धिभिः गन्धद्रव्यैः शृतैः उष्णकाले। जीवनीयौषधैः शृतैः तोयैः वर्षाकाले स्नायादिति। अथवा सर्व्वैः शृतैस्तोयैः ऋतुसुखैः सुखोष्णशीतलादिरूपैः स्नायादिति। इत्थं स्नात्वा सुगन्धिद्रव्यद्रवेणानुलिप्तगात्रः सन् माल्यैर्वस्त्रैः भूषणैश्च विभूषितः सन् स्पृश्यान् गोहिरण्यादिकान् संस्पृश्य देवता भिषजो द्विजांश्च सम्पूज्य इष्टवर्णरसस्पर्शगन्धयुक्तं पानभोजनं पानं पातव्यद्रव्यं भोजनं

चक्रपाणिः—उत्तीर्णमित्यादि—पुनरुक्तैरिति पुनःपुनः मर्द्दयेत्। पुनराक्तमिति पाठे तु पुनर्म्मिश्रकैः सुखकरैराक्तमित्यर्थः। उत्सादयेदित्युद्वर्त्तयेत्॥ ८३॥

चक्रपाणिः—विकशा मञ्जिष्ठा, तर्कारी विजया, समाक्षिकमितीषन्माक्षिकम्॥ ८४॥

समातीतानि धान्यानि कल्पनीयानि शुष्यताम् ।
लघून्यहीनवीर्य्याणि तानि पथ्यतमानि च ॥
यच्चोपदेक्ष्यते किञ्चित् क्षतक्षीणचिकित्सिते ।
यक्ष्मिणस्तत् प्रयोक्तव्यं बलमांसाभिवृद्धये ॥ ८५ ॥
अभ्यङ्गोत्सादनैः स्नानैरवगाहैर्विमार्ज्जनैः ।
वस्तिभिः क्षारसर्पिर्भिः * मांसैर्मांसरसौदनैः ॥
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः ।
यथर्त्तुविहितैः स्नानैर्वासोभिरहतैः प्रियैः ॥
सुहृदां रमणीयानां प्रमदानाञ्च दर्शनैः ।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च ॥
हर्षणाश्वासनैर्नित्यं गुरूणामुपसेवनैः ।
ब्रह्मचर्य्येण दानेन तपसा देवतार्च्चनैः ॥

भोज्यमन्नम् इष्टैर्व्यञ्जनादिभिरुपहितमिष्टञ्च हितञ्च सुखप्रदमद्यात् । अन्नार्थं धान्यान्याह—समातीतानीत्यादि । संवत्सरातीतानि लघूनि चाहीनवीर्य्याणि च धान्यानि शुष्यतां कल्पनीयानि यतस्तानि पथ्यतमानि भवन्तीति । अथान्यत् अतिदेशेन यक्ष्मिण औषधमाह यच्चेत्यादि । बलमांसाभिवृद्धये यक्ष्मरोगनिवृत्तिसहितबलमांसवृद्धये ॥ ८५ ॥

गङ्गाधरः—अथ क्रियाकल्पमाह—अभ्यङ्गोत्सादनैरित्यादि । वस्तिभिः अस्य विशेषणं क्षारसर्पिर्भिः, यवक्षारमिश्रितसर्पिर्भिः वस्तिभिः । मांसैः यथोक्तैर्मांसरसौदनैश्च । मनोज्ञानां गन्धानामुपसेवनैश्च । यथर्त्तु विहितैः स्नानैः । अहतैः प्रियैर्वस्त्रैः परिहितैः । सुहृदादीनां दर्शनैः । प्रियश्रुतिभिर्गीतवादित्रशब्दैः । हर्षणाश्वासनवचोभिः । नित्यं गुरूणामुपसेवनैः । ब्रह्मचर्य्येण वाङ्मनःशरीरैः

चक्रपाणिः—दैवव्यपाश्रयचिकित्सा कर्त्तव्या इत्यत आह—गन्धैरित्यादि ॥ ८५ ॥

* क्षीरसर्पिर्भिरिति पाठान्तरम् ।

सत्येनाचारयोगेण मङ्गलैरप्यहिंसया।
वैद्यविप्रार्च्चनाच्चैव रोगराजो निवर्त्तते॥ ८६॥
यया प्रयुक्तया चेष्ट्या राजयक्ष्मातुरो निरुक्।
तां वेदविहितामिष्टिमारोग्यार्थं प्रयोजयेत्॥ ८७॥

तत्र श्लोकौ।

प्रागुत्पत्तिर्निदानानि प्राग्रूपं रूपसंग्रहः।
समासाद् व्यासतश्चोक्तं भेषजं राजयक्ष्मणः॥
नामहेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता।
इत्युक्तः संग्रहः कृत्स्नो राजयक्ष्मचिकित्सिते॥ ८८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने राजयक्ष्मचिकित्सितं नाम अष्टमोऽध्यायः॥ ८॥

मैथुनवर्ज्जनेन। सत्येनाचारयोगेण मिथ्याचारवर्ज्जनेन। मङ्गलैः कर्म्मभिः। वैद्यानां विप्राणाञ्चार्च्चनाच्च रोगराजो राजयक्ष्मा निवर्त्तते॥ ८६॥

गङ्गाधरः—युक्तिव्यपाश्रयमुक्त्वा दैवव्यपाश्रयमाह—ययेत्यादि। राजयक्ष्मातुरो यया इष्ट्या यज्ञेन प्रयुक्तया निरुक् निवृत्तरोगो भवेत्, वेदे यस्या इष्टे राजयक्ष्मनाशाशीः श्रूयेत वेदविहितां तामिष्टिं राजयक्ष्मिण आरोग्यार्थं प्रयोजयेदिति॥ ८७॥

गङ्गाधरः—राजयक्ष्माधिकारोक्ताध्यायार्थमाह—तत्र श्लोकाविति। श्लोकौ तु प्रागुत्पत्तिरित्यादि॥ ८८॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे चिकित्सितस्थानजल्पे राजयक्ष्मचिकित्सितजल्पाख्या अष्टमी शाखा॥ ८॥

चक्रपाणिः—अतः परं मनस आनुकूल्यं यक्ष्मारम्भकदोषं हन्तीत्यतो यया च युक्त्या चेष्टादौ सदैव मनोऽनुकूलं स्यात् तथैव वर्त्तनीयञ्च॥ ८६। ८७॥

चक्रपाणिः—प्रागुत्पत्तिरित्यादि संग्रहः। नामहेतुरिति स राज्ञः पूर्व्वमासीद्वै राजयक्ष्मा ततो मतः। इति संग्रहः॥ ८८॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां राजयक्ष्मचिकित्सितं नाम अष्टमोऽध्यायः॥ ८॥

## नवमोऽध्यायः ।

**अथात उन्मादचिकित्सितं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**बुद्धिस्मृतिज्ञानतपोनिवासः पुनर्व्वसुः प्राणभृतां शरण्यः ।**
**उन्मादहेत्वाकृतिभेषजानि कालेऽग्निवेशाय शशंस पृष्टः ॥२॥**
**विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम् ।**
**उन्मादहेतुर्भयहर्षपूर्व्वो मनोविघातो * विषमाश्च चेष्टाः ॥**

गङ्गाधरः—अथोद्देशक्रमेण यक्ष्मचिकित्सितानन्तरमुन्मादचिकित्सितमाह—अथात इत्यादि । पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः उन्मादचिकित्सिते वक्तव्ये निदानस्थाने व्याख्यातस्योन्माद-निदानस्य व्यवसायार्थं श्लोकेन पुनरिह तदुन्मादनिदानमाह—बुद्धिस्मृती-त्यादि । बुद्ध्यादीनां त्रयाणां निवासः सर्व्व एव प्राणी ततः का प्रशंसा पुनर्व्वसोरेतद्वचनेन ? उत्कृष्टबुद्ध्यादय इह बुद्ध्यादिशब्देन तत्प्रशंसावचनार्थं विवक्षिताः । बुद्धिर्व्यवसायात्मिका ज्ञानं तत्त्वज्ञानम् । उन्मादस्य यानि हेत्वाकृतिभेषजानि शशंस ॥ २ ॥

गङ्गाधरः तत्रादौ हेतुमाह—विरुद्धदुष्टेत्यादि । विरुद्धानां संयोगतो द्रव्याणां भोजनं दुष्टानां गरादिभिद्रव्याणां भोजनम् अशुचीनां द्रव्याणाञ्च भोजनम् । देवादीनां प्रधर्षणमभिभववाक्योक्तिः । भयञ्च हर्षश्च भवतः उन्मादादव्यवहितपूर्व्वकाले भवतीति भयहर्षपूर्व्वः । मनोविघातः कामक्रोध-

चक्रपाणिः—इदानीमुपोद्घातितं राजयक्ष्मचिकित्सितमभिधाय क्रमागतोन्मादचिकित्सितं ब्रूते । अयं क्रमः चरकसंस्कृतां पञ्चाध्यायीमर्शोऽतीसारवीसर्पमदात्ययद्विव्रणीयरूपां परित्यज्य ज्ञेयः । बुद्धिरूहापोहवती, स्मृतिः स्मरणं ज्ञानमौपदेशिकम् अतीतार्थविषयज्ञानं वा, तपश्चान्द्रायणादि, तेषां निवास आश्रय इत्यर्थः । उन्मादहेत्वादौ हेतुग्रहणे नात्र वक्तव्याः संप्राप्तिस्थितिरूपकालाः उन्माद-ग्म्यहेतुविषयतया गृह्यन्ते । आकृतिग्रहणेनाभिधेयस्योन्मादस्वरूपस्य ग्रहणं ज्ञेयम् ॥ १ । २ ॥

चक्रपाणिः—सम्प्रत्युन्मादहेतुमाह—विरुद्धेत्यादि । विरुद्धं संयुक्तमत्स्यादि, दुष्टं गरादि, अत्यर्थदोषजनकञ्च । अशुच्यपवित्रम् । भयहर्षपूर्व्वो मनोऽभिघात इत्यत्र पूर्व्वशब्दः कारण-वाचित्वेन भयहर्षकारणकेन मनोऽभिघात इत्यर्थः । एतद् विरुद्धाहारादि यथासम्भवं वा कारणं

* मनोऽभिघातः इति बहुषु ग्रन्थेषु पाठः ।

तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥३
धीविभ्रमः सत्त्वपरिप्लवश्च पर्य्याकुला दृष्टिरधीरता च ।
अबद्धवाक्त्वं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम ॥४

रागलोभभयहर्षशोकचिन्तोद्वेगादिभिर्विहन्यते मन इति कामादिर्मनोविघातः । विषमाश्च चेष्टा इति विषमाङ्गन्यासो विषमश्च तन्त्रप्रयोगः । इत्येष उन्माद-हेतुः । सम्प्राप्तिमाह- तैरल्पसत्त्वस्येत्यादि । तैः कामादिभिर्हेतुभिरल्पं सत्त्व-मुपहतं मनो यस्य तस्य प्रचलितायां बुद्धौ तैर्विरुद्धदुष्टाशुचिभोजनादिभिः प्रदुष्टा मला वातादय बुद्धेर्निवासं हृदयमुपसृत्य प्रदूष्य मनोवहानि स्रोतांसि स्रोतोविमानोक्तानि अधिष्ठाय आवृत्य नरस्य चेतः आशु प्रमोहयन्तीत्युन्मादं जनयन्ति । उन्मादं पुनर्मनोबुद्धिसंज्ञास्मृतिभक्तिशीलचेष्टाचारविभ्रंशं विद्यात् इत्युक्तं निदानस्थाने ॥ ३ ॥

गङ्गाधरः—उन्मादस्य सामान्यलक्षणमाह धीविभ्रम इत्यादि । धीविभ्रम इतस्ततो बुद्धेश्चालनम् । सत्त्वपरिप्लवो मनसोऽतिचाञ्चल्यम् । दृष्टेर्नेत्रयोरित-स्ततो व्याकुलतया प्रेरणम् । अधीरता धैर्य्याभावः । अबद्धवाक्त्वमविरतं सम्बन्धासम्बन्धवाक्यवचनम् । हृदयञ्च शून्यं हृदयस्थाने शून्यमिव मन्यते । इति सर्व्वोन्मादगदस्य लिङ्गमेतैर्लक्षणैरनुमीयतेऽस्योन्मादरोगो जात इति । नैतैः वातिको वा पैत्तिको वा उन्माद इत्येवमादिरुन्मादोऽनुमीयते । नेदं सामान्यं पूर्व्वरूपम्, निदानस्थानोक्तसामान्यपूर्व्वरूपानैक्यात्, स मूढ़चेता इत्यादि-रूपाणाम् अनन्तरोक्तानामपि सामान्यलिङ्गत्वाच्च ॥ ४ ॥

ज्ञेयम् । भयहर्षावुपलक्षणौ । तेन क्रोधादयोऽपि मनोऽभिघातका उन्नेयाः । क्रोधेन ह्यभिहते मनसि भयहर्षपूर्व्वक एवोन्मादो भवति । तैरित्यादिना सम्प्राप्तिमाह—अल्पसत्त्वस्याल्पसत्त्वगुणस्य हृदयं यद्यपि बुद्धिनिवासत्वं न अर्थेदशमहामूलीयादौ प्रतिपादितमेव, तथापि बुद्धिनिवास-त्वोपदर्शनमिह कृतं, हृदयोपघाताद् बुद्ध्युपघातो वक्ष्यमाणो युक्त एव; आश्रयोपघातेनाश्रित-स्योपघातः सिद्ध एव । स्रोतांसि मनोवहानीत्यनेन हृदयदेशसम्बन्धिधमन्यो विशेषेण मनोवहा दर्शयति । किंवा केवलमेव शरीरं मनोऽस्यनुभूतं जग्राह । उक्तं हि केवलमेवास्य मनसः शरीरमधिष्ठानभूतम् । चेत इति मनः ॥ ३ ॥

चक्रपाणिः—धीविभ्रम इत्यादिना सामान्यमुन्मादपूर्व्वरूपमाह ॥ ४ ॥

स मूढ़चेता न सुखं न दुःखं नाचारधर्म्मं कुत एव शान्तिम् ।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो भ्रमत्ययं चेत इतस्ततश्च ॥ ५ ॥
समुद्भ्रमं बुद्धिमनःस्मृतीनामुन्मादमागन्तुनिजोत्थमाहुः ।
तस्योद्भवं पञ्चविधं पृथक् तु वक्ष्यामि लिङ्गानि चिकित्सितञ्च ॥ ६
रुक्षाल्पशीतान्नविरेकधातु-क्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिजुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिञ्चाप्युपहन्ति शीघ्रम् ॥

गङ्गाधरः—तानि चाह—स मूढ़चेता इत्यादि । स धीविभ्रमादिमान् पुरुषो मूढ़चेताः सन सुखं दुःखञ्च आचारं धर्म्मञ्च न विन्दति, कुत एव शान्तिं विन्दति । शान्तिमलभमानः पुनरपास्तस्मृतिबुद्धिसंज्ञः सन्नयमितस्ततश्च चेतो भ्रमति भ्रामयति, इति णिजर्थोऽन्तर्भूतः । इत्येवं बुद्धिमनःस्मृतीनां समुद्भ्रममागन्तुनिजोत्थमुन्मादमाहुरिति । निदानस्थाने पूर्व्वमुक्तमुन्मादं पुनर्मनोबुद्ध्यादिविभ्रंशं विद्यादिति । तस्मात् निजागन्तून्मादस्य सामान्यलिङ्गं, यः पूर्व्वरूपमिदं धीविभ्रमादिकं व्याचष्टे तत् कथमुपपद्यते ? पञ्चोन्मादा भवन्तीति निदानस्थाने प्रोक्तं, तदेव संग्रहेणाह—तस्योद्भवमित्यादि । तस्योन्मादस्य पञ्चविधमुद्भवं निदानस्थानेऽभिहितं वातपित्तकफसन्निपातागन्तुनिमित्तं, तत्र दोषनिमित्तं चतुर्व्विधमागन्तुजमेकविधं, पृथक् पृथक् वक्ष्यामि ; पृथक् लिङ्गानि पृथक् चिकित्सितञ्च वक्ष्यामि ॥ ५ । ६ ॥

गङ्गाधरः—तद्यथा—रुक्षाल्पशीतान्नेत्यादि । रुक्षान्नमल्पान्नं शीतान्नम् । विरेको विरिच्यते दोषः शरीरान्निःसार्य्यते येन स विरेको वमनं विरेचनञ्च । धातुक्षयो रसादीनां ह्रासः । उपवासोऽनशनम् । एतैरतिवृद्धोऽनिलः चिन्तादिजुष्टं चिन्ताकामक्रोधशोकलोभभयहर्षादिभिः सेवितं हृदयं मनः प्रदूष्य बुद्धिं

चक्रपाणिः—कुत एव शान्तिमिति कुतोऽपि शान्तिं निर्व्वृतिं न विन्दति । संज्ञानामोल्लेखेन ज्ञापनम् । अयं चेत इति ॥ ५ ॥

चक्रपाणिः—उन्मादसंज्ञाव्युत्पत्तिमाह—समुद्भ्रममित्यादि । तत्र भ्रम उन्माद इत्येकोऽर्थः मनोविभ्रमः चिन्तनादिना चिन्तानिदानोक्तसंज्ञादिविभ्रमोऽपि मनोविभ्रम एवान्तर्भावनीयः संज्ञादिविभ्रमस्यापि तज्जन्यत्वात् । तस्योद्भवमित्यादौ यद्यपि पञ्चानां मध्येऽसाध्यस्य सान्निपातिकस्य चिकित्सितं न वक्तव्यम्, तथापि छत्रिणो गच्छन्तीति न्यायेन बाहुल्यमाश्रित्य

अस्थानहास्यस्मितनृत्यगीत-वागङ्गविक्षेपणरोदनानि।
पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलश्चानिजलस्य रूपम् ॥ ७ ॥
अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम्।
उन्मादयत्युग्रमनात्मकस्य हृदि स्थितं पूर्व्ववदाशु कुर्य्यात् ॥
अमर्षसंरम्भविनग्नभावाः सन्तर्ज्जनाभिद्रवणौष्ण्यरोषाः।
प्रच्छायशीतान्नजलाभिलासाः पीता च भाः पित्तकृतस्य लिङ्गम् ॥ ८

स्मृतिश्चापि शीघ्रमुपहन्ति। तस्योपहतबुद्धिस्मृतिमतोऽस्थानहास्यादीनि भवन्ति। पारुष्यं कार्श्यमरुणवर्णता चैताश्च भवन्ति। जीर्णे चाहारे बलमुन्मत्तता त्वधिका स्यादिति। एभिर्लिङ्गैर्धीविभ्रमादिमानुन्मादो वातिक इत्यनुमीयत इति ॥ ७ ॥

गङ्गाधरः—पित्तजोन्मादस्य सलिङ्गं हेतुमाह—अजीर्णेत्यादि। अजीर्णं पित्तप्रकोपहेतुः, तेनाजीर्णजनकैर्भोज्यैः कट्वम्लविदाहिभिर्भोज्यैरशीतैरुष्णस्पर्शैः भोज्यैश्च चितं सञ्चितं पित्तमुदीर्णवेगं सदनात्मकस्य दुष्टमनस्कस्य हृदि स्थितं भवत् पूर्व्ववत् चिन्तादिजुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिश्चाप्युपहत्याशु अत्युग्रम् उन्मादं रोगं कुर्य्यात्। इति पैत्तिकोन्मादस्य निदानपूर्व्वकसम्प्राप्तिः। तस्य रूपमाह—अमर्षेत्यादि। तस्योन्मत्तस्यामर्षादिभावाः, सन्तर्ज्जनादयः, प्रच्छायाद्यभिलाषाः पीता च भाः पित्तकृतस्योन्मादस्य लिङ्गम्। अमर्षोऽक्षमा। संरम्भ आरभटी। सन्तर्ज्जनं परेषां त्रासजननम्। अभिद्रवणं पलायनम्। रोषः क्रोधः। प्रच्छायश्च शीतान्नजले च तेषामभिलाषाः। पीता शरीरस्य भा इति ॥ ८ ॥

चिकित्सितं वक्ष्यामीत्युक्तम्। चिन्तेत्यादिः येषां ते कामक्रोधादयो गृह्यन्ते। आदिशब्द उक्तप्रकारवाची। अस्थानेऽविषये हासादीन्यस्थानहासस्मितादीनि ॥ ६। ७ ॥

चक्रपाणिः—अजीर्णेत्यादिना पित्तोन्मादमाह। चितमित्यनेन चयपूर्व्वकं चयात् पूर्व्वकालत्वेन पित्तस्य महान्तं कोपं दर्शयति। चयपूर्व्वकोऽतिदोषप्रकोपमूलत्वान्महान् भवति। अन्ये तु चितशब्देन प्रकोपमिच्छन्ति। अत्युग्रमिति तीव्रवेगम्। पूर्व्ववदित्यनेन वातोन्मादवत्। अमर्षः अक्षान्तिः। संरम्भ आरभटी। विनग्नभावो विवस्त्रत्वम्। अतिद्रवणं त्वरितगमनम्। प्रच्छायः प्रवृद्धच्छायो देशः ॥ ८ ॥

सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्म्मणि संप्रवृद्धः।
बुद्धिं स्मृतिञ्चाप्युपहत्य चित्तं प्रमोहयन् सन् जनयेद् विकारम्॥
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा।
छर्द्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मकस्य॥९
यः सन्निपातप्रभवो हि घोरः सर्व्वैः समस्तैः स तु हेतुभिः स्यात्।
सर्व्वाणि रूपाणि बिभर्त्ति तादृग्विरुद्धभैषज्यविधिर्विवर्ज्ज्यः॥१०

गङ्गाधरः—कफजोन्मादस्य सहेतुलिङ्गमाह—सम्पूरणैरित्यादि। सम्पूरणद्रव्याणि दधिदुग्धादीनि। दधिदुग्धादिभिर्भुक्तमन्दविचेष्टितस्याल्पचेष्टावतः सोष्मा सपित्तः कफः प्रवृद्ध इत्याहुरेके, सपित्तेन कफेनोन्मादस्तु यो जन्यते स हि कफोन्माद उच्यते। अन्ये तु शक्तिरूष्मा उत्कृष्टशक्तिः कफ इत्याहुः। द्वयमप्येतन्न साधु पृथग्दोषभवाभावप्रसङ्गात्। सर्व्वो हि पाञ्चभौतिकस्तेन श्लेष्मा गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलगुणोऽपि स्वारम्भकतेजस उद्रेकेण शीतविपर्य्ययेण खलूष्मणा सहितः प्रवृद्धो भवति न तून्मादरोगे शीतगुणेन प्रवर्द्धते कफः। शीतगुणानव्यतिरेकेण प्रवृद्धः श्लेष्मा सोष्मा भवति, तदारम्भकतेजस उद्रेकात्। इति सोष्मा कफः प्रवृद्धः सन मर्म्मणि प्राधान्यात् तु हृदये स्थित्वा मनो दूषयित्वा बुद्धिं स्मृतिञ्चाप्युपहत्य प्रमोहयन् सन विकारमुन्मादं जनयेत्। तत उन्मत्तस्य मन्दमल्पं वाक्चेष्टितं नारीषु विविक्ते विरले स्थितौ प्रियता भुक्ते बलमुन्मत्तताधिक्यं नखनयनमूत्रपुरीषशरीरस्य शुक्लाभासश्च कफात्मकस्योन्मादस्य लिङ्गमित्यनुवृत्तेः॥ ९॥

गङ्गाधरः—सन्निपातजस्य सहेतुलिङ्गमाह—यः सन्निपातेत्यादि। य उन्मादः सन्निपातप्रभव उक्तः स तु वातादिप्रत्येकदोषाणां समस्तैस्त्रिदोषहेतुभिः स्यात्। स हि घोरो भयानकः। सर्व्वाणि त्रयाणां वातादिजानां यानि रूपाणि तानि सर्व्वाणि रूपाणि बिभर्त्ति। तादृक् समस्तसर्व्वहेतुजः

चक्रपाणिः—सम्पूरणैरित्यादिना कफोन्मादमाह। सोष्मा कफ इति सह उष्मणा कफ उन्मादं करोति न केवल इति। उन्मादकरणे कफस्य ऊष्मसहितत्वरूपं स्वभावं दर्शयति। किंवा उष्मशब्देन वीर्य्यं शक्तिरूपमुच्यते, तेन सोष्मा कफ इति उत्कृष्टशक्तिकः कफ इत्यर्थः। मर्म्मणीति हृदये। नारीविविक्तयोः प्रियता नारीविविक्तप्रियता, विविक्तं विजनम्॥ ९॥

चक्रपाणिः—य इत्यादिना सान्निपातिकमाह। सर्व्वैरित्युक्तोऽपि प्रत्येकं सर्व्वहेतूनां जनकत्वं

देवर्षिगन्धर्व्वपिशाचयक्ष-रक्षःपितृणामभिधर्षणानि।
आगन्तुहेतुर्नियमव्रतादि मिथ्याकृतं कर्म्म च पूर्व्वदेहे॥ ११॥

सर्व्वोन्मादरूपभृत् स उन्मादः विरुद्धभैषज्यविधियो भैषज्यविधिर्वातिकोन्मादे स पैत्तिकोन्मादे विरुध्यते श्लैष्मिकोन्मादे च, उष्णस्निग्धगुणभेषजं वातहरं न पित्ते युज्यते, गुरुपिच्छिलस्निग्धादिगुणं न कफे, ततो विरुद्धभैषज्यविधित्वाद् विवर्ज्यस्त्याज्यो न चिकित्स्य इति। यत्र सन्निपातजः कश्चित् साध्य उक्तः, स नैवं सर्व्वैः समस्तैर्हेतुभिर्जातः सर्व्वलक्षणः साध्यत्वेनोक्तः। भैषज्यविधिः यत्र त्रिदोषजे विरुद्धो न भवति स एव साध्यत्वेनोक्तः। रूक्षशीताद्यल्पांशे कुपितत्रिदोषजे विरुद्धभैषज्यविधिर्न भवति। इति निजाश्चत्वार उन्मादाः सहेतुलिङ्गैरुपदिष्टाः। यस्तु सुश्रुतेन मानसदुःखजः पञ्चम उक्तः, स च वातादिजेषु त्रिष्वन्तर्भवति; सर्व्वेषु हि कामरागक्रोधलोभहर्षभयशोकचिन्तादिभिर्मनोऽभिघात उक्तस्तत्र वातकोपनैर्जाते तून्मादे मानसदुःखजो वातजेऽन्तर्भवति, पित्तकोपनैर्जाते पैत्तिके, श्लेष्मकोपनैर्जाते श्लैष्मिके, तस्मान्नातिरिक्तो मानसदुःखजः। सुश्रुतेन हेतुभेदज्ञानार्थं पृथगुक्त इत्यतो न विरोधः। विषजश्च विषरोग एवान्तर्भूतः। नातोऽतिरिक्तस्तद्विषचिकित्सया तत्प्रतिकारवचनात्। कोद्रवधुस्तूरादिभिरुन्मादवन्मनस उन्मत्ततासामान्यात् सुश्रुतेनोक्तो न पुनः उन्मादरोगाभिप्रायेणेति॥ १०॥

गङ्गाधरः—अथागन्तुजोन्मादमाह देवर्षीत्यादि। देवादीनामभिधर्षणं वाचाभिभवकरणम्। रक्षोऽत्र द्विविधं राक्षसब्रह्मराक्षसभेदात्। मिथ्याकृतं अयथाविधिना कृतं नियमव्रतादि। तथा पूर्व्वदेहे मिथ्याकृतं कर्म्म च उन्मादजन्मन्यागन्तुर्नामहेतुः। एते हेतवः प्रागेवोन्मदयन्ति पश्चाद्दोषा अनुबध्नन्ति न तु प्रागेव दोषान् कोपयन्ति तत उन्मादयन्तीति दोषजाद्भेदः। एभ्यो देवादिभ्यः

स्यादत आह समस्तैरिति। विरुद्धभैषज्यमिति विरुद्धत्वाद् विवर्ज्यः। केचित्तु तादृक्शब्देन य एव समस्तहेतुजः सर्व्वलक्षणश्च स एव वर्ज्यभेषजस्य हेतुलक्षण इति वदन्ति॥ १०॥

चक्रपाणिः—देवर्षीत्यादिना आगन्तून्मादमाह। ये चासंख्येया ग्रहगणाः सुश्रुतोक्तास्ते इह आविष्कृता विज्ञेयाः। वक्ष्यति च इत्यपरिसंख्येयानां ग्रहाणामाविष्कृततया ह्यष्टावेते व्याख्याता इति। अत्र च रक्षःशब्देन राक्षसब्रह्मरक्षसोर्ग्रहणम्, ब्रह्मराक्षसे समस्ता एवोक्ताः। अभिधर्षणमावेशः। नियमेत्यादिना ऐहिकं कर्म्म देवाद्यावेशकारणम्। मिथ्याकृतं कर्म्म चेत्यनेन पूर्व्वजन्मकृतं कर्म्म आह॥ ११॥

अमर्त्यवाग्विक्रमवीर्य्यचेष्टो ज्ञानादिविज्ञानवलादिभिर्यः।
उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत् तम् ॥१२॥
अदूषयन्त पुरुषस्य देहं देवादयः स्वैस्तु गुणप्रभावैः।
विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्य्यकान्तौ ॥ १३ ॥

आगन्तुभ्यो हेतुभ्यो जायते य उन्मादः स खलु दोषजेभ्यो निदानपूर्व्वरूपरूपवेदनोपशयविशेषान्वित आगन्तुज उच्यते ॥ ११ ॥

गङ्गाधरः—तद्विशेषानाह—अमर्त्त्येत्यादि। अमर्त्त्या देवादयस्तेषां वाचोऽनुकारेण वाचं यो वक्ति विक्रमानुकारेण विक्रामति वीर्य्यानुक्रमेण वीर्य्यप्रकाशं करोति चेष्टानुरूपेण चेष्टते च, य एवम्भूतो ज्ञानादिभिरपि देवादीनाममर्त्त्यानां विशिष्टः। इत्येके व्याचक्षते। ज्ञानं तस्मिंस्तदिति लोके तत्त्वतो ज्ञानं स्थाणौ स्थाणुरिति, आदिना पारमार्थिकतत्त्वतो ज्ञानं, विज्ञानं शिल्पविषयशास्त्रविषयज्ञानमिति। अथवा ज्ञानं वुद्धिस्तर्कवितर्कविचारादितो निश्चयात्मिका यया व्यवस्यति कर्त्तुं वक्तुं वा। आदिना धृतिस्मृत्यहङ्काराः। विज्ञानं प्रज्ञा पारमार्थिकतत्त्वज्ञानमात्मादिचतुर्व्विंशतितत्त्वतन्मयस्थावरजङ्गममिदं सर्व्वं मिथ्याभूतं लोके सत्यमिति। वलं सामर्थ्यम्। आदिना पौरुषग्रहणधारणादि। एभिर्वामर्त्त्यवाग्विक्रमवीर्य्यचेष्टावान् यः पुरुषः खलु ज्ञानतोऽमर्त्त्यवद्वक्ति स्मृतितो धैर्य्यतश्चाहङ्कारतश्चामर्त्त्यवद्वक्ति तथा विज्ञानतश्चामर्त्त्यवद्वक्ति वलतश्चामर्त्त्यवद्विक्रामति वीर्य्यञ्च शक्तिं दर्शयति तथा चामर्त्त्यवद्वलतश्चेष्टते। तथोन्मादकालो यस्य तस्यैव पुरुषस्यानियतस्तं भूतोत्थमुन्मादमुदाहरेत्। इति सामान्यं भूतोन्मादलक्षणम्। भूतानि देवादयो ग्रहाः। उक्तञ्च सुश्रुते। "गुह्यानागतविज्ञानमनवस्था सहिष्णुता। क्रिया वाऽमानुषी यस्मिन् स ग्रहः परिकीर्त्त्यते॥" इति ॥ १२ ॥

गङ्गाधरः—ननु देवादयः कथं गृह्णन्ति न च दृश्यन्त इत्यत आह—अदूषयन्त इत्यादि। देवादयो ग्रहाः पुरुषस्य देहमदूषयन्त एव स्वैर्गुणप्रभावैरदृश्या एव

चक्रपाणिः—अमर्त्त्येत्यादिनागन्तूनां सामान्यलिङ्गान्याह। अमर्त्त्यैरमनुष्यैर्वागादिभिर्लक्षितं भूतोत्थमुदाहरेत्। अनियत इति वातिकादिवत् आहारजीर्णादिकालवन्न कालनिश्चयः। ये तु नियत इति पठन्ति, तेषां वक्ष्यमाणनियतनिथ्यादीनां ग्रहणमभिप्रेतम् ॥ १२ ॥

चक्रपाणिः—अदूषयन्त ईषद् दूषयन्तः। गुणप्रभावैरिति अनियमादिगुणप्रभावैः। तरसा

आघातकालास्तु सपूर्व्वरूपाः प्रोक्ता निदानेऽथ सुरासुरैश्च *।
उन्मादरूपाणि पृथङ्निबोध कालञ्च गम्यान् पुरुषांश्च तेषाम् ॥१४

तद् यथा—सौम्यदृष्टिं गम्भीरमधृष्यमकोपनमस्वप्नम् अभोजनाभिलासिनमल्पस्वेदमूत्रपुरीषवातं शुभगन्धं फुल्लपद्म-

सन्तस्तरसा वेगेन विशन्ति। यथा स्वगुणप्रभावैश्छाया दर्पणं विशति, आतपः सूर्य्यकान्तं विशति न च दृश्यते तद्वदिति ॥ १३ ॥

गङ्गाधरः—यदा देवादय एवमाग्रन्ति तदाह आघातकालास्त्वित्यादि। निदाने पूर्व्वमाघातकालाः सपूर्व्वरूपाः प्रोक्ताः। निदानस्थाने ह्युन्मदयिष्यता इत्यादिना अभिघातकाला व्याख्याता भवन्तीत्यन्तेन प्रोक्ताः। पूर्व्वरूपाणि च देवगोब्राह्मणतपस्विनां हिंसारुचित्वमित्यादिना पूर्व्वरूपाणि भवन्तीत्यन्तेन प्रोक्तानि। अथ सुरासुराद्यैश्चोन्मादरूपाणि पृथक् प्रत्येकं निबोध। तेषां ग्रहणकालं गम्यांश्च पुरुषान् निबोध। इति। अत्र सुरश्चासुराश्चेति। सुरो देवः असुरा देवभिन्नाः ऋषिगन्धर्व्वादयः सप्त। वक्ष्यमाणलक्षणकालगम्य-पुरुषनिर्द्देशदर्शनात्, न त्वसुरा देवशत्रवः। सुश्रुते तु देवशत्रुग्रहणलक्षणमुक्तं न च ब्रह्मराक्षसग्रहणमुक्तमिह तु तदुक्तं न च देवशत्रुग्रहणम् उक्त-मिति विरोधो न ज्ञेयः। न हि सर्व्वः सर्व्वं वक्ति; आप्तवचनादुभयमेव तथ्यमिति। यस्तु ब्रह्मराक्षस एव देवशत्रुरित्याह तन्न, सुश्रुतोक्ततल्लक्षणेन अत्रोक्तलक्षणभेदात् ॥ १४ ॥

गङ्गाधरः—अथैतदनुक्रमेण देवादिग्रहणलक्षणं पृथगाह तद् यथेत्यादि। सौम्यदृष्टिमित्यादिना देवग्रहोन्मादलक्षणम्। सौम्यरूपेण प्रसन्नभावेन दृष्टि-र्यस्य तम्। गम्भीरं बुद्ध्यादिगाम्भीर्य्यापन्नम्। अभोजनाभिलासिनं

अतिवेगेन। त्वरा वेगेन। दृष्टान्तद्वयमाह—छायेत्यादि। छाया यथा दर्पणम् आतपः सूर्य्यकान्तम् अदूषयित्वैव अदृश्यमानप्रभावावेशौ च भवतः, तथा देवादयोऽपि देहं विशन्तीत्यर्थः ॥ १३ ॥

चक्रपाणिः—आघातकाल इत्यावेशावकाशः। तेन निदाने तद् यथा पापकर्म्मणः समारम्भे इत्यादिनोक्ताः। कालस्तिथिरूपः ॥ १४ ॥

चक्रपाणिः—भोजनाभिलाषी न भवत्यभोजनाभिलाषी। देवादिशब्देनेह सुश्रुतमतात् देवाद्यनुकारिणस्तदनुचरा ज्ञेयाः। उक्तं हि सुश्रुतेन—न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति। ये त्वाविशन्तीति वदन्ति मोहात् ते भूतविद्याविषयादपोह्याः। तेषां

* सुरादिभिश्च इति पाठान्तरम्।

वदनमिति देवोन्मत्तं विद्यात् ॥ ० ॥ गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभिध्यानानुरूप-चेष्टाहारव्याहारं तैरुन्मत्तं विद्यात् ॥ ० ॥ अप्रसन्नदृष्टिमपश्यन्तं निद्रालुमप्रतिहत-वचनमनन्नाभिलासिनमरोचकाविपाकपरीतञ्च पितृभिरुन्मत्तं विद्यात् ॥ ० ॥ चण्डं साहसिकं तीक्ष्णं गम्भीरमधृष्यं मुख-वाद्यनृत्यगीतान्नपानस्नानमाल्यधूपगन्धरतिं रक्तवस्त्रबलिकर्म्म-

भोजनाभिलासशून्यमित्येवम्भूतं देवोन्मत्तं विद्यादिति। सुश्रुते चान्यथा पठितम्—"सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्रीरवितथसंस्कृत-प्रभाषी। तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति च यः स देवजुष्टः ॥" इति। तदप्यवितथमार्षत्वाद्बहुविधत्वाच्च ग्रहलक्षणानां, कश्चित् किञ्चिदाह न सर्व्वमिति ॥०॥ असुरोन्मादलक्षणमाह—गुरुवृद्धेत्यादि। गुरवश्च वृद्धाश्च सिद्धाश्च ते ऋषयश्चेति। गुर्व्वादयस्त्रयो विशेषणशब्दा ऋषिशब्दस्य यथायोग्यं, तेन कश्चिद् गुरुऋषिः कश्चिद् वृद्धऋषिः कश्चित् सिद्धऋषिः। तेषां गुर्व्वादृषीणां यथाभिशापादयः कार्य्यास्तथा चेष्टाहारव्याहारा यस्य तं तैरृषिभिरुन्मत्तं विद्यात्। सुश्रुतेन नैष उन्माद उक्तः, उक्तश्चोरगग्रहोन्मादः। "भूमौ यः प्रसरति सर्पवत् कदाचित् सृक्कण्यौ विलिहति जिह्वया तथैव। निद्रालुर्गुड़मधु-दुग्धपायसेप्सुर्विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥" इति। एतदपि न प्रत्याख्यातव्यम् असङ्ख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेवेह व्याख्याता इति ॥ ० ॥ अप्रसन्नदृष्टिमित्यादि। अप्रसन्नदृष्टिं प्रसादरहितदर्शनम्। अपश्यन्तं प्रायेण लोकं प्रति दृष्टिं न करोति। अप्रतिहतवचनं न दृढ़वचनम्। सुश्रुते चान्यथा पठितः। "प्रेतेभ्यो विसृजति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्यवस्त्रः। मांसेप्सुस्तिलगुड़पायसाभिकामस्तद्भक्तो भवति पितृग्रहाभि-भूतः ॥" इति। नैतद् वितथमनेकविधत्वात् ॥०॥ चण्डमित्यादि। चण्डमुग्रम्। अधृष्यं कस्यचिदपि धर्षणवचनं न सहते। मुखवाद्यादिषु रतिर्यस्य तम्।

ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः। असृग्वसामांसभुजः सुभीमा निशाविहाराश्च तमाविशन्ति ॥ ऋषिसधर्म्मतया गुर्व्वादीनामसूचितानामप्युदाहरणम्। गुर्व्वाद्यभिशापादयो यादृशेनाभिप्रायेण भवन्ति तादृक् स्वरूपचेष्टादयोऽपि तैरुन्मत्तस्य भवन्तीति गुर्व्वादिग्रन्थार्थः। अनन्नाभिलाषो नान्नप्रार्थना, अरोचकस्तु प्रार्थनादप्युपयोगसमये नाभिलाषः। चण्डमिति मारणा-

हासकथानुयोगप्रियं शुभगन्धञ्च गन्धर्व्वोन्मत्तं विद्यात् ॥०॥ असकृत्स्वप्नरोदनहासिनं नृत्यगीतपाठकथान्नपानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषणं यक्षोन्मत्तं विद्यात् ॥०॥ नष्टनिद्रमन्न * द्वेषिणमनाहारम् अप्रतिबलं शस्त्रशोणितमांसरक्तमाल्याभिलासिनं सन्तर्ज्जकं राक्षसोन्मत्तं विद्यात् ॥०॥ प्रहासानृतवादिनं † देवविप्रवैद्यद्वेषावज्ञाभिः स्तुतिमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्मपीड़नेन ब्रह्मराक्षसोन्मत्तं विद्यात् ॥०॥ अस्वस्थचित्तस्थानमनभिमानं ‡ नृत्यगीत-

रक्तवस्त्रादिषु प्रियम्। शुभगन्धो गात्रे यस्य तम्। सुश्रुते चान्यथा पठितम्। "हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः। नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्व्वग्रहपरिपीड़ितो मनुष्यः" ॥०॥ असकृदित्यादि। असकृत् पुनःपुनर्निद्रारोदनहासा विद्यन्तेऽस्य तम्। नृत्यगीतादिषु रतिर्यस्य तम्। रक्तश्च विप्लुतश्चाश्रुपूर्णमक्षि यस्य तम्। द्विजातीन् वैद्यांश्च परिवदितुं शीलमस्य तम्। रहस्यं गोपनीयं भाषितुं शीलमस्य तम्। इति यक्षोन्मादः। सुश्रुतेऽन्यथा पठितः। "ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः। तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीड़ितो मनुष्यः ॥" इति ॥०॥ नष्टनिद्रमित्यादि। अप्रतिबलं लोके मनुष्यः कोऽपि यस्य बलप्रतिबलो नास्ति तम्। शस्त्राद्यभिलासिनम्। सन्तर्ज्जकं सम्यक् तर्ज्जनकारकम्। एतद्राक्षसोन्मादः सुश्रुतेऽन्यथा पठितः। "मांसासृग्विविधसुराविकारलिप्सुर्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः। क्रोधार्त्तो विपुलबलो निशाविहारी शौचद्विड् भवति च रक्षसा गृहीतः" ॥०॥ प्रहासेत्यादि। प्रहासवादिनमनृतवादिनञ्च पुरुषं देवादीनां द्वेषावज्ञाभिरेवं स्तुत्यादुदाहरणैरेवां काष्ठलगुड़ादिभिरात्मनि पीड़नेन ब्रह्मराक्षसोन्मत्तं विद्यात्। सुश्रुतेन नैष पठितः पठितश्चासुरोन्मादः "संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः। सन्तुष्टो न भवति

त्मकं, स्तुतिः स्तावको ग्रन्थः। उदाहरणमिति पठनं स्तुत्यादीनामेव। स्थानमलभमानमिति

* अन्नपानद्वेषिणमिति चक्रः। † प्रहासनृत्यप्रधानमिति पाठान्तरम्। ‡ अस्वस्थचित्तं स्थानमलभमानम् इति चक्रः।

हासिनं बद्धाबद्धप्रलापिनं साक्षिकूटमलिनं * सलिलरथ्याचेल-तृणाश्मकाष्ठाधिरोहणरतिं भिन्नरुक्षवर्णस्वरं नग्नं विधावन्तं नैकत्र तिष्ठमानं दुःखान्यावेदयन्तं नष्टस्मृतिञ्च पिशाचोन्मत्तं विद्यात् ॥ १५ ॥

तत्र शौचाचारतपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्याञ्च देवा धर्षयन्ति ॥०॥ स्नानशुचिविविक्तसेविनं धर्म्म-शास्त्रश्रुतिकाव्यकुशलञ्च प्रायः षष्ठीनवम्योर्ऋषयः ॥ ० ॥ देव-

चान्नपानजातं दुष्टात्मा भवति च देवशत्रुजुष्टः" इति ॥ ० ॥ अस्वस्थचित्तेत्यादि । न स्वस्थं चित्तस्थानं हृदयं यस्य तम् । नृत्यगीतहासाः सन्त्यस्य तम् । बद्धाबद्धं सम्बन्धासम्बन्धं प्रलपितुं शीलमस्य तम् । साक्षिकूटमलिनम् अक्षिकूटेन नेत्रगोलकसहितमलिनदेहं, सलिलादिषु आरोहणे रतिर्यस्य तम् । रथ्या प्रतोलिर्विशिखेत्यनर्थान्तरम् । भिन्नश्च रुक्षश्च वर्णः स्वरश्च यस्य तम् भिन्नरुक्षवर्णस्वरम् । नग्नं परिधानवस्त्रं जहद्वर्त्तते । विधावन्तं द्रुतं गच्छन्तम् । एकत्र स्थाने तु न तिष्ठमानम् । स्वगतदुःखान्यावेदयन्तम् । नष्टस्मृतिम् । इति पिशाचोन्मादः । सुश्रुतेऽन्यथा पठितः । "उद्धस्तः कृशपरुषश्चिरप्रलापी दुर्गन्धो भृशमशुचिस्तथातिलोलः । बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः" इति ॥ १५ ॥

गङ्गाधरः—अथैषां ग्रहणकालं ग्राह्यपुरुषांश्चाह—तत्रेत्यादि । शौचादि-कोविदं नरं गम्यं प्रायः शुक्लप्रतिपदि त्रयोदश्याञ्च शुक्लायां देवा धर्षयन्तीति वक्ष्यते । सुश्रुते "देवग्रहाः पौर्णमास्याममुराः सन्ध्ययोरपि" इत्युक्तमिति । प्रायशब्देन पौर्णमास्यामपि बोध्यम् ॥०॥ स्नानेत्यादि । स्नान-सेविनं शुचिवस्त्रसेविनं विविक्तस्थानसेविनं धर्म्मशास्त्रश्रुतिशास्त्रकाव्यशास्त्र-कुशलं नरं प्रायः षष्ठीनवम्योः धर्षयन्ति ऋषय इति । क्वचिदन्यस्यामपि

स्थानमेव नास्तीति भाषमाणम् । बद्धाबद्धत्वं सम्बन्धासम्बन्धसङ्करः । तृणाद्यमेध्य-मित्यर्थः ॥ १५ ॥

चक्रपाणिः—तत्र शौचाचारमित्यादिनाभिगमनीयपुरुषान् कालञ्च पृथगाह । शौचं आचारो यस्य स शौचाचारः । शौचाचारादिशुभकर्म्मयुक्तत्वं यद्यप्युन्मादिनस्तथापि शुभकर्म्मतया

* संकटकटमलिनमिति चक्रधृतः पाठः ।

मातृपितृगुरुवृद्धाचार्य्योपसेविनं प्रायो दशम्याममावस्यायाञ्च पितरः ॥०॥ गन्धर्व्वाः स्तुतिगीतवादित्ररतिं परदारगन्धमाल्यप्रियं चौक्षाचारं प्रायो द्वादश्यां चतुर्द्दश्याञ्च ॥ ० ॥ सत्त्ववर्णरूपगर्व्व-शौर्य्ययुक्तं माल्यानुलेपनहास्यप्रियमतिवाक्प्रवक्तं * प्रायः शुक्लैकादश्यां सप्तम्याञ्च यक्षाः ॥०॥ स्वाध्यायतपोब्रह्मचर्य्यदेव-यतिगुरुपूजनारतिं नष्टशौचं ब्राह्मणवादिनं शूरमानिनं देवागार-सलिलक्रीड़नरतिञ्च प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्म-राक्षसाः ॥ ० ॥ रक्षःपिशाचास्तु हीनसत्त्वपिशुनान् स्त्रैण-लुब्धान् प्रायो द्वितीयातृतीयाष्टमीषु पुरुषान् छिद्रमवेक्ष्याभि-

तिथौ प्रायपदेन बोध्यम् ॥ ० ॥ देवेत्यादि। देवादुग्रपसेविनं नरं प्रायो दशम्यां कृष्णायाम् अमावास्यायाञ्च पितरो धर्षयन्ति। प्रायशब्देनान्यस्यामपि तिथौ। कृष्णपक्षे च पितर इति सुश्रुतोक्तः ॥ ० ॥ गन्धर्व्वा इत्यादि। स्तुत्या-दिषु रतिर्यस्य तम्। परदाराभिगमनादिप्रियम्। चौक्षाचारञ्च नरं गन्धर्व्वाः प्रायो द्वादश्यां चतुर्द्दश्याञ्च धर्षयन्ति। प्रायशब्देन चान्यत्र तिथौ। तदुक्तं सुश्रुते। गन्धर्व्वाः प्रायशोऽष्टम्यामिति ॥ ० ॥ सत्त्ववर्णेत्यादि। सत्त्वं शरीरं, वर्णः शरीरस्य, रूपमाकृतिस्तैर्गर्व्वयुक्तं शौर्य्ययुक्तम्। माल्यादिप्रियम्। अतिशयवाचा प्रवलञ्च नरं यक्षाः प्रायः शुक्लायामेकादश्यां सप्तम्याञ्च धर्षयन्ति। प्रायशब्देन प्रतिपदि च। सुश्रुतेनोक्तं "यक्षाश्च प्रतिपद्यथ" इति ॥०॥ स्वाध्यायेत्यादि। स्वाध्यायादिषु देवादिपूजासु चारतियस्य तम्। नष्टशौचम्। ब्राह्मणात्मकवेदवादिनम्। शूरमानिनम्। देवागारे सलिले च क्रीड़ने रतिर्यस्य तं, नरं ब्रह्मराक्षसाः प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने चानुमतौ राकायाञ्च धर्षयन्ति। प्रायःपदेन अन्यत्रापि तिथौ ॥०॥ रक्षःपिशाचास्त्वित्यादि। ब्रह्मराक्षसादन्यानि रक्षांसि पिशाचाश्च पुनर्हीनसत्त्वान् हीनमनोवलान् पिशुनान् स्त्रैणलुब्धान् नरान् प्रायो द्वितीयातृतीयास्वष्टमीषु छिद्रं निर्ज्जनादिस्थानस्थमवेक्ष्याभिधर्षयन्ति। प्रायः

प्राक्तनकर्म्मवशाद् देवादिभिरुन्माद्यन्त इति ज्ञेयम्। अतिवाक्करणमित्यतिभाषमाणम्। छिद्रमिति

* अतिवाक्करणमिति चक्रः।

धर्षयन्ति ॥०॥ इत्यपरिसङ्ख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेव व्याख्याताः ॥ १६ ॥

सर्व्वेष्वपि तु खल्वेतेषु यो हस्तावुद्यम्य रोषसंरम्भात् निःशङ्कमन्येष्वात्मनि वा निपातयेत् स ह्यसाध्यो विज्ञेयः। तथा यः साश्रुनेत्रो मेढ्रप्रवृत्तरक्तः क्षतजिह्वः प्रस्रुतनासः छिद्यमानमर्म्मा प्रतिहन्यमानवाणिः * सततं कूजन् दुर्व्वर्ण्यः तृष्णार्त्तः पूतिगन्धश्च हिंसार्थी स उन्मत्तो ज्ञेयस्तं परिवर्ज्जयेत् ॥ १७ ॥

पदेन रक्षांसि निशि पैशाचाश्चतुर्दश्यां विशन्ति चेति सुश्रुतेनोक्तं बोध्यमिति ॥०॥ अनुक्तग्रहानुमत्यर्थमाह—इत्यपरिसङ्ख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेव ग्रहा व्याख्याताः। एतेनान्यत्रोक्तानामुरगग्रहादीनामप्यनुमतिः कृता। उरगग्रहलक्षणं प्राक् सुश्रुतोक्तं दर्शितम्। ग्रहणकालश्चायमुक्तः सुश्रुतेन "पञ्चम्यामपि चोरगाः" इति ॥ १६ ॥

गङ्गाधरः—अथैषामसाध्यलक्षणान्याह—सर्व्वेष्वपीत्यादि। एतेषु सर्व्वेषु भूतोन्मादेषु य उन्मादी हस्तौ द्वावुद्यम्य रोषसंरम्भात् क्रोधेनारभटीं मुखादिवैकृतीं कृत्वा निःशङ्कं शङ्कारहितं यथा स्यात् तथान्येषु जनेषु वात्मनि वा हन्तुं निपातयेत् स भूतोन्मादी असाध्यो विज्ञेयः। तथा यो भूतोन्मादी साश्रुनेत्रः शिश्नात् प्रवृत्तरक्तः स्वदन्तैः क्षतजिह्वः प्रस्रुतनासः नासिकाभ्यां स्रावः स्रवेद् यस्य छिद्यमानमर्म्मा स्वहृदयं छिद्यत इव मन्वानं प्रतिहन्यमानवाणिः परवचनं वचनेन हन्यते अनिष्टकर्म्मसु प्रवृत्तिप्रतिषेधवचनं नाङ्गीकृत्य तत् कर्म्म करोति, सततं कूजति, दुर्व्वर्ण्यस्तृष्णार्त्तः पूतिगन्धश्चेति, स तेन ग्रहेण हिंसार्थं गृहीत इति हिंसार्थी उन्मत्तो ज्ञेयस्तं परिवर्ज्जयेन्न चिकित्सेत्। उन्मादकराणां भूतानां

उच्छिष्टावस्थानादिरूपमवचारम्। संप्रति भूतविद्याधिकारत्वात् भौतिकोन्मादलेखस्य कथनमपोहाशून्यतार्थं दर्शयन्नाह—अपरिसंख्येयानामिति ॥ १६ ॥

चक्रपाणिः—असाध्यभूतजोन्मादमाह—सर्व्वेष्वित्यादि। हिंसार्थी मारात्मकः। अप्रतिहन्यमानपाणिरिति नित्यं पाणौ हिंसार्थिनोद्यते ॥ १७ ॥

* अप्रतिहन्यमानपाणिरिति चक्रसम्मतः पाठः।

रत्यर्च्चनकामोन्मादिनौ तु भिषगभिचाराभिशापाभ्यां बुद्ध्वा तदङ्गोपहारबलिमिश्रेण मन्त्रभैषज्यविधिनोपाचरेत्। तत्र द्वयोर्निजागन्तुनिमित्तयोः उन्मादयोः समासव्यासाभ्यां भेषज-विधिमनुव्याख्यास्यामः ॥ १८ ॥

उन्मादे वातजे पूर्व्वं स्नेहपानं विशेषवित्।
कुर्य्यादावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥

त्रिविधं प्रयोजनमुक्तं निदाने हिंसार्थं पूजार्थं रत्यर्थश्च। तद्विज्ञानं तत्रवाभिहितम् तत्र हिंसार्थमित्यादिना ॥ १७ ॥

गङ्गाधरः—शेषद्विधाग्रहे साध्यत्वादाह रत्यर्च्चनेत्यादि। रतिकामेन गृहीत उन्मादी अर्च्चनाकामेन भूतेन गृहीत उन्मादी च यस्तौ द्वौ किमभिशापेनोन्मत्तौ किमभिचारेणोन्मत्तौ तद् बुद्ध्वा तदङ्गानामभिचाराङ्गाणामुपहारादीनां विधिनोपाचरेत् साध्यत्वात्। तत्र ग्रहणप्रकारो निदानस्थाने प्रोक्तः। "आलोकयन्तो देवा जनयन्त्युन्मादं गुरुवृद्धसिद्धर्षयोऽभिशपन्तः पितरस्तु धर्षयन्तः स्पृशन्तो गन्धर्व्वाः समाविशन्तो यक्षा राक्षसास्त्वात्मगन्धमाघ्रापयन्तः पिशाचाः पुनरारुह्य वाहयन्तः" इति। अथानयोर्निजागन्तुकयोश्चिकित्सोपदेशाय प्रतिजानीते तत्र द्वयोरपीत्यादि। निजस्य चतुर्व्विधस्यागन्तुत्वेनैकविधस्य कारणस्य सेविनां समासव्यासाभ्यां भेषजविधिमनुव्याख्यास्यामः। इति प्रतिज्ञा ॥ १८ ॥

गङ्गाधरः—तद्यथा उन्मादे इत्यादि। वातज उन्मादे विशेषविद् वैद्यः पूर्व्वं स्नेहपानमिह वक्ष्यमाणस्य सिद्धस्य स्नेहस्य पानं कुर्य्यात् कारयेत्।

चक्रपाणिः—रत्यर्च्चनादिभूतगृहीतचिकित्सामाह—रतिरर्च्चनं तत्कामो रत्यर्च्चनकामः, ताभ्यामुन्मादिनौ रत्यर्च्चनकामोन्मादिनौ। अभिचाराभिशापाभ्यां बुद्ध्वा इत्यभिप्रायेण यः काम्यमर्थमिच्छति स रतिकामः, यस्तु पूजामिच्छति स अर्च्चनाकामः एवमाचारेण यः काम्यार्थप्राप्त्यर्थं चेष्टते स रतिकामः, योऽर्च्चनादिकं पुष्पधूपादिकं संगृह्णाति स अर्च्चनाकामः। इति बुद्ध्वा तदङ्गस्य तद्रतेरर्च्चनस्य च यदङ्गसाधनं तत्तदुवर्त्तनेन तत्तदङ्गोपहाररूपबलिना भैषज्यमन्त्रविधिना चोपचारः कर्त्तव्य इति वाक्यार्थः। तत्रेत्यादिना भेषजविधानमाह ॥ १८ ॥

चक्रपाणिः—विशेषविदिति वातस्य निवारणरूपं विशेषं जानन्। स्नेहपानं वातजे

कफपित्तोद्भवेऽप्यादौ वमनं सविरेचनम्।
स्निग्धस्विन्नस्य कर्त्तव्यः शुद्धे संसर्ज्जनक्रमः॥
निरूहान् स्नेहवस्तिश्च शिरसश्च विरेचनम्।
ततः कुर्य्याद् यथादोषं तेषां भूयस्त्वमाचरेत्॥
हृदिन्द्रियशिरःकोष्ठे संशुद्धे वमनादिभिः।
मनःप्रसादमाप्नोति स्मृतिं संज्ञाञ्च विन्दति॥ १९॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताड़नञ्च मनोबुद्धि-देहसंवेजनं हितम्॥

न चोन्मादी विशेषविद्भवति। आवृतमार्गे तु पित्तकफाभ्यां वाते सस्नेहं मृदु शोधनं वमनविरेचनाभ्यां कुर्य्यात् कारयेदेव। कफपित्तोद्भवेऽप्यादौ कफोद्भवे वमनं स्निग्धस्विन्नस्य कर्त्तव्यं पित्तोद्भवे च विरेचनं तस्यैव कर्त्तव्यम्। शुद्धे संसर्ज्जनक्रमः, मण्डपेयाविलेपीक्रमेण संसर्ज्जनं पथ्याहारं कुर्य्यात्। ततो वमनविरेचनाभ्यां शुद्धस्य संसर्ज्जनक्रमेण जातबलस्य निरूहान् स्नेहवस्तिश्चानुवासनं शिरसश्च विरेचनं तेषां भूयस्त्वं यथादोषमाचरेत्। वातिके स्नेहवस्तिभूयस्त्वमाचरेत्। कफे वमनभूयस्त्वं, पित्ते विरेचनभूयस्त्वमाचरेत्। तेषामियमाशीः। हृच्चेन्द्रियाणि च शिरश्च कोष्ठश्च इत्येतस्मिन् वमनादिभिः संशुद्धे सति स उन्मादी मनःप्रसादमाप्नोति स्मृतिं संज्ञाञ्च विन्दति॥ १९॥

गङ्गाधरः—यदेवंशुद्धस्य चोन्मादस्तिष्ठति तत्राह—शुद्धस्येत्यादि। उक्तरूपेण शुद्धस्योन्मादिनः स्मृतिसंज्ञानामलाभे खल्वाचारविभ्रंशे तीक्ष्णं नावनं नस्यमञ्जनञ्च तीक्ष्णं ताड़नञ्च मनोबुद्धिदेहानां संवेजनमुद्वेगजननं

दध्यादिति दर्शयति। सारेण तु तन्निपिद्धमेव, यदुक्तं—मेदःकफाभ्यामनिलो निरुद्धः शूलानुमर्द्दश्च पृथक् करोति। स्नेहं विमुञ्चन्नबुधस्तु तस्मै संवर्द्धयत्येव हि तान् विकारान्॥ इहावृतमार्गे कुर्य्यादित्यादिना विशेषमाह। सस्नेहमितीषत्स्नेहम्। कफपित्तोद्भवे इति कफोद्भवे पित्तोद्भवे। तत्र कफोद्भवे वमनम्, पित्तोद्भवे विरेचनम्। तेषामित्यादिना वस्त्यादीनां भूयस्त्वम्। पुनःपुनः प्रयोगमाचरेद् यथादोषमित्यनेन दोषभूयस्त्वे सति पुनःपुनः संयोगं कुर्य्यात्। शोधनक्रममाह—हृदित्यादि। हृदयादिशुद्ध्या मनःप्रसादोऽपि भवत्येव॥ १९॥

यः शक्तो विनये पट्टैः संयम्य सुदृढ़ैः सुखैः ।
अपेतकाष्ठलोहाद्ये संरोध्यश्च तमोगृहे ॥
तर्ज्जनं त्रासनं दानं हर्षणं सान्त्वनं भयम् ।
विस्मयो विस्मृतेर्हेतोर्नयति प्रकृतिं मनः ॥
प्रदेहोत्सादनाभ्यङ्ग-धूपाः पानञ्च सर्पिषः ।
प्रयोक्तव्यं मनोबुद्धि-स्मृतिसंज्ञाप्रबोधनम् ॥ २० ॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ।
अतः सिद्धतमान् योगान् शृणून्मादनिवर्हणान् ॥ २१ ॥

हितं भवति। तथा मनोबुद्धिदेहसंवेजनार्थ तमोगृहे स उन्मादी संरोध्यश्च भवति। तर्हि किं सर्व्व एवोन्मादीत्यत आह—यः शक्तो विनये। यो विनयं कर्त्तुं समर्थः स उन्मादी तमोगृहे संरोध्यः। कथमित्यत आह—सुदृढ़ैः सुखैः अदुःखदैः पट्टैः पाट कोष्ठेति लोके ख्यातैः संयम्य बद्धा अपेतकाष्ठलोहादि-प्राणहरद्रव्ये तमोगृहे रोद्धव्य इति। विनये यस्त्वशक्तस्तस्य मनोबुद्धिस्मृति-संवेजनार्थमाह—तर्ज्जनमित्यादि। तर्ज्जनं वाग्भिस्त्रासजननं, त्रासनं राज-पुरुषद्वारा भयप्रदर्शनं, भयं सर्पव्याघ्रादिभिर्भयजननं, विस्मय आश्चर्य्य-प्रदर्शनादिः। विस्मृतेर्हेतोर्विकारमापन्नं मनो विस्मरति तस्माद्धेतोर्मनः प्रकृतिं नयति। अपरश्चाह—प्रदेहेत्यादि। प्रदेहादिकं मनोबुद्धिस्मृतिप्रबोधनं प्रयोक्तव्यम् ॥ २० ॥

गङ्गाधरः—निजोन्माद-भैषज्यविधिमुक्त्वा आगन्तुनिमित्तोन्माद-भैषज्य-विधिमाह—सर्पिरित्यादि। आगन्तोरागन्तुजस्योन्मादस्य सर्पिःपानादिर्विधिः उक्तस्नेहपान--मृदुशोधन-वमन-विरेचन--निरूहानुवासन-शिरोविरेचन-विधिः

चक्रपाणिः—संवेजनमित्युद्वेजनम्। विनयेत् पट्टैरित्यनेन पट्टबन्धनं न व्रणकारी भवतीति दर्शयति। संयम्येति यथा निःसर्त्तुं न शक्नोति तथा स्थापनीयः। काष्ठाद्यपनयनं तमोगृहे आत्मवधनिषेधार्थम्। तमोगृहञ्च शून्यगृहं, तम उन्मादनिदानोक्तमपि रोगमहिम्नावस्थायां हितं भवति। तर्ज्जनं वाचा। त्रासनं व्यासादिभिः। विस्मृतेर्हेतोरित्युन्मादहेतुभयहर्षादिः विस्मारकतया प्रभावान्मनः प्रकृष्टं स्वभावं नयन्ति। यथा विषमे ज्वरे ज्वरकालास्मरणं ज्वरहरणम् ॥ २०—२१ ॥

हिङ्गुसौवर्च्चलव्योषैर्द्विपलांशैर्घृताढ़कम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ २२ ॥
विशाला त्रिफला कौन्ती देवदार्व्वेलवालुकम् ।
स्थिरा नतं हरिद्रे द्वे शारिवे द्वे प्रियङ्गुका ॥
नीलोत्पलैला मञ्जिष्ठा दन्ती दाड़िमकेशरम् ।
तालीशपत्रं वृहती मालत्याः कुसुमं नवम् ॥
विड़ङ्गं पृश्निपर्णी च कुष्टं चन्दनपद्मकौ ।
अष्टाविंशतिरित्येतैः कल्कैः कर्षसमन्वितैः ॥

मन्त्रादिश्च विधिरिष्यते। अतो हेतोः सिद्धतमान् योगान् उन्मादनिवर्हणान् शृणु ॥ २१ ॥

गङ्गाधरः—तत्रादौ स्नेहयोगानाह—हिङ्गित्यादि। हिङ्ग्वादिभिः पञ्चभिः प्रत्येकं द्विपलांशिकैर्दशपलकल्कैश्चतुर्गुणे गवां मूत्रे घृताढ़कं सिद्धमुन्मादनाशनं निजागन्तूभयोन्मादनाशनम्। हिङ्ग्वाद्यं घृतम् ॥ २२ ॥

गङ्गाधरः—विशालेत्यादि। मालत्या नवं कुसुमं मुकुलमशुष्कपुष्पं वा।

चक्रपाणिः—विशालेत्यादावष्टाविंशतिकत्वं कल्कानां पाठादेव सिद्धम्, तत् किमुच्यते-ऽष्टाविंशतिरित्येतैः कल्कैरिति। अत्र यद्यपि त्रिफलायाः प्रत्येकमेको भागो गृह्यते उत्सर्गतस्तथापि त्रिफलायाः प्रत्येकभागग्रहणदार्ढ्यार्थमष्टाविंशतिरित्युक्तम्। तथाहि सुश्रुते—हरीतक्यामलक-विभीतकानि त्रिफलेति परिभाषया हरीतक्यादय उच्यन्ते तथा तत्रापि जरणान्तेऽभयामेकां प्राग्भुक्ते द्वे विभीतके। भुक्त्वा च मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च। प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ॥ इति वचनात् हरीतक्यादिषु त्रिफलासंज्ञा दर्शिता, तेन त्रिफलाशब्देन द्रव्यत्रयमुच्यते; तथा दशमूलशब्देन दश भेषजानि, पञ्चमूलशब्देन पञ्च। यथा वा नीलोत्पलैला मञ्जिष्ठा दन्ती दाड़िमकेशरमिति पदेन षड् द्रव्याण्युच्यन्ते। मानञ्चोपदिश्यमानं प्रत्येकद्रव्यापेक्षयेह भवति। यथा गुल्मचिकित्सिते—नीलिनीं त्रिफलामित्यादि यावत् व्याघ्रीञ्च पलिकानि जलाढ़के; तथागस्त्यहरीतक्यां दशमूल्यादीनां द्विपलं प्रत्येकमेव भवति। यत उपदिश्यमानं भागमानं भागप्रयोगेषु प्रतिद्रव्येष्वेव भवति न समुदाये, तथा समुदितस्यैव द्रव्यस्य मानग्रहणं, यथा—लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्। तदर्द्धं दशमूलस्य द्व्याढ़के पाचयेदपामित्यत्र षष्ठ्यन्तत्वाद् दशमूलस्याप्राधान्यम्; यथा राज्ञः पुरुष इत्यत्राप्राधान्यं, तेनेह विशेषतया प्रधानं मानं तद्विशेषणभूतञ्च दशमूलमप्रधानम्, अप्रधानत्वाच्च न प्रत्येकं

चतुर्गुणं जलं दत्त्वा घृतं प्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ।
छर्द्यर्शोमूत्रकृच्छ्रेषु विसर्पोपहतेषु च ॥
कण्डूपामाविषोन्मादे विषमेहगदेषु च ।
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥
शस्तं स्त्रीणाञ्च बन्ध्यानां धन्यमायुर्बलप्रदम् ।
अलक्ष्मीपापरक्षोघ्नं सर्व्वग्रहविनाशनम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ २३ ॥

कल्याणकं घृतम् ।

विशालादिभिरष्टाविंशत्या कर्षसम्मितैः कल्कैश्चतुर्गुणं जलं दत्त्वा पुरातनं गव्य-घृतप्रस्थं विपाचयेत् । विषोन्मादे विषे चोन्मादे च न तु विषजोन्मादे स्वतन्त्र विषोन्मादानुक्तेः । कल्याणकं घृतम् ॥ २३ ॥

नियमभागास्तेन अतलशुनार्द्धमानत्वमेव दशमूलस्य भवति । यथा वा द्विपञ्चमूलतुलार्द्ध-रसेनेत्यत्रापि द्विपञ्चमूलस्य समुदितस्यैव तुलार्द्धविशेषणीभूतस्य क्वाथार्थं तुलार्द्धभागो गृह्यते । एवं त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य चेत्यत्रापि समुदिता एव त्रयो भागा न तु प्रत्येकं, तथा हि नव भागाः स्युः । तथा त्र्यूषणत्रिफलाकल्कबिल्वमात्रमित्यत्र तु कल्कविशेषणीभूतत्वेन त्र्यूषण-त्रिफले अप्रधानकल्कस्यैव बिल्वमानत्वम्, न प्रत्येकं शुण्ठ्यादीनां हरीतक्यादीनां कल्की-कृतानां बिल्वमानत्वम् । एवमन्यत्रापि समुदायभागप्रमाणे आचार्याभिप्रायविशेष उन्नेयः, द्रव्यप्रधाननिर्द्देशे तु प्रत्येकद्रव्याणि वा पठ्यन्तां तथा प्रत्येकमेव भागो भवति अवयव-प्रधानत्वान्निर्द्देशस्य । यदा समुदायप्रधाननिर्द्देशो विशेषाल्लिख्यते तदा प्रत्येकनिर्द्दिष्टलिङ्गाना-मपि समुदायस्य भागो भवति । पलमेकं विदध्याच्च त्वगेलापत्रकेशरादित्यत्र चतुर्भ्योऽप्येकमेव पलं गृह्यते, न प्रत्येकम् । यथा तैलसर्पिषोः पलद्वादशके भृष्टेत्यत्र तैलसर्पिषोर्मिलितयोरेव द्वादशपलं, प्रत्येकं यथा चात्र न प्रत्येकं द्रव्यप्रमाणानि तथा मामपूर्व्वनिर्द्देशं व्युत्पादयता संक्षेपेण दर्शितमेव । एवं व्यवस्थितेऽपि महानीलोक्तपृथक्शब्देन सिद्धस्यापि त्रिफला-पृथग्भागं दर्शयति । यथा पिप्पली नागरं पाठा पृथक् पृथक् भागान् त्रिपलिकानित्यत्र पृथक् पृथगिति पलं करोति । तथा परिभाषासिद्धस्यापि स्नेहपूर्व्वकल्कभागस्याभिधानं तत्र तत्र तैलघृते च करोति । त्रिफलाशब्देन यद्यपि द्राक्षाकाश्मर्य्यपरूषका उच्यन्ते, यदुक्तमन्यत्र— 'पथ्यामलकधात्रीभिस्त्रिफला महती स्मृता । चक्षुष्या सर्व्वदोषघ्नी त्वं समी बृंहणी च सा ।

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम्।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम्॥
वीराद्विमाषककाकोली-स्वयंगुप्तर्षभर्द्धिभिः।
मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत्।
बृंहणीयं विशेषेण सन्निपातहरं परम्॥ २४॥

महाकल्याणकं घृतम्।

गङ्गाधरः एभ्य एवेत्यादि। एभ्यो विशालादिभ्योऽष्टाविंशतितः स्थिरादीन्येकविंशतिं द्रव्याणि प्रत्येकं समभागेन नीत्वा मिलित्वाष्टशरावं गृहीत्वा अष्टगुणे जले पक्त्वा चतुर्थभागावशिष्टे तस्मिन् रसे क्वाथे चतुर्गुणं गृष्टिक्षीरं चतुर्गुणं प्रस्थोन्मितं पुरातनं गव्यं सर्पिर्वीरादिभिरष्टाभिः कल्कैः पचेत्। पक्वं तत् सर्पिर्महत् कल्याणकं नाम स्यात्। कल्याणकसंज्ञया तदुक्तमपि इह ख्यापितम्, विशेषेण बृंहणीयं परं सन्निपातहरञ्चेति। वीरा पृश्निपर्णी। द्विमाषाविह सजातीयत्वान्माषपर्णी मुद्गपर्णी चेति। स्वयंगुप्तात्मगुप्तायाः वीजं बृंहणीयत्वात्। तत्रान्ये व्याचक्षते गृष्टिक्षीरचतुर्गुणवचनेनोत्सर्गसिद्धचतुर्गुणद्रवे स्नेहसाधनं सिद्धे स्थिरादिक्वाथो भागानुक्तौ सर्पिःसम इति पञ्चगुणद्रवेऽत्र सर्पिःपाक इति। तन्न यौक्तिकमुपलभामहे। भागानुक्तौ समत्वं हि सजातीयानां कल्केषु यानि तानि समानि कल्कतया ग्राह्याणि न क्वाथ्यसमतया। क्वाथ्यानि क्वाथसमतया ग्राह्याणि न कल्कसमतया न वा साध्यसमतया। तस्मादिह स्थिरादीनां रसः क्वाथः साध्यसर्पिःसमतया न ग्राह्यः स्यात्। न च चतुःप्रभृति द्रवद्रव्याणीह सन्ति, चतुःप्रभृतिषु हि स्नेहसमं द्रवमुक्तं, तस्मात्

हत्वा काश्मर्यमृद्वीका परूषकफलैर्भवेदिति तथापीह त्रूषणं त्रिफला पाठा इति कृतं हरीतक्यादित्रिफलाया एव प्रधानतयोत्सर्गतो ग्रहणं भवति। अन्ये तु तालीशपत्रमित्यत्र तालीशञ्च पत्रञ्चेति द्रव्यद्वयग्रहणशङ्का स्यात् तेनाष्टाविंशतिपदेन स न भवत्येतदर्थमष्टाविंशतिरिति कृतम्। त्रिफलायाः प्रत्येकं ग्रहणं न्यायसिद्धमेव इति वदन्ति। अन्ये त्वष्टाविंशत्यौषधमानमिष्यत इत्यादावष्टाविंशत्यौषधसंज्ञया व्यवहारोऽस्य भवतीत्येतदर्थमष्टाविंशतिरिति कृतम्। चतुर्गुणवचनमिह परिभाषया शुद्धजलाच्चतुर्गुणदानार्थम्॥ २३॥

चक्रपाणिः एवं स्थिरादीनीत्युक्ते विदारिगन्धादेः पञ्चमूलस्यापि ग्रहणं स्यादत आह एकविंशतिरिति। तेन कल्याणोक्तान्येवैकविंशतिर्गृह्यते। गृष्टिरेकवारप्रसूता गौः। अत्र क्षीरेणैव चातुर्गुण्ये प्राप्तेऽयं कषायः एकेनापि चातुर्गुण्यमित्यादिपरिभाषाया अविषयः। तेन चातुर्गुण्यपरिभाषया क्षीर-

जटिला पूतना केशी चारटी मर्कटी वचा ।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥
कायस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा ।
महापुरुषदन्ता च वयःस्था नाकुलीद्वयम् ॥
कटम्भरा वृश्चिकाली-स्थिरा अपि च तैर्घृतम् ।
सिद्धं चातुर्थकोन्माद-ग्रहापस्मारनाशनम् ।
महापैशाचिकं नाम घृतमेतद् यथामृतम् ।
बुद्धिस्मृतिकरञ्चैव बालानाञ्चाङ्गवर्द्धनम् ॥ २५ ॥

महापैशाचिकं घृतम् ।

साधनस्य गृष्टिक्षीरस्य सर्पिषश्चतुर्गुणवचनात् साधनसम एव साधनभूतः स्थिरादीनां रसो युक्त्या सिद्धः परिभाषया चेति। महाकल्याणकं घृतम् ॥ २४ ॥

गङ्गाधरः—जटिलामित्यादि । जटिला जटामांसी । पूतना हरीतकी । केशी केशिनी शङ्खपुष्पीति लोके। चारटी कुम्भाडुलता पद्मचारिणीतिपर्य्याया ब्रह्मयष्टीत्यन्ये । मर्कटी शूकशिम्बा । वीरा पृश्निपर्णी। चोरकः स्थलजचोरपुष्पी । कायस्थामलकी । शूकरी वाराही । छत्रा मधुरिका । अतिच्छत्रा शतपुष्पा । पलङ्कषा गोक्षुरकः । महापुरुषदन्ता शतमूली । वयःस्था हरीतकीभेदः । नाकुलीद्वयं, रास्नाद्वयं रास्ना सुगन्धरास्ना च । कटम्भरा कटभी शिरीषभेदः । वृश्चिकाली वृश्चिकपत्री विच्छातीति लोके । स्थिरा शालपर्णी । तैः कल्कैर्घृतात् पादिकैरेपाञ्च चतुर्गुणकाथे सिद्धं घृतं चातुर्थकादिनाशनादि भवति । महापैशाचिकं घृतम् ॥ २५ ॥

मानसाहचर्य्याद्वा चतुर्गुणो ज्ञेयः। कश्चित् त्वेकविंशतिद्रव्ययवसर्पिस्तथैव विधिना पक्तव्यमित्य [illegible]ः। तन्न यतो जतूकर्णे उत्सर्गत एवास्य पाक उक्तः । द्विमाष इति मापराजमापयोर्ग्रहणम् ॥ २४ ॥

चक्रपाणिः—जटिलेत्यादि । जटिला मांसी, पूतना हरीतकी, केशी भूतकेशी, चारटी कुम्भाडुः ब्रह्मयष्टिकेत्यन्ये, मर्कटी शूकशिम्बी, जया जयन्ती, वीरा क्षीरकाकोली शालपर्णीत्यपरे, चोरकश्चण्डालकः, ब्राह्मी गुडूची वा, शूकरी वाराहीकन्दः, छत्रा मधुरिका, अतिच्छत्रा शतपुष्पा, किंवा छत्रातिच्छत्रे द्रोणपुष्पीद्वयम्, पलङ्कषा गुग्गुलुः, महापुरुषदन्ता शतावरी, अन्ये तु विक्रान्तसुदन्ती जटिलां शतावरीमाहुः, वयःस्था सूक्ष्मैला, नाकुलीद्वयं रास्नाद्वयं,

लसुनानां शतं त्रिंशदभयात् त्र्यषणात् पलम्।
गवां चर्म्ममसीप्रस्थमाढ़कं क्षीरमूत्रयोः॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत्।
हिङ्गुचूर्णपलं शीते दत्त्वा च मधुमाणिकाम्॥
तद्दोषागन्तुसम्भूतानुन्मादान् विषमज्वरान्।
अपस्मारञ्च हन्त्याशु पानाभ्यञ्जननावनैः॥ २६॥

लसुनाद्यं घृतम्।

लसुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूल्यास्तु द्व्याढ़केऽपां विपाचयेत्॥

गङ्गाधरः—लसुनानामित्यादि। लसुनानां गुड़कशतं न तु गुड़कान्तर्गतबीजशतम्। अभयास्त्वस्थिहीनास्त्रिंशद् गुड़काः। त्र्यषणान्मिलितात् पलं गवां चर्म्माणि दग्ध्वा भस्मीकृत्य मसीप्रस्थं षोड़शपलानि क्षीरमूत्रयोर्गवां क्षीरस्य चाढ़कं षोड़शशरावं गवां मूत्रस्य चाढ़कं षोड़शशरावम्। एभिर्लसुनादिभिः सिद्धं गवां पुराणसर्पिषः प्रस्थं पक्त्वा वस्त्रेण पूतं कृत्वा तत्र घृतभृष्टहिङ्गुचूर्णस्य पलं दत्त्वा स्थापयेत्। अथ शीते जाते तत्र घृते मधुमाणिकां कृतद्विगुणां द्वात्रिंशत् पलानि दत्त्वा मात्रया प्रयोजयेत्। तद् घृतं दोषागन्तुसम्भूतोन्मादादीनाशु हन्ति। लसुनाद्यं घृतम्॥ २६॥

गङ्गाधरः—अपरञ्चाह—लसुनस्येत्यादि। लसुनस्याविनष्टस्य जलादिभिः अव्यापन्नगुणवीर्य्यस्य त्वगादीनां तुलार्द्धं गृहीत्वा दशमूल्या मिलितायास्तदर्द्धं पञ्चविंशतिपलञ्च कुट्टयित्वा अपां द्व्याढ़के द्वात्रिंशच्छरावे एकत्र विपाचयेत्।

कटम्भरा कटभी, वृश्चिकाली उत्तोली वृश्चिकापली ख्याता। अल्पपैशाचिकस्याभावान्महापैशाचिकमित्यत्र महच्छब्दः पूजावचनः॥ २५॥

चक्रपाणिः—लशुनानां शतमित्यत्र लशुनबीजानां शतं मानेन। त्र्यषणात् पलमित्यत्र समुदितात् पलम्। मधुमाणिका द्रवत्वाद् द्वैगुण्येन माणिकायाः द्विकुडवरूपायाः षोड़शपलद्वयं भवति॥ २६॥

पादशेषे घृतप्रस्थं लसुनस्य रसं तथा।
कोलमूलकवृक्षाम्ल-मातुलुङ्गार्द्रकै रसैः॥
दाड़िमाम्लसुरामस्तु-काञ्जिकाम्लैस्तदर्द्धकैः।
साधयेत् त्रिफलादारु-लवणव्योषदीप्यकैः॥
यमानीचव्यहिङ्ग्वम्ल-वेतसैश्च पलार्द्धिकैः।
सिद्धमेतत् पिवेच्छूल-गुल्मार्शोजठरापहम्॥
व्रध्नपाण्ड्वामयप्लीह-योनिदोषक्रिमिज्वरान्।
वातश्लेष्मामयान् सर्व्वानुन्मादांश्चापकर्षति॥ २७॥

लसुनाद्य घृतम्।

हिङ्गुना हिङ्गुपर्ण्या च सकायस्थावयःस्थया।
सिद्धं सर्पिर्हितं वा स्याद् वयःस्थाहिङ्गुचोरकैः॥
केवलं सिद्धमेभिर्वा पुराणं पाययेद् घृतम्।
पाययित्वोत्तमां मात्रां श्वभ्रे रुन्ध्याद् गृहेऽपि वा॥ २८॥

पादशेषेऽष्टशरावक्वाथेऽवशिष्टे क्वाथं वस्त्रपूतं कृत्वा तेन क्वाथेन पुराणं गव्यघृतप्रस्थं लसुनस्य रसञ्च तथा प्रस्थं तदर्द्धकैः प्रत्येकमर्द्धप्रस्थैः कृतद्विगुण्यैः कोलादीनां रसैर्दाड़िमाद्यम्लैश्चार्द्धप्रस्थैः शरावद्वयमितैः पलार्द्धिकैस्तु त्रिफलादिभिः कल्कैः साधयेत्। दीप्यकं क्षेत्रयमानी। यमानी तु वनयमानी। सिद्धमेतद् घृतं पिवेत्। शूलेत्याद्याशीः। इति लसुनाद्यं घृतम्॥ २७॥

गङ्गाधरः—हिङ्गुनेत्यादि। "हिङ्गुपर्णी वेणुपत्री नाड़ी हिङ्गुशिराटिका।" इति पर्य्यायाः। वेणुपातीवृक्षे। देशभेदे वांशपातीति। हिङ्गुपर्ण्या कायस्थावयःस्थाभ्यां सहितया हिङ्गुना च सिद्धं घृतमुन्मादिने हितमथवा वयःस्थाहिङ्गुचोरकैः सिद्धं घृतमुन्मादिने हितमिति। कायस्था सूक्ष्मैला। वयःस्था विभीतकी। चोरकः पृक्का लता पिड़ङ्ग इति लोके। अथवा केवलं पुराणं गव्यं घृतम्

चक्रपाणिः—तदर्द्धं दशमूलस्येति पञ्चविंशतिपलानि। लशुनरसादीनां प्रत्येकं प्रस्थमानत्वं ज्ञेयम्॥ २७॥

चक्रपाणिः—हिङ्गुना हिङ्गुपर्ण्येत्येकं घृतम्। सकायस्थावयःस्थयेति द्वितीयम्, वयःस्थेत्यादिना तृतीयम्। हिङ्गुपर्णी वंशपत्रिका। वयःस्था ब्राह्मी, कायस्था सूक्ष्मैला॥ २८॥

उग्रगन्धं पुराणं स्याद् दशवर्षस्थितं घृतम्।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥ २९ ॥
एतानौषधयोगान् वा विधेयत्वमगच्छति।
अञ्जनोत्सादनालेप-नावनादिषु योजयेत् ॥ ३० ॥
शिरीषं मधुकं हिङ्गु लसुनं तगरं वचाम्।
कुष्ठञ्च वस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ॥
तद्वद् व्योषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः।
शिरीषबीजञ्चोन्माद-ग्रहापस्मारनाशनम् ॥ ३१ ॥

नस्यमञ्जनञ्च।

उन्मादिनं पाययेदथर्वैभिरुक्तैः सिद्धं कल्याणकादिकं पाययेत्। पाययित्वा उत्तमां मात्रामहोरात्रेण जीर्य्यति यावन्मात्रं घृतं तावन्मात्रामुत्तमां मात्रां पाययित्वा श्वभ्रे गर्त्तेऽथवा गृहे तमुन्मादिनं रुन्ध्यात्। ततो मनोबुद्धिस्मृति-सम्भवः स्यात् ॥ २८ ॥

गङ्गाधरः पुराणघृतविज्ञानमाह—उग्रगन्धमित्यादि। अतः परं दशवर्षातीतं प्रपुराणं स्मृतम्। तन्त्रान्तरे वर्षातीतञ्च घृतं पुराणमुक्तम्। तद्यथा स्वल्पाभिष्यन्दि मधुरं बल्यं संवत्सरोषितम्। अल्पोत्क्लेशञ्च दोषाणां पुराणं तत् प्रकीर्त्तितम्। इत्येतल्लक्षणं पुराणमुन्मादादन्यत्र युक्तं, दशवर्षादिस्थं पुराणन्तून्मादादौ सर्व्वत्र यौगिकमित्यभिप्रायेणेह लक्षणमुक्तम् ॥ २९ ॥

गङ्गाधरः—एतानित्यादि। एतान् कल्याणकादिस्नेहयोगान् पानतो यदि विधेयत्वं कर्त्तव्यतामगच्छति यदि पानादितया प्रयोगं कर्त्तुं न शक्नोति, व्याधिताधीनं हि पानं, यदुन्मादी न पिबेत् तदा खल्वेतानेव कल्याणघृतादीन् औषधयोगान् अञ्जनादिषु योजयेत् ॥ ३० ॥

गङ्गाधरः—अपरौषधयोगानाह—शिरीषमित्यादि। शिरीषस्य बीजम् नावनं नस्यमञ्जनञ्च देयम्। तद्वदित्यादि। सर्षपः श्वेतः। व्योषादि-

चक्रपाणिः—उग्रगन्धमित्यादिकं घृतं केचिदनार्षं वदन्ति। तद्धृतमसाधितम्। एतैरित्यनेन घृतसाधनद्रव्यैः। नावनञ्चाञ्जनञ्चेति नावनाञ्जनम् ॥ २९—३१ ॥

पिष्ट्वा तुल्यमपामार्ग-हिङ्गुनी * हिङ्गुपत्रिकाम् ।
वर्त्तिः स्यान्मरिचार्द्धांशा पित्ताभ्यां गोशृगालयोः ॥
तयाञ्जयेदपस्मार-भूतोन्मादज्वरार्द्दितान् ।
भूतार्त्तानमरार्त्तांश्च नरांश्चैव दृगामये ॥ ३२ ॥
मरिचश्चातपे मासं सपित्तं स्थितमञ्जनम् ।
वैकृतं पश्यतः कार्य्यं दोषभूतहतस्मृतेः ॥ ३३ ॥
सिद्धार्थको वचा हिङ्गु करञ्जो देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥

शिरीषान्तं तद्वद् वस्तमूत्रेण पिष्टं नावनाञ्जनं स्यात् । योगद्वयाशीः—उन्मादग्रहापस्मारनाशनमिति ॥ ३१ ॥

गङ्गाधरः—पिष्ट्वेत्यादि । हिङ्गुपत्रिकामूलम् । अपामार्गादीनां त्रयाणामेकैकभागो मरिचस्यार्द्धभागः । इदं चतुष्कं गोपित्तशृगालपित्ताभ्यां पिष्ट्वा वर्त्तिः स्यात्, तया वर्त्त्या अञ्जयेत् । भूतार्त्तान् विषमज्वरादिषु भूतानुबन्धेन आर्त्तान् । अमरार्त्तान् देवग्रहनवग्रहस्कन्दादिग्रहार्त्तान् । दृगामये नेत्ररोगे चाञ्जयेत् ॥ ३२ ॥

गङ्गाधरः—मरिचमित्यादि । दोषभूताभ्यां हतस्मृतेर्जनस्य वैकृतं कुटिलादिभावेन पश्यतोऽञ्जनं मासं व्याप्य गोशृगालयोः पित्तसहितं मरिचमातपे स्थितं सिद्धं तदञ्जनं कार्य्यम् ॥ ३३ ॥

गङ्गाधरः—सिद्धार्थक इत्यादि । सिद्धार्थः श्वेतसर्षपः । करञ्जः गोकरञ्जफलम् । श्वेता श्वेतापराजिता । कटभीत्वक् क्षुद्रवृक्षशिरीषभेदस्य त्वक् । शिरीषो वृहद्वृक्षशिरीषत्वक् । सर्व्वाणि समांशानि वस्तमूत्रेण पिष्टः सन्नगदो

चक्रपाणिः—हिङ्गुवालमित्यत्रालं हरितालम् । अमरार्त्तांश्चेत्यत्र देवगृहीतम् । दोषेण भूतेन वा हता स्मृतिर्यस्य स दोषभूतहतस्मृतिः ॥ ३२।३३ ॥

* हिङ्गुालमिति चक्रधृतः पाठः ।

नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मारविषोन्माद-कृत्यालक्ष्मीज्वरापहम् ॥
भूतेभ्यश्च भयं नास्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ३४ ॥

सिद्धार्थादिः ।

प्रसेके पीनसे गन्धैर्धूमवर्त्तिं कृतां पिबेत् ।
वैरेचनिकधूमोक्तैः श्वेताद्यैर्वा सहिङ्गुभिः ॥ ३५ ॥
शल्लकोलूकमार्ज्जार-जम्बूकवृकवस्तजैः ।
मूत्रपित्तशकृल्लोम-नखैश्चर्म्मभिरेव च ॥
सेकाञ्जनं प्रधमनं नस्यं धूमश्च कारयेत् ।
वातश्लेष्मात्मके प्रायः पैत्तिके तु प्रशस्यते ॥

नाम भवति। तस्य पानादिकमपस्माराद्यपहम्। पानादितो भूतेभ्यो भयं नास्ति राजद्वारे च प्रियो भवन् शस्यते। एतेन सिद्धार्थकादिना कल्केन गोमूत्र-चतुर्गुणं सिद्धं सर्पिर्वा तदर्थकृत् अपस्मारादिरोगापहं भूतेभ्यो भयं नास्ति राजद्वारे च शस्यत इति सिद्धार्थकादिरगदो घृतश्च ॥ ३४ ॥

गङ्गाधरः—प्रसेक इत्यादि। दोषभूतोपहतचेतसां मुखप्रसेके पीनसे च जाते वैरेचनिकधूमविधौ सूत्रस्थाने उक्तैर्गन्धैः द्रव्यैर्धूमवर्त्तिं कृत्वा पिबेत् पाययेत्। अथवा सिद्धार्थादिगणं श्वेताद्यैः श्वेता कटभीत्वक् कटुत्रिकं प्रियङ्गु शिरीषो रजनीद्वयैः सह हिङ्गुभिः पिष्ट्वा धूमवर्त्तिं कृत्वा पिबेत् ॥ ३५ ॥

गङ्गाधरः—शल्लकेत्यादि। शल्लकः शेजारु। उलूकः पेचकः। वृकः क्षुद्र-व्याघ्रः। वस्तश्छागः। एषां मूत्रादिभिर्यथायोग्यं सेकादिकं वातश्लेष्मात्मके

चक्रपाणिः—अगद इति विष इव। कृत्याभिचारः। राजद्वारे शस्यत इति वशीकरणत्वात् ॥ ३४

चक्रपाणिः—गन्धैरित्यगुर्व्वाद्यैः सागरवर्ज्जितैः। उक्तं हि सूत्रस्थाने धूमविधौ गन्धाश्चा-गुरुपत्राभ्यामिति। श्वेताद्यैरिति श्वेता ज्योतिष्मती चैव हरितालं मनःशिला इति सूत्रोक्तैः ॥ ३५ ॥

तिक्तकं जीवनीयञ्च सर्पिः स्नेहश्च मिश्रकः।
शीतानि चान्नपानानि मधुराणि मृदूनि च॥ ३६। ३७॥
शङ्खकेशान्तसन्धौ वा मोक्षयेज्ज्ञो भिषक् सिराम्॥ ३८॥
उन्मादे विषमे चैव ज्वरेऽपस्मार एव च।
घृतमांसवितृप्तं वा निवाते स्थापयेत् सुखम्।
त्यक्त्वा स्मृतिमतिभ्रंशं संज्ञां लब्ध्वा प्रमुच्यते॥ ३९॥

वातात्मके श्लेष्मात्मके प्रायः कारयेत्। पैत्तिके तु प्रशस्यते किमिति तदाह—तिक्तकं नाम सर्पिर्जीवनीयं नाम सर्पिर्मिश्रकः स्नेहो नाम च शीता, मधुराणि मृदूनि चान्नपानानि शस्यन्ते॥ ३६। ३७॥

गङ्गाधरः—शङ्खेत्यादि। तथा पैत्तिकेऽस्मिन् उन्मादे ज्ञो भिषक् शङ्खकेशान्तयोः सन्धौ या सिरा तां वा मोक्षयेत्॥ ३८॥

गङ्गाधरः—उन्माद इत्यादि। उन्मादे दोषभूतजे विषमे ज्वरे चापस्मारे च घृतमांसाशनेन वितृप्तं जनं निवाते गृहे सुखं स्थापयेत्। तेन ह्युन्मादी विषमज्वरी चापस्मारी च स्मृतिमतिभ्रंशं त्यक्त्वा संज्ञां लब्ध्वा तेभ्यो रोगेभ्यः प्रमुच्यते॥ ३९॥

चक्रपाणिः—शङ्खकादीनां यथासम्भवं मूत्रादीनि ग्राह्याणि। तिक्तकं महातिक्तकं षट्पलरूपं, जीवनीयं सर्पिर्वातरक्ते वक्ष्यते॥ ३६। ३७॥

चक्रपाणिः—शङ्खे केशान्ते च सन्धिः शङ्खकेशान्तसन्धिः। तत्र च प्रत्यासन्नमर्म्मपरित्यागेन सुश्रुतोक्तं सिराविभागमवलोक्य सिराव्यधः कर्त्तव्यः॥ ३८॥

चक्रपाणिः—मांसञ्च यद्यपि निवृत्तामिषमद्यो य इत्यादिनोन्मादे निषिद्धं तथाप्येवंविधेन प्रयोगेण मांसयोगमाह, यथा भयहर्षयोरुन्मादकारणत्वेऽपि तौ पुनरुन्मादे विधेयत्वेनोच्येते—सान्त्वनं हर्षणं भयम् इत्यादिना। अन्ये तु निवृत्तमांसत्वमागन्तून्मादप्रशमनमिति व्याख्यानयन्ति। तेनेह निजे मांसविधानेऽनवरोध इति व्याख्यानयन्ति। अन्ये तु मांसस्यैवयोन्मादो भवतीति निवृत्तामिषमद्यो य इत्यनेनोच्यते। सोपदेशन्तु मांसमुन्मादप्रशमनमिति भिन्नविषयतया न विरोध इति वर्णयन्ति। किन्तु निदानोक्तस्यापि मांसस्य स्वजन्यव्याधिप्रशमकत्वं सविरोधमेव तेन पूर्व्वमेव समाधानमत्र समीचीनमिति पश्यामः॥ ३९॥

आश्वासयेत् सुहृद् वा तं वाक्यैर्धर्म्मार्थसंहितैः।
ब्रूयादिष्टं विनाशं वा दर्शयेदद्भुतानि च॥ ४०॥
बद्धं सार्षपतैलाक्तमुत्तानञ्चातपे न्यसेत्।
कपिकच्छ्वाथवा तप्तैर्लौहतैलजलैः स्पृशेत्॥
कशाभिस्ताड़यित्वा वा बद्धन्तु विजने गृहे।
रुन्ध्याच्चेतो हि विभ्रान्तं तथा व्रजति तच्छमम्॥
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम्।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा॥
अथवा राजपुरुषा बहिर्नीत्वा तु संयतम्।
त्रासयेयुर्वधेनैनं तर्ज्जयन्तो नृपाज्ञया॥

गङ्गाधरः—आश्वासयेदित्यादि। सुहृज्जनो वा तमुन्मादरोगिणं धर्म्मार्थसंहितैर्वाक्यैराश्वासयेत्, इष्टमभीष्टं वाक्यं वा ब्रूयात्। तथा यद्विनाशे मनोऽभिघातादुन्मादो भवति तद्विनाशद्रव्यं प्रतिरूपं दर्शयेद् अद्भुतानि च दर्शयेत्॥ ४०॥

गङ्गाधरः—बद्धमित्यादि। उन्मादिनं सार्षपतैलेनाभ्यक्तं कृत्वा वस्त्रादिना हस्तपादं बद्ध्वा उत्तानं कृत्वा रौद्रे न्यसेत् शाययेत्। अथवा कपिकच्छ्वा वानरीवीजेन सशूकेन तमुन्मादिनं स्पृशेदथवा यथा न दह्यते तथा तप्तैर्लौहतैलजलैः स्पृशेत्। अथवा कशाभिरश्वताड़नरज्जुरूपाभिस्ताड़यित्वा हस्तपादे बद्धमुन्मादिनं विजने गृहे रुन्ध्यात्। आश्वासयेदित्यादीनामाशीरियम्—भ्रान्तं हि चेतो मनस्तच्छमं व्रजति। अपरञ्चाह—उद्धृता दंष्ट्रा बृहद्दीर्घाकारा दन्ता यस्य, याभिर्दशति सर्पस्तद्दन्तानुद्धृत्य तेन सर्पेण त्रासयेदथवा दान्तैः पोषितैर्वशीभूतैः सिंहैः गजैर्वा त्रासयेदथवा शस्त्रहस्तैः पुरुषैर्वधायोद्यतरूपैस्त्रासयेदथवा तस्करैः किंवा शत्रुभिस्त्रासयेत्। अथवेत्यादि। अथवा राजपुरुषाः पदातिका एनमुन्मादिनं बहिर्नीत्वा सुसंयतं बद्धं कृत्वा तर्ज्जयन्तः, आज्ञा

चक्रपाणिः—रूपादिषु विनाशमित्यादिनोद्भ्रान्तचित्तस्य पुनश्चित्तस्थिरकरणैः स्वदेशागमनमेव। दृश्यते च घट्टनचलितस्य पुनर्घट्टनेनैव सम्यक्स्थानं, तद्वदिहापि ज्ञेयम्॥ ४०॥

देहदुःखभयाभ्यां हि परं प्राणभयं स्मृतम् ।
तेन तस्य शमं याति सर्व्वतो विस्मृतं मनः ॥ ४१ ॥
इष्टद्रव्यविनाशात् तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्त्या सान्त्वाश्वासैः शमं नयेत् ॥ ४२ ॥
कामशोकभयक्रोध-हर्षेर्ष्यालोभसम्भवान् ।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ ४३ ॥
बुद्ध्वा देशं वयः सात्म्यं दोषं कालं बलाबले ।
चिकित्सितमिदं कुर्य्यादुन्मादे दोषभूतजे ॥ ४४ ॥
देवर्षिपितृगन्धर्व्वैरुन्मत्तस्य च बुद्धिमान् ।
वर्ज्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म्म च ॥

नृपेण कृता तत्र वधार्थमित्येवं भीषयन्तस्त्रासयेयुः । एषामाशिषमाह—देहेत्यादि । देहभयात् दुःखभयाच्च हि यस्मात् प्राणभयं परं श्रेष्ठं स्मृतम्, तेन प्राणभयेन विस्मृतं मनः सर्व्वतः शमं याति ॥ ४१ ॥

गङ्गाधरः—इष्टेत्यादि । यस्य खल्विष्टद्रव्यविनाशात् मन उपहन्यते, तस्य तत्सदृशद्रव्यप्राप्त्या सान्त्ववचनैर्मधुरवचनैराश्वासवचनैश्च शमं नयेत् ॥ ४२ ॥

गङ्गाधरः—कामशोकेत्यादि । कामादिजानुन्मादान् परस्परप्रतिद्वन्द्वैरेभिः कामादिभिरेव शमं नयेत् । कामजं शोकक्रोधभयेर्ष्याभिः शमं नयेत् । शोकादिजान् कामहर्षलोभैः शमं नयेत् । इत्येवं यथायोग्यं विद्यात् ॥ ४३ ॥

गङ्गाधरः—बुद्ध्वेत्यादि । देशादिकं बुद्ध्वा दोषभूतज उन्मादे इदं चिकित्सितं कुर्य्यात् ॥ ४४ ॥

गङ्गाधरः—अत्रापवादमाह—देवर्षिपितृगन्धर्व्वैरित्यादि । देवादिभिरुन्मत्तस्य

चक्रपाणिः—सिंहैरिति व्याघ्रैः दान्तैः । बहिरिति ग्रामबहिः । देहदुःखभयेभ्य इति देहदुःखकारणेभ्यः ॥ ४१ ॥

चक्रपाणिः—इष्टद्रव्येत्यादिना पूर्व्वमसूत्रितोऽपि अयमुन्मादः प्रकरणाच्चिकित्स्यते । यथा तृष्णाध्याये पञ्च तृष्णाः प्रतिपाद्य गुर्व्वन्नजायाऽप्यधिकायाश्चिकित्सोच्यत इत्याहुः । किन्तु चिन्तादिकुष्टहृदय इत्यादिनोक्तोन्मादेन गृहीत एवायमर्थोऽत्र चिकित्सित इति पश्यामः । पञ्चोन्मादव्यवस्थायामस्य वातिके एवावरोध उचितः, इष्टद्रव्यविनाशस्य वातप्रकोपकारित्वात् । एवं कामादिभवेष्वपि वाच्यम् ॥ ४२—४४ ॥

सर्पिःपानादि तस्येह मृदु भेषजमाचरेत् ।
पूजां बल्युपहारांश्च मन्त्राञ्जनविधींस्तथा ॥
शान्तिकर्म्मेष्टिहोमांश्च जपस्वस्त्ययनानि च ।
वेदोक्तान् नियमांश्चापि प्रायश्चित्तानि वाचरेत् ॥
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ।
पूजयन् प्रायशो नित्यं जयत्युन्मादजं भयम् ॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ।
तेषां पूजाञ्च कुर्व्वाण उन्मादेभ्यः प्रमुच्यते ॥
बलिभिर्मङ्गलैर्होमैरौषध्यगदधारणैः ।
सत्याचारतपोज्ञान-प्रदाननियमव्रतैः ॥
देवगुह्यकविप्राणां गुरुणां पूजनेन च ।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा ॥ ८५ ॥

तीक्ष्णान्यञ्जनादीनि क्रूरकर्म्म च बुद्धिमान् वर्ज्जयेत्। सुश्रुतेऽप्युक्तम्। "न चायुक्तं प्रयुञ्जीत प्रयोगं देवताग्रहे। ऋते पिशाचादन्येषु प्रतिकूलं न चाचरेत्। वैद्यातुरौ निहन्युस्ते ध्रुवं क्रुद्धा महौजसः ॥" इति। सर्पिष्पाणादि तस्य देवर्षिपितृगन्धर्व्वादुन्मत्तस्य मृदु भेषजञ्चेहाचरेत्। युक्तिव्यपाश्रयमुक्त्वा दैवव्यपाश्रयमाह—पूजामित्यादि। पूजां देवादीनामधिदेवानां पूजामाचरेत्। तदुक्तं विशेषेण सुश्रुते तन्त्रान्तरे च, तं कारयेत्। ननु कस्य पूजादिकमाचरेदित्यत आह—भूतानामित्यादि। भूतानां देवादीनामधिपं जगतः प्रभुमीश्वरं शिवं देवं प्रायशो नित्यं पूजयन् दोषागन्तुजोन्मादजं भयं जयति। एवं रुद्रस्य प्रमथा नाम गणा ये लोके चरन्ति तेषां पूजाञ्च कुर्व्वाण उन्मादेभ्यो भूतजेभ्यः प्रमुच्यते। बलिभिरित्यादि। ये देवादयो गृह्णन्ति तेषां बलिभिरुपहारैः ओषधिं प्रशस्तां धारयेत्। अगदञ्च भूतोचितं धारयेत्।

चक्रपाणिः—क्रूरमिति ताड़नादिकम्। कर्म्मेत्यादिना दैवव्यपाश्रयचिकित्सामाह ॥ ८५ ॥

यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।
उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोः॥ ४६॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः।
निजागन्तुभिरुन्मादैः सत्त्ववान् न स युज्यते॥ ४७॥
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम्॥ ४८॥

इत्येवं बल्यादिभिर्देवादिपूजनान्तरागन्तुरुन्मादः प्रशमं याति। सिद्धमन्त्रैरौषधैश्च तथागन्तुरुन्मादः प्रशमं याति॥ ४५॥

गङ्गाधरः—अपरश्चाह—यच्चेत्यादि। सामान्याद्धेतुदूष्ययोरिति वचनेनानुक्तोऽप्युन्मादहेतुरपस्मारहेतुर्य उक्तः सोऽप्युन्मादहेतुरिति ख्यापितम्॥ ४६॥

गङ्गाधरः—यस्योन्मादो न भवति तदाह—निवृत्तेत्यादि। यो मत्स्यमांसभक्षणमद्यपानाभ्यां निवृत्तः शुचिश्च हिताशी च प्रयतः संयतश्च स निजागन्तुभिरुन्मादैर्न युज्यते॥ ४७॥

गङ्गाधरः उन्मादनिवृत्तिलक्षणमाह—प्रसादश्चेत्यादि। इन्द्रियाणां प्रसादस्तथा बुद्ध्यात्ममनसाञ्च प्रसादः। धातूनां रसरक्तादीनां प्रकृतिस्थत्वं स्वस्वमाने स्थितिः, सर्व्वमिदं विगतोन्मादस्य लक्षणमिति॥ ४८॥

चक्रपाणिः—सामान्याद्धेतुदूष्ययोरित्युन्मादेनापस्मारेण च समहेतुमनोऽभिघातादिदूष्यञ्च हृदयं समानमित्यर्थः॥ ४६॥

चक्रपाणिः—निवृत्तामिष इत्यादिः व्याख्यात एव पूर्व्वम्॥ ४७॥

चक्रपाणिः—क्रियमाणोन्माद-चिकित्सायाः स्फोटनार्थं विगतोन्माद-लक्षणमाह—प्रसाद इत्यादि॥ ४८॥

तत्र श्लोकः ।

उन्मादानां समुत्थानं लक्षणं सचिकित्सितम् ।
निजागन्तुनिमित्तानामुक्तवान् भिषगुत्तमः ॥ ४६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
उन्मादचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोक इति । उन्मादानामिति दोषभूतोन्मादानाम् । समुत्थानं निदानम् । भिषगुत्तमः पुनर्व्वसुरात्रेय इति ॥ ४९ ॥

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ
षष्ठस्कन्धे चिकित्सितस्थानजल्पे उन्मादचिकित्सित-
जल्पाख्या नवमी शाखा ॥ ९ ॥

चक्रपाणिः उन्मादानामिति संग्रहः ॥ ४९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायाम् उन्मादचिकित्सितं
नाम नवमोऽध्यायः ॥ ९ ॥

# दशमोऽध्यायः ।

अथातोऽपस्मारचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

स्मृतेरपगतं प्राहुरपस्मारं भिषग्विदः ।
तमःप्रवेशं बीभत्स-चेष्टं धीसत्त्वसंप्लवात् ॥ २ ॥
विभ्रान्तबहुदोषाणामहिताशुचिभोजिनाम् ।
रजस्तमोभ्यां विहते सत्त्वे दोषावृते हृदि ॥
चिन्ताकामभयक्रोध-शोकोद्वेगादिभिस्तथा ।
मनस्यभिहते नृणामपस्मारः प्रवर्त्तते ॥ ३ ॥

गङ्गाधरः—उद्देशानुक्रमेण उन्मादानन्तरमपस्मारचिकित्सितमाह—अथात इत्यादि। पूर्ववद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—स्मृतेरित्यादि। स्मृतेः स्मृतितोऽपैति अपस्मारः। निरादयो गताद्यर्थे पञ्चम्येति तत्पुरुषः। अपशब्दार्थ इह गत इति। स्मृतितोऽपगमने प्रतिनियतं यद् भवति तदाह—तमःप्रवेशम् अन्धकारे प्रवेशो यत्र स्मृत्यपगमे सत्त्वसंप्लवान्मनसः सम्यक्प्लवनाद् बीभत्सा चेष्टा यत्र तमपस्मारमाहुः भिषग्विदः ॥ २ ॥

गङ्गाधरः तस्य निदानमाह—विभ्रान्तबहुदोषाणां मानतो बहवो दोषा येषां विभ्रान्ता अस्थिरास्तेषाम्, अहितान्यशुचीनि भोक्तुं शीलमेषां तेषां, रजस्तमोभ्यां कुपिताभ्यां विहते सत्त्वे मनसि हृदि च दोषावृते शारीरदोषैः

चक्रपाणिः—व्याध्युत्पत्तावुन्मादेन सहोत्पन्नत्वादुन्मादमनु अपस्मारचिकित्सितमुच्यते ॥ १ ॥

चक्रपाणिः—स्मृतेरपगम इत्यादिनापस्मारसंज्ञां व्युत्पादयन् अपस्मारस्वरूपमाह। स्मृतेरपगम एव विशिनष्टि—तमःप्रवेश इति। बीभत्सचेष्टमिति तमःप्रवेशेन ज्ञानाभावत्वाद् बीभत्सविचेष्टनवत् वदनाङ्गविक्षेपणादिकादनुमितं बीभत्सचेष्टम्। स्मृत्यपगमादौ च हेतुमाह—धीसत्त्वविप्लवः, विप्लवः स्वरूपान्यथात्वम् ॥ २ ॥

चक्रपाणिः—यादृशानामपस्मारो भवति तानाह—विभ्रान्तेत्यादि। विभ्रान्ता उन्मार्गगामिनो बहवश्च दोषा येषां तेषां विभ्रान्तबहुदोषाणाम्। विहते सत्त्व इति सत्त्वाख्यगुणे विहते, न तु सत्त्वशब्देन मन उच्यते। तस्य मनस्यभिहते इति ग्रहणेन सिद्धिः ॥ ३ ॥

धमनीभिः श्रिता दोषा हृदयं पीड़यन्ति हि ।
संपीड्यमानो व्यथते मूढ़ो भ्रान्तेन चेतसा ॥
पश्यत्यसन्ति रूपाणि पतति प्रस्फुरत्यपि ।
जिह्माक्षिभ्रूः स्रवल्लालो हस्तौ पादौ च विक्षिपन् ।
दोषवेगे च विगते सुप्तवत् प्रतिबुध्यते ॥ ४ ॥
पृथग्दोषैः समस्तैश्च वक्ष्यते स चतुर्व्विधः ।
कम्पते प्रदशेद् दन्तान् फेनोद्वामी श्वसित्यपि ।
परुषारुणकृष्णानि पश्येद् रूपाणि चानिलात् ॥

आवृते, तथा नृणां चिन्तादिभिर्मनसि अभिहते, अपस्मारः प्रवर्त्तते। इति निदानपूर्व्वकसम्प्राप्तिः ॥ ३ ॥

गङ्गाधरः— सामान्यलक्षणमाह धमनीभिरित्यादि। हृदयमूलाभिर्धमनीभिः श्रिता दोषा वातपित्तकफा हृदयं पीड़यन्ति, हृदये दोषैः सम्पीड्यमानो मानवो भ्रान्तेन चेतसा मूढ़ः प्रमोहं गतः सन् व्यथते। यदा मूढ़ो भवति तदा खल्वसन्ति रूपाणि मिथ्याभूतानि रूपाणि पश्यति पतति चातिस्फुरति च। जिह्माक्षिभ्रूः कुटिलाक्षः कुटिलभ्रूश्च तदा भवति। स्रवल्लालश्च सन् हस्तौ पादौ च विक्षिपन् वर्त्तते। दोषवेगे च विगते सुप्तवत् प्रतिबुध्यते सुप्तोत्थित इव भवति ॥ ४ ॥

गङ्गाधरः— सङ्ख्या चोक्ता निदाने चत्वारोऽपस्मारा इह च स चतुर्व्विध इति तच्च पृथग्दोषैरित्यादिना प्रोक्तम्। तत्र वातिकादिक्रमेण लक्षणमाह— कम्पत इत्यादि। यदा मूढः सन् पतति अतिस्फुरति तदा कम्पते, दन्तान् प्रदशेत्, फेनोद्वामी सन् श्वसिति च, परुषाणि चारुणवर्णानि च रूपाणि अनिलात्

चक्रपाणिः— धमनीभिरिति यद्यपि सामान्येनोक्तं तथापि हृदयपीडायोग्यतया हृदयाश्रिता एव धमन्यो विशेषेण गृह्यन्ते। अत्र च वातादीनां प्रकोपे पृथक्पृथक् हेतुर्नोक्तः। तस्य उन्मादसाधारणत्वेनोक्तत्वात्। उक्तं हि— यच्चोपदेक्ष्यते किञ्चित् अपस्मारचिकित्सिते। उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोरिति। यस्त्वपस्मारस्य विशिष्टो हेतुरुन्मादात् समुदितात् उक्त एव ॥ ४ ॥

पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः।
सतृष्णोष्मानलव्याप्त-लोकदर्शी च पैत्तिकः॥
शुक्लफेनाङ्गवक्त्राक्षः शीतो हृष्टाङ्गजो गुरुः।
पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात्॥
सर्व्वैरेतैः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः।
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः॥ ५॥

अपस्मारी पश्येत्॥ ०॥ पीतेत्यादि। पैत्तिकोऽपस्मारी पीतफेनाङ्गवदनः। यदा भ्रान्तेन चेतसा मूढ़ः सन पतति जिह्माक्षिभ्रूः स्रवल्लालः पादौ हस्तौ च विक्षिपन्नतिस्फुरति तदा पीतफेनोद्वामी भवति। पीतासृङ्म्रक्षितभीमरुधिर-वर्णरूपं मोहकाले पश्येत्। दोषवेगे विगते सुप्तोत्थित इव भवन पीताङ्गवक्त्रो भवति। सतृष्णोष्मा तृष्णोष्मभ्यां विशिष्टः अनलव्याप्तलोकदर्शी च वर्त्तते॥०॥ शुक्लेत्यादि। श्लैष्मिकोऽपस्मारी यदा भ्रान्तेन चेतसा मूढ़ो भवति, तदा शुक्लानि कानिचिदसद्रूपाणि पश्येत्। पश्यंश्च पतति जिह्माक्षिभ्रूः स्रवल्लालो हस्तौ पादौ च विक्षिपन्नतिस्फुरति। दोषवेगे विगते शुक्लाङ्गवक्त्राक्षः शीतो हृष्टलोमा गुरुगात्रो वर्त्तते। चिरान्मुच्यते चिरकालेन प्रतिबुध्यते इति। विस्तरेण निदानस्थाने व्याख्यातः॥ ०॥ सान्निपातिकमपस्मारमाह— सर्व्वैरित्यादि। एतैः सर्व्वैः सर्व्वेषां त्रयाणां दोषाणां समस्तैर्लिङ्गैस्त्रिदोषजोऽपस्मारो ज्ञेयो न तु त्रयाणां दोषाणाम् एकदेशलक्षणैः; तस्मात् स चापस्मारोऽसाध्यः, ऐकदेशिकत्रिदोषलिङ्गः सान्निपातिकरोगस्तु साध्यः स्यात्। यश्चापस्मार एकैकदोषजोऽपि क्षीणजनस्य भवति, स चासाध्यः। यश्चानवः पुराणः स चासाध्यः इति। सुश्रुते चोक्तम्। तद्यथा—"स्मृतिर्भूतार्थ-विज्ञानमपस्तत्परिवर्ज्जने। अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्त-कृत्। मिथ्यादियोगेन्द्रियार्थ-कर्म्मणामभिसेवनात्। विरुद्धमलिनाहार-विहार-कुपितैर्मलैः। वेगनिग्रहशीलानामहिताशुचिभोजिनाम्। रजस्तमोऽभिभूतानां गच्छताञ्च रजस्वलाम्। तथा कामभयोद्वेग-क्रोधशोकादिभिर्भृशम्। चेतस्यभिहते

चक्रपाणिः—पृथगित्यादिना चतुर्व्विधापस्मारलक्षणमाह। पीतासृग्रूपदर्शन इति पीतलोहित-रूपदर्शी। सतृष्णेति सतृष्णोष्मा चासौ अनलव्याप्तलोकदर्शी चेति समासः। शुक्लेति श्लैष्मिक

पक्षाद् वा द्वादशाहाद् वा मासाद् वा कुपिता मलाः ।
अपस्माराय कुर्व्वन्ति वेगं किञ्चिदथान्तरम् ॥ ६ ॥

भृशम् । चेतस्यभिहते पुंसामपस्मारोऽभिजायते । संज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः । रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा । विक्षिपन् हस्तपादौ च विजिह्मभ्रूविलोचनः । दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ । अल्पकालान्तरश्चापि पुनः संज्ञां लभेत सः । सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्व्विधः । वातपित्तकफैर्न्नृणां चतुर्थः सान्निपातिकः । हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढ़ता । निद्रानाशश्च तस्मिंस्तु भविष्यति भवत्यथ । वेपमानो दशेद् दन्तान् श्वसन् फेनं वमन्नपि । यो ब्रूयाद् विकृतं सत्त्वं कृष्णं मामनुधावति । ततो मे चित्तनाशः स्यात् सोऽपस्मारोऽनिलात्मकः ॥ तृट्तापस्वेदमूर्च्छार्त्तो धुन्वन्नङ्गानि विह्वलः । यो ब्रूयाद् विकृतं सत्त्वं पीतं मामनुधावति । ततो मे चित्तनाशः स्यात् स पित्तभव उच्यते ॥ शीतहृल्लासनिद्रार्त्तः पतन् भूमौ वमन् कफम् । यो ब्रूयाद् विकृतं सत्त्वं शुक्लं मामनुधावति । ततो मे चित्तनाशः स्यात् सोऽपस्मारः कफात्मकः ॥ हृदि तोदस्तृडुत्क्लेशस्त्रिष्वप्येतेषु सङ्क्षया । प्रलापः कूजनं क्लेशः पत्येकञ्च भवेदिह । सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे । अनिमित्तागमाद् व्यावेगमनादकृतेऽपि च । आगमाच्चाप्यपस्मारं वदन्त्यन्ये न दोषजम् । क्रमोपयोगाद् दोषाणां क्षणिकत्वात् तथैव च । आगमाद् वैश्वरूपाच्च स तु निवर्ण्यते बुधैः । वर्षत्यपि यथा देवे भूमौ वीजानि कानिचित् । शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयः । स्थायिनः केचिदल्पेन कालेनाभिप्रवर्द्धिताः । दर्शयन्ति विकारांस्तु विश्वरूपान् निसर्गतः । अपस्मारो महाव्याधिस्तस्माद्दोषज एव तु ॥" इति ॥ ५ ॥

गङ्गाधरः—अथास्यागमकालानाह—पक्षाद् वेत्यादि । पक्षादिकालविकल्पो दोषाणां हेतुविशेषेण बलप्रकर्षापकर्षादितः स्वभावाच्च ॥ ६ ॥

उच्यते । चिरादिति वचनेन वातपित्तयोः अचिरेण मोक्षं सूचयति । क्षीणस्यानवश्च यः इति क्षीणस्य एकदोषजोऽप्यसाध्य इति भावः ॥ ५ ॥

चक्रपाणिः—पक्षाद्वेत्यादौ व्युत्क्रम्य कालनिर्देशेन उक्तकालादूर्द्ध्वमर्व्वाक् चापस्मारवेगो भवतीति सूचयति । किञ्चिदथान्तरमिति किञ्चित्कालं वेगं कुर्व्वन्ति स्तोककालमिति यावत् ॥ ६ ॥

तैरावृतानां हृत्स्रोतो-मनसां संप्रबोधनम्।
तीक्ष्णरादौ भिषक् कुर्य्यात् कर्म्मभिर्वमनादिभिः॥
वातिकं वस्तिभूयिष्ठैः पैत्तं प्रायोविरेचनैः।
कफजं वमनप्रायैरपस्मारमुपाचरेत्॥ ७॥
सर्व्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु॥ ८॥
गोशकृद्रसदध्यम्ल-क्षीरमूत्रैः समैर्घृतम्।
सिद्धं पिबेदपस्मार-कामलाज्वरनाशनम्॥ ९॥

पञ्चगव्यं घृतम्।

गङ्गाधरः निदानमुक्त्वा चिकित्सितमाह तैरित्यादि। तैरपस्मारहेतु-कुपितैर्दोषैरावृतानां हृदयमनोवहस्रोतोमनसां सम्प्रबोधनमादौ भिषक् तीक्ष्णैः वमनादिभिः कर्म्मभिः कुर्य्यात्। तद्यथा। वस्तिभूयिष्ठैर्वमनादिभिः पञ्चभिः कर्म्मभिः वातिकमपस्मारमुपाचरेत्। प्रायोविरेचनैः विरेचनभूयिष्ठैः वमनादिभिः पैत्तमपस्मारमुपाचरेत्। वमनप्रायैर्वमनभूयिष्ठैर्वमनादिभिः कफजमपस्मार-मुपाचरेत्॥ ७॥

गङ्गाधरः सर्व्वत इत्यादि। इत्येवं सर्व्वत ऊर्द्ध्वाधस्तिर्य्यक्शिरोविरेचनैः सुविशुद्धस्यापस्मारिणः सम्यगाश्वासितस्यापस्मारविमोक्षार्थं संशमनान् योगान् शृणु॥ ८॥

गङ्गाधरः संशमनयोगानाह गोशकृदित्यादि। पुराणं घृतं समैः घृत समैर्गोशकृद्रसैर्गव्यैर्दध्यम्लैर्गव्यक्षीरगव्यमूत्रैः सिद्धमकल्कं घृतं पिबेत्॥ ९॥

पञ्चगव्यघृतम्।

चक्रपाणिः—तैरित्यादिना चिकित्सामाह। प्रबोधनमिति दोषविरहितत्वेन सम्यक् स्वव्यापारत्वम्। प्राय इत्यादौ प्रायःशब्दो विशेषार्थः। तेनान्या क्रियापि सूचिता भवति॥ ७॥

चक्रपाणिः—आश्वासितस्येति आप्यायितस्य॥ ८॥

चक्रपाणिः गोशकृदित्यनेन दध्यादिभिरिति गोशब्दो योज्यः। तेन पञ्चगव्यमिदमल्पं भवति। साम्यञ्चात्र गोशकृद्रसादीति परिभाषासिद्धमपि स्पष्टार्थमुच्यते॥ ९॥

ब्राह्मीरसे वचाकुष्ठ-शङ्खपुष्पीभिरेव च ।
पुराणमाज्यमुन्मादग्रहमापस्मारपापनुत् ॥ १० ॥
द्वे पञ्चमूल्यौ त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥
शम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गीं पाठा त्रिकटुकं त्रिवृता निचुलानि च ।
श्रेयसीमाढ़कीं मूर्व्वां दन्तीं भूनिम्बचित्रकौ ॥
द्वे शारिवे रोहिषञ्च भूतीकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥
गोशकृद्रसदध्यम्ल-क्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम् ॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च ।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ॥
शस्यते घृतमेतत् तु प्रयोक्तव्यं दिने दिने ।
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थकविनाशनम् ॥ ११ ॥

महापञ्चगव्यं घृतम् ।

गङ्गाधरः—ब्राह्मीरस इत्यादि । ब्राह्मीरसे घृताच्चतुर्गुणे वचादिभिः कल्कैः घृतात् पादिकैः पुराणं गव्यमाज्यं सिद्धमुन्मादादिनुत् पिबेत् ॥१०॥ ब्राह्मीघृतम् ॥

गङ्गाधरः—द्वे पञ्चमूल्यावित्यादि । द्वे पञ्चमूल्यौ प्राधान्यात् वृहत्पञ्चमूली-स्वल्पपञ्चमूल्यौ । त्रिफला पथ्याक्षधात्र्यः । रजन्यौ द्वे । शम्पाकस्य फलमध्यम् । फल्गुमूलं कोठोडुम्बरमूलम् । एतानि चतुर्व्विंशतिं द्रव्याणि प्रत्येकं द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते षोड़शशरावावशेषे भार्ग्यादीन्येकोनविंशतिं

**चक्रपाणिः**—ब्राह्मीत्यादौ पुराणमिति घृतं विशेषेण तथा साध्यमिति विशेषः । तेन पुराणं घृतमिति साध्यं भवति ॥ १० ॥

**चक्रपाणिः**—द्वे पञ्चमूले इत्यादि निर्द्दिष्टं पञ्चमूलद्वयं दशमूलाख्यं ग्राह्यम् । नीलिनी

वचाशम्पाककैटर्य्य-वयःस्थाहिङ्गुचोरकैः।
सिद्धं पलङ्कषायुक्तं वातश्लेष्मामयापहम् ॥ १२ ॥
घृतं सैन्धवहिङ्गुभ्यां वार्षे वास्ते चतुर्गुणे।
मूत्रे सिद्धमपस्मार-हृद्ग्रहायासनाशनम् ॥ १३ ॥
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविनाशनम् ॥ १४ ॥

द्रव्याणि कर्षमात्राणि पिष्ट्वा पुराणगव्यसर्पिषः प्रस्थे क्षिपेत्, तैः तं सर्पिषः प्रस्थं पचेत्। तत्सर्पिः समैर्गोशकृद्रसैर्गोदध्यम्लैर्गोक्षीरैर्गोमूत्रैश्च पचेत् ॥११॥
महापञ्चगव्यघृतम् ॥

गङ्गाधरः—वचेत्यादि। कैटर्य्य कट्फलं, वयःस्था विभीतकी, चोरकः स्थलजचोरपुष्पी, पलङ्कषा गोक्षुरा। एभिः कल्कैः सिद्धं पुराणं गव्यं घृतमित्यनुवर्त्तते ॥ १२ ॥

गङ्गाधरः—घृतमित्यादि। सैन्धवहिङ्गुभ्यां पादिकाभ्यां कल्काभ्यां चतुर्गुणे वार्षे वृषस्य मूत्रे वास्ते च छागस्य मूत्रे मिलिते चतुर्गुणे सिद्ध पक्वं घृतमिति ॥ १३ ॥

गङ्गाधरः—अथ यमकस्नेहमाह तैलप्रस्थमित्यादि। तिलतैलस्य प्रस्थं पुराणगव्यघृतस्य च प्रस्थं मिश्रीकृत्य यमकं जीवनीयैर्दशभिः प्रत्येकं पलोन्मितैः क्षीरद्रोणे पचेत् ॥ १४ ॥

नीलिका, शम्पाक आरग्वधः। द्विपलं प्रत्येकं दशमूलादीनां, तत् प्रतिपादितमेवोन्मादे। निचुलो हिज्जलः, श्रेयसी हस्तिपिप्पली। द्वे शारिवे इति श्यामालतानन्तमूला ॥ ११ ॥

चक्रपाणिः—कैटर्य्यः पार्व्वतो निम्बः। वयःस्था गुडूची। वातश्लेष्मात्मक इति द्वन्द्वापस्मारा निर्द्देशाच्च वातात्मके श्लेष्मात्मके च ज्ञेयम्। अन्ये तु गुल्मवदनुक्तमपि प्रकृतिसमसमवायारब्ध-द्वन्द्वजवातश्लेष्मात्मकम् अपस्मारं वदन्ति ॥ १२ ॥

चक्रपाणिः—वार्षे वास्ते इति वृषे छागे मूत्रे पचेत्। अत्र च यद्यपि "स्त्रीणां तीक्ष्णं गुरु मूत्रं न तु पुंसां तथाविधम्। पित्तांशिकाः स्त्रियो यस्मात् सौम्यास्तु पुरुषाः स्मृताः" इत्यनेन स्त्रियो मूत्रं प्रशस्तमुक्तम्; तथापीहाविशेषपरिग्रहात् पुंलिङ्गयोरेव मूत्रं यौगिकमिति ॥ १३ ॥

चक्रपाणिः—तैलप्रस्थमित्यादौ पलोन्मितैः कल्कैरिति। द्रवस्थाने क्षीरस्यैव विद्यमानत्वात् ॥ १४

कंशे चीरेक्षुरसयोः काश्मर्य्येऽष्टगुणे रसे ।
कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत् ॥
वातपित्तोद्भवं चिप्रमपस्मारं नियच्छति ।
तद्वत् काशविदारीक्षु-कुशक्काथशृतं घृतम् ॥ १५ ॥
मधूकद्विपले कल्के द्रोणे चामलकारसात् ।
तद्वत् सिद्धं घृतप्रस्थं पित्तापस्मारभेषजम् ॥ १६ ॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे ।
सिद्धं स्याद् गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ १७ ॥

गङ्गाधरः—कश इत्यादि । गव्यक्षीरस्य कंशे इक्षुरसस्य च कंशे काश्मर्य्ये काश्मरीमूलक्काथेऽष्टगुणे जीवनीयैर्दशभिः प्रत्येकं कार्षिकैः कल्कैः पुराण-गव्यसर्पिःप्रस्थं विपचेत् । तद्वदित्यादि । काशादीनां चतुर्णां मूलक्काथे चतुर्गुणे शृतं पक्कमकल्कं घृतं तद्वत वातपित्तोद्भवम् अपस्मारं क्षिप्रं नियच्छति । वातोद्भवं पित्तोद्भवञ्चापस्मारम् ॥ १५ ॥

गङ्गाधरः—मधूकेत्यादि । मधूकसारस्य द्विपले कल्के आमलकीरसाद् द्रोणे सिद्धं घृतप्रस्थं तद्वत् वातपित्तोद्भवमपस्मारं क्षिप्रं नियच्छति, विशेषात् पित्तापस्मारभेषजं भवति ॥ १६ ॥

गङ्गाधरः—अभ्यङ्ग इत्यादि । वस्तमूत्रे छागमूत्रे चतुर्गुणे कल्कं विना सार्षपं तैलं सिद्धं प्रकरणादपस्मारिणोऽभ्यङ्गः स्यादेवं गोशकृद्भिरुत्सादनं गोमूत्रैः स्नानमपस्मारिण इति ॥ १७ ॥

चक्रपाणिः—कंस इत्यादके । काश्मर्य्ये इति गम्भारीभवे रसे । रसे इति क्काथे । तद्वदित्यनेन पूर्व्वयोगफलश्रुतिं दर्शयति ॥ १५ ॥

चक्रपाणिः—तद्वत्सिद्धो घृतप्रस्थः इत्यनेन पूर्व्वयोगोक्त क्षिप्रमित्याकर्षति, तेन क्षिप्रं पित्तापस्मार इति फलति ॥ १६ ॥

चक्रपाणिः—अभ्यङ्ग इत्यादिना अकल्कमेव तैलं पक्तव्यम् । गोशकृदित्यादौ गोशकृतोत्-सादनं गोमूत्रेण च योग्यतया स्नानम् ॥ १७ ॥

कटभीनिम्बकट्वङ्ग-मधुशिग्रुत्वचां रसे ।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थे प्रशस्यते ॥ १८ ॥
पलङ्कषावचापथ्या-वृश्चीकाल्यर्कसर्षपैः ।
जटिलापूतनाकेशी-लाङ्गलीहिङ्गुचोरकैः ॥
लसुनातिरसाचित्रा-कुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जनं तैलमपस्मारविनाशनम् ।
एतैश्चैवौषधैः कार्य्यं धूपनं सप्रलेपनम् ॥ १९ ॥
पिप्पलीं लवणं हिङ्गु शिग्रु हिङ्गुशिराटिकाम् ।
काकोलीं सर्षपान् काक-नासां कैटर्य्यचन्दने ॥

गङ्गाधरः कटभीत्यादि । एवं कटभ्यादीनां चतुर्णां त्वचां रसे त्रिगुणे केचिदाहुश्चतुर्गुणे मूत्रसमं तैलं सिद्धमपस्मारिणोऽभ्यङ्गार्थे प्रशस्यते । कटभी क्षुद्रशिरीषः । कट्वङ्गः श्योनाकः । मधुशिग्रुः रक्तशोभाञ्जनः । एषां प्रत्येकं त्वचां रसस्तैलसम इति ॥ १८ ॥

गङ्गाधरः पलङ्कषेत्यादि । पलङ्कषा गोक्षुरा । वृश्चिकाली वृश्चिकपत्री । जटिला जटामांसी । पूतना हरीतकी । केशी केशिनी शङ्खिनीपुष्पम् । चोरकः पिड़ङ्ग इति लोके । अतिरसा जलयष्टीमधु । चित्रा द्रवन्ती । मांसाशिनां पक्षिणां यथालाभं विड्भिः पुरीषैः । एभिस्तैलपादिकैः कल्कैर्वस्तमूत्रे छागमूत्रे चतुर्गुणे सिद्धं सार्षपं तैलमभ्यञ्जनमपस्मारनाशनमिति । एतैरित्यादि । एतैश्च पलङ्कषादिभिरौषधैरपस्मारिणो धूपनं प्रलेपनञ्च कार्य्यम् ॥ १९ ॥

गङ्गाधरः पिप्पलीमित्यादि । हिङ्गु हिङ्गुनिर्य्यासः । हिङ्गुशिराटिका हिङ्गुपत्री, न तु हिङ्गुनो भागद्वयम् । काकनासिकां काउयाठुँठीति लोके । कैटर्य्यं

चक्रपाणिः—कटभीत्यादौ कटभ्यादीनां चतुर्णामपि त्वचं गृहीत्वा क्वाथस्तेन त्रिगुणः कर्त्तव्यः । चतुर्थस्तु द्रवभागेणैव स्नेहसममेव पूर्य्यते ॥ १८ ॥

चक्रपाणिः पलङ्कषेत्यादौ पूतनायाः पूतना पूर्व्वायाः केशी पूतनाकेशी गोलोमीत्यर्थः । तथा हस जतूकर्णे पूतनाकेशी गोलोमीत्युच्यते । उक्तं हि "वृश्चिकालीपथ्यागोलोमीनाकुलीगुग्गुलकुष्ठैः सर्षपजटिलाहिङ्गुवचामधुकव्दिसादिमांसादपुरीषैर्वस्तमूत्रेऽभ्यङ्गः । अतिरसा जलयष्टीमधु । चित्रा दन्ती ॥ १९ ॥

शुनः स्कन्धास्थिनखरान् पार्शु कांश्चेति पेषयेत् ।
वस्तमूत्रेण पुष्यर्क्षे प्रदेहः स्यात् सधूपनः ॥ २० ॥
अपेतराक्षसीकुष्ठ-पूतनाकेशिचोरकः ।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥ २१ ॥
जलौकाशकृता तद्वत् दग्धैर्वा वस्तलोमभिः ।
खरास्थिभिर्हस्तिनखैस्तथा गोपुच्छलोमभिः ॥ २२ ॥
कपिलानां गवां मूत्रं नावनं परमं हितम् ।
सशृगालविड़ालानां * सिंहादीनाञ्च शस्यते ॥ २३ ॥

वत्फलम् । शुनः कुक्कुरस्य स्कन्धश्चास्थि च नखराश्च । पशु कां पार्श्वास्थि । सर्व्वमिदं पुष्यानक्षत्रे वस्तमूत्रेण पेषयेत् । तेनापस्मारिणः सधूपनः सर्व्वाङ्गे प्रदेहः । प्रलेपनाद्धापस्मारविनाशनं स्यात् ॥ २० ॥

<u>गङ्गाधरः</u>—अपेतराक्षसीत्यादि । अपेतराक्षसी कृष्णतुलसी । पूतना हरीतकी । केशी केशिनी, चोरकः शङ्खपुष्पी । पृक्का लता पिड़ङ्ग । गोमूत्रपिष्टैः प्रलेपः । केवलगोमूत्रैश्च सेचनम् ॥ २१ ॥

<u>गङ्गाधरः</u>—जलौकेत्यादि । जतुकेति पाठे चर्म्मचटकपुरीषेण तद्वत् प्रलेपः । वस्तलोमभिर्दग्धैः पिष्टैस्तद्वत् प्रलेपः । खरास्थिभिर्दग्धैः पिष्टैः प्रलेपः । हस्तिनखैस्तथा दग्धैः पिष्टैः प्रलेपस्तथा गोपुच्छलोमभिः दग्धैः पिष्टैः प्रलेपः ॥ २२ ॥

<u>गङ्गाधरः</u> कपिलानामित्यादि । कपिलानां पिङ्गलगवीनां मूत्रं शृगालस्य विड़ालस्य च सिंहादीनां सिंहव्याघ्रतरक्षुप्रभृतीनाञ्च मूत्रं नावनं नस्यम् अपस्मारिणे परमं हितमिति ॥ २३ ॥

<u>चक्रपाणिः</u>—हिङ्गुशिवाटिका वंशपत्रकमिति ख्याता । स्कन्धस्यास्थि पुष्यऋक्षपेषणेन नक्षत्रयोगकृतसंस्कारमुपदिशति ॥ २० ॥

<u>चक्रपाणिः</u>—अपेतराक्षसीस्वरसः ॥ २१ ॥

<u>चक्रपाणिः</u>—जलौकेत्यादौ तद्वदित्युत्सादनम् ॥ २२ ॥

<u>चक्रपाणिः</u>—कपिलानां गवां मूत्रे विशेषकरं भवतीति आप्तवचनादुन्नीयते । सिंहादीनाञ्च शस्यते इत्यादौ मूत्रमिति योज्यम् ॥ २३ ॥

* श्वशृगालविड़ालानामिति वा पाठः ।

भार्गी वचा नागदन्ती श्वेता शतविषाणिका * ।
ज्योतिष्मती नागदन्ती पादोक्ता मूत्रपेषिताः ।
योगास्त्रयोऽतः षड् विन्दून् पञ्च वा नावयेद्भिषक् ॥ २४ ॥
त्रिफलाव्योषपीतद्रु-यवक्षारफणिज्झकैः ।
श्यामापामार्गकरञ्जैः फलमूत्रे च वस्तजे ।
साधितं नावनं तैलमपस्मारविनाशनम् ॥ २५ ॥
पिप्पली वृश्चिकाली च कुष्ठञ्च लवणानि च ।
भार्गी च चूर्णितं नस्तः कार्य्यं प्रधमनं परम् ॥ २६ ॥
कयस्थां शारदान् मुद्गान् मुस्तोशीरयवांस्तथा ।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत् ॥

गङ्गाधरः—भार्गीत्यादि । भार्गी वचा नागदन्तीत्येकं नस्यम् । श्वेता शतविषाणिका चेत्येकं नस्यं, श्वेतापराजिता वृहदजशृङ्गीति द्वयं द्वितीयं, ज्योतिष्मती नागदन्ती चेत्येकं तृतीयं नस्यम् । इति त्रयो योगा गोमूत्रपेषिताः । अतः षड् विन्दून् पञ्च विन्दून् वापस्मारिणं नावयेत् नावनं कारयेत् ॥ २४ ॥

गङ्गाधरः—त्रिफलेत्यादि । त्रिफलादीनां कल्कैः पादिकैर्वस्तजे मूत्रे चतुर्गुणे साधितं तिलतैलं सार्षपतैलं वा नावनमपस्मारविनाशनम् । तत्र पीतद्रुर्दारुहरिद्रा । फणिज्झको जम्वीरो मातुलुङ्गप्रभेदः । श्यामा त्रिवृत् । एषां फलैः ॥ २५ ॥

गङ्गाधरः—पिप्पलीत्यादि । वृश्चिकाली विछाटीति लोके । लवणानि पञ्च । एतेषां चूर्णं नस्तः कार्य्यमपस्मारविनाशनं परम् । प्रधमनं नस्यप्रभेदः ॥ २६ ॥

गङ्गाधरः—कयस्थामित्यादि । कयस्थादीनि समांशेन नीत्वा वस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत् । तया वर्त्त्या वस्तमूत्रेणैव घृष्टयाञ्जनं नेत्रे दद्यात् ।

चक्रपाणिः—भार्गीत्यादौ नागदन्ती काष्ठपाटला, श्वेता श्वेतापराजिता, श्वेता विषाणिका शतावरी ॥ २४ ॥

चक्रपाणिः—त्रिफलेत्यादौ पीतद्रु देवदारु । लवणानि सैन्धवादि पञ्च किंवा लवणवर्गोक्तानि यथालाभं ग्राह्याणि ॥ २५ । २६ ॥

चक्रपाणिः—कायस्थानित्यादौ शारदान् मुद्गानिति हारीतमुद्गाः ; ते हि प्रायः शरदि

* श्वेता विषाणिका इति चक्रसम्मतः पाठः ।

अपस्मारे तथोन्मादे सर्पदष्टे गरार्द्दिते ।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ २७ ॥
मुस्तं वयःस्थां त्रिफलां कयस्थां हिङ्गु शाद्वलाम् ।
व्योषं माषान् यवान् मूत्रैर्वास्तमेषार्षभैस्त्रिभिः ॥
पिष्ट्वा कृत्वा च तां वर्त्तिमपस्मारे प्रयोजयेत् ।
किलासेषु तथोन्मादे ज्वरेषु विषमेषु च ॥ २८ ॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं मतम् ॥ २९ ॥
नकुलोलूकमार्ज्जार-गृध्रकीटाहिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद् भिषक् ॥ ३० ॥

कयस्था सूक्ष्मैला । शारदान् मुद्गान् कृष्णमुद्गान् । जलमृते जले मग्नो मृतवद् यो भवति । तल्लक्षणञ्चेदम् । विष्टब्धपायुमूर्द्धाक्षमाध्मातोदरमेहनम् । विद्यात् जलमृतं जन्तुं शीतपादकराननमिति । सर्व्वथा मरणे भेषजाभावात् ॥ २७ ॥

गङ्गाधरः—मुस्तमित्यादि । वयःस्थां हरीतकीं, कयस्थामामलकीं, त्रिफलासंज्ञया तयोर्लाभे पुनरुक्तया भागद्वयम् । शाद्वलं नवतृणम् । वास्तमेषार्षभैस्त्रिभिः मूत्रैः पिष्ट्वा वर्त्तिं कृत्वा तामपस्मारेऽञ्जनतया प्रयोजयेत् । एवं किलासादिषु च ॥ २८ ॥

गङ्गाधरः—पुष्योद्धृतमित्यादि । यदृच्छया मृतस्य शुनः पित्तं पुष्यानक्षत्रे उद्धृतमपस्मारघ्नमञ्जनं भिषक् प्रयोजयेत् । तदेव पुष्योद्धृतं शुनः पित्तं पुराणसर्पिषा युक्तं धूपनं परममपस्मारघ्नं मतमिति ॥ २९ ॥

गङ्गाधरः—नकुलेत्यादि । कीटः पाश्चात्यवृश्चिकः । नकुलादीनां यथासम्भवमूर्णैः पक्षैः पुरीषैश्च धूपनमपस्मारघ्नं भिषक् कारयेत् ॥ ३० ॥

भवन्ति । वर्त्तिर्नेत्राञ्जनवर्त्तिः । विषपीत इति पीतविषे । जलपानेन मृत इति जलमृतः, तस्य लक्षणम्—विष्टब्धपायुरूर्द्ध्वाक्षमाध्मातोदरमेहनम् । विद्याज्जलमृतं जन्तुं शीतपादकराननम् । इति ॥ २७ ॥

चक्रपाणिः—वास्तमेषर्षभैरिति छागमेषवृषभसम्भवैः ॥ २८ ॥

चक्रपाणिः—पुष्योद्धृतमिति पुष्यनक्षत्र गृहीतं, कीटो वृश्चिकः ॥ २९ । ३० ॥

आभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते।
स्रोतांसि चास्य शुध्यन्ति स्मृतिं संज्ञाञ्च बिन्दति ॥ ३१ ॥
यस्यानुबन्धस्त्वागन्तुर्दोषलिङ्गाधिकाकृतिः।
दृश्येत तस्य कार्य्यं स्यादागन्तून्मादभेषजम् ॥ ३२ ॥
अनन्तरमुवाचेदमग्निवेशः कृताञ्जलिः।
भगवन् पूर्व्वमुद्दिष्टः सूत्रस्थाने महागदः ॥
अतत्त्वाभिनिवेशो यस्तद्धेत्वाकृतिभेषजम्।
तत्र नोक्तं ततः श्रोतुमिच्छामि तदिहोच्यताम् ॥ ३३ ॥

गङ्गाधरः—अथोपसंहरति—आभिरित्यादि। तैराद्वतानामित्यादिभिरेतदन्तैर्वचनैरुक्ताभिः क्रियाभिः सिद्धाभिरप्रतिहताभिरपस्मारिणो मनः सम्प्रबुध्यते। स्रोतांसि च मनोवहानि शुध्यन्ति। स्मृतिं संज्ञाञ्चायं विन्दति ॥ ३१ ॥

गङ्गाधरः—यस्यापस्मारिणोऽनुबन्ध आगन्तुर्देवादिग्रहो वर्त्तते, तस्य दोषलिङ्गादुक्तवातादिलिङ्गादधिकाकृतिः दृश्येत, तदा तस्यागन्तून्मादस्य देवादिग्रहजोन्मादस्य भेषजं कार्य्यमिति। अपस्मारचिकित्सितं समाप्तमिति ॥ ३२ ॥

गङ्गाधरः—अथ मानसगदप्रसङ्गादत्राग्निवेशः पप्रच्छ। तद्यथा। अनन्तरमित्यादि। अपस्मारस्य सहेतुभेषजोपदेशानन्तरमग्निवेशः कृताञ्जलिः सन्निदं गुरुमुवाच। भगवन् गुरो! पूर्व्वं सूत्रस्थानेऽतत्त्वाभिनिवेशो नाम यो महागद

चक्रपाणिः—सम्प्रत्यपस्मारे सूत्रेणानुबन्धलिङ्गचिकित्सामाह यस्येत्यादि। दोषलिङ्गाधिकाकृतिरिति अपस्मारोक्तदोषलिङ्गेभ्योऽधिकागन्तून्मादसदृशी आकृतिर्यस्य स तथा। नागन्तुलिङ्गं दोषेषु भवति, न च लिङ्गं विना आगन्तुलिङ्गता सम्भवति; ततश्चागन्त्वपस्मारः पृथक् न भवति, किन्तु दोषजस्यानुबन्धरूपः। पश्चात्कालीनः स आगन्तुः। तेन चत्वार एवापस्मारा भवन्तीति यदुक्तं तस्यागन्तुरनुबन्धो भवत्येव कदाचिदिति। अनेनानुबन्धरूपतैव भूतापस्मारे दर्शिता, न तून्मादवत् स्वातन्त्र्येण कर्त्तव्यं भूतानाम्। अन्यत्राप्युक्तम्—अपस्मारो महाव्याधिस्तस्माद् दोषज एव तु। अन्ये तु भीमदत्तादयः स्वतन्त्राङ्गत्वमपस्मारलक्षणं चिकित्सानिर्देशार्थमन्यग्रन्थं वर्णयन्ति च। न संख्यानियमश्च दोषजापस्माराणामेवं भवति ॥ ३१। ३२ ॥

चक्रपाणिः—(अस्मिन् प्रदेशे सैन्धवाः काश्मीराः)। भगवन्नित्यनेनातत्त्वाभिनिवेशस्य लक्षणचिकित्साग्रन्थं पठन्ति। तच्चानार्षमिति वृद्धाः ॥ ३३ ॥

शुश्रूषवे वचः श्रुत्वा शिष्यायाह पुनर्व्वसुः ।
महागदं सौम्य शृणु सहेत्वाकृतिभेषजम् ॥ ३४ ॥
मलिनाहारशीलस्य वेगान् प्राप्तान् निगृह्णतः ।
शीतोष्णस्निग्धरूक्षाद्यैर्हेतुभिश्चातिसेवितैः ॥
हृदयं समुपास्रुत्य मनोबुद्धेर्महाशिराः ।
दोषाः संदूष्य तिष्ठन्ति रजोमोहावृतात्मनः ॥
रजस्तमोभ्यां वृद्धाभ्यां सत्त्वे मनसि संवृते ।
हृदये व्याकुले दोषैरथ मूढ़ाल्पचेतसः ॥
विषमां कुर्व्वते बुद्धिं नित्यानित्ये हिताहिते ।
अतत्त्वाभिनिवेशं तमाहुराप्ता महागदम् ॥ ३५ ॥
स्नेहस्वेदोपपन्नं तं संशोध्य वमनादिभिः ।
कृतसंसर्ज्जनं मेध्यरन्नपानरुपाचरेत् ॥ ३६ ॥

उद्दिष्टः, तस्यातत्त्वाभिनिवेशस्य हेत्वाकृतिभेषजं तत्र नोक्तम्, अतस्तदिहाध्याये तूच्यताम् ॥ ३३ ॥

गङ्गाधरः तत्रोत्तरमाह शुश्रूषव इत्यादि । तद्वचः श्रुत्वा पुनर्व्वसुरात्रेयः शुश्रूषवे शिष्यायाग्निवेशायाह । तद्यथा । महागदमित्यादि । हे सौम्य ! सहेत्वाकृतिभेषजं महागदमतत्त्वाभिनिवेशं शृणु ॥ ३४ ॥

गङ्गाधरः—मलिनाहारेत्यादि । मलिनं मलकारिणमाहारं सेवितुं शीलमस्य तस्य अविधार्य्यान मूत्रपुरीषादिवेगान् निगृह्णतः शीतोष्णस्निग्धरूक्षादिहेतुभिश्चातिसेवितैः कुपिता दोषा हृदयं समुपास्रुत्य मनोबुद्धेर्महासिरा हृदयमूला दश संदूष्य तिष्ठन्ति । वृद्धाभ्यां रजस्तमोभ्यां सत्त्वे मनसि संवृते रजोमोहावृतात्मनो रजस्तम आवृतमनसः पुंसो हृदये तस्मिन् दोषैर्व्याकुले मूढ़ाल्पचेतसस्तस्य हृदयं सन्दूष्य तिष्ठन्तो दोषा नित्यानित्ये हिताहिते विषये विषमां बुद्धिं कुर्व्वते । हितञ्चाहितं बुध्यतेऽहितञ्च हितं बुध्यते, नित्यमनित्यमनित्यं नित्यमित्येवं विषमबुद्धिस्तत्त्वाभिनिवेशप्रतिबन्धिनी बुद्धिर्भवति । तमतत्त्वाभिनिवेशं महागदमाप्ता आहुरिति ॥ ३५ ॥

गङ्गाधरः—अस्य चिकित्सामाह— स्नेहस्वेदेत्यादि । स्नेहक्रियास्वेदक्रियाभ्या-

ब्राह्मीस्वरसयुक्तं यत् पञ्चगव्यमुदाहृतम् ।
तत् सेव्यं शङ्खपुष्पी वा यच्च मेध्यं रसायनम् ॥ ३७ ॥
हृदयस्यानुकूलाश्च कथाः सिद्धार्थवादिनः ।
संयोजयेयुर्विज्ञानं धैर्य्यस्मृतिशमादिभिः ॥ ३८ ॥
प्रयोज्यं तैललशुनं पयसा वा शतावरी ।
ब्राह्मीरसः कुष्ठरसो वचा वा मधुसंयुता ॥ ३९ ॥
दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी महागदः ।
तस्माद् रसायनैरेनं प्रायशः समुपाचरेत् ॥ ४० ॥

मुपपन्नं तमतत्त्वाभिनिवेशिनं वमनादिभिः संशोध्य कृतसंसर्ज्जनं मण्डादिक्रमेण कृताहारसंसर्ज्जनं मेध्यमेधादितैरन्नपानैः पथ्यैरुपाचरेद् वैद्यः । ततो ब्राह्मीस्वरसयुक्तं यद् घृतमुदाहृतमिहाध्याये प्राक् ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च । पुराणमाज्यमुन्माद-यक्ष्मापस्मारपापनुदिति ; तथा पञ्चगव्यं स्वल्पपञ्चगव्यं महापञ्चगव्यञ्च यद् घृतमुदाहृतं तत् सेव्यमतत्त्वाभिनिवेशिना, शङ्खपुष्पी वा शङ्खपुष्पी स्वरसादिकल्पेन सेव्या । एवं यच्च मेध्यं मेधाकामीयं रसायनं तच्च सेव्यमिति ॥ ३६ । ३७ ॥

गङ्गाधरः—हृदयस्येत्यादि । सिद्धार्थवादिनः पण्डितजनस्य मनोऽनुकूलाः कथाः प्रबन्धकल्पनास्ताः संयोजयेयुः । एवं धैर्य्यादिभिर्विज्ञानं संयोजयेयुरिति ॥ ३८ ॥

गङ्गाधरः—प्रयोज्यमित्यादि । तिलतैलमिश्रितं लसुनकल्कमस्य भक्षयितुं प्रयोज्यम् । पयसा शतावरी वा प्रयोज्या । कल्कविधानेन ब्राह्मीस्वरसो वा प्रयोज्यः कुष्ठस्वरसो वा । तथा मधुसंयुता वचा वा प्रयोज्या ॥ ३९ ॥

गङ्गाधरः—दुश्चिकित्स्य इत्यादि । अपस्मारो व्याधिर्दुश्चिकित्स्यः । महागदोऽतत्त्वाभिनिवेशश्चिरकारी चिरानुबन्धी, तस्माद्रसायनैर्मेधाकामीयादिभिरेनमतत्त्वाभिनिवेशिनमपस्मारिणञ्च समुपाचरेत् ॥ ४० ॥

चक्रपाणिः—तैललशुनादयः पञ्च योगाः । ( पिबन् ) चिरकारी चिरानुबन्धी । चिकित्सां दर्शयति ॥३८—४०॥

जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तौ सदा ।
रक्षेदुन्मादिनञ्चैव सद्यः प्राणहरा हि ते ॥ ४१ ॥

तत्र श्लोकौ ।

हेतुः कुर्व्वन्त्यपस्मारं दोषाः प्रकुपिता यथा ।
सामान्यतः पृथक्त्वाच्च लिङ्गं तेषाञ्च भेषजम् ॥
अतत्त्वाभिनिवेशस्य प्रोवाच वदतां वरः * ।
प्रजाहितार्थं भगवानपस्मारचिकित्सिते ॥ ४२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने अपस्मारचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

गङ्गाधरः—उन्मादादिषु सद्यःप्राणहरणान्याह—जलाग्नीत्यादि । तावित्यपस्मारिणमतत्त्वाभिनिवेशिनञ्च । सद्यःप्राणहरा हि ते जलाग्न्यादय इति ॥ ४१ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोकाविति । हेतुरित्यादि । अस्मिन्नपस्मारचिकित्सितेऽध्याये हेतुरपस्मारस्य तथापस्मारं दोषा यथा कुर्व्वन्ति तत् प्रोवाच । तथा महागदस्य ॥ ४२ ॥

गङ्गाधरः—अग्नीत्यादिनाध्यायसमाप्तिवाक्यम् ॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे चिकित्सितस्थानजल्पेऽपस्मारचिकित्सिजल्पाख्या दशमी शाखा ॥ १० ॥

चक्रपाणिः—जलाग्नीत्यनेन जलादिसान्निध्ये यदि वेगो भवत्यपस्मारस्य तदा मरणमेव भवतीति दर्शयति ॥ ४१ ॥

चक्रपाणिः—संग्रहे कुर्व्वन्तीत्यादिना संप्राप्तिं गृह्णाति ॥ ४२ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायाम् अपस्मारचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

* महागदसमुत्थानं लिङ्गञ्चोवाच सौषधम् । इति पाठान्तरम् ।

# एकादशोऽध्यायः ।

## अथातः क्षतक्षीणचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

उदारकीर्त्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित् ।
क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम् ॥ २ ॥

धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
पततो विषमोच्चेभ्यो बलिभिः सह युध्यतः ॥
वृषं हयं वा धावन्तं दम्यं वान्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ॥

गङ्गाधरः—अथोद्देशानुक्रमादपस्मारानन्तरं क्षतक्षीणचिकित्सितमाह—अथात इत्यादि । पूर्व्ववत् सर्व्वं व्याख्येयमिति ॥ १ ॥

गङ्गाधरः—उदारकीर्त्तिरित्यादि । इदं वक्ष्यमाणं सनिदानं चिकित्सम् आह स्म ॥ २ ॥

गङ्गाधरः—धनुषेत्यादि । आयस्यत आयासं कुर्व्वतः । विषमादुच्चस्थानात् । युध्यत इति छान्दसत्वात् परस्मैपदम् । दम्यं वान्यं महिषादिकम् ।

चक्रपाणिः—अपस्माररोगेण विषमदेशपातादिभिर् उरःक्षतोऽपि भवति, ततः क्षतक्षीणो भवति, तत्सम्बन्धादपस्मारमनु क्षतक्षीणचिकित्सितमुच्यते । तत्र क्षतक्षीणरूपान् वक्ष्यमाणस्त्रीसेवनादिकरणशुक्रौजःक्षयाच्च जातो व्याधिः प्रधानमुरो विरुज्यते इत्यादिना वक्ष्यमाणलक्षणकः कारणे कार्य्योपचारादुरःक्षत इत्युच्यते । यदा क्षतक्षीण इति पाठस्तदापि क्षीणशब्देन शुक्रौजःक्षययुक्तः पुरुष उच्यते । तथा क्षीणे च पुरुषे क्षतं भवतीति हेतोः क्षतक्षीण इत्युच्यते । अन्ये तु क्षतश्च क्षयश्च इति क्षतक्षयमित्याहुस्तेन रोगद्वयमेतत् । तथोरोरुक्शोणितच्छर्द्दिरित्यादिना क्षतस्य च क्षीणस्य च लक्षणं करिष्यति, तस्मिन् पक्षेऽव्यक्तं लक्षणं तस्येति तथा साध्यो बलवतो नव इत्यादौ एकवचननिर्द्देशोऽनुपपन्नस्तेनैकस्यैव क्षतक्षीणस्य हेतुकृतं लक्षणद्वैविध्यम्, किंवा क्षतक्षयकारणयोः क्षतधातुक्षीणयोस्तद्द्विधलक्षणकारणाभिधानं पूर्व्वरूपावस्थायां व्याधिप्रतिक्रियार्थं ज्ञेयम् । ब्रह्मर्षिरित्यनेन देवर्षित्वं राजर्षित्वमात्रेयस्य निषेधति । चिकित्सार्थमिति प्रतिक्रियार्थम् । चिकित्सितमिति चिकित्साभिधायकग्रन्थम् ॥ १।२ ॥

चक्रपाणिः—चिकित्सा च निदानादिना ज्ञातस्यैव व्याधेर्भवति ; तेन क्षीणनिदानमेव तावदाह—धनुषेत्यादि । आयस्यत इति शरीरमायस्यतः । बलिभिरिति स्वापेक्षया बलाधिकैः ।

अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम्।
महानदीर्वा तरतो हयैर्वा सह धावतः॥
सहसोत्पततोऽत्यर्थं तूर्णञ्चापि प्रनृत्यतः।
तथान्यैः कर्म्मभिः क्रूरैर्भृशमभ्याहतस्य वा॥
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते।
स्त्रीषु चाति प्रसक्तस्य रुक्षाल्पप्रमिताशिनः॥ ३॥
उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विभज्यते।
प्रपीड्येते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते॥

शिला मल्लशिला, अश्मा तदन्यशिला। काष्ठं मल्लादिषु काष्ठमुद्गरादि गुरुतरम्। निर्घातो गुरु प्रहरणं गदादिः। तान् क्षिपतस्तैश्च परान् निघ्नतः। अत्युच्चैः अधीयानस्य सामवेदगानादिकं कुर्व्वतः। द्रुतं दूरं व्रजतः। महानदीर्बाहुभ्यां सन्तरतः। सहसा उत्पततो लम्फं कुर्व्वतः। तूर्णमाशु हठात् प्रनृत्यतः। तथान्यैर्मल्लयुद्धादौ क्रूरैः कर्म्मभिर्भृशमभ्याहतस्य सर्व्वत आहतस्य वक्षसि विक्षते विशेषेण क्षते सति बलवान् व्याधिः समुदीर्य्यते। स्त्रीष्वतिप्रसक्तस्य रुक्षाल्पप्रमिताशिनश्च बलवान् व्याधिः समुदीर्य्यते। इति द्विधा क्षतक्षीणम्॥ ३॥

गङ्गाधरः—कीदृशो व्याधिरित्यत आह उरो विरुज्यते। क्षते धनुषायस्यत इत्यादिभिर्हेतुभिरुरसि क्षते तथा स्त्रीष्वतिप्रसक्तस्य रुक्षाल्पाद्याशिनश्च क्षीणत्वे उरो वक्षो विरुज्यते भङ्गवद्वेदना वक्षसि भवति। भिद्यते विदीर्य्यत इव।

निगृह्णत इति वारयतः, निर्घातोऽस्त्रविशेषः किंवा निर्घातः शिलादीनां प्रेरणविशेषोऽतिबलसम्पादितः। अभ्याहतस्य परैरभिहतस्य। व्याधिरिति वक्ष्यमाणलक्षणः क्षतक्षयाख्यो व्याधिः। अन्ये तु व्याधिशब्देन वातमेवाहुः, दोषा अपि व्याधिशब्दं लभन्ते इति वचनात्। न चास्मिन् राजयक्ष्मरूपता शङ्कनीया, यतः उरःक्षतस्त्रिदोषजन्य एव भिन्नसंप्राप्तिश्च अयथाबलमारम्भैर्जन्तोरुरसि विक्षते वायुः प्रकुपितो दोषावुदीर्य्यौभौ विधावतीत्यादिनोक्ता, लक्षणानि भिन्नान्येव उरो विरुज्यते इत्यादिना वक्ष्यमाणलक्षणेभ्य उक्तानि। अत एवेहानयोर्भेदान् वक्ष्यति उपेक्षिते भवेदस्मिन् सम्बन्धो राजयक्ष्मण इति। स्त्रीषु चातिप्रसक्तस्य रुक्षाल्पप्रमिताशिनः बलवान् व्याधिः समुदीर्य्यत इति सम्बन्धः। प्रमिताशनमेकरसाभ्यासः किंवातीतकालभोजनम्॥ ३॥

क्रमाद् वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते।
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा * ॥
दुष्टः श्यावः सुदुर्गन्धिः पीतो विग्रथितो बहुः।
कासमानस्य चाभीक्ष्णं कफः सास्रः प्रवर्त्तते ॥
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात्।
अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतम् ॥ ४ ॥

विभज्यते द्विधा जायत इव। ततः पार्श्वं प्रपीड्यते। अङ्गं शुष्यति प्रवेपते च। क्रमाद्वीर्य्यं शक्तिर्हीयते। बलं सामर्थ्यम्। एवम्भूतस्य कासमानस्य चाभीक्ष्णं दुष्ट इत्येवमादिः सास्रः कफः प्रवर्त्तते। ईदृशः सन् स क्षतः पुरुषोऽत्यर्थं क्षीयते। तथा स्त्रीष्वतिप्रसक्तो रूक्षाल्पप्रमिताशी चेदृशः स शुक्रौजसोः क्षयादत्यर्थं क्षीयत इति। उरःक्षते प्रमिताशनात् क्षीणस्य स्त्रीष्वतिप्रसङ्गेन शुक्रक्षयक्षीणस्य सामान्यं लक्षणमिदम्।

अनयोः पूर्व्वरूपमाह—अव्यक्तमित्यादि। उरो विरुज्यत इत्यादुक्तं यल्लक्षणं तद् यदा तस्याव्यक्तमीषद्रूपं भवति तदव्यक्तमुरोविरुजनादिकं पूर्व्वरूपमिति स्मृतमिति। एतेन सर्व्वेषामेव व्याधीनामव्यक्तलक्षणमपि पूर्व्वरूपमुच्यते। तत् तु दोषाविशेषकृतत्वात् केचिदाहुर्विशिष्टपूर्व्वरूपं व्याधेरिति, तच्च न, प्रागुत्पत्तिलक्षणमेवेति न पृथग् लक्षणमुक्तम्, जायमाने व्याधौ भवतीति कथं पूर्व्वरूपं स्यादिति तज्जायमानव्याधे रूपमेव न पूर्व्वरूपं भविष्यद्व्याधिबोधकत्वाभावात्। तस्मादत्रायमर्थः—उरःक्षतक्षीणयोः पूर्व्वरूपं नास्त्यतिरिक्तं रूपात्। यदेव हि उरो विरुज्यत इत्यादिकं लक्षणं जायमानस्य जातस्य च तत्तदेव लक्षणं प्रागुत्पत्तेरव्यक्तं यज्जायते तत्प्रागुत्पत्तिलक्षणं तस्य पूर्व्वरूपं न त्वपरं पूर्व्वलक्षणमस्ति, व्याधेः स्वभावादिति ॥ ४ ॥

चक्रपाणिः—क्षतक्षयलक्षणमाह उर इत्यादिना। भिद्यत इति विदीर्य्यते। अग्निवधादित्यत्राग्निवधं विना व्याधिमहिम्ना विड्भेदो भवतीति दर्शयति। अन्ये तु विड्भेदोऽग्निवधस्तथेति पठन्ति। दुष्टो व्यापन्नः। क्षीयत इति धातुक्षयवान् भवति, न केवलं क्षतादेव क्षीयते किन्तु अतिस्त्रीसेवादिना कृताच्छुक्रौजःक्षयादपि क्षीयते इतरधातुक्षयवान् भवति। पूर्व्वरूपमाह—अव्यक्तमित्यल्पत्वेन, यथोक्तलक्षणतया सम्पूर्णम् ॥ ४ ॥

* विड्भेदोऽग्निवधादपि इति चक्रेण पठ्यते।

उरोरुक् शोणितच्छर्द्दिः कासो वैशेषिकः क्षते ।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः ॥ ५ ॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
परिसंवत्सरो याप्यः सर्व्वलिङ्गं विवर्ज्जयेत् ॥ ६ ॥
उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ।
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम् ॥

गङ्गाधरः—क्षतस्य क्षीणस्य च विशेषलक्षणमाह—उरोरुगित्यादि। क्षते धनुरायस्यत इत्यादिभिरुरसि क्षते उरोरुक् च शोणितच्छर्द्दिश्च स्यात्। शुक्रौजसोः क्षयात् क्षीणे कासमानस्य यथा कासशब्दः स्यात् ततः शब्दाद् विशिष्टशब्दवान् कासस्तत्रोरःक्षते भवति, तथा तस्य क्षीणस्य यथोरो विरुज्यते ततो वैशेषिकी उरोरुक् क्षते, तथा क्षीणस्य कासमानस्य यथा सास्रः कफः प्रवर्त्तते ततो वैशेषिकी शोणितच्छर्द्दिः क्षते भवतीति भेदः। इत्युरःक्षतस्य विशेषलक्षणम्। अथ क्षीणस्य लक्षणमाह—क्षीणे इत्यादि। स्त्रीष्वतिप्रसक्तस्य रुक्षाल्पप्रमिताशिनो जनस्य शुक्रौजसोः क्षयात् क्षीणे सति सरक्तमूत्रत्वं पार्श्वादिग्रहश्चेत्यधिकं भवतीति ॥ ५ ॥

गङ्गाधरः—अनयोः साध्यासाध्यलक्षणमाह—अल्पेत्यादि। अल्पलिङ्गस्य क्षतस्य क्षीणस्य च दीप्ताग्नेर्बलवतो जनस्य नवो नूतनो य उरःक्षतरोगः क्षीणरोगश्च स साध्यः। परिसंवत्सरः परिगतसंवत्सरः। सर्व्वलिङ्गं विवर्ज्जयेदिति। इत्युरःक्षतक्षीणरोगनिदानम् ॥ ६ ॥

गङ्गाधरः—अनयोश्चिकित्सितमाह—उरो मत्वेत्यादि। यदा उरसः क्षतं भवतीति विज्ञायते, तदा लाक्षां चर्णीकृत्य मधुसंयुतां पयसा पिबेत्।

चक्रपाणिः—उरोरुगित्यादिग्रन्थस्तु प्रायेण विकृतिः। कासो वैशेषिक इति विशिष्टः, स च विशेषो दुष्टः श्याव इत्यादिना प्रोक्तो ज्ञेयः। किंवा वैशेषिकोऽधिको ज्ञेयः। क्षीण इति शुक्रौजसी क्षीणे। अन्ये तु उरोरुगित्यादिनावस्थाद्वयं तस्य लक्षणद्वयमेतद्वर्णयन्ति। चिकित्साप्रवृत्त्यर्थं साध्यादिविभागमाह—अल्पेति। परिसंवत्सरो वर्षातीतः ॥ ५ । ६ ॥

चक्रपाणिः—ज्ञातरोगविशेषेण कर्त्तव्यां चिकित्सामाह—उरो मत्वेत्यादि। उरसः सद्यः

पार्श्ववस्तिरुजा चाल्प-पित्ताग्निस्तां सुरायुताम्।
भिन्नविट्कः समुस्तातिविषां पाठां सवत्सकाम्॥
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम्।
त्वक्क्षीरीं समितां क्षीरे पक्त्वा दीप्तानलः पिबेत्॥ ७॥
इक्ष्वालिकाविसग्रन्थि-पद्मकेशरचन्दनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती॥ ८॥
यवानां चूर्णमादाय क्षीरसिद्धं घृतप्लुतम्।
ज्वरे दाहे सिताक्षौद्र-सक्तून् वा पयसा पिबेत्॥ ९॥
कासी पर्व्वास्थिशूली च लिह्यात् सघृतमाक्षिकाः।
मधूकमधुकद्राक्षा-त्वक्क्षीरीपिप्पलीबलाः॥ १०॥

तदौषधे जीर्णे सति पयसा सशर्करमन्नमश्नात्। यदि तत्र पार्श्वरुग् भवेदल्पपित्ताग्निश्च चेत्, तदा तां लाक्षां सुरायुतां पिबेत्। यदि स भिन्नविट्कः स्यात् तदा समुस्तातिविषां सवत्सकवीजां पाठां क्वाथयित्वा पिबेत्। यदि क्षतोराः पुरुषो दीप्तानलो भवति, तदा लाक्षादिकानि सर्व्वाणि समांशानि क्षीरे यथायोग्ये चतुर्गुणे पक्त्वा पिबेत्॥ ७॥

गङ्गाधरः—इक्ष्वालिकेत्यादि। इक्ष्वालिका इक्षुबालिका, विसं मृणालं, ग्रन्थिः पिप्पलीमूलं, पद्मकेशरं, रक्तचन्दनं, पयसोऽष्टभागैकभागं सर्व्वं पिष्ट्वा चतुर्गुणजलं दत्त्वा पक्त्वा पूतं कृत्वा शीते मधु दत्त्वा क्षती क्षतवक्षःसन्धानार्थं पिबेत्॥ ८॥

गङ्गाधरः—यवानामित्यादि। यवानां चूर्णं चतुर्गुणक्षीरे सिद्धं घृतं यथायोग्यं दत्त्वा आप्लुत्य पिबेत्, ज्वरे दाहे च। अथवा सिताक्षौद्रयुक्तान् यवसक्तून् पयसा पिबेत्॥ ९॥

गङ्गाधरः—कासीत्यादि। उरःक्षती कासी पर्व्वास्थिशूली चेत्, तदा मधूकसारादिकं चूर्णीकृत्य घृतमधुभ्यां लिह्यात्॥ १०॥

क्षतं मत्वा लाक्षां पिबेदिति योजना। सशर्करमिति शर्करासहितमन्नम्। भिन्नविट्कः समुस्तातिविषां पाठां द्विवत्सकाम् इति ये पठन्ति ते वत्सकभागद्वयं ग्राहयन्ति। किंवा वत्सकद्वयमेव वत्सकशब्देन गृह्यते; तथाहि बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत्। श्यामा चारुणपुष्पी स्त्री फलवृन्तैस्तथाणुभिरिति कल्पे कुटजस्त्रीपुरुषविभाग उक्तः। सन्धानार्थमिति क्षतोरःसन्धानार्थम्। मधूकशब्देनेह मधूकपुष्पं ग्राह्यम्॥ ७—१०॥

एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा ।
सितामधुकखर्ज्जूर-मृद्वीकाश्च पलोन्मिताः ॥
संचूर्ण्य मधुना युक्त्या गुड़िकाः संप्रकल्पयेत् ।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्द्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ।
गुड़िका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥ ११ ॥

एलादिगुड़िका ।

रक्तेऽतिवृत्ते दक्षाण्डं यूषैस्तोयेन वा पिवेत् ।
चटकाण्डरसं वापि रक्तं वा छागजाङ्गलम् ॥ १२ ॥
चूर्णं पौनर्नवं रक्त-शालितण्डुलशर्करम् ।
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतम् ॥ १३ ॥

गङ्गाधरः—एलेत्यादि । प्रत्येकमेलादयस्त्रयोऽर्द्धाक्षाः, सितादीनां प्रत्येकं पलं, सञ्चूर्ण्य मधुना गुड़िकाकरणार्हेण गुड़िकां कृत्वा कर्षमात्रामेकैकां भक्षयेत् । ना नरः । क्षतक्षयं क्षतञ्च शुक्रौजसोः क्षयञ्च । एलादिगुड़िका ॥ ११ ॥

गङ्गाधरः—रक्ते इत्यादि । क्षतस्य क्षीणस्य वा रक्तेऽतिप्रवृत्ते मुद्गादियूषैः तोयेन वा दक्षाण्डं कुक्कुटाण्डं पिबेत् । एवं यूषैस्तोयैश्चटकाण्डरसं वा पिबेत् । अथवा छागं रक्तं जाङ्गलं हरिणादीनां रक्तं यूषैस्तोयैर्वा पिबेत् ॥ १२ ॥

गङ्गाधरः—चूर्णमित्यादि । पौनर्नवं चूर्णं रक्तशालितण्डुलचूर्णं शर्कराञ्च समांशं नीत्वा द्राक्षारसपयोघृतैर्यथार्हं सिद्धं पेयार्हं पक्वं पिबेत् ॥ १३ ॥

चक्रपाणिः—एलापत्रत्वच इति । गुड़िका युक्त्येति यावता मधुना गुटिका भवन्ति तावन्मात्रं मधु ज्ञेयम् ॥ ११ ॥

चक्रपाणिः—दक्षो गोष्ठकुक्कुटः । छागजाङ्गलमिति छागभवं वा जाङ्गलहरिणादिभवं वा ॥ १२ ॥

चक्रपाणिः—चूर्णं पौनर्नवमित्यादौ सिद्धमिति साधितम् । चूर्णसाधनं द्राक्षारसादिद्रवेण अग्निसंयोगात् चूर्णं बृंहणमात्रकं कर्त्तव्यम् । उक्तं हि जतूकर्णे—पुनर्नवारक्तशालीद्राक्षासिता-चूर्णं पयोघृतं सिद्धमिति ॥ १३ ॥

मधूकमधुकक्षीर-सिद्धं वा तण्डुलीयकम्।
मूढ़वातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ॥ १४॥
क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रस्त्वबलेऽनिले * ।
शृतक्षीररसेनाद्यात् सघृतक्षौद्रशर्करम् ॥ १५ ॥
शर्करा यवगोधूमौ जीवकर्षभकौ मधु ।
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षतो कृशः ॥ १६
क्रव्यादमांसनिर्य्यूहं घृतभृष्टं पिबेच्च सः ।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्द्धनम् ॥ १७ ॥

गङ्गाधरः—मधूकेत्यादि। मधूकपुष्पं यष्टिमधुकं क्वाथयित्वा तत्क्वाथसम क्षीरमेकीकृत्य तत्र तण्डुलीयकं पक्त्वा पिबेत्। मूढ़वातः अनिःसारिवायुः क्षतः क्षीणश्च अजाया मेदः ससैन्धवं सुरायां भृष्टं तप्तसुरायां प्रक्षिप्य पक्त्वा पिबेत् ॥ १४ ॥

गङ्गाधरः—क्षाम इत्यादि। क्षीणः शुक्रौजसोः क्षययुक्तः क्षतोरस्कश्च यदि क्षामः क्षीणोऽनिद्रश्च स्यादनिले त्वबले सति शृतेन क्षीरेण मांसरसेन सघृतक्षौद्रशर्करमन्नमद्यात् ॥ १५ ॥

गङ्गाधरः—शर्करेत्यादि। यवगोधूमौ जीवकर्षभकौ चूर्णीकृत्य शर्कराञ्च समांशं नीत्वा मधुना लिहेत्। ततोऽनु पक्वं दुग्धं पिबेत् ॥ १६ ॥

गङ्गाधरः—क्रव्यादित्यादि। क्रव्यादानां मांसादानां मृगपक्षिणां मांसनिर्य्यूहं मांसक्वाथं घृते भृष्टं शीतीकृत्य तत्र पिप्पलीचूर्णं मधु च प्रक्षिप्य स क्षतः क्षीणश्च कृशः पुरुषो मांसशोणितवर्द्धनं पिबेत् ॥ १७ ॥

चक्रपाणिः—मधूकेत्यादौ मधूकमधुकल्केन क्षीरेण समं साधितं तण्डुलीयकशाकम् ॥ १४ ॥

चक्रपाणिः—सबल इत्यादौ बलवत्यनले ॥ १५ । १६ ॥

चक्रपाणिः—क्रव्यादाः मांसभुजो मृगपक्षिणः ॥ १७ ॥

* अबलेऽनिले इत्यत्र सबलेऽनले इति चक्रः।

न्यग्रोधोडुम्बराश्वत्थ-प्लक्षशालप्रियङ्गुभिः ।
तालमस्तकजम्बूत्वक्-पियालैश्च सपद्मकैः ॥
साश्वकर्णैः शृतात् क्षीरादद्याज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः ॥ १८ ॥
यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयस्यापिप्पलीवांशी-कल्कसिद्धं क्षते हितम् ॥ १९ ॥
कोललाक्षारसे तद्वत् क्षीराष्टगुणसाधितम् ।
कल्कैः कट्वङ्गदार्व्वीत्वग्-वत्सकत्वक्फलैर्घृतम् ॥ २० ॥

गङ्गाधरः—न्यग्रोधेत्यादि । अश्वकर्णोऽपि शालभेदः पीतशालः असन इति लोके । न्यग्रोधादीनां समांशानां कल्कैः क्षीरादष्टमांशैश्चतुर्गुणजले शृतान्मथिताज्जातेन उत्थितेन सर्पिषा शाल्योदनमद्यात् । क्षतोरस्कः क्षीण-शुक्रश्च मानव इति ॥ १८ ॥

गङ्गाधरः—यष्ट्याह्वेत्यादि । यष्ट्याह्वं नागबला गोरक्षतण्डुला तयोः क्वाथे त्रिगुणे क्षीरसमं पुराणं घृतम् । पयस्या क्षीरकाकोली, वांशी वंशलोचना । पयस्या-पिप्पली-वंशलोचना-कल्कैः पादिकैः सिद्धं घृतं क्षते हितं प्रकरणात् क्षीणे च ॥ १९ ॥

गङ्गाधरः—कोलेत्यादि । कोलं शुष्कबदरफलं लाक्षा च, तयोः रसे क्वाथे क्षीरसमं घृतं पयस्यादिकल्कसिद्धं तद्वत् क्षते हितम् । क्षीराष्टगुण-साधितं कट्वङ्गादिभिः कल्कैः पादिकैः शृतं घृतं तद्वत् क्षते हितमिति । कट्वङ्गः श्योनाकः । दार्व्वीत्वक् च वत्सकत्वक् च वत्सकफलञ्चेति चतुर्भिः कल्कैरिति ॥ २० ॥

चक्रपाणिः—क्षीराज्जातेनेति क्षीरावस्थायामेव गृहीतेन ॥ १८ ॥

चक्रपाणिः—यष्ट्याह्वेत्यादौ क्वाथक्षीराभ्यां घृतात् चातुर्गुण्यम् । वांशी वंशलोचना ॥ १९ ॥

चक्रपाणिः—कोलेत्यादौ तद्वदिति क्षते हितम् । अत्र कोलरसस्य लाक्षारसस्य च चातुर्गुण्यम् क्षीरञ्चाष्टगुणं ददति । किंवा कोललाक्षारसयोः समत्वमेव क्षीरेण । अयञ्च न्यायोऽपस्माराध्याये निर्दिष्टः ॥ २० ॥

जीवकर्षभकौ वीरां जीवन्तीं नागरं शटीम्।
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके॥
पुनर्नवे द्वे मधुकमात्मगुप्तां शतावरीम्।
ऋद्धिं परूषकं भार्गीं मृद्वीकां बृहतीं तथा॥
शृङ्गाटकं तामलकीं पयस्यां पिप्पलीं बलाम्।
बदराक्षोडखर्ज्जूर-वातामाभिषुकाण्यपि॥
फलानि चैवमादीनि कल्कान् कुर्व्वीत कार्षिकान्।
धात्रीरसविदारीक्षु-च्छागमांसरसं पयः॥
दत्त्वा प्रस्थोन्मितान् भागान् घृतप्रस्थं विपाचयेत्।
प्रस्थार्द्ध मधुनः शीते शर्कराद्धतुलां तथा॥
पलार्द्धकञ्च मरिच-त्वगेलापत्रकेशरात्।
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां सदा नरः॥

गङ्गाधरः—जीवकेत्यादि। वीरां पृश्निपर्णीं, चतस्रः पर्णिनीरित्यत्रापि श्निपर्णी तेन भागद्वयमिति। द्वे मेदे, द्वे काकोल्यौ, द्वे निदिग्धिके बृहती कण्टकार्य्यौ, द्वे पुनर्नवे श्वेतरक्ते, तामलकीमिति भूम्यामलकीं, पयस्यामिह क्षीरविदारीं, आक्षोड इति आखरोट इति लोके। वाताम इति लोके वादाम इति ख्यातः। अभिषुकं फलविशेषः प्रसिद्धः। एवमादीनि वातपित्तहराणि फलानि यथालाभं कार्षिकान् कल्कान् कुर्य्यात्। धात्रीरसविदारीरसेक्षुरसच्छागमांसरसान् पयो गव्यं प्रत्येकं प्रस्थोन्मितान् भागान् दत्त्वा घृतप्रस्थं विपाचयेत्। वस्त्रपूतं कृत्वा तत्र घृते शर्कराया अर्द्धतुलां, मरिचादीनां पञ्चानां प्रत्येकं पलार्द्धकञ्च चूर्णितं विनीय प्रक्षिप्य मथित्वा स्थापयेत्; शीते भूते मधुनः प्रस्थार्द्धं द्वैगुण्यात् शरावद्वयं दत्त्वा मिश्रयित्वा

चक्रपाणिः—निदिग्धिके इति वचनेन बृहतीलता बृहतिका ग्राह्या। पयस्या विदारिगन्धा। अक्षोटवातामाभिषुकाणि तु औत्तरापथिकानि फलानि। एवमादीनि इति एवम्प्रकाराण्यन्यानि वातपित्तहराणि। धात्रीरसानाञ्च यद्यपि "पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुः" इति वचनेन प्रस्थमानत्वं सिद्धम्, तथापि एतत्परिभाषार्थं द्रव्यांशं दैर्घमानम्॥

अमृतप्राशमित्येतन्नराणाममृतं घृतम्।
सुधामृतरसप्रख्यं क्षीरमांसरसाशिनः॥
नष्टशुक्रक्षतक्षीण-दुर्ब्बलव्याधिपीड़ितान्।
स्त्रीप्रसक्तांस्तथावर्ण-स्वरहीनांश्च बृंहयेत्॥
कासहिक्काज्वरश्वास-दाहतृष्णास्रपित्तनुत्।
पुत्रदं छर्द्दिमूर्च्छाहृद्-योनिमूत्रामयापहम्॥ २१॥

अमृतप्राशं घृतम्।

श्वदंष्ट्रोशीरमञ्जिष्ठा-बलाकाश्मर्य्यकत्तृणम्।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा॥
पलिकान् साधयेत् तेषां रसे क्षीरचतुर्गुणे।
कल्कैः स्वगुप्ताजीवन्ती-मेदर्षभकजीवकैः॥
शतवीर्य्याद्धिमृद्वीका-शर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद् वात-पित्तहृद्द्रवशूलनुत्॥
मूत्रकृच्छ्रप्रमेहार्शः-कासशोषक्षयापहः।
धनुःस्त्रीमद्यभाराध्व-खिन्नानां बलमांसदः॥ २२॥

श्वदंष्ट्राद्यं घृतम्।

तस्मादौषधान्मात्रामग्न्याद्यपेक्षया नरः सदा लिह्यात्। क्षीरमांसरसाभ्यामन्नमश्नीयादिति। शेषं सर्व्वमाशीः। अमृतप्राशघृतम्॥ २१॥

गङ्गाधरः—श्वदंष्ट्रेत्यादि। काश्मर्य्यं गाम्भारीफलं दर्भस्य उल्लाकस्य मूलम्। श्वदंष्ट्रादीनां स्थिरान्तानामेकादशानां प्रत्येकं पलिकान् एकादश द्रव्याण्यष्टगुणे जले साधयेत् तेषां चतुर्भागावशेषे रसे पादोनशरावत्रये चतुर्गुणे क्षीरे स्वगुप्तादिबिसान्तैरेकादशभिः कल्कैर्घृतात् पादिकैर्घृतप्रस्थः सिद्धः पक्वः। श्वदंष्ट्रादिघृतम्॥ २२॥

[...]षम्। पलार्द्धकल्कमिह मरिचादीनां मिलितानां समाहारप्रधानत्वान्निर्द्देशस्य। वृद्धाबलवतीन्यायात् [...] प्रत्येकमेव पलार्द्धकल्कं भवति। सुधा भोगिभोज्या। अमृतन्तु देवभोज्यम्॥ २१॥

चक्रपाणिः—श्वदंष्ट्रेत्यादौ क्वाथ्यद्रव्यपरिमाणानुसारेण पादोनप्रस्थत्रयं जलं दत्त्वा चतुर्भागाव[...]शेषेण द्वाविंशकाथपलानि भवन्ति। क्षीरश्चात्र चतुर्गुणं घृतात् किंवा काथचतुर्गुणं क्षीरम्॥२२॥

मधूकाष्टपलं द्राक्षा-प्रस्थक्काथे पचेद् घृतम् ।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥
पृथगष्टपलं क्षौद्र-शर्कराभ्यां विमिश्रयेत् ।
समसक्तु क्षतक्षीण-रक्तगुल्मे च तद्धितम् ॥ २३ ॥

सक्तुप्रयोगः ।

धात्रीफलविदारीक्षु-जीवनीयरसैर्घृतम् ।
अजागोपयसोश्चैव सप्त प्रस्थान् पचेद् भिषक् ॥
सिद्धशीते सिताक्षौद्रं द्विप्रस्थं विनयेच्च तत् ।
यक्ष्मापस्मारपित्तासृक्-कासमेहक्षयापहम् ॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।
घृतन्तु पित्तेऽभ्यधिके लिह्याद् वातेऽधिके पिबेत् ॥

गङ्गाधरः—मधूकेत्यादि। मधूकपुष्पस्याष्टपलं द्राक्षायाः प्रस्थः षोड़शपलं जलेऽष्टगुणे चतुर्व्विंशतिशरावे पक्त्वा चतुर्थभागे षट्शरावेऽवशिष्टे क्वाथे घृतं प्रस्थं पिप्पल्यष्टपले कल्के पचेत्। सिद्धे वस्त्रपूते शीते भूते क्षौद्रमष्टपलं शर्करायाश्चाष्टपलं तत्र प्रक्षिप्य समञ्च घृतस्य तुल्यं चतुःशरावं यवसक्तुं मिश्रयेत्। सक्तुप्रयोगः ॥ २३ ॥

गङ्गाधरः—धात्रीफलेत्यादि। धात्रीफलरस एकप्रस्थः विदारीरस एकप्रस्थः इक्षुरस एकप्रस्थः जीवनीयदशकस्य क्वाथ एकप्रस्थः घृतमेकं प्रस्थम् अजापय एकप्रस्थं गोपय एकं प्रस्थम्। इति सप्त प्रस्थान् पचेत् अकल्कमिदं घृतं पक्कं सिद्धं शीतं यदा भवति तदा सितायाः एकं प्रस्थं षोड़शपलं क्षौद्रमेकप्रस्थं चतुःशरावं तत्र प्रक्षिप्य विनयेत्। धात्रीघृतम्। दोषभेदे प्रोक्तघृतप्रयोगं नियमयति—घृतन्त्वित्यादि। उरःक्षते क्षीणे चाभ्यधिके पित्ते निरुक्तं घृतन्तु लिह्यात्।

चक्रपाणिः—मधूकेत्यादावपि क्वाथ्यमानानुसारेण क्वाथस्य सार्द्धप्रस्थो भवति। समशक्तु इति समशक्तु घृतम् ॥ २३ ॥

चक्रपाणिः—घृतन्त्वित्यादिनेह योग्यानि पानानि शर्करादियोगाद् घृतायुक्तानि, तानि पित्ते लेह्यतया कर्त्तव्यानि। यानि तु शर्करादिरहितत्वेन पानयोग्यानि तानि वाते कर्त्तव्यानीति दर्शयति। किंवा स्त्यानावस्थायोगीनि अपयोगाल्लेह्यतया पित्ते प्रयोक्तव्यानि तान्येव।

लीढ़ं निर्व्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम्।
आक्रामत्यनिलं पीतमुष्माणं निरुणद्धि च ॥
क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु।
त्वक्क्षीरीपिप्पलीलाज-चूर्णैः स्त्यानानि योजयेत् ॥ २४ ॥
सर्पिर्गुड़ान् समध्वंशान् जग्ध्वा चानु पयः पिवेत्।
रेतो वीर्य्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ २५ ॥

(१) सर्पिर्गुड़ः

बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्टांशिका अपि ॥

वातऽधिके पिवेत्। कस्मात्? लीढ़ं घृतमल्पत्वात् पित्तं निर्व्वापयेदनलञ्च न हन्ति। पीतं पुनरनिलमाक्रामति उष्माणञ्च निरुणद्धि। तस्मात् पित्तेऽधिके लिह्याद्वातेऽधिके पिवेत्। कथ द्रवं घृतं लिहेदित्यत आह—क्षामेत्यादि। क्षामादीनां पित्ते घृतान्येतानि लेहार्थं त्वक्क्षीरीपिप्पलीचूर्णलाजचूर्णैर्यथार्हं स्त्यानानि कृत्वा योजयेत् ॥ २४ ॥

गङ्गाधरः—अथ वक्ष्यमाणसर्पिर्गुड़कानां भक्षणविधिमाह। समध्वंशान यत्र सर्पिर्गुड़े मधु नोक्तं तत्र चतुर्थांशं मधु दत्त्वा सर्पिर्गुड़कान् जग्ध्वा पयोऽनुपिवेत्। तथाभक्षणे रेतोवीर्य्याद्याशीः। उक्तसक्तप्रयोगमनेन प्रकारेण योजयेद् भक्ष्यत्वात् ॥ २५ ॥

गङ्गाधरः—सर्पिर्गुड़ानाह—बलेत्यादि। ह्रस्वा पञ्चमूली शालपर्ण्यादिपञ्चमूली, क्षीरिणो वृक्षाः पञ्च वटोडुम्बराश्वत्थप्लक्षकपीतनास्तेषामग्रे स्थिताः शुङ्गाः

विलीनावस्थामापन्नानि तानि वायोः कर्त्तव्यानि। घृतलेहस्य घृतपानस्य च पृथक् फलमाह—निर्व्वापयेदित्यादि। अल्पत्वादिति लेहत्वेनैवाल्पत्वात्, लेहस्य कर्षमानत्वेनोक्तत्वात्। आक्रामतीति जयति। निरुणद्धीति न प्रतिहन्ति। न रुणद्धीति केचित् पठन्ति। क्षामेत्यादौ क्षामः क्लान्तदेहः, क्षीणो दुर्बलः, कृशो हीनमांसः। त्वक्क्षीर्य्यादीनां तावन्मानं ज्ञेयं यावता घृतस्य स्त्यानत्वम् ॥ २४ ॥

चक्रपाणिः—समध्वंशानित्यनेन मधुनः त्वक्क्षीर्य्यादिसमानतामाह ॥ २५ ॥

चक्रपाणिः—बलामित्यादि। क्षीरिवृक्षा वटोडुम्बराश्वत्थप्लक्षकपीतनाः। उक्तं शालाक्ये "उडुम्बरो वटोऽश्वत्थो मधुकः प्लक्ष एव च। पञ्चैते क्षीरिणो वृक्षा अस्मिन् तन्त्रे प्रकीर्त्तिताः" इत्युक्तम्।

एषां कषाये द्विक्षीरे विदार्य्याजरसांशिके।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढ़कम्।
सितोपलानि पूते तु शीते द्वात्रिंशदावपेत्॥
गोधूमपिप्पलीवांशी-चूर्णं शृङ्गाटकस्य च।
समाक्षिकं कौड़विकं तत् सर्व्वं खजमूर्च्छितम्।
स्त्यानं सर्पिर्गुड़ान् कृत्वा भूर्ज्जपत्रेण वेष्टयेत्॥
तान् जग्ध्वा पलिकान् क्षीरं मद्यञ्चानुपिबेत् कफे।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्षिते॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः॥ २६॥

(२) सर्पिर्गुड़ः।

एषां त्रयोदशानां प्रत्येकं मुष्ट्यंशिकाः पलांशिकाः। एषामष्टगुणे त्रयोदशशरावे जले पक्त्वा पादशेषे सपादशरावत्रये कषाये द्विगुणक्षीरे विदारीरसे घृतसमे तथा आजमांसरसे घृतसमांशे अक्षमात्रैः प्रत्येकं जीवनीयैः कल्कैर्घृताढ़कं षोड़शशरावं पचेत्। पक्वे पूते तत्र घृते शीते च सितोपलानि द्वात्रिंशत् पलान्यावपेत्। तथा गोधूमचूर्णं पिप्पलीचूर्णं वंशलोचनाचूर्णं शृङ्गाटकस्य चूर्णं प्रत्येकं कौड़विकं मधु च कौड़विकं दत्त्वा खजेन दर्व्वीदण्डेन मूर्च्छयेदालोड्य मिश्रयेत्। ततः स्त्यानं सर्पिर्गुड़कान् कृत्वा भूर्ज्जपत्रेण वेष्टयेत्। तान् गुड़कान् यथाबलं जग्ध्वा क्षीरमनुपिबेत्। कफे मद्यमनुपिबेत्। शोषे इत्याद्याशीः॥ २६॥ सर्पिर्गुड़ः (२)

मुष्ट्यंशिका इति पलमानाः। अत्र च बलादीनां त्रयोदशपलेषु क्वाथ इति षड्विंशतिः क्वाथपलानि। एतत्कषायाद् द्विगुणं क्षीरम्। विदारीरसश्छागमांसरसश्च कषायसमः। एवं त्रिंशत्पलाधिकं द्रवपलशतमिह घृताढ़के पक्तव्ये भवति। अन्ये तु क्वाथ्यात् षोड़शगुण-जलदानपरिभाषया साधितं क्वाथे द्विपञ्चाशत् क्वाथपलान्याहुः। एतदनुसारेण क्षीरादिदानमप्यधिकं भवतीत्याहुः। किन्तु क्वाथ्यत्रयोदशपलेऽत्र पानीयं तथा पक्तव्यं यथा घृतसमः क्वाथो भवति; क्वाथो ह्यत्र चतुर्द्रवसाध्ये घृतसम एव भवति। एतत्क्वाथः द्विगुणं क्षीरं समश्च विदारीरसः छागमांसरसश्च देयः। किंवा विदार्य्याजमांसयोर्मिलित्वा द्वादशांशमयो देयः।

त्वक्क्षीरीश्रावणीद्राक्षा-मूर्व्वर्षभकजीवकैः।
वीरर्द्धिक्षीरकाकोली-वृहतीकपिकच्छुभिः॥
खर्ज्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः।
धात्रीविदारीक्षुरस-प्रस्थैः प्रस्थं घृतात् पचेत्॥
शर्कराद्धतुलां शीते क्षौद्रार्द्धप्रस्थमेव च।
दत्त्वा सर्पिर्गुड़ान् कृत्वा कासहिक्काज्वरापहान्॥
यक्ष्माणं तमकश्वासं रक्तपित्तं हलीमकम्।
शुक्रनिद्राक्षयं कार्श्यं हन्युस्तृष्णां सकामलाम्॥ २७॥

(३) सर्पिर्गुड़ः।

नवमामलकं द्राक्षा-*-मात्मगुप्तां शतावरीम्।
पुनर्नवां विदारीञ्च समांशां पिप्पलीमपि॥

गङ्गाधरः—त्वक्क्षीरीत्यादि। त्वक्क्षीरी वंशलोचना, श्रावणी मुण्डेरी, मूर्व्वामूलं, वीरा पृश्निपर्णी, कपिकच्छुर्वानरीवीजम्, खर्ज्जूरफलं, मेदा महामेदा च। बहुवचनं मानतो बहुत्वात्। एतैस्त्रयोदशभिः प्रत्येकं पलोन्मितैस्त्रयोदशपलैः क्षीरेण श्लक्ष्णपिष्टैः कल्कैर्धात्रीरसप्रस्थेन विदारीरसप्रस्थेन इक्षुरसप्रस्थेन घृतात् प्रस्थं पचेत् यथा निःशेषद्रवं न स्यात्, सद्रवे लेहवद्भावे शर्करातुलार्द्धं दत्त्वावतारयेत्। शीते क्षौद्रार्द्धप्रस्थं षोड़शपलं दत्त्वालोड्य मिश्रयित्वा गुड़काः कार्य्याः। भक्षितास्ते यक्ष्मादिकं हन्युः॥ २७॥ अपरसर्पिर्गुड़ः (२)

गङ्गाधरः—नवमित्यादि। नवमशुष्कमामलकफलम् आत्मगुप्तायाः फलम्।

उक्तं हि जतूकर्णे—वृक्षीरं पञ्चमूलं बलां विदारीं वटादिशुङ्गांश्च। निष्काथ्य द्विक्षीरे छागविदावीरसे च समे। जीवनकल्कैः पक्त्वा घृताढ़कमित्यादि। अत्र हि क्वाथ्यद्रव्यमानम् अनियतमिति विशेषः। क्वाथस्तु स्नेहसम एव। खजो मन्थानदण्डः पञ्चाङ्गुलो वा दृष्टः। भूर्ज्जपत्रवेष्टनञ्च शक्तयुत्कर्षणार्थम्॥ २६॥

चक्रपाणिः—त्वक्क्षीरीत्यादौ श्रावणी तुण्डिकेरी च विदारीकन्दः॥ २७॥

* नवमामलकं द्राक्षाम् इत्यत्र द्राक्षां नवामामलकीम् इति चक्रसम्मतः पाठः।

पृथग् दशपलान् भागान् पलान्यष्टौ च नागरात्।
यष्ट्याह्वसौवर्च्चलयोर्द्विपलं मरिचस्य च॥
क्षीरतैलघृतानाञ्च आढ़के शर्कराशते।
क्वथिते तानि चूर्णानि दत्त्वा विल्वसमान् गुड़ान्॥
कुर्य्यात् तान् भक्षयेत् क्षीणः क्षतशुष्कश्च मानवः।
तेन सद्यो रसादीनां वृद्ध्या पुष्टिं स विन्दति॥ २८॥
गोक्षीराद् द्व्याढ़कं सर्पिः-प्रस्थमिक्षुरसाढ़कम्।
विदारीस्वरसात् प्रस्थं रसात् प्रस्थञ्च तत्तिरात्॥
दद्यात् सिध्यति तस्मिंश्च पिष्टानिक्षुरसैरिमान्।
मधूकपुष्पकुड़वं पियालकुड़वं तथा॥

नवामलकादीनां सप्तानां प्रत्येकं चूर्ण समांशं मिलित्वा दशपलं नागरचूर्णादष्टपलं यष्टीमधुचूर्णस्य द्विपलं सौवर्च्चललवणस्य च द्विपलं मरिचचूर्णस्य च द्विपलम्। एतानि चूर्णानि कृत्वा स्थापयेत्। गव्यक्षीरस्याढ़कं षोड़शशरावं तिलतैलस्य षोड़शशरावं गव्यपुराणघृतस्य षोड़शशरावं शर्करापलशतञ्चैकत्र पचेत्। तस्मिन् क्षीरक्षये तन्तुलीभूते क्वथिते निष्पन्नपाके सति तानि नवामलकादिचूर्णानि दत्त्वालोड्यावतारयेत्। शीते मधु च तैलघृतयोः पादिकमष्टशरावं दत्त्वा विल्वमात्रान् पलिकान् गुड़कान् कुर्य्यात्। सर्पिर्गुड़ान् समभ्यंशान् जग्ध्वा चानु पयः पिबेदित्युक्तेः। तांश्च भक्षयेदनु च पयः पिबेत्॥ २८॥ अपरसर्पिर्गुड़ः (३)

गङ्गाधरः—गोक्षीरादित्यादि। गोक्षीरात् द्व्याढ़कं द्वात्रिंशच्छरावम्। इक्षुरसादाढ़कं षोड़शशरावम्। विदारीस्वरसात् प्रस्थं चतुःशरावम्। तत्तिरमांसरसात् प्रस्थं चतुःशरावम्। पुराणगव्यसर्पिः प्रस्थमेकत्र पचेत्। सिध्यति पाकेन क्षीरादिद्रवक्षये वक्ष्यमाणचूर्णमिश्रार्हकिञ्चिद्द्रवसहितघृतावशेषे तस्मिन्

चक्रपाणिः—द्राक्षामित्यादौ यष्ट्याह्वसौवर्च्चलयोर्मिलित्वा द्विपलम्। मरिचस्य पलमिति शेषः। उक्तं हि जतूकर्णे—घृततैलपयस्त्र्याढके सितातुलाञ्च प्रपच्य द्राक्षाविदारीवृश्चीरशतावरीकृष्णाशुण्ठीबलाधात्रीश्च दशपलिकाः प्रपचेत्। यष्ट्याह्वारुचकञ्च पलिकमित्यादि। क्वथित इति भाषया क्षीणे एव क्षीरे चूर्णप्रक्षेपं दर्शयति॥ २८॥

कुड़वार्द्धं तुगाक्षीर्य्याः खर्ज्जूराणाञ्च विंशतिम् ।
पृथग् विभीतकानाञ्च पिप्पल्याश्च चतुर्थिकाम् ॥
त्रिंशत्पलानि खण्डाच्च मधुकात् कर्षमेव च ।
तथार्द्धपलिकान्यत्र जीवनीयानि दापयेत् ॥
सिद्धेऽस्मिन् कुड़वं क्षौद्राच्छीते दत्त्वा च मोदकान् ।
कारयेन्मरिचाजाजी-पलचूर्णावचूर्णितान् ॥
वातासृक्पित्तरोगेषु क्षतकासे क्षयेषु च ।
शुष्यतां क्षीणशुक्राणां रक्ते चोरसि संस्थिते ॥
कृशदुर्ब्बलवृद्धानां पुष्टिवर्णबलार्थिनाम् ।
योनिदोषकृतस्राव-हतानाञ्चापि योषिताम् ॥
गर्भार्थिनीनां गर्भश्च स्रवेद् यासां म्रियेत वा ।
धन्या वल्या हितास्तासां शुक्रशोणितवर्द्धनाः ॥ २९ ॥

सर्पिर्मोदकः ॥

इक्षुरसेन पिष्ट्वा पुनरिमान् मधूकपुष्पादीन् दद्यात् । तथा जीवनीयानि दश प्रत्येकम् अर्द्धपलिकानि चूर्णयित्वा दापयेत् । सिद्धे पाकेऽवतार्य्य शीते सति क्षौद्रात् कुड़वं दत्त्वा मोदकान् अक्षमितान् कारयेत् । कृत्वा तान् मोदकान् मरिचचूर्णजीरकचूर्णयोः पलेनावचूर्णितान् बहिर्म्रक्षितान् कारयेदिति । तेषामेकैकं जग्ध्वा पयोऽनुपिबेत् । मधूकपुष्पचूर्णं कुड़वं चतुःपलम् । तथा पियालफलचूर्णं कुड़वं चतुःपलम् । तुगाक्षीर्य्या द्वे पले । खर्ज्जूराणां गुड़कान् विंशतिम् । विभीतकानां गुड़कांश्च विंशतिम् । पिप्पलीचूर्णस्य चतुर्थिकां पलमेकम् । खण्डात् त्रिंशत्पलानि । यष्टीमधुकचूर्णात् कर्षमेकं दद्यादिति पूर्व्वेणान्वयः । वातासृगित्याद्याशीः ॥ २९ ॥　　सर्पिर्मोदकः ।

**चक्रपाणिः**—गोक्षीरादित्यादौ गोक्षीरमानं कारणतयोच्यते न घृतपाकः । तथाहि सति प्रक्षेप्य-चूर्णेन मोदका न भवेयुः । चतुर्थिका पलम् ॥ २९ ॥

वस्तिदेशे विकुर्व्वाणे स्त्रीप्रसक्तस्य मारुते।
वातघ्नान् वृंहणान् वृष्यान् योगांस्तस्य प्रयोजयेत् ॥ ३० ॥
शर्करापिप्पलीचूर्णः सर्पिषा माक्षिकेण च।
संयुक्तं वा शृतं क्षीरं पिबेत् कासज्वरापहम् ॥ ३१ ॥
फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे शृतम्।
स्त्रीषु क्षीणः पिबेद् यूषं जीवनं वृंहणं परम् ॥ ३२ ॥
सक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम्।
यावन्न सात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः ॥ ३३ ॥
जीवनीयोपसिद्धं वा जाङ्गलं घृतभर्ज्जितम्।
रसं प्रयोजयेत् क्षीणे व्यञ्जनार्थं सशर्करम् ॥

गङ्गाधरः—स्त्रीप्रसक्तक्षीणस्य विशेषचिकित्सितमाह—वस्तिदेश इत्यादि। स्त्रीप्रसक्तस्य मारुते वस्तिदेशे विकुर्व्वाणे विकृतिं प्राप्नुवति तस्य वातघ्नादीन् योगान् प्रयोजयेत् ॥ ३० ॥

गङ्गाधरः—तान् योगानाह—शर्करेत्यादि। शृतं केवलं दुग्धमद्धावर्त्तितं कृत्वा तत्रानुरूपं पिप्पलीचूर्णं शर्कराञ्च संयोज्य पिबेत्। सर्पिषा संयुक्तं वा तत् क्षीरं, माक्षिकेण संयुक्तं वा पिबेत् ॥ ३१ ॥

गङ्गाधरः—फलाम्लमित्यादि। शुष्कवदरामलकाद्यम्लफलम्। विदारीरसेक्षुरसयोः समानांशयोः शृतं पक्वं मुद्गादियूषं शुष्कवदरादीनां फलाम्लं कृत्वा तद्घृते सम्भृष्टं स्त्रीषु क्षीणः पिबेत् ॥ ३२ ॥

गङ्गाधरः—सक्तूनामित्यादि। वस्त्रपूतानां यवसक्तूनां जलनालोड़ितो मन्थः, तं क्षौद्रघृतान्वितं यावत् क्षतक्षीणः न सात्म्यः स्यान्न च दीप्ताग्निः स्यात् तावत् पिबेत्। सात्म्ये दीप्ते चाग्नौ त्यजेत् ॥ ३३ ॥

गङ्गाधरः—जीवनीयेत्यादि। जीवनीयदशककाथे जाङ्गलमांसं पक्त्वा सिद्धं रसं घृते भर्ज्जितं सम्भृष्टं सशर्करं क्षीणेऽन्वक् तान् व्यञ्जनार्थं प्रयोजयेत्।

चक्रपाणिः—विकुर्व्वाण इति शूलादिविकारं कुर्व्वाणे। शर्करेत्यादौ प्रक्षेपन्यायेन क्षीरे

गोमहिष्यश्वनागाजैः क्षीरैर्मांसै रसैस्तथा।
यथाग्नि भोजयेद् यूषैः फलाम्लघृतसंस्कृतैः ॥ ३४ ॥
दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचनः।
यक्ष्मिणां विहितो ग्राही भिन्ने शकृति चेष्यते ॥ ३५ ॥
पलिकं सैन्धवं शुण्ठी द्वे च सौवर्च्चलात् पले।
कुडवांशानि वृक्षाम्लं दाड़िमं पत्रमर्ज्जकात् ॥
एकैकं मरिचाजाज्यो धान्यकाद् द्वे चतुर्थिके।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥
कृत्वा चूर्णं ततो मात्रामन्नपाने प्रयोजयेत्।
रोचनं दीपनं बल्यं पार्श्वार्त्तिश्वासकासनुत् ॥ ३६ ॥

सैन्धवादिचूर्णम्।

गोमहिष्यश्वेत्यादि। क्षीणे क्षीणसञ्ज्ञात् क्षीणेऽबले गवादीनामन्यतमक्षीरैरन्यतममांसैर्मांसरसैर्वा फलाम्लघृतसंस्कृतमुद्गादियूषैर्वा क्षीणरोगिणं भोजयेत् ॥ ३४ ॥

गङ्गाधरः— दीप्तेऽग्नावित्यादि। दीप्तेऽग्नौ त्वेष जाङ्गलरसादिभिर्भोजनविधिरुक्तः स्यान्मन्देऽग्नौ तु दीपनपाचनो विधिः। भिन्ने शकृति यो यक्ष्मिणां ग्राही योगो विहितः स एव क्षीणरोगिणो भिन्ने शकृतीष्यते ॥ ३५ ॥

गङ्गाधरः— दीपनपाचनयोगानाह पलिकमित्यादि। सैन्धवं पलिकं, शुण्ठी च पलिका, सौवर्च्चलात् द्वे च पले, वृक्षाम्लं तिन्तिड़ीकं पक्वं दाड़िमत्वक् अर्ज्जकात् तुलस्याः पत्रमित्येतानि प्रत्येकं कुडवांशानि, मरिचाजाज्योरेककं पलं, धान्यकात् द्वे चतुर्थिके द्वे पले, शर्कराया द्वादश पलानि प्रदापयेत्। सर्व्वमिदं चूर्णं कृत्वाऽन्नसाधने पाने च ततो मात्रां प्रयोजयेत् ॥३६॥

सैन्धवादिचूर्णम्।

शर्करादिप्रक्षेपः। वस्त्रपूतानामिति वस्त्रान्तरालपतितानाम्। मन्देऽग्नौ यक्ष्मिणां यो (दीपनपाचनः) विहितः, भिन्ने शकृति च यो ग्राही स विधिरिष्यत इति ज्ञेयम् ॥ ३०—३५ ॥

चक्रपाणिः—पलिकमिति पलमानम् ॥ ३६ ॥

एका षोड़शिका धान्याद् द्वे ऽजाज्यजमोदयोः।
ताभ्यां दाड़िमवृक्षाम्लं द्विर्द्विः सौवर्च्चलात् पलम्॥
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्च पलानि च।
तच्चूर्णं षोड़शपले शर्कराया विमिश्रयेत्॥
षाड़वोऽयं प्रदेयः स्यादन्नपानेषु पूर्व्ववत्।
मन्दानले शकृद्भेदे यक्ष्मिणामग्निवर्द्धनः॥ ३७॥

षाड़वः॥

पिबेन्नागबलामूलमर्द्धकर्षविवर्द्धनम्।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक्॥
एष प्रयोगः पुष्ट्यायुर्बलारोग्यकरः परः।
मण्डूकपर्ण्याः कल्कोऽयं शुण्ठीमधुकयोस्तथा॥ ३८॥

गङ्गाधरः—एकेत्यादि। षोड़शिका पलं धान्यात्। अजाज्यजमोदयोः द्वे द्वे षोड़शिके द्वे द्वे पले, दाड़िमवृक्षाम्लं ताभ्यां षोड़शिकाभ्यां द्विर्द्विरिति दाड़िमत्वक्चूर्णं चतुःपलं, वृक्षाम्लञ्च चतुःपलं, सौवर्च्चलादेकं पलम्, शुण्ठ्याः कर्षं, दधित्थस्य मध्यस्थशस्यं पञ्चपलं, शर्करायाः षोड़शपलम्। इत्येतत् सर्व्वं विमिश्रयेत्। अयं षाड़वो नाम क्षीणे भिन्ने शकृति दीपनपाचनोऽन्नपाने पूर्व्ववत् प्रदेयः स्यादिति॥ ३७॥ सैन्धवादिषाड़वः।

गङ्गाधरः—स्त्रीप्रसङ्गक्षीणस्य योगान्तरमाह—पिबेदित्यादि। नागबला गोरक्षतण्डुला तस्या मूलत्वक्चूर्णमर्द्धकर्षमारभ्य विवर्द्धनं पलं यावत्। क्षीरयुतं तदालोड़नार्हक्षीरयुतं मासं त्रिंशद्दिनं पिबेत्। क्षीरवृत्तिरनन्नभुक् स्यात्, अन्नं न भुञ्जीत केवलं क्षीरं पीत्वा वर्त्तेत। प्रथमदिनमेक-तोलकम्। द्वितीये द्वितोलकम्। इत्येवं प्रतिदिनमेकैकतोलकं चूर्णं वर्द्धयेद् दुग्धञ्च तदालोड़नयोग्यं वर्द्धयेदिति पलं यावत्। ततो नवमादिषु पलमेव। प्रतिदिनम्

चक्रपाणिः—षोड़शिका पलं दाड़िमवृक्षाम्लम्। द्विर्द्विरिति पूर्व्वद्विपलापेक्षया द्विगुणं प्रत्येकं चतुःपलत्वं दर्शयति। पूर्व्ववदिति पूर्व्वयोगसमानफलतामाह। अत्र जतूकर्णः—पलिके धान्यकरचके। द्वौ जीरकदीप्यकौ। शुण्ठ्याश्च कर्षः। कपित्थदाड़िमवृक्षाम्लानां कुड़वमित्यादि॥ ३७॥

चक्रपाणिः—नागबलेत्यादौ अर्द्धकर्षप्रभृति अर्द्धकर्षेण वर्द्धितं पलं मासमेकं पेयम्।

यद्यत् सन्तर्पणं शीतमविदाहि हितं लघु।
अन्नपानं निषेव्यं तत् क्षतक्षीणैः सुखार्थिभिः॥
यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां रक्तपित्तिनाम्।
तच्च कुर्य्यादवेक्ष्याग्निं व्याधिं सात्म्यं बलं तथा॥
उपेक्षिते भवेत् तस्मिन्ननुबन्धो हि यक्ष्मणः।
प्रागेवागमनात् तस्य तस्मात् तं त्वरया जयेत्॥ ३९॥

तत्र श्लोकौ।

क्षतक्षयसमुत्थानं सामान्यं पृथगाकृतिम्।
असाध्ययाप्यसाध्यत्वं साध्यानां सिद्धिरेव च॥

इति। (नागबलाकल्पः।०) माण्डूकपर्ण्या इत्यादि। माण्डूकपर्णी मञ्जिष्ठा दन्ती वा, तस्या अपि नागबलावत् तोलकमारभ्य प्रतिदिनं तोलकैकवृद्ध्या दुग्धेन पिबेदनन्नभुक् क्षीरमात्रवृत्तिरेव स्यात्। तथा शुण्ठीयष्टीमधुकयोः प्रत्येकं कल्पो नागबलावत्। पुष्ट्यायुर्बलारोग्यकरः पर इति॥ ३८॥

गङ्गाधरः—यद्यदित्यादि। सन्तर्पणं शीतमविदाहि लघु हितञ्च यद् यदन्नपानं तत् क्षतक्षीणैरुरःक्षतिभिः क्षीणैश्च सेव्यमिति। यच्चोक्तमित्यादि स्पष्टम्। उपेक्षित इत्यादि। तस्मिन् क्षते क्षीणे चोपेक्षिते सति हि यस्मात् यक्ष्मणोऽनुबन्धो भवेत् तस्माद् यक्ष्मण आगमनात् पूर्व्वं त्वरया तं क्षतं क्षीणञ्च जयेदिति॥ ३९॥

केवलं क्षीरवर्त्तिनाम्। उक्तं हि जतूकर्णे—नागबला समूलार्द्धकर्षवृद्धा पलमाना मासं पेया क्षीरमात्रवृत्तिरिति॥ ३८॥

चक्रपाणिः—शीतञ्चापि स्पर्शे। "वान्तिकारि" विदाहि भवति तदर्थमविदाहि इत्युक्तम्। क्षतक्षीणस्य त्वरया प्रतिकर्त्तव्यतामाह—उपेक्षित इत्यादि। तस्येति यक्ष्मणः॥ ३९॥

उक्तवान् ज्येष्ठशिष्याय क्षतक्षीणचिकित्सिते।
तत्त्वार्थविद् वीततमो-रजोमोहः पुनर्व्वसुः॥ ४०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
क्षतक्षीणचिकित्सितं नामैकादशोऽध्यायः॥ ११॥

गङ्गाधरः—अध्यायार्थसंग्रहश्लोकावाह—तत्र श्लोकाविति। क्षतक्षीण-चिकित्सितेऽस्मिन्नध्याये, ज्येष्ठशिष्यायाग्निवेशायेति॥ ४०॥

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे
चिकित्सितस्थानजल्पे क्षतक्षीणचिकित्सितजल्पाख्या
एकादशी शाखा॥ ११॥

चक्रपाणिः—संग्रहे सामान्यपृथगिति क्षतोत्थस्य क्षयोत्थस्य च उरो विरुज्यते इत्यादि पृथग-लक्षणं कृतम्॥ ४०॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां क्षतक्षीणचिकित्सितं
नामैकादशोऽध्यायः॥ ११॥

---

# द्वादशोऽध्यायः ।

अथातः श्वयथुचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

भिषग्वरिष्ठं सुरसिद्धजुष्टं मुनीन्द्रमत्र्यात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथावत् प्रकोपचिह्नप्रशमानपृच्छत् ॥ २ ॥
तस्मै जगादागदवेदसिन्धुः प्रवर्त्तनाद् विप्रवरो-*-ऽत्रिजस्तान् ।
वातादिभेदात् त्रिविधस्य सम्यङ्निजानिजैकाङ्गजसर्व्वजस्य ॥३

गङ्गाधरः—चिकित्सितोद्देशानुक्रमात् क्षतक्षीणचिकित्सितादनन्तरं श्वयथु-चिकित्सितमाह—अथात इत्यादि । पूर्व्ववत् सर्व्वं व्याख्येयम् ॥ १ ॥

गङ्गाधरः—पुरावृत्तमाह—भिषग्वरिष्ठमित्यादि । सुरसिद्धाभ्यां जुष्टं सेवितम् । अत्र्यात्मजं कृष्णात्रिपुत्रं पुनर्व्वसुं गुरुं शिष्योऽग्निवेशो महागदस्य श्वयथोः प्रकोपचिह्नप्रशमान् यथावत् प्रणामादिपूर्व्वकमपृच्छत् ॥ २ ॥

गङ्गाधरः—तस्मै इत्यादि । तस्मै शिष्यायाग्निवेशाय । तेन प्रवर्त्तनात् तान् श्वयथोर्वातादिभेदात् त्रिविधस्य निजानिजैकाङ्गजसर्व्वाङ्गजस्य सम्यक् प्रकोपणादीन् अगदवेदसिन्धुरायुर्व्वेदसिन्धुरत्रिजो विप्रवरो जगाद ॥ ३ ॥

चक्रपाणिः—क्षतक्षीणे मर्म्मोपघातो भवति, शोथेऽपि मर्म्मोपघातः कारणं, तेन समानहेतुतया क्षतक्षयमनु शोथचिकित्सितमुच्यते । जुष्टमिति सेवितम् । प्रकोपयतीति प्रकोपो हेतुरित्यर्थः । किंवा कार्य्यकारणयोरभेदोपचारात् प्रकोपशब्देन श्वयथुकारणमुच्यते । रूपशब्देन रूपपूर्व्वरूपयोः ग्रहणम्, तेन सर्व्वत्वगाश्रितत्वेन तच्छमनं चिकित्सोच्यते ॥ १ । २ ॥

चक्रपाणिः—अगदार्थं आरोग्यार्थो यो वेदोऽगदवेदः, स एव गम्भीरप्रसन्नत्वात् सिन्धुरिव सिन्धुस्तस्य प्रवर्त्तनेऽद्रिप्रवरो हिमालय इव इत्यर्थः । यथा हिमालयो गङ्गायाः प्रवर्त्तकस्तथा अत्रिजोऽपि अग्निवेशप्रवर्त्तक इत्यर्थः । तानिति प्रकोपादीन्, यान् शिष्यः पृष्टवान् । एकाङ्गज-सर्व्वजस्येत्यत्र सर्व्वजशब्देन सर्व्वशरीरस्य ग्रहणं कर्त्तव्यम्, एकाङ्गजशब्देन च सामान्येन शरीराव्यापकस्य ग्रहणम्; तेन सर्व्वार्द्धगात्रावयवाश्रितत्वं यत् त्रैविध्यं वक्तव्यं तत्रैकाङ्गजेनार्द्धगात्रा-श्रितावयवादिग्रहणं कर्त्तव्यम् ॥ ३ ॥

---

* प्रवर्त्तनाद्रिप्रवरः इति चक्रः ।

**शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा।**
**दध्याममृच्छाकविरोधिदुष्ट-गरोपसृष्टान्ननिषेवणञ्च॥**
**अर्शांस्यचेष्टा न च देहशुद्धिर्म्मर्म्मोपघाता विषमा प्रसूतिः।**
**मिथ्योपचारः प्रतिकर्म्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः॥४**

गङ्गाधरः—शुद्ध्यामयेत्यादि। शुद्धिर्वमनादिः, आमयो रोगः, अभक्तमनन्नम्; तैः कृशानामबलानाञ्च क्षारादिसेवा श्वयथोर्हेतुः। एवं शुद्ध्यामयाभक्तकृशाबलानामिव दध्यादिनिषेवणञ्च कश्चित्। शुद्ध्यादिकृशाबलानां क्षारादिसेवा श्वयथोर्हेतुः। दध्यादिनिषेवणञ्च तदितरस्य जनस्य श्वयथोर्हेतुरिति। अन्नस्य दध्यादिप्रत्येकेनोपसृष्टत्वम्। आममृद् अपक्वमृत्। विरोधिद्रव्यैः क्षीरमत्स्यादिभिरुपसृष्टान्नम्। दुष्टं स्वगुणव्यापन्नं वातातपजलादियोगात्। गरं संयोगविषम्। अन्यरोगैः कृशानामबलानाञ्च क्षारादिसेवा श्वयथुहेतुरर्शांसि तु स्वयमेव श्वयथुहेतुः। अचेष्टा निष्क्रियता, न च देहशुद्धिर्मलसञ्चये सति कर्त्तव्यायां देहशुद्धौ न च देहशुद्धिः क्रियते। मर्म्मोपघातः सप्तोत्तरमर्म्मशतस्यान्यतमोपघातो वाह्यहेतुर्दण्डादिभिरेव, तेन दोषकोपात् श्वयथुर्भवति। त्रिशोथीये सर्व्वेषां शोथानां दोषत्रयजेषु त्रिष्वेवान्तर्भाववचनात्। तद्यथा "त्रयः शोथा भवन्ति वातपित्तश्लेष्मनिमित्ताः। ते पुनर्द्विधा निजागन्तुभेदेन" इति। आगन्तुशोथो यद्यपि यथास्वं हेतुजैर्व्यञ्जनैर्निजव्यञ्जनैकदेशविपरीतैरादावुपलभ्यते इत्यत आगन्तुज उच्यते, पश्चादवश्यं यथास्वदोषैरनुबध्यत एवेति त्रय एव शोथा भवन्ति। तस्मादिह मर्म्मोपघातो नाभ्यन्तरदोषकृतः। इहापि वातादिभेदात् त्रिविधस्येति वचनात्। दण्डाद्यभिघातस्तु य आगन्तुशोथस्य हेतुः, स वाह्यवचो दूषयिता वक्ष्यतेऽत्रैव। ततः थस्तत्क्षणमेव जायतेऽयन्तु मर्म्मोपघातः शोथं न कुर्व्वन्नादौ दोषं कोपयति ततो दोषः श्वयथुं करोतीति। विषमा प्रसूतिरकाले गर्भप्रसवः।

चक्रपाणिः—शुद्धिर्वमनादि शोधनम्, आमया ज्वरादयः, अभक्तमभोजनं विगुणञ्च भोजनं विरुद्धं भोजनं तैः कृशानामबलानाञ्च क्षारादिसेवा निजस्य श्वयथोर्हेतुरिति योज्यम्। दध्यादि तु स्वतन्त्रमेव हेतुः। आममपक्वं, दुष्टं दोषकारकम्। न च देहशुद्धिरिति शोधनार्हेऽपि दोषे देहाशुद्धिः। मर्म्मोपघात इह दोषकृत एव ज्ञेयः। वाह्यहेतुजस्तु मर्म्मोपघात आगन्तुहेतुरेव। विषमा प्रसूतिरकालगर्भपतनादिका। प्रतिकर्म्मणामिति वमनादीनाम्। मिथ्योपचार इति असम्यगुपचारः॥ ४॥

**वाह्यास्त्वचो दूषयिताभिघातः काष्ठाग्निशल्याश्मविषायसाद्यैः ।**
**आगन्तुहेतुः——————————————————**
**———त्रिविधो निजश्च सर्व्वार्द्धगात्रावयवाश्रितत्वात् ॥**
**वाह्याः सिराः प्राप्य यदा कफासृक्-पित्तानि सन्दूषयतीति वायुः ।**
**तैर्बद्धमार्गः स तदा विसर्पन्नुत्सेधलिङ्गं श्वयथुं करोति ॥ ५ ॥**

**ऊर्द्ध्वं स्थितैरूर्द्ध्वमधश्च वायोः**
**स्थाने स्थितैर्मध्यगतैश्च मध्ये ।**

मिथ्योपचारः प्रतिकर्म्मणां वमनादीनामयथावत्प्रयोगान्मिथ्यासंसर्ज्जनाच्च निजस्य श्वयथोर्दोषजस्य श्वयथोर्हेतुः प्रदिष्टः ॥ ४ ॥

गङ्गाधरः—आगन्तुश्वयथुहेतुमाह—वाह्यास्त्वच इत्यादि । काष्ठाग्निशल्याद्यैस्त्रिशोथीयोक्तैश्छेदनभेदनादिभिश्च वाह्यास्त्वचो दूषयिता योऽभिघातो नादौ दोषाणां दूषयिता स आगन्तुश्वयथुहेतुः । निजश्च त्रिविधो वातपित्तकफाख्यः श्वयथुहेतुः सर्व्वार्द्धगात्रावयवाभिप्रेतत्वात् वाह्याः सिराः प्राप्य वायुर्यदा कफासृक्पित्तानि सन्दूषयतीति तदा स्वदूषितैः कफासृक्पित्तैर्बद्धमार्गः सन् स वायुर्विसर्पन् सर्व्वादिगात्रे चरन्नुत्सेधलक्षणं स्फीतलक्षणं श्वयथुं करोति । इति भेदः । स्फीतभावः श्वयथोः सामान्यलक्षणमिति सम्प्राप्तिः ॥ ५ ॥

गङ्गाधरः—ऊर्द्ध्वं स्थितैरित्यादि । दोषैः शोथारम्भकैः शरीरे ऊर्द्ध्वाङ्गस्थितैः ऊर्द्ध्वं श्वयथुः स्यात् स च तदास्य ऊर्द्ध्वं श्वयथुर्नाम । वायोः स्थानेऽधोऽङ्ग-

चक्रपाणिः—वाह्या इत्यादिनागन्तुशोथहेतुमाह । वाह्या इत्यगम्भीराः । एतेन गम्भीरत्वग्दूषकत्वं शोथस्य न भवति । त्वच इति कर्म्मपदं हलन्तम् । दूषयिता अभिघातविशेषेण काष्ठाग्न्यशन्यश्मविषकारणकः । आदिशब्दो ह्रि कारणवाची । तेन काष्ठादिकारणमभिघात इत्यर्थः । काष्ठादेश्च संक्षेपोक्त्या दन्तादीनामप्युपलक्षणा ज्ञेया । किंवा आदिशब्दः प्रकारवाची, तेन काष्ठादिकृतोऽभिघातः काष्ठादिशब्देनोच्यत इति कृत्वाभिघातेन समं समानाधिकरणं ज्ञेयम् । आगन्तुहेतुरिति छेदः । त्रिविध इति सर्व्वार्द्धगात्रावयवाश्रितत्वेन निजस्त्रिविधः । चकारात् आगन्तुरपि यथोक्तभेदात् त्रिविध इत्यर्थः । वाह्याः शिरा इत्यादि सम्प्राप्तिकथनम् । वाह्या शिरा इति शिराशब्देन स्रोतसां सामान्येन ग्रहणम् । बद्धमार्ग इत्यावृतमार्गः । उत्सेधेनाव्यभिचारिणा लिङ्ग्यत इत्युत्सेधलिङ्गः ॥ ५ ॥

चक्रपाणिः—ऊर्द्ध्वं स्थितैरित्यादिना विशिष्टशोथानां सम्प्राप्तिविशेषमाह । ऊर्द्ध्वमित्युरःप्रभृति ऊर्द्ध्वशरीरे । अध इति पक्वाशयप्रभृति वायोः स्थाने पक्वाशये । मध्यगतैः इत्युरः-

सर्व्वाङ्गगैः सर्व्वगतैः क्वचित्स्थै-
दोषैः क्वचित् स्यात् श्वयथुस्तदाख्यः ॥ ६
उष्मा तथा स्याद् दवथुः सिराणामायाम इत्येव च पूर्व्वरूपम्।
सर्व्वस्त्रिदोषोऽधिकदोषलिङ्गैस्तच्छब्द-*-माप्नोति भिषग्जितञ्च ॥७
सगौरवं स्यादनवस्थितत्वं सोत्सेधमुष्माथ सिरातनुत्वम्।
सलोमहर्षाङ्गविवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥ ८ ॥

स्थितैः दोषैरधःश्वयथुर्नाम। मध्यगतैरन्तराधिस्थितः दोषैर्मध्ये श्वयथुः स्यात स च मध्यश्वयथुर्नाम। सर्व्वगतैः सर्व्वाङ्गगतैर्दोषैः सर्व्वाङ्गगः श्वयथुर्नाम। इत्येवं यत्र क्वचित्स्थैर्दोषैः यत्र क्वचिदङ्गे श्वयथुः स्यात् स च श्वयथुस्तदाख्यस्तत्तदङ्गश्वयथुर्नाम स्यादिति ॥ ६ ॥

गङ्गाधरः—श्वयथुपूर्व्वरूपमाह—उष्मा तथेत्यादि। शरीरस्योष्मा भवति, तथा दवथुरुपतापः स्यात्, सिराणामायामो दीर्घीभावः स्यादित्येव च श्वयथोः पूर्व्वरूपं स्यात्। सर्व्वः श्वयथुस्त्रिदोषस्तत्र यः श्वयथुर्यस्य दोषस्याधिकलिङ्गो भवति स तदधिकदोषलिङ्गैस्तच्छब्दं तद्दोषजसंज्ञामाप्नोति। भिषग्जितमौषधञ्च तदधिकदोषहरणमाप्नोति प्रतिक्रियायामिति ॥ ७ ॥

गङ्गाधरः—सगौरवमित्यादि। अनवस्थितत्वं शोथस्य गौरवञ्च सोत्सेधञ्च उष्मा चाङ्गस्य सिराणां तनुत्वञ्च कृशत्वं लोमहर्षश्चाङ्गविवर्णता च सर्व्वस्मिन् श्वयथौ भवतीति श्वयथोः सामान्यलिङ्गमिदमिति ॥ ८ ॥

पक्वाशयमध्यगतैः। क्वचिदिति कण्ठताल्वादिदेशे। तदाख्य इति गलशोथ इति शब्दाख्य इति। किंवा ऊर्द्ध्वशोथाधःशोथ इत्यादिशब्दाख्य इति सर्व्वत्र योजनीयम् ॥ ६ ॥

चक्रपाणिः—उष्मेत्यादिना पूर्व्वरूपमाह। दवथुस्तापः। तथेति चक्षुरादिभ्यः। सिराणामायाम इति सिराप्रसरणम्। सर्व्वशोथानां त्रिदोषजत्वेऽपि वातजादिव्यपदेशो वातजा चिकित्सा यथा भिन्ना भवतीति निर्द्दिष्टुमाह—सर्व्व इत्यादि। अधिकानि वाधिकस्य दोषस्य लिङ्गानि इत्यधिकदोषलिङ्गैः। तत्संज्ञमिति अधिकदोषसंज्ञं वातजोऽयमित्यादिकं प्राप्नोति, तदा भिषग्जितञ्चाधिकदोषलिङ्गैः प्राप्नोति। अधिकदोषलिङ्गप्रयुक्तं चिकित्सितभेदं प्राप्नोति इत्यर्थः ॥ ७ ॥

चक्रपाणिः—सगौरवमित्यादिना सामान्यलिङ्गं पठति ॥ ८ ॥

* तत्संज्ञमिति चक्रधृतः पाठः।

चलस्तनुत्वक् परुषोऽरुणोऽसितः
प्रसुप्ति-*-हर्षार्त्तियुतोऽनिमित्ततः ।
प्रशाम्यति प्रोन्नमति प्रपीड़ितो
दिवा वली च श्वयथुः समीरणात् ॥ ९ ॥
मृदुः सगन्धोऽसितपीतरागवान्
भ्रमज्वरस्वेदतृषामदान्वितः ।
य उष्यते स्पर्शरुग-†-क्षिरागकृत्
स पित्तशोथो भृशदाहपाकवान् ॥ १० ॥

गङ्गाधरः—चल इत्यादि । समीरणात् वाताधिकत्रिदोषाज्जातः श्वयथुश्चलः स्थानात् स्थानान्तरं चलति । अरुणो वाऽसितो वा । प्रसुप्तिः स्पर्शबोधाभावः । हर्षः शोथस्थानहर्षः । अर्त्तिर्वेदना । तैर्युक्तः स्यात् । अनिमित्ततः प्रशाम्यति । प्रपीड़ितोऽङ्गुल्यादिना प्रपीड़ने निम्नः सन्नचिरादुन्नमति । दिवा बली बलवान् भवति रात्रौ प्रशाम्यतीति ॥ ९ ॥

गङ्गाधरः—मृदुरित्यादि । यः शोथो मृदुः, शरीरसमगन्धः, असितपीतरागवान्, भ्रमाद्यन्वितः, उष्यते उष्णः, स्पर्शे रुग् यत्र, अक्षिरागकृत्, भृशदाहवान् भृशपाकवान् स पित्तशोथः ॥ १० ॥

चक्रपाणिः—चल इत्यादिना वातलिङ्गमाह । तनुत्वगित्यबहलत्वक् । असित इति कृष्णः । सुप्तिः स्पर्शाज्ञानम् । हर्षो रणरणिकेति ख्याता वेदना, किंवा रोमहर्षः । अनिमित्ततः प्रशाम्यतीति वायोश्चलत्वेन कदाचिन निमित्तेन विनापि लीनो भवति । केचित् निमित्तत इति पठन्ति, तेन स्नेहोष्णमर्दनादिना प्रशाम्यति, स च वातिक इति । प्रोन्नमतीति सम्पीड़नानन्तरमेवोन्नमति ॥ ९ ॥

चक्रपाणिः—मृदुरित्यादिना पित्तशोथमाह । उष्यत इति दह्यते । अस्पर्शसह इति स्पर्शनं न सहते ॥ १० ॥

* प्रसुप्ति इत्यत्र सुप्ति इति चक्रः ।

† स्पर्शरुगित्यत्र अस्पर्शसहः इति चक्रसम्मतः पाठः ।

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत्।
स कृच्छ्रजन्मप्रशमो निपीड़ितो
न चोन्नमेद् रात्रिबली कफात्मकः ॥ ११ ॥
कृशस्य रोगैरबलस्य यो भवे-
दुपद्रवैर्वा वमिपूर्व्वकैर्युतः।
स हन्ति मर्म्मानुगतोऽथ राजिमान्
परिस्रवेद्धीनबलस्य सर्व्वगः ॥ १२ ॥

गङ्गाधरः—गुरुरित्यादि। यः शोथो गुरुः स्थिरो न चलति, प्रसेको मुखस्रावः, कृच्छ्रजन्मा चिरेण जायते, यः शोथोऽङ्गुल्यादिभिर्निपीड़ितो निम्न एव संस्थिरकालं वर्त्तते न चोन्नमेत्, रात्रिबली रात्रौ वर्द्धते, स शोथः कफात्मकः ॥ ११ ॥

गङ्गाधरः—कृशेत्यादि। कृशस्य जनस्य रोगैरबलस्य च जनस्य यः शोथो वमिपूर्व्वकैर्वम्यादिभिरुपद्रवैर्युक्तो मर्म्मानुगतश्च स हन्ति शोथिनम्। अथ हीनबलस्य राजिमान् यः शोथः सर्व्वाङ्गगः परिस्रवेत् स तं शोथिनं हन्ति ॥ १२ ॥

चक्रपाणिः—गुरुरित्यादिना कफशोथमाह। अरोचकान्वित इति अरोचकव्याधिसहचारी। कृच्छ्रजन्मप्रशम इति चिरोत्पत्तिविनाशः। रात्रिबली कफात्मक इति रात्रौ स्रोतोरोधजेन देहक्लेदेनाचेष्टया च कफस्य गुरुत्वात् तज्जनितशोथो बलवान् भवति। दिवा न भवति, दिवा तु स्फुटस्रोतसि शरीरे चेष्टायुक्ते न कफो बली भवति। दिवा च कफशोथस्तु हीयते ॥ ११ ॥

चक्रपाणिः—संप्रत्यसाध्यसाध्यभागमाह—कृशस्येत्यादि। वमिपूर्व्वकैरिति शिशोर्थाय "छर्द्दिः श्वासोऽरुचिस्तृष्णा ज्वरातीसार एव च। मूर्च्छा शोषः सदौर्ब्बल्यः शोथोपद्रवसंग्रहः ॥" इत्यनेनोक्तैः। मर्म्मानुगतो राजिमानिति च पृथक् लक्षणम्। परिस्रवन्नित्यादि च पृथक् पृथगसाध्यलक्षणम् ॥ १२ ॥

अहीनमांसस्य य एकदेशजो नवो बलस्थस्य सुखः स साधने ।
निदानदोषर्त्तुविपर्य्ययक्रमैरुपाचरेत् तं बलदोषकालवित् ॥ १३ ॥
अथामजं लङ्घनपाचनक्रमैर्विशोधनैरुल्वणदोषमाश्रितम् ।
शिरोगतं शीर्षविरेचनैरधो-विरेचनैरूर्द्ध्वमधस्तथोर्द्ध्वगम् ॥
उपाचरेत् स्नेहभवं विरुक्षणैः प्रकल्पयेत् स्नेहविधिश्च रुक्षजे ।
विबद्धविट्केऽनिलजे निरुहणं घृतन्तु पित्तानिलजे सतिक्तकम् ॥

गङ्गाधरः—अहीनेत्यादि । अहीनमांसस्याकृशस्य य एकदेशजः शोथः । यो नवो नूतनः स्वल्पकालजातः बलस्थस्य जनस्य भवति स शोथः साधने सुखः । तं यथा साधयेत् तदाह—निदानविपर्य्ययदोषविपर्य्ययर्त्तुविपर्य्ययैः क्रमैस्तं साधने सुखं शोथं बलदोषकालविद् वैद्य उपाचरेत् ॥ १३ ॥

गङ्गाधरः—अथामजमित्यादि । निदानविपर्य्ययक्रम एषः । आमजम् अपाकजातं शोथं लङ्घनपाचनक्रमैरुपाचरेत् । उल्वणदोषमाश्रितं शोथं विशोधनैर्वमनविरेचनादिभिरुपाचरेत् । शिरोगतं शोथं शिरोविरेचनैरुपाचरेत् । ऊर्द्ध्वगं शोथमधोविरेचनैरुपाचरेत् । तथाऽधःशोथमूर्द्ध्वविरेचनैरुपाचरेत् । स्नेहभवं शोथं विरुक्षणैरुपाचरेत् । रुक्षजे शोथे स्नेहविधिं प्रकल्पयेत् । एवमनिलजे शोथे विबद्धविट्के निरुहणं प्रकल्पयेत् । पित्तानिलजे शोथे

चक्रपाणिः—अहीनेत्यादिना सुखसाध्यलक्षणमुच्यते । कृच्छ्रसाध्यलक्षणञ्च सुखसाध्यलक्षणासम्पूर्णतायां ज्ञेयम् । श्वयथोश्च हेतुलक्षणानि त्रिशोथीयोक्तान्यपि प्रकरणात् संक्षेपेण इहापि कथितानि । सामान्येन चिकित्सासूत्रमाह निदानेत्यादि । निदानादिविपरीतक्रमैः लङ्घनादिभिरुपाचरेदित्यर्थः । बलदोषकालविदित्यनेन निदानादेर्विपरीता क्रिया युक्ता । बलं विरामादिभेदभिन्नं तथा दोषं तथा कालञ्च व्याध्यवस्थारूपं विदित्वा या युज्यते सा कर्त्तव्येति दर्शयति । निदानेत्यादौ दोषशब्देन वातादयो गृह्यन्ते । ऋतुशब्देन च नित्यगः कालः, तनैव तद्विशिष्टवाचकतया बलदोषकालविदिति वचनं न पुनरुक्तम् । अन्ये तु प्रथमेन दोषशब्देन दूष्यधातुग्रहणम् । कृतेन प्रथमव्याख्यानेन दोषशब्देनैव दूष्यस्यापि दोषाश्रयस्य ग्रहणं ज्ञेयम् ॥ १३ ॥

चक्रपाणिः—आमजमिति पुक्वदोषजनितम् । अपक्वता च प्रायो दोषाणां प्रथमदुष्टौ भवति । क्रमैरित्युपक्रमैः । अधोविरेचनैरुपाचरेत् ऊर्द्ध्वगमित्युक्तम् । ऊर्द्ध्वहरैरिति वमनैः । सतिक्तकं घृतमिति

पयश्च मूर्च्छारतिदाहतर्षिते विशोधनीये तु समूत्रमिष्यते।
कफोत्थितं क्षारकटूष्णसंयुतैः समूत्रतक्रासवयुक्तिभिर्जयेत् ॥१४॥
ग्राम्याब्जानूपं * पिशितलवणं शुष्कशाकं नवान्नं
गौड़ं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम्।
धाना वल्लूरं समशनमथो गुर्व्वसात्म्यं विदाहि
स्वप्नश्चारात्रौ श्वयथुगदवान् वर्ज्जयेन्मैथुनञ्च ॥ १५ ॥

सतिक्तकं घृतं प्रकल्पयेत्। तत्र पित्तानिलजे शोथे मूर्च्छारतिदाहतर्षिते पयश्च प्रकल्पयेत्। मूर्च्छारतिदाहतर्षिते शोधनीये शोथिनि समूत्रं पय इष्यते। कफोत्थितं शोथं क्षारकटूष्णसंयुतैः कफहरैः द्रव्यैर्जयेत्। समूत्रैस्तक्रयोगैः समूत्रैरासवयोगैश्च जयेत्। युक्तियोगैः ॥ १४ ॥

गङ्गाधरः शोफस्य निदानवर्ज्जनमाह—ग्राम्येत्यादि। ग्राम्याब्जानूपं पिशितं छागमेषमांसं ग्राम्यं मत्स्यकूर्म्मादिमांसमाब्जं महिषवराहादि मांसमानूपम्। लवणञ्च क्षारमृदं पक्त्वा यल्लवणं साध्यते तद्ग्राम्यं लवणम्, पांशुसामुद्रसैन्धवादिलवणमाब्जं शाम्भरीप्रभृति लवणमानूपम्। नवान्नं नूतनधान्यान्नं गौड़ं गुड़विकृतं शर्करादिद्रव्यं कृशरा तिलपिष्टं विज्जलं पिच्छिलद्रव्यं कञ्जादिद्रव्यं मद्यस्याम्लत्वेऽपि पृथगभिधानं विशेषेण वर्ज्जनार्थम्। अम्लं जम्बीरादिकं धाना भृष्टयवः वल्लूरं शुष्कमांसं समशनं वक्ष्यते ग्रहणीरोगचिकित्सिते। पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम् इति। अथो गुरुभोजनमसात्म्यमशनं विदाहि चाशनम्। अरात्रौ दिवास्वप्नं मैथुनञ्च श्वयथुगदवान् वर्ज्जयेत् ॥ १५ ॥

साधितं घृतम्। पित्तानिलज इति वातपित्तजद्वन्द्वे। मूर्च्छादय इह संजाता यस्य तस्मिन् मूर्च्छारतिदाहतर्षिते। विशोधनीय इति मूर्च्छायुक्त एव विशोधनीयः। समूत्रमिति मूत्रसमभागम् ॥ १४ ॥

चक्रपाणिः—( वातेन विना निदानत्वेनैव प्राप्तनिषेधापि महात्ययावहत्वादुत्यर्थनिषेधोपदर्शनार्थमाह। ) गौड़मिति गुड़विकारं तस्य विकारं आदिद्रव्यम्। धाना अङ्कुरितभृष्टयवाः। वल्लूरं शुष्कमांसम्। समशनं पथ्यापथ्ययोरेकत्र भोजनम् ॥ १५ ॥

---

* ग्राम्यानूपं पिशितलवणं शुष्कशाकं नवान्नं गौड़ं पिष्टं दधि तिलकृतं विज्जलं मद्यमम्लम्।
धाना वल्लूरमशनमथो गुर्व्वसात्म्यं विदाहि स्वप्नं रात्रौ श्वयथुगदवान् वर्ज्जयेन्मैथुनञ्च ॥
इति चक्रसम्मतः पाठः।

व्योषत्रिवृच्चित्रकरोहिणीश्च सायोरजस्कां त्रिफलारसेन ।
पीत्वा कफोत्थं शमयेत् तु शोथं गव्येन मूत्रेण हरीतकी च ॥१६
हरीतकीनागरदेवदारु सुखाम्बुयुक्तं सपुनर्नवं वा ।
सर्व्वं पिबेत् त्रिष्वपि मूत्रयुक्तं स्नातश्च जीर्णे पयसान्नमद्यात् ॥१७
पुनर्नवानागरमुस्तकल्कान् प्रस्थेन धीरः पयसाक्षमात्रान् ।
मयूरकं मागधिकां सपूलां सनागरं वा प्रपिबेत् सवाते ॥ १८ ॥
दन्तीत्रिवृत्त्र्यूषणचित्रकैर्वा पयः शृतं दोषहरं पिबेद्वा ।
द्विप्रस्थमात्रन्तु पलार्द्धकैस्तैरर्द्धावशिष्टं पवने सपित्ते ॥ १९ ॥

गङ्गाधरः—व्योषेत्यादि । व्योषादिपञ्चद्रव्यचूर्णसममेकमयोरजः शोधित मारितपुटितं लोहचूर्णं त्रिफलारसेन पीत्वा । गव्येन मूत्रेण हरीतकी च चूर्णिता पीता ॥ १६ ॥

गङ्गाधरः हरीतकीत्यादि । हरीतक्यादित्रयं चूर्णितं सुखाम्बुयुक्तं पीतं हरीतक्यादित्रयं सपुनर्नवं वा चूर्णितं पीतं कफोत्थं शोथं शमयेदिति पूर्व्वेणान्वयः । त्रिष्वपि शोथेषु मूत्रयुक्तं सर्व्वं व्योषादिकं योगचतुष्कं पिबेत् । स्नातश्च तदौषधे जीर्णे पयसान्नमद्यात् ॥ १७ ॥

गङ्गाधरः—पुनर्नवेत्यादि । पुनर्नवादित्रयं प्रत्येकमक्षमात्रं कल्कीकृत्य पिष्ट्वा पयसः प्रस्थेनार्द्धावशेषपक्वेन दुग्धेन धीरः सवाते शोथे पिबेत् । अथवा सवाते शोथे मयूरकादिचतुष्कं कल्करूपमक्षमात्रं पयसः प्रस्थेनार्द्धावशेषं शृतं पयसा पिबेत् ॥ १८ ॥

गङ्गाधरः दन्तीत्यादि । दन्तीमूलादिषट्कं पयसोऽष्टमांशं जलं चतुर्गुणं

चक्रपाणिः अत्र कफदोषस्यैव चिकित्सितत्वे प्रथमं व्योषमित्यादिना कफशोथचिकित्सामाह । सायोरजस्कामिति अनेन मारितमेवात्र अयोरज इच्छन्ति रसायनेऽपि मृतायोरजस एव प्रयोगोपदेशात् । अयोरजः न समं तुल्यमानम्, अयो हि दुष्परिणामं तेनायःप्रयोगेऽल्पमेव लौहं मानानुसारेण ज्ञेयम् । हरीतक्यादीनां कल्कः सुखाम्बुना पेयः । सपुनर्नवं वा सर्व्वमिति हरीतक्यादि । त्रिष्वपि वातादिजेषु । स्नातश्चेत्यादिविधिरन्ते उक्तत्वात् उक्त-सर्व्वप्रयोगेषु ज्ञेयः । पुनर्नवेत्यादौ प्रस्थमानं क्षीरमिति बहुत्वात् कल्कानुरूपं पेयम् । मयूरकमित्यादा-वपि पूर्व्वयोगोक्तं क्षीरं द्रव्यमानञ्च ज्ञेयम् ॥ १६—१८ ॥

चक्रपाणिः—पलार्द्धकैरिति द्विकर्षमानैः । अत्र च भेषजापेक्षया बहुत्वात् स्तोकक्षीरदानं केचिदिच्छन्ति, साधनत्वेन कर्त्तव्यमिति यथा कुर्व्वन्ति स उपाय इति वचनात् ॥ १९ ॥

सशुण्ठिपीतद्रुरसं प्रयोज्यं श्यामोरुबूकोषणसाधितं वा।
त्वग्दारुवर्षाभुमहौषधैर्वा गुडूचिकानागरदन्तिभिर्वा ॥ २० ॥
सप्ताहमौष्ट्रन्त्वथवापि मासं पयः पिबेद् भोजनवारिवर्ज्जी।
गव्यं समूत्रं महिषीपयो वा क्षीराशनो मूत्रमथो गवां वा ॥२१॥
तक्रं पिबेद् वा गुरुभिन्नवर्च्चाः सव्योषसौवर्च्चलमाक्षिकञ्च।
गुड़ाभयां वा गुड़नागरं वा सदोषभिन्नामविबद्धवर्च्चाः ॥ २२ ॥

दत्त्वा शृतं तत् पयः शोथहरं नरः पिबेत्। तैर्दन्त्यादिभिः प्रत्येकं पलार्द्धकैः पयो द्विप्रस्थमात्रमष्टशरावं निर्जलं पक्त्वार्द्धावशिष्टं तत् पयः सपित्ते पवने शोथे पिबेन्ना ॥ १९ ॥

गङ्गाधरः—सशुण्ठीत्यादि। शुण्ठीपीतद्रुरसं संयोज्य पयः प्रयोज्यम्। पीतद्रुर्दारुहरिद्रा। क्वाथविधिना द्रव्यं निःक्वाथ्य तद्रसं दुग्धेन समेन संयोज्य पिबेत्। अथवा श्यामादिसाधितं पयः प्रयोज्यम्। श्यामा त्रिवृत्। पयसोऽष्टमांशम्। श्यामादित्रयं चतुर्गुणजले पक्त्वा तत् पयः प्रयोज्यं सपित्ते पवने। त्वगादिभिर्वा साधितं पयोऽथवा चिकादिभिस्त्रिभिः साधितं पयः प्रयोज्यम् ॥ २० ॥

गङ्गाधरः—सप्ताहमित्यादि। औष्ट्रं (मांसम्) अथवा पयः केवलं सप्ताहं मासं वा सपित्ते पवने शोथी भोजनवारिवर्ज्जी पिबेत्। अथवा गव्यं पयो गोमूत्रसहितं भोजनवारिवर्ज्जी सप्ताहं मासं वा पिबेत्। अथवा भोजनवारिवर्ज्जी गोमूत्रसहितं महिषीपयः सप्ताहं मासं वा सपित्ते पवने पिबेत्। अथवा गवां मूत्रं गवां क्षीरेणान्नाशनः सप्ताहं मासं वा वारिवर्ज्जी पिबेत् ॥ २१ ॥

गङ्गाधरः—तक्रमित्यादि। गुरुभिन्नवर्च्चाः शोथी सव्योषचूर्णादिकं गव्यदुग्धजाततक्रं पिबेत्। अथ सदोषभिन्नामविबद्धवर्च्चाः शोथी गुड़ाभयां समगुड़मभयाकल्कं भक्षयेदथवा समगुड़नागरकल्कं भक्षयेत् ॥ २२ ॥

चक्रपाणिः—पीतद्रुर्देवदारुः। ऊषणं मरिचम् ॥ २० ॥

चक्रपाणिः—भोजनवारिवर्ज्जीति भोजनं वारि च त्यक्तव्यमित्यर्थः। गव्यमित्यादावपि गवां मूत्रमित्यन्तेन सप्ताहं मासमेवेति च तथा भोजनवारिवर्ज्जीति चानुवर्त्तयति। समूत्रमित्यत्र मूत्रसमः। क्षीराशन इति संबध्यते ॥ २१। २२ ॥

विड्वातसङ्गे पयसा रसैर्वा प्रागुक्तमद्यादुरुबूकतैलम्।
स्रोतोविबन्धेऽग्निरुचिप्रणाशे मद्यान्यरिष्टांश्च पिबेत् सुजातान्॥२३

गण्डीरभल्लातकचित्रकाश्च व्योषं विडङ्गं बृहतीद्वयञ्च।
द्विप्रास्थिकं गोमयपावकेन द्रोणे पचेत् कूर्च्चिकमस्तुनस्तु॥
त्रिभागशेषन्तु सुपूतशीतं द्रोणेन तत् प्राकृतमस्तुना च।
सितोपलायाश्च शतेन युक्तं लिप्ते घटे चित्रकपिप्पलीभ्याम्॥
वैहायसे स्थापितमा दशाहात् प्रयोजयंस्तद् विनिहन्ति शोफान्।
भगन्दरार्शःक्रिमिकुष्ठमेहं वैवर्ण्यकार्श्यानिलहिक्कनञ्च॥ २४॥

गण्डीराद्यरिष्टः।

काश्मर्य्यधात्रीमरिचाभयाक्ष-क्षुद्राफलानाञ्च सपिप्पलीनाम्।
शतं शतं क्षौद्रगुडात् पुराणात् तुलान्तु कुम्भे मधुना प्रलिप्ते॥

गङ्गाधरः—विड्वातेत्यादि। यस्य शोथिनो विड्वातश्च न निःसरति स उरुबूकतैलं पयसा ग्राम्याब्जानूपमांसभिन्नमांसरसैर्वा पिबेत् प्रागुक्तञ्च गुडाभयं गुडनागरं वाद्यात्। शोथी मलवहस्रोतोविबन्धेऽग्निरुचिप्रणाशे च मद्यानि पिबेत्। सुजातानरिष्टांश्च पिबेत्॥ २३॥

गङ्गाधरः—मद्यं प्रसिद्धम्। अरिष्टं पुनराह—गण्डीरेत्यादि। गण्डीरः समठः। गण्डीरादीनि नव द्रव्याणि मिलित्वा द्विप्रास्थिकं कुट्टयित्वा कूर्च्चिकमस्तुनो द्रोणे चतुःषष्टिशरावे गोकरीषाग्निना पचेत्। कूर्च्चिकं द्विविधं तक्रकूर्च्चिकं दधिकूर्च्चिकञ्च। "तप्ते पयसि तक्रस्य प्रक्षेपात् तक्रकूर्च्चिकम्। दध्नोऽम्लस्य तु प्रक्षेपाज्जायते दधिकूर्च्चिकम्।" पाकेन तृतीयांशावशेषे तत् क्वथितं कूर्च्चिकमस्तु प्राकृतमस्तुना दधिमस्तुना द्रोणमितेन सह सितोपलाशतपलेन च सह युक्तं चित्रकपिप्पलीभ्यां पिष्टाभ्यां लिप्ते घृतभावितघटे निक्षिप्य वैहायसे शून्यभागे दशाहपर्य्यन्तं स्थापयेत्॥ २४॥ गण्डीराद्यरिष्टः।

गङ्गाधरः—काश्मर्य्येत्यादि। काश्मर्य्यं गम्भारीफलम्। काश्मरीक्षुद्रान्तानां षण्णां फलानां पिप्पल्याश्च प्रत्येकं शतं शतं गुड़कं पुराणात् क्षौद्रगुड़ात् तुलां

चक्रपाणिः—कुर्च्चिकमस्तुन इत्यत्र दध्ना सह पयसि पक्वं यन्मस्तु तत् कूर्च्चिकमस्तु। केवलस्य दध्नो यन्मस्तु तत् प्राकृतमस्तु। वैहायसे इत्यन्तरिक्षे॥ २३। २४॥

सप्ताहमुष्णे द्विगुणन्तु शीते स्थितं जलद्रोणयुतं पिवेन्ना।
शोथान् विबन्धान् कफवातजांश्च निहन्त्यरिष्टोऽष्टशतोऽग्निकृच्च ॥२५

अष्टशतोऽरिष्टः।

पुनर्नवे द्वे च वले सपाठे वासा गुडूची सह चित्रकेण।
निदिग्धिका च त्रिपलानि पक्त्वा द्रोणावशेषे सलिले ततस्तु ॥
पूत्वा रसं द्वे च गुड़ात् पुराणात् तुले मधुप्रस्थयुतं सुशीतम्।
मासं निदध्याद् घृतभाजनस्थं पर्णे यवानां परतश्च मासात् ॥
चूर्णीकृतैरर्द्धपलांशिकैस्तं हेमत्वगेलामरिचाम्बुपत्रैः।
गन्धान्वितं क्षौद्रघृतप्रदिग्धं जीर्णे पिवेद् व्याधिवलं समीक्ष्य ॥
हृत्पाण्डुरोगं श्वयथुं प्रवृद्धं प्लीहज्वरारोचकमेहगुल्मान्।
भगन्दरं षड् जठराणि कासं श्वासं ग्रहण्यामयकुष्ठकण्डूः ॥

सर्व्वं तज्जलद्रोणयुतं गोलयित्वा मधुना प्रलिप्ते कुम्भे उष्णकाले वैशाखादिषु षट्सु मासेषु सप्ताहं स्थितं शीते कार्त्तिकादिषु षट्सु मासेषु द्विगुणं चतुर्दशाहं स्थितं ना नरः पिवेत् ॥ २५ ॥ काश्मर्य्याद्यरिष्टः।

गङ्गाधरः—पुनर्नवे इत्यादि। द्वे पुनर्नवे। द्वे वले। पुनर्नवादिनिदिग्धिकान्तानि नव द्रव्याणि प्रत्येकं त्रिपलानि क्षोदयित्वा चतुर्द्रोणे सलिले पक्त्वा द्रोणावशेषे सलिले तं रसं पूत्वा तत्र पुराणाद् गुड़ाद् द्वे तुले मिश्रयित्वा तत् सुशीतं यदा स्यात् तदा मधुप्रस्थयुक्तं चतुःशरावमधुयुक्तं घृतभाजनस्थं मासं त्रिंशद्दिनं यवानां पर्णे पर्णमध्ये तद्घृतभाजनमाच्छाद्य निदध्यात्। मासात् परतश्च तं रसं हेमादिकैश्चूर्णीकृतैः प्रत्येकमर्द्धपलांशैर्युक्तं गन्धान्वितं पुनश्च क्षौद्रघृतप्रदिग्धं मानानुक्ते पूर्व्वोक्तमानमत्र मधुनः प्रस्थं तत्साहचर्य्यात् पुराणगव्यघृतस्यापि प्रस्थमेकीकृत्य दर्व्व्यालोड्य प्रदिग्धं जीर्णे पूर्व्वदिनाहारे प्रातः

चक्रपाणिः—काश्मर्य्येत्यादौ उष्ण इत्युष्मकाले, द्विगुणमिति द्विसप्ताहं शीतकाले स्थाप्यम्। अष्टशत इति संज्ञा काश्मर्य्यादिसप्तशतं मेलयित्वा कृतत्वाज्ज्ञेया ॥ २५ ॥

चक्रपाणिः—पुनर्नवे द्वे इत्यादौ प्रत्येकं द्रव्याणां त्रिपलिकत्वम्। द्रोणावशेषविधानाच्च चतुर्द्रोणं जलस्य ज्ञेयम्। तथाहि सति (यदि) शेषेण द्रोणः क्वाथो भवति। यवानामिति

शाखानिलं बद्धपुरीषताञ्च हिक्कां किलासञ्च हलीमकञ्च ।
क्षिप्रं जयेद् वर्णबलायुरोजस्तेजोऽन्वितो मांसरसान्नभोजी ॥२६॥

पुनर्नवाद्यरिष्टः ।

फलत्रिकं चित्रकपिप्पली च सदीप्यकं लोहरजो विडङ्गम् ।
चूर्णीकृतं कौड़विकं द्विरंशं क्षौद्रं पुराणस्य तुलां गुड़स्य ।
मासं निदध्याद् घृतभाजनस्थं यवेषु तानेव निहन्ति रोगान् ॥२७

फलत्रिकाद्यरिष्टः ।

ये चार्शसां पाण्डुविकारिणाञ्च
प्रोक्ता हिताः शोफिषु तेऽप्यरिष्टाः ॥ २८ ॥

कृष्णा सपाठा गजपिप्पली च निदिग्धिका चित्रकनागरञ्च ।
सपिप्पलीमूलरजन्यजाजी-मुस्तञ्च चूर्णं सुखतोयपीतम् ॥

काले व्याधिबलं समीक्ष्य पिबेत् । हृत्पाण्डुरोगादिकं क्षिप्रं जयेत् । मांसरसान्नभोजी शोथी वर्णाद्यन्वितो भवतीति शेषः ॥ २६ ॥　　पुनर्नवाद्यरिष्टः ।

गङ्गाधरः—फलत्रिकमित्यादि । लोहरजो मारितपुटितं लौहम् । फलत्रिकादीनामष्टानां चूर्णं मिलितं कौड़विकं क्षौद्रं द्विरंशं द्विकुड़वं पुराणस्य संवत्सरातीतस्य गुड़स्य तुलामेकीकृत्य घृतभाजनस्थं यवेषु यवराशिमध्ये मासं त्रिंशद्दिनं निदध्यात् । जातं तदरिष्टं तान् हृत्पाण्डुरोगादीन् रोगान् निहन्ति ॥ २७ ॥

फलत्रिकाद्यरिष्टः ।

गङ्गाधरः—ये चार्शसामित्यादि । ये चारिष्टा अर्शसां पाण्डुविकारिणाञ्चारिष्टाः प्रोक्तास्तेऽप्यरिष्टाः शोफिषु हिता भवन्ति ॥ २८ ॥

गङ्गाधरः—इत्यरिष्टानुक्त्वा शोफे चूर्णमाह—कृष्णेत्यादि । कृष्णा पिप्पली, अजाजी जीरकम् । कृष्णादिमुस्तान्तं दशद्रव्यं चूर्णं कृत्वा सुखोष्णतोयेन

यवराशौ । क्षौद्रघृतप्रदिग्धे कुम्भे कृत्वा मासं स्थाप्यमिति ज्ञेयम् । किंवा क्षौद्रघृतप्रलिप्तसुगन्धे भाजने कृत्वा पचेत् । षड् जठराणां भेषजासाध्यच्छिद्रोदकौ वर्ज्जयित्वा ॥ २६ ॥

चक्रपाणिः—फलत्रिकमित्यादौ द्विप्रस्थे त्रिफलादीनां चतुर्गुणं जलं दत्त्वा पादावशेषः कषायान्तरोक्तोऽपि आसवान्तरे इष्टत्वात् ज्ञेयः । चूर्णीकृतमिति कषायार्थं जर्ज्जरीकृतम् । अन्ये तु चूर्ण एव द्रोणार्द्धं परं जलं ददति । किंवा कुड़वमानत्वं चूर्णस्य देयम्, तेन द्विरंशं क्षौद्रमिति द्विकुड़वं षोड़शपलमिति यावत् ॥ २७ । २८ ॥

हन्यात् त्रिदोषं चिरजञ्च शोफं कल्कश्च भूनिम्बमहौषधाभ्याम् ।
अयोरजस्त्र्यूषणयावशूकं चूर्णञ्च पीतं त्रिफलारसेन ॥ २९ ॥
क्षारद्वयं स्याल्लवणानि चत्वार्य्ययोरजो व्योषफलत्रिके च ।
सपिप्पलीमूलविडङ्गसारं मुस्ताजमोदामरदारुविल्वम् ॥
कलिङ्गका चित्रकमूलपाठे यष्ट्याह्वयं सातिविषं पलांशम् ।
सहिङ्गुकर्षन्तु सुसूक्ष्मचूर्णं * द्रोणं तथा मूलकशुण्ठकानाम् ॥
स्याद् भस्मनस्तत्सलिलेन साध्यमालोड्य यावद्घनमप्रदग्धम् ।
स्त्यानं ततः कोलसमान्तु मात्रां कृत्वा सुशुष्कां विधिनोपयुञ्ज्यात् ॥
प्लीहोदरश्वित्रहलीमकार्शः-पाण्डामयारोचकशोषशोफान् ।
विसूचिकागुल्मगराश्मरीश्च स श्वासकासान् प्रणुदेत् सुकष्टान्॥३०

इति क्षारगुड़िका ।

पीतं त्रिदोषं शोफं हन्यात् । भूनिम्बमहौषधाभ्यां कल्कश्च सुखतोयपीतस्त्रिदोषं शोफं निहन्यात् । अयोरज इत्यादि । अयोरजो मारितपुटितलौहं पञ्चद्रव्यचूर्णं त्रिफलारसेन पीतं हन्यात् त्रिदोषमित्याद्याशीः ॥ २९ ॥

गङ्गाधरः—क्षारद्वयमित्यादि । मूलकशुण्ठकानां शुष्कमूलकानि दग्ध्वा तेषां भस्मनो द्रोणं द्वात्रिंशच्छरावमष्टगुणे तोये पक्त्वा चतुर्थांशशेषितं वस्त्रे पुनरेकविंशतिवारं परिस्राव्य तत्सलिलेन क्षारद्वयादीनां प्रत्येकं पलांश सुसूक्ष्मचूर्णं घृतभृष्टहिङ्गुचूर्णकर्षसहितमालोड्य साध्यं, तावत् पक्तव्यं यावत् घनञ्च अप्रदग्धञ्च स्यात् । ततः स्त्यानं घनं तत् कोलसमां मात्रां गुड़िकां कृत्वा सुशुष्कां विधिना उपयुञ्ज्यात् । प्लीहेत्याद्याशीः । यस्तु क्षारोदकं पक्त्वा घनीभूते क्षारद्वयादिकं प्रक्षिप्य गुड़िकां कृत्वा व्यवहरति, तदसङ्गतम् ;—तत् सलिलेन साध्यमालोड्येति वचनात् । "सौवर्च्चलं सैन्धवञ्च विड़मौद्भिदमेव च । चतुर्लवणमत्र स्याज्जलमष्टगुणं मतम् । पानीयो यस्तु गुल्मादौ तं वारानेक-

चक्रपाणिः—पिप्पल्याद्य चूर्ण—प्रत्येकं मिलितं वा । त्रिदोषमिति वातादिभिर्जनितम् इति ज्ञेयम् । न चात्र त्रिदोषस्यासाध्यत्वं युक्तम् ॥ २९ ॥

चक्रपाणिः—चत्वारि लवणानि सामुद्रवर्ज्जं दीर्घञ्जीवितीयोक्तानि । अत्र शुष्कचूर्णम् इति सूक्ष्मचूर्णं ग्राह्यम् । अत्र जलमानमपि चूर्णचतुर्गुणं देयम् । स्त्यानमिति घनम् ॥ ३० ॥

* सहिङ्गुकर्षं त्वणुशुष्कचूर्णमिति चक्रानुमतः पाठः ।

**प्रयोजयेदार्द्रकनागरं वा तुल्यं गुडेनार्द्धपलाभिवृद्ध्या ।**
**मात्रा परं पञ्च पलानि मासं जीर्णे पयो यूषरसांश्च भक्तम् ॥**
**गुल्मोदरार्शःश्वयथुप्रमेहान् कासप्रतिश्यायालसकाविपाकान् ।**
**सकामलाशोषमनोविकारान् श्वासं कफञ्चैव जयेत् प्रयोगः ॥३१**

गुडार्द्रकप्रयोगः ।

**रसस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसान्नमद्यात् ।**
**शिलाह्वयश्च त्रिफलारसेन हन्यात् त्रिदोषं श्वयथुं प्रसह्य ॥ ३२ ॥**

शिलाजतुप्रयोगः ।

विंशतिम् । स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे” । इति । नायं क्षारः पानीयः ॥ ३० ॥　　क्षारगुडिका ।

गङ्गाधरः—प्रयोजयेदित्यादि । आर्द्रकनागरम् आर्द्रकमशुष्कं नागरं शुष्कं शृङ्गवेरमित्येवं नार्थः । किन्तु आर्द्रकनागरमार्द्रकशृङ्गवेरं वर्षातीतगुडेन तुल्यं द्रव्यं प्रथमदिनमर्द्धपलं प्रयोजयेदुत्तरोत्तरदिनेष्वर्द्धपलाभिवृद्ध्या मात्रा पञ्चपलानि भवति दशमदिने, ततः प्रतिदिनं पञ्चपलमात्रां मासं यावत् प्रयोजयेत् भक्षेत । औषधे जीर्णे सति परं पयो मुद्गादियूषग्राम्यानूपमांसभिन्नमांसरसान् भक्तञ्च प्रयोजयेन्न त्वन्यभक्तम् । शेषार्थः । गुडार्द्रकप्रयोगः ॥ ३१ ॥

गङ्गाधरः—रस इत्यादि । आर्द्रनागरस्य शृङ्गवेरस्य रसस्तथार्द्धपलाभिवृद्ध्या पञ्च पलानि मात्रा भवतीत्येवं मासं यावत् पेयः । अथास्मिन् जीर्णे पयसान्नमद्यात् । एष आर्द्रकरसप्रयोगः । शिलाह्वयश्च शिलाजतुसंज्ञं द्रव्यं त्रिफलारसेन दोषबलमवेक्ष्य प्रयुक्तं त्रिदोषं श्वयथुं प्रसह्य निहन्यात् ॥ ३२ ॥

शिलाजतुप्रयोगः ।

चक्रपाणिः—आर्द्रकनागरमित्यशुष्कनागरम् । अर्द्धपलाभिवृद्धिश्च इह गुडनागराभ्यां ज्ञेया । अन्यथा केवलार्द्रकवृद्ध्या पञ्चपलमाने गुडेन समं दशपलतायां भूरिदोषाग्निवधादिदोषकारकं स्यात् । अर्द्धपलादारभ्य प्रतिदिनमर्द्धपलवृद्ध्या दशभिर्दिनैः पञ्चपलं भवति । ततस्तु पञ्चपलस्य यावन्मासमुपयोगः ॥ ३१ ॥

चक्रपाणिः—रसस्तथैवेत्यादौ पूर्वयोगवत् अर्द्धपलाभिवृद्धिः । गुडयुक्तत्वञ्च इत्यादि सर्वं तथैवेति पदेन गृह्यते ॥ ३२ ॥

द्विपञ्चमूल्यास्तु पचेत् कषाये कंसेऽभयानाञ्च शतं गुड़ाच्च।
लेहे सुसिद्धेऽथ विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपास्थिते च॥
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकां ततः प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम्॥
श्वासज्वरारोचकमेहगुल्म-प्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्त-वैवर्ण्यमूत्रानिलशुक्रदोषान्॥ ३३॥

कंसहरीतकी।

गङ्गाधरः—द्विपञ्चमूलीत्यादि। द्विपञ्चमूली प्राधान्यादिह दशमूली। तस्या अष्टशरावे कंसे आढ़के कषाये क्रियमाणेऽभयानां गुड़कशतमेकञ्च पोट्टले बद्धा क्षिप्त्वा पचेत् चतुर्थांशावशेषे त्वाढ़के कषाये वस्त्रपूते तदभयाशतं छित्त्वा मध्यतोऽस्थीनि आहृत्य प्रक्षिप्य वर्षातीतगुड़ाच्च शतं पलानि दत्त्वालोड्य पचेत्। लेहे सुसिद्धे व्योषं त्रिसौगन्ध्यचूर्णं मिलित्वा प्रस्थार्द्धमात्रं प्रत्येकं दशमाषकाधिकपलमानं यावशूकात् किञ्चिच्च कर्षमानं विनीयावतारयेत् उपास्थिते च सुशीते मधुनः प्रस्थार्द्धमात्रं विनीय तत एकां हरीतकीं ततश्च लेहात् शुक्तिमर्द्धपलं प्राश्य श्वयथुं विनिहन्तीत्याद्याशीः। यस्त्वेनां कंसहरीतकीं व्याख्याय प्रतिसंस्कृत्य दशमूलीहरीतकीतिनाम्नोक्ता तत्र प्रमादेन व्योषादीनां प्रस्थार्द्धमात्रमित्यनेन अन्वयं न बद्ध्वा तेषां मानमनुक्तं मत्वा पलादिमानं मानानुक्तेरुक्तम्। यस्त्वपि दशमूलीहरीतकीवचनं मन्यते स पुनः कंसहरीतक्याः पृथग्दशमूलीहरीतकीति अवश्यं ब्रूयात्॥ ३३॥ कंसहरीतकी।

चक्रपाणिः—द्विपञ्चेत्यादौ निर्दिष्टत्वात् कंसः क्वाथ्याद् भवति तावन्मानं दशमूलं चतुःषष्टिपलं ग्राह्यम्। अन्ये तु द्विपञ्चमूलस्य तुला कषाय इति। अभयानाञ्च शतम्। व्योषत्रिसौगन्ध्ययोः माननिर्देशेन इहैवोक्तचूर्णमानानुसारेण मानं ज्ञेयम्। अगस्त्यहरीतक्यां गुड़तुलायां पिप्पलीचूर्णपलचतुष्टयमित्युक्तम्। तथा च्यवने मत्स्यण्डिकातुलायां पिप्पलीचूर्णपलद्वयमुक्तम्। तदिहापि गुड़शते व्योषस्य कटुत्रयस्य पलचतुष्टयं तथा च्यवने चातुर्जातकस्य गन्धाढ्यस्य पलमुक्तम्। तदनुसारेणेह द्विपलं त्रिसौगन्ध्यम्। किञ्चिच्छब्दस्य अल्पवचनत्वात् क्षारनागरादिचूर्णानां कर्षमानं ज्ञेयम्। केचित् तु किञ्चिच्छब्दं कर्षपर्यायं वदन्ति तन्त्रान्तरप्रत्ययात्। त्रिसौगन्ध्यस्य प्रत्येकं कर्षमानत्वं ज्ञेयम् दूषण एव। क्षाराणान्तु प्रत्येकं पलमुक्तम्। "दशमूलकषायस्य कंसे पथ्याशतं गुड़ात्। तुलां पचेत् ततः दद्याद् व्योषक्षारचतुःपलम्। त्रिसुगन्धस्य कर्षांशं प्रस्थार्द्धं मधुनो हिमे" इत्यादि॥ ३३॥

पटोलमूलामरदारुदन्ती-त्रायन्तिपिप्पल्यभयाविशालाः।
यष्ट्याह्वयं तिक्तकरोहिणी च सचन्दना स्यान्निचुलानि दार्व्वी॥
कर्षोन्मितैस्तैः क्कथितः कषायो घृतेन पेयः कुडवेन युक्तः।
विसर्पदाहज्वरसन्निपात-तृष्णाविषाणि श्वयथुञ्च हन्ति॥ ३४॥
यमानिकाचित्रकधान्यपाठाः * सदीप्यकत्र्यूषणवेतसाम्लाः।
विल्वात् फलं दाड़िमयावशूके सपिप्पलीमूलमथापि चव्यम्॥
पिष्टाक्षमात्राणि जलाढ़केन पक्त्वा घृतप्रस्थमथ प्रदद्यात्।
अर्शांसि गुल्मं श्वयथुञ्च कृच्छ्रं निहन्ति वह्निञ्च करोति दीप्तम्॥३५
पिबेद् घृतञ्चाष्टगुणाम्बुसिद्धं सचित्रकक्षारमुदारवीर्य्यम्।
कल्याणकं वापि सपञ्चगव्यं तिक्तं महद् वाप्यथ तिक्तकं वा॥३६

गङ्गाधरः—पटोलेत्यादि। पटोलमूलादीनि दार्व्व्यन्तानि द्वादश। तैः प्रत्येकं कर्षोन्मितैर्मिलित्वा द्वादशकर्षैश्चतुर्व्विंशतिपलजले पक्त्वा चतुर्थांशावशेषः षट्पलमितः क्कथितः कषायः कुड़वेन चतुःपलमितेन घृतेन युक्तः शोथिना पेयो यथाग्निबलम्। विसर्पेत्याद्याशीः॥ ३४॥

गङ्गाधरः—यमानिकेत्यादि। वेतसाम्लोऽम्लवेतसः। विल्वादामं फलम्। दाड़िमस्य फलत्वक्। यमानिकादीनि चव्यान्तानि चतुर्द्दश कल्कीकृत्य जलाढ़केन घृतप्रस्थं पक्त्वा प्रदद्यात्। अर्शांसीत्याद्याशीः॥ ३५॥ यमानिकादिघृतम्।

गङ्गाधरः—पिबेदित्यादि। सचित्रकक्षारमिति द्रव्यं कल्कीकृत्याष्टगुणेऽम्बुनि सिद्धं पक्कमुदारवीर्य्यं शोथी पिबेत्। (चित्रकघृतम्)।०। उन्मादोक्तं कल्याणकं घृतमथवा पञ्चगव्यघृतमथवा महातिक्तकघृतमथवा तिक्तकघृतं शोथी पिबेदिति पूर्व्वेणान्वयः॥ ६॥

चक्रपाणिः—पटोलमूलेत्यादौ काथ्यद्रव्यपलत्रयम् अष्टगुणजलपरिभाषया क्कथनीयम्। ततश्चतुर्भागावशेषेण षट्पलमानः कषायो भवति। उक्तं हि "कर्षादौ तु पलं यावद् दद्यात् षोड़शकं जलम्। ततश्च कुडवं यावत् तोयमष्टगुणं भवेत्" इति॥ ३४॥

चक्रपाणिः—सचित्रकेत्यादौ विल्वात् पलमिति पठन्ति। तन्मते विल्वं पलमानं शेषन्तु कार्षिकम्॥ ३५। ३६॥

* "सचित्रका धान्ययवानि पाठाः सदीप्यकत्र्यूषवेतसाम्लाः" इति चक्रः। केचिदिदं चित्रकादि घृतं वदन्ति।

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं स्वादु विमथ्य तेन ।
तज्जं घृतं चित्रकमूलगर्भं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम् ॥
अर्शांसि सामानिलगुल्ममेहांस्तद्धन्ति दीप्तञ्च करोति वह्निम् ।
तक्रेण चाद्यात् सघृतेन तेन भोज्यानि सिद्धामथवा यवागूम् ॥३७

चित्रकघृतम् ।

जीवन्त्यजाजीशटिपौष्कराह्वैः सकारवीचित्रकविल्वमध्यैः ।
सयावशूकैर्बदरप्रमाणैर्वृक्षाम्लयुक्ता घृततैलभृष्टा ॥
अर्शोऽतिसारानिलगुल्मशोफ हृद्रोगमन्दाग्निहिता यवागूः ।
या पञ्चमूलैः-*-विधिनैव तेन सिद्धा भवेत् सा हि समा तयैव॥३८

गङ्गाधरः—क्षीरमित्यादि। चित्रकत्वचं पिष्ट्वा तेन घटेऽन्तरं लिप्ते क्षीरं दधिवीजं दत्त्वा स्थापयेत् तत् दधिभावमागतं मन्थानदण्डेन विमथ्य तज्जं घृतं चित्रकमूलं कल्कीकृत्य घृतगर्भे दत्त्वा तेन तक्रेण उद्धृतघृतशेषतक्रेण चतुर्गुणेन सिद्धं पक्वमग्र्यं श्वयथुघ्नमिति। अत्र कश्चित् तक्रमाणं नेच्छति यावतो दध्न उत्थितं यावद् घृतं तावद् घृतं तावता तक्रेण पादिकचित्रमूलकल्केन पचेदिति चाह। प्रयोगश्चास्यायम्। सघृतेनोत्तसिद्धेनोक्तेन घृतेन सहितेन तेन च तक्रेण भोज्यानि शोथी अद्यात्। अथवा तेन सिद्धेन घृतेन तेन च तक्रेण सिद्धां यवागूं मण्डपेयाविलेपीनामन्यतमामद्यात् ॥ ३७ ॥ चित्रकघृतम् ।

गङ्गाधरः—जीवन्तीत्यादि। जीवन्त्यादियावशूकान्तैरष्टभिर्बदरप्रमाणैः कोलप्रमाणैः कल्कैर्वा कषायैर्वाद्धंभृतैः मण्डपेयाविलेप्यन्यतमा यवागूर्वृक्षाम्ल-युक्ताम्लकरणोपयुक्ततिन्तिडीफलाम्ला घृततैलभृष्टा अर्शोऽतिसारादिहिता। या यवागूः पञ्चभिः पञ्चमूलैः तेनैव विधिना कल्कैरर्द्धभृतैः कषायैर्वा तेनैव विधिना वृक्षाम्लयुक्ता घृततैलभृष्टा च सा तयैव समा अर्शआदिपूर्व्वोक्तरोग-हिता भवेत् ॥ ३८ ॥

चक्रपाणिः—दध्यागतमिति दधिभावेन परिणतम्। तेनेति यथोक्तदधिमथनजातेन तक्रेण ॥ ३७

चक्रपाणिः—जीवन्त्यादौ बदरप्रमाणैरिति द्विशाणिकैः। विधिनैव तेनेत्यत्र बदरमानत्वं द्रव्याणां ज्ञेयम् ॥ ३८ ॥

* या पञ्चकोलैरिति पाठान्तरम् ।

कुलत्थयूषश्च सपिप्पलीको मौद्गस्तु सत्र्यूषणयावशूकः ।
रसांस्तथा विष्किरजाङ्गलानां सकूर्म्मगोधाशिखिशल्लकानाम् ॥
सुवर्च्चला * गृञ्जनकं पटोलं सवायसीमूलकवेत्रनिम्बम् ।
शाकार्थिनां शाकमिति प्रशस्तं भोज्ये पुराणश्च यवः सशालिः॥३९
आभ्यन्तरं भेषजमुक्तमेतद् वहिर्हितं यच्छृणु तद् यथावत् ।
स्नेहान् प्रदेहान् परिषेचनानि स्वेदश्च वातप्रबलस्य कुर्य्यात् ॥४०
शैलेयकुष्ठागुरुदारुकौन्ती-त्वक्पद्मकैलाम्बुपलाशमुस्तैः ।
प्रियङ्गुथौणेयकहेममांसी-तालीशपत्रप्लवपत्रधान्यैः ॥
श्रीवेष्टकध्यामकपिप्पलीभिः पृक्कानखैश्चैव यथोपलाभम् ।
वातान्वितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥४१॥

शैलेयादितैलप्रदेहौ ।

गङ्गाधरः—कुलत्थेत्यादि । सपिप्पलीकः पिप्पल्याः कल्केन कषायेण वा सिद्धः कुलत्थयूषः । सत्र्यूषणयावशूको मौद्गो यूषस्त्रिकटुयवक्षाराणां कल्केन कषायेण वा सिद्धः । विष्किरादीनां मांसरसाश्च शोफिनो हिताः । अजलत्वेऽपि कूर्म्मस्यापवादोऽयम् । शल्लकः शेजाड़ इति ख्यातः । सुवर्च्चलेत्यादि । सुवर्च्चला सूर्य्यमुखी, वायसी काकमाची, मूलकं वालमूलं न तु वृहन्मूलम् । शुष्क-वृहन्मूलं वा । शाकार्थिनां शोफिनामिदं शाकम् । भोज्ये तु यवश्च पुराणः शालिश्च पुराण इति ॥ ३९ ॥

गङ्गाधरः—आभ्यन्तरमित्यादि । शोफिनामाभ्यन्तरं भेषजमुक्तम् अतः परं वहिर्हितं भेषजं यथावत् तच्च शृण । वातप्रबलस्य शोथस्य स्नेहादीन् कुर्य्यात् ॥ ४०

गङ्गाधरः—स्नेहप्रदेहावाह—शैलेयेत्यादि । पद्मकं पद्मकाष्ठं, पलाशः शटी, थौणेयकं ग्रन्थिपर्णं, छान्दसत्वात् सकारलोपः । हेम नागकेशरं, प्लवः कैवर्त्त-

चक्रपाणिः—सकूर्म्मकेत्यादौ कूर्म्मविधानं मत्स्यमांसनिषेधेऽपि अपवादरूपं ज्ञेयम् । शल्लकः शललो-( सजारु )-संज्ञः । सुवर्च्चिका सूर्य्यावर्त्तः । गृञ्जनकं रसोनकः किंवा गृञ्जनकं शोभाञ्जनम् । वायसी काकमाची । वहिर्हितमिति भेषजम् ॥ ३९ । ४० ॥

चक्रपाणिः—शैलेयेत्यादौ पलाशः शटी । तैलं सिद्धम् । सुपिष्टैरिति शैलेयादिभिः सुपिष्टैस्तैलं सिद्धम् उशन्ति, तथा तैरेव सुपिष्टैः प्रदेहं कथयन्ति ॥ ४१ ॥

* सुवर्च्चलेत्यत्र सुवर्च्चिकेति चक्रः ।

जलैस्तथैरण्डवृषार्कशिग्रु-काश्मर्य्यपत्राज्र्जकजैश्च सिद्धः।
स्विन्नः कवोष्णै रवितप्ततोयैः स्नातश्च गन्धैरनुलेपनीयः॥ ४२॥
सवेतसाः क्षीरवतां द्रुमाणां त्वचः समाञ्जिष्ठलतामृणालाः।
सचन्दनाः पद्मकबालकौ च पित्ते प्रदेहस्तु सतैलपाकः॥
आक्तस्य तैनाम्बु रविप्रतप्तं सचन्दनं साभयपद्मकञ्च।
स्नाने हितं क्षीरवतां कषायः क्षीरोदकं चन्दनलेपनञ्च॥ ४३॥

मुस्तकं, पत्रं तेजपत्रं, पृक्का पिङ्ग इति लोके। नखो व्याघ्रनखो हिंस्रा। एषां यथोपलाभं गृहीत्वा तैलपादिकं कल्कीकृत्य चतुर्गुणजले सिद्धं पक्वं तैलं वातान्विते शोथेऽभ्यङ्गमुशन्ति। पिष्टैरप्येतैर्वातान्विते प्रदेहमुशन्ति। शैलेयादि-तैलप्रदेहौ॥ ४१॥

गङ्गाधरः—जलैरित्यादि। एरण्डादिकाश्मर्य्यान्तानां पत्राणि, तथाज्र्जकस्य पर्णाशस्य मूलादि, तेभ्यो जातैः पक्वैः कवोष्णैर्जलैः स्विन्नः कोष्ठं पूरयित्वा तन्मध्येऽवगाहनं कुर्य्यात् यावत् स्विन्नः स्यात् घर्म्मागमः स्यात्। तत उत्थाय रवितप्ततोयैः स्नातश्च वातोत्थितशोथी गन्धैरुशीरादिभिरनुलेपनीयः॥ ४२॥

गङ्गाधरः—सवेतसा इत्यादि। पैत्ते शोथे क्षीरवतां वटोडुम्बराश्वत्थप्लक्ष-कपीतनानां द्रुमाणां त्वचः सवेतसा वेतसतरुत्वक् माञ्जिष्ठा लता चोशीरश्च रक्तचन्दनं पद्मकाष्ठं बालकं सर्व्वं समभागेन पिष्ट्वा प्रदेहः कार्य्यः। तथा सर्व्वं कल्कीकृत्य तेषां क्वाथे च चतुर्गुणे तैलपाकः कार्य्यः। इति स्नेहप्रदेहौ पैत्ते।

परिषेचनमाह—आक्तस्येत्यादि। तेन सवेतसादिपक्वतैलेनाक्तस्याभ्यक्तस्य पैत्तिकशोफिनः स्नाने घृष्टचन्दनपेषितोशीरपद्मकाष्ठयुक्तमम्बु रविकरतप्तं हितम्। तथा क्षीरवतां द्रुमाणां त्वचां कषायश्च तस्य स्नाने हितः। क्षीरोदकञ्च स्नाने हितम्। स्नातस्य तस्य श्वेतचन्दनघृष्टानुलेपनञ्च हितमिति। स्वेदस्तु पैत्ते नेष्ट इति नोक्तः॥ ४३॥

चक्रपाणिः—रविणा सूर्य्येण तप्ततोयैश्च स्नातः। गन्धैरगुर्व्वादिभिरालेपनीयः॥ ४२॥

चक्रपाणिः—सवेतसा इत्यादिना पैत्ते प्रदेहमाह। क्षीरिद्रुमा अश्वत्थादयः। तैलपाक इति मञ्जिष्ठादिभिरेव क्वाथकल्केन स्नेहः कर्त्तव्यः। सचन्दनमित्यादौ चन्दनोशीरं पद्मकं शुभमित्यर्थः॥ ४३॥

कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च ॥ ४४ ॥
विभीतकानां फलमध्यलेपः सर्व्वेषु दाहार्त्तिहरः प्रदिष्टः।
यष्ट्याह्वमुस्तैः सकपित्थपत्रैः सचन्दनैस्तत्पिड़कासु लेपः ॥४५॥
रास्नावृषार्कत्रिफलाविड़ङ्गं शिग्रुत्वचो मूषकपर्णिका च।
निम्बार्ज्जकौ व्याघ्रनखः समूर्व्वा सुवर्च्चला तिक्तकरोहिणी च॥
सकाकमाची वृहती सकुष्ठा पुनर्नवा नागरचित्रकौ च।
उन्मर्द्दनं शोफिषु मूत्रपिष्टं शस्तस्तथा मूलकतोयसेकः॥ ४६ ॥
शोफास्तु गात्रावयवाश्रिता ये ते स्थानदूष्याकृतिनामभेदात्।
शोथा वहुत्वादतिवृत्तसंख्यास्तेषान्तु कांश्चिद् गदतो निवोध ॥४७

गङ्गाधरः—कफे त्वित्यादि। कफजे शोथे कृष्णा पिप्पली, पुराणपिण्याकः संवत्सरातीतसर्षपखलिः, शिग्रुत्वक्, उमा मसिना, एषां प्रलेपः। कुलत्थशुण्ठ्योर्जलं गोमूत्रञ्च मिश्रयित्वा कफशोफिनः सेकोऽत्र स्नानं ततोऽनुलेपनञ्च चण्डागुरुभ्याम्। चण्डः पिड़ङ्ग इति ख्यातः॥ ४४ ॥

गङ्गाधरः—विभीतकेत्यादि। विभीतकानां फलानां मध्यं मज्जा तदनुलेपस्तु सर्व्वेषु वातजादिषु शोथेषु दाहार्त्तिहरः। यष्ट्याह्वादिभिर्लेपः शोथे पिड़कासु प्रदिष्टः॥ ४५ ॥

गङ्गाधरः—रास्नेत्यादि। मूषिकपर्णिका द्रवन्ती दन्तीभेदः। अर्ज्जकः श्वेततुलसी। व्याघ्रनखो हिंस्रा। सुवर्च्चला सूर्य्यमणिः। रास्नाद्येकविंशतिद्रव्यं गोमूत्रपिष्टं सर्व्वेषु शोफेषु उन्मर्द्दनं शस्तं, तथा शुष्कमूलकतोयेन सेकः शस्तः॥ ४६ ॥

गङ्गाधरः—इति शोथरोगचिकित्सिते उत्सेधसामान्यादन्येषां शोफविशेषाणामत्र चिकित्सामाह—शोफास्त्वित्यादि। गात्रावयवाश्रिता ये शोफास्ते

चक्रपाणिः—सिकता वालुका। शिग्रोस्त्वक्। अनुलेपनं स्नानानन्तरमनुलेपनम्॥ ४४ ॥

चक्रपाणिः—तत्पिड़कास्विति दाहादियुक्तपिड़िकासु॥ ४५ ॥

चक्रपाणिः—रास्नेत्यादौ सर्व्वशोथोन्मर्द्दनो सेको ब्रूते। व्याघ्रनखा नखी। मूषिकपर्णी पुत्रापत्रेति ख्याता॥ ४६ ॥

चक्रपाणिः—शोथास्त्वित्यादौ दूष्यां गलादिः। आकृतिराकारो दीर्घवर्णादिः। नामभेदस्तु

दोषास्त्रयः स्वैः कुपिता निदानैः कुर्व्वन्ति शोथं शिरसः सुघोरम्।
अन्तर्गले घुर्घुरकान्वितश्च शालूकमुच्छ्वासनिरोधकारि ॥
गलस्य सन्धौ चिबुके गले वा सदाहरागः श्वसनोच्छ्वसोग्रः *।
शोथो भृशार्त्तिस्तु वितानिका स्याद्धन्याद् गले चेद् वलयीकृता सा॥
स्याद् विद्रधिर्मांसविदाहरागः पाकान्वितस्तालुनि स त्रिदोषः।
जिह्वोपरिष्टादुपजिह्विका स्यात् कफादधस्तादधिजिह्विका च ॥
यो दन्तमांसे स तु रक्तपित्तात् पाको भवेत् सोपकुशः प्रदिष्टः।
स्याद् दन्तविद्रध्यपि दन्तमांसे शोफः कफाच्छोणितसश्चयोत्थः॥

स्थानभेदाद् दूष्यभेदादाकृतिभेदान्नामभेदाद् बहुत्वात् अतिवृत्तसङ्ख्याः सङ्ख्यातिवर्त्तिनः। तेषां कांश्चिद् गदतो मत्तो निबोधाग्निवेश ॥ ४७ ॥

गङ्गाधरः दोषास्त्रय इत्यादि। त्रयो दोषाः शिरसः सुघोरं शोथं कुर्व्वन्ति। तथा त्रयो दोषा अन्तर्गले घुर्घुरशब्दकारि उच्छ्वासनिरोधकारि शालूकं नाम शोथं कुर्व्वन्ति ॥०॥ गलस्य सन्धावित्यादि। गलस्य सन्धौ वा चिबुके वा गले वा यः शोथो दाहरागान्वित उग्रश्वासोच्छ्वासः भृशार्त्तिकारी सा वितानिका नाम स्यात्। सा चेद् गले वलयीकृता गोलाकारा स्यात् तदा हन्यात् ॥०॥ स्याद् विद्रधिरित्यादि। तालुनि मांसविदाहरागः पाकान्वितो यो विद्रधिः स्यात् स त्रिदोषस्त्रिदोषजातः ॥०॥ जिह्वोपरिष्टाद् यः शोथः स्यात् सा उपजिह्विका नाम स्यात् कफात्। जिह्वाया अधस्ताच्च कफाद् यः शोफः साधिजिह्विका नाम ॥०॥ यो दन्तेत्यादि। यो दन्तमांसे शोथः स्यात् स तु रक्तपित्ताज्जायते, पाकश्च तस्य भवेत् स उपकुशो

शल्यादिषु विस्तरेणोक्तोऽपि कण्ठशालूक इत्यादिना लेशेनाभिहितः। एवं स्थानादिभेदकृतादतिबहुत्वात् बहुसंख्या ज्ञेया इति योज्यम् ॥ ४७ ॥

चक्रपाणिः शिरसः सुघोरानित्यत्र लक्षणं त्रिदोषकृतम्। नाम च शिरःशोथे विज्ञेयम्। तन्त्रान्तरे ह्ययमप्युपशीर्षकमित्युक्तम्। घुर्घुरिकान्वितमिति घुर्घुराकारशब्देन वेदनया वा युक्तम्। गलस्य सन्धाविति गलवदनसन्धौ। श्वसनासु इति श्वासवहनाडीषु। विड़ालिकायां दोषाश्रयः कारणत्वेनानुवर्त्तते। वलयीकृता स्यादिति कृत्स्नगलवेष्टकत्वेन वलयाकारः स्यात्।

* "श्वसनासु चोग्रः" इति चक्रपाठः।

**गलस्य पार्श्वे गलगण्ड एकः स्याद् गण्डमाला बहुभिस्तु गण्डैः ।**
**साध्याः स्मृताः पीनसपार्श्वशूल-कासज्वरच्छर्दियुतास्त्वसाध्याः॥४८**
**तेषां सिराकायशिरोविरेका धूमः पुराणस्य घृतस्य पानम् ।**
**स्याल्लङ्घनं वक्त्रभवेषु चापि प्रघर्षणं स्यात् कवलग्रहश्च ॥ ४९ ॥**
**अङ्गैकदेशेष्वनिलादिभिः स्यात् स्वरूपधारी स्फुरणं सिराभिः ।**
**ग्रन्थिर्महान् मांसभवस्त्वनर्त्तिर्मेदोभवः स्निग्धतमश्चलश्च ॥५०॥**

नाम प्रदिष्टः । दन्तमांसे शोणितसम्भवोत्थः कफाद् यः शोथो भवेत् सा दन्तविद्रधी स्यात् ॥ ० ॥ गलस्येत्यादि । गलस्य पार्श्वे यः शोथ एक एव स्यात् स गलगण्डो नाम स्यात् ॥ ० ॥ गलस्य पार्श्वे बहुभिस्तु गण्डैर्गण्डमाला स्यात् । ता गण्डमालाः साध्याः स्मृताः । पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्तु असाध्याः ॥ ४८ ॥

गङ्गाधरः—एषां शालूकादीनां चिकित्सामाह—तेषामित्यादि । तेषां शालूकविद्रध्युपजिह्वाधिजिह्वोपकुशदन्तविद्रधीगलगण्डगण्डमालाख्यानां शोथानां सिराविरेकः सिरावेधेन रक्तमोक्षणं, कायविरेको वमनविरेचन, शिरोविरेको नस्तःकर्म्मविशेषः । वक्त्रभवेषु शोथेषु लङ्घनं प्रघर्षणं तत्तद्दोषहरद्रव्यस्य चर्णेन स्वरसेन तु कवलग्रहः ॥ ४९ ॥

गङ्गाधरः—अङ्गैकदेशेष्वित्यादि । अङ्गस्य शरीरस्यैकदेशेषु क्वचित् क्वचित् स्थानेऽनिलादिभिर्व्यस्तैः समस्तैर्महान् ग्रन्थिः स्यात् ; स्वरूपधारी येन दोषेण स्यात् तत्तद्दोषस्य स्वस्वलक्षणधारी स्यात् । तत्र वातिकः पैत्तिकः श्लैष्मिकः सान्निपातिकः स्वस्वलक्षणधारी । सिराभिर्जाते ग्रन्थौ स्फुरणं स्यात्, मांसभवस्तु ग्रन्थिर्महाननर्त्तिः स्यात् । मेदोभवो ग्रन्थिः स्निग्धतमश्चलश्च । इति सप्तविधो ग्रन्थिः ॥ ५० ॥

सुश्रुतेऽप्युक्तम् । 'तत्र सर्व्वथैवाप्रतिवार्य्यवीर्य्यं विवर्जनीयं वलयं वदन्ति' । इयञ्च त्रिदोषजापि रक्तपित्तात्मिका ज्ञेया । उपजिह्विकेह विशोषीयोक्तापि तत्रानुक्ताधिजिह्विकाप्रसङ्गेनोक्ता । साध्याः स्मृता इत्यादि पीनसादिरहिताः साध्याः । एते च साध्यासाध्यविभागादिभेदाः शिरःशोथादयः सर्व्वे एव ज्ञेयाः । सिरा इति सिराव्यधः । विशेषचिकित्सात्र सुश्रुते प्रतिपत्तव्या ॥ ४८ । ४९ ॥

चक्रपाणिः—अङ्गैकदेशेष्वित्यादिना ग्रन्थीनाह । स्वरूपधारीति वातेन वातलक्षणधारी, पित्तेन पित्तलक्षणधारी, कफेन कफलक्षणधारी । ग्रन्थिसंज्ञया ग्रन्थ्याकारत्वं दर्शयति । स्फुरणो वेपमानश्च

संशोधिते स्वेदितमश्मकाष्ठैः साङ्गुष्ठदण्डैर्विलयेदपक्वम्।
विपाट्य चोद्धृत्य भिषक् सकोषं शस्त्रेण दग्ध्वा व्रणवच्चिकित्सेत्॥
अदग्ध ईषत्परिशेषितश्च प्रयाति भूयोऽपि शनैर्विवृद्धिम्।
तस्मादशेषः कुशलैः समन्ताच्छेद्यो भवेद्द वीक्ष्य शरीरदेशान्॥
शेषे कृते पाकवशेन शीर्य्येदतः क्षतोत्थः प्रसरेद्द विसर्पन्।
उपद्रवं तं प्रविचार्य्य तज्ज्ञस्तैर्भेषजैः पूर्व्वतरैर्यथोक्तैः॥
निवारयेदादित एव यत्नाद्द विधानवित् स्वस्वविधिं विधाय।
ततः क्रमेणास्य यथाविधानं व्रणं व्रणज्ञस्त्वरया चिकित्सेत्॥५१

विवर्ज्जयेत् कुक्ष्युदराश्रितश्च
तथा गले मर्म्मणि संश्रितञ्च।

गङ्गाधरः—तेषां चिकित्सामाह—संशोधिते इत्यादि। ग्रन्थिमपक्वं पुरुषे वमनादिना यथार्हं संशोधिते स्वेदितं कृत्वा अश्मना काष्ठविशेषेण वलयाकारनिर्म्मलेनाङ्गुष्ठाङ्गुलिपीड़नेन वा दण्डैर्वा विलयेत् विलयं नयेत्। पक्वं विपाट्य पाटयित्वा शस्त्रेण सकोषं वास्तुपर्य्यन्तमुद्धृत्य दग्ध्वा व्रणवच्चिकित्सेत्॥ ०॥ अदग्ध इत्यादि। यद्ययं ग्रन्थिः सकोषश्छिन्नोऽपि न दह्यते तदा भूयोऽपि शनैर्वृद्धिं प्रयाति। यदि पुनरीषत्परिशेषितश्छिद्यते दह्यते च तदापि भूयोऽपि विवृद्धिं प्रयाति। तस्मात् कुशलैर्वैद्यैः शरीरदेशान् मर्म्मादिभेदेन वीक्ष्य समन्तादशेषो ग्रन्थिश्छेद्यो भवेत्। शेषे कृते छिन्ने पाकवशेन पाचयित्वा शीर्य्येत्। अतः क्षतोत्थः पुनर्विसर्पन् सन् प्रसरेत्। तमुपद्रवं तज्ज्ञो वैद्यः पूर्व्वतरैर्यो यो रोग उपद्रवः स्यात् तत्तद्रोगे यथोक्तैर्भेषजैः प्रविचार्य्य तत्तदुपद्रवस्य स्वस्वविधानं विधाय निवारयेत्। तत उपद्रवप्रशमनानन्तरं क्रमेणास्य ग्रन्थिरोगिणो व्रणं व्रणज्ञस्त्वरया चिकित्सेत्॥ ५१॥

गङ्गाधरः—अस्यासाध्यलक्षणमाह—विवर्ज्जयेदित्यादि। कुक्ष्युदराश्रितं

इत्यर्थः। मेदोभवे नार्तिर्भवति। महान् ग्रन्थिर्मांसभवो भवति। शोधित इति कृतशोधने पुरुषे। विलयेदिति विम्लापयेत्। सकोशमिति कोशवणम् उद्धृत्य ततो दग्ध्वा व्रणवत् चिकित्सेत्। असम्यगदग्धेऽपरिशोधिते च ग्रन्थौ दोषमाह। अदग्ध इत्यादि। स्वैर्भेषजैरिति विसर्पभेषजैः॥ ५० । ५१॥

स्थूलः खरश्चापि भवेद् विवर्ज्यो
यश्चापि बालस्थविराबलानाम् ॥ ५२ ॥
ग्रन्थ्यर्ब्बुदानाञ्च यतोऽविशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः।
ततश्चिकित्सेद् भिषगर्ब्बुदानि विधानविद् ग्रन्थिचिकित्सितेन ॥५३
ताम्रा समूला पिड़का भवेद् वा सा चालजी नाम परिस्रुताग्रा।
रोगः क्षतश्चर्म्मनखान्तरे स्यान्मांसास्रदूषी भृशशीघ्रपाकः ॥

ग्रन्थिं तथा गले मर्म्मणि च संश्रितं ग्रन्थिं विवर्ज्जयेत्। स्थूलः खरश्चापि ग्रन्थिर्विवर्ज्ज्यः स्यात्, यश्च ग्रन्थिर्बालस्थविराबलानां भवति सोऽपि विवर्ज्ज्यः स्यात्। इति ग्रन्थेरसाध्यलक्षणं न तु शोथानां ग्रन्थेः प्रकरणात्। कृशस्य रोगैरबलस्य यो भवेदित्यादिना पूर्व्वमेव शोथस्यासाध्यत्वसाध्यत्वलक्षणस्योक्तत्वात् ॥ ५२ ॥

गङ्गाधरः—अथार्ब्बुदचिकित्सामतिदेशेनाह—ग्रन्थ्यर्ब्बुदानाञ्च इत्यादि। ग्रन्थीनामर्ब्बुदानाञ्च यतः प्रदेशादिभिरविशेषस्ततो विधानविद् ग्रन्थिचिकित्सितेनार्ब्बुदानि चिकित्सेत् ॥ ५३ ॥

गङ्गाधरः अथ पिड़कामाह—ताम्रेत्यादि। समूला न या चलति प्रपीड़नेन सा समूला पिड़का। परिस्रुतमग्रं यस्या अलजी नाम सा पिड़का। यस्मिन् रोगे चर्म्मनखान्तरे नखचर्म्माभ्यन्तरे क्षतः स्याद् भृशशीघ्रपाकः स्यात्

चक्रपाणिः—विवर्ज्जयेदित्यादिनाऽसाध्यग्रन्थिभेदानाह ॥ ५२ ॥

चक्रपाणिः—अर्ब्बुदचिकित्सातिदेशार्थमाह—ग्रन्थ्यर्ब्बुदानामिति। अविशेष इव अविशेष इह ज्ञेयः। सुश्रुतेऽपि पृथक् ग्रन्थिलक्षणमुक्त्वाऽर्ब्बुदलक्षणमुक्तम्—"गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक् प्रदूष्य। वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम्। कुर्व्वन्ति मांसोच्छ्रयमत्यगाधं तदर्ब्बुदं शास्त्रविदो वदन्ति"। तस्मात् स्तोकविशेषे सत्यपि स्रावाद्यविशेषात् ग्रन्थिविशेषचिकित्सैवातिदिश्यतेऽर्ब्बुदे ॥ ५३ ॥

ज्वरान्विता वङ्क्षणकक्षजाया वर्त्तिर्निरर्त्तिः कठिनायता च ।
विदारिका सा कफमारुताभ्यां तासां यथादोषमुपक्रमः स्यात् ।
विस्रावणं पिण्डकयोपनाहाः पक्वेषु चैव व्रणवच्चिकित्सा ॥५४॥
विस्फोटकाः सर्व्वशरीरगास्तु स्फोटाः सदाहा ज्वरतर्षयुक्ताः ।
यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाभ्यां जनितास्तु कक्षाः ॥
याश्चापराः स्युः पिड़काः प्रकीर्णाः स्थूलाणमध्या अपि पित्तजास्ताः ।
क्षुद्रप्रमाणाः पिड़काः शरीरे सर्व्वाङ्गगाः सज्वरदाहतृष्णाः ।
कण्डूयुताः सारुचिसप्रसेका रोमान्तिकाः पित्तकफात् प्रदिष्टाः ॥
याः सर्व्वगात्रेषु मसूरमात्रा
मसूरिकाः पित्तकफात् प्रदिष्टाः ।

स रोगो मांसास्सदूषी चम्म नाम स्यात् ॥ ० ॥ ज्वरान्वितेत्यादि । या वर्त्तिरिव मूर्त्तिर्निरर्त्तिरर्त्तिहीना ज्वरान्विता वङ्क्षणे कक्षे वा जायते कठिना चायता च सा वर्त्तिर्विदारिका नाम कफमारुताभ्यां जायते । तासामलजजीमांसास्सदूषि-विदारिकाख्यानां शोथानां यथादोषमुपक्रमः स्यात् । तथा विस्रावणं शोणितस्य यवादीनां पिण्डिकया चोपनाहाः । एवं पक्वेषु व्रणवच्चिकित्सा स्यादिति ॥ ५४ ॥

गङ्गाधरः ये स्फोटाः सर्व्वशरीरगाः सदाहा ज्वरेण तर्षेण युक्तास्ते विस्फोटका नाम ॥०॥ यज्ञोपवीतेति । यथोपवीतिर्धार्य्यते तथा प्रभूताः पिड़का याः पित्तानिलाभ्यां जायन्ते ताः कक्षा नाम ॥०॥ याश्चापराः पिड़काः प्रकीर्णाः शरीरव्याप्ताः स्थूलाणमध्याः काश्चित् स्थूलाः काश्चिदण्व्यः काश्चिन्मध्यास्ता अपि पित्तजाताः पिड़का नाम ॥०॥ क्षुद्रप्रमाणाः पिडकाः शरीरे सर्व्वाङ्गगाः सज्वरदाहतृष्णाः कण्डूयुताः सारुचयः सप्रसेकाश्च पित्तकफाज्जातास्ता रोमान्तिका नाम प्रदिष्टाः ॥ ० ॥ याः पिडकाः सर्व्वगात्रेषु मसूरमात्राः

चक्रपाणिः चर्म्मनखान्तर इति चर्म्मनखसन्धौ । विदारिकेह कफवाताभ्यामित्युच्यते ; सुश्रुते विदारिका सा सर्व्वजेति पठिता, तेनेहापि कफवाताधिका हीनपित्ता च विज्ञेया । तेषामित्य-नेन विदारिकारोगान् प्रत्यवमृशति । विस्रावणमिति रक्तविस्रावणम् । पिण्डिकयेति पिण्डिका-स्वेदेन ॥ ५४ ॥

चक्रपाणिः—स्फोटा इह कुक्ष्योक्तस्फोटाः चिरस्थायिनः । यज्ञोपवीतप्रतिमा इति यज्ञोपवीत-

वीसर्पशान्तौ विहिता क्रिया या
तां तासु * कुष्ठे च हितां विदध्यात् ॥ ५५ ॥
वृद्धे- † -ऽनिलाद्यैर्वृषणे स्वलिङ्गै-
रन्त्रो निरेति प्रविशेन्मुहुश्च ।
मूत्रेण पूर्णं मृदु मेदसा चेत्
स्निग्धश्च विद्यात् कठिनश्च शोफम् ॥ ५६ ॥

विरेचनाभ्यङ्गनिरूहलेपाः पक्वेषु चैव व्रणवच्चिकित्सा ।
स्यान्मूत्रमेदःकफजं विपाट्य विशोध्य सीव्यं व्रणवच्च पक्वम् ॥ ५७

पित्तकफाज्जायन्ते ता मसूरिकाः प्रदिष्टाः । आसां विस्फोटकादीनां चिकित्सामाह—विसर्पेत्यादि । या क्रिया विसर्पशान्तौ विहिता तां क्रियां, कुष्ठे विहिता या क्रिया ताञ्च क्रियां, तासु विस्फोटककक्षापिड़कारोमान्तिकामसूरिकासु विदध्यात् ॥ ५५ ॥

गङ्गाधरः—वृद्ध इत्यादि । अनिलाद्यैः वृद्धे वृषणे उदरस्थः क्षुद्रोऽन्त्रः अनिलादीनां स्वलिङ्गैर्विशिष्टः सन् वृषणेऽण्डकोषे निरेति मुहुश्च प्रविशेदुदरम् इत्यन्त्रवृद्धिर्नाम ॥०॥ मूत्रेण पूर्णं मृदु च वृषणं फलकोषं मूत्रवृद्धिं नाम शोथं विद्यात् । मेदसा चेद् वृषणं वृद्धं स्यात् तदा तं शोफं वृषणं स्निग्धश्च कठिनश्च विद्यात् । इति षड्विधा वृद्धिर्वातपित्तकफान्त्रमूत्रमेदोजा ॥ ५६ ॥

गङ्गाधरः—वृद्धीनां चिकित्सामाह—विरेचनेत्यादि । अपक्वे विरेचनाभ्यङ्गनिरूहलेपाः । पक्वेषु चैव व्रणवच्चिकित्सा । तत्र विशेषमाह—स्यादित्यादि ।

व्याप्यस्थानमात्रव्यापकाः । स्फोटा एव कक्षा इति कक्षाशब्दाख्याः । प्रकीर्णा इति बहुविधजातिकाः । विसर्पेत्यादौ तेष्विति स्फोटकक्षामसूराख्येषु विदारिकान्तरोक्तेष्वित्यर्थः ॥ ५५ ॥

चक्रपाणिः—ब्रध्ने इत्यादौ वृषणे इति जातौ एकवचनं वृषणयोरपि ग्रहणम् । स्वलिङ्गैरिति वातलिङ्गैः । एवं पित्तलिङ्गेन पैत्तिकं कफलिङ्गेन कफजं, ब्रध्नं ज्ञेयमित्यर्थः । अन्त्रो निर्वृत्तिसह वृषणं प्रविशेदिति अन्त्रवृद्धिलक्षणम् । मूत्रेण तु यद् ब्रध्नं तत् पूर्णं मृदु च भवति । मेदसा तु कृतं स्निग्धं कठिनञ्च । एवं षड्विधं ब्रध्नमुक्तम् । तदिह पित्तजे एवान्तर्भावनीयम् ॥ ५६ ॥

चक्रपाणिः—विरेचनेत्यादिना सामान्यचिकित्सासूत्रमाह । मूत्रमेदःकफजानां वैशेषिकी चिकित्सोच्यते । विपाट्य विशोध्य च सीव्येत् । विपक्वं ब्रध्नं व्रणवदुपचर्य्य सीव्येदिति भावः ॥५७॥

* तासु इत्यत्र तेषु इति चक्रेण पठ्यते । † वृद्धे इत्यत्र ब्रध्ने इति चक्रः ।

क्रिमेस्तृणा-*-दिक्षणनव्यवाय-प्रवाहणात्युत्कटुकाश्वपृष्ठैः।
गुदस्य पार्श्वे पिड़का भृशार्त्तिः पाकप्रभिन्ना तु भगन्दरः स्यात् ॥५८
विरेचनञ्चैषणपाटनञ्च विशुद्धमार्गस्य च तैलदाहः।
स्यात् क्षारसूत्रेण सुपाचितस्य भिन्नस्य चास्य व्रणवच्चिकित्सा ॥५९
जङ्घासु पिण्डीषु पदोपरिष्टात् † स्यात् श्लीपदं मांसकफास्रदोषात्।
सिराकफघ्नश्च विधिः समग्रस्तत्रेष्यते सर्षपलेपनञ्च ॥ ६० ॥

मूत्रमेदःकफजं वृद्ध्याख्यं शोफं शस्त्रेण विपाट्य विशोध्य सीव्यं सीवनं कार्य्यं, विपक्वं चेद् व्रणवत् कार्य्यम् ॥ ५७ ॥

गङ्गाधरः—क्रिमेरित्यादि। क्रिमिः पिपीलिकादिः कीटस्तस्माद्दंशादिकारणः तृणादिक्षणनं तृणकण्टकादिना हननं प्रवाहणं कुन्थनम् अत्युत्कटकैरश्वपृष्ठैः गुदस्य पार्श्वे भृशार्त्तिः पिड़का स्यात् सा पाकेन प्रभिन्ना भगन्दरो नाम स्यात् ॥ ५८ ॥

गङ्गाधरः—अस्य चिकित्सामाह— विरेचनमित्यादि। भगन्दरे सर्व्वस्मिन विरेचनं, नाडीभावं गते एषणं शलाकया कृत्वा, पाटनं शस्त्रेण, ततो व्रणशोधनभेषजेन विशुद्धमार्गस्य पाटितभगन्दरव्रणस्य तप्ततैलेन दाहः। शस्त्रभीरूणामस्य नाडीभावमापन्नस्य क्षारसूत्रेण सुपाटितस्य तथा भिन्नस्य नाडीभावमनापन्नस्य चास्य भगन्दरस्य व्रणवच्चिकित्सा कार्य्या ॥ ५९ ॥

गङ्गाधरः—श्लीपदमाह— जङ्घास्वित्यादि। जङ्घायाः पश्चाद्भागः पिण्डी। जङ्घादिप्रदेशे मांसकफास्रदोषाद् यः शोथस्तत् श्लीपदं नाम स्यात्। तस्य

चक्रपाणिः—क्रिम्यस्थीत्यादिना भगन्दरं पञ्चविधमपि इह संक्षेपात् सामान्येनाह। एषणं शलाकया गत्यवेक्षणं, क्षारसूत्रेण सुपाचितेन छिन्नस्येत्यनेन शल्यतन्त्रोक्तं क्षारसूत्रविधानविधिं दर्शयति। प्रपञ्चस्त्विह पराधिकारत्वेन न कृतः। सुपाचितेनेति सम्यग्विपाचितक्षारेण ॥ ५८ ॥

चक्रपाणिः—पिण्डीति मांसपिण्डी। प्रपदं पादाग्रम्। जङ्घास्विति बहुवचनं व्यक्त्यपेक्षया किंवा बहुवचनेन जङ्घादिष्वित्यादि तल्लोपो ज्ञेयः। उक्तं हि— शिश्नोष्ठनासास्वपि केचिदाहुरित्यादि। तथाहि पुष्करावतः— "ग्रीवावङ्क्षणजङ्घोष्ठ-पादकर्णकराश्रयम्। श्लीपदं मांसमेदोभ्यां विद्यात्" इति ॥ ५९। ६० ॥

* क्रिमेस्तृणादीत्यत्र क्रिम्यस्थिसूक्ष्मेति चक्रसम्मतः पाठः।

† जङ्घासु पिण्डीषु पदोपरिष्टात एतत् परिवर्त्त्य जङ्घासु पिण्डीप्रपदोपरिष्टात् इति चक्रेण पठितम्।

मन्दास्तु पित्तप्रबलाः प्रदुष्टा दोषाः सुतीव्रं तनुरक्तपाकम् ।
कुर्व्वन्ति शोफं ज्वरतर्षयुक्तं विसर्पिणं जालकगर्द्दभाख्यम् ॥६१॥

विलेपनं रक्तविमोक्षणञ्च
विरूक्षणं कायविशोधनञ्च ।
धात्रीप्रयोगान् शिशिरप्रदेहान्
कुर्य्यात् सदा जालकगर्द्दभस्य ॥ ६२ ॥

एवंविधांश्चाप्यपरान् परीक्ष्य शोथप्रकारानानिलादिलिङ्गैः ।
शान्तिं नयेद् दोषहरैर्यथास्वमालेपनच्छेदनभेददाहैः ॥ ६३ ॥

चिकित्सामाह—सिराकफघ्नश्च विधिः सिरावेधविधिः कफघ्नविधिश्च सप्रलेपनञ्च तत्रेष्यते ॥ ६० ॥

गङ्गाधरः—मन्दास्त्वित्यादि। पित्तप्रबला दोषा मन्दा अल्पाः प्रदुष्टाः सुतीव्रं शोफं तनू रक्तवर्णपाको यस्य ज्वरतर्षयुक्तं विसर्पिणं कुर्व्वन्ति, स जालकगर्द्दभाख्यः ॥ ६१ ॥

गङ्गाधरः—तस्य चिकित्सामाह—विलेपनमित्यादि। विलेपनं पित्तप्रधानत्रिदोषहरद्रव्येण। विरूक्षणं विरूक्षण-प्रकरणोक्तद्रव्येण। कायविशोधनं वमनादिना। धात्रीप्रयोगान् आमलकीफलानां स्वरसकल्कादिरूपेणव प्रयोगान् कुर्य्यात्। शिशिरप्रदेहांश्च कुर्य्यात् ॥ ६२ ॥

गङ्गाधरः—अपरिसङ्ख्येयत्वाच्छोफानामाविष्कृततमान् कतिचिच्छोफानुक्त्वा शेषानुपसंहरति—एवंविधांश्चेत्यादि। एवंविधान् अपरान् शोथप्रकारान् व्याधीन् अनिलादिलिङ्गैः परीक्ष्य यथास्वं दोषहरैरालेपनच्छेदनभेददाहैः शान्तिं नयेत् ॥ ६३ ॥

चक्रपाणिः—मन्दा इत्यादौ मन्दा इत्यल्पप्रवृद्धाः। पित्तं प्रबलं येषां ते पित्तप्रबलाः। मन्दा इत्यत्र बहुवचनं व्यक्त्यपेक्षया। तनू रक्तपाको यस्मिन् तत् तनुरक्तपाकम्। सुश्रुते हि अपाकशब्देन ईषत्पाक उक्तः। "अपाकः श्वयथुः पित्तात् स ज्ञेयो जालगर्द्दभः" इति। रक्तपाकयुक्तं रक्तपाकं न तु रक्तवर्णमात्रम् ॥ ६१—६३ ॥

प्रायोऽभिघातादनिलः सरक्तः शोथं सरागं प्रकरोति तत्र ।
वीसर्पनुन्मारुतरक्तनुच्च कार्य्यं विषघ्नं विषजे च कर्म्म ॥ ६४ ॥

तत्र श्लोकः ।

त्रिविधस्य दोषभेदात् सर्व्वार्द्धावयवगात्रभेदाच्च ।
श्वयथोर्व्विविधस्य तथा लिङ्गानि चिकित्सितञ्चोक्तम् ॥ ६५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
श्वयथुचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥

गङ्गाधरः—तत्रागन्तुजेऽभिघातजविषजशोथे विशेषमाह—प्राय इत्यादि। प्रायोऽभिघातात् कुपितः सरक्तोऽनिलः सरागान् शोथान् प्रकरोति। तत्राभिघातजशोथे विसर्पनुत् कर्म्म मारुतरक्तनुच्च कर्म्म कार्य्यम्। विषजे च शोथे तत्तद्विषघ्नं कर्म्म कार्य्यमिति ॥ ६४ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोक इति। त्रिविधेत्यादि ॥ ६५ ॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे
चिकित्सितस्थानजल्पे श्वयथुचिकित्सितजल्पाख्या
द्वादशी शाखा ॥ १२ ॥

चक्रपाणिः—अत्र शोथप्रकारसंग्रहार्थम् आगन्तुशोथचिकित्सामाह—प्राय इत्यादि। विषजे शोथे इति सम्बन्धः ॥ ६४ ॥

चक्रपाणिः—संग्रहे सर्व्वार्द्धगात्रावयवभेदाच्च त्रिविधस्येति सम्बन्धः। द्विविधस्येति पाठे निजागन्तुभेदेन ॥ ६५ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां श्वयथुचिकित्सितं
नाम द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

अथात उदरचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे ।
तप्यमानं तपस्तीव्रं साक्षाद्धर्म्ममिव स्थितम् ॥
भिषग्वेदविदां श्रेष्ठं भिषग्वेदप्रवर्त्तकम् ।
पुनर्व्वसुं जितात्मानमग्निवेशोऽब्रवीद् वचः ॥
भगवन्नुदरैर्दुःखैर्दृश्यन्ते ह्यर्दिता नराः ।
शुष्कवक्त्राः कृशैर्गात्रैराध्मातोदरकुक्षयः ॥
प्रनष्टाग्निबलाहाराः सर्व्वचेष्टास्वनीश्वराः ।
दीनाः प्रतिक्रियाभावाज्जहतोऽसूननाथवत् ॥
तेषामायतनं संख्यां प्राग्रूपाकृतिभेषजम् ।
यथावच्छ्रोतुमिच्छामि गुरुणा सम्यगीरितम् ॥ २ ॥

गङ्गाधरः—अथ चिकित्सितोद्देशानुक्रमात् श्वयथोरुत्तरम् उदरचिकित्सितमाह—अथात इत्यादि । पूर्व्ववत् सर्व्वं व्याख्यातव्यम् ॥ १ ॥

गङ्गाधरः—सिद्धेत्यादि । भिषग्वेदविदामायुर्व्वेदविदां श्रेष्ठं भिषग्वेदप्रवर्त्तकमायुर्व्वेदस्य प्रकाशनेन प्रवर्त्तनकारिणम् अग्निवेशो वचोऽब्रवीत् । तदाह—भगवन्नित्यादि । सर्व्वचेष्टास्वनीश्वरा अक्षमाः । अनाथवदसून् जहतो दृश्यन्ते । तेषामुदराणाम् ॥ २ ॥

चक्रपाणिः—शोथभेदत्वादुदरस्य शोथचिकित्सानन्तरमुदरचिकित्सितमुच्यते । आयुर्व्वेदविदामिति भिषग्वेदविदाम् । दुःखैरिति दुःखकारणैः । तेषामिति उदराणाम् । आयतनमिति कारणं संख्या च । यद्यपि रोगाधिकारेऽष्टावुदराणीत्यनेनोक्ता तथापि गुल्मकुष्ठयोस्तत्र संख्याविक्रमदर्शनात् पुनः संख्याप्रश्नः । किंवा प्रकरणागतत्वात् संख्योक्तापि पुनरुच्यते ॥ १ । २ ॥

सर्व्वभूतहितायर्षिः शिष्येणैवं प्रचोदितः।
सर्व्वभूतहितं वाक्यं व्याहर्त्तुमुपचक्रमे ॥ ३ ॥
अग्निदोषान्मनुष्याणां रोगसङ्घाः पृथग्विधाः।
मलवृद्ध्या प्रवर्द्धन्ते विशेषेणोदराणि च ॥
मन्देऽग्नौ मलिनर्भक्तैरपाकाद् दोषसञ्चयः *।
प्राणाग्न्यपानान् संदूष्य मार्गान् रुद्धाधरोत्तरान् ॥
त्वङ्मांसान्तरमागत्य कुक्षिमाध्मापयन् भृशम्।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम् ॥ ४ ॥

गङ्गाधरः—सर्व्वभूतेत्यादि। एवमनेन प्रकारेण शिष्येणाग्निवेशेन सर्व्वभूतहिताय प्रचोदित ऋषिरात्रेयः पुनर्व्वसुः सर्व्वभूतहितं वाक्यं व्याहर्त्तुमुपचक्रमे आरब्धवान ॥ ३ ॥

गङ्गाधरः—अग्निदोषादित्यादि। मनुष्याणामग्निदोषाज्जठराग्निदोषतो मलवृद्ध्या पृथग्विधा रोगसङ्घाः प्रवर्द्धन्ते, विशेषेण पुनरग्निदोषान्मलवृद्ध्या उदराणि प्रवर्द्धन्ते। विशेषेण यथा तदाह—मन्देऽग्नावित्यादि। अग्नौ जाठरे वह्नौ मन्देऽल्पे सति मलिनैः शाकाद्यैरन्नैर्भुक्तैरपाकात् तेषां मलिनाहाराणामजीर्णत्वाद् दोषसञ्चयः, प्राणमग्निमपानञ्च संदूष्याधरोत्तरानधोमार्गादुत्तरमार्गांश्च रुद्धा त्वङ्मांसान्तरमागत्य कुक्षिं भृशमाध्मापयन्नुदरं रोगं जनयति। तस्योदररोगस्य हेतुं लक्षणसहितं शृणु। इयन्तु सम्प्राप्तिरुक्ता ॥ ४ ॥

चक्रपाणिः—अग्निदोषोऽत्राग्निमान्द्यमेव विवक्षितं, तस्यैवेहोदरकारणदोषसञ्चयकर्त्तृत्वमुक्तम्। अग्निबले हीने कुप्यन्ति पवनादय इति। मला वातादयः पुरीषादयः। दोषकारकाः विरुद्धाहारादयः। मन्दाग्नित्वं मलिनभोजनादिभिः यद्यपि रोगाधिकारेऽष्टावुदराण्युक्तानि तथापि गुल्मकुष्ठयोः प्रत्येकमपि दोषसञ्चयकर्त्तृकत्वमुक्तम्, तथापीह प्रकर्षो दृश्यते अत एव च प्रकर्षार्थं संपूर्व्वं कृतवान्। प्राणेत्यादौ पुनरग्निदूषणाभिधानेन मन्दस्य वह्नेः पुनर्दोषकृतं नितरां मान्द्यं दर्शयति। दोषसञ्चयकृतेन वायुना प्राणापानयोर्दूषणमविरुद्धमेव। यतो वायुनापि वायुदुष्टिर्भवत्येव। त्वङ्मांसान्तरमिति त्वङ्मांसमध्यम् ॥ ३ । ४ ॥

---

* "दोषसञ्चयः" इत्यत्र "दोषकारकाः" इति चक्रः।

अत्युष्णलवणक्षार-विदाह्यम्लगराशनात् ।
मिथ्यासंसर्ज्जनाद् रुक्ष-विरुद्धाशुचिभोजनात् ॥
प्लीहार्शोग्रहणीदोष-कर्षणात् कर्म्मविभ्रमात् ।
क्लिष्टानामप्रतीकाराद् रौक्ष्याद् वेगविधारणात् ॥
स्रोतसां दूषणादामात् संक्षोभादतिपूरणात् ।
अर्शोबालशकृद्रोधादन्त्रस्फुटनभेदनात् ॥
अतिसञ्चितदोषाणां पापं कर्म्म च कुर्व्वताम् ।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः ॥ ५ ॥

गङ्गाधरः—हेतुरुच्यते अत्युष्णेत्यादि । गरं संयोगविषम् । अत्युष्णादिगरान्तानामशनात् । मिथ्यासंसर्ज्जनादाहारविधिविपर्य्ययेणाभ्यवहारात् । रुक्षाणां विरुद्धानामशुचीनाञ्च द्रव्याणां भोजनात् । प्लीहादिभिर्व्याधिभिः अतिकर्षणात् प्लीहादीनां चिकित्सितकर्म्मणां विभ्रमादयथावत्करणात्, क्लिष्टानां तत्प्लीहादिभिः क्लिष्टानां, तत्प्लीहादिप्रतिकाराभावात्, रौक्ष्यात्, मूत्रपुरीषादिवेगधारणात्, स्रोतसां मूत्रपुरीषादिवहानां दूषणात् । आमादपक्काहारदोषात् । संक्षोभाच्चित्तस्य, अतिपूरणात् दध्यादिद्रवातिभक्षणात् अर्शोरोधाद्विपुलस्थूलमांसाङ्कुरेण गुदबन्धान्मलरोधात्, बालानां केशानामाहारसहितभक्षितानां रोधात् मलस्येति अर्शोबालाभ्यां शकृतो रोधात् । बालाश्मकण्टकादिभक्षणेनान्त्रस्य स्फुटनभेदनात् । मन्दाग्नीनां विशेषतः प्रायेण मन्दाग्नीनामुदराण्युपजायन्ते शीघ्रं न तथान्येषां जनानामिति ॥ ५ ॥

चक्रपाणिः—अत्युष्णेत्यादिना हेतुमाह । कर्म्मविभ्रमादिति वमनादीनामसम्यक्करणात् । क्लिष्टानामप्रतिकारादिति कृतया प्रतिक्रियया इत्यर्थः । रौक्ष्यात उत्पत्तिः, रौक्ष्यस्य प्रतिक्रियाभावेनानुवर्त्तनात् । आमादिति आमानुबन्धात् । पापं कर्म्म च कुर्व्वतामित्यनेनास्य महादुःखरूपस्य प्रबलाधर्म्मजन्यतामाह । मन्दाग्नीनां विशेषत इति अत्यन्तोपहताग्नीनाम् ॥ ५ ॥

क्षुन्नाशः स्वादुता स्निग्ध-गुर्व्वन्नं पच्यते चिरात्।
भुक्तं विदह्यते सर्व्वं जीर्णाजीर्णं न वेत्ति च॥
सहते नातिसौहित्यमीषच्छोफश्च पादयोः।
शश्वद्बलक्षयेऽल्पेऽपि व्यायामे श्वासमृच्छति॥
वृद्धिः पुरीषनिचये रुक्षोदावर्त्तहेतुका।
वस्तिसन्धौ रुगाध्मानं वर्द्धते पाट्यतेऽपि च॥
आतन्यते च जठरं लघ्वल्पैर्भोजनैरपि।
राजीजन्म बलीनाश इति लिङ्गं भविष्यताम्॥ ६॥
रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि सञ्चिताः।
प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम्॥ ७॥

गङ्गाधरः—निदानमुक्त्वा पूर्व्वरूपमाह—क्षुन्नाश इत्यादि। स्वादुता सर्व्वद्रव्याभ्यवहारे स्वादुताबोधः सर्व्वापेक्षयाधिकः। स्निग्धश्च गुरु चान्नं भुक्तं चिरात् पच्यते। सर्व्वश्च स्निग्धं गुरु वा लघु रुक्षं वा विदह्यते विदग्धाजीर्णं भवति, तच्च जीर्णमभूत् किमजीर्णमस्ति तन्न वेत्ति च। अतिसौहित्यमतितृप्तितः कृतमाहारं न सहते पादयोश्चेषच्छोफः। बलक्षये सत्यल्पेऽपि व्यायामे शश्वच्छ्वासं प्राप्नोति। पुरीषनिचये रुक्षोदावर्त्तनिमित्ताद् वृद्धिः स्यात्। वस्तिसन्धौ रुक्। भोजनैर्लघ्वल्पैरपि आध्मानं भवति। जठरमुदरं वर्द्धते पाट्यते आतन्यते च। उदरे राजीनां रेखाणां जन्म बलीनाञ्च नाशः स्यात्। इति भविष्यतामुदराणां लिङ्गम्॥ ६॥

गङ्गाधरः—पूर्व्वं मन्देऽग्नावित्यादिना योदरस्य सम्प्राप्तिरुक्ता तामेव संक्षेपेण पुनराह—रुद्ध्वेत्यादि। सञ्चिता दोषाः स्वेदाम्बुवाहीनि स्रोतांसि

चक्रपाणिः—क्षुन्नाश इति पूर्व्वरूपाभिधानम्। स्वाद्वादीनां यद्यपि कटुकाद्यपेक्षया चिरेणैव पाको भवति, तथापीह चिरादिति पदेनात्यर्थं चिरादित्यभिधीयते। जीर्णाजीर्णं न वेत्ति चेति वातजन्यत्वाज्ज्ञेयम्। रुक्षोदावर्त्तहेतुकेति वा पाठः। वस्तिरित्यत्र वस्तिना समं शरीरदेशसंबन्धः। आतन्यत इति विस्तार्य्यते। राजी व्यक्ता शिरा॥ ६॥

चक्रपाणिः—रुद्ध्वेत्यादिना चतुर्णां दोषजन्यानामुदराणां सामान्यात् संप्राप्तिमाह। पूर्व्वं या संप्राप्तिरुक्ता सा सर्व्वोदराणामित्येके वदन्ति। रुद्ध्वेत्यादिना पूर्व्वसम्प्राप्त्यनुक्तस्य स्वेदाम्बु-

कुक्षेराध्मानमाटोपः शोफः पादकरस्य च।
मन्दोऽग्निः श्लक्ष्णगण्डत्वं कार्श्यञ्चोदरलक्षणम्॥ ८॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः।
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु॥ ९॥
रुक्षाल्पभोजनायास-वेगोदावर्त्तकर्षणैः।
वायुः प्रकुपितः कुक्षि-हृद्वस्तिगुदमार्गगः॥
हत्वाग्निं कफमुद्धूय तेन रुद्धगतिस्ततः।
आचिनोत्युदरं जन्तोस्त्वङ्मांसान्तरमाश्रितः॥ १०॥

रुद्धा प्राणादीन् सन्दूष्य त्वङ्मांसाभ्यन्तरमागत्य कुक्षिमाध्मापयन्तो नृणामुदरं जनयन्ति॥ ७॥

गङ्गाधरः—उदराणां सामान्यलक्षणमाह—कुक्षेरित्यादि। आटोपो गुड़गुड़ाशब्दः॥ ८॥

गङ्गाधरः—अथोदररोगस्य सङ्ख्यामाह—पृथग्दोषैरित्यादि। प्लीहशब्द इह यकृदुपलक्षक इति नाष्टत्वहानिः। तेषामष्टानामुदराणाम्। अग्निवेशेति प्रकरणात्॥ ९॥

गङ्गाधर—रुक्षेत्यादि। पूर्व्वं यत् सामान्यतो निदानमुक्तं तत्र रुक्षाल्पभोजनादिभिर्हेतुभिर्वायुः प्रकुपितः सन् कुक्ष्यादिगतो भूत्वाग्निं हत्वा कफमुद्धयोर्द्धं नीत्वा तेनोर्द्धगतेन कफेन रुद्धगतिर्भूत्वा त्वङ्मांसान्तरमाश्रितः सन् उदरं जन्तोराचिनोति। इति वातोदरसम्प्राप्तिः॥ १०॥

वाहिस्रोतोदुष्टिरूपस्याभिधानात् अपौनरुक्त्यमित्यन्ये। स्वेदवहस्रोतसाञ्च उदकवहस्रोतसाञ्च तालुमूलक्लोमरोमकूपाश्चेत्यनेन भेद उक्तो ज्ञेयः॥ ७॥

चक्रपाणिः—उदराणां समानरूपमाह—कुक्षेरित्यादि। मन्दोऽग्निर्यद्यपि कारणं तथाप्ययं मन्दाग्निरिह लक्षणे ज्ञेयः। श्लक्ष्णगण्डत्वमिति मसृणकपोलत्वम्॥ ८॥

चक्रपाणिः—तेषां लिङ्गमित्यत्र लिङ्गशब्देन वक्ष्यमाणहेतुसंप्राप्ती अपि व्याभिगमकतया संगृहीते ज्ञेये। इह संप्राप्तिः कारणानि वा वक्तव्यानि विशेषस्यैव, तेन न सर्व्वसाधारणोक्तहेतुसंप्राप्त्या पुनरुक्तत्वम्॥ ९॥

चक्रपाणिः—कर्षणैरिति कृशत्वकारणत्वात् लङ्घनादिभिः। गुदस्य मार्गो गुदमार्गः। कफमुद्धूयेत्यत्र कफस्याप्राधान्यम्। तेन कफेनोदरव्यपदेशोऽत्र प्राचीनो न इति दर्शयति॥ १०॥

तस्य रूपाणि—कुक्षिपादवृषणश्वयथूदरविपाटनम् अनियतौ च वृद्धिह्रासौ। कुक्षिपार्श्वशूलोदावर्त्ताङ्गमर्द्दपर्व्वभेदशुष्ककासकार्श्यदौर्ब्बल्यारोचकाविपाका अधोगुरुत्वं वातवर्चोमूत्रसङ्गः। श्यावारुणत्वञ्च नखनयनवदनत्वङ्मूत्रवर्च्चसामपि चोदरं तन्वसितराजीसिरासन्ततम् आध्मातदृतिशब्दवद् भवति। वायुश्चात्रोर्द्ध्वमधश्च तिर्य्यक् च सशूलशब्दश्चरति। इत्येतद् वातोदरमिति विद्यात् ॥ ११ ॥

कट्वम्ललवणात्युष्ण-तीक्ष्णाग्न्यातपसेवनैः।
विदाह्यजीर्णाध्यशनैश्चाशु पित्तं समाचितम् ॥
प्राप्यानिलकफौ बद्ध्वा मार्गमुन्मार्गमास्थितम्।
निहन्त्यामाशये वह्निं जनयत्युदरं ततः ॥ १२ ॥

गङ्गाधरः—तस्य रूपाणीत्यादि। गद्यम्। कुक्षीत्यादि। कुक्ष्यादिषु श्वयथुश्चोदरस्य विपाटनञ्च पाटनवदुदरस्य वृद्धत्वात्। उदरस्य वृद्धिह्रासावनियतौ। कुक्षिपार्श्वयोः शूलमुदावर्त्तश्चाङ्गमर्द्दश्च पर्व्वभेदश्च शुष्ककासश्च दौर्ब्बल्यञ्चारोचकश्च अविपाकश्चाधोऽङ्गे गुरुत्वञ्च वातस्य वर्च्चसो मूत्रस्य च सङ्गश्चाप्रवृत्तिः। नखादीनां श्यावारुणत्वञ्च। अपि चोदरन्तु तन्वश्वेतराजीभिस्तन्वश्वेतसिराभिश्च सन्ततम्। आध्मातदृतिवद् वायुना पूर्णचर्म्मपुटकवस्तिवच्चाध्मातश्चोदरं भवति। वायुश्चात्रोदरे सशूलः सन् ऊर्द्ध्वमधस्तिर्य्यक् च विचरति। इत्येद् वातोदरमिति विद्यात् ॥ ११ ॥

गङ्गाधरः—कट्वम्लेत्यादि। पद्यानि। विदाहि भृष्टतण्डुलादि। अजीर्णे सत्यशनं पूर्व्वदिनाहाराजीर्णे चाशनमध्यशनमित्येतैर्हेतुभिराशु समाचितं पित्तमनिलकफौ प्राप्योन्मार्गमूर्द्ध्वपथमाश्रितं तान्यामनिलकफाभ्यां मार्गं

चक्रपाणिः—अनियतौ च वृद्धिह्रासावुदरस्येति शेषः। असिता राज्यः सिराश्च ताभिः सन्ततं व्याप्तम्। आध्मातेति वातपूर्णचर्म्मवत् ॥ ११ ॥

चक्रपाणिः—कट्वित्यादिना पित्तोदरमाह। तत्रापि अनिलकफावप्रधानौ, पित्तन्तु प्रधानम्। निहन्त्यामाशये वह्निमित्यनेन स्थानान्तरं धात्वग्निवधं कृत्वा ॥ १२ ॥

तस्य रूपाणि—दाहज्वरतृष्णामूर्च्छातिसारा आस्यकटुत्वं पीतत्वं नयनवदनत्वङ्मूत्रवर्च्चसाम् । अपि चोदरं नीलपीतताम्रहारिद्रहरितराजीसिरावनद्धं दह्यते दूयते धूप्यते उष्मायते स्विद्यति क्लिद्यते मृदुस्पर्शं शीघ्रपाकं भवति । इत्येतत् पित्तोदरमिति विद्यात् ॥ १३ ॥

अव्यायामदिवास्वप्न-स्वाद्वतिस्निग्धपिच्छिलैः ।
दधिदुग्धोदकानूप-मांसैश्चाप्यतिसेवितैः ॥
क्रुद्धेन श्लेष्मणा स्रोतःस्वावृतेष्वावृतोऽनिलः ।
तमेव पीड़यन् कुर्य्यादुदरं वहिरन्तरम् ॥ १४ ॥

वद्धामाशये वह्निं निहत्य तत उदरं जनयति । इति पित्तोदरसम्प्राप्तिः सनिदाना ॥ १२ ॥

गङ्गाधरः—तस्य पित्तोदरस्य रूपाणि दाहेत्यादि । दाहश्च ज्वरश्च तृष्णा च मूर्च्छा चातिसारश्चास्यकटुत्वञ्च नयनादीनां पीतत्वञ्चापि चोदरं नीलादिराजिभिरवनद्धं नीलादिसिराभिरवनद्धञ्च । दह्यते चोदरं दूयते चोपतप्यते धूप्यते धूपनवत् सन्तप्यते उष्मायते उष्मेवाचरति स्विद्यति घर्म्मोक्तं भवति क्लिद्यते स्वयमेव क्लेदान्वितं भवति । मृदुस्पर्शं शीघ्रपाकञ्चोदरं भवति । तस्मात् क्लिद्यते । इत्येतत् पित्तोदरमिति विद्यात् ॥ १३ ॥

गङ्गाधरः—अव्यायामेत्यादि । सामान्यनिदानेष्वव्यायामादिभिरतिसेवितैः क्रुद्धेन श्लेष्मणा आवृतेषु स्रोतःसु तत आवृतोऽनिलस्तमेव श्लेष्माणं वहिरन्तरञ्च पीड़यन्नुदरं कुर्य्यात् । इति श्लेष्मोदरसम्प्राप्तिनिदानसहिता ॥ १४ ॥

चक्रपाणिः—हारिद्रो हरिद्राभः । दूयत इति व्यथते । धूप्यत इति धूममिव उद्वमति । उष्मायत इति पार्श्वस्थेनैव वह्निना दह्यते । स्विद्यत इति घर्म्मोक्तं भवति । क्षिप्रपाकं भवति इति शीघ्रपाकाज्जलोदरतां याति ॥ १३ ॥

चक्रपाणिः—अव्यायामेत्यादिना कफोदरमाह । वहिरन्तग इति अन्त्वाद्वाह्यगः ॥ १४ ॥

* "वहिरन्तरम्" इत्यत्र "वहिरन्तगः" इति चक्रपाठः

तस्य रूपाणि—गौरवारोचकाविपाकाङ्गमर्दाः सुप्तिपाणि-पादमुष्कोरुशोफोत्क्लेशनिद्राकासश्वासाः शुक्लत्वञ्च नयननख-वदनत्वङ्मूत्रवर्च्चसाम् अपि चोदरं शुक्लराजीसिरासन्ततं गुरु स्तिमितं स्थिरं कठिनं भवति। इति श्लेष्मोदरमिति विद्यात् ॥ १५ ॥

दुर्ब्बलाग्नेरपथ्यादि-विरोधिगुरुभोजनात्।
स्त्रीदत्तैश्च रजोलोम-विण्मूत्रास्थिनखादिभिः ॥
विषैश्च मन्दैर्वाताद्याः कुपिताः सञ्चयं त्रयः।
शनैः कोष्ठे प्रकुर्व्वन्तो जनयन्त्युदरं नृणाम् ॥ १६ ॥

गङ्गाधरः—तस्य रूपाणीति श्लेष्मोदररूपाणि। यथा—गौरवेत्यादि। गौरवञ्च गात्रस्य, अरोचकश्चाविपाकश्चाङ्गमर्दश्च। सुप्तिश्च स्पर्शानभिज्ञता पाण्यादिषु शोफश्च। उत्क्लेशश्च हृदयस्थदोषस्य। निद्रा च कासश्च श्वासश्च। नयनादीनां शुक्लत्वमपि चोदरं शुक्लराजीसन्ततं शुक्लशिरासन्ततञ्च गुरु च स्तिमितञ्च स्थिरञ्च कठिनञ्च भवति। इत्येतत् श्लेष्मोदरमिति विद्यात् ॥ १५ ॥

गङ्गाधरः—सन्निपातोदरमाह—दुर्ब्बलाग्नेरित्यादि। दुर्ब्बलोऽग्निर्यस्य तस्य अपथ्यभोजनदुष्टभोजनसंयोगविरोधिद्रव्यभोजनगुरुभोजनात्। स्त्रीभिर्दुष्टस्वभावाभिर्वशीकरणाद्यर्थं दत्तैर्भोज्यादिद्रव्यसहितै रजोलोमादिभिः शत्रुभिश्च दत्तैर्मन्दैर्मन्दवेगैर्विषैर्हेतुभिः कुपिता वाताद्यास्त्रयः शनैः कोष्ठे सञ्चयं कुर्व्वन्तो नृणामुदरं जनयन्ति। इति सन्निपातोदरस्य सहेतुः सम्प्राप्तिः ॥ १६ ॥

चक्रपाणिः—दुर्ब्बलाग्नेरित्यादिना स्त्रीदत्तैरिति स्त्रीभिः अज्ञानात् सौभाग्यार्थं रजःप्रभृतिदानं प्रायो भवतीति स्त्रीणामभिधानम् उपलक्षणार्थं तेनान्यदत्तानामपि रजःप्रभृतीनां ग्रहणं भवत्येव। विषैश्च मन्दैरिति दूषीविषैः। दूषीविषाण्येव हि मन्दानि भवन्ति। त्रय इति पदेन वातादीनां त्रयाणामपि अस्वातन्त्र्येण ग्रहणं करोति ॥ १५। १६ ॥

तस्य रूपाणि—सर्व्वेषामेव दोषाणां समस्तान्युपलभ्यन्ते लिङ्गानि वर्णाश्च सर्व्वे नखादिषु । उदरमपि च नानावर्ण-राजीसिरासन्ततं भवति । इत्येतत् सन्निपातोदरमिति विद्यात् ॥ १७ ॥

अत्याशितस्य संक्षोभाद् यानयानातिचेष्टितैः ।
अतिव्यवायभाराध्व-वमनव्याधिकर्षणैः ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात् प्रवर्द्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत् ॥

तस्य प्लीहा कठिनो नीरुजो * वर्द्धमानः कच्छपसंस्थानः

गङ्गाधरः—तस्य रूपाणीति सन्निपातोदररूपाणि । सर्व्वेषामित्यादि । सर्व्वेषां वातोदरपित्तोदरश्लेष्मोदराणां समस्तानि मिलितानि लिङ्गान्युपलभ्यन्ते यत्र वर्णाश्च सर्व्वे नखादिषु उपलभ्यन्ते । अपि चोदरं नानावर्ण-राजीसन्ततं नानावर्णसिरासन्ततञ्च भवति । इत्येतत् सन्निपातोदरमिति विद्यात् ॥ १७ ॥

गङ्गाधरः—प्लीहोदरमाह—अत्याशितस्येत्यादि । अतिभुक्तवान् सन् यदि संक्षोभणं कर्म्म यानादिभिः शरीरसञ्चालनं कर्म्म करोति । अतिव्यवाया-दिना कर्षणैश्च नृणां वामपार्श्वाश्रितः प्लीहा नाम नाडीविशेषः स्थानाच्च्युतः सन् प्रवर्द्धते । अथवा रसादिभ्यो मधुरस्निग्धाद्याहारेभ्यो रक्तवर्द्धनेभ्यो विवृद्धं रक्तं तं प्लीहानं विवर्द्धयेत् । तस्य प्लीहा कठिनो भवति, क्रमेण

चक्रपाणिः—वर्णाश्च सर्व्वेषां दोषाणामिति सम्बन्धः । इह सकललक्षणमेलकाभिधानेऽत्र नखादिवर्णश्च । सर्व्वैश्च नानावर्णैः । राजयश्च यद्यपि गृहीतास्तथापि तद्विधानम् अवश्योत्-पाददर्शनार्थम् ॥ १७ ॥

चक्रपाणिः—प्लीहवृद्धिर्द्विधा संक्षोभादिच्युतस्य वा वृद्धिरच्युतस्य वा शोणितवृद्ध्या वृद्धिर्भवति । वामपार्श्वाश्रित इति प्लीहस्वरूपकथनम् । शोणितं वा रसादिभ्य इत्यत्रादिशब्दः प्रकारवाची । तेन रसस्य कारणस्य वृद्ध्या कार्य्यस्य रक्तस्य वृद्धिस्तथा मांसादिभ्योऽपि रक्तवृद्धिर्भवति, आहार-विहारेभ्यो रक्तवृद्धिरुक्ता भवति । प्रथमं या च्युतस्य वृद्धिरुक्ता सा वातादिसन्निपातत्वेन चतुर्व्विधा

* "नीरुजः" इत्यत्र "अष्ठीलेवादौ" इति चक्रेण पठ्यते ।

उपलभ्यते। स चोपेक्षितः क्रमेण कुक्षिं जठरमग्न्यधिष्ठानञ्च परिक्षिपन्नुदरमभिनिर्व्वर्त्तयति ॥ १८ ॥

तस्य रूपाणि—दौर्ब्बल्यारोचकाविपाकवर्च्चोमूत्रग्रहतमःपिपासाङ्गमर्दच्छर्दिमूर्च्छाङ्गसादकासश्वास-मृदुज्वरानाहाग्निनाश-कार्श्यास्यवैरस्यवर्णभेदकोष्ठवातशूलानि। अपि चोदरमरुण-वर्णमविवर्णं वा नीलहारिद्रराजीमदिति। एवमेव यकृदपि दक्षिणपार्श्वस्थं कुर्य्यात् तुल्यहेतुलिङ्गौषधत्वात्। तस्य प्लीहजठर एवावरोधः। इत्येतद् यकृत्प्लीहोदरमिति विद्यात् ॥ १९ ॥

वर्द्धमानो नीचादौ कच्छपसंस्थान इवोपलभ्यते। स चोपेक्षितः क्रमेण कुक्षिं जठरमग्न्यधिष्ठानञ्च परिक्षिपन् उदरमभिनिर्व्वर्त्तयति। इति सनिदान प्लीहोदरसम्प्राप्तिः ॥ १८ ॥

गङ्गाधरः—तस्य प्लीहोदरस्य रूपाणीति। दौर्ब्बल्येत्यादि। वर्च्चोमूत्रग्रहतम इत्यतिशयेन वर्च्चोमूत्रबन्धः। आस्यवैरस्यं, वर्णभेदः, कोष्ठे वातशूलञ्चेति प्लीहशूलम्। अपि चोदरमरुणवर्णमविवर्णं गात्रसवर्णमिति। नीलहारिद्र राजीमदिति। एवमित्यादि। एवमनेन प्रकारेण दक्षिणपार्श्वस्थयकृदपि वृद्धं कुर्य्यात्। ननु तर्हि किं नवोदराणीत्यत आह—तुल्येत्यादि। यकृत् प्लीहोदरयोस्तुल्यहेतुलिङ्गौषधत्वात् तस्य यकृदुदरस्य प्लीहजठरे प्लीहोदर एवावरोध इति यकृत्प्लीहोदरमिति विद्यात् ॥ १९ ॥

ज्ञेया, तेन रक्तजप्लीहवृद्ध्या समं पञ्चप्लीहप्रदोषा ये उक्तास्ते सङ्गता भवन्ति। उक्तं हि—पञ्च प्लीह-प्रदोषा गुल्मैर्व्याख्याता इति। अष्ठीला दीर्घो लोहमयो ग्रन्थिर्लोहकारेषु प्रसिद्धः। कुक्षि पार्श्वदेशः ॥ १८ ॥

चक्रपाणिः—दक्षिणपार्श्वस्थमिति यकृज्जन्म। यकृदस्य पृथङ्नाम आख्याय तज्जमुदरमाह तुल्येत्यादिना ॥ १९ ॥

पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे ।
उदावर्त्तास्तथार्शोभिरन्त्रसंमूर्च्छनेन वा ॥
अपानो मार्गसंरोधाद्धत्वाग्निं कुपितोऽनिलः ।
वर्च्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः ॥ २० ॥

तस्य रूपाणि—तृष्णादाहज्वरमुखतालुशोषोरुसादकासश्वासदौर्ब्बल्यारोचकाविपाकवर्च्चोमूत्रसङ्गाध्मानच्छर्द्दिक्षवथुशिरोहृन्नाभिगुदशूलानि । अपि चोदरं मूढ़वातं स्थिरमरुणनीलराजीसिरानद्धमराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभिनिर्व्वर्त्तयति । इत्येतद् बद्धगुदोदरमिति विद्यात् ॥ २१ ॥

शर्करातृणकाष्ठास्थि-कण्टकैरन्नसंयुतैः ।
भिद्येतान्त्रं यदा भुक्तैर्जृम्भयात्यशनेन वा ॥

गङ्गाधरः—बद्धोदरमाह—पक्षेत्यादि । पक्षिणां पक्ष्मणां केशैरन्नेन भुज्यमानेन सह भुक्तैर्गुदे बद्धायने बद्धपुरीषनिर्गमपथे सति तदा नवेगान्धारणीयोक्तवेगधारणजात उदावर्त्तस्तस्मात्, अथवार्शोभिरन्त्राणां संमूर्च्छनेन कोपनेन मार्गसंरोधादपानोऽनिलः कुपितः सन्नग्निं हत्वा वर्च्चःपित्तकफान् रुद्ध्वा बहिर्न निःसार्य्य तत उदरं जनयति । इति बद्धोदरनिदानसहितसम्प्राप्तिः ॥ २० ॥

गङ्गाधरः—तस्य रूपाणीति बद्धोदरस्य रूपाणि । तृष्णेत्यादि । तृष्णा च दाहश्च ज्वरश्च मुखतालुशोषश्च ऊरुसादश्च वर्च्चोमूत्रयोः सङ्गः शिरोहृन्नाभिगुदशूलानि । अपि चोदरं मूढ़वातं वायुनिःसरणरहितं स्थिरं वृद्धिह्रासहीनमचलम् । अरुणनीलराजीसिराभिरवनद्धमराजिकं वा अरुणनीलसिरावनद्धम् । प्रायो नाभ्युपरि क्वचिदन्यत्रापि । इत्येतद्बद्धगुदोदरमिति विद्यात् ॥ २१ ॥

गङ्गाधरः—अथ क्षतोदरमाह—शर्करेत्यादि । शर्करा क्षुद्रकङ्करः । अन्नयुक्तैः शर्करादिभिर्भुक्तैर्यदाऽन्त्रं भिद्येत विध्येत, अथवाऽन्त्रं यदा जृम्भया

चक्रपाणिः—पक्ष्मबालैरित्यादिना बद्धगुदोदरमाह । बद्धायने इति बद्ध ार्गे, उदावर्त्तैरित्यादावपि बद्धायने गुदे इत्यनुवर्त्तनीयम् । अन्त्रसंमूर्च्छनेनान्त्रपरिवर्त्तनेन । पक्ष्मबालैरित्यादिना हेतुकृतो गुदनिरोधः । तेन गुदनिरोधकस्वरूपेणैवैकरूपमेव गुदोदरं जनयति । तेन पक्ष्मादिगुदनिरोधहेतुपञ्चकजन्यत्वात् बद्धगुदोदराणां पञ्चत्वं यथोक्तम् ॥ २० । २१ ॥

पाकं गच्छेद् रसस्तेभ्यश्छिद्रेभ्यः प्रस्रवेद् वहिः।

पूरयन् गुदमन्त्रश्च जनयत्युदरं ततः ॥ २२ ॥

तस्य रूपाणि—तदधो नाभेः प्रायो वर्द्धमानमुदकोदरं स्याद् यथाबलञ्च दोषाणां रूपाणि दर्शयति। अपि च आतुरः सलोहितनीलपीतपिच्छिलकुणपगन्ध्यामवर्च्च उपवेशते, * हिक्का-श्वासकासतृष्णाप्रमेहारोचकाविपाकदौर्ब्बल्यपरीतश्च भवति। इत्येतच्छिद्रोदरमिति विद्यात् ॥ २३ ॥

अत्यशनेन वा पाकं गच्छेत्, तदान्त्रस्य तेभ्यश्छिद्रेभ्यस्तदन्त्रस्य रसः कलदो वहिः स्रवेत्। स स्रवद्रसस्तु गुदमन्त्रश्च पूरयन् ततः क्षतादुदरं जनयति। इति सहेतुक्षतोदरसम्प्राप्तिः ॥ २२ ॥

गङ्गाधरः—तस्य रूपाणीति क्षतोदररूपाणि। तद्यथा—तदधो नाभेः इत्यादि। तत् क्षतोदरं प्रायो नाभेरधः स्यात्। वर्द्धमानं पुनरुदकोदरं स्यात्। दोषाणां यथाबलं रूपाणि दर्शयति। तेनातुरेण सलोहितादिरूपं वर्च्च उपवेश्यते त्यज्यते, हिक्कादिपरीतश्च भवति। इत्येतत् क्षतजं छिद्रोदरमिति विद्यात् ॥ २३ ॥

चक्रपाणिः—शर्करेत्यादिना क्षतोदरमाह—अभ्याहतस्यान्त्रं भित्त्वेति योजना। पाकं गच्छेदिति भिन्नमेवान्त्रं पाकं गच्छति। वहिरिति अन्त्रं गुदञ्च वहिर्भागे पूरयन् पाकं गच्छत्, स एव रसोऽन्त्रपाकरूपो व्याधिरूपतया ज्ञेयः ॥ २२ ॥

चक्रपाणिः—तदधो नाभेः प्रायोऽभिनिर्व्वर्त्तमानमिति ऊर्द्ध्वं निर्व्वर्त्तते। द्रवस्योदरारम्भकस्य अधोगामित्वादुदकोदरं भवतीति उदरान्तरापेक्षया शीघ्रगतिर्भवतीत्यर्थः। उदकोदरमेवैतत् स्यात्। उदकोदरस्यैवेति वा पाठः। उदकोदरस्य रूपाणि दर्शयति, दोषाणाञ्च यथाबलं रूपाणि दर्शयतीति योजना। यथाबलमिति वयोबलवान् दोषो भवति तस्य रूपाणि दर्शयति ॥ २३ ॥

* इति तदधो नाभ्याः प्रायोऽभिनिर्वर्त्तमानमुदकोदरस्य च यथाबलञ्च दोषाणां रूपाणि दर्शयत्यपि चातुरः स लोहितनीलपीतपिच्छिलकुणपगन्धामवर्च्च उपवेशते। इति पाठान्तरम्।

स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य च ।
अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्न्यवस्थितः ॥
स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः ।
वर्द्धयेतां तदेवाम्बु स्वस्थानादुदराय तौ ॥ २४ ॥

तस्य रूपाणि—निरन्नकाङ्क्षा पिपासा गुदस्रावः शूलः श्वासकासदौर्ब्बल्यानि, अपि चोदरं नानावर्णराजीसिरासन्ततम् उदकपूर्णदृतिसंक्षोभसंस्पर्शम् । इत्येतदुदकोदरमिति विद्यात् ॥२५

तत्र चिरोत्पन्नमनुपद्रवमनुदकपूर्ण-*-मुदरं त्वरमाणश्चिकित्-

गङ्गाधरः—अथोदकोदरमाह—स्नेहपीतस्येत्यादि । स्नेहः पीतो येनेति । परनिपातः क्तान्तस्य विशेषणस्यापि क्वचिद् भवतीति ज्ञापितमाच्छादनजातिवर्ज्जजातिवाचिपूर्व्वकक्तान्तात् स्त्रियां ङीब्विधानात्; यथा शङ्खभिन्नी नारी, इक्षुभक्षिती धेनुरिति । स्नेहपीतस्य संशोधनाङ्गस्नेहक्रियायां पीतस्नेहस्य अत्यम्बुपानात् तथा मन्दाग्न्यादेश्चात्यम्बुपानादग्नौ नष्टे सति क्लोम्नि पिपासास्थाने कण्ठोरसोः सन्धाववस्थितो मारुतः पीततदत्यम्बुना रुद्धमार्गेषु स्रोतःस्ववस्थितः कफश्च तदुदकमूर्च्छितस्तेन पीतेनात्यम्बुना संमिलितीभावेन विकृतिमापन्नश्चेति । तौ मारुतकफौ तदेवाम्बु उदराय स्वस्थानाद् वर्द्धयेताम् । इति सहेतूदकोदरसम्प्राप्तिः ॥ २४ ॥

गङ्गाधरः—तस्य रूपाणीत्युदकोदरस्य रूपाणि । तद्यथा—निरन्नेत्यादि । निरन्न आहाराशक्तिः परन्त्वाकाङ्क्षाहारार्थम् । उदरमपि च नानावर्णराजीसिरासन्ततञ्च उदकपूर्णदृतिर्यथा संस्पृश्यते तथा संस्पर्शम् । इत्येतद् दकोदरमिति विद्यात् । संज्ञायामुदकशब्दस्यादिवर्णलोपः पृषोदरादित्वादिति ॥ २५ ॥

गङ्गाधरः—इत्युदरनिदानमुक्त्वा चिकित्सार्थं साध्यासाध्यलक्षणमाह—तत्रेत्यादि । तत्राष्टसूदररोगेषु मध्ये यदुदरमचिरोत्पन्नादिकं तदेव त्वरमाणः

चक्रपाणिः—स्नेहेत्यादिना उत्पत्तिविशिष्टं जलोदरमाह । क्लोम हृदयावयवविशेषः । वर्द्धयेताम् इति यथोक्तौ कफमारुतौ । तयोश्चाम्बुवर्द्धकत्वं पिपासाजननेनाम्बुपानादेरिति ज्ञेयम् ॥ २४ । २५ ॥

* "अनुदकपूर्णम्" इत्यत्र "अनुदकप्राप्तम्" इति चक्रः ।

सेत्। उपेक्षितानां ह्येषां दोषाः स्वस्थानादपवृत्ता अपरिपाकाद् द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन्ति। स्वेदश्च बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्य्यगवतिष्ठमानस्तदेवोदकमाप्याययति। तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरु स्तिमितमाकोठितमशब्दं मृदुस्पर्शमपरिगतराजीकमाक्रान्तं नाभ्यामेवोपसर्पतीति ॥ २६ ॥

ततोऽनन्तरमुदकप्रादुर्भावः। तस्य रूपाणि—कुक्षेरतिमात्राभिवृद्धिः सिरान्तर्द्धानगमनमुदकपूर्णदृतिसंक्षोभसमस्पर्शश्च। तदातुरमुपद्रवाः स्पृशन्ति वम्यतीसारतमकतृष्णाश्वासकासहिक्कादौर्व्बल्यपार्श्वशूलारुचिस्वरभेदमूत्रसङ्गादयः। तथाविधम् अचिकित्स्यं विद्यात् इति ॥ २७ ॥

सन् वद्यश्चिकित्सेत्। उपेक्षायां दोषमाह—उपेक्षितानामित्यादि। एषां ह्यष्टानामेवोदराणामुपेक्षितानां त्वरया चिकित्साया अकरणे दोषा उदरकृतवन्तो वातादयः स्वस्थानादपवृत्ताः स्वस्थानं विहायान्यस्थाने प्रवृत्ता अपरिपाकात् आहारस्य पुनर्द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन्ति। स्वेदश्च बाह्यस्रोतःप्रतिहतगतिर्न निर्गच्छन् तिर्य्यगवतिष्ठमानस्तदेवोदकं वर्द्धयति। तत्र तदुदकाप्यायने पिच्छोत्पद्यते पिच्छोत्पत्तौ तूदरं मण्डलरूपं भवति गुरु च स्तिमितश्च आकोठितम् ईषत्कोठयुक्तम् अशब्दस्पर्शं स्पृश्यमानं न शब्दायते, अपगतराजिकं राजीदर्शनं न स्यात्। नाभ्यां नाभौ त्वाक्रान्तं सर्पतीति ॥२६॥

गङ्गाधरः—ततः परमुदकप्रादुर्भावः। तस्य रूपाणि उदकप्रादुर्भावलक्षणानि। कुक्षेरित्यादि। कुक्षेरुदरस्योभयभागस्याभिवृद्धिः। सिरान्तर्द्धानगमनं सिरा न दृश्यते। तदा खल्वेवम्भूते सत्युदके जातोदके आतुरमुपद्रवा

चक्रपाणिः—साध्यासाध्यविभागमाह—तत्रेत्यादि। अनुदकप्राप्तमिति अजातोदकरूपदोषावस्थं, परिपाकेणास्य दोषाणां द्रवत्वं स्वभावादेव ज्ञेयम्। बाह्येषु स्रोतःसु प्रतिहतगतिरिति बहिर्गन्तुमसमर्थः। अत्र जलजन्मपूर्व्वरूपं पिच्छोत्पद्यते, तेन पिच्छोत्पत्तिलक्षणमेव तावदेव। पिच्छासदृशो भागः पिच्छा। अन्ये तु भक्तमण्डपिच्छामाहुः। सर्पतीति चलति ॥ २६ ॥

चक्रपाणिः—उदकपूर्णदृतिवत् संक्षोभः मांसस्य पिच्छोदकरूपं प्राप्तस्य। तमकः श्वासविशेषः। अचिकित्स्यमिति विषप्रयोगशस्त्रप्रणिधानादिदारुणकर्म्मव्यतिरिक्तक्रियया ऽचिकित्स्यं विद्यात् ॥ २७ ॥

भवन्ति चात्र ।

वातात् पित्तात् कफात् प्लीहः सन्निपातात् तथोदकात् ।
परं परं कृच्छ्रतममुदरं भिषगादिशेत् ॥ २८ ॥
पक्षाद् बद्धगुदन्तूर्द्ध्वं सर्व्वं जातोदकं तथा ।
प्रायो भवत्यभावाय छिद्रान्त्रञ्चोदरं नृणाम् ॥ २९ ॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।
बलशोणितमांसाग्नि-परिक्षीणञ्च वर्ज्जयेत् ॥ ३० ॥

श्च स्पृशन्ति वम्यादयः। तत्रादिपदेन ज्वरादयश्च। तथाविधं जातोदको-दररोगिणमचिकित्स्यं विद्यादिति ॥ २७ ॥

गङ्गाधरः—प्रमाणभूताः श्लोकाश्च भवन्ति चात्र। वातादित्यादि। वातजादुदरात् कृच्छ्रतमं पित्ताज्जातमुदरमादिशेत्, पित्ताज्जातोदरात् कृच्छ्रतमं कफाज्जातमुदरं, कफजातादुदरात् प्लीहयकृज्जातमुदरं कृच्छ्रतमं, प्लीहयकृज्जातोदरात् कृच्छ्रतमं सन्निपाताज्जातमुदरं, सन्निपातोदरात् कृच्छ्रतम-मुदकोदरमिति ॥ २८ ॥

गङ्गाधरः—तर्हि बद्धगुदोदरं क्षतोदरञ्च किं साध्यमित्यत आह—पक्षादित्यादि। बद्धगुदोदरं पक्षादूर्द्ध्वं प्रायोऽभावाय भवति, प्रायःपदात् कश्चित् मासादिकं जीवयति ततोऽभावाय भवत्येव। इत्येवं जातोदकं सर्व्वमुदरं पक्षादूर्द्ध्वं प्रायोऽभावाय भवत्येवं छिद्रान्त्रमुदरञ्च पक्षादूर्द्ध्वं प्रायोऽभावाय भवतीति ॥ २९ ॥

गङ्गाधरः—अजातोदकानां वातादिजानां कृच्छ्रात् कृच्छ्रतमानामप्य-साध्यत्वमाह—शूनाक्षमित्यादि। शूनं स्फीतमक्षि यस्य तं, कुटिलोपस्थं

चक्रपाणिः—परं परं कृच्छ्रतममिति यथा यथा परत्वनिर्द्देशो तथा तथा कृच्छ्रसाध्यत्वम् ॥२८॥

चक्रपाणिः—बद्धच्छिद्रदकोदराणां विशेषमाह—पक्षादित्यादि। बद्धगुदमुदरं पक्षादूर्द्ध्वं विनाशाय प्रायो भवति, कदाचित् पक्षादूर्द्ध्वमपि अभावाय न भवतीति प्रायःशब्देनाह। जातोदकं छिद्रञ्च प्रायो विनाशाय भवति, कदाचित् विपशस्त्राभिमतचिकित्सया जातोदकं छिद्रं बद्धगुदञ्च सिध्यतीति प्रायःशब्देन दर्शयति ॥ २९ ॥

चक्रपाणिः—शूनाक्षमित्यादिना साध्योक्तानामप्यसाध्यतामाह। कुटिलोपस्थमिति वक्रोपस्थम्।

श्वयथुः सर्व्वमर्म्मोत्थः श्वासो हिक्कारुचिस्तथा।
मूर्च्छा छर्द्दिरतीसारो निहन्त्युदरिणं नरम्॥ ३१॥
जन्मनैवोदरं सर्व्वं प्रायः कृच्छ्रतमं मतम्।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्॥ ३२॥
अजातशोथमरुणं सशब्दं नातिभारिकम्।
सदा गुड़गुड़ावन्तं सिराजालगवाक्षितम्॥
नाभिं विष्टभ्य वायुस्तु वेगं कृत्वा प्रणश्यति।
हृन्नाभिवङ्क्षणकटी-गुदप्रत्येकशूलिनः॥

वक्रशिश्नं नरं वक्रयोनिं नारीम्, उपक्लिन्ना क्लिन्नवत् क्लिन्ना तनुरघना त्वक् यस्य तं, बलादिपरिक्षीणञ्च वातादुदरिणं वर्ज्जयेत्॥ ३०॥

गङ्गाधरः—अपरञ्चासाध्यलक्षणमाह—श्वयथुरित्यादि। सर्व्वमर्म्मोत्थः श्वयथुः श्वासादिश्च वातादुदरिणं निहन्ति। एकवचनादेकैक एव सर्व्वमर्म्मोत्थशोथादिः॥ ३१॥

गङ्गाधरः—वातजादिकमुत्तरोत्तरं कृच्छ्रतमं किं तर्हि कृच्छ्रमित्यत आह—जन्मनैवेत्यादि। जन्ममात्रं सर्व्वमुदरं कृच्छ्रतमं मतं, कथं कृच्छ्रमुदरं स्यात्? तत्र बलिनो जनस्याजाताम्बु तदुदरं यत्नसाध्यं नवोत्थितञ्च यत्नसाध्यमिति॥ ३२॥

गङ्गाधरः—कथमजाताम्बूदरं विज्ञायेतेत्यत आह—अजातशोथमित्यादि। यमुदरिणं न जातशोथं किन्त्वरुणवर्णञ्च सशब्दञ्च नातिभारिकं नातिगुरु। सर्व्वदा उदरमध्ये यस्य गुड़गुड़ाशब्दः स्यात्। उदरोपरि सिराजालं गवाक्षाकारं यस्य स्यात्। यस्य वायुर्नाभिं विष्टभ्य वेगं कृत्वा प्रणश्यति न

उपक्लिन्ना तन्वी च त्वग् यस्य स तथा। अग्निक्षयश्चोदरे प्रथमत एव यद्यपि भवति तथापि असाध्यलक्षणेषु विशेषेणाग्निक्षयो लक्षणान्तरमुक्तञ्च भवतीति ज्ञेयम्॥ ३०। ३१॥

चक्रपाणिः—जन्मनैवेत्युत्पत्तिमात्रेण॥ ३२॥

चक्रपाणिः—अजाताम्बुलक्षणमाह—अजातशोथमिति। नातिभारिकमिति नातिगुरुणा भारेण युतम्। नाभिं विष्टभ्येति नाभिं स्तम्भयित्वा। कृत्वा वेगमिति पुरीषवातवेगं कृत्वा वात-

कर्कशं सृजतो वातं नातिमन्दे च पावके ।
लालया विरसे चास्ये मूत्रेऽल्पे संहते विषि ॥
अजातोदकमित्येतैर्युक्तं विज्ञाय लक्षणैः ।
उपाचरेद् भिषग् दोष-बलकालविशेषवित् ॥ ३३ ॥
वातोदरं बलवतः पूर्व्वं स्नेहैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥
हृते दोषे परिम्लानं वेष्टयेद् वाससोदरम् ।
तथास्यानवकाशत्वाद् वायुर्नाध्मापयेत् पुनः ॥
दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं तस्मान्नित्यमेव विरेचनम् ॥ ३४ ॥

निःसरति। एवं हृदादिमर्म्मैकाङ्गशूलवतः कर्कशशब्दमधोवातं सृजतो जनस्य पावकेनातिमन्दे लालया च विरसे चास्ये मूत्रे चाल्पे विषि पुरीषे संहते संघातरूपे सत्यजातोदकमुदरिणमित्येतैर्लक्षणैर्युक्तं विज्ञाय दोषादि-विशेषविद् भिषगुपाचरेत्। एतद्भिन्नं जातोदकादिकं वर्ज्जयेदिति प्रागुक्तम् ॥ ३३ ॥

गङ्गाधरः—क्रमेण वातोदरादिचिकित्सितमाह—वातोदरमित्यादि। स्नेह-विधिना पूर्व्वं बलवतो वातोदरं स्नेहैः साधितघृतादिभिरुपाचरेत्। स्निग्धं पुनः स्वेदविधिना स्वेदयित्वा स्नेहविरेचनमेरण्डतैलादिना विरेचयेत्। हृते दोषे सति परिम्लानमुदरं वाससा वेष्टयेत् यथा तदुदरं नावकाशयेत्। अनवकाशत्वाद् वायुश्च पुनर्नोदरमाध्मापयेत्। इत्येवं विरेचनं नित्यमेव कारयेत्। कस्मात्? दोषातिमात्रोपचयात् अतिमात्रदोषसञ्चयात् स्रोतसां मार्गनिरोधनात् उदरं सम्भवति यस्मात् तस्मान्नित्यं विरेचनं कारयेत् ॥ ३४ ॥

उत्सर्गं विसृज्येति यावत्। प्रणश्यतीति लीनं भवति। कर्कशमिति वेगवन्तम्। सृजत इति वातं सरतः ॥ ३३ ॥

चक्रपाणिः—वातोदरमित्यादिना चिकित्सामाह। परिम्लानमिति क्षीणम्। तथेति वस्त्र-वेष्टनेन। उदरे पुनः शोधनोत्पत्तिमाह—दोषेत्यादि। स्रोतोमार्गनिरोधनादिति स्रोतोमुख-निरोधनादित्यर्थः। मार्गशब्दोऽत्र मुखरूपमार्गवाची ॥ ३४ ॥

शुद्धं संसृज्य च क्षीरं बलार्थं पाययेत् तु तम् ।
प्रागुत्क्लेशान्निवर्त्त्यैवं बले लब्धे क्रमात् पयः ॥ ३५ ॥
यूषै रसैर्वा मन्दाम्ल-लवणैरेधितानलम् ।
सोदावर्त्तं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम् ॥ ३६ ॥
स्फुरणाक्षेपसन्ध्यस्थि-पार्श्वपृष्ठत्रिकार्त्तिषु ।
दीप्ताग्निं बद्धविड् जातं रुक्षमप्यनुवासयेत् ॥ ३७ ॥
तीक्ष्णाधोभागयुक्तोऽस्य निरूहो दाशमूलिकः ।
वातघ्नाम्लशृतैरण्ड-तिलतैलानुवासनम् * ॥ ३८ ॥

गङ्गाधरः—एवं विरेचनेन वस्त्रावेष्टनेन च क्रमेण सम्यक्शुद्धमुदरिणं संसृज्य मण्डपेयाविलेपीभिः क्रमेण संसर्ज्जनं कृत्वा बलार्थं तमुदरिणं क्षीरं पाययेत् यावदुत्क्लेशो न स्यात् । बले लब्धे प्रागुत्क्लेशात् हृदयस्थदोषस्योपस्थितवमनभावात् पूर्व्वं क्रमात् पयो निवर्त्त्य यूषैर्मुद्गादिकृतैर्मांसरसैर्वा मन्दाम्ललवणैर्दाडिमामलकादिभिः सैन्धवादिभिश्चाल्पाम्ललवणैर्भोजयित्वा तमुदरिणमेधितानलं प्रवृद्धाग्निं पुनः सोदावर्त्तमुदावर्त्तदोषश्चेत् तस्य वर्त्तेत तदा पुनः स्निग्धं स्विन्नञ्च तमुदरिणं नरमास्थापयेत् निरूहयेत् ॥ ३५ । ३६ ॥

गङ्गाधरः—स्फुरणेत्यादि । यदि तत्रोदरे स्फुरणाक्षेपौ सन्ध्यादिष्वार्त्तिश्च वर्त्तन्ते, तदुदरी नरश्च दीप्ताग्निबद्धविट्समूहो रुक्षश्च भवति, तदा तमनुवासयेत् स्नेहवस्तिना समुपपादयेत् ॥ ३७ ॥

गङ्गाधरः—तन्निरूहणमाह—तीक्ष्णेत्यादि । अस्योदरिणो निरूहो दाशमूलिकः, स च तीक्ष्णद्रव्याधोभागहरद्रव्ययुक्तः कार्य्यः । अनुवासनन्तु वातघ्नद्रव्याम्लद्रव्यशृतस्यैरण्डतैलातिलतैलस्येति ॥ ३८ ॥

चक्रपाणिः—संसृज्येत्यत्र पेयादिक्रमेणोत्पाद्य । प्रागुत्क्लेशादिति उत्क्लेशे दृश्यमाने । कार्य्यं कर्त्तव्यमित्यनुवर्त्तनीयम् । उत्सर्गतस्तु बलजनककार्य्यं कृत्वा पयो निवर्त्तनीयम् ॥ ३५—३७ ॥

चक्रपाणिः—वातघ्नादिभिः शृतमैरण्डतैलं वानुवासनं यस्य वस्तेः स तथा ॥ ३८ ॥

* वातघ्नाम्ल........तैलानुवासनः इति चक्रसम्मतः पाठः ।

अविरेच्यन्तु यं विद्याद् दुर्ब्बलं स्थविरं शिशुम्।
सुकुमारं प्रकृत्याल्प-दोषं वाथोल्वणानिलम्॥
तं भिषक् शमनैः सर्पिर्यूषमांसरसौदनैः।
वस्त्यभ्यङ्गानुवासैश्च क्षीरैश्चोपाचरेद् बुधः॥ २९॥
पित्तोदरे तु बलिनं पूर्व्वमेव विरेचयेत्।
दुर्ब्बलन्त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना॥
संजाते बलकायाग्नौ पुनः स्निग्धं विरेचयेत्।
पयसा सत्रिवृत्कल्केनोरुवूकश्रृतेन वा॥
शातलात्रायमाणाभ्यां श्रृतेनारग्वधेन वा।
सकफे वा समूत्रेण सवाते तिक्तसर्पिषा॥

गङ्गाधरः—अविरेच्यमित्यादि। यदि स वातोदरी न विरेचनार्हो भवति दुर्ब्बलो वा स्थविरो वा शिशुर्वा सुकुमारो वा प्रकृत्याल्पदोषो वा अथवा उल्वणानिलः स्यात्, तदा तं सर्पिरादिभिः शमनैः वस्तिनाभ्यङ्गेनानुवासनेन क्षीरपाणेन च बुधो भिषगुपाचरेत्। इति वातोदरचिकित्सितमुक्तम्॥ ३०॥

गङ्गाधरः—अथ पित्तोदरचिकित्सितमाह—पित्तोदरे त्वित्यादि। पित्तोदरे बलिनमुदरिणं पूर्व्वं विरेचयेत्। दुर्ब्बलन्तु पुरुषमादावनुवास्य क्षीरवस्तिना निरूहेण शोधयेत्; बले संजाते संजाते कायाग्नौ पुनः स्निग्धं कृत्वा विरेचयेत्। तद्विरेचनमाह—पयसेत्यादि। पयसा विरेचयेद् वा त्रिवृत्कल्केन विरेचयेत् अथवा उरुवकवीजस्य श्रृतेन क्काथेन विरेचयेत्। अथवा शातलात्रायमाणाभ्यां शातला चर्म्मकशा त्रायमाणा पाणीयवहला। आरग्वधेन श्रृतेन क्काथेन वा विरेचयेत्। सकफे पित्तोदरे समूत्रेणारग्वधश्रृतेन विरेचयेत्। सवाते पित्तोदरे तिक्तसर्पिषा पञ्चतिक्तघृतेन विरेचयेत्। एवं विरेचनानन्तरं

चक्रपाणिः—अनुवासैरित्यनुवासनैः॥ २९॥

चक्रपाणिः—क्षीरवस्तिरिति क्षीरप्रधानो वस्तिः। सातला चर्म्मकषा। सकफे इति कफयुक्ते पित्ते। समूत्रेणेत्यत्र पयसेत्यनुवर्त्तते। सवाते पित्ते तिक्तसर्पिषा विरेचनं त्रिवृतादि-

पुनः क्षीरप्रयोगश्च वस्तिकर्म्म विरेचनम्।
क्रमेण ध्रुवमातिष्ठन् युक्तः पित्तोदरं जयेत्॥ ४० ॥
स्निग्धस्विन्नविशुद्धञ्च कफोदरिणमातुरम्।
संसर्ज्जयेत् कटुक्षार-युक्तैरन्नैः कफापहैः॥
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा।
सक्षारैस्तैलपानैश्च शमयेत् तु कफोदरम्॥ ४१ ॥
सन्निपातोदरे सर्व्वा यथोक्ताः कारयेत् क्रियाः।
सोपद्रवन्तु निर्व्वृत्तं प्रत्याख्येयं विजानता॥ ४२ ॥

पुनः क्षीरप्रयोगः केवलगव्यदुग्धपानं जातबले पुनर्वस्तिकर्म्म द्विविधं ततो विरेचनमित्येवं क्रमेण युक्तो योगप्रयुक्तः सन्नातिष्ठन्नास्थितः सन् ध्रुवं पित्तोदरं जयेत्। पित्तोदरचिकित्सितमित्युक्तम्॥ ४० ॥

गङ्गाधरः—अथ कफोदरचिकित्सितमाह स्निग्धेत्यादि। कफहरस्नेहैः स्निग्धं ततः स्विन्नं स्नेदाधिकारविधिना ततः शुद्धं वमनविरेचनाभ्यां कफोदरिणमातुरं कफापहैः कटुक्षारयुक्तैश्चान्नैः संसर्ज्जयेत् संसर्ज्जनं कुर्य्यात्। गोमूत्रारिष्टयोः पानैश्चूर्णरौषधैरयस्कृतिभिः लौहक्रियाभिः, सक्षारैः क्षारसिद्धतैलपानैश्च कफोदरं शमयेत्। इत्युक्तं कफोदरचिकित्सितम्॥ ४१ ॥

गङ्गाधरः—अथ सन्निपातोदरचिकित्सितमाह सन्निपातेत्यादि। सन्निपातोदरे यथोक्तं प्रतिदोषं या या क्रियोक्ता तां तामनतिक्रम्य तास्ता एव सर्व्वा मिलिताः क्रियाः भिषक् कारयेत्। यदि सन्निपातोदरं सोपद्रवं निर्व्वृत्तं भवति, तदा विजानता वैद्येन प्रत्याख्येयं त्यक्तव्यमिति॥ ४२ ॥

द्रव्ययुक्तेन विरेचनं कर्त्तव्यम्। क्रमेणेति क्षीरप्रयोगादिक्रमेण पित्तोदरं जयेदिति योजना॥ ४० ॥

चक्रपाणिः—विशुद्धमित्यत्र वमनं विना विशुद्धो ज्ञेयः, वमनस्योदरे निषिद्धत्वात्। चूर्णयुक्तायस्कृतयः चूर्णायस्कृतयः नवायोरजसो भागं चूर्णन्तु मधुसर्पिषा इत्याद्युक्ताः। किंवा चूर्णान्यत्रैव वक्ष्यमाणानि। अयस्कृतयस्तु रसायनोक्तलोहप्रयोगे ज्ञेयाः॥ ४१ ॥

चक्रपाणिः—सर्व्वा यथोक्ता इति प्रत्येकं वातोदरादिविहिताः क्रियाः सर्व्वा एव सन्निपातोदरे कर्त्तव्याः। सोपद्रवन्तु निर्व्वृत्तमिति सोपद्रवतयोत्पन्नम्॥ ४२ ॥

उदावर्त्तरुजानाहमोहतृड़्दहनज्वरैः।
गौरवारुचिकाठिन्यैरनिलादीन् यथाक्रमम्॥
लिङ्गैः प्लीह्न्यधिका तृष्णा रक्तश्च पित्तलक्षणैः।
विद्यात् समस्तैः सर्व्वैस्तु सन्निपातं तथा भिषक्॥
चिकित्सां संप्रयुञ्जीत यथादोषं यथाबलम्।
स्नेहं स्वेदं विरेकञ्च निरूहमनुवासनम्॥
समीक्ष्य कारयेद् बाहौ वामे वा व्यधयेत् सिराम्।
षट्पलं पाययेत् सर्पिः पिप्पलीर्वा प्रयोजयेत्॥
सगुड़ां वाभयां वापि क्षारारिष्टगणांस्तथा।
एष क्रियाक्रमः प्रोक्तो योगान् संशमनान् शृणु॥ ४३॥

गङ्गाधरः—सन्निपातोदरचिकित्सितानन्तरं प्लीहयकृदुदरचिकित्सितमाह—उदावर्त्तेत्यादि। प्लीह्नि उदावर्त्तरुजानाहैर्लिङ्गैरनिलं मोहतृड़्दहनज्वरैः पित्तं गौरवारुचिकाठिन्यैः कफं विद्यात्, तथा तैः समस्तैः सर्व्वैस्तु लिङ्गैः सन्निपातं त्रिदोषं प्लीह्नि भिषग् विद्यात्। रक्तश्च प्लीह्नि पित्तस्वलक्षणैर्विद्यात्, तत्र तृष्णा चाधिका। एवं दोषं ज्ञात्वा प्लीह्नि यथा चिकित्सेत् तदाह—चिकित्सामित्यादि। यथादोषं वातादिदोषहरं यथाबलं स्नेहादिकं समीक्ष्य कारयेत्। रक्ते तु वामे बाहौ सिरां व्यधयेत्। षट्पलकं घृतं वा पाययेदथवा पिप्पलीः प्रयोजयेत्। सगुड़ामित्यादि। सगुड़ामभयां वा प्रयोजयेदथवा क्षारगणान् प्रयोजयेदरिष्टगणान वा॥ ४३॥

चक्रपाणिः—प्लीहोदरचिकित्सामाह—उदावर्त्तेत्यादि। अनिलादीन् यथाक्रममिति उदावर्त्तरुजानाहैर्वातं दाहमोहतृषाज्वरैः पित्तं, शेषैः कफं दृष्ट्वा चिकित्सां कुर्व्वीत। किंतु बाधितं रक्तं तल्लक्षणैर्दृष्ट्वा चिकित्सां कुर्व्वीत। तत्र रक्तस्य लक्षणानि विविधशोणितीयोक्तानि। तन्त्रान्तरे विदाहस्तृष्णा वैरस्यं गात्रगौरवं मूर्च्छा इत्यादीनि ज्ञेयानि। प्लीह्नीति प्लीहोदरे। यथादोषम् इति उल्वणदोषप्रशमनीम्। वामे बाहौ सिराव्यधः सामान्योक्तोऽपि सुश्रुतप्रत्ययात् कूर्पराभ्यन्तरसिराव्यधो ज्ञेयः। पिप्पलीर्वा प्रयोजयेदिति रसायनोक्तपिप्पलीवर्द्धमानं प्रयोजयेत्। क्षारारिष्टगणानिति ग्रहण्यर्शोवक्ष्यमाणक्षारारिष्टसमूहान्। इहापि च विड़ङ्गमित्यादिना क्षारं तथा रोहितकलतेत्यादिनारिष्टञ्च वक्ष्यति॥ ४३॥

पिप्पली नागरं दन्ती समांशं हिङ्गुनाभयम् * ।
विड़र्द्धांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत् ॥ ४४ ॥
विडङ्गं चित्रकं शुण्ठीं सघृतं सैन्धवं वचाम् ।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ॥ ४५ ॥
रोहीतकलतानान्तु काण्डकानभयाजले ।
मूत्रे वा सुनुयात् तच्च सप्तरात्रं स्थितं पिबेत् ॥
कामलागुल्ममेहार्शः-प्लीहसर्व्वोदरक्रिमीन् ।
स हन्याज्जाङ्गलरसैर्जीर्णे स्याच्चात्र भोजनम् ॥ ४६ ॥
रोहीतकत्वचः कृत्वा पलानि पञ्चविंशतिम् ।
कोलद्विप्रस्थसंयुक्तां कषायमुपकल्पयेत् ॥

गङ्गाधरः—इति क्रियासूत्रमुक्त्वा योगानाह—पिप्पलीत्यादि । पिप्पल्यादि-पञ्चकं समांशं विड़् लवणमर्द्धभागमित्येतच्चूर्णम् ॥ ४४ ॥

गङ्गाधरः—विड़ङ्गमित्यादि । विड़ङ्गादीनि पञ्च द्रव्याणि समभागेन नीत्वा कुट्टयित्वा किञ्चिद्घृतं म्रक्षयित्वा हण्डिकाभ्यन्तरेऽन्तर्द्धूमं दग्ध्वा पयसा पाययेत् ॥ ४५ ॥

गङ्गाधरः—लोहीतकेत्यादि । लोहीतकः प्लीहशत्रुर्नाम वृक्षस्तस्य लतावत्-प्रशाखानां काण्डांश्छित्त्वा हरीतकीजले क्वाथे सप्तरात्रं स्थितं सुनुयात् । अथवा गोमूत्रे स्थितं सप्तरात्रं सुनुयात् । तच्च सन्धानं पिबेत् । तत्र जीर्णे जाङ्गलमांसरसैर्भोजनं यः कुर्य्यात् स कामलादीन् हन्यात् ॥ ४६ ॥

गङ्गाधरः—रोहीतकत्वच इत्यादि । रोहीतकस्य त्वचः पलानि पञ्चविंशतिं कोलस्य शुष्कबदरस्य द्विप्रस्थसंयुक्तां कृत्वा मिलितादष्टगुणे जले पक्त्वा

चक्रपाणिः—द्विगुणाभयमिति द्विभागाभयम् ॥ ४४ । ४५ ॥

चक्रपाणिः—रोहितकलता रोहितक इति ख्याता । काण्डका इति स्वल्पप्रमाणाः खण्डाः । आसुनुयादिति द्रवे मग्नाः कृत्वा सन्धानार्थं स्थापयेत् ॥ ४६ ॥

चक्रपाणिः—रोहितकेत्यादौ सप्तपञ्चाशत्पलक्वाथ्योऽष्टगुणमुदकं दत्त्वा पादावशेषेण द्विपलोपेत-

* पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् । इति क्वचित् पाठः ।

पलिकैः पञ्चकोलैस्तु तैः सर्व्वैश्चापि तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ।
तथा गुल्मोदरश्वास-क्रिमिपाण्डुत्वकामलाः ॥ ४७ ॥

इति रोहीतकघृतम् ।

अग्निकर्म्म च कुर्व्वीत भिषग् वातकफोल्वणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः ॥
रक्तावसेकः संशुद्धिः क्षीरपाणञ्च सर्पिषः ।
यूषैर्मांसरसैश्चापि दीपनीयरसान्वितैः ॥
लघून्यन्नानि संसृज्य दद्यात् प्लीहोदरे भिषक् ।
यकृति प्लीहवत् सर्व्वं तुल्यत्वाद् भेषजं मतम् ॥ ४८ ॥

चतुर्थभागावशेषे कषायमवतारयेत् इत्येवं कषायमुपकल्पयेत् । पञ्चकोलैः प्रत्येकं पलिकैस्तैस्तु सर्व्वैः पञ्चभिस्तुल्यया पञ्चपलमितया रोहीतकत्वचा सह पिष्टैः कल्कैस्तेन कषायेण च घृतप्रस्थं विपाचयेत् । कामलान्ताशीः । रोहीतकघृतम् ॥ ४७ ॥

गङ्गाधरः—अग्निकर्म्म चेत्यादि । वातकफोल्वणे प्लीह्नि भिषगग्निकर्म्म च स्वेददाहादिकं कुर्व्वीत । पैत्तिके प्लीह्नि जीवनीयानि दश द्रव्याणि तथा सर्पींषि पित्तहरद्रव्यसिद्धानि जीवनीयान्यतमसिद्धानि वा तथा क्षीरवस्तयः । रक्तावसेकः संशुद्धिर्विरेचनं क्षीरपाणं सर्पिषश्च पानं हितानि भवन्ति । एवं प्लीहोदरे दीपनीयरसैरम्लतिक्तकटुकैरन्वितैर्यूषैर्मांसरसैश्च लघून्यन्नानि संसृज्य संसृष्टानि कृत्वा दद्यात् । इति प्लीहोदरचिकित्सितेन यकृदुदर-चिकित्सितं व्याख्यातं, तयोस्तुल्यनिदानत्वादिति ॥ ४८ ॥

चतुर्द्दशशरावावधिमानः क्वाथो भवति । सर्व्वैस्तैश्चापि तुल्ययेति पञ्चकोलैस्तुल्यया रोहितकत्वचा, पञ्चपलानीत्यर्थः । पिष्टैरिति पञ्चकोलैः पिष्टैः । तथा विभक्तिविपरिणामात् रोहितकत्वचा पिष्टयेति ज्ञेयम् ॥ ४७ ॥

चक्रपाणिः—अग्निकर्म्मेति गुल्मवदलाव्यग्निकर्म्म वदन्ति । वातकफोल्वणे प्लीहोदरे एव ज्ञेयम् । दीपनीयसमायुक्तैरिति पिप्पल्यादिदीपनीयगणसंस्कृतैरित्यर्थः ॥ ४८ ॥

स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम्।
सतैललवणं दद्यान्निरूहं सानुवासनम्॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम्।
उदावर्त्तहरं कर्म्म कार्य्यं वातघ्नमेव च॥ ४९॥
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत्।
जातं जातं जलं स्राव्यमेवं तद् यापयेद् भिषक्॥ ५०॥
तृष्णाकासज्वरार्त्तन्तु क्षीणमांसाग्निभोजनम्।
वर्ज्जयेच्छ्वासिनं तद्वच्छूलिनं दुर्ब्बलेन्द्रियम्॥ ५१॥

गङ्गाधरः—अथ बद्धोदरचिकित्सितमाह—स्विन्नायेत्यादि। बद्धोदरिणं स्वेदयित्वा तीक्ष्णौषधान्वितं स्नुक्क्षीरादियुक्तं गोमूत्रं सतैललवणान्वितं निरूहं दद्यात्, तत आहारान्तेऽनुवासनञ्च दद्यादिति सानुवासनं निरूहं दद्यात्। परिस्रंसीनीत्यादि। परिसर्व्वतः स्रंसीनि विरेचनान्यन्नानि तीक्ष्णञ्च विरेचनं दद्यात्। तथा वैद्येनोदावर्त्तहरं कर्म्म बद्धोदरे कार्य्यं, वातघ्नमेव च कर्म्म कार्य्यम्। इति बद्धोदरचिकित्सितमुक्तम्॥ ४९॥

गङ्गाधरः—अथ क्षतोदरचिकित्सितमाह—छिद्रोदरमित्यादि। क्षतजच्छिद्रान्त्रोदरं स्वेदादृते श्लेष्मोदरवदाचरेत्। जातं जातमित्यादि। छिद्रोदरे जातं जातं जलं वैद्येन स्राव्यम्। एवमेतत्प्रकारेण भिषक् छिद्रोदरिणं कालं यापयेत्। इति याप्यासाध्यच्छिद्रोदरचिकित्सितं कालयापनार्थमुक्तम्॥ ५०॥

गङ्गाधरः—प्रत्याख्येयन्तु गत् तस्य लक्षणमाह—तृष्णेत्यादि। क्षीणमांसं क्षीणाग्निं क्षीणभोजनं तृष्णाद्यार्त्तं छिद्रोदरिणं वर्ज्जयेत्। तद्वत् श्वासिनं शूलिनं दुर्ब्बलेन्द्रियं छिद्रोदरिणं वर्ज्जयेत्। इति छिद्रोदरचिकित्सितमुक्तम्॥ ५१॥

चक्रपाणिः—निरूहस्योत्सर्गत एव सतैललवणत्वे सिद्धे सतैललवणमिति पदं तैललवणयोः अत्राधिकदानोपदर्शनार्थम्। बद्धच्छिद्रकफोदराणाञ्च यद्यप्यास्थापनं निषिद्धं तथापि तदेकसाध्यायामवस्थायां निरूहानुवासनमिह ज्ञेयम्। परिस्रंसीनीत्यनुलोमनानि॥ ४९॥

चक्रपाणिः—छिद्रान्त्रञ्चोदरं नृणामित्यत्र यद्यप्यसाध्यत्वमुक्तं तथापि तत्र प्रायःशब्दनिवेशात् असाध्यताव्यभिचारोऽपि दर्शितः; तेनेह तच्चिकित्सोच्यते। उत्तरत्रापि च पिपीलिकादंशादिना छिद्रोदरस्योच्यते। तथाहि—हन्ति सर्व्वोदराण्येतत् चूर्णमित्यनेन सर्व्वोदरचिकित्सा वक्तव्या। अन्ये तु सर्व्वोदरहन्तृत्वकथनं न पारमार्थिकम्। ऋते स्वेदादित्यनेन स्वेदस्य छिद्रोदरे उदककारकतया निषेधं दर्शयति। तृष्णेत्यादिना प्रत्याख्येयं छिद्रोदरमाह॥ ५०। ५१॥

अपां दोषहराण्यादौ प्रदद्यादुदकोदरे।
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च॥
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत्।
द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्व्वशः॥ ५२॥
सर्व्वमेवोदरं प्रायो दोषसंघातजं मतम्।
तस्माद् वातादिशमनीं क्रियां सर्व्वत्र कारयेत्॥ ५३॥
दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति।
तस्माद् योज्यानि भोज्यानि * दीपनानि लघूनि च॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान्।
पयोमूत्रासवारिष्टान् मधुसीधूनि चाप्नुयात्॥

गङ्गाधरः—अथोदकोदरचिकित्सितमाह—अपामित्यादि। उदकोदरे भिषक् आदावपां दोषहराणि तीक्ष्णानि द्रव्याणि गोमूत्रयुक्तानि विविधक्षारवन्ति च प्रदद्यात्। कफघ्नैर्दीपनीयैश्चाहारैस्तं जलोदरिणमुपाचरेत्। अनुपूर्व्वशः क्रमेणोदकादिभ्यो द्रवद्रव्येभ्यो नियच्छेत् निवर्त्तयेदिति॥ ५२॥

गङ्गाधरः—सर्व्वमेवेत्यादि। दोषसंघातजं त्रिदोषजं प्रायः क्वचिदन्यथापि। तस्माद् वातादित्रिदोषशमनीं क्रियां सर्व्वत्रोदरे कारयेत्॥ ५३॥

गङ्गाधरः—दोषैरित्यादि। दीपनलघून्यन्नान्याह—रक्तशालीनित्यादि।

चक्रपाणिः—अपामित्यादिना उत्पत्तिविशिष्टदकोदरचिकित्सामाह। अपां दोषहराणि इति वदन्ति। उदकादिभ्य इति उदकप्रकारेभ्योऽवान्तरेभ्यः। नियच्छेदिति निवर्त्तयेत्। अनुपूर्व्वश इति क्रमेण॥ ५२॥

चक्रपाणिः—निवर्त्तयन्नत्र सर्व्वोदरसाधारणीं चिकित्सां वक्तुमाह—सर्व्वमित्यादिना॥ ५३॥

* तस्माद् योज्यानि भोज्यानि इत्यत्र तस्माद् भोज्यानि भोज्यानि इति चक्रसम्मतः पाठः।

यवागूमोदनं वापि यूषैरद्याद् रसैरपि।
मन्दाम्लस्नेहकटुभिः पञ्चमूलोपसाधितैः ॥ ५४ ॥
औदकानूपजं मांसं शाकं पिष्टकृतांस्तिलान्।
व्यायामाध्वदिवास्वप्न-यानं पानञ्च वर्ज्जयेत् ॥
तथोष्णलवणाम्लानि * विदाहीनि गुरूणि च।
नाद्यादन्नानि जठरी तोयपानञ्च वर्ज्जयेत् ॥ ५५ ॥
नातिसान्द्रं हितं पाने स्वादु तक्रमपेलवम्।
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरे ॥
वातोदरी पिवेत् तक्रं पिप्पलीलवणान्वितम्।
शर्करामधुकोपेतं स्वादु पित्तोदरी पिवेत् ॥

कृतान्नान्याह—यवागूमित्यादि। रक्तशालीनां तण्डुलान् यवागूमग्निबलमवेक्ष्य मण्डपेयाविलेपीनामन्यतमामोदनञ्च मन्दाम्लस्नेहकटुभिः पञ्चमूलक्काथोपसाधितैरल्पाम्लकटुद्रव्यसंस्कृतैर्मुद्गयूषैरद्यात्, मृगद्विजानां मांसरसैरप्यद्यात्, तथासाधितैरेव न तु केवलैर्यूषै रसैर्वाद्यात् ॥ ५४ ॥

गङ्गाधरः—सर्व्वेषामुदरिणां वर्ज्ज्यान्याह—औदकेत्यादि। औदकं मांसं मत्स्यादि आनूपजं मांसं वराहादि शाकं पत्रशाकं पिष्टकृतांस्तिलान् तिलान् पिष्ट्वा वटकादीन् पानं द्रवद्रव्यपानमिति वर्ज्ज्यमुक्तम्। परञ्चाह—तथेत्यादि। उष्णद्रव्यं स्पर्शतः। लवणञ्चाम्लञ्च। पानवर्ज्जनेन तोयपानवर्ज्जने लब्धे विशेषेण तोयपानञ्च वर्ज्जयेत् ॥ ५५ ॥

गङ्गाधरः—तर्हि किं पातव्यमित्यत आह—नातीत्यादि। सर्व्वोदरिणां पाने नातिसान्द्रं नातिघनमपेलवमविरलं तक्रं हितम्। तच्च यत्र यथा हितं तदाह—त्र्यूषणक्षारलवणैर्युक्तन्तु तत् तक्रं निचयोदरे सन्निपातोदरे हितम्। वातोदरी पिप्पलीलवणान्वितं तक्रं पिवेत्। शर्करायष्टिमधुचूर्णोपितं तक्रं

चक्रपाणिः—भोज्यानि अन्नानि, पुनर्भोज्यानीति भोक्तव्यानि। मन्दाम्लेत्यादौ मन्दशब्दोऽल्पवचनः ॥ ५४ ॥

पाणिः—यानमयानमित्यश्वादिना यानम्। कवोष्णमिति ईषदुष्णम् ॥ ५५ ॥

* तथोष्णलवणाम्लानि इत्यत्र कवोष्णं लवणाम्लानि इति चक्रेण पठ्यते।

यमानीसैन्धवाजाजी-व्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥
मधुतैलवचाशुण्ठी-शताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदरी जातं सव्योषन्तूदकोदरी ॥
बद्धोदरी तु हवुषा-यमान्यजाजिसैन्धवैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥ ५६ ॥
शोफानाहार्त्तितृण्मूर्च्छा-पीड़िते कारभं पयः ।
शुद्धानां क्षामदेहानां गव्यं छागं समाहिषम् ॥ ५७ ॥
देवदारुपलाशार्क-हस्तिपिप्पलिशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ॥ ५८ ॥

पित्तोदरी पिबेत् । यमानीत्यादि । यमान्यादियुक्तं व्यक्ताम्लं तक्रं नातिपेलवं नातिविरलं मधुयुतं कफोदरी पिबेत् । मधुतैलेत्यादि । प्लीहयकृदुदरी मधुतैलादियुक्तं तक्रं पिबेत् । सव्योषं दुग्धं दधिरूपेण जातं पादजलमुद्धृतसारं तक्रमुदकोदरी पिबेत् । बद्धोदरीत्यादि । हवुषादिभिः युक्तं तक्रं बद्धोदरी पिबेत् । पिप्पलीक्षौद्रयुक्तं तक्रं छिद्रोदरी पिबेत् । गौरवेत्यादि । प्रकरणादुदरिणामित्याहुः अन्ये सर्व्वस्मिन् व्याधावेव गौरवादिमतां वातकफार्त्तानां तक्रममृतत्वाय कल्पते ॥ ५६ ॥

गङ्गाधरः—शोफेत्यादि । कारभं करिणीनां नव्यानां पयः । एतदुदरिणामेव शोफादिमतां शुद्धानां क्षामदेहानामुदरिणां गव्यं छागं माहिषञ्च पयोऽमृतत्वाय कल्पते । इति द्रवमात्रवर्ज्जनेऽपवादवचनं पानविषये ॥ ५७ ॥

गङ्गाधरः—देवदार्व्वित्यादि । देवदारुकाष्ठं पलाशार्कशिग्रूणां त्वक् प्रत्येकं समैर्गोमूत्रपिष्टैरुदरं सर्व्वं प्रदिह्यात् ॥ ५८ ॥

चक्रपाणिः—अपेलवमित्यस्य उद्धृतस्नेहम् । स्वाद्विति सद्यो मथितं मधुरं जातम् ॥ ५६—५८ ॥

वृश्चिकालीं वचां कुष्ठं पञ्चमूलीं पुनर्नवाम्।
वर्षाभूं नागरं धान्यं जले पक्त्वा च सेचयेत् * ॥
पलाशं कत्तृणं रास्नां तद्वत् पक्त्वा च सेचयेत्।
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ॥ ५९ ॥
रुक्षाणां बहुवातानां तथा संशोधनार्थिनाम्।
दीपनीयानि † सर्पींषि जठरघ्नानि वक्ष्यते ॥ ६० ॥
पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः।
सक्षारैरर्द्धपलिकैर्द्विप्रस्थं सर्पिषः पचेत् ॥

गङ्गाधरः—वृश्चीकालीमित्यादि। वृश्चिकाल्यादीनि द्वादश जल काथ-विधिना पक्त्वा उदरं सेचयेत्। पञ्चमूली विल्वादिः। पलाशमित्यादि। कत्तृणं गन्धतृणम्। मूत्राणीत्यादि। अष्टौ मूत्राण्युदरिणां सेके पाने च प्रयोजयेत् ॥ ५९ ॥

गङ्गाधरः—रुक्षाणामित्यादि। उदरिणां रुक्षाणामित्यादीनाम्। जठरघ्नानि उदरघ्नानि ॥ ६० ॥

गङ्गाधरः—पिप्पलीत्यादि। सर्पिषो द्विप्रस्थमष्टशरावं कृतद्वैगुण्यं पिप्पल्या-

चक्रपाणिः—उत्क्वाथ्येति जले पक्त्वा। अवसेचयेदित्यत्र उदरमित्यनुवर्त्तते ॥ ५९ ॥

चक्रपाणिः—स्नेहनीयानीत्यत्र केचिद् दीपनीयानीति पठन्ति ॥ ६० ॥

चक्रपाणिः—पिप्पलीत्यादौ सक्षारैरर्द्धपलिकैर्द्विप्रस्थं सर्पिषः पचेदिति पाठे द्विशब्दः प्रस्थेन तथार्द्धपलिकैरित्यनेन च योज्यः। एतेन पिप्पल्यादीनां द्विरिति द्विगुणार्द्धपलैः षट् पलानि भवन्ति। प्रस्थेन च द्विशब्दयोजनाद् घृतप्रस्थद्वयं भवति। काश्मीरे तु पलिकैः पिप्पली रैः द्विप्रस्थं

* पक्त्वा च सेचयेदित्यत्र पक्त्वावसेचयेदिति तथा तद्वत् पक्त्वेत्यत्र तद्वत्क्वाथ्य इति चक्रः।

† दीपनीयानीत्यत्र स्नेहनीयानि इति चक्रः।

कल्कैर्द्विपञ्चमूल्यास्तु तुलार्द्धस्वरसेन च ।
दधिमण्डाढ़कोपेतं तत् सर्पिर्जठरापहम् ।
श्वयथुं वातविष्टम्भं गुल्मानर्शांसि नाशयेत् * ॥ ६१ ॥

पञ्चकोलघृतम् ।

नागरं त्रिफला प्रस्थं घृतं तलं तथाढ़कम् ।
मस्तुनः साधयित्वा तु तं पिबेदुदरापहम् ।
कफमारुतसम्भूते गुल्मे चैव प्रशस्यते † ॥ ६२ ॥

नागरघृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ ६३ ॥

चित्रकघृतम् ।

दिभिः कल्कैः प्रत्येकमर्द्धपलिकैः षड्भिः । द्विपञ्चमूल्या दशमूल्यास्तुलार्द्ध-स्वरसेन मिलित्वा दशमूल्यास्तुलार्द्धं क्वाथार्थं जलं द्वात्रिंशच्छरावं शेषमष्टशरावं दधिमण्डस्य मस्तुन आढ़कं षोड़शशरावमिति त्रिगुणद्रवेण पाकः । पञ्च-कोलकघृतम् ॥ ६१ ॥

गङ्गाधरः—नागरमित्यादि । प्रस्थं घृतं तैलञ्च मिलित्वा चतुःशरावं नागरं त्रिफला च मिलित्वाष्ट पलानि प्रत्येकं द्विपलमित्यष्टपलैः कल्कैर्मस्तुन आढ़कं षोड़शशरावमैकध्यं साधयित्वा पश्चात् पिबेत् । नागराद्यं घृतम् ॥ ६२ ॥

गङ्गाधरः—चतुर्गुण इत्यादि । घृतं प्रस्थं चित्रकमूलात् पलं सक्षारमिति यवक्षारस्य च पलं गर्भे दत्त्वा घृताच्चतुर्गुणे जले द्विगुणे गोमूत्रे सिद्धं पक्वं जठरी रूक्षबहुवातादिमान् पिबेत् । चित्रकघृतम् ॥ ६३ ॥

सर्पिषः पचेदित्येव पठ्यते । जतूकर्णोऽप्याह "दशमूलतुलार्द्धरसे सक्षारैः पञ्चकोलकैः सार्द्धम् । घृतार्द्धप्रस्थं दधिमस्तुकमुदरघ्नम्" इति ॥ ६१ ॥

चक्रपाणिः—चतुर्गुण इत्यादौ सक्षारमित्यनेन यवक्षारस्यापि चित्रकवत् पलं देयम् । उक्तं ह्यन्यत्र—"अग्निक्षारपलाभ्यां हि मूत्रं चतुर्गुणं घृतप्रस्थम्" इति ॥ ६२ । ६३ ॥

* इतः परं "पञ्चकोलघृतन्त्वेतत् कृष्णात्रेयेण भाषितम्" इत्यधिकः पाठः क्वचित् ।

† नागराद्यं घृतमिदमात्रेयेण प्रपूजितम्" इति क्वचिदधिकः पाठः ।

यवकोलकुलत्थानां पञ्चमूलशृतेन च।
सुरासौवीरकाभ्याञ्च सिद्धं वाथ पिवेद् घृतम्॥ ६४॥
एभिः स्निग्धाय सञ्जाते बले शान्ते च मारुते।
शस्ते दोषाशये * दद्यात् कल्पदृष्टं विरेचनम्॥ ६५॥
पटोलमूलं रजनी विडङ्गं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनी च त्रिवृतञ्चेति चूर्णयेत्॥
षड़ाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण ना पिवेत्॥
विरिक्तो मृदु भुञ्जीत भोजनं जाङ्गलै रसैः।
मण्डं पेयाञ्च पीत्वा च सव्योषं षड़हं पयः॥

गङ्गाधरः—यवकोलेत्यादि। यवादीनां प्रत्येकं पल कल्के वृहत्पञ्चमूलशृतेन क्वाथेन सुरासौवीरकाभ्याञ्च मिलित्वा त्रयाणां घृताच्चतुर्गुणे सिद्धं घृतं जठरी पिवेत्। यवादिघृतम्॥ ६४॥

गङ्गाधरः—एभिरित्यादि। रूक्षवहुवातजोदरिणे एभिः पिप्पल्यादिभिर्घृतैः स्निग्धाय वले सञ्जाते मारुते प्रशान्ते दोषाशये शस्ते सति कल्पदृष्टं कल्पस्थाने वक्ष्यमाणमुदरहितं विरेचनं दद्यात्॥ ६५॥

गङ्गाधरः—इहापि किञ्चिद्विरेचनमाह—पटोलमूलमित्यादि। त्रिफलायाः फलत्वचः। एषां षण्णामाद्यानां कार्षिको भागः प्रत्येकं कम्पिल्लकादीनां त्रयाणां क्रमेण द्वित्रिचतुःकार्षिका भागाः सर्व्वं चूर्णीकृत्य मिश्रयित्वा मुष्टिं पलिकं चूर्णमिति वलवत्पुरुषाभिप्रायेण साम्प्रतिकपुरुषं प्रति वलदोषाववेक्ष्य कर्षार्द्धादिकं गोमूत्रेण पिवेत्। सम्यग्विरिक्तस्तु मण्डं पेयाञ्च पीत्वा जाङ्गलैः

चक्रपाणिः—दोषाशय इति दोषः स्नेहेन विमुक्तवन्धनत्वात् स्रस्त इत्यर्थः॥ ६४।६५॥

चक्रपाणिः—पटोलेत्यादौ षड़ाद्यान् कार्षिकानित्यनेन त्रिफलायाः त्वचा समं षण्णां प्रत्येकं कार्षिकत्वं, कम्पिल्लकादीनां चूर्णानां यथाक्रमं द्वित्रिचतुर्गुणत्वम्। मुष्टिमिति पलम्। सव्योषं षड़हं शृतं पयः पिवेदिति विरेचनदिने मण्डपेयानामन्यतमम् अग्न्यपेक्षया कर्त्तव्यम्। तत ऊर्द्ध

* शस्ते दोषाशये इत्यत्र स्रस्ते दोषाशये इति पाठश्चक्रे।

शृतं पिबेत् ततश्चूर्णं पिबेदेवं पुनःपुनः ।
हन्ति सर्व्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति ।
पटोलाद्यमिदं चूर्णमुदरेषु प्रपूजितम् ॥ ६६ ॥

पटोलाद्यं चर्णम् ।

गवाक्षीं शङ्खिनीदन्तीं तिल्वकस्य त्वचं वचाम् ।
पिबेद् द्राक्षाम्बुगोमूत्र-कोलकर्कन्धुसीधुभिः ॥ ६७ ॥
यमानी हवुषा धान्यं त्रिफला चोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥
शताह्वा चित्रकं व्योषं स्वर्णक्षीरी सचित्रका ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥

मांसरसमृदुभोजनं भुञ्जीत, सव्योषं शृतं पयः षड़हं पिबेत् । ततः परं पुनश्चूर्ण पिबेत् । एवंप्रकारेण पुनःपुनः पिबेत् । पटोलाद्यं चर्णम् ॥ ६६ ॥

गङ्गाधरः—गवाक्षीत्यादि । गवाक्षी गोरक्षकर्कटीमूलं शङ्खिनी शङ्खपुष्पी तिल्वकस्य लोध्रस्य वृक्षत्वक् । पञ्चद्रव्यं प्रत्येकं समं चूर्णीकृत्य द्राक्षाक्काथ-गोमूत्रकोलक्काथकर्कन्धूक्काथसीधूनामन्यतमेन पिबेत् । कोलं वृहत् बदरं कर्कन्धुः स्वल्पबदरं शुष्कं ग्राह्यम् । चूर्णम् ॥ ६७ ॥

गङ्गाधरः—यमानीत्यादि । हवुषं आउच इति ख्यातम् । उपकुञ्चिका वृहत्-कृष्णजीरा । कारवी क्षुद्रकृष्णजीरा । अजगन्धा यमानी । स्वर्णक्षीरी पट्पर्णी, मल्लीशाकविशेष इति कश्चित् । सचित्रकेति चित्रक एरण्डः । पूर्व्वमुक्तं चित्रकं वह्निनाम तस्य मूलम् । पुष्करो नाम वृक्षविशेषस्तस्य मूलं तदभावे कुष्ठम् ।

यथोक्तपयोवृत्तिना भवितव्यम् । ततः पुनः सप्तमे पटोलादिचूर्णं पेयम् । ईदृशं पुनःपुनः कर्त्तव्यम् ॥ ६६ ॥

चक्रपाणिः—शङ्खिनी श्वेतभल्लातकी, कोलकर्कन्धूनां रसे वा ज्ञेया ॥ ६७ ॥

चक्रपाणिः—यवानीत्यादावुपकुञ्चिका कृष्णजीरकाः । कारवी अल्पजीरकं, जीरकशब्देन तु

विडङ्गञ्च समांशानि दन्त्या भागत्रयं तथा।
त्रिवृद्विशाले द्विगुणे शातला स्याच्चतुर्गुणा॥
एष नारायणो नाम चूर्णो रोगगणापहः।
नैनं प्राप्यातिवर्त्तन्ते रोगा विष्णमिवासुराः॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया॥
दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसैः।
परिकर्त्ते सवृक्षाम्ल उष्णाम्बुभिरजीर्णके॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीरोगे कुष्ठे मन्देऽनले ज्वरे॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद् विरेचनम्॥ ६८॥

नारायणं चूर्णम्।

हवुषां काञ्चनक्षीरीं त्रिफलां कटुरोहिणीम्।
नीलिनीं त्रायमाणाञ्च शातलां त्रिवृतां वचाम्॥

कुष्ठं पुनर्व्याधिनाम कुष्ठमेव। सैन्धवादीनि पञ्च लवणानि। विडङ्गञ्च। इत्येतदेकोनत्रिंशत् द्रव्यं प्रत्येकं समानम्। एकभागापेक्षया त्रिभागं दन्त्या मूलत्वचः। त्रिवृच्चूर्णं द्विगुणं विशालमूलञ्च द्विगुणमेकभागापेक्षया। शातला चर्म्मकषा, एकभागपेक्षया चतुर्गुणा। सर्व्वं चूर्णीकृत्य मिश्रयित्वा स्थापयेत्। नारायणं चूर्णम्॥ ६८॥

गङ्गाधरः—हवुषामित्यादि। हवुषा आउच इति ख्यातम्। काञ्चनक्षीरी

महाजीरकम्। अजमोदा अजगन्धा। दन्त्या भागास्त्रयः गृहीतभागापेक्षया। एवं त्रिवृद्विशालयोरपि आद्यभागापेक्षया प्रत्येकं द्वैगुण्यम्। नारायणसंज्ञानिमित्तमाह—नैतमित्यादि। एतेन नारायणसधर्म्मित्वात् नारायणसंज्ञेत्युक्तं भवति॥ ६८॥

सैन्धवं काललवणं पिप्पलीञ्चेति चूर्णयेत् ।
दाड़िमत्रिफलामांस-रसमूत्रसुखोदकैः ॥
पेयोऽयं सर्व्वगुल्मेषु प्लीहि सर्व्वोदरेषु च ।
श्वित्रे कुष्ठे सरुजके सवाते विषमाग्निषु ॥
शोथार्शःपाण्डुरोगेषु कामलायां हलीमके ।
वातपित्तकफांश्चाशु विरेकात् संप्रसाधयेत् ॥ ६९ ॥

हवुषाद्यं चूर्णम् ।

नीलिनीच्छल्लकं व्योषं द्वौ क्षारौ लवणानि च ।
चित्रकञ्च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ ७० ॥

नीलिन्याद्यं चूर्णम् ।

क्षीरद्रोणं सुधाक्षीर-प्रस्थार्द्धं माहिषं दधि ।
जातं मथित्वातो मात्रां त्रिवृत्सिद्धात् पिबेद् घृतात् ॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च ॥

स्वर्णक्षीरी ब्राह्मीति। अत्रापि शातला चर्म्मकषा। काललवणं विड़लवण-विशेषः। सर्व्वं समभागेन चूर्णयेत्। दाड़िमरसेन मिलितत्रिफलारसेन मांसरसेन गोमूत्रेण सुखोदकेन वा अयं चूर्णः पेयः। हवुषाद्यं चूर्णम् ॥ ६९ ॥

गङ्गाधरः—नीलिनीच्छल्लकमित्यादि। नीलिन्याश्छल्लकं वल्कलम्। लवणानि पञ्च। नीलिन्याद्यं चूर्णम् ॥ ७० ॥

गङ्गाधरः—क्षीरद्रोणमित्यादि। सुधाक्षीरं स्नुहीक्षीरं तस्य प्रस्थार्द्धं शरावद्वयं माहिषं क्षीरद्रोणं जातं दधि मथित्वा समुद्धृतं घृतं पुनस्त्रिवृताकल्केन पादेन चतुर्गुणजले सिद्धं पक्वं स्थाप्यं, तस्माद् घृतान्मात्रां बुद्धा पिबेत्। तथा घृत-प्रस्थमष्टगुणे पयसि स्नुक्क्षीरपलकल्केन षट्पलत्रिवृताकल्केन पादिकेन सिद्धं

चक्रपाणिः—हवुषेत्यादौ काललवणं विड्लवणमेव, अन्ये तु सौवर्च्चलाकारं लवणमाहुः। दाड़िमादिभिरिति शब्दः संबध्यते ॥ ६९ । ७० ॥

चक्रपाणिः—क्षीरद्रोणमित्याद्युक्तानि घृतानि तुल्यकर्माणि, तत्र च प्रथमे घृते द्रवानुक्तेः जलेनैव

दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपलकल्कितात् ।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥
एषाञ्चानुपिबेदेव पयो वा स्वादु वा रसम् ।
घृते जीर्णे विरिक्तश्च कोष्णं नागरकैः शृतम् ॥
पिबेदम्बु ततः पेयां यूषं कौलत्थकं ततः ।
पिबेद् रुक्षस्त्र्यहन्त्वेवं पयोऽन्नं * प्रतिभोजितः ॥
पुनःपुनः पिबेत् सर्पिरानुपूर्व्या तथैव च ।
घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक् ।
गुल्मानां गरदोषाणामुदराणाञ्च शान्तये ॥ ७१ ॥

पिबेत् । दधीत्यादि । घृतप्रस्थं दधिमण्डाढ़के षोड़शशरावे स्नुक्क्षीरपलं कल्कं दत्त्वा तु पचेत् । तस्मात् सिद्धाद् घृतान्मात्रां पिबेत् । एषामित्यादि । एषां क्षीरद्रोणमित्याद्युक्तानां घृतानां पानादनु स्वादु पयो वा पिबेदथवा मांसरसं पिबेत् । घृते पीते जीर्णे सति विरिक्त उदरी नागरैः शृतं कोष्णमम्बु पिबेत् । ततः परं पेयां कौलत्थकं यूषञ्च पिबेत् । ततो रुक्ष उदरी एवंप्रकारेण पयोऽन्नं प्रतिभोजितः संजातबलस्तथैव पूर्व्वोक्तयानुपूर्व्या पुनःपुनः सर्पिः पिबेत् । क्षीरद्रोणमित्याद्युक्तमेव सर्पिः । एतानि घृतानि गुल्मादीनां शान्तये विदध्यात् ॥ ७१ ॥

पाकः किंवा प्रकृतदधिमथितेन घृतेनैव । तथेत्यादिना षट्पलेन चेत्यन्तेन द्वितीयं घृतम् । तथेति पूर्व्वप्रकारोत्थितं घृतमेव । एवम् उत्तरे घृते तत्तच्छब्दार्थं वर्णयन्ति । पेयादीनां त्रयाणाम् अन्नानुपानत्वं कफपित्ते । किंवा प्रकृत्यन्यपेक्षयानुपानभेदः कल्पनीयः । नागरकैः शृतमित्यत्र षड़ङ्गविधिना जलसाधनम् । द्वितीये दिवसे पेयां, यूषं कौलत्थिकं तत इति तृतीये दिवसे, उक्तं हि प्रथमे नागरयूषं, परेऽहनि पेया, तृतीये कुलत्थौदनमिति । रुक्ष इति पुनःपुनः पिबेदित्यनेन संबध्यते । तेन रुक्षस्य एतत्स्नेहविरेचनं कर्त्तव्यम् । यत् तु स्नेहविरेचनमित्यत्र स्निग्धो नाधिकारीति दर्शयति । इदमेव नागरादिशृतपानीयादिना उपपादितं तथा बलापेक्षया भूयो वा प्रतिभोजित इति अधिकानि वा दिनानि मात्रया भोजितः सन् पुनःपुनः पिबेदिति योज्यम् ॥ ७१ ॥

* पयोऽन्नमित्यत्र पयो वा इति चक्रः ।

पीलुल्कोपसिद्धं वा घृतमानाहभेदनम्।
गुल्मघ्नं नीलिनीसर्पिः स्नेहं वा मिश्रकं पिबेत्।
क्रमान्निहृतदोषाणां जाङ्गलप्रतिभोजनम् ॥ ७२ ॥
दोषशेषनिवृत्त्यर्थं योगान् वक्ष्याम्यतः परम्।
चित्रकामरदारुभ्यां कल्कं क्षीरेण ना पिबेत् ॥ ७३ ॥
मांसयुक्तं तथा हस्ति-पिप्पलीविश्वभेषजम्।
विडङ्गं चित्रकं दन्ती चव्यं व्योषञ्च तैः पयः ॥
कल्कैः कोलसमः पीत्वा प्रवृद्धमुदरं जयेत्।
पिबेत् कषायं त्रिफला-दन्तीरोहीतकैः श्रृतम् ॥
व्योषक्षारयुतं जीर्णे रसैरद्यात् तु जाङ्गलैः।
मांसं वा भोजनं योज्यं स्नुक्क्षीरघृतसंयुतम् ॥ ७४ ॥

गङ्गाधरः—पीलुकल्केत्यादि। उदरिणामानाहभेदनं पीलुकल्कोपसिद्धं वा घृतं पिबेत्। गुल्मघ्नं यन्नीलिनीसर्पिरुक्तं नीलिनीं त्रिफलां रास्नामित्यादिना, त्रिवृतां त्रिफलां दन्तीमित्यादिना चोक्तं गुल्मघ्नं मिश्रकस्नेहं पिबेत्। एवं क्रमान्निहृतदोषाणां जाङ्गलरसेन प्रतिभोजनम् ॥ ७२ ॥

गङ्गाधरः—दोषशेषेत्यादि। दोषशेषनिवृत्त्यर्थं संशमनान् योगानतः परं वक्ष्यामि। चित्रकेत्यादि। चित्रकमूलत्वक् देवदारु च कल्कीकृत्य पयसा उदरी ना नरः पिबेत् ॥ ७३ ॥

गङ्गाधरः—मांसयुक्तमित्यादि। मांसादीनि प्रत्येकं समानि कोलप्रमाणानि गृहीत्वा पिष्ट्वा कल्कीकृतैस्तैः पयः साधयित्वा पिबेत्। तत् पीत्वा प्रवृद्धमुदरं जयेत्। पिबेदित्यादि। त्रिफलादीनां श्रृतं कषायं व्योषचूर्णं यवक्षारञ्च प्रक्षिप्य पिबेत्। जीर्णे कषाये जाङ्गलैर्मांसरसैरद्यात्। मांसं वेत्यादि। स्नुक्क्षीरघृताभ्यां साधितं मांसं भोजनं योज्यम् ॥ ७४ ॥

चक्रपाणिः—गुल्मघ्नमिति गुल्महरत्वेनोक्तं गुल्माध्याये। मिश्रकस्नेहः गुल्मोक्त एव ॥ ७२ ॥

चक्रपाणिः—चित्रकेत्यादौ मांसयुक्तमिति छेदः। तथा हस्तिपिप्पल्यादाविति क्षीरेण पिबेदिति संबध्यते। विडङ्गादिभिः क्षीरम् अष्टपलं चतुर्गुणजलेन साधनीयम्। पिबेत् कषायमित्यादौ व्योषक्षारयोः प्रक्षेप्यत्वम्। मांसं वेत्यादौ तु सुधाक्षीरसाधितं घृतं पूर्व्वोक्तं ज्ञेयम् ॥ ७३। ७४ ॥

क्षीरानुपानं गोमूत्रेणाभयां वा प्रयोजयेत्।
सप्ताहं माहिषं मूत्रं क्षीरञ्चानन्नभुक् पिबेत्॥
मासमौष्ट्रं पयश्छागं त्रीन् मासान् व्योषसंयुतम्।
हरीतकीसहस्रं वा क्षीराशी वा शिलाजतु॥
शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत्।
शृङ्गवेरार्द्रकरसः पाने क्षीरसमो हितः॥ ७५॥
तैलं रसेन तेनैव सिद्धं दशगुणेन वा।
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे हितम्॥
शूलानाहविबन्धेषु मस्तुयूषरसादिभिः।
सरलामधुशिग्रूणां वीजेभ्यो मूलकस्य च॥

गङ्गाधरः—क्षीरानुपानमित्यादि। गोमूत्रेणाभयां प्रयोजयेत् क्षीरञ्चानु पिबेत्। अथवानन्नभुक् अन्नभोजनं विहाय माहिषं मूत्रं सप्ताहं पिबेत् क्षीरञ्च पिबत् माहिषमेव। मासमित्यादि। औष्ट्रं पयो व्योषसंयुतं मासं पिबेत्, व्योषसंयुतं छागं वा पयस्त्रीन् मासान् पिबेत्। क्षीरान्नाशी हरीतकीसहस्रं वापि प्रयोजयेदेकैकां प्रतिदिनं वर्द्धयित्वा दशहरीतकीं यावत् पीत्वा ततः प्रतिदिनं दश दश हरीतकीर्भक्षयित्वा शेषे क्रमेणैकशो ह्रासयित्वा भक्षयेदेवं सहस्रं यथा स्यात् तथा प्रयोजयेत्। एवं शिलाजतु च प्रयोजयेत्। द्विरक्तिकादिक्रमेण वर्द्धयित्वा दशरक्तिकं यावद् वर्द्धयेत्। ततः प्रतिदिनं दशदशरक्तिकं शिलाजतु प्रयोजयेत्। दोषशेषं यावन्निवर्त्तयेत्। शिलाजतुविधानेनेत्यादि। शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत्। क्षीरसम आर्द्रकरसः पाने उदरिणे हितः॥ ७५॥

गङ्गाधरः—तैलमित्यादि। तेनैवार्द्रकशृङ्गवेररसेन दशगुणेन सिद्धमकल्कं तैलं वा हितम्। दन्तीद्रवन्त्योः फलजं तैलं दूष्योदरे शर्कराकण्टककेशलोमादिभिर्भक्तसहितभुक्तैर्जाते उदरे हितम्। तत्र शूलादिकं यदि भवति तदा मस्तुयूषरसादिभिः सह पानतो हितं भवति। सरलेत्यादि। मधुशिग्रू रक्तशोभाञ्जनः। सरलाया वीजेभ्यो रक्तशोभाञ्जनवीजेभ्यो मूलकस्य च

चक्रपाणिः—अनन्नभुगिति गोमूत्रेणत्यादियोगत्रये योज्यम्। क्षीराशीति क्षीरमनु

तैलान्यभ्यङ्गपानार्थं शूलघ्नान्यनिलोदरे ।
स्तैमित्यारुचिहृल्लासे स्वल्पेऽग्नौ मद्यपाय च ॥
अरिष्टान् दापयेत् क्षारान् कफस्त्यानस्थिरोदरे ।
श्लेष्मणो विलयार्थन्तु दोषं वीक्ष्य भिषग्वरः ॥ ७६ ॥
पिप्पलीं तिन्दुकं हिङ्गुं नागरं हस्तिपिप्पलीम् ।
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम् ॥
देवदारु हरिद्रे द्वे सरलातिविषे स्थिराम् ।
कुष्ठं मुस्तं तथा पञ्च लवणानि प्रकल्प्य च ॥
दधिसर्पिर्वसामज्ज-तैलयुक्तानि दाहयेत् ।
अन्नादूर्द्ध्वमतः क्षाराद् विड़ालपदकं पिबेत् ॥
मदिरादधिमण्डोष्ण-जलारिष्टसुरासवैः ।
हृद्रोगं श्वयथुं प्लीह-गुल्मार्शोजठराणि च ।
विसूचिकामुदावर्त्तं वाताष्ठीलाञ्च नाशयेत् ॥ ७७ ॥

वीजेभ्यो यानि तैलानि भवन्ति तानि तैलान्यनिलोदरे शूलघ्नानि अभ्यङ्गार्थ पानार्थं दद्यात् । स्तैमित्येत्यादि । कफस्त्यानस्थिरोदरे यदि स्तैमित्यमरुचिः हृल्लासः स्वल्पाग्निश्च वर्त्तते रोगी च मद्यपश्चेद्भवति, तदा तस्मै अरिष्टान् क्षारान् श्लेष्मविलयार्थं दापयेत् ॥ ७६ ॥

गङ्गाधरः—पिप्पलीमित्यादि । पिप्पल्यादीनि पञ्चलवणान्तानि चतुर्विंशतिं द्रव्याणि कुट्टयित्वा समभागेन दध्यादिभिः पञ्चभिश्च समांशैर्यथार्ह म्रक्षयित्वा हण्डिकाभ्यन्तरे स्थापयित्वा मुखं रुद्ध्वा दाहयेत् । अधस्तादग्निना दग्ध्वा क्षारं प्रकल्प्यातः क्षारात् विड़ालपदकं कर्षमात्रं क्षारमन्नाद्भोजादूर्द्ध्वं मदिरादिना गोलयित्वा पिबेत् । हृद्रोगमित्याद्याशीः ॥ क्षारः ॥ ७७ ॥

शिलाजत्वश्नीयात् । शिलाजतुविधानेन इत्यनन्तरोक्तशिलाजतुविधानमेव क्षीराशीत्यनेनोक्तं गृह्यते न रसायनोक्तं व्यवहितत्वात् । शृङ्गवेरार्द्रकशब्देन शुष्कार्द्रकरसः क्वाथ इत्यर्थः ॥ ७५ । ७६ ॥

चक्रपाणिः—विड़ालपदकः कर्षः ॥ ७७ ॥

क्षारश्चाजकरीषाणां श्रुतं मूत्रेण साधयेत्।
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च॥
पिप्पलीं चित्रकं शुण्ठीं त्रिफलां त्रिवृतां वचाम्।
द्वौ क्षारौ शातलां दन्तीं स्वर्णक्षीरीं विषाणिकाम्॥
कोलप्रमाणां गुड़िकां पिबेत् सौवीरसंयुताम्।
श्वयथावविपाके च प्रवृद्धे च दकोदरे॥ ७८॥
भावितानां गवां मूत्रैः षष्टिकानाञ्च तण्डुलैः।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम्॥
पिबेदिक्षुरसञ्चाथ जठराणां निवृत्तये।
स्वस्वस्थानं व्रजन्त्येवं तथा पित्तकफानिलाः।
प्रकोपप्रशमं यान्ति उपक्रान्ता भिषग्वरैः॥ ७९॥

गङ्गाधरः—क्षारञ्चेत्यादि। आजकरीषाणां छागलस्य शुष्कपुरीषगुड़कानां दग्धानां क्षारं मूत्रेण षड़्गुणेन अष्टगुणेन वा पक्त्वार्द्धशेषं श्रुतं गालयित्वा पुनः साधयेत् पचेत्। लेहवद्भावे (अवतारयेत्, तस्य कर्षमन्नादूर्द्धं मदिरादिभिः पिबेत्। कार्षिकमित्यादि।) पिप्पलीमूलादीनां विंशतेर्द्रव्याणां चूर्णं प्रत्येकं प्रक्षिप्य घनीभूतमवतारयेत्। तस्य क्षारस्य कोलप्रमाणां गुड़िकामेकां सौवीराम्लेन युतां पिबेत्। अत्र क्षारप्राधान्यादाजकरीषक्षारं सर्व्वद्रव्यसमं विंशतिकापिकं ग्राह्यमिति। श्वयथावित्याद्याशीः। आजक्षारः॥ ७८॥

गङ्गाधरः—भावितानामित्यादि। गवां मूत्रैः सप्तधा भावितानां षष्टिकानां धान्यानां तण्डुलैः पयसा सिद्धां यवागूं मण्डं पेयां विलेपीं वा जठराणां सर्व्वेषां निवृत्तये प्रकामं यथाकाङ्क्षं भोजयेन्नरमुदरिणम्। अथानुभोजनात् पश्चात् स इक्षुरसञ्च पिबेत्। एतस्याशीः स्वस्वेत्यादि, तथा तेन प्रकारेण पयः सिद्धयवागूरूपपायसभोजनेन॥ ७९॥

चक्रपाणिः—क्षारश्चाजकरीषाणामित्यादौ क्षारान् षड़्द्रवेण एकविंशतिवारस्रावणेन क्षारद्रवं ग्राह्यम्। यावच्चूर्णसमुदायद्रवत्वेन कृतद्रवं गुरुः सदृष्टगुणं भवति॥ ७८। ७९॥

त्रिवृताशङ्खिनीदन्ती-सुधापूतीकपल्लवैः।
शाकं पक्त्वा प्रयुञ्जीत प्रागभक्तं गाढ़वर्च्चसि॥
ततोऽस्मै शिथिलीभूत-वर्च्चोदोषाय शास्त्रवित्।
दद्यान्मूत्रयुतं क्षीरं दोषशेषहरं परम्॥ ८० ॥
पार्श्वशूलमूरुस्तम्भं * हृद्ग्रहश्चापि मारुतः।
जनयेत् तस्य तत् तैलं विल्वक्षारेण पाययेत्॥ ८१ ॥
तथाग्निमन्थश्योनाक-पलाशतिलनालजैः।
बलाकदल्यपामार्ग-क्षारैः प्रत्येकशः शृतैः॥
तैलं पक्त्वा भिषग् दद्यादुदराणां निवृत्तये।
निवर्त्तते चोदरिणां हृद्ग्रहश्चानिलोद्भवः॥ ८२ ॥

गङ्गाधरः—त्रिवृतेत्यादि। त्रिवृतादीनां पल्लवैः शाकं पक्त्वा गाढ़वर्च्चसि उदरिणि प्रागभक्तं प्रयुञ्जीत। ततस्तेन भुक्तेन शाकेन शिथिलीभूतवर्च्चोदोषायास्मा उदरिणे जनाय शास्त्रविद् वैद्यो मूत्रयुतं क्षीरं दद्यात्। तत् तु परं दोषशेषहरम्॥ ८० ॥

गङ्गाधरः—पार्श्वेत्यादि। उदरिणो मारुतो यदि पार्श्वशूलादिकं जनयेत् तदा तस्य तत् तैलं त्रिवृतादीनां वीजानां तैलं विल्वक्षारेण पाययेत्॥ ८१ ॥

गङ्गाधरः—तथेति। अग्निमन्थादीनां नालजैः क्षारैर्बलाक्षारकदलीक्षारापामार्गक्षारैः प्रत्येकशः शृतैः एकैकं क्षारमष्टगुणे जले पक्त्वा चतुर्थांशशेषैः शृतैस्तैलाच्चतुर्गुणैस्तिलतैलं पक्त्वा भिषगुदराणां निवृत्तये दद्यात्॥ ८२ ॥

चक्रपाणिः—पार्श्वेत्यादौ उपस्तम्भमिति उपस्तम्भः उपशब्दः समीपवाची। विल्वक्षारेण इति विल्वफलदाहात् कृतेन क्षारेण सिद्धं तैलं पाययेत्। तथा तिलनालजैः क्षारैः सिद्धं तैलं पाययेदिति सम्बन्धः॥ ८०—८२ ॥

* ऊरुस्तम्भमित्यत्र उपस्तम्भमिति चक्रः।

कफे वातेन पित्तेन ताभ्यां वाप्यावृतेऽनिले।
बलिनश्चौषधयुतं तैलमेरण्डजं हितम्॥ ८३॥
सुविरक्तो नरो यस्तु पुनराध्मापितो भिषक्।
सुस्निग्धैरम्ललवणैर्निरूहैस्तमुपाचरेत्॥ ८४॥
सोपष्टम्भोऽपि वा वायुराध्मापयति यं नरम्।
तीक्ष्णैः सक्षारगोमूत्रैर्वस्तिभिस्तमुपाचरेत्॥ ८५॥
क्रियातिवृत्ते जठरे त्रिदोषे चाप्रशाम्यति।
ज्ञातीन् ससुहृदो दारान् ब्राह्मणान् नृपतीन् गुरून्॥

गङ्गाधरः—कफ इत्यादि। उदरिणो यदि वातेनावृते कफे पित्तेन वावृते कफे ताभ्यां कफपित्ताभ्यां वावृतेऽनिले सति बलिनो जनस्य तत्तदुदरहरौषधयुतमेरण्डजं तैलं हितं भिषग् दद्यात्॥ ८३॥

गङ्गाधरः—सुविरिक्त इत्यादि। इत्येवमुक्तैरौषधैः सुविरिक्तोऽपि यस्तु जनः पुनराध्मापितो भवति, तं भिषक् सुस्निग्धैरम्ललवणयुक्तैर्निरूहैरुपाचरेत्॥ ८४॥

गङ्गाधरः—सोपष्टम्भ इत्यादि। इत्येवमुपष्टम्भयुक्तः क्रियारम्भयुक्तोऽपि वायुर्यमुदरिणं नरमाध्मापयति तमुदरिणं भिषक् सक्षारगोमूत्रैस्तीक्ष्णैर्वस्तिभिरुपाचरेत्॥ ८५॥

गङ्गाधरः—क्रियातिवृत्त इत्यादि। इत्येवमुक्ताः क्रियाः सर्व्वा अतिवृत्ते अतिक्रम्य वर्त्तमाने जठरे त्रिदोषे च पुनरप्रशाम्यति सति भिषक् ज्ञाति-

चक्रपाणिः—कफ इत्यादौ कफे वातेनावृते कफे पित्तेनावृते ताभ्यां कफपित्ताभ्यां वाते आवृते इत्यर्थः। स्वौषधमिति आवरकदोषहरमौषधमित्यर्थः॥ ८३॥

चक्रपाणिः—सुविरिक्त इत्यादौ विरिक्तस्य ध्मानं रिष्टमिति ज्ञेयम्। तेनाह निर्ज्जितवाते पुनराध्मानं न रिष्टम् अतस्तच्चिकित्सोपदेशोऽत्र युज्यते, किंवा रिष्टयुक्तं पुनराध्मानम् इत्यादाय इह सोपस्तम्भ इति कृतम्॥ ८४॥

चक्रपाणिः—सोपस्तम्भ इति सावरणः॥ ८५॥

चक्रपाणिः—क्रियातिवृत्त इत्यादिना जातोदकत्वं दर्शयति। तत्र हि क्रिया निषिद्धा अजातोदकमित्यादिना। त्रिदोषे चेत्यनेनापि जातोदके त्रिदोषमिति ज्ञेयम्। अजातोदके त्रिदोषेऽपि क्रिया उक्तैव। एवम्भूतत्रिदोषस्य तु क्रियातिवृत्तपदेनैव लाभेऽपि त्रिदोषे इति पदं त्रिदोषस्य

अनुज्ञाप्य भिषक् कर्म्म विदध्यात् संशयं ब्रुवन् ।
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥
एवमाख्याय तस्येदमनुज्ञातः सुहृद्गणैः ।
पानभोजनसंयुक्तं विषमस्मै प्रयोजयेत् ॥ ८६ ॥
यस्मिन् वा कुपितः सर्पो विसृजेद्धि फले विषम् ।
भक्षयेत् तदुदरिणं प्रविचार्य्य भिषग्वरः ॥
तेनास्य दोषसंघातः स्थिरो लीनो विमार्गगः ।
विषेणाशुप्रमाथित्वादाशु भिन्नः प्रवर्त्तते ॥

सुहृद्दारापत्यब्राह्मणनृपतिगुरूननुज्ञाप्य संशयं ब्रुवन् कर्म्म विदध्यात्। कथं संशयं ब्रुवन्ननुज्ञापितः कर्म्म विदध्यादित्यत आह—अक्रियायामित्यादि। भो अस्योदरिणो ज्ञातिप्रभृतयः! एतस्याहं यथाविधि क्रियां सर्व्वामकार्षं न च व्याधिर्निवृत्तोऽभूदधुना अक्रियायां चिकित्साक्रियाया अकरणेऽस्य उदरिणो ध्रुवो मृत्युः स्यात्। या च शेषा क्रियास्य रोगस्यास्ति तस्यां क्रियायामाचर्य्यमाणायामस्य जीवने संशयो भवेत्। इत्येवं रोगिणो ज्ञातिप्रभृतीनाख्याय तैश्चेदनुज्ञायते तदाऽनुज्ञातः सन्निदं वक्ष्यमाणं कर्म्म तस्य रोगिणः प्रयोजयेत्। किं प्रयोजयेदित्यत आह—पानेत्यादि। अस्मै क्रियातिवृत्तजठरिणे पानभोजनसंयुक्तं सर्पविषं प्रयोजयेत् ॥ ८६ ॥

गङ्गाधरः—यस्मिन्नित्यादि। अथवा यस्मिन् कस्मिंश्चित् फले कुपितः सर्पो विषं विसृजेत्, तत् फलमस्मै प्रयोजयेत्। तेन विषप्रयोगेणास्य उदरिणो स्थिरो लीनो विमार्गगो दोषसंघात आशुप्रमाथित्वाद् विषस्य

जातोदकस्याप्यस्य क्रियालघुत्वोपदर्शनार्थं, ज्ञात्यादिसम्मतिग्रहणादिना एष विपर्य्ययः। अनुज्ञात इति अनुमतः विषादिप्रयोगे। यस्मिन्निति फले विषं विसृजेत् तथाफलं प्रयोजयेदिति संबन्धः। विषञ्चात्र दंष्ट्राविषमेव ज्ञेयम्। उक्तं हि—"अवरोगे दूष्योदरे बद्धगुदे क्षतान्त्रजे जलोदरे दंष्ट्राविषस्यैव प्रयोगो वै विशोधने" ॥ ८६ ॥

चक्रपाणिः—स्थिर इत्यचपलः। लीन इति धात्वन्तरगतः। प्रमाथित्वादिति क्षोभ-

विषेण हृतदोषं तं शीताम्बुपरिषेचितम्।
पाययेत भिषग् दुग्धं यवागूं वा यथाबलम्॥
त्रिवृन्मण्डूकपर्ण्योश्च शाकं सयववास्तुकम्।
भक्षयेत् कालशाकं वा सुरसोदकसाधितम् * ॥
निरम्ललवणास्नेहं स्विन्नास्विन्नमनन्नभुक्।
मासमेकं ततश्चैव तृषितः सुरसं पिबेत्॥
एवं विनिर्हृते दोषे शाकैर्मासात् परं ततः।
दुर्ब्बलाय प्रयुञ्जीत प्राणभृत् कारभं पयः॥ ८७॥
इदन्तु शल्यहर्त्तॄणां कर्म्म स्याद् दृष्टकर्म्मणाम्।
वामं कुक्षिं मापयित्वा नाभ्यधश्चतुरङ्गुलम्॥

विषेणाशु भिन्नः सन् प्रवर्त्तते। अथ तमुदरिणं विषेण हृतदोषं शीताम्बुना परिषेचितं भिषग् दुग्धं पाययेत। तथा यथाबलं यवागूं मण्डपेयाविलेपीनाम् अन्यतमां पाययेत। तत्र शाककामः त्रिवृताशाकं मण्डूकपर्ण्या दन्त्याः शाकं यवस्य शाकं वास्तुकशाकं कालशाकं वा सुरसस्य पर्णासस्य क्वाथसाधितं निरम्ल-लवणस्नेहमम्ललवणतैलघृतादिस्नेहसंस्कारहीनं स्विन्नास्विन्नं स्वल्पस्विन्नं सम्यक्स्विन्नं वाऽनन्नभुक् पञ्चगुणजलसाध्यं तण्डुलकृतमन्नमोदनं न भुक्त्वा यवागूमात्रं भुञ्जानो मासमेकं भक्षयेत्। ततश्चानन्तरं तृषितः स उदरी सुरसं पर्णासरसं पिबेत्। एवंप्रकारेण शाकैर्मासाद् विनिर्हृते तदुदरदोषे ततः परं दुर्ब्बलाय तस्मै प्राणभृत् बलकृत् कारभं पयः हास्तिनीपयः प्रयुञ्जीत। इति दोषशेषचिकित्सितमुक्तम्॥ ८७॥

गङ्गाधरः—अथ शस्त्रचिकित्सितमाह इदन्त्वित्यादि। दृष्टकर्म्मणां शल्य-हर्त्तॄणां शस्त्रचिकित्सकानामिदन्तु वक्ष्यमाणमुदररोगे कर्म्म स्यात्। तद्

कारित्वात्। कालशाकमप्रसिद्धम्। स्वरसोदकाभ्यां साधितम्। ततश्चैव स्वरसमिति शाकस्वरसम्॥ ८७॥

चक्रपाणिः—नाभ्यधश्चतुरङ्गुलमिति नाभेरधो यथा भवति तथा वामकुक्षिं मापयित्वा उदर-

* स्वरसोदकसाधितम् इति पाठान्तरम्।

मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक् ।
विपाट्यान्त्रं ततः पश्चाद् वीक्ष्य बद्धक्षतान्त्रयोः ॥
सर्पिषाभ्यज्य केशादीनवमृज्य विमोक्षयेत् ।
मूर्च्छनाद् यच्च संमूढमन्त्रं तच्चावमोक्षयेत् ॥ ८८ ॥
छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः ।
बहुशः संगृहीतानि ज्ञात्वा छित्त्वा पिपीलिकाः ॥
प्रतियोगैः प्रवेश्यान्त्रं प्रैयैः सीव्येद् व्रणं ततः ।
तथा जातोदकं सर्व्वमुदरं व्यधयेद् भिषक् ॥
वामभागे त्वधो नाभेर्नाड़ीं दत्त्वा च गालयेत् ।
विस्राव्य च विमृद्यैवं वेष्टयेद् वाससोदरम् ॥ ८९ ॥

यथा। वामं कुक्षिमुदरं नाभेरधस्ताच्चतुरङ्गुलं मापयित्वा तन्मात्रायुक्तेन चतुरङ्गुलेन शस्त्रेण मतिमान् भिषक् पाटयेत्। विपाट्य ततः पश्चादन्त्रं बद्धगुदस्य क्षतान्त्रस्य च वीक्ष्य यत्र केशकण्टकादीनि वर्त्तन्ते, तत्र सर्पिषा अभ्यज्य संस्निह्यावमृज्य केशादीन् विमोक्षयेत्। यच्चान्त्रं केशादिभिः मूर्च्छनादकीभावापादनात् सम्मूढं तदन्त्रमवमोक्षयेद् बहिर्निःसार्य्य केशादीन् विमोक्षयेत् ॥ ८८ ॥

गङ्गाधरः—छिद्राण्यन्त्रस्येत्यादि। ततः परं तस्यान्त्रस्य तु छिद्राणि बहुशः स्थूलैः पिपीलिकैर्दंशयित्वा तैः पिपीलिकैर्दंशनेन संगृहीतान्यन्त्रच्छिद्राणि ज्ञात्वा ताः पिपीलिकाः शिरोभागादधस्तात् कटीदेशे छित्त्वा प्रतियोगैर्यथायोगेनान्त्रं बहिर्निःसारितं तत्प्रतियोगानुरूपयोगः प्रैयैः प्रयाणैरन्तः प्रवेश्य ततश्चतुरङ्गुलं तद्व्रणं प्रैयैः सूच्यग्रैः सीव्येत्। इति बद्धगुदच्छिद्रान्त्रयोरुक्तम् ॥ ० ॥ अथ जातोदकस्याह—तथेत्यादि। जातोदकं सर्व्वं वातोदरादिकमुदरं वामभागे नाभेरधस्ताद् भिषक् तथा व्यधयेत्। विद्धा नाड़ीं

मध्याच्चतुरङ्गुलं त्यक्त्वा वामकुक्षौ नाभ्यधस्तात् अर्द्धाङ्गुलपाटनं कर्त्तव्यम्। पश्चाद् बद्धक्षतोदरयोरन्तरं वीक्ष्य यथोचितक्रियार्थं केशादिमार्जनं कृत्वा संमूढमन्त्रं द्राक् मोक्षयेत् ॥ ८८ ॥

चक्रपाणिः—छिद्रान्त्रस्य तु अन्त्रं छिद्राणि पिपीलिकैः दंशयित्वा संगृहीतानि यथान्त्रच्छिद्राणि भवन्ति तथा ज्ञात्वा पिपीलिकाशिरश्छेदः कार्य्यः, स्यूतयोरपि बद्धछिद्रान्त्रयोः निःसृतान्त्रप्रवेशविधिः प्रतियोगैरित्यनेनोक्तः कर्त्तव्यः। तथेत्यादिना जातोदकविधिमाह। तथा व्यधयेदिति नाभ्यधः

तथा वस्तिविरेकाद्यैर्म्लानं सर्व्वञ्च वेष्टयेत्।
निस्रुते लङ्घितः पेयामस्नेहलवणां पिबेत्॥ ९० ॥
अतः परन्तु षण्मासान् क्षीरवृत्तिर्भवेन्नरः।
त्रीन् मासान् पयसा पेयां पिबेत् त्रींश्चापि भोजयेत्॥
सकोरदूषं श्यामाकं पयसालवणं नरः।
संवत्सरेणैव जयेत् प्राप्तञ्चैव जलोदरम्॥ ९१ ॥
प्रयोगाणाञ्च सर्व्वेषामनु क्षीरं प्रयोजयेत्।
दोषानुबन्धरक्षार्थं बलस्थैर्य्यार्थमेव च॥

नलं दत्त्वा जलं गालयेत्। विस्राव्य जलं गालयित्वा विमृद्य वाससा तदुदरं वेष्टयेत्। एवं यस्योदरिणो वस्तिविरेकादिभिरुदरं म्लानं भवति तत् सर्व्वञ्चोदरं वाससा वेष्टयेत्॥ ८९ ॥

गङ्गाधरः—तथेत्यादि। सर्व्वमुदरिणां वस्तिविरेकाद्यैः म्लानमुदरं वाससा वेष्टयेदाध्माननिवृत्त्यर्थम्। एवंप्रकारेण निस्रुतजल उदरी जनो लङ्घनं कृत्वा बुभुक्षितो यदा स्यात् तदा स्नेहलवणवर्ज्जितां पेयां पिबेत्॥ ८९ ॥

गङ्गाधरः—अतः परं तदुदरी नरः क्षीरवृत्तिः षण्मासान् व्याप्य भवेत्। तत्र षट्सु मासेषु मध्ये त्रीन् मासान् नरः पयसा पेयां पिबेत्। त्रींश्च मासान् पयसा लवणहीनमन्नं भोजयेत्। षण्मासात् परं यथावृत्तिः स्यात् तदाह—सकोरदूषेत्यादि। कोरदूषान्नं श्यामाकान्नं वा लवणवर्ज्जं पयसा भोजयेदित्येवं संवत्सरेणैव प्राप्तं जलोदरं जयेत्॥ ९१ ॥

गङ्गाधरः—प्रयोगाणामित्यादि। सर्व्वेषामुदररोगहरप्रयोगाणामनु गोः क्षीरं प्रयोजयेत्। किमर्थमित्यत आह—दोषेत्यादि। शरीरधारणानां वातादीनां दोषाणामनुबन्धरक्षार्थं बलार्थं स्थैर्य्यार्थञ्चैव। कस्मात् क्षीरमिति ?

चतुरङ्गुले इत्यर्थः। अतः परमिति अलवणपेयापानादूर्द्धं षण्मासान् क्षीरवृत्तिः स्यात्। ततः क्षीरमात्रवृत्तिषण्मासादूर्द्धं त्रीन् मासान् पयसा सह पेयां पाययेत्। ततश्चोर्द्धं त्रीन् मासान् श्यामाकं कोरदूषमित्यादिग्रन्थोक्तं क्षीरेण भोजयेत्। एवं संवत्सरेण इति यदुक्तं तत् पूर्य्यते॥ ८९—९१ ॥

प्रयोगापचिताङ्गानां हितं ह्युदरिणां पयः।
सर्व्वधातुक्षयार्त्तानां देवानाममृतं यथा ॥ ९२ ॥

भवतश्चात्र

हेतुं प्राग्रूपमष्टानां लिङ्गं व्याससमासतः।
उपद्रवान् गरीयस्त्वं साध्यासाध्यत्वमेव च ॥
जाताजाताम्बुलिङ्गानि चिकित्साञ्चोक्तवानृषिः।
समासव्यासनिर्द्देशैरुदराणां चिकित्सिते ॥ ९३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
उदरचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

तत्फलमाह—प्रयोगेत्यादि। विरेचनादिनानाप्रयोगैरपचिताङ्गानां क्षीणाङ्गानां उदरिणां सर्व्वधातुक्षयार्त्तानां प्रभावात् पयो हितं यथा देवानाममृतं हितमिति ॥ ९२ ॥

गङ्गाधरः—अथाध्यायार्थमाह—भवतश्चात्र। हेतुमित्यादि ॥ ९३ ॥

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे
चिकित्सितस्थानजल्पे उदरचिकित्सितजल्पाख्या
त्रयोदशी शाखा ॥ १३ ॥

चक्रपाणिः—प्रयोगापचिताङ्गानामिति प्रयोगैः क्षीणदेहानाम् ॥ ९२ ॥

चक्रपाणिः—हेतुमित्यादिना संग्रहं ब्रूते। संग्रहार्थश्चाध्यायोक्तोऽनुसरणीयः ॥ ९३ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायाम् उदरचिकित्सितं
नाम त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्द्दशोऽध्यायः ।

## अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः,

## इतिह स्माह भगवानात्रेयः ॥ १ ॥

**आसीनं मुनिमव्यग्रं कृतजाप्यं कृतक्षणम् ।**
**पृष्टवानर्शसां मुक्तिमग्निवेशः पुनर्व्वसुम् ॥**
**प्रकोपहेतुं स्वस्थानं लिङ्गञ्च सचिकित्सितम् ।**
**साध्यासाध्यविशेषांश्च तस्य तान् मुनिरब्रवीत् ॥ २ ॥**

गङ्गाधरः— अतः परमग्निवेश-कृततन्त्रस्य नाधुना ।
चरकप्रतिसंस्कारः प्राप्यते क्वापि चेष्टया ।
तस्मात् काश्यां पञ्चनदे वसन् दृढ़बलः कविः ।
शिवमाराध्य यत्नेन प्रसादं प्राप्य शूलिनः ।
उद्दिष्टानुक्रमेणैव प्रतिसंस्कृतवान् पुनः ।
तमेवाग्निवेशतन्त्रं सिद्धिस्थानान्तमेव च ॥

अथ क्रमोद्दिष्टत्वात् उदरचिकित्सितादुत्तरमर्शोरोगचिकित्सितमाह— अथात इत्यादि । पूर्व्ववत् सर्व्वं व्याख्येयम् ॥ १ ॥

गङ्गाधरः—आसीनमित्यादि । पुनर्व्वसुमात्रेयं मुनिमव्यग्रं स्वकृत्यकरण व्यग्रतारहितं कृतजाप्यं जपकरणमन्त्रादिजपं कृतवन्तं कृतक्षणमध्यापनक्षण-मवधार्य्यासीनं गुरुमग्निवेशोऽर्शसां मुक्तिं मोचनं चिकित्सितं पृष्टवान् । कां मुक्तिं पृष्टवान इत्यत आह—प्रकोपेत्यादि । अर्शसां प्रकोपहेतुं स्वस्थानम्

चक्रपाणिः—उदरार्शसोस्त्रिदोषजत्वसामान्याद् वद्धगुदोदरकारणाच्च अनन्तरमर्शसां चिकित्सितं ब्रूते ॥ १ ॥

चक्रपाणिः—आसीनमित्यादि । कृतक्षणमिति कृतावसरम् । मुक्तिमिति रोगोन्मुक्तिं किंवा प्रकोपहेत्वादिं पप्रच्छेति योजना । प्रकोपस्य रोगोत्पादस्य हेतुः । तथाह्यत्र प्रकोपशब्देन रोगोत्पादं ज्ञापयति ; यथा—"पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम्" । संस्थानमाकारः । संस्थानं यद्यपि लिङ्गे एव प्रविशति तथापीह बहुप्रपञ्चत्वाद् बहूचरत्वात् संस्थानं पृथगुक्तम् ॥ २ ॥

**इह खल्वग्निवेश द्विविधान्यर्शांसि—कानिचित् सहजानि कानिचिज्जातस्योत्तरकालजानि। तत्र बीजं गुदवलिबीजोपतप्तमायतनमर्शसां सहजानाम्। तत्र द्विविधो बीजोपतप्तौ हेतुर्मातापित्रोरपचारः पूर्व्वकृतं कर्म्म तथान्येषामपि सहजातानां विकाराणाम्। तत्र सहजानि सह जातानि शरीरेणार्शांसीत्यधिमांसविकाराः॥३**

अर्शसामुत्पत्तिस्थानं लिङ्गं चिकित्सितञ्च साध्यासाध्यविशेषांश्च पृष्टवान्। मुनिः पुनर्व्वसुस्तस्याग्निवेशस्य सकाशे तान् सर्व्वान् अब्रवीत्॥ २॥

गङ्गाधरः—तद्यथा। इह खल्वित्यादि। इह मनुष्यलोके खल्वग्निवेश द्विविधान्यर्शांसि भवन्ति। कानिचित् सहजानि, यदा गर्भे शरीरं जायते तदैव सह शरीरेण जायन्ते। कानिचित् अर्शांसि जातस्योत्तरकालजानि। तत्र सहजानां हेतुमाह तत्रेत्यादि। सहजानामर्शसामायतनं कारणं गुदवलिबीजोपतप्तं बीजं गुदवल्यारम्भकार्त्तवभागस्य बीजस्योपतप्तमिति यस्मात् तद्बीजोपतापः स्यात् तदाह—तत्रेत्यादि। गुदवल्यारम्भकार्त्तवरूपबीजोपतप्तौ हेतुर्द्विविधो भवति। मातापित्रोरपचार एकः, पूर्व्वकृतं कर्म्म चाशुभं द्वितीय इति। सहजार्शःप्रसङ्गादन्येषामपि सहजानां रोगाणां हेतुं संगृह्णाति तथान्येषामपीति। अन्येषामपि सहजानां विकाराणां बीजभागोपतप्तौ द्विविधो हेतुर्मातापित्रोरपचारः पूर्व्वकृतञ्च कर्म्म अशुभमिति। कस्मात् अर्शांसि सहजान्युच्यन्ते, मातापित्रोरपचारात् पूर्व्वकृतकर्म्मफलाच्च कुष्ठादयो दृश्यन्ते, तेऽपि किं सहजा इति संशायन्ते इत्यत आह—तत्र सहजानीत्यादि। शरीरेण सह जातानीत्यतः सहजान्यर्शांस्युच्यन्ते।

चक्रपाणिः—इहेत्यादिना द्विविधान्यर्शांसि प्रतिपाद्यन्ते। सहजानि हेत्यादिना प्राक्। तत्र बीजमिति शुक्रशोणितांशः। तच्च गुदवल्यारम्भकेण बीजेनोपतप्तं सत् सहजानां कारणं भवति। गुदवल्यारम्भकेण च दुष्टेन बीजेन शरीरारम्भकस्य बीजस्य अदुष्टस्यासम्बन्धः। ततश्च गुदवलीबीजदोषात् गुदवलीष्वेवार्शोजन्म भवति। शेषावयवारम्भकं बीजम् अदुष्टत्वान्न विकारं जनयति। उक्तञ्च "यस्य यस्याङ्गावयवस्य बीजे बीजभागः उपतप्तो भवति तस्य तस्य अङ्गावयवस्य विकृतिरुपजायते" इत्यादि। अन्ये तु आहिताग्निपाठात् पूर्व्वनिपातनियमेन उपतप्तगुदवलीबीजम् इत्यस्मिन् गुदवलीबीजोपतप्तमिति पदं कृतमित्याहुः। अपचार इति अनुचित आहारविहाररूपः शुक्रशोणितभागविशेषत्वदूषकः। पूर्व्वकृतञ्च कर्म्मेति जायमानस्य सहजस्याशर्सोऽभिनिर्व्वर्त्तकं जन्मान्तरीयं कर्म्म। तच्च कर्म्म दुर्बलं सत् मातापित्रपचार-

सर्व्वेषाञ्चार्शसां क्षेत्रं गुदस्यार्द्धपञ्चाङ्गुलावकाशे त्रिभागान्तरास्तिस्रो गुदवलयः। केचित् तु भूयांसमेव देशमुपदिशन्त्यर्शसामपत्यपथ-शिश्नगलतालु-मुखनासाकर्णाक्षिवर्त्मानि त्वक् च। तदस्त्यधिमांसदेशतया गुदवलिजानि त्वर्शांसीति संज्ञा तन्त्रेऽस्मिन्। सर्व्वेषाञ्चार्शसामधिष्ठानं मेदो मांसं त्वक् च ॥४

एवं शरीरे जायमाने ये रोगा जायन्ते तेऽपि सहजा उच्यन्ते, न तु पित्रोरपचारात् पूर्व्वकृतकर्म्मफलाज्जातोत्तरकालजाः सहजा उच्यन्ते। इति। अर्शांसि अधिमांसविकाराः ॥ ३ ॥

गङ्गाधरः—इति सहजार्शसां प्रकोपहेतुमुक्त्वा सर्व्वेषां स्वस्थानमाह—सर्व्वेषामित्यादि। सर्व्वेषां सहजानां जातस्योत्तरकालजानाञ्चार्शसां क्षेत्रं स्वस्थानं गुदस्यार्द्धपञ्चाङ्गुलावकाशे त्रिभागान्तरास्त्रिभिर्भागैः प्रभिन्नास्तिस्रो गुदवलयः। अर्द्धपञ्चाङ्गुलेति अर्द्धाङ्गुल्या न्यूनाः पञ्चाङ्गुलयः परिमाणमस्येति, अर्द्धपञ्चाङ्गुलावकाशः सार्द्धचतुरङ्गुलावकाशो गुदं तत्रैवं त्रिधाविभागः। सगुदोष्ठा प्रथमा वलिः सार्द्धाङ्गुला, तत्र गुदोष्ठमर्द्धाङ्गुलं प्रथमा वलिरेकाङ्गुला। द्वितीया सार्द्धाङ्गुला, तृतीया चेति सार्द्धचतुरङ्गुलं गुदम्। तत्र तिस्रो वलयः प्रथमादिक्रमेण शङ्खावर्त्तप्राया उपर्य्युपरिस्थिताः संवरणी विसर्ज्जनी-प्रवाहिणीसंज्ञा इति। क्षेत्रमित्युत्पत्तिस्थानं देश इति। केचित्त्वित्यादि। केचिदृषयस्तु अर्शसां भूयांसमेव देशं क्षेत्रमुपदिशन्ति। तद्यथा—शिश्नेत्यादि। शिश्नं पुंसामपत्यपथो योनिः स्त्रीणामिति। सम्भवात् गलादीनि च स्त्रीपुंसयोरेवेति। तदस्ति। शिश्नादिकं तत् खल्वधिमांसदेशोऽस्ति। शिश्नादिषु यद्यदर्शोऽभिधं केचिदाहुस्तदधिमांसमुच्यतेऽस्मिंस्तन्त्रे तु गुदवलिजान्यर्शांसीत्येषा संज्ञा

संहतं वीजदोषकं भवतीति ज्ञेयम्। यथोक्तहेतुद्वयम् अन्यत्रापि सहजे गदेऽतिदिशति तथेत्यादिना। तत्रेत्यादिना सहजशब्दार्थं व्याकरोति। अर्शःशब्दाभिधेयमाह—अर्शांसीत्यादि अधिमांसविकारा इति ॥ ३ ॥

चक्रपाणिः—त्रिभागान्तरा इति अर्द्धपञ्चाङ्गुलस्य सार्द्धाङ्गुलरूपतृतीयभागावकाशा गुदवलयः। अयञ्च विभागोऽर्द्धपञ्चाङ्गुले गुदे गुदोष्ठेन गृह्यते इति। केचिदित्यनेन तन्त्रान्तरेऽपत्यपथादिगतानामपि अधिमांसानाम् अर्शांसि इति संज्ञा भण्यते इति सूचयति। अधिष्ठानमिति दूष्यम् ॥ ४ ॥

तत्र सहजान्यर्शांसि कानिचिदणूनि कानिचिन्महान्ति कानिचिद्दीर्घाणि कानिचिद् ह्रस्वानि कानिचिद् वृत्तानि कानिचिद् विषमसृतानि कानिचिदन्तःकुटिलानि कानिचिज्जटिलानि कानिचिदन्तर्मुखाणि, तानि यथास्वं दोषानुबन्धवर्णानि ॥ ५ ॥

तैरभिभूतो जन्मप्रभृति भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषः शर्कराश्मरीमान् तथाऽनियतविबद्धमुक्तपक्वामशुष्कभिन्नवर्चा अन्तरान्तरा श्वेतपाण्डुहरितपीतरक्तारुणद्रवसान्द्रपिच्छिलकुणपगन्धामपुरीषोपवेशी नाभिवस्तिवङ्क्षणोद्देशे प्रचुरपरिकर्त्तिकान्वितः सगुदशूलप्रवाहिकः परिहर्षप्रमेहप्रसक्तविष्टम्भाटोपान्त्रकूजोदावर्त्तहृदिन्द्रियोपलेपः प्रचुर-

तन्त्रेऽस्मिन् उक्ता। एवं गुदवलिः क्षेत्रं, तत्र मेदो मांसं त्वक् च सर्व्वेषामर्शसामधिष्ठानं भवतीति स्वस्थानमुक्तमिति ॥ ४ ॥

गङ्गाधरः—लिङ्गादौ वक्तव्ये सहजार्शोलिङ्गान्याह—तत्रेत्यादि। अणूनि क्षुद्राणि महान्ति स्थूलानि वृत्तानि वर्त्तुलानि। विषमसृतानि दिक्स्दृशवक्राणि अन्तःकुटिलानि मध्ये वक्राणि जटिलानि सूक्ष्ममांसप्रतानजटारूपयुक्तानि। यथास्वं दोषानुवन्धवर्णानीति। यद्यपि सर्व्वाणि त्रिदोषजानि तथाप्युल्वणदोषानुवन्धवर्णानि ॥ ५ ॥

गङ्गाधरः—तैरित्यादि। ईदृशैस्तैः सहजैरर्शोभिरभिभूतः पुमान् जन्मावधि अतिकृशो विवर्णश्च भवति। क्षामः क्षीणः। प्रचुरविबद्धवातादिः। शर्करारोगवानश्मरीरोगवांश्च। तथा अनियतं विबद्धं मुक्तं पक्वमामं शुष्कं भिन्नञ्च वर्चो यस्य सः। एवम्भूतोऽपि अन्तरान्तरा मध्ये मध्ये सश्वेतादि वर्च्च उपवेशी। नाभ्यादूर्द्ध्व देशे प्रचुरपरिकर्त्तिकान्वितः कर्त्तनवत्प्रचुरपीडान्वितः। गुदशूला-

चक्रपाणिः—सहजानीत्यादिना संस्थानलिङ्गान्याह। जटिलानीति तृणान्तरितानि। दोषानुबन्धवर्णानीति दोषानुरूपवर्णानि ॥ ५ ॥

चक्रपाणिः—अनियतत्वं विबद्धमुक्तत्वादि विरुद्धधर्म्माणां ज्ञेयम्। अन्तरान्तरेति कदाचित्,

विबद्धशुक्ताम्लोद्गारः सुदुर्ब्बलः सुदुर्ब्बलाग्निः क्रोधनः स्वल्पशुक्रो दुःखोपचारशीलः कासश्वासतमकतृष्णाहृल्लासच्छर्द्यरोचका-विपाकपीनसक्षवथुपरीतस्तैमिरिकः शिरःशूली क्षामभिन्न-संसक्तजर्जरस्वरः कर्णरोगी शूनपाणिपादवदनाक्षिकूटः सज्वरः साङ्गमर्द्दः सर्व्वपर्व्वास्थिशूली च अन्तरान्तरा पार्श्वकुक्षि-वस्तिहृदयपृष्ठत्रिकग्रहोपततः प्रध्यानपरः परमलसश्चेति। जन्मप्रभृत्यस्य हि गुदमार्गोपरोधाद्‌ वायुरपानः प्रत्यारोहन् समानोदानप्राणव्यानपित्तश्लेष्मदोषान् प्रकोपयति। एते सर्व्वे एव कुपिताः पञ्च वायवः पित्तश्लेष्माणौ चार्शसम् अभिद्रवन्तस्तान् विकारान् जनयन्ति। इत्युक्तानि सह-जान्यर्शांसि ॥ ६ ॥

दिभिः सह वर्त्तमानः। हृदुपलेप इन्द्रियोपलेपश्च। प्रचुरश्च विबद्धश्च शुक्त इवाम्लश्चोद्गारो यस्य सः। दुःखिजनस्येव दुःखोपचारशीलः। कासादिभिः परीतः। तैमिरिको नेत्ररोगविशेषतिमिररोगवान्। क्षामः क्षीणः। क्षामश्च भिन्नश्च संसक्तश्च जर्जरश्च स्वरो यस्य सः। पाणिपादादिषु शूनता शोथः। सर्व्वाङ्गमर्द्दः सर्व्वपर्व्वास्थिशूली च सर्व्वदैव, अन्तरान्तरा मध्ये मध्ये तु विशेषण पार्श्वादिग्रहैरुपततः स्यात्। प्रध्यानपरो निरर्थकचिन्ताशीलः। परमुत्कृष्टो-ऽलसश्चेति। अस्य जन्मप्रभृति गुदमार्गोपरोधादपानो वायुः प्रत्यारोहन्नूर्द्ध्वं गच्छन् समानादीन् प्रकोपयति। एते पञ्च वायवः पञ्चधा पित्तश्लेष्माणौ चेति सर्व्वत्र कुपिता अर्शसं जनमभिद्रवन्त एतानुक्तान् विकारान् जनयन्तीति। इत्युक्तानि लिङ्गतः सहजान्यर्शांसि ॥ ६ ॥

न सर्व्वदा। दुःखोपचारशील इति दुःखोपचारहेतुरित्यर्थः। प्रध्यानं घूर्णनम्। पुनरर्थ सहजार्शोयुक्त ईदृग्व्याधिपरीतो भवतीत्याह—जन्मेत्यादि। प्रत्यारोहन्निति ऊर्द्ध्वं गच्छन् अनुक्रमेण पञ्चवातप्रकोपो भवति। अत सर्व्वथा वायुर्विगुणो भवति, तेन सर्व्वत्र वातविकाराः प्रायो भवन्ति। पित्तश्लेष्मप्रकोपाच्च तद्विकारा विभवन्तीति युक्तमेव। अर्शसमिति अर्शोयुक्तं पुरुषम् ॥ ६ ॥

अत ऊर्द्ध्वं जातस्योत्तरकालजातानि चार्शांसि व्याख्यास्यामः । गुरुशीताभिष्यन्दिविदाहिविरुद्धाजीर्णप्रमिताशनासात्म्यभोजनाद् गव्यमात्स्यकौक्कुटवाराहमाहिषाजाविकपिशितभक्षणात् कृशशुष्कपूतिमांसपैष्टिकपरमान्नक्षीरदधिमण्डकतिलगुड़विकृतिसेवनाच्च माषयूषेक्षुरसपिण्याकपिण्डालुशुष्कशाकशुक्तकिलाटतक्रपिण्डकविसमृणालशालूककौञ्चादनकशेरुकशृङ्गाटकतरूटविरूढ़नवशूकशमीधान्याममूलकोपयोगात् गुरुफलशाक-रागहरित-करमर्द्दकवसाशिरस्पदपर्य्युषितपूतिशीतान्नसंकीर्णाभ्यवहारात् मन्दकातिक्रान्तमद्यपानाद् व्यापन्नगुरुसलिलपानात् अतिस्नेहपानाद् असंशोधनाद् वस्तिकर्म्मविभ्रमादव्यायामादव्यवायात् दिवास्वप्नात् सुखशयनासनस्थानसेवनाच्च

गङ्गाधरः—अतऊर्द्ध्वमिति । अतःपरं जातस्योत्तरकालजान्यर्शांसि व्याख्यास्यामः । गुरुशीतेत्यादि । गुर्व्वादिद्रव्यभोजनात् गव्यमांसादिभक्षणात् कृशशुष्कशरीरस्य जन्तोर्मांससेवनात् पूतिमांससेवनाच्च पैष्टिकपद्यादिसेवनाच्च माषयूषादुप्रयोगाच्च ; पिण्याकस्तिलकल्कः, पिण्डालुर्वस्तुलाकार आलुः, शुक्तं सन्धानविशेषः, किलाटस्तक्रकूर्च्चिका, तक्रपिण्डको भक्ष्यविशेषः, विसं बृहन्मृणालं, मृणालं क्षुद्रं, पद्मादीनां कन्दः शालकं, क्रौञ्चादनो घेञ्चुलुकः, तरूटः चिचुया, विरूढ़श्च नवश्च शूकशमीधान्यम्, आममूलकम्, एषामुपयोगात् ; गुरुफलशाकयोः राग आचार इति लोके, हरितानि शृङ्गवेरधान्यमधुरिकादीनि, करमर्द्दः करञ्जः । वसा वपा जन्तूनां मांसार्थं शिरस्पदं, पर्य्युषितञ्च पूति च शीतश्चान्नस्य सङ्कीर्णस्य मिलितनानाद्रव्यस्याभ्यवहारात्, मन्दकं मन्दजातमतिक्रान्तं कालातिक्रमेण स्वगुणहीनञ्च मद्यम्, व्यापन्नं स्वगुणशीताव्यक्तरसादितो व्यापद्युक्तं स्थानादियोगाद् गुरु च सलिलम्, अतिस्नेहपानादवमनविरेचनात्, वस्तिकर्म्मणो विभ्रमाद् अयथावत्

चक्रपाणिः—गुरुशीतेत्यादौ प्रमितमल्पम्, कृशं दुर्ब्बलं, परमान्नं पायसं, पिण्याकं तिलकल्कः । किलाटो नष्टक्षीरपिण्डस्तक्रपिण्डस्तु तक्रजो घनभागः । विसं स्थूलं मृणालम्, मृणालं क्षुद्रम्, क्रौञ्चादनं घेञ्चुलिक इति ख्यातः । तरूटं निष्कारकः । संकीर्णमांसभक्तादि मिश्रप्रकृतिकमन्नं

उपहताग्नेर्मलोपचयो भवत्यतिमात्रम्। तथोत्कटकठिनविषमासनसेवनात् उद्भ्रान्तयानोष्ट्रयानात् अतिव्यवायाद् वस्तिनेत्रासम्यक्प्रणिधानाद् गुदक्षणनाद् अभीक्ष्णं शीताम्बुसंस्पर्शात् चेललोष्टतृणादिसंघर्षणात् प्रततातिनिर्व्वाहणाद् वातमूत्रपुरीषवेगोदीरणाद् उदीर्णवेगविधारणात् स्त्रीणाञ्चामगर्भभ्रंशाद् गर्भोत्पीड़नाद् बहुविषमप्रसूतिभिश्च प्रकुपितो वायुरपानस्थमलमुपचितमधोगमासाद्य गुदवलिष्वाधत्ते, ततस्तु तास्वर्शांसि प्रादुर्भवन्ति ॥ ७ ॥

सर्षपमसूरमाषमुद्गमुकुष्टकसंस्थानानि यवकलायपिण्डटिण्टिकेरकर्कन्धुकतिन्दुककाकणन्तिका-कर्कन्धूविम्बीकदरकरीरोडुम्बरखर्ज्जूरजाम्ववगोस्तनाङ्गुष्ठकशेरुकशृङ्गाटकदक्षशिखिशुक-

प्रवर्त्तनात्, सुखशयनादिसेवनाच, उपहताग्नेर्जनस्य मलोपचयोऽतिमात्रं दोषवृद्धिर्भवति। तथापि उत्कटकठिनविषमासनसेवनात्, उद्भ्रान्तयानं दुर्दम्याश्वादियानम्, वस्तिनेत्रस्यासम्यक्प्रणिधानेन गुदक्षणनाद् गुददेशे क्षतभावात्, अभीक्ष्णं शीताम्बुसंस्पर्शनात्, चेलादिना गुदसंघर्षणात्, प्रततमतिनिर्व्वाहणात् कुन्थनात्, अनुपस्थितस्य वातादिवेगस्योदीरणादुपस्थितस्य वेगस्य विधारणात्। इति स्त्रीपुंसयोः साधारणं निदानम्। विशेषस्तु स्त्रीणामामगर्भभ्रंशात् गर्भवृद्ध्या चोत्पीड़नात्। काले बहुविषमप्रसूतिभिश्च प्रकुपितो वायुरपानदेशस्थं मलं दोषमुपचितमधोगमासाद्य गुदवलीष्वाधत्ते, ततस्तद्दोषस्याहितासु तासु गुदवलीषु अर्शांसि प्रादुर्भवन्ति ॥ ७ ॥

गङ्गाधरः—इति वातादिसर्व्वार्शसां प्रकोपहेतुं स्वस्थानञ्च सामान्यत उक्त्वा लिङ्गमाह—सर्षपेत्यादि। गुदवलीषु सर्षपादिसंस्थानानि। पिण्डिपिण्डाकारवन्ति। टिण्टिकेरकं मरुजवृक्षविशेषं करीराख्यस्य फलम्। करीरो वंश-

संकीर्णम्। अतिक्रान्तमद्यं व्यापन्नं मद्यम्। अव्यवायातिव्यवायविषमव्यवाया ज्ञेयाः। प्रततातिनिर्व्वाहणात् दीर्घातिमात्रप्रवाहणात् ॥ ७ ॥

तुण्डजिह्वापद्ममुकुलकर्णिकासंस्थानानि सामान्याद् वातपित्त-कफप्रबलानि ॥ ८ ॥

तेषामयं विशेषः—शुष्कम्लानकठिनपरुषरूक्षश्यावानि वक्राणि तीक्ष्णाग्राणि स्फुटितमुखानि विषमस्रृतानि शूलाक्षेप-भेदस्फुरणचिमिचिमसंहर्षपरीतानि स्निग्धोष्णोपशयानि प्रवाहिकाध्मानास्निग्ध-वृषणवस्तिवङ्क्षणहृद्ग्रहाङ्गमर्दहृदयद्रवप्रबलानि तत्र प्रततविबद्धवातमूत्रवर्च्चांस्यूरुकटिपृष्ठत्रिकपार्श्व-कुक्षि-वस्तिशूलशिरोऽभितापक्षवथूद्गारप्रतिश्याय-कासोदावर्त्ता-यासशोथशोष-मूर्च्छारोचकमुखवैरस्यतैमिर्य्यकण्डूनासाकर्णशूल-स्वरोपघातकराणि श्यावारुणपरुषत्वङ्नयननखवदनमूत्रपुरीषस्य वातोल्वणान्यर्शांसीति विद्यात् ॥ ९ ॥

करीरस्याग्रम् । अङ्गुष्ठाग्रसंस्थानानि । दक्षशिखिनोस्तुण्डजिह्वासंस्थानानि । पद्मकुमुदयोः कर्णिकासंस्थानानि । एतदेतत्संस्थानान्यर्शांसि वातपित्त-कफप्रबलानि । सामान्यात् वातप्रबलानि च पित्तप्रबलानि च कफप्रबलानि चार्शांसि सर्षपादिसंस्थानानि भवन्ति ॥ ८ ॥

गङ्गाधरः—तेषामित्यादि । तेषां त्रयाणामयं विशेषो वक्ष्यते । शुष्क-म्लानेत्यादि । यान्यर्शांसि शुष्कादीनि तीक्ष्णाग्रादीनि शूलादिपरीतानि स्निग्धोपशयानि प्रवाहिकादिप्रबलानि । तत्रास्निग्धानि रूक्षाणि वृषण-वस्तिवङ्क्षणानि । प्रततं सन्ततं विबद्धानि वातमूत्रवर्चांसि यतस्तानि । ऊरु-कट्यादिशूलशिरोऽभितापादिनासाकर्णशूलस्वरोपघातकराणि । श्यावादिवर्ण-नखादिमतः पुरुषस्य तानि वातोल्वणान्यर्शांसीति विद्यात् ॥ ९ ॥

चक्रपाणिः—टिण्टिकेरं करीरफलम् । दक्षः कुक्कुटः । सामान्यात् वातपित्तकफप्रबलानि, इत्यनेन सर्व्वैर्दोषैः अर्शसां नानाकृतिं दर्शयति ॥ ८ ॥

चक्रपाणिः—लिङ्गादिसामान्ये वातजादीनां किं विशेषनिश्चायकमित्याह—तेषामयं विशेष इति । अयमिति वक्ष्यमाणलिङ्गहेतुभेदरूपो विशेषो वातजादिव्यवच्छेदक इत्यर्थः । यद्यपि विशेषाभिधाने हेतुरेवाग्रेऽभिधातुं युज्यते, तथापि संस्थानरूपलिङ्गाभिधानानुषङ्गात् प्रतिलोम-व्याख्यानाद्वा लिङ्गमेवाग्र ऽभिधीयते शुष्कम्लानेत्यादिना ॥ ९ ॥

भवतश्चात्र।

कषायकटुतिक्तानि रुक्षशीतलघूनि च।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम्॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म्म च।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः॥ १०॥

मृदुशिथिलसुकुमाराण्यस्पर्शसहानि रक्तपीतनीलकृष्णानि स्वेदोपक्लेदबहुलानि विस्रगन्धानि तनुपीतरक्तस्राविणि रुधिरवहाणि दाहकण्डूशूलनिस्तोदपाकवन्ति शीतोपशयानि संभिन्नपीतहरितवर्च्चांसि पीतविस्रगन्धप्रचुरविण्मूत्राणि पिपासाज्वरतमकसंमोहभोजनद्वेषकराणि पीतनखनयनत्वङ्मूत्रपुरीषस्य पित्तोल्वणान्यर्शांसीति विद्यात्॥ ११॥

गङ्गाधरः—भवतश्चेत्यादि। अस्य वातार्शसो हेतुवचनश्लोकौ भवतः। कषायेत्यादि। प्रमितादत्यल्पमात्रावदशनादल्पाशनं प्रमिताल्पाशनं, तीक्ष्णमिति मद्यविशेषणम्। देशकालौ शीतौ शीतो देश आनूपः, शीतः कालो हेमन्तादिः। वातातपयोः प्रचण्डवातस्यातपस्योष्णस्य रुक्षत्वेन वातप्रकोपकत्वमिति वातार्शसां हेतुः॥ १०॥

गङ्गाधरः—मृदुशिथिलेत्यादि। यान्यर्शांसि मृदूनि शिथिलानि सुकुमाराणि कोमलानि अस्पर्शसहानि रक्तादीनि स्वेदादिबहुलानि विस्रगन्धीनि तन्वादिस्राविणि तनु अघनं दाहादिमन्ति सम्भिन्नं पीतं हरितं वर्च्चो यतस्तानि

चक्रपाणिः—तदनु कषायेत्यादिना हेतुं वक्ष्यति। एवं पित्तकफजयोरपि व्यतिक्रमेण हेतुलिङ्गाभिधानं ज्ञेयम्। प्रमिताशनमत्र अत्यल्पाशनम्, अल्पाशनं मात्राहीनमशनम्। आतपस्पर्शः यद्यप्युष्णस्तथापि रूक्षतया वातजनकः। उक्तं हि आतपः कटुको रुक्ष इत्यादि॥ १०॥

चक्रपाणिः—मृद्वित्यादिना पित्तजं प्राह। शिथिलानि कोमलानि। सुकुमाराणीति अकर्कशानि। तनुपीतरक्तस्राविणीत्यत्र रक्तशब्देन लोहितशब्द उच्यते। रुधिरवहाणीति पदेन रक्तस्रुतिरेवोच्यते। प्रथमं विस्रगन्धीनीति रक्तविशेषणम्। द्वितीयं विस्रगन्धित्वं विण्मूत्रविशेषणम्। प्रथमं पीताभिधानं वर्च्चसः हरितपीतोपदेशार्थम्। द्वितीयन्तु विस्रगन्धिना सह पीतवर्णतोपदेशार्थम्। तृतीयन्तु पीतनखेत्यादौ केवलं पीतवर्णतोपदर्शनार्थम्॥ ११॥

भवतश्चात्र ।

कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥
विदाहि तीक्ष्णमुष्णञ्च सर्व्वं पानान्नभेषजम् ।
पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ १२ ॥

तत्र यानि प्रमाणवन्त्युपचितानि श्लक्ष्णानि स्पर्शसुखानि श्वेत-पाण्डुपिच्छिलानि स्तब्धानि गुरूणि स्तिमितानि सुप्तानि स्थिरश्वयथूनि कण्डूबहुलानि बहुप्रततपिञ्जरश्वेतरक्तशुक्लपिच्छास्रावीणि गुरुपिच्छिलश्वेतमूत्रपुरीषाणि रुक्षोष्णोपशयानि प्रवाहिकातिमात्रोत्थानवङ्क्षणानाहवन्ति परिकर्त्तिकाहृल्लासनिष्ठीवनकासारोचक-प्रतिश्यायगौरवच्छर्दिमूत्रकृच्छ्र-शोथशोष - पाण्डुरोग-शीतज्वरा-

पीतं विस्रगन्धं प्रचुरं विण्मूत्रं यतस्तानि पिपासादिकराणि पीतनखादिमतः पुंसस्तानि पित्तोल्वणान्यर्शांसीति विद्यात् ॥ ११ ॥

गङ्गाधरः—एषां हेतुवचनश्लोकावत्र भवतः । कट्वम्लेत्यादि । अग्न्यातपयोः प्रभा । अशिशिरावुष्णौ देशकालौ । तीक्ष्णमुष्णञ्च पानञ्चान्नञ्च भेषजञ्च । पूर्व्वमुक्तं यदुष्णं तत् स्पर्शनोष्णमित्यपौनरुक्त्यम् । पित्तोल्वणानां पित्तप्रधान-त्रिदोषजानाम् ॥ १२ ॥

गङ्गाधरः—तत्र यानीत्यादि । प्रमाणवन्ति प्रकृष्टपरिमाणानि । उपचितानि स्थूलानि । स्पर्शसुखानि स्पर्शने सुखज्ञानं यत्र । स्तब्धानि अचलितानि । स्तिमितान्यार्द्रीभूतानि । सुप्तानि स्पर्शाभिज्ञानहीनानि । स्थिरः श्वयथुमु खादिषु यत्र तानि । बहु च प्रततञ्च पिङ्गलादिपिच्छास्रावीणि । गुर्व्वादिनौ मूत्रपुरीषे यतस्तानि । रुक्षोष्णोपशयवन्ति । प्रवाहिका कुन्थनपूर्व्वकवर्च्चस्त्यागः, अतिमात्रोत्थानं पुनःपुनर्वर्च्चस्त्यागः, वङ्क्षणानाहो वङ्क्षणबन्धः । परिकर्त्तिका गुदे कर्त्तनवत्

चक्रपाणिः—कट्वम्लेत्यादौ प्रथममुष्णपदं उष्णस्पर्शोपदेशार्थं, द्वितीयमुष्णपदं उष्णवीर्य्योप-दर्शनार्थम् । कट्वम्ललवणक्षार इति वा पाठः ॥ १२ ॥

श्मरीशर्कराहृदयेन्द्रियोपलेपास्यमाधुर्य्यप्रमेहकराणि तथा चिर-कालानुवन्धीन्यतिमात्रमग्निमार्दवक्लैव्यकराण्यामविकारकर-प्रब-लानि शुक्लनखनयनवदनत्वङ्मूत्रपुरीषस्य श्लेष्मोल्वणान्यर्शांसीति विद्यात् ॥ १३ ॥

भवन्ति चात्र।

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च।
अव्यायामदिवास्वप्न-शय्यासनसुखे रतिः ॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम्।
श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसाम् ॥ १४ ॥
हेतुलक्षणसंसर्गाद् विद्याद् द्वन्द्वोल्वणानि च।
सर्व्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ १५ ॥

पीड़ा। (अलसकोऽजीर्णजरोगविशेषः) हृदयस्य चेन्द्रियाणाञ्चोपलेपः। चिरकालानुवन्धीनीति दीर्घकालानुशयानीत्यर्थः। आमविकाराणामपक्क-रोगाणां करेषु प्रवलानि। शुक्लनखादेः पुरुषस्य तानि श्लेष्मोल्वणान्यर्शांसीति विद्यात् ॥ १३ ॥

गङ्गाधरः—तत्र हेतुवचनं श्लोकावेतौ भवतः। द्वन्द्वसन्निपातानामेक इति त्रयः श्लोकाः। मधुरेत्यादि। शीतौ देशकालौ यौ व्याख्यातौ वातोल्वणाना-मिति ॥ १४ ॥

गङ्गाधरः—हेतुलक्षणेत्यादि। उक्तानां वातोल्वणादीनां द्वयोर्द्वयोर्हेतुसंसर्गाद् द्वन्द्वोल्वणानि भवन्ति। तेषां द्वयोर्द्वयोर्लक्षणसंसर्गाद् द्वन्द्वोल्वणानि चार्शांसि विद्यात्। त्रिदोषाणां त्रिदोषोल्वणानामर्शसां सर्व्वो वातोल्वणादीनां त्रयाणां हेतुः। लक्षणन्तु त्रिदोषाणां सहजैः सहजार्शोऽभिहितैर्लक्षणैः समं तुल्यमिति ॥ १५ ॥

चक्रपाणिः—तत्र यानि इत्यादिना कफजमाह। प्रमाणवन्तीति महाप्रमाणानि। सुप्तसुप्तानि इत्यत्यर्थं निश्चेतनानि। दीर्घकालानुपशयानीति दीर्घकालानुवन्धीनि ॥ १३। १४ ॥

चक्रपाणिः—हेतुलक्षणेत्यादौ उल्वणपदेन द्वन्द्वजे तृतीयोऽपि दोषः जनकोऽस्त्येव। परं सोल्वणो न भवतीति दर्शयति। सर्व्वो हेतुरिति यथोक्तसर्व्वहेतुः, सहजैः लक्षणैः सह सर्व्वो हेतुस्त्रिदोषाणां भवति। तेन त्रिदोषे सर्व्वहेतुत्वात् सहजानि लक्षणानि भवन्तीत्यर्थः ॥ १५ ॥

विष्टम्भोऽन्नस्य दौर्ब्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥
ग्रहणीदोषपाण्डुर्त्तेराशङ्का चोदरस्य च ।
पूर्व्वरूपाणि निर्द्दिष्टान्यर्शसामभिवृद्धये ॥ १६ ॥
अर्शांसि खलु जायन्ते नासन्निपतितैस्त्रिभिः ।
दोषैर्दोषविशेषैस्तु विशेषः कल्प्यतेऽर्शसाम् ॥ १७ ॥
पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ।
सर्व्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥

गङ्गाधरः—जातस्योत्तरकालजानां पूर्व्वरूपाण्याह—विष्टम्भ इत्यादि । आटोपो गुड़गुड़ाशब्दः कुक्षेः । ग्रहणीदोषस्य पाण्डुर्त्तेरुदरस्य चाशङ्का, न तु ग्रहणीदोषः पाण्डुत्तिश्चोदररोगश्च । अभिवृद्धये उत्पत्तये ॥ १६ ॥

गङ्गाधरः—नन्वेकैकदोषजानि किं न भवन्तीत्यत आह—अर्शांसीत्यादि । त्रिभिर्दोषैः असन्निपतितैः संहतव्यतिरिक्तैर्न खल्वर्शांसि जायन्ते । तत्र सन्निपतिते दोषे पुनर्दोषविशेषैस्तु उल्वणदोषैरर्शसां विशेषः कल्प्यते । इति ॥ १७

गङ्गाधरः—ननु गुदवलिदेशे भवन्त्यर्शांसि कथमूरुकटिपार्श्वादिशूलशिरोऽभितापादीनि जायन्त इत्यत आह—पञ्चात्मेत्यादि । पञ्चात्मा मारुतः प्राणापानसमानोदानव्यानाः । पञ्चात्मकं पित्तं पाचको रञ्जकः साधक आलोचको भ्राजकश्चेति पञ्चविधोऽग्निः शरीर एवेति । तदुक्तं सुश्रुते—"न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते । आग्नेयत्वात् पित्ते दहनपचनादिष्वभिवर्त्तमानेऽग्निवदुपचारः क्रियतेऽन्तरग्निरिति । क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगात् आगमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति । तत्रादृष्टहेतुकेन विशेषेण पक्वामाशयमध्यस्थं पित्तं चतुर्व्विधमन्नपानं पचति

चक्रपाणिः—विष्टम्भोऽप्रचालत्वम्, आटोपो गुड़गुड़ो शब्दः ॥ १६ ॥

चक्रपाणिः—अर्शसां त्रिदोषजन्यत्वेऽपि एकदोषजत्वादिव्यपदेशमाह—अर्शांसीत्यादि । यद्यपि सन्निपतितैरित्युक्ते त्रयाणां मेलको लभ्यते, तथापि त्रिभिरिति पदं त्रयाणामप्यत्र अनुबन्ध्यत्वस्य तथाच हीनपादस्योपदर्शनार्थं । दोषविशेषादिति उल्वणरूपादिविशेषात् । विशेष इति वातजोऽयं इत्यादिको विशेषः ॥ १७ ॥

तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च।
सर्व्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च॥ १८॥

विरेचयति च रसदोषमूत्रपुरीषाणि। तत्रस्थमेव चात्मशक्त्या शेषाणां पित्त-स्थानानां शरीरस्य चाग्निकर्म्मणाऽनुग्रहं करोति। तस्मिन् पित्ते पाचकोऽग्निरिति संज्ञा। यत् तु यकृत्प्लीह्नोः पित्तं तस्मिन् रञ्जकोऽग्निरिति संज्ञा, स रसस्य राग-कृदुक्तः। यत् पित्तं हृदयसंस्थितं तस्मिन् साधकोऽग्निरिति संज्ञा, सोऽभिप्रार्थित-मनोरथसाधनकृदुक्तः। यद् दृष्ट्यां पित्तं तस्मिन्नालोचकोऽग्निरिति संज्ञा, स रूप-ग्रहणेऽधिकृतः। यत् तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति संज्ञा, सोऽभ्यञ्जन-परिषेकावगाहावलेपनादीनां क्रियाद्रव्याणां पक्ता छायानाञ्च प्रकाशकः। भवति चात्र। पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च। उष्णं कटु सरञ्चैव विदग्धञ्चाम्लमुच्यते।" कफश्च पञ्चात्मा क्लेदकश्चावलम्बकश्च बोधकश्च तर्पकश्च श्लेषकश्चेति। तदुक्तं सुश्रुते—"तत्रामाशयः पित्ताशयस्योपरिष्टात् तत्प्रत्यनीक-त्वादूर्द्ध्वगतित्वात् तेजसश्चन्द्र इवादित्यस्य स चतुर्व्विधाहारस्याधारः। तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसंघातः सुखजरश्च भवति। माधुर्य्यात् पिच्छिलत्वाच्च प्रक्लेदित्वात् तथैव च। आमाशये सम्भवति श्लेष्मा मधुरशीतलः। स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य चोदक-कर्म्मणानुग्रहं करोति, तस्मिन् श्लेष्मणि क्लेदक इति संज्ञा। यस्तूरःस्थस्त्रिक-सन्धारणमात्मवीर्य्येणान्नरससहितेन हृदयावलम्बनं करोति, तस्मिन्नवलम्बक इति संज्ञा। यस्तु जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यग्रसज्ञाने वर्त्तते, तस्मिन् बोधक इति संज्ञा। यस्तु शिरःस्थः स्नेहसन्तर्पणाधि-कृतत्वादिन्द्रियाणामात्मवीर्य्येणानुग्रहं करोति तस्मिंस्तर्पक इति संज्ञा। सन्धिस्थस्तु श्लेष्मा सर्व्वसन्धिसंश्लेषात् सर्व्वसन्ध्यनुग्रहं करोति, तस्मिन् श्लेषक इति संज्ञा। भवति चात्र। श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीत एव च। मधुरस्त्वविदग्धः स्याद् विदग्धो लवणः स्मृतः।" इति। गुदवलित्रयं तिस्र एव गुदवलयः। इत्येते सर्व्वे एव गुदजानामर्शसां समुद्भवे प्रकुप्यन्ति। तस्मात् पञ्चात्मवायुपञ्चात्मपित्तपञ्चात्मकफगुदवलित्रयकोपाज्जातान्यर्शांसि दुःखानि बहुव्याधिकराणि। एवं सर्व्वदेहधारकसर्व्ववातातिप्रकोपात् सर्व्व-देहानां नखनयनवदनादीनामुपतापीनि भवन्तीति॥ १८॥

चक्रपाणिः—पञ्चात्मेति प्राणापानव्यानोदानसमानरूपः॥ १८॥

हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलश्च यस्यासाध्योऽर्शसो हि सः ॥
हृत्पार्श्वशूलं सम्मोहश्छर्दिरङ्गस्य रुग् ज्वरः ।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ १९ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्द्दिशेत् ॥ २० ॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते ।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥ २१ ॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ २२ ॥

गङ्गाधरः—असाध्यलक्षणमाह—हस्ते पादे इत्यादि । यस्य जनस्य हस्तपादादिषु शोथो हृत्पार्श्वशूलश्च सोऽर्शसो जनोऽसाध्यः । हृदित्याद्यपरमसाध्यलक्षणम् । यस्य हृच्छूलादीनि सन्ति तं गुदजातुरं तानि निहन्युः । अपरश्चाह—सहजानीत्यादि । अभ्यन्तरां तृतीयां वलिम् ॥ १९ । २० ॥

गङ्गाधरः—नन्वेतानि किं प्रत्याख्येयानि याप्यानि वेत्यत आह—शेषत्वात् इत्यादि । आयुषः शेषो यदि वर्त्तते चतुष्पाद्भेषजं च युज्यते पुरुषश्च दीप्तजाठराग्निर्भवति तदाभिहितान्यसाध्यानि याप्यन्ते शेषायुष्कालयापनया वर्त्तन्ते, अतोऽन्यथायुषोऽवशेषाभावात् प्रत्याख्येयानि त्याज्यानि चतुष्पाद्भेषजसमवायेऽपि वैद्यैरिति ॥ २१ ॥

गङ्गाधरः—कृच्छ्रसाध्यतामाह—द्वन्द्वजानीत्यादि । प्रथमायां वलौ यानि द्वन्द्वजान्यर्शांसि तानि कृच्छ्रसाध्यान्याहुरभ्यन्तरवलिजानाम् असाध्यत्वेन उक्तत्वात् । तर्हि द्वितीयायां वलौ जातानि किं साध्यानीत्यत आह—द्वितीयायां वलावाश्रितानि यानि खल्वेकदोषजानि तानि कृच्छ्रसाध्यान्याहुः

चक्रपाणिः—हस्ते इत्यादिना असाध्यविभागमाह । अङ्गस्य रुगिति सर्व्वाङ्गरुक् ॥ १९ । २० ॥

चक्रपाणिः—शेषत्वादायुष इति आयुषः शेषे इत्यर्थः । समन्वित इति भावे क्तः । तेन चतुःपादसमन्वये सतीत्यर्थः ॥ २१ । २२ ॥

वाह्यायान्तु वलौ जातान्येकदोषोल्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ २३ ॥
तेषां प्रशमने यत्नमाशु कुर्य्याद् विचक्षणः ।
तान्याशु हि गुदं बद्ध्वा कुर्य्याद् बद्धगुदोदरम् ॥ २४ ॥
तत्राहुरेके शस्त्रेण कर्त्तनं हितमर्शसाम् ।
दाहं क्षारेण चाप्येके दाहमेके तथाग्निना ॥
अस्त्वेतद् भूरितन्त्रेण धीमता दृष्टकर्म्मणा ।
क्रियते त्रिविधं कर्म्म भ्रंशस्तत्र सुदारुणः ॥
पुंस्त्वोपघातः श्वयथुर्गुदे वेगविनिग्रहः ।
आध्मानं दारुणं शूलं व्यथा रक्तातिवर्त्तनम् ॥

द्वन्द्वजानां कृच्छ्रत्ववचनात् त्रिदोषजानामसाध्यत्ववचनाच्च। परिसंवत्सराणि चार्शांसि खल्वेकदोषजान्यत्र वाह्यवलावपि कृच्छ्रसाध्यान्याहुः ॥ २२ ॥

गङ्गाधरः—तर्हि कानि सुखसाध्यानि तान्याह—वाह्यायान्त्वित्यादि। पारिशेष्यादेतानि सुखसाध्यानि भवन्ति यानि वाह्यायां वलौ जातानि खलु चेदेकदोषोल्वणानि भवन्ति, भवन्ति च न चिरोत्पतितानि संवत्सरानतीतानि तदा सुखसाध्यानि। द्वन्द्वजानां परिसंवत्सराणां कृच्छ्रसाध्यत्ववचनात् त्रिदोषाणामसाध्यत्ववचनाच्च। इत्यर्शोनिदानमुक्तम् ॥ २३ ॥

गङ्गाधरः—अथैषां साध्यानामर्शसां चिकित्सितमाह—तेषामित्यादि। तेषां साध्यानामर्शसां प्रशमने विचक्षण आशु यत्नं कुर्य्यात्। किमर्थमाशु यत्नं कुर्य्यादित्यत आह—तान्याशु हीत्यादि। हि यस्मात् तान्यर्शांसि आशु गुदं बद्ध्वा बद्धोदरं कुर्य्युः ॥ २४ ॥

गङ्गाधरः—तत्राहुरित्यादि। तत्रार्शसां प्रशमने एके वैद्या अर्शसां कर्त्तनं शस्त्रेण छेदनं हितमाहुः। एके च वैद्याः क्षारेणार्शसां दाहं हितमाहुः। एके च वैद्या अग्निना दाहमर्शसां हितमाहुः। अस्त्वेतत्। दृष्टकर्म्मणा धीमता वैद्येन भूरितन्त्रेण त्रिविधमिदं शस्त्रेण कर्त्तनं क्षारेण दाहोऽग्निना च दाह इति कर्म्म क्रियते। तत्र त्रिविधे कर्म्मणि सुदारुणो भ्रंशोऽस्ति। कस्को भ्रंश

चक्रपाणिः—शस्त्रेणत्यादिना चिकित्सामाह। कर्त्तनं छेदनम्। भूरितन्त्राणि अधीतानि येन सः

पुनर्विरोहो रूढ़ानां क्लेदो भ्रंशो गुदस्य वा ।
मरणं वा भवेच्छीघ्रं शस्त्रक्षाराग्निविभ्रमात् ॥ २५ ॥
यत् तु कर्म्म सुखोपायमल्पभ्रंशमदारुणम् ।
तदर्शसां प्रवक्ष्यामि समूलानां निवृत्तये ॥ २६ ॥
वातश्लेष्मोल्वणान्याहुः शुष्काण्यर्शांसि तद्विदः ।
प्रस्रावीणि तथार्द्राणि रक्तपित्तोल्वणानि च ।
ततः शुष्कार्शसां पूर्व्वं प्रवक्ष्यामि चिकित्सितम् ॥ २७ ॥
स्तब्धानि स्वेदयेत् पूर्व्वं शोथशूलान्वितानि च ।
चित्रकक्षारबिल्वानां तैलेनाभ्यज्य स्वेदयेत् ॥
यवमाषकुलत्थानां पुलाकानामयोदृशत्-
गोखराश्वशकृत्पिण्डैस्तिलकल्कैस्तुषैस्तथा ॥

इत्यत आह—पुंस्त्वेत्यादि । पुंस्त्वोपघातादयः शस्त्रक्षाराग्निविभ्रमाच्छीघ्रं भवेयुः । गुदवेगविनिग्रहः पुरीषवेगो गुदेन यद्भवति तद्विनिग्रहः स्यात् । पुनर्विरोहोऽर्शसां छिन्नानां क्षारदग्धानामग्निदग्धानाञ्च पुनरुत्पत्तिः स्यात् । रूढ़ानाञ्च क्लेदो गुदस्य वा भ्रंशः मरणं वा भवेदिति ॥ २५ ॥

गङ्गाधरः—तर्ह्यनपायि किं कर्म्मेत्यत आह—यत् तु कर्म्मेत्यादि । अल्पभ्रंशमल्पक्लेशकरं, समूलानां कारणसहितानामर्शसां निवृत्तये ॥ २६ ॥

गङ्गाधरः—तद्यथा—वातेत्यादि । यान्यर्शांसि वातश्लेष्मोल्वणानि तानि शुष्काण्यर्शांसि तद्विदो वैद्या आहुः । रक्तपित्तोल्वणानि तु यान्यर्शांसि तानि प्रस्रावीणि तथार्द्राणीति चाहुः । तत इत्यादि । ततः पूर्व्वं शुष्कार्शसां चिकित्सितं प्रवक्ष्यामि ॥ २७ ॥

गङ्गाधरः—तद् यथा—स्तब्धानीत्यादि । शोथशूलान्वितानि अर्शःस्वेव शोथश्च शूलश्च स्तब्धता च यदि वर्त्तते तदा चित्रकादितैलेनाभ्यज्य यवमाष-

भूरिशः । अयं प्रकरणार्थः—शिक्षितेनैव शस्त्रकर्म्म विधानतः कर्त्तव्यम् । विरोह इति रूढ़ानां रूढ़व्रणानाम् ॥ २३—२६ ॥

चक्रपाणिः—वातश्लेष्मोल्वणानीत्यत्र यद्यपि कफजे स्राव उक्तः तथापि पिच्छारूपानुबन्धः तेन शुष्कार्शोग्रहणम् । शुष्कार्द्रकारणे मेलकेऽपि भवति ॥ २७ ॥

वचाशताह्वापिण्डैर्वा सुखोष्णैः स्नेहसंयुतः।
सक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा॥
शुष्कमूलकपिण्डैर्वा पिण्डैर्वा कार्ष्णगन्धिकैः।
रास्नापिण्डैः सुखोष्णैर्वा सस्नेहैर्हाबुषैरपि॥
इष्टकस्य खराह्वायाः शाकैर्गञ्जनकस्य वा।
अभ्यज्य कुष्ठतैलेन स्वेदयेत् पोट्टलीकृतैः।
पत्रोत्क्वाथैः स्वेदयेच्च वृषार्कैरण्डविल्वजः॥ २८॥
त्रिफलाया मूलकस्य वेणूनां वरुणस्य च।
अग्निमन्थस्य शिग्रूणां पत्राण्यश्मन्तकस्य च॥
जलेनोत्क्वाथ्य शूलार्त्तं स्वभ्यक्तमवगाहयेत्।
कोलोत्क्वाथेऽथवा कोष्णे सौवीरकतुषोदके॥

(कोल)-कुलत्थानां पिण्डैः पुलाकानामजाततण्डुलधान्यानां पिण्डरयःपिण्डैः दृशत्पिण्डैः गवाद्यन्यतमशकृत्पिण्डैस्तिलकल्कैस्तथा तुषैर्वचाशताह्वापिण्डैः स्नेहसंयुतैर्घृततैलादियुक्तैः सुखोष्णैः स्वेदयेत्। अथवा तैलसर्पिषा स्निग्धानां शक्तूनां यवादिचूर्णानां पिण्डिकाभिः अथवा शुष्कमूलकपिण्डैरथवा कार्ष्णगन्धिकैः शोभाञ्जनमूलत्वक्पिष्टकृतपिण्डैः सुखोष्णैः सस्नेहैश्च रास्नापिण्डैर्हाबुषैः पिण्डर्वा स्वेदयेत्। एवं कुष्ठतैलेनाभ्यज्य इष्टकस्य पोट्टलीकृतैः खराह्वायाः पारासीययमान्याः पोट्टलीकृतैः स्वेदयेदिति। अपरान् स्वेदानाह—पत्रेत्यादि। वृषार्कैरण्डविल्वजैः पत्रोत्क्वाथैः स्वेदयेच्च। अत्रापि चित्रकादितैलाभ्यङ्गानुवृत्तिः बोध्या॥ २८॥

गङ्गाधरः—स्वेदानुक्त्वावगाहमाह—त्रिफलाया इत्यादि। एवम् अर्शःशूलार्त्तं सर्व्वाङ्गं चित्रतैलादिना स्वभ्यक्तं त्रिफलायाः पत्राणि जलेनोत्क्वाथ्याथवा मूलकस्य पत्राण्यथवा वेणूनां वंशानां पत्राण्यथवा वरुणस्य पत्राण्यथवा अग्निमन्थस्य शिग्रूणां वा पत्राणि जलेनोत्क्वाथ्य तेन जलेनावगाहयेत्। अपरान्

चक्रपाणिः—चित्रकक्षारविल्वानां तैलेनेति चित्रकादिसिद्धेन। पुलाकं तुच्छधान्यम्। कार्ष्णगन्धिकैरिति शोभाञ्जनकः। रास्नाऽजमोदाकुष्ठसिद्धतैलेन॥ २८। २९॥

विल्वक्काथेऽथवा तक्रे दधिमण्डाम्लकाञ्जिके ।
गोमूत्रे वा सुखोष्णे तं स्वभ्यक्तमवगाहयेत् ॥ २६ ॥
कृष्णसर्पवराहोष्ट्र-जतुकावृषदंशजाम् ।
वसामभ्यञ्जने दद्याद् धूपनञ्चार्शसां हितम् ॥
नृकेशाः सर्पनिर्म्मोको वृषदंशस्य चर्म्म च ।
अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम् ॥
तुम्बुरूणि विड़ङ्गानि देवदार्व्वक्षतं घृतम् ।
वृहती चाश्वगन्धा च पिप्पल्यः सुरसा घृतम् ॥
वराहवृषविट् चव धूपनं सक्तवो घृतम् ।
कुञ्जरस्य पुरीषञ्च घृतं स्वज्जरसो रसः ॥ ३० ॥
हरिद्राचूर्णसंयुक्तं सुधाक्षीरं प्रलेपनम् ।
गोपित्तपिष्टाः पिप्पल्यः सहरिद्राः प्रलेपनम् ॥

अवगाहानाह—कोलेत्यादि । शुष्कबदरकाथे कोष्णे कोष्णे च सौवीरके तुषोदके वा विल्वकाथे विल्वमूलत्वक्काथे अथवा तक्रे दधिमण्डेऽम्लकाञ्जिके च सुखोष्णे गोमूत्रे वा तं शूलार्त्तमर्शसं स्वभ्यक्तं चित्रतैलादिनाऽवगाहयेत् ॥२९॥

गङ्गाधरः—अथार्शसामभ्यङ्गमाह—कृष्णेत्यादि । जतुका चर्म्मचटकः । कृष्णसर्पादीनां वसामर्शसामभ्यञ्जने हितं दद्यात् तथार्शसां हितं धूपनञ्च दद्यात् । धूपनमाह—नृकेशा इत्यादि । नृकेशादीनि समभागानि कुट्टयित्वा अर्शोभ्यो हितं धूपनम् । अन्यच्च तुम्बुरूणीत्यादि । तुम्बुरूणि धान्यकानि अक्षतं यवतण्डुला अन्यैस्तण्डुल उच्यते । घृतान्तमेकं धूपनं पुनर्घृतान्तं द्वितीयं धूपनम् । वराहविट् वृषविट् सक्तवो घृतञ्च धूपनमेकम् । कुञ्जरस्य पुरीषं स्वज्जरसो धूनकः रसः शिलारसः घृतमिश्रं धूपनम् ॥ ३० ॥

गङ्गाधरः—अथ लेपनमाह—हरिद्रेत्यादि । सुधाक्षीरं स्नुहीक्षीरम् । गो-

चक्रपाणिः—जतुका चर्म्मचटिका, वृषदंशो बिड़ालः, अक्षता इति खण्डिता यवाः । घृतपादान्ताश्चत्वारो धूपाः । सर्जरसाभ्याञ्च पञ्चमो धूपः ॥ ३० ॥

शिरीषवीजं कुष्ठञ्च पिप्पल्यः सैन्धवं गुड़ः।
अर्कक्षीरं सुधाक्षीरं त्रिफला च प्रलेपनम्॥
पिप्पल्यश्चित्रकः श्यामा किण्वं मदनतण्डुलाः।
प्रलेपः कुक्कुटशकृद्-हरिद्रागुड़संयुतः॥
दन्ती श्यामा-*-मृतासंज्ञः पारावतशकृद् गुड़ः।
प्रलेपः स्याद् गजास्थीनि निम्बो भल्लातकानि च॥
प्रलेपः स्यादलं कोष्णो वासन्तकवसायुतः।
शूलश्वयथुहृद्युक्तश्चुलुकीवसया सह॥
अर्कपत्रं सुधाकाण्डं कटुकालाबुपल्लवाः।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम्॥ ३१॥
अभ्यङ्गाद्याः प्रदेहान्ता यत्र ते परिकीर्त्तिताः।
स्तम्भश्वयथुकण्डूर्त्ति-नाशनास्तेऽर्शसां हिताः॥

पिष्टादिना अपरं प्रलेपनम्। शिरीषेत्यादि। शिरीषवीजादीनि दश समानानि पिष्ट्वा प्रलेपनम्। पिप्पल्य इत्यादि। किण्वं सुराकिण्वम्। श्यामा त्रिवृत्। मदनतण्डुला मदनफलवीजानि। पिप्पल्याद्यष्टभिः प्रलेपः। दन्तीत्यादि। दन्त्यादिभिः पञ्चभिरेकः प्रलेपः। गजास्थिनिम्बभल्लातकवीजैरपरः प्रलेपः। प्रलेप इत्यादि। अलं हरितालम्। वासन्तकवसायुत उष्ट्रवसायुतः कोष्णः प्रलेपः स्यात्। चलुकी शिशुमारस्तद्वसया सह अलं हरितालं, कोष्णः प्रलेपः शूलश्वयथुहृत् स्यात्। अर्कपत्रमित्यादि। कटकालाब्वाः पल्लवाः पञ्चभिरेकं लेपनम्॥ ३१॥

गङ्गाधरः—अभ्यङ्गाद्या इत्यादि। चित्रतैलादय एतदन्ता ये योगाः

चक्रपाणिः—किण्वं सुरावीजम्। मदनतण्डुलाः मदनफलशस्यम्। निकुम्भी दन्ती, अमृता गुड़ूची, अलं हरितालं, वासन्तकवसा उष्ट्रवसा, कटुकालाबूस्तिक्तकोऽलाबुः॥ ३१॥

* दन्तीश्यामामृतासंज्ञः इत्यत्र निकुम्भी सामृतासंज्ञः इति चक्रसम्मतः पाठः

प्रदेहान्तैरुपक्रान्ता गुदजाः प्रस्रवन्ति हि ।
सञ्चितं दुष्टरुधिरं ततः सम्पद्यते सुखम् ॥ ३२ ॥
रुक्षोष्णस्निग्धशीतैर्हि न व्याधिरुपशाम्यति ।
रक्ते दुष्टे भिषक् तस्माद् रक्तमेवावसेचयेत् ॥
जलौकाभिस्तथा शस्त्रैः सूचीभिर्वा पुनःपुनः ।
अवर्त्तमानं रुधिरं रक्तार्शोभ्यः प्रवाहयेत् ॥ ३३ ॥
गुदश्वयथुशूलार्त्तं मन्दाग्निं पाययेत् तु तम् ।
त्र्यूषणं पिप्पलीमूलं पाठां हिङ्गु सचित्रकम् ॥
सौवर्च्चलं पुष्कराख्यमजाजीं विल्वपेषिकाम् ।
विड़ं यमानीं हवुषां विड़ङ्गं सैन्धवं वचाम् ॥
तिन्तिड़ीकञ्च मण्डेन मद्येनोष्णोदकेन वा ।
तथार्शोग्रहणीदोषाच्छूलानाहात् प्रमुच्यते ॥ ३४ ॥

प्रकीर्त्तितास्तेऽर्शसां स्तम्भादिनाशनाः। कथमर्शसामिमे हिता इत्यत आह—प्रदेहान्तैरित्यादि। अभ्यज्य स्वेदादिभिः प्रदेहान्तैर्योगैरुपक्रान्ता गुदजा हि यस्मात् सञ्चितं दुष्टरुधिरं प्रस्रवन्ति, ततः सुखं सम्पद्यते ॥ ३२ ॥

गङ्गाधरः—रुक्षेत्यादि। व्याधौ रक्ते दुष्टे सति रुक्षोष्णस्निग्धशीतरौषधैः व्याधिर्नोपशाम्यति, तस्माद् भिषक् यस्मिन् व्याधौ दुष्टं रक्तं वर्त्तते तस्मिन् व्याधौ रक्तमेवावसेचयेत्। तद् रक्तं केनावसेचयेदित्यत आह—जलौकाभिः इत्यादि। इह रक्तार्शसि जलौकादिभिः पुनःपुना रक्तमवसेचयेत्। तत्र रक्तार्शोभ्योऽवर्त्तमानरुधिरं यस्य न रुधिरं प्रवर्त्तमानं तं रक्तार्शसं जनं प्रवाहयेत् कुन्थनं कारयेत् ॥ ३३ ॥

गङ्गाधरः—ततः किं कुर्य्यादित्यत आह—गुदेत्यादि। तं प्रस्रुतरक्तमर्शसं गुदश्वयथुशूलार्त्तं मन्दाग्निञ्च वक्ष्यमाणमौषधं पाययेत्। यत् पाययेत् तदाह—त्र्यूषणमित्यादि। त्र्यूषणादीन्यष्टादश द्रव्याणि चूर्णीकृत्य मण्डादिना पाययेदिति पूर्व्वेणान्वयः। तथा पीतवान् पुमान् ग्रहणीदोषादितः प्रमुच्यते ॥ ३४ ॥

चक्रपाणिः—जलौकाभिरित्यादौ अप्रवर्त्तमानं रुधिरं प्रवाहयेदिति योज्यम् ॥ ३२। ३३ ॥
चक्रपाणिः—विल्वपेशिका विल्वमध्यम् ॥ ३४ ॥

पाचनं पाययेद्‌ वा तद्‌ यद्‌ वक्ष्याम्यतिसारिणे।
सगुड़ामभयां वापि प्राशयेत्‌ पौर्व्वभक्तिकीम्‌॥
पाययेद्‌ वा त्रिवृच्चूर्णं त्रिफलारससंयुतम्‌।
हृते गुदाश्रये दोषे गुदजा यान्ति संक्षयम्‌॥
गोमूत्राध्युषितां दद्यात्‌ सगुड़ां वा हरीतकीम्‌।
हरीतकीं तक्रयुक्तां त्रिफलां वा प्रयोजयेत्‌॥
सनागरं चित्रकं वा सीधुयुक्तं प्रदापयेत्‌।
दापयेच्चव्ययुक्तं वा सीधुं साजाजिचित्रकम्‌॥
सुरां सपाठां हवुषां दद्यात्‌ सौवर्च्चलान्विताम्‌।
दधित्थविल्वसंयुक्तं युक्तं वा चव्यचित्रकैः॥
भल्लातकयुतं वापि प्रदद्यात्‌ तक्रतर्पणम्‌।
विल्वनागरयुक्तं वा यमान्या चित्रकेण च॥

गङ्गाधरः—पाचनमित्यादि। अथवाऽतिसारिणे यत्‌ पाचनं वक्ष्यामि, तत्‌ पाययेत्‌। अथवा सगुड़ामभयां पौर्व्वभक्तिकीं प्राग्‌ भोजनात्‌ तं गुदश्वयथु-शूलार्त्तं मन्दाग्निं हृतरक्तं रक्तार्शसं प्राशयेत्‌। त्रिफलारससंयुतं त्रिवृच्चूर्णं वा पाययेत्‌। इति। रक्तावसेचनानन्तरमेभिर्योगैर्गुदाश्रये दोषे हृते सति गुदजाः संक्षयं यान्ति। अपरान्‌ योगानाह—गोमूत्रेत्यादि। गोमूत्रे पर्य्युषितां हरीतकीं सगुड़ां दद्यात्‌। अथवा तक्रयुक्तां हरीतकीं प्रयोजयेत्‌। तक्रयुक्तां त्रिफलां वा प्रयोजयेत्‌। अथवा सीधुयुक्तं सनागरं चित्रकं प्रदापयेत्‌। चव्याजाजी-चित्रकचूर्णयुक्तं सीधुं दापयेच्च। पाठाहवुषासौवर्च्चलयुक्तां सुरां वा दद्यात्‌। दधित्थविल्वशलाटुचूर्णसंयुक्तं तक्रतर्पणं तक्रेण आलोड़ितं सक्तुं प्रदद्यात्‌। अथवा चव्यचित्रकचूर्णयुक्तं तक्रतर्पणं प्रदद्यात्‌। अथवा भल्लातक-चूर्णयुतं तक्रतर्पणं प्रदद्यात्‌। एवं विल्वशलाटुचूर्णनागरचूर्णयुक्तं तक्रतर्पणं प्रदद्यात्‌। यमान्या सह तक्रतर्पणं चित्रकेण च सह तक्रतर्पणं

चक्रपाणिः—गोमूत्राध्युषितामिति रात्रौ गोमूत्रसिक्ताम्‌। भल्लातकयुतमित्यत्र भल्लातकचूर्णयुक्तम्‌

चित्रकं हवुषां हिङ्गु दद्याद्वा तक्रसंयुतम् ।
पञ्चकोलयुतं वापि तक्रमस्य प्रदापयेत् ॥ ३५ ॥
हवुषोत्कुञ्चिकाधान्यमजाजी कारवी शटी ।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥
यमानी चाजमोदा च तच्चूर्णं तक्रसंयुतम् ।
मन्दाम्लं कटुकं विद्वान् स्थापयेद् घृतभाजने ॥
व्यक्ताम्लं कटुकं जातं तक्रारिष्टं मुखप्रियम् ।
प्रपिबेन्मात्रया कालेष्वन्नस्य तृषितस्त्रिषु ॥
दीपनं रोचनं बल्यं कफवातानुलोमनम् ।
गुदश्वयथुकण्डूर्त्ति-नाशनं बलवर्द्धनम् ॥ ३६ ॥

तक्रारिष्टम् ।

प्रदद्यात् । अथवा तक्रसंयुतं चित्रकहवुषाहिङ्गुचूर्णं दद्यात् । अथवा पञ्चकोलचूर्णयुक्तं तक्रमस्मै अर्शसाय प्रदापयेत् ॥ ३५ ॥

गङ्गाधरः—तक्रारिष्टमाह । हवुषा स्वनामख्याता, उत्कुञ्चिका स्थूलकृष्णजीरकम्, अजाजी जीरकं, कारवी क्षुद्रकृष्णजीरकम् । हवुषादीनि द्वादश द्रव्याणि समानानि चूर्णयित्वा मिलितं तच्चूर्णं तक्रसंयुतं युक्त्या तक्रात् षोड़शांशं मिश्रयित्वा मन्दाम्लं तक्रं कटुकं हवुषादियोगाद् घृतभाजने स्थापयेत्, यावता दिनेन जातं व्यक्ताम्लं कटुकं स्यात् । तक्रारिष्टं मुखप्रियं भवति । तत् त्रिषु कालेषु पिबेत् । अन्नस्य द्वौ कालौ, यदा तृषितः तत्र चैककालमिति । तक्रारिष्टम् ॥ ३६ ॥

...तयपेक्षया दशमो भागः । उक्तं हि चूर्णे तर्पणभागैर्नवभिः संयोजनीयम्, अन्ये तु तर्पणभल्लातकचूर्णयोः समानयोः स्तोकस्य द्रव्यस्य प्रयोगमाहुः । तर्पणन्तु हपुषत्याद्युक्तम् ॥ ३५ ॥

चक्रपाणिः—तक्रारिष्टे तु ग्रहणीचिकित्सायां "यमान्यामलकं पथ्या मरिचं त्रिपलांशिकम् । ...लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् । तक्रकंसासुतं जातं तक्रारिष्टं पिबेन्नरः" । ...युक्ततक्रानुसारेण इहापि तक्रचूर्णसमानव्यवस्था । हपुषेति चूर्णेन व्यक्ताम्लकटुकं तक्रं भवति । त्रिषु कालेष्विति भोजनाद्यमध्यान्तेषु ॥ ३६ ॥

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत्॥ ३७॥
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम्।
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा॥
सप्ताहं द्वादशाहं वा पक्षं मासमथापि वा।
बलकालविशेषज्ञो भिषक् तक्रं प्रयोजयेत्॥ ३८॥
अत्यर्थमृदुकायाग्नेस्तक्रमेवावचारयेत्।
सायं वा लाजसक्तूनां दद्यात् तक्रावलेहिकाम्॥
जीर्णे तक्रे प्रदद्याद्द्वा तक्रपेयां ससैन्धवाम्।
तक्रानुपानं सस्नेहं तक्रौदनमतः परम्॥

गङ्गाधरः—तक्रप्रयोगमाह—त्वचमित्यादि। चित्रमूलस्य त्वचं हण्डिकाभ्यन्तरे किञ्चिद्घनप्रलेपयोग्यमात्रां पिष्ट्वा अभ्यन्तरे कुम्भं हण्डिकां प्रलेपयेत्। तत्र कुम्भे किञ्चिदावर्त्तितं दुग्धं दधिवीजं दत्त्वा स्थापयेत्। तत्र जातं दधि वा पादाम्बुना मथित्वा कृतं तक्रं वा अर्शोहरं पिबेत्॥ ३७॥

गङ्गाधरः—तत्र तक्रस्य विशेषमाह—वातश्लेष्मेत्यादि। तत् तक्रं सस्नेहम् अनुद्धृतसारमर्द्धोद्धृतसारमिति द्विधा वक्ष्यते रूक्षमुद्धृतसारं वा, यथादोषं प्रयोज्यं वातपित्तोल्वणे सस्नेहं कफोल्वणे रूक्षम्। कियन्तं दिवसं प्रयोज्यमिति तदाह—सप्ताहमित्यादि। बलकालविशेषं ज्ञात्वा सप्ताहादिकालं तक्रं प्रयोजयेत्॥ ३८॥

गङ्गाधरः—तत्र तक्रप्रयोगो यथा कर्त्तव्यस्तदाह—अत्यर्थेत्यादि। अत्यर्थमृदुः कायाग्निर्यस्य तस्य तक्रमेव केवलम् अवचारयेन्नान्नादिकम्। अथवा प्राह्णे केवलं तक्रमवचारयेत्, सायं रात्रिपूर्व्वभागे लाजसक्तून् तक्रेणालोड्य लेहवत् कृत्वा दद्यात्। एवं तक्रं पूर्व्वाह्णे मात्रया पिबेत्। तत्तक्रे जीर्णे ससैन्धवां तक्रसिद्धां पेयां दद्यात्। तक्रपेयानन्तरं पूर्व्वाह्णे तक्रं मात्रया

चक्रपाणिः—सस्नेहं तक्रं वातकफे, कफे रूक्षम्। पूर्व्वाह्णे तक्रमेव केवलं पेयम्। मृदुरग्निना अपि तक्रमेव सेव्यम्। एतत् अत्यर्थमृदुकायाग्नेस्तक्रमेवावचारयेत् इत्यनेनोक्तम्। किञ्चित् प्रवृद्धेऽग्नौ प्रातस्तक्रमेव पेयम्। सायन्तु लाजसक्तुना पेयम्। ततस्तु क्रमेणाग्नौ वृद्धे तक्रपेया

यूषैर्मांसरसैर्वापि भोजयेत् तक्रसंयुतैः ।
यूषै रसेन वाप्यूर्द्ध्वं तक्रसिद्धेन भोजयेत् ॥
कालक्रमज्ञः सहसा न च तक्रं निवर्त्तयेत् ।
तक्रप्रयोगो मासान्तः क्रमेणोपरमो हितः ॥
अपकर्षो यथोत्कर्षो न त्वन्नादपकृष्यते ।
शक्त्यागमनरक्षार्थं दार्ढ्यार्थमनलस्य च ।
बलोपचयवर्णार्थमेष निर्दिश्यते क्रमः ॥
रूक्षमर्द्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् ।
तक्रं दोषाग्निबलवित् त्रिविधं तत् प्रयोजयेत् ॥

पिबेत् । तक्रे जीर्णे तक्रौदनं तक्रपक्वमोदनं सस्नेहं घृतसहितं पक्त्वा दद्यात् । तत् तक्रान्नं भुक्त्वा तक्रमेवानुपिबेन्न तु जलमिति । एवमोदनभुक् यदा यूषादिकामः स्यात् तदा तं तक्रसंयुतैर्यूषैर्जीर्णे तक्रे भोजयेत् तक्रसंयुतैर्मांसरसैर्वा जीर्णे तक्रे भोजयेत् । अथवा तक्रसिद्धैर्यूषैस्तक्रसिद्धेन मांसरसेन तत ऊर्द्ध्वं भोजयेत् । कालक्रमज्ञस्तु भिषक् व्याधिप्रशान्तावपि सहसा तक्रं न निवर्त्तयेत् । मासान्तस्तक्रप्रयोगः, क्रमेण तक्रस्योपरमो हितः । तर्हि केन क्रमेण तक्रोपरमः कार्य्य इत्यत आह—अपकर्ष इत्यादि । यथा प्रथमं क्रमेण तक्रं सप्तादिषु वर्द्धयित्वा मासान्तं समानं पाययेत् तथा मासान्तेऽपकर्षः क्रमेण कार्य्यः न त्वन्नादपकृष्यते, अन्नभोजने यत् तक्रं तन्नापकृष्यते । तत्र प्रयोजनमाह । शक्त्याः सामर्थ्यस्यागमनार्थं शक्त्या रक्षणार्थञ्च अनलस्य दार्ढ्यार्थञ्च बलोपचयवर्णार्थञ्च एष उक्तरूपः क्रमो निर्दिश्यते । सस्नेहं रूक्षमेव वेति यदुक्तं तदाह । तत्र सस्नेहं द्विधा । रूक्षमुद्धृतसारमेकम् अर्द्धोद्धृतस्नेहं यतश्च तक्राद् घृतमनुद्धृतम् । तत् त्रिविधं तक्रं दोषाग्निबलवित् प्रयोजयेत् । रूक्षं तक्रं कफोल्वणेऽत्यर्थमन्दानले अर्द्धोद्धृतस्नेहं वातकफोल्वणे किञ्चिन्मन्दानले

तक्रौदनं तक्रसंस्कृतयूषादिभोजनानि सायं देयानि ।। प्रातस्तु तक्रमेव, सप्ताहादितक्रकालो ज्ञेयः । अत्र जतूकर्णः—प्रातस्तक्रप्रयोगः क्रमश उत्कर्षापकर्षौ जीर्णे च सैन्धवान्विततक्रेणौदनम् वा अतिमन्दाग्नेस्तक्रमेवेति आ मासान्तात् । उत्कर्षापकर्षौ तु येन क्रमेण तक्रं वृद्धं तेनैव मात्राक्रमेण तक्रमपकृष्यते, इति तक्रप्रयोगह्रासे सति अर्थसमुदायात् ह्रासो न कर्त्तव्यः । योऽंशस्तक्रस्यापकृष्टः सोऽर्थान्तरेण पूरणीय इत्यर्थः । रूक्षमित्यादिनोक्तं त्रिविधं तक्रं कफपित्तवातेषु दोषेषु ।

हतानि न विरोहन्ति तक्रेण गुदजानि च।
भूमावपि निषिक्तं तद् दहेत् तक्रं तृणोपलम्।
किं पुनर्दीप्तकायाग्नेः शुष्काण्यर्शांसि देहिनः॥
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः।
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते॥
वातश्लेष्मविकाराणां शतश्चापि निवर्त्तते।
नास्ति तक्रात् परं किञ्चिदौषधं कफवातजे॥ ३९॥
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्।
शृङ्गवेरमजाजीञ्च कारवीं धान्यतुम्बुरुम्॥
विल्वं कर्कटकं पाठां पिष्ट्वा पेयां विपाचयेत्।
फलाम्लां यमकैर्भृष्टां तां दद्याद् गुदजापहाम्॥

अनुद्धृतघृतं वातोल्वणे मन्दानलाभावे प्रयोजयेत्। तक्रप्रयोगाशिष आह—हतानीत्यादि। तक्रेण हतानि गुदजानि न पुनर्विरोहन्ति। यतः भूमौ निषिक्तमपि तत् तक्रं तृणोपलं तद्भूमिगतं दहेत्। दीप्तकायाग्नेः पुरुषस्य शुष्काण्यर्शांसि यद् दहेत्, किं पुनस्तत्र वक्तव्यमिति। तक्रशुद्धेषु स्रोतःसु यो रसः आहारजः सम्यगुपैति तेन रसेनास्य धातुना पुष्ट्यादिरुपजायते वातश्लेष्मविकाराणां शतञ्चार्शोवद् विनिवर्त्तयेदिति। इति तक्रप्रयोगः॥ ३९॥

गङ्गाधरः—पिप्पलीमित्यादि। शृङ्गवेरं शुण्ठी, अजाजी जीरकं, कारवी क्षुद्रकृष्णजीरकं, विल्वं शलाटु, कर्कटकं कर्कटशृङ्गी। सर्व्वं समभागेन पिष्ट्वा मध्यत्वादुभयभागित्वेन पलार्द्धं नीत्वा पिष्ट्वा प्रस्थोन्मितजले पोट्टलीं वद्धा प्रक्षिप्य दरदलिततण्डुलं जलात् षष्ठांशं शनकैः पचेत् यवागूर्यथा स्यात्। अत्राम्लफलं तिन्तिड़िकादिकमनुरूपं दद्याद् यथाम्ला स्यात्। ततो घृते (मिश्रित-घृततैले) भर्ज्जयेत् सम्भाररूपेण सन्तलयेत्। एवं सिद्धां पेयां गुदजापहां

मन्दतममन्दतरमन्देषु अग्निषु बलेषु च अधममध्यमोत्तमेषु यथासंख्यं ज्ञेयम्। भूमावित्यादि केचित् पठन्ति। शतमिति विंशतिः श्लेष्मविकारा अशीतिर्वातविकारैर्मिलित्वा विकाराणां शतम्॥ ३७—३९॥

एतैरेव खड़ान् कुर्य्यादेतैश्च विपचेज्जलम् ।
एतैरेव घृतं साध्यमर्शसां विनिवृत्तये ॥ ४० ॥
शटीपलाशसिद्धां वा पिप्पल्या नागरेण वा ।
दद्याद् यवागूं तक्राम्लां मरिचैरवचूर्णिताम् ॥ ४१ ॥
शुष्कमूलकयूषं वा यूषं कौलत्थमेव वा ।
दधित्थविल्वयूषं वा सकुलत्थमुकुष्टकम् ॥ ४२ ॥
छागलं वा रसं दद्याद् घृतैरेभिर्विमिश्रितम् ।
लावादीनां फलाम्लं वा सतक्रं ग्राहिभिर्युतम् ॥ ४३ ॥

दद्यात् । एतैरेव पिप्पल्यादिभिः फलाम्लान्तैः खड़ान् यूपान् कुर्य्यात् । पलार्द्धमेषां जलप्रस्थे पक्त्वार्द्धशृते तस्मिन् काथे मुद्गादिविदलानि काथात् अष्टादशांशमितानि पक्त्वा चतुर्थांशशेषं कुर्य्यात् । एवम् एतैः पिप्पल्यादिभिः जलप्रस्थमक्षमात्रैरर्द्धशेषं विपचेत् । एवमेतैः पिप्पल्यादिभिः कल्करेषामेव घृतापेक्षया चतुगुणकाथे घृतं साध्यम् । अर्शसां विनिवृत्तये इति खड़ादिषु त्रिष्वेव बोध्यम् ॥ ४० ॥

गङ्गाधरः—शटीत्यादि । शटीपलाशवीजाभ्यां कल्काभ्यां काथरूपाभ्यां वा सिद्धां यवागूं पेयां पिप्पल्या सिद्धां वा नागरेण सिद्धां वा तक्राम्लां मरिचैरनुरूपैरवचूर्णितामर्शसां विनिवृत्तये दद्यादिति पूर्व्वेणान्वयः ॥ ४१ ॥

गङ्गाधरः—शुष्केत्यादि । शुष्कमूलकसिद्धं यूपमथवा कौलत्थयूषं शुद्धम् । अथवा सकुलत्थमुकुष्टकं दधित्थविल्वसाधितं यूषं दद्यात् । अथवा छागलं मांसरसमेभिः शट्यादिभिर्यवागूयूपसाधनैः साधितैर्घृतैर्विमिश्रितं दद्यात् । अथवा सलावादीनां मांसरसं फलाम्लं दाड़िमामलकाद्यम्लं सतक्रं ग्राहिभिर्विल्वशलाटुपाठादिभिर्युतं दद्यात् ॥ ४२ । ४३ ॥

चक्रपाणिः—विल्वं बालविल्वं फलैर्दाड़िमादिभिः ॥ ४० ॥

चक्रपाणिः—दधित्थं कपित्थं ग्राहीत्युक्तम् ॥ ४१—४३ ॥

रक्तशालिर्महाशालिः कलमो लाङ्गलः सितः।
शारदः षष्टिकश्चैव स्यादन्नविधिरर्शसाम्।
इत्युक्तो भिन्नशकृतामर्शसानां क्रियाक्रमः॥ ४४॥
येऽत्यर्थं गाढ़शकृतस्तेषां वक्ष्यामि भेषजम्।
सस्नेहैः सक्तुभिर्युक्तां प्रसन्नां लवणीकृताम्।
दद्यान्मत्स्यण्डिकां पूर्व्वं भक्षयित्वा सनागराम्॥ ४५॥
गुड़ं सनागरं पाठां फलाम्लं पाययेच्च तम्।
गुड़ं घृतं यवक्षारं युक्तं वापि प्रयोजयेत्॥
यमानीं नागरं पाठां दाड़िमस्य रसं गुड़म्।
सतक्रलवणं दद्याद् वातवर्च्चोऽनुलोमनम्॥
दुःस्पर्शकेन विल्वेन यमान्या नागरेण च।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम्॥

गङ्गाधरः—पेयाद्यर्थं धान्यान्याह—रक्तशालिरित्यादि। अर्शसामन्नविधिरेभिरिति शेषः। इत्युक्त इति। अपरणं पिप्पलीमूलमित्यादिभिरेतदन्तैर्योगैः भिन्नशकृतामर्शसानां पुंसां क्रियाक्रम उक्तः॥ ४४॥

गङ्गाधरः—ये त्वर्शसा अत्यर्थगाढ़शकृतस्तेषां भेषजमत ऊर्द्ध्वं वक्ष्यामि। सस्नेहैरित्यादि। स्नेहयुक्तयवादिसक्तुभिर्मिश्रितां सैन्धवादिभिर्लवणीकृतां प्रसन्नां मदिरामत्यर्थगाढ़शकृद्भ्योऽर्शसेभ्यः दद्यात्। पूर्व्वं सनागरां मत्स्यण्डिकां गुड़मध्ये स्वयंजातदृढ़ीभूतां भक्षयित्वा दद्यात्॥ ४५॥

गङ्गाधरः—गुड़मित्यादि। नागरं पाठां चूर्णीकृत्य गुड़ं मिश्रयित्वा फलेन अम्लीकृत्य जलेन गोलयित्वा तं गाढ़शकृतमर्शसं पाययेत्। यवक्षारयुक्तं गुड़ं घृतं मेलयित्वा वा प्रयोजयेत्। यमानीमित्यादि। यमान्यादीनि चूर्णीकृत्य दाड़िमरसगुड़लवणतक्राणि मिश्रयित्वा तस्मै गाढ़शकृतेऽर्शसाय दद्यात्। दुःस्पर्शकेनेत्यादि। दुःस्पर्शको दुरालभा। दुःस्पर्शकादिभिः सर्व्वैः संयुक्ता पाठा। दुःस्पर्शादिनैकैकेनापि संयुक्ता पाठाऽर्शसां गाढ़शकृतां रुजं हन्ति।

चक्रपाणिः—रक्तशाल्यादयोऽन्नपाने विहिताः॥ ४४। ४५॥

प्रागुक्तान् यमके भृष्टान् सक्तुभिश्चावचूर्णितान ।
करञ्जपल्लवान् दद्याद् वातवर्चोऽनुलोमनान् ॥
मदिरां वा सलवणां सीधुं सौवीरकं तथा ।
सगुड़ामभयां वाथ प्राशयेत् पौर्व्वभक्तिकीम् ॥ ४६ ॥
पिप्पलीनागरक्षार-जीरकाजाजिधान्यकैः ।
फाणितेन च संयोज्य फलाम्लं साधयेद् घृतम् ॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
शृङ्गवेरयवक्षारौ तैः सिद्धं पाययेद् घृतम् ॥
चव्यचित्रकसिद्धं वा गुड़क्षारसमन्वितम् ।
पिप्पलीमूलसिद्धं वा गुड़क्षारसमन्वितम् ॥
पिप्पलीपिप्पलीमूलं दधिनागरधान्यकैः ।
सिद्धं सर्पिर्विधातव्यं वातवर्चोविबन्धनुत् ॥ ४७ ॥

प्रागुक्तानित्यादि। दुःस्पर्शकादीन सर्व्वानंककान् वा यमके तैलघृते भृष्टान वातवर्च्चोऽनुलोमनान् दद्यात्। करञ्जपल्लवांश्च सक्तुभिरवचूर्णितान् यमके भृष्टान दद्यात्। मदिरामित्यादि। सलवणां मदिरामित्येकयोगः। सीधुं तथा सलवणं सौवीरञ्च तथा सलवणम्। अथवा पौर्व्वभक्तिकीं सगुड़ामभयां प्राशयेत् ॥ ४६ ॥

<u>गङ्गाधरः</u>—पिप्पलीत्यादि। जीरकं क्षेत्रजीरमजाजी कृष्णजीरम्। फलाम्लं बदरादिफलम्। क्वाथयित्वा घृताद् द्विगुणं फाणितमर्द्धावर्त्तितमिक्षुरसं द्विगुणं दत्त्वा। पिप्पल्यादिधान्यान्तैः कल्कैर्घृतं साधयेत्। फलाम्लघृतम्।०। पिप्पलीत्यादि-शृङ्गवेरयवक्षारान्तैः कल्कैश्चतुर्गुणतोयसिद्धं घृतं पाययेत्। पिप्पल्याद्यं घृतम्।०। चव्येत्यादि। चव्यचित्रककल्कसिद्ध घृतं घृतात् पादिकगुड़यवक्षारसमन्वितं वा पाययेत्। अथवा पिप्पलीमूलकल्क-

<u>चक्रपाणिः</u>—यमानीं नागरमित्यादौ यमान्यादीनि समानि तक्रेण पेयानि। लवणं तावद् यावल्लवणरसता भवति ॥ ४६ ॥

<u>चक्रपाणिः</u>—पिप्पलीनागरेत्यादौ अपक्वमेव केचिद्घृतमिच्छन्ति। गुड़क्षारसमन्वितमित्यत्र घृते सिद्धे गुड़ादीनां प्रक्षेप्यत्वं ज्ञेयम्। पिप्पलीपिप्पलीमूलमित्यादौ दधि द्रवं शेषाणां कल्कत्वात् ॥४७॥

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यमानीं पिप्पलीमूलमुभे च विड़सैन्धवे॥
चित्रकं विल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवंक्षणशूलञ्च घृतमेतद् व्यपोहति॥ ४८॥

चव्याद्यघृतम्।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यमानिका॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचयेत्।
चतुर्गुणेन दध्ना च तद् घृतं कफवातनुत्॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्त्तिमानाहं घृतमेतद् व्यपोहति॥ ४९॥

नागरादिघृतम्।

पिप्पलीनागरं पाठां श्वदंष्ट्राञ्च पृथक् पृथक्।
भागांस्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत्॥

सिद्धं पादिकगुड़यवक्षारसमन्वितं घृतं पाययेत्। पिप्पलीत्यादि। अत्र दधि चतुर्गुणं शेषैः कल्कैः॥ ४७॥

गङ्गाधरः—चव्यमित्यादि। अत्र दधि चतुर्गुणम्। जातं सुजातमिति बोध्यम्। चव्याद्यं घृतम्॥ ४८॥

गङ्गाधरः—नागरमित्यादि। नागरादिभिः कल्कैः चतुर्गुणेन दध्ना तत्साहचर्य्याच्चतुर्गुणे चाङ्गेरीस्वरसे सर्पिर्विपाचयेत्। नागरादिघृतम्॥ ४९॥

गङ्गाधरः—पिप्पलीत्यादि। पिप्पल्यादीनि चत्वारि, एषां पृथक् पृथक्

चक्रपाणिः—नागरमित्यादिके घृते चाङ्गेरीस्वरसस्यापि चातुर्गुण्येन; दध्ना चेति चकाराच्चातुर्गुण्यम्॥ ४८। ४९॥

गण्डीरं पिप्पलीमूलं व्योषं चव्यं सचित्रकम् ।
पिष्ट्वा कषाये विनयेत् पूते द्विपलिकं पृथक् ॥
पलानि सर्पिषस्तस्मिंश्चत्वारिंशत् प्रयोजयेत् ।
चाङ्गेरीस्वरसं तुल्यं सर्पिषो दधि षड् गुणम् ॥
मृद्वग्निना साधयेत् तत् सिद्धं सर्पिर्निधापयेत् ।
तदाहारे प्रयोक्तव्यं पाने प्रायोगिके विधौ ॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम् ।
शोथप्लीहोदरानाह-मूत्रकृच्छ्रज्वरापहम् ॥
कासहिक्कारुचिश्वास-सूदनं पार्श्वशूलनुत् ।
बलपुष्टिकरं वर्ण्यमग्निसन्दीपनं परम् ॥ ५० ॥

पिप्पल्याद्यघृतम् ।

सगुड़ां पिप्पलीयुक्तामभयां घृतभर्ज्जिताम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकीम् ॥
विड़्वातकफपित्तानामानुलोम्येन निर्म्मले ।
गुदेऽर्शांसि प्रशाम्यन्ति पावकश्चाभिवर्द्धते ॥ ५१ ॥

त्रिपलिकान् भागानष्टगुणे जले पक्त्वा पादशेषं कषायमुपकल्पयेत् । तस्मिन् कषाये पूते गण्डीरादीनां पृथग् द्विपलिकान् भागान् कल्कान् विनयेत् । अत्र सर्पिषश्चत्वारिंशत् पलानि चाङ्गेरीस्वरसं सर्पिषस्तुल्यं चत्वारिंशत् पलानि प्रयोजयेत् । दधि च सर्पिषः षड़्गुणं प्रयोजयेत् । तत् सर्व्वं मृद्वग्निना साधयेत् । सिद्धं तत् सर्पिर्निधापयेत् । तत् सर्पिराहारेऽन्नादिषु प्रयोक्तव्यं प्रायौगिके पाने नित्यपानविधौ च प्रयोक्तव्यमिति । शेषमाशीः । घृतम् ॥ ५० ॥

<u>गङ्गाधरः</u>—सगुड़ामित्यादि । घृतभर्ज्जितामभयां गुड़पिप्पलीभ्यां युक्तया युक्तां त्रिवृद्दन्तीचूर्णयुतां वानुलोमिकीं भक्षयेत् । विड़्वातेत्यादि तदाशीः ॥५१॥

<u>चक्रपाणिः</u>—पिप्पलीनागरमित्यादौ क्वाथस्यानुक्तमानत्वात् स्नेहसमत्वम् । तेन द्वादशपलेऽपि क्वाथ्यद्रव्ये त्रिप्रस्थं पानीयं दत्वा चत्वारिंशत्पलानि स्थाप्यानि । गण्डीरमित्यादिना कल्कः ॥ ५० ॥

वर्हितित्तिरिलावानां रसानम्लान् सुसंस्कृतान्।
दक्षाणां वर्त्तकानाञ्च दद्याद् विड़्वातसंग्रहे ॥ ५२ ॥
त्रिवृद्दन्तीपलाशानां चाङ्गेर्य्याश्चित्रकस्य च।
यमके भर्ज्जितं दद्याच्छाकं दधिसमन्वितम् ॥
उपोदिकां तण्डुलीयं वीरां वास्तूकपल्लवान्।
सुवर्च्चलां सलोणीकां यवशाकमवल्गुजम् ॥
अम्लिकां समहापत्रीं काकमाचीं रुहां तथा।
जीवन्तीशटिशाकञ्च शाकं गृञ्जनकस्य च ॥
दधिदाड़िमसिद्धानि यमकैर्भर्ज्जितानि च।
धान्यनागरयुक्तानि शाकान्येतानि दापयेत् ॥ ५३ ॥
गोधालावकमार्ज्जार-श्वाविदुष्ट्रगवामपि।
कूर्म्मशल्लकयोश्चैव साधयेच्छाकवद् रसान् ॥ ५४ ॥

गङ्गाधरः—वर्हीत्यादि। वर्हिप्रभृतीनां मांसरसान् वदरामलकादिभिरम्लैरम्लान् कृत्वा घृतादिना सुसंस्कृतान् विड़्वातसंग्रहे दद्यात् ॥ ५२ ॥

गङ्गाधरः—त्रिवृदित्यादि। त्रिवृद्दन्तीपलाशानां शाकं दधिसमन्वितं यमके घृततैले भर्ज्जितं दद्यात्। एवं चाङ्गेर्य्याः शाकं चित्रकस्य शाकञ्च दद्यात् अर्शसाय। अपराणि शाकान्याह—उपोदिकामित्यादि। उपोदिकादीनां शाकानि प्रत्येकं दधिदाड़िमसिद्धानि धान्यनागरचूर्णयुक्तानि यमके घृततैले भर्ज्जितानि दापयेत्। महापत्री वृहज्जम्बुस्तस्याः पत्रम् ॥ ५३ ॥

गङ्गाधरः—गोधेत्यादि। यथोपोदिकादीनां शाकानि साधयेत् तथा गोधादीनां मांसस्य रसान् साधयेत्। दधिदाड़िमसिद्धान् धान्यनागरचूर्णयुक्तान् यमके भर्ज्जितान् कृत्वा दापयेत्। श्वाविच्छल्लकी च क्षुद्रवृहद्भेदेन द्विधा शल्लकी ॥ ५४ ॥

चक्रपाणिः—आनुलोमिकानि शाकान्याह—( चिवुपर्णी नाड़ीपर्णी आलम्बरं शाकम् )। सुवर्च्चला सूर्य्यावर्त्ता। महापत्रः श्योनाकः। रोहापत्रमुद्भ्रशाकम्। दधिदाड़िमादिसंस्कारम् ॥ ५१—५४ ॥

रक्तशाल्योदनं दद्याद् रसैस्तैर्वातशान्तये ।
ज्ञात्वा वातोत्तरं रुक्षं मन्दाग्निं गुदजातुरम् ॥ ५५ ॥
मदिरां शर्कराजातां * सीधुं तक्रं तुषोदकम् ।
अरिष्टं दधिमण्डं वा शृतं वा शिशिरं जलम् ॥
कण्टकार्य्या शृतं वापि शृतं नागरधान्यकैः ।
अनुपानं भिषग् दद्याद् वातवर्च्चोऽनुलोमनम् ॥ ५६ ॥
उदावर्त्तपरीता ये ये चात्यर्थं विरुक्षिताः ।
विलोमवाताः शूलार्त्तास्तेष्विष्टमनुवासनम् ॥ ५७ ॥
पिप्पलीं मधुकं विल्वं शताह्वां मदनं वचाम् ।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ।
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥

गङ्गाधरः—रक्तेत्यादि। एवं रसान् साधयित्वा तै रसैः रक्तशाल्योदनम् अर्शसाय वातशान्तये दद्यात्। तद्भोजनादनुपानं भिषक् गुदजातुरं वातोत्तरं रुक्षं मन्दाग्निं ज्ञात्वा शर्कराजातमदिरादिकं वातवर्च्चोऽनुलोमनं दद्यात्। शर्कराजातां मदिरां सीधुं दधिमण्डं दधिमस्तु। शृतं पक्वं शिशिरं शीतीकृतं जलं कण्टकार्य्या शृतं वा जलं नागरधान्यकैः शृतं वा जलम् ॥ ५५। ५६ ॥

गङ्गाधरः—उदावर्त्तेत्यादि। येऽर्शसा उदावर्त्तपरीता ये चार्शसा विरुक्षिता विलोमवाता अननुलोमवाताः शूलार्त्ताश्च तेष्वर्शसेष्वनुवासनमिष्टम् ॥ ५७ ॥

गङ्गाधरः—येनानुवासनमिष्टं तदाह—पिप्पलीमित्यादि। पिप्पल्यादीनि एकादश द्रव्याणि तैलात् पादिकानि पिष्ट्वा कल्कीकृत्य द्विगुणक्षीरसंयुतं द्विगुणजलञ्च तैलं विपक्तव्यम्। चतुर्गुणद्रवव्यतिरिक्तस्नेहपाकाभावात्

चक्रपाणिः—शार्करमिति शर्कराकृतम् अरिष्टं वक्ष्यमाणम् ॥ ५५—५७ ॥

* मदिरां शार्करं जातम् इति चक्रस्वीकृतः पाठः ।

गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्।
कट्यूरुपृष्ठदौर्ब्बल्यमानाहं वङ्क्षणाश्रयम्॥
पिच्छास्रावं गुदे शोफं वातवर्च्चोविनिग्रहम्।
उत्थानं बहुशो यच्च जयेत् तच्चानुवासनात्॥ ५८॥
आनुवासनिकैः पिष्टैः सुखोष्णैः स्नेहसंयुतैः।
दार्व्व्यन्तैरौषधैर्देह्याः स्तब्धाः शूना गुदेरुहाः॥
तैर्दिग्धाः प्रस्रवन्त्याशु श्लेष्मपिच्छां सशोणिताम्।
कण्डूः स्तम्भः सरुक् शोफः स्रुतानां विनिवर्त्तते॥ ५९॥
निरूहं वा प्रयुञ्जीत सक्षीरं दाशमूलिकम्।
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः॥ ६०॥

अन्यत्र वाचनिकात्। उत्थानं प्रवाहिकावेगेण यच्च पुनःपुनर्वर्च्चःप्रमोचनम्। शेषमाशीः॥ ५८॥

गङ्गाधरः—अपरानुवासनमाह—आनुवासनिकैरित्यादि। आनुवासनिकैः पिष्टैः स्नेहघृतादिसंयुतैः सुखोष्णैरेतैः पूर्व्वोक्तैः पिप्पलीमधुकादिभिः स्नेहयुक्तैः सुखोष्णैः (दर्व्व्यां दण्डविशेषेण) गुदेरुहा गुदजाः शूनाः स्तब्धाश्च देह्याः प्रलेप्याः। तैरौषधैर्दिग्धाः ते गुदेरुहाः सशोणितां श्लेष्मपिच्छामाशु प्रस्रवन्ति। ततः स्रुतानामर्शसां कण्ड्वादि विनिवर्त्तते॥ ५९॥

गङ्गाधरः—निरूहं वेत्यादि। दाशमूलिकं क्वाथं युक्त्या सक्षीरं गोमूत्रघृतादिस्नेहसैन्धवयुक्तं मदनफलादिभिः कल्कैर्युक्तं वस्त्रपूतं यथाविधि निरूहं वा प्रयुञ्जीत॥ ६०॥

चक्रपाणिः—पिप्पल्याद्य तैले केचित् तन्त्रान्तरदर्शनात् तोयमपि चतुर्गुणं वदन्ति। तच्च तन्त्रान्तरोक्तयोगान्तरमेव पश्यामः॥ ५८॥

चक्रपाणिः—आनुवासनिकैरिति अनुवासनतैलसाधनार्थं युक्तैः पिप्पल्यादिभिः। पञ्च विरेचनशताश्रितीयोक्तानुवासनोपदर्शककषायग्रहणप्रतिषेधार्थं दार्व्वन्तैरिति विशेषणभूतानि तानि दार्व्वन्तेनोक्तान्येव गृह्यन्ते॥ ५९॥

चक्रपाणिः—दाशमूलिकमिति दशमूलकषाययुतम्। फलादिभिरिति मदनफलादिभिर्वयःस्थापनयौगिकैः॥ ६०॥

हरीतकीनां प्रस्थार्द्धं प्रस्थमामलकस्य च ।
स्यात् कपित्थाद्द दशपलं पलार्द्धेनेन्द्रवारुणी * ॥
विडङ्गं पिप्पली लोध्रं मरिचं सैलबालुकम् ।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत् ॥
द्रोणशेषे रसे तस्मिन् पूते शीते समावपेत् ।
गुड़स्य द्विशतं तिष्ठेत् तत् पक्षं घृतभाजने ॥
पक्षादूर्द्ध्वं भवेत् पेया ततो मात्रा यथाबलम् ॥
अस्याभ्यासादरिष्टस्य गुदजा यान्ति संक्षयम् ॥
ग्रहणीपाण्डुहृद्रोग-प्लीहगुल्मोदरापहः ।
कुष्ठशोथारुचिहरो बलवर्णाग्निवर्द्धनः ॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः ।
क्रिमिग्रन्थ्यर्ब्बुदव्यङ्ग-राजयक्ष्मज्वरान्तकृत् ॥ ६१ ॥

अभयारिष्टः ।

गङ्गाधरः—हरीतकीनामित्यादि । अस्थिहीनानां हरीतकीनां प्रस्थार्द्धम् अष्टपलमामलकस्य च प्रस्थं षोड़शपलं कपित्थशस्याद् दशपलम् । इन्द्रवारुणी पलार्द्धेन युक्ता । विडङ्गादीनां प्रत्येकं द्विपलांशमेतत् सर्व्वं जलस्य चतुर्द्रोणे षट्पञ्चाशदुत्तरद्विशतशरावे विपाचयेत् । तस्मिन् रसे द्रोणशेषे चतुःषष्टि-शरावशेषे पूते शीते सति तत्र पुरातनगुड़स्य द्विशतं पलं पञ्चविंशतिशरावं विनिक्षिपेत् । तत् सर्व्वं घृतभाजने पक्षं तिष्ठेद्दृढ़ः स्थापयेत् । पक्षादूर्द्ध्वं ततो यथाबलं मात्रा पेया भवेत् । अस्यारिष्टस्याभ्यासाद् गुदजाः संक्षयं यान्ति । सिद्धोऽयमभयारिष्टो ग्रहण्याद्यापहः कुष्ठादिहरो बलवर्णवर्द्धनः कामलादिनाशनः क्रिम्याद्यन्तकृत् । अभयारिष्टः ॥ ६१ ॥

चक्रपाणिः—हरीतक्यादिना अभयारिष्टादयः पञ्चारिष्टा उच्यन्ते ॥ ६१ ॥

---

* "पलार्द्धेनेन्द्रवारुणी" इत्यत्र "ततोऽर्द्धा चेन्द्रवारुणी" इति चक्रधृतः पाठः । वाग्भटस्तु 'प्रस्थं धात्र्या दशपलं कपित्थानां ततोऽर्द्धतः । विशालाम्—" इत्याह । अयन्तु पाठः वृन्दसम्मतः ।

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत्॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत्।
रसे चतुर्थशेषे तु पूते शीते समावपेत्॥
तुलां गुड़स्य तत् तिष्ठेन्मासार्द्धं घृतभाजने।
तन्मात्रया पिबेन्नित्यमर्शोभ्योऽपि प्रमुच्यते॥
ग्रहणीपाण्डुरोगघ्नं वातवर्च्चोऽनुलोमनम्।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिमं विदुः॥ ६२॥

दन्त्यरिष्टः।

हरीतकीफलप्रस्थं प्रस्थमामलकस्य च।
विशालाया दधित्थस्य पाठाचित्रकमूलयोः॥
द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपाम्।
पादावशेषे पूते च रसे तस्मिन् प्रदापयेत्॥

गङ्गाधरः—दन्तीत्यादि। दन्तीमूलचित्रकमूलदशमूलानां प्रत्येकं पलांशान् भागानापोथ्य कुट्टयित्वा जलद्रोणे विपाचयेत्। तत्र पाककाले त्रिफलायाः प्रत्येकं दलानां त्रिपलं दापयेत्। पाके कृते चतुर्थांशशेषे रसे पूते शीते च पुराणगुड़स्य तुलां प्रदापयेत्। घृतभाजने मासार्द्धं पक्ष तत् तिष्ठेद्वैद्यः स्थापयेत्। मात्रया तन्नित्यं पिबेत्। शेषमाशीः। दन्त्यरिष्टः॥ ६२॥

गङ्गाधरः—हरीतकीफलेत्यादि। हरीतकीफलस्यास्थिरहितस्य प्रस्थम् आमलकस्य फलस्य च प्रस्थं विशालादीनां प्रत्येकं द्वे द्वे पले समापोथ्य कुट्टयित्वा जलस्य द्विद्रोणे साधयेत् पादशेषे द्वात्रिंशच्छरावे शेषे पूते शीते

चक्रपाणिः—त्रिफलाया इति मिलितत्रिफलाया एव पलत्रयम्, निर्देशस्य मानप्रधानत्वात्। (ता एव या) ॥ ६२॥

चक्रपाणिः—हरीतकीत्यादौ फलशब्देन निरस्थिहरीतकीं ग्राहयति, किन्तु जतूकर्णवचनमाय

गुड़स्यैकां तुलां वैद्यस्तत् स्थाप्यं घृतभाजने ।
पक्षस्थितं पिबेद् पक्वं ग्रहण्यर्शोविकारनुत् ॥
हृत्पाण्डुरोगं प्लीहानं कामलां विषमज्वरम् ।
वर्च्चोमूत्रानिलकृतान् विबन्धानग्निमार्द्दवम् ॥
कासं गुल्ममुदावर्त्तं फलारिष्टो व्यपोहति ।
अग्निसन्दीपनो ह्येष कृष्णात्रेयेण भाषितः ॥ ६३ ॥

फलारिष्टः ।

दुरालभायाः प्रस्थन्तु वासायाश्चित्रकस्य च ।
अभयामलकानाञ्च पाठाया नागरस्य च ॥
दन्त्याश्च द्विपलान् भागान् जलद्रोणे विपाचयेत् ।
पादावशेषे शीते च पूते तस्मिन् सिताशतम् ॥
दत्त्वा कुम्भे दृढ़े स्थाप्यं मासार्द्धं घृतभाविते ।
प्रलिप्ते पिप्पलीचव्य-प्रियङ्गुमधुसर्पिषा ॥
तस्य मात्रां पिबेत् काले शार्करस्य यथाबलम् ।
अर्शांसि ग्रहणीदोषमुदावर्त्तमरोचकम् ॥
शकृन्मूत्रानिलोद्गार-विबन्धानग्निमार्द्दवम् ।
हृद्रोगं पाण्डुरोगञ्च सर्व्वमेतेन साधयेत् ॥ ६४ ॥

शार्करारिष्टः ।

पुराणगुड़स्य तुलां वैद्यः प्रदापयेत् । घृतभाजने पक्षं स्थितं कालपक्वं पिबेत् । शेषमाशीः । फलारिष्टः ॥ ६३ ॥

गङ्गाधरः—दुरालभेत्यादि । दुरालभावासाचित्रकाणां प्रत्येकं प्रस्थम्, अभयादीनां दन्त्यन्तानां द्विपलान् भागान् नीत्वा जलद्रोणे विपाचयेत् । पादशेषे शीते वस्त्रेण पूते च तस्मिन् क्काथे सिताशतं शर्करापलशतं दत्त्वा घृतभाविते पिप्पल्यादिना प्रलिप्ते दृढ़े कुम्भे मासार्द्धं तत् स्थाप्यम् । तस्य

अत्रार्द्धमुच्यते ; तेन हरीतकीप्रस्थार्द्धम् । अयं हि योगो द्विगुणमानेन यथा फलद्विप्रस्थः क्काथो द्विगुणा आमलककपित्थपाठन्द्राः सहचिलका गुड़स्य च शतत्रयम्" तत्र पठितः ॥६३ । ६४॥

नवस्यामलकस्यैकां कुर्य्याज्जर्जरितां तुलाम्।
* कुडवांशाश्च पिप्पल्यो विडङ्गं मरिचं तथा ॥
यवासः पिप्पलीमूलं क्रमुकं चव्यचित्रकौ।
मञ्जिष्ठा नालुकं लोध्रं पलिकान्युपकल्पयेत् ॥
कुष्ठं दारुहरिद्रा च सुराह्वः शारिवाद्वयम्।
मुस्तमिन्द्राह्वयञ्चैव कुर्य्यादर्द्धपलोन्मितान् ॥
चत्वारि नागपुष्पस्य पलान्यभिनवस्य च।
द्रोणाभ्याममम्भसो द्वाभ्यां साधयित्वावतारयेत् ॥
द्रोणावशेषे पूते च शीते तस्मिन् प्रदापयेत्।
मृद्वीकाद्व्याढकरसं शीतं निर्य्यूहसम्मितम् ॥
शर्करायाश्च भिन्नाया दद्याद् द्विगुणितां तुलाम्।
कुसुमस्य रसस्यैकमर्द्धप्रस्थं नवस्य च ॥
शार्करस्यारिष्टस्य मात्रां यथाबलं काले पिबेत्। अर्शांसीत्यादिनाशी। शार्करारिष्टः ॥ ६४ ॥

गङ्गाधरः—नवस्येत्यादि। नवस्य परिणतार्द्रस्यामलकस्य तुलामेकां कुट्टयित्वास्थीनि त्यक्त्वा जर्ज्जरितां कुर्य्यात्। पिप्पल्यः कुडवांशाः। विडङ्गादीनां लोध्रान्तानां पलिका भागाः। कुष्ठादीनामर्द्धपलभागाः। अभिनवनागकेशरपुष्पस्य चत्वारि पलानि। सर्व्वमिदं कुट्टयित्वाम्भसो द्वाभ्यां द्रोणाभ्यां साधयित्वा द्रोणावशेषेऽवतारयेत्। तस्मिन् क्वाथे पूते शीते च मृद्वीकाया द्व्याढकस्य षोड़शशरावस्य रसं क्वाथं द्वाभ्यां जलद्रोणाभ्यां मृद्वीकाषोड़शशरावं पक्त्वार्द्धशेषं पूर्व्वनिर्य्यूहसम्मितं द्रोणमितं शीतं प्रदापयेत्। शर्करायाश्च भिन्नायास्तस्मिन् क्वाथे गोलिताया द्विगुणितां तुलां तुलाद्वयं प्रदापयेत्। नवस्य कुसुमरसस्य मधुन एकं प्रस्थम्

चक्रपाणिः—क्रमुकं पूगः पट्टिकालोध्रं वा। सुराह्वा गोरक्षकर्कटिका। अत्र यद्यपि आमलकादिद्रव्यद्व्याढकमानं भवति तत्र च सामान्यपरिभाषयैव द्विद्रोणजलदानम् अर्द्धद्रोणावस्थानञ्च लभ्यते, तथापि स्पष्टार्थं जलक्वाथाभिधानं ज्ञेयम्। मृद्वीकाद्व्याढकमिति वचनेन

* कुडवांशं विडङ्गानि पिप्पलीमरिचानि च। पाठां मूलञ्च पिप्पल्याः क्रमुकं चव्यचित्रकौ। ……सुराह्वां शारिवाद्वयम्। इन्द्राह्वं भद्रमुस्तञ्च इति चक्रसम्मतः पाठः।

त्वगेलाप्लवपत्राम्बु-सेव्यक्रमुककेशरान्।
चूर्णयित्वा च मतिमान् कार्षिकानत्र चावपेत्॥
तत् सर्व्वं स्थापयेत् पक्षं सुचौक्षे घृतभाजने।
प्रलिप्ते सर्पिषा किञ्चिच्छर्करागुरुधूपिते॥
पक्षादूर्द्ध्वमरिष्टोऽयं कनको नाम विश्रुतः।
पेयः स्वादुरसो हृद्यः प्रयोगाद्भक्तरोचनः॥
अर्शांसि ग्रहणीदोषमानाहमुदरं ज्वरम्।
हृत्पाण्डुरोगं श्वयथुं गुल्मं वर्च्चोविनिग्रहम्॥
कासं श्लेष्मामयांश्चोग्रान् सर्व्वानेवापकर्षति।
बलीपलितखालित्यं दोषजन्तु व्यपोहति॥ ६५॥

कनकारिष्टः।

पत्रभङ्गोदकैः शौचं कुर्य्यादुष्णेन वाम्भसा।
इति शुष्कार्शसां सिद्धमेतदुक्तं चिकित्सितम्॥ ६६॥

अर्द्धप्रस्थञ्चेति सार्द्धप्रस्थं पट्शरावं प्रदापयेत्। त्वगादीनां प्रत्येकं कार्षिकांश्चूर्णयित्वात्र चावपेत् क्षिपेत्। तत्सर्व्वमेकीकृत्य सर्पिषा प्रलिप्ते शर्करागुरुभ्यां किञ्चिद्धूपिते घृतभाजने सुचौक्षे पक्षं स्थापयेत्। शेषं स्फुटार्थम्। बल्यादिकं दोषजं व्यपोहति, न तु वार्द्धक्यकालजमिति। कनकारिष्टः॥ ६५॥

गङ्गाधरः—पत्रेत्यादि। शुष्कार्शसो जनः शौचं मलोत्सर्गानन्तरं जलशौचं कर्म्म पत्रभङ्गोदकैरर्शोघ्नद्रव्यकृतद्रवमिश्रितोदकैः कुर्य्यात् उष्णेनाम्भसा वा कुर्य्यात्। इत्येतच्छुष्कार्शसां सिद्धं चिकित्सितमुक्तम्॥ ६६॥

द्रोणद्वयं जलं दत्त्वा क्वाथसमं दर्शयति। अन्ये तु द्राक्षास्वरसतुल्यद्रवा इति व्याख्यानं कृतवन्तः। उक्तं हि जतूकर्णे—धात्रीतुला कौड़विकं पिप्पली मरिचं कृमिघ्नम् अजपुष्पं द्विनिशा सुरदारु घनकुष्ठं पलिकम्। पलिकं पाठातिल्वकग्रन्थिकवालुकक्रमुकं विल्वं साग्नीकं पाक्यद्राक्षाद्वयञ्च पृथक् पृथक् क्वाथौ विमिश्रितौ। द्वौ सितातुले द्वे मधु द्विकुडवञ्च इत्यादि। अत्रापि च सामान्यपरिभाषा प्रकारोक्तमानसमाना एव। भिक्षाया इति चूर्णीकृतायाः। कुसुमस्य रसो मधु॥ ६५। ६६॥

चिकित्सितमतः सिद्धं स्राविणां संप्रचक्ष्यते।
तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च ॥ ६७ ॥
विट् श्यावं कठिनं रुक्षञ्चाधोवायुर्न वर्त्तते।
तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम् ॥
कट्यूरुगुदशूलञ्च दौर्ब्बल्यं यदि चाधिकम्।
तत्रानुबन्धो वातस्य हेतुर्यदि च रुक्षणम् ॥ ६८ ॥
शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम्।
यद्यर्शसां घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम् ॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम्।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ६९ ॥
शीतं स्निग्धं हितं वाते शीतं रुक्षं कफानुगे।
चिकित्सितमिदं तस्मात् संप्रधार्य्य प्रयोजयेत् ॥ ७० ॥

गङ्गाधरः—चिकित्सितमित्यादि। अतः परं स्राविणां रक्तस्राविणामर्शसां सिद्धं चिकित्सितं प्रचक्ष्यते। तत्र स्राविष्वर्शःसु द्विविधोऽनुबन्धः। श्लेष्मणोऽनुबन्धो वातस्यानुबन्धश्च। पित्तस्यारम्भकत्वादनुबन्ध्यत्वं न त्वनुबन्धत्वमिति ॥ ६७ ॥

गङ्गाधरः—तयोर्लक्षणमाह—विट् श्यावमित्यादि। विड़िति विष्शब्दः स्त्रीनपुंसकयोः। अर्शसामसृक् च तनु च अरुणवर्णं फेनिलञ्च ॥ ६८ ॥

गङ्गाधरः—श्लेष्मानुबन्धलक्षणमाह—शिथिलमित्यादि। शीतलमित्यन्तं विड़्विशेषणम्। पिच्छिलान्तमसृग्विशेषणम्। सपिच्छादिद्वयं गुदविशेषणम् ॥ ६९ ॥

गङ्गाधरः—तत्र चिकित्सासूत्रमाह—शीतमित्यादि। वाते वातानुबन्धे स्राविण्यर्शसि शीतं स्निग्धञ्च वस्तु हितम्। पित्तरक्ताधिक्याच्छीतं वातानुबन्धात् स्निग्धं हितमिति मिलितं शीतस्निग्धं हितं न तु पृथक्। एवं कफानुगे शीतं रुक्षं हितम्। वाते कफे च शीतं विरोध्यपि पित्त-

चक्रपाणिः—संप्रति अर्शसां वातानुबन्धं लक्षणञ्च दर्शयित्वा भिन्नां चिकित्सामाह—स्राविणामित्यादि। अत्र च तन्त्रे पित्तजस्यैव रक्तजान्यर्शांसि दुष्टस्रावयुक्तानि ज्ञेयानीति ॥ ६७ ॥

चक्रपाणिः—विट् श्यावमिति निर्देशात् विट्शब्दो नपुंसकलिङ्गोऽप्यस्तीत्युन्नीयते ॥ ६८—७० ॥

पित्तश्लेष्माधिकं मत्वा शोधनेनोपपादयेत् ।
स्रवणञ्चाप्युपेक्षेत लङ्घनैर्वा समाचरेत् ॥ ७१ ॥
प्रवृत्तमादावर्शोभ्यो यो निगृह्णात्यबुद्धिमान् ।
शोणितं दोषमलिनं तद्द रोगान् जनयेद्द बहून् ॥
रक्तपित्तं ज्वरं तृष्णामग्निसादमरोचकम् ।
कामलां श्वयथुं शूलं गुदवङ्क्षणसंश्रयम् ॥
कण्डूरुःकोठपिड़काः कुष्ठं पाण्ड्वाह्वयं गदम् ।
वातमूत्रपुरीषाणां विबन्धं शिरसो रुजम् ॥
स्तैमित्यं गुरुगात्रत्वं तथान्यान् रक्तजान् गदान् ।
तस्मात् स्रुते दुष्टरक्ते रक्तसंग्रहणं हितम् ॥ ७२ ॥

रक्ताधिक्यात् तद्धितत्वादविरोधि । तस्मात् तद्धितत्वादिदं चिकित्सितं सम्प्रधार्य्य प्रयोजयेत् ॥ ७० ॥

गङ्गाधरः—पित्तश्लेष्मेत्यादि । अर्शः पित्तश्लेष्माधिकं मत्वा शोधनेन वमनविरेचनेनोपपादयेत् । स्रवणं वा रक्तस्य उपेक्षेत न संगृह्णीयात् । लङ्घनैर्वा यथार्हं समाचरेत् ॥ ७१ ॥

गङ्गाधरः—आदौ रक्तस्य संग्रहे दोषमाह—प्रवृत्तमित्यादि । अर्शोभ्यः प्रवृत्तं दोषमलिनं शोणितं यस्त्वबुद्धिमान् वैद्य आदौ निगृह्णाति, तन्निगृहीतं दोषमलिनं शोणितं बहून् रोगान् जनयेत्; तस्मात् स्रवणमुपेक्षेत । यान् रोगान् जनयेत् तानाह—रक्तपित्तमित्यादि । गुदवङ्क्षणसंश्रयं शूलं गुदे वङ्क्षणे च शूलम् । अरुव्रणः । पाण्ड्वाह्वयं गदं पाण्डुरोगम् । तथान्यान् रक्तजान् गदान् रक्तप्रदोषोक्तान् । तस्मादादौ स्रवद्रक्तनिग्रहे रक्तपित्तादिरोगजननादादौ रक्तस्रवणोपेक्षया दुष्टरक्ते स्रुते सति रक्तसंग्रहणं हितम् ॥ ७२ ॥

चक्रपाणिः—मलिनमित्यत्यर्थदुष्टम् ॥ ७१ । ७२ ॥

हेतुलक्षणकालज्ञो बलशोणितकालवित्।
कालं तावदुपेक्षेत यावन्नात्ययमाप्नुयात्॥ ७३॥
अग्निसन्दीपनार्थञ्च रक्तसंग्रहणाय च।
दोषाणां पाचनार्थञ्च परं तिक्तैरुपाचरेत्॥ ७४॥
यत् तु प्रक्षीणदोषस्य रक्तं वातोल्वणस्य च।
वर्त्तते स्नेहसाध्यं तत् पानाभ्यङ्गानुवासनैः॥ ७५॥
यत् तु पित्तोल्वणं रक्तं घर्म्मकाले प्रवर्त्तते।
स्तम्भनीयं तदेकान्तान्न चेद्‌ वातकफानुगम्॥ ७६॥

गङ्गाधरः—यदि दुष्टरक्तस्रवणमुपेक्षेत ततश्च स्रुते दुष्टरक्ते कस्य संग्रहणं कुर्य्यादित्यत आह—हेत्वित्यादि। यो वैद्यो हेत्वादिज्ञः बलादिवित् स तावत्कालं रक्तमुपेक्षेत यावत्कालं रक्तस्रवेण पुमानत्ययं नाप्नुयात्। निःशेषेण दुष्टरक्तस्रवणे यद्यत्ययः स्यात् तदा प्रागत्ययात् रक्तसंग्रहण हितमिति॥ ७३॥

गङ्गाधरः—स्रुते दुष्टे रक्ते प्रागत्ययात् केन रक्तं संगृह्णीयादित्यत आह—अग्नीत्यादि। स्रुतदुष्टरक्तशेषरक्तसंग्रहणार्थं परमुत्कृष्टं यथा स्यात् तथा तिक्तैर्द्रव्यैरुपाचरेत्॥ ७४॥

गङ्गाधरः—तत्र विशेषमाह—यत्त्वित्यादि। प्रक्षीणदोषस्य वातोल्वणस्य च यत् तु रक्तं प्रवर्त्तते, तद्रक्तं स्नेहसाध्यं स्नेहस्य पानाभ्यङ्गानुवासनैः कर्म्मभिः साध्यम्॥ ७५॥

गङ्गाधरः—यत् तु इत्यादि। यत् तु पित्तोल्वणमर्शसो रक्तं घर्म्मकाले ग्रीष्मकाले प्रवर्त्तते, तच्चेद् वातकफानुगं न स्यात् तदा खल्वेकान्तात् तद्रक्तं स्तम्भनीयमत्ययभयात्॥ ७६॥

चक्रपाणिः—हेत्वादिविशेषणेन स्रावस्योपेक्षा कार्य्येति सूचयति॥ ७३। ७४॥

चक्रपाणिः—वर्त्तते इति प्रवर्त्तते चेत्, वातेऽनुबले स्नेहनं कफेऽनुबले तु उपेक्षणं वा लङ्घनादि कार्य्यमिति वा भावः॥ ७५। ७६॥

कुटजत्वङ्निर्य्यूहः सनागरः स्निग्धो रक्तसंग्रहणः ।
त्वग् दाड़िमस्य तद्वत् सनागरश्चन्दनरसश्च ॥
चन्दनकिराततिक्तधन्वयवासाः सनागराः कथिताः ।
रक्तार्शसां प्रशमना दार्व्वीत्वगुशीरनिम्बाश्च ॥
सातिविषा कुटजत्वक्फलश्च रसाञ्जनं मधुयुतानि ।
रक्तापहानि दद्यात् पिपासवे तण्डुलजलेन ॥ ७७ ॥
कुटजत्वचो विपाच्यं पलशतमार्द्रं महेन्द्रसलिलेन ।
यावत् स्यादर्द्धरसं तद् द्रव्यं पूतो रसस्ततो ग्राह्यः ॥
मोचरसः ससमङ्गः फलिनी च पलांशिकैस्त्रिभिस्तैश्च ।
वत्सकवीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥

गङ्गाधरः—केन स्तम्भनीयमित्यत आह—कुटजत्वगित्यादि। सनागरः स्निग्धो नागरचूर्णप्रक्षेपयुक्तः कुटजत्वङ्निर्य्यूहः स्निग्धः रक्तसंग्रहणः। पित्तं सस्नेहं तदुल्वणत्वाद् रक्तञ्च स्निग्धं, तत्संग्रहणः कुटजत्वङ्निर्य्यूहो रौक्ष्यात्। दाड़िमस्य त्वक्कृतो निर्य्यूहो नागरचूर्णयुक्तस्तद्वत् रक्तसंग्रहणः। चन्दनरसश्च सनागरस्तद्वत्। चन्दनं रक्तचन्दनम्। चन्दनेत्यादि। चन्दनादयश्चत्वारः कथिताः। दार्व्वीत्वगुशीरनिम्बास्त्रयः कथिताः। सातिविषेत्यादि। अतिविषादिरसाञ्जनान्तानि चूर्णीकृत्य मधुयुतानि रक्तापहानि लेहविधया दद्यात्। पिपासवे तु तण्डुलजलेन मधुयुक्तान्येव दद्यात् ॥ ७७ ॥

गङ्गाधरः—कुटजेत्यादि। कुटजस्य त्वचः पलशतमार्द्रमशुष्कं महेन्द्रसलिलेन द्रोणमितेन विपाच्यं, तद् द्रव्यं यावदर्द्धरसमर्द्धद्रोणावशिष्टं स्यात्। ततः पूतोऽर्द्धद्रोणरसो ग्राह्यः। अत्रार्द्धद्रोणे कुटजत्वग्रसे मोचरसादिभिस्त्रिभिः प्रत्येकं पलांशिकैश्चूर्णितैस्तुल्यं त्रिपलपरिमितं चूर्णीकृतं वत्सकवीजं दातव्यम्।

चक्रपाणिः—सनागरः ईषन्नागरः। स्निग्धस्य रक्तस्य संग्रहणः। तद्वदिति पूर्व्वयोगफलञ्च विधिञ्च दर्शयति ॥ ७७ ॥

चक्रपाणिः—कुटजत्वगित्यादौ पलशतं तुला: जलद्रोणेन साध्यम्। अष्टभागावशेषः कषायो ग्राह्यः। तन्त्रान्तरेऽप्युक्तम्—द्रोणेऽम्भसः पलशतं कुटजत्वचोऽष्टभागमिति। मेघसलिलम्

पूतोत्क्वथितः सान्द्रः सरसो दर्व्वीप्रलेपनो ग्राह्यः।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥
छगलीपयसा युक्ता पेया मण्डेन वा यथाग्निवलम्।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत ॥
रक्तार्शांस्यतिसारं रक्तं सासृग्रुजो निहन्त्याशु।
बलवच्च रक्तपित्तं रसक्रियैषा जयत्युभयभागम् ॥ ७८ ॥

कुटजादिरसक्रिया।

नीलोत्पलं समङ्गा मोचरसश्चन्दनं तिला लोध्रम्।
पीत्वा छगलीपयसा भोज्यं पयसैव शाल्यन्नम् ॥
छगलीपयः प्रयुक्तं निहन्ति रक्तं सवास्तुकरसश्च।
धन्वविहङ्गमृगाणां रसो निरम्लः कदम्लो वा ॥

तत् पुनः पूतोत्क्वथितः पक्वः सान्द्रः सरसः कुटजक्वाथो दर्व्वीप्रलेपनो घट्टन-दण्डप्रलेपयोग्यो ग्राह्यः अवतार्य्यः। मात्राकालोपहिता खल्वेषा रस-क्रियाऽसृक्स्रावं जयति। मात्रा चात्र यथाग्निवलं छगलीपयसा मण्डेन वा पेया। जीर्णौषधश्चायमर्शसः छागेन पयसा शालीनोदनान् भुञ्जीत। शेष-माशीः। कुटजादिरसक्रिया ॥ ७८ ॥

गङ्गाधरः—नीलोत्पलमित्यादि। समङ्गा मञ्जिष्ठा। नीलोत्पलादिलोध्रान्तं पिष्ट्वा छगलीपयसा पीत्वा शाल्यन्नं छगलीपयसैव भोज्यम्। छगलीत्यादि। प्रयुक्तं सवास्तुकरसश्च छगलीपयो निहन्ति रक्तमित्याशीः। धन्वदेशजानां विहङ्गानां मृगाणाञ्च रसोऽनम्लो दाड़िमादिभिः कदम्ल ईषदम्लो वा निहन्ति

आन्तरिक्षं जलम्। दार्व्वीप्रलेपो ग्राह्य इति यस्यामवस्थायां दार्व्वीप्रलेपो भवति तस्यामव-तारणीयः। उभयभागरक्तपित्तस्यासाध्यत्वादुभयभागशब्देन केवलोर्द्ध्वगन्चेष्यते। तत्रापि अधोगस्य याप्यत्वात् तत् प्रतिस्थापनमेवेह निहन्यादिति पदेनोच्यते ॥ ७८

चक्रपाणिः—कदम्लः ईषदम्लः ॥ ७९ ॥

पाठां वत्सकवीजं रसाञ्जनं नागरं यमान्यश्च ।
विल्वमिति चार्शसैश्चूर्णितानि पेयानि सशूलेषु ।
दार्व्वी किरातितिक्तं मुस्तं दुःस्पर्शकश्च रुधिरघ्नम् ॥ ७६ ॥
रक्तेऽतिवर्त्तमाने शूले च घृतं विधातव्यम् ।
कुटजफलकल्कैः * केशरनीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा ॥
सर्पिः सदाड़िमरसं सयावशूकं श्रृतं जयत्याशु ।
रक्तं सशूलमथवा निदिग्धिकादुग्धिकासिद्धम् ॥ ८० ॥
लाजापेया पीता चुक्रीकाकेशरोत्पलैः सिद्धा ।
हन्त्याश्वस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥
ह्रीवेरविल्वनागरनिर्य्यूहसाधितां सनवनीताम् ।
वृक्षाम्लदाड़िमाम्लामम्लीकाम्लां सकोलाम्लाम् ॥

रक्तमित्याशीः। पाठामित्यादि। पाठादीनि षट् विल्वान्तानि चूर्णितानि सशूलेषु स्राविष्वर्शसैर्जलेन पेयानि। दार्व्वीत्यादि। दार्व्व्यादिचतुष्कं चूर्णितं रुधिरघ्नं पेयम्। अतिवर्त्तमाने रक्ते शूले चेभिघृतं विधातव्यम्। अथवा वक्ष्यमाणं घृतं विधातव्यम् ॥ ७९ ॥

गङ्गाधरः—कुटजेत्यादि। कुटजफलादिभिः षड्भिः कल्कैः (कुटजफलकल्करेकम्, द्वितीयं केशरादिभिः कल्करिति क्वचित् पाठः) चतुर्गुणे जले सिद्धं घृतं रक्ताशसां शूले भिषजा विधेयम्। सर्पिरित्यादि। सदाड़िमरसं दाड़िमफलत्वक्क्वाथचतुर्गुणं सयावशूकं पादिकयवक्षारकल्कं श्रृतं सर्पिराशु सशूलं रक्तमर्शसां जयति ॥ ८० ॥

गङ्गाधरः—लाजेत्यादि। चुक्रीकादिभिरर्द्धश्रृततोये सिद्धा लाजानां पेया पीता अस्रस्रावमाशु हन्ति। तथा बलापृश्निपर्णीभ्यां सिद्धा लाजा पेया पीताऽस्रस्रावमाशु हन्ति। ह्रीवेरेत्यादि। ह्रीवेरादीनां त्रयाणां निर्य्यूहे शालितण्डुलान्

चक्रपाणिः—कुटजफलवल्कशब्देन च त्वगुच्यते। सदाड़िमरसमित्यत्र सिद्धं सर्पिः ॥ ८० ॥

* कुटजफलकल्कः इत्यत्र कुटजफलवल्क… कल्कैः इति चक्रेण पठ्यते।

गृञ्जनकसुरासिद्धां दद्याद् यमकेन भर्ज्जितां पेयाम्।
रक्तातिसारशूलप्रवाहिकाशोफनिग्रहणीम्॥ ८१॥
काश्मर्य्यामलकानां सकर्व्वुदारफलाम्लानाम्।
गृञ्जनकशाल्मलीनां दुग्धिकानां चुक्रिकाणाञ्च॥
न्यग्रोधशुङ्गकानां खड्डांस्तथा कोविदारपुष्पाणाम्।
दध्नः सरेण सिद्धान् दद्याद् रक्ते प्रवृत्तेऽति॥ ८२॥
सिद्धं पलाण्डुशाकं तक्रेणोपोदिकां सबदराम्लाम्।
रुधिरस्रुतौ प्रदद्यान्मसूरयूषञ्च तक्राम्लम्॥
पयसा शृतेन यूषैः सतीनमुद्गाढ़कीमसूराणाम्।
भोजनमद्यादम्लैः शालिश्यामाककोद्रवजम्॥

पत्त्वा सनवनीतां पेयां साधितां वृक्षाम्लदाड़िमाभ्यामम्लामथवाम्लीकाम्लाम् अथवा सकोलाम्लां रक्तातिसारादिनिग्रहणीं दद्यात्। अथवा गृञ्जनकसुराभ्यां सिद्धां पेयां यमकेन भर्ज्जितां दद्यात्॥ ८१॥

<u>गङ्गाधरः</u>—काश्मर्य्येत्यादि। काश्मर्य्य गम्भारीफलम्। आमलकीफलम्। कर्व्वुदारो रक्तकाञ्चनपुष्पम्। फलाम्लं तिन्तिड़िकादि। ताभ्यां सहितानां काश्मर्य्यामलकानां खड्डो मुद्गादियूषः एकः। गृञ्जनकशाल्मलीवेष्टकानां मुद्गादियूषो द्वितीयः खड्डः। दुग्धिकानां खड्डो मुद्गादियूषस्तृतीयः। चुक्रिकाणां मुद्गादियूषश्चतुर्थः खड्डः। न्यग्रोधशुङ्गकानां मुद्गादियूषः पञ्चमः खड्डः। कोविदारस्य रक्तकाञ्चनस्य कल्कैर्दध्नः सरेण युक्तो मुद्गादियूषः षष्ठः खड्डः। इत्येतान् सिद्धान् खड्डानतिप्रवृत्तेऽर्शोभ्यो रक्ते दद्यात्॥ ८२॥

<u>गङ्गाधरः</u>—सिद्धमित्यादि। पलाण्डुशाकं तक्रेण सिद्धम्। सबदराम्लामुपोदिकाम्। तक्राम्लं मसूरयूषञ्चार्शसां रुधिरस्रुतौ प्रदद्यात्। पयसेत्यादि। अर्द्धशृतेन पयसा भोजनमन्नं शालिश्यामाककोद्रवजमद्यात्। सतीनादीनां

चक्रपाणिः—गृञ्जनकेत्यादिना योगान्तरम्। गृञ्जनकः पलाण्डुभेदः॥ ८१॥

चक्रपाणिः—कर्व्वुदारः काञ्चनभेदः॥ ८२॥

शशहरिणलावमांसैः कपिञ्जलैणेयकैः सुसिद्धैश्च ।
भोजनमद्यान्मधुराम्लैरीषत् समरिचैर्वा ॥
दक्षशिखितित्तिरिरसैर्द्विककुदनोपाकजैश्च मधुराम्लैः ।
अद्याद् रसैरतिवहेष्वर्शःस्वनिलोल्वणशरीरः ॥
रसखड़शाकयवागूसंयुक्तः केवलोऽथवा जयति ।
रक्तमतिवर्त्तमानं वातञ्च पलाण्डुरुपयुक्तः ॥
छागान्तराधि तरुणं सरुधिरमुपसाधितं वहुपलाण्डु ।
व्यत्यासान्मधुराम्लं विट्शोणितसंक्षये देयम् ॥ ८३ ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवहाः ॥ ८४

यूषैश्च तदन्नमद्यात् । शशेत्यादि । सुसिद्धैः शशादिमांसैः कपिञ्जलमांसैः ऐणेयमांसैश्च शाल्यादिजं भोजनमद्यात् । समरिचैरीषदम्लैः मधुरर्वा शाल्यादिजं भोजनमद्यात् । दक्षेत्यादि । दक्षः कुक्कुटः । द्विककुद उष्ट्रः । नोपाकः क्षुद्रमृगाख्यः । दक्षादीनां मांसरसैर्दाड़िमादिमधुराम्लैः शाल्यादिजं भोजनमनिलोल्वणशरीरोऽर्शसोऽतिवहेषु अतिरक्तस्राविष्वर्शःसु अद्यात् । रसखड़ेत्यादि । पलाण्डुर्नाम कन्दविशेषः । शशादिमांसरसकाश्मर्य्यादिखड़पलाण्डुशाकादिशाकलाजपेयादियवागूसंयुक्तः केवलो वाप्युपयुक्तोऽर्शोभ्योऽतिवर्त्तमानं रक्तं वातञ्च जयति । छागान्तराधीत्यादि । छागस्यान्तराधि शिरःपादचतुष्कं विना मध्यदेहमात्रं सरुधिरं तच्छागस्य रुधिरसहितं तरुणं बहवः पल्लाण्डवो यत्र तत् उपसाधितं पक्वं विट्शोणितसंक्षये मधुराम्लं व्यत्यासाद् देयम् विट्संक्षये विड्व्यत्यासं मधुरं कृत्वा देयं, शोणितसंक्षये शोणितवर्द्धनमम्लं कृत्वा देयमिति ॥ ८३ ॥

गङ्गाधरः—नवनीतेत्यादि । त्रयो योगाः । केशरं पद्मकेशरं नागकेशरं वा । मथितं निर्ज्जलं तक्रम् ॥ ८४ ॥

चक्रपाणिः—भोजनमित्यादि भोजनमद्यात् इति योज्यम् । द्विककुद उष्ट्रः । अन्तराधि शरीरमध्यं तच्च तरुणच्छागस्यैवाद्यात् । मधुराम्लं प्रथमं मधुरं ततः विड्विदम्लम् ॥ ८३ । ८४ ॥

नवनीतघृतं मांसं छागश्च सषष्टिकः शालिः।
तरुणश्च सुरामण्डस्तरुणी च सुरा निहन्त्यस्रम्॥ ८५॥
प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते।
दुष्टेऽपि हि कफपित्ते तस्मादनिलोऽधिको ज्ञेयः॥
दृष्ट्वा तु रक्तपित्तं प्रबलं कफवातरूपमल्पञ्च।
शीता क्रिया प्रयोज्या यथेरिता वक्ष्यते यान्या॥ ८६॥
मधुकं सपञ्चवल्कं बदरीत्वगुडुम्बरधवपटोलम्।
परिषेचने प्रयोज्यं वृषककुभयवासनिम्बाश्च॥ ८७॥

गङ्गाधरः—नवनीतेत्यादि। नवनीतजं घृतम्। छागं मांसं षष्टिकधान्यं शालिधान्यञ्च। तरुणः सुरामण्डः। तरुणी सुरा च। प्रत्येकमस्रमर्शोनिःसृतं निहन्ति॥ ८५॥

गङ्गाधरः—प्रायेणेत्यादि। अर्शांस्यतिस्रुते रक्ते प्रायेण वातबहुलानि भवन्ति। तत्र कफपित्तेऽपि दुष्टे सति तस्मादतिस्रुतरक्तेऽर्शसि वातोऽधिको ज्ञेयः। दृष्ट्वेत्यादि। अर्शसि रक्तपित्तन्तु प्रबलं दृष्ट्वा कफवातलिङ्गमल्पञ्च दृष्ट्वा यथेरिता शीतक्रिया प्रयोज्या, या चान्या शीतक्रिया वक्ष्यते सापि प्रयोज्या॥ ८६॥

गङ्गाधरः—शीतक्रियाश्चाह—मधुकमित्यादि। पञ्चवल्कलं वटाश्वत्थप्लक्षकपीतनशिरीषवल्कलम्, उडुम्बरधवयोश्च त्वक्, पटोलस्य पत्रम्। एतत्सर्व्वं क्वाथविधिना प्रबलरक्तपित्तेऽर्शसि परिषेचने प्रयोज्यम्। वृषपत्रादयश्च क्वाथविधिना परिषेचने प्रयोज्याः॥ ८७॥

चक्रपाणिः—दधिसरस्य मथितम्॥ ८४॥

चक्रपाणिः—नवनीत सद्यस्कश्रृतं नवश्रृतम्। अन्ये तु नवनीतं घृतं छागं वदन्ति। यथा भावी रक्तस्तम्भनात्मिका प्रोक्ता सा॥ ८५। ८६॥

चक्रपाणिः—यवासो दुरालभा॥ ८७॥

रक्तेऽतिवर्त्तमाने क्लेदे दाहे च सम्यगवगाहाः।
मधुकामृणालचन्दनपद्मककुशकाशमूलनिक्काथाः॥
इक्षुरसमधुकवेतसनिर्य्यूहे शीतले पयसि वातम्।
अवगाहयेत् प्रदिग्धं पूर्व्वं तैलेन शिशिरेण॥ ८८॥
दत्त्वा घृतं सशर्करमुपस्थदेशे त्रिकदेशे च।
शिशिरजलस्पर्शसुखधारा संस्तम्भनी योज्या॥
कदलीदलैरभिनवैः पुष्करपत्रैश्च शीतजलसिक्तैः।
प्रच्छादनं मुहुर्म्मुहुरिष्टं पद्मोत्पलदलैश्च॥
दूर्व्वाघृतं प्रदेहं शतधौतं सहस्रधौतसर्पिः।
व्यजनपवनः सुशीतो रक्तास्रावं जयत्याशु॥ ८९॥

गङ्गाधरः—रक्तऽतीत्यादि। प्रबलरक्तपित्तेऽर्शसि रक्तेऽतिवर्त्तमाने क्लेदे दाहे च मधुकादीनां निक्काथा व्यस्तसमस्तानां क्वाथाः सम्यगवगाहाः प्रयोज्या बहुवचनात्। अमृणालमुशीरं, पद्मकं पद्मकाष्ठम्। इक्षुरसेत्यादि। इक्षुरसश्च मधुकवेतसनिर्य्यूहाश्च मिलिते तक्रशीतले पयसि जले वा अतिवर्त्तमानरक्ते तमर्शसं पूर्व्वं शिशिरेण शीतद्रव्यसाधितेन तैलेन प्रदिग्धमवगाहयेत्॥ ८८॥

गङ्गाधरः—दत्त्वेत्यादि। उपस्थसमीपे सशर्करं घृतं दत्त्वा त्रिकदेशे च सशर्करं घृतं दत्त्वा शिशिरजलस्य स्पर्शसुखस्य नातिशीतस्य धारा तदर्शोऽतिप्रवृत्तरक्तस्य संस्तम्भनी योज्या। कदलीत्यादि। अभिनवैः कोमलैः कदलीदलैः शीतजलसिक्तैस्तथा पुष्करस्य पद्मस्य पत्रैः शीतजलसिक्तैः पद्मोत्पलदलैश्च श्वेतपद्मकुमुददलैश्च शीतजलसिक्तैर्मुहुर्म्मुहुः प्रच्छादनमिष्टं दाहादिषु। दूर्व्वाघृतमित्यादि। दूर्व्वास्वरसकल्कसिद्धं घृतं शतधौतं सर्पिः सहस्रधौतञ्च सर्पिः प्रदेहं प्रदिह्यतेऽनेन। सुशीतलो व्यजनस्य तालव्यजनादिपवनः रक्तार्शसां रक्तास्रावमाशु जयति॥ ८९॥

चक्रपाणिः—शिशिरेण तैलेनेति शीतलद्रव्यसाधितेन तैलेन॥ ८८॥

चक्रपाणिः—शिशिरेत्यादि। शिशिरजला च सुखस्पर्शात्, तेन तीव्रशीतत्वं निवारयति॥ ८९॥

समङ्गामधुकाभ्यां तिलमधुकाभ्यां रसाञ्जनघृताभ्याम्।
सर्ज्जरसघृताभ्यां निम्बघृताभ्यां मधुघृताभ्याञ्च॥
दार्व्वीत्वक्सर्पिर्भ्यां सचन्दनाभ्यामथोत्पलघृताभ्याम्।
दाहे क्लेदे च गुदभ्रंशे गुदजाः प्रतिसारणीयाः स्युः॥९०॥
आभिः क्रियाभिरथवा शीताभिर्यस्य न तिष्ठति रक्तम्।
तं काले स्निग्धोष्णैर्मांसरसैस्तर्पयेन्मतिमान्॥ ९१ ॥
अवपीड़कसर्पिर्भिः कोष्णैर्घृततैलिकैस्तथाभ्यङ्गैः।
क्षीरघृततैलसेकैः कोष्णैः समुपाचरेच्चाशु॥ ९२ ॥
कोष्णेन वातप्रबले घृतमण्डेनानुवासयेच्छीघ्रम्।
पिच्छावस्तिं दद्यात् काले तस्याथवा सिद्धम्॥ ९३ ॥
यवासकुशकाशानां मूलं पुष्पञ्च शाल्मलम्।
न्यग्रोधोडुम्बराश्वत्थ-शुङ्गाश्च द्विपलोन्मिताः॥

गङ्गाधरः—समङ्गेत्यादि। समङ्गा मञ्जिष्ठा। सचन्दनाभ्यामिति सर्व्वत्राष्टसु योगेषु योज्यम्। द्वाभ्यां द्वाभ्यां सचन्दनाभ्यां त्रिभिस्त्रिभिः अष्ट योगाः। दाहे क्लेदे गुदभ्रंशे गुदजाः प्रतिसारणीया म्रक्षितव्याः इति॥ ९०॥

गङ्गाधरः—आभिरित्यादि। आभिः पूर्व्वोक्ताभिः क्रियाभिः शीताभिः यस्य न तिष्ठत्यर्शसो रक्तं तस्याथवा भोजनस्य काले स्निग्धोष्णैः कुक्कुटादि मांसरसैर्मतिमान भिषक् तर्पयेत्॥ ९१॥

गङ्गाधरः—अवपीड़केत्यादि। अवपीड़कद्रव्यैः वटादिवल्कलैः क्वाथकल्कैः पक्वसर्पिर्भिरभ्यङ्गैः कोष्णैः घृततैलिकैः अभ्यङ्गैः क्षीरघृततैलैः कोष्णैः सेकैः आशु रक्तानिवृत्तौ समुपाचरेत्॥ ९२॥

गङ्गाधरः—कोष्णेनेत्यादि। वातप्रबलेऽतिरक्तप्रवृत्तौ घृतमण्डेन शीघ्रमर्शसमनुवासयेत्। अथवा तस्य यथाकाले सिद्धं पिच्छावस्तिं दद्यात्॥ ९३॥

गङ्गाधरः—पिच्छावस्तियोगमाह—यवासेत्यादि। शाल्मलं शाल्मल्याः

चक्रपाणिः—अधुना अशक्यरक्तस्रुतौ क्षीणधातुतर्पणार्थं बृंहणमाह—आभिरित्यादि। तमिति स्रवद्रक्तं पुरुषम्। अवपीड़कसर्पिः भोजनस्योर्द्धं पीयते किंवा भूरिमात्रं सर्पिरवपीड़कमुच्यते॥ ९०—९३॥

द्विप्रस्थं सलिलस्यैतत् क्षीरप्रस्थं विपाचयेत् ।
क्षीरशेषं कषायन्तु ततः कल्कैर्विमिश्रयेत् ॥
कल्काः शाल्मलिनिर्य्यासाः समङ्गा चन्दनोत्पलम् ।
वत्सकस्य च बीजानि प्रियङ्गुः पद्मकेशरम् ॥
पिच्छाबस्तिरयं सिद्धः सक्षौद्रघृतशर्करः ।
प्रवाहिकागुदभ्रंश-रक्तस्रावज्वरापहः ॥ ९४ ॥

पिच्छाबस्तिः ।

प्रपौण्डरीकं मधुकं पेष्यान् वस्तौ यथेरितान् ।
पिष्ट्वानुवासनं स्नेहं क्षीरद्विगुणितं पचेत् ॥ ९५ ॥
ह्रीवेरमुत्पलं लोध्रं समङ्गाचव्यचन्दनम् ।
पाठा सातिविषा बिल्वं धातकी देवदारु च ॥
दार्व्वीत्वक् नागरं मांसी मुस्तं क्षारो यवाग्रजः ।
चित्रकश्चेति पेष्याणि चाङ्गेरीस्वरसे घृतम् ॥

मूलं पुष्पञ्च, न्यग्रोधादीनां शुङ्गाः । यवासादीनां शुङ्गान्तानां प्रत्येकं द्विपलं कुट्टयित्वा सलिलस्य द्विप्रस्थमष्टशरावं क्षीरस्य प्रस्थं चतुःशरावं विपाचयेत् । ततः क्षीरशेषं कषायं पूत्वा वक्ष्यमाणैः कल्कैः विमिश्रयेत् । कल्कास्तु शाल्मलीनिर्य्यासा मोचरसा इत्यादीनां क्षीरपादिकाः कल्कास्तत्र क्षौद्र-घृतशर्कराश्च मिश्रयित्वा नातिसान्द्रो नातितनुः कार्य्योऽयं पिच्छाबस्तिः सिद्धः प्रवाहिकाद्यपहः । पिच्छाबस्तिः ॥ ९४ ॥

गङ्गाधरः—अनुवासनं स्नेहञ्चाह—प्रपौण्डरीकमित्यादि । वस्तौ यथेरितान् पेष्यान् । इह पिच्छावस्तौ शाल्मलीनिर्य्यासादीन् कल्कान् पिष्ट्वा क्षीर-द्विगुणितं द्विगुणजलं स्नेहमुसमत्वाद् रक्तहितत्वाच्च घृतमनुवासनं वातप्रबले रक्तार्शसि पचेत् । एषोऽपि स्नेहपिच्छाबस्तिः ॥ ९५ ॥

गङ्गाधरः—ह्रीवेरमित्यादि । क्षार इत्यस्य विशेषणं यवाग्रजः । चित्र-

चक्रपाणिः—पिच्छाबस्तिमाह—यवासेत्यादि । यवासो दुरालभा । अत्र च कल्कादिमानं बस्तिवत् विज्ञेयम् ॥ ९४ । ९५ ॥

ऐकध्यं साधयेत् सर्व्वं तत् सर्पिः परमौषधम्।
अर्शोऽतिसारग्रहणी-पाण्डुरोगे ज्वरेऽरुचौ ॥
मूत्रकृच्छ्रे गुदभ्रंशे वस्त्याध्माने प्रवाहणे।
पिच्छास्रावेऽर्शसां शूले योज्यमेतत् त्रिदोषनुत् ॥ ९६ ॥
अवाक्पुष्पी बला दार्व्वी पृश्निपर्णी त्रिकण्टकः।
न्यग्रोधोडुम्बराश्वत्थ-शुङ्गाश्च द्विपलोन्मिताः ॥
कषाय एषां पेष्यास्तु जीवन्ती कटुरोहिणी।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥
कलिङ्गाः शाल्मलं पुष्पं वीरा चन्दनमञ्जनम्।
कट्फलं चित्रको मुस्तं प्रियङ्गुतिविषे स्थिरा ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका।
विल्वं मोचरसः पाठा भागाः कर्षसमाः पृथक् ॥
चतुःप्रस्थशृतप्रस्थं कषायमवतारयेत्।
त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥

कान्ताः सप्तदश कल्काः पादिकाः। चतुर्गुणे चाङ्गेरीस्वरसे तत् सर्व्वम् ऐकध्यं घृतं साधयेत्। ह्रीवेरादिघृतम् ॥ ९६ ॥

गङ्गाधरः—अवाक्पुष्पीत्यादि। अवाक्पुष्पी महुरीति लोके। न्यग्रोधादीनां शुङ्गाः। अष्टौ प्रत्येकं द्विपलोन्मिताः, एषां कषाय एव यथा कार्य्यः तदिहैव वक्ष्यते चतुःप्रस्थशृतप्रस्थं कषायमवतारयेदिति। चतुःप्रस्थे षोड़शशरावे जले अवाक्पुष्प्यादीनां षोड़शपलशृतप्रस्थं चतुःशरावमितः कषाय एव कार्य्यः। पेष्यास्तु जीवन्त्यादयः पाठान्ताः प्रत्येकं कर्षमिताः। वीरा

चक्रपाणिः—यवाग्रजः क्षारो यवक्षारः। चाङ्गेरीस्वरसोऽत्र चतुर्गुणो ग्राह्यः द्रवान्तरासान्निध्यात् ॥ ९६ ॥

चक्रपाणिः—अवाक्पुष्पी अधःपुष्पी। अत्र क्वाथ्यद्रव्यं षोड़शपलम्। यद्यपि अत्रोत्सर्गतः चतुःप्रस्थं जलमेव ज्ञेयम्, तथा शेषचतुर्भागः प्रस्थ एव भवति, तथापि चतुर्गुणजलदानस्य चतुर्थभागशेषतया स्थाप्यकषायस्य च उत्सर्गविधौ परिभाषासूचनार्थम् इदं चरकवचनम्—

सुनिषण्णकचाङ्गेर्य्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्व्वै रेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥
एतदर्शस्यतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥
उत्थाने चातिबहुशः शोफशूले गुदाश्रये ।
मूत्रग्रहे मूढ़वाते मन्देऽग्नावरुचावपि ॥
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ६७ ॥

सुनिषण्णकचाङ्गेरीघृतम् ।

भवन्ति चात्र ।

व्यत्यासो * मधुराम्लानां शीतोष्णानाञ्च योजितः ।
नित्यमग्निबलापेक्षी जयत्यर्शःकृतान् गदान् ॥

क्षीरकाकोली । स्थिरा शालपर्णी । समङ्गा मञ्जिष्ठा वराहक्रान्ता वा । सुनिषण्णकचाङ्गेर्य्योः प्रत्येकं स्वरसस्य द्वौ प्रस्थौ, तेन पञ्चगुणद्रव्ये घृतपाकोऽयम् । उत्थाने चातिबहुश इति स्तोकं स्तोकं पुरीषं सृष्ट्वा बहुश उत्थाने । सुनिषण्वकचाङ्गेरीघृतम् ॥ ९७ ॥

गङ्गाधरः—अत्र प्रतिसंस्कृते प्रमाणमाह । भवन्ति चात्रेत्यादि । व्यत्यास इत्यादि । मधुरनिदानजेऽर्शसि व्यत्यासो मधुरविपर्य्ययः । अम्लनिदानजे

तथा त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिक इत्यपि वचनं परिभाषासिद्धार्थाभिधायकं विज्ञेयम् । अत एव दृढबलसंस्कारेऽपि द्रवद्वैगुण्याभिधानम् । त्रिंशत्पलविशेषणतया द्विपलाधिकानीति निर्द्देशे प्राप्ते प्रस्थविशेषणतया पुंलिङ्गैकवचननिर्द्देशो ज्ञेयः ॥ ९७ ॥

चक्रपाणिः—व्यत्यासात् परस्परपरिवर्त्तनेन मधुराम्लयोः शीतोष्णयोश्च योजना । अर्शःसु

* व्यत्यासात् इति चक्रः ।

त्रयो विकाराः प्रायेण ये परस्परहेतवः।
अर्शांसि चातिसारश्च ग्रहणीदोष एव च ॥
एषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः।
तस्मादग्निबलं रक्ष्यमेषु त्रिषु विशेषतः ॥ ९८ ॥
भृष्टैः शाकैर्यवागूभिर्यूषैर्मांसरसैः शुभैः।
दुग्धतक्रप्रयोगैश्च विविधैर्गुदजान् जयेत् ॥
यद् वायोरानुलोम्याय यदग्निबलवृद्धये।
अन्नपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥
यदतो विपरीतं स्यान्निदाने यच्च दर्शितम्।
गुदजाभिपरीतेन तत् सेव्यं न कदाचन ॥ ९९ ॥

अर्शसि व्यत्यासोऽम्लविपर्य्ययः। शीतनिदानजे शीतव्यत्यास उष्णो योजितः। उष्णनिदानजे व्यत्यास उष्णविपर्य्ययः। अग्निबलापेक्षी नित्यं योजितः। अर्शःकृतान् गदान् जयति। त्रयो विकारा इत्यादि। अर्शोऽतिसारग्रहणीदोषा इति त्रयो विकाराः प्रायेण परस्परहेतवः। अग्निबले हीने ह्येषां वृद्धिरग्निबले वृद्धे त्वेषां परिक्षयः स्याद् यस्मात् तस्मादेषु त्रिषु विशेषतोऽग्निबलं रक्ष्यमिति ॥ ९८ ॥

गङ्गाधरः—तत्रार्शोऽधिकारादाह—भृष्टैरित्यादि। स्विन्नपीड़ितरसबहुस्नेहे भृष्टैः शाकैरिति। यद्वायोरित्यादि। यदन्नपानौषधद्रव्यं वायोरानुलोम्यार्थं यच्चाग्निबलवृद्धये तत्सर्व्वमर्शसैर्नित्यं सेव्यमिति। यदत इत्यादि।

अग्निरक्षामभिधातुम्। अन्यत्रापि यत्र अग्निरक्षा विशेषेण कर्त्तव्या तामाह—त्रय इत्यादि। वृद्धे परिक्षयः अग्निबले वृद्धे विनाशः। त्रिषु विशेषतः इत्यनेन अन्यत्राप्यग्निरक्षणं कार्य्यमिति दर्शयति ॥ ९८ ॥

चक्रपाणिः—यद् वायोरित्यादिना पूर्व्वोक्तचिकित्सां सारोद्धारेणाह ॥ ९९ ॥

संग्रहश्लोकाः ।

अर्शसां द्विविधं जन्म पृथगायतनानि च ।
स्थानसंस्थानलिङ्गानि साध्यासाध्यत्वनिश्चयः ॥
अभ्यङ्गाः स्वेदनं धूमाः सावगाहाः प्रलेपनम् ।
शोणितस्यावसेकश्च योगा दीपनपाचनाः ॥
पानान्नविधिरग्र्याश्च वातवर्चोऽनुलोमनः ।
योगाः संशमनीयाश्च सर्पींषि विविधानि च ॥
वस्तयस्तक्रयोगाश्च वरारिष्टाः सशर्कराः ।
शुष्कार्शसां प्रशमनाः स्राविणां लक्षणानि च ॥
द्विविधं सानुबन्धानां ताभ्याञ्चेष्टं यदौषधम् ।
रक्तसंग्रहणाः क्वाथाः पेय्याश्च विविधात्मकाः ॥
स्नेहाहारविधिश्चाग्र्यो योगाश्च प्रतिसारणाः ।
प्रक्षालनावगाहाश्च प्रदेहाः सेचनानि च ॥

अतो वायोरानुलोम्यार्थादग्निबलवर्द्धकाच्च विपरीतं, वायोः प्रातिलोम्यार्थमग्निबलह्रासकरश्च यत्, यच्च निदानेऽन्नपानादिकं दर्शितं तत्सर्वं गुदजाभिपरीतेन जनेन कदाचन न सेव्यमिति ॥ ९९ ॥

चक्रपाणिः—अर्शसां द्विविधमित्यादि अध्यायार्थसंग्रहः । अरिष्टग्रहणेनैव शार्करस्यापि

अतिवृत्तस्य रक्तस्य विधातव्यं यदौषधम्।
तत् सर्व्वमिह निर्द्दिष्टं गुदजानां चिकित्सितम् ॥१००॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थानेऽर्शश्चिकित्सितं नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

गङ्गाधरः—अत्राध्यायार्थसंग्रहश्लोकाः—अर्शसामित्यादि ॥ १०० ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे चिकित्सितस्थानजल्पेऽर्शश्चिकित्सितजल्पाख्या चतुर्द्दशी शाखा ॥ १४ ॥

ग्रहणे प्राप्ते शार्करस्य पृथगभिधानं गुड़प्रकृष्टेभ्यो भेदेन व्यवहारार्थं, तथानुपानाभिधानार्थं पृथक् कृतम् ॥ १०० ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायाम् अर्शश्चिकित्सितं नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

अथातो ग्रहणीदोषचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा ।
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः ॥ २ ॥
शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः ।
रोगी स्याद् विकृते मूलमग्निस्तस्मान्निरुच्यते ॥ ३ ॥

गङ्गाधरः—अथोद्दिष्टानुक्रमादर्शोऽनन्तरं ग्रहणीदोषचिकित्सितमाह—अथात इत्यादि । पूर्ब्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—आयुरित्यादि । आयुरादय एकादश देहाग्निहेतुकाः । देहाग्निर्जाठराग्निर्हेतुर्येषां ते । अग्नय इति धात्वग्नयः ॥ २ ॥

गङ्गाधरः—कुत एवं तत्राह—शान्ते इत्यादि । अग्नौ देहाग्नौ शान्ते नष्टे पुरुषो म्रियते । युक्ते समरूपे स्थिते अनामयः सन् पुमांश्चिरं जीवति,

चक्रपाणिः—अर्शःकार्य्यत्वाद् ग्रहणीदोषस्य अर्शश्चिकित्सितमनु ग्रहणीचिकित्सितं ब्रूते । ग्रहणीम् आश्रितो दोषो ग्रहणीदोषः । एवञ्चाश्रयाश्रयिणोरभेदग्रहणाद् ग्रहण्याश्रितोऽग्निदोषोऽपि गृह्यते । तत्र ग्रहणीदोषनिर्द्दिष्टाग्निदोषे वक्तव्ये प्रकृतिज्ञानान्तरत्वाद् विकृतिज्ञानस्य प्रथमं तावदविकृतस्याग्ने रूपमाह—आयुरित्यादि । आयुश्चेतनानुवृत्तिः, वर्णो गौरादिः, बलं शक्तिः व्यायामशक्तिश्च । स्वास्थ्यशब्देनैव वर्णादिग्रहणं यद्यपि लभ्यते तथापि "स्वस्थस्यौजस्करं यत् तु तद् रसायनमुच्यते" तेन वर्णादीनामविकारत्वम् अवश्यं सुस्थे भवतीति वर्णादीनां पृथगुपादानं कृतम् । उत्साहो दुष्करेष्वपि कार्य्येषु अध्यवसायः । उपचयो देहपुष्टिः । ओजो हृदयस्थं सर्व्वधातुसाररूपम् । तेजो देहोष्मा शुक्रं वा । यदुक्तं शालाक्ये "दृष्टिस्तेजोमयी प्रोक्ता शुक्रं तेजश्च केवलम् । तस्माद् दृष्टिबलापेक्षी तेजोवृद्धिं समाचरेत्" इति । अग्नय इति भूताग्नयः पञ्च, धात्वग्नयः सप्त इति द्वादशाग्नयः । प्राणा इति प्राणापानोपलक्षिताः पञ्चापि वायवः । किंवा प्राणाः इति शब्देन नित्यं बहुवचनान्तेनोच्यते यथाप्सरःशब्देन एकापि विद्याधरी कीर्त्त्यते । देहाग्निहेतुका इति देहपोषकप्रधानजाठराग्निकारकाः । शान्ते इत्युत्सन्ने । युक्ते इति समे । विकृत इति मन्दे विषमे तीक्ष्णे वा । मूलमग्निः तस्मादिति

यदन्नं देहधात्वोजो-बलवर्णादिपोषकम्।
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद् रसादयः ॥ ४ ॥
अन्नमादानकर्म्मा तु प्राणः कोष्ठं प्रकर्षति।
तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् ॥

विकृते तु देहाग्नौ विषमे तीक्ष्णे मन्दे च रोगी स्यात् तस्मादग्निमूलमायुरादीनां कारणं निरुच्यते ॥ ३ ॥

गङ्गाधरः—यदन्नमित्यादि। यदन्नमभ्यवहृतं देहधात्वादिपोषकं तदन्नपाके हेतुर्जाठराग्निः। कस्मात्? आहारात् पक्वाद् रसादयो जायन्ते न ह्यपक्वात् आहाराद् रसादयो धातवः स्युरिति ॥ ४ ॥

गङ्गाधरः—कथमभ्यवहृतस्यान्नमग्निना पच्यत इत्यत आह—अन्नमित्यादि। प्राणो नाम हृदयस्थः शारीरो वायुरादानकर्म्मा पानाहारादिकमादत्ते। स तु अभ्यवह्रियमाणमन्नं कोष्ठमुदरं प्रकर्षति। द्विकर्म्मकः कृषिः, प्र आरम्भे। अभ्यवह्रियमाणमन्नं कोष्ठं कर्षन् प्रारभ्यमाणमपानोऽधस्तादपकर्षति। तेन द्वितीयारण्यकोक्तं न विरुध्यते। तत्र ह्युक्तम्। तदपानेनाजिघृक्षत तदा यत्। स एषोऽन्नस्य ग्रहो यद् वायुरन्नायुर्वा एष यद् वायुरिति। तत् काले भुक्तं कोष्ठगतमन्नं द्रवः क्लेदकश्लेष्मद्रवैर्भिन्नसंघातं द्रवीभूतं स्नेहेन तत्

तस्मात् प्राशस्त्यात् अन्वयव्यतिरेकविधानात् आयुर्व्वर्णादीनाम् अग्निर्मूलं प्रधानं कारणमित्यर्थः। निरुच्यते इति निश्चयेनोच्यते ॥ १—३ ॥

चक्रपाणिः—सामान्यकारणमुक्त्वा अग्नेः साक्षात्कार्य्यकारणत्वं व्युत्पादयन्नाह—यदन्नमित्यादि। वाह्या अपि गैरिकादयो धातुशब्देनोच्यन्ते इति तद्व्यवच्छेदार्थं धातोर्देहविशेषणम्। अथ अहोरात्रजन्येषु देहधात्वादिषु कथमग्नेः कारणत्वमित्याह—आहारादिति। एतेनाहारमप्यपेक्ष्यैव रसादीन् जनयति। आदिग्रहणेन रक्तादीनि संगृह्यन्ते ॥ ४ ॥

चक्रपाणिः—संप्रति संप्राप्तस्यान्नस्य अग्निना यथा पाको भवति यथा च पच्यमानम् अन्नं देहधात्वादिना रूपतामापद्यते तदाह—अन्नमित्यादि। मुखप्रवेशादन्नस्य व्याहार इहोच्यते। आदानम् आहारप्रणयनं कर्म्म यस्य स तथा। कर्षतीति नयति। द्रवैरिति पानीयादिभिः। भिन्न-

समानेनावधूतोऽग्निरुदीर्य्यः पवनेन तु * ।
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये ॥ ५ ॥
एवं रसमलायान्नमाशयस्थमधःस्थितः ।
पचत्यग्निर्यथा स्थाल्यामोदनायाम्बुतण्डुलम् ॥ ६ ॥
अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः ।
मधुराख्यात् † कफो भावात् फेनभाव उदीर्य्यते ॥

क्लेदकश्लेष्मस्नेहांशेन मृदुतां गतं समानेन पवनेन नाभेर्वामपार्श्वस्थो जाठरोऽग्निः समीपस्थेनावधूतोऽवकम्पितः सन्नुदीर्णो भूत्वा समं सम्यक् पचत्यायुर्विवृद्धये न तु विषमं पचति ॥ ५ ॥

<u>गङ्गाधरः</u>—पाकप्रकारमाह—एवमित्यादि। एवमनेन प्रकारेणामाशयस्थमन्नं तदधःस्थितो जाठरोऽग्निर्यथा स्थाल्यामम्बुतण्डुलमधःस्थितोऽग्निरोदनाय पचति तथा रसमलाय पचति ॥ ६ ॥

<u>गङ्गाधरः</u>—कथं रसाय मलाय वा पचतीत्यत आह—अन्नस्येत्यादि। षड्रसस्यान्नस्य भुक्तमात्रस्य प्रपाकतः पाकारम्भात् मधुराख्यात् भावात्

सञ्जातमित्यवयवशैथिल्यमापन्नम्। काले इति बुभुक्षाकाले। भुक्तं सममिति मात्राप्रकृत्यादिसमम्। समानेनावधूत इति अग्निपार्श्वस्थितेन समानेन संधुक्षितः। अयञ्च समानप्रकृतित्वात् वाह्यो वायुरिव अग्नेः संधुक्षणो भवति न वैषम्यकरः, विकृतस्तु वैषम्यं करोति। तेन वातेन विषमोऽग्निः भवतीति च उपपन्नं भवति। एते च ऊष्मादयः पावकस्याग्नेः सहाया भवन्ति इत्यनेन ग्रन्थेनोच्यते। आहारपरिणामकरा इमे भावा भवन्ति। तद् यथा—ऊष्मा वायुः क्लेदः स्नेहः कालः समयोगश्चेति। उदर्य्यः पाचक इत्यर्थः। पवनोद्वह इत्यग्निविशेषणं केचित् पठन्ति। सम्यगिति भुक्तविशेषणं केचित् पठन्ति, तदा सम्यगित्यनेन मात्रासाम्यमुच्यते। सम्यग्ग्रहणेन तु प्रकृत्यादिसम्पदुच्यते। आयुर्व्विवृद्धये इति शरीरेन्द्रियसत्त्वात्मसंयोगानुवर्त्तमाना रसादयः। तादर्थ्ये चतुर्थी ॥ ५ ॥

<u>चक्रपाणिः</u>—आशयस्थमित्यामाशयस्थम्। अधः स्थित इत्यनेन अग्नेरूर्द्ध्वज्वलनस्वभावतया ऊर्द्ध्वस्थान्नपाके सामर्थ्यं सूचयति। अत्रार्थे यथेत्यादिना दृष्टान्तमाह। एवं स्थूलपाकक्रमं विधाय अवान्तरमनुपाकक्रममाह—अन्नस्येत्यादि। भुक्तमात्रस्य भुक्तानन्तरमेव। षड्रसस्येति प्राशस्त्यत्वेनाभिधानं किंवा षड्रसस्यापि प्रथमं मधुरता निरुक्ता भवतीति दर्शयति। प्रपाकत इति प्रथमपाकतः। प्रशब्दो रसादिकर्म्मणि। मधुरश्चासौ आद्यश्चेति मधुराद्यः। किंवा मधुरात् प्राक् कफोद्भावः इति पाठः। फेनभूत इति फेनसदृशो घन इत्यर्थः।

* उदर्य्यः पवनोद्वहः इति चक्रसम्मतः पाठः।　　† मधुराद्यात् इति चक्र।

परन्तु पच्यमानस्य विदग्धस्याम्लभावतः।
आशयाच्च्यवमानस्य पित्तमच्छमुदीर्य्यते॥
पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना।
परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः॥ ७॥

यः फेनभाव उदीर्य्यते स कफो नाम मलः। परं तदुत्तरकाले पच्यमानस्य तस्य षड्रसस्यान्नस्य विदग्धस्यार्द्धपरिपक्वस्याम्लभावो भवति। आशयादामशयात् च्यवमानस्य तस्याम्लीभूतस्यान्नस्य यत् स्वच्छं निर्म्मलरूपमुदीर्य्यते तत् पित्तं नाम मलम्। पक्वाशयं प्राप्तस्य वह्निना शोष्यमाणस्य परिपिण्डितपक्वस्य तस्य षड्रसस्यान्नस्य कटुभावो भवति तस्मात् कटुभावाद् वायुर्नाम मलः स्यात्॥ ७॥

आद्यमधुरपाकानन्तरं विदग्धस्येति पक्वापक्वस्य। अम्लभावतः इति जाताम्लस्वरूपतः। आशयादामाशयात् च्यवमानस्य अधोभागं वायुना नीयमानस्य, अनेन च पित्तस्थानसम्बन्धं विदग्धाहारस्य दर्शयति। अच्छमित्यघनम्। उदीर्य्यते इति पित्तमुदीर्य्यते। अम्लञ्च पित्तम् अम्लभावादाहारस्य उत्पद्यत इति युक्तमेव। पक्वाशयन्तु प्राप्तस्येति च मलरूपतया पक्वाशयं गतस्य, शोष्यमाणस्य च वह्निनेति यद्यपि ऊर्द्ध्व दाहक्षमो वह्निः, तथाप्यधोगतस्यापि वह्निना शोष्यमाणत्वं पक्वाशयगतस्याप्युपपन्नम्। यतश्चाधोगमने सम्यक् वह्निव्यापारो नास्ति अतः पच्यमानस्येति पदं परित्यज्य शोष्यमाणस्येति कृतम्। परिपिण्डितपक्वस्येति परिपिण्डितरूपतया मलरूपतया पक्वस्य। वायुः स्यात् कटुभावत इति परिपिण्डितावस्थोद्भूतकटुता वायोरुत्पद्यते। एवमीदृशः षड्रसाहारस्यावस्थापाको भवति। उक्तं मधुरादीनां कफादिकर्त्तृत्वम्। कटुतिक्तकषायाणां विपाकः प्रायशः कटुः इत्यादिना च यः पाक उच्यते, सोऽवस्थापाकेन च बाधितत्वात्। मैवं, न ह्यवस्थापाकः स्वभावं बाधते, किन्त्ववस्थायां स्वकार्य्यं करोति। तेन रसादयोऽपि स्वकार्य्यं कुर्व्वन्ति। अवस्थापाकोऽपि स्वकीयं कार्य्यं करोति। यथा मधुरतिक्तादिषड्रसेऽन्ने उपयुक्ते मधुरोऽपि स्वकार्य्यं करोति, तिक्तादयः स्वकार्य्यं कुर्व्वन्ति, अयन्तु विशेषः यदावस्थापाकस्य मधुरादयः श्लेष्मजनका रसा अन्नगुणा भवन्ति, तदा श्लेष्माणं जनयन्ति। यदा तु अवस्थापाकः विपरीतकटुकादिपरिगृहीतो भवति, तदा स्तोकमात्रं कफं जनयति। एवं पित्तजनके अवस्थापाकेऽपि वाच्यम्। त्रिधा विपाकस्तु रसमलविवेकसमकाले एवावस्थापाकैः समं भवति। कालोऽपि अवस्थापाककार्य्यदोषानुगुणतया अवस्थापाकाहितदोषाणां वर्द्धनं क्षपणञ्च करोतीति तस्याभिधानं शास्त्रे प्रयोजनवदेव। यद्यपि वा सर्व्वमन्नम् अवस्थायां विदह्यते तथापि तेऽत्यर्थं विदाहित्वात् विदाहिन इत्युच्यन्ते विशेषविदाहकर्त्तृत्वात्। न्येअ त्वाहुः न षड्रसादपि अनुसामान्येनावस्थापाके कफाद्युत्पत्तिः, किन्तु षड्रसादन्नात्

अन्नमिष्टं ह्युपकृत-*-मिष्टैर्गन्धादिभिः पृथक् ।
देहे प्रीणाति गन्धादीन् प्राणादीनिन्द्रियाणि च † ॥ ८ ॥

गङ्गाधरः—एवंप्रकारेण मलाय पाके जायमाने पाञ्चभौतिकशारीरगुणानां यथा पुष्टयो भवन्ति तदाह—अन्नमित्यादि । इष्टैर्गन्धादिभिः गुणयुक्तमन्नमिष्टमुपकृतं भक्तं देहे पृथक् गन्धादीन् प्रीणयति, प्राणादीन् प्राणापानादीन् इन्द्रियाणि चक्षुरादीनि पृथक् प्रीणयतीति ॥ ८ ॥

प्रथमे पाके मधुरोऽयमनुपगतो रसः स कफं जनयति तथा द्वितीये अम्लरसः पित्तदोषं विदाहावस्थायाम्, उद्भूतादम्लरसात् पित्तमुत्पद्यते । एवं वायुरपि आहारकटुतावस्थायां भवतीति । अन्ये त्वाहुः यत् नान्नस्याग्निसंयोगात् मधुराद्यावस्थिकं भवति किन्तु कफादिस्थानेषु मनुष्याणां स्वभावादेव मधुरादयो रसास्तिष्ठन्ति । उक्तं हि तन्त्रान्तरे—मधुरो हृदयादूर्द्ध्वं रसः कोष्ठ व्यवस्थितः । ततः संवर्द्धते श्लेष्मा शरीरबलवर्द्धनः । नाभीहृदयमध्ये च रसस्त्वम्लो व्यवस्थितः । स्वभावेन मनुष्याणां ततः पित्तं प्रवर्त्तते । अधो नाभ्यास्तु नन्वेकः कटुकोऽवस्थितो रसः । प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्द्धतेऽनिलः । तस्माद् विपाकस्त्रिविधो रसानां नात्र संशयः । इति । इह तु तत्रेत्यादिग्रन्थार्थालोचनया यथार्थ एव ग्रन्थार्थो न्याय्यः । तन्त्रान्तरे तु श्लेष्मपित्तगतमधुराम्लरसौ वर्णयन्ति, ते च कफाधिगता रसाः अस्माकमपि पाकसहकारितया अनुमता एव । यत् तु श्लेष्मजनकांशस्यैवावस्थापाके श्लेष्मकर्त्तृत्वमित्युक्तं तदनुमतमेव । एवं श्लेष्मजनकोऽंशः आहारगतो यः स स्थानमहिम्ना तदाहारस्य मधुरतामापद्य श्लेष्माणं जनयतीति विशेषेण ब्रूमः । यत् तु अनेनावस्थापाकेन कफपित्तयोः ईरणमात्रं करोति न तु वृद्धिम्, वृद्धिः कफस्यानुपाके भवतीति वदन्ति, तदुपपत्तिशून्यं भाति, किन्तु अवस्थापाकाच्च कफपित्तवृद्धिः तथा रसरक्तपाकाच्च मलरूपतया उत्पादयति इति युक्तं पश्यामः ॥ ७ ॥

चक्रपाणिः—कर्म्मान्तरेणापि अन्नस्य पाकः संपद्यते तमाह—अन्नमिति । अन्नम् इष्टम् उपहितमिति, हिशब्दोऽवधारणे, इष्टशब्देनेह प्रियं हितञ्चोच्यते न प्रियमात्रम्, अहितस्य प्रियमात्रस्य न देहव्यवस्थितिः गन्धादितर्पकत्वं भवति । उपहितमित्युपयुक्तम् । इष्टैरिति प्रियहितैः गन्धरसरूपस्पर्शशब्दैः । अत्र यद्यपि हितत्वमेव गन्धादीनाम् आहारगतानां देहगतगन्धादिपोषण प्रधानं तथापि प्रियत्वमपि आहारगतगन्धादीनां तदात्वोपकारकतया ग्रहीतुं प्रियत्वहितत्वयोः द्वयोरपि उपादानं कर्त्तव्यम् । देहे प्रीणाति गन्धादीनिति देहश्रितान् गन्धादीन् पोषयेत् इति । तथा घ्राणादीनि च घ्राणरूपरसस्पर्शनश्रोत्राणि इष्टैर्गन्धादिभिः प्रीणाति तर्पयति पोषयतीति यावत् । इन्द्रियाण्यपि हि पाञ्चभौतिकान्यस्मद्दर्शने तानि च प्रतिक्षणं क्षीयमाणानि ॥ ८ ॥

* अन्नमिष्टं ह्युपहितम् इति चक्रसम्मतः पाठः । † घ्राणादीनीन्द्रियाणि च इति चक्रधृतः पाठः ।

भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः।
पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि॥
यथास्वैरेव पुष्यन्ते देहे द्रव्यगुणाः पृथक् *।
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः॥ ६॥

गङ्गाधरः—अस्तु, भुक्तान्नं कथं गन्धेन देहे गन्धं प्रीणाति रसेन रसं रूपेण रूपं स्पर्शेन स्पर्शं शब्देन शब्दं गुरुत्वेन गुरुत्वमित्येवमादि; कथं वा घ्राणादीनिन्द्रियाणि च प्रीणाति न ह्यस्त्यन्नस्य घ्राणा इन्द्रियञ्चेत्यत आह—भौमेत्यादि। भूवहुलपाञ्चभौतिकेऽन्ने भौम उष्मा, अब्वहुलपाञ्चभौतिकेऽन्ने आप्य उष्मा, तेजोवहुलपाञ्चभौतिकेऽन्ने आग्नेय उष्मा, वायुवहुलपाञ्चभौतिकेऽन्ने वायव्य उष्मा, नभोवहुलपाञ्चभौतिकेऽन्ने नाभस उष्मेति पञ्चोष्माणः पार्थिवादीन् स्वान् स्वान् पञ्चाहारगुणान् गन्धादीन् पृथिव्यादिपञ्चानां गुणान् हि यस्मात् पचन्ति तस्माद् यथास्वैरेव स्वेन स्वेन गुणेन देहे द्रव्यगुणाः पृथक् पुष्यन्ते। केन के गुणाः इत्यत आह—पार्थिवा इत्यादि। पार्थिवा आहारगुणाः गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धा देहे पार्थिवगुणान् गुरुखरादीन् पोषयन्ति। गुरुत्वं गुरुत्वं देहस्य पुष्णाति, खरत्वं खरत्वं काठिन्यं काठिन्यं मान्द्यं मान्द्यं स्थैर्य्यं स्थैर्य्यं वैशद्यं वैशद्यं सान्द्रत्वं सान्द्रत्वं स्थौल्यं स्थौल्यं गन्धो गन्धमिति। एवं शेषा आप्यादयोऽन्नगुणा देहे आप्यादिगुणान् पोषयन्ति कृत्स्नश इति। तथाऽन्ने

चक्रपाणिः—भौतिकवह्निव्यापारमाह—भौमेत्यादि। भौमादयः पञ्चोष्माणः पार्थिवादिद्रव्यव्यवस्थिताः जाठराग्निसन्धुक्षितबलाः अन्तरीयं द्रव्यं पचन्तः स्वान् स्वान् पार्थिवादीन् पूर्व्वपार्थिवगन्धस्वादिविलक्षणान् गुणान् निर्व्वर्त्तयन्ति। एतदेवाशितलीढपीतखादितं जन्तोर्हितम् अन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानमिति। यद्यपि च भूताग्निना पार्थिवादिद्रव्यं पच्यते तथापि पार्थिवादिद्रव्याणां पाकेनैतदेव जननं यद्विशिष्टगुणयुक्तत्वं तेन पाकेन जन्यमानेऽपि द्रव्ये गुणा एव जन्यन्ते इत्यभिप्रायेण पार्थिवादीनाहारगुणान् जनयन्ति। अनेन गुणजननमेवाग्निनोच्यते न द्रव्यजननं, किंवा आहाराश्च गुणाश्चेति विग्रहादाहारशब्देन आहाराधिकाररूपं द्रव्यमपि गृह्यते, पार्थिवादीनीति पार्थिवाप्यतैजसवायवीयनाभसानि। अत्र जाठराग्निः सर्व्वमेवाहाररसमलविपाकान् पचति। भौतिकास्त्वग्नयः स्वान् स्वान् गुणान् जनयन्ति।

* यथास्वं स्वञ्च पुष्णन्त्याहारद्रव्यगुणाः पृथक्। इति चक्रः।

खल्वाप्ये द्रवस्निग्धशीतमन्दसरसान्द्रमृदुपिच्छिलरसगुणा देहे तानेवाप्यान गुणान् पोषयन्ति। आग्नेये त्वन्नेऽप्याग्नेया गुणा उष्णतीक्ष्णसूक्ष्मलघुरुक्ष-विशदरूपगुणा देहे तानेवाग्नेयगुणान पोषयन्ति। वायव्येऽन्ने वायव्यगुणा लघुशीतरुक्षखरविशदसूक्ष्मस्पर्शगुणा दहे तानेव गुणान् पोषयन्ति। नाभसे चान्ने नाभसा मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणा दहे तानेव गुणान् पोषयन्तीति कृत्स्नश इति पदेनोक्तम्। अन्नं हि पार्थिवमशितं त्रिधा विधीयत पाकात्। तत्र स्थूलतरो धातुः पुरीषं भवति, मध्यमो मांसमणुतमो मन इति। आप्यमन्नं पीतं त्रिधा भवति पाकात्। तत्रापां यः स्थूलतरो धातुस्तन्मूत्रं भवति, यो मध्यमस्तद् रक्तं, योऽणुतमः स प्राण इति। तैजसमन्नमशितं त्रेधा विधीयते। तत्र तेजसो यः स्थूलतरो धातुस्तदस्थि भवति, यो मध्यमः स मज्जा, योऽणुतमः सा वागिति। अन्नमयं सौम्यमनः, आपोमयः प्राणस्तेजोमयी वागिति। तत्र मनः एतत्स्थूलशरीरारम्भे गर्भाशयगतं शुक्रात्तत्रमनुप्रविश्य सूक्ष्मशरीरात्मा पूर्व्वं स्वस्थितानि पञ्च महाभूतानि विकुर्व्वन् पञ्च भूतानि यथा सृजति तैश्च दशेन्द्रियाणि सृजति, तथा सत्त्वादींश्च त्रीन गुणान् विकुर्व्वन् सत्त्वादीन सृजति। तान् गुणान् सूक्ष्मशरीरस्थं त्रिगुणात्मकं मनः प्रविश्यास्मिन् स्थूलशरीरे स्थूलं मनो भवति, तदत्र मनो भौमाहारद्रव्यस्थसत्त्वादिगुणाः स्थूलरूपाः पक्काः पोषयन्तीति न मनो भौतिकम्। मनश्चात्मजादिषु शारीरे स्वयमुक्तम्। तथा पूर्व्वमुक्तं विविधाशितपीतीये। "पुष्यन्ति त्वाहाररसाद् रसरुधिरमांसमेदोऽस्थिमज्जशुक्रौजांसि पञ्चेन्द्रिय-द्रव्याणि धातुप्रसादसंज्ञकानि" इति। तेन प्रसादांशादिन्द्रियाणि पुष्यन्ति। इति ॥ ९ ॥

उक्तञ्च जाठरेणाग्निना पूर्व्वं कृते संघातभेदे पश्चाद्भूताग्नयः पञ्च स्वं स्वं द्रव्यं पचन्ति। अयञ्च भूताग्निव्यापारो धातुष्वप्यस्ति। तेन धातुष्वपि पञ्च भूतानि सन्ति। तत्रापि धात्वग्नि-व्यापारो भूताग्निव्यापारश्च जाठराग्निक्रमेणैवोक्तो ज्ञेयः। अग्निपक्कानाहारगुणानाह—यथास्व-मिति। यथास्वं यद्यस्यात्मीयम्। सजातीया द्रव्यगुणा द्रव्यगुणान् पुष्णन्ति। तेन द्रव्याणि पार्थिवादिद्रव्यरूपाणि देहधातुदोषमलाख्यानि पुष्णन्ति, गुणास्तु पाकस्थितगन्धस्नेहौष्ण्य-गौरवादयः देहगन्धस्नेहौष्ण्यगौरवादीनि पुष्णन्ति। यथास्वमित्यादिशब्दार्थं स्फोरयति—पार्थिवा आहारद्रव्यगुणाः देहगतान् पार्थिवानेव द्रव्यगुणान् पुष्णन्ति। आहारद्रव्यगुणा इत्यत्र द्रव्यगत-गुणा एव उच्यन्ते। द्रव्यपोषणन्तु गुणपोषणेन लभ्यते गुणपोषणं द्रव्यपोषणमन्तरा कर्त्तु-मशक्यत्वात् ॥ ९ ॥

सप्तभिर्देहधातारो धातवो द्विविधं पुनः।
यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादतः * ॥ १० ॥
रसाद्‌ रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च।
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्‌ गर्भः प्रसादजः ॥ ११ ॥

गङ्गाधरः—अनेन प्रकारेणाभ्यवहृतादन्नात् पकात् भौमादयो गुणा देहे भौमादिगुणपोषका भवन्तु, देहस्तु कुतः पुष्यतीत्यत आह—सप्तभिरित्यादि। देहधातारो देहधारका रसादयो धातवो यथास्वं स्वैः स्वैः सप्तभिरग्निभिः किट्टप्रसादतो द्विविधपाकं यान्ति ॥ १० ॥

गङ्गाधरः—तत्र प्रसादपाकमाह—रसादित्यादि। आहाराज्जाठराग्निना पकात् प्रसादांशभूतो यो धातुर्जायते स त्वाद्यो रसनामा धातुस्तस्माद् रसात् स्वगताग्निना पकात् प्रसादांशभूतं रक्तं जायते, ततो रक्तात् स्वगताग्निना पकात् प्रसादांशभूतं मांसं जायते, मांसात् स्वगताग्निना पकात् प्रसादांशभूतं मेदो जायते, ततो मेदसः स्वगताग्निना पकात् प्रसादांशभूतमस्थि जायते, अस्थ्नोऽपि स्वगताग्निना पकात् प्रसादांशभूतो मज्जा जायते, ततो मज्ज्ञः स्वगताग्निना पकात् प्रसादांशभूतं शुक्रं जायते, शुक्रमपि स्वगताग्निना पकं

चक्रपाणिः—भूताग्निव्यापारं दर्शयित्वा धात्वग्निव्यापारं दर्शयन्नाह—सप्तभिरित्यादि। देहधातार इति विशेषेण देहधारकाः। द्विविधमिति द्विप्रकारं पाकं, तदेव प्रकारद्वयमाह। किट्टप्रसादवदिति किट्टप्रसादरूप इत्यर्थः। शुक्रस्य तु किट्टवान् पाको न भवति, तथापि बहूनां किट्टवत्त्वात् द्विविधमिति निर्देशश्छत्त्रिणो गच्छन्तीति न्यायाज्ज्ञेयः। पुनरिति जाठराग्निपाकानन्तरं पाकजन्यानाम् रसादीनाम् उत्पादः ॥ १० ॥

चक्रपाणिः—क्रमेणाह—रसादित्यादि। रसाद्रक्तं प्रसादनं, ततो रक्तान्मांसं प्रसादनं, मांसान्मेदः प्रसादनमित्यादि, यावच्छुक्रात्। प्रसादशब्देन रसादिभ्यः प्रसादांशजन्या रक्तादयः किट्टांशजन्यास्तु वक्ष्यमाणाः कफादय इति। शुक्रात् तु निर्म्मलतया प्रसादज एव गर्भो भवति न तु मलः जन्यते। केचित् तु शुक्रमलतया श्मश्रूणि वदन्ति, तन्न, तन्त्रेऽनभिधानात्। यदि शुक्रमलः श्मश्रूणि तदा स्त्रीणामपि शुक्रतया श्मश्रूणि स्युः। रक्तादयो हि गर्भप्रभृत्येव पोष्यन्ते। तत्र च त्रिधा तूत्पादं वर्णयन्ति। यद्रसः स्वाग्निपच्यमानः रक्ततां याति रक्तं मांसतामित्याह—रसादिति। पूर्व्वपूर्व्वधातुपरिणामात् उत्तरोत्तरधातूत्पादः। यथा क्षीराद् दधि भवति दध्नो नवनीतं नवनीताद् घृतं घृतात् घृतमण्डः इत्येकः पक्षः। किंवा

* किट्टप्रसादवत् इति चक्रः।

रसात् स्तन्यं स्त्रिया रक्तमसृजः कण्डराः सिराः ।
मांसाद्व वसा त्वचः षट् च मेदसः स्नायुसम्भवः ॥ १२ ॥

यत् प्रसादांशभूतं देहे वर्त्तते तदेवाधिष्ठितदिष्टं वीजरूपम् । स्त्रिया संसर्गे च्युतात् तस्माच्छुक्राद् गर्भः स्यादिति प्रसादज उच्यते ॥ ११ ॥

गङ्गाधरः—एवं पुरुषवत् स्त्रिया अपि चाहाराद् रसादयः सप्त धातवः स्युः । तत्र विशेषमाह—रसात् स्तन्यं स्त्रिया रक्तमिति । स्त्रिया गर्भिण्या आहारजो रसस्त्रिधा भिद्यते, तस्यैकांशेन गर्भिण्याः गर्भपुष्टिरपरांशेन स्तन्यं प्रसादजं जायते । तत्-तृतीयांशो रक्तं द्वितीयधातुर्भवतीति पूर्व्वमुक्तं ; या त्वगर्भा तस्याश्च रसाद् रक्तमिति । तदेव क्रमेण मांसादयो भूत्वा शुक्रभावं गतं तच्छुक्रं स्वगताग्निना पक्वं प्रायेण भवत्यार्त्तवं रक्तं, स्वल्पन्तु शुक्रं वर्त्तते । इत्येव-मार्त्तवरक्ते मासेन जाते पूर्व्वमासजातमार्त्तवं प्रवर्त्तते वहिस्तदा स्त्रियमृतुमती-माहुरिति स्त्रिया विशेषः । पुंसः शुक्रात् पुत्रदुहित्रोः सिरास्नाय्वस्थिधमन्यः

रस एव रक्तं प्रथमं प्लावयति तत्र च रक्तस्थानसम्बन्धात् रक्तसादृश्यमनुभवति रक्तञ्च रक्तसमानेनांशेन पोषयति । ततो मांसमाप्लाव्य मांसपोषणं करोति, मांससादृश्यमनुवदति । एवम् उत्तरोत्तरधातून् रस एवाप्लावयति वर्द्धयति च । यथा केदारनिक्तं कुल्याजलं प्रत्यासन्नकेदारं तर्पयित्वा क्रमेण केदारिकेतराणि पयसा प्लावयति, किंवा आहाररसः उत्पन्नः अभिन्नैरेव मार्गैः रसरुधिरादीनि समानेनांशेन तर्पयति । तत्र च यः प्रत्यासन्नो धातुः तं शीघ्रं पुष्णाति । यस्तु विरुद्धो धातुः तस्य भिन्नमार्गतया चिरेण पोषणं भवति । क्षिप्र-चिरादिभेदेन शीघ्रचिरेण च गमनं भवति तद्वदिति ; क्षीरदधिन्यायात् केदारकुल्यान्यायात् खलेकपोतन्यायात् त्रेधा धातुपोषणक्रमः । तत्रेह शब्दार्थपर्य्यालोचनया केदारकुल्यान्यायः क्षीरदधिन्यायो वा सङ्गतः । खलेकपोतन्यायस्तु दुर्घटः । रसाद्रक्तं प्रसादजमित्यर्थे उत्पादनं दुःशकम् । प्रपञ्चितञ्चैतत् विविधाशितपीतीये तत्रैषोऽनुसरणीयः प्रपञ्चः । ननु विविधाशित-पीतीये आहाररसाद् रसादिपुष्टिरुक्ता पोष्यत्वादाहाररसात् रुधिरपोषको रसो भिन्न इत्यनेन तत्र रसद्वयं स्वीकृतम् । इह तु एकरक्तपोषको रस इति कथं न विरोधः ? मैवं, तत्रापि आहार-रसशब्देन आहारजः प्रसादोऽभिधीयते, स च रसग्रहणेन गृहीत एव । यतो द्विविधो रसः स्थायी पोषकश्चेति, तेन तत्र धातुरसपोषकरसांशयोः भेदविवक्षया भेद उक्तः । इह स्थायी पोषक-रससारस्यैकतया निर्द्दिष्टयोः स्थायिरसपोषकरसभावयोः स्थानाग्निभावाद्यभावात् एकत्वम् एवं कृत्वा सप्तधातुकं शरीरमुच्यते । एतदपि विविधाशितपीतीये प्रपञ्चितम् ॥ ११ ॥

चक्रपाणिः—धातूनां पोषणमभिधाय उपधातुपोषणमाह—रसात् स्तन्यमित्यादि । रसात् स्तन्यं प्रसादजं, ततस्तन्याद् रक्तं स्त्रीणाञ्चार्तवमिति । असृजः कण्डरादिस्थूलस्नायवः मेदसस्तु सूक्ष्मस्नायुपोषणम् मेदसः स्नायुसम्भव इत्यनेन वक्तव्यम् । इह हि कण्डराशब्देन स्थूल-

किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः।
पित्तं मांसस्य खमला मलः स्वेदस्तु मेदसः॥
स्यात् किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट् त्वचाम्।
प्रसादकिट्टौ धातूनां पाकादेवाविगर्हतः॥

उक्तास्तस्मादसृजः स्त्रीपुंसयोरेव द्वितीयाद्धातुतो, रक्ताद् यथा मांसं तथा प्रसादजाः कण्डराः सिराश्च। मांसाद्वसा षट् त्वचश्च। यथा मांसान्मेदः प्रसादजं तथा मांसात् प्रसादजा वसा षट् त्वचश्च सप्त चैके। मेदसश्च यथा प्रसादजमस्थि तथा स्नायुसम्भवः प्रसादज इति। अस्थ्यादीनां प्रसादजमन्यन्नास्ति॥ १२॥

गङ्गाधरः—किट्टमित्यादि। अन्नस्य भुक्तस्य पक्वस्य किट्टं विण्मूत्रं, भौमान्नस्य भूमेः किट्टं विट्, आप्यान्नस्यापां किट्टं मूत्रं, सर्व्वान्नस्य प्रसादजो रस उक्तः। रसस्य तु पक्वस्य किट्टं कफः, प्रसादजन्तु रक्तमुक्तमपां मध्यमांशभूतम्। सूक्ष्मांशः प्राणः। असृजः पक्वस्य किट्टं पित्तं, प्रसादजं मांसम्। पाञ्चभौतिकान्नस्य भूमेर्मध्यमांशरूपं सूक्ष्मांशपुष्टं मनः। मांसस्य पक्वस्य किट्टं खमला इति यावन्ति शरीरे श्रोत्रादीनां छिद्राणि तावतां छिद्राणां मलाः। मेदसस्तु मलः स्वेदः। तेजसः पक्वस्य स्थूलांशस्य अस्थ्नः पक्वस्य किट्टं केशलोम, प्रसादजो मज्जा तेजसो मध्यमांशभूतः सूक्ष्मांशभूता वाक्। मज्ज्ञः किट्टं स्नेहः शरीरगतः। त्वचां पक्वानां किट्टमक्षिविट्। इत्येवं धातूनां प्रसादकिट्टौ भुक्तान्नात्

स्नायु सूच्यते, सुश्रुते तु स्थूलशिरा धात्वन्तरापोषणात् शरीरपोषका अपि उपधातुशब्देनोच्यन्ते। रसादयस्तु शरीरधारकतया धात्वन्तरपोषकतया च धातुशब्देनोच्यन्ते। उक्तञ्च भोजे—'शिरास्नायुरजःसप्तत्वचो गतिविवर्जिताः। धातुभ्यश्चोपजायन्ते तस्मात् त उपधातवः' इति। अत्रापीह धातुभ्यश्चोपजायन्ते इत्यनेन जायन्त एव परं न जनयन्ति इत्युक्तम्। शुक्रन्तु ओजोजनकत्वात्। ओजस्तु उपधातुषु पठितं तस्य सप्तधातुरूपतया सप्तधात्वन्तरगतत्वादेव। अत एव तस्याग्निरपि पृथङ्नोक्तः॥ १२॥

चक्रपाणिः—प्रसादभागोत्पादमभिधाय मलभागोत्पादमाह—किट्टमित्यादि। रसस्य कफ इति रसे पच्यमाने किट्टं कफो भवति प्रसादश्च रक्तम्। एवं रक्तादिष्वपि ज्ञेयम्। मांसस्य च खला इति कर्णाक्षिनासास्यजननमलाः। मलः स्वेदस्तु मेदसः इति स्वेदो यद्यपि उदकविशेष एव उक्तस्तथापि तस्य मेदोमलत्वेनैवोत्पत्तिः, किंवा उदकादपि स्वेदो भवति, मेदोमलतया च भवति। यथा कफोऽवस्थापाकात् रसमलतया च भवति। अस्थिमलो नखोऽपि सुश्रुतप्रामाण्यादुन्नेयः। तत्राह—नखलोम चेत्यनेन अस्थिमलत्वं नखस्योक्तम्। उक्तञ्च विविधाशितपीतीये केशश्मश्रुलोमनखादयः पुष्यन्ति किन्तु शारीरेऽस्थिगणनायां विंशतिर्नखा इत्यनेन अस्थिगणना प्रोक्ता। तेन

परस्परोपसंस्तम्भाद् धत्तो देहे परस्परम् ।
वृष्यादीनां प्रभावस्तु पुष्णाति बलमाशु हि ॥
षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्त्तनम् ।
सन्तत्या भोज्यधातूनां परिवृत्तिस्तु चक्रवत् ॥ १३ ॥

एतावविगर्हितः पाकादेव भवतः। तौ प्रसादकिट्टौ धातू यतः परस्परोपसंस्तम्भात् देहे परस्परं धत्त इति। एषां प्रसादजधातूनां परिवर्त्तनकालमाह—वृष्यादीनामित्यादि। वृष्यद्रव्याणामौजस्यद्रव्यादीनाञ्च प्रभावस्त्वचिन्त्यक्रियाशक्तिराशु बलमोजः शुक्रं पुष्णाति विरेचनद्रव्यवत्। यथा विरेचनद्रव्यमाशु पुरीषपित्तकफादीन् विरेचयति, तथा वृष्यादिद्रव्यमाशु रसो भूत्वा क्रमेण रक्तादीनि भूत्वा शुक्रं विरेचयति। केचित् तु वृष्यावृष्यसर्व्वद्रव्याणां भुक्तानां पाकात् षड्भिः षड्भिरहोरात्रैः पञ्च पञ्च दिनानि क्रमेण पच्यमानात् रसादेः षष्ठे षष्ठे दिने परिवर्त्तनमिच्छन्ति; तेन मासेन शुक्रार्त्तवं स्यात्। कथं परिवर्त्तना ज्जीवति? सन्तत्येत्यादि। सन्तत्या भोज्यानां धातूनाञ्च सन्तत्या चक्रवद् रसादीनां परिवृत्तिर्न तु पूर्व्वपूर्व्वधातूनां परपरधातुरूपेण परिवर्त्तने पूर्व्वपूर्व्वधातुक्षयान्मरणं स्यात्। भोज्यानां सातत्यात् यथा रसस्य रक्तरूपेण परि-...र्त्तनं तथा भुक्तमन्नं पक्वं रसं पोषयति। इत्येवं परपररूपेण परिवर्त्तने पूर्व्वपूर्व्वधातुपुष्टिर्भवति॥ १३॥

क्रमेण प्रसादकिट्टौ भवत इत्यर्थः। संप्रति रक्तेन रसस्य पोषणं न क्रियते तथा मांसेनापि रक्तस्य इत्यादि परस्परं धातूनाम् उत्पादकत्वमाह—परस्परेत्यादि। धातुस्नेहपरम्परा परस्परोपस्तम्भेति अन्योन्यमुपस्नेहेन संस्तम्भाच्च सन्तर्पितेति यावत्। वृष्यादिद्रव्याणां धातुपरम्पराक्रमेण शुक्रजननादिकार्य्यं निषेधयन्नाह—वृष्यादीनामित्यादि। वृष्यादीनां क्षीरादिद्रव्याणां प्रभावो बलं शीघ्रं पुष्णाति। ततस्ते क्षीरादयः प्रभाववर्द्धितबलाः शीघ्रमेवात्मकार्य्यं शुक्रजननादि कुर्व्वन्ति यथोक्तधातुक्रमेणेत्यर्थः। किंवा वृष्यादीनां प्रभावाच्छुक्रादुत्पत्तिः शीघ्रं भवति। कियता कालेन धातुपरिवृत्तिर्भवति इत्याह—षड्भिरहोरात्रैः रसस्य शुक्ररूपतया परिवर्त्तनं भवतीति केचिदिच्छन्ति। तत्रोत्पन्नो रसः रक्तमेकेनाहोरात्रेणेति, एवं रसोत्पत्तिदिनं परित्यज्य षड्हेन शुक्रता भवति। यदा तु रसोत्पत्तिदिनमपि प्रक्षिप्यते तदा षड्भिर्दिनैरतिक्रान्तैः सप्तमे शुक्रभावतया परिवर्त्तनं भवतीति ज्ञेयम्। उक्तं हि पराशरे—आहारोपभोगदिनात् श्वः रसत्वं तृतीयेऽह्नि रक्तत्वं चतुर्थेऽह्नि मांसता मेदस्त्वं पञ्चमे षष्ठे त्वस्थित्वं सप्तमे मज्जता अष्टमे शुक्रता नियमेन भवति, किञ्च रसधातोः शुक्रधातुरूपतया परिणमनं यत् तदपि षष्ठदिनं निवर्त्तयेति। सुश्रुते—स खल्वाप्यो रसः एकैकस्मिन् धातौ त्रीणि त्रीणि कलासहस्राण्यवतिष्ठते पञ्चदश च

* इत्युक्तवन्तमाचार्य्यं शिष्यस्त्विदमचोदयत्।
रसाद् रक्तं प्रविशतः कथं देहेऽभिजायते॥
रसस्य च न रागोऽस्ति स कथं याति रक्तताम्।
द्रवाद् रक्तात् स्थिरं मांसं कथं तज्जायते नृणाम्॥
द्रवधातोः स्थिरान्मांसान्मेदसः सम्भवः कथम्।
श्लक्ष्णाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु॥
खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा।
मज्ज्ञस्तु परिणामेन यदि शुक्रं प्रवर्त्तते॥

गङ्गाधरः—कथमेवं स्यात् तत्र चाह—अत्र केचित् पठन्ति; इत्युक्तवन्त-माचार्य्यमित्यादि प्रश्नोत्तरे। आयुर्वर्णो बलमित्यादेरेतदन्तमुक्तवन्तमाचार्य्य-मात्रेयं शिष्योऽग्निवेश इदमचोदयत्। किमित्यत आह—रसादित्यादि। देहे रक्तं प्रविशतो रसाद् रक्तं कथमभिजायते; यतो रसस्य न रागोऽस्ति, स रसः कथं रक्ततां यातीत्येकः प्रश्नः। रसजाद् रक्ताद् द्रवात् स्थिरं तन्मांसं कथं नृणां जायत इति द्वितीयः। रसाज्जाताद् रक्ताज्जातान्मांसात् स्थिरात् कथं द्रवस्य मेदसः सम्भवः। श्लक्ष्णाभ्यां मांसमेदोभ्यां जातेष्वस्थिषु कथं खरत्वं जायते। अस्थिषु च खरेषु केन प्रकारेण स्निग्धो मृदुश्च मज्जा

कलाः। एवं मासेन रसः शुक्रीभवतीति ज्ञेयम्। एतत्पक्षद्वयमपि केचिदित्यादिना दर्शयति। स्वमतमाह—सन्तत्येत्यादि। भोज्ये उपयुक्ते सति धातूनां रसादीनां चक्रवत्परिवृत्तिर्भवति। अविश्रान्ता समुत्पत्तिर्धातूनां भवति। तत्र दृष्टान्तेन तु परिवृत्तिकालानियमं दर्शयति। यथा चक्रं पानीयोद्धरणार्थं नियुक्तैः वाह्यमानं बाहुबलप्रकर्षात् कदाचिदाश्वेव परिवर्त्तते कदाचित् बाहु-बलाप्रकर्षात् चिरेण एवं धातवोऽपि अग्न्यादिसौष्ठवात् शीघ्रमेव परिवर्त्तन्ते अग्न्यादिवैगुण्ये चिरेण वर्त्तन्ते इति। एवं सुश्रुतेनापि "स शब्दार्च्चिर्जलसन्तानवत् अणुना विशेषेणानुधावत्येव शरीरं केवलम्।" इति। अत्र कृष्णात्रेयेण रसपरिणामोऽपि अग्न्यादिभेदेन प्रकृष्टाप्रकृष्टकालज उक्त एव। तत्र हि जलसन्तानदृष्टान्तेन चिरेण मासपर्य्यन्तेन शुक्रोत्पत्तिः रसस्योक्ता। शब्दसन्तानदृष्टान्तेन तु नातिशीघ्रं नातिचिराच्च शुक्रोत्पत्तिरुक्ता। अर्च्चिःसन्तानदृष्टान्तेन तु चातिशीघ्रं चातिचिराच्च शुक्रोत्पत्तिर्भवति। तथान्यत्रापि उक्तं केचिदाहुरहोरात्रात् षड्रात्रादपरे परे। मासेन याति शुक्रत्वमन्नं पाकक्रमादिति। तदेतत् सकलं चक्रदृष्टान्तेन गृहीतं ज्ञेयम्॥ १३॥

* "इत्युक्तवन्तमित्यादि-स्थलान्निम्नमिवोदकम्" इत्यन्तसार्द्धत्रयोदशश्लोकानां चक्रपाणिकृता टीका मृगितापि न मिलिता। अतः पाठोऽयं चक्रपाणिसम्मतो न वेति चिन्तनीयम्।

सर्व्वदेहगतं शुक्रं प्रवदन्ति मनीषिणः ।
तथास्थिमध्यमज्ज्ञश्च शुक्रं भवति देहिनाम् ।
छिद्रं न दृश्यतेऽस्थ्नाश्च तन्निःसरति वा कथम् ॥ १४ ॥
एवमुक्तस्तु शिष्येण गुरुः प्राहेदमुत्तरम् ।
तेजो रसानां सर्व्वेषां मनुजानां यदुच्यते ।
पित्तोष्मणः स रागेण रसो रक्तत्वमृच्छति ॥
वाय्वम्बुतेजसा रक्तमुष्मणा चाभिसंयुतम् ।
स्थिरतां प्राप्य मांसं स्यात् स्वोष्मणा पक्कमेव तत् ॥
स्वतेजोऽम्बुगुणस्निग्धोद्रिक्तं मेदोऽभिजायते ।
पृथिव्यग्न्यनिलादीनां सङ्घातः स्वोष्मणा कृतः ॥
खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् ।
करोति तत्र शौषिर्य्यमस्थ्नां मध्ये समीरणः ॥

जायते। मज्ज्ञः परिणामेन शुक्रं जायत । इति यदि, तदा मनीषिणः सर्व्वं शुक्रं सर्व्वदेहगतं यत् प्रवदन्ति तथा तत्रास्थिमध्ये मज्जा मज्ज्ञस्तु शुक्रं भवति। अस्थ्नाश्च छिद्रं न दृश्यते कथं तदस्थिमध्यगतमज्जजातं शुक्रमस्थ्नामच्छिद्राणां वहिः सर्व्वदेहे निःसरति ॥ १४ ॥

गङ्गाधरः—इत्येतैः प्रश्नैः शिष्येणोक्तो गुरुरिदमुत्तरं प्राह—तेजो रसानामित्यादि। सर्व्वेषां मनुजानां रसानामाहारजधातूनां पाञ्चभौतिकानां यत् तेज उच्यते, तेन तेजसा रागेण स रसः पित्तोष्मणः पाकात् रक्तत्वमुपगच्छति। इति प्रथमप्रश्नोत्तरम् ।०। तच्च रक्तं वाय्वम्बुतेजसा चोष्मणा चाभिसंयुतं स्थिरतां प्राप्य मांसं स्यात्। इति द्वितीयस्य ।०। तच्च मांसं स्वोष्मणा पक्कं स्वतेजोऽम्बुगुणस्निग्धोद्रिक्तं मेदोऽभिजायते। इति तृतीयस्य ।०। अस्य मेदसः पृथिव्यादीनां सङ्घातः स्वोष्मणा कृतः स्वोष्मणा पाकात् खरत्वं प्रकरोति, ततो नृणां कठिनमस्थि जायते। इति चतुर्थस्य ।०। तत्र स्वोष्मणा पच्यमानेऽस्थ्नि

मेदसास्थीनि पूर्य्यन्ते स्नेहो मज्जा ततः स्मृतः।
तस्मान्मज्ज्ञस्तु यः स्नेहः शुक्रं संजायते ततः॥
वाय्वाकाशादिभिर्भावैः शौषिर्य्यं जायतेऽस्थिषु।
तेन स्रवति तच्छुक्रं नवात् कुम्भादिवोदकम्॥
स्रोतोभिः स्यन्दते देहात् समेतं शुक्रवाहिभिः।
हर्षेणोदीरितं वेगात् सङ्कल्पाच्च मनोभवात्॥
विलीनं घृतवद् व्यायामोष्मणा स्थानविच्युतम्।
वस्तौ सम्भृत्य निर्य्याति स्थलान्निम्नमिवोदकम्॥ १५॥
व्यानेन रसधातुर्हि विक्षेपोचितकर्म्मणा।
युगपत् सर्व्वतोऽजस्रं देहे विक्षिप्यते सदा॥

समीरणोऽस्थ्नां मध्ये शौषिर्य्यं करोति। इति पञ्चमस्य।०। मेदसेत्यादि। तदस्थिस्नेहेन मेदसा तानीस्थीनि पूर्य्यन्ते तेनास्थिमध्ये स्नेहो मज्जा भवति, तस्मादस्थिमध्यस्थान्मज्ज्ञस्तु पक्वात् स्वोष्मणा यः स्नेहस्ततः स्नेहात् सोमगुणात्मकं शुक्रं संजायते। मज्ज्ञि पच्यमाने ततो जायमाने शुक्रे वाय्वाकाशादिभिर्भावैरस्थिषु सर्व्वावयवेषु सूक्ष्मशौषिर्य्यं यज्जायते, तेन शौषिर्य्येणास्थिमध्यस्थमज्जपाकाज्जातं तत् शुक्रं स्रवति, नूतनात् कुम्भाद् यथोदकं स्रवति। इति षष्ठस्य। स्रोतोभिरित्यादि। शुक्रवाहिभिः स्रोतोभिस्तच्च शुक्रं देहात् स्यन्दते। कामिनीसन्दर्शनस्पर्शनादिना हर्षेणोदीरितं वेगात् सङ्कल्पान्मानसक्रियातः मनोभवात् कन्दर्पाविर्भावाच्च देहात् समेतं समागतं मैथुनादिव्यायामजेनोष्मणा घृतवद् विलीनं द्रवीभूतं स्थानाद्विच्युतं सत् वस्तौ सम्भृत्य वहिर्निर्य्याति यथोदकमुच्चस्थलान्निम्नं स्थलं निर्य्यातीति। देहान्निःसरणं प्रसङ्गादुक्तमिति॥ १५॥

गङ्गाधरः—इति प्रश्नोत्तरानन्तरं यथा स्वास्थ्यं वर्त्तते तदाह—व्यानेनेत्यादि। हि यस्मात् विक्षेपोचितकर्म्मणा व्यानेन वायुनाऽजस्रं देहे सदा सर्व्वतः पूर्व्वदक्षिणपश्चिमोत्तरोर्द्धाधो युगपद् रसधातुर्विक्षिप्यते, तस्माच्चक्रवत्

चक्रपाणिः—अथ कोऽन्नरसं रक्तादिधातुपोषकं प्रेरयति येन तत्र तत्र रसः सर्पतीत्याह—व्यानेनेत्यादि। रसरूपो धातुः किम्वा रसतीति रसो द्रवधातुरुच्यते। तेन रुधिरादीनामपि

क्षिप्यमाणः खवैगुण्याद् रसः सज्जति यत्र सः ।
तस्मिन् विकारान् कुरुते खे वर्षमिव तोयदः ॥
दोषाणामपि चैवं स्यात् तत्र देशे प्रकोपणम् ।
इति भौतिकधात्वन्न-पक्तृणां कर्म्म भाषितम् ॥ १६ ॥
अन्नस्य पक्ता सर्व्वेषां पक्तृणामधिपो मतः ।
तन्मूलास्ते हि तद्वृद्धि-क्षयवृद्धिक्षयात्मकाः ॥

परिवृत्तिः स्वास्थ्यञ्चानुवर्त्तते। क्षिप्यमाण इत्यादि। एवं व्यानेन क्षिप्यमाणो रसः खवैगुण्याद् रसवहस्रोतोवैगुण्यात् यत्र सज्जति लग्नो भवति न चलति, तस्मिन् स रसो विकारान् कुरुते, खवैगुण्यात् तोयदो यथा विवर्षं कुरुते। एवं दोषाणामपि यत्र सज्जनं तत्रैव देशे प्रकोपः स्यादिति। उपसंहरति— इतीत्यादि। इत्येतद् भौतिकानां धातूनामन्नानाञ्च पक्तारो येऽग्नयस्तेषां कर्म्म भाषितमिति ॥ १६ ॥

गङ्गाधरः—अन्नस्येत्यादि। तत्र सर्व्वेषां पक्तृणामधिपोऽन्नस्य पक्ता जाठराग्निर्मतः। कस्मादधिप इत्यत आह—तन्मूला इत्यादि। हि यस्मात् ते धात्वग्नयस्तदन्नपक्तवह्निमूलाः, यस्माच्च तदन्नपक्तजाठराग्नेर्वृद्ध्या धात्वग्नीनां

द्रवाणां ग्रहणं भवति। विक्षेपोचितं प्राकृतं कर्म्म यस्य स विक्षेपोचितकर्म्मा, तेन व्यानेन। युगपदित्येककालम्। सर्व्वतः इति सर्व्वस्मिन् देशे। विक्षिप्यते नीयते। अजस्रमिति अविश्रान्तम्। सदेति सर्व्वकालम्। नन्वेवं सर्व्वत्र रसविक्षेपे कथमेकदेशेन रसो विकाराश्रयो दृश्यते इत्याह— क्षिप्यमाण इत्यादि। खवैगुण्यादिति स्रोतोवैगुण्यात्। सज्जतीति तिष्ठति। विकारं कुरुत इति रसाश्रयी विकारं कुरुते, रसोऽपि विकारकरण आश्रयतया व्याप्रियते तेनेह तस्य कर्त्तृत्वं युक्तम्। खे वर्षमिव तोयद इति यथा चण्डेन वायुना नीयमानो मेघो यत्र सक्तो भवति तत्रैव वर्षं करोति तथा रसोऽपीत्यर्थः। यथा रसः एकदेशे विकारं करोति एवं दोषा अपि एकदेशविकारं कुर्व्वन्ति इत्याह। सुश्रुतेऽप्याह—"कुपितानां हि दोषाणां शरीरे परिधावताम्। यत्र सङ्गः खवैगुण्याद् व्याधिस्तत्रोपजायते"। उक्तमग्नीनां कर्म्म उपसंहरति—इति भौतिकेत्यादि। भौतिकाः पञ्च धात्वग्नयः सप्त अन्नपक्तैकः ॥ १४—१६ ॥

चक्रपाणिः—अन्नपक्तृमूलत्वे हेतुगर्भविशेषणमाह—तद्वृद्धीत्यादि। तस्य जाठराग्नेः वृद्ध्या वृद्ध्यात्मकाः क्षयेण च क्षयात्मकाः, तस्मादन्वयव्यतिरेकार्थविधायित्वात् तन्मूलाद् इत्यर्थः। यतश्च

* खे वर्षमिव तोयदः इति तथा स्यादेकदेशप्रकोपणम् इति चक्रधृतः पाठः।

तस्मात् तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः।
पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्ब्बलस्थितिः॥ १७॥
यो हि भुङ्क्ते विधिं त्यक्त्वा ग्रहणीदोषजान् गदान्।
स लौल्याल्लभते शीघ्रं वक्ष्यन्तेऽतः परन्तु ये॥ १८॥
अभोजनादजीर्णाति-भोजनाद् विषमाशनात्।
असात्म्यगुरुशीताति-रूक्षसंदुष्टभोजनात्॥

वृद्धिः क्षयेण क्षय इति, तस्मात् तमन्नपक्तारं हितविधिवद्युक्तैरन्नपानेन्धनैः प्रयतः सन् पालयेत्। कस्मात् पालयेत्? हि यस्मात् तस्यान्नपक्तुः स्थितौ आयुर्ब्बलयोः स्थितिः॥ १७॥

गङ्गाधरः—कस्मात् तत्स्थितावायुर्ब्बलस्थितिरित्यत आह—यो हीत्यादि हि यस्मात् यो विधिं त्यक्त्वा लौल्याल्लोभात् भुङ्क्ते स ग्रहणीदोषजान् गदान् शीघ्रं लभते। के गदाः? अतः परं ये गदा वक्ष्यन्ते। इति॥ १८॥

गङ्गाधरः—तेषां ग्रहणीदोषजानां गदानां कारणमविधिभोजनान्याह—

अयमन्तरग्निर्मूलं सर्व्वस्य तस्मात् तं पालयेदिति योज्यम्। विधिवद्युक्तैरित्यत्र आहारविधियोगात् उपयुक्तैः। आयुर्ब्बलस्थितिरित्यत्र अन्नपाचकाग्निस्थितौ आयुर्ब्बलादीनां स्थितिर्लक्षणीया॥ १७॥

चक्रपाणिः—विपर्य्यये दोषमाह—यो हीत्यादि। ग्रहणीदोषजा एतेन वक्ष्यमाणलक्षणाः चत्वारो ग्रहणीविकारा विशेषेण ग्रहणीदोषशब्दवाच्या गृह्यन्ते। तथाग्निमान्द्याजीर्णादयश्च ग्रहण्याश्रिता रोगा गृह्यन्ते। अग्निमान्द्याजीर्णादयस्तु यद्यपि ग्रहण्याश्रितत्वे ग्रहणीरोगा एव तथापीह ग्रहणीरूपनाडीव्यापारवैपरीत्येन ये जायन्ते त एव मुख्यग्रहणीशब्दवाच्याश्चत्वारो रोगाः। यतोऽभस्तु पक्वमामं वा इत्यादिना ग्रहणीगदसामान्यविशिष्टलक्षणविशिष्टमेव ग्रहणीगदं ग्रहणी-प्राकृतव्यापारोपमर्द्देन जायमानं वक्ष्यति। वक्ष्यति च ग्रहण्या दुष्टमदुष्टञ्च रूपम् "अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः"। "सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति"। न चेयं पक्वान्नविमोक्षलक्षणा दुष्टिः। अग्निदोषे आमाग्रजीर्णे शब्दे वा अनेन विशेषाभिधेयग्रहणी-शब्दत्वं ग्रहण्याश्रितदोषजन्यग्रहणीगदत्वमेवेहोच्यते। अग्निदोषाणां न विशेषाद् ग्रहणीगदत्वम् अतिसारे यद्यपि अपक्वान्नमुञ्चनमस्ति, तथापि तस्य भिन्नसंप्राप्तिकत्वात् तथा चिकित्साभेदात् ग्रहणीदोषान्यत्वमुक्तम्॥ १८॥

चक्रपाणिः—एवं व्यवस्थिते सामान्येन ग्रहणीदोषजविकाराणां हेत्वादीन्याह—अभोजनात्

विरेकवमनस्नेह-विभ्रमाद् व्याधिकर्षणात्।
देशकालर्त्तुवैषम्याद् वेगानाञ्च विधारणात्॥
दुष्यत्यग्निः स दुष्टोऽन्नं न तत् पचति लघ्वपि।
अपच्यमानं शुक्तत्वं यात्यन्नं विषताञ्च तत्॥ १६॥
तस्य लिङ्गमजीर्णस्य विष्टम्भः सदनं तथा।
शिरोरुक् चैव मूर्च्छा च भ्रमः पृष्ठकटीग्रहः॥
जृम्भाङ्गमर्द्दस्तृष्णा च ज्वरश्छर्द्दिःप्रवाहणम्।
अरोचकाविपाकौ च घोरमन्नं विषञ्च तत्॥
पित्तेन सह संसृष्टं दाहतृष्णामुखामयान्।
जनयत्यम्लपित्तञ्च पित्तजांश्चापरान् गदान्॥

अभोजनादित्यादि। अभोजनादिकमविधिभोजनं विरेकादिकश्चाग्निदुष्टिकारणं, विरेकादिविभ्रमोऽसम्यग्योगः। एभ्यो हेतुभ्योऽग्निदुष्यति, दुष्टः सोऽग्निस्तदन्नं लघ्वपि भुक्तं न पचति मन्दत्वात्। अपच्यमानं तदन्नं शुक्तत्वमम्लत्वं याति विषताञ्च तद् याति॥ १९॥

गङ्गाधरः—तस्याजीर्णस्यान्नस्य लिङ्गमाह—तस्येत्यादि। विष्टम्भ आध्मानं तथा सदनादिकञ्च। इत्येवमजीर्णं तद्घोरं भयानकमन्नं विषमिव मारकत्वाद् विषञ्चोच्यते। पित्तेनेत्यादि। तदन्नविषं पित्तेन संसृष्टं दाहतृष्णादि, पित्तज-मुखामयान् जनयति अम्लपित्तञ्च। पित्तजांश्चापरानोपचोपादीन् जनयति। तत्राम्लपित्तलक्षणमुक्तं तन्त्रान्तरे। तद्यथा। "अविपाकक्लमोत्क्लेश-

इत्यादि। देशवैषम्यं देशव्यापत। सा च जनपदोद्ध्वंसनीये प्रोक्ता। कालशब्देन च संवत्सरात्मककाल उच्यते। ऋतुशब्देन तु शिशिरादिऋतुः। कालवैषम्येण सर्व्वेषां वैषम्यं, सर्व्व एव ऋतवः पत्यन्ते, ऋतुवैषम्येण तु एक एवर्त्तुरिति विशेषः। शुक्तत्वमिति (आमताम्) अम्लत्वम्। विषतामिति विषरूपताम्। विषं यथा बहुविकारकारि भवति तथा तद्रूपताम्, अनेन सर्व्वे एवाजीर्णभेदा अवरुद्धा ज्ञया ये तन्त्रान्तरे "आमं विदग्धं विष्टब्धं कफपित्तानिलैः क्रमात्। अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः"॥ १९॥

चक्रपाणिः—तस्येति सामान्याजीर्णस्य। लक्षणं विष्टम्भ इत्यादि। विष्टम्भोऽप्रचलनरूपतया अवस्थानम्। घोरम् अन्नविषञ्च तत् पित्तेन संसृज्यमानम् इत्यादिना पित्तदुष्टस्याजीर्णस्य

यक्ष्मपीनसमेहादीन् कफजान् कफसङ्गतम्।
करोति वातसंसृष्टं वातजांश्चापरान् गदान्॥
मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगान् शकृद्गतम्।
रसादिभिश्च संसृष्टं कुर्य्याद् रोगान् रसादिजान्॥ २०॥

तिक्ताम्लोद्गारगौरवैः। हृत्कण्ठदाहारुचिभिरम्लपित्तं वदेद् भिषक्॥ विरुद्ध-दुष्टाम्लविदाहिपित्त-प्रकोपिपानान्नभुजो विदग्धम्। पित्तं स्वहेतूपचितं पुरा यत् तदम्लपित्तं प्रवदन्ति सन्तः॥ तृड्दाहमूर्च्छाभ्रमभोहकारि प्रयात्यधो वा विविधप्रकारम्। हृल्लासकोठानलसादहर्षे स्वेदाङ्गपीतत्वकरं कदाचित्॥ वान्तं हरित्पीतकनीलकृष्णमारक्तरक्ताभमतीव चाम्लम्। मांसोदकाभन्त्वति-पिच्छिलाच्छं श्लेष्मानुयातं विविधं रसेन॥ भुक्ते विदग्धेऽप्यथवाऽविदग्धे करोति तिक्ताम्लवमिं कदाचित्। उद्गारमेवंविधमेव कण्ठ-हृत्कुक्षिदाहं शिरसो रुजश्च॥ करचरणदाहमौष्ण्यं महतीमरुचिं ज्वरञ्च कफपित्तम्। जनयति कण्डूमण्डलपिड़काशतनिचितगात्ररोगचयम्॥ सानिलं सानिलकफं सकफं तच्च लक्षयेत्। दोषलिङ्गेन मतिमान् भिषङ्मोहकरं हि तत्॥ कम्पप्रलाप-मूर्च्छाचिमिचिमिगात्रावसादशूलानि। तमसो दर्शनविभ्रमविमोहहर्षाः स्यु-रनिलयुते॥ कफनिष्ठीवनगौरवजड़तारुचिशीतसादवमिलेपाः। दहन-बलसादकण्डू निद्रा चिह्नं कफानुगते॥ उभयमिदमेव चिह्नं मारुतकफसम्भवे भवत्यम्ले। विज्ञाय च भिषगेवं क्रिययारभेत यथादोषम्॥ रोगोऽयमम्ल-पित्ताख्यो यत्नात् संसाध्यते नवः। चिरोत्थितो भवेद् याप्यः कृच्छ्रसाध्यः स कस्यचित्।" इति। यक्ष्मेत्यादि। कफसङ्गतं तदन्नविषमजीर्णं यक्ष्मादीन् कफजान् गदान् जनयति। वातसंसृष्टं तदन्नविषं वातजांश्चापरान् गदान् करोति। मूत्रेत्यादि। मूत्रस्थं तदन्नविषं मूत्ररोगान् करोति। शकृद्-गतमन्नविषं कुक्षिरोगान् करोति। रसादिभिर्धातुभिः संसृष्टमन्नविषं रसादि-जान् रोगान् करोति॥ २०॥

लक्षणमाह। एतच्च पित्तादिसंसर्गकृतं लक्षणम्। अजीर्णस्य कोष्ठमात्रगतत्वेन यक्ष्मादिविकार-करणे सामर्थ्योपलब्धेः अम्लपित्तञ्चेति अम्लगुणोद्रिक्तं पित्तम्। अस्य तन्त्रान्तरे लक्षणमुक्तम् "अविपाकक्लमोत्क्लेद-तिक्ताम्लोद्गारगौरवैः। हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं विनिर्दिशेत्।" इति। यक्ष्मणस्त्रिदोषजत्वेऽपि स्रोतोऽवरोधे कफस्यापारम्याद्यात इह कफजत्वमुक्तम्। किट्टधातुयोगेन

विषमो धातुवैषम्यं करोति विषमं पचन् ।
तीक्ष्णो मन्देन्धनो धातून् विशोषयति पावकः ॥
युक्तं भुक्तवतो युक्तो धातुसाम्यं समं पचन् ।
दुर्ब्बलो विदहत्यन्नं तद् यात्यूर्द्ध्वमधोऽपि वा ॥
अधस्तु पक्कमामं वा प्रवृत्तं ग्रहणीगदः ।
उच्यते सर्व्वमेवान्नं प्रायो ह्यस्य विदह्यते ॥
अतिसृष्टं विबद्धं वा द्रवं तदुपवेश्यते ।
तृष्णारोचकवैरस्य-प्रसेकतमकान्वितः ॥

गङ्गाधरः—अन्नविषमेवंविधरोगकृत् कथं स्यादित्यत आह—विषम इत्यादि। विषमः पावको जाठराग्निर्भुक्तमन्नं विषमं पचन् धातुवैषम्यं वातादिवैषम्यं करोति। तीक्ष्णो जाठरः पावको मन्देन्धनोऽल्पाहारात्मककाष्ठः संस्तदाहारमिन्धनं दग्ध्वा रसादीन् धातून् विशोषयति। युक्तः समः पावको युक्तं मात्रावदाहारं भुक्तवतो जनस्य तदाहारं समं पचन् धातुसाम्यं करोति। दुर्ब्बलो मन्दः पावकः स्वल्पमप्यन्नं भुक्तवतो विदहति विगतपाकं करोति। तद्विदग्धमन्नमूर्द्ध्वं याति वमिना, अधोऽपि वा गुदेन याति। तत्राधस्तु यद् याति पक्कं वाप्यामं वा स ग्रहणीगद उच्यते। अस्य ग्रहणीगदवतो जनस्य सर्व्वमेव लघु वा गुरु वा स्निग्धं वा रुक्षं वान्नं यस्मात् प्रायो विदह्यते। तस्य लक्षणमाह—अतीत्यादि। तद्विदग्धमन्नमतिसृष्टं द्रवं

रसशेषाक्षस्य गदानाह—मूत्ररोगानित्यादि। रसादिजानित्यत्र ये रसादिजा अरुच्यादय उक्तास्ते भवन्तीति ज्ञेयम् ॥ २० ॥

चक्रपाणिः—अजीर्णलक्षणमभिधाय अग्निदोषलक्षणमाह—विषम इत्यादि। तीक्ष्णाग्निकार्य्यमाह—तीक्ष्ण इत्यादि। अत्र मन्देन्धन इत्यनेन तीक्ष्णोऽपि यदि शुचीन्धनो भवति तदा धातुपोषणं भवतीति दर्शयति। अग्निप्रसङ्गात् समाग्नेः कार्य्यमाह—युक्तमित्यादि। युक्त इति समः। युक्तरूपं पचन् धातुसाम्यं करोति इत्यर्थः। समशब्देन समानो वायुः अग्निसहायो गृह्यते। किंवा युक्तवायुतया धातुसाम्यं करोति, युक्तशब्देन च कफपित्तसाम्यम् अग्नौ गृह्यते। यतः समः सर्व्वैरिति वचनेन समाग्नित्वमुक्तम्। मन्दाग्निव्यापारमाह—दुर्ब्बल इत्यादि। युक्तविकारेषु प्रधानत्वेन अध्यायप्रकृतं ग्रहणीदोषविकारं निर्द्धारयन्नाह—अधस्त्वित्यादि। पक्कमामं वेति वाशब्दः समुच्चये। तेन किञ्चित्पक्कं किञ्चिदपक्कम्। कुतः पक्कापक्कं स्रवतीत्याह—सर्व्वम्

शूनपादकरः सास्थि-पर्व्वरुक् छर्दनं ज्वरः।
लोहानुगन्धि-तिक्ताम्ल उद्गारश्चास्य जायते ॥ २१ ॥
पूर्व्वरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः।
विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम् ॥ २२ ॥
अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता।
नाभेरुपर्य्यग्निबलेनोपष्टब्धोपबृंहिता ॥
अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः।
दुर्ब्बलाग्निबलाद् दुष्टा त्वाममेव विमुञ्चति ॥ २३ ॥

विबद्धं वा द्रवमुपवेश्यते वर्च्चस्त्यज्यते गुदेन। स च तृष्णाद्यन्वितः शूनपादकरः पादकरे शोफान्वितः सास्थिपर्व्वरुगादियुक्तश्च भवति। अस्य ग्रहणीगदिनो लोहानुगन्धितिक्ताम्लो रक्तगन्धानुगततिक्ताम्ल उद्गारश्च जायते। इति ग्रहणीगदस्य सामान्यलक्षणम् ॥ २१ ॥

गङ्गाधरः—अस्य पूर्व्वरूपमाह—पूर्व्वरूपन्तित्यादि। अन्नस्य भुक्तस्य प्रायो विदाहः अद्धपरिपाकः कदाचित् चिराच्च पाकः ॥ २२ ॥

गङ्गाधरः—ननु का पुनः ग्रहणीत्युच्यते इत्यत आह—अग्न्यधीत्यादि। अग्नेर्जाठराग्नेर्यदधिष्ठानं सा खल्वन्नस्य भुज्यमानस्य ग्रहणाद् ग्रहणी नाम नाड़ी मता। क्व च सा वर्त्तते इत्यत आह—नाभेरुपरि वर्त्तते, तदधस्ताज्जाठरोऽग्निर्वर्त्तते। तस्याग्नेर्बलेनोपष्टब्धा चोपबृंहिता च। यथाग्निबलं तथा सोपष्टभ्यते तथैवोपबृंह्यते। अग्नेरल्पबले स्वल्पाकारा भवत्यतिबले विपुला भवतीति। तस्याः कार्य्यमाह—अपक्वमित्यादि। भुक्तमपक्वमन्नं सा ग्रहणी

एवान्नं प्रायो ह्यस्य विदह्यते इति पक्वापक्वं भवति। अतिसृष्टमिति विमुक्तम्। तम एव तमकः ॥ २१ ॥

चक्रपाणिः—पूर्व्वरूपे विदाहोऽन्नस्येति विशिष्टो दाहो विदाहः ॥ २२ ॥

चक्रपाणिः—सम्प्रति ग्रहणीदोषस्य सुखप्रतिपत्त्यर्थं ग्रहण्याः स्वरूपं प्रकृतञ्च कर्म्म आह। अग्न्यधिष्ठानम् अग्नेराश्रय इत्यर्थः। ग्रहणीसंज्ञानिमित्तमाह—अन्नस्येत्यादि। ग्रहणादिति धारणात् नाभेरुपर्य्यन्नस्य धारणादित्यर्थः। किंवा नाभेरुपरि अग्नेरूर्द्ध्वज्वलनेन उपस्तम्भिता उपबृंहिता सती अपक्वम् अन्नं धारयति पक्वञ्च पार्श्वतः सृजति इति वामपार्श्वतः सृजति। यतः ग्रहणीगुदौ वामपार्श्वाश्रयौ तेन वामे च पार्श्वे पक्वं सृजतीत्युक्तम्। उपस्तम्भिता इति अग्निना

वातात् पित्तात् कफाच्च स्यात् तद्रोगस्त्रिभ्य एव च * ।
हेतुं लिङ्गं चिकित्साञ्च शृणु तस्य पृथक् पृथक् ॥ २४ ॥
कषायकटुतिक्तातिरुक्षशीताल्पभोजनैः ।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥
मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् ।
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥

धारयति पक्वञ्चान्नं विण्मूत्ररूपं पार्श्वतः सृजति। दुर्ब्बलाग्नेर्बलाद् दुष्टा तु ग्रहणी आममेवान्नं विमुञ्चति ॥ २३ ॥

गङ्गाधरः—तस्या रोगः कारणतो भिद्यते; वातादित्यादि। तस्या ग्रहण्या रोगस्तद्रोगो वातात् कुपितात् स्यात् पित्तात् स्यात् कफात् स्यात् त्रिभ्य एव च वातपित्तकफेभ्यो मिलितेभ्य एव च स्यादिति चतुर्व्विधो ग्रहणीरोगस्तस्य पृथक् पृथक् हेतुं लिङ्गं चिकित्साञ्च शृणु ॥ २४ ॥

गङ्गाधरः—तत्र वातं कोपयित्वा ग्रहणीरोगं यद् यत् कारणं करोति तदाह—कषायेत्यादि। अत्र केचित् पठन्ति—कटुतिक्तकषायातिरूक्षसन्दुष्टभोजनैरिति पाठम्। संयोगविरुद्धभोजनं संदुष्टभोजनम्। शीतादिभोजनैरिति पाठे आदिना सूक्ष्मलघ्वादिग्रहणम्; अस्मिन् पाठे प्रमितानशनेति पाठः, प्रमितमल्पाशनम्। इहाल्पभोजनैरिति पाठे प्रमृतानशनेति पाठः। प्रमृतमतीतकालभोजनमनशनं लङ्घनम्। एभिर्मारुतः तथा कुप्यति यथा वह्निं संछाद्य ग्रहणीगदान् कुरुते नान्यान्, इत्युभयहेतव एवैते न तु वातकोपस्यैव हेतवः। एवं सर्व्वत्र निदानोपदेशे बोध्यम्। अस्य लिङ्गान्याह—तस्यान्नमित्यादि।

पित्तव्यापारकरणेन अनुकूलिता, उपबृंहितेति अग्निना बृंहणव्यापारकरणेन सशक्तीकृता किंवा उपस्तम्भत्वेन उपबृंहिता अत्र पक्षे उपस्तम्भसाधारण्यं ग्रहण्या आह। ग्रहण्याः प्राकृतं कर्म्म अभिधाय वैकृतं कर्म्म आह—दुर्ब्बलेत्यादि। दुर्ब्बलाग्निश्च अबलाश्चेति किंवा दुर्ब्बलम् अग्निबलं यस्याः सा दुर्ब्बलाग्निबला। दुष्टादिति दोषदुष्टात्। आमं विमुञ्चतीति अपक्वमेवान्नं विमुञ्चति। पूर्व्वरूपे पक्वमामं वा विमुञ्चतीत्यनेन विदग्धरूपमाममेवोक्तम्। इह त्वामं नियमेन विमुञ्चति इति न विरोधः ॥ २३ ॥

चक्रपाणिः—वातपित्तकफसन्निपातजान् ग्रहणीभेदानाह—वातादित्यादि। सर्व्वादिति सन्निपातात् ॥ २४ ॥

* वातात् पित्तात् कफात् सर्व्वोद्ध ग्रहणीदोष उच्यते।

कण्ठास्यशोषः क्षुत् तृष्णा तिमिरं कर्णयोः स्वनः।
पार्श्वोरुवङ्क्षणग्रीवा-रुगभीक्ष्णं विसूचिका ॥
हृत्पीड़ा कार्श्यदौर्ब्बल्यं वैरस्यं परिकर्त्तिका।
गृद्धिः सर्व्वरसानाञ्च मनसः सदनं तथा ॥
जीर्णे जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च।
स वातगुल्महृद्रोग-प्लीहाशङ्की च मानवः ॥
चिराद्द दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत्।
पुनःपुनः सृजेद्द वर्च्चः श्वासकासार्द्दितोऽनिलात् ॥ २५ ॥

शुक्तपाकमम्लपाक मन्दाग्निजनितान्नविदाहात्। खराङ्गता वातगुणरौक्ष्यत्त्वग्गतस्नेहशोषात् कर्कशाङ्गत्वं, कण्ठास्यद्रवशोषात् कण्ठास्यशोषश्च, क्लोम्नः शोषात् तृष्णा क्षुधा, रौक्ष्यलाघवाभ्यां तिमिरं नेत्ररोगविशेषस्तेनाल्पा दृष्टिः। पार्श्वादिषु रुक् पीड़ा अभीक्ष्णं भवति। विसूचिका सूचीभिरिव गात्रवेदनासहितामान्नस्योर्द्ध्वाधःप्रवृत्तिः, परिकर्त्तिका गुददेशे कर्त्तनवत् पीड़ा। सर्व्वरसानामाहारे गृद्धिर्लोभः राजसत्वेन मनोराज्याधिकभावात्। मनसः सदनं ग्लानिः व्याधियातनया। भुक्तेऽन्ने जीर्णे च जीर्य्यति चाध्मानं भुक्ते भुक्तमात्रे स्वास्थ्यमुपैति। स वातग्रहणीरोगवान वातगुल्माद्याशङ्की वातगुल्माकारवदुदरे लक्ष्यते न च वातगुल्मः, वातहृद्रोगवद् हृदये पीड़ा लक्ष्यते न तु वातहृद्रोगः, वातप्लीहवद्वामकुक्षौ लक्ष्यते न तु वातप्लीहेति। स च मानवो द्रवं वर्च्चः क्वचिच्छुष्कं वर्च्चः क्वचित् तनु स्वल्पं वर्च्चः क्वचिदाममपक्वं वर्च्चः शब्दफेनवदधोवातकृतशब्दसहितं फेनवच्च पुनःपुनः सृजेत् मुञ्चेत्। एवं श्वासकासाभ्यामर्द्दितः स्याद‌निलाद् ग्रहणीरोगे ॥ २५ ॥

चक्रपाणिः—शुक्तमिवान्नस्य पाकः शुक्तपाकः। गृद्धिः सर्व्वरसानामिति सप्तम्यर्थे षष्ठी। जीर्णे जीर्य्यति अन्न इति शेषः। गुल्मादिशङ्कित्वं गुल्मादिसदृशपीड़ायुक्तत्वेन भवति ॥ २५ ॥

कट्वजीर्णविदाह्यम्ल-क्षाराद्यैः पित्तमुल्वणम् ।
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठ-दाहारुचितृडर्द्दितः ॥ २६ ॥
गुर्व्वतिस्निग्धशीतादि-भोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ।
आस्योपदेहमाधुर्य्य-कासष्ठीवनपीनसाः ॥

गङ्गाधरः—पित्तग्रहणीरोगहेतूनाह—कट्वजीर्णत्यादि । विदाहि अर्द्धपरिपाकि भृष्टतण्डुलादि । क्षारो भस्म परिस्रुतजलकृतः सतिक्तलवणरसो यवक्षारादिः । आदिना लवणतीक्ष्णादि । एभिरुल्वणं पित्तं तथा भवति यथा ग्रहणीगदानेव कुरुते नान्यानिति उभयहेतवः कट्वादयः । तथोल्वणं पित्तं द्रवांशेन जाठरमनलमाप्लावयद्धन्ति न चौष्ण्यादग्निं वर्द्धयति औल्वण्यात् । यथा तप्तजलं वाह्यमनलं द्रवेणाप्लावयद्धन्ति न चौष्ण्याद् वर्द्धयति । तस्य लिङ्गान्याह—स इत्यादि । स पित्तहतानलः पुरुषः पीताभः पित्तेन भूत्वा नीलपीताभमजीर्णं द्रवं पुरीषं सार्य्यते । पूत्यम्लोद्गारादिभिरर्द्दितश्च भवति । इति पित्तग्रहणीरोगलिङ्गम् ॥ २६ ॥

गङ्गाधरः—अथ कफग्रहणीरोगहेतूनाह—गुर्व्वतीत्यादि । आदिना मधुरद्रवपिच्छिलादीनां ग्रहणम् । भुक्तमात्रस्य जनस्य कफवृद्धौ पुनर्दिवास्वप्नात् स्निग्धात् ग्रहणीरोगारम्भको यथा स्यात् तथा कुपितः कफोऽग्निं हन्ति । उक्तं प्राक्—रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा । अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितमिति । अभुक्तवतस्तु नाग्निं हन्ति दिवास्वप्नः । न चेह रात्रिस्वप्नो विवक्षितः । तस्य भुक्तमात्रदिवास्वप्नकुपितकफहताग्नेः पुंसो दुःखं यथा स्यात् तथा अन्नं भुक्तं पच्यते । हृल्लासादयश्च स्युः ।

चक्रपाणिः—पैत्तिके पित्तेनाग्निहननं क्रियते इति दर्शयन्नाह । उष्णस्यापि हि द्रवतया अग्निनिर्व्वापणे दृष्टान्तमाह—जलं तप्तमित्यादि ॥ २६ ॥

हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम्॥
भिन्नामश्लेष्मभूयिष्ठ-गुरुवर्च्चःप्रवर्त्तनम्।
अकृशस्यापि दौर्ब्बल्यमालस्यञ्च कफात्मके॥ २७॥
यश्चाग्निः पूर्व्वमुद्दिष्टो रोगानीके चतुर्व्विधः।
तस्यापि ग्रहणीदोषं समवर्ज्जं प्रचक्षते॥ २८॥
पृथग्वातादिनिर्द्दिष्ट-हेतुलिङ्गसमागमे।
त्रिदोषं निर्द्दिशेदेवमतो वक्ष्यामि भेषजम्॥ २९॥

आस्यस्योपदेहमाधुर्य्य भवतः। स च हृदयं स्त्यानं सान्द्रमिव मन्यते। स्तिमितं निश्चलमिवार्द्धं गुरु च उदरं मन्यते। दुष्टो विकृत एव मधुर उद्गारः। भिन्नश्च आमश्च श्लेष्मभूयिष्ठश्च गुरु च वर्च्चस्तस्य प्रवर्त्तनम्। अकृशस्यापि देहपुष्टस्य दौर्ब्बल्यमालस्यञ्च। कफात्मके ग्रहणीगदे भवति। इति कफज-ग्रहणीगदलक्षणम्॥ २७॥

गङ्गाधरः—तर्हि किमेतावानेव ग्रहणीगद उतान्योऽपि अस्तीत्यत आह—यश्चेत्यादि। विमानस्थाने रोगानीकेऽध्याये पूर्व्वं यश्चतुर्व्विधो जाठरोऽग्निः उद्दिष्टस्तत्र समाग्निवर्ज्जं त्रिविधं तं विषमतीक्ष्णमन्दाग्निं ग्रहणीदोषमृषयः प्रचक्षते॥ २८॥

गङ्गाधरः—त्रिभ्य एव चेति यदुक्तं तत् त्रिदोषजग्रहणीरोगहेतुलिङ्गान्याह—पृथगित्यादि। वातादिग्रहणीगदे निर्द्दिष्टानां कषायकटुतिक्तेत्यादि-वातग्रहणीगदहेतु-कट्वजीर्णेत्यादिपित्तग्रहणीगदहेतु-गुर्व्वतिस्निग्धेत्यादिकफग्रहणीगदहेतूनां समागमे मेलने त्रिदोषं ग्रहणीगदहेतुं निर्द्दिशेत्। तथा तस्यान्नं पच्यते दुःखमित्यादि-वातग्रहणीगदलिङ्ग-सोऽजीर्णमित्यादिपित्त-

चक्रपाणिः—गुर्व्वित्यादिना कफजग्रहणीमाह। दौर्व्बल्यं बलहानिः॥ २७॥

चक्रपाणिः—यश्चाग्निरित्यादिश्लोकं केचित् वैशेषिकग्रहणीदोषव्यतिरिक्तदोषत्रयजग्रहणी-रोगान्तर्निवेशनप्रसङ्गत इति दर्शयति इति कृत्वा अनार्षं वदन्ति, किन्तु तस्यापीति पदेनाग्निमान्द्यादीनां प्राकृतानां सामान्याद् ग्रहणीदोषाबाधे सति न किञ्चिद्विरोधं पश्यामः। सामान्यग्रहणीदोषेऽपि अग्निमान्द्यादय उक्ता इति दर्शितमेव। समवर्ज्जमिति समप्रकृतिपुरुषाग्निवर्ज्जम्॥ २८। २९॥

ग्रहणीमाश्रितं दोषं विदग्धाहारमूर्च्छितम् ।
सविष्टम्भप्रसेकार्त्ति-विदाहारुचिगौरवैः ॥
आमलिङ्गान्वितं ज्ञात्वा सुखोष्णेनाम्बुनोद्धरेत् ।
फलानां वा कषायेण पिप्पलीसर्षपैस्तथा ॥
लीनं पक्वाशयस्थं वाप्यामं स्राव्यं सदीपनैः ।
शरीरानुगते सामे रसे लङ्घनपाचनम् ॥
विशुद्धामाशयायास्मै पञ्चकोलादिभिः शृतम् ।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपनान् ॥ ३० ॥
ज्ञात्वा तु परिपक्वामं मारुतग्रहणीगदम् ।
दीपनीययुतं सर्पिः पाययेताल्पशो भिषक् ॥

ग्रहणीगदलिङ्ग-तस्यान्नमित्यादिकफग्रहणीगदलिङ्गानां समागमे त्रिदोषं ग्रहणीगदलिङ्गं निर्द्दिशेत् । अतः परं भेषजं वक्ष्यामि ॥ २९ ॥

गङ्गाधरः—तत्रादौ ग्रहणीदोषस्य आमतादिलक्षणमाह—ग्रहणीमित्यादि। ग्रहणीमाश्रितं दोषं मन्दाग्निना विदग्धाहारमूर्च्छितं विष्टम्भादिभिरामलिङ्गान्वितं ज्ञात्वा सुखोष्णेनाम्बुना उद्धरेत् वामयेत् । तथा पिप्पलीसर्षपकल्कसहितेन मदनस्य फलानां बीजकषायेण वा उद्धरेत् वामयेत् । पक्वाशयस्थं लीनं वाप्यामं विष्टम्भादिभिर्ज्ञात्वा सदीपनैः पञ्चकोलादिभिः सह विरेचनेन स्राव्यम् । शरीरानुगते सामे रसे लङ्घनं पाचनञ्च कार्य्यम् । विशुद्धामाशयाय वमनेन आमाशयशुद्धाय अस्मै पुंसे पञ्चकोलादिभिर्दीपनैः शृतं पेयादि लघ्वन्नं दद्यात् । पुनर्दीपनयोगांश्च दद्यात् ॥ ३० ॥

गङ्गाधरः—ज्ञात्वेत्यादि । परिपक्वामं ज्ञात्वा मारुतग्रहणीगदं जनं दीपनीय-

चक्रपाणिः—ग्रहणीमाश्रितमित्यादौ दोषमिति सामान्यवचनात् वातादीनां त्रयाणामपि ग्रहणम् । आमस्यापक्वस्य लिङ्गैरन्वितमिति आमलिङ्गान्वितम् । फलानामिति मदनफलानाम् । लीनमित्यनुत्क्लिष्टम् । पक्वाशयस्थमिति अधोगतत्वेन पक्वाशयसमीपगतम् । स्राव्यमिति विरेचनीयम् । सदीपनैरिति दीपनद्रव्यसंयुक्तैर्विरेचनप्रयोगैः । शरीरानुगते इति शरीरव्यापके । सामे रसे इति अपक्वे रसे । आमश्चात्रापक्वरूप एव इष्टः, आहाररसस्य रससम्बन्धेन शरीरव्यापकत्वात् । लङ्घनमनशनम् । पाचनं यवाग्वादि । विशुद्धामाशयाय इत्यत्र विशुद्धिर्हि विरेचनलङ्घनैर्यथायोग्यतया ज्ञेया ॥३०॥

किञ्चित्सन्धुक्षिते चाग्नौ सक्तविण्मूत्रमारुतम्।
द्व्यहं त्र्यहं वा संस्निह्य स्विन्नाभ्यक्तं निरूहयेत्॥
तत एरण्डतैलेन सर्पिषा तैल्वकेन वा।
सक्षारेणानिले शान्ते स्रस्तदोषं विरेचयेत्॥
शुद्धं रुक्षाशयं ज्ञात्वा सर्व्वशश्चानुवासयेत्।
दीपनीयाम्लवातघ्न-सिद्धतैलेन मात्रया
निरूढ़श्च विरिक्तश्च सम्यक् चाप्यनुवासितम्।
लघ्वन्नं प्रतिसंभुक्तं सर्पिरभ्यासयेत् पुनः॥ ३१

द्विपञ्चमूल्यौ सरलं देवदारु सनागरम्।
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्॥
शणबीजं यवान् कोलान् कुलत्थान् सुषवीस्तथा *।
पाचयेदारनालेन दध्ना सौवीरकेण वा॥

पिप्पल्यादिदशकयुतं सर्पिरल्पशः पाययेत। ततः किञ्चित्सन्धुक्षिते दीप्तेऽग्नौ सक्तविड़ादिकं तं नरं द्व्यहं त्र्यहं वा संस्निह्य ततः स्वेदयित्वा तैलादिस्नेहाभ्यक्तं निरूहयेत्। ततो निरूहानन्तरं शान्तेऽनिले स्रस्तदोषं स्थानाच्च्युतदोषं तं नरम् एरण्डतैलेन सक्षारेण तैल्वकेन सर्पिषा वा विरेचयेत्। एवंशुद्धं तं नरं रुक्षाशयं ज्ञात्वा सर्व्वशश्चानुवासयेत् इति। यदि सर्व्वशो रुक्षाशयता न स्यात् तदा नानुवासयेत्। येनानुवासयेत् तदाह—दीपनीयेत्यादि। दीपनीयदशकं पिप्पल्यादिकम् अम्लं तिन्तिड़ीकादि वातघ्नं वृहत्पञ्चमूल्यादिकं, तः कल्कैः सिद्धतैलेन मात्रयानुवासयेदिति। एवं निरूढ़श्च विरिक्तश्च सम्यगनुवासितश्च ग्रहणीदोषान्वितं नरं लघ्वन्नं प्रतिभोजितं पुनः सर्पिरभ्यासयेत्॥ ३१॥

गङ्गाधरः—तत् सर्पिराह—द्विपञ्चेत्यादि। द्वे पञ्चमूल्यौ दशमूली। सुषवी कृष्णजीरकम्। दशमूल्यादीनि द्वात्रिंशतिं प्रत्येकं समांशेन मिलित्वा

चक्रपाणिः—दीपनीययुतमिति षड्विरेचनशताश्रितीयोक्तदीपनीयग्रहणम्। स्नेहेनाभ्यक्तमिति स्नेहाभ्यक्तम्। स्रस्तदोषमिति निरूहेण स्रस्तदोषम्॥ ३१॥

चक्रपाणिः—द्वे पञ्चमूले इत्यादौ सुरभिस्वरसः जलस्थानीये आरनालादिकाथ्यश्च मिलित्वा

* सुरभीस्तथा इति चक्रधृतः पाठः।

चतुर्भागावशेषेण पचेत् तेन घृताढ़कम् ।
स्वर्ज्जिकायावशूकाख्यौ क्षारौ दत्त्वा तु युक्तितः ॥
सैन्धवोद्भिदसामुद्र-विड़ानां रौमकस्य च ।
ससौवर्च्चलपाक्यानां भागान् द्विपलिकान् पृथक् ॥
विनीय चूर्णितांस्तस्मात् पाययेत् प्रसृतं बुधः ।
करोत्यग्निबलं वर्णं वातघ्नं भक्तपाचनम् ॥ ३२ ॥

दशमूलाद्यं घृतम् ।

त्र्यूषणत्रिफलाकल्के विल्वमात्रे गुड़ात् पले ।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिवेत् ॥ ३३ ॥

त्र्यूषणाद्यं घृतम् ।

द्वात्रिंशच्छरावमितानि । आरनालेन चतुर्द्रोणेन दध्ना वा चतुर्द्रोणेन सौवीरकेण वा चतुर्द्रोणेन पाचयेत् । चतुर्भागावशेषेण चतुःषष्टिशरावेण तेन क्वाथेन घृताढ़कं षोड़शशरावं पचेत् । पक्वे पूते तत्र स्वर्ज्जिकाक्षारयवक्षारौ युक्तितो द्विपलात् किञ्चिन्न्यूनौ सैन्धवादीनां पृथक् द्विपलिकान् भागान् चूर्णितान् विनीय कल्कीकृत्य दत्त्वा पचेत् । पाक्यं लवणं पांशुज लवणम् । तस्मात् पक्वात् घृतात् प्रसृतं पलद्वयं बुधः पाययेदिति । बुध इत्युक्त्या यथाबलं पाययेदिति ख्यापितम् । शेषमाशीः । दशमूलाद्यं घृतम् ॥ ३२ ॥

<u>गङ्गाधरः</u>—त्र्यूषणेत्यादि । त्रिकटुत्रिफलयोर्मिलित्वा विल्वमात्रे पलमात्र कल्के गुड़ाच्च पले कल्के घृतस्य अष्टपलं द्वात्रिंशत्पलजले पक्त्वा मात्रां मन्दानलः पिवेत् । त्र्यूषणाद्यं घृतम् ॥ ३३ ॥

द्रोणं मानं ग्राह्यम् । क्षारौ दत्त्वा च युक्तित इति अनेन क्षारयोरनल्पमानत्वमुच्यते, किन्तु प्रक्षेप्यान्यतमलवणमानेन पृथक् क्षारौ देयौ । युक्तित इत्यनेन योग्ये काले क्षारयोगमाह । स च योग्यकालः घृतावतारणकाल एव । यदाह जतूकर्णः । दशमूलं पञ्चकोलं कुलत्थं सुरभिं यवम् । शणवीजञ्च कोलञ्च साधयेत् काञ्जिकेन तु । दध्ना सौवीरकेणैव तेन पक्वे घृताढ़के । द्वौ क्षारौ सप्तलवणं दापयेद् द्विपलान्वितम् । औद्भिदमुत्कारि उत्कारिकालवणम् । रोमकं रुमाभवं, पाक्यं पाकजम् ॥ ३२ ॥

<u>चक्रपाणिः</u>—अष्टपले घृते विल्वमात्र इति पलमाने कल्के । अष्टपलमानमेवात्र सर्पिः पक्तव्यम् महर्षिवचनेन फलदायित्वात् ॥ ३३ ॥

पञ्चमूलाभयाजाजी-पिप्पलीमूलसैन्धवैः।
विडङ्गत्र्यूषणाशटी-रास्नाक्षारद्वयैर्घृतम्॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च।
शुष्कमूलककोलाम्बु चुक्रिका दाड़िमस्य च॥
तक्रमस्तुसुरामण्ड-सौवीरकतुषोदकैः।
काञ्जिकेन च तत् पक्वमग्निदीप्तिकरं परम्॥
शूलगुल्मोदरश्वास-कासानिलकफापहम्।
सबीजपूरकरसं सिद्धं वा पाययेद् घृतम्॥
तैलमभ्यञ्जनार्थञ्च सिद्धमेतैः प्रदापयेत्।
एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना॥
वातश्लेष्मावृते सामे कफे वा वायुनोद्धते।
दद्याच्चूर्णं पाचनार्थमग्निसन्दीपनं परम्॥ ३४॥

पञ्चमूलाद्यं घृतं तैलं चूर्णञ्च।

गङ्गाधरः—पञ्चमूलेत्यादि। वृहत्पञ्चमूलादिक्षारद्वयान्तैः कल्कैर्घृतात् पादिकैर्घृतसमानेन शुक्तेन मातुलुङ्गस्वरसेन आर्द्रकस्य च स्वरसेन। शुष्कमूलकादीनां मिलितानां क्वाथेन घृतसमेन। तत्र अम्बु वालकम्। चुक्रिका चाङ्गेरी दाड़िमत्वक्। तक्रेण च घृतसमेन मस्तुना सुरामण्डेन सौवीरकेण धान्याम्लेन तुषोदकेन सतुषयवकृतेन काञ्जिकेन घृतसमेन तत् घृतं पक्वमग्निदीप्तिकरमित्याद्याशीः। (पञ्चमूलादिघृतम्।) सबीजपूरकरसं घृताच्चतुर्गुणेन मातुलुङ्गरसेन सह तैः कल्कैः तैश्च द्रवैः सिद्धं घृतं वा पाययेत्। पूर्व्वोक्ताशीः। पञ्चमूलादिभिरुक्तैरेतैः सिद्धं तैलमभ्यञ्जनार्थं प्रदापयेत्। इति। वीजपूरकस्वरसे च तैः कल्कैस्तैर्द्रवैश्च सिद्धञ्च तैलं ज्ञेयं तदनन्तरमेतैरित्युक्तत्वात्। (पञ्चस्वरसे मूलादितैलं वीजपूरकतैलञ्च।) एतेषामित्यादि। पञ्चमूलादीनां

चक्रपाणिः—पञ्चमूलाद्ये शुक्तादित्रयोदशद्रवाणां प्रत्येकं स्नेहसमत्वम्। सबीजपूरकरसमित्यत्रापि पञ्चमूल्यादीनि कल्कत्वेनेच्छन्ति। किंवा पूर्व्वमेव घृतं वीजपूररससंयुक्तं पेयमित्यर्थः। तैलमित्यादौ एतैः पञ्चमूल्यादिभिः सिद्धं तैलं तथा एतेषामेव कल्कोक्तानां पञ्चमूल्यादीनां

मज्जत्यामा गुरुत्वाद् विट् पक्का तूत्प्लवते जले।
विनातिद्रवसंघात-शैत्यश्लेष्मप्रदूषणात् ॥
परीक्ष्यैवं पुरा सामं निरामञ्चामदोषिणम्।
विधिनोपाचरेत् सम्यक् पाचनेनेतरेण वा ॥ ३५ ॥
चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च।
व्योषं हिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥

क्षारद्वयान्तानां चूर्णं सुखाम्बुना पिबेद् योग्यत्वान्न तु शुक्तादीनामिहानुवृत्ति-रेतेषामिति पदेन चर्णत्वासम्भवात्। पञ्चमूलाद्यं घृतं तैलं चूर्णञ्च ॥ ३४ ॥

गङ्गाधरः—विदग्धाहारमूर्च्छितत्वेन ग्रहण्याश्रितदोषस्य विष्टम्भादिना लिङ्गेन आमलिङ्गमुक्तम्। सम्प्रति ग्रहणीदोषिणो विड़ामत्वलक्षणमाह—मज्जतीत्यादि। ग्रहणीदोषवतामामा विट् गुरुत्वाज्जले क्षिप्ता मज्जति। पक्का तु विट् अतिद्रवादिभिर्विना जले उत्प्लवते। अतिद्रवसंघातशैत्यश्लेष्मप्रदूषणात् पक्कापि जले मज्जति। पुरा त्वेवं सामं निरामञ्च परीक्ष्य तत्रामदोषिणं विधिनामपाकविधिना सम्यक्पाचनेन औषधेन उपाचरेत्। निरामञ्च पुनः इतरेण संशमनेनोपाचरेत् ॥ ३५ ॥

गङ्गाधरः—तत्र पाचनयोगमाह—चित्रकमित्यादि। चित्रकमूलादिचव्यान्तं चूर्णं वातश्लेष्मावृते ग्रहणीगदे तथा सामे ग्रहणीगदे केचित् सामे पुरीष इति वदन्ति। आमञ्च अनेकविधमाह। यदुच्यते—'आममन्नरसं केचित् केचित् तु मलसञ्चयम्। प्रथमं दोषदुष्टिञ्च केचिदामं प्रचक्षते'। भोजोऽप्याह—'आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः। आद्य आहारधातुर्यः स आम इति संज्ञितः।' भद्रसेनोऽप्याह—'एवमामाशयेऽप्यन्नं बहु सम्यङ्न जीर्य्यति। चीयमानं तदेवान्नं कालेनामत्वमाप्नुयात्' इत्यादि। तदिहापि तद्वचन-प्रामाण्याद् व्यवस्था कर्त्तव्या ॥ ३४ ॥

चक्रपाणिः—सामनिरामग्रहणीगदज्ञानार्थं सामनिरामविड्लक्षणमाह—मज्जतीत्यादि। आमात् गुरुत्वादिति आमाहितगुरुत्वात्। पक्वेति आमनिरामयोः द्वयोरपि आमपक्वलक्षणयोः अपवादमाह—विनातिद्रवेत्यादि। अतिद्रवत्वात् आमापि प्लवते। अतिसंहतत्वात् पक्कापि मज्जति। शैत्य-श्लेष्मप्रदूषणात् पक्कापि निमज्जति। ननु सविष्टम्भप्रसेकार्त्तीत्यत्र सामस्य लक्षणमुक्तम्, किमनेन सामतालक्षणेन पुनरुक्तेन? उच्यते, वातकफाधिकारात् तदुक्तं इदञ्च विड्ज्ञानार्थमुक्तम् इति विशेषः। परीक्ष्येत्यादौ निरामं वा सदोषिणमिति। आमदोषशब्देन ग्रहणीदोषो नान्यत्र अभिप्रेतः ॥ ३५ ॥

चक्रपाणिः—चित्रकमित्यादौ लवणानि चेत्यत्र कपिञ्जलाधिकरणन्यायेन लवणत्रयमिच्छन्ति

गुड़िका मातुलुङ्गस्य दाड़िमस्य रसेन वा।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥ ३६ ॥
चित्रकाद्या गुड़िका।

नागरातिविषामुस्त-क्काथः स्यादामपाचनः।
मुस्तान्तकल्कः पथ्या वा नागरञ्चोष्णवारिणा ॥
देवदारुवचामुस्ता-नागरातिविषाभयाः।
वारुण्यामासुतास्तोये कोष्णे वालवणाः पिबेत् ॥
वर्च्चस्यामे सशूले च पिबेद्‌ वा दाड़िमाम्बुना।
विड़ेन लवणं पिष्टं विल्वं चित्रकनागरम् ॥
सामे वा सकफे वाते कोष्ठशूलकरे पिबेत्।
कलिङ्गहिङ्ग्वतिविषा-वचासौवर्च्चलाभयाः ॥

प्रत्येकं समम् एकत्र चूर्णयेत्। तच्चूर्णं मातुलुङ्गस्य रसेनाम्लदाड़िमस्य रसेन वा मर्द्दयित्वा गुड़िका कृता भक्षितामं पाचयतीति। चित्रकाद्या गुड़िका ॥ ३६ ॥

गङ्गाधरः—नागरेत्यादि। नागरादित्रयस्य क्काथ एकयोगः। मुस्तान्तानां तेषां नागरादीनां त्रयाणां कल्को द्वितीयः। पथ्या चूर्णितैवोष्णवारिणा पीता आमपाचनीति तृतीयः। नागरञ्च चूर्णितमुष्णवारिणा पीतमामपाचनमिति चतुर्थः। देवदार्व्विति। देवदार्व्वादयोऽभयान्ता वारुण्यां संस्थिताः कालेनासुताः जातसन्धानाः पिबेदामपाचनीः। कोष्णे तोये वा आसुता जातसन्धानाः अलवणा ईषत्सैन्धवयुक्ताः पिबेत्। वर्च्चसीत्यादि। आमे सशूले च वर्च्चसि दाड़िमत्वक्क्काथेन ताः अभयान्ताः चूर्णिताः पिबेत्। विड़ेनेत्यादि। विल्वमामं चित्रकमूलं नागरञ्च त्रयं पिष्टं विड़ेन लवणेन लवणं कृत्वा सामे सकफे वा वाते कोष्ठे शूलकरे पिबेत्। कलिङ्गमिन्द्रयवः। कलिङ्गाद्यभयान्तान् चूर्णितान्

किन्तु अनियते स न्याया भवति इह तु पञ्चलवणानां प्राधान्येन दीर्घंजीविताये निर्द्दिष्टत्वात् पञ्चलवणस्यैव स्वरूतयोत्पादनत्वात् पञ्चैव लवणानि ग्राह्याणि ॥ ३६ ॥

चक्रपाणिः—मुस्तान्तकल्क इति उक्तनागरादिकल्क इत्यर्थः। चूर्णानि कृत्वा पिप्पली-

छर्द्यर्शोग्रन्थिशूलेषु पेयमुष्णेन वारिणा ।
पथ्यासौवर्च्चलाजाजी-चूर्णं मरिचसंयुतम् ॥
पिप्पलीमूलमभयां वचां कटुकरोहिणीम् ।
पाठां वत्सकवीजानि चित्रकं विश्वभेषजम् ॥
पिबेन्निःक्वाथ्य चूर्णानि कृत्वा चोष्णेन वारिणा ।
पित्तश्लेष्माभिभूतायां ग्रहण्यां शूलनुद्धितम् ॥
सामे सातिविषं व्योषं लवणक्षारहिङ्गुमत् ।
निःक्वाथ्य पाययेच्चूर्णं कृत्वा वा कोष्णवारिणा ॥ ३७ ॥
पिप्पलीं नागरं पाठां शारिवां वृहतीद्वयम् ।
चित्रकं कौटजं वीजं लवणान्यथ पञ्च च ॥
तच्चूर्णं सयवक्षारं दध्युष्णाम्बुसुरादिभिः ।
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातापहं नरः ॥ ३८ ॥

पिप्पल्याद्यं चर्णम् ।

मरिचौकुञ्चिकाम्बष्ठा-वृक्षाम्लकुड़वान् पृथक् ।
दशाम्लवेतसपलानीमांश्चापि पलांशिकान् ॥

कृत्वा उष्णेन वारिणा पिबेत् छर्द्यादिषु पथ्यादिमरिचान्तं चूर्णमुष्णेन वारिणा पिबेत्। पिप्पलीमूलमित्यादि। पिप्पलीमूलादि-विश्वभेषजान्तं निःक्वाथ्य पिबेत् अथवा चूर्णं कृत्वा उष्णवारिणा पिबेदिति। इति पिप्पल्यादि-दशकम्। ग्रहण्यां नाड्यां पित्तश्लेष्माभिभूतायां शूलनुत् शूलप्रशमनं हितम् इति। साम इत्यादि। सामे पित्तश्लेष्मदोषे अतिविषासहितं व्योषं निःक्वाथ्य लवणक्षारहिङ्गुयुक्तं पिबेदथवा चूर्णं कृत्वा कोष्णवारिणा पिबेत्॥ ३७ ॥

गङ्गाधरः—पिप्पलीमित्यादि। पिप्पल्यादीनि यवक्षारान्तानि चर्णं कृत्वा दध्याद्यन्यतमेन नरः पिबेत्। पिप्पल्याद्यं चूर्णम्॥ ३८ ॥

गङ्गाधरः—मरिचेत्यादि। औकुञ्चिका कृष्णजीरकः। मरिचादीनां प्रत्येकं

मूलाद्ये वमादीनि पिबेदित्यनुवर्त्तते। सामे दोषे सति पिप्पलीमूलादिषु अतिविषादि प्रक्षिप्य चूर्णं कर्त्तव्यमित्यर्थः। सुरादिभिरित्यत्र सुराशब्देन काञ्जिकसौवीरादिग्रहणम्॥ ३७। ३८॥

सौवर्च्चलं विड़ं पाक्यं यवक्षारंससैन्धवम्।
शटीपुष्करमूलानि हिङ्गु हिङ्गुशिराटिका॥
तत्सर्व्वमेकतः सूक्ष्मं चूर्णं कृत्वा प्रयोजयेत्।
हितं वाताभिभूतायां ग्रहण्यामरुचौ तथा॥ ३६॥

मरिचाद्यं चूर्णम्।

चतुर्णां प्रस्थमम्लानां त्र्यूषणस्य पलत्रयम्।
लवणानाञ्च चत्वारि शर्करायाः पलाष्टकम्॥
तच्चूर्णं शाकसूपान्न-रागादिष्ववचारयेत्।
कासाजीर्णारुचिश्वास-हृत्पाण्ड्वामयशूलनुत्॥ ४०॥

कुड़वमम्लवेतसपलानि दश। इमान् वक्ष्यमाणान् सौवर्च्चलादीन् अपि पलांशिकान् नीत्वा तत्सर्व्वमेकतः सूक्ष्मचूर्णं कृत्वा प्रयोजयेत् दध्यादिभिः। वाताभिभूतायां ग्रहण्यां हितं तथाऽरुचौ च। अत्र पाक्यं पांशुजलवणम्। हिङ्गुशिराटिका हिङ्गुपत्री। हिङ्गुपत्री वेणपत्री नाड़ी हिङ्गुशिराटिकेति पर्य्यायाः। लोके वेणुपातनामवनजविशेषः। मरिचाद्यं चूर्णम्॥ ३९॥

गङ्गाधरः—चतुर्णामित्यादि। चतुर्णामम्लानामम्लवेतसवृक्षाम्लकोलदाड़िमानां प्रस्थं प्रत्येकन्तु कुड़वमानं स्वरसम्। त्र्यूषणस्य। प्रत्येकं पलं मिलितस्य पलत्रयम्। लवणानाञ्च चतुर्णां सैन्धवसौवर्च्चलविड़ौद्भिदानां प्रत्येकमेकपलं मिलित्वा चत्वारि पलानि। शर्करायाः पलाष्टकमिति। तत्सर्व्वमेकीकृत्य संशोष्य चूर्णं कृत्वा शाकादिष्ववचारयेत्। इत्यवचारणचूर्णम्॥ ४०॥

चक्रपाणिः—चतुर्णां प्रस्थमम्लानामित्यत्र चतुरम्लं वृक्षाम्लाम्लवेतसदाड़िमबदररूपमाहुः। अन्ये तु चव्यत्वगित्यादिप्रयोगवक्ष्यमाणकपित्थचुक्रिकावृक्षाम्लदाड़िमानां गणमाहुः। तन्त्रान्तरे तु "वृक्षाम्लं मातुलुङ्गाम्लं बदरञ्चाम्लवेतसम्। चतुरम्लमिदं प्रोक्तं पञ्चाम्लन्तु सदाड़िमम्" इत्युक्तम्। त्र्यूषणाञ्च पलत्रयमिति मिलितात् पलत्रयम्। रागः कपित्थादिद्रव्यकृतो व्यञ्जनविशेषः॥ ३९। ४०॥

चव्यत्वक्पिप्पलीमूल-धातकीव्योषचित्रकान्।
कपित्थाम्बष्ठकीहस्ति-पिप्पलीविल्वशाल्मलम्॥
शिलोद्भेदं तथाजाजीं पिष्ट्वा वदरसम्मिताम्।
घृतेन भर्ज्जितां दध्ना यवागूं साधयेद् भिषक्॥
रसैः कपित्थचुक्रीका-वृक्षाम्लैर्दाडिमस्य च।
सर्व्वातिसारग्रहणी-रोगार्शःप्लीहनाशिनीम्॥ ४१ ॥
पञ्चकोलकयूषश्च मूलकानाञ्च सोषणः।
स्निग्धो दाड़िमतक्राम्लो जाङ्गलः संस्कृतो रसः॥
क्रव्यादस्य रसः शस्तो भोजनार्थे सदीपनः।
तक्रारनालं पानार्थं मद्यं वारिष्टमेव वा॥ ४२ ॥

गङ्गाधरः—चव्येत्यादि। अम्बष्ठकी पाठा। विल्वशलाटुः। शाल्मलं शाल्मलीवेष्टम्। शिलोद्भेदं शालिञ्चः। सर्व्वामोषधिं वदरसम्मितां कोलपरिमाणां पिष्ट्वा कल्कं दत्त्वा क्षुद्रतण्डुलान् यवागूमग्निबलापेक्षया मण्डपेयाविलप्यन्यतमां चतुर्द्दशगुणषड्गुणचतुर्गुणदध्ना पक्त्वा घृते भर्ज्जितां साधयेत्। एवं कपित्थरसेन चुक्रीकारसेन च वृक्षाम्लरसेन च दाड़िमाम्लरसेन च तथैव यवागूं साधयेदिति पञ्चयवागूविधानम्। यवागूः॥ ४१ ॥

गङ्गाधरः—पञ्चकोलकेत्यादि। पञ्चकोलस्य कल्कसाध्यो वा क्वाथसाध्यो वा मुद्गादियूषः सोषणः समरिचः। मूलकानां शुष्काणां क्वाथकल्कान्यतरेण साधितः सोषणश्च मुद्गादीनां यूषः। जाङ्गलो रसः हरिणादिमांसरसः दाड़िमरसतक्राभ्यां कृताम्लो घृतेन स्निग्धो मरिचलवणादिना संस्कृतः। एवं क्रव्यादमांसस्य रसः मरिचादिर्वह्निदीपनद्रव्यसाधितो ग्रहणीदोषवतां भोजनार्थे उक्तयवागूभोजनार्थं शस्तो भवति। पानार्थे तक्रमारनालं मद्यमरिष्टं वा शस्तमिति॥ ४२ ॥

चक्रपाणिः—चव्येत्यादौ शाल्मलं शाल्मलीवेष्टकम्। शिलोद्भवं शैलजम्। चुक्रिका चाङ्गेरी॥ ४१ ॥

चक्रपाणिः—सोषण इति समरिचः॥ ४२ ॥

ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात्।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणम्॥
कषायोष्णविकाशित्वाद् रौक्ष्याच्चापि कफे हितम्।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत्॥
तस्मात् तक्रप्रयोगा ये जठराणां तथार्शसाम्।
विहिता ग्रहणीदोषे सर्व्वशस्तान् प्रयोजयेत्॥ ४३॥
यमान्यामलकं पथ्या मरिचं त्रिपलांशिकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत्॥

गङ्गाधरः—तत्र तक्रस्य विशेषमाह—ग्रहणीत्यादि। लाघवात् तक्रं ग्राहि। ग्रहणीदोषिणां वह्निदीपनं मधुरपाकित्वात् पथ्यम्। न च पित्तप्रकोपणम्। तर्हि किं कफवर्द्धनं मधुरपाकित्वादित्यत आह—कषायेत्यादि। कषायादिगुणाः कफगुणविरोधिनः, तस्मात् तक्रं कफे हितं प्राग् विकारात्। विकाशी विकशत्येव सन्धिबन्धं विमोक्षयन्निति। विपाके मधुररसेन पित्तं शमयति। तर्हि चाम्लत्वेन प्रथमं किं पित्तप्रकोपणं तक्रं कषायत्वाद् वातप्रकोपणमित्यत आह—वात इत्यादि। स्वाद्वम्लसान्द्रत्वात् वाते हितम्। तदम्लमपि सद्यस्कं न विदाहि भवति तेन न पित्तप्रकोपि। विरुद्धगुणसमवाये भूयसाऽल्पमवजीयते। तेन रूक्षकषायौ वातवर्द्धनौ स्वाद्वम्लसान्द्रा गुणा भूयांसोऽवजयन्ति न वातं वर्द्धयति कषायरौक्ष्यम्। कषायोष्णविकाशिरौक्ष्यगुणैरवजिताः स्वाद्वम्लसान्द्रा न कफं वर्द्धयन्ति, अम्लोष्णविकाशिगुणाः कषायस्वादुसान्द्रगुणैर्मधुरपाकेण चावजिताः पित्तं न वर्द्धयन्ति। प्रागुक्तं—रसं विपाकस्तौ वीर्य्यं प्रभावस्तान्यपोहति। इति। तस्मात् जठराणामुदराणां तथाऽर्शसां ये तक्रप्रयोगा विहितास्तांस्तक्रप्रयोगान् ग्रहणीदोषे सर्व्वशः प्रयोजयेत् इह चाह॥ ४३॥

गङ्गाधरः—यमानीत्यादि। यमान्यादिकं प्रत्येकं त्रिपलांशिकम्। पञ्च-

चक्रपाणिः—ग्रहणीत्यादिना तक्रगुणविधारणं मधुरपाकित्वात् न च पित्तप्रकोपणम्। अम्लत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्तं न प्रकोपयति। सद्यस्कम् अविदाहीति सद्यो मथितमेव तक्रं पच्यमानावस्थायां न विदाहकृद् भवति। किञ्चित्कालस्थितन्तु विदाहि भवत्येव॥ ४३॥

तक्रकंसासुतं जातं तक्रारिष्टं पिबेन्नरः ।
दीपनं शोफगुल्मार्शः-क्रिमिमेहोदरापहम् ॥ ४४ ॥

तक्रारिष्टम् ।

स्वस्थानगतमुत्क्लिष्टमग्निनिर्व्वापकं भिषक् ।
पित्तं ज्ञात्वा विरेकेण निर्हरेद् वमनेन वा ॥
अविदाहिभिरन्नैश्च लघुभिस्तिक्तसंयुतैः ।
जाङ्गलानां रसैर्यूषमुद्गादीनां खडैरपि ॥
दाड़िमाम्लैः ससर्पिष्कैर्दीपनग्राहिसंयुतैः ।
तस्याग्निं दीपयेच्चूर्णैः सर्पिर्भिश्चापि तिक्तकैः ॥ ४५ ॥

लवणानि पलांशानि प्रत्येकं सर्व्वमेकत्र चूर्णयेत् । तच्चूर्णं तक्रकंसे षोड़शशरावे प्रक्षिप्य स्थापयेत्, तत् तक्रकंसासुतं तक्रारिष्टं भवति—तत् दीपनादिगुणं नरो ग्रहणीदोषी पिबेत् । अत्र स्थापनकालानुक्तौ कालमानमाह"————स्निग्धे भाजनके भिषग् विनिहितं त्रीन् वासरान् स्थापयेत् । ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे । षट् शीतेऽष्टदिनान्यतः परमिदं जातं प्रयोज्यं बुधैः" इति । तक्रारिष्टम् ॥ ४४ ॥

गङ्गाधरः—पित्तग्रहणीरोगचिकित्साविशेषमाह—स्वस्थानेत्यादि । स्वस्थानस्थं द्रवं ग्रहणीरोगकरं पित्तमग्निनिर्व्वापकं ज्ञात्वा भिषक् विरेचनेन निर्हरेत् । उत्क्लिष्टं ज्ञात्वा वमनेन निर्हरेत् । निर्हृत्य चाहारार्थं यद् देयं तदाह—अविदाहीत्यादि । अविदाहिभिर्लघुभिरन्नैस्तिक्तसंयुतैः तिक्तद्रव्यकृतव्यञ्जनः जाङ्गलानां मांसरसैः मुद्गादीनां यूषैः खडैरनम्लैर्दाड़िमरसेनाम्लैर्मुद्गादीनां यूषैः ससर्पिष्कैः सर्पिषि संभृष्टैः प्रक्षिप्तसर्पिष्कैर्दीपनग्राहिभिर्मरिचजीरकादियुक्तैराहारैस्तस्य विरिक्तस्य वमितस्य चाग्निं दीपयेत् । एवं चूर्णैः तिक्तकैः सर्पिर्भिश्च तस्याग्निं दीपयेत् ॥ ४५ ॥

चक्रपाणिः—यमानीत्यादौ कंस इति आढकं, जातमिति अम्लरसतया जातम् ॥ ४४ ॥

चक्रपाणिः—वमनेन वेत्युद्धगपित्तापेक्षया ज्ञेयम् । सर्पिर्भिश्चापि तिक्तकैरित्यत्र व्याख्यार्थं बहुत्ववचनं किंवा कुष्ठोक्तं तिक्तघृतद्वयम् अन्यच्च तिक्तसाधितं घृतमिति बहुवचनं साधु ॥ ४५ ॥

चन्दनं पद्मकोशीरं पाठां मूर्व्वां कुटन्नटम्।
षड्ग्रन्थाशारिवास्फोता-सप्तपर्णाटरूषकान्॥
पटोलोडुम्बराश्वत्थ-वटप्लक्षकपीतनान्।
कटुकारोहिणीमुस्तं निम्बञ्च द्विपलांशिकम्॥
द्रोणेऽपां साधयेत् पाद-शेषं प्रस्थं घृतात् पचेत्।
किराततिक्तेन्द्रयव-वीरामागधिकोत्पलैः॥
कल्कैरक्षसमैः पेयं तत् पित्तग्रहणीगदे।
तिक्तकं यद् घृतञ्चोक्तं कौष्ठिके तच्च दापयेत्॥ ४६॥

चन्दनाद्यं घृतम्।

नागरातिविषामुस्तं धातकीं सरसाञ्जनम्।
वत्सकत्वक् फलं विल्वं पाठां तिक्तकरोहिणीम्॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम्।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम्॥ ४७॥

नागराद्यं चर्णम्।

गङ्गाधरः—तत्रादौ तिक्तकसर्पिराह—चन्दनमित्यादि। चन्दनादिकं प्रत्येकं द्विपलांशिकम् अपां द्रोणे पक्त्वा साधयेत् पादशेषम्। तेन घृतात् प्रस्थं किराततिक्तादिभिरक्षसमैः कल्कैः पचेत्। तत् पक्वं घृतं पित्तग्रहणीगदे पेयम्। एवं कौष्ठिके कुष्ठचिकित्सिते यत् तिक्तकं पञ्चतिक्तघृतादिकमुक्तं तच्च पित्तग्रहणीगदे दापयेत्। चन्दनाद्यं घृतम्॥ ४६॥

गङ्गाधरः—चूर्णमाह—नागरेत्यादि। नागरादिकं प्रत्येकं समांशं चूर्णं मिश्रयित्वा तण्डुलाम्बुमधुभ्यां गोलयित्वा पिबेत्। नागराद्यं चूर्णम्॥ ४७॥

चक्रपाणिः—कुटन्नटं कैवर्त्तमुस्तकम्, षड्ग्रन्था वचा, आस्फोता अस्फुरमल्लिका, कपीतनो गर्द्दभाण्ड इति ख्यातः॥ ४६

चक्रपाणिः—नागराद्ये सक्षौद्रमिति मधुप्रक्षेपयुक्तम्। तण्डुलाम्बुनेति तण्डुलधावनाम्बुना

भूनिम्बकटुकाव्योष-मुस्तकेन्द्रयवान् समान्।
द्वौ चित्रकाद् वत्सकत्वग्-भागान् षोड़श चूर्णयेत् ॥
गुड़शीताम्बुना पीतं ग्रहणीदोषगुल्मनुत्।
कामलाज्वरपाण्डुत्व-मेहारुच्यतिसारनुत् ॥ ४८ ॥

भूनिम्बाद्यं चूर्णम्।

वचामतिविषां पाठां सप्तपर्णं रसाञ्जनम्।
श्योनाकोदीच्यकटुङ्ग-वत्सकत्वग्दुरालभाः ॥
दार्व्वीपर्पटकं पाठां यमानीं मधुशिग्रुकम्।
पटोलपत्रं सिद्धार्थान् यूथिकां जातिपल्लवान् ॥
जम्ब्वाम्रविल्वमध्यानि निम्बशाकफलानि च।
तद्रोगशममन्विच्छन् भूनिम्बाद्येन योजयेत् ॥ ४९ ॥

गङ्गाधरः—भूनिम्बेत्यादि। भूनिम्बादीन् समानांशान् चित्रकाद् द्वौ भागावेकद्रव्यापेक्षया वत्सकस्य कुटजस्य त्वचः षोड़श भागानेकभागापेक्षया चूर्णयेत्। गुड़शीताम्बुना पीतं तच्चूर्णं ग्रहण्यादिनुत्। भूनिम्बाद्यं चूर्णम् ॥४८॥

गङ्गाधरः—वचामित्यादि। श्योनाकस्य कटुङ्गशब्देन पुनरुक्तत्वाद भागद्वयम्, जम्ब्वाम्रविल्वानां मध्यानि शस्यानि न तु वीजानि, निम्बस्य शाकं पत्रं फलानि च। भूनिम्बाद्येन यथोक्तमानेन वचादीनीमानि प्रथम-भागसमानि प्रत्येकं योजयेत् तद्भूनिम्बादिचूर्णवचनोक्तरोगशममन्विच्छन् ग्रहणीदोषवान् नर इति ॥ ४९ ॥

अन्ये तु तण्डुलाद् द्विगुणमम्बु तण्डुलेन समं चिरस्थितं तत् तण्डुलाम्बु वदन्ति। कृष्णात्रेयेण पूजितत्वोपदर्शितम् अस्य सिद्धयोगत्वं दृश्यते। कृष्णात्रेयः पुनर्व्वसुरभिन्नाविति बोध्यम् ॥ ४७ ॥

चक्रपाणिः—भूनिम्बाद्ये गुड़युतं शीताम्बु। गुड़श्चात्र माधुर्य्योपपत्तिमात्रो ज्ञेयः ॥ ४८ ॥

चक्रपाणिः—वचामित्यादौ श्योनाककटुङ्गशब्दाभ्यां द्वावपि श्योनाकौ गृह्येते। तद्-रोगशममन्विच्छन्निति भूनिम्बाद्युक्तग्रहणीदोषादिरोगशान्तिं काङ्क्षन्, भूनिम्बाद्येनेति भूनिम्बाद्युक्त-द्रव्यगणेन यथोक्तमानेन योजयेत् वचादीनि। अपरे तु भूनिम्बाद्येनेति वचनेन भूनिम्बाद्युक्त-गुड़शीताम्बुपेयतामतिदिशतीति वदन्ति ॥ ४९ ॥

किराततिक्तं षड्ग्रन्था त्रायमाणा कटुत्रिकम्।
चन्दनं पद्मकोशीरं दार्व्वीत्वक् कटुरोहिणी ॥
कुटजत्वक्फलं मुस्तं यमानी देवदारु च।
पटोलनिम्बपत्रैला-सौराष्ट्रातिविषात्वचः ॥
मधुशिग्रोश्च वीजानि मूर्व्वा पर्पटकं तथा।
तच्चूर्णं मधुना लेह्यं पेयं मद्यैर्जलेन वा ॥
हृत्पाण्डुग्रहणीरोग-गुल्मशूलारुचिज्वरान्।
कामलां पाण्डुरोगञ्च मुखरोगञ्च नाशयेत् ॥ ५० ॥

किराताद्यं चूर्णम्।

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्द्धयेत् ॥
पलाशं चित्रकं चव्यं मातुलुङ्गं हरीतकी।
पिप्पली पिप्पलीमूलं पाठाधान्यकनागरम् ॥
कार्षिकाण्युदकप्रस्थे पक्त्वा पादावशेषिते।
पानार्थं तत् प्रयुञ्जीत यवागूं तैश्च साधयेत् ॥ ५१ ॥

गङ्गाधरः—किराततिक्तमित्यादि। दार्व्यास्त्वक् दार्व्वीत्वक् कुटजस्य त्वक् च फलञ्च पटोलनिम्बयोः पत्रं सौराष्ट्री मृत् फटीकारी। त्वक् गुड़त्वक् मधुशिग्रो रक्तशोभाञ्जनस्य वीजानि। किराततिक्तादीनि समानि चूर्णयित्वा तच्चूर्णं मधुना लेह्यं मद्यं जलेन वा पेयम्। हृदित्याद्याशीः। किराताद्यं चूर्णम् ॥ ५० ॥

गङ्गाधरः—पित्तग्रहणीरोगचिकित्सितमुक्त्वा श्लैष्मिकचिकित्सितमाह—ग्रहण्यामित्यादि। यथाविधि वमितस्य श्लैष्मिकग्रहणीदोषवतो जनस्य कट्वादिरसद्रव्यैरग्निं विवर्द्धयेत्। अग्निविवर्द्धनयोगमाह—पलाशमित्यादि। अत्र पलाशं शटीमूलं मातुलुङ्गस्य फलमध्यस्थकेशरम्। एषां मिलितानां

शुष्कमूलकयूषेण कौलत्थेनाथवा पुनः ।
कट्वम्लक्षारपटुना लघून्यन्नानि भोजयेत् ॥
अम्लश्चानुपिबेत् तक्रं तक्रारिष्टमथापि वा ।
मदिरां मध्वरिष्टं वा निगदं सीधुमेव वा ॥ ५२ ॥
द्रोणं मधूकपुष्पाणां विडङ्गञ्च ततोऽर्द्धतः ।
चित्रकस्य ततोऽर्द्धञ्च तथा भल्लातकाढ़कम् ॥

कार्षिकाणि उदकप्रस्थे पक्त्वा पादशेषं पानार्थं तत् प्रयुञ्जीत । तच्चोदकैर्मण्ड-पेयाविलेपीनामन्यतमां यवागूं साधयेत् ॥ ५१ ॥

गङ्गाधरः एवं मण्डादिक्रमेण लघ्वाहारेणाग्निवृद्धौ भोजनार्थमाह—शुष्केत्यादि । कट्वम्लक्षारपटुना मरिचादिभिः कटुना कपित्थादिनाम्लेन यवक्षारादिना क्षारेण सैन्धवादिभिः पटुना लवणेन शुष्कमूलकस्य क्वाथकल्कयोरन्यतरेण सिद्धेन मुद्गादियूषेण केवलेन कौलत्थेन यूषेण वा कट्वादिना लघूनि रक्तशाल्यादीनामन्नानि भोजयेत् पीतमण्डादिना विवृद्धाग्निं श्लेष्मग्रहणीरोगिणमिति । तदन्नभोजनानन्तरमम्लं तक्रं तक्रारिष्टं वा मदिरां वा मध्वरिष्टं वा निगदसंज्ञं वा सीधुं वा पिबेन्न तु जलं पिबेत् । तक्रमम्लं प्रसिद्धं तक्रारिष्टमुक्तं मदिरा च प्रसिद्धा ॥ ५२ ॥

गङ्गाधरः—तद्विशेषानासवानाह—द्रोणमित्यादि । मधूकपुष्पाणामार्द्राणां द्रोणं चतुःषष्टिशरावं शुष्काणां द्वात्रिंशच्छरावं ततोऽर्द्धतः षोड़शशरावं विड़ङ्गं शुष्कत्वादार्द्राणां नवत्वादयौगिकत्वात् । उक्तं हि—“द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ । ऋते गुड़घृतक्षौद्र-धान्यकृष्णाविड़ङ्गतः ।” इति । चित्रकस्य आर्द्रस्य ततोऽर्द्धतोऽष्टशरावं शुष्कस्यार्द्रस्य तु षोड़शशरावमेव । उक्तं हि—“शुष्कद्रव्येष्विदं मानं द्विगुणं तद्द्रवार्द्रयोः” इति । शुष्कस्य तु चित्रकस्य अष्टशरावमेव ततोऽर्द्धतो भवति । तथा भल्लातकफलस्याढ़कमष्टशरावं

चक्रपाणिः—ग्रहण्यामित्यादि । स तु पानार्थं कट्वम्लक्षारपटुनेति कट्वादियोगात् ( संस्कृतं शुष्कमूलकयूषं कौलत्थयूषं वा उपयुञ्जीत न तु जलं, तेनैव यूषेण लघून्यन्नानि भुञ्जीत । ) कफग्रहण्यां सद्यस्कमेव यद्यपि कषायत्वात् तक्रमुचितम्, तथापि अग्निदीपनतया अम्लमेव तक्रं अम्लञ्च अनुपिबेदित्यनेनैवोक्तम् । निगदं सीधुमिति निर्दोषं सीधुम् ॥ ५०—५२ ॥

मञ्जिष्ठात्रिपलञ्चैवं त्रिद्रोणेऽपां विपाचयेत् ।
द्रोणशेषञ्च तच्छीतं मध्वार्द्धाढ़कसंयुतम् ॥
एलामृणालागुरुभिश्चन्दनेन च रूषिते ।
कुम्भे मासस्थितं जातमासवं तं प्रयोजयेत् ॥
ग्रहणीं दीपयत्येष बृंहणोऽनिलरोगजित् ।
शोथकुष्ठकिलासानां प्रमेहाणाञ्च नाशनः ॥ ५३ ॥

मधूकासवः ।

मधूकपुष्पस्वरसं शृतमर्द्धक्षयीकृतम् ।
क्षौद्रपादयुतं शीतं पूर्व्ववत् सन्निधापयेत् ॥
तं पिबन् ग्रहणीदोषान् जयेत् सर्व्वान् हिताशनः ।
तद्वद् द्राक्षेक्षुकाश्मर्य्य-स्वरसानासुतान् पिबेत् ॥ ५४ ॥

आसवाः ।

मञ्जिष्ठायास्त्रिपलञ्च एवं सर्व्वमपां त्रिद्रोणे द्विनवत्युत्तरशतशरावे पाचयेत्। द्रोणशेषं चतुःषष्टिशरावावशिष्टं तत् क्वथितं शीतं कृत्वा मधुनोऽर्द्धाढ़कमष्टशरावं तत्र दत्त्वा एलादिकल्केन घृतकुम्भोदरे रूषिते प्रलिप्ते मासं स्थापयेत्। मासस्थितं जातं भवति तमासवं तदन्नभोजनादनु पान प्रयोजयेत्। स च मधुकासवो ग्रहणीमित्याद्याशीः ॥ ५३ ॥

<u>गङ्गाधरः</u>—अपरमासवमाह—मधूकेत्यादि। आर्द्रं मधूकपुष्पं कुट्टयित्वा स्वरसः कार्य्यस्तं स्वरसं शृतं पक्वमर्द्धक्षयीकृतं शीतं यदा तदा तत्पक्वस्वरसस्य चतुर्थांशं मधु दत्त्वा पूर्व्ववत् एलादिकल्करूषिते घृतकुम्भे मासं निधापयेत्। तं लघ्वन्नभोजनादनु पिबन ग्रहणीदोषान् सर्व्वान् जयेत्। अपरञ्चासवमाह—तद्वदित्यादि। द्राक्षादीनां प्रत्येकं स्वरसान् तद्वदासुतान् पिबेत्। द्राक्षास्वरसं शृतमर्द्धक्षयीकृतं शीतीकृतं तत्पादांशमधुयुनम् एलादिकल्कालिप्ते घृतकुम्भे मासं स्थापयेत्। (द्राक्षासवः)। एवमिक्षुस्वरसम् अर्द्धशृतं शीतं कृत्वा अत्र

<u>चक्रपाणिः</u>—अर्द्धक्षयीकृतमिति पाकादर्द्धावशिष्टं कृतं, पूर्व्ववत् सन्निधापयेदिति एलादिलिप्ते स्थापयेत्। तद्वदिति एलादिलिप्तबृहत्कुम्भस्थान् ॥ ५३ । ५४ ॥

दुरालभाया द्विप्रस्थं प्रस्थमामलकस्य च ।
मुष्टी चित्रकदन्त्योर्द्वे प्रत्यग्राश्चाभयाशतम् ॥
चतुर्द्रोणेऽम्भसः पक्त्वा शीतं द्रोणावशेषितम् ।
सगुड़द्विशतं पूतं मधुनः कुड़वायुतम् ॥
तद्वत् प्रियङ्गोः पिप्पल्या विड़ङ्गानाञ्च चूर्णितैः ।
कुड़वैर्घृतकुम्भस्थं पक्षादूर्द्धं पिवेन्नरः ॥
ग्रहणीपाण्डुरोगार्शः-कुष्ठवीसर्पमेहनुत् ॥
स्वरवर्णकरश्चैव रक्तपित्तकफापहः ॥ ५५ ॥
द्विपञ्चमूल्यौ रजनी-वीरर्षभकजीवकान् ।
पृथक पञ्चपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥

पादांशमधुयुतम् एलादिकल्कलिप्तघृतकुम्भे मासं स्थापयेत् । (इक्ष्वासवः)। एवं काश्मर्य्यस्य गाम्भारीफलस्य स्वरसं पक्वमर्द्धक्षयीकृतं शीतीकृतं पादांशमधुयुतम् एलादिकल्करूपिते घृतकुम्भे मासं स्थापयेत् । (काश्मर्य्यासवः)। द्राक्षा-काश्मर्य्ययोः स्वरसाभावे शुष्कद्राक्षां शुष्कगम्भारीफलं क्वाथविधिनाष्टगुणे जले पक्त्वा चतुर्थभागावशेषितः स्वरसो ग्राह्यस्तं पूतं पुनरर्द्धक्षयीकृतं पक्वं शीतं पादांशमधुयुतमेलादिकल्करूपिते घृतकुम्भे मासं स्थापयेत् । जातं तमासवं लघ्वन्नभोजनादनु पिवेत् । इत्यासवाः पञ्च ॥ ५४ ॥

गङ्गाधरः—अपरञ्चासवमाह—दुरालभाया इत्यादि । दुरालभायाः प्रस्थ-द्वयमामलकस्य प्रस्थं चित्रकमूलस्य मुष्टिः पलं दन्तीमूलस्य मुष्टिः पलमिति द्वे मुष्टी चित्रकदन्त्योः । प्रत्यग्रं परिपूर्णवीर्य्यमभयाशतं शतगुड़कं न तु शतमुष्टिं पानीयत्वादासवस्य । तत् सर्व्वमम्भसश्चतुर्द्रोणे पक्त्वा द्रोणावशेषितं पूत्वा शीतं कृत्वा गुड़द्विशतपलसहितं कुड़वमितमधुयुतं प्रियङ्गुप्रभृतीनां प्रत्येकं चर्णितैः कुड़वमितैः सहितं तद्वत् पूर्व्ववदेलादिकल्कलिप्तघृतकुम्भस्थं पक्षं जातं भवति न तु मासम् । पक्षादूर्द्धं नरो लघ्वन्नभोजनादनु पिवेत् । दुरालभासवः ॥ ५५ ॥

गङ्गाधरः—द्विपञ्चेत्यादि । द्वे पञ्चमूल्यौ दशमूली । वीरा शालपर्णी ।

चक्रपाणिः—चित्रकदन्त्योर्मुष्टी द्वे इति मिलित्वा द्विपलम् ॥ ५५ ॥

द्रोणशेषे रसे पूते गुड़स्य द्विशतं भिषक्।
चूर्णितान् कुड़वार्द्धांशान् दद्याच्चात्र समाक्षिकान् ॥
प्रियङ्गुमुस्तमञ्जिष्ठा-विड़ङ्गमधुकप्लवान्।
लोध्रं सावरकञ्चैव मासार्द्धं तं पिबेत् ततः ॥
एष मूलासवः सिद्धो दीपनो रक्तपित्तनुत्।
आनाहकफहृद्रोग-पाण्डुरोगाङ्गसादनुत् ॥ ५६ ॥

मूलासवः।

प्रास्थिकीं पिप्पलीं पिष्ट्वा गुड़ं मध्यविभीतकात्।
उदकप्रस्थसंयुक्तं यवपल्ले निधापयेत् ॥
तस्मात् पलं सुजातात् तु सलिलाञ्जलिसंयुतम्।
पिबेत् पिण्डासवो ह्येष रोगानीकविनाशनः ॥
स्वस्थोऽप्येनं पिबेन्मासं नरः सिद्धरसायनम्।
इच्छंस्तेषामनुत्पत्तिं रोगाणां ये प्रकीर्त्तिताः ॥ ५७ ॥

पिण्डासवः।

ऋषभ इषह इति ख्यातः। जीवको जियाला इति लोके। एषां प्रत्येकं पञ्चपलान् भागान् अम्भसश्चतुर्द्रोणे पचेत् द्रोणेऽवशेषे रसे पूते पुराणगुड़स्य द्विशतपलं दत्त्वा गोलयित्वा पूत्वा प्रियङ्ग्वादीनां चूर्णान् प्रत्येकं कुड़वार्द्धांशान् द्विपलमितान् समाक्षिकान् द्विपलमाक्षिकञ्च दद्यात्। सावरकं लोध्रं पट्टिकालोध्रं श्वेतवल्कलम्। पूर्व्ववदेलादिकल्कलिप्ते घृतकुम्भे मासं स्थापयेत्। मासादूर्द्ध्वं लघ्वन्नभोजनादनु तं पिबेत्। शेषमाशिषः। मूलासवः॥ ५६ ॥

गङ्गाधरः—प्रास्थिकीमित्यादि। पिप्पलीप्रस्थं शरावद्वयं पिष्ट्वा मध्याकृतिविभीतकाद् गुड़ं गुड़कं प्रास्थिकमपिष्ट्वा गुड़कवचनाद्। द्वयमेतदुदकप्रस्थसंयुतं ( मध्याकृतिविभीतकात् प्रस्थं गुड़ं गुड़स्य प्रास्थिकमपि त्रयमेतदुदकप्रस्थसंयुतं ) यवपल्ले सतृणयवराशौ निधापयेत्। मासस्थितात् सुजातात् तस्मात् पिण्डासवात् पलं सलिलाञ्जलिसंयुतं पिबेत्। एष पिण्डासवो रोगानीकविनाशन इत्यादि। पिण्डासवः॥ ५७ ॥

चक्रपाणिः—प्रास्थिकीमित्यादौ पिप्पलीगुड़विभीतकमज्जा प्रत्येकं प्रस्थः॥ ५६। ५७॥

नवे पिप्पलिमध्वाक्ते कलसेऽगुरुधूपिते ।
मध्वाढ़कं जलसमं चूर्णानीमानि दापयेत् ॥
कुड़वार्द्धं विड़ङ्गानां पिप्पल्याः कुड़वं तथा ।
चातुर्थिकांशां त्वक्क्षीरीं केशरं मरिचानि च ॥
त्वगेलापत्रकशटी-क्रमुकातिविषाघनम् ।
हरेणवेलुकतेजोह्वा-पिप्पलीमूलचित्रकान् ॥
कार्षिकांस्तं स्थितं मासमत ऊर्द्ध्वं प्रयोजयेत् ।
मन्दं सन्दीपयत्यग्निं करोति विषमं समम् ॥
हृत्पाण्डुग्रहणीरोग-कुष्ठार्शःश्वयथुज्वरान् ।
वातश्लेष्मामयांश्चान्यान् मध्वरिष्टो व्यपोहति ॥ ५८ ॥

मध्वरिष्टः ।

समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च ।
मातुलुङ्गाभयारास्ना-शटीमरिचनागरम् ॥

गङ्गाधरः मदिराविशेषानासवानुक्त्वा मध्वरिष्टमाह—नव इत्यादि। पिप्पलीकल्कमधुभ्यामभ्यक्ते नवे मृन्मये कलसेऽगुरुधूपिते मधुन आढ़कं षोड़शशरावं जलसमं षोड़शशरावजलमेकीकृत्य तत्रेमानि चूर्णानि दापयेत्। विड़ङ्गानां चूर्णितानां कुड़वार्द्धं पलद्वयम्। पिप्पल्याश्चूर्णितायाः कुड़वं चतुःपलम्। त्वक्क्षीरीं वंशलोचनां चतुर्थिकांशां पलांशाम्। केशरादीनां कार्षिकान्। तत्र दत्त्वा मासं स्थापयेत्। मासादूर्द्ध्वं प्रयोजयेत्। लघ्वन्नभोजनादनु पाययेत। अत्र क्रमुको गुवाकः। एलुकम् एलवालुकम्। तेजोह्वा चवी। विषममग्निं समं करोति। मध्वरिष्टः ॥ ५८ ॥

गङ्गाधरः—अनुपानमुक्त्वा स्वतः प्रयोगानाह—समूलामित्यादि। पिप्पलीं

चक्रपाणिः—नव इत्यादौ त्वगेलादीनां कार्षिकत्वम् ॥ ५८ ॥

चक्रपाणिः—समूलां पिप्पलीमिति पिप्पलीं पिप्पलीमूलम् ॥ ५९ ॥

कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना।
कफजे ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ॥ ५९ ॥
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते।
गौल्मिकोक्तं षट्पलकं भल्लातकघृतञ्च यत् ॥ ६० ॥
विड़ं कालोत्थलवणं * स्वर्ज्जिकायावशूकजम्।
निदिग्धिकां सप्तलाञ्च चित्रकञ्चेति दाहयेत् ॥
सप्तकृत्वःस्नुतस्याथ क्षारस्याढ्र्द्धाढ़केन तु।
आढ़कं सर्पिषः पक्त्वा पिबेदग्निविवर्द्धनम् ॥ ६१ ॥

क्षारघृतम्।

समूलां पिप्पलीं पाठां चव्येन्द्रयवनागरम्।
चित्रकातिविषे हिङ्गु श्वदंष्ट्रां कटुरोहिणीम् ॥
वचाञ्च कार्षिकान् पञ्च-लवणानां पलानि च।
घृततैले द्विकुड़वे द्वे प्रस्थे दध्न एव च ॥

पिप्पलीमूलञ्च मातुलुङ्गमिह चूर्णान्तमूलम्। समांशं सर्व्वं तच्चूर्णं कृत्वा सुखाम्बुना प्रातः पिबेत्। कफज इत्याद्याशीः। पिप्पल्याद्यं चूर्णम् ॥ ५९ ॥

गङ्गाधरः—एतैरित्यादि। एतैः पिप्पलीपिप्पलीमूलादिभिरौषधैः कल्कैः काथैश्च सिद्धं सर्पिः समारुते कफजे ग्रहणीगदे प्रातः पिबेत्। गुल्मचिकित्सितोक्तं षट्पलकं घृतं भल्लातघृतञ्च यदुक्तं तच्च समारुते कफजे पिबेत् ॥ ६० ॥

गङ्गाधरः—विड़मित्यादि। विड़ं विट्लवणं कालोत्थलवणं काललवणं सप्तलां चर्म्मकषाम्। एतानि समांशानि निदिग्धिकादीनि त्रीणि दाहयेत्। भस्मीकृत्य विड़ादिप्रत्येकसमानि प्रत्येकं भस्म नीत्वा षड्गुणे तोये सप्तकृत्वः परिस्रावयेत्। स्रुतस्य तस्य क्षारोदकस्याद्धीढकेनाष्टशरावेण सर्पिष आढ़कं षोड़शशरावं पक्त्वाऽग्निविवर्द्धनं पिबेत्। क्षारघृतम् ॥ ६१ ॥

गङ्गाधरः—समूलामित्यादि। पिप्पलीं पिप्पलीमूलञ्च वचान्तान्येतानि

चक्रपाणिः—भल्लातकघृतञ्च गुल्मोक्तमिति ज्ञेयम् ॥ ६० ॥

चक्रपाणिः—विडं काचोपलवणमिति विडलवणं काचलवणम् उपलवणं क्षारलवणञ्चेति ॥ ६१ ॥

* विड़ं काचोपलवणमिति पठति चक्रो वागभटश्च।

चूर्णीकृतानि निःक्वाथ्य शनैरन्तर्गते रसे * ।
अन्तर्धूमं ततो दग्ध्वा चूर्णं कृत्वा घृताप्लुतम् ॥
खादेत् पाणितलं तस्मिन् जीर्णे स्यान्मधुराशनः ।
वातश्लेष्मामयान् सर्व्वान् हन्याद् विषगरांश्च सः ॥ ६२ ॥
भल्लातकं त्रिकटुकं त्रिफलां लवणत्रयम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥
स क्षारः सर्पिषा पीतो भोज्ये वाप्यवचारितः ।
हृत्पाण्डुग्रहणीरोग-गुल्मोदावर्त्तशूलनुत् ॥ ६३ ॥
दुरालभाकरञ्जौ च सप्तपर्णं सवत्सकम् ।
षड्ग्रन्थां मदनं मूर्व्वां पाठामारग्वधं तथा ॥

कार्षिकाणि पञ्चानां लवणानां प्रत्येकं पलं मिलितानां पञ्च पलानि। घृतं तैलञ्च कुडवं कुडवमिति द्विकुडवे घृततैले। दध्न एव च द्वे प्रस्थे अष्टशरावम्। वचान्तानि चर्णीकृत्य तत्र दध्नि घृततैलयुते निःक्वाथ्य निष्पाच्य रसे शुष्केऽन्तर्गते सति। ततो हण्डिकायां प्रक्षिप्य हण्डिकामुखं शरावेण रुद्ध्वा धूमनिर्गमनं यथा न स्यात् तथा दग्ध्वा ततस्तच्चूर्णं घृताप्लुतं कृत्वा पाणितलं कर्षं खादेत्। तस्मिन्नौषधे जीर्णे मधुरद्रव्याशनः स्यात्। वातेत्याद्याशीः। क्षारः ॥ ६२ ॥

गङ्गाधरः—भल्लातकमित्यादि। लवणत्रयं सौवर्चलं सैन्धवं विडञ्चेति। भल्लातकादिकं द्विपलिकं प्रत्येकं नीत्वा गोपुरीषाग्निनान्तर्द्धूमं दहेत्। स क्षारः सर्पिषा पीतः भोज्ये व्यञ्जनादौ वाप्यवचारितो हृद्रोगादिनुत् स्यात्। क्षारः ॥ ६३ ॥

गङ्गाधरः—दुरालभेत्यादि। करञ्जो गोकरञ्जः। वत्सकं कुटजत्वक्। दुरालभादीन्यारग्वधान्तान्येतानि समांशानि चूर्णानि कृत्वा सर्व्वाणि पुनः

चक्रपाणिः—खण्डीकृतानीति खण्डं खण्डं कृतानि। अनुपीतरसे इति निर्पीते रसे। पाणितलमिति कर्षः। मधुराशनत्वमिह क्षारप्रयोगयौगिकत्वाज् ज्ञेयम् ॥ ६२ । ६३ ॥

* खण्डीकृतानि निःक्वाथ्य अनुपीतरसे शनैः इति चक्रधृतः पाठः।

गोमूत्रेण समांशानि कृत्वा चूर्णानि दाहयेत्।
दग्ध्वा च तं पिबेत् क्षारं ग्रहण्यां बलवर्द्धनम्॥ ६४॥
भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम्।
दहेन्माहिषमूत्रेण क्षार एषोऽग्निवर्द्धनः॥ ६५॥

क्षारः।

द्वे हरिद्रे वचा कुष्ठं चित्रकं कटुरोहिणीम्।
मुस्तञ्च छागमूत्रेण दहेत् क्षारोऽग्निवर्द्धनः॥ ६६॥

क्षाराः।

चतुःपलं सुधाकाण्डात् त्रिपलं लवणत्रयात्।
वार्त्ताकीकुड़वञ्चार्कादष्टौ द्वे चित्रकात् पले॥

गोमूत्रेण समांशानि कृत्वा दाहयेत्। दग्ध्वा च तं क्षारं बलवर्द्धनं पिबेत् ग्रहण्यामिति। क्षारः॥ ६४॥

<u>गङ्गाधरः</u>—भूनिम्बमित्यादि। तिक्तां रोहिणीं कटुरोहिणीम्। प्रत्येकं समांशं चूर्णयित्वा सर्व्वं माहिषमूत्रेण समानं दहेत्। एष क्षारोऽग्निवर्द्धनः। क्षारः॥ ६५॥

<u>गङ्गाधरः</u>—द्वे इत्यादि। हरिद्राद्वयादिमुस्तान्तं प्रत्येकं समं चूर्णयित्वा सर्व्वं छागेन मूत्रेण समानं दहेदिति पूर्व्वेणान्वयः। क्षाराः॥ ६६॥

<u>गङ्गाधरः</u>—चतुःपलमित्यादि। सुधा स्नुही तस्याः काण्डात् शुष्काच्चूर्णीकृतात् चतुःपलं लवणत्रयात् प्रत्येकमेकैकपलमिति त्रिपलं वार्त्ताकीकुड़वं शुष्कवार्त्ताकुचूर्णकुड़वम्। अर्काच्चूर्णितादष्टौ पलानि चित्रकाच्च द्वे पले।

<u>चक्रपाणिः</u>—गोमूत्रेण समांशानीति गोमूत्रेण मिलितं चूर्णं तुल्यम्। अस्य च पानं पूर्व्वक्षारवत् सर्पिषा ज्ञेयम्॥ ६४॥

<u>चक्रपाणिः</u>—माहिषमूत्रेणेत्यादिनापि चूर्णसमत्वं माहिषमूत्रस्य पूर्व्वप्रयोगदृष्टत्वात्॥६५—६६॥

<u>चक्रपाणिः</u>—चतुःपलमित्यादौ चतुःपलं सुधाकाण्डात्। त्रिफलालवणानि चेति ये पठन्ति ते

दग्धानि वार्त्ताकुरसे गुड़िका भोजनोत्तराः।
भुक्तं भक्तं पचत्याशु कासश्वासार्शसां हिताः॥
विसूचिकाप्रतिश्याय-हृद्रोगघ्न्यश्च ता मताः।
इत्येषा क्षारगुड़िका कृष्णात्रेयेण कीर्त्तिता * ॥ ६७॥

क्षारगुड़िका।

वत्सकातिविषे पाठा दुःस्पर्शो हिङ्गु चित्रकम्।
चूर्णीकृत्य पलाशानां क्षारे मूत्रश्रुते पचेत्॥
आयसे भाजने सान्द्रं तस्मात् कोलं सुखाम्बुना।
मद्य र्वा ग्रहणीदोषे शोफार्शःपाण्डुमान् पिबेत्॥ ६८॥

क्षारः।

त्रिफलां कटभीं चव्यं विल्वमध्यमयोरजः।
रोहिणीं कटुकां मुस्तं कुष्ठं पाठाञ्च हिङ्गु च॥

एतानि चूर्णानि दग्धानि वार्त्ताकुरसे गुड़िकाः कृता भोजनोत्तरकालमुपयोजनीयाः। भुक्तं भक्तमित्याद्याशीः। क्षारगुड़िका॥ ६७॥

गङ्गाधरः—वत्सकेत्यादि। वत्सकादीनां समांशानि चूर्णीकृत्य पलाशानां क्षारे गोमूत्रैः षड़्गुणैः श्रृतेऽर्द्धशिष्टे सप्तधा परिस्रुते तच्चूर्णमायसे भाजने पचेत् सा यथा भवति। सान्द्रीभूतात् तस्मादौषधात् कोलं प्रमाणं सुखाम्बुना ग्रहणीदोषे पिबेत्। तस्मिन् रोगे शोफादिमानपि पिबेत्। क्षारः॥ ६८॥

गङ्गाधरः—त्रिफलामित्यादि। कटभीं क्षुद्रवृक्षशिरीषः। विल्वमध्यं विल्वफलशस्यम्। अयोरजो मारितजारितलौहचूर्णम्। रोहिणीं कटुकां कटु-

त्रिफलालवणर्मिलित्वा चतुःपलं वदन्ति। दग्धानि वार्त्ताकुरसे इति क्षारभूतानि, गुटिकाः कर्त्तव्याः॥ ६७। ६८॥

---

* इत्येषा क्षारगुड़िका कृष्णात्रेयेण कीर्त्तिता इति पाठस्तु न चक्रसम्मतः न वा वागभटसम्मतः।

मधुकं मुष्ककयव-क्षारौ त्रिकटुकं वचाम्।
विड़ङ्गं पिप्पलीमूलं स्वर्जिका निम्बचित्रकौ॥
मूर्व्वाजमोदेन्द्रयव-गुड़ूचीदेवदारु च।
कार्षिकं लवणानाञ्च पञ्चानां पलिकान् पृथक्॥
भागान् दध्नि त्रिकुड़वे घृततैलेन मूर्च्छितम्।
अन्तर्द्धूमं शनैर्दग्ध्वा तस्मात् पाणितलं पिबेत्॥
सर्पिषा कफवातार्शो-ग्रहणीपाण्डुरोगवान्।
प्लीहमूत्रग्रहश्वास-हिक्काकासक्रिमिज्वरान्॥
शोषातिसारश्वयथु-प्रमेहान् हृद्ग्रहांस्तथा।
हन्यात् सर्व्वविषाणाञ्च क्षारोऽयं शमनो वरः॥
जीर्णे रसर्वा मधुरैरश्नीयात् पयसा सह।
एष क्षारो महावीर्य्यः कृष्णात्रेयेण भाषितः॥ ६९॥

क्षारः।

त्रिदोषे विधिवद् वैद्यः पञ्च कर्म्माणि कारयेत्।
घृतक्षारासवारिष्टान् दद्याच्चाग्निविवर्द्धनान्॥

रोहिणीम्। मुष्ककं घण्टापाटला कृष्णपुष्पा तस्य क्षारो यवक्षारश्च। त्रिफलादीनां कार्षिकं पञ्चानां लवणानां पृथक् पलिकान भागान सर्व्व चूर्णीकृत्य त्रिकुड़वे सार्द्धशरावे दध्नि घृततैलेन मूर्च्छितमेकीकृतं हाण्डकायां निक्षिप्य मुखं रुद्ध्वाऽन्तर्द्धूमं दग्ध्वा तं क्षारं पाणितलं कर्षमाणं सर्पिषा चतुर्गुणेन आलोड्य पिबेत्। तस्मिन् पीतौषधे जीर्णे सति मधुरैः रसैर्वाश्नीयादथवा पयसा सहाश्नीयात्। कफवातार्शःप्रभृतिमान्। अयं क्षारो हि प्लीहादिकं हन्यात् सर्व्वविषाणाञ्च वरः शमनः। क्षारः॥ ६९॥

गङ्गाधरः—अथ त्रिदोषजग्रहणीरोगचिकित्सितमाह—त्रिदोष इत्यादि।

चक्रपाणिः—त्रिफलामित्यादौ घृततैलेनेत्यत्र दधिसाहचर्य्यात् घृततैलस्यापि मिलितस्य कुड़वत्रयम्॥ ६९॥

चक्रपाणिः—त्रिदोषे पञ्चकर्म्माणि शिरोविरेचनमित्यत्र देयमेव व्यत्यासात् तां समस्ताञ्चेति

क्रिया या चानिलादीनां निर्द्दिष्टा ग्रहणीं प्रति ।
व्यत्यासात् तां समस्तां वा कुर्य्याद्द रोगविशेषवित् ॥ ७० ॥
स्नेहनं स्वेदनं शुद्धिं लङ्घनं दीपनञ्च यत् ।
चूर्णानि मधुरक्षार-मध्वरिष्टसुरासवाः ॥
तक्रप्रयोगा विविधा दीपनानाञ्च सर्पिषाम् ।
ग्रहणीदोषिभिः सेव्याः क्रियाञ्चावस्थिकीं शृणु ॥ ७१ ॥
ष्ठीवनं श्लैष्मिके रुक्षं दीपनं तिक्तसंयुतम् ।
सकृद्द रुक्षं सकृत् स्निग्धं कृशे बहुकफे हितम् ॥ ७२ ॥

त्रिदोषे ग्रहणीरोगे वैद्यो विधिवत् पञ्च कर्म्माणि कारयेत् । वमनविरेचनाङ्गत्वात् स्नेहस्वेदौ च कृत्वेति विधिवद् वचनेनाभिधानात् । तथा संशुद्धाय घृतादीन् अग्निविवर्द्धनान् दद्यात् । या च क्रिया अनिलादीनां प्रत्येकग्रहणीं प्रति इह निर्दिष्टा रोगविशेषविद् वैद्यस्तां समस्तां वातजपित्तजकफजग्रहणीरोगक्रियां वा व्यत्यासात् कुर्य्यात् । या क्रिया यस्य दोषस्य व्यात्यासरूपा विपर्य्ययरूपा तां बुद्ध्वा कुर्य्यात् ॥ ७० ॥

गङ्गाधरः—स्नेहनमित्यादि । यत् द्रव्यं स्नेहनादिकं यानि चूर्णानि चोक्तानि मधुरादयश्च विविधास्तक्रप्रयोगाश्च दीपनानाञ्च सर्पिषां ये विविधाः प्रयोगाः ते सर्व्वे त्रिदोषजग्रहणीदोषिभिः सेव्याः । तेषां त्रिदोषग्रहणीदोषिणामावस्थिकीं क्रियां शृण । यात ऊर्द्ध्वं वक्ष्यते ॥ ७१ ॥

गङ्गाधरः—ष्ठीवनमित्यादि । श्लैष्मिके श्लेष्माधिकत्रिदोषजे तिक्तसंयुतं रुक्षं दीपनञ्च यद् द्रव्यं तस्य क्वाथेन कवलं हितम् । ष्ठीवनं कर्म्म मुखेन श्लेष्मणः स्वल्पं स्वल्पमुद्गिरणं हितम् । कृशे बहुकफे सकृदेकवारं रुक्षं सकृदेकवारञ्च स्निग्धं कर्म्म हितम् ॥ ७२ ॥

उक्तवातादिक्रियाव्यत्यासात् । एकैकदोषक्रियापरिवर्त्तने सर्व्वां तां कुर्य्यात् किंवा मिलितैः कुर्य्यात्, मेलनञ्च वातादिद्रव्यमेलनादेव भवति ॥ ७० ॥

चक्रपाणिः—स्नेहनमित्यादिना ग्रहणीदोषभेषजसङ्कलनमाह । क्रियाञ्चावस्थिकीमिति ग्रहणीदोष एव अवस्थाविशेषे कर्त्तव्याः क्रियाः शृणु ॥ ७१ ॥

चक्रपाणिः—सकृद रुक्षं सकृत् स्निग्धं कृश इति रुक्षमेव क्रियते तदा कृशस्य बलहानिः

परीक्ष्यामं शरीरस्य दीपनं स्नेहसंयुतम्।
दीपनं बहुपित्तस्य तिक्तं मधुरसंयुतम्॥ ७३॥
बहुवातस्य तु स्नेह-लवणाम्लयुतं हितम्।
सन्धुक्षति यथा वह्निरेषां विधिवदिन्धनैः॥ ७४॥
स्नेहमेव परं विद्याद् दुर्ब्बलानां प्रदीपनम्।
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्व्वपि॥ ७५॥
मन्दाग्निरविपक्वन्तु पुरीषं योऽतिसार्य्यते।
दीपनीयौषधैर्युक्तां घृतमात्रां पिबेत् तु सः॥

गङ्गाधरः—परीक्ष्येत्यादि। शरीरस्यामं ग्रहणीदोषं परीक्ष्य स्नेहसंयुतं दीपनं दीपनीयदशकं हितम्। बहुपित्तस्यामदोषिणो दीपनं तिक्तञ्च मधुरसंयुतञ्च हितम्। बहुवातस्य तु ग्रहणीदोषिण आमदोषे स्नेहलवणाम्लयुतं दीपनं हितम्। एतैः किं स्यादित्यत आह—सन्धुक्षतीत्यादि। यथा विधिवदिन्धनैर्वह्निः सन्धुक्षति तथैषामेभिर्वह्निः सन्धुक्षति॥ ७४॥

गङ्गाधरः—तत्राग्निदीपने प्रवरमाह—स्नेहमेवेत्यादि। दुर्ब्बलानां त्रिदोषग्रहणीदोषिणां परं श्रेष्ठं वह्निप्रदीपनं स्नेहमेव विद्यात्। कस्मात्? नालमित्यादि। स्नेहसमिद्धस्य जाठराग्नेः शमाय शान्तये सुगुर्व्वपि अन्नं नालं न समर्थं भवति॥ ७५॥

गङ्गाधरः—इति दोषजचतुर्व्विधग्रहणीरोगचिकित्सितमुक्त्वा यथाग्निः पूर्व्वमुद्दिष्ट इति समाग्निवर्ज्जत्रिधाग्निरपि ग्रहणीरोग उक्तः तत्र मन्दाग्निक्रियामाह—मन्दाग्निरित्यादि। त्रिधाग्निश्च ग्रहणीरोगी। तत्र मन्दाग्निरपि

स्यात्; अथ स्निग्धमेव क्रियते तदा बहुकफे कफवृद्धिः स्यात्; तेनोभयापेक्षया अन्तरा रूक्षम् अन्तरा च स्निग्धं कर्त्तव्यमित्यर्थः॥ ७२। ७३॥

चक्रपाणिः—स्नेहलवणाम्लयुतमिति दीपनमित्यर्थः। सन्धुक्षतीति विधिवदिन्धनैरिति यथाविधानदीपितमित्यर्थः॥ ७४॥

चक्रपाणिः—उक्तानुक्तस्नेहफलमवधारयन्नाह—स्नेहमेवेत्यादि। परमिति श्रेष्ठं, स्नेह एव दीपनं श्रेष्ठं, तत्र हेतुमाह नालमित्यादिना। नालं न समर्थम्। स्नेहसमिद्धस्येति स्नेहदीप्तस्य। स्नेहशब्देनात्र सामान्यवाचिना सर्पिरेवोच्यते सर्पिष एवात्राधिकारात्॥ ७५॥

चक्रपाणिः—मन्दाग्निरित्यादौ अविपक्वमिति पुरीषविशेषणम्। तेनाविपक्वशब्दग्रहणात्

तया समानः पवनः प्रसन्नो मार्गमाश्रितः।
अग्नेः समीपचारित्वादाशु प्रकुरुते बलम्॥
काठिन्याद् यः पुरीषन्तु कृच्छ्रान्मुञ्चति मानवः।
स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत्॥
रौक्ष्यान्मन्दे पिबेत् सर्पिस्तैलं वा दीपनैर्युतम्।
अतिस्नेहात् तु मन्देऽग्नौ चूर्णारिष्टासवा हिताः॥
भिन्ने गुदोपलेपात् तु मले तैलसुरासवाः।
उदावर्त्तात् तु मन्देऽग्नौ निरूहाः स्नेहवस्तयः॥
दोषवृद्ध्या च मन्देऽग्नौ शुद्धो दोषविधिं चरेत्।
व्याधियुक्तस्य मन्दे तु सर्पिरेवाग्निदीपनैः॥

योऽविपक्वं पुरीषमतिसार्य्यते स तु दीपनीयैर्दशकयुक्तां घृतमात्रां पिबेत्। ततो यत् स्यात् तदाह—तयेत्यादि। तया दीपनीयौषधयुक्तया घृतमात्रया पीतया यः समानः पवनो वह्निसमीपस्थः सन्धुक्षणः स प्रसन्नः सन् मार्गं स्वमाश्रितः सन्नग्नेः समीपचारित्वादाशु बलमग्नेः प्रकुरुते। अपक्वपुरीषातिसरणप्रतीकारमुक्त्वा कठिनपुरीषमुञ्चतो मन्दाग्न्याद्यग्रहणीरोगिणश्चिकित्सितमाह—काठिन्यादित्यादि। यस्त्रिदोषजग्रहणीरोगवान् मानवः पुरीषं काठिन्यात् कृच्छ्रात् मुञ्चति स नरो लवणयुक्तमन्नावग्रहमन्नग्रहणेन ग्रहीत्वा घृतं पिबेत्। रौक्ष्यादित्यादि। मन्दाग्निग्रहणीरोगी मन्देऽग्नौ रुक्षतो रुक्षगुर्व्वादिजाते दीपनदशभियुतं सिद्धं सर्पिस्तैलं वा पिबेत्। अतिस्नेहात् तु जाते मन्देऽग्नौ चूर्णारिष्टासवास्तस्य हिताः। भिन्ने पुरीषे गुदोपलेपात् तु गुदस्रावे तैलसुरासवा अवलेहा हिताः। उदावर्त्तात् तु जाते मन्देऽग्नौ निरूहा आस्थापनवस्तयः स्नेहवस्तयश्चानुवासनवस्तयो हिताः। दोषवृद्ध्या कफवृद्ध्या

सामस्य ग्रहणं न भवति। अपक्वपुरीषं प्रति स्नेहप्रयोगो विरुद्ध एव किन्तु दीपनीयौषधसंस्कारात् स्नेहस्य संस्कारगुणाभिधानात् अपक्वपुरीषं प्रति हितत्वं भवति, स्नेहांशस्तु वातप्रगुणताकरणत्वेन सहायतया उपादीयते। अत एवोक्तं तया समान इति। प्रसन्न इति दुष्टिरहितः। मार्गमास्थित इति स्वाभाविकमार्गमापन्नः। समीपचारित्वादिति प्रसन्नत्वादिगुणयोगे सति। अन्नावग्रहमिति अन्नमध्यप्रयुक्त इत्यर्थः। अतिस्नेहान्मन्देऽग्नौ सति चूर्णारिष्टादीनि योज्यानि। भिन्ने इति विशिष्टगुदोपलेपात् अग्नौ मन्दे तैलसुरासवा देया इति वाक्यार्थः। दोषविधिं

उपवासाच्च मन्देऽग्नौ यवागूभिः पिबेद् घृतम् ।
अन्नावपीड़ितं चालं दीपनं बृंहणञ्च तत् ॥ ७६ ॥
दीर्घकालप्रसङ्गात् तु कामक्षीण-*-कृशान् नरान् ।
प्रसहानां रसैः साम्लैर्भोजयेत् पिशिताशिनम् ॥
लघुतीक्ष्णोष्णशोधित्वाद् दीपयन्त्याशु तेऽनलम् ।
मांसोपचितमांसत्वात् तथाशुतरबृंहणाः ॥ ७७ ॥
नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ।
यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ॥

जाते मन्देऽग्नौ शुद्धो वमनविरेचनाभ्यां दोषहरविधिं चरेत्। व्याधियुक्तस्य ग्रहणीरोगातिसारज्वरादिरक्तव्याधियुक्तस्य ग्रहणीरोगिणो मन्देऽग्नौ अग्निदीपनैः सिद्धमेव सर्पिश्चरेत् । उपवासाच्च जाते मन्देऽग्नौ यवागूभिर्मण्डादिभिर्घृतं पिबेत् । कस्मात् ? अन्नावपीड़िते सति तद् घृतं दीपनं बृंहणञ्चालञ्च समर्थं स्यात् ॥ ७६ ॥

<u>गङ्गाधरः</u>—दीर्घकालं रोगप्रसङ्गात् कामक्षीणकृशान् यथेष्टं क्षीणान् कृशान् नरान् मन्दाग्नीन् पिशिताशिनां प्रसहानां मांसस्य साम्लैः रसैर्भोजयेत् । कस्मात् ? ते प्रसहा लघुत्वादित्वादाशु अनलं दीपयन्ति मांसोपचितमांसत्वादाशुतरं बृंहणाश्च तथा भवन्ति ॥ ७७ ॥

<u>गङ्गाधरः</u>—ननु मन्देऽग्नौ लङ्घनमेव युज्यते कथमेवमाहारो विधीयते इत्यत

चरेदिति अग्निमान्द्यकारकदोषौषधविधिं चरेत् । अन्नावपीड़ितं यथा भवति तथा यवाग्वादिभिः घृतं पिबेत् । अन्नावपीड़ितञ्च मध्यभोजनावपीडं घृतं भवति ॥ ७६ ॥

<u>चक्रपाणिः</u>—दीर्घकालेत्यादौ क्षामो व्यवसायशून्यः । क्षीणो दुर्बलः । कृशो हीनमांसः । प्रसहानां मांससिद्धत्वे पिशिता-(मांसा)-शिनामिति विशेषणं तेन तृणादप्रसहानां गवादीनां निषेधः । ननु प्रसहाः गुरूष्णस्निग्धमधुरा इत्युक्तम्, इह तु लघुतीक्ष्णोष्णेत्यादिना कथं लाघवम् ? उच्यते, प्रसहानां मध्ये ये लघवस्तेषां रसेनात्र भोजयेत् । तीक्ष्णेत्यादिना प्रसहगुणाभिधानम् । अन्ये तु इतरापेक्षया ये प्रसहा लघवस्तेषामिह लघुशब्देनोपादानम् । तथान्ये अम्लादियोगात् संस्कारेण इह लाघवं साधयन्ति, एतेन राजयक्ष्मचिकित्सितेऽपि प्रसहगुणाः तीक्ष्णोष्णलघुशुचित्वादयः गुणाः उक्ताः ते व्याख्या एव ॥ ७७ ॥

<u>चक्रपाणिः</u>—नाभोजनेनेत्यादिना सम्यक्प्रयोगस्याग्निजनकतामाह । अभोजनमल्पभोजनम् ।

* कामक्षीणेत्यत्र क्षामक्षीणेति चक्रपाठः ।

स्नेहान्नपानैर्विविधैश्चूर्णारिष्टसुरासवैः।
सम्यक्प्रयुक्तैर्भिषजा बलमग्नेः प्रवर्द्धते॥
यथा हि सारदार्व्वग्निः स्थिरः सन्तिष्ठते चिरम्।
स्नेहाशनादिभिस्तद्वदन्तर्वह्निर्भवेत् स्थिरः॥ ७८॥
हितं जीर्णे मितञ्चाश्नंश्चिरमारोग्यमश्नुते।
अवैषम्येण धातूनामग्निवृद्धौ यतेत ना॥
समैर्दोषैः समो मध्ये देहस्योष्माग्निसंस्थितः।
पचत्यन्नं तदारोग्य-पुष्ट्यायुर्बलवर्द्धनम्॥

आह—नाभोजनेनेत्यादि। अभोजनेन कायाग्निर्न दीप्यते न चातिभोजना दीप्यते। यथा निरिन्धनोऽल्पो वह्निर्न दीप्यतेऽतीन्धनावृतो वा न दीप्यते, तद्वद् अभोजनातिभोजनान्न दीप्यते। तस्मात्। स्नेहान्नपानैरित्यादि। स्नेहान्नपानैर्भिषजा सम्यक् प्रयुक्तैर्विविधैः स्नेहान्नपानैः दीपनीयौषधसिद्धैस्तथा चूर्णारिष्टसुरासवैर्मन्दाग्नेरग्नेर्बलं प्रवर्द्धते। यथा सारदार्व्वग्निः सारभूतकाष्ठाग्निः स्थिरः संश्चिरं सन्तिष्ठते तद्वदन्तर्वह्निर्जाठराग्निः स्नेहासवादिभिरुक्तैः स्नेहान्नादिभिर्विवृद्धः स्थिरोऽचलो भवेन्न तु ह्रस्वः स्यादिति॥ ७८॥

गङ्गाधरः—तर्हि च हितं किं वृद्धाग्निरश्नीयादित्यत आह—हितमित्यादि। ना पुमान् पूर्व्वाशने जीर्णे हितं मितञ्चान्नमश्नन् संश्चिरमारोग्यमश्नुते तस्माद् धातूनामवैषम्येण विषममान्द्यतीक्ष्णत्वाभावेनाग्निवृद्धौ यतेत। किमर्थमवैषम्येणेत्यत आह—समैरित्यादि। देहस्य मध्येऽग्निसंस्थित उष्मा समैर्वातपित्तकफैर्दोषैः

अल्पो वा अतीन्धनावृतो वा न दीप्यते इति योजना। सारदार्व्वग्निः सारदारुणि स्थितोऽग्निः सारदार्व्वग्निः। स्नेहवदन्नं स्नेहान्नम्॥ ७८॥

चक्रपाणिः—मितमिति मात्रावद्यं, यद्यपि हितमिताशिनोऽपि कालविपर्य्ययादिना रोगा भवन्त्येव, तथापि हितमिताशिनाम् आहारजरोगोत्पत्तिर्न भवतीति दर्शयति। चिरमारोग्यमश्नुते इति आहारजरोगं न प्राप्नोतीति भावः। अवैषम्येण धातूनाम् इति धातुसाम्येन क्रियमाणायाम् अग्निवृद्धौ यतेत। एतेन दोषवैषम्येण दिप्तोद्रेकरूपेण या अग्निवृद्धिरत्यग्निरूपा तां निषेधयति। समैरित्यादिनाग्निभेदान् समाग्निपरिपालनार्थमाह। मध्य इति समीपे अग्निसंस्थित इति

दोषैर्मन्दोऽतिवृद्धो वा विषमो जनयेद्‌ गदान् ।
पाच्यं * मन्दस्य तत्रोक्तमतिवृद्धस्य वक्ष्यते ॥ ७९ ॥
नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् ।
सोष्मकं पावकस्थाने बलमग्नेः प्रयच्छति ॥
तदा लब्धबलो देहे विरुक्षे सानिलोऽनलः ।
अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्म्मुहुः ॥
पक्त्वान्नं स ततो धातून् शोणितादीन् पचत्यपि ।
ततो दौर्ब्बल्यमातङ्कं मृत्युञ्चोपनयेन्नरम् ॥
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति ।
तृट्श्वासमोहमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः ॥ ८० ॥

समः सन्नन्नं पुष्ट्यायुर्बलवर्द्धनं यथा स्यात् पचति। दोषैरित्यादि। विषमः वृद्धकफवृद्धपित्तवृद्धवातैर्दोषैर्मन्दोऽतिवृद्धस्तीक्ष्णोऽग्निर्विषमोऽग्निर्वा गदान् जनयेत्, कफजान् मन्दोऽग्निः पित्तजान् गदानतिवृद्धोऽग्निर्जनयेत् वातजान् विषमोऽग्निः। तत्र मन्दस्याग्नेः पाच्यं विवर्त्तजनकक्रियाजातं प्रोक्तम्। अतिवृद्धस्य पाच्यं वक्ष्यते। भावे ण्यत् ॥ ७९ ॥

गङ्गाधरः—नरे इत्यादि। क्षीणकफे नरे मारुतानुगं पित्तं कुपितं सोष्मकमुष्मणा सह वर्त्तमानं सत् पावकस्थाने नाभ्यूर्द्ध्वदेशेऽग्नेर्बलं प्रयच्छति। तदा विरुक्षे देहे लब्धबलः सानिलोऽनलस्तैक्ष्ण्यादन्नमभिभूय मुहुर्म्मुहुराशु पचति। स तीक्ष्णाग्निस्ततोऽभ्यवहृतमन्नं पक्त्वा शोणितादीन् धातूनपि पचति। ततो धातुपाकाद्‌ दौर्ब्बल्यं रोगञ्च पित्तजं मृत्युञ्च नरं नयेत्। तत्रान्ने पक्वे पुनर्मुहुर्म्मुहुर्बुभुक्षायामन्ने पुनर्भुक्तेऽन्ने शान्तिं लभते जीर्णमात्रे भुक्तेऽन्ने प्रताम्यति। तृडादयश्च व्याधयस्तदत्यग्निसम्भवाः स्युरिति ॥ ८० ॥

ऊष्मरूपो जाठराग्निः। दोषैरिति सामान्योक्तेऽपि योग्यतया कफपित्तवातैर्यथाक्रममेव मन्दतीक्ष्णविषमत्वानि ज्ञेयानि। वाच्यमिति प्रतिक्रियावचनीयं चिकित्सितमिति यावत् ॥ ७९ ॥

चक्रपाणिः—पित्तं पावकस्थाने कुपितमिति सम्बन्धः, तच्च पित्तं मारुतानुगतत्वात्

* पाच्यमित्यत्र वाच्यमिति चक्रधृतः पाठः ।

तमत्यग्निं गुरुस्निग्ध-शीतैर्मधुरविज्जलैः ।
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ॥
मुहुर्म्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत् ॥ ८१ ॥
कृशरां पायसं स्निग्धं पैष्टिकं गुड़वैकृतम् ।
अद्यात् तथौदकानूप-पिशितानि घृतानि च ॥
मत्स्यान् विशेषतः श्लक्ष्णान् स्थिरतोयचरानपि ।
आविकञ्च घृतं मांसमद्यादत्यग्निराबलम् ॥
यवागूं समधूच्छिष्टां घृतं वा क्षुधितः पिबेत् ।
गोधूमचूर्णमन्थं वा व्यधयित्वा सिरां पिबेत् ॥
पयो वा शर्करां सर्पिर्जीवनीयौषधैः शृतम् ।
फलानि तैलयोनीनां मृत्कुञ्चाश्च सशर्कराः ॥

गङ्गाधरः—तदत्यग्निचिकित्सितमाह—तमित्यादि। तमत्यग्निं गुरुत्वादिगुणैरन्नपानैः शान्तिं नयेत् यथाम्बुभिर्दीप्तमग्निं शान्तिं नयति। विज्जलं पिच्छिलम्। गुर्व्वाद्यन्नपाने खल्वजीर्णेऽपि मुहुर्म्मुहुरस्यात्यग्नेः पुंसो भोज्यानि गुर्व्वादीनि मुहुर्म्मुहुरुपहारयेत्। कस्मात्? निरिन्धनोऽस्यात्यग्निरन्तरमवकाशं लब्ध्वा यथा नैनं पुरुषं विपादयेन्न मारयेत् ॥ ८१ ॥

गङ्गाधरः—यानि भोज्यान्युपहारयेत् तान्याह—कृशरामित्यादि। कृशरां तिलशष्कुलीम्। विशेषतस्तु स्थिरतोयचरान् सरोवापीपुष्करिण्यादितोयचरान् श्लक्ष्णान् कोमलान् मत्स्यानद्यात्। आबलं यावदत्यग्निपुरुषस्य बलं स्यात् तावदेतान् स पुमानद्यात्। यवागूमित्यादि। समधूच्छिष्टां यवागूं क्षुधितः पिबेत्। घृतं वा स्वच्छं पिबेत्। सिरां पञ्चसिराणामन्यतमां व्यधयित्वात्यग्निर्गोधूमचूर्णमन्थं वा गोधूमचूर्णं द्रवेणालोड्य पिबेत्। पयो वा पिबेत् शर्करां वा पिबेत्। जीवनीयदशकौषधैः शृतं घृतं वात्यग्निर्जनः पिबेत्।

अत्यग्निकरं भवति एवं धर्म्मभेदात् विरुद्धकार्य्यकरं ज्ञेयम्। पित्तोष्मरूपस्यापि वह्नेः प्रादेशिकपित्तोष्मणो हानिजनकत्वं जन्यजनकयोर्भेदत्वात् उपपन्नमेव ज्ञेयम् ॥ ८० । ८१ ॥

चक्रपाणिः—स्थिरतोयचरानित्यनेन स्थिरतोयचारिणां निष्क्रियतया गौरवातिशयं दर्शयति।

मार्द्दवं जनयन्त्यग्नेः स्निग्धमांसरसास्तथा।
पिबेच्छीताम्बुना सर्पिर्मधूच्छिष्टेन संयुतम्॥
गोधूमचूर्णं पयसा ससर्पिष्कं पिबेन्नरः।
आनूपरससिद्धान् वा त्रीन् स्नेहांस्तैलवर्ज्जितान्॥
पयसा समितां वापि घनां त्रिस्नेहसंयुताम्।
नारीस्तन्येन संयुक्तां पिबेदौडुम्बरीं त्वचम्।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये॥ ८२॥
श्यामात्रिवृद्विपक्वं वा पयो दद्याद् विरेचनम्।
असकृत् पित्तहरणं पायसं प्रतिभोजनम्।
भिषक् प्राज्ञः प्रसमीक्ष्य तस्मै दद्याद् विधानवित्॥ ८३॥

तलयोनीनां फलानि तिलवातामादीनि सशर्कराः ससिता मृत्कुञ्जा मृत्खण्डा आश्वत्यग्नेर्मार्द्दवं जनयन्ति, तथा स्निग्धमांसरसाश्च मार्द्दवमग्नेः जनयन्ति। पिबेदित्यादि। द्रवीकृतेन मधूच्छिष्टेन संयुक्तं सर्पिः शीतेनाम्बुना पिबेत्। गोधूमचूर्णं पयसालोड्य ससर्पिष्कमत्यग्निर्नरः पिबेत्। आनूपेत्यादि। आनूपमांसरसेन चतुर्गुणेन सिद्धांस्तैलवर्ज्जितांस्त्रीन् स्नेहान् घृतवसामज्ज्ञः पिबेत्। केचित् प्रत्येकमाहुः। पयसा समितां गोधूमचूर्णं त्रिस्नेहसंयुतां घृतवसामज्जसंयुतां घनामद्रवीभूतां पिबेत्। नारीत्यादि। औडुम्बरीं त्वचं नारीस्तन्येन पिष्ट्वा पिबेदघनामेव। ताभ्यामित्यादि। ताभ्यां नारीस्तन्यौडुम्बरत्वग्भ्यां किञ्चित् तण्डुलं पायसं सिद्धमित्यग्निशान्तये पिबेत्॥ ८२॥

गङ्गाधरः—श्यामेत्यादि। श्यामात्रिवृद्विपक्वं पयो वा विरेचनं दद्यात्। पित्तहरणं पायसं तद्विरेचने प्रतिभोजनमसकृत् दद्यात्॥ ८३॥

उष्णोदकमृदिता मृत्पिण्डा मृत्कुञ्जा उच्यन्ते। उत्कारिकेत्यन्ये। घनां त्रिस्नेहसंयुतामित्यत्र घनशब्देन त्वगुच्यते॥ ८२॥

चक्रपाणिः—पायसेन प्रतिभोजनं यस्मिन् पित्तहरणे तत् पायसप्रतिभोजनम्॥ ८३॥

यत् किञ्चिद् गुरु मेध्यं यत् श्लेष्मलञ्चापि भोजनम् ।
सर्व्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा ॥
मेध्यान्यन्नानि योऽत्यग्नावप्रतान्तः * समश्नुते ।
न तन्निमित्तं व्यसनं लभते पुष्टिमेव च ॥ ८४ ॥
कफे वृद्धे जिते पित्त-मारुते चानलः समः ।
समधातोः पचत्यन्नं पुष्ट्यायुर्बलवृद्धये ॥ ८५ ॥

भवन्ति चात्र ।

पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम् ।
विषमं बहु चाल्पं वाप्यप्राप्तातीतकालयोः॥
पूर्व्वान्नशेषे च पुनर्भुक्तमध्यशनं मतम् ।
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ॥ ८६

गङ्गाधरः—यदित्यादि । मेध्यं मेधाहितं पवित्रं न त्वमेध्यम् । मेध्यानीत्यादि । योऽप्रतान्तोऽम्लानः पुमानत्यग्नौ मेध्यान्यन्नानि समश्नुते स तन्निमित्तमत्यग्निनिमित्तकं व्यसनं न लभते पुष्टिञ्चैव लभते ॥ ८४ ॥

गङ्गाधरः—कथं तदाह—कफ इत्यादि । उक्तैर्मेध्याहारैरत्यग्निजनस्य कफे वृद्धे सति पित्तमारुते तु जितेऽनलः समः सन् समधातोस्तस्य पुष्ट्यायुर्बलवृद्धयेऽन्नं पचति । इति ॥ ८५ ॥

गङ्गाधरः—अत्र श्लोका भवन्ति—भवन्तीत्यादि । पथ्यापथ्यमित्यादि । इह भोजनविषये यत् पथ्यं यच्चापथ्यं तदेकत्र यद्भुक्तं भवति तत् समशनं बुधैर्मतम् । बहु चाल्पं वा अप्राप्ताहारकाले वा अतीताहारकाले वा यद् भुक्तं पथ्यं वापथ्यं वा पृथक्त्वेन तद्विषममशनं मतम् । पूर्व्वान्नशेषे पूर्व्वदिनाहारस्य पाकावशेषे सति

चक्रपाणिः—मेध्यमिति मेदुरम्, मेदोजनकं वा । अप्रशान्त इति आबुभुक्षितः । व्यसनं मरणमित्यर्थः । पुष्टिमेव लभते इति योज्यम् ॥ ८४ । ८५ ॥

चक्रपाणिः—सम्प्रति प्रागुक्तसमशनादिलक्षणमाह—पथ्यापथ्येत्यादि । पथ्यापथ्यं किञ्चित् एकत्र मिलितं, यथा रक्तशाल्यन्नं यवान्नं मिलितम् । बहुभुक्तम् अल्पभुक्तं वा तथाऽप्राप्तकालमतीतकालञ्च भुक्तं विषममुच्यते । पूर्वान्नेत्यादिना भुक्तं दिवा भुक्तस्य पुनरुपयोगोऽध्यशनम् ॥ ८६ ॥

* अप्रशान्त इति चक्रपाठः ।

प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति।
दिवा प्रबोध्यतेऽर्केण हृदयं पुण्डरीकवत् ॥
तस्मिन् विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्व्वशः।
व्यायामाच्च विचाराच्च * विक्षिप्तत्वाच्च चेतसः ॥
न क्लेदमुपगच्छन्ति † दिवा तेनास्य धातवः।
अक्लिन्नेष्वन्नमासिक्तमत्यन्तेषु न दुष्यति ॥
अविदग्धेष्विव पयःस्वन्यत् संमिश्रितं पयः ‡।
नैव दुष्यति तेनैव समं सम्पद्यते यथा ॥ ८७॥

यद् भुक्तं तदध्यशनं मतमिति। त्रीण्यप्येतान्यशनानि मृत्युं सृजन्ति घोरान् व्याधीन् वा सृजन्तीति ॥ ८६ ॥

गङ्गाधरः—तर्हि सद्योऽजीर्णे भुञ्जीत वा न वेत्यत आह—प्रातरित्यादि। प्रातराशे पूर्व्वाह्णे कृतभोजने त्वजीर्णे सत्यपि सायमाशो रात्रौ द्वितीयभोजनं न दुष्यति। कस्मात्? दिवा हि हृदयं पुण्डरीकवदर्केण प्रबोध्यते विकचं क्रियते। तस्मिन् हृदये विबुद्धे प्रस्फुटिते सति स्रोतांसि सर्व्वाण्यन्नवहादीनि सर्व्वशः स्फुटितत्वं यान्ति। एवंपुरुषस्य दिवा व्यायामाच्च विचाराच्च विचरणं गमनागमनं चेतसो विक्षिप्तत्वाच्च चित्तस्य विविधविषयेषु भ्रामणात् अस्य दिवा दिने तेन पूर्व्वाह्णाहाराजीर्णे निशाभोजनेन धातवो रसरक्तादयो न क्लेदमुपयान्ति। तर्हि दैनाजीर्णे भोजने सर्व्वस्मिन्नेव कस्मान्न दोषः स्यादित्यत आह—अक्लिन्नेष्वित्यादि। पूर्व्वाह्णभोजनाजीर्णे रसादिषु धातुष्वत्यन्ताक्लिन्नेषु आसिक्तं भुक्तमन्नं न दुष्यति। यथा पयःस्वविदग्धेषु स्वल्पोष्णानम्लेषु अन्यत् पयो मिश्रितं न दुष्यति ॥ ८७ ॥

चक्रपाणिः—प्रातराश इत्यादि प्रातर्भोजनमित्यर्थः। कस्मात् तत् न दुष्यतीत्याह—दिवेत्यादि। स्फुटत्वमिति स्रोतसां वहनेन रसव्याप्तिर्भवति, ततश्च नक्ते इदं स्रोतांसि याति। तथा व्यायामादिभिश्च शोष्यमाणा न उत्क्लेदमुपयान्ति धातवः। व्यायामो गमनादिः, विहारोऽङ्गक्षेपणादिचेष्टा। स्रोतउत्क्लेदे किं भवतीत्याह—अक्लिन्नेष्वित्यादि। आसिक्तमिति प्रक्षिप्तम्। अविदग्धेत्यादिना दृष्टान्तमाह ॥ ८७ ॥

---

* विहाराच्च इति चक्रः। † उत्क्लेदमुपगच्छन्ति इति चक्रपाठः।

‡ अविदग्ध इव क्षीरे क्षीरमन्यद् विमिश्रितम् इति चक्रेण पठ्यते।

रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ।
परिक्लेदं यान्ति कोष्ठे संवृते देहधातवः ॥
क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति ।
विदग्धेषु पयःस्वन्यत् पयस्तप्तेष्विवार्पितम् ॥
नैशेष्वाहारजातेषु नाविपक्वेषु बुद्धिमान् ।
तस्मादन्यत् समश्नीयात् पालयिष्यन् बलायुषी ॥ ८८ ॥

संग्रहश्लोकाः ।

अन्तरग्निगुणा देहं यथा सन्धारयेच्च सः ।
यथान्नं पच्यते यश्च यथाहारः करोत्यपि ॥
येऽग्नयो यांश्च पुष्यन्ति यावन्तो ये पचन्ति यान् ।
रसादीनां क्रमोत्पत्तिर्मलानां तेभ्य एव च ॥
वृष्याणामाशुकृद्धेतुर्द्धातुकालोद्भवक्रमः ।
रोगैकदेशकृद्धेतुरान्तराग्निर्यथाधिकः ॥
प्रदुष्यति यथा दुष्टो यान् रोगान् जनयत्यपि ।
ग्रहणी या समासाच्च ग्रहणीदोषलक्षणम् ॥

गङ्गाधरः—रात्रावजीर्णं तु दिने भोजनं यथा स्यात् तदाह—रात्रावित्यादि । रात्रौ तु सूर्य्यसम्पर्काभावात् पुण्डरीकवत् हृदये म्लाने मुद्रिते सत्ययनेषु रसादिवहस्रोतःसु संवृतेषु कोष्ठे च संवृते देहधातवः परिक्लेदं सर्व्वथा क्लिन्नभावं यान्ति । क्लिन्नेषु तेषु रसादिधातुषु खल्वन्नेष्वपक्वेषु च सत्स्वन्यदन्नमासिक्तं प्रदुष्यति । यथा विदग्धेष्वम्लीभूतेषु तप्तेषु पयःस्वन्यत् पयोऽर्पितं प्रदुष्यति । ततो यत् कार्य्यं तदाह—नैशेष्वित्यादि । तस्माद् बुद्धिमान् नैशेष्वाहारजातेषु अविपक्वेषु बलायुषी पालयिष्यन्नन्यदन्नं न समश्नीयादिति ॥ ८८ ॥

चक्रपाणिः—म्लान इति सङ्कुचिते । अपक्वेष्वित्यन्येषु । उपसंहरति नैशेष्वित्यादिना । न समश्नीयादिति योजना ॥ ८८ ॥

चक्रपाणिः—अन्तरग्निरित्यादिना अध्यायसंग्रहः । येऽग्नय इति यथास्वं स्वान् इत्याद्युक्तं

पूर्व्वरूपं पृथक् चापि व्यञ्जनं सचिकित्सितम्।
चतुर्व्विधस्य निर्द्दिष्टा तथैवावस्थिकी क्रिया॥
जायते च यथात्यग्निर्यच्च तस्य चिकित्सितम्।
तदुक्तवानशेषेण ग्रहणीदोषिके मुनिः॥ ८६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थाने ग्रहणीदोषचिकित्सितं नाम
पञ्चदशोऽध्यायः॥ १५॥

गङ्गाधरः—अस्याध्यायस्यार्थसंग्रहार्थमाह—संग्रहश्लोकाः। अन्तरग्निरित्यादि। मुनिरात्रेयपुनर्व्वसुः॥ ८९॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बलप्रतिसंस्कृत एव च।
चिकित्सितस्थान एव ग्रहणीदोषिके पुनः। ग्रयणीदोषिकचिकित्सितं
पञ्चदशोऽध्यायः।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ षष्ठस्कन्धे
चिकित्सितस्थानजल्पे ग्रहणीदोषचिकित्सितजल्पाख्या
पञ्चदशी शाखा॥ १५॥

संगृह्णाति। यानिति सप्तभिर्देहधातार इत्यादुक्तसंग्रहः। आशुकारित्वेन हेतुना आशुकृद्धेतुः। शेषं व्यक्तम्॥ ८९॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां ग्रहणीदोषचिकित्सितं
नाम पञ्चदशोऽध्यायः॥ १५॥

# षोड़शोऽध्यायः ।

**अथातः पाण्डुरोगचिकित्सितं व्याख्यास्यामः,**
**इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।**
**चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ २ ॥**

गङ्गाधरः—उद्दिष्टक्रमाद् ग्रहणीरोगचिकित्सानन्तरं पाण्डुरोगचिकित्सितमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—पाण्डुरोगा इत्यादि । पञ्चमो मृदो भक्षणादिति । स्वकारणकुपितवातादिभिरेवान्यरोगा आरभ्यन्ते न च तत्कारणभेदाद्भिद्यन्ते, तथा भक्षितकषायादिमृत्तिकया कुपिता वातादयोऽन्यरोगानिव पाण्डुरोगञ्च आरभन्ते । किमर्थं मृद्भक्षणकारणाद्भिद्यते इति चेन्न, कषायादिमृद्भक्षणकुपिता वातादयः पाण्डुरोगमेवारभन्ते, नान्यरोगमारभन्ते, इत्यतो मृद्भक्षणतो भिद्यते, चिकित्साविशेषार्थं वातादिहरमात्रचिकित्सया प्रशमाभावात् यथा च मृद् भक्षिता वातादीनां कोपं जनयति, तथा पाण्डुरोगञ्च जनयतीत्युभयहेतुर्मृदिति अतश्च मृत्तिकाजत्वेन भिद्यत इति । यत् पुनः शोफकारणं मृदुक्ता तत् तु कषायोपरमधुरमृद्भिन्ना मृत् । तया कुपितवातादयः शोफमिवान्यरोगञ्च जनयन्ति, कारणान्तरकुपिता इव, तस्मान्न मृत्तिकाजत्वेन शोफो भिद्यते ॥ २ ॥

चक्रपाणिः—ग्रहणीदोषचिकित्सिते तीक्ष्णाग्निना पित्तजननात् ग्रहणीचिकित्सितानन्तरं पित्तप्रधानपाण्डुरोगचिकित्सितमुच्यते । पाण्डुना वक्ष्यमाणेभ्यः हरितालवर्णेभ्यः प्रधानेन वर्णेन चिकित्सितो रोगः पाण्डुरोगः । सुश्रुते उक्तं—सर्व्वेषु चैतेषु च पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः इति । कामलाहलीमकादिचिकित्सा च पाण्डुरोगभेदत्वादेव इहैव वक्तव्या । किंवा पाण्डुरोगादीनां चिकित्सितं पाण्डुरोगचिकित्सितमिति परिग्रहात् कामलाचिकित्सितमिति प्रतिज्ञातम् । त्रिशोथीये यद्यपि पाण्डुरोगः पञ्चसंख्याक उक्तस्तथापीह पुनस्तदनुवादेन सुश्रुतोक्तचतुःसंख्यात्वं निषेधयति । उक्तं हि सुश्रुते—पाण्डामयोऽष्टार्द्धविधः प्रदिष्टः पृथक्समस्तैर्युगपच्च दोषैरिति । मृद्भक्षणजः पृथगेवोच्यते ॥ १ । २ ॥

दोषाः पित्तप्रधानाश्च यस्य कुप्यन्ति धातुषु।
शैथिल्यं तस्य धातूनां गौरवञ्चोपजायते॥
ततो वर्णबलस्नेहा ये चान्येऽप्योजसो गुणाः।
व्रजन्ति क्षयमत्यर्थं दोषदूष्यप्रदूषणात्॥
सोऽल्परक्तोऽल्पमेदस्को निःसारः शिथिलेन्द्रियः।
वैवर्ण्यं भजते तस्य हेतुं शृणु सलक्षणम्॥ ३॥

गङ्गाधरः—सम्प्राप्तिमाह—दोषा इत्यादि। पित्तप्रधाना इत्यनेन वातादिपृथगजेषु पाण्डुरोगेषु सर्व्वेषु पित्तमारम्भकमुक्तं, तर्हि द्विदोषा एव किं सर्व्वे भवन्तीत्यत उक्तं दोषा इति बहुवचनान्तम्। सर्व्वत्र पित्तं प्रधानं सदपि योऽन्यो दोषः प्रधानतयारम्भकस्तेन दोषेण पृथगदोषजो व्यपदिश्यते न तु अप्रधानदोषेण। न हि सति पित्तप्राधान्ये द्वावितरौ दोषावारम्भकौ भवतः। तथाविधकोपनकारणाभावादितिवद् द्वन्द्वजः पाण्डुरोगोऽस्ति, सति पित्तप्राधान्ये तदितरयोः प्राधान्येन प्रकोपे तज्जपाण्डुरोगस्य सन्निपातजत्वव्यपदेशात्। न हि समत्रिदोषजत्वेन पाण्डुरोगसम्भवोऽस्ति, येन सन्निपातान्तरं व्यपदिश्य द्विदोषजो व्यपदेश्यः स्यात्। पित्तप्रधाना इत्युक्त्या सन्निपातेऽपि पित्तप्राधान्यवचनादिति। ये चान्येऽप्योजसो गुणा माधुर्य्यलाजगन्धादयः। यस्यैवमोजःक्षयः स्यात् सोऽल्परक्तादिः सन् वैवर्ण्यं भजते, तद् वैवर्ण्यं पाण्डुवर्णाव्यभिचारात् पाण्डुरोगमाहुस्तस्य सलक्षणं हेतुं शृणु॥ ३॥

चक्रपाणिः—दोषा इत्यादिना संप्राप्तिमाह। पित्तं प्रधानं ययोस्ते पित्तप्रधानाः, बहुवचनञ्च व्यक्तिबहुत्वापेक्षया न तु पारमार्थिकम्। गौरवं पाण्डुरोगिणो निःसारधातुत्वादिति ब्रुवते। ओजसो गुणा इति ओजसो ये दश गुणाः क्षीरसमाना उक्तास्ते ज्ञेयाः। ओजसः क्षपणेनैव स्नेहक्षये लब्धे पुनः स्नेहक्षयाभिधानं विशेषक्षयाभिधानार्थम्। दोषैर्दूष्याणां प्रकृष्टाद् दूषणादिति दोषदूष्यप्रदूषणात्। निःसारः अष्टौ सारा इत्यादिना प्रोक्तसारविरहितः। शिथिलेन्द्रियः दुर्ब्बलेन्द्रियः। स इति पुमान्। रक्तपित्तयोरेकयोनित्वात् अपिच पित्तरक्तयोरिह रक्तवृद्धिभीत्या तथापि इह रक्तक्षयो रक्तपोषकरसस्य पित्तेन क्षपणात् रक्तपोषकसारभागानुत्पादाच्च। यद्यपि पित्तं तेजोरूपतया वर्णकरमिहोच्यते, यदुक्तं—तेजोधातुर्वर्णकर इति, तथापि विकृतत्वात् पित्तमिह विकृतवर्णकृदेव भवति॥ ३॥

क्षाराम्ललवणात्युष्ण-विरुद्धाहारसेवनात् ।
निष्पावमाषपिण्याक-तिलतैलनिषेवणात् ॥
विदग्धेऽन्ने दिवास्वप्नाद् व्यायामान्मैथुनात् तथा ।
प्रतिकर्म्मर्त्तुवैषम्याद् वेगानाञ्च विधारणात् ॥
कामचिन्ताभयक्रोध-शोकोपहतचेतसः ।
समुदीर्णं यथा पित्तं हृदये समवस्थितम् ॥
वायुना बलिना क्षिप्तं सम्प्राप्य धमनीर्दश ।
प्रपन्नं केवलं देहं त्वङ्मांसान्तरसंस्थितम् ॥
प्रदूष्य कफवातासृक्-त्वङ्मांसानि करोति तत् ।
पाण्डुहारिद्रहरितान् वर्णांश्च विविधांस्त्वचि ॥
स पाण्डुरोग इत्युक्तस्तस्य लिङ्गं भविष्यतः ।
हृदयस्पन्दनं रौक्ष्यं स्वेदाभावः श्रमस्तथा ॥ ४ ॥

गङ्गाधरः—क्षारेत्यादि । निष्पावः शिम्बिः, पिण्याकस्तिलकल्कः । विदग्धेऽपक्के भुक्तेऽन्ने दिवास्वप्नात्, प्रतिकर्म्मवैषम्यादपररोगप्रतिकारार्थ-कर्म्मणामसम्यग्योगात्, ऋतुवैषम्याच्च । एभिर्हेतुभिर्यथा पित्तं समुदीर्णं हृदये समवस्थितं तथा तैरेव क्षारादिभिः कुपितेन बलिना वायुना क्षिप्तं तत् पित्तं दश हृदयमूला धमनीः सम्प्राप्य केवलं कृत्स्नं देहं प्रपन्नं सत् त्वङ्-मांसयोरन्तरे संस्थितं कफवातासृक्त्वङ्मांसानि सन्दूष्य त्वचि पाण्ड्वादीन् विविधान् वर्णान् तत् पित्तं करोति, स पाण्डुप्राधान्यात् पाण्डुरोग इत्युक्तः । भविष्यतस्तस्य लिङ्गं हृदयेत्यादि ॥ ४ ॥

चक्रपाणिः—क्षारेत्यादिना समानं हेतुमाह—व्यायाममैथुने विदग्धेऽन्ने रोगहेतुनी । प्रतिकर्म्मणाम् ऋतूनाञ्च वैषम्यम् । धमनीर्दश इति हृदयाश्रितदशधमनीः । केवलमिति कृत्स्नम् । प्रदूष्य कफवातासृगित्यादिपाठे वायोः पित्तेन दूषणम् । यदा तु कफपित्तासृगिति पाठः तदा पित्तेन हृदयस्थेन स्थानान्तरस्थस्य पित्तस्य दुष्टिर्ज्ञेया । समुदीर्णमित्यादिना एवेयं संप्राप्तिः पूर्व्वोक्तसामान्यसंप्राप्तेरेव प्रपञ्चः । तस्येत्यादिना पूर्व्वरूपमाह । स्वेदाबाध इति केचित् पठन्ति ॥ ४ ॥

सम्भूतेऽस्मिन् भवेत् सर्व्वः कर्णक्ष्वेड़ी हतानलः ।
दुर्व्बलः सदनोऽन्नद्विट् श्रमभ्रमनिपीड़ितः ॥
गात्रशूलज्वरश्वास-गौरवारुचिमान् नरः ।
मृदितैरिव गात्रैश्च पीड़ितोन्मथितैरिव ॥
शूनाक्षिकूटो हरितः शीर्णरोमा हतप्रभः ।
कोपनः शिशिरद्वेषी निद्रालुः ष्ठीवनोऽल्पवाक् ॥
पिण्डिकोद्वेष्टकट्यूरु-पादरुक्सदनानि च ।
स्युरध्वारोहणायासैर्विशेषस्तस्य वक्ष्यते ॥ ५ ॥
आहारैरुपवासैश्च वातलैः कुपितोऽनिलः ।
जनयेत् कृष्णपाण्डुत्वं सरुक्षारुणभासताम् ॥
अङ्गमर्द्दं ज्वरं तोदं कम्पं पार्श्वशिरोरुजम् ।
वर्च्चःशोषास्यवैरस्यं शोथानाहबलक्षयान् ॥ ६ ॥

गङ्गाधरः—तस्य सामान्यलिङ्गम् सम्भूत इत्यादि । अस्मिन् पाण्डुरोगे सम्भूते जाते सर्व्वो वातादिपाण्डुरोगी कर्णक्ष्वेड़ी कर्णरोगविशेषवान् । गात्रैः मृदितैरिव विशिष्टः पीड़ितैरुन्मथितैरिव च गात्रैर्विशिष्टः । पिण्डिका जान्वधोमांसपिण्डं तस्योद्वेष्टनं दण्डादिनेव ताड़नं कट्यादिषु रुक् सदनानि च अध्वारोहणायासैः स्युः । इति पाण्डुरोगसामान्यलक्षणम्, विशेषतो वातजादिलक्षणं वक्ष्यते ॥ ५ ॥

गङ्गाधरः—आहारैरित्यादि । वातलैः रुक्षादिभिराहारैः । कृष्णपाण्डुत्वं सरुक्षारुणभासतामङ्गमर्द्दादींश्च जनयेत् ॥ ६ ॥

चक्रपाणिः—सम्भूतेऽस्मिन् इति उत्पन्ने पाण्डुरोगे कर्णक्ष्वेड इत्यादि सामान्यं लक्षणम् । कर्णक्ष्वेड़ी कर्णनादवान् । अन्नद्विड़ित्यादिना अन्नाग्रह उच्यते । अरुचिमान् इत्यनेन प्रार्थितान्न-भक्षणासामर्थ्यमुच्यते । शिशिरद्वेषी इति शीतद्वेषी । शिशिरद्वेषिता च पित्तरोगेऽप्यस्मिन् रोगमहिम्ना भवति । पिण्डिकोद्वेष्टनं पिण्डिकापीड़ा । आरोहणेनायासाच्चेति । विशेषश्चास्य वक्ष्यते इति पाण्डुरोगस्य वातजत्वादिविशेषतो हेतुलिङ्गविशेषो वक्ष्यते इत्यर्थः ॥ ५ ॥

चक्रपाणिः—आहारैरित्यादिना वातजस्य हेतुलक्षणे अप्याह । सामान्यलक्षणानि सर्व्वत्र भवन्ति विशेषलक्षणानि विशेषलक्षणाय ॥ ६ ॥

पित्तलस्याचितं पित्तं यथोक्तैः स्वैः प्रकोपणैः।
दूषयित्वा तु रक्तादीन् पाण्डुरोगाय कल्पते॥
स पीतो हरिताभो वा ज्वरदाहसमन्वितः।
छर्दिमूर्च्छापिपासार्त्तः * पीतमूत्रशकृन्नरः॥
स्वेदनः शीतकामश्च न चान्नमभिनन्दति।
कटुकास्यो न चास्योष्णमुपशेतेऽम्लमेव च॥
उद्गारोऽम्लो विदाहश्च विदग्धान्नस्य जायते।
दौर्ब्बल्यं भिन्नवर्च्चस्त्वं दौर्गन्ध्यं तम एव च॥ ७॥
विवृद्धः श्लेष्मलैः † श्लेष्मा पाण्डुरोगं स पूर्व्ववत्।
करोति गौरवं तन्द्रां छर्दिं श्वेतावभासताम्॥
प्रसेकं लोमहर्षञ्च सादं मूर्च्छां भ्रमं क्लमम्।
श्वासं कासं तथालस्यमरुचिं वाक्स्वरग्रहम्॥
मूत्राक्षिवर्च्चसां शौक्ल्यं कटुरुक्षाम्लकामताम्।
श्वयथुं लवणास्यत्वमिति पाण्ड्वामयः कफात्॥ ८॥

गङ्गाधरः—सहेतुपित्तपाण्डुरोगलक्षणमाह—पित्तलस्येत्यादि। पित्तलस्य पित्तप्रधानस्य स्वैः पित्तस्य यथोक्तैः कट्वम्लोष्णादिभिः प्रकोपणैराचितं पित्तं रक्तादीन् दूषयित्वा पाण्डुरोगाय कल्पते। नरः स पीतादिर्भवति। विदग्धान्नस्योद्गारोऽम्लो विदाहश्च जायते। इति पित्तपाण्डुरोगस्य हेतुलक्षणमुक्तम्॥ ७॥

गङ्गाधरः—अथ कफपाण्डुरोगस्य हेतुपूर्व्वकलक्षणमाह—विवृद्ध इत्यादि। श्लेष्मलैर्गुरुमधुरादिभिः श्लेष्मकोपनैर्विवृद्धः श्लेष्मा स पूर्व्ववत् रक्तादीन्

चक्रपाणिः—पित्तलस्येत्यादिना पैत्तिकमाह। सर्व्वोऽपि पाण्डुरोगः पित्तजः तथाप्ययं विशेषण दोषान्तरासंपृक्तत्वात् प्रबलपित्तजन्यत्वात् पैत्तिक इत्युच्यते, यथा पैत्तिकं रक्तपित्तम्। अत एवात्र पित्तातिप्रबलतोपदर्शनार्थं पित्तलस्येत्येनेन पित्तप्रकोपिकारणान्युक्तानि यथोक्तैः इति। रक्तादीन् रक्तप्रकारान् तेन रसरक्तादीनामपि ग्रहणम्। तृष्णामूर्च्छापिपासार्त्त इत्यत्र तृष्णानिमित्ता मूर्च्छा तृष्णामूर्च्छा तेन पिपासया न पौनरुक्त्यम्। अन्ये तु तृष्णामिह क्षुधामाहुः। केचित् तृष्णामूर्च्छापरीतस्येति पठन्ति॥ ७॥

चक्रपाणिः—विवृद्धैरित्यादिना कफजामाह। पूर्व्ववदिति रक्तादीन् संदूष्य॥ ८॥

* तृष्णामूर्च्छापिपासार्त्त इति चक्रः। † विवृद्धैः श्लेष्मलैः इति चक्रसम्मतः पाठः।

सर्व्वान्नसेविनः सर्व्वे-दोषा दुष्टास्त्रिदोषजम्।
त्रिदोषलिङ्गं कुर्व्वन्ति पाण्डुरोगं सुदुःसहम्॥ ६॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः।
कषाया मारुतं पित्तमूषरा मधुरा कफम्॥
कोपयेन्मृद्‌ रसादींश्च रौक्ष्याद्‌ भुक्तञ्च रुक्षयेत्।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धयपि॥

दूषयित्वा पाण्डुरोगं करोति। गौरवादिकञ्च करोति। वाक्स्वरग्रहं वाग्ग्रहं स्वरग्रहञ्च। इतिलक्षणः पाण्डुामयः कफाज्जायते॥ ८॥

गङ्गाधरः—सन्निपात-पाण्डुरोगस्य हेतुलक्षणमाह—सर्व्वान्नेत्यादि। सर्व्वान्नानि वातपाण्डुरोग-पित्तपाण्डुरोग-कफपाण्डुरोगोक्तानि कषायादिकट्वादि-मधुरादीनि सेवितुं शीलमस्य तस्य, सर्व्वदोषा वातपित्तकफाः पित्तप्रधाना दुष्टाः सन्तस्त्रिदोषलिङ्गं सुदुःसहं त्रिदोषजं पाण्डुरोगं कुर्व्वन्ति॥ ९॥

गङ्गाधरः—शेषं मृत्तिकाजपाण्डुरोगस्य हेतुलक्षणमाह—मृत्तिकेत्यादि। मृत्तिकादनशीलस्य मृत्तिकाविशेषभक्षणस्वभावस्य पुंसस्त्रयाणां मलानां वातपित्तकफानामन्यतमो वातादेरेकैकमलः कुप्यति। तत्र मृत्तिकाविशेषमाह येन यो मलः कुप्यति—कषायेत्यादि। कषाया मृत् मारुतं कोपयेत्। ऊषरा मृत् क्षारमृद् भक्षिता पित्तं कोपयेत्। मधुरा मृद् भक्षिता कफं कोपयेत्। रसादींश्च सा सा मृत् कोपयेत्। सा च सा च मृत् रौक्ष्याद् भुक्तवतो भुक्तमन्नञ्च रुक्षयेत्। तर्हि किं मृत्तिकाजः पाण्डुरोग एककदोषाद् भवति तेन च दोषाः पित्तप्रधानाश्चेति वचनं न सङ्गच्छते इति? नैवं, कषायादेरेकैका मृदेव स्वप्रभावात् पित्तप्रधानांस्त्रीन् दोषान् कोपयति, तत्र कषाया वातप्रबलपित्तप्रधानत्रिदोषं कोपयेत्। ऊषरा पित्तप्रधानं, मधुरा पित्तप्रधानकफप्रबलत्रिदोषं कोपयेत्। न तु कषायोषरमधुरा त्रिधा मृन्मिलिता भक्षिता त्रीन् दोषान्

चक्रपाणिः—सर्व्वान्नेत्यादिना सान्निपातिकं व्याकरोति। त्रिदोषलिङ्गमिति प्रत्येकदोषलिङ्ग-समुदाययुक्तम्॥ ९॥

चक्रपाणिः—मृत्तिकेत्यादिना मृद्भक्षणजमाह। अत्र च दोषसम्बन्धे सत्यपि मृदेव व्यपदेशिका न दोषाः। यस्मा एव चिकित्साभेद-लिङ्गभेदकर्तृत्वात्। कषाया मारुतमित्यादिना मृदोऽपि

इन्द्रियाणां बलं हत्वा तेजो वीर्य्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥
शूनाक्षिकूटगण्डभ्रुः शूनपन्नाभिमेहनः ।
क्रिमिकोष्ठोऽतिसार्य्येत मलं सासृक् कफान्वितम् ॥ १० ॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ।
कालप्रकर्षाच्छूनो ना यो वा पीतानि पश्यति ॥

कोपयेत् इति। सा सा च मृद्भक्षिता वातादीन् कोपयेत् रसादीन् भुक्तञ्च रूक्षयेत् स्वयञ्चाविपक्वैव स्रोतांसि पूरयति निरुणद्धि च। इन्द्रियाणां बलं हत्वा तथा तेजो वीर्य्यौजसी च हत्वा बलवर्णाग्निनाशनं पाण्डुरोगमाशु करोतीति। मृदः कर्त्तृत्ववचनान्न तु कषायादिमृदा कुपितो वाताद्यन्यतमः पाण्डुरोगं करोति। आगन्तुर्हि पूर्व्वं जायते पश्चाद्दोषैरनुबध्यते। तस्मात् कषायाद्यन्यतमया मृदोक्तरूपेण जनितं पाण्डुरोगमुत्तरकालं तत्तन्मृदा कुपितो वातादिरनुबध्नातीति दोषजाद् भेदः। यथा हि निरुक्तकारणात् कुपितो वातादिः पाण्डुरोगं करोति न तथा मृत्कुपितः। मृदेव वातादीन् कोपयित्वा पाण्डुरोगं करोति, ततस्तत् पित्तवातादिरनुबध्नातीति। शूनाक्षीत्यादि। यस्य भक्षिता मृत् पाण्डुरोगं करोति स शूनाक्षिकूटादिः। शूने स्फीते अक्षिकूटे चक्षुर्गोलके गण्डे कपोले भ्रुवौ च शूनौ शोफौ यस्य सः। शूनानि पन्नाभिमेहनानि यस्य सः पदादयः पृथक्छब्दाः सन्ति। क्रिमिकोष्ठः सन्नसृक्सहितं कफान्वितं मलमतिसार्य्येत। इति मृत्तिकाभक्षणजपाण्डुरोगलक्षणम् ॥ १० ॥

गङ्गाधरः—सर्व्वेषामसाध्यलक्षणमाह—पाण्डुरोग इत्यादि। चिरोत्पन्नो यदि खरीभवति रौक्ष्यात् कर्कशभावं गच्छति, तदा सर्व्व एव पाण्डुरोगो न सिध्यति। यो वा ना पुमान् कालप्रकर्षादधिककालत्वात् शूनः शोफवान् सन् सर्व्वाणि दृश्यानि पीतानि पश्यति, तस्य पाण्डुरोगो न सिध्यति।

वातादिगतलिङ्गं दर्शयति। ऊषरेति सक्षारानुरसा। रसादींश्च भुक्तञ्च विरूक्ष्य इति योज्यम्। अविपक्वैवेति स्वरूपावस्थितैव केवलं स्रोतांसि पूरयति रुणद्धि च। स्रोतोविरोधेन रसादीनां न सम्यगबलं भवति तेन च बलवर्णाग्निनाशन इत्यनेन बलहानिं दर्शयति ॥ १० ॥

बद्धाल्पविट् सहरितं सकफं योऽतिसार्य्यते।
दीनः श्वेतातिदिग्धाङ्गश्छर्द्दिमूर्च्छातृडन्वितः॥
स नास्त्यसृक्क्षयाद् यश्च पाण्डुः श्वेतत्वमाप्नुयात्।
इति पञ्चविधस्योक्तं पाण्डुरोगस्य लक्षणम्॥ ११॥
पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते।
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते॥
हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः॥
दाहाविपाकदौर्ब्बल्य-सदनारुचिकर्षितः।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता॥

बद्धाल्पेत्यादि। यः सहरितं पालाशवर्णयुक्तं सकफं बद्धमथ चाल्पं विट् अतिसार्य्यते, दीनो दैन्यापन्नः श्वेतवर्णनातिदिग्धाङ्गो भवति तृडाद्यर्दितश्च भवति, स पाण्डुरोगी नास्ति म्रियते। यश्च पाण्डुरसृक्क्षयात् श्वेतत्वमाप्नुयात् तत्पाण्डुरोगी नास्ति। इति पञ्चविधस्य पाण्डुरोगस्य लक्षणमुक्तं भवति॥ ११॥

गङ्गाधरः—पाण्डुरोगस्यावस्थान्तरे संज्ञान्तरमाह—पाण्डुरोगीत्यादि। यः पाण्डुरोगी पित्तलानि द्रव्याण्यत्यर्थं निषेवते, तस्य पुनर्वृद्धं पित्तमसृङ्मांसं दग्ध्वा कामलाख्यरोगाय कल्पते। निदानार्थकरोऽयं पाण्डुरोगो भवति। तस्य लक्षणं हारिद्रेत्यादि। सुभृशमतिशयेन हारिद्रनेत्रः। भेकवर्णो वार्षिकभेकवर्णवद्धारिद्रवर्णः, हतेन्द्रिय इन्द्रियशक्तिरहितः। एषा कामला बहुपित्ता कोष्ठशाखाश्रया कोष्ठमामाशयादि, शाखा रक्तादयो धातवस्तदुभयाश्रया

चक्रपाणिः—पाण्डुरोग इत्यादिना असाध्यलक्षणमाह। खरीभूत इति अत्यर्थरूक्षः। कालेत्यादिना अपरमसाध्यलक्षणम्। श्वेतानुदिग्धाङ्ग इति श्वेतवर्णलिप्ताङ्ग इत्यर्थः॥ ११॥

चक्रपाणिः—पाण्डुरोगीत्यादिना कामलामाह। पाण्डुरोगीति वचनात् पाण्डुरोगस्यैव हेतुविशेषेण कामलादिरूपावस्था उत्पद्यते। अत एव च हारीतेऽपि कामलादीनामपि पाण्डुरोगत्वमेवोक्तम्। वचनं हि—"वातेन पित्तेन कफेन चैव त्रिदोषमृद्भक्षणसंभवन्ति। द्वे कामले चैव हलीमकश्च इत्यष्टधैव ... पाण्डुरोगः।" अन्या तु सुश्रुतोक्ता कामला भिन्ना भवति "यो ह्यामयान्ते सहसाम्लमन्नमद्यादपथ्यान्यपि तस्य पित्तम्। करोति पाण्डुं वदनं विशेषात्

कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला ।
कृष्णमूत्रशकृन्नेत्रो भृशं शूनश्च मानवः ॥
सरक्ताक्षिमुखच्छर्द्दि-विण्मूत्रो यश्च ताम्यति ।
दाहारुचितृड़ानाह-तन्द्रामोहसमन्वितः ॥
नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते ॥ १२ ॥
साध्यानामितरेषाञ्च प्रवक्ष्यामि चिकित्सितम् ।
तत्र पाण्डामयी स्निग्ध-तीक्ष्णरूद्धानुलोमिकैः ।
शोध्यः स्यान्मृदुभिस्तिक्तैः कामलावान् विरेचनैः ॥

मता। तस्याः कोष्ठाश्रयत्वे कुम्भकामलासंज्ञा, तस्याः कृच्छ्रसाध्यतामाह—कालान्तरादित्यादि। कालाधिक्ये कोष्ठाश्रया कुम्भकामला यदि खरीभवति तदा कृच्छ्रा स्यात्। सर्व्वकामलानामसाध्यतामाह—कृष्णेत्यादि। अक्ष्णोर्मुखस्य छर्द्देश्च विण्मूत्रयोश्च सरक्तत्वं यस्य सः। ईदृशः कामलावान् विपद्यते म्रियते। इति पाण्डुरोगनिदानम् ॥ १२ ॥

गङ्गाधरः—अतः परमाह—साध्यानामित्यादि। उक्तासाध्यलक्षणपाण्डुकामलारोगादितरेषां कृच्छ्राणां पाण्डुरोगाणां साध्यानाञ्च चिकित्सितं प्रवक्ष्यामि। चिकित्सामाह—तत्रेत्यादि। तत्र साध्यपाण्डामयी स्निग्धतीक्ष्णैरूद्धानुलोमिकैः वमनविरेचनैः शोध्यः स्यात्। कामलावांस्तु मृदुभिः

पूर्व्वैरितौ तन्द्रिबलक्षयौ च।" इत्यादिना पृथक् कामलाहेतुरुक्तः। वाग्भटेऽपि "भवेत् पित्तोल्वणस्यासौ पाण्डुरोगादृतेऽपि च"। इह तु पाण्डुरोगेऽपि भवेत् पाण्डुरोगाद्विनापि भवेत्। यथा प्रमेहाश्रिताः पिड़काः प्रमेहेषु भवन्ति विना प्रमेहमपि भवन्ति, तथा पाण्डुरोगिणोऽपि उक्ता कामला पृथगपि भवति। कोष्ठशाखाश्रया बहुपित्तात् पाण्डुरोगपूर्व्विका भवति। या तु केवलं शाखाश्रया सा अल्पपित्ता च [वक्तव्या सा स्वतन्त्रापि भवतीति केचित्। अत एव तस्या रूक्षशीतेत्यादिना पृथगेव हेतुं लिङ्गञ्च अध्यायशेषे वक्ष्यति। बहुपित्तेत्यनेन केवलं शाखाश्रयाया अल्पपित्तत्वं सूचयति। अम्लकटुतीक्ष्णोपयोगं शाखाश्रयिपित्तस्य बलेन कोष्ठानयनार्थं वक्ष्यति। खरीभूतेति कठोरतामुपगता। कुम्भकामला अवस्थाभेदेन कोष्ठगकामलायाः संज्ञा। कुम्भः कोष्ठः तदाश्रया कामला कुम्भकामला। अस्याञ्च शोथोपलक्षणं भवति। उक्तं हि सुश्रुते—भेदस्तु तस्याः खलु कुम्भमाहुः स्रोतोमहांश्चापि स पर्व्वभेदः ॥ १२ ॥

चक्रपाणिः—तत्रेत्यादिना चिकित्सामाह। ऊर्द्धानुलोमिकैरिति ऊर्द्धहरानुलोमनवमनविरेचनयोरपि ग्रहणं युक्तम्। यतः पाण्डुरोगेऽपि "कफपाण्डौ तु गोमूत्र-क्लिन्नयुक्तां हरीतकीम्"

ताभ्यां संशुद्धकोष्ठाभ्यां पथ्यान्यन्नानि दापयेत्।
शालीन् सयवगोधूमान् पुराणान् यूषसंहितान् ॥
मुद्गाढ़कीमसूराद्यैर्जाङ्गलैश्च रसैर्हितैः।
यथादोषं विशिष्टञ्च तयोर्भैषज्यमाचरेत् ॥
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥ १३ ॥
दाड़िमात् कुड़वं धान्यात् कुड़वार्द्धं पलं पलम्।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका तथा ॥
तैः कल्कैर्विंशतिपलं घृतस्य सलिलाढ़के।
सिद्धं हृत्पाण्डुगुल्मार्शः-प्लीहवातकफार्त्तिनुत् ॥
दीपनं श्वासकासघ्नं मूढ़वाते च शस्यते।
दुःखप्रसविनीनाञ्च वन्ध्यानाञ्चैव गर्भदम् ॥ १४ ॥

दाड़िमाद्यं घृतम्।

तिक्तैर्विरेचनैः शोध्यः स्यात्। ताभ्यां पाण्ड्वामयि-कामलावद्भ्यां संशुद्धकोष्ठाभ्यां पथ्यान्यन्नानि दापयेत्। मुद्गाढ़कीमसूराद्यैः कृतयूषसंहितान् पुराणान् सयवगोधूमान् शालीन् दापयेत्। जाङ्गलैश्च हितैर्मांसरसैः शालीन् दापयेत्। तथा यथादोषं विशिष्टञ्चासाधारणं भैषज्यं तयोः पाण्ड्वामयि-कामलावतोराचरेत्। कामलापाण्डुरोगिणे स्नेहनार्थम् उन्मादोक्तं कल्याणकं घृतं कुष्ठोक्तं पञ्चगव्यमथवा महातिक्तं घृतं दद्यादिति। इति चिकित्सासूत्राणि ॥१३

गङ्गाधरः—दाड़िमादित्यादि। दाड़िमफलत्वचः कुड़वं चतुष्पलं, धान्यात् कुड़वार्द्ध पलद्वयं, चित्रकात् पलं, पलं शृङ्गवेराच्च, पिप्पल्यष्टमिका कर्षमानम्। तैः कल्कघृ तस्य विंशतिपलं सलिलाढ़के पचेत्। अत्र केचित् पठन्ति तद्वात्रिंशत्-पलं कल्कैरिति कल्कबाहुल्यानुभवात् दाड़िमादिघृतम् ॥ १४ ॥

इत्यादिना विरेचनं वक्ष्यति। ताभ्यामिति पाण्डुरोगकामलाभ्याम्। ताभ्यां संशुद्धकोष्ठाय इति पाठपक्ष ताभ्यामिति वमनविरेचनाभ्याम्। विशिष्टभैषज्यमिहैव कामलायां पाण्डुरोगे च वक्ष्यमाणं ज्ञेयम् ॥१३॥

चक्रपाणिः—दाड़िमेत्यादौ अष्टमिका द्विकर्षमुक्ता। उक्तं हि 'द्वे सुवर्णे पलार्द्धं स्यात् शुक्तिरष्टमिकापि च' इति ॥ १४ ॥

कटुकां रोहिणीं मुस्तं हरिद्रे वत्सकात् फलम् ।
पटोलं चन्दनं मूर्व्वां त्रायमाणां दुरालभाम् ॥
सपिप्पलीं पर्पटकं भूनिम्बं देवदारु च ।
पिष्ट्वाक्षमात्रैस्तैः सर्पिः-प्रस्थं क्षीराढ़के पचेत् ॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम् ।
अर्शांस्यसृग्दरञ्चैव हन्याद् विस्फोटकांस्तथा ॥ १५ ॥

कटुकाद्यं घृतम् ।

पथ्याशतरसे पथ्या-वृन्तार्द्धशतकल्कवान् ।
प्रस्थः सिद्धो घृतात् पेयः स पाण्ड्वामयगुल्मनुत् ॥ १६ ॥

पथ्याघृतम् ।

दन्त्याः शतपलरसे पिष्टैर्दन्तीशलाटुभिः ।
तद्वत् प्रस्थो घृतात् सिद्धः प्लीहपाण्ड्वर्त्तिशोफजित् ॥ १७ ॥

दन्तीघृतम् ।

गङ्गाधरः—कटुकामित्यादि । कटुकां रोहिणीं कटुरोहिणीम् । एतरक्षमात्रैः कल्कैः क्षीराढ़के षोड़शशरावे दुग्धे घृतप्रस्थं विपाचयेत् । इति कटुकाद्यं घृतम् ॥ १५ ॥

गङ्गाधरः—पथ्येत्यादि । पथ्यायाः शतपलस्य रसेऽपां द्रोणे पक्वावशेषे षोड़शशरावे पथ्यावृन्तार्द्धशतकल्कवान् पथ्याया वृन्तानामर्द्धशतं पञ्चाशत्पथ्यानां वृन्तानि कल्कीकृत्य घृतात् प्रस्थः सिद्धः पेयः । पथ्याघृतम् ॥ १६ ॥

गङ्गाधरः—दन्त्या इत्यादि । दन्त्याः शतपलस्य मूलस्यापां द्रोणे पक्वस्य पादावशेषे षोड़शशरावे रसे दन्तीशलाटुभिर्दन्त्या आमफलैः पिष्टैः पादिकैः कल्कैर्घृतात् प्रस्थः सिद्धस्तद्वत् पेयः प्लीहादिजित् । दन्तीघृतम् ॥ १७ ॥

चक्रपाणिः—पथ्याशतरसेन क्वाथः कर्त्तव्यः । अत्र च तथा क्वाथार्थं जलं देयं यथा चतुर्भागावशिष्टं सत् घृतचतुर्गुणं भवति, अत एव द्रोणमानं जलं देयम् । पथ्यावृन्तार्द्धशतं हरीतकीफलबन्धनार्द्धशतम् । अन्ये तु पथ्याचूर्णं हरीतकीफलस्यैव चूर्णं तत् अस्थिशून्यमित्याहुः ॥ १५ । १६ ॥

चक्रपाणिः—दन्त्या इत्यादौ दन्त्याः क्वाथः घृताच्चतुर्गुणं स्थाप्यः । तन्त्रान्तरदर्शनात् प्रस्थमान एवात्र क्वाथो भवति । उक्तं ह्यन्यत्र "निकुम्भकुड़वक्वाथ-प्रस्थ तत्कल्कसंयुतम् । सर्पिःप्रस्थं पचेत् प्लीह-कामलापाण्डुरोगनुत्" ॥ १७ ॥

पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्डूर्त्ति-ज्वरमेहोदरापहः॥ १८॥

द्राक्षाघृतम्।

हरिद्रात्रिफलानिम्ब-बलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम्॥ १९॥

हरिद्रादिघृतम्।

गोमूत्रद्विगुणे दार्व्वी-कल्काक्षद्वयसंयुतः।
दार्व्व्याः पञ्चपलक्वाथे कल्के कालीयकेऽपरः॥
माहिषाज्यस्य तु प्रस्थः पूर्व्वः पूर्व्वे परे परः।
स्नेहैरेतैरुपक्रम्य स्निग्धं मत्वा विरेचयेत्॥

<u>गङ्गाधरः</u>—पुराणेत्यादि। इह पुराणपदोपादानं सर्व्वत्र पुराणघृतग्रहणज्ञापनार्थम्। द्राक्षाया अर्द्धप्रस्थः शरावमानं कल्कः द्रवार्थमिहानुक्त्या जलं चतुर्गुणम्। द्राक्षाघृतम्॥ १८॥

<u>गङ्गाधरः</u>—हरिद्रेत्यादि। हरिद्रादिः कल्कः पादिकः, पुराणं माहिषं सर्पिः प्रस्थं, क्षीरं चतुर्गुणम्। हरिद्रादिघृतम्॥ १९॥

<u>गङ्गाधरः</u>—गोमूत्रेत्यादि। गोमूत्रे द्विगुणे दार्व्वीकल्कस्याक्षद्वयेन कर्षद्वयेन संयुतो माहिषाज्यस्य प्रस्थः सिद्ध एष पूर्व्वः पूर्व्वे पाण्डुरोगे। दार्व्व्याः पञ्चपलस्य चत्वारिंशत्पलजले पक्वस्य पादशेषे दशपलक्वाथे कालीयककल्केऽक्षद्वयमिते माहिषाज्यस्य तु प्रस्थोऽपरो योग एष परः परे कामलारोगे। (दार्व्वीघृत-कालीयकघृते।) एतैर्घृतैर्यत् कुर्य्यात् तदाह—स्नेहैरित्यादि। पाण्डामयी स्निग्धतीक्ष्णैः शोध्यः, कामलावान् मृदुतिक्तैर्विरेच्यः, इति यदुक्तं, तद्विरेचने कर्त्तव्ये एतैः स्नेहैरुपक्रम्यारभ्य स्निग्धं पाण्डुकामलिनं मत्वा विरेचयेत्।

<u>चक्रपाणिः</u>—पुराणेत्यादौ जलमनुक्तद्रवाद् भवति। द्राक्षाप्रस्थार्द्धन्तु कल्कः॥ १८॥

<u>चक्रपाणिः</u>—हरिद्रेत्यादौ द्रवान्तराभावात् क्षीरमेव चतुर्गुणम्॥ १९॥

<u>चक्रपाणिः</u>—दार्व्व्याः कल्काक्षद्वयसाधितो माहिषात् सर्पिषः प्रस्थ इति योज्यम्। दार्व्व्याः पञ्चपलक्वाथे इत्यस्यापि पूर्व्वघृतानुसारात् पञ्चपलदार्व्वीक्वाथोऽपि घृताद् द्विगुण एव कर्त्तव्यः

पयसा मूत्रयुक्तेन बहुशः केवलेन वा।
दन्तीफलरसे कोष्णे काश्मर्य्याञ्जलिना श्रृतम्॥
द्राक्षाञ्जलिं मृदित्वा वा दद्यात् पाण्ड्वामयापहम्।
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिकः पिबेत्॥ २०॥
कफपाण्डुस्तु गोमूत्र-युक्तां क्लिन्नां हरीतकीम्।
आरग्वधरसेनेक्षोर्विदार्य्यामलकस्य च॥
सत्र्यूषणं विल्वपत्रं पिबेद् वा कामलापहम्।
दन्त्यर्द्धपलकल्कं वा द्विगुड़ं शीतवारिणा॥ २१॥

येन विरेचयेत् तदाह—पयसा मूत्रयुक्तेन केवलेन वा बहुशः पयसा विरेचयेत्। अपरञ्चाह—दन्तीत्यादि। दन्तीफलानां वीजानां रसेऽष्टगुणजले पक्त्वा पादशेषे क्वाथे कोष्णे काश्मर्य्याञ्जलिना गाम्भारीपक्वफलपलचतुष्टयेन सह द्राक्षाञ्जलिं द्राक्षापलचतुष्टयं श्रृतं चतुर्थभागशेषं दद्यात् मृदित्वा वा दद्यादिति। कोष्णे दन्तीफलक्वाथे काश्मर्य्याञ्जलिसहितद्राक्षाञ्जलिं मृदित्वा यथायोग्यं देहवलापेक्षया दद्यात्। (विरेचनमिदम्।) द्विशर्करमित्यादि। द्विगुणशर्करं त्रिवृच्चूर्णं पलार्द्धं देहाग्निबलापेक्षया पैत्तिकः पाण्डुरोगी पिबेत्॥ २०॥

गङ्गाधरः—कफपाण्डुस्तु गोमूत्रे हरीतकीं स्थापितां क्लिन्नां गोमूत्रयुक्तां पिवेत्। आरग्वधेत्यादि। आरग्वधस्य फलमध्यस्थसवेष्टकवीजरसेन क्लिन्नां हरीतकीं पिबेदथवेक्षो रसेन क्लिन्नामथवा विदार्य्या रसेन क्लिन्नामथवामलकीरसेन क्लिन्नां हरीतकीं पिबेत्। सत्र्यूषणं विल्वपत्रकल्कं कोष्ठाग्न्यपेक्षया कामलापहं पिबेत्। दन्त्यर्द्धेत्यादि। दन्तीमूलस्यार्द्धपलकल्कं द्विगुणगुड़ं शीतवारिणा कोष्ठाग्न्यपेक्षया पिवेत्॥ २१॥

कालीयककल्कोऽपि पूर्व्ववत् अक्षद्वयमानमेव। पूर्व्वः पूर्व्वे इति पूर्व्वे पाण्डुरोगे गोमूत्रसिद्धो घृतप्रस्थः परे तु कामलाख्ये परो दार्व्व्या युक्तो देय इति शेषः। काश्मरी गाम्भारीफलम्। श्रृतमिति फाण्टकषायविधिना प्रक्षिप्तम्। द्राक्षाञ्जलिं मृदित्वा इत्यनेन स्फुटमेव फाण्टकषायं दर्शयति। द्विशर्करमित्यादौ त्रिवृच्चूर्णं पलार्द्धं द्विशर्करयुक्तं सत् पलद्वयमानं भवति॥ २०॥

चक्रपाणिः—गोमूत्रक्लिन्नयुक्तामिति गोमूत्रेण क्लिन्नां कल्कीकृतां तथा गोमूत्रेण युक्तामालोड़ितां पिबेत्। अन्ये तु आरग्वधरसेन हरीतकीं पिबेत् इति योजयन्ति। इक्ष्वादिरसेन सत्रिकटु

पिबेद् वा कामलावान् ना त्रिवृतां त्रिफलारसः।
विशालात्रिफलामुस्त-कुष्ठदारुकलिङ्गकान् ॥
कर्षोन्मितानतिविषां कर्षार्द्धांश्च प्रदापयेत्।
कर्षौ मधुरसाया द्वौ सर्व्वमेतत् सुखाम्बुना ॥
मृदितं तं रसं पूतं पीत्वा लिह्याच्च माक्षिकम्।
कासं श्वासं ज्वरं दाहं पाण्डुरोगमरोचकम्।
गुल्मानाहामवातांश्च रक्तपित्तञ्च नाशयेत् ॥ २२ ॥
त्रिफलाया गुडूच्या वा दार्व्व्या निम्बस्य वा रसः।
प्रातःप्रातर्मधुयुतः शीलितः कामलापहः ॥
क्षीरं मूत्रं पिबेत् पक्षं गव्यं माहिषमेव वा।
पाण्डुर्गोमूत्रयुक्तं वा सप्ताहं त्रिफलारसम् ॥
तरुजान् ज्वलितान् मूत्रे निर्व्वाप्यामृद्य चाङ्कुरान्।
मातुलुङ्गस्य तत् पूतं पाण्डुशोथहरं पिबेत् ॥ २३ ॥

गङ्गाधरः—कामलावान् ना त्रिफलारसैस्त्रिवृतां वा पिबेत्। विशालेत्यादि। विशालामूलादीन् प्रत्येकं कर्षोन्मितान् कर्षार्द्धामतिविषां मधुरसाया मूर्व्वाया द्वौ कर्षौ सर्व्वमेतत् कुट्टयित्वा षड़्गुणेन सुखाम्बुना मृदितं पूतं तं रसं फाण्टाख्यं कोष्ठाद्यपेक्षया पीत्वा माक्षिकं लिह्यात्। आमवातं तन्त्रान्तरे द्रष्टव्यम् ॥ २२ ॥

गङ्गाधरः—त्रिफलाया इत्यादि। त्रिफलाया मिलितायाः। एकयोगः। शेषास्त्रयो योगाः। क्षीरमित्यादि। गव्यं क्षीरं मूत्रं माहिषमेव वा क्षीरं मूत्रं पाण्डुर्नरः पक्षं पिबेत्। गोमूत्रयुक्तं त्रिफलारसं वा पाण्डुर्नरः सप्ताहं पिबेत्। तरुजानित्यादि। मातुलुङ्गस्य तरुजान् अङ्कुरान् दहने ज्वलितान् मूत्रे निर्व्वाप्य आमृद्य च तत् पूतं पाण्डुशोथहरं पिबेत् ॥ २३ ॥

पिबेदिति योजयन्ति। आरग्वधं सत्रिकटुकं रसेनेक्षोः विदार्य्या आमलकस्य रसेन पिबेदिति अपरोऽर्थः। विशालेत्यादौ फाण्टकषायवद् द्रव्यात् पलमानात् चतुःपलं द्रवं वदन्ति वृद्धाः ॥ २१—२३ ॥

स्वर्णक्षीरी त्रिवृच्छ्यामा भद्रदारु सनागरम्।
गोमूत्राञ्जलिना कल्कं मूत्रे वा क्वथितं पिबेत्।
क्षीरमेभिः शृतं वापि पिबेद्द दोषानुलोमनम्॥ २४॥
हरीतकीं मूत्रयुतां प्रयोगेणाथ वा पिबेत्।
जीर्णे क्षीरेण भुञ्जीत मधुरेण रसेन वा॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा पाययेद्द भिषक्॥ २५॥
त्र्यूषणत्रिफलामुस्त-विड़ङ्गचित्रकाः समाः।
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा।
भक्षयेत् पाण्डुहृद्रोग-कुष्ठार्शःकामलापहम्॥ २६॥ *

नवायसं चूर्णम्।

गङ्गाधरः—स्वर्णक्षीरीत्यादि। स्वर्णक्षीरी स्वर्णवर्णनिर्य्यासवृक्षविशेषः। श्यामा श्याममूला त्रिवृत्। भद्रदारु देवदारु। एषां कल्कं गोमूत्राञ्जलिना चतुःपलेन पिबेत्। मूत्रेऽष्टगुणे क्वथितं वा स्वर्णक्षीर्य्यादिकं पिबेत्। एभिः स्वर्णक्षीर्य्यादिभिः शृतं वा क्षीरं दोषानुलोमनं पिबेत्॥ २४॥

गङ्गाधरः—हरीतकीमित्यादि। हरीतकीं मूत्रयुतां प्रयोगेण वा पिबेत्। जीर्णे तन्मूत्रयुक्तहरीतकीप्रयोगे क्षीरेण भुञ्जीताथवा मधुरेण मांसरसेन भुञ्जीत। सप्तेत्यादि। गवां मूत्रे सप्तरात्रं भावितमयसो जारितमारितं रजः पयसा मात्रया पाययेत्॥ २५॥

गङ्गाधरः—त्र्यूषणेत्यादि। त्र्यूषणादयो नव समाः। मारितस्यायसो रजसो नव भागा एकीकृतं तच्चूर्णं मधुसर्पिषा भक्षयेत्। नवायसचूर्णम्॥ २६॥

चक्रपाणिः—नवायोरजसो भाग इति एकभागापेक्षया नवगुणत्वमयोरजसः, तेन त्र्यूषणादीनां मिलितानां चूर्णेन सममयोरजः॥ २४—२६॥

---

* इतः परं केचित् "नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम्" श्लोकार्द्धमिदमधिकं पठन्ति।

त्रिफलां त्र्यूषणं मूस्तं विड़ङ्गं चव्यचित्रकौ।
दार्व्वी त्वङ् माक्षिको धातुर्ग्रन्थिको देवदारु च॥
एषां द्विपलिकान् भागांश्चूर्णं कुर्य्यात् पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम्।
गोमूत्रेऽष्टगुणे पक्त्वा तच्चूर्णं प्रक्षिपेत् पुनः।
उडुम्बरसमान् कुर्य्यात् वटकांस्तान् यथाग्निना॥
उपयुञ्जीत तक्रेण जीर्णे सात्म्यञ्च भोजनम्।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम्॥
कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान्।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च॥ २७॥

मण्डूरवटकाः *।

गङ्गाधरः—त्रिफलामित्यादि। माक्षिको धातुः स्वर्णमाक्षिकं किञ्चित्-सैन्धवयुक्तं जम्वीररसेन पेषयित्वा लोहकटोरिकायां कुलाग्निना पचेत्। शुष्कं नीलपीतादिनानावर्णं प्रज्वलितं यावद् भवेत् तावत् पक्त्वा रक्ताभं यदा स्यात् तदावहृत्य चूर्णयित्वा ग्राह्यम्। मण्डूरं गोमूत्रेऽग्नौ दग्ध्वा दग्ध्वा निर्व्वाप्य संशोष्य चूर्णीकृत्याञ्जनसन्निभं कज्जलाभं ग्राह्यम्, तन्मण्डूरं सर्व्वचूर्णाद् द्विगुणं चूर्णसहितमण्डूरादष्टगुणे गोमूत्रे मण्डूरचूर्णं पक्त्वा किञ्चिद् द्रवे सति त्रिफलादि तच्चूर्णं प्रक्षिपेत्। सर्व्वमेकीभूतम् उडुम्वरसमान कोलसमान् वटकान् कुर्य्यात्। तान् यथाग्निवलं तक्रेण गोलयित्वोपयुञ्जीत। जीर्णे तस्मिन् उपयुक्ते औषधे सात्म्यञ्च भोजनं तक्रेण उपयुञ्जीत। मण्डूरवटकः॥२७॥

चक्रपाणिः—मण्डूरं पुराणं लोहकिट्टम्॥ २७॥

* इतः परमित्यधिकः पाठः क्वचिद् दृश्यते। स यथा—
"ताप्याद्रिजतुरूप्यायो-मलाः पञ्चपलाः पृथक्। चित्रकत्रिफलाव्योष-विड़ङ्गैः पालिकैः सह॥
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुताः। अभ्यस्यास्त्वक्षमात्रा हि जीर्ण नियमिताशिना।
कुलत्थकाकमाच्यादि-कपोतपरिहारिणा॥"

गुड़नागरमण्डूर-तिनिशान् मानतः समान्।
पिप्पलीं द्विगुणां दद्याद् गुड़िकां पाण्डुरोगिणे ॥ २८ ॥
त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च।
भागश्चित्रकमूलस्य विड़ङ्गानां तथैव च ॥
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च।
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा ॥
अष्टौ भागाः सितायाश्च तत् सर्व्वं सूक्ष्मचूर्णितम्।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ॥
उडुम्बरसमां मात्रां ततः खादेद् यथाग्नि ना।
दिने दिने प्रयोगेण जीर्णे भोज्यं यथेप्सितम् ॥
वर्ज्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान्।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥
रसायनमिदं श्रेष्ठं सर्व्वरोगहरं शिवम्।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥

गङ्गाधरः—गुड़ेत्यादि। गुड़ादीन् चतुरः समभागान् पिप्पलीं सर्व्वेषां द्विगुणां, गुड़िकां कृत्वा पाण्डुरोगिणे दद्यात् ॥ २८ ॥

गङ्गाधरः—त्रिफलाया इत्यादि। त्रिफलायाः प्रत्येकमेकभाग इति मिलितायास्त्रयो भागाः, एवं त्रिकटुकस्य च मिलितस्य त्रयो भागाः। एवमेको भागश्चित्रकस्य। विड़ङ्गानामेको भागः। अश्मजतुनः शिलाजतुनः पञ्च भागाः। रूप्यमलस्य वह्नौ ध्मातस्य रूप्यस्य यन्मलं निर्य्याति तस्य पञ्च भागाः। शुद्धस्य धातुमाक्षिकस्य पञ्च भागाः। लौहस्य मारितपुटितस्य पञ्च भागाः। सितायाः अष्टौ भागाः। सर्व्वं तत् सूक्ष्मचूर्णं कृत्वा माक्षिकेण मधुना गोलयित्वा शुभे

चक्रपाणिः—त्रिफलाया इत्यादौ रूप्यमलं रूप्यस्य यत् किट्टं भवति तज्ज्ञेयम्। माक्षिकस्येति माक्षिकधातोः। अश्मजत्वादीनां चतुर्णां पञ्च भागाः प्रत्येकम्। किंवा पञ्चाश्मजतुनो भागाः

कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम्।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ २८ ॥

योगराजः।

कौटजत्रिफलानिम्ब-पटोलघननागरैः।
भावितानि दशाहानि रसैर्द्वि त्रिगुणानि च ॥
शिलाजतुपलान्यष्टौ तावती सितशर्करा।
त्वक्क्षीरीपिप्पलीधात्री-कटुकाख्याः पलोन्मिताः ॥
निदिग्ध्याः फलमूलाभ्यां पलं युक्त्या त्रिगन्धकम्।
मधुत्रिपलसंयुक्तं कुर्य्यादक्षसमान् गुड़ान् ॥
दाड़िमाम्बुपयःपक्षि-रसतोयसुरासवान्।
तान् भक्षयित्वानुपिबेन्निरन्नोऽभुक्त एव वा ॥
पाण्डुकुष्ठज्वरप्लीह-तमकार्शोभगन्दरान्।
पूतिहृच्छुक्रमूत्राग्नि-दोषशोथगरोदरान् ॥

आयसे भाजने स्थाप्यं, तत उडुम्बरसमां मात्रां यथाग्नि ना खादेत्। योगराजः ॥ २९ ॥

गङ्गाधरः—कौटजेत्यादि। कौटजं फलम्। कौटजादीनां क्वाथैर्दशाहान्यथवा विंशतिदिनान्यथवा त्रिंशद्दिनानि भावितानि, शिलाजतुनः पलान्यष्टौ, सितशर्करा तावती अष्टौ पलानि, त्वक्क्षीरीप्रभृतीनां प्रत्येकं पलं, कटुका रोहिणी, निदिग्ध्याः कण्टकार्य्याः फलं मूलञ्च पलम्। त्रिसुगन्धकं युक्त्या प्रत्येकं कर्षमानं, मधुनः पलत्रयम्, एतत् सर्व्वमेकीकृत्याक्षसमान् गुड़ान् पञ्च रूप्यमलस्य चेति पाठे रूप्यमलस्येति शिलाजतुविशेषणं, तेन रूप्यमलरूपं यदुक्तं शिलाजतु राजतं कटुकं श्वेतमित्यादि तदिह गृह्यते ॥ २८। २९ ॥

चक्रपाणिः—भावितानीति द्विगुणत्रिगुणदशाहानि भावितानि। रसैरिति कुटजादिक्वाथैः। कौटजं कुटजफलम्। अत्र भावना शिलाजतूक्तेनैव विधिना कर्त्तव्या। क्वाथ्यक्वाथमाने च तन्त्रान्तरे "तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं क्वाथ्यम्। ततः क्वाथे पादांशे पूतोष्णे प्रक्षिपेद् गिरिजं। तत्समरसतां यातं संशुष्कं प्रक्षिपेद् रसे भूयः" इति। एवञ्च अन्यत्रापि भावनाविधौ क्वाथ्यक्वाथमानौ ज्ञेयौ। फलमूलाभ्यां पलमिति मिलित्वा पलम्। युक्त्या

कासासृग्दरपित्तास्रक्-शोषगुल्मज्वरामयान्।
ते च सर्व्वव्रणान् हन्युः सर्व्वरोगहराः शिवाः॥ ३०॥
शिलाजतुवटकाः।

पुनर्नवात्रिवृद्व्योष-विड़ङ्गं दारु चित्रकम्।
कुष्ठं हरिद्रे त्रिफला दन्ती चव्यं कलिङ्गकाः॥
कटुका पिप्पलीमूलं मुस्तञ्चेति पलोन्मितम्।
मण्डूरं द्विगुणं चूर्णाद् गोमूत्रे द्व्याढ़के पचेत्॥
कोलवद् गुड़िकाः कृत्वा तक्रेणालोड्य ना पिबेत्।
ताः पाण्डुरोगं प्लीहानमर्शांसि विषमज्वरम्॥
श्वयथुं ग्रहणीदोषं हन्युः कुष्ठं क्रिमींस्तथा।
आत्रेयेण पुनर्नवा-मण्डूरं कीर्त्तितं परम्॥ ३१॥
पुनर्नवामण्डूरम्।

दार्व्वीत्वक्त्रिफलाव्योष-विड़ङ्गमयसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान्॥
तुल्या अयोरजःपथ्या-हरिद्राः क्षौद्रसर्पिषा।
चूर्णिताः कामली लिह्याद् गुड़क्षौद्रेण वाभयाम्॥

कुर्य्यात्। निरन्नो भुक्तवान् वा तान् भक्षयित्वा दाड़िमादीननुपिबेत्। शिलाजतुवटकाः॥ ३०॥

गङ्गाधरः—पुनर्नवेत्यादि। पुनर्नवादीनां चूर्णं पलं, सर्व्वचूर्णाद् द्विगुणं मण्डूरं, द्व्याढ़के द्वात्रिंशच्छरावे गोमूत्रे पचेत्। कोलवद्गुड़िकाः कृत्वा तक्रेणालोड्य पिबेत्। पुनर्नवामण्डूरम्॥ ३१॥

गङ्गाधरः—दार्व्वीत्यादि। दार्व्वीत्वगादीनां सप्तानां सममयोरजः सर्व्वमेकीकृत्य स्थापयेत्। ततो मात्रां यथाग्नि मधुसर्पिर्भ्यां मर्द्दयित्वा लिह्यात्। तुल्या इत्यादि। मारितपुटितायोरजः पथ्या हरिद्रा चेति

त्रिगन्धकमिति यावत्त्रिगन्धेन साधुगन्धो भवति तावन्मात्रं त्रिगन्धं ज्ञेयम्। त्रिगन्धञ्च पत्रत्वगेलोच्यते। "त्रिगन्धन्तु समाख्यातं त्वगेलापत्रकैः समैः। तदेव तु समाख्यातं चातुर्जातं सकेसरम्" इति। पूत्यादिभिर्दोषसम्बन्धः प्रत्येकं सम्बध्यते॥ ३०। ३१॥

त्रिफला द्वे हरिद्रे च कटुरोहिण्ययोरजः।
चूर्णितं मधुसर्पिर्भ्यां लेहयेत् कामलापहम् ॥ ३२ ॥
द्विपलांशां तुगाक्षीरीं नागरं मधुयष्टिकाम्।
प्रास्थिकीं पिप्पलीं द्राक्षां शर्कराद्धतुलां तथा ॥
धात्रीफलरसद्रोणे चूर्णितं लेहवत् पचेत्।
शीतान्मधुप्रस्थयुतात् लिह्यात् पाणितलं ततः ॥
हलीमकं पाण्डुरोगं कामलाञ्चैव नाशयेत्।
आत्रेयकीर्त्तितस्त्वेष धात्रीलेहः परः स्मृतः ॥३३॥ धात्र्यवलेहः।
* त्र्यूषणं त्रिफलां चव्यं चित्रकं देवदारु च।
विडङ्गान्यथ मुस्तञ्च वत्सकञ्चेति चूर्णयेत् ॥
मण्डूरतुल्यं चूर्णन्तु गोमूत्रेऽष्टगुणे पचेत्।
शनैः सिद्धास्तथा शीताः कार्य्याः कर्षसमा गुड़ाः ॥

तिस्रश्चूर्णिताः क्षौद्रसर्पिषा कामली लिह्यादथवा अभयां चूर्णितां गुड़क्षौद्रेण लिह्यात्। त्रिफलेत्यादि। स्पष्टार्थम् ॥ ३२ ॥

गङ्गाधरः—द्विपलांशामित्यादि—तुगाक्षीरी द्विपलांशा, नागरादिचतुष्टयं प्रत्येकं प्रास्थिकं, शर्कराद्धतुला, धात्रीफलरसस्य द्रोणश्चतुःषष्टिः शरावाः। सर्व्वमेतदेकत्र लेहवत् पचेत्। अवतार्य्य शीते मधुनः प्रस्थं दद्यात्। मधुप्रस्थश्चतुःशरावः। धात्र्यवलेहः ॥ ३३ ॥

गङ्गाधरः—त्र्यूषणमित्यादि। वत्सकमिन्द्रयवः, एतदन्तं सर्व्वं समांशं

चक्रपाणिः—द्विपलांशामित्यादौ द्राक्षा प्रास्थिकी। धात्रीफलरसो धात्रीस्वरसः ॥ ३२। ३३ ॥]

चक्रपाणिः—त्र्यूषणादीनामष्टाविंशतिपलानि, मण्डूरञ्च द्विगुणम् समुदितं चूर्णं चतुरधिकाशीतिपलमानं भवति। पृथगिति पाठात् मण्डूरं चूर्णमेव (गोमूत्रञ्च मिलितचूर्णापेक्षयाष्टगुणम्।)

---

* त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ। दार्व्वीत्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥
एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक्। मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत्ततः। उड़म्बरसमान् कुर्य्याद् वटकांस्तान् यथाबलम् ॥
उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम्। मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥
कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान्। अर्शांसि कामलां मेहान् प्लीहाणं शमयन्ति च ॥
इति चक्रसम्मतः पाठः। मण्डूरवटकाः।

यथाग्नि भक्षणीयास्ते प्लीहपाण्ड्वामयापहाः ।
ग्रहण्यर्शोनुदश्चैव तक्रवाट्याशिनः स्मृताः ॥ ३४ ॥

मण्डूरवटकाः ।

द्राक्षाहरिद्रामञ्जिष्ठा-बलामूलान्ययोरजः ।
लोध्रश्चतैषु गौड़ः स्यादरिष्टः पाण्डुरोगिणाम् ॥ ३५ ॥

गौड़ोऽरिष्टः ।

वीजकात् * षोड़शपलं त्रिफलायाश्च विंशतिः ।
द्राक्षायाः पञ्च लाक्षायाः सप्त द्रोणे जलस्य तत् ॥
साध्यं पादावशेषे च पूतशीते प्रदापयेत् ।
शर्करायास्तुलां प्रस्थं क्षौद्रं दद्याच्च कार्षिकम् ॥
व्योषव्याघ्रनखोशीरं क्रमुकं सैलबालुकम् ।
माधूकं कुष्ठमित्येतच्चूर्णितं घृतभाजने ॥

चर्णयेत् । सर्व्वतुल्यं मण्डूरं, गोमूत्रे सर्व्वतोऽष्टगुणे पचेत् । मण्डूरादष्टगुणे पचेदिति कश्चित् । मण्डूरवटकाः ॥ ३४ ॥

गङ्गाधरः—द्राक्षेत्यादि । द्राक्षादीनां षण्णां युक्तया प्रत्येकं समभागः, सर्व्वं पादिकं, गुड़श्चतुर्गुणः, सर्व्वं चतुर्गुणजले गोलयित्वा घृतभाजने स्थाप्यं, सप्ताहादिकाले जात एष गौड़ोऽरिष्टः स्यात् । गौड़ोऽरिष्टः ॥ ३५ ॥

गङ्गाधरः—वीजकादित्यादि । वीजकं काञ्जिकाधःस्थक्लिन्नं, त्रिफलाया विंशतिः पलानि, द्राक्षायाः पञ्च पलानि, लाक्षायाः सप्त पलानि, तत् सर्व्वं जलस्य द्रोणे साध्यं, पादावशेषे पूते शीते च शर्करायास्तुलां प्रदापयेत्, क्षौद्रं प्रस्थं दद्यात् । व्योषादीनां कार्षिकं प्रत्येकं चूर्णं दद्याच्च । तत् सर्व्वं

पृथङ्मूत्रं पक्तव्यम् । तस्मिन् सिध्यति त्र्यूषणादीनां तच्चूर्णं प्रक्षेप्यम् । शुद्धमिति पदेन मण्डूरस्य ध्मापनगोमूत्रनिर्व्वापणादिना शुद्धिर्दर्शयति । केचित् तु गोमूत्रमष्टगुणं प्रत्यासन्नमण्डूरादेव वदन्ति । अयमेव च पक्षः प्रतिभाति ॥ ३४ । ३५ ॥

चक्रपाणिः—वीजकात् षोड़शपलमित्यत्र केचित् द्विजीरकपलान्यष्टाविति वदन्ति ; तथापि

* वीजकादित्यत्र जीरकादिति पठित्वा केचित् इमं जीरकारिष्टमाहुः ।

यवेषु दशरात्रस्थं ग्रीष्मे द्विः शिशिरे स्थितम्।
पिबेत् तद् ग्रहणीपाण्डु-रोगार्शःशोथगुल्मनुत् ॥
मूत्रकृच्छ्राश्मरीमेह-कामलासन्निपातनुत्।
वीजकारिष्ट एवैष आत्रेयेण प्रकीर्त्तितः ॥ ३६ ॥

वीजकारिष्टः।

धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वायुतम् ॥
शर्कराार्द्धतुलोन्मिश्रं पक्षं स्निग्धघटे स्थितम्।
प्रपिबेन्मात्रया प्रातर्जीर्णे हितमिताशनः ॥
कामलापाण्डुहृद्रोग-वातासृग्विषमज्वरान्।
कासहिक्कारुचिश्वासानेषोऽरिष्टः प्रणाशयेत् ॥ ३७ ॥

धात्र्यरिष्टः।

स्थिरादिभिः शृतं तोयं पानाहारे प्रशस्यते।
पाण्डूनां कामलार्त्तानां मृद्वीकामलकाद् रसः ॥ ३८ ॥

घृतभाजने कृत्वा यवेषु यवराशिमध्ये ग्रीष्मे दशरात्रं स्थापयेत् शिशिरे द्विर्दशरात्रं विंशतिरात्रं स्थापयेत्। इह ग्रीष्मशिशिरयोर्द्वयोः निर्देशात् वैशाखादयः षण्मासा ग्रीष्माः, शेषाः शिशिराः। वीजकारिष्टः ॥ ३६ ॥

गङ्गाधरः—धात्रीत्यादि। धात्रीफलानां गुड़कानां द्वे सहस्रे कुट्टयित्वा पीड़यित्वा यावान् रसो लभ्यते तस्य रसस्याष्टमो भागः क्षौद्रस्य, पिप्पलीचूर्णमर्द्धकुड़वं द्विपलम्, शर्करायाः अर्द्धतुलां दत्त्वा सर्व्वमेकीकृत्य स्निग्धे घटे पक्षं स्थितं जातमरिष्टं मात्रया प्रातः प्रपिबेदिति। पीते तस्मिन्नरिष्टे जीर्णे सति हितमिताशनः स्यात्। धात्र्यरिष्टः ॥ ३७ ॥

गङ्गाधरः—स्थिरादिभिरित्यादि। स्थिरादिः शालपर्ण्यादिपञ्चमूलं तत्-

स एवार्थः। वीजकोऽसनः। व्याघ्रनखो नखीभेद एव। द्विः शिशिर इति विंशतिरात्रस्थितम् ॥ ३६ ॥

चक्रपाणिः—धात्रीत्यादौ धात्रीफलसहस्रद्वयस्य स्वरस एव ग्राह्यः ॥ ३७ ॥

चक्रपाणिः—कामलार्त्तानां मृद्वीकामलकीरसः पानाहारे प्रशस्यते इत्यर्थः ॥ ३८ ॥

पाण्डुरोगप्रशान्त्यर्थमिदमुक्तं चिकित्सितम् ।
विकल्प्यमेतद् भिषजा पृथग् दोषवलं प्रति ॥
स्नेहप्रायं पवनजे तिक्तशीतन्तु पैत्तिके ।
श्लैष्मिके कटुरुक्षोष्णं मिश्रं स्यात् सान्निपातिके ॥
निष्पातयेच्छरीरात् तु मृत्तिकां भक्षितां भिषक् ।
युक्तिज्ञः शोधनैस्तीक्ष्णैः प्रसमीक्ष्य बलाबलम् ।
शुद्धकायस्य सर्पींषि बलाधानानि योजयेत् ॥ ३६ ॥
व्योषं बिल्वं हरिद्रे द्वे त्रिफला द्वे पुनर्नवे ।
मुस्तान्ययोरजः पाठा विड़ङ्गं देवदारु च ॥
वृश्चिकाली च भार्गी च सक्षारैस्तैः समैर्घृतम् ।
साधयित्वा पिबेद् युक्त्या नरो मृद्दोषपीड़ितः ।
तद्वत् केशरयष्ट्याह्व-पिप्पलीक्षारशाद्वलैः ॥ ४० ॥

पक्वं तोयं पाण्डुरोगिणां प्रशस्यते। कामलार्त्तानान्तु मृद्वीकामलकाद् रसः शृतः क्वाथः पानाहारे प्रशस्यते ॥ ३८ ॥

गङ्गाधरः—पाण्डुरोगेत्यादि। इदं चिकित्सितं पाण्डुरोगप्रशान्त्यर्थं सामान्यत उक्तं, पृथगदोषबलं प्रति एषु मध्ये भिषजा बुद्ध्या विकल्प्यं विशेषेण कल्पनीयं भवति। कथं विकल्प्यं तदाह—स्नेहप्रायमित्यादि। प्रायशब्देन सर्व्वत्र उन्नेयं प्रायिकत्वम्। तिक्तशीतप्रायं पैत्तिके। कटुरुक्षोष्णप्रायं श्लैष्मिके। दोषजपाण्डु-कामलाचिकित्सितम् उक्त्वा मृत्तिकाजपाण्डुरोगचिकित्सितमाह— निष्पातयेत् इत्यादि। भिषक् मृत्तिकाभक्षणजे पाण्डुरोगे भक्षितामपक्वां मृत्तिकामुदरस्थां युक्तिज्ञो बुद्ध्या बलाबलं प्रसमीक्ष्य तीक्ष्णैः शोधनैः शरीरान्निष्पातयेत् निःसारयेत्। शुद्धकायस्य तस्य बलाधानानि बल्यदशकसिद्धानि सर्पींषि योजयेत् ॥ ३९ ॥

गङ्गाधरः—बलाधानानि च सर्पींषि कियन्त्याह—व्योषमित्यादि। व्योषादिभिः सक्षारैः प्रत्येकं समैर्घृतात् पादिकैः कल्कैश्चतुर्गुणजले साधयित्वा मृद्दोषपीड़ितो नरो युक्त्या पिबेत्। तद्वदित्यादि। केशरादिभिः कल्कैः

चक्रपाणिः—विकल्प्यमित्यनेन विकल्पविधिमाह। निष्पातयेदित्यादिना मृज्जपाण्डुरोग-चिकित्सामाह। शाद्वलं दूर्व्वा ॥ ३९। ४० ॥

मृद्भक्षणादातुरस्य लौल्यादविनिवर्त्तिनः।
द्वेषार्थं भावितां कामं दद्यात् तद्दोषनाशनैः॥
विडङ्गलातिविषया निम्बपत्रेण पाठया।
वार्त्ताकैः कटुरोहिण्या कौटजैर्मूर्व्वयापि वा॥
यथादोषं प्रकुर्व्वीत भेषजं पाण्डुरोगिणाम्।
क्रियाविशेष एषोऽस्य मतो हेतुविशेषतः॥ ४१॥
तिलपिष्टनिभं यस्तु कामलावान् सृजेन्मलम्।
श्लेष्मणा रुद्धमार्गं तं कफपित्तहरैर्जयेत्॥ ४२॥

साधयित्वा घृतं तद्वत् पिबेत्। शाद्वलः सादहरिते देशे वर्त्तते, तेन यत्र भूमौ सादाख्यं नवतृणं जातं वर्त्तते तत्तृणस्थानमृत्तिका शाद्वल इह ग्राह्यः॥ ४०॥

गङ्गाधरः—मृदित्यादि। यो मृद्भक्षणजपाण्डुरोगी लौल्याल्लोभात् मृद्भक्षणान्न विनिवर्त्तते, तस्यानिवर्त्तिनो मृद्भक्षणे द्वेषार्थं मृद्दोषनाशनैर्विडङ्गादिभिर्निम्बपत्रेण पाठया वार्त्ताकैः कटुरोहिण्या कौटजैरिन्द्रयवैर्मूर्व्वया वा कथितया भावितां तां मृत्तिकां कामं यथाकामं खादितुं दद्यात्। एवं यथादोषं कषायादिमृद्भक्षणेन कुपितवातादिदोषहरं भेषजं मृद्भक्षणजपाण्डुरोगिणां कुर्व्वीत। हेतुविशेषतः क्रियाविशेषोऽस्य मृद्भक्षणजपाण्डुरोगस्य मतः॥ ४१॥

गङ्गाधरः—कामलाविशेषचिकित्सितमाह—तिलेत्यादि। यस्तु कामलावान् तिलपिष्टनिभं मलं पुरीषं सृजेत्, तं श्लेष्मणा रुद्धमार्गं कफपित्तहरद्रव्यैः जयेत्॥ ४२॥

चक्रपाणिः—मृद्भक्षणादविनिवर्त्तिनः सकस्येत्यर्थः। भावितामिति तद्दोषनाशनैः द्रव्यैः संस्कृताम्। मृद्भवया पिबेदित्यन्तो ग्रन्थः पूर्व्वेण सम्बध्यते। पाण्डुरोगोक्तं दोषविशेषचिकित्सितं मृज्जेऽप्यतिदिशति—यथादोषमित्यादि। एष इति मृज्जे पाण्डुरोगे प्रोक्तः॥ ४१॥

चक्रपाणिः—तिलपिष्टनिभमित्यादिना शाखाश्रयकामलाचिकित्सितं लक्षणपूर्व्वकमाह। श्लेष्मणा रुद्धमार्गमिति कोष्ठस्थेन श्लेष्मणा शाखाश्रयि पित्तं कामलाजनकं रुद्धमार्गं कोष्ठगमनार्थं निषिद्धमार्गमिति यावत्॥ ४२॥

रुक्षशीतगुरुस्वादु-व्यायामैर्वेगनिग्रहैः ।
कफसंमूर्च्छितो वायुः स्थानात् पित्तं क्षिपेद् बली ॥
हारिद्रनेत्रमूत्रत्वक् श्वेतवर्च्चास्तदा नरः ।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥
दौर्ब्बल्याल्पाग्निपार्श्वार्त्ति-हिक्काकासारुचिज्वरः ।
क्रमेणाल्पेन सज्येत पित्ते शाखासमाश्रिते ॥ ४३ ॥
वर्हितित्तिरिदक्षाणां रुक्षाम्लकटुकै रसैः ।
शुष्कमूलककौलत्थैर्यूषैश्चान्नानि भोजयेत् ॥
मातुलुङ्गरसं क्षौद्र-पिप्पलीमरिचान्वितम् ।
सनागरं पिबेत् पित्तं तथास्यैति स्वमाशयम् ॥ ४४ ॥

गङ्गाधरः—कोष्ठाश्रयकामलाचिकित्सामुक्त्वा कामलायाः शाखाश्रयायाः सलिङ्गचिकित्सामाह—रुक्षेत्यादि। कामलायां रुक्षादिसेवनेन वायुः कफसंमूर्च्छितः सन् बली स्थानात् पित्तं क्षिपेत्। तेन शाखारक्तादिधातुसमाश्रिते पित्ते कामली नरो हारिद्रनेत्रादिर्भवेत्, तदा श्वेतवर्चाः साटोपविष्टम्भश्च सन् गुरुणा हृदयेन दौर्ब्बल्यादिभिश्च क्रमेणाल्पेन सज्येत सक्तो भवति। इति शाखाश्रयकामलालिङ्गम् ॥ ४३ ॥

गङ्गाधरः—तदवस्थान्वितं तं कामलिनं वर्ह्यादीनां मांसानां रुक्षादिभी रसैः शुष्कमूलकादिभिर्यूषैश्चान्नानि भोजयेत्। क्षौद्रत्रिकटुचूर्णसहितं मातुलुङ्गरसं पिबेत्। तथा तेन प्रकारेणान्नभोजनेन मातुलुङ्गरसपानेन चास्य कामलिनः स्थानात् क्षिप्तं रक्तादिशाखागतं पित्तं स्वमाशयमेति याति ॥ ४४ ॥

चक्रपाणिः—एतदेव रुक्षेत्यादिना विस्तरेणाह। श्वेतवर्चा इति कोष्ठस्य पित्तस्य मलरञ्जकस्य बहिर्निर्गमात् वृद्धेन श्लेष्मणा श्वेतवर्चा भवति। क्रमेणाल्पेनेति ज्वरान्तैरनुषज्यते। पित्ते शाखाश्रित इति सम्बन्धः ॥ ४३ ॥

चक्रपाणिः—वर्हीत्यादिना कफहरं पित्तवृद्धिकरञ्च समं चिकित्सितं प्राह। यतः शाखाश्रयदोषस्य वृद्धिः कोष्ठानयनार्थम्। उक्तं हि "वृद्धाभिष्यन्दनात् पाकात् स्रोतोमुखविशोधनात्। शाखां मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात्" ॥ ४४ ॥

कटुतीक्ष्णैस्तु लवणैर्भूयोऽम्लैश्चाप्युपक्रमः।
आ पित्तरोगाच्च कृतो वायोश्चा प्रशमाद्‌ भवेत्॥
स्वस्थानमागते पित्ते मले पित्तानुरञ्जिते।
निवृत्तोपद्रवस्यास्य पूर्व्वः कामलिको विधिः॥ ४५॥
यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः।
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः॥
स्त्रीष्वहर्षोऽङ्गमर्द्दश्च श्वासस्तृष्णारुचिर्भ्रमः।
हलीमकं तदा तस्य विद्यादनिलपित्ततः॥ ४६॥

गङ्गाधरः—ततोऽपरमुपक्रममाह—कट्वित्यादि। तत आ पित्तरोगात् उक्तहारिद्रनेत्रत्वादिरोगसद्भावपर्य्यन्तं वायोरप्या प्रशमात् प्रशमपर्य्यन्तं कट्वादिभिः भूय उपक्रम आरम्भः कृतो भवेत्। एवमेव स्वस्थानमागते पित्ते पित्तानुरञ्जिते मले पुरीषे सति ज्ञात्वा निवृत्तोपद्रवस्य हारिद्रनेत्रत्वादिनिवृत्तौ चास्य पूर्व्वः कामलिको विधिः कार्य्यः॥ ४५॥

गङ्गाधरः—यथा पाण्डुरोगस्यावस्थाविशेषः कामला तथाऽपरश्चाह—यदा त्वित्यादि। यदा त्वनिलपित्तकरापचारविशेषात् पाण्डोः पुरुषस्य वर्णो हरितादिः स्याद् बलादिक्षयादयश्च स्युः, तदा तस्य तं हलीमकमनिलपित्ततो विद्यात्॥ ४६॥

चक्रपाणिः—आ पित्तरोगात् यावत् कोष्ठमार्गस्य मलं न वर्द्धते तावद्रक्तपित्तवर्द्धनम्। पूर्व्व इति पूर्व्वोक्तः। कामलिको विधिरिति कोष्ठाश्रयाकामलाचिकित्सितं कर्त्तव्यमित्यर्थः॥ ४५॥

चक्रपाणिः—यदेत्यादिना हलीमकमाह। अयमेव तन्त्रान्तरे लाघरसंज्ञया अलस उच्यते, उक्तं हि सुश्रुते "ज्वराङ्गमर्द्दभ्रमदाहतन्द्रा-क्षयान्वितो लाघरिकोऽलसश्च। तं वातपित्ताभिपरीतलिङ्गं हलीमकं केचिदुदाहरन्ति।" यच्चापि तत्र भिन्नवर्च्चस्त्वं सा चापि कामलावस्थैव न पृथगुक्तम्। उक्तं हि तन्त्रान्तरे—"सन्तापो भिन्नवर्च्चस्त्वं बहिरन्ते च पीनता। पाण्डुता नेत्ररागश्च पलकीलक्षणं (?) मतम्"॥ ४६॥

गुडूचीस्वरसक्षीर-साधितं माहिषं घृतम्।
स पिबेत् त्रिवृतां स्निग्धो रसेनामलकस्य तु ॥
विरिक्तो मधुरप्रायं भजेत् पित्तानिलापहम्।
द्राक्षालेहश्च पूर्व्वोक्तं सर्पींषि मधुराणि च ॥
यापनान् क्षीरवस्तींश्च शीलयेत् सानुवासनान्।
मार्द्वीकारिष्टयोगांश्च पिबेद् युक्त्याग्निवृद्धये ॥
कासिकश्चाभयालेहं पिप्पलीं मधुकं बलाम्।
पयसा च प्रयुञ्जीत यथादोषं यथाबलम् ॥ ४७ ॥

तत्र श्लोकौ।

पाण्डोः पञ्चविधस्योक्तं हेतुलक्षणभेषजम्।
कामला द्विविधा तेषां साध्यासाध्यत्वमेव च ॥

गङ्गाधरः—हलीमकचिकित्सामाह—गुडूचीत्यादि। गुडूचीस्वरसस्त्रिगुणः, क्षीरं घृतसमम्। एवंसाधितं माहिषं घृतं हलीमकी पिबेत्। तेन स्निग्धः स हलीमकी आमलकस्य रसेन त्रिवृतां विरेकार्थं मात्रया पिबेत्। विरिक्तस्तु मधुरप्रायं पित्तानिलापहं भेषजाहारं भजेत्। पूर्व्वमुक्तं द्राक्षालेहञ्च भजेत्। मधुराणि च सर्पींषि, यापनान् वस्तीन् सिद्धिस्थाने वक्ष्यमाणान् क्षीरवस्तींश्च सानुवासनान् शीलयेदभ्यस्येत्। मार्द्वीकेत्यादि। मार्द्वीकारिष्टं द्राक्षारिष्टं तथान्यानग्निविवृद्धये योगान् युक्त्या पिबेत्। कासिकं कासे वक्ष्यमाणमभयालेहं पिप्पल्यादित्रयं चूर्णीकृत्य पयसा प्रयुञ्जीत यथादोषं यथाबलमिति ॥४७॥

चक्रपाणिः—गुडूचीत्यादिना हलीमकचिकित्सामाह। द्राक्षालेहश्च पूर्व्वोक्तमिति द्विपलांशां तुगाक्षीरीम् इत्यादिग्रन्थोक्तम्। इहैव यापनावस्तयः। कासिकश्चाभयालेहमित्यगस्त्यहरीतकी ॥४७॥

तेषां विकल्पो यश्चान्यो महाव्याधिर्हलीमकः।
तस्य चोक्तं समासेन लक्षणं सचिकित्सितम् ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढबलप्रतिसंस्कृते चिकित्सितस्थाने पाण्डुरोगचिकित्सितं नाम षोड़शोऽध्यायः ॥ १६ ॥

गङ्गाधरः—पाण्डुरोगचिकित्सिताध्यायार्थं संग्रहेणाह—तत्र श्लोकाविति। पाण्डोरित्यादि ॥ ४८ ॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढबल-प्रतिसंस्कृत एव च। पाण्डुरोगचिकित्सिते वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरक-जल्पकल्पतरौ षष्ठस्कन्धे चिकित्सितस्थानजल्पे पाण्डुरोग-चिकित्सितजल्पाख्या षोड़शी शाखा ॥ १६ ॥

चक्रपाणिः—पाण्डोः पञ्चविधस्येत्यादिना संग्रहमाह। स च व्यक्त एव ॥ ४८ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां पाण्डुरोगचिकित्सितं नाम षोड़शोऽध्यायः ॥ १६ ॥

---

# सप्तदशोऽध्यायः ।

अथातो हिक्काश्वासचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

वेदलोकार्थतत्त्वज्ञमात्रेयमृषिमुत्तमम् ।
अपृच्छत् संशयं धीमानग्निवेशः कृताञ्जलिः ॥
य इमे द्विविधाः प्रोक्तास्त्रिदोषास्त्रिप्रकोपणाः ।
रोगाणां त्रिविधास्तेषां कस्को भवति दुर्ज्जयः ॥ २ ॥
इत्यग्निवेशस्य वचः श्रुत्वा मतिमतां वरः ।
उवाच परमप्रीतः परमार्थविनिश्चयम् ॥

गङ्गाधरः—उद्दिष्टानुक्रमात् पाण्डुरोगचिकित्सितानन्तरं हिक्काश्वासचिकित्सितमाह—अथात इत्यादि । पूर्व्ववद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—वेदलोकेत्यादि । वेदार्थतत्त्वज्ञो लोकार्थतत्त्वज्ञश्चेति यस्तमात्रेयं पुनर्व्वसुं संशयमपृच्छत् । संशयमाह—य इत्यादि । ये खल्विमे त्रिविधाः त्रिप्रकोपणा असात्म्येन्द्रियसंयोगप्रज्ञापराधपरिणामास्त्रयः प्रकोपणा येषां ते, त्रिदोषा वातपित्तकफास्त्रयो दोषा येषां ते, द्विविधाः सौम्याग्नेयभेदान्निजागन्तुभेदाच्छारीरमानसभेदाद्रोगाः प्रोक्तास्तेषां रोगाणां मध्ये कस्को रोगो दुर्ज्जयो भवति ? ॥ २ ॥

गङ्गाधरः—इत्यग्निवेशस्य संशयवचः श्रुत्वा मतिमतां वरो भगवानात्रेयः

चक्रपाणिः—पाण्डुरोगकारणत्वात् हिक्काश्वासयोः पाण्डुरोगानन्तरम् अभिधानम् । वक्ष्यति हि "पाण्डुरोगाद् विषाच्च व प्रवर्त्तते गदाविमौ ।" इति । हिक्काश्वासौ च समानकारणचिकित्सितत्वात् एकाध्यायेनैवोक्तौ ॥ १ ॥

चक्रपाणिः—वदिकं लौकिकञ्च अर्थतत्त्वं जानातीति वेदलोकार्थतत्त्वज्ञः । द्विविधा इति सामान्यासामान्यभेदेन किंवा मृदुदारुणभेदेन निजानिजभेदेन । त्रिदोषा इति वातादिभिः पृथक्मिलितैः । त्रिप्रकोपणा इति असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामकारणकाः ॥ २ ॥

कामं प्राणहरा रोगा बहवो न तु ते तथा।
यथा श्वासश्च हिक्का च प्राणानाशु निकृन्ततः॥
अन्यैरप्युपसृष्टस्य रोगैर्जन्तोः पृथग्विधैः।
अन्ते सञ्जायते हिक्का श्वासो वा तीव्रवेदनः॥
कफवातात्मकावेतौ पित्तस्थानसमुद्भवौ।
हृदयस्य रसादीनां धातूनाञ्चोपशोषणौ॥
तस्मात् साधारणावेतौ मतौ मम सुदुर्ज्जयौ।
मिथ्योपचरितौ क्रुद्धौ हत आशीविषाविव॥
पृथक् पञ्चविधावेतौ निर्द्दिष्टौ रोगसंग्रहे।
तयोः शृणु समुत्थानं लिङ्गञ्च सभिषग्जितम्॥ ३॥

परमप्रीतः परमार्थविनिश्चयमुवाच। यदुवाच तदाह—काममित्यादि। कामं यथाभिलासात् प्राणहरा रोगा ज्वरातिसारादयो बहवः सन्ति, ते रोगास्तथा प्राणहरास्तु न भवन्ति यथा श्वासश्च हिक्का चेति द्वौ रोगावाशु प्राणान् निकृन्ततः। कस्मादित्यत आह—अन्यैरित्यादि। यतोऽन्यैः पृथग्विधैः रोगैर्ज्वरातिसारादिभिरुपसृष्टस्यापि जन्तोरन्तेऽवसानविषये हिक्का सञ्जायते, तीव्रवेदनः श्वासो वा सञ्जायते। दुर्ज्जयत्वमाह—कफेत्यादि। एतौ हिक्काश्वासौ कफवातात्मकौ, किन्तु पित्तस्थानसमुद्भवौ, हृदयस्य रसादीनां धातूनां प्राणायतनानां यत उपशोषणौ, तस्मात् साधारणौ द्वावेतौ हिक्काश्वासौ सुदुर्ज्जयौ मम मतौ। यतश्चैतौ मिथ्योपचरितौ क्रुद्धावाशीविषाविव हतः प्राणान् नाशयतः। ननु कथमुपचरितौ भवतः क्रुद्धौ च न भवतः न चाशीविषाविव हत इत्यतस्तयोरुपाचरं चिकित्सितमाह—पृथगित्यादि। रोगसंग्रहे सूत्रस्थानेऽष्टोदरीये पञ्च श्वासाः पञ्च हिक्का इत्येतौ पञ्चविधौ उद्दिश्य, पञ्च श्वासा इति महोर्द्ध्वच्छिन्न-

चक्रपाणिः—काममित्यनुमताः। बहव इति ज्वरगण्डकरोहिण्यादयः। यथा श्वासश्च हिक्का च इत्यनेन शीघ्रं प्राणहारित्वं हिक्काश्वासयोः दर्शयति। अन्त इति मरणसमये। संजायते इति अवश्यं हिक्काश्वासयोरन्यतरो जायते। पित्तस्थानसमुद्भवावित्यनेन पित्तस्य ऊर्द्ध्वस्थानसम्बन्धेन एव न तु वातकफवदारम्भकत्वं दर्शयति। पित्तस्थानशब्देन आमाशयोऽभिप्रेतः। साधारणाविति प्रायः तुल्यचिकित्स्यत्वात्। आशीविषाविव दृष्टिनिश्वासविषसर्पौ इव। मिथ्योपचरितोऽन्योऽपि रोगो हन्ति

रजसा धूमवाताभ्यां शीतस्थानाम्बुसेवनात् ।
व्यायामाद् ग्राम्यधर्म्माध्व-रुक्षान्नविषमाशनात् ॥
आमप्रदोषादानाहाद् रौक्ष्यादत्यपतर्पणात् ।
मर्म्माभिघाताद् दौर्ब्बल्याद् द्वन्द्वाच्छुद्ध्यतियोगतः ॥
अतीसारज्वरच्छर्द्दि-प्रतिश्यायक्षतक्षयात् ।
रक्तपित्तादुदावर्त्ताद् विसूच्यलसकादपि ॥
पाण्डुरोगाद् विषाच्चैव रोगावेतौ प्ररोहतः *
निष्पावमाषपिण्याक-तिलतैलनिषेवणात् ॥
पिष्टशालूकविष्टम्भि-विदाहिगुरुभोजनात् ।
जलजानूपपिशित-दध्यामक्षीरसेवनात् ॥

तमकक्षुद्राः, पञ्च हिक्का इति महती गम्भीरा व्यपेता क्षुद्रा चान्नजा चेति निर्द्दिष्टौ। तयोः पञ्चपञ्चविधयोर्हिक्काश्वासयोः सभिषग्जितं समुत्थानं निदानं लिङ्गञ्च शृणु ॥ ३ ॥

गङ्गाधरः—रजसेत्यादि। रजसा धूलिना। शीतस्थानशीताम्बुनोः सेवनात्। ग्राम्यधर्म्मोऽध्वा च तयोरसम्यक्सेवनात्। रुक्षान्नाशनाद् विषमाशनाच्च। आमस्यापक्वस्य प्रदोषात्। रौक्ष्यात् स्नेहासेवनात्। अत्यपतर्पणात् लङ्घनातियोगादितः। द्वन्द्वात् गुरुलघू द्वन्द्वौ शीतोष्णौ द्वन्द्वौ मन्दतीक्ष्णौ द्वन्द्वौ मृदुकठिनौ द्वन्द्वौ खरमसृणौ द्वन्द्वौ विशदपिच्छिलौ द्वन्द्वौ स्थिरसरौ द्वन्द्वौ स्थूलसूक्ष्मौ द्वन्द्वौ स्निग्धरुक्षौ द्वन्द्वौ सान्द्रद्रवौ द्वन्द्वौ सुखदुःखे द्वन्द्वौ द्वन्द्वौ चेच्छाद्वेषौ द्वन्द्वौ प्रवृत्तिनिवृत्ती चेति। अतीसारादयो रोगा हिक्काश्वासरोगहेतवः। एभ्यो हेतुभ्यो रोगावेतौ हिक्काश्वासौ प्ररोहतः प्रादुर्भवतः। निष्पावा-

तदिहाशीविषदृष्टान्तेन मिथ्योपचारे सति शीघ्रहन्तृत्वमाह। पृथगिति प्रत्येकं पञ्चविधः। रोगसंग्रहे इति अष्टोदरीये ॥ ३ ॥

चक्रपाणिः—अत्र च रजसेत्यादिना प्रायो वातप्रकोपकगणो विच्छिद्य उक्तः प्रवर्त्तते गदाविमौ इत्यन्तेन। निष्पावेत्यादिना कफकारणतया हिक्काश्वासयोः हेतुगणोऽभिहितः, तदनेन वातजनककफजनकहेतुवर्गद्वयविच्छेदपाठेन वातकफयोरप्यत्र स्वहेतुकुपितत्वेन स्वातन्त्र्यं दर्शयति नानुबन्ध्य-

* प्रवर्त्तते गदाविमौ इति पाठान्तरं चक्रे।

अभिष्यन्दुपचाराच्च श्लेष्मलानाञ्च सेवनात्।
कण्ठोरसोः प्रतीघाताद्द विबन्धैश्च पृथग्विधैः ॥
मारुतः प्राणवाहीनि स्रोतांस्याविश्य कुप्यति।
उरस्तः कफमुद्धूय हिक्काश्वासान् करोत्यथ।
घोरान् प्राणोपरोधाय प्राणिनां पञ्च पञ्च च ॥ ४ ॥
द्वयोश्च पूर्व्वरूपाणि शृणु वच्याम्यतः परम्।
कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता ॥
हिक्कानां पूर्व्वरूपाणि कुक्षेराटोप एव च।
आनाहः पार्श्वशूलञ्च पीड़नं हृदयस्य च।
प्राणस्य च विलोमत्वं श्वासानां पूर्व्वलक्षणम् ॥ ५ ॥
प्राणोदकान्नवाहीनि स्रोतांसि सकफोऽनिलः।
हिक्काः करोति संरुध्य तासां लिङ्गं पृथक् शृणु ॥ ६ ॥

दिभ्यो हेतुभ्यश्च। प्राणवाहीनि स्रोतांस्याविश्य मारुतः कुप्यति, कुपितः स उरस्तः उरसः कफमुद्धय ऊर्द्धं नीत्वाऽथ हिक्काश्वासान् पञ्च पञ्च च प्राणिनां प्राणोपरोधाय घोरान् करोति ॥ ४ ॥

गङ्गाधरः—तत्रादौ हिक्कानां पूर्व्वरूपाण्याह—कण्ठेत्यादि। कुक्षेराटोपो गुड़-गुड़ाशब्दः। हिक्कापूर्व्वरूपानन्तरं श्वासपूर्व्वरूपमाह—आनाह इत्यादि। प्राणस्य च विलोमत्वं, प्राणोऽत्र श्वासनिर्गमनं तस्य विलोमत्वमनुलोमाभाव इति ॥ ५ ॥

गङ्गाधरः—हिक्कायाः सम्प्राप्तिमाह—प्राणेत्यादि। प्राणादिवाहीनि स्रोतांसि सकफोऽनिलः संरुध्य हिक्काः करोति। तासां पृथक् प्रत्येकं लिङ्गं शृणु ॥ ६ ॥

रूपत्वम्। प्राणवाहीनीत्यादिना संप्राप्तिमाह। इयं हिक्काश्वासयोः साधारणी संप्राप्तिः। वैशेषिकी चाग्रे वक्ष्यति। प्राणोपरोधायेति प्रायः प्राणहरायेत्यर्थः। पञ्च पञ्च चेति हिक्काः पञ्च श्वासाः पञ्च इत्यर्थः ॥ ४ ॥

चक्रपाणिः—लक्षणग्रहगृहीतं पूर्व्वरूपं हिक्कानां कण्ठोरसोः इत्यादिना, श्वासानामानाह इत्यादिना आह। विलोमत्वमिति पर्य्याकुलत्वम् ॥ ५ ॥

चक्रपाणिः—प्राणोदकेत्यादिना विशिष्टहिक्कासंप्राप्तिमाह ॥ ६ ॥

क्षीणमांसबलप्राण-तेजसः सकफोऽनिलः।
गृहीत्वा सहसा कण्ठमुच्चैर्घोषवतीं भृशम्।
करोति सततं हिक्कां द्विस्त्रिरेकगुणां तथा *॥
प्राणस्रोतांसि मर्म्माणि संरुध्योष्माणमेव च।
संज्ञां मुष्णाति गात्रेषु स्तम्भं संजनयत्यपि।
मार्गञ्चैवान्नपानानां रुणद्ध्युपहतस्मृतेः॥
सास्रुविप्लुतनेत्रस्य स्तब्धशङ्खच्युतभ्रुवः।
सक्तजल्पप्रलापस्य निवृत्तिं नाधिगच्छतः॥
महाशब्दा महावेगा महातेजा † महाबला।
महाहिक्केति सा नृणां सद्यः प्राणहरा मता॥ ७॥

इति महाहिक्का।

गङ्गाधरः—क्षीणेत्यादि महाहिक्कालिङ्गम्। तेजः शरीरप्रभावः। क्षीणमांसादेः पुंसः सकफोऽनिल उदानः सहसा कण्ठं गृहीत्वा सततमविच्छेदेन भृशमत्यर्थमुच्चैर्घोषवतीं हिक्कां हिगिति शब्दं कृत्वा कार्यति या रुक् तां करोति। एकगुणां कस्यचित् कस्यचिद् द्विर्द्विगुणां त्रिस्त्रिगुणां तथा कस्यचित्। गुणा महावेगतेजोबलानि तेषां गुणानामन्यतमैकद्वित्रिगुणामिति। तथा प्राणस्य स्रोतांसि मर्म्माणि हृदयादीनि उष्माणञ्च संरुध्य संज्ञां मुष्णाति लोपयति, गात्रेषु स्तम्भमपि जनयति। अस्य हिक्किन उपहतस्मृतेः साश्रुविप्लुतनेत्रस्य स्तब्धशङ्खस्य च्युतभ्रुवः सक्तजल्पप्रलापस्य अव्यक्तजल्पस्याव्यक्तानर्थकवचनस्य हिक्कायाः सातत्यान्निवृत्तिं नाधिगच्छतो नरस्यान्नपानानां गमनमार्गञ्चैव रुणद्धि। एतादृशस्य नरस्यैषा महाशब्दा महावेगा महातेजा महावीर्य्या महाबला यस्मात् तस्मान्महाहिक्केति मता। नृणां सद्यः प्राणहरा॥ ७॥

चक्रपाणिः—क्षीणमांसबलप्राणतेजस इति। अनुप्राणो वायुः उत्साहो वा. तेजोऽग्निः। उच्चैर्गृहीत्वा घोषवतीमिति योज्यम्। द्विसन्ततां त्रिसन्तताम् अनेकगुणां वा करोति। तत्र द्विसन्तता एकोपक्रमे वारद्वयं भवति। संरुध्योष्माणमिति देहोष्माणम्। संसक्तवचनतया प्रलापो यस्य स सक्तवाक्प्रलापः। महामूलेति महाबलगम्भीराश्रयदोषमूला। महाशब्दत्वञ्च उच्चैर्घोषवतीमित्यनेन एवोक्तमपि महाहिक्कासंज्ञोपादानार्थम् इह पुनरुक्तिः। तेन महाहिक्केति संज्ञा॥ ७॥

*—हिक्कां तथैकद्वित्रिसन्तताम् इति चक्रः। † महामूलेति चक्रः।

हिक्कते यः प्रवृद्धन्तु कृशो दीनमना नरः।
जर्ज्जरेणोरसा कृच्छ्रं गम्भीरमनु नादयन्॥
संक्षिपन् जृम्भमाणश्च तथाङ्गानि प्रसारयन्।
पार्श्वे चोभे समायम्य कूजस्तम्भरुगर्द्दितः॥
नाभेः पक्वाशयाद्‌ वापि हिक्का चास्योपजायते।
क्षोभयन्ती भृशं देहं नामयन्तीव ताम्यतः॥
रुणद्ध्युच्छ्वासमार्गन्तु प्रनष्टबलचेतसः।
गम्भीरा नाम सा तस्य हिक्का प्राणान्तिकी मता॥ ८॥

इति गम्भीरा हिक्का।

व्यपेता जायते हिक्का यान्नपाने चतुर्व्विधे।
आहारपरिणामान्ते भूयश्च लभते बलम्॥

गङ्गाधरः—गम्भीरालक्षणमाह—हिक्कते इत्यादि। यस्तु नरः कृशो दीनमना जर्ज्जरेण उरसा विशिष्टः सन कृच्छ्रं यथा स्यात् तथा गम्भीरं नादमनु नादयन् सन् तथाङ्गानि भूमौ संक्षिपन् प्रसारयंश्च जृम्भमाणश्च उभे पार्श्वे समायम्य दीर्घीकृत्य कूजस्तम्भरुगर्द्दितश्च श्वासाविरोधकारिणी न तु प्राणनाशिनी प्रवृद्धं यथा स्यात् तथा हिक्कते। हिक्क कूजनेऽनुदात्तेद्भ्वादिः धातुः। अस्य खल्वेवम्भूतं हिक्कमानस्य नाभेः प्रवर्त्तमाना हिक्का पक्वाशयाद्वापि प्रवर्त्तमाना हिक्कोपजायते। पूर्व्वमुक्तं पित्तस्थानसमुद्भवाविति प्रायिकत्वात् पक्वाशयप्रवृत्तावपि न दोषः। एवं नाभेः पक्वाशयाद्वोपजातास्य हिक्का ताम्यतो ग्लानिमतोऽस्य देहं भृशं क्षोभयन्ती सञ्चालयन्ती तथा नामयन्तीव नतं देहं कुर्व्वतीव प्रनष्टबलचेतसोऽस्य उच्छ्वासमार्ग रुणद्धि। सेयं गम्भीरा नाम हिक्का, तस्य नरस्य प्राणान्तिकी प्राणान्तकृन्मता॥ ८॥

गङ्गाधरः—क्रमिकत्वाद्व्यपेतामाह—व्यपेतेत्यादि। या हिक्का चतुर्व्विधेऽन्नपानेऽशितखादितलीढ़पीते जायते, आहारपरिणामान्ते व्यपगते भूयो बलञ्च

चक्रपाणिः—तत्र हिगिति कायति शब्दं करोतीति हिक्का। गम्भीरमनुनादयन् इति हिक्काया अनु गम्भीरं शब्दं कुर्व्वन्। संक्षिपन् अङ्गमिति योज्यम्। गम्भीरदेशभवत्वात् गम्भीरेति संज्ञा॥ ८॥

चक्रपाणिः—व्यपेता परिणता इत्यर्थः। आहारपरिणामान्त इति आहारपरिणामे वृत्ते, एतेन

प्रलापच्छर्द्यतीसार-तृष्णार्त्तस्य विचेतसः।
जृम्भिणो विप्लुताक्षस्य शुष्कास्यस्य विनामिनः॥
पर्य्याध्मातस्य हिक्का या जत्रुमूलादसन्तता।
सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनी॥ ६॥

इति व्यपेता वा यमिका हिक्का।

क्षुद्रवातो यदा कोष्ठाद् व्यायामपरिघट्टितः।
कण्ठं प्रपद्यते हिक्कां क्षुद्रां संजनयेत् तदा॥
अतिदुःखा न सा नोरः-शिरोमर्म्मप्रबाधिनी।
न च श्वासान्नपानानां मार्गमावृत्य तिष्ठति॥
वृद्धिमायस्यतो याति भुक्तमात्रे च मार्द्दवम्।
यतः प्रवर्त्तते पूर्व्वं तत एव निवर्त्तते॥

लभते, सा हिक्का व्यपेतोच्यते। इति निरुक्तिः। प्रलापाद्यार्त्तस्य विचेतसो जृम्भिणो विप्लुताक्षस्य शुष्कास्यस्य विनामिनो नतगात्रस्य पर्य्याध्मातस्य प्रत्याध्मानवतश्च या हिक्का जत्रुमूलात् क्लोमस्थानात् प्रवर्त्तते न सन्तता वर्त्तते, सा हिक्का व्यपेतेति नाम, विज्ञेया प्राणोपरोधिनी। (इति व्यपेता-लक्षणम्।) यमलवेगो बोध्यो यमिका च प्रलापार्त्तीति वक्ष्यमाणवचनेन ज्ञापनात्। तन्त्रान्तरे—चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्त्तते। कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्द्दिशेत् इत्युक्तेः॥ ९॥

गङ्गाधरः—क्षुद्रहिक्कालक्षणमाह—क्षुद्रेत्यादि। यदा व्यायामपरिघट्टितः क्षुद्रवातः कोष्ठादुदरात् कण्ठं प्रपद्यते तदा क्षुद्रां हिक्कां संजनयेत्। सा हिक्का नातिदुःखा न चोरःशिरोमर्म्मप्रबाधिनी न च श्वासादिमार्गमावृत्य तिष्ठति। आयस्यतो वृद्धिं याति भुक्तमात्रे मार्द्दवं याति। यतः पूर्व्वं प्रवर्त्तते

आहारेऽपि उत्पद्यत अन्ते बलवती भवति, सा व्यपेता इति संज्ञया दर्शयति। विनामिन इति शरीरविनामकस्य। असन्ततेति अनतिदीर्घा॥ ९॥

चक्रपाणिः—क्षुद्रेत्यादिना क्षुद्रहिक्कामाह। क्षुद्रवातोऽल्पवातः। केचित् क्षुद्रवातमुदान-माहुः। आयस्यत इति आयासं कुर्व्वतः, मार्द्दवं यातीति सम्बन्धः। यतः प्रवर्त्तते पूर्व्वं तत एव निवर्त्तते इति उत्पद्यमानैव निवर्त्तमानवेगा भवति, महाहिक्कादिवत् अनुबन्धा न भवति

हृदयं क्लोम कण्ठञ्च तालुकञ्च समाश्रिता।
मृद्वी सा क्षुद्रहिक्केति नृणां साध्या प्रकीर्त्तिता॥ १० ॥

इति क्षुद्रहिक्का।

सहसैवातिसंभुक्तैः पानान्नैः पीड़ितोऽनिलः।
ऊर्द्धं प्रपद्यते कोष्ठान्मद्यैर्वातिमदप्रदैः॥
तथातिरोषभाष्याध्व-हास्यभारातिवर्त्तनैः।
वायुः कोष्ठं गतो धावन् पानभोज्यप्रपीड़ितः॥
प्रकरोत्यन्नजां हिक्कामुरःस्रोतःसमाश्रितः।
तथाशनैरसम्बन्धं क्षुवंश्चापि स हिक्कते॥
न मर्म्मबाधाजननी नेन्द्रियाणां प्रबाधिनी।
हिक्का पीते तथा भुक्ते शमं याति तु सान्नजा॥ ११ ॥

इत्यन्नजा हिक्का।

तत एव कारणान्निवर्त्तते। हृदयादिकं समाश्रिता सा मृद्वी हिक्का नृणां क्षुद्रहिक्केति नाम साध्या कीर्त्तिता॥ १०॥

गङ्गाधरः—अन्नजामाह—सहसेत्यादि। अतिसम्भुक्तैः पानान्नैः पीड़ितोऽनिलः सहसैव कोष्ठादूर्द्धं प्रपद्यते। अतिमदप्रदैर्मद्यैर्वा पीड़ितोऽनिलः सहसैव कोष्ठादूर्द्धं प्रपद्यते। तथा अतिरोषादिभिः पानभोज्यप्रपीड़ितः कोष्ठगतो वायुर्धावन् उरःस्रोतःसमाश्रितोऽन्नजां हिक्कां प्रकरोति। तथा सोऽयं वायुरशनैरसम्बन्धं यथा स्यात् तथा क्षुवन् क्षवथुं कुर्व्वन् हिक्कते। सेयं हिक्का न मर्म्मबाधाजननी न चेन्द्रियाणां प्रबाधिनी। तथा पीते भुक्ते च शमं याति। सा हिक्काऽन्नजा नाम॥ ११॥

उत्पादकहेतोः व्यायामादेरेव निर्व्वर्त्तते, व्यायामादिना हिक्काजनकवातस्य क्षुद्रस्य विक्षेपात् संप्राप्तिभङ्गेनेति भावः। क्षुद्रवातजनितत्वात् क्षुद्रा हिक्का॥ १०॥

चक्रपाणिः—सहसेत्यादिना अन्नजामाह। इयञ्च यद्यपि दोषाभिभूतजाप्युक्ता, तथापि दोषादिजनितापि। पानाभोज्यप्रपीड़ित इत्यनेनान्नस्य कारणत्वेनोक्तत्वात् अन्नजेयमिति संज्ञा॥ ११॥

अतिसञ्चितदोषस्य भक्तच्छेदकृशस्य च ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥
आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम् ।
यमिका च प्रलापार्त्ति-मोहतृष्णासमन्विता ॥
अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः ।
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥ १२ ॥

गङ्गाधरः—पञ्चानामसाध्यत्वमाह—अतीत्यादि । आसां पञ्चानां हिक्कानां मध्ये या हिक्का अतिसञ्चितदोषस्य नरस्य समुत्पन्ना, भक्तच्छेदकृशस्य अरुचिजनितभक्तभोजनाभावेन कृशस्य नरस्य वा योत्पन्ना, व्याधिभिरन्यैः क्षीणदेहस्य वा या समुत्पन्ना, वृद्धस्य नरस्य वा या समुत्पन्ना, या चातिव्यवायिनः समुत्पन्ना, सा तस्य जीवितमाशु हन्ति । यदुक्तं महाहिक्केति सा नृणां सद्यः प्राणहरा मता इति । तथा गम्भीरा नाम सा तस्य हिक्का प्राणान्तिकी मता इति यदुक्तं, तथाप्यासामिति वचनं सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनीति प्राणोपरोधिनी न प्राणनाशिनी, तेन व्यपेता क्षुद्रहिक्का तथान्नजा त्रिधाऽतिसम्भुक्तजा अतिमदकरमद्यपानजा अतिरोषादितोऽन्नपानप्रपीड़नजा चेति पञ्चानामभिप्रायेणेति । यत् तु व्याख्यायते । महाहिक्कादीनामसाध्यत्वेऽपि पुनरिहासामिति वचनेन तत्प्रायिकत्वं ख्यापितम् । जतूकर्णवचनं हि दृश्यते आद्ये दुःसाध्ये यमिका मोहतृष्णावतः सद्यःप्राणहृदिति । तत्राद्ये दुःसाध्ये इति स्वरूपतो दुःसाध्यत्वेऽपि प्रायिकत्वं वाच्यमन्यथा चरकवचनविरोधः स्यादव्यभिचारेण दुःसाध्यत्वे इति । यमिका च व्यपेतेति या तूक्ता सा प्रलापादियुक्ता आशु

चक्रपाणिः—अतीत्यादिना साध्यासाध्यविभागमाह । अतिशयेन सञ्चिता दोषा यस्य स तथा । भक्तच्छेदकृशस्येति अभोजनदुर्ब्बलस्य । आसां पञ्चानां या हिक्का अतीत्यादिना प्रोक्तलक्षणस्य पुरुषस्य भवति सा जीवितं हन्ति । यमिका चेत्यनेन क्षुद्रान्नजा साध्यत्वेनोक्ता । वेगेन जायमाना यमिका ज्ञेया पूर्व्वोक्तानुवेगेन या जायमाना सा महाहिक्का, सा स्वरूपेणैव असाध्या, तस्या अतीत्यादियोगेन असाध्यताविधानम् अनर्थकम् । तथा महेत्यादिहिक्कानां तिसृणाम् असम्पूर्णलक्षणानाम् असाध्यत्वम् । क्षुद्रान्नजयोस्तु सम्पूर्णलक्षणयोरपि असाध्यत्वम् । महाहिक्कादित्रयं निसर्गत एवासाध्यम् । अन्ये तु ब्रुवते महाहिक्कादयोऽपि कदाचित साध्या भवन्त्येव । तत्र प्राणान्तिकेति वचनात् तत् प्रायः प्राणहरा इत्यनेनोक्तम् । तथा जतूकर्णे आद्या

यदा स्रोतांसि संरुध्य मारुतः कफपूर्व्वकः।
विष्वग् व्रजति संरुद्धस्तदा श्वासान् करोति सः॥ १३॥
उद्धूयमानवातो यः शब्दवद् दुःखितो नरः।
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम्॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः।
विवृताक्षाननो बद्ध-मूत्रवर्च्चा विशीर्णवाक्॥
दीनः प्रश्वसितञ्चास्य दूराद् विज्ञायते भृशम्।
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते॥ १४॥

इति महाश्वासः।

जीवितं हन्तीति वचनेन प्राणोपरोधिनी व्यपेता शुद्धा नाशु किन्तु कालप्रकर्षणेति प्रायेण। यमिकायाः साध्यलक्षणमाह—अक्षीणश्चेत्यादि। अक्षीणत्वाद्यभावे यमिका हन्तीति कालप्रकर्षेण न त्वाशु॥ १२॥

गङ्गाधरः—इति हिक्कानिदानमुक्त्वा श्वासनिदानमाह—यदेत्यादि। कफपूर्व्वकः कफेन संयुक्तः पूर्व्वं सन् मारुतः स्रोतांसि हिक्काश्वाससाधारणोक्तानि प्राणवाहीनि न तु हिक्कोक्तानि प्राणोदकान्नवाहीनि संरुध्य तेन स्रोतोरोधेन संरुद्धः सन् विष्वग् व्रजति, विशु अश्नतीति विष्वक्; सर्व्वशरीरं व्रजति, तदा वैकारिकान् श्वासान् स करोति॥ १३॥

गङ्गाधरः—सम्प्राप्तिमुक्त्वा महाश्वासमाह—उद्धूयेत्यादि। उद्धूयमानवातो यः पुमान् उद्धूयमानवात ऊर्द्ध्वं धूयमानः स्वयमेव गम्यमानो वातो यस्य स नरः खलु दुःखितः सञ्छब्दवद् यथा स्यात् तथा उच्चैः श्वसिति, यथा संरुद्धो मत्तर्षभोऽनिशमुच्चैः श्वसिति प्रनष्टज्ञानादिर्भवति, अस्य प्रश्वसितं प्रश्वासं भृशं दूराद्विज्ञायते। एष महाश्वासः। एतन्महाश्वासोपसृष्टः पुमान् क्षिप्रं विपद्यते म्रियते॥ १४॥

दुःसाध्या, यमिका तृष्णामोहवतां सद्यः प्राणहृत् गभीराव्यपेते च इत्युक्तम्। अक्षीणेति अक्षीणमांसः॥ १२॥

चक्रपाणिः—यदेत्यादिना श्वाससंप्राप्तिमाह। स्रोतांसीति प्रकृतत्वात् प्राणोदकवाहीनि स्रोतांसि। कफपूर्व्वक इति कफप्रधानः। विष्वग् व्रजति सर्व्वतो गच्छति॥ १३॥

चक्रपाणिः—उद्धूयमानेत्यादिना महाश्वासलक्षणमाह। उद्धूयमान इति ऊर्द्ध्वं धूयमानो वातः।

ऊर्द्ध्वं श्वसिति यो दीर्घं * न च प्रत्याहरत्यधः।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्द्दितः॥
ऊर्द्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः।
प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीड़ितः॥
ऊर्द्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते।
मुह्यतस्ताम्यतश्चोर्द्ध्वं श्वासस्तस्यैव हन्त्यसून्॥ १५॥

इत्यूर्द्ध्वश्वासः।

यस्तु श्वसिति विच्छिन्नं सर्व्वप्राणेन पीड़ितः।
न वा श्वसिति दुःखार्त्तो मर्म्मच्छेदरुगर्द्दितः॥
आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः॥

गङ्गाधरः—ऊर्द्ध्वश्वासमाह—ऊर्द्ध्वमित्यादि। यो नर ऊर्द्ध्वमेव श्वसिति न चाधः श्वासं सम्यक् प्रत्याहरति श्लेष्मावृतमुखस्रोतःप्रभृतिः सन् वेदनार्त्तश्च सन् प्रमुह्यन् मोहं गच्छन् शुष्कास्योऽरतिपीड़ितो भवति। इत्येतस्मिन् ऊर्द्ध्व-श्वासे प्रकुपिते वृद्धे सत्यधःश्वासो निरुध्यते, तस्य मुह्यतश्च ताम्यतश्चोर्द्ध्वं श्वासोऽसून् प्राणान् निहन्ति। इत्येतदूर्द्ध्वश्वासे मोहग्लानी भवत एव न, तु यदि भवतस्तदाऽसून् निहन्ति नान्यथा इति त्रयः श्वासा न सिध्यन्तीति वचनात्॥ १५॥

गङ्गाधरः—छिन्नश्वासमाह—यस्त्वित्यादि। यस्तु सर्व्वप्राणेन पीड़ितः सन् विच्छिन्नं स्थित्वा स्थित्वा श्वसिति, यदा मर्म्मच्छेदरुगर्द्दितः सन् दुःखार्त्तो भवति, तदा न वा श्वसिति श्वासरोधः स्यादस्य। एष नर आनाहाद्यार्त्तो

उच्चैरिति दीर्घम्। मत्तर्षभो मत्तबलीवर्द्दः। दीन इति दीनवत्। हीनं प्रश्वसितमिति पाठः। तथाहि प्रश्वसितस्य हीनत्वे दूराद् विज्ञायते इति यद् वक्ष्यति तदनुपपन्नं स्यात्॥ १४॥

चक्रपाणिः—दीर्घमित्यादिना ऊर्द्ध्वश्वासमाह। दीर्घं श्वसिति श्वासस्य वहिर्निर्गमनं दीर्घकालं करोति न च प्रत्याहरत्यधः इति श्वासमधो न नयति। क्रुद्धगन्धवहो वायुः। श्वासस्य दीर्घकाल उन्नयने अधोऽनयने चोक्तं हेतुमाह ऊर्द्ध्वश्वास इत्यादिना॥ १५॥

चक्रपाणिः—यस्त्वित्यादिना छिन्नश्वासलक्षणमाह। श्वसिति निश्वस्य पुनः क्षणान्तेन न वा

* दीर्घं श्वसिति यश्चोर्द्ध्वम् इति चक्रेण पठ्यते।

विचेताः परिशुष्कास्यो विवर्णः प्रलपन् नरः।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून्॥ १६॥

इति छिन्नश्वासः।

प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य्य च॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा।
अतीव तीव्रवेगश्च श्वासं प्राणप्रपीड़कम्॥
प्रताम्यति स वेगेन कासते सन्निरुध्यते।
प्रमोहं कासमानश्च स गच्छति मुहुर्म्मुहुः॥

दह्यमानेन वस्तिना विशिष्टः विप्लुताक्ष उच्छूननेत्रः सन् परिक्षीणः श्वसन् श्वासं कुर्व्वन्नेकलोचनं रक्तमस्य स्यात्। विचेता इत्यादिरूपः प्रलपन् सन् छिन्नश्वासेन विच्छिन्नो भवति, स शीघ्रमसून् विजहाति। इति त्रयः श्वासा असाध्याः॥ १६॥

गङ्गाधरः—अथ तमकश्वासमाह—प्रतिलोममित्यादि। वायुर्यदा प्रतिलोमं यथा स्यात् तथा स्रोतांसि प्राणवहानि प्रतिपद्यते तदा प्रतिलोमं स्रोतोगतो वायुः ग्रीवां शिरश्च संगृह्य श्लेष्माणञ्च समुदीर्य्य पीनसं प्रतिश्यायविशेषं करोति, तेन पीनसलक्षणकफेन पुनः स्रोतोरोधेन वायोर्मार्गावरोधाद् रुद्धः सन् वायुर्घुर्घुरकं शब्दं करोति। तथा श्वासं प्राणप्रपीड़कं प्राणो देहान्निःसरतीवेत्येवं प्रपीड़ाजनकमतीव तीव्रवेगं करोति। स श्वासी तेनातीवतीव्रवेगेण प्रताम्यति ग्लायति कासते सन्निरुध्यते निश्चेष्टो भवति। कासमानश्च स प्रमोहं मुहुर्म्मुहुर्गच्छति। अत्र भ्रम्यते इत्यपपाठः। कासेन

श्वसिति न श्वासं लभते। मर्म्मच्छेदरूपा रुक्। (वस्तिनिरोधो मूत्रनिरोध इत्यर्थः।) रक्तैकलोचनत्वमिह व्याधिप्रभावात्। विच्छिन्नः विमुक्तसन्धिबन्धः। एते त्रयः श्वासा निसर्गतोऽसाध्याः॥ १६॥

चक्रपाणिः—प्रतिलोमम् इत्यादिना तमकश्वासमाह। श्लेष्माणं समुदीर्य्य च इत्यनेन सामान्यसंप्राप्त्युक्तस्यापि श्लेष्मणः पुनरभिधानात् इह विशेषेण कारणत्वं दर्शयति। घुर्घुरकम्

श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः ।
तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम् ॥
तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् ।
न चापि लभते निद्रां शयानः श्वासपीड़ितः ॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान् ।
विशुष्कास्यो मुहुःश्वासो मुहुश्चैवावधम्यते ॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च प्रवर्द्धते ।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥ १७ ॥

इति तमकश्वासः ।

श्लेष्मण्यमुच्यमाने भृशं दुःखितो भवति। तस्यैव श्लेष्मणः कासवेगेन विमोक्षान्ते मुहूर्त्तं सुखं पूर्व्वक्लेशापेक्षया लभते। तथा पुनरस्यैव कण्ठ उद्ध्वंसते उपस्थितकासवेगः स्यादेवं कासवेगस्यावसराभावेन भाषितुं कृच्छ्रात् शक्नोति श्वासपीड़ितत्वेन शयानोऽपि न च निद्रां लभते पुनः-पुनः कासवेगात्। तथा निद्रार्थं शयानस्य समीरणः पार्श्वे द्वे अवगृह्णाति पार्श्वावग्रहणेन श्वासावरोधः स्यात्। तथा निद्रां न लब्ध्वा पुनरुत्थायासीनः सन् सौख्यं पूर्व्वक्लेशापेक्षया लभते। तथोष्णमभिनन्दति सुखयति। उच्छ्रिताक्षो नयनयोरुच्छूनभावोऽस्य स्यात्। स्विद्यता ललाटेन युक्तः स्याल्ललाटेऽस्य घर्म्मो भवति। विशुष्कास्यो मुहुः सन् मुहुः श्वासवान् सन् मुहुश्चावधम्यते गजारूढ़ इव शरीरचालनवान् भवति। मेघादिभिः प्रवर्द्धते। स तमकः श्वासो याप्यः कालप्रकर्षं, नवोत्थितस्तु साध्यो वा स्याच्चतुष्पाद-योगात्। वाशब्देन ज्ञापनाम्॥ १७॥

इति कण्ठे घुर्घुरकशब्दम्। सन्निरुध्यते इति निरोधो भवति। तस्यैव चेति श्लेष्मण इति शेषः। आसीन उपविष्टः। उच्छ्रिताक्ष इति उच्छूनाक्षः। मुहुश्चैवावधम्यते इति क्षणक्षणश्वासेनैव वायुना अवधम्यते ॥ १७ ॥

ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकन्तु तम् ।
उदावर्त्तरजोऽजीर्ण-क्लिन्नकायनिरोधजः ॥
तमसा वर्द्धतेऽत्यर्थं शीतश्चाशु प्रशाम्यति ।
मज्जतस्तमसीवास्य विद्यात् सन्तमकन्तु तम् ॥ १८ ॥

इति प्रतमकसन्तमकश्वासौ ।

रुक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् ।
क्षुद्रश्वासः न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥

गङ्गाधरः—तमकस्यावस्थान्तरेण संज्ञान्तरमाह—ज्वरेत्यादि । ज्वरादिमतस्तमकं तं प्रतम विद्यात् । तस्यैव कारणविशेषजत्वे संज्ञान्तरमाह—उदावर्त्तेत्यादि । उदावर्त्तो वेगधारणजो व्याधिस्तस्माज्जातो, रजो धूलिरजीर्णं सामादिना क्लिन्नं भुक्तं, कायनिरोधः कायाग्निनिरोधः, एभ्यो जातस्तमकः श्वासोऽत्यर्थं तमसाऽन्धकारेण वर्द्धते शीतैः कर्म्मभिराशु प्रशाम्यति । तमसि चायं मज्जतीवास्य तमसि मज्जत इव तमकश्वासं तं सन्तमकं विद्यात् । सन्तमकं तं विद्यादितिवचनेन प्रतमकस्योदावर्त्तादिभिरुपद्रव इत्यन्येन यदुच्यते तन्न साधु ॥ १८ ॥

गङ्गाधरः—क्षुद्रश्वासमाह—रुक्षेत्यादि । रुक्षमन्नपानविहारादिकम्, आयासः श्रमस्ताभ्यां कोष्ठे उद्भवः क्षुद्रवात उदीरयन्नूर्द्धं गच्छन् श्वासान् करोतीति पूर्व्वस्मादनुवर्त्तते । सोऽयं क्षुद्रश्वासो नात्यर्थं दुःखेनाङ्गानां प्रबाधकः ।

चक्रपाणिः—ज्वरादिरोगेण तमकस्यैव पित्तसम्बन्धात् प्रतमकसंज्ञां दर्शयन्नाह—ज्वरेत्यादि । उदावर्त्तेत्यादिना प्रतमकहेतुलक्षणे प्राह । प्रतमक एव सन्तमकः । रजो धूलिः । कायनिरोधो वेगानां निरोधः । किंवा क्लिन्नकायो वृद्धः, निरोधो वेगनिरोधः । तमसेत्यन्धकारेण किंवा तमसा तमोगुणेन । यद्यपि तमकस्य शीतेन वृद्धिरुक्ता तथापि प्रतमकस्य पित्तसम्बन्धत्वात् शीतैश्चाशु प्रशाम्यतीति यदुक्तं तदुपपन्नं भवति । किंवा यथा मद्योत्थविकारस्य मद्यं प्रशमनं भवति तथा शीतसमुत्थस्यापि तदात्वमात्रे शीतैः प्रशमनं ज्ञेयम् । सन्तमकः प्रतमकभेद इति कृत्वा श्वासानां पञ्चसंख्यासिद्धिः ॥ १८ ॥

चक्रपाणिः—रुक्षेत्यादिना क्षुद्रश्वासमाह । रुक्षादायासाच्च उद्भवो यस्य स रुक्षायासोद्भवः ।

हिनस्ति न स गात्राणि न च दुःखो यथेतरे।
न च भोजनपानानां निरुणद्ध्युचितां गतिम्।
इन्द्रियाणां व्यथां नापि काञ्चिदापादयेद् रुजम्॥ १९॥

इति क्षुद्रश्वासः।

स साध्य उक्तो बलिनः सर्व्वे चाव्यक्तलक्षणाः।
इति श्वासाः समुद्दिष्टा हिक्काश्चैव स्वलक्षणैः॥ २०॥
एषां प्राणहरा वर्ज्ज्या घोरास्ते ह्याशुकारिणः।
भेषजैः साध्ययाप्यांस्तु क्षिप्रं भिषगुपाचरेत्।
उपेक्षिता दहेयुर्हि शुष्कं कक्षमिवानलः॥ २१॥

न गात्राणि हिनस्ति न च यथेतरे श्वासा यथा दुःखा न तथायं क्षुद्रश्वासो दुःखः पीड़ाकरः। न भोजनादीनामुचितां गतिं निरुणद्धि। न चेन्द्रियाणां व्यथाम् आपादयति न च काञ्चिद् रुजं रोगान्तरमापादयति। इति क्षुद्रश्वासलक्षणम्॥१९

गङ्गाधरः—तस्य साध्यतामाह—स क्षुद्रश्वासो बलिनः पुंसः साध्य उक्तः, सर्व्वे महाश्वासादयो यदा खल्वव्यक्तलक्षणाः पूर्व्वरूपावस्थास्तदा साध्या उक्ताः। अत्र पठन्ति। "क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते। त्रयः श्वासा न सिध्यन्ति तमको दुर्ब्बलस्य च।" इति श्वासाः पञ्च समुद्दिष्टा व्याख्याताः स्वलक्षणैः। पञ्च हिक्काश्च स्वलक्षणैः समुद्दिष्टा इति॥ २०॥

गङ्गाधरः—एषां हिक्काश्वासानां प्राणहरा हिक्काश्वासा वर्ज्ज्या न चिकित्स्याः। हि यस्मात् ते घोरा आशुकारिण आशुमारकाः। साध्ययाप्यांस्तु हिक्काश्वासान् भिषग् भेषजैः क्षिप्रमुपाचरेत्। कस्मात् क्षिप्रमित्यत आह—उपेक्षिता इत्यादि। उपेक्षिताः साध्ययाप्या अपि हिक्काश्वासा दहेयुर्यथा शुष्कं कक्षं कक्षस्थकाष्ठमनलो दहेदिति॥ २१॥

क्षुद्रवात इति स्वल्पवातः। न सोऽत्यर्थमिति नात्यर्थं दुःखकरः। न दुःख इति न दुःखसाध्यः॥ १९॥

चक्रपाणिः—सर्व्वे चाव्यक्तलक्षणा इत्यनेन साध्यत्वेन उक्तानां महाश्वासादीनां व्यक्तसर्व्व-लक्षणताव्यतिरिक्तायामेवावस्थायां साध्यतां प्रतिपादयति॥ २०॥

चक्रपाणिः—प्राणहरा महाश्वासादयः सम्पूर्णलक्षणा वर्ज्ज्याः। साध्या याप्या इति बहुवचनं साध्ययाप्यभेदबहुत्वाज्ज्ञेयम्॥ २१॥

कारणस्थानमूलैक्यादेकमेव चिकित्सितम् ।
द्वयोरपि यथाद्दष्टमृषिभिस्तन्निबोधत ॥ २२ ॥
हिक्काश्वासार्द्दितं स्निग्धैरादौ स्वेदैरुपाचरेत् ।
आक्तं लवणतैलेन नाड़ीप्रस्तरसङ्करः ॥
तैरस्य ग्रथितः श्लेष्मा स्रोतःस्वपि विलीयते ।
खानि मार्द्दवमायान्ति वातश्चाप्यनुलोमताम् ॥
यथाद्रिकुञ्जेष्वर्कांशु-तप्तं विष्यन्दते हिमम् ।
श्लेष्मा तप्तः स्थिरो देहे स्वेदर्विष्यन्दते तथा ॥
स्विन्नं ज्ञात्वा ततस्तूर्णं भोजयेत् स्निग्धमोदनम् ।
मत्स्यानां शूकराणाञ्च रसैर्दध्युत्तरेण वा ॥

गङ्गाधरः—कारणेत्यादि । हिक्काश्वासयोः कारणस्य स्थानस्य मूलस्योद्भवस्थानप्राथमिकस्य चैक्यादेकत्वाद् द्वयोरेकमेव चिकित्सितमृषिभिर्यथाद्दष्टं तन्निबोधत । इति ॥ २२ ॥

गङ्गाधरः—तच्चिकित्सितमाह—हिक्केत्यादि । हिक्कार्द्दितं श्वासार्द्दितं वा नरमादौ भिषक् स्निग्धैः कर्म्मभिः स्नेहयित्वा लवणमिश्रिततैलेनाक्तं नाड़ीप्रस्तरसङ्करैः स्वेदैरुपाचरेत् । तैः स्नेहपूर्व्वकस्वेदैरस्य हिक्काश्वासान्यतरार्द्दितस्य स्रोतःस्वपि ग्रथितः श्लेष्मा विलीयते गलितो भवति । खानि रन्ध्राणि मार्द्दवमायान्ति । वातश्चाप्यनुलोमतामायाति । तत्र दृष्टान्तः—यथेत्यादि । अद्रिकुञ्जेषु यथा पतितं संहतीभूतं हिमं जलम् अर्कांशुतप्तं विष्यन्दते, तथा हिक्काश्वासान्यतरार्द्दितस्य देहे स्थिरः श्लेष्मा स्वेदैस्तप्तो विष्यन्दते इति । ततः किं कुर्य्यादित्यत आह—स्विन्नमित्यादि । ततस्तं हिक्काश्वासान्यतरार्द्दितं सम्यक् स्विन्नं ज्ञात्वा मत्स्यानां शूकराणाञ्च रसैः अथवा दध्युत्तरेण दधिबहुलेनोपकरणेन स्निग्धमोदनं तूर्णं भोजयेत् । पुनः श्लेष्मा

चक्रपाणिः—संप्रति भिन्नयोरपि हिक्काश्वासयोः यथा समानं चिकित्सितं भवति तथा दर्शयन् समानं चिकित्सितमाह—कारणेत्यादि । कारणं बाह्यकारणं, स्थानं नाभ्यादि, मूलं दोषः ॥ २२ ॥

चक्रपाणिः—स्निग्धैरिति स्नेहविशेषणम् । अन्ये तु स्निग्धमिति पठन्ति । लवणवत् तैलं लवणतैलम् । कुञ्जेष्विति विटपेषु । मत्स्यादीनामित्यादौ मत्स्यानामपि रसः स्वरसः कल्केन कर्त्तव्यः । दध्युत्तरं दधिसरः । ईदृशञ्च भोजनं रसनानुगुणं कफवृद्ध्यर्थम् । उक्तं हि श्लोकोऽत्रवः ?

ततः श्लेष्मणि संवृद्धे वमनं पाययेत् तु तम् ।
पिप्पलीसैन्धवक्षौद्र-युक्तं वाताविरोधि यत् ॥
निर्हृते सुखमाप्नोति स कफे दुष्टविग्रहे ।
स्रोतःसु हि विशुद्धेषु चरत्यविहतोऽनिलः ॥ २३ ॥
लीनश्चेद् दोषशेषः स्यात् तं धूमैर्निर्हरेद् बुधः ।
हरिद्रां यवमेरण्ड-मूलं लाक्षां मनःशिलाम् ॥
सदेवदार्वलं मांसीं पिष्ट्वा वर्त्तिं प्रकल्पयेत् ।
तां घृताक्तां पिबेद् धूमं यवैर्वा घृतसंयुतैः ॥
मधूच्छिष्टं सर्ज्जरसं घृतं मल्लकसंपुटे ।
कृत्वा धूमं पिबेच्छृङ्गं वालं वा स्नायु वा गवाम् ॥

यावच्छुष्कीभूय ग्रथितो न भवेत् । ततः श्लेष्मणि संवृद्धे चोत्क्लिष्टे च तमातुरं वमनौषधं पाययेत् । यद्वमनौषधं वाताविरोधि तत् सैन्धवपिप्पलीक्षौद्रयुतं पाययेत् । दुष्टविग्रहे कफे निर्हृते सति स पुमान् सुखमाप्नोति । कुतः ? स्रोतःसु हीत्यादि । हि यस्मात् स्रोतःसु विशुद्धेषु सत्सु अविहतः पथिरोधाभावेनाविहतगतिरनिलश्चरति ॥ २३ ॥

गङ्गाधरः—वमनेन निर्हृतकफशेषे किं कुर्य्यादित्यत आह—लीनश्चेत् इत्यादि । यदि दोषशेषः स्रोतःसु लीनो वर्त्तते, तदा बुधो धूमैस्तं लीनं दोषशेषं निर्हरेत् । धूमानाह—हरिद्रामित्यादि । अलं हरितालम् । हरिद्रादीनि मांस्यन्तानि अष्टौ द्रव्याणि पिष्ट्वा वर्त्तिं धूमवर्त्तिं प्रकल्पयेत् । तां घृताक्तां वर्त्तिं कृत्वा धूमं पिबेत् । घृतसंयुतैर्यवैः पिष्टैर्वर्त्तिं कृत्वा धूमं वा पिबेत् । मधूच्छिष्टमित्यादि । मधूच्छिष्टं सर्ज्जरसश्च चूर्णयित्वा घृत

छर्द्दयतीह दुःखम् । वाताविरोधीत्यनेन अन्नं रूक्षं तीक्ष्णं वमनं निषेधयति । दुष्टः विग्रहो यस्य स दुष्टविग्रहः ॥ २३ ॥

चक्रपाणिः—वमनशेषहरणार्थं धूममाह—लीन इत्यादिना । एतेन धूमवमनं विनापि स्वल्पदोषे कर्त्तव्या एव । मात्रापि धूमविषया दोषस्य विद्यमानत्वात् । अलं हरितालम् । धूमवर्त्तिकरणं तस्याशीतीयोक्तधूमवर्त्तिविधानेन कर्त्तव्यम् । अत्र च धूमपाननलिकामानं वक्ष्यमाणकासहरधूमनलिकामानसमानम् इच्छन्ति हिक्काश्वासयोरपि काससमानत्वात् । मधूच्छिष्टं सिक्थकम् ।

श्योनाकवर्द्धमानानां नाड़ीं शुष्कां कुशस्य च।
पद्मकं गुग्गुलुं लोध्रं शल्लकीं वा घृतप्लुताम् ॥ २४ ॥
स्वरक्षीणातिसारास्रक्-पित्तदाहानुबन्धजान्।
मधुरस्निग्धशीताद्यैर्हिक्काश्वासानुपाचरेत् ॥ २५ ॥
न स्वेद्याः पित्तदाहार्त्ता रक्तस्वेदातिवर्त्तिनः।
क्षीणधातुबला रुक्षा गर्भिण्यश्चापि पित्तलाः ॥ २६ ॥

प्रक्षयित्वा मल्लकसम्पुटं शरावमध्येऽङ्गाराग्निं दत्त्वा सच्छिद्रेण नलिका-प्रवेशार्हेण शरावान्तरेण पिधाय तदन्तरग्नौ निक्षिप्य धूमपानोक्तनलिकां तस्मिंश्छिद्रे प्रवेश्य धूमं पिबेत्। एवमेव प्रकारेण गवां शृङ्गं चूर्णयित्वा अथवा गवां वालं पुच्छकेशमथवा स्नायु चूर्णयित्वा धूमं पिबेत्। श्योनाकेत्यादि। शुष्कां श्योनाकस्य नाड़ीं घृतप्लुतां धूमं पिबेत्। अथवा वर्द्धमानानामेरण्डानां नाड़ीं शुष्कां घृतप्लुताम्, अथवा कुशस्य शुष्कां नाड़ीं घृतप्लुतामथवा पद्मकाष्ठं गुग्गुलुं लोध्रं पिष्ट्वा कृतां वर्त्तिं शुष्कां घृतप्लुतां शल्लकीं शल्लकीवृक्षकाष्ठं पिष्ट्वा कृतां वर्त्तिं घृतप्लुतां धूमं पिबेत् ॥ २४ ॥

गङ्गाधरः—स्वरेत्यादि। स्वरक्षीणाद्यनुबन्धजान् हिक्काश्वासान् मधुर-स्निग्धशीताद्यैरुपाचरेत् ॥ २५ ॥

गङ्गाधरः—स्वेदैरुपाचरेदिति यदुक्तं तस्यापवादमाह—न स्वेद्या इत्यादि। पित्तार्त्ता दाहार्त्ता रक्तातिवर्त्तिनः स्वेदातिवर्त्तिनः क्षीणधातवः क्षीणबला रुक्षा गर्भिण्यः पित्तलाश्च हिक्काश्वासार्दिता न स्वेद्याः नाड़ीप्रस्तर-सङ्करैरिति ॥ २६ ॥

मल्लकसंपुटे चात्र उक्तमपि पातव्यधूमनिर्गमाथ ऊर्द्ध्वच्छिद्रं कर्त्तव्यम्। पद्मकादिष्वपि घृत-मित्याद्यनुवर्त्तते। वर्द्धमान एरण्डः। लोध्रोऽगुरुः। शल्लकी स्वनामख्याता ॥ २४ ॥

चक्रपाणिः—शीताद्यैरित्यादिशब्देन पित्तहरणपिच्छिलादिग्रहणम् ॥ २५ ॥

चक्रपाणिः—पित्तदाहार्त्ता इति पित्तार्त्तान् दाहार्त्तांश्च। रक्तं स्वेदश्च अतिवर्त्तमानौ येषां ते रक्तस्वेदातिवर्त्तिनः पित्तप्रकृतयः ॥ २६ ॥

कामं कण्ठमुरः कोष्णैः स्नेहसेकैः सशर्करैः ।
उत्कारिकोपनाहैश्च मृदुभिः स्वेदयेत् क्षणम् ॥
तिलोमामाषगोधूम-चूर्णैर्वातहरैः सह ।
स्नेहैश्चोत्कारिका साम्लैः सक्षीरैर्वा कृता हिता ॥ २७ ॥
नवज्वरामदोषेषु रुक्षं स्वेदं विलङ्घनम् ।
समीक्ष्योल्लेखनं वापि कारयेल्लवणाम्बुना ॥
अतियोगोद्धतं वातं दृष्ट्वा वातहरैर्भिषक् ।
रसाद्यैर्नातिशीतोष्णैरभ्यङ्गैश्च शमं नयेत् ॥ २८ ॥
उदावर्त्ते तथाध्माने मातुलुङ्गाम्लवेतसैः ।
हिङ्गुपीलुविड़ैश्चान्नं युक्तं स्यादनुलोमनम् ॥ २९ ॥

गङ्गाधरः—तेषां यथा स्वेदः कार्य्यस्तदाह—काममित्यादि । पित्तार्त्तादीनां तेषां हिक्काश्वासार्दितानां कामं यथेच्छं सशर्करैः स्नेहद्रव्यावसेकैः कोष्णैः क्षणं कण्ठमुरश्च स्वेदयेत् । मृदुभिरुत्कारिकाप्रदेहैः कोष्णैश्च कण्ठमुरः क्षणं स्वेदयेत् । मृदुभिरुत्कारिकामाह—तिलेत्यादि । तिला उमा माषा गोधूमा इत्येषां चूर्णैर्वातहरतिलतैलादिभि स्नेहैः सह साम्लरुत्कारिकाऽथवाम्लं विना क्षीररुत्कारिका कृता तेषां पित्तार्त्तादीनां कण्ठोरःस्वेदे हिता ॥ २७ ॥

गङ्गाधरः—नवज्वरेत्यादि । पित्तार्त्तादीनां नवज्वरामदोषेषु रुक्षं वातहर-स्नेहं विना तिलोमादीनां चूर्णैरुत्कारिकास्वेदं, पित्तार्त्तादिभ्योऽन्येषां स्वेद्यानां रुक्षं स्वेदं विलङ्घनञ्च समीक्ष्य कारयेत् बलादि समीक्ष्य च लवणाम्बुना वाप्युल्लेखनं वमनं कारयेत् । वमनाद्यतियोगोद्धतं वातं तेषां दृष्ट्वा वातहरैर्मांसरसैर्नातिशीतोष्णैः शमं नयेदभ्यङ्गैश्च वातहरैः शमं नयेदिति ॥ २८ ॥

गङ्गाधरः—उदावर्त्तेत्यादि । तेषां हिक्काश्वासार्दितानामुदावर्त्ते तथाध्माने च मातुलुङ्गाम्लवेतसैर्हिङ्गुपीलुविड़ैश्च युक्तमन्नमनुलोमनं स्यादिति ॥ २९ ॥

चक्रपाणिः—काममित्यादिना स्वेद्यानां स्थानविशिष्टं स्वेदमाह । काममिति इच्छायां सत्याम उत्कारिकोपनाहैः स्वेदयेत् ॥ २७ ॥

चक्रपाणिः—उल्लेखनं वमनम् । अतियोगोद्धतमिति वमनाद्यतियोगवृद्धम् । किंवा अतियोगेन अतिमात्रोद्धतम् । पीलुविड़सिद्धम् ॥ २८ । २९ ॥

हिक्काश्वासामयी ह्येको बलवान् दुर्ब्बलोऽपरः।
कफाधिकस्तथैवैको रुक्षो बह्वनिलोऽपरः॥
कफाधिके बलस्थे च वमनं सविरेचनम्।
कार्य्यं पथ्याशिने धूम-लेहादिशमनं ततः॥
वातिकान् दुर्ब्बलान् वृद्धान् बालांश्चानिलसूदनैः।
तर्पयेदेव शमनैः स्नेहयूषरसादिभिः॥ ३० ॥
अनुत्क्लिष्टकफास्विन्न-दुर्ब्बलानां विशोधनात्।
वायुर्लब्धास्पदो मर्म्म संशोष्याशु हरेदसून्॥

गङ्गाधरः—अथ भेदानाह—हिक्केत्यादि। एको हिक्कामयी श्वासामयी च बलवान् अपरो दुर्ब्बल इति द्विधा द्विधा। अन्यान्यप्रकार एतयोर्बलवद्-दुर्ब्बलयोर्मध्ये एकः कफाधिकस्तथा रुक्षो बह्वनिलोऽपर इति द्विधा द्विधैव द्विधा। तत्र कफाधिके बलस्थे च वमनं विरेचनञ्च कार्य्यं, ततः पथ्याशिने धूमलेहादिना शमनं कार्य्यम्। वातिकानित्यादि। वातिकान् वा दुर्ब्बलान् वा हिक्काश्वासार्दितान् वृद्धान् वा कफाधिकबलवतश्च बालांश्च तथाऽनिलसूदनैः शमनैः स्नेहयूषरसादिभिस्तर्पयेत्॥ ३०॥

गङ्गाधरः—वमनादिभिर्दोषो येषां तदाह—अनुदित्यादि। ये वम्या विरेच्यास्ते चेतदनुत्क्लिष्टकफा अथवा न स्विन्ना अथवा दुर्ब्बलास्तेषां वमनविरेचनविशोधनात् वायुर्लब्धास्पदः सन् मर्म्म हृदयं संशोष्याशु

चक्रपाणिः—चिकित्साभेदार्थं हिक्काश्वासिनोऽवस्थाभेदमाह—हिक्केत्यादि। एताश्चतस्रोऽवस्थाः साक्षादुक्ताः। बलवान् वाताधिकः कफाधिकश्चेति। बह्वनिलविशेषणेनापि रुक्षस्निग्धावस्था-द्वयम्। तत्र बह्वनिलबहुकफरूपतासूचिते अवस्थाद्वये क्रियां ब्रूते—कफाधिक इति। तत इति वमनविरेचनानन्तरम्। तथा चापरे अवस्थाद्वये समानचिकित्सितमाह—वातिकानिति। बाल-वृद्धयोश्चात्र असंपूर्णक्षीणधातुत्वेन दुर्ब्बलयोः दुर्ब्बलोदाहरणार्थमेवोपादानम्। एतच्च संक्षेपेण चिकित्सासूत्रमुक्तम्। तेन बलवान् वाताधिकः इत्याद्यवस्थामिश्रितायां युक्तचिकित्सायां अपि मिश्रणं कल्पनीयम्। यथा प्रत्येकदोषोक्तचिकित्सा दोषसंसर्गे विकल्प्यते॥ ३०॥

चक्रपाणिः—अविषयप्रविष्टशोधने दोषमाह—अनुत्क्लिष्टेत्यादिना। मर्म्म इति हृदयादीनि।

दृढ़ान् बहुकफांस्तस्माद् रसैरानूपवारिजैः ।
तृप्तान् विशोधयेत् स्विन्नान् बृंहयेदितरान् भिषक् ॥ ३१ ॥
शिखितित्तिरिदक्षाद्या जाङ्गलाश्च मृगा द्विजाः ।
दशमूलीरसे सिद्धाः कौलत्थे वा रसे हिताः ॥ ३२ ॥
निदिग्धिकां विल्वमध्यं कर्कटाख्यां दुरालभाम् ।
त्रिकण्टकं गुडूचीश्च कुलत्थांश्च सचित्रकान् ॥
जले पक्त्वा रसः पूतः पिप्पलीघृतभर्ज्जितः ।
सनागरः सलवणः स्याद् यूषो भोजने हितः ॥
रास्नां बलां पञ्चमूलं ह्रस्वं मुद्गान् सचित्रकान् ।
पक्त्वाम्भसि रसे तस्मिन् यूषः साध्यश्च पूर्ववत् ॥

असून् हरेत् । शोध्यानाह—दृढ़ानित्यादि । तस्मादुक्तदोषात् । दृढ़ान् हिक्काश्वासार्त्तान् बहुकफान् स्निग्धस्विन्नानानूपवारिजैर्मांसरसैस्तृप्तानुत्क्लिष्टकफान् वमनविरेचनाभ्यां विशोधयेत् । दृढ़बहुकफाद्धिक्काश्वासादितादितरान् दुर्ब्बलान् वाताधिकान् वृद्धान् बालांश्च शमनैर्बृंहयेद् भिषगिति ॥ ३१ ॥

गङ्गाधरः—शमनबृंहणान्याह—शिखीत्यादि । शिखिप्रभृतयो जाङ्गला मृगा द्विजाः पक्षिणः दशमूलीरसे क्वाथे सिद्धाः कौलत्थे वा रसे क्वाथे सिद्धाः बृंहणीयानां हिक्काश्वासार्द्दितानां हिताः ॥ ३२ ॥

गङ्गाधरः—निदिग्धिकामित्यादि । विल्वमध्यं विल्वफलशस्यं, कर्कटाख्यां कर्कटशृङ्गीम् । चित्रकान्तान्येतानि अष्टौ द्रव्याणि । तत्र सप्त द्रव्याणि प्रास्थिके जले कर्षमात्राणि पक्त्वार्द्धशृते पूते जले कुलत्थविदलमष्टादशांशिकांशं दत्त्वा पक्त्वा पूतः स यूषभूतो रसः पिप्पलीनागरचूर्णलवणयुक्तो घृतभर्ज्जितो हिक्काश्वासिनोभोजने हितः । यूषः । रास्नामित्यादि । पूर्ववद् रास्नादिकम्

दृढ़ानिति बलवतः । रसैरानूपवारिजैः तृप्तान् इत्यनेन कफोत्क्लेशहरणे तृप्तिं दर्शयति । स्विन्नान् इति स्वेदितान् । इतरानिति दुर्ब्बलान् बहुवातांश्च । कफाधिकायामवस्थायां तर्पणरूपविपरीतक्रियाकरणेऽनुक्तेऽपि कफवृद्ध्या अदोषा एव ज्ञेया ॥ ३१ ॥

चक्रपाणिः—इह दशमूलरसादौ बर्हितित्तिरादीनां सिद्धिः रसविधानेनैव ज्ञया ॥ ३२ ॥

चक्रपाणिः—निदिग्धिकामित्यादि यूषविधानं सामान्यपठितमपि कुलत्थस्य यूषप्रकृतित्वाद् यूपसाधनौपयिकं मानं गृह्यते । शेषद्रव्यन्तु यूपसाधनमानेन गृह्यते । पिप्पलीसाधिते घृते

पल्लवान् मातुलुङ्गस्य निम्बस्य कूलकस्य च।
पक्त्वा मुद्गांश्च सव्योषान् क्षारयूषं विपाचयेत्॥
दत्त्वा क्षारं सलवणं शिग्रूणि मरिचानि च।
युक्त्या संसाधितो यूषो हिक्काश्वासविकारजित्॥
कासमर्द्दकपत्राणां यूषः शोभाञ्जनस्य च।
शुष्कमूलकयूषश्च हिक्काश्वासनिवर्हणः।
सदधिव्योषसर्पिष्को यूषो वार्त्ताकजो हितः॥ ३३॥
शालिषष्टिकगोधूम-यवान्नान्यनवानि च।
हिङ्गुसौवर्च्चलाजाजी-विड़पौष्करचित्रकैः।
सिद्धा कर्कटशृङ्ग्या च यवागूः श्वासहिक्किनाम्॥

अम्भसि पक्त्वा तस्मिन् रसे यूषः साध्यः, पिप्पलीनागरचूर्णसैन्धवयुक्तो घृतभर्जितः हिक्काश्वासिनोर्भोजने हितः। रास्नादियूषः। पल्लवानित्यादि। मातुलुङ्गस्य पल्लवान् निम्बस्य पल्लवान् कूलकस्य पटोलस्य च पल्लवान् व्यस्तान् समस्तान् वा पक्त्वा तस्मिन् रसे मुद्गान् विदलीकृतान् सव्योषान् व्योषचूर्णमनुरूपेण दत्त्वा क्षारयूषं पचेत्। कथमित्यत आह—क्षारं यवक्षारं सैन्धवलवणञ्च शिग्रूणि फलानि मरिचानि च पुनर्युक्त्या दत्त्वा संसाधितो यूषः क्षारयूषः हिक्काश्वासविकारजित्। क्षारयूषः। कासमर्द्देत्यादि। कासमर्द्दकपत्रक्काथे शोभाञ्जनस्य पत्रक्काथे शुष्कमूलकक्काथे पक्को यूषो हिक्काश्वासनिवर्हणः। सदधीत्यादि। वार्त्ताकफलसहितो मुद्गादियूषः सदधि व्योषं दत्त्वा सर्पिषि भृष्टः हिक्काश्वासिनोर्भोजने हितः॥ ३३॥

<u>गङ्गाधरः</u>—शाल्यादीनामनवानामन्नानि हिक्काश्वासिनोर्हितानि। तत्र विशेषमाह—हिङ्ग्वित्यादि। घृते भृष्टहिङ्गुप्रभृतिभिः क्वथितैः सिद्धा यवागूः शाल्यादीनामनवानां श्वासहिक्किनां हिता। तथा कर्कटशृङ्ग्या क्वथितया सिद्धा

वा पिप्पलीयुक्त घृते भर्ज्जित इति पिप्पलीघृतभर्ज्जितः। एवं रास्नामित्यादौ रसस्य प्राधान्यम्। पूर्व्ववत् इति पिप्पलीघृतभर्ज्जितादिकमतिदिशति। क्षारेण युक्तो यूषः। क्षारोऽपामार्गादिः। कासमर्द्देति कासमर्द्दादीनां यथायोग्यतया प्रक्षेपः। जलमानादिना संस्कार उन्नेयः॥ ३३॥

दशमूलीशटीरास्ना-पिप्पलीविल्वपौष्करैः ।
शृङ्गीतामलकीभार्गी-गुडूचीनागरद्धिभिः ॥
यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः ।
कासहृद्ग्रहपार्श्वार्त्ति-हिक्काश्वासप्रशान्तये ॥ ३४ ॥
पुष्कराह्वशटीव्योष-मातुलुङ्गाम्लवेतसैः ।
योजयेदन्नपानानि ससर्पिर्विड़हिङ्गुभिः ॥
दशमूलस्य वा क्वाथमथवा देवदारुणः ।
तृषितो मदिरां वापि हिक्काश्वासो पिबेन्नरः ॥
पाठां मधुरसां रास्नां सरलं देवदारु च ।
प्रक्षाल्य जर्ज्जरीकृत्य सुरामण्डे निधापयेत् ॥
तन्मन्दलवणं कृत्वा वैद्यः प्रसृतसम्मितम् ।
पाययेत् तु ततो हिक्का-श्वासश्चैवोपशाम्यति ॥
हिङ्गु सौवर्च्चलं कोलं समङ्गां पिप्पलीं वलाम् ।
मातुलुङ्गरसे पिष्टमारनालेन वा पिबेत् ॥

यवागूश्च श्वासहिक्कावतां हिता। दशमूलीत्यादि। दशमूल्यादीनि क्वाथयित्वाद्ध- भृते तोये यवागूमण्डपेयाविलेप्यन्यतमा सिद्धा श्वासहिक्किनां हिता। यवागूमित्यादि। यैर्द्रव्यैर्यवागूरुक्ता तैर्द्रव्यैः विधिना मण्डपेयाविलेपीनामन्य- तमां यवागूं सिद्धां पिबेत्। एषां कषायं वा हिक्काश्वासी नरः पिबेत् ॥ ३४ ॥

गङ्गाधरः—पुष्कराह्वेत्यादि। पुष्करादिभिः क्वथितैः सिद्धान्यन्नपानानि सर्पिर्विड़हिङ्गुभिः प्रक्षिप्तैः सह हिक्काश्वासिनो योजयेत्। दशमूलस्येत्यादि। तृषितो हिक्काश्वासी नरोऽर्द्धभृतं दशमूलस्य क्वाथं पिबेदथवा देवदारुणः क्वाथं पिबेन्मदिरां वा पिबेत्। पाठामित्यादि। पाठादीनि जलेन प्रक्षाल्य कुट्टयित्वा जर्ज्जरीकृत्य सुरामण्डे चतुर्गुणे षड्गुणे वा निधापयेत्। तन्मन्दलवणमल्पलवणं कृत्वा प्रसृतसम्मितं पलद्वयं हिक्काश्वासिनं वैद्यः पाययेत्। हिङ्ग्वित्यादि। घृते

चक्रपाणिः—दशमूलीत्यादौ कषायशब्दः पानीयस्थानविहितत्वात् अर्द्धशृते जले एव वर्त्तते ॥ ३४ ॥

भार्गीनागरयोः कल्कं मरिचक्षारयोस्तथा।
पीतद्रु चित्रकास्फोता-मूर्व्वाणामम्बुना पिबेत् ॥ ३५ ॥
शिरीषपुष्पस्वरसः सप्तपर्णस्य वा पुनः।
पिप्पलीमधुसंयुक्तौ कफपित्तानुगे हितौ ॥
मधूलिका तुगाक्षीरी नागरं पिप्पली तथा।
उत्कारिका घृते सिद्धा श्वासे पित्तानुबन्धजे ॥
श्वाविधं शाशमांसञ्च शल्लकस्य च शोणितम्।
पिप्पलीघृतसिद्धानि श्वासे वातानुबन्धजे ॥
सुवर्च्चलारसो दुग्धं घृतं त्रिकटुकान्वितम्।
शाल्योदनस्यानुपानं वातपित्तानुगे हितम् ॥
मधुकं पिप्पलीमूलं गुड़ो गोशकृतो रसः *।
क्षौद्रं घृतं श्वासकास-हिक्काभिष्यन्दिनां हितम् ॥ ३६ ॥

भृष्टहिङ्गुप्रभृतिकं मातुलुङ्गरसे पिष्टमारनालेन गोलयित्वा हिक्काश्वासवान् ना पुमान् पिबेत्। भार्गीत्यादि। भार्गीत्यादि योगत्रयं कल्कविधयाम्बुना पिबेत् ॥ ३५ ॥

गङ्गाधरः—शिरीषेत्यादि। शिरीषपुष्पस्य स्वरसः सप्तपर्णस्य स्वरसः। एतौ द्वौ स्वरसौ पिप्पलीमधुसंयुक्तौ कफपित्तानुगे हिक्काश्वासान्यतमे हितौ। मधूलिकेत्यादि। मधूलिका गोधूमपेषणावशिष्टक्षुद्रभागः। तस्य त्रयो भागाः, तुगाक्षीर्य्यादीनां त्रयाणां मिलितानामेको भागः। घृतञ्चानुरूपं दत्त्वा जले सिद्धा उत्कारिका पित्तानुबन्धजे हिता। श्वाविधमित्यादि। श्वावित् सेज्जड़ः स च बृहत्क्षुद्रभेदेन द्विधा, तयोर्महान् श्वावित्, क्षुद्रः शल्लकः। तत्र बृहत्-शल्लकस्य शशस्य च मांसं, क्षुद्रशल्लकस्य च शोणितं, तानि त्रीणि पिप्पली-चूर्णमिश्रितघृते सिद्धानि भृष्टानि वातानुगे श्वासे हितानि। सुवर्च्चलेत्यादि। सुवर्च्चला सूर्य्यभक्ता तस्या रसः स्वरसः किंवा दुग्धं घृतं वा त्रिकटुकान्वितं वातपित्तानुगे श्वासे शाल्योदनभोजनादनुपानं हितम्। मधुकमित्यादि।

चक्रपाणिः—आस्फोता अपरमल्लिकेति ख्याता ॥ ३५ ॥

चक्रपाणिः—मधूलिका अल्पगोधूमा। श्वाविधमिति शल्लकस्य मांसम् ॥ ३६ ॥

* गोऽश्वशकृद्रसः इति चक्रः।

खराश्वोष्ट्रवराहाणां मेषस्य च गजस्य च ।
शकृद्रसं बहुकफेष्वेकैकं मधुना पिबेत् ॥
क्षारं वाप्यश्वगन्धाया लिह्यान्ना क्षौद्रसर्पिषा ।
मयूरपादनालं वा शललं शल्लकस्य च ॥
श्वाविद्रोहकचाषाणां * लोमानि कुररस्य च ।
एकद्विशफशृङ्गाणि चर्म्मास्थीनि खुरांस्तथा ॥
समस्तान्येकशो वापि दग्ध्वा क्षौद्रघृतान्वितम् ।
चूर्णं लिहन् जयेत् कासं हिक्कां श्वासञ्च दारुणम् ॥
एते हि कफसंरुद्ध-गतिप्राणप्रकोपहाः ।
तस्मात् तन्मार्गशुद्ध्यर्थं देया लेहा न निष्कफे ॥ ३७ ॥
कासिने छर्द्दनं दद्यात् स्वरभेदे च बुद्धिमान् ।
वातश्लेष्महरैर्युक्तं तमके तु विरेचनम् ॥

मधुकपिप्पलीमूलयोश्चूर्णं गुडो गोमयरसश्च क्षौद्रं घृतं सर्व्वं सममेकीकृत्य खादत् श्वासादिकानां हितम् ॥ ३६ ॥

गङ्गाधरः—खरेत्यादि। खरादीनां शकृद्रसमेकैकं बहुकफे श्वासे मधुना पिबेत्। क्षारं वेत्यादि। अश्वगन्धायाः भस्म जले स्रावयित्वा स्थापयेत्, तत्र तलस्थं संहतं क्षारं श्वासी ना पुमान् क्षौद्रसर्पिषा लिहेत्। मयूरपादस्य नालं दग्ध्वा क्षारं कृत्वा मधुसर्पिषा लिहेत्। अथवा शल्लकस्य शललं कण्टकं दग्ध्वा भस्म मधुसर्पिषा लेहयेत्। एकेत्यादि। एकशफा अश्वादयो द्विशफा गवादयस्तेषां शृङ्गाणि चर्म्माण्यस्थीनि खुरांश्च समस्तानि एकशो वापि दग्ध्वा क्षौद्रघृतान्वितं चूर्णं लिहन् कासादीन् जयेत्। एते हीत्यादि। हि यस्मात् एते लेहाः कफेन संरुद्धगतेः प्राणस्य प्रकोपहाः, तस्मात् तस्य प्राणस्य मार्गरोधककफशुद्ध्यर्थं लेहा एते देया न तु निष्कफे देया इति ॥ ३७ ॥

गङ्गाधरः—कासिन इत्यादि। श्वासवते कासिने छर्द्दनमौषधं दद्यात्।

चक्रपाणिः—मयूरपादमिति। नालं मयूरस्यैव पृथगेव प्रस्थमानम्। शकलमिति मत्स्यशकलाकारम्। जाण्डको मरुदेशोद्भवः प्राणी स्पृष्टमात्रे सङ्कोचमुपयाति। एकः द्विधाऽभिन्नः शफः येषां तेऽश्वादयः एकशफाः, द्विशफाः हरिणादयः, तान्। मार्गशुद्ध्यर्थमिति प्राणमार्गशुद्ध्यर्थम् ॥३७॥

* मयूरपादं नालं वा शकलं शल्लकस्य वा। श्वाविजाण्डकचाषाणाम् इति पाठान्तरम्।

उदीर्य्यते भृशतरं मार्गरोधाद् वहज्जलम्।
यथा तथानिलस्तस्य मार्गं नित्यं विशोधयेत्॥ ३८॥
शटी ग्रन्थिक-*-जीवन्ती त्वङ् मुस्तं पुष्कराह्वयम्।
सुरसं तामलक्येला पिप्पल्यगुरु नागरम्॥
बालकश्च समं चूर्णं कृत्वाष्टगुणशर्करम्।
सर्व्वथा तमके श्वासे हिक्कायाञ्च प्रयोजयेत्॥ ३९॥

शट्यादिचूर्णम्।

मुक्ताप्रवालवैदूर्य्यं शङ्खः स्फटिकमञ्जनम्।
ससारकाचगन्धार्क-सूक्ष्मैलालवणद्वयम्॥
ताम्रायोरजसो रूप्यं सौगन्धिककशेरुकम्।
जातीफलं शणफलान्यपामार्गस्य तण्डलाः॥

श्वासिनः स्वरभेदे च बुद्धिमान् वातश्लेष्महरंयुक्तं विरेचन दद्यात् तमके च श्वासे स्वरभेदे विरेचनं दद्यात्। कुतो मार्गशोधनं कार्य्यमित्यत आह—उदीर्य्यत इत्यादि। वहज्जलं नदनद्यादिकं यथा मार्गरोधाद् भृशतरमुदीर्य्यते तथा हिक्काश्वासिनोरनिलस्तस्यानिलस्य मार्गरोधाद्भृशतरमुदीर्य्यते। तस्मात् तस्यानिलस्य मार्गं नित्यं विशोधयेत्॥ ३८॥

गङ्गाधरः—शटीत्यादि। ग्रन्थिकं पिप्पलीमूलम्। शट्यादिबालकान्तानि त्रयोदश प्रत्येकं समानि चूर्णानि कृत्वा सर्व्वचूर्णादष्टगुणा शर्करा तत्सर्व्व-मेकीकृतं तमकश्वासादौ सर्व्वथा प्रयोजयेत्। शट्यादिचूर्णम्॥ ३९॥

गङ्गाधरः—मुक्तेत्यादि। वैदूर्य्यं मणिविशेषः। मुक्तादिस्फटिकान्तं पञ्चद्रव्यं प्रत्येकं सूक्ष्मचूर्णं ग्राह्यं न तु लघुपुटेन दग्ध्वा ग्राह्यम्। ससार-काचमणिः दृढ़काचः। गन्धं शोधितम्। अर्कस्य मूलत्वक्। ताम्रायोरजसी

चक्रपाणिः—कासिन इति। हिक्काश्वासयुक्त एव कासी। उदीर्य्यते इत्यादावनिलः कफ-मार्गनिरोधात् उदीरित इति दर्शयति॥ ३८॥

चक्रपाणिः—शटीत्यादिके चूर्णं सममिति सबालकं द्रव्यम्। अष्टगुणशर्करमिति एकभागा-पेक्षया अष्टगुणशर्करम्। सर्व्वथेति पानभोजनलेहादियुक्ते॥ ३९॥

चक्रपाणिः—मुक्तेत्यादौ ससारः स्फटिक एव। लवणद्वयं सौवर्च्चलं सैन्धवञ्च। सौगन्ध्यं

* चोरक इति वा पाठः।

एषां पाणितलं चूर्णं तुल्यानां क्षौद्रसर्पिषा।
हिक्कां श्वासञ्च कासञ्च लीढ़माशु नियच्छति॥
अञ्जनात् तिमिरं काचं नीलिकां पिष्टकं तमः।
पिल्वं कण्डूमभिष्यन्दमर्म्म चैव प्रणाशयेत् * ॥ ४० ॥

मुक्ताद्यचर्णम्।

शटीपुष्करमूलानां चूर्णमामलकस्य च।
मधुना संयुतं लेह्यं चूर्णं वा काललोहजम्॥
सशर्करां तामलकीं द्राक्षां गोऽश्वशकृद्रसम्।
तुल्यं गुड़ं नागरञ्च प्राशयेन्नावयेत् तथा॥
लसुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य च।
नावयेच्चन्दनं वापि नारीक्षीरेण संयुतम्॥

मारितपुटितं ताम्ररजः मारितपुटितश्च लौहरजस्तथा रूप्यमपि मारितपुटितं ग्राह्यम्। सौगन्धिकं कह्लारपुष्पं कशेरुकश्च जातीफलं शणस्य फलानि अपामार्गस्य तण्डुलाश्चेत्येषां तुल्यानां मिश्रितानां चूर्णं पाणितलं कर्षमाणं देहबलापेक्षयाल्पमानमपि क्षौद्रसर्पिषा लीढ़ं हिक्कादिकं नियच्छति। चूर्णमिदम् अञ्जनात् तिमिरादीन् नाशयेत्। मुक्ताद्यं चूर्णम्॥ ४० ॥

गङ्गाधरः—शटीत्यादि। शटीपुष्करमूलानां चूर्णं मधुना संयुतं लेह्यम्। आमलकस्य चूर्णं मधुना लेह्यम्। काललोहजं मारितपुटिततीक्ष्णलौहचूर्णं मधुना लेह्यं हिक्कादिषु पूर्व्वोक्तेषु। सशर्करामित्यादि। शर्करां भूम्यामलकीं गोऽश्वशकृतो रसं गुड़ं नागरञ्च तुल्यं मर्लयित्वा हिक्काश्वासातुरं प्राशयेत् तथा नावयेन्नस्यं कारयेत्। लसुनस्येत्यादिना चत्वारः। लसुनादीनां त्रयाणां

माणिक्यभेदः। सीसकं सौवीराञ्जनम् केचित् कृष्णमणिमाहुः। कसेरुकर्मीपत्रीलपोतो मणिः। पाणितलं कर्षः। मर्ल्यमिति मर्लादिग्धाक्षिताम्॥ ४० ॥

चक्रपाणिः—काललोहः लोहं एव, तीक्ष्णं लोहं केचिद् वर्णयन्ति। गृञ्जनकं लोहित-

* मर्त्यं कण्डूमभिष्यन्दं मन्दञ्च तत् प्रणाशयेत् इति चक्रधृतः पाठः।

सुखोष्णं घृतमण्डं वा सैन्धवेनावचूर्णितम्।
नावयेन्मक्षिकाविष्ठामलक्तकरसेन वा ॥
नारीक्षीरेण वा सिद्धं सर्पिर्मधुरकैरपि।
नस्तो निषिक्तं पीतं वा सद्यो हिक्कां नियच्छति ॥
सकृदुष्णं सकृच्छीतं व्यत्यासाद्धिक्किनां पयः।
पाने नस्तःक्रियायां वा शर्करामधुसंयुतम् ॥ ४१ ॥
अधोभागे घृतं सिद्धं सद्यो हिक्कां नियच्छति।
पिप्पलीमधुसंयुक्तौ रसौ धात्रीकपित्थयोः ॥
लाक्षालाजमधुद्राक्षा-पिप्पल्यश्वशकृद्रसम्।
लिह्यात् कोलमधुद्राक्षा-पिप्पलीनागराणि वा ।

प्रत्येकं मूलं चूर्णयित्वा नावयेत्। नारीक्षीरेण चन्दनं वा नावयेत्। सुखोष्णमित्यादि। सुखोष्णं घृतमण्डं सैन्धवमिश्रं नावयेद् वा। नावयेदित्यादि। मक्षिकाविष्ठामलक्तकरसेन गोलयित्वा नारीक्षीरेण वा गोलयित्वा नावयेत्। मधुरकैर्जीवनीयैः कल्कैश्चतुर्गुणजले सिद्धं सर्पिरपि नस्तो नासिकायां निषिक्तं नासिकया पीतं वा सद्यो हिक्कां नियच्छति। एतत् शस्त्यादिकं हिक्कायां बोध्यम्। सकृदित्यादि। सकृदेकवारमुष्णं पय एकवारं शीतं पय इत्येवं व्यत्यासाद्धिक्किनां पाने योज्यम्। नस्तःक्रियायां शर्करामधुसंयुतं शीतं पयः ॥ ४१ ॥

गङ्गाधरः—अधोभाग इत्यादि। अधोभागे वैरेचनिके द्रव्ये कल्के चतुर्गुणजले सिद्धं घृतं सद्यो हिक्कां नियच्छति। पिप्पलीत्यादि। धात्रीरसः पिप्पलीचूर्णमधुसंयुक्तस्तथा कपित्थफलमध्यः पिप्पलीमधुसंयुक्तस्य रस इत्येतौ द्वौ रसौ लिह्यात्। लाक्षेत्यादि। लाक्षादिकञ्च मधुहयशकृद्रसाभ्यां लिह्यात्।

पलाण्डुः। माक्षिकीमिति मक्षिकाभवाम्। मधुरकैरिति जीवनीयैः। सकृदिति कदाचित्। व्यत्यासात् इति विपर्य्ययात्। उष्णं पयः कृत्वा शीतं कर्त्तव्यम्। मधुसंयोगश्चात्र विरुद्धत्वात् उष्ण न कर्त्तव्यः ॥ ४१ ॥

चक्रपाणिः—अधोभागैरिति विरेचनद्रव्यैः ॥ ४२ ॥

शीताम्बुसेकः सहसा त्रासो विस्मापनं भयम् ।
क्रोधहर्षप्रियोद्वेगा हिक्काप्रच्यवना मताः ॥ ४२ ॥
हिक्काश्वासविकाराणां निदानं यत् प्रकीर्त्तितम् ।
वर्ज्ज्यमारोग्यकामैस्तद् हिक्काश्वासविकारिभिः ॥ ४३ ॥
शुष्कक्षीणकफोरस्का हिक्काश्वासानुबन्धिनः ।
ये प्रकृत्या रुक्षदेहाः सर्पिर्भिस्तानुपाचरेत् ॥ ४४ ॥
दशमूलरसे सर्पिर्दधिमण्डेन साधयेत् ।
कृष्णासौवर्च्चलक्षार-वयःस्थाहिङ्गुचोरकैः ।
कयस्थया च संसिद्धं हिक्काश्वासौ नियच्छति ॥ ४५ ॥

दशमूलाद्यं घृतम् ।

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ।
भूतीकं पौष्करं मूलं पलाशं चित्रकं शटी ।

कोलद्राक्षापिप्पलीनागराणि च पिष्ट्वा मधुना लिह्याद्वा। शीतेत्यादि। शीताम्बुसेकादयो हिक्काप्रच्यवना मताः ॥ ४२ ॥

गङ्गाधरः—अथ निदानवर्ज्जनमाह—हिक्केत्यादि। स्पष्टार्थमिदम् ॥ ४३ ॥

गङ्गाधरः—शुष्केत्यादि। शुष्कः क्षीणः कफो यत्र तदुरो येषां ते। हिक्काश्वासानुबन्धिनः कालप्रकर्षानुबन्धिहिक्काश्वासवन्तः प्रकृत्या स्वभावतः एव रुक्षदेहास्तान् सर्पिर्भिर्वक्ष्यमाणैरुपाचरेत् ॥ ४४ ॥

गङ्गाधरः—सर्पींष्याह—दशमूलेत्यादि। दशमूलस्य रसो घृताद् द्विगुणः दधिमण्डश्च द्विगुण इत्युत्सर्गसिद्धचतुर्गुणे द्रवे सर्पिः साधयेत्। तत्र कल्कैः कृष्णादिभिः पादिकैः। इत्येकं सर्पिः। कयस्थयेत्यादि। कयस्थया च कल्कभूतया दशमूलरसे द्विगुणे दधिमण्डे च द्विगुणे संसिद्धं सर्पिः हिक्काश्वासौ नियच्छतीति। दशमूलसर्पिरपरम् ॥ ४५ ॥

गङ्गाधरः—तेजोवतीत्यादि। तेजोवती चव्यं, भूतीकं यमानी। तेजोवत्या-

चक्रपाणिः—दशमूलेत्यादौ दधिमण्डो मस्तु। दशमूलक्काथदधिमण्डानाञ्च मिलित्वा चातुर्गुण्यम्। वयःस्था ब्राह्मी। कायस्था सुरसा ॥ ४३—४५ ॥

सौवर्च्चलं तामलकी सैन्धवं विल्वपेषिकाम् ॥
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः ।
हिङ्गुपादैर्घृतप्रस्थं पचेत् तोये चतुर्गुणे ॥
एतद् यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः ।
शोथानिलार्शोग्रहणी-हृत्पार्श्वरुज एव च ॥ ४६ ॥

तेजोवत्यादि घृतम् ।

मनःशिलासर्ज्जरस-लाक्षारजनिपद्मकैः ।
मञ्जिष्ठैलैश्च कर्षांशैः प्रस्थः सिद्धो घृताद्धितः ॥ ४७ ॥

मनःशिलादि घृतम् ।

जीवनीयोपसिद्धं वा सक्षौद्रं लेहयेद् घृतम् ।
वासाघृतं दाधिकं वा पिबेत् त्र्यूषणमेव च ॥ ४८ ॥

दिभिः प्रत्येकमक्षसम्मितैर्हिङ्गुपादैः शाणमितहिङ्गुसहितैरिति । तेजोवत्यादि घृतम् ॥ ४६ ॥

गङ्गाधरः—मनःशिलेत्यादि । शोधितमनःशिला ग्राह्या । मञ्जिष्ठैलश्च मञ्जिष्ठैलाभ्यां वर्त्तन्ते इति तैः मञ्जिष्ठैलैरिति । जलमत्र चतुर्गुणम् । हिक्काश्वासिनो हितम् । मनःशिलादि घृतम् ॥ ४७ ॥

गङ्गाधरः—जीवनीयेत्यादि । जीवनीयदशककल्कसिद्धं चतुर्गुणजल पक्के पूते च शीते च क्षौद्रपादयुतं घृतं लेहयेत् । वासाघृतं दाधिकं घृतं त्र्यूषणञ्चैव घृतं पिबेत् ॥ ४८ ॥

चक्रपाणिः—तेजोवत्यादौ तेजोवती चविका । हिङ्गुपादैरित्यत्र हिङ्गुपादशब्देन हिङ्गुरेक-द्रव्यापेक्षया शाणमानो गृह्यते । तथापि अयमेव प्रयोगो हारीतेन एतानि तेजोवतीत्यादि पठित्वा उक्तः—कल्कैरेतैरक्षसम्मितैः हिङ्गुशाणेन संयुतैः घृतप्रस्थं विपाचयेत् इत्यादि ॥ ४६ । ४७ ॥

चक्रपाणिः—वासाघृतमिति गुल्मोक्तम् । त्र्यूषणमिति त्र्यूषणं त्रिफलामित्यादिना त्र्यूषण-संज्ञयैव कासचिकित्सिते वक्ष्यमाणम् ॥ ४८ ॥

यत्किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम् ।
भेषजं पानमन्नं वा हिक्काश्वासेषु तद्धितम् ॥
वातकृद् वा कफहरं कफकृद् वानिलापहम् ।
कार्य्यं नैकान्तिकं ताभ्यां प्रायः श्रेयोऽनिलापहम् ॥
सर्व्वेषां वृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ।
अवश्यं शमनेऽपायो भृशोऽशक्यश्च कर्षणे ॥ *

गङ्गाधरः—उपसंहरति—यत्किञ्चिदित्यादि । कफवातघ्नमिति संयुक्तकफवातोभयघ्नम् । तदाह—वातकृदित्यादि । यदेकं भेषजादिकं वातकृत् कफहरं यद्वा कफकृत् अनिलापहं भवति तन्नैकान्तिकं नाव्यभिचारि योग्यं, ताभ्यां हि प्रायोऽनिलापहं श्रेय इति । सर्व्वेषामित्यादि । सर्व्वेषां हिक्काश्वासानामपायो हि यस्माद् वृंहणे भेषजान्नपानेऽल्पः शक्यः प्रायशो भवेत्, शमने भेषजान्नपाने सर्व्वेषामपायोऽवश्यं शक्यो भवेत्, कर्षणे भेषजान्नपाने सर्व्वेषामपायो

चक्रपाणिः—अनुक्तचिकित्सापक्षग्रहणार्थमाह—यत्किञ्चिदित्यादि । अनैकान्तिकं कर्त्तव्यविधिमाह—वातकृदित्यादि । अत्र हिक्काश्वासयोश्चिकित्सिते विविलयम् । तत्र तावत् कफवातहरं प्रधानमेवोक्तम् । यत् तु अवशिष्टं तत्र दोषस्य विद्यमानतया एकान्तेन करणं ज्ञेयम् । एवमुक्तेऽपि अनकान्तेन चिकित्साद्वयकरणे वातहरस्यैव प्राधान्यं ज्ञेयम् ताभ्यामित्यादि । अनिलापहञ्च वृंहणं समानं भवति । तत्रोपपत्तिमाह सर्व्वेषामित्यनेन । गदान्तरानपि ज्वरादीन् हिक्काश्वासवद्वृंहणाहीनाह । वृंहणे क्रियमाणे ह्यल्पः शक्यः प्रतीकारो भवति वृंहणजनितबलानां सुखजयव्यापत्तिकत्वात् इति भावः । शमने तु अवश्यमपायो भवति । कर्षणे तु क्रियमाणे अशक्योऽपायो भवति कष्टश्च भवति । अशक्य इति असाध्यः । एतदपि कर्षणेन बहुबले पुरुषे भेषजादिना रोगस्य दुःशकत्वात् इति ज्ञेयम् । अत एव शमनैः वृंहणैरिति उपसंहारं करिष्यति । किंवा वृंहणरूपे शमने क्रियमाणे नावश्यमपायो भवति,

* सर्व्वेषामिति । सर्व्वेषां हिक्काश्वासार्त्तानां हि यस्माद् वृंहणे विधीयमाने कदाचिद् दैववशाद् यो यो रोगोऽन्यरोगप्रादुर्भावो वा भवेत् स प्रायशोऽल्पस्तथा शक्यः साधयितुं सुखसाध्यः । तथा तेषां शमने भेषजादौ क्रियमाणेऽपायो यदि दैवात् स्यात् स नात्यर्थं नातिशयेन किं तर्हि मध्यमया वृत्त्या हिक्काश्वासशान्त्यर्थम् । कर्षणे भिषजा क्रियमाणे यो रोगो जायते, स भृशो दुःसहोऽतएवाशक्यः साधयितुं न शक्यते । यत एवं भृशोऽशक्यश्चापायो भवति, अतोऽस्मात् कारणात् हिक्काश्वासान् भूयिष्ठं बाहुल्येन शमनैर्भेषजादैस्तथा वृंहणैरुपाचरेत् । इत्यरुणः ।

तस्माच्छुद्धानशुद्धांश्च शमनैर्बृंहणैरपि ।
हिक्काश्वासार्दितान् जन्तून् प्रायशः समुपाचरेत् ॥ ४९ ॥

तत्र श्लोकः ।

दुर्ज्जयत्वे समुत्पत्तौ क्रियैकत्वे च कारणम् ।
लिङ्गं पथ्यञ्च हिक्कानां श्वासानाञ्च निदर्शितम् ॥ ५० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थाने हिक्काश्वासचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

भृशोऽशक्यो भवेदिति, तस्माद्धिक्काश्वासार्दितान् सर्व्वान् जन्तून् शुद्धान् अशुद्धांश्च शमनैर्बृंहणैरपि प्रायश उपाचरेन्न तु कर्षणैरिति ॥ ४९ ॥

गङ्गाधरः—तत्र श्लोकः संग्रहार्थम् । दुर्ज्जयत्व इत्यादि ॥ ५० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । अप्राप्ते तु दृढ़बलप्रतिसंस्कृत एव च । हिक्काश्वासचिकित्सिते वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरक-जल्पकल्पतरौ षष्ठस्कन्धे चिकित्सितस्थानजल्पे हिक्काश्वास-चिकित्सितजल्पाख्या सप्तदशी शाखा ॥ १७ ॥

भवन्नपि अल्पः शक्यश्च भवति, शक्यमेव तु क्रियमाणेऽपायो भवतीति योज्यम् । न्यायोपपादितं बृंहणशमनं बृंहणं वा प्रायः कर्त्तव्यतया उपसंहरन्नाह—तस्मादित्यादि । अत्र शमनमशुद्धविषयं बृंहणञ्च शुद्धविषयं केचिदाहुः । शमनस्यैव तु बृंहणत्वं केचित् उदाहरन्ति ॥ ४९ ॥

चक्रपाणिः—दुर्ज्जय इत्यादिकोऽध्यायार्थसंग्रहो व्यक्तः ॥ ५० ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां हिक्काश्वासचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ।

अथातः कासचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

तपसा तेजसा धृत्या धिया च परयान्वितः ।
आत्रेयः कासशान्त्यर्थमिदमाह चिकित्सितम् ॥ २ ॥
वातादिजास्त्रयो ये च क्षतजः क्षयजस्तथा ।
पञ्चैते स्युर्नृणां कासा वर्द्धमानाः क्षयप्रदाः ॥ ३ ॥

गङ्गाधरः—अथोद्दिष्टक्रमाद्धिक्काश्वासचिकित्सितानन्तरं कासचिकित्सितमाह—अथात इत्यादि। अथेत्यादि सर्व्वं पूर्व्ववद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—तपसेत्यादि। आत्रेयः पुनर्व्वसुः ॥ २ ॥

गङ्गाधरः—वातादिजा इत्यादि। वातादिजास्त्रय इति वातजपित्तजश्लेष्मजा इति त्रयः कासाः। प्रागभिहितमष्टोदरीये पञ्च कासा इति वातपित्तकफक्षतक्षयजा इति, तस्यायमनुवादस्तु वर्द्धमानक्षयप्रदा इत्युपदेशार्थमुत्तरोत्तरं बलवन्तश्चेति ज्ञापनार्थञ्च ॥ ३ ॥

चक्रपाणिः—हिक्काश्वासानन्तरं समानचिकित्सितत्वात् तथा हिक्काश्वासकासानां परस्परानुबन्धित्वाच्च कासचिकित्सितमुच्यते। अत्रात्रेयस्याभिधानादेव शिष्यप्रश्नोऽनुमीयते, न पृष्टा गुरवो वदन्तीति न्यायात् ॥ १ । २ ॥

चक्रपाणिः—क्षय इति धातुक्षयः, तेन राजयक्ष्मसम्बन्धानां क्षीणधातुपुरुषभवाणां तथा जराकासस्य क्षयजशब्देन ग्रहणं भवति। क्षतोद्भवस्य क्षतपूर्व्वकयक्ष्मभवस्य तथा क्षतक्षीणस्य च कासस्य ग्रहणं भवति। पञ्चेति संख्यया सकलकासावरोधो ज्ञेयः। क्षयप्रदा इति देहक्षयप्रदाः न मारका इति यावत्। किञ्च क्षयजोऽपि कासः पुनर्विशिष्टक्षयप्रदो भवति, यथा ज्वरोत्पत्ते रक्तपित्तं, रक्तपित्तात् पुनर्ज्वरो भवति। उक्तं हि "—ज्वरसन्तापाद् रक्तपित्तमुदीर्य्यते, रक्तपित्तात् ज्वरः इति ॥ ३ ॥

पूर्व्वरूपं भवेत् तेषां शूकपूर्णगलास्यता।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ४ ॥
अधः प्रतिहतो वायुरूर्द्ध्वस्रोतःसमाश्रितः।
उदानभावमापन्नः कण्ठे सक्तस्तथोरसि ॥
आविश्य शिरसः खानि सर्व्वाणि प्रतिपूरयन्।
आभञ्जन्नाक्षिपन् देहं हनुमन्ये तथाक्षिणी ॥
नेत्रपृष्ठमुरः पार्श्वे निर्भुज्य स्तम्भयंस्ततः।
शुष्को वा सकफो वापि कासनात् कास उच्यते ॥

गङ्गाधरः—पूर्व्वरूपमित्यादि। शूको यवाग्रजादिः। भोज्यानामवरोधः कण्ठशोषाद् भुक्तमन्नं कण्ठेऽवरुध्यते, अभ्यवहारासामर्थ्यमित्यन्येऽपरे त्वरुचिमाहुः ॥ ४ ॥

गङ्गाधरः—सम्प्राप्तिमाह—अध इत्यादि। वायुरधस्तात् केनापि कारणेन तथा स्वभावात् स्वयमेव प्रतिघातवानधस्ताद्भवति। अधस्तात् स्वेन प्रतिघातादूर्द्ध्वस्रोतःसमाश्रितः सन्नुदानभावमुदानानुगतभावमापन्नः कण्ठे तथोरसि सक्तः संलग्नः सन् शिरसः खानि मुखनासिकाकर्णनेत्रच्छिद्राण्याविश्य तानि सर्व्वाणि खानि प्रतिपूरयन् देहमाभञ्जन्नाक्षिपंश्च देहं हनुमन्ये तथाक्षिणी आक्षिपन् नेत्रपृष्ठमुरः पार्श्वे द्वे च निर्भुज्य निर्भुग्नानि कृत्वा ततः स्तम्भयंश्च शुष्कः सकफो वा कास उच्यते, कस्मात्? कासनात्। कासृ कुशब्दे। कुशब्दं भिन्नस्वरविशेषं कुर्व्वन् निरेतीति। स वायुः सकफः शुष्को वा कास उच्यते। कश्चिदाह—शिरःकण्ठाद्याक्षिपन् कसति निर्गच्छति इति कस गतावित्यस्य रूपं

चक्रपाणिः—पूर्व्वरूपमाह—पूर्व्वेत्यादि। शूकैरिव पूर्णः शूकपूर्णः गल आस्यञ्च यस्य। भोज्यानामवरोधोऽरुचिः अशक्तिर्वा ॥ ४ ॥

चक्रपाणिः—अध इत्यादिना सम्प्राप्तिमाह। उदानभावमापन्न इति ऊर्द्ध्वगतिस्वभावमापन्नः। खानीति स्रोतांसि। निर्भुज्येति आक्षिप्य। नेत्रादीन्येव स्तम्भयन् कास इत्यत्र वर्त्तते इत्या

प्रतिघातविशेषेण तस्य वायोः सरंहसः ।
वेदनाशब्दवैशेष्यं कासानामुपजायते ॥ ५ ॥
रुक्षशीतकषायाल्प-प्रमितानशनं स्त्रियः ।
वेगधारणमायासो वातकासप्रवर्त्तकाः ॥ ६ ॥
हृत्पार्श्वोरःशिरःशूल-स्वरभेदकरो भृशम् ।
शुष्कोरःकण्ठवक्त्रस्य हृष्टलोम्नः प्रताम्यतः ॥
निर्घोषदैन्यस्तामास्य-दौर्ब्बल्यक्षोभमोहकृत् ।
शुष्कः कासः कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत् ॥
स्निग्धाम्बुलवणोष्णैश्च भुक्तपीतैः प्रशाम्यति ।
ऊर्द्ध्ववातस्य जीर्णेऽन्ने वेगवान् मारुतो भवेत् ॥ ७ ॥

कास इति। अपरश्चाह—प्रतिघातेत्यादि। तस्य कारणविशेषकुपितस्य वायोः सरंहसो जातवेगस्य स्वेनैव प्रतिघातविशेषेण वेदनाशब्दवैशेष्यं वेदनाविशेषसहितशब्दवैशेष्यं कासानामुपजायते। इति कासनात् कास उच्यते ॥ ५ ॥

गङ्गाधरः—सम्प्राप्तिपूर्व्वकनिरुक्तिमुक्त्वा निदानमाह—रुक्षेत्यादि। रुक्षादीनि प्रमितान्तान्यन्नानि। अल्पं मात्रयाऽल्पं प्रमितमत्यल्पमन्नम्। अनशनं लङ्घनमिति न तु रुक्षादीनामनशनमविवक्षितत्वादयोग्यत्वाच्च वातकोपे। स्त्रियोऽतिसेविता वेगानामविधार्य्याणां धारणम् आयासः श्रमः वातकासप्रवर्त्तका वातकासहेतवः ॥ ६ ॥

गङ्गाधरः—वातकासलिङ्गमाह—हृदित्यादि। हृदादिषु शूलं स्वरभेदञ्च करोति। उरआदि शुष्कं यस्य तस्य हृष्टलोम्नः प्रताम्यतो ग्लानिमतः। निर्घोषः प्रबलः कासशब्दः क्षामास्यं क्षीणमुखम्। ईदृशस्य शुष्कः कासः शुष्कं कफं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत्। स्निग्धाद्यैर्भुक्तैः पीतैश्च शाम्यति।

उच्यते। कस गतिशातनयोरिति धातोरयं प्रयोगः। एवं सामान्योक्तस्य भेदहेतुमाह—प्रतीघातेत्यादि। प्रतीघात इत्यावरणं कफादि। सरंहसः सवेगस्य। वेदना पीड़ा। वैशिष्ट्यं विशिष्टत्वम् भिन्नत्वमिति यावत् ॥ ५ ॥

चक्रपाणिः—रुक्षेत्यादिना वातजस्य हेतुलक्षणे आह ॥ ६ ॥

चक्रपाणिः—प्रताम्यतः इति तमसीव प्रविशतः। ऊर्द्ध्ववातस्येति ऊर्द्ध्वगतया प्रकुपितवातस्य ॥ ७ ॥

कटूकोष्णविदाह्यम्ल-क्षाराणामतिसेवनम्।
पित्तकासकरं क्रोधः सन्तापश्चाग्निसूर्य्यजः ॥ ८ ॥
पीतनिष्ठीवनाक्षित्वं तिक्तास्यत्वं स्वरामयः।
उरोधूमायनं तृष्णा-दाहमोहारुचिभ्रमाः ॥
प्रततं कासमानश्च ज्योतींषीव च पश्यति।
श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके ॥ ९ ॥
गुर्व्वभिष्यन्दिमधुर-स्निग्धस्वप्नविचेष्टितैः।
वृद्धः श्लेष्मानिलं रुद्ध्वा कफकासमुदीरयेत् ॥ १० ॥
मन्दाग्नित्वारुचिच्छर्द्दि-पीनसोत्क्लेशगौरवैः।
लोमहर्षास्यमाधुर्य्य-क्लेदसंसदनैर्युतम् ॥
बहुलं मधुरं स्निग्धं घनं ष्ठीवेत् कफं तथा।
कासमानो ह्यरुग् वक्षः सम्पूर्णमिव मन्यते ॥ ११ ॥

जीर्णेऽन्ने पुनरूर्द्ध्ववातस्य मारुतो बलवान् भवेत्। इति वातकास-लिङ्गानि ॥ ७ ॥

गङ्गाधरः—अथ पित्तकासमाह—कटूकोष्णेत्यादि। कटुकादीनामतिसेवनं पित्तकासकर, क्रोधोऽग्निसूर्य्यजः सन्तापश्च पित्तकासकरः ॥ ८ ॥

गङ्गाधरः—इति निदानमुक्त्वा लिङ्गमाह—पीतेत्यादि। पैत्तिके कासे यन्निष्ठीवति तत् पीतमक्षि च पीतम्। वक्षो धूमायते। कासमानो नरः प्रततं ज्योतींषीव कासवेगान्नेत्रज्योतींषि निर्गच्छन्तीव पश्यति ॥ ९ ॥

गङ्गाधरः—कफकासमाह—गुर्व्वभीत्यादि। शब्दविशेषस्य कासस्याकरण-सामर्थ्यान्निश्चलकफस्य कथं कफकासः स्यादित्यतः सम्प्राप्तिमाह। गुर्व्वादिभि हेतुभिर्वृद्धः श्लेष्माऽनिलं रुद्ध्वा तेन रुद्धानिलविशिष्टः सन् कफकासमुदीरयेत् ॥१०

गङ्गाधरः—तस्य लक्षणमाह—मन्देत्यादि। कासमानः स मन्दाग्नित्वादिभिः

चक्रपाणिः—कट्वित्यादिना पित्तकासहेतुलिङ्गमाह। अग्निसूर्य्यज इति अग्निसूर्य्यभवः सन्ताप इत्यर्थः ॥ ८ ॥

चक्रपाणिः—उरोधूमायनमिति उरसो धूमोद्गमनमिव। पित्तजेऽपि उद्गमनं श्लेष्मनिष्ठीवनम्। व्याधेरुरःप्रभृतिकफस्थानभूतत्वेन श्लेष्मपित्तसंसर्गो जायते इति ज्ञेयम् ॥ ९ ॥

चक्रपाणिः—गुर्व्वित्यादिना श्लेष्मजमाह ॥ १० । ११ ॥

अतिव्यवायभाराध्व-युद्धाश्वगजनिग्रहैः ।
रुक्षस्योरः क्षतं वायुर्गृहीत्वा कासमावहेत् ॥ १२ ॥
स पूर्व्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् ।
कण्ठेन रुजतात्यर्थं विरुग्णेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीड़ाभितापिना ॥
पर्व्वभेदज्वरश्वास-तृष्णावैस्वर्य्यपीड़ितः ।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ॥ १३ ॥
विषमासात्म्यभोज्याति-व्यवायाद्व वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ।
कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम् ॥ १४ ॥

युतो बहुलादिकं कफमसृग् यथा स्यात् तथा निष्ठीवेत् । सम्पूर्णमिव कफेन वक्षो मन्यते । इति कफकासलक्षणम् ॥ ११ ॥

गङ्गाधरः—अथ क्षतकासमाह—अतिव्यवायेत्यादि । रुक्षस्य नरस्य युद्धान्तैरश्वगजयोर्निग्रहेण च क्षतमुरो वक्षो वायुर्गृहीत्वा कासमावहेत् ॥ १२ ॥

गङ्गाधरः—तस्य लक्षणमाह—स इत्यादि । स क्षतकासी पूर्व्वं शुष्कं कासते पश्चात् ततः सशोणितं कफं ष्ठीवेत् । अत्यर्थं रुजता कण्ठेन विशिष्ट उरसा विरुग्णेनेव तीक्ष्णाभिः सूचीभिरिव तुद्यमानेन शूलिना चोरसा तथा भेदपीड़ाभितापिना दुःखस्पर्शेन शूलेन च विशिष्टेनोरसा युक्तः पर्व्वभेदादिभिः पीड़ितः क्षतोद्भवात् कासवेगात् पारावत इवाकूजन् वर्त्तते ॥ १३ ॥

गङ्गाधरः—इति क्षतकासलिङ्गमुक्त्वा क्षयकासमाह—विषमेत्यादि । विषमभोज्यासात्म्यभोज्यातिव्यवायात् घृणिनां घृणावतां शोचताञ्च नृणामग्नौ व्यापन्ने सति त्रयो मलाः कुपिताः क्षयजं रसादिधातुक्षयात् कासं कुर्य्युः ।

चक्रपाणिः—अतिव्यवायेत्यादिना क्षतजमाह । उरःक्षतं गृहीत्वेति क्षतं प्राप्येत्यर्थः । अयञ्च कासः साहसयक्ष्मरूपेऽपि युक्त एव ज्ञेयः ॥ १२ । १३ ॥

चक्रपाणिः—विषमेत्यादिना क्षयजमाह । अत्र च विषमासात्म्यभोज्येन तथा व्यवायेन तथा वेगनिग्रहेण विषमासात्म्यजक्षयजवेगसन्धारणजानां यक्ष्मणां लक्षणभूतकासहेतुत्वं पृथगुक्तं भवति ॥ १४

दुर्गन्धं हरितं रक्तं ष्ठीवेत् पूयोपमं कफम्।
कासमानश्च हृदयं स्थानभ्रष्टं स मन्यते॥
अकस्मादुष्णशीतार्त्तो बह्वाशी दुर्ब्बलः कृशः।
प्रसन्नस्निग्धवदनः श्रीमद्दर्शनलोचनः॥
पाणिपादतलौ श्लक्ष्णौ घृणावानभ्यसूयकः।
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक् पीनसोऽरुचिः॥
भिन्नसंघातवर्च्चस्त्वं स्वरभेदोऽनिमित्ततः।
इत्येष क्षयजः कासः क्षीणानां देहनाशनः॥ १५॥
साध्यो बलवतां वा स्याद् याप्यस्त्वेवं क्षतोत्थितः।
नवौ कदाचित् सिध्येतामेतौ पादगुणान्वितौ।
स्थविराणां जराकासः सर्व्वो याप्यः प्रकीर्त्तितः॥ १६॥

कासाच्च देहक्षयो भवतीति प्राह—देहक्षयप्रदमिति। देहक्षयाच्च क्षयो राजयक्ष्मा भवति। उक्तं यत्। कासात् संजायते क्षय इति। तदुपेक्षया सर्व्वेभ्यः कासेभ्य एव क्षयः स्यादिति॥ १४॥

गङ्गाधरः—स क्षयकासी कासमानो दुर्गन्धादिकफं ष्ठीवेत्। हृदयं स्थानभ्रष्टमिव मन्यते। अकस्मादुष्णार्त्तोऽथ कदाचिच्छीतार्त्तो भवति। किन्तु बह्वाशी सन् दुर्ब्बलश्च कृशश्च भवति, तद्बह्वाहारफलं न लभते। दुर्ब्बलः कृशोऽपि प्रसन्नस्निग्धवदनः स्यान्न तु दौर्ब्बल्यकार्श्यफलं भवति। लोचने द्वे च श्रीमती दृश्येते। पाणिपादतलौ श्लक्ष्णौ मसृणौ भवतः। घृणावान् सर्व्वत्र घृणयाऽभ्यसूयां करोति। तस्य मिश्राकृतिर्द्वन्द्वसान्निपाताकृतिर्ज्वरो भवति। अनिमित्ततः स्वरभेदः स्वरभङ्गकारणाभावेऽपि स्वरभङ्गः स्यात्। इत्येष इत्येतल्लक्षणः क्षयजः कासः। एष क्षीणानां देहनाशनो मारकः, बलवतां साध्यो वा भवति। एवं बलवतां क्षतोत्थितः कासो याप्यः। एतौ क्षतज-

चक्रपाणिः—अत्र प्रसन्नदृष्टित्वं भिन्नवर्च्चस्त्वम् अनिमित्ततो भवति, तथा स्वरभेदोऽपि अनिमित्ततो भवति। देहनाशन इत्यसाध्य इत्यर्थः॥ १५॥

चक्रपाणिः—पादगुणान्वित इति पादचतुष्टयगुणवान्। अत्र कदाचित् सिध्यतीत्यभिधानेन याप्यत्वं साध्यत्वं वा नैकान्तिकम्। यतो न वायोरेव चतुष्पादसम्पत्त्या साध्यत्वमुक्तम्।

त्रीन् पूर्व्वान् साधयेत् साध्यान् पथ्यैर्याप्यांस्तु यापयेत् ।
चिकित्सामत ऊर्द्ध्वं हि शृणु कासनिवर्हणीम् ॥ १७ ॥
रुक्षस्यानिलजं कासमादौ स्नेहैरुपाचरेत् ।
सर्पिर्भिर्वस्तिभिः पेया-क्षीरयूषरसादिभिः ॥
वातघ्नसिद्धैः स्नेहाद्यैर्धूमैर्लेहैश्च युक्तितः ।
अभ्यङ्गैः परिषेकैश्च स्निग्धैः स्वेदैश्च बुद्धिमान् ॥

क्षयजौ कासौ नवौ नूतनौ चेत् तदा सर्व्वेषां पादगुणान्वितौ गुणवच्चतुष्पादयुक्तौ कदाचित् सिध्येताम् । इति पञ्च कासाः । अत्र स्थविराणां वृद्धतमानां यः कश्चिज्जरानिमित्तः कासः सर्व्व एव स याप्यः प्रकीर्त्तितः । जरया धातुक्षयं विना यदि वातादिस्वस्वकारणजो भवति तदा वातजादयस्त्रयः साध्याः स्युरित्यतो जराकास इत्युक्तम् ॥ १५ । १६ ॥

गङ्गाधरः—एषां चिकित्स्यानाह त्रीनित्यादि । त्रीन् पूर्व्वान् वातज-पित्तजकफजान् साध्यान् साधयेत्, याप्यान् यल्ववतो क्षतोत्थजराकासान् पथ्यैर्यापयेत् । इति पञ्चकासनिदानम् । एषां चिकित्सामाह चिकित्सा-मित्यादि ॥ १७ ॥

गङ्गाधरः रुक्षस्येत्यादि । रुक्षस्य स्नेहासेविनः स्नेहैः सर्पिरादिभि-रादावनिलजं कासमुपाचरेत् । कीदृशैरित्यत आह स्नेहाद्यैरस्तैर्वातघ्नदशक-सिद्धैरुपाचरेत शुद्धैः । धूमैर्लेहैश्च युक्तित उपाचरेत् । अपरैरभ्यङ्गै-र्वातघ्नसिद्धैर्वातघ्नसिद्धैः परिषेकैश्चोपाचरेत् । स्निग्धैः स्वेदैश्च बुद्धिमानुपाचरेत

क्षतजो याप्य इति उक्तः स भिन्नविषयः । क्षयजकासभेदं जराकासं याप्यतया दर्शयन्नाह—स्थवि-राणामित्यादि । स्थविराणामित्युक्तयापि जराकास इति वचनेन देहक्षयकारितया कृतः स याप्यः, यस्तु दोषकृतः स साध्यः एव भवतीति ज्ञेयः । अन्ये तु जराकासं दोषेष्वेव अन्तर्भावयन्ति ॥ १६ ॥

चक्रपाणिः—त्रीन् पूर्व्वानिति दोषजान् । साध्यानिति साध्यत्वेनोक्तान् । याप्यान् इति बहुवचनं व्यक्त्यपेक्षया उन्नेयम् ॥ १७ ॥

वस्तिभिर्बद्धविड्वातं शुष्कोर्द्ध्वञ्चोर्द्ध्वभक्तिकैः।
घृतैः सपित्तं सकफं जयेत् स्नेहविरेचनैः॥ १८॥
कण्टकारीगुडूचीभ्यां पृथक्त्रिंशत्पलाद्रसे।
प्रस्थः सिद्धो घृताद्वात-कासनुद्वह्निदीपनः॥ १९॥

कण्टकारीघृतम्।

पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः।
धान्यपाठावचारास्ना-यष्ट्याह्वक्षारहिङ्गुभिः॥
कोलमात्रैर्घृतप्रस्थाद्दशमूलीरसाढके।
सिद्धाच्चतुर्थिकां पीत्वा पेयां मण्डं पिबेदनु॥
तत् श्वासकासहृत्पार्श्व-ग्रहणीदोषगुल्मनुत्।
पिप्पल्याद्यं घृतञ्चैतदात्रेयेण प्रकीर्त्तितम्॥ २०॥

पिप्पल्यादिघृतम्।

न तु रुक्षैः स्वेदैरिति। तत्र बद्धविड्वातं वस्तिभिर्जयेत्। शुष्कोर्द्ध्वं शुष्कविड्ढ्वातम् औत्तरभक्तिकैर्घृतैर्जयेत्। सपित्तं सकफं वातं वातकासिनः स्नेहविरेचनैर्जयेत्॥ १८॥

गङ्गाधरः—सूत्राण्युक्त्वा स्नेहादियोगानाह—कण्टकारीत्यादि। कण्टकार्यास्त्रिंशत्पलं गुडूच्यास्त्रिंशत्पलमेकीकृत्याष्टगुणे जले पक्त्वा पादशेषे रसे पञ्चदशशरावेऽकल्कसिद्धो घृतात् प्रस्थः वातकासनुद्वह्निदीपनश्च। कण्टकारीघृतम्॥ १९॥

गङ्गाधरः—पिप्पलीत्यादि। पिप्पल्यादिभिः प्रत्येकं कोलमात्रैः कल्कैर्दशमूलीरसाढके षोड़शशरावे सिद्धात् घृतप्रस्थाच्चतुर्थिकां पलं पीत्वा पेयां मण्डं वानुपिबेत्। तत् श्वासादिनुत्। पिप्पल्यादिघृतम्॥ २०॥

चक्रपाणिः—रुक्षस्येत्यादिना चिकित्सामाह। शुष्कम् ऊर्द्ध्वं यस्य सः, शुष्कोर्द्ध्वं शुष्ककासगृहीतं वातपित्तम् ऊर्द्ध्वभक्तिकैः घृतैर्जयेत्। शुष्कोर्द्ध्वमेव सकफं स्नेहविरेचनैर्जयेत्॥ १८॥

चक्रपाणिः—कण्टकारीत्यादौ रसे इति क्वाथे॥ १९॥

चक्रपाणिः—चतुर्थिकामिति पलम्॥ २०॥

ऊषणत्रिफलाद्राक्षा-काश्मर्य्याणि परूषकम्।
द्वे पाठे देवदार्व्वृद्धिं स्वगुप्तां चित्रकं शटीम्॥
व्याघ्रीं तामलकीं मेदां काकनासां शतावरीम्।
त्रिकण्टकं विदारीञ्च पिष्ट्वा कर्षसमान् घृतात्॥
प्रस्थं चतुर्गुणक्षीरे सिद्धं कासहरं पिवेत्।
ज्वरगुल्मारुचिप्लीह-शिरोहृत्पार्श्वशूलनुत्॥
कामलार्शोऽनिलाष्ठीला-क्षतशोषक्षयापहम्।
ऊषणं नाम विख्यातं घृतमेतदनुत्तमम्॥ २१॥

ऊषणाद्यं घृतम्।

द्रोणेऽपां साधयेद् रास्नां दशमूलं शतावरीम्।
पलिकान् माणिकांशांस्त्रीन् कुलत्थान् बदरान् यवान्॥
तुलार्द्धञ्चाजमांसस्य पादशेषेण तेन च।
घृताढ़कं समक्षीरं जीवनीयैः पलोन्मितैः॥
सिद्धं तद् दशभिः कल्कैर्नस्यपानानुवासनैः।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत्॥

गङ्गाधरः—ऊषणेत्यादि। द्वे पाठे पाठाद्वयं क्षुद्रवृहद्भेदात्। स्वगुप्तां शूकशिम्बीम्। काकनासां काउयाठोटी। विदार्य्यन्तान् प्रत्येकं कर्षसमान् कल्कीकृत्य चतुर्गुणक्षीरे घृतात् प्रस्थं सिद्धं वातकासहरं पिवेत्। ऊषणाद्यं घृतम्॥ २१॥

गङ्गाधरः—द्रोणेऽपामित्यादि। रास्नादशमूलशतावरीणां प्रत्येकं पलिकं, कुलत्थादीनां त्रयाणां प्रत्येकं माणिकामष्टपलानि। अजस्य वयःस्थस्य मांसस्य तुलार्द्धं सपादषट्शरावम्। सर्व्वमिदमपां द्रोणे साधयेत् पादशेषेण तेन क्वाथेन षोड़शशरावेण घृतस्याढ़कं षोड़शशरावं समक्षीरं षोड़शशरावक्षीरं जीवनीयैः

चक्रपाणिः—ऊषणमित्यत्र द्वे पाठे इत्यनेन स्वल्पफलां द्वितीयां पाठां ग्राहयन्ति। स्वगुप्ता शूकशिम्बी॥ २१॥

पञ्च कासान् शिरःकम्पं शूलं वङ्क्षणयोनिजम्।
सर्व्वाङ्गैकाङ्गरोगांश्च स प्लीहोर्द्ध्वानिलान् जयेत्॥ २२॥

रास्नाघृतम्।

विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम्।
भार्गी चारश्च तच्चूर्णं पिबेद् वा घृतमात्रया॥
सकफेऽनिलजे कासे श्वासे हिक्काहताग्निषु।
द्वौ क्षारौ पञ्च कोलानि पञ्चैव लवणानि च॥
शटीनागरकोदीच्य-कल्कं वा वस्त्रगालितम्।
पाययेत् तद् घृतोन्मिश्रं वातकासनिवर्हणम्॥
दुरालभां शृङ्गवेरं शटीं द्राक्षां सितोपलाम्।
लिह्यात् कर्कटशृङ्गीञ्च कासे तैलेन वातजे॥
दुःस्पर्शां पिप्पलीं मुस्तं भार्गीं कर्कटकं शटीम्।
पुराणगुड़तैलाभ्यां चूर्णितं वापि लेहयेत्॥
विड़ङ्गान् सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिलाम्।
हिक्काश्वासे च कासे च लिह्यात् चौद्रघृतप्लुतान्॥ २३॥

दशभिः प्रत्येकं पलोन्मितैः कल्कैः सिद्धं तद्घृतं वातरोगेषु समीक्ष्य यथावस्थं नस्यादिभिः प्रयोजयेत्। रास्नादशमूलघृतम्॥ २२॥

गङ्गाधरः विड़ङ्गमित्यादि। विड़ङ्गादीनि चूर्णयित्वा सकफेऽनिलजे कासे घृतमात्रया चतुर्गुणया पिबेत्। द्वौ क्षारावित्यादि। द्विक्षारादीन् समान् जलेन पिष्ट्वा कल्कीकृत्य वस्त्रगालितं कृत्वा घृतोन्मिश्रं पाययेत्। दुरालभामित्यादि। दुरालभादिकर्कटशृङ्ग्यन्तं चूर्णयित्वा सर्व्वसमां शर्करां मिश्रयित्वा तैलेन वातजे लिह्यात्। दुःस्पर्शामित्यादि। दुःस्पर्शा दुरालभा। शट्यन्तं चूर्ण

चक्रपाणिः—द्रोणेऽपामित्यादौ वक्ष्यमाणानि अजमांसान्तानि क्वाथ्यानि द्रोणे एव साध्यानि। माणिकाष्टौ पलानि। जीवनीयानीति जीवन्त्यादीनि दश षड्विरेचनशताश्रितीयोक्तानि॥ २२॥

चक्रपाणिः—घृतमात्रयेति चूर्णमालोड़ितं घृतमात्रया। वस्त्रगालितमिति वस्त्रपूतम्। कर्कटकमिति कर्कटशृङ्गी॥ २३॥

चित्रकं पिप्पलीमूलं व्योषं मुस्तं दुरालभाम्।
शटीं पुष्करमूलञ्च श्रेयसीं सुरसां वचाम्॥
भार्गीं छिन्नरुहां रास्नां कर्कटाह्वाञ्च कार्षिकान्।
कल्कान् निदिग्ध्यर्द्धतुलां निकाथ्य पलविंशतिम्॥
मत्स्यण्डिकास्तत्र दत्त्वा सर्पिषः कुड़वं पचेत्।
सिद्धं शीतं पृथक् क्षौद्र-पिप्पलीकुड़वान्वितम्॥
चतुःपलं तुगाक्षीर्य्याश्चूर्णितं तत्र दापयेत्।
लेहयेत् कासहृद्रोग-श्वासगुल्मनिवारणम्॥ २४॥

चित्रकादिर्लेहः।

दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्ग-पिप्पलीमूलचित्रकान्।
भार्गीं पुष्करमूलञ्च द्विपलांशं यवाढ़कम्।
हरीतकीशतं भद्रं जलपञ्चाढ़के पचेत्॥

कृत्वा पुराणगुड़तैलाभ्यां द्विगुणाभ्यां गोलयित्वा वातजे कासे लेहयेत्। विड़ङ्गा-नित्यादि। विड़ङ्गादिमनःशिलान्तं समं चूर्णयित्वा क्षौद्रघृतप्लुतान् लिह्यात्॥२३

<u>गङ्गाधरः</u>—चित्रकमित्यादि। चित्रकादीन् कर्कटान्तान् कार्षिकान् चूर्णितान् निदिग्धिकाया अर्द्धतुलां द्वात्रिंशच्छरावजले निकाथ्य तत्र पाद-शेषेऽष्टशरावके काथे दत्त्वा मत्स्यण्डिकाः पलविंशतिञ्च दत्त्वा सर्पिषः कुड़वञ्च दत्त्वा पचेत्। घनीभूते तत्र तुगाक्षीर्य्याश्चूर्णितं चतुःपलं दापयेत्। सिद्धं तं शीतं कृत्वा क्षौद्रस्य कुड़वान्वितं पिप्पलीचूर्णकुड़वान्वितं कृत्वा स्थापयेत्। अग्निबलानुरूपं तं लेहयेत्। चित्रकादिर्लेहः॥ २४॥

<u>गङ्गाधरः</u>—दशमूलीत्यादि। स्वयंगुप्ताम् आत्मगुप्ताम्। दशमूल्यादीनां पुष्कर-मूलान्तानां प्रत्येकं द्विपलांशं यवस्याढ़कमष्टौ शरावाणि हरीतकीशतं गुड़-कानाम् भद्रमिति सम्पूर्णवीर्य्यं वस्त्रे पोट्टलीं बद्ध्वा प्रक्षिप्य जलपञ्चाढ़के

<u>चक्रपाणिः</u>—चित्रकमित्यादौ श्रेयसीमिति हस्तिपिप्पली। अर्द्धतुलाक्काथ इत्यत्र तुलार्द्ध-शब्दोल्लेखेन क्रियमाणत्वाद् द्रोणार्द्धजलेन क्काथः कर्त्तव्यः॥ २४॥

यवैः स्विन्नैः कषायं तं पूतं तच्चाभयाशतम्।
पचेद् गुड़तुलां दत्त्वा कुड़वञ्च पृथग् घृतात्॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लिह्याद् द्वे चाभये नित्यमतः खादेद् रसायनात्॥
तद् वलीपलितं हन्याद् वर्णायुर्बलवर्द्धनम्।
पञ्च कासान् क्षयं श्वासं हिक्काञ्च विषमज्वरान्॥
हन्यात् तथार्शोग्रहणी-हृद्रोगारुचिपीनसान्।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम्॥ २५॥

अगस्त्यहरीतकी।

अशीतिशरावे पचेत्। यवैः स्विन्नैः पादावशेषे रसे सति यवाः स्विन्ना भवन्ति, ततस्तं कषायं पूतं, तच्चाभयाशतं स्विन्नमस्थिहीनं कृत्वा, तत्र कषाये गुड़तुलां दत्त्वा पृथक् प्रत्येकं घृतात् कुड़वं तैलाच्च कुड़वमादौ नीत्वा तत्र हरीतकीशतं भृष्ट्वा पिप्पलीचूर्णाच्च कुड़वं दत्त्वा पचेत्। कुड़वन्तु द्वैगुण्याद् घृततैलयोः प्रत्येकमष्टौ पलानि, पिप्पलीचूर्णस्य चत्वारि। सिद्धशीते गुड़पाकसिद्धिलक्षणोदयेऽवतार्य्य शीतीकृते माक्षिकात् कुड़वं दत्त्वाष्टपलं दत्त्वातो रसायनाल्लेहं यथाशक्ति लिह्यात्, द्वे चाभये नित्यं खादेदिति। अत्र यवाः स्विन्ना अष्टांशशेषे क्वाथे भवन्तीति नाशङ्क्यम्, चतुर्थांशशेष एव तथाभावस्य सुश्रुतवचनात्। तत्र द्व्यक्तं द्रोणे जलस्याढ़कसंयुते तु क्वाथीकृते पूतचतुर्थभागे।

चक्रपाणिः—दशमूलीमित्यादौ हरीतकीशतमिति हरीतकीफलशतम्। यवैः स्विन्नैरिति यदा यवाः स्विन्नाः भवन्ति तदा तं कषायं पूतं गृहीत्वा हरीतकीशतञ्च गृहीत्वा गुड़तुलाञ्च दत्त्वा पुनः पाकः कर्त्तव्यः। यवानाञ्च स्विन्नानां चतुर्भागावशेष एव कषायो भवतीति कृत्वा चतुर्भागावशिष्टमेवात्र कषायं कुर्व्वन्ति। घृततैलकुड़वे चात्राष्टपलमानेन, कुड़वेऽपि द्वैगुण्यस्य प्रतिपादितत्वात्। तन्त्रान्तरे चात्रैव योगे मधुनश्च पलाष्टकमित्युक्तम्। तुल्यमानत्वेऽपि चात्र घृतमधुनोः द्रवान्तरयोगद्रियमानत्वात् न विरुद्धत्वम्; द्रवान्तरयोगे सति मधुघृतयोः तुल्यमानता न विरुद्धा भवति। अत्र च हरीतकीफलं स्विन्नं घृततैले प्रथमं भर्जयन्ति ततः क्वाथादिप्रक्षेपः, अवतारसमये च पिप्पलीचूर्णप्रक्षेपः, शीतीभूते च मधु देयम् इदं वृद्धवैद्यानां कर्म्माहु। लिह्यादिति तं प्रकृतं लेहं लिह्यात्। द्वे अभये च खादेत्। नित्यं निरन्तरमित्यर्थः। किंवा द्वे अभये लिह्यात् तथा द्वे अभये खादेत्। इत्यनेन अभयाद्वय-

सैन्धवं पिप्पलीं भार्गीं शृङ्गवेरं दुरालभाम्।
दाड़िमाम्लेन कोष्णेन भार्गीनागरमम्बुना॥
पिबेत् खदिरसारं वा मदिरादधिमस्तुभिः।
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम्॥ २६ ॥
शिरसः पीड़ने स्रावे नासाया हृदि ताम्यति।
कासप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत्॥
दशाङ्गुलोन्मितां नाड़ीमथवाष्टाङ्गुलोन्मिताम्।
शरावसम्पुटे छिद्रे कृत्वा जिह्मां विचक्षणः॥
मुखेन वैरेचनिकं कासवान् धूममापिबेत्।
तमुरः केवलं प्राप्तं मुखेनैवोद्वमेत् पुनः॥

इति। तत्रापि कुड़ववचनात् घृतादीनां समानमाननिर्देशेन तन्त्रान्तरे मधुनश्च पलाष्टकम् इत्युक्तः द्रवत्वात् घृततैलमधूनां पलाष्टकमिह कुड़वमिति। अगस्त्यहरीतकी॥ २५॥

गङ्गाधरः—सैन्धवमित्यादि। दुरालभान्तानि चूर्णीकृत्य दाड़िमाम्लेन पिबेत्। भार्गीनागरं चूर्णीकृत्य कोष्णेनाम्बुना पिबेत्। खदिरसारं वा चूर्णीकृत्य मदिरयाऽथवा दधिमस्तुभिः पिबेदिति त्रयो योगाः। अथवेत्यादि। पिप्पलीकल्कं ससैन्धवं घृते भृष्टं पिबेत् इति पूर्व्वेणान्वयः॥ २६॥

गङ्गाधरः—कासहरधूमपानविधानमाह—शिरस इत्यादि। शिरसः पीड़नादिषु कासप्रतिश्यायवतां वैद्यः कासहरद्रव्यधूमं प्रयोजयेदिति। यथा प्रयोजयेत् तदाह—दशाङ्गुलेत्यादि। नाड़ीं धूमनेत्रं दशाङ्गुलाष्टाङ्गुलान्यतरां नलिकां जिह्मां कुटिलां त्रिपर्व्वां पूर्व्ववत् कृत्वा शरावसम्पुटे कासहरौषधं दत्त्वा छिद्रं कृत्वा तत्र निधाय मुखेन वैरेचनिकं धूमं पिबेत्, तं धूममुरः कृत्स्नं प्राप्तं मुखेनैव

सम्बद्धलेह्यं भागं लिह्यात्। ततस्तद्भयाद्वयं खादेदित्यर्थः। अगस्त्यविहितमित्यनेनास्य महाजनसंप्रदाययोग्यता सिद्धा भवति इत्यर्थः॥ २५॥

चक्रपाणिः—खदिरसारमिति खदिरकाष्ठसारम्। ससैन्धवमिति ईषत्सैन्धवेन अव्यक्तलवणमिति यावत्। अत्रापि मदिरादिभिः पिबेदित्यनुवर्त्तते॥ २६॥

चक्रपाणिः—शिरस इत्यादिना धूमयोग्यावस्थोपदर्शनपूर्व्वकं धूममाह। गौरवादिना शिरसि पीड़िते दशाङ्गुलोन्मिता सूत्रस्थानोक्तधूमपानविशिष्टनलिकेह विधीयते। अयञ्च धूमः

स ह्यस्य तैक्ष्ण्याद् विच्छेद्य श्लेष्माणमुरसि स्थितम्।
निष्कृष्य शमयेत् कासं वातश्लेष्मसमुद्भवम्॥
मनःशिलालमधुक-मांसीमुस्तैङ्गुदैः पिबेत्।
धूमं तस्यानु च पयः कदुष्णं सगुड़ं पिबेत्॥
एष कासान् पृथग्दोष-सन्निपातसमुद्भवान्।
धूमो हन्यादसंसिद्धानन्यैर्योगशतैरपि॥
प्रपौण्डरीकं मधुकं सशार्ङ्गेष्टां मनःशिलाम्।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम्॥
कृत्वा वर्त्तिं पिबेद् धूमं क्षौमचेलानुवर्त्तिताम्।
घृताक्तामनु च क्षीरं गुड़ोदकमथापि वा॥
मनःशिलैलामरिच-क्षाराञ्जनकुटन्नटैः।
वंशलेखनसेव्याल-क्षौमलक्तकरौहिषैः॥

धूमकवलं मुञ्चेत्। आशिषमाह—स हीत्यादि। हि यस्मात्। स धूमस्तैक्ष्ण्यात् अस्योरसि स्थितं श्लेष्माणं विच्छेद्य निष्कृष्य वातश्लेष्मसमुद्भवं कासं शमयेत्। धूमान्तरमाह—मनःशिलेत्यादि। आलं हरितालम्। ऐङ्गुदं फलम्। एभिर्धूममुक्तप्रकारेण पिबेत् अनु सगुड़ं कदुष्णं पयः पिबेदोजोरक्षार्थम्। एष इत्यादिनाशीः। प्रपौण्डरीकमित्यादि। शार्ङ्गेष्टा काण्टारवा। सुरसमञ्जरी तुलसी-मञ्जरी। एतानि पिष्ट्वा क्षौमचेलं म्रक्षयित्वाऽनुवर्त्तितां वर्त्तिं कृत्वा घृताक्तां धूमं पिबेत्, तदनु क्षीरं गुड़ोदकं वा पिबेदोजोरक्षार्थमिति। मनःशिलेत्यादि। एला स्थूला, कुटन्नटं कैवर्त्तमुस्तकं, वंशलेखनं वंशनीली, सेव्यमुशीरम्। आलं

वमनार्थं तन्त्रान्तरे पृथगेवोक्तः। यद्यपि पञ्च धूमाः स्नेहनप्रायोगिकवैरेचनिककासघ्न-वामनीयाश्चेति सुश्रुते प्रोक्ताः, तथापीह कासघ्नवामनीययोः विरेचनकारकतया कासहरस्य न वमनादिभेद उक्त इति विशेषो ज्ञेयः। छिद्रमिति उपरि नलिकामानच्छिद्रयुक्तम्। जिह्मामिति वक्राम्। मुखेनैव इति वचनेन प्रागुक्तनासापानं निषेधयति। मनःशिलेप्यादौ अलं हरितालम्। इङ्गुदः पुत्रजीवकः। अस्य धूमस्य पश्चात् क्षीरपानं तीक्ष्णेन धूमेन क्रियमाणत्वात् ओजःक्षयादिभयपरिहारार्थम्। सन्निपातजकासो यद्यप्यत्र नोक्तः तथापि प्रकृतिसमसन्निपातस्तु कासो भवत्येव इति वचनात् उन्नीयते। किंवा सान्निपातिकः क्षयजकासः वक्ष्यते हि

पूर्व्वकल्पेन धूमोऽयं सानुपानो विधीयते ।
मनःशिलाले तद्वच्च पिप्पलीनागरैः सह ॥
त्वगैङ्गुदीबृहत्यौ च तालमूली मनःशिला ।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः ॥ २७ ॥
ग्राम्यानूपौदकैः शालि-यवगोधूमषष्टिकान् ।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धि तान् ॥ २८ ॥
यमानीपिप्पलीविल्व-शटीचित्रकपुष्करैः ।
रास्नाजाजीपृथक्पर्णी-पलाशविश्वभेषजैः ॥
सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत् ।
कटीहृत्पार्श्वकोष्ठार्त्ति-श्वासहिक्काप्रणाशिनीम् ॥

हरितालं, शोधितम्, क्षौममतसीवीजम्, अलक्तकं लाक्षा, रौहिषं गन्धतृणम् । एतानि पिष्ट्वा पूर्व्वकल्पेन क्षौमचलं म्रक्षयित्वाऽनुवर्त्तितां वर्त्तिं कृत्वा घृताक्तां शरावसम्पुटे दत्त्वा कृतोऽयं धूमः सानुपानो विधीयते। अत्र क्षीरं गुड़ोदकं वानुपानं विधीयते। मनःशिलेत्यादि। मनःशिला हरितालश्च पिप्पलीचूर्ण-नागरचूर्णसहितं मिश्रयित्वा तद्वत् क्षौमचेलं म्रक्षयित्वाऽनुवर्त्तितां वर्त्तिं कृत्वा घृताक्तां शरावसम्पुटे दत्त्वा कृतो धूमः सानुपानो विधीयते क्षीरं गुड़ोदकमत्रानुपानमिति। त्वगित्यादि। ऐङ्गुदी त्वक्। एतदाद्यश्वगन्धान्तं पिष्ट्वा क्षौमचेलं म्रक्षयित्वानुवर्त्तितां वर्त्तिं कृत्वा घृताक्तां शरावसम्पुटे दत्त्वा पूर्व्वोक्तनाड्या धूमः सानुपानः पेयो विधीयते ॥ २७ ॥

गङ्गाधरः—ग्राम्येत्यादि। ग्राम्यादिमांसरसैः शाल्यादीनामोदनादीन् कासहितान् भोजयेत्। माषात्मगुप्तफलविदलानां यूषैर्वा तान् भोजयेत् ॥ २८ ॥

गङ्गाधरः—यमानीत्यादि। पृथक्पर्णी पृश्निपर्णी। यमान्यादीनि मिलितानि कर्षमानानि प्रस्थे जले पक्त्वार्द्धशृतेन तेन क्वाथेन पेयां घृतादिना स्निग्धां

"सन्निपातोद्भवो ह्येष क्षयकासः सुदारुणः। सन्निपातहितं तस्मात् कार्य्यमत्र भिषग्जितम्।" प्रपौण्डरीकमित्यादि। शार्ङ्गेष्टा गुञ्जा। कृत्वा वर्त्तिमिति मात्राशितीयोक्तविधानेन, रौहिषं गन्धतृणं, पूर्व्वकल्पेन पूर्व्वोक्तविधिना, नागरैरित्यनेन एको योगः ॥ २७ ॥

चक्रपाणिः—आत्मगुप्ता इति शूकशिम्बिः ॥ २८ ॥

दशमूलीरसे तद्वत् पञ्चकोलगुड़ान्विताम्।
सिद्धां दद्यात् समतिलां क्षीरे वापि ससैन्धवाम्॥
मात्स्यकौक्कुटवाराहैरामिषैर्वा घृतान्विताम्।
ससैन्धवां पाययेत यवागूं वातकासिनम्॥ २९॥
वास्तूको वायसीशाकं मूलकं सुनिषण्णकम्।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च।
शस्यन्ते वातकासेषु स्वाद्वम्ललवणानि च। ३०॥
पित्तकासे तु सकफे वमनं सर्पिषैव च *।
तथा मदनकाश्मर्य्य-मधुककथितैर्जलैः॥

कोलादिभिरम्लां सैन्धवादिभिर्लवणामनिलजे कासे पिवेत्। प्रकरणलब्धेऽपि कासविनाशन इत्यस्मात् सामान्यकासानुवृत्तिनिरासार्थमिह पुनरनिलजे इत्युक्तमिति। दशमूलीत्यादि। दशमूल्याः कर्षं प्रस्थे जले पक्त्वार्द्धशृते रसे षड्गुणे क्षुद्रतण्डुलान् पक्त्वा पेयां पञ्चकोलचूर्णं गुड़मनुरूपं दत्त्वा सिद्धां पेयामनिलजे दद्यात्। अथवापि तण्डुलान् समतिलां पेयां क्षीरे पक्त्वा ससैन्धवां सिद्धामनिलजे कासे दद्यात्। मात्स्येत्यादि। मात्स्यादिभिरामिषैर्मांसैः सह पक्वां यवागूं मण्डपेयाविलेपीनामन्यतमां घृतान्वितां ससैन्धवां वातकासिनं पाययेत्॥ २९॥

गङ्गाधरः—शाकान्याह—वास्तूक इत्यादि। मूलकं बालमूलकं वृहच्च शुष्कमिति। तैलादयः स्नेहाश्च। क्षीरादिकृता भक्ष्या अपूपादयः। दध्याद्यम्लम्। तत्राम्लफलं तिन्तिड़ीकादिकम्। इति वातकासचिकित्सितम्॥ ३०॥

गङ्गाधरः—अथ पित्तकासचिकित्सितमाह—पित्तकास इत्यादि। सकफे प्रबलकफानुबन्धे पित्तकासे वमनं सर्पिषैव च। तथा मदनफलवीजादिकथितैः

चक्रपाणिः—पञ्चकोलगुड़ान्वितामिति प्रक्षिप्तपञ्चकोलगुड़ां समतिलतण्डुलसाधिताम्। आमिषैरिति मत्स्याद्यामिषैः सतण्डुलैः सिद्धाम्॥ २९॥

चक्रपाणिः—वायसी काकमाची। वमनं सर्पिषेति वमनद्रव्ययुक्तेन सर्पिषा वमनं कर्त्तव्यम्।

* वमनं सर्पिषा हितम् इति चक्रपाठः।

यष्ट्याह्वफ( मू )लकल्कैर्वा विदारीक्षुरसायुतैः।
हृतदोषस्ततः शीतं मधुरञ्च भजेत् क्रमम्॥
पैत्ते कासे तनुकफे त्रिवृतां मधुरैर्युताम्।
दद्याद् घनकफे तिक्तैर्विरेकार्थं युतां भिषक्॥
स्निग्धशीतं तनुकफे रुक्षशीतं घने कफे।
क्रमः कार्य्यः परं भोज्यैः स्नेहैर्लेहैश्च शस्यते॥ ३१॥
शृङ्गाटकं पद्मवीजं नीलीसाराणि पिप्पली।
पिप्पली मुस्तयष्ट्याह्व-द्राक्षामूर्व्वा महौषधम्॥
लाजामृतफलं द्राक्षा त्वक्क्षीरी पिप्पली सिता।
पिप्पली पद्मकं द्राक्षा बृहत्याश्च फलाद् रसः।
खर्ज्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते।
घृतक्षौद्रयुता लेहाः श्लोकार्द्धैः पित्तकासिनाम्॥

जलैर्वमनम्। अथवा यष्ट्याह्वफ(मू)लकल्कैर्विदारीक्षुरसायुतैर्वमनम्। तेन वमनेन हृतदोषः कफानुगपित्तकासी शीतमधुरं क्रमं भजेत्। पैत्ते इत्यादि। तनुकफे अघनकफे पित्तकासे मधुरैर्युतां त्रिवृतां विरेकार्थं दद्यात्। घनकफे पित्तकासे तिक्तरसद्रव्यैर्युतां त्रिवृतां विरेकार्थं दद्यात्। तत्राह—स्निग्धेत्यादि। तनुकफ स्निग्धशीतं कर्म्मैव क्रमः कार्य्यः। घने कफे रुक्षशीतं कर्म्मैव क्रमः कार्य्यः। परं भोज्यैः स्नेहैर्लेहैश्च क्रमः शस्यते। क्रमः क्रियारम्भः॥ ३१॥

गङ्गाधरः—शृङ्गाटकमित्यादि। शृङ्गाटकादिपिप्पल्यन्तेनार्द्धश्लोकेनैकलेहो घृतक्षौद्रयुतः। पिप्पल्यादिमहौषधान्तेनार्द्धश्लोकेन घृतक्षौद्रयुतो द्वितीयो लेहः। लाजादिसितान्तेनार्द्धश्लोकेन घृतक्षौद्रयुतस्तृतीयो लेहः। अत्रामृतफलम् आमलकम्। त्वक्क्षीरी वंशलोचना। पिप्पली पद्मकं द्राक्षा चेतित्रयं बृहत्याः फलाद्रसश्च पिष्ट्वा तत् सर्व्वं घृतक्षौद्रयुतो लेहश्चतुर्थः। खर्ज्जूरादिश्वदंष्ट्रान्तेन अर्द्धश्लोकेन घृतक्षौद्रयुतः पञ्चमो लेहः। इत्यर्द्धश्लोकैः पञ्चभिस्ते पञ्च लेहाः

यष्ट्याह्वफलकल्कैरित्यत्र फलं मदनफलम्। पित्तकासे एव कासवेगनिःसार्य्यमाणस्य कफस्य तनुतायां घनतायाञ्च चिकित्सामाह—पैत्ते इत्यादि। तिक्तैर्युतां त्रिवृतामिति सम्बन्धः। क्रम इति पेयादिक्रमः। परमिति पेयादिक्रमादूर्द्धम्। शस्यत इति उपचार इति शेषः॥ ३०। ३१॥

शर्करा चन्दनं द्राक्षा मधुधात्रीफलोत्पलः।
पैत्ते समुस्तमरिचः सकफे सघृतोऽनिले॥
मृद्वीकार्द्धशतं त्रिंशत्-पिप्पलीः शर्करापलम्।
लेहयेन्मधुना गोर्वा क्षीरे पक्त्वा शकृद्रसान्॥
त्वगेलाव्योषमृद्वीका-पिप्पलीमूलपौष्करः।
लाजामुस्तशटीरास्ना-धात्रीफलविभीतकैः॥
शर्कराक्षौद्रसर्पिर्भिर्लेहः कासविनाशनः।
श्वासं हिक्कां क्षयञ्चैव हृद्रोगञ्च विनाशयेत्॥
पिप्पल्यामलकं लाजां लाक्षां द्राक्षां सितोपलाम्।
क्षीरे पक्त्वा घनं शीतं लिह्यात् क्षौद्राष्टभागिकम्॥
विदारीक्षुमृणालानां रसान् क्षीरं सितोपलाम्।
पिबेद्वा मधुसंयुक्तं पित्तकासहरं परम्॥ ३२॥

पित्तकासिनां शस्यन्ते। शर्करेत्यादि। शर्करादीन्युत्पलान्तानि समानि। तत्र मधु लेहयोग्यमित्येष लेहः शुद्धे पैत्ते कासे शस्यते। अयं लेहः समुस्तमरिचः सकफे पैत्ते कासे सानिले पैत्ते सघृत उत्पलान्तो लेहः शस्यते। मृद्वीकेत्यादि। आकृतिमानात् मृद्वीकाया अर्द्धशतं पञ्चाशद्गुड़कं पिप्पलीरप्याकृतिमानात् त्रिंशद्गुड़कम्। शर्करापलं मधुना लेहयेत्। गोः शकृद्रसान् चतुर्गुणे गोः क्षीरे पक्त्वा वा लेहयेत्। त्वगेलेत्यादि। त्वगादिविभीतकान्तानां सर्व्वेषां चूर्णं समानांशेन सर्व्वमेकीकृत्य शर्कराक्षौद्रसर्पिर्भिर्लेहः कासविनाशनादिः। पिप्पल्यामलकमित्यादि। पिप्पल्यादिसितोपलान्तानि समानि क्षीरे पक्त्वा घनीभूतं शीतं कृत्वा सर्व्वद्रव्यादष्टमभागक्षौद्रयुतं लिह्यात्। प्रकरणात् पैत्ते। विदारीत्यादि। मृणालमुशीरं, विदार्य्या रस इक्षुरस उशीरक्काथः इत्येतान्

चक्रपाणिः—नीलीसारमिति नीलिनीफलसारम्। अमृतफलम् आमलकम्। शर्करादिः केवलं पैत्ते, सकफे पैत्ते समुस्तमरिचः, सघृतस्तु शर्करादिः अनिलानुबन्धे पैत्ते ज्ञेयः। मृद्वीकार्द्धशतं त्रिंशत्पिप्पलीश्च व्यक्तं परिग्रहात्। गोक्षीरस्येति क्षीरमात्राशनस्य। पिप्पल्यामलकमित्यादौ घनमिति घनतामापन्नम्॥ ३२॥

मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैर्वा तिक्तकैर्मात्रया हिताः ॥
घनश्लेष्मणि लेहास्तु तिक्ता मधुरसंयुताः ।
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षूणां रसान् पयः ।
सर्व्वञ्च मधुरं शीतमविदाहि प्रशस्यते ॥ ३३ ॥
काकोलीबृहतीमेदा-युग्मैः सवृषनागरैः ।
पित्तकासे रसक्षीर-यूषांश्चाप्युपकल्पयेत् ॥ ३४ ॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥
सितास्थिरापृश्निपर्णी-श्रावणीबृहतीयुगैः ।
वीरर्षभककाकोली-तामलक्यृद्धिजीवकैः ।
शृतं क्षीरं पिबेत् कासी ज्वरी दाही क्षतक्षयी ॥ ३५ ॥

विदार्य्यादीनां रसान् क्षीरं सितोपलां प्रत्येकं समानांशेन मेलयित्वा मधुयुक्तं पिबेत् ॥ ३२ ॥

गङ्गाधरः—मधुरैरित्यादि । मधुररसजाङ्गलमांसरसैः पक्वाः श्यामाकादय ओदनरूपा मुद्गादियूषैस्तिक्तकैः शाकैर्वा मात्रया पित्तकासे हिताः । घनेत्यादि । घनश्लेष्मणि पित्तकासे मधुरसंयुतास्तिक्ता लेहाः शालयश्च हिताः स्युः । तनुकफे रसादिभिर्मधुरजाङ्गलमांसरसमुद्गादियूषतिक्तशाकैः षष्टिका हिताः । तद्भोजनादनुपानार्थं शर्कराम्भः । अथवा द्राक्षारस इक्षुरसः पयो वा सर्व्वञ्च मधुरमथ च शीतमविदाहि चानुपानार्थं प्रशस्यते ॥ ३३ ॥

गङ्गाधरः—काकोलीत्यादि । काकोलीयुग्मबृहतीयुग्ममेदायुग्मैः सवृषनागरैः कथितैः मांसरसक्षीरयूषान् कल्पयेत् ॥ ३४ ॥

गङ्गाधरः—शरादीत्यादि । एको योगोऽयं, योगद्वयमाहुरन्ये । सितेत्यादि ।

चक्रपाणिः—काकोल्यादौ प्रत्येकं युग्मैरिति सम्बध्यते ॥ ३३ । ३४ ॥

चक्रपाणिः—शरादिपञ्चमूली तृणपञ्चमूलम् ॥ ३५ ॥

तज्जं वा साधयेत् सर्पिः सक्षीरेक्षुरसं भिषक्।
जीवकाद्यैर्मधुरकैः फलैश्चाभिषुकादिभिः॥
कल्कैस्त्रिकार्षिकैः सिद्धे घृते शीते प्रदापयेत्।
शर्करापिप्पलीचूर्णं त्वक्क्षीर्य्या मरिचस्य च॥
शृङ्गाटकस्य चावाप्य क्षौद्रगर्भान् पलोन्मितान्।
गुड़ान् गोधूमचूर्णेन कृत्वा खादेद्धिताशनः।
शुक्रासृग्दोषशोषेषु कासक्षीणक्षतेषु च॥ ३६॥
शर्करानागरोदीच्यं कण्टकारीं शटीं समाम्।
पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्च्छितम्॥ ३७॥

श्रावणी मुण्डेरी। श्रावणीयुगबृहतीयुगैः। जीवको जियाला। एतदन्तैः शृतं क्षीरं पित्तकासिप्रभृतिः पिबेत्॥ ३५॥

गङ्गाधरः—तज्जं वेत्यादि। तैः शृतक्षीरजं सर्पिः सक्षीरेक्षुरसं समक्षीरं त्रिगुणेक्षुरसम्। जीवकादिभिर्दशभिर्मधुरकफलैः द्राक्षाखर्ज्जूरादिभिरभिषुकादिभिश्च प्रत्येकं त्रिकार्षिकैः कल्कैः साधयेत्। सिद्धे पूते शीते च सति शर्करादीनि शृङ्गाटकान्तानि चूर्णीकृत्यावाप्य सर्व्वं पादिकं घृतात् प्रदापयेद् यथा घनं स्यात्। तस्य गोधूमचूर्णेन सह मेलनेन पलोन्मितान् शष्कुलीवद् गुड़कान् कृत्वा मध्ये क्षौद्रं पूरयित्वा पक्त्वा खादेत्। शेषमाशीरिति॥ ३६॥

गङ्गाधरः—शर्करेत्यादि। नागरादीन्यार्द्राणि समानि पिष्ट्वा वस्त्रेण पूतं रसमेकद्रव्यसमां शर्करां मिश्रयित्वा घृतेन समेन खजेन मूर्च्छितं मिलितं कृत्वा पिबेत्॥ ३७॥

चक्रपाणिः—अभिषुकादयः वातपित्तहराः "वातामाभिषुकाक्षोट-मकूलकनिकोचकाः" इति ग्रन्थोक्ताश्चत्वारो ज्ञेयाः। जीवकादयश्च जीवनीयगणोक्ताः। शर्करादीनाञ्च क्षयोक्तसर्पिर्मानानुसारेण मानमत्र ज्ञेयम्॥ ३६॥

चक्रपाणिः—शर्करेत्यादौ रसमिति कल्कस्यैव रसम्॥ ३७॥

महिष्यजाविगोक्षीर-धात्रीफलरसैः समैः।
सर्पिः सिद्धं पिबेद् युक्त्या पित्तकासनिबर्हणम्॥ ३८॥
बलिनं वमनेनादौ शोधितं कफकासिनम्।
यवान्नैः कटुरुक्षोष्णैः कफघ्नैश्चाप्युपाचरेत्॥ ३९॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः॥
धान्वबैलैस्तथा स्नेहैस्तिलसर्षपबिल्वजैः।
मध्वम्लोष्णाम्बु तक्रं वा मद्यं वा निगदं पिबेत्॥ ४०॥
पौष्करारग्वधं मूलं पटोलं तैर्निशास्थितम्।
जलं मधुयुतं पेयं कालेष्वन्नस्य रात्रिषु *॥

गङ्गाधरः—महिषीत्यादि। महिषीक्षीराजाक्षीरमेषीक्षीरगोक्षीरधात्रीफलरसैः सर्पिःसमैः प्रत्येकमकल्कं सिद्धं युक्त्या पिबेत्॥ ३८॥

गङ्गाधरः—पित्तकासचिकित्सितानन्तरं कफकासचिकित्सितमाह—बलिनमित्यादि। आदावङ्गत्वात् स्नेहस्वेदाभ्यामुपपन्नं कफकासिनं बलिनं वमनेन शोधितं कटुरुक्षोष्णैर्यवान्नैः कफघ्नैश्चान्नैरुपाचरेत्॥ ३९॥

गङ्गाधरः—तद् यथा—पिप्पलीत्यादि। पिप्पलीयवक्षारसंस्कृतैः कौलत्थैर्यूषैः मूलकस्य च शुष्कस्य यूषैर्लघून्यन्नानि भुञ्जीत। कटुकरसान्वितैर्धान्वमांस-विलेशयमांसान्यतरमांसरसैर्वा भुञ्जीत। लघून्यन्नान्यत्र। तिलसर्षपबिल्व-वीजजैः स्नेहैस्तथा लघून्यन्नानि भुञ्जीत। भोजनोत्तरं दध्यम्लमुष्णाम्बु तक्रं वा मद्यं वा निगदं वा पिबेत्। यन्निगदं पेयं तदिह विवक्षितम्॥ ४०॥

गङ्गाधरः—पौष्करेत्यादि। पुष्करमूलमारग्वधमूलं पटोलपत्रं समं, तैः सह निशास्थितं जलं शीतकषायाख्यं मधुयुतमन्नस्य कालेषु तथा रात्रिषु

चक्रपाणिः—बलिनमित्यादिना कफकासचिकित्सामाह॥ ३८। ३९॥

चक्रपाणिः—पिप्पलीक्षारकैरिति पिप्पलीक्षारसंस्कृतैः। धान्वबैल्यरसैरिति विलेशयरसैः॥४०॥

* रात्रिष्वित्यत्र वा त्रिपु इति पाठान्तरम्।

कट्फलं कत्तृणं भार्गीं मुस्तं धान्यवचाभयाः।
शुण्ठीं पर्पटकं शृङ्गीं सुराह्वञ्च जले शृतम्॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके।
कण्ठरोगे मुखे शूने श्वासहिक्काज्वरेषु च॥
पाठाशुण्ठीशटीमूर्व्वा-गवाक्षीमुस्तपिप्पलीः।
पिष्ट्वा घर्म्माम्बुना हिङ्गु-सैन्धवाभ्यां युताः पिबेत्॥
नागरातिविषामुस्तं शृङ्गी कर्कटकस्य च।
हरीतकी शटी चैव तेनैव विधिना पिबेत्॥ ४१॥
तैले भृष्टञ्च पिप्पल्याः कल्काक्षं ससितोपलम्।
पिबेद्वा कफकासघ्नं कुलत्थसलिलप्लुतम्॥ ४२॥
कासमर्द्दाश्वविड्भृङ्ग-राजवार्त्ताकजा रसाः।
क्षौद्रयुक्ताः कफहराः सुरसस्यासितस्य च॥ ४३॥

पेयम्। कट्फलमित्यादि। कट्फलादिकं जले शृतं क्वाथविधिना पक्वं शीतं मधुहिङ्गुयुतं पेयं वातानुबन्धककात्मककासे। पाठामित्यादि। पाठादीः पिष्ट्वा हिङ्गुसैन्धवयुक्ता घर्म्माम्बुना उष्णाम्बुना पिबेत्। नागरेत्यादि। नागरादीन पिष्ट्वा तेनैव विधिना घर्म्माम्बुना पिबेत्॥ ४१॥

गङ्गाधरः—तैल इत्यादि। सितोपलासमं पिप्पलीकल्काक्षं तैले भृष्टं कुलत्थसलिलप्लुतं पिबेद्वा॥ ४२॥

गङ्गाधरः—कासमर्देत्यादि। कासमर्दरसाश्वविड्रसभृङ्गराजरसवार्त्ताकरसाः क्षौद्रयुक्ताः कफकासहराः। असितस्य सुरसस्य कृष्णतुलसीपत्रस्य च रसो मधुयुतः कफकासहरः॥ ४३॥

चक्रपाणिः—कालेषु त्रिष्वित्यत्र भोजनादिमध्यावसानेषु। मधुहिङ्गुयुतमित्यत्र माक्षिकं हिङ्गुसिन्धूत्थेत्यादिवचनानुसारेण प्रक्षेप्यविधिनोष्णोदकेन हिङ्गुसैन्धवोपेतं पिबेदित्यर्थः॥ ४१।४२॥

चक्रपाणिः—सुरसस्यासितस्य कृष्णतुलसीपर्णजस्य॥ ४३॥

देवदारुशटीरास्ना-कर्कटाख्यादुरालभाः ।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः ॥
मधुतैलयुतावेतौ लेहौ वातानुगे कफे ।
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ॥
पथ्यातामलकीधात्री-भद्रमुस्तानि पिप्पली ।
देवदार्व्वभया मुस्तं पिप्पली विश्वभेषजम् ॥
विशाला पिप्पली मुस्तं त्रिवृता चेति लेहयेत् ।
चतुरो मधुना लेहान् कफकासहरान् भिषक् ॥ ४४ ॥
सौवर्च्चलाभयाधात्री-पिप्पलीक्षारनागरम् ।
चूर्णितं सर्पिषा वात-कफकासहरं पिबेत् ॥ ४५ ॥
दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत् ।
पुष्कराह्वशटीविल्व-सुरसव्योषहिङ्गुभिः ॥
पेयानुपेयं तत् पेयं कासे वातकफात्मके ।
श्वासरोगेषु सर्व्वेषु कफवातात्मकेषु च ॥ ४६ ॥

गङ्गाधरः—देवदार्व्वित्यादि । देवदार्व्वादिदुरालभान्तचूर्णमेको लेहः । पिप्पल्यादिसितोपलान्तः परो लेहः । इत्येतौ द्वौ लेहौ मधुतैलयुतौ वातानुगे कफे कासे हितौ । पिप्पलीत्यादि । श्लोकार्द्धेनैकैकलेहः, इति चतुरो लेहान् मधुना लेहयेत् ॥ ४४ ॥

गङ्गाधरः—सौवर्च्चलेत्यादि । वातानुबन्धकफकासहरं पिबेदिति चतुर्गुणेन सर्पिषा ॥ ४५ ॥

गङ्गाधरः—दशमूलेत्यादि । दशमूलस्य रसाढ़के घृतस्य प्रस्थं पुष्करादिभिः प्रत्येकमक्षसमैः कल्कैः पचेत् । तत् सर्पिः पेयमनु पेया पेया ॥ ४६ ॥

चक्रपाणिः—चतुरो मधुना लेहानित्यत्र अर्द्धश्लोकोक्ता लेहा ज्ञेयाः ॥ ४४ । ४५ ॥

चक्रपाणिः—दशमूलाढक इति दशमूलस्य क्वाथस्याढकमानत्वं, तेन "क्वाथः क्वाथ्यसमो मतः" इति वचनात् पादावशिष्टक्वाथोऽप्याढकमानो भवति ॥ ४६ ॥

समूलपत्रशाखायाः कण्टकार्य्या रसाढ़के।
घृतप्रस्थं बलाव्योष-विड़ङ्गशटिचित्रकैः॥
सौवर्च्चलयवक्षार-बिल्वामलकपौष्करैः।
वृश्चीरवृहतीपथ्या-यमानीदाड़िमर्द्धिभिः॥
द्राक्षापुनर्नवाचव्य-दुरालभाम्लवेतसैः।
शृङ्गीतामलकीभार्गी-रास्नागोक्षुरकैः पचेत्॥
कल्कैस्तत् सर्व्वकासेषु हिक्काश्वासेषु शस्यते।
कण्टकारीघृतं सिद्धं कफव्याधिनिसूदनम्॥ ४७॥

कण्टकारीघृतम्।

कुलत्थरससंयुक्तं पञ्चमूलशृतं घृतम् *॥ ४८॥
धूमांस्तानेव दद्याच्च ये प्रोक्ता वातकासिनाम्।
कोषातकीफलान्मध्यं पिबेद्वा समनःशिलम्॥ ४९॥
तमकः कफकासे तु स्याच्चेत् पित्तानुबन्धजे।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत्॥

गङ्गाधरः—समूलेत्यादि। समूलाद्यायाः कण्टकार्य्या रसाढ़के बलादिभिः गोक्षुरान्तैः कल्कैः पादिकैर्घृतप्रस्थं पचेत्। तत् सर्पिः। सर्व्वकासेष्वित्याद्याशीः। कण्टकारीघृतम्॥ ४७॥

गङ्गाधरः—कुलत्थेत्यादि। कुलत्थरसश्चतुर्गुणः पञ्चमूलं कल्कः पादिकः। तेन शृतं घृतं सर्व्वकासेष्वित्याद्याशीः॥ ४८॥

गङ्गाधरः—धूमांस्तानित्यादि। ये धूमा वातकासिनां प्रोक्तास्तांश्च धूमान् कफकासिने दद्यात्। कोषातकीत्यादि। कोषातक्या घोषकस्य फलमध्यं मज्जानं समनःशिलं धूमं पिबेद् धूमप्रकरणात्॥ ४९॥

गङ्गाधरः—तमक इत्यादि। तत्र पित्तानुबन्धे कफकासे तमकः श्वासश्चेत्

चक्रपाणिः—कण्टकारीघृते बलादिकल्कद्रव्यस्य मिलित्वा कुड़वमानत्वम्॥ ४७। ४८॥
चक्रपाणिः—कोशातकी घोषकः॥ ४९॥

* इतः परं "पाययेत् कफजे कासे हिक्काश्वासेषु शस्यते" इत्यधिकः पाठो बहुषु ग्रन्थेषु दृश्यते।

कफानुबन्धे पवने कुर्य्यात् कफहरीं क्रियाम्।
पित्तानुबन्धयोर्वात-कफयोः पित्तनाशिनीम्॥ ५० ॥
आर्द्रे विरूक्षणं शुष्के स्निग्धं वातकफात्मके।
कासेऽन्नपानं कफजे सपित्ते तिक्तसंयुतम्॥ ५१ ॥
कासमात्ययिकं मत्वा क्षतजं त्वरया जयेत्।
मधुरैर्जीवनीयैश्च बलमांसविवर्द्धनैः॥ ५२ ॥
पिप्पलीमधुकं पिष्टं कार्षिकंससितोपलम्।
प्रास्थिकं गव्यमाजञ्च क्षीरमिक्षुरसस्तथा॥

स्यात् तदा यथावस्थं पित्तकासक्रियां पूर्व्वोक्तां प्रयोजयेत्। कफानुबन्ध इत्यादि। कफस्यानुबन्धयुक्ते पवनेऽनुबन्धशान्त्यर्थं कफहरीं क्रियां कुर्य्यात् अत्रानुबन्ध्यनाशादनुबन्धनाशोऽपि शत्यादिसाधर्म्म्यतः कुपितस्य स्याद् वैधर्म्म्यण कुपितस्य हि न स्यादिति। एवं पित्तस्यानुबन्धयोर्वातकास-कफकासयोरप्यनुबन्धपित्तनाशिनीं क्रियां कुर्य्यात्। अनुबन्धजये हि शुद्धस्य जयः सुखेन स्यादिति॥ ५० ॥

<u>गङ्गाधरः</u>—आर्द्रे इत्यादि। वातकफात्मके कासे आर्द्रकफे रूक्षणमन्नपानं शुष्के कफे स्निग्धमन्नपानं सपित्ते कफजे तिक्तसंयुतमन्नपानं देयमिति॥ ५१॥

<u>गङ्गाधरः</u>—कफजकासचिकित्सामुक्त्वा क्षतजकासचिकित्सितमाह—कास-मित्यादि। क्षतजं कासमात्ययिकमत्ययकरं मत्वा भिषक् त्वरया जयेत्। कैरिति? मधुरैरित्यादिभिः। मधुरैर्द्राक्षाखर्ज्जूरादिभिर्जीवनीयैर्दशभिर्बल मांसविवर्द्धनैर्बल्यैर्बृंहणीयैश्च दशभिरन्यैश्च जयेदिति॥ ५२॥

<u>गङ्गाधरः</u>—पिप्पलीत्यादि। पिप्पलीकर्षं मधुककर्षं पिष्टं सितोपलाकर्षं

<u>चक्रपाणिः</u>—तमकः उपद्रवः। कफोऽनुबन्धोऽस्येति कफानुबन्धः तस्मिन् कफानुबन्धे पवने। पित्तानुबन्धयोरित्यत्रापि वातकफयोरनुबन्धत्वम् पित्तस्य तु प्राधान्यम्। अत एव पित्तनाशिनी क्रियोक्ता तत्र॥ ५० ॥

<u>चक्रपाणिः</u>—आर्द्रे इति तनुकफे॥ ५१ ॥

<u>चक्रपाणिः</u>—कासमित्यादिना क्षतजकासचिकित्सामाह॥ ५२॥

यवगोधूममृद्वीका-चूर्णामलकाद्रसः।
प्रसृतांशानि तैलञ्च तत् सर्व्वं मृदुनाग्निना॥
पचेल्लेहं घृतक्षौद्र-युक्तः स क्षतकासहा।
कासहृद्रोगकार्श्येषु हितो वृद्धाल्परेतसे॥ ५३॥

पिप्पल्यादिलेहः।

क्षतकासाभिभूतानां वृत्तिः स्यात् पित्तकासिकी।
क्षीरसर्पिर्मधुप्राया संसर्गे तु विशेषणम्॥
वातपित्तार्द्दितेऽभ्यङ्गो गात्रभेदे घृतैर्हितः।
तैलैर्मारुतरोगघ्नैः पीड्यमाने च वायुना॥
हृत्पार्श्वार्त्तिषु पानं स्याज्जीवनीयस्य सर्पिषः।
सदाहं कासिनो रक्तं ष्ठीवतः सबलेऽनले॥

गव्यं क्षीरं प्रास्थिकमाजञ्च क्षीरं प्रास्थिकमिक्षुरसस्तथा प्रास्थिकः। यवचूर्ण गोधूमचूर्णं मृद्वीकाचूर्णमामलकफलाद्रसश्च तैलञ्चेत्येतानि पञ्च द्रव्याणि प्रसृतांशानि द्विपलांशानि। तत् सर्व्वं मृदुनाग्निना लेहं पचेत्। स लेहो घृतक्षौद्रयुतः क्षतकासहा। अत्र घृतक्षौद्रे लेहभक्षणकाले यथायोग्यं मिश्रयित्वा लेहयेत्। पिप्पल्यादिलेहः॥ ५३॥

गङ्गाधरः—क्षतकासेत्यादि। क्षतकासाभिभूतानां पित्तकासिकी पित्तकासोक्ता पथ्यादिवृत्तिर्हिता स्यात्। तथा क्षीरसर्पिर्मधुप्राया वृत्तिः स्यात्। संसर्गे तु विशेषणं विशेषः। तद् यथा। वातेत्यादि। वातपित्तसंसर्गार्द्दिते गात्रभेदे गात्रमर्द्दे घृतैरभ्यङ्गो हितः। वायुना पीड्यमाने च मारुतरोगघ्नैर्वक्ष्यमाणवातरोगघ्नैस्तैलैरभ्यङ्गः। हृत्पार्श्वार्त्तिषु जीवनीयस्य नाम्नः सर्पिषः पानं हितम्। सदाहमित्यादि। क्षतकासिनो रक्तं सदाहं ष्ठीवन्तो ये, अनले सबले

चक्रपाणिः—पिप्पल्यादिके लेहे यवादयस्तैलान्ताः प्रत्येकं प्रसृतमानाः॥ ५३॥

चक्रपाणिः—वृत्तिरिति चिकित्सा। संसर्गे तु विशेषणम् इति चिकित्साविशेषो वातपित्तार्द्दित इत्यादिना वक्ष्यमाणो ज्ञेयः। वातपित्तार्द्दित इत्यादिना क्षतकासे एवावस्थिकीं चिकित्सामाह।

मांसोचितेभ्यः क्षामेभ्यो लावादीनां रसा हिताः।
तृष्णार्त्तानां पयश्छागं शरमूलादिभिः शृतम्॥
रक्ते स्रोतोभ्य आस्याद्वा वाप्यागते क्षीरजं घृतम्।
पानं नस्यं यवागूर्वा श्रान्ते क्षामे हतानले॥
स्तम्भायासेषु महतीं मात्रां वा सर्पिषः पिबेत्।
कुर्य्याद्वा वातरोगघ्नं पित्तरक्ताविरोधिनम्॥ ५४॥
निवृत्ते क्षतदोषे तु कफे वृद्ध उरः क्षते।
दाल्यते कासिनो यस्य स धूमान् ना पिबेदिमान्॥
द्वे मेदे मधुकं द्वे च बले तैः क्षौमलक्तकैः।
वर्त्तितैर्धूममापीय जीवनीयघृतं पिबेत्॥
मनःशिलापलाशाज-गन्धात्वक्क्षीरिनागरैः।
भावयित्वा पिबेत् क्षौमं ससितेक्षुगुड़ोदकम्॥

सति तेभ्यः क्षतकासिभ्यो मांसोचितेभ्यो मांसाहाराभ्यासवद्भ्यः क्षामेभ्यः क्षीणेभ्यो लावादीनां विष्किराणां मांसरसा हिताः। तृष्णेत्यादि। क्षतकासिनां तृष्णार्त्तानां शरमूलादिपञ्चमूलैः शृतं छागं पयो हितम्। रक्त इत्यादि। स्रोतोभ्यो नासादिरन्ध्रेभ्य आस्याद् वा रक्ते आगते क्षीरजं घृतं पानं नस्यं हितम्। श्रान्ते क्षामे हतानले यवागूर्वा हिता। स्तम्भेत्यादि। स्तम्भे देहस्यायासेषु च सर्पिषो महतीं मात्रां पिबेत्। पित्तरक्तयोरविरोधिनं वातरोगघ्नमौषधं वा कुर्य्यात्॥ ५४॥

गङ्गाधरः—निवृत्त इत्यादि। उरःक्षते क्षतदोषे क्षते च निवृत्ते तदनुबन्ध वातपित्ते दोषे च निवृत्ते सति कफे वृद्धे कासिनो यस्य तदुरो वक्षः क्षते क्षतस्थाने दाल्यते स ना पुरुष इमान् वक्ष्यमाणान् धूमान् पिबेत्। द्वे मेदे इत्यादि। मेदाद्वयादिकं पिष्ट्वा क्षौमालक्तकैर्वर्त्तितैर्वर्त्तिं कृत्वा धूममापीय अनु जीवनीयघृतमोजोरक्षार्थं पिबेत्। मनःशिलेत्यादि। पलाशस्य बीजम्, अजगन्धा

जीवनीयं सर्पिर्वातरक्ते वक्ष्यमाणम्। महतीं मात्रामिति अहोरात्रेण परिणमनीयां प्रायोऽष्टपलप्रमाणाम्॥ ५४॥

चक्रपाणिः—निवृत्ते क्षतदोषे इति क्षतव्रणे शान्ते क्षौमलक्तकैर्वर्त्तितैरिति यथोक्तौषधेन

पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया।
ससर्पिष्कं पिबेद्‌ धूमं तित्तिरिप्रतिभोजनम्॥
भावितं जीवनीयैर्वा कुलिङ्गाण्डरसायुतः।
क्षौमं धूमं पिबेत् क्षीरं शृतं वाऽयोगुड़ैरण॥ ५५॥
सम्पूर्णरूपं क्षयजं दुर्ब्बलस्य विवर्ज्जयेत्।
नवोत्थितं बलवतः प्रत्याख्यायाचरेत् क्रियाम्॥ ५६॥
तस्य बृंहणमेवादौ कुर्य्यादग्नेश्च दीपनम्।
बहुदोषाय सस्नेहं मृदु दद्याद्‌ विरेचनम्॥

यमानीत्वक्क्षीरीवंशलोचनानागरान्तैः पिष्ट्वा क्षौमं लिप्त्वा भावयित्वा शोषयित्वा शरावसम्पुटे दत्त्वा धूमं पीत्वा ससितेक्षुगुड़ोदकं सितोदकमिक्षुगुड़ोदकमनुपानं कुर्य्यात्। पिष्ट्वेत्यादि। आर्द्रया वटशुङ्गया तुल्यां मनःशिलां पिष्ट्वा क्षौमं लेपयित्वा सर्पिषा युक्तया धूमं पिबेत्। तित्तिरिमांसरसेन प्रतिभोजनं कुर्य्यात्। भावितमित्यादि। जीवनीयर्दशभिः क्वथितैः कुलिङ्गानामण्डरसेन युक्तैर्भावितं क्षौमं वस्त्रं धूमं पिबेत्। तदनु शृतं क्षीरं पिबेदथवा वह्नौ तप्तैरयोगुड़ैर्लौह-गुड़कैः क्षीरे प्रक्षिप्तैः शृतं क्षीरं वा अनु पिबेदिति॥ ५५॥

गङ्गाधरः— तत्कासचिकित्सितमुक्त्वा क्षयजकासचिकित्सितमाह—सम्पूर्णेत्यादि। क्षयजं कासं दुर्ब्बलस्य सम्पूर्णलक्षणं विवर्ज्जयेत्। बलवतो नवोत्थितं सम्पूर्णलक्षणं प्रत्याख्याय क्रियामाचरेत्। पूर्व्वं ह्युक्तं नवौ कदाचित् सिध्येतामिति, तेन यदि सिध्येदित्यभिप्रेत्य क्रियामाचरेदिति। असम्पूर्णरूपञ्च न प्रत्याख्यायते क्रियाञ्चाचरेत्॥ ५६॥

गङ्गाधरः—तस्येत्यादि। तस्य बलवतो नवोत्थक्षयकासिन आदौ बृंहण-मौषधमग्नेर्दीपनञ्च कुर्य्यात्। तत्र बहुदोषश्चेत् स भवेत् तदा बहुदोषाय

क्षौमलेपाद्वर्त्तीकृतैः क्षौमं दग्ध्वा धूमं पिबेत्। तित्तिरिरसानुपानम्। अयोगुडैरिति लोहगुडैः शृतं क्षीरम्॥ ५५॥

चक्रपाणिः—प्रत्याख्यायाचरेत क्रियाम् इत्यनेन उक्तलक्षणेऽपि क्षयजे कदाचित् सिद्धिर्दर्शयति॥ ५६॥

शम्पाकेन त्रिवृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥
सर्पिः सिद्धं पिबेद् युक्त्या क्षीणदेहविशोधनम् ।
हितं तद् देहबलयोरस्य संरक्षणं मतम् ॥ ५७ ॥
पित्ते कफे च संक्षीणे परिक्षीणेषु धातुषु ।
घृतं कर्कटकक्षोर-द्विबलासाधितं पिबेत् ॥
विदारीभिः कदम्बैर्वा तालशस्यैस्तथा घृतम् ।
शृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥
शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे ।
घृतमण्डेन मधुनाऽनुवास्यो मिश्रकेण वा ॥
जाङ्गलैः प्रतिभुक्तस्य वर्त्तकाद्या बिलेशयाः ।
क्रमशः प्रसहाश्चैव प्रयोज्याः पिशिताशिनः ॥
औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ।
कफं शुद्धस्य तैः पुष्टिं कुर्य्यात् सम्यग् वहन् रसः ॥ ५८ ॥

तस्मै सस्नेहं मृदु विरेचनमादौ दद्यात् । तद्विरेचनमाह—शम्पाकत्रिवृता-कल्कः । मृद्वीकारसतिल्वककषायविदारीस्वरसा मिलिता चतुर्गुणास्तः सिद्धं सर्पिः क्षीणदेहविशोधनम् ॥ ५७ ॥

गङ्गाधरः—पित्ते कफे चेत्यादि । क्षयकासी नरः पित्ते कफे चेत्यादिषु कर्कटशृङ्गीबलाद्वयकल्केन पादिकेन चतुर्गुणे क्षीरे साधितं घृतं पिबेत् । विदारीभिः कल्कैश्चतुर्गुणजले शृतं घृतं पयश्च क्षीरपरिभाषया शृतं तथा कदम्बैः शृतं घृतं तथा पयश्च शृतं तालशस्यैस्तालाङ्कुरैः कल्कैः शृतं घृतं तथा पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे पिबेदिति पूर्व्वेणान्वयः । शून इत्यादि । नवोत्थक्षयकासवान् दुर्ब्बलः सबलश्च मेढ्रे शूने सवेदने, सश्रोणिवङ्क्षणे पायौ च शूने सवेदने मधुना सहितेन घृतमण्डेनानुवास्यः । अथवा मिश्रकेण घृततैलमिश्रेणानुवास्यः । अनुवासनानन्तरं जाङ्गलैः शशकादिमांसरसैः प्रति-

चक्रपाणिः—शम्पाक आरग्वधः । कर्कटकी काकड़शिङ्गी । तालशस्यैरिति तालफलस्य शस्यैः । घृतमण्डः घृतोपरिस्त्यानभागः । औष्ण्यादिति । शुद्धैश्च तैरिति शुद्धैः स्रोतोभिः ॥ ५७ । ५८ ॥

द्विपञ्चमूलीत्रिफला-चविकाभार्गिचित्रकैः।
कुलत्थपिप्पलीमूल-पाठाकोलयवैर्जले॥
शृते नागरदुःस्पर्श-शटीपिप्पलीपौष्करैः।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत्॥
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्चलवणानि च।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीड़ितः॥ ५६॥

द्विपञ्चमूल्यादिघृतम्।

गुड़ूचीं त्रिफलां मूर्व्वां हरिद्रां श्रेयसीं वचाम्।
निदिग्धिकां कासमर्द्दं पाठां चित्रकनागरम्॥
जले चतुर्गुणे पक्त्वा पादशेषेण तत्समम्।
सिद्धं सर्पिः पिबेद् गुल्म-श्वासार्त्तिक्षयकासनुत्॥ ६०॥

गुड़ूच्यादिघृतम्।

भुक्तस्य तस्य क्षयकासिनो भोजने वर्त्तकाद्या विलेशयाः पिशिताशिनः प्रसहाश्च क्रमशः प्रयोज्याः। ते वर्त्तकाद्या औष्ण्यात् प्रमाथिभावात् स्रोतोभ्यः कफं च्यावयन्ति। प्रमाथित्वं व्यवायित्वम्। व्यवायी देहमखिलं व्याप्य पाकाय कल्पते। कफच्यवनेन यत् स्यात् तदाह—शुद्धस्येत्यादि। तैर्वर्त्तकादिभिः शुद्धस्य च्युतकफस्य नवोत्थक्षयकासिनः स्रोतःशोधनेन रसो धातुः सम्यग्वहन् पुष्टिं रक्तादिपोषणं कुर्य्यादिति॥ ५८॥

गङ्गाधरः—द्विपञ्चमूलीत्यादि। द्विपञ्चमूल्यादियवान्तैः क्वाथ्यैः शृते जले क्वाथे चतुर्गुणे नागरादिकर्कटशृङ्ग्यन्तैः प्रत्येकं समैः कल्कैर्घृतात् पादिकैः सर्पिर्विपाचयेत्। सिद्धे पूते द्विक्षारपञ्चलवणानि युक्त्या दत्त्वा मात्रां पिबेत्। द्विपञ्चमूल्यादिघृतम्॥ ५९॥

गङ्गाधरः—गुड़ूचीमित्यादि। गुड़ूच्यादीनि प्रत्येकं समानि नागरान्तानि

चक्रपाणिः—द्विपञ्चमूलीत्यादौ क्षारलवणानाञ्च युक्त्या दानवचनेन स्तोकमात्रं दानं लवणीकरणप्रयोजनार्थं दर्शयति॥ ५९॥

चक्रपाणिः—गुड़ूचीमित्यादौ श्रेयसी रास्ना। तत्सममिति क्वाथसमम्॥ ६०॥

कासमर्द्दाभयामुस्त-पाठाकट्फलनागरैः ।
पिप्पलीकटुकाद्राक्षा-काश्मर्य्यसुरसैस्तथा ॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढ़के ।
पचेच्छोषज्वरप्लीह-सर्व्वकासहरं शिवम् ॥ ६१ ॥
धात्रीफलैः क्षीरसिद्धैः सर्पिर्वाप्यवचूर्णितम् ।
द्विगुणे दाड़िमरसे सिद्धं वा व्योषसंयुतम् ॥
पिबेदुप र भक्तस्य यवक्षारघृतं नरः ।
पिप्पलीगुड़सिद्धं वा छागक्षीरयुतं घृतम् ॥
एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम् ।
स्युर्दोषबद्धकोष्ठोरः-स्रोतसाञ्च विशुद्धये ॥ ६२ ॥
हरीतकीर्यवक्वाथ-द्व्याढ़के विंशतिं पचेत् ।
स्विन्ना मृदित्वा तास्तस्मिन् पुराणगुड़षट्पलम् ॥

चतुर्गुण जले पक्त्वा पादावशेषेण तेन क्वाथेन तत्क्वाथसमं सिद्धं सर्पिः पिबेत् । गुड़ूच्यादिघृतम् ॥ ६० ॥

गङ्गाधरः—कासमर्द्देत्यादि । कासमर्द्दादिभिः सुरसान्तैः कल्कैः प्रत्येकमक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढ़के समक्षीरे त्रिगुणद्राक्षारसे पचेत् । शोषादिहरं शिवञ्च घृतमिदमिति । कासमर्द्दादिघृतम् ॥ ६१ ॥

गङ्गाधरः—धात्रीत्यादि । क्षीरे यथायोग्ये धात्रीफलानि पक्त्वाऽस्थ्यादिकं विहाय पिष्ट्वा तैर्धात्रीफलैरवचूर्णितं मर्द्दितं चतुर्गुणं सर्पिः पिबेत् । पादिकव्योषेण कल्केन द्विगुणे दाड़िमरसे सिद्धं वा सर्पिः पिबेत् । यवक्षारघृतं चतुर्गुणजले युक्त्याष्टांशयवक्षारेण पक्वं घृतं भक्तस्योपरि नरः क्षयकासी पिबेत् । पिप्पलीगुड़ौ पादिकौ मिलित्वा कल्कीकृत्य चतुर्गुणच्छागक्षीरे सिद्धं घृतं पिबेत् । एतानीत्याद्याशीः । चत्वारि घृतानि ॥ ६२ ॥

गङ्गाधरः—हरीतकीरित्यादि । यवानष्टगुणे जले पक्त्वा पादावशेषे पूते द्व्याढ़के द्वात्रिंशच्छरावे विंशतिं हरीतकीः पचेत् । स्विन्नास्ता हरीतक्योऽस्थि-

चक्रपाणिः—क्षीरसिद्धैरिति क्षीरस्विन्नैः । यवक्षारं घृतञ्च ॥ ६१ । ६२ ॥

दद्यान्मनःशिलाकर्षं कर्षार्द्धञ्च रसाञ्जनम्।
कुड़वार्द्धञ्च पिप्पल्याः स लेहः श्वासकासनुत्॥ ६३॥

हरीतकीलेहः।

श्वाविधां सूचयो दग्धाः सघृतक्षौद्रशर्कराः।
श्वासकासहरा बर्हि-पादौ वा क्षौद्रसर्पिषा॥
एरण्डपत्रक्षारं वा व्योषतैलगुड़ान्वितम्।
लिह्यादेतेन विधिना सुरसैरण्डपत्रजम्॥
वार्त्ताकपिप्पलीद्राक्षा-पद्मकं क्षौद्रसर्पिषा।
लिह्यात् त्र्यूषणचूर्णं वा पुराणगुड़सर्पिषा॥
चित्रकं त्रिफलाजाजी-कर्कटाख्याकटुत्रिकम्।
द्राक्षाञ्च मधुसर्पिर्भ्यां लिह्याद्द्याद् गुड़ेन वा॥ ६४॥
जीवन्तीं मधुकं पाठां त्वक्क्षीरीं त्रिफलां शटीम्।
मुस्तैले पिप्पलीं द्राक्षां द्वे वृहत्यौ वितुन्नकम्॥

हीना मृदित्वा श्लक्ष्णं पिष्ट्वा तस्मिन् यवक्वाथे पुराणगुड़स्य षट्पलं दद्यात्। पक्वावतरणकाले मनःशिलायाः कर्षं रसाञ्जनकर्षार्द्धं पिप्पल्याः कुड़वार्द्धं चूर्णं प्रक्षिप्य लेहरूपमवतारयेत्। हरीतकीलेहः॥ ६३॥

गङ्गाधरः—श्वाविधामित्यादि। शल्लकीकण्टका दग्धाः समशर्करा घृतक्षौद्राभ्यां लेहाः श्वासकासहराः। वर्हिपादौ जङ्घे द्वे वा दग्ध्वा क्षौद्रसर्पिषा लेहाः श्वासकासहराः। एरण्डेत्यादि। एरण्डपत्रं दग्ध्वा क्षारं कृत्वा समांशव्योषचूर्णेन मिश्रयित्वा तैलगुड़ाभ्यां लिह्यात्। एतेन विधिना सुरसस्य तुलस्या एरण्डस्य च पत्राणि दग्ध्वा क्षारं कृत्वा समव्योषचूर्णेन मेलयित्वा तैलगुड़ाभ्यां लिह्यात् श्वासकासहरमिति। वार्त्ताकेत्यादि। वार्त्ताकादिकं चूर्णयित्वा क्षौद्रसर्पिर्भ्यां लिह्यात्। त्र्यूषणचूर्णं वा पुराणगुड़सर्पिषा लिह्यात्। चित्रकमित्यादि। द्राक्षान्तं चूर्णीकृत्य मधुसर्पिर्भ्यां लिह्यादथवा समगुड़ेन मेलयित्वा अद्यात्॥ ६४॥

चक्रपाणिः—एतेन विधिनेति व्योषतैलगुड़ान्वितं साधनीयम्। सुरसं सुनिषण्णकम्॥६३।६४॥

सारिवां पौष्करं मूलं कर्कटाख्यां रसाञ्जनम्।
पुनर्नवां लोहरजस्त्रायमाणां यमानिकाम्॥
भार्गीं तामलकीमृद्धिं विड़ङ्गं धन्वयासकम्।
क्षारचित्रकचव्याम्ल-वेतसव्योषदारु च॥
चूर्णीकृत्य पलांशानि लेहयेन्मधुसर्पिषा।
चूर्णात् पाणितलं पश्च कासानेतद् व्यपोहति॥ ६५॥

पद्मकं त्रिफलां व्योषं विड़ङ्गं देवदारु च।
बलां रास्नाञ्च तुल्यानि सूक्ष्मचूर्णानि कारयेत्॥
सर्व्वैरेभिः समं चूर्णैः पृथक् क्षौद्रं घृतं सिताम्।
लिह्याल्लेहं विमथ्यैतं सर्व्वकासहरं शिवम्॥ ६६॥

पद्मकादिलेहः।

लिह्यान्मरिचचूर्णं वा सघृतक्षौद्रशर्करम्।
सर्व्वकासहरं श्रेष्ठं लेहं कासार्द्दितो नरः॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
स्वरोपघाते कासे च लेहमेतं प्रयोजयेत्॥ ६७॥

गङ्गाधरः—जीवन्तीमित्यादि। वितुन्नकं धान्यकं, लोहरजो मारितपुटितलोहम्। दार्व्वन्तं सर्व्वं चूर्णीकृत्य प्रत्येकं पलांशं मिश्रयित्वा तच्चूर्णात् पाणितलं तद्द्विगुणेन मधुसर्पिषा मिलितं लेहयेत्। जीवन्त्याद्यचूर्णावलेहौ॥ ६५॥

गङ्गाधरः—पद्मकमित्यादि। पद्मकादीनि तुल्यानि चूर्णानि कारयेत्। एभिः सर्व्वैश्चूर्णैः समं पृथक् प्रत्येकं क्षौद्रं घृतं सिताञ्च दत्त्वा विमथ्य लेहं लिह्यात्। पद्मकादिलेहः॥ ६६॥

गङ्गाधरः—लिह्यादित्यादि। मरिचचूर्ण शर्करासमम्। घृतक्षौद्राभ्यां लिह्यात्। बदरीत्यादि। बदरीपत्रकल्कं ससैन्धवं घृते भृष्टं तेनैव भर्ज्जनघृतेन लिह्यादेतं लेहं स्वरोपघाते कासे च प्रयोजयेत्॥ ६७॥

चक्रपाणिः—पाणितलं कर्षः॥ ६५—६७॥

पत्रकल्कं घृते भृष्टं तिल्वकस्य सशर्करम्।
पेया चोत्कारिका छर्दि-तृट्कासामातिसारनुत्॥
गौरसर्षपगण्डीर-विड़ङ्गव्योषचित्रकान्।
साभयान् साधयेत् तोये यवागूं तेन चाम्भसा॥
ससर्पिर्लवणा कासे हिक्काश्वासे च पीनसे।
पाण्डामये क्षये शोषे कर्णशूले च शस्यते॥ ६८॥
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः।
सगौरामलकः साम्लः सर्व्वकासे भिषग्जितम्॥ ६९॥
वातघ्नौषधनिःक्वाथं क्षीरयूषान् रसानपि।
वैष्किरप्रतुदादीनां दापयेत् क्षयकासिने॥
क्षतकासे च ये धूमाः सानुष्ठाना निदर्शिताः।
क्षयकासेऽपि तानेव यथावस्थं प्रयोजयेत्॥

गङ्गाधरः—पत्रेत्यादि। तिल्वकस्य लोध्रस्य पत्रकल्कं घृते भृष्टं सशर्करमुत्कारिका कृता पेया पातव्या छर्द्यादिनुत्। गौरेत्यादि। गौरसर्षपः, गण्डीरः समठः, अभयाः, तान् कर्षमात्रान् प्रास्थिके तोये पचेदर्द्धशिष्टेन तेनाम्भसा यवागूं साधयेत्। सा यवागूः ससर्पिर्लवणा कासादिषु शस्यते॥ ६८॥

गङ्गाधरः—कण्टकारीत्यादि। कण्टकारीकर्षं प्रास्थिके जले पक्त्वार्द्धशिष्टे रसे सिद्धो मुद्गयूषः सर्पिर्मरिचादिना सुसंस्कृतः गौरा हरिद्रा आमलकफलं ताभ्यां साम्लः सर्व्वकासे भिषग्जितम्॥ ६९॥

गङ्गाधरः—वातेत्यादि। वातघ्नौषधं भद्रदार्व्वादि तेषां निःक्वाथं क्षयकासिने दापयेत्। तथा तेन क्वाथेन सिद्धं क्षीरं यूषांश्च दापयेत् तथा वैष्किरान् रसान् दापयेत् तथा प्रतुदादीनां रसान् दापयेत्। आदिना प्रसहादीनां रसान् दापयेत्। क्षतेत्यादि। क्षतकासे च ये धूमा यद्यदनुष्ठानं

चक्रपाणिः—उत्कारिकेति पत्रकल्केनेत्यादिना। गण्डीरः शमठः॥ ६८॥

चक्रपाणिः—गौरामलक आर्द्रामलकः, साम्ल इति दाडिमादियोगादम्लः॥ ६९॥

दीपनं वृंहणञ्चैव स्रोतसाञ्च विशोधनम्।
व्यत्यासात् क्षयकासिभ्यो बल्यं सर्व्वं हितं भवेत्॥ ७० ॥
सन्निपातोद्भवो ह्येष क्षयकासः सुदारुणः।
सन्निपातहितं तस्मात् कार्य्यमत्र भिषग्जितम्॥
दोषानुबलयोगाच्च भवेद् * रोगबलाबलम्।
कासेष्वेषु गरीयांसं जानीयादुत्तरोत्तरम्॥ ७१ ॥

निदर्शितं क्षयकासेऽपि तान् सानुष्ठानान् धूमान् यथावस्थं प्रयोजयेत्। दीपनमित्यादि। क्षयकासे यो यो दोषस्तत्तद्दोषव्यत्यासाद् विपर्य्ययाद् यद्यद्दीपनमौषधादिकं वृंहणञ्च स्रोतसां विशोधनञ्च बल्यञ्च तत् सर्व्वं क्षयकासिभ्यो हितं भवेत्॥ ७० ॥

गङ्गाधरः—सन्निपातेत्यादि। हि यस्मात् एष क्षयकासः सन्निपातोद्भवः सुदारुणः सद्वैद्येनोपक्रान्तः सिध्यत्ययथोपक्रान्तो मारयति, तस्मात् सन्निपातस्य त्रिदोषस्य हितं यद् यदौषधादिकं तत् सर्व्वं भिषग्जितमत्र क्षयकासे कार्य्यम्। दोषेत्यादि। रोगबलाबलं दोषानुबलयोगाच्च दोषानुबन्धयोगाच्च रोगबलाबलं भवेत्। एषु पञ्चसु कासेषु मध्ये उत्तरोत्तरं कासं गरीयांसं जानीयात्। वातकासाद् गरीयान् पित्तकासः, पित्तकासात् कफकासः, कफकासात् क्षतकासः, क्षतकासात् क्षयकास इति॥ ७१ ॥

चक्रपाणिः—व्यत्यासादिति क्रियापरिवर्त्तनात्॥ ७० ॥

चक्रपाणिः—क्षयकासस्य सन्निपातोद्भव इत्यादिना सान्निपातिकत्वमभिधाय दोषोद्रेकविशेषानुबन्धरूपेण चिकित्साविशेषसूत्रमाह—"दोषानुबन्धयोगाच्च हरेद् रोगबलाबलम्"। अत्र कुर्य्यादित्यध्याहार्य्यम्। दोषाणामनुबन्धः उत्कर्षापकर्षादिना सम्बन्धः तदपेक्षयोगः, अत्र पञ्चमी हेतौ। अन्ये तु दोषानुबन्धरूपेण भेषजयोगेन रोगस्य क्षयकासस्य प्रबलवन्तञ्च दोषं हरेत्। तस्मिन् न तु युक्तं हरेद् रोगबलाबलमिति। अन्ये तु दोषानुबलयोगाच्च कुर्य्याद् रोगबलाबलमिति पठन्ति। तेन दोषानुबन्धयोगात् रोगबलाबलं बुद्धा कुर्य्याद् भिषग्जितमिति सम्बन्धः। कासेष्विति वातपित्तकफक्षतक्षयजेषु॥ ७१ ॥

* दोषानुबन्धयोगाच्च हरेत् इति चक्रः।

तत्र श्लोकौ।

भोज्यं पानानि सर्पीषि लेहाश्च सह पानकैः।
चीरसर्पिर्गुड़ा धूमाः कासभैषज्यसंग्रहः॥
सङ्ख्यानिमित्तरूपाणि साध्यासाध्यत्वमेव च।
कासानां भेषजञ्चोक्तं गरीयस्त्वञ्च कासिनः॥ ७२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थाने कासरोगचिकित्सितं नाम
अष्टादशोऽध्यायः॥ १८॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोकाविति। भोज्यमित्यादिश्लोकद्वयम्॥ ७२॥

इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल प्रतिसंस्कृत एव च।
कासचिकित्सितेऽष्टादशाध्याये वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते
चरकजल्पकल्पतरौ षष्ठस्कन्धे चिकित्सितस्थानजल्पे कासरोग
चिकित्सितजल्पाख्या अष्टादशी शाखा॥ १८॥

चक्रपाणिः—विस्तारोक्तं कासभेषजं संगृह्णाति—भोज्यमित्यादि। संख्येत्यादि अध्यायार्थसंग्रहः सुगम इति॥ ७२॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्यटीकायां चिकित्सितस्थानव्याख्यायां कासचिकित्सितं
नाम अष्टादशोऽध्यायः॥ १८॥

## एकोनविंशोऽध्यायः ।

अथातोऽतीसारचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

भगवन्तं खल्वात्रेयं कृताह्निकं हुताग्निहोत्रमासीनमृषिगण-परिवृतं हिमवत्पार्श्वे विनयादुपेत्याभिवाद्याग्निवेश उवाच, भगवन्नतीसारस्य प्रागुत्पत्तिनिमित्तलक्षणोपशमनानि तु प्रजानु-ग्रहार्थमाख्यातुमर्हसीति ॥ २ ॥

अथ भगवान् पुनर्व्वसुरात्रेयस्तदग्निवेशवचनमनुनिशम्य उवाच—श्रूयतामग्निवेश ! सर्व्वमेतदखिलेन व्याख्यायमानम् । आदिकाले तु यज्ञेषु पशवः समालम्भनीया बभूवुर्नालम्भाय प्रक्रियन्ते स्म । ततो दक्षयज्ञं प्रत्यवरकालं मनोः पुत्राणां नरिष्यन्नाभागेक्ष्वाकुदिष्टशर्य्यात्यादीनां क्रतुषु पशव एवाभ्यनु-

गङ्गाधरः—उद्दिष्टानुक्रमात् कासचिकित्सितानन्तरमतिसारचिकित्सित-माह—अथात इत्यादि । पूर्ववत् सर्व्वं व्याख्येयम् ॥ १ ॥

गङ्गाधरः—भगवन्तमित्यादि । अग्निवेश ऋषिर्हिमवत उत्तरे पार्श्वे आसीनम् आत्रेयं विनयादुपेत्याभिवाद्य चोवाच । तद् यथा—भगवन्नित्यादि ॥ २ ॥

गङ्गाधरः—तदुत्तरमाहात्रेयः—अथेत्यादि । अतिसाररोगस्य प्रागुत्पत्ति-पुरावृत्तमुवाच । आदिकाल इत्यादि । दक्षयज्ञं प्रति अवरकाले दक्षयज्ञादनन्तरं बहुकाले व्यतीते मनोः पुत्राणां नरिष्यन्नाभागादीनां क्रतुषु पशव एवाभ्य-

चक्रपाणिः—अग्निबलहानिसामान्यात् ग्रहणीदोषमनु अतिसारचिकित्सिते वक्तव्ये उपोद्घात-तया पाण्डुरोगादिभिर्व्यवधानं कृतं, सम्प्रति तु उपोद्घातोक्तपाण्डुरोगादीनभिधाय प्रकृतमतीसार-चिकित्सितमुच्यते । प्रागुत्पत्तिरिति प्राक्कालोत्पत्तिः ॥ १ । २ ॥

चक्रपाणिः—आदिकाले इति कृतयुगे । समालभनीया इति मन्त्रेण अभिमन्त्रैव परित्याज्या बभूवुः न आलम्भार्थम् प्रक्रियन्ते स्म इति आलम्भाय मारणाय न प्रक्रियन्ते न संस्क्रियन्त इत्यर्थः । नरिष्यन्नाभागादिमनुपुत्रेषु । एवमेव मनुपुत्रमुदाहार्य्य यज्ञादिशब्दः क्रियते तदा तेषां

ज्ञाय प्रोक्षणमेवावापुः। अतः प्रत्यवरकालं पृषध्रेण दीर्घ-सत्रेण यजता पशूनामलाभाद् गवामालम्भश्च प्रवर्त्तितः। तद् दृष्ट्वा प्रव्यथिता भूतगणाः। तेषाञ्चोपयोगादुपाकृतानां गवां गौरवादौष्ण्यादसात्म्यात् अशस्तोपयोगात् स्वाद्वपयोगाच्चोप-हताग्नीनामुपहतमनसाञ्चातिसारः पूर्व्वमुत्पन्नस्ततपृषध्रयज्ञे ॥३॥

अथावरकालं वातलस्य वातातपव्यायामातिमात्रनिषेविणो रुक्षाल्पप्रमिताशिनः तीक्ष्णमद्यव्यवायनित्यस्य उदावर्त्तयतश्च

नुज्ञां चक्रुः—क्रतुषु भवन्तोऽस्मान् प्रोक्षयन्त्विति। ते पशवो मनुपुत्राणां क्रतुषु प्रोक्षणमेवावापुः। अतो मनुपुत्राणां क्रतुसमाप्तिं प्रति अवरकालं कियत्काला-नन्तरं पृषध्रेण राज्ञा दीर्घसत्रेण दीर्घकालनिष्पाद्यक्रतुना यजता पशूनामलाभात् गवामालम्भः प्रवर्त्तितः। तद्गवालम्भनं दृष्ट्वा भूतगणा मनुष्यादयः प्रव्य-थिता बभूवुः। तेषाञ्चेत्यादि। तेषु तत्र क्रतौ व्रतिभिऋत्विग्भिस्तेषाञ्च गवामुपाकृतानां यज्ञार्थं मन्त्रतो हतानां मांसानामुपयोगादाहारेषु तन्मांसस्य गौरवादौष्ण्यादसात्म्यादशस्तोपयोगात् स्वाद्वपयोगात् स्वादुलाभावाच्च उपहताग्नीनामृषीणामुपहतमनसाञ्चातिसारः पूर्व्वमुत्पन्नस्ततपृषध्रयज्ञे ॥ ३ ॥

गङ्गाधरः—इत्येवं प्रागुत्पन्नस्यातिसारस्याथानन्तरकालं हेतुविशेषमासाद्य कुपितवातादितो जायमानस्य षड्विधभेदमुपेतस्योत्पत्तिर्भवतीति तदाह—अथावरकालमित्यादि। वातलस्य बहुलवातस्य न तु वातप्रकृतेः सुखसाध्यता-नुपपत्तेः कृच्छ्रसाध्यताया एवोपपत्तेः, कफपित्तप्रकृतिकयोरपि वातातीसार-

क्वचिदन्यत्र समुदायेन पाठात् बुद्धिपूर्व्वः साक्षात् ज्ञानार्थं कतिपये पठिताः। पशूनामभ्यनु-ज्ञानादिति पशूनामेव प्रेरणया 'प्रेत्य च एषां विशिष्टार्थमेव' उच्यते आगमेषु। क्रत्वर्थहिंसायां वधवध्ययोरुभयोरपि महापुण्यमुत्पद्यत इति। किंवा पशूनामेवाभ्यनुज्ञानादिति वेदे पशूनां वध्यत्वेऽप्यनुज्ञानात्। प्रोक्षणमिति अभिमन्त्र्य हननम्। उक्तं हि—'उपाकृतः पशुरसौ योऽभि-मन्त्र्य क्रतौ हतः'। अनेन प्रागुत्पत्तिनिदर्शनेन मानसोपतापोऽतीसारकारणं भवतीत्युपदर्श्यते। दीर्घसत्रेणेति दीर्घकालवर्त्तिना क्रतुना। व्यथिता इति अदृष्टपूर्व्वं गवां वधं दृष्ट्वा दुःखिताः सन्तः ॥ ३ ॥

चक्रपाणिः—अथत्यादिना वातातीसारादीनां पृथक् लक्षणं ब्रूते। वातलस्येत्यनेन वात-प्रकृतिं प्राप्य वातातपादीनां वातातीसारजनने सामर्थ्यातिशयो दर्श्यते। अनेन अन्यप्रकृतेरपि

वेगान् वायुः प्रकोपमापद्यते पक्ता चोपहन्यते। स वायुः प्रकुपितोऽग्नावुपहते मूत्रस्वेदौ पुरीषाशयमुपहृत्य ताभ्यां पुरीषं द्रवीकृत्यातिसाराय कल्पते ॥ ४ ॥

तस्य रूपाणि—विज्जलमामविप्लुतमवसादि रूक्षं द्रवं सशूलमामगन्धमीषच्छब्दं वा विबद्धमूत्रधारमतिसार्य्यते पुरीषम्। वायुश्चान्तःकोष्ठे सशब्दशूलस्तिर्य्यक् चरति विबद्धः। इत्यामातिसारो वातात्। पक्वं वा विबद्धमल्पाल्पं सशब्दशूलफेनपिच्छापरिकर्त्तिकं हृष्टरोमा विनिश्वस्य शुष्कमुखः कट्यूरुत्रिकजानुपृष्ठपार्श्वशूली भ्रष्टगुदो मुहुर्म्मुहुर्विग्रथितमुपवेश्यते वातात् तमाहुरनुग्रथितमित्येके वातानुग्रथितवर्च्चस्त्वात् ॥ ५ ॥

दर्शनाच्च पित्तलश्लेष्मलयोर्बोध्यमिति। पक्ता च जाठराग्निस्तेन वातातपादिना हेतुनोपहन्यते। स वायुरित्यादि। मूत्रस्वेदौ पुरीषाशयमुपहृत्य नीत्वा ताभ्यां मूत्रस्वेदाभ्यां पुरीषं द्रवीकृत्येति ॥ ४ ॥

गङ्गाधरः—तस्य रूपाणीति। तस्य वातजस्यातिसारस्य। विज्जलादिपुरीषं पुरुषो वातेनातिसार्य्यते। विज्जलं पिच्छिलम्। आमविप्लुतम् अपक्वदोषविप्लुतम् अवसादि अवसादकरत्वात्। वायुश्चान्तःकोष्ठे कोष्ठाभ्यन्तरे शब्दशूलाभ्यां सहितस्तिर्य्यक् चरति विबद्धः संश्चरतीत्यामातिसारो वातात्। पक्वातिसारमाह—पक्वं वेत्यादि। वातेनातिसारकी पुमान् हृष्टरोमादिः सन् पक्वं वा पुरीषं विबद्धमल्पाल्पं शब्दादिमद्विग्रथितञ्च मुहुर्म्मुहुरुपवेश्यते।

वातातपादयः अतीसारस्य कारणं भवतीति ज्ञेयम्। एवं पित्तलश्लेष्मलशब्दयोरपि तात्पर्य्यं व्याख्येयम्। प्रमिताशनमतीतकालाशनं वेगादुदावर्त्तयत इति ऊर्द्धमावर्त्तयतो वेगादित्यर्थः। पुरीषाशयं वेगेनाभिहत्येति पक्वाशयं जित्वा। ताभ्यामिति मूत्रस्वेदाभ्याम् ॥ ४ ॥

चक्रपाणिः—तस्य रूपाणीत्यादिना आमवातातीसारलक्षणमाह। आममिति आमत्वगतम्। विप्लुतमिति प्रसरणशीलम्। अवसादितमिति भूमौ पतितं लीनं भवति। पक्वञ्चेत्यादिना पक्ववातातिसारमाह। विनिश्वसन्निति शब्दं कुर्व्वन्। तमाहुरनुग्रथितमिति विग्रन्थितपुरीषातिसारावस्थां प्राप्नोति ॥ ५ ॥

पित्तलस्य पुनरम्ललवणकटुक्षारोष्णतीक्ष्णातिमात्रनिषेविणः प्रततानिसूर्य्यसन्तापोष्णमारुतोपहतगात्रस्य क्रोधेर्ष्याबहुलस्य पित्तं प्रकोपमापद्यते। तद् द्रवत्वादुष्माणमुपहत्य पुरीषाशयाश्रितमौष्ण्याद् द्रवत्वात् सरत्वाच्च भित्त्वा पुरीषमतिसाराय कल्पते ॥ ६ ॥

तस्य रूपाणि—हारिद्रं हरितं नीलं कृष्णं रक्तपित्तोपगतम् अतिदुर्गन्धमतिसार्य्यते पुरीषम्। तृष्णादाहस्वेदमूर्च्छाशूलब्रध्नसन्तापपाकपरीतः। इति पित्तातिसारः ॥ ७ ॥

श्लेष्मलस्य तु गुरुमधुरशीतस्निग्धोपसेविनः सम्पूरकस्य अचिन्तयतो दिवास्वप्नपरस्यालसस्य श्लेष्मा प्रकोपमापद्यते।

तं पक्वं वातादतिसारमाहुः। तमनुग्रथितकमित्येक आहुः। कस्मात्? वातानुग्रथितवर्च्चस्त्वात्। इति ॥ ५ ॥

गङ्गाधरः—पित्तातिसारमाह—पित्तलस्येत्यादि। पित्तलस्याम्लाद्यतिमात्रनिषेविण इत्यादेः पित्तं प्रकोपमापद्यते। तदित्यादि। तत्तदम्लाद्यतिमात्रनिषेवणादितः प्रकुपितं पित्तं द्रवत्वादुष्माणमुपहन्ति न तु तीक्ष्णोष्णत्वादितो वर्द्धयति तदम्लादिहेतुकृततथाविधस्वभावात्। द्रवत्वादुष्माणमुपहत्य पुरीषाशयाश्रितं सदौष्ण्यादिभ्यः पुरीषं भित्त्वातिसाराय कल्पते। इति पित्तातिसारसम्प्राप्तिः ॥ ६ ॥

गङ्गाधरः—अथ तस्य रूपाणि। तद् यथा—हारिद्रमित्यादि। रक्तपित्तोपगतं पुरीषमतिसार्य्यत इति सोऽतिसारी तृष्णादिपरीतो भवति। पाको गुदपाकः ॥ ७ ॥

गङ्गाधरः—श्लेष्मातिसारमाह—श्लेष्मलस्येत्यादि। श्लेष्मलस्य गुर्व्वाद्युपसेविनः। सम्पूरकस्य द्रवद्रव्यातिसेविनः। अचिन्तयतः सर्व्वदा चिन्ता-

चक्रपाणिः—पित्तलस्येत्यादिना पित्तातिसारमाह। द्रवत्वादुष्माणमुपहत्येति यद्यपि पित्तम् उष्णम् अग्नेः समानतया वर्द्धकं भवतीति युज्यते तथापि द्रवत्वादुष्माणं पुरीषाशयगतं पित्तं हन्तीत्यर्थः ॥ ६ ॥

चक्रपाणिः—ब्रध्नो गुदः ॥ ७ ॥

चक्रपाणिः—श्लेष्मलस्येत्यादिना श्लेष्मातिसारमाह। सम्पूरकस्येति—अतिमात्राशनशीलस्य।

स पुनः स्वभावाद् गुरुमधुरशीतस्निग्धस्य पुंसोऽग्निमुपहत्य सौम्यस्वभावात् पुरीषाशयमुपगत्योपक्लेद्य चातिसाराय कल्पते ॥ ८ ॥

तस्य रूपाणि—स्निग्धं श्वेतं पिच्छिलं तन्तुमदामं गुरु दुर्गन्धमनुबद्धशूलमल्पाल्पमभीक्ष्णमतिसार्य्यते सप्रवाहिकं गुरुतरं गुरूदरगुदवस्तिवङ्क्षणदेशः कृतापकृतसंज्ञः सोत्क्लेशो निद्रालस्यपरीतः सलोमहर्षः सदनोऽन्नद्वेषी च। इति श्लेष्मातिसारः ॥ ९ ॥

अतिशीतस्निग्धरुक्षोष्णगुरु-खरकठिनविशद-विषमविरुद्धा-

रहितस्य। दिवास्वप्नातिसेविनः। श्लेष्मा प्रकोपमापद्यते। स इत्यादि। स श्लेष्मा स्वभावात् प्रसिद्धगुर्व्वादिः पुंसोऽग्निगुणविरोधी तेनाग्निमुपहत्य सौम्यस्वभावादधोगतित्वात् पुरीषाशयमुपगत्योपक्लेद्य च पुरीषमतिसाराय कल्पते। इति कफजातिसारसम्प्राप्तिः ॥ ८ ॥

गङ्गाधरः—तस्य रूपाणि इमानि। तद् यथा—स्निग्धमित्यादि। सोऽतिसारी पुमान् गुरूदरादिः सन् स्निग्धादिपुरीषं सप्रवाहिकं गुरुतरमतिसार्य्यते कफेन। सोत्क्लेशादिर्भवति। इति श्लेष्मातिसारः ॥ ९ ॥

गङ्गाधरः—सन्निपातातिसारमाह। तस्य निदानम्—अतिशीतेत्यादि।

श्लेष्मणोऽग्न्युपघाते हेतुमाह—सौम्यस्वभावादिति। सौम्यस्याग्नेर्विरुद्धत्वात् आघातं करोतीति युक्तमेवेति भावः। पुरीषाशयमुपहत्येति पुरीषाशयं गत्वा, हन्तेर्गतिहिंसात्मकत्वात् अत्र गत्यर्थेन, किंवा पुरीषाशयशब्देन स्थानेन स्थानिन उपचारात् पुरीषमेवोच्यते; यथा मञ्चाः क्रोशन्तीति, ततश्च पुरीषमुपहत्येति सम्बन्धः ॥ ८ ॥

चक्रपाणिः—कृतेऽप्यकृतसंज्ञ इति कृतेऽपि वेगे न बुध्यत इत्यर्थः। अत्र च पित्तकफातिसारे सामतालक्षणं यद्यपि नोक्तं तथापि सामातीसारसम्बन्धकृतविज्वरत्वगन्धित्वप्रकारैर्लक्षणैः आमातिसाररूपावस्था ज्ञेयैव। तथाहि चिकित्सायां पित्तातिसारं निदानोपशयाकृतिभिः विदित्वेत्याविना रक्तातिसारे पृथक् चिकित्सां वक्ष्यति, श्लेष्मातिसारे तु सामे निरामे रुक्षोष्णादिरूपा चिकित्सा समानैवेति कृत्वा पृथगामश्लेष्मातीसारचिकित्सा नोक्ता। क्षारपाणिना सर्व्वातिसाराणां सामता पृथगुक्ता, वचनं हि "वातातिसारः सामश्च सशूलः फेनिलस्तनुः। श्यावः सशब्दो दुर्गन्धो विबद्धोऽल्पाल्प एव च"। एवं पित्तकफानां हि अतीसारं निर्द्दिशेत् ॥ ९ ॥

चक्रपाणिः—अतिशीतेत्यादिना त्रिदोषजातीसारमाह। अत्र च शीतादीनां यथासम्भवं

ऽसात्म्यभोजनाद् अभोजनात् कालातीतभोजनाच्च किञ्चित् अभ्यवहरणात् प्रदुष्टमद्यपानीयपानात् अतिमद्यपानीयपानात् असंशोधनात् प्रतिकर्म्मणां विषमगमनादनुपचाराज्ज्वलनादित्यपवनसलिलातिसेवनात् अस्वप्नाद् वेगविधारणादृतुविपर्य्ययात् अयथाबलमारम्भाद् भयशोकचिन्तोद्वेगातियोगात् क्रिमि-शोथ-ज्वरार्शोविकारातिकर्षणैः व्यापन्नाग्नेस्त्रयो दोषाः प्रकुपिता भूय एवाग्निमुपहत्य पक्काशयमनुप्रविश्य अतिसारं सर्व्वदोषलिङ्गं जनयन्ति ॥ १० ॥

अपि च शोणितादीन् धातूनतिप्रदुष्टान् दूषयन्तो धातुदोषस्वभावकृतानतीसारवर्णान् दर्शयन्ति। तत्र शोणितादिषु

शीतादिभिरतीत्यस्यान्वयः। अभोजनादुपवासात्। किञ्चिदभ्यवहरणात् अल्पाशनात्। प्रदुष्टमद्यप्रदुष्टपानीयपानात्। अतिमद्यातिपानीयपानात्। असंशोधनात् वमनविरेचनादिना संशोधनाभावात्। प्रतिकर्म्मणां तत्तद्रोगप्रतिकारक्रियाणां विषमगमनात् सम्यग्योगाभावात् तथा तत्तद्रोगाणां यथार्थोपचाराभावात्। ज्वलनाद्यतिसेवनात्। ज्वलनो वह्निः आदित्यः सूर्य्यः पवनो लोकेचरो वायुः सलिलस्यातिसेवनमिहावगाहनादिना पूर्व्वं यदुक्तं तदतिपानीयपानमिति एभिः कारणैस्त्रयो दोषाः प्रकुप्यन्ति व्यापन्नाग्नेश्च। प्रकुपितास्ते त्रयो दोषा भूय एवाग्निमुपहत्य पक्काशयमनुप्रविश्यातिसारं सर्व्वदोषलिङ्गं जनयन्ति ॥ १० ॥

गङ्गाधरः—अपिचातिप्रदुष्टान् शोणितादीन् धातून् दूषयन्तो धातुदोषाणां स्वभावकृतान् धातुस्वभावकृतान् दोषस्वभावकृतानतिसारे पुरीषस्य वर्णानुप-

वातादिकर्तृत्वेन ज्ञेयम्। किंवा सर्व्वेषामेव त्रिदोषकर्तृत्वं ज्ञेयम्। उक्तं हि—सर्व्वेषां दोषाणाम् अग्निसंश्रितौ सामप्रकोपौ इति। किञ्चिदभ्यवहरणादिति पथ्यापथ्यभोजनात्। अनुपचारादिति प्रतिकर्म्मणामेव असम्यगुपचारादित्यर्थः। सलिलातिसेवनादित्यत्र अवगाहादीनां वाह्यसेवनं सलिलस्योच्यते अनुपानन्तु प्रागेवोक्तम्। विपन्नाग्निरिति वचनात् यथोक्तहेतूनाम् अग्निवधद्वारेणैव प्रायस्त्रिदोषकर्तृत्वं दर्शयति ॥ १० ॥

चक्रपाणिः—अपिचेत्यादिना विकृतिविषमसमवायत्रिदोषजलक्षणमाह। अतिप्रकृष्टं यथा

धातुषु नातिप्रदुष्टेषु * हारिद्रहरितनीलमाञ्जिष्ठमांसधावन-सङ्काशं रक्तं कृष्णं श्वेतं वा वराहमेदःसदृशम् अनुबद्धवेदनमवेदनं वा समासव्यत्यासादुपवेश्यते पुरीषम्। महद्‌ ग्रन्थितमामं शकृदपि † वा पक्कमनतिक्षीणमांसशोणितबलो मन्दाग्निविहतमुखरसस्तादृशमातुरं कृच्छ्रसाध्यं विद्यात्। एभिर्वर्णैः अतिसार्य्यमाणं सोपद्रवमातुरमसाध्योऽयमिति प्रत्याचक्षीत। तद्‌ यथा—क्वाथशोणिताभं यकृत्पिण्डोपमं मेदोमांसोदकसदृशं दधिमज्जतैलवसाक्षीरवेशवाराभमतिनीलम् अतिरक्तमतिकृष्णम् उदकमिव पुनर्मेचकाभमतिस्निग्धं हरिताभं नीलकषायवर्णं कर्व्वूरवर्णं वा आविलं पिच्छिलं तन्तुमदामं चन्द्रकोप-

दर्शयन्ति। तत्र नातिप्रदुष्टेषु शोणितादिषु धातुषु हारिद्रादिरूपं समासव्यत्यासादसमस्तरूपमुपवेश्यते पुरीषं वर्च्चस्त्यज्यते। तत्र कृच्छ्रसाध्यलक्षणमाह—महदित्यादि। यस्य सान्निपातातिसारिणः शकृत् पुरीषं महत् प्रचुरं ग्रन्थितमामं वा पक्कं वा भवति, स यद्यनतिक्षीणमांसादिर्मन्दाग्निना विहतमुखरसो न तु दोषविहतमुखरसः स्यात्, तादृशं सन्निपातातिसारातुरं भिषक् कृच्छ्रसाध्यं विद्यात्। असाध्यलक्षणमाह—एभिरित्यादि। एभिर्वक्ष्यमाणक्वाथशोणिताभेत्यादिभिर्वर्णैरतिसार्य्यमाणं सोपद्रवमातुरं भिषगसाध्योऽयमतिसार इत्युक्त्वा प्रत्याचक्षीत प्रत्याख्यानं कुर्य्यादिति। कैर्वर्णैरित्यत आह—तद्‌ यथेत्यादि। क्वाथेत्यादि। नानौषधिनिष्पचनकृतः कषायः क्वाथः। तत्क्वाथाभं शोणिताभञ्च, कश्चिदाह क्वाथवर्णरूपशोणिताभं यकृत्पिण्डोपमं कृष्णलोहितं मेदोमांसोदकसदृशं मेदःसदृशं मांसोदकसदृशं दध्याद्याभं वेशवारो "निरस्थि पिशितं स्विन्नं पिष्टं गुड़घृतान्वितम्। कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः" इति। अतिनीलादिकम् उदकमिव पुनर्मेचकाभं वा मेचकं खञ्जनवक्षःस्थकृष्णपिण्डाभं नीलकषायवर्णं नानौषधिकषायाभम्

भवति तथा प्रदूषयन्त इत्यर्थः। मांसधावनं मांसप्रक्षालनोदकम्। समासव्यत्यासादुपवेश्यत इति समासो यथोक्तलक्षणानां मेलकः। सकृदिति कदाचित्। विहतमुखरसः इति विरसमुखः। एभिर्वक्ष्यमाणैः। वेसवाराभं वेसवारसदृशं, तल्लक्षणञ्च निरस्थि पिशितं पिष्टमित्यादिना

* अतिप्रदुष्टेषु इति बहुषु ग्रन्थेषु पाठः। † सकृदपि इति चक्रधृतः पाठः।

गतम् अतिकुणपपूतिपूयगन्ध्याममत्स्यगन्धि मक्षिकाक्रान्तं कुथितं वा बहुधातुस्रावमल्पपुरीषं बहुपुरीषं वातिसार्य्यमाणम् तृष्णादाहज्वरभ्रमतमोहिक्काश्वासानुबन्धम् अतिवेदनम् अवेदनं वा स्रस्तपक्वगुदं पतितगुदवलिं मुक्तनालमतिक्षीणबलमांस-शोणितं सर्व्वपर्व्वास्थिशूलिनम् अरोचकारतिप्रलापसम्मोह-परीतं सहसोपरतविकारमतिसारिणम् अचिकित्स्यं विद्यात्। इति सन्निपातातिसारः ॥ ११ ॥

तमसाध्यमसाध्यताम् असंप्राप्तं चिकित्सेत् यथाप्रधाने-नोपक्रमेण हेतूपशयदोषविशेषपरीक्षया चेति ॥ १२ ॥

उक्तं प्राक्, इह नीलिनीपत्रकषायवर्णं विज्ञेयम्। कर्व्वूरवर्णं नानावर्णमिश्रम्। तन्तुमत् तन्तुलीभूतं चन्द्रकोपगतं शिखिपिच्छाभचन्द्रकमिश्रम्। अतिकुणप-गन्धि कुणपं शवः। पूतिगन्धि च पूयगन्धि च आममत्स्यगन्धि च कुथितः पूतिगन्धिर्बहुस्रावोऽथ चाल्पपुरीषं बहुपुरीषं वातिसार्य्यमाणं नरं तृष्णाद्यनु-बन्धं स्रस्तं वाहिर्निःसृतमथ च पक्वं गुदं यस्य तम्, पतितगुदवलिं वाहिः निःसृत्यावस्थितैव न पुनः स्वस्थानप्रविष्टा गुदवलिर्यस्य तम्, मुक्तनालं श्लथीभूतं सन्मुक्तं वहिर्निःसृतं गुदनालं पुरीषप्रवृत्तिस्रोतो यस्य तं सहसा हठादुपरताः सर्व्वविकारा यस्य तम्। ईदृशमतिसारिणमचिकित्स्य-मसाध्यं विद्यात्। इति सन्निपातातिसार उक्तः ॥ ११ ॥

गङ्गाधरः—इतीत्यादि। योऽतिसारस्त्वसाध्यः तमतिसारमसाध्यताम् असंप्राप्तं सन्निपातातिसारञ्च चिकित्सेत्। यथाप्रधानेन यत्र यत्रातिसारे यो दोषः प्रधानस्तमनतिक्रम्योपक्रमेण हेत्वादिपरीक्षया च चिकित्सेदिति। इति चत्वारोऽतिसारा व्याख्याताः। अष्टोदरीये तु पूर्व्वमुक्तं षड़तीसाराः। षड़तीसारा इति वातपित्तकफसन्निपातभयशोकजा इति ॥ १२ ॥

उक्तम्। मेचकाभमिति स्निग्धकृष्णम्। मक्षिकाक्रान्तमिति मक्षिकामयं, मक्षिकाक्रान्त इति पाठे मक्षिकापरीत इत्यर्थः। तृष्णेत्यादिना सोपद्रवलक्षणसूचकानुपद्रवानाह सहसोपरतविकारमिति ॥ ११ ॥

चक्रपाणिः—यद्यपि रिष्टे संशयितमरणमुक्तं तथापि इहातीसारं प्राप्य निश्चितमरणज्ञापकतया उच्यते, यथाप्रधानोपक्रमेणेति दोषत्रये यः प्रधानो भवति तस्योपक्रमेणेत्यर्थः। हेत्वादिपरीक्षा चेह भवति। अत विशिष्टा चिकित्सैवोच्यते ॥ १२ ॥

भवन्ति चात्र ।

**आगन्तू द्वावतीसारौ मानसौ भयशोकजौ ।**
**यौ तयोर्लक्षणं वायोर्यदतीसारलक्षणम् ॥ १३ ॥**
**मारुतो भयशोकाभ्यां शीघ्रं हि परिकुप्यति ।**
**तयोः क्रिया वातहरी हर्षणाश्वासनानि च ॥**

गङ्गाधरः—शेषौ पुनः कीदृशौ भवत इत्याशङ्क्याह—भवन्ति चात्रेत्यादि । चत्वारो दोषजा अतीसारा द्वौ चातीसारावागन्तुजौ भवतस्तौ तु मानसौ मनोदोषजौ भयशोकजौ यौ तौ द्वौ तयोर्लक्षणं वायोरतीसारलक्षणम् ॥ १३ ॥

गङ्गाधरः—कस्मात् ? मारुत इत्यादि । हि यस्माद्भयशोकाभ्यां मारुतः शीघ्रं परिकुप्यति । ततस्तयोर्भयशोकजयोरतिसारयोः क्रिया यावती वातहरी तावती कार्य्या, हर्षणाश्वासनानि च कार्य्याणि । इत्येवं चेत्, तर्हि कथं मानसावेतौ शारीरदोषवातलक्षणौ वातक्रियाप्रशाम्यौ चेति ? उच्यते, मानसदोषौ रजस्तमसी ताभ्यां भयश्च शोकश्च, ततो मानसौ भयशोकौ हेतुपूर्व्वमतिसाराय भवत इति पूर्व्वं मानसहेतुभ्यां भयशोकाभ्यां जातौ पश्चाद्वातेनानुबध्येते तस्माच्छारीरव्याधावुपात्तौ वातहरक्रिया मानसदोषहरहर्षणाश्वासनानि च विधीयन्त इति ।

अथात्र जिज्ञास्यम् । इह तन्त्रे भयजोऽतिसार उक्तो न त्वामजः, सुश्रुतादौ त्वामज उक्तो न भयज इति षड्धा त्वभङ्ग इति । अत्रोच्यते । सुश्रुते वातपित्तकफसन्निपातशोकजानतीसारानुक्त्वामज उक्तः । "आमाजीर्णैः प्रद्रुताः क्षोभयन्तः कोष्ठं दोषाः सम्प्रदुष्टाः सभक्तम् । नानावर्णं नैकशः सारयन्ति

चक्रपाणिः—आगन्तू इत्यादिना भयशोकजावतीसारौ प्राह । आगन्तू इति आगन्तुजनितभयशोकजौ । मानसाविति मानसदोषभयशोकजनितौ । एतेन मानसत्वञ्चानयोर्न विरोधीभवति, अनयोर्लक्षणम् अतिदेशेनाह—तयोर्लक्षणमित्यादिना ॥ १३ ॥

चक्रपाणिः—कस्मात् पुनर्वातातिसारलक्षणमनयोर्भवतीत्याह—मारुत इत्यादि । यस्मात् भयशोकजनितोऽत्र मारुतः कारणं भवति तस्माद् वातातीसारलक्षणानि भवन्तीति युक्तमित्यर्थः । न चानयोर्वातजन्यत्वेन वातजलक्षणयुक्तत्वेन वातजेनैव ग्रहणमिति वाच्यम् । यतोऽनयोर्वातजाद् भिन्नापि चिकित्सा भविष्यति, हर्षणाश्वासनरूपाचिकित्साभेदार्थं व्याधीनां भेदोऽभिधीयते । किञ्च लक्षणभेदोऽप्यत्र वातः शीघ्रं हि परिकुप्यतीति इत्यनेनोक्तः । यतो भयशोकजेऽतीसारे शीघ्रकारी वायुर्भवतीति शीघ्रं हि परिकुप्यतीति पदेनोच्यते न निदानान्तरं, सन्निपातातिसारे न भयशोकौ कारणत्वेनोक्तौ हेत्वन्तरसहितौ अत्र कारणे भवत इति । त्रिदोषजभयशोकजयोश्च यद्यपि तुल्यं

इत्युक्ताः षड़तीसाराः साध्यानां साधनं ततः ।
प्रवक्ष्याम्यनुपूर्व्वेण यथावत् तन्निबोधत * ॥ १४ ॥

कृच्छ्राज्जन्तोः षष्ठमेनं वदन्ति ।" इति त्रिदोषजत्वेनोक्त आमातिसार आमपाचनप्रधानचिकित्सार्थं पृथगुक्तः, भयजस्तु वातजत्वेन वातजेऽन्तर्भूय षष्ठत्वेनैवामज उक्तः। एवमेव हेतुप्रधानत्वेनापरानप्यतीसारानुक्त्वा दोषजेऽन्तर्भावस्तेषां कृतः। तद् यथा—सुश्रुते। "शरीरिणामतीसारः सम्भूतो येन केनचित्। दोषाणामेव लिङ्गानि कदाचिन्नातिवर्त्तते। स्नेहाजीर्णनिमित्तस्तु बहुशूलप्रवाहिकः। विसूचिकानिमित्तस्तु चान्योऽजीर्णनिमित्तजः। विषार्शःक्रिमिसम्भूतो यथास्वदोषलक्षणः। आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः। अतः सर्व्वातिसारास्तु ज्ञेयाः पक्वामलक्षणैः।" इति सर्व्वातिसारेष्वामता वर्त्तते. तत आमजोऽतिसारो यत् पृथगुक्तस्तदाममन्नं दोषदूषितमतिसाराय कल्पते न त्वामावस्थिकातिसार आमारब्ध इति। इह तन्त्रे त्वामाजस्नेहाजीर्णजादयो दोषप्रकोपपूर्व्वकमेवामान्नादयोऽतिसारं जनयन्तीति न हेतुभेदेन भेदः कृतः दोषभेदेनैव चरितार्थत्वात्। भयशोकजयोस्तु मानसधर्म्मान्तरयोगाद् दोषजत्वेऽपि पृथगुक्तिरिति, नैवमामजादीनां धर्म्मान्तरयोगोऽस्तीति बोध्यम्।

अथात्रापरं जिज्ञास्यं—दोषजेषु यथा सन्निपातज उक्तो न कथं तथा द्वन्द्वजा उक्ता इति? तत्रोच्यते, दोषभेदास्त्रिषष्टिविधा उक्ताः सर्व्वे विकारा दोषजास्त्रिषष्टिविधा एव जायन्ते, तत्र पृथग्दोषजलक्षणानि प्रतिरोगं परस्परभेदज्ञानार्थमवश्यवाच्यानि भवन्ति, द्वन्द्वसन्निपातास्तु यत्र दोषकर्म्मविरोधिकर्म्मवत्त्वेन द्वन्द्वसन्निपातजरोगा जायन्ते तत्र तत्तत्कर्म्मज्ञानार्थं पृथग्दोषजमुक्त्वा पृथगुच्यन्ते द्वन्द्वजाः सन्निपातजाश्च। यत्र दोषकर्म्मसजातीयकर्म्मवत्त्वेन द्वन्द्वजाः सन्निपातजा वा जायन्ते तत्र पृथग्दोषज-

लक्षणमिहोक्तं तथापि चिकित्साभेदात् तयोर्भेद उक्तः, तथाहि भयजे प्रश्वासनं शोकजे हर्षणम् इति चिकित्साभेदः। चिकित्साभेदोऽस्तु, सुश्रुते तु—"तैस्तैर्भावैः शोचतोऽल्पाशनस्य वाष्पोष्मा वै वह्निमाविश्य जन्तोः" इत्यादिना शोकजः प्रबन्धेनोक्तः, स तु शोकजादन्य एव विशिष्टहेतुजन्यः। इह त्वसौ सान्निपातिकेनावरुद्धो ज्ञेयः। तथाहि तत्र वाष्पोष्मणो हि पित्तकारणत्वं युक्तं

* "निबोधत" इति बहुवचनन्तु एकस्याप्यग्निवेशस्य समादरगौरवे इति केचित्। क्रियासमभिहारे लोट् "त" इत्यपरे। केचित् साहसिकास्तु "निबोध मे" इति पठन्ति।

दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः ।
अतीसाराय कल्पन्ते भूयस्तान् संप्रवर्त्तयेत् ॥
न तु संग्रहणं देयं पूर्व्वमामातिसारिणे ।
दोषा ह्यादौ बध्यमाना जनयन्त्यामयान् बहून् ॥
शोथपाण्डामयप्लीह-कुष्ठगुल्मोदरज्वरान् ।
दण्डकालसकाध्मान-ग्रहण्यर्शोगदांस्तथा ॥ १५ ॥

लक्षणवचनेनैव ते जायन्ते तत्र न द्वन्द्वजाः सन्निपातजा वा पृथगुच्यन्ते। तस्मादिह द्वन्द्वजेषु दोषकर्म्मविरोधिकर्म्माणि न भवन्तीत्यतो द्वन्द्वजा नोक्ताः। सन्निपातजेषु दोषकर्म्मविरुद्धकर्म्माणि भवन्तीति पृथगुक्तः सन्निपातजोऽतिसारः। इत्येवं सर्व्वत्र बोध्यम्। उपसंहरति—इत्युक्ता इत्यादि। साध्यानामतीसाराणाम् ॥ १४ ॥

गङ्गाधरः—दोषा इत्यादि। यस्य नरस्य सन्निचिता दोषा विदग्धाहारमूर्च्छिताः कुपिता अतिसाराय कल्पन्ते, तान् विदग्धाहारमूर्च्छितान् दोषान् भूय एव प्रवर्त्तयेत् स्वत एव यत् प्रवर्त्तन्ते तन्न संगृह्णीयात्। तदाह—न त्वित्यादि। आमातिसारिणे पूर्व्वं न संग्रहणं स्तम्भनमौषधं देयम्। कस्मात्? दोषा हीत्यादि। हि यस्मात् आदौ खल्वामावस्थायां स्थिताः शेषदोषा बध्यमानाः कृतबन्धा बहूनामयान् जनयन्ति। यांस्तानाह—शोथेत्यादि ॥ १५ ॥

तेन शोकानलजो वायुः बाष्पोष्मणा च पित्तकफाविति तत्र कारणत्वेन दर्शितौ। अत एव च तस्यासाध्यत्वं तत्रोक्तम्, अत्रापि च त्रिदोषजे शोकोऽपि कारणत्वेनोक्तः। सुश्रुते अजीर्णात् प्रहता इत्यादिनाजीर्णजः पृथगुक्तः। तस्य इह उक्तत्रिदोषजे अनुबन्धो व्यक्त एव। यत् तत्रैव दोषा इति बहुवचनेन अत्राजीर्णस्य त्रिदोषजत्वमुक्तम् इहापि च व्यापन्नेऽग्नावित्यनेन अग्निमान्द्यजनिताजीर्णं त्रिदोषजातिसारे कारणमेव, तेन सुश्रुतोक्तसर्व्वातिसाराविरोधोऽत्र ज्ञेयः ॥ १४ ॥

चक्रपाणिः—दोषाः सन्निचिता इत्यादिना चिकित्सामाह। विदग्धशब्देनात्राविपक्काहारवाचिना चतुर्व्विधमप्यामं विदग्धं विष्टब्धं रसशेषञ्चाजीर्णं गृह्यते। सम्प्रवर्त्तयेदित्यनेन स्वयं प्रवर्त्तमानस्य दोषस्य अपेक्षया प्रवर्त्तनम्। तथा स्तोकं वहत् विरेचनयोगात् प्रवर्त्तयेत्। यद् वक्ष्यति "कृच्छ्रं वा वहतां दद्यात् अभयां सम्प्रवर्त्तिनीम्" इति।" "न तु संग्रहणं पूर्व्वं देयमामातिसारिणे" इत्यत्र पूर्व्वमिति विशेषणेन उत्तरकालमामातीसारे संग्रहणं दर्शयति।

तस्मादुपेक्षते क्लिष्टान् वर्त्तमानान् स्वयं मलान्।
कृच्छ्रं वा वहतां दद्यादभयां संप्रवर्त्तिनीम्॥
तथा प्रवाहिते दोषे प्रशाम्यत्युदरामयः।
प्रमथ्यां मध्यदोषेभ्यो दद्याद् दीपनपाचनीम्॥ १६॥
जायते देहलघुता जठराग्निश्च वर्द्धते।
लङ्घनञ्चाल्पदोषाणां प्रशस्तमतिसारिणाम्॥ १७॥

गङ्गाधरः—तस्मादित्यादि। तस्मात् आमातिसारस्तम्भने शोथादि-रोगोत्पादात् स्वयं प्रवर्त्तमानानुत्क्लिष्टान् मलानुपेक्षेत। यदि तत्र स्वयं प्रवर्त्तमाना मलाः कृच्छ्रेण स्वल्पं स्वल्पं वहति तदा तस्य प्रवर्त्तिनीं हरीतकीं कल्कादिकल्पनया दद्यात्। तया हरीतक्या प्रवाहिते दोष उदरामयोऽतिसारः प्रशाम्यति॥ १६॥

गङ्गाधरः—ततः किं कुर्य्यादित्यत आह—प्रमथ्यामित्यादि। मध्यदोषेभ्यो नरेभ्यः प्रमथ्यां दद्यात्। प्रमथ्या नाम सा या दीपनपाचनी। तां प्रमथ्यां दद्यादिहैवेयं प्रमथ्यासंज्ञा कृता। अल्पदोषाणामतिसारिणां लङ्घनं प्रशस्तमिति॥ १७॥

प्रथमञ्चामातीसारस्यापेक्षया विरेचनदानं युक्तम् इति विरोधे इयं व्यवस्था—यत् प्रवृत्ते आमे बलवति च पुरुषे प्रवर्त्तनमेव कर्त्तव्यम्, यदा तु दुर्बलः पुमान् क्षीणश्चामस्तदा प्रथमं प्रवर्त्तनं कृत्वा संग्रहणं कर्त्तव्यम्। तस्याम् आमावस्थायां संग्रहणे आतुरस्य बलभ्रंशात् मरणमेव स्यात्। अन्ये तु पूर्व्वं संग्रहणं न देयम् इति शाल्मलकुटजत्वगादिसंग्रहणं न देयम्, मुस्तोदीच्यादिपाचनसंग्रहणं देयमिति वर्णयन्ति। इयञ्चामातिसारचिकित्सा सर्व्वामातिसाराणां साधारणी ज्ञेया॥ १५॥

चक्रपाणिः—कृच्छ्रं वा वहतामिति सप्रबन्धं वहताम्। प्रमथ्यामिति पाचनीयदीपनीयं कषायम्। प्रमथ्याशब्दो हि वृद्धपरम्परया वैद्यकशास्त्रपरिभाषया पाचनदीपनकषाये श्रूयते; यथा विडङ्गकषायः शैखरिककषायशब्देन वद्यै रुच्यते। बहुदोषे प्रवर्त्तनं तथा मध्यदोषे प्रमथ्योक्ता॥ १६

चक्रपाणिः—अल्पदोषे च सामे प्रथमं कर्त्तव्यमाह—लङ्घनमित्यादि॥ १७॥

पिप्पली नागरं धान्यं भूतीकमभया वचा ।
ह्रीवेरं भद्रमुस्तानि विल्वनागरधान्यकम् ॥
पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका ।
तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम् ॥
वचाप्रतिविषाभ्यां वा मुस्तपर्पटकेन वा ।
ह्रीवेरशृङ्गवेराभ्यां पक्वं वा दापयेज्जलम् ॥ १८ ॥
युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ।
तथा स शीघ्रं प्राप्नोति रुचिमग्निबलं बलम् ॥ १९ ॥
तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा ।
सुरया मधुना वादौ यथासात्म्यमुपाचरेत् ॥

गङ्गाधरः—प्रमथ्यायोगानाह—पिप्पलीत्यादि। वचान्ता धान्यकान्ता कण्टकारिकान्ता चेति तिस्रः प्रमथ्याश्चूर्णकषायादिकल्पनया विहिताः। वचेत्यादि। अतिसारिणे पिपासवे वचादिभ्यां द्वाभ्यां द्वाभ्यामर्द्धशृतं जलं दापयेत्। इत्येताश्च प्रमथ्यास्तिस्रः ॥ १८ ॥

गङ्गाधरः—युक्ते इत्यादि। इत्येवं प्रमथ्यायोगे क्षुत्क्षामं क्षुधया क्षीणमतिसारिणमन्नकाले युक्ते लघून्यन्नानि भोजयेत्। तथा सति सोऽतिसारी शीघ्रं रुच्यादिकं प्राप्नोति ॥ १९ ॥

गङ्गाधरः—येन लघून्यन्नानि भोजयेत् तदाह—तक्रेणेत्यादि। तक्रादिना यथासात्म्यं भोजनमुपाचरेत्। अवन्तिसोमं काञ्जिकम्। ततः परं यत्

चक्रपाणिः—तिस्रः प्रमथ्या इति यथाक्रमं कफपित्तवातेषु विभज्य देया इति वदन्ति। तथा वचाप्रतिविषादिभिः विहितानि त्रीण्यपि जलानि कफपित्तवातेषु यथाक्रमं वदन्ति। षडङ्गविधिनात्र जलसाधनं ज्ञेयम् ॥ १८ ॥

चक्रपाणिः—युक्तेऽन्नकाले इति सम्यग्बुभुक्षाकाले। अवन्तिसोमं काञ्जिकम्। तक्रादीनां द्रवाणां तर्पणादीनाम् आलोडनार्थमिहाभिधानम् ॥ १९ ॥

यवागूभिर्विलेपीभिः खड़ैर्यूषै रसौदनैः।
दीपनग्राहिसंयुक्तैः क्रमश्च स्यादतः परम्॥ २०॥
शालपर्णी पृश्निपर्णी वृहती कण्टकारिका।
बलाश्वदंष्ट्राविल्वानि पाठानागरधान्यकम्॥
शटीं पलाशं हवुषां वचाजीरकपिप्पलीः।
यमानीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्॥
वृक्षाम्लं दाड़िमञ्चाम्लं सहिङ्गु विड़सैन्धवम्।
प्रयोजयेदन्नपाने विधिना सूपकल्पितम्॥
वातश्लेष्महरो ह्येष गणो दीपनपाचनः।
ग्राही बल्यो रोचनश्च तस्माच्छस्तोऽतिसारिणाम्॥ २१॥
आमे परिणते यस्तु विबद्धमतिसार्य्यते।
सशूलपिच्छमल्पाल्पं बहुशः सप्रवाहिकम्॥

तदाह—यवागूभिरित्यादि। अतस्तक्रादिना यथासात्म्यभोजनात् परम्। यवागूरिह पेया षड्गुणतोयसाधिता। विलेपी नाम यवागूश्चतुर्गुणतोयसाधिता। खड़ो यूषो निरम्लः। रसौदनो लघुमांसरससाधितः। दीपनग्राहिसंयुक्तैरेतैर्यवाग्वादिरसौदनान्तैर्भोजनक्रमः स्यादिति॥ २०॥

गङ्गाधरः—दीपनग्राहिद्रव्याण्याह—शालपर्णीत्यादि। शालपर्ण्यादीनामन्यतमद्रव्यं समस्तं वातिसारेष्वन्नपाने विधिना सूपकल्पितं प्रयोजयेत्। गणोक्तानां यथालाभं प्रयोगात्॥ २१॥

गङ्गाधरः—आम इत्यादि। इत्येवमामातिसारपरिपाके जाते यस्तु विबद्धा-

चक्रपाणिः—यवागूर्विरलद्रवा विलेपी बहुसिक्था च। रसादिसंस्कृताः घनरसौदनाः। प्रलेह्या व्यञ्जनविशेषाः। दीपनग्राहिगणौ षड्विरेचनशताश्रितीयोक्तौ। अतः परमिति यवाग्वाद्युपचारानन्तरम्॥ २०॥

चक्रपाणिः—शालीपर्णीत्यादिना यवाग्वादिसंस्कारद्रव्याण्याह॥ २१॥

चक्रपाणिः—सप्रवाहिकमित्यस्य प्रवाहिकालक्षणम् 'वायुर्विवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य। प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः।' इत्यनेन

तं मूलकानां यूषेण बदराणामथापि वा ।
उपोदिकायाः क्षीरिण्या यमान्या वास्तुकस्य च ॥
सुवर्च्चलायाश्चञ्चोर्वा शाकेनावल्गुजस्य वा ।
शट्याः कर्कारुकाणां वा जीवन्त्याश्चिर्भटस्य च ॥
लोणिकायाः सपाठायाः शुष्कशाकेन वा पुनः ।
दधिदाड़िमसिद्धेन बहुस्नेहेन भोजयेत् ॥ २२ ॥
कल्कः स्याद् बालबिल्वानां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लः स्नेहाढ्यः खड़ो हन्यात् प्रवाहिकाम् ॥२३॥
यवानां मुद्गमाषाणां शालीनाञ्च तिलस्य च ।
कोलानां बालबिल्वानां धान्ययूषं प्रकल्पयेत् ॥
ऐकध्यं यमके भृष्टं दधिदाड़िमसाधितम् ।
वर्च्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥

दिकमतिसार्य्यते तं मूलकानां शुष्काणां यूषेण शुष्कबदरेण वा सिद्धेन यूषेण वा भोजयेत् । उपोदिकाद्यन्यतमपत्रशाकेन दधिदाड़िमरससिद्धेन बहुस्नेहेन सिद्धेन भोजयेत् । क्षीरिणी स्वनामख्याता फलिनीप्रोक्ता । सुवर्च्चला सूर्य्यभक्ता । चञ्चुः पञ्चाङ्गुल एरण्डः । कर्कारुकाणां कर्कटीजातीनाम् । चिर्भटो गोरक्षकर्कटी । लोणिका अम्ललोणिका चाङ्गेरी । शुष्कशाकं पट्टपत्रं नालिताशाकमिति लोके ॥ २२ ॥

गङ्गाधरः—कल्क इत्यादि । बालबिल्वनिस्तुषतिलयोः कल्कः समभागः । अम्लो दधिसरः । स्नेहाढ्यः सर्पिरादिस्नेहबहुलः एव खड़ः मुद्गादि-यूषः प्रवाहिकां हन्यात् । अतिसारे कुन्थनं हन्यात् ॥ २३ ॥

गङ्गाधरः—यवानामित्यादि । यवादीनि सर्व्वाणि ऐकध्यमेकीकृत्य यथार्हम्

सुश्रुतोक्तं ज्ञेयम् । क्षीरिणी त्वग्निका, सुवर्च्चला सूर्य्यभक्ता, चञ्चुर्नाड़ीचः, कर्कारुः कुष्माण्डभेदः, चिर्भटः कर्कटी, लोणिका स्वनामख्याता, शुष्कशाकं रूक्षदेशजं शाकमित्येके ॥ २२ ॥

चक्रपाणिः—कल्कः स्यादित्यादेना खडम् ॥ २३ ॥

चक्रपाणिः—धान्ययूषमिति धान्यप्रधानं यूषं यथोक्तमेव । यमक इति घृततैले । दधि-

दध्नः सरं वा यमके भृष्टं सगुड़नागरम्।
सुरां वा यमके भृष्ट्वा व्यञ्जनार्थे प्रयोजयेत्॥
फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा।
लोपाकरसमम्लं वा स्निग्धाम्लं कच्छपस्य वा॥
वर्हितित्तिरिदक्षाणां वर्त्तकानां तथा रसः।
स्निग्धोष्णाः शालयश्चाग्र्या वर्च्चःक्षयरुजापहाः॥
अन्तराधिरसं पूत्वा रक्तं मेषस्य चोभयम्।
पचेद् दाड़िमसाराम्लं सधान्यस्नेहनागरम्॥
भोजने रक्तशालीनां तेनाद्यात् प्रपिबेच्च तम्।
तथा वर्च्चःक्षयकृतैर्व्याधिभिर्विप्रमुच्यते॥ २४॥

अष्टादशगुणे तोये चतुर्द्दशगुणे वा धान्ययूषं शूकधान्यशमीधान्ययूषं तं यूषं दधिदाड़िमरसेन साधितं पक्वं यमके घृततैले सम्भृष्टं प्रकल्पयेत्। वर्च्चःक्षयेऽतिसारेण पुरीषक्षये शुष्कमुखं तं नरं तेन यूषेण शाल्यन्नं भोजयेत्। दध्न इत्यादि। सगुड़नागरं दध्नः सरं यमके भृष्टं वा यमके सुरां वा भृष्ट्वा व्यञ्जनार्थे प्रयोजयेत्। फलाम्लमित्यादि। फलाम्लं तिन्तिड़िकादि-फलाम्लं यमके भृष्टं गृञ्जनकस्य पलाण्डुविशेषस्य गाँजोर इति ख्यातस्य यूषं लोपाकस्य क्षुद्रशृगालस्य मांसरसमामलकाद्यम्लेनाम्लीकृतं कच्छपस्य मांसरसं घृतादिना स्निग्धमामलकाद्यम्लेनाम्लीकृतम् व्यञ्जनार्थे प्रयोजयेत्। वर्हीत्यादि। एवं वर्हिप्रभृतीनां मांसरसः स्निग्धोष्णाश्च ये शालयोऽग्र्याः श्रेष्ठास्ते वर्च्चःक्षयरुजापहाः। अन्तराधिरसमित्यादि। मेषस्यान्तराधेः मध्य-देहस्य मांसरसं पक्त्वा पूत्वा मेषस्य रक्तञ्चेत्युभयं पचेत्। आसन्नपाके दाड़िमसारस्य वीजस्याम्लं रसं धान्यकचूर्णनागरचूर्णमनुरूपं प्रक्षिप्य

दाड़िमसाराभ्यां संस्कृतं दधिदाड़िमसाधितम्। शालीनां यद्यपि बद्धवर्च्चस्त्वम् उक्तं तथापीह खड्यूषविशेषयुक्तानां शालीनां वर्च्चःक्षये हितत्वं दर्शयन्नाह—स्निग्धाम्लाः शालयश्चाग्र्या वर्च्चःक्षयरुजापहा इति। तेनाद्यात् प्रपिबेच्च तमिति उक्तविधानकृतेन द्रवेण संदिह्यात्। पृथक् द्रवं पिबेत् वर्च्चःक्षयकृतैः मुखशोषदौर्बल्योदावर्त्तादिभिः॥ २४॥

गुदनिःसरणे शूले पानमम्लस्य सर्पिषः ।
प्रशस्यते निरामाणामथवाप्यनुवासनम् ॥ २५ ॥
चाङ्गेरीकोलदध्यम्ल-नागरक्षारसंयुतम् ।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥ २६ ॥

चाङ्गेरीघृतम् ।

सचव्यपिप्पलीमूलं सव्योषगुड़दाड़िमम् ।
पेयमम्लघृतं युक्त्या साजाजीधान्यनागरम् ॥ २७ ॥

गुदभ्रंशे चव्यादिघृतम् ।

दशमूल्युपसिद्धं * वा सबिल्वमनुवासनम् ।
शटीशताह्वाकुष्ठैर्वा वचया चित्रकेण वा ॥ २८ ॥

घृतादिस्नेहे भृष्टमित्येवं सधान्यस्नेहनागरं पचेत् । तेन रक्तशालीनामन्नं भोजनेऽद्यात् तच्चानुप्रपिबेत् । तथा सतीत्याद्याशोः ॥ २४ ॥

गङ्गाधरः—गुदेत्यादि । अतिसारे प्रवाहणेन गुदनिःसरणे शूले चाम्लस्य सर्पिषः दाड़िमामलकाद्यम्लेन साधितस्य सर्पिषः पानं प्रशस्यते । निरामाणामनुवासनं वा प्रशस्यते ॥ २५ ॥

गङ्गाधरः—चाङ्गेरीत्यादि । चाङ्गेरीकोलादिकं घृतेऽम्लयोग्यं दत्त्वा चतुर्गुण-जल उत्क्वथितं घृतं गुदभ्रंशरुजापहं पेयम् । इति चाङ्गेरीघृतम् ॥ २६ ॥

सचव्येत्यादि । चव्यादिकल्कं दध्याद्यम्लेनाम्लीकृतं घृतं साजाजीधान्य-नागरचूर्णं प्रक्षिप्य पेयं गुदभ्रंशरुजापहम् ॥ २७ ॥

गङ्गाधरः—अम्लघृतमुक्त्वानुवासनमाह—दशमूलीत्यादि । ( दशमूल्या आपो दशमूल्यपस्तेन सिद्धं ) बालबिल्वकल्केन दशमूलीक्वाथेन उपसिद्धं घृतमनुवासनं गुदभ्रंशे स्यात् । शटीशताह्वाकुष्ठैः सिद्धं घृतं वा गुदभ्रंशे

चक्रपाणिः—सूत्रितमम्लघृतमाह । अत्र चाङ्गेरीरसकोलरसदधिभिर्द्रवत्वं नागरक्षारयोश्च कल्कत्वम् ॥ २५ । २६ ॥

चक्रपाणिः—पेयमम्लं घृतमित्यत्र अम्लार्थम् अनन्तरोक्तमेव द्रवं चाङ्गेरीस्वरसादि देयम् । चव्यादयश्च दश कल्काः । उक्तञ्च तन्त्रान्तरे—"पञ्चकोलबिड़ाजाजीधान्यदाड़िमवेतसैः । पचेदम्लं घृतं तद्वत् नागरक्षारसंयुतम् ॥" इति ॥ २७ ॥

चक्रपाणिः—दशमूलोपसिद्धमित्यादौ अनुवासनमित्यानुवासनस्नेहः । अत्रानुवासने स्नेहस्तु तैलमेव ; अन्ये तु घृतस्य प्रकान्तत्वात् घृतमेवाहुः । शट्यादिनाप्यनुवासने स्नेहत्रयमुच्यते ॥ २८ ॥

* दशमूल्युपसिद्धमिति क्वाचित्कः पाठः ।

स्तब्धे भ्रष्टे गुदे पूर्व्वं स्नेहस्वेदौ प्रयोजयेत्।
सुस्विन्नं तं मृदूभूतं पिचुना संप्रवेशयेत् ॥ २९ ॥
विबद्धवातवर्च्चास्तु बहुशूलप्रवाहिकः।
सरक्तपिच्छस्तृष्णार्त्तः क्षीरसौहित्यमर्हति ॥
यमकस्योपरि क्षीरं धारोष्णं वा पिबेत् स ना।
शृतमेरण्डमूलेन बालविल्वेन वा पुनः ॥
एवं क्षीरप्रयोगेण रक्तं पिच्छा च शाम्यति।
शूलं प्रवाहिका चैव विबन्धश्चोपशाम्यति ॥ ३० ॥

पित्तातिसारं पुनर्निदानोपशयाकृतिभिरामान्वयमुपलभ्य यथाबलं लङ्घनपाचनाभ्यामुपाचरेत्। तृष्यतस्तु मुस्तपर्पटकोशीर-

अनुवासनम्, वचया सिद्धं घृतं चित्रकेण वा सिद्धं घृतमनुवासनं गुदभ्रंशे स्यादिति ॥ २८ ॥

गङ्गाधरः—स्तब्ध इत्यादि। गुदं भ्रष्टं सद् यदि स्तब्धमप्रविष्टं भवति तदा तत्र गुदे पूर्व्वं स्नेहस्वेदौ प्रयोजयेत्। तं सुस्विन्नं गुदं मृदूभूतं पिचुना तूलकनिर्म्मितेन पत्राकारेणावेष्ट्य धृत्वा प्रवेशयेत् ॥ २९ ॥

गङ्गाधरः—विबद्धेत्यादि। अतीसारी विबद्धवातवर्चा बहुशूलप्रवाहिकस्तु सरक्तपिच्छां विसृष्टा तृष्णार्त्तश्च नरः क्षीरसौहित्यमातृप्ति क्षीरपाणमर्हति। स ना विबद्धवातवर्च्चःप्रभृतिः पुरुषः, यमकस्य मुद्गादिविदलं शाल्यादितण्डुल इत्युभयोर्मिलनेन पाकाद् यमकं नामौदनो भवति, तस्य भोजनादुपरि धारोष्णं क्षीरं वा पिबेत्। शृतमित्यादि। एरण्डमूलेन वा बालविल्वेन वा सिद्धं शृतं क्षीर पिबेत्। एषां क्षीराणां प्रयोगेण रक्तादिकं प्रशाम्यति ॥ ३० ॥

गङ्गाधरः—इति सामान्यतोऽतिसारचिकित्सितमुक्त्वा विशेषत आह—पित्तेत्यादि। निदानादिभिः पित्तातिसारमामान्वयमुपलभ्य यथाबलं लङ्घनं विधाय पाचनेनोपाचरेत्। तृष्यतः पित्तातिसारिणस्तु मुस्तादिभिः शृतः

चक्रपाणिः—पिचुना संप्रवेशयेदिति पिचुनाच्छादितं पीड़यित्वा प्रवेशयेत्। पिचुः स्थूलकर्पटिका ॥ २९ ॥

चक्रपाणिः—सौहित्यं तृप्तिः ॥ ३० ॥

चक्रपाणिः—आमान्वयम् इति आमयुक्तम्। लङ्घनपाचनाभ्याम् उपाचरेदित्यनेन यत् पूर्व्वम्

शारिवाचन्दनकिराततिक्तकोदीच्यवारिभिः उपचारः । लङ्घितस्य तस्य चाहारकाले बलातिबलासूर्य्यपर्णीशालपर्णीपृश्निपर्णीबृहती-कण्टकारिकाशतावरीश्वदंष्ट्रानिर्य्यूहप्रयुक्तेन यथासात्म्यं यवागू-मण्डादिना तर्पणादिना वा क्रमेणोपचारः । मुद्गहरेणुमसूरमुकुष्टा-ढकीयूषैर्वा लाव-कपिञ्जल-शश-हरिण-कालपुच्छरसैरीषदम्लै-रनम्लैर्वा क्रमशोऽग्निं सन्धुक्षयेत् । अनुबन्धे त्वस्य दीपनीय-पाचनीयोपशमनीयसंग्रहणीयान् योगान् प्रयोजयेदिति ॥ ३१ ॥

भवन्ति चात्र ।

सक्षौद्रातिविषं पिष्ट्वा वत्सकस्य फलत्वचम् ।
तण्डुलोदकसंयुक्तं पेयं पित्तातिसारनुत् ॥ ३२ ॥

वारिभिः पानादिषूपचारः कार्य्यः । लङ्घितस्य तस्य पित्तातिसारिणो बुभुक्षायामाहारकाले बलातिबलादिनिर्य्यूहैः प्रयुक्तेन सिद्धेन यथासात्म्यं यवागूमण्डादिना तर्पणादिना वा क्रमेणोपचारः कार्य्यः । ततोऽधिक-बुभुक्षायामन्नकाले मुद्गादियूषैर्वा लावादिमांसरसैर्वा ईषदम्लैरनम्लैर्वा भोज-यित्वा क्रमशोऽस्याग्निं सन्धुक्षयेत् । हरेणुर्वर्त्तुलकलायः । मुकुष्टको वनमुद्गः । कपिञ्जलः श्वेततित्तिरिः । कालपुच्छो हरिणविशेषः । अनुबन्धे निवृत्त-पित्तातिसारानुबन्धे खल्वस्यातिसारिणो दीपनीयान् दश पिप्पल्यादीन् पाचनीयान् जीवकादीन् उपशमनीयान् बालबिल्वादीन् संग्रहणीयान् पुरीषसंग्रहणीयान् वक्ष्यमाणान् योगान् प्रयोजयेत् । इति ॥ ३१ ॥

गङ्गाधरः—तान् दीपनीयादीनाह—भवन्ति चात्रेति । सक्षौद्रेत्यादि । वत्सकस्य फलञ्च त्वक् च तद्द्वयं सातिविषं तण्डुलोदकेन पिष्ट्वा सक्षौद्रं तेनैव तण्डुलोदकेन पेयमिति ॥ ३२ ॥

आमातिसारे सामान्यविधानमुक्तं तदिह नानुमन्यते । तत्र च प्रवर्त्तने क्रियमाणे अतियोगभयं स्यादिति भावः । यत् तु विरेचनमिह वक्तव्यं तत्र सामग्रीविशेषसम्पन्नाभाव एव । लङ्घितस्य चेत्यादौ सूर्प्यपर्णी मुद्गमाषपर्ण्यौ । निर्य्यूहशब्देन च षडङ्गविधानसिद्धं जलमुच्यते । यवाग्वादि-साधने तस्यैवाधिकारात् । अनुबन्धे त्वित्यादौ पित्तातिसारानुबन्धे । इमानिति वक्ष्यमाणान् ॥ ३१ ॥

चक्रपाणिः—फलत्वचं फलञ्च त्वक् चेति फलत्वचम् ॥ ३२ ॥

किराततिक्तकं मुस्तं वत्सकः सरसाञ्जनः।
विल्वं दारुहरिद्रा च ह्रीवेरं सदुरालभम् ॥
चन्दनश्चामृणालश्च नागरं लोध्रमुत्पलम्।
तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम् ॥
नागरं धातकीपुष्पमुत्पलं दाड़िमत्वचः।
कट्फलं नागरं पाठा-जम्ब्वाम्रास्थि दुरालभा ॥
योगाः षड़ेते सक्षौद्रास्तण्डुलोदकसंयुताः।
पेयाः पित्तातिसारघ्नाः श्लोकार्द्धं तु निदर्शिताः ॥ ३३ ॥
जीर्णौषधानां शस्यन्ते यथायोगोपकल्पितैः।
रसैः सांग्राहिकैर्युक्ताः पुराणा रक्तशालयः ॥ ३४ ॥
पित्तातिसारो दीप्ताग्नेः शीघ्रं समुपशाम्यति।
अजाक्षीरप्रयोगेण बलं वर्णश्च वर्द्धते ॥
बहुदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति।
पैत्तिको यद्यतीसारः पयसा तं विरेचयेत् ॥

गङ्गाधरः—किरातेत्यादि रसाञ्जनान्त एको योगः। विल्वादिदुरालभान्तो द्वितीयः। चन्दनादुत्पलान्तस्तृतीयः। तिलादुत्पलान्तश्चतुर्थः। नागरादिदाड़िमत्वगन्तः पञ्चमः। कट्फलादिदुरालभान्तः षष्ठः। सर्व्वे षड़ेते योगाश्चूर्णिताः क्षौद्रयुक्तास्तण्डुलोदकेन पेयाः। पीतानामेषां जीर्णत्वे यथायोगोपकल्पितैः सांग्राहिकैर्मांसरसैर्युक्ताः पुराणाः संवत्सरातीता रक्तशाल्यादयो भोजने शस्यन्ते ॥ ३३ । ३४ ॥

गङ्गाधरः—पित्तेत्यादि। एवं कृते दीप्ताग्नेर्नरस्य पित्तातिसारोऽजाक्षीरप्रयोगेण शीघ्रं समुपशाम्यति बलं वर्णश्च वर्द्धते। बहुदोषेत्यादि। बहुदोषस्य चैवं कृते दीप्ताग्नेरपि सप्राणस्य यदि पैत्तिकोऽतिसारो न तिष्ठति गतिनिर्वृत्तिमान न भवति तदा सप्राणं बलवन्तं तं पयसा विरेचयेत् न त्वबलम्।

चक्रपाणिः—अमृणालमुशीरम्। समङ्गा मञ्जिष्ठा, वराहकान्ता इत्यन्ये ॥ ३३ । ३४ ॥

पलाशफलनिर्य्यूहं पयसा सह ना पिबेत्।
ततोऽनु कोष्णं पातव्यं क्षीरमेव यथाबलम्॥
प्रवाहिते मले तेन प्रशाम्यत्युदरामयः।
पलाशवत् प्रयोज्या वा त्रायमाणा विशोधनी॥ ३५॥
सांसर्ग्यां ह्रियमाणायां शूलं यद्यनुवर्त्तते।
स्रुतदोषस्य तं शीघ्रं यथावदनुवासयेत्॥
शतपुष्पावरीभ्याञ्च पयसा मधुकेन च।
तैलपादं घृतं सिद्धं सविल्वमनुवासनम्॥ ३६॥
कृतानुवासनस्यास्य कृतसंसर्ज्जनस्य च।
वर्त्तते यद्यतीसारः पिच्छावस्तिरतः परम्॥

विरेचनमाह—पलाशेत्यादि। पलाशफलस्य निर्य्यूहं पयसा सह स ना पिबेत्। ततोऽनु यथाबलं कोष्णं क्षीरं तेन पातव्यमेव। मले तेन प्रवाहिते वेगेन विसृष्टे उदरामयः प्रशाम्यति। पलाशवदित्यादि। त्रायमाणा त्रायन्ती विशोधनी पलाशवत् प्रयोज्या। त्रायमाणां निःक्वाथ्य पयसा सह स बहुदोषो दीप्ताग्निः सप्राणः पूर्व्वक्रियाभिरनिवृत्तपित्तातिसारी पिबेत् ततोऽनु कोष्णं क्षीरं यथाबलं तेन पातव्यं, तेन प्रवाहिते मले सति उदरामयः प्रशाम्यतीति॥ ३५॥

गङ्गाधरः—सांसर्ग्यामित्यादि। एवंविरेचनेन सांसर्ग्यां शेषमलसंसर्गकर्म्मानिवृत्त्यां ह्रियमाणायां सत्यां स्रुतदोषस्य यदि शूलमनुवर्त्तते तदा स्रुतदोषं तं शीघ्रं यथावदनुवासयेत्। अनुवासनमाह शतपुष्पेत्यादि। वरी शतावरी। तैलं पादं यत्र तत्। घृताच्चतुर्थांशतिलतैलमेकीकृत्य शतपुष्पाशतावरीयष्टीमधुकबालविल्वानि पादकानि कल्कीकृत्य पयसा चतुर्गुणेन सिद्धमनुवासनं भवति॥ ३६॥

गङ्गाधरः—कृतेत्यादि। एतेन कृतानुवासनस्यास्य नरस्य कृतसंसर्ज्जनस्य च कृतभोजनस्य यद्यतीसारो वर्त्तते, तदा ततः परं पिच्छावस्तिर्विधीयते।

चक्रपाणिः—न तिष्ठति न निवर्त्तते। पलाशवदिति उक्तपलाशफलविधानेन॥ ३५॥

चक्रपाणिः—संसर्ग्यामिति पेयादिक्रमे। शतपुष्पेत्यादौ वरी शतावरी। अनुवासनं दद्यादिति शेषः॥ ३६॥

परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः।
कृष्णमृत्तिकयालिप्य स्वेदयेद् गोमयाग्निना॥
सुशुष्कां मृत्तिकां ज्ञात्वा तानि वृन्तानि शाल्मलेः।
शृते पयसि मृद्नीयादापोथ्योलूखले ततः॥
पिण्डं मुष्टिसमं प्रस्थे तत् पूतं तैलसर्पिषोः।
स्नेहितं मात्रया युक्तं कल्केन मधुकस्य च॥
वस्तिमभ्यक्तगात्राय दद्यात् प्रत्यागते ततः।
स्नात्वा भुञ्जीत पयसा जाङ्गलानां रसेन वा॥
पित्तातिसारज्वरशोफगुल्म-जीर्णातिसारग्रहणीप्रदोषान्।
जयत्ययं शीघ्रमतिप्रवृद्धान् विरेचनास्थापनयोश्च वस्तिः॥ ३७॥

इति पिच्छावस्तिः।

पिच्छावस्तिमाह—परिवेष्ट्येत्यादि। शाल्मलेरार्द्रवृन्तानि कुशैरार्द्रैः परिवेष्ट्य कृष्णमृत्तिकया चालिप्य गोमयाग्निना स्वेदयेत्। तामालेपनमृत्तिकां सुशुष्कां ज्ञात्वा शाल्मलेस्तानि वृन्तानि उलूखले तत आपोथ्य तत्पिण्डं मुष्टिसमं पलपरिमितं शृते पयसि प्रस्थे गोलनोचितं मृद्नीयात्। तद् वस्त्रेण पूतं तैलसर्पिषोर्मिलितयोर्मात्रया स्नेहयोग्यया मिश्रयित्वा स्निग्धीकृतं मधुकस्य कल्केन श्लक्ष्णपिष्टेन मात्रया युक्तमभ्यक्तगात्राय वस्तिं दद्यात्। ततः प्रत्यागते तस्मिन् वस्तौ स्नात्वा पयसा भुञ्जीत जाङ्गलानां मांसरसेन वा भुञ्जीत। अस्य वस्तेराशिषमाह—पित्तातिसारेत्यादि। अयं विरेचनास्थापनयोः पिच्छावस्तिश्च। पिच्छावस्तिः॥ ३७॥

चक्रपाणिः—परिवेष्ट्येत्यादिना पिच्छावस्तिमाह। शृते पयसीत्यत्र पानीयमानेनैव पयः शृतं ज्ञेयम्। प्रस्थ इति शृते पयसीत्यस्य विशेषणम्। वृन्तानि शाल्मलेः उलूखले आपोथ्य आपोथयतात् पिण्डं शृते प्रस्थे पयसि मृद्नीयादिति योजना। मात्रयेति वचनात् तैलसर्पिषोस्तत्र तावती मात्रा यावत्या स्नेहमात्रं भवति। तथा यष्टीमधुकल्कस्यापि तावती मात्रा यावत्या घनो वस्तिर्भवति॥ ३७॥

पित्तातिसारी यस्त्वेतां क्रियां मुक्त्वा निषेवते ।
पित्तलान्यन्नपानानि तस्य पित्तं महाबलम् ॥
रक्तातिसारं कुरुते रक्तमाशु प्रदूषयत् ।
तृष्णां दाहञ्च शूलञ्च गुदपाकञ्च दारुणम् ॥ ३८ ॥
तत्र छागपयः शस्तं शीतं समधुशर्करम् ।
पानार्थं व्यञ्जनार्थञ्च गुदप्रक्षालने तथा ॥
भोजनं रक्तशालीनां पयसा तेन भोजयेत् ।
रसैः पारावतादीनां घृतभृष्टैः सशर्करैः ॥

गङ्गाधरः—पित्तातिसारस्य निदानविशेषेणावस्थाविशेषो भवति, तमाह—पित्तातिसारीत्यादि। पित्तातिसारी यः पुनरेतां पित्तातिसारप्रतिक्रियां मुक्त्वा पित्तलान्यन्नपानानि निषेवते तस्य पित्तातिसारिणः पित्तं महाबलं सत् आशु रक्तं प्रदूषयत् सत् रक्तातिसारं कुरुते। अजाते पित्तातिसारे पित्तलाहारसेविनो यो रक्तातिसारो दृश्यते स तु न रक्तातिसारः, पित्तातिसारे रक्तपित्तोपगतमतिसार्य्यत इत्युक्तम्। ततः स एव पित्तातिसार इति। रक्तातिसाररूपविशेषमाह—तृष्णामित्यादि ॥ ३८ ॥

गङ्गाधरः—तस्य चिकित्सामाह—तत्रेत्यादि। तत्र रक्तातिसारे। पानार्थं पिपासायां भोजने च व्यञ्जनार्थं, व्यञ्जनं हि भोज्यान्नसहिताभ्यवहार्य्यं द्रव्यं न तु फलपत्रादिशाकमांसकृतमात्रं, गुदपाके गुदप्रक्षालने च, शीतमिति किञ्चित्पक्वं शीतीकृतं मधुशर्करे प्रक्षिप्य छागपयः शस्तम्। अत एवाह—भोजनमित्यादि। रक्तशालीनां भोजनमन्नं तेन समधुशर्करेण

चक्रपाणिः—पित्तातिसारीत्यादिना पित्तातिसारस्यैव हेतुविशेषकृतावस्थाभेदरूपं रक्तातिसारं दर्शयति। अयञ्च रक्तातिसारो यद्यपि पित्तातिसारोत्तरकालभावितयोक्तः, तथापि पित्तातिप्रकोपेण रक्तदुष्ट्या च प्रथममपि भवत्येव दृष्टत्वादिति ज्ञेयम्। तेनास्योत्पत्तिक्रियाभिधानम् अतन्त्रम्। यथा पाण्डुरोगी तु योऽत्यर्थमित्यादिना कामला उक्ता, उक्तं क्रमं विनापि कामला भवति ; एवमपि चास्य रक्तातीसारस्य पित्तजन्यत्वात् पैत्तिके एवावरोधः तेन षट्संख्या न व्याहन्यते। अतीसारस्य तु आमरक्तशकृत्पित्तवातकफान् अतीसारकारकानभिधाय एकद्वित्रिसंसर्गात् त्रिंशद्भेदा भवन्ति। ते केवलैः सह षट्त्रिंशदपि अत्रैव षट्केऽन्तर्भावनीयं तत्र सूक्ष्मभेदगणनया स भेदः कृत इत्यविरोधः ॥ ३८ ॥

शशानां धन्वजानाञ्च शीतानां मृगपक्षिणाम्।
रसैरनम्लैः सघृतैर्भोजयेत् तु सशर्करैः॥
रुधिरं मार्गमाजं वा घृतभृष्टं प्रशस्यते।
काश्मर्य्यफलयूषो वा किञ्चिदम्लः सशर्करः॥
नीलोत्पलं मोचरसं समङ्गां पद्मकेशरम्।
अजाक्षीरयुतं दद्याज्जीर्णे च पयसौदनम्॥
दुर्ब्बलं पाययित्वा वा तस्यैवोपरि भोजयेत्।
प्राग्भक्तं नवनीतं वा दद्यात् समधुशर्करम्॥
प्राश्य क्षीरोत्थितं सर्पिः कपिञ्जलरसाशनः।
त्र्यहादारोग्यमाप्नोति पयसा क्षीरभुक् तथा॥

छागपयसा शस्तत्वाद्भोजयेत्। तथा पारावतादीनां मांसरसैर्घृतभृष्टैः सशर्करैर्भोजयेत्। शशानामित्यादि। शशानां धन्वजानां शीतवीर्य्याणां मृगपक्षिणां मांसरसैरनम्लैः सघृतैः सशर्करैस्तं रक्तातिसारिणं भोजयेत्। रुधिरमित्यादि। मार्गं मृगस्य रक्तमाजमजस्य वा रक्तं घृतभृष्टं रक्तातिसारिणे शस्तम्। काश्मर्य्यफलक्वाथेन सिद्धो यूष आमलकादिना किञ्चिदम्लः सशर्करः प्रशस्यते। नीलोत्पलमित्यादि। नीलोत्पलादीनां चूर्णमजाक्षीरयुतं दद्याज्जीर्णे तस्मिन् पयसा सहौदनं भोक्तुं दद्यात्। दुर्ब्बलमित्यादि। दुर्ब्बलं रक्तातिसारिणं तन्नीलोत्पलादिकमजाक्षीरयुतं पाययित्वा तस्यैवोपरि पयसौदनं भोजयेन्न तु जीर्णे तदौषधे। प्राग्भक्तमित्यादि। दुर्ब्बलाय रक्तातिसारिणे प्राग्भक्तं समधुशर्करं नवनीतं वा दद्यात्। प्राश्येत्यादि। क्षीरोत्थितं सर्पिः प्राश्य कपिञ्जलरसाशनो रक्तातिसारी त्र्यहादारोग्यमाप्नोति। तथा पयसा पयोऽन्नमात्रवृत्तिः सन् क्षीरोत्थितं सर्पिः प्राश्य त्र्यहादारोग्यमाप्नोति। तथा क्षीरभुक् क्षीरमात्रेणान्नभुक् सन् क्षीरोत्थितं सर्पिः प्राश्य

चक्रपाणिः—तत्र छागमित्यादौ व्यञ्जनार्थमिति भोज्योपकरणार्थम्। पयसा तेनेति छागेन पयसा। मृगस्येदं मार्गम्, अजस्येदमाजं रुधिरमिति योजना। प्राश्येत्यादौ सर्पिः प्राश्येति

पीत्वा शतावरीकल्कं पयसा क्षीरभुग् जयेत्।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ॥ ३९ ॥
घृतं यवागूमण्डेन कुटजस्य फलैः शृतम्।
पेयं तस्यानु पातव्या पेया रक्तोपशान्तये ॥ ४० ॥
वत्सकस्य च वीजानि दार्व्याश्च त्वच उत्तमाः।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी ॥
षड्भिरेतैर्घृतं सिद्धं पेयामण्डावचारितम्।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ४१ ॥
कृष्णा मृन्मधुकं शङ्खं रुधिरं तण्डुलोदकम्।
पीतमेकत्र संयुक्तं रक्तसंग्रहणं परम् ॥
पीतः प्रियङ्गुकाकल्कः सक्षौद्रस्तण्डुलाम्बुना।
रक्तस्रावं जयेच्छीघ्रं धन्वमांसरसाशिनः ॥

त्र्यहादारोग्यमाप्नोति। पीत्वेत्यादि। पयसा शतावरीकल्कं पीत्वा क्षीरभुक् रक्तातिसारं जयेत्। तया शतावर्य्या कल्कभूतया सिद्धं चतुर्गुणजले पक्वं घृतं वा पीत्वा क्षीरभुङ् नरो रक्तातिसारं जयेत् ॥ ३९ ॥

गङ्गाधरः—घृतमित्यादि। कुटजस्य फलैः कल्कैश्चतुर्गुणजले शृतं घृतं यवागूमण्डान्यतरेण पेयं तस्यानु पातव्या पेया ॥ ४० ॥

गङ्गाधरः—वत्सकस्येत्यादि। वत्सकवीजादिभिरेतैः षड्भिः कल्कैः चतुर्गुणजले सिद्धं घृतं पेयामण्डान्यतरेणावचारितं पीतं त्रिदोषमप्यतिसारम् अपिना रक्तातिसारञ्च जयेत् ॥ ४१ ॥

गङ्गाधरः—कृष्णा मृदित्यादि। कृष्णवर्णा मृत्। शङ्खं भस्मीकृतम्। पञ्च-

सम्बन्धः। कपिञ्जलो गौरतित्तिरिः। क्षीरं भुनक्तीति क्षीरभुक्। कपिञ्जलरसस्थाने माक्षिकं ज्ञेयम्। पीत्वा शतावर्य्याः कल्कं तया सिद्धं घृतम् वा क्षीरभुग् रक्तातिसारं जयेत्। यवागूमण्डेन पेयम् इति सम्बन्धः ॥ ३९। ४० ॥

चक्रपाणिः—षड्भिरितिपदं यथालाभनिषेधार्थम् ॥ ४१ ॥

कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ४२ ॥
पलं वत्सकवीजस्य श्रपयित्वा रसं पिबेत्।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ४३ ॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना।
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ॥ ४४ ॥
गुदो बहुभिरुत्थानैर्यस्य पित्तेन पच्यते।
सेचयेत् तं सुशीतेन पटोलमधुकाम्बुना ॥
पञ्चवल्कमधूकानां रसैरिक्षुरसैर्घृतैः।
छागैर्गव्यैः पयोभिर्वा शर्कराक्षौद्रसंयुतैः ॥

द्रव्याण्येकीकृत्य पीतम्। पीत इत्यादि। प्रियङ्गुत्वक्कल्कः। कल्क इत्यादि। निस्तुपाणां कृष्णतिलानां कल्क एकभागः, पञ्च भागाः शर्करायाः; एकीकृत्य आजेन पयसा पीतः। शर्करापञ्चभागिक इत्यत्र शर्कराभागसंयुत इति च क्वचित् पाठस्ततः समः शर्कराभाग इति ॥ ४२ ॥

गङ्गाधरः—पलमित्यादि। वत्सकवीजस्य पलमष्टगुणे जले पक्त्वा चतुर्थांशशेषं रसं पिबेत्। पीत्वा यो मांसरसाशी स्यात् स शीघ्रं पैत्तं जठरामयं जयेत् ॥ ४३ ॥

गङ्गाधरः—पीत्वेत्यादि। चन्दनं रक्तचन्दनमेव ॥ ४४ ॥

गङ्गाधरः—गुद इत्यादि। बहुभिरुत्थानैर्वारंवारं विड्विसर्गैः पित्तेन यस्य गुदः पच्यते, पटोलपत्रमधुकयोः क्वाथेन सुशीतेन तस्य तं गुदं जलशौचादिषु सेचयेत्। पञ्चवल्कलमधुकवल्कलानां रसैर्वा सेचयेत्। इक्षुरसैर्वा छागवा

चक्रपाणिः—कृष्णमृदित्यादौ रुधिरं शोणितम्, केचित् कुङ्कुममाहुः। शर्करापञ्चभागिक इत्यत्र शर्करापञ्चमभागेन कृष्णतिलदानम्। उक्तं हि जतूकर्णे—कृष्णतिलान् शर्करापादिकान् छागीपयसेति ॥ ४२ ॥

चक्रपाणिः—पलमित्यादौ रसमिति क्वाथम्। रसाशीति मांसरसभुञ्जानः। इक्षुरसैर्घृतै-

प्रक्षालनानां कल्कैर्वा ससर्पिष्कैः प्रलेपयेत् ।
एषां वा सुकृतैश्चूर्णैस्तं गुदं प्रतिसारयेत् ॥
तथा रक्तं न स्रवति गुदं तैः प्रतिसारितम् ।
पक्वता प्रशमं याति वेदना चोपशाम्यति ॥
यथोक्तैः सेचनैः शीतैः शोणितेऽतिस्रवत्यपि ।
गुदवङ्क्षणकट्यूरु सेचयेद् घृतभावितम् ॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ।
कार्पाससंगृहीतेन भावयेद् गुदवङ्क्षणम् ॥ ४५ ॥
अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते ।
यदा वायुर्विबद्धश्च कृच्छ्रं चरति वा न वा ॥

गव्यैर्वा घृतैस्तथ्ध पयोभिर्वा शर्कराक्षौद्रसंयुतैः सेचयेत् । प्रक्षालनानामित्यादि । उक्तानां पटोलमधुकादीनामिक्षुपर्य्यन्तानां प्रक्षालनद्रव्याणां कल्कैः दृषदि पिष्टैः ससर्पिष्कैर्गुदं प्रलेपयेद् वा । कल्कवचनाच्छागगव्यघृतपयःशर्करा-मधूनां कल्कत्वासम्भवान्नेह प्रलेपविधिः । एषां प्रक्षालनद्रव्याणां सुकृतैः चूर्णैस्तं पक्वं गुदं प्रतिसारयेत् । तैः प्रतिसारितं गुदं तथारक्तमतिसार-रक्तं न स्रवति । यथोक्तैरित्यादि । यथोक्तैः पटोलमधुकाम्बुप्रभृतिभिः शीतैः सेचनैरपि शोणितेऽतिस्रवति सति घृतभावितं पुनःपुनर्घृतम्रक्षितं गुदवङ्क्षण-कट्यूरु तैः सेचनैः पटोलमधुकाम्बुप्रभृतिभिः सेचयेत् । गुदादिभावनार्थं स्नेहान्तरमाह—चन्दनाद्येनेत्यादि । ज्वराधिकारोक्तचन्दनाद्येन तैलेन कार्पास-संगृहीतेन पिचुना गृहीतेन तैलेन गुदादिकं भावयेत्, शतधौतेन सर्पिषा वा कार्पाससंगृहीतेन गुदादिकं भावयेत् ॥ ४५ ॥

गङ्गाधरः—अल्पाल्पमित्यादि । अल्पाल्पमथ च बहुशोऽनेकवारं सशूलं रक्तं यदोपवेश्यते वायुश्च विबद्धः सन् कृच्छ्रं चरति, न वा चरति, तदा तस्य

रित्यन्तेन सेचयेदित्यनुवर्त्तते । प्रक्षालनानामिति प्रक्षालनार्थं युक्तानां पटोलमधुकादीनाम्, प्रतिसारयेदवचूर्णयेत् ॥ ४३—४५ ॥

पिच्छावस्तिं तदा तस्य यथोक्तमुपकल्पयेत्।
प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासयेत्॥ ४६॥
प्रायशो दुर्ब्बलगुदाश्चिरकालातिसारिणः।
तस्मादभीक्ष्णशस्तेषां गुदे स्नेहं प्रयोजयेत्॥
अतिवृत्तो हि पवनः स्वे स्थाने लभतेऽधिकम्।
बलं तस्य सपित्तस्य जयार्थे वस्तिरुत्तमः॥ ४७॥
रक्तं विट्सहितं पूर्व्वं पश्चाद् वा योऽतिसार्य्यते।
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत्॥
शर्कराद्धांशिकं लीढ़ं नवनीतं नवोद्धृतम्।
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः॥

यथोक्तं पिच्छावस्तिं परिवेष्ट्येत्यादिना पूर्व्वमुक्तमुपकल्पयेत्। प्रपौण्डरीकत्वक्कल्कसिद्धेन सर्पिषा वा तं नरमनुवासयेत्॥ ४६॥

गङ्गाधरः—प्रायश इत्यादि। चिरकालातिसारिणो नराः प्रायशो दुर्व्वलगुदा भवन्ति, तस्मात् तेषां चिरकालातिसारिणां गुदवलार्थमभीक्ष्णशो गुदे स्नेहं प्रयोजयेत्। कस्मात्? अतिवृत्त इत्यादि। हि यस्मादतिसारस्य चिरेणातिवृत्तो पवनः स्वे स्थानेऽधिकं वलं लभते। तस्य सपित्तस्य जयार्थमनुवासनवस्तिरुत्तमस्तस्मात् प्रपौण्डरीकसिद्धेन सर्पिषाऽनुवासयेदिति॥ ४७॥

गङ्गाधरः—रक्तमित्यादि। यो नरः पूर्व्वं वा पश्चाद् वा विट्सहितं रक्तमतिसार्य्यते, तस्य शतावरीघृतं लेहार्थमुपकल्पयेत्। अथवा—शर्करेत्यादि। नवोद्धृतं नवनीतं शर्कराद्धांशिकमर्द्धांशशर्करं क्षौद्रपादं पादांशमधुयुतं लीढ़ं हिताशिनस्तं विट्सहितरक्तातिसारं शीघ्रं जयेत्।

चक्रपाणिः—पिच्छावस्तिं तदा तस्येति अत्रैवोपरि बस्तिग्रन्थोक्तम्। गुदे स्नेहं प्रयोजयेदिति स्नेहभावितपिचुप्रणयनेन गुदे स्नेहप्रयोगमिच्छन्ति। अन्ये तु प्रकृतत्वादनुवासनेनैवाल प्रयोगमाहुः॥ ४६॥

चक्रपाणिः—स्वे स्थाने इति पक्वाशये। बस्तिरिति सामान्यवचनात् अनुवासनं निरूहश्च ज्ञेयः॥ ४७॥

न्यग्रोधोडुम्बराश्वत्थ-शुङ्गानापोथ्य वासयेत्।
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत्॥
तदर्द्धशर्करायुक्तं लेहयेत् क्षौद्रपादिकम्।
अधो वा यदि वाप्यूर्द्ध्वं यस्य रक्तं प्रवर्त्तते॥ ४८॥
यस्त्वेवं दुर्ब्बलो मोहात् पित्तलान्येव सेवते।
दारुणं स बलीपाकं प्राप्य शीघ्रं विपद्यते॥ ४९॥
श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम्।
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः॥ ५०॥

लेहान्तरमाह—न्यग्रोधत्यादि। न्यग्रोधादीनां शुङ्गानापोथ्य कुट्टयित्वा चतुर्गुणे जले तप्तेऽहोरात्रं वासयेत्। तेन कषायेणाम्भसा चतुर्गुणेन घृतं पचेत्। पक्वं तद् घृतं तद्घृतार्द्धशर्करायुक्तं घृतपादिकक्षौद्रयुक्तं तमतिसारिणं लेहयेत् यस्यातिसारिणो विड्विसर्गादधो वा यदि वाप्यूर्द्ध्वं रक्तं प्रवर्त्तते इति॥ ४८॥

गङ्गाधरः—रक्तातिसारासाध्यतामाह—यस्त्वेवमित्यादि। यो रक्तातिसारी एवमनेन प्रकारेण दुर्ब्बलः सन् मोहादज्ञानाद् वा पुनः पित्तलानि सेवते, स दारुणं बलीपाकं गुदवलीपाकं प्राप्य शीघ्रं विपद्यते म्रियते॥ ४९॥

गङ्गाधरः—इति पित्तातिसारचिकित्सितमुक्त्वा श्लेष्मातिसारचिकित्सितमाह—श्लेष्मातिसार इत्यादि। लङ्घनपाचनं हितं, प्रथमं लङ्घनं कारयित्वा पाचनमौषधं दद्यात्। आमातिसारघ्नो यथोक्तो दीपनो गणः पिप्पली नागरं धान्यमित्यादिनामातिसारघ्नो यथा पूर्व्वमुक्त एवं पञ्चाशन्महाकषायेषु दीपनो गण उक्तः स प्रयोज्यः॥ ५०॥

चक्रपाणिः—शतावरीघृतमिति शतावरीमूलतुलाश्चतस्र इत्यादिना योनिव्यापद्घृतम् शतावरीघृतम्। विकारमिति रक्तं विट्सहितमित्यादिनोक्तम्॥ ४८॥

चक्रपाणिः—बलीपाकमिति गुदवलीपाकम्॥ ४९॥

चक्रपाणिः—दीपनो गण इति शालीपर्णीत्यादिनोक्तः॥ ५०॥

लङ्घितस्यानुपूर्व्व्याञ्च कृतायां न निवर्त्तते।
कफजो यो ह्यतीसारः कफघ्नैस्तमुपाचरेत् ॥ ५१ ॥
विल्वकर्कटिकामुस्तमभया विश्वभेषजम्।
वचाविडङ्गभूतीक-धान्यकं सुरदारु च ॥
कुष्ठं सातिविषा पाठा चव्यं कटुकरोहिणी।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥
योगाः श्लोकार्द्धविहिताश्चतुरस्तान् प्रयोजयेत्।
शृतान् श्लेष्मातिसारेषु कायाग्निबलवर्द्धनान् ॥ ५२ ॥
अजाजीमसितां पाठां नागरं मरिचानि च।
धातकीद्विगुणं दद्यान्मातुलुङ्गरसाप्लुतम् ॥
रसाञ्जनं सातिविषं कुटजस्य फलानि च।
धातकीद्विगुणं दद्यात् पातुं सक्षौद्रनागरम् ॥ ५३ ॥

गङ्गाधरः—लङ्घितस्येत्यादि। श्लेष्मातिसारिणः प्रथमं लङ्घितस्य पाचनामातिसारघ्नदीपनानामानुपूर्व्व्यां कृतायां कफजो योऽतिसारो न निवर्त्तते, तं कफजातिसारं कफघ्नैर्वक्ष्यमाणैरुपाचरेत् ॥ ५१ ॥

गङ्गाधरः—कफघ्नान् योगानाह—विल्वेत्यादि। विल्वं वालविल्वं, कर्कटिका कर्कटशृङ्गी। श्लोकार्द्धविहिता य इमे योगास्तांश्चतुरो योगान् शृतान् क्वाथविधिना प्रयोजयेत् ॥ ५२ ॥

गङ्गाधरः—अजाजीमित्यादि। असितामजाजीं कृष्णजीरकम्। एतदादिमरिचान्तानि प्रत्येकं समानि। तत्सर्व्वं समम्। धातकीद्विगुणं द्विभागां धातकीं दत्त्वा तत् सर्व्वं मातुलुङ्गरसाप्लुतं दद्यात्। प्रकरणात् कफातिसारिणे। रसाञ्जनमित्यादि। कुटजस्य फलमिन्द्रयवः। रसाञ्जनादीनां प्रत्येकं समभागः। तदेकभागापेक्षया धातकी द्विगुणा यत्र तत् सक्षौद्रनागरं पातुं दद्यादिति। पानयोग्यं मधु चतुर्गुणं चूर्णापेक्षया देयम् ॥ ५३ ॥

चक्रपाणिः—कफघ्नैस्तमुपाचरेदित्युक्तम्, तेन विल्वकर्कटिकेत्यादिना योगमाह ॥ ५१। ५२ ॥

चक्रपाणिः—अजाजीमित्यादौ असितामिति पिप्पलीम्। धातकीद्विगुणमिति एकद्रव्यापेक्षया

धातकी नागरं विल्वं लोध्रं पद्मस्य केशरम्।
जम्बुत्वङ् नागरं धान्यं पाठा मोचरसं वला।
समङ्गा धातकी विल्व-मध्यं जम्ब्वाम्रयोस्त्वचा।
कपित्थानि विड़ङ्गानि नागरं मरिचानि च॥
चाङ्गेरीतक्रकोलाम्लांश्चतुरस्तान् कफोत्तरे।
श्लोकार्द्धविहितान् दद्यात् सस्नेहलवणान् खड़ान्॥ ५४॥
कपित्थमध्यं लीढ्वैव सव्योषक्षौद्रशर्करम्।
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात्॥
कणां मधुयुतां लीढ्वा तक्रं पीत्वा सचित्रकम्।
जग्ध्वा वा बालविल्वानि मुच्यते जठरामयात्॥
बालविल्वं गुड़ं तैलं पिप्पली विश्वभेषजम्।
लिह्याद् वाते प्रतिहते सशूलः सप्रवाहिकः॥

गङ्गाधरः—धातकीत्यादि। श्लोकार्द्धविहितांश्चतुरो योगान् सुचूर्णितां-श्चाङ्गेरीतक्रकोलरम्लान् कृत्वा तैलस्नेहलवणाभ्यामनुरूपाभ्यां खड़ान् दद्यात्॥ ५४॥

गङ्गाधरः—कपित्थेत्यादि। व्योषचूर्णक्षौद्रशर्कराभिर्यथाह मिश्रितं कपित्थस्य मध्यं शस्यं लीढ्वा। मधुयुक्तं कट्फलचूर्णं वा लीढ्वा कफज-जठरामयान्मुच्यते। कणामित्यादि। मधुयुतां कणां पिप्पलीं चूर्णितां लीढ्वा। अथवा सचित्रकं चित्रकमूलचूर्णसहितं चतुर्गुणं तक्रं पीत्वा अथवा बालविल्वानां शस्यानि जग्ध्वा जठरामयान्मुच्यते। बालविल्वमित्यादि। सशूलप्रवाहिकः कफातिसारी प्रतिहते प्रतिलोमे वाते बालविल्वपिप्पलीविश्वभेषजं चूर्णीकृत्य

द्विगुणया धातक्या युक्तम्। जतूकर्णे ह्ययं योगः। पाठा जातीफलं व्योषं धातकीद्विगुण-मित्युक्तम्। ॥ ५३। ५४॥

चक्रपाणिः—कणां मधुयुतामित्यत्र कणा पिप्पली। अन्ये कणानिति पठन्ति कणानित्यनेन

भोज्यं मूलकयूषेण वातघ्नैश्चोपसेवनैः ।
वातातिसारविहितैर्यूषैर्मांसरसैः खड़ैः ॥
पूर्व्वोक्तमम्लसर्पिर्वा षट्पलं वा यथाबलम् ।
पुराणं वा घृतं दद्याद् यवागूमण्डमिश्रितम् ॥ ५५ ॥
वातश्लेष्मविबन्धे वा कफे वातिस्रवत्यपि ।
शूले प्रवाहिकायाञ्च पिच्छावस्तिं प्रयोजयेत् ॥
पिप्पलीविल्वकुष्ठानां शताह्वावचयोरपि ।
कल्कैः सलवणैर्युक्तं पूर्व्वोक्तं सन्निधापयेत् ॥ ५६ ॥
प्रत्यागते सुखे स्नातं कृताहारं दिनात्यये ।
विल्वतैलेन मतिमान् सुखोष्णेनानुवासयेत् ॥

गुड़तैलाभ्यां लिह्यात् । भोज्यमित्यादि । मूलकस्य शुष्कस्य यूषेण सशूलप्रवाहिककफातिसारिणान्नं भोज्यम् । वातघ्नैश्चोपसेवनैराहारद्रव्योपसेवनदध्यादिभिः । वातातिसारविहितैर्यवानां मुद्गमाषाणामित्यादुक्तैर्यूषैर्लोपाकरसमित्यादुक्तमांसरसैः । कल्कः स्याद् बालविल्वानामित्यादुक्तैः खड़ैः भोज्यम् । पूर्व्वोक्तमित्यादि । पूर्व्वोक्तं चाङ्गेरीघृतादिकमम्लसर्पिः षट्पलं सर्पिश्च पुराणं घृतं वा यथावलं यवागूमण्डान्यतरमिश्रितं सशूलप्रवाहिकाय कफातिसारिणे दद्यात् ॥ ५५ ॥

गङ्गाधरः—वातश्लेष्मेत्यादि । पिच्छावस्तिं पूर्व्वमुक्तम् । तत्प्रयोगमिह विधेयमाह—पिप्पलीत्यादि । पिप्पल्यादीनां कल्कैः श्लक्ष्णपिष्टैः सलवणैर्युक्तं पूर्व्वोक्तं पिच्छावस्तिं सन्निधापयेत् प्रयोजयेत् ॥ ५६ ॥

गङ्गाधरः—तस्मिन् दत्तपिच्छावस्तौ प्रत्यागते गुदान्निर्गते सुखे जाते स्नातं, दिनात्यये कृताहारं, सुखोष्णेन विल्वतैलेन मतिमाननुवासयेत् ।

च यष्टितण्डुलात् ग्राहयन्ति । वाते प्रतिहत इति बद्धे वाते । उपसेवनैरिति व्यञ्जनैः । पूर्व्वोक्तमम्लसर्पिरिति चाङ्गेरीकोलदध्यम्लेत्यादिनोक्तम् ॥ ५५ ॥

चक्रपाणिः—पिच्छावस्तिं प्रयोजयेदिति यदुक्तं तत्रापि पिच्छावस्तेर्विशेषणमाह पिप्पल्यादिकल्कैर्युक्तं सन्निधापयेदिति ॥ ५६ ॥

वचान्तैरथवा कल्कैस्तैलं पक्त्वानुवासयेत्।
बहुशः कफवातार्त्तस्तथा स लभते सुखम्॥ ५७॥
स्वस्थाने मारुतोऽवश्यं वर्द्धते कफसंक्षयात्।
विवृद्धः सहसा हन्यात् तस्मात् तं त्वरया जयेत्॥
वातस्यानु जयेत् पित्तं पित्तस्यानु जयेत् कफम्।
त्रयाणां वा जयेत् पूर्व्वं यः भवेद् बलवत्तरः॥ ५८॥

अथवा वचान्तैः विल्वकर्कटिकामुस्तमभयाविश्वभेषजम् वचेत्यन्तैः कल्कैः तैलं चतुर्गुणजले पक्त्वानुवासयेदिति। अस्याशाः बहुश इत्यादि॥ ५७॥

गङ्गाधरः—कफातिसारचिकित्सितमुक्त्वा सन्निपातचिकित्सामाह—स्वस्थान इत्यादि। त्रिदोषजातिसारे पूर्व्व कफसंक्षयान्मारुतः स्वस्थाने पक्वाशयेऽवश्यं वर्द्धते, विवृद्धश्च मारुतः सहसा तमातुरं हन्यात् तस्मात् तं विवृद्धं मारुतं त्वरया जयेत्। वातस्य जयादनु पित्तं जयेत्। पित्तस्य जयादनु कफं जयेत्। यदि कफक्षयो न भवति मारुतश्च न वर्द्धते तदा यत् कुर्य्यात् तदाह—त्रयाणामित्यादि। त्रयाणां दोषाणां मध्येऽतिसाररोगे यो बलवत्तरो दोषो भवेत् तं दोषं पूर्व्व जयेदिति। भयशोकजयोर्वातचिकित्सितं कुर्य्यात् वातलक्षणत्वाद् वातप्रकोपाच्च। इति तन्त्र प्रोक्तमिति॥ ५८॥

चक्रपाणिः—विल्वतैलेनेति सिद्धो दशमूलं बलारास्नेत्यादिना वक्ष्यमाणं विल्वतैलम्। वचान्तैरिति पिप्पलीविल्वकुष्ठानां शताह्वावचयोरित्यत्रोक्तैर्वचान्तैः॥ ५७॥

चक्रपाणिः—सम्प्रति सर्व्वातिसारेषु पक्वाशयव्यापकत्वेन वायुवृद्धिर्भवति, सा चाशुकारितया त्वरया जेतव्येति दर्शयन्नाह स्वे स्थाने इत्यादिना। कफसंक्षयादित्यनेन कफसंक्षये रूक्षशरीरतया वायुः कुप्यति श्लेष्मशोणिते वृद्धे शरीरवायुः विवृतप्रसवो भवति इति। पूर्व्वं ज्वराध्याये सन्निपातचिकित्सायां कफस्थानानुपूर्व्या वा इत्यनेन कफपित्तवातादीनां क्रमेण चिकित्सा अतीसारेऽपि त्रिदोषजे कदाचित् स्यादित्याशङ्क्य अत्र विशिष्टं क्रममाह—वातस्यान्वित्यादि। अयञ्च क्रमो निरामसन्निपातातिसारे एव ज्ञेयः। सामे तु प्रथममामस्यैव चिकित्सितं कर्त्तव्यम्। समत्रिदोषातिसारचिकित्साक्रममभिधाय विषमत्रिदोषातिसारचिकित्साक्रममाह त्रयाणामिति॥ ५८॥

तत्र श्लोकः।

प्रागुत्पत्तिर्निदानानि लक्षणं साध्यता न च।
क्रिया चावस्थिकी सिद्धा निर्दिष्टा ह्यतिसारिणाम् ॥ ५९ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थानेऽतिसारचिकित्सितं नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

गङ्गाधरः—अध्यायार्थं संग्रहीतुमाह—तत्र श्लोक इति। प्रागुत्पत्तिरित्यादि ॥ ५९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल प्रतिसंस्कृत एव च।
चिकित्सितेऽतिसारस्य त्वेकोनविंश एव तु। अध्याये गङ्गाधरेण जल्पकल्पतरौ कृते। षष्ठस्कन्धे तच्चिकित्सा-स्थानजल्पेऽतिसारिणः।
चिकित्सितजल्पो नाम शाखैषैकोनविंशिकी ॥ १९ ॥

चक्रपाणिः—प्रागुत्पत्तीत्यादिना अध्यायार्थसंग्रहः ॥ ५९ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां अतिसारचिकित्सितं
नाम ऊनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ।

अथातश्छर्दिचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

यशस्विनं ब्रह्मतपोधृतिभ्यां *
ज्वलन्तमग्न्यर्कसमप्रभावम् ।
पुनर्व्वसुं भूतहिते निविष्टं
पप्रच्छ शिष्योऽत्रिजमग्निवेशः ॥
याश्छर्द्दयः पञ्च पुरा त्वयोक्ता
रोगाधिकारे भिषजां वरिष्ठ ।
तासां चिकित्सां सनिदानलिङ्गां
यथावदाचक्ष्व हिताय नृणाम् ॥ २ ॥

तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
याश्छर्द्दयः पञ्च पुरा मयोक्ता-
स्ता विस्तरेण ब्रुवतो निबोध ॥ ३ ॥

गङ्गाधरः—उद्दिष्टानुक्रमेणातिसारचिकित्सितानन्तरं छर्द्दिचिकित्सितम् आह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—यशस्विनमित्यादि । ब्रह्मणस्तपश्च धृतिश्च ताभ्याम् । प्रश्नमाह—य इत्यादि । पुरा त्वया याः पञ्च छर्द्दयः प्रोक्ता अष्टोदरीये पञ्च छर्द्दय इत्युद्दिश्य, पञ्च छर्द्दय इति द्विष्टान्नसंयोगवातपित्तकफसन्निपातोद्रेका इति, तासां पञ्चानां छर्द्दीनाम् ॥ २ । ३ ॥

चक्रपाणिः—शरीरे मार्गद्वयं प्रधानं अधोगुदमूर्द्ध्वं मुखम्, तदधोमार्गातिप्रवृत्तिदोषमतीसारमभिधाय ऊर्द्ध्वातिप्रवृत्तिदोषरूपा छर्द्दिरुच्यते इति छर्द्यध्यायसम्बन्धः ॥ १ ॥

चक्रपाणिः—ब्रह्मणः तत्त्वज्ञानस्य तपसश्च द्युती, ताभ्यां ज्वलन्तम् । रोगाधिकारे इत्यष्टोदरीये ॥ २ । ३ ॥

---

* ब्रह्मतपोद्युतिभ्यामिति चक्रसम्मतः पाठः ।

दोषैः पृथक् त्रिप्रभवा चतस्रो
द्विष्टार्थयोगादपि पञ्चमी स्यात्।
तासां हृदुत्क्लेशकफप्रसेकौ
द्वेषोऽशने चैव हि पूर्व्वरूपम्॥ ४॥
व्यायामतीक्ष्णौषधशोकरोग-
भयोपवासाद्यतिकर्षितस्य।
वायुर्महास्रोतसि संप्रवृद्धः
उत्क्लेश्य दोषांस्तत ऊर्द्ध्वमस्यन्।
आमाशयोत्क्लेशकृतांश्च मर्म्म
प्रपीड़यंश्छर्द्दिमुदीरयेत् तु॥ ५॥

गङ्गाधरः—पुरा याः पञ्च छर्द्दय उक्तास्ता एव पुनः स्मारयन्नाह—दोषैरित्यादि। पृथग्दोषैस्त्रिसश्च त्रिप्रभवा चैकेति ताश्चतस्रश्छर्द्दयः पञ्चमी च्छर्द्दिर्द्विष्टार्थयोगादिति। तासां पञ्चानां छर्द्दीनां पूर्व्वरूपं हृदुत्क्लेशश्च कफप्रसेकश्च अशने द्वेषश्चैव॥ ४॥

गङ्गाधरः—वातजच्छर्द्दिनिदानपूर्व्विकां सम्प्राप्तिं वक्तुं निदानमाह—व्यायामेत्यादि। व्यायामाद्यतिकर्षितस्य महास्रोतसि गलोदरस्रोतसि सम्प्रवृद्धो

चक्रपाणिः—पृथक् वातादिषु त्रिषु च मिलितेषु प्रभवः उत्पत्तिर्यासां ताः पृथक्त्रिप्रभवाश्चतस्रः। द्विष्टार्थयोगादपीत्यत्र द्विष्टशब्देन प्रतीपाशुचिपूत्यादयोऽपि द्वेष्यतया गृह्यन्ते। द्विष्टप्रतीपेत्यादौ वक्ष्यमाणा द्विष्टार्थच्छर्द्दिनिदाने द्विष्टशब्देन गोबलीवर्द्दन्यायात् प्रतिपुरुषनियतद्विष्टत्वमुच्यते, तेनेह उक्तार्थशब्देन प्रतिपादिता छर्द्दिरुच्यते। यद्यपि हेत्वभिधानपूर्व्वकं पूर्व्वरूपाभिधानं युज्यते हेतूत्तरकालभावित्वादेव पूर्व्वरूपस्य, तथाप्यल्पवक्तव्यत्वात तासामित्यादिना पूर्व्वरूपमाह। पूर्व्वरूपं लिङ्गाल्पत्वादुच्यते। एवमन्यत्रापि साक्षात्सूचितपूर्व्वाभिधानेन ज्ञेयम्॥ ४॥

चक्रपाणिः—व्यायामेत्यादिना वातजहेतुमाह। महास्रोतसीति कोष्ठे। दोषानिति बहुवचनं बहूनां उत्क्लेशनीयानां विद्यमानत्वात् रक्तादेरपि छर्द्यादिदोषशब्देनाभिधानात्। ऊर्द्ध्वक्षिपणं आमाशयोद्रेकेण उदीरितो वायुरेव। किंवा आमाशयोद्वेगकृतान् इति द्वितीयाबहुवचनं दोषानित्यस्य विशेषणम्। मर्म्मेति हृदयम्॥ ५॥

हृत्पार्श्वपीड़ामुखशोषमूर्द्ध-
नाभ्यर्त्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ।
कृच्छ्रेण चाल्पं महता च वेगे-
नार्त्तोऽनिलाच्छर्द्दयतीह दुःखम् ॥ ६ ॥
अजीर्णकट्वम्लविदाह्यशीतै-
रामाशये पित्तमुदीर्णवेगम् ।
रसायनीभिर्विसृतं प्रपीड्य
मर्म्मोर्द्ध्वमागम्य वमिं करोति ॥ ७ ॥
मूर्च्छापिपासामुखशोषमूर्द्ध-
ताल्वक्षिसन्तापतमोभ्रमार्त्तः ।
पीतं भृशोष्णं हरितं सतिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥ ८ ॥

वायुर्दोषानुत्क्लिश्य ऊर्द्ध्वमस्यन् निक्षिपन् मर्म्म हृदयादि प्रपीड़यन्नामाशयात् क्लेशकृतां छर्द्दिम् उदीरयेत् ॥ ५ ॥

गङ्गाधरः—वातजच्छर्द्दिलक्षणमाह—हृत्पार्श्वेत्यादि। हृत्पार्श्वयोः पीडा। मूर्द्धनाभ्योरर्त्तिः। वमनकाले प्रबल उद्गारशब्दो यत्र तथाविधं छर्द्दयतीति क्रियाविशेषणम्। यद्वस्तु छर्द्दयति तद् विच्छिन्नकृष्णादिगुणं तनु कषायवर्णमल्पञ्च महता वेगेनार्त्तः सन् कृच्छ्रेण छर्द्दयति वातात् ॥ ६ ॥

गङ्गाधरः—पित्तजच्छर्द्दिनिदानपूर्ब्बकसम्प्राप्तिमाह—अजीर्णेत्यादि। अशितमुष्णम्। रसायनीभिः रसवाहिनीभिर्धमनीभिर्विसृतं विसारि सत् मर्म्म प्रपीड्य वक्षः प्रपीड्य ऊर्द्ध्वमागम्य वमिं करोति जनयति। मूर्च्छेत्यादि पित्तजवमिलक्षणम्। पीतमित्यादि विशेषणं तस्य यद्वस्तु वमति ॥ ७।८ ॥

चक्रपाणिः—कषायमिति कषायरसं कषायवर्णं वा ॥ ६ ॥

चक्रपाणिः—अजीर्णेत्यादिना पित्तजायाः हेतुलक्षणे ब्रूते। अजीर्णेति अजीर्णे भोजनम्। रसायनीभिरिति स्रोतोभिः ॥ ७ ॥

स्निग्धातिगुर्व्वामविदाहिभोज्यैः
स्वप्नादिभिश्चैव कफोऽतिवृद्धः ।
उरः शिरो मर्म्म रसायनीश्च
सर्व्वाः समावृत्य वमिं करोति ॥ ९ ॥
तन्द्रास्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफं विशुद्धं
सलोमहर्षोऽल्परुजं वमेत् तु ॥ १० ॥
समश्नतः सर्व्वरसान् प्रसक्त-
मामप्रदोषर्त्तुविपर्य्ययैश्च ।

गङ्गाधरः—स्निग्धेत्यादि कफजच्छर्द्दिनिदानानि स्वप्नादिभिरित्यन्तानि । मर्म्म हृदयं रसायनी रसवाहिनीधमनी समशती ॥ ९ ॥

गङ्गाधरः—निदानपूर्व्वकसम्प्राप्तिमुक्त्वा कफजच्छर्द्दिलिङ्गान्याह — तन्द्रेत्यादि । सन्तोषस्तृप्तिवदभ्यवहारानिच्छुता । स्निग्धमित्यादि यद्वमति तद्वस्तुविशेषणम् । अल्परुजमिति क्रियाविशेषणम् ॥ १० ॥

गङ्गाधरः—त्रिदोषजच्छर्द्दिनिदानपूर्व्वकसम्प्राप्तिमाह—समश्नत इत्यादि । समश्नतः समशनं कुर्व्वतः । समशनमुक्तं ग्रहणीचिकित्सिते—पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतमिति । सर्व्वरसानां प्रसक्तं निरन्तरं समशनं

चक्रपाणिः—सूद्यति तापेन संबध्यते । धूम्रं धूम्रवर्णम् ॥ ८ ॥

चक्रपाणिः—स्निग्धेत्यादिना कफजमाह ॥ ९ ॥

चक्रपाणिः—सन्तोषोऽत्र तृप्तिः । अन्ये तु सन्तोषो मानस एव अत्र व्याधिप्रभावात् भवति । अल्परुजमिति क्रियाविशेषणम् ॥ १० ॥

चक्रपाणिः—समश्नत इत्यादिना त्रिदोषजमाह । समश्नतः सर्व्वरसानिति पथ्यापथ्यमेलकरूपतया भजतः । उक्तं हि 'पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतमिति, न तु सर्व्वरसान्

सर्व्वे प्रकोपं युगपत् प्रपन्ना-
श्छर्द्दिं त्रिदोषां जनयन्ति दोषाः ॥ ११ ॥
शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबला प्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥ १२ ॥
विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्द्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात् ॥
विण्मूत्रयोस्तत्समगन्धवर्णां
तृट्श्वासहिक्कार्त्तियुतं प्रसक्तम् ॥
प्रच्छर्द्दयेद् दुष्टमिहातियोगात्
तयार्द्दितश्चाशु विनाशमेति ॥ १३ ॥

कुर्व्वतो नरस्यामान्नप्रदोषेण ऋतुविपर्य्ययैश्च सर्व्वदोषा युगपत् प्रकोपं प्रपन्नाः त्रिदोषां छर्द्दिं जनयन्ति ॥ ११ ॥

गङ्गाधरः—लिङ्गान्याह—शूलेत्यादि । शूलादीनि प्रबलानि यत्र सा प्रसक्तं निरन्तरं लवणादिरूपं वस्तु वमतां नृणां छर्द्दिस्त्रिदोषात् स्यात् ॥ १२ ॥

गङ्गाधरः—एतामसाध्यामाह—विट्स्वेदेत्यादि । उत्सन्नदोषस्य उद्धत-त्रिदोषस्य नरस्य यस्मात् यदा वायुर्विड़ादिवहानि स्रोतांसि संरुध्य तेषां विड़ा-दीनामधःप्रवृत्तिपथं रुद्ध्वा ऊर्द्ध्वमेति तत्तस्मात् तदा तस्योत्सन्नत्रिदोषस्य तस्य नरस्य समाचितं तं दोषं सपित्तं कफं विण्मूत्रयोः समगन्धवर्णं दुष्टं कोष्ठादुद्धूय

भुञ्जानस्येत्यर्थः । सर्व्वरसभोजनं हि पथ्यमेव । तेनेह तस्य त्रिदोषकर्त्तृत्वं न स्यात् । प्रसक्तमिति निरन्तरम् । आमस्य वा प्रदोषः आमप्रदोषः ॥ ११ । १२ ॥

चक्रपाणिः—विट्स्वेदेत्यादिना उपद्रवयुक्तां छर्द्दिम् उपद्रवादसाध्यामाह । विण्मूत्रयोस्तत्-समगन्धवर्णं छर्द्दयतीति वायुना विण्मूत्रस्रोतसां दूषितत्वाज्ज्ञेयम् ॥ १३ ॥

द्विष्टप्रतीपाशुचिपूत्यमेध्य-
बीभत्सगन्धाशनदर्शनैश्च ।
यच्छर्द्दयेत् तप्तमना मनोघ्नै-
र्द्विष्टार्थसंयोगभवा मता सा ॥ १४ ॥
क्षीणस्य या छर्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।

ऊर्द्ध्वं गमयित्वा प्रसक्तमविच्छेदेन तथा तृड़ादियुक्तमतिवेगात् यच्छर्दयेत् यच्छर्दि कारयेत् तया छर्द्याऽर्दितः पुमानाशु विनाशमेति। त्रिदोषहेतुमन्तरेण नैवं छर्दिरेकादिदोषेण सम्भवति। न हि सर्व्वासु वातजादिषु छर्दिषु वायुरूर्द्ध्ववेगो भवति तदितरदोषसमाश्रयश्च वर्त्तते इति ॥ १३ ॥

गङ्गाधरः—आगन्तुच्छर्दिवचनानन्तरं सर्व्वछर्द्यसाध्यतायां वक्ष्यमाणत्वाच्च आगन्तुच्छर्दिमाह—द्विष्टेत्यादि। यत् यत् पुरुषो द्वेष्टि तत्तद्द्रव्यं द्विष्टं प्रतीपं सात्म्यविपरीतमशुचि द्रव्यं घृणाकरं पूति दुर्गन्धि द्रव्यं अमेध्यं मनःप्रतिकूलं बीभत्सं विकृतम्। तेषां गन्धेनाशनेन दर्शनेन च मनोघ्नेन तप्तमना उद्विग्नमना यच्छर्दयेत् सा छर्दिर्द्विष्टार्थसंयोगभवा पञ्चमी मता। एतेन तदयुक्तं यद्व्याख्यायते—"बीभत्सजा दौहृदजामजा च असात्म्यजा च क्रिमिजा च या हि। सा पञ्चमी ताश्च विभावयेच्च दोषोच्छ्रयेणैव यथोक्तमादौ" इति वचनेन सा पञ्चमीति बीभत्सजाद्यपेक्षया क्रिमिजा पञ्चमी, तामादौ यथोक्तं दोषोच्छ्रयेण विभावयेदिति। क्रिमिजा हि छर्दिरिहागन्तुजायां नाभिहिता स्वप्नादिभिः कफच्छर्दिहेतुभिर्वृद्धः कफो यच्छर्दिं करोति तत्रादिपदेन क्रिमिरपि कफस्थानज उपसंगृहीतः। इति न न्यूनता। येन तु क्रिमिजा पृथगुक्ता क्रिमिभित्यनीकचिकित्साकरणज्ञापनार्थमिति ॥ १४ ॥

गङ्गाधरः—अथ सर्व्वासामसाध्यतामाह—क्षीणस्येत्यादि। व्याध्यादिभिः

चक्रपाणिः—द्विष्टेत्यादिना द्विष्टजामाह। द्विष्टादयो गन्धेनाशनेन दर्शनेन च यथायोग्यतया संबध्यते। अशनं भक्षणम्। द्विष्टं प्रतिपुरुषाप्रीतिजनकम्। प्रतीपं वचादि। केचित् प्रतीपं वातमाहुः। अशुचि उच्छिष्टम्, अमेध्यं मलिनम्, बीभत्सं जुगुप्सितम्। मनोघ्नैरित्यनेन द्विष्टादीनां मध्ये यत्किञ्चित् पुरुषं प्राप्य अशुच्यादि मनोघ्नं न भवति तं प्रति तच्छर्दिकारकं न भवति मनोऽनुपघातकत्वादिति सूचयति ॥ १४ ॥

चक्रपाणिः—असाध्यलक्षणयुक्तां छर्दिं परित्यागार्थमाह—क्षीणस्येत्यादि। अतिप्रवृद्धा

सचन्द्रिकां तां प्रवदेदसाध्यां
साध्यां चिकित्सेदनुपद्रवाञ्च ॥ १५ ॥
आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात् ।
प्राक् कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि ॥ १६ ॥
चूर्णानि लिह्यान्मधुनाभयानां
हृद्यानि वा यानि विरेचनानि ।
मद्यैः पयोभिश्च युतानि युक्त्या
नयन्त्यधो दोषमुदीर्णमूर्द्धम् ॥ १७ ॥

…णस्यातिप्रसक्ता निरन्तरप्रबलत्वेन लग्ना या कासाद्युपद्रवयुक्ता च या या च शोणितपूययुक्ता तां सचन्द्रिकां मेदःप्रभृतिधातुर्मयूरपुच्छचन्द्रकवत् प्रतिभाति सा चन्द्रिका तदयुक्तामसाध्यां प्रवदेत्। अनुपद्रवां कासाद्युपद्रवहीनां साध्यां वातादिजान्यतमां चिकित्सेत्। इति च्छर्दिनिदानम् ॥ १५ ॥

गङ्गाधरः—अथ साध्यायाश्छर्द्दश्चिकित्सितमाह—आमाशयेत्यादि। आमाशयः कफस्थानं तदुत्क्लेशभवत्वादादौ सर्व्वासु छर्दिषु लङ्घनम्। अथवा वातजां छर्दिं विना सर्व्वासु कफपित्तहारि संशोधनं वमनविरेचनं कारयेत् मारुतजायां लङ्घनमेव ॥ १६ ॥

गङ्गाधरः—चूर्णानीत्यादि। कफपित्तहारीणि विरेचनानि अभयानां

…ति सदानुवद्धा। सोपद्रवेत्यत्र विट्स्वेदेत्यादिना रोगोपद्रवा ज्ञेयाः। सचन्द्रिकामिति दत्त-स्नेहमण्डलाकारयुक्ताम् ॥ १५ ॥

चक्रपाणिः—आमाशयेत्यादिना साध्यानां चिकित्सामाह। यस्मादामाशयोत्क्लेशात् सर्व्वाश्छर्द्यो भवन्ति, आमाशयोत्थे च रोगे लङ्घनादि कफहरं भेषजं युक्तम्, तस्मात् लङ्घनमेव कर्त्तव्यमिति भावः। लङ्घनं चाल्पदोषविषयं शोधनञ्च बहुदोषविषयमिति व्यवस्था। संशोधनशब्देन चेह विरेचनवमने अपि गृह्येते। अन्ये तु अत्र संशोधनशब्देन प्रतिमार्गहरणतया अत्यर्थहितं विरेचनमेव वर्णयन्ति ॥ १६ ॥

चक्रपाणिः—संशोधनयोगानाह—चूर्णानीत्यादि ॥ १७ ॥

वल्लीफलाद्यैर्वमनं पिबेद्वा
यो दुर्ब्बलस्तं शमनैश्चिकित्सेत् ।
रसैर्मनोज्ञ लघुभिर्विशुष्कै-
र्भक्ष्यैः सभोज्यैर्विविधैश्च पानैः ॥ १८ ॥
सुसंस्कृतास्तित्तिरिवर्हिलाव-
रसा व्यपोहन्त्यनिलप्रवृत्ताम् ।
छर्दिं तथा कोलकुलत्थधान्य-
विल्वादि-मूलाम्लयवैश्च यूषः ॥ १९ ॥

वातात्मिकायां हृदयद्रवार्त्तः कामं पिवेत् सैन्धववद्घृतं वा ।
सिद्धं तथा नागरधान्यकाभ्यां दध्ना च तोयेन च दाड़िमस्य ॥

चूर्णानि मधुना लिह्यात् । एवं यानि हृद्यानि कफपित्तहारीणि विरेचनानि तानि मद्यैः पयोभिश्च युतानि युक्त्या सेवितानि ऊर्द्ध मुदीर्णं दोषमधो नयन्ति ॥ १७ ॥

गङ्गाधरः—वल्लीत्यादि । कफपित्तहारि वमनन्तु वल्लीफलाद्यैस्तिक्तालावू प्रभृतिभिः पिवेत् । यो दुर्व्वलस्तं छर्दिरोगात्त शमनैश्चिकित्सेत् । शमनार्थमाह । लघुभिर्मनोज्ञैर्मांसरसैर्लघुभिरेव विशुष्कैर्भक्ष्यैरपूपादिभिः । विविधैश्च लघुभिरेव सभोज्यैः सान्नपेयादिभिः पानैश्चिकित्सेत् ॥ १८ ॥

गङ्गाधरः—तत्र लघुमांसरसकार्य्यमाह—सुसंस्कृता इत्यादि । घृतादिना भृष्टा मरिचजीरकादियुक्ताः । तथा कोलादिभिर्यूषोऽनिलप्रवृत्तां छर्दिं व्यपोहतीति । विल्वादि पञ्चमूलं मूलाम्लं काञ्जिकाधःस्थितकिट्टं यवान्तैः साधनैर्द्रव्यैः कुलत्थो यूषः कार्य्यः ॥ १९ ॥

गङ्गाधरः—वातात्मिकायामित्यादि । हृदयद्रवः वक्षसि धगधक्कृतस्पन्दः । सैन्धववद्घृतं सैन्धवमिश्रितं चतुर्गुणजले सिद्धं घृतं यथेच्छं पिवेत् । तथा नागरधान्याभ्यां कल्काभ्यां चतुर्गुणेन दध्ना सिद्धं घृतं वा पिवेत् । दाड़िमस्य

चक्रपाणिः—फलाद्यैरिति फलानि जीमूतेक्ष्वाकुप्रभृतीनि पठितानि, तैः । शमनैरिति दोषनिर्हरणं विना दोषसाम्यकरैः । उक्तं हि पुष्कलावते—'न शोधयति यद्दोषान् समान् नोदीरयत्यपि । समीकरोति विषमान् तत् संशमनमुच्यते' इति ॥ १८ ॥

चक्रपाणिः—सुसंस्कृता इत्यादिना वैशेषिकी वातजा चिकित्सा उच्यते ॥ १९ ॥

व्योषेण युक्तां लवणैस्त्रिभिश्च तस्यैव मात्रामथवा प्रदद्यात्।
स्निग्धानि हृद्यानि च भोजनानि रसैः सयूषैर्दधिदाड़िमैश्च ॥२०
पित्तात्मिकायां त्वनुलोमनार्थं द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात्।
कफाशयस्थं त्वतिमात्रवृद्धं पित्तं हरेत् स्वादुभिरूर्द्ध्वमेव ॥ २१ ॥

शुद्धाय काले मधुशर्कराभ्यां
लाजैश्च मन्थं यदि वापि पेयाम्।
प्रदापयेन्मुद्गरसेन वापि
शाल्योदनं जाङ्गलजैरसैर्वा ॥ २२ ॥

तोयेन दाड़िमफलरसेन सिद्धं घृतं ना पिबेत्। अथवा तस्यैव दाड़िमरससिद्धस्य घृतस्य मात्रां व्योषयुक्तां त्रिभिर्लवणैः सौवर्च्चलसैन्धवविड़लवणैश्च युक्तामनुरूपेण मिलितां वातच्छर्द्यां प्रदद्यात्। भोजनान्यन्नानि स्निग्धानि हृद्यानि मण्डपेयादीनि वातहरहृद्यद्रव्यसाधितानि लघुभिर्मांसरसैर्यूषैर्दधिभिर्दाड़िमैश्च प्रदद्यादिति वातजच्छर्दिचिकित्सितम् ॥ २० ॥

गङ्गाधरः—अथ पित्तच्छर्दिचिकित्सितमाह—पित्तात्मिकायामित्यादि। द्राक्षारसैर्विदारीरसैरिक्षुरसैर्वा युक्ता चूर्णिता त्रिवृत् पित्तच्छर्द्यामनुलोमनार्थं स्यात्। कफाशयस्थमतिमात्रवृद्धपित्तन्तु स्वादुभिरूर्द्ध्वहरवमनद्रव्यैरूर्द्ध्वं हरेत् वामयेत् ॥ २१ ॥

गङ्गाधरः—शुद्धायेत्यादि। अनेन विधानेन शुद्धाय पित्तच्छर्दियुक्ताय काले बुभुक्षायां जातायां लाजैश्चूर्णीकृतैर्द्रवेणालोड़ितैर्मन्थं मधुशर्कराभ्यां यथायोग्यं प्रदापयेत्। अथवा लाजैः पेयां मधुशर्कराभ्यां युक्तां प्रदापयेत्। अग्निबलाधिक्ये मुद्गरसेन शाल्योदनं प्रदापयेदथवा जाङ्गलमांसजरसैः शाल्योदनं प्रदापयेत् ॥ २२ ॥

चक्रपाणिः—सैन्धववदिति सैन्धवप्रक्षेपम्। तोयेन च दाड़िमस्य इति दाड़िमरसेन। व्योषेणेत्यादौ व्योषादीनां घृतमात्रायां प्रक्षेपार्थम् ॥ २० ॥

चक्रपाणिः—कफाशयस्थमिति कफस्थानस्थम्। आमाशयोर्द्ध्वभागो वक्षः, तत्स्थं हरेत्। ऊर्द्ध्वमेवेति वमनेनैव हरेत् ॥ २१ ॥

चक्रपाणिः—यदि वापि पेयामिति मन्दाग्निं प्रति पेया ज्ञेया ॥ २२ ॥

सितोपलामाक्षिकपिप्पलीभिः
कुल्माषलाजायवसक्तुगृञ्जान्।
खर्ज्जूरमांसान्यथ नारिकेलं
द्राक्षामथो वा वदराणि लिह्यात्॥
स्रोतोजलाजोत्पलकोलमज्ज-
चूर्णानि लिह्यान्मधुनाभयां वा।
कोलास्थिमज्जाञ्जनमक्षिकाविड्-
लाजासितामागधिकाकणा वा॥ २३॥

गङ्गाधरः—सितोपलेत्यादि। कुल्माषलाजयवानां सक्तून् गृञ्जनचूर्णं मिश्रयित्वा पिप्पल्या सह युक्तं सितोपलामधुभ्यां लिह्यात्। खर्ज्जूरमांसानि खर्ज्जूरस्य कोमलमस्तकानि पिप्पल्या सहितानि पेषयित्वा सितोपलामधुभ्यां लिह्यात्। अथ नारिकेलं पिप्पलीसहितं पेषयित्वा सितोपलामधुभ्यां लिह्यात्। एवं द्राक्षां पिप्पलीयुक्तां पेषयित्वा सितोपलामधुभ्यां लिह्यात्। अथवा वदराणि शुष्काणि पिप्पलीयुक्तानि पिष्ट्वा सितोपलामधुभ्यां लिह्यादेवं प्रत्येकेन सह योजनार्थं तृतीयान्तपदं सितोपलामाक्षिकपिप्पलीभिरिति प्रयुक्तम्। कुल्माषश्चणकः पित्तविकारे यौगिकः। "स्याद् यावकस्तु-कुल्माष" इति वनमाषस्य पर्य्यायः नतु कुलत्थपर्य्याययावकः कुल्माषश्चेति। कुलत्थस्य पित्तवर्द्धकत्वेन पित्तच्छर्द्यामयौक्तिकत्वात्। कुलत्थः कफवातघ्नो ग्राह्युष्णस्तुवरः कटुरित्युक्तेः। स्रोतोजेत्यादि। स्रोतोजो रसाञ्जनम्, रसाञ्जनादीनां चूर्णानि मिलितानि मधुना लिह्यात्। अभयां वा मधुना लिह्यात्। कोलास्थिमज्जेत्यादीनि परिमलितान्येकयोगः। मक्षिकाणां विट् मागधिकानां कणास्तण्डुलान् मधुना लिह्यादिति पूर्व्वेणान्वयः॥ २३॥

चक्रपाणिः—कुल्माषलाजायवसक्तगृञ्जानिति पिष्टकृता भक्ष्याः। पारियात्रास्तु मुद्गान् मसूरानुन्स्विन्नमर्दितान् कुल्माषानाहुः। गृञ्जः समण्डो यवौदनः। खर्ज्जूरमांसानीति खर्ज्जूरफलमज्जा। खर्ज्जूरेत्यादौ लिह्यादित्यत्र सितोपलामाक्षिकपिप्पलीत्यनुवर्त्तनीयम्। स्रोतोजं स्रोतोऽञ्जनम्। कोलमज्जा कोलाभ्यन्तरम्। अभयां वेत्यत्रापि मधुना लिह्यादिति संबध्यते। कोलास्थीत्यादावपि मधुना लिह्यादित्यनुवर्त्तते॥ २३॥

द्राक्षारसं वा प्रपिवेत् सुशीतं
मृद्भृष्टलोष्ट्रप्रभवं जलं वा ।
जम्ब्वाम्रयोः पल्लवजं कषायं
पिबेत् सुशीतं मधुसंयुतं वा ॥
निशि स्थितं वारि समुद्गकृष्णं
सोशीरधान्यं चणकोदकं वा ।
गवेधुकामूलजलं गुडूच्याः
जलं पिबेदिक्षुरसं पयो वा ॥ २४ ॥
सेव्यं पिबेत् काञ्चनगैरिकं वा
सवालकं तण्डुलधावनेन ।
कल्कं तथा चन्दनसेव्यमांसी-
द्राक्षोत्तमावालकगैरिकाणाम् ॥

गङ्गाधरः—द्राक्षेत्यादि । द्राक्षाया रसं क्वाथं सुशीतं प्रपिवेत् । अथवा भृष्टमृत्तिकालोष्ट्रं जले निर्व्वाप्य शीतं कृत्वा प्रपिवेत् । जम्ब्वाम्रयोर्द्वयोर्नतु प्रत्येकम् । निशीत्यादि । मुद्गपिप्पलीभ्यां सह निशि स्थितं वारि पिवेत् । उशीरधान्यकाभ्यां सह चणकं जले क्षिप्त्वा निशि स्थितं यदुदकं तद् वा पिवेत् । गवेधुकानां क्षुद्रगोधूमानां मूलं जले निशि स्थितं यज्जलं तज्जलं वा पिबेदेवं गुडूच्या जलं निशि स्थितं पिबेत् । इक्षुरसं वा पयो वा पिबेत् ॥ २४ ॥

गङ्गाधरः—सेव्यमित्यादि । सेव्यमुशीरं चूर्णीकृत्य तण्डुलधावनेन सहैन पिवेत् । काञ्चनगैरिकं स्वर्णगैरिकं वालकचूर्णसहितं वा तण्डुल-धावनेन पिबेत् । चन्दनादीनां सप्तानां कल्कं तण्डुलधावनेन तथा पिबेत् ।

चक्रपाणिः—मृद्भृष्टलोष्ट्रजलं वेति मृन्मयलोष्ट्रनिर्व्वपणभवं जलमित्यर्थः । समुद्गकृष्णं पिप्पलीमुद्गसहितम् । निशि स्थितमित्यादौ सोशीरधान्यमिति द्वितीयः । चणकश्चेति तृतीयो योगः, तथा गवेधुका । योगद्वयेऽपि शीतकषायविधिर्ज्ञेयः ॥ २४ ॥

चक्रपाणिः—काञ्चनगैरिकमिति गैरिकं काञ्चनवर्णम् । सवालकं तण्डुलधावनेनेति विधानं सेव्यं पिबेदित्यनेन तथा काञ्चनगैरिकञ्चेत्यनेन च द्वितीययोगे संबध्यते ।

शीताम्बुना गैरिकशालिचूर्णं
मूर्व्वां तथा तण्डुलधावनेन ।
धात्रीरसेनोत्तमचन्दनं वा
स्युश्छर्द्दितृष्णासु समाक्षिकाणि ॥ २५ ॥
कफात्मिकायां वमनं प्रशस्तं
सपिप्पलीसर्षपनिम्बतोयैः ।
पिण्डीतकैः सैन्धवसंप्रयुक्त-
श्छर्द्यां कफामाशयशोधनार्थम् ॥ २६ ॥
गोधूमशालीन् सयवान् पुराणान्
यूषैः पटोलामृतचित्रकाणाम् ।
व्योषस्य निम्बस्य च तक्रसिद्धै-
र्यूषैः फलाम्लैः कटुभिस्तथाद्यात् ॥

अत्र तूत्तमा प्रियङ्गुः। गैरिकं स्वर्णगैरिकम्। शीतेत्यादि। गैरिकस्य शालेश्च चूर्णं मिलितं शीताम्बुना पिबेदिति पूर्व्वेण योजना। तथा मूर्व्वां चूर्णितां तण्डुलधावनेन पिबेत्। धात्रीरसेन आमलकीरसेनोत्तमचन्दनस्य श्वेतचन्दनस्य चूर्णं वा पिबेत्। छर्द्दितृष्णासु समाक्षिकाण्येतानि गैरिक-शालिमूर्व्वोत्तमचन्दनानां चूर्णानि स्युः ॥ २५ ॥

गङ्गाधरः—इति पित्तच्छर्द्दिचिकित्सितमुक्त्वा कफच्छर्द्दिचिकित्सितमाह—कफात्मिकायामित्यादि। पिप्पलीसर्षपनिम्बानां तोयैः सहितैः पिण्डीतकै-र्मदनफलकल्कैः सैन्धवसंप्रयुक्तैर्यथायोग्यसैन्धवयुक्तैर्वमनं कफात्मिकायां छर्द्यां प्रशस्तं कफामाशययोः शोधनार्थमिति ॥ २६ ॥

गङ्गाधरः—गोधूमेत्यादि। पुराणान् गोधूमादीन् पटोलादीनां यूषै-स्तथा व्योषस्य तक्रसिद्धैर्यूषैर्निम्बस्य च तक्रसिद्धैर्यूषैस्तथा फलाम्लैः

द्राक्षोत्तमा गोस्तनी द्राक्षेत्यर्थः। उत्तमचन्दनं धवलचन्दनम्। समाक्षिकं शीतं पश्चाद्युक्त-लिद्रव्याणि समाक्षिकाणि ॥ २५ ॥

चक्रपाणिः—पिण्डीतकैरिति मदनैः। कफामाशयशोधनार्थमिति कफस्यामाशयस्य च शोधनार्थम्। यद्यपि शालिगोधूमौ मधुरत्वयोगात् कफकरौ, तथापि पुराणतया न कफकरौ

रसांश्च शूल्यानि च जाङ्गलानां
मांसानि जीर्णान् मधुसीध्वरिष्टान् ।
रागांस्तथा षाड़वपानकानि
द्राक्षाकपित्थैः फलपूरकैश्च ॥ २७ ॥

मुद्गान् मसूरांश्चणकान् कलायान् भृष्टान् युतान् नागरमाक्षिकाभ्याम् ।
लिह्यात् तथैव त्रिफलाविड़ङ्ग-चूर्णं विड़ङ्गप्लवयो रसं वा ॥
सजाम्बवं वा वदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधुसंप्रयुक्तां लिह्यात् कफच्छर्दिविनिग्रहार्थम् ॥
मनःशिलायाः फलपूरकस्य रसः कपित्थस्य च पिप्पलीनाम् ।
क्षौद्रेण चूर्णं मरिचैश्च युक्तं लिहन् जयेच्छर्दिमुदीर्णवेगाम् ॥२८॥

शुष्ककोलादिभिस्तथा कटुभिरद्यात् । रसांश्चेत्यादि । जाङ्गलानां मांसरसांश्च शूल्यानि तेषां मांसानि शूलविद्धानि भट्टित्रीकृतानि जीर्णान् मध्वादीन् द्राक्षादिभिः कृतान् रागान् षाड़वान् पानकानि चाद्यात् ॥ २७ ॥

गङ्गाधरः—मुद्गानित्यादि । नागरमाक्षिकाभ्यां युतान् भृष्टान् मुद्गादीन् अद्यात् । एषामदनमुपकरणरूपेण ज्ञेयम् । लिह्यादिति । त्रिफलाविड़ङ्गचूर्णं लिह्यान्मध्वादिना यथायोग्यम् । विड़ङ्गप्लवयो रसं क्वाथं वा पिबेत् । प्लवः कवर्त्तमुस्तकम् । जाम्बवचूर्णसहितं शुष्कबदरचूर्णं लिह्यात् । मधुसंप्रयुक्तां मुस्तायुतां कर्कटशृङ्गीं लिह्यात् । मधुसंप्रयुक्तां दुरालभां वा लिह्यात् । मनःशिलाया इत्यादि । फलपूरकस्य रसैः कपित्थस्य च रसैर्मनःशिलाया आर्द्रकरसभावनाभिः शोधितायाश्चूर्णं गुञ्जामात्रं लिहंश्छर्दिं कफजां जयेत् । पिप्पलीनां चूर्णं मरिचैर्युक्तं क्षौद्रेण लिहन् कफजां छर्दि जयेत् ॥ २८ ॥

इति कृत्वा कफच्छर्द्यां विहितौ । उक्तं हि—'श्लेष्मलं मधुरं प्रायो जीर्णोच्छालियवादृते' इति । रागाः कपित्थादिद्रव्यकृताः । मनःशिलायाश्चूर्णं क्षौद्रेण युतं फलपूरकरसैर्लिहन् तथा कपित्थस्य रसैः पिप्पलीनां चूर्णं मरिचैश्च युक्तं क्षौद्रेण युतं लिहन्निति योजयेत् ॥ २३—२८ ॥

एषा पृथक्त्वेन च या क्रियोक्ता तां सन्निपातेऽपि समीक्ष्य बुद्ध्या।
रोगस्तदोषाग्निबलान्यवेक्ष्य कुर्य्याद्भिषक् शास्त्रविदप्रमत्तः ॥२९॥
मनोऽभिघाते तु मनोऽनुकूला वाचः समाश्वासनहर्षणानि।
लोकप्रसिद्धाः श्रुतयो वयस्याः शृङ्गारयुक्ताश्च हिता विहाराः ॥
गन्धा विचित्रा मनसोऽनुकूला मृत्पुष्पयुक्ताम्रफलादिकानाम्।
शाकानि भोज्यान्यथ पानकानि सुसंस्कृताः षाड़वरागलेहाः ॥
यूषा रसाः काम्बलिकाः खड़ाश्च मांसानि धाना विविधाश्च भक्ष्याः।
फलानि मूलानि च गन्धवर्णरसैरुपेतानि वमिं जयन्ति ॥
गन्धं रसं स्पर्शमथापि शब्दं रूपञ्च यद् यत् प्रियमप्यसात्म्यम्।
तदेव दद्यात् प्रशमे हि तस्य तज्जो हि रोगः सुख एव जेतुम् ॥ ३०

गङ्गाधरः—एषेत्यादि। यथा मया छर्द्देः पृथक्त्वेन वातादिजायाः क्रिया उक्ता शास्त्रविदप्रमत्तो भिषक् सन्निपातेऽपि छर्दिरोगे बुद्ध्या समीक्ष्य तां क्रियां रोगादीन्यवेक्ष्य कुर्य्यादिति ॥ २९ ॥

गङ्गाधरः—पञ्चमच्छर्दिचिकित्सामाह—मन इत्यादि। मनोऽभिघाते द्विष्टार्थसंयोगजातायां छर्द्यां लोकप्रसिद्धानां हर्षजनकाख्यायिकादीनामितिहासपुराणादुक्तानां श्रुतयः शृङ्गारयुक्ताः शृङ्गाररसोपयुक्ता विहारा न तु शृङ्गारः। गन्धेत्यादि। मनोऽनुकूला विचित्रा गन्धास्तथाम्रफलादीनां पुष्पयुक्ता मृत् गन्धग्रहणे हिता इति। शाकानीत्यादि। मनसोऽनुकूला इत्यनुवर्त्तते। मनोऽनुकूलानि शाकानि मनोऽनुकूलानि भोज्यानि अथ एवं सर्व्वाणि पानकादीनि मनोऽनुकूलानि विद्यात्। गन्धमित्यादि। गन्धादिकं यद् यत् प्रियमस्य नरस्यासात्म्यञ्च तदेव तस्य प्रशमे दद्यात्। कस्मात्? हि यस्मात् तज्जो यस्य यत् प्रियमथ चासात्म्यं तदसात्म्यजो रोगस्तदसात्म्यस्य प्रियस्य गन्धादेर्दानेन जेतुं सुख एव भवति ॥ ३० ॥ (?)

चक्रपाणिः—एषेत्यादिना सान्निपातिकी चिकित्सा उच्यते। समीक्ष्येति प्रत्यक्षीकृत्य। दोषस्तु रोगाग्निबलान्निरीक्ष्येति दोषादीनां बलं वीक्ष्य यद्बलवत् तत्प्रधानचिकित्सा कर्त्तव्या। रोगश्छर्दिरेव ॥ २९ ॥

चक्रपाणिः—मनोऽभिघात इति लोकप्रसिद्धाः श्रुतय इति लौकिकार्थानुगताः आख्यायिका इति। विहाराः क्रीड़ाः। लेहा व्यञ्जनरूपा लेहाः। गन्धवर्णरसैः उपेतानि प्रशस्तगन्धादि-

छर्द्द्यथितानाञ्च चिकित्सितात् स्वात्
चिकित्सितं कार्य्यमुपद्रवाणाम् ।
अतिप्रवृत्तासु विरेचनस्य
कर्म्मातियोगैर्विहितं विधेयम् ॥
छर्द्दिप्रसङ्गात् पवनो ह्यवश्यं
धातुक्षयाद् वृद्धिमुपैति तस्मात् ।
चिरप्रवृत्तास्वनिलापहानि
कार्य्याण्युपष्टम्भनबृंहणानि ॥
सर्पिर्गुडाः क्षीरविधिर्घृतानि
कल्याणकत्र्यूषणजीवनानि ।
वृष्यास्तथा मांसरसाः सलेहा-
श्छर्द्दिं चिरोत्थां प्रशमं नयन्ति ॥ ३१ ॥

गङ्गाधरः—छर्द्द्यथितानामित्यादि । छर्द्द्यथितानामुपद्रवाणां ज्वरादीनां स्वाच्चिकित्सिताच्चिकित्सितं कार्य्यम् । एतेन सर्व्वेषामेवोपद्रवाणां स्वस्वचिकित्सा कार्य्या भवति । अतिप्रवृत्तासु छर्द्दिषु विरेचनस्यातियोगैर्विहितं कर्म्म विधेयं कर्त्तव्यम् । छर्द्दीत्यादि । छर्द्दरतिप्रसङ्गात् धातुक्षयादवश्यं पवनो वृद्धिमुपैति । तस्माच्चिरप्रवृत्तासु छर्द्दिषु अनिलापहानि उपष्टम्भनानि बृंहणानि च कर्म्माणि कार्य्याणि भवन्ति, तान्याह—सर्पिरित्यादि । सर्पिर्गुडाः क्षतक्षीणचिकित्सितोक्ताः क्षीरविधिश्च

युतानि । गन्धमित्यादिना गन्धादीनां प्रियाणामुपयोगेन छर्द्याः प्रशमे सति । तज्जो हि रोग इति गन्धादीनां सात्म्यजनितरोगो जेतुं सुख एव भवति । मूलव्याधेः महात्ययस्य जितत्वादित्यभिप्रायः । सुखमेव जेतुमिति पाठे सुखं यथा भवति तथा जेतु ( पर्य्यन्तं )-मिति शेषः ॥ ३० ॥

चक्रपाणिः—अतिप्रवृत्तास्वित्यादि । अतिप्रवृत्तासु छर्द्दिषु विरेचनस्यातियोगे यत् कर्म्म विहितं संशोधनव्यापत्तिसिद्धौ तदिह विधेयमित्यर्थः । वमिप्रसङ्गात् छर्द्द्यनुबन्धात् पवनस्य वृद्धिर्भवति । तत्रोपस्तम्भनं छर्द्दीनां पवनस्य वा बृंहणं च्यवनप्राशादयो लेहाः ॥ ३१ ॥

भवति चात्र।

सङ्ख्या हेतुं लक्षणमुपद्रवान् साध्यतां तद्योगांश्च।
छर्द्दीनां प्रशमार्थं चिकित्सितं प्राह मुनिवर्य्यः॥ ३२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थाने छर्द्दिरोगचिकित्सितं नाम विंशोऽध्यायः॥ २०॥

पवनापहः। कल्याणादीनि घृतानि। तथा वृष्या मांसरसा लेहाश्च चिरोत्थां छर्द्दिं प्रशमं नयन्ति॥ ३१॥

गङ्गाधरः—अध्यायार्थमाह—भवति चात्रेत्यादि। सङ्ख्या इत्यादि। मुनिवर्य्य आत्रेयपुनर्वसुः॥ ३२॥

गङ्गाधरः—अध्यायं समापयति। अग्निवेशेत्यादि॥ ३३॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
छर्द्दिचिकित्सिते विंशेऽध्याये गङ्गाधरेण तु। कृते जल्पकल्पतरौ
चिकित्सितस्थानजल्पने। षष्ठस्कन्धे छर्द्दिचिकित्सितजल्पो हि
विंशिकी। शाखा समाप्ता व्याख्याता
शिष्याणां हितकाङ्क्षया॥ २०॥

चक्रपाणिः—हेतुमित्यादिना संग्रहः। उपद्रवानिति विट्स्वेदेत्यादिनोक्तानुपद्रवान्। मुनिवर्य्य इति मुनिश्रेष्ठः॥ ३२॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां छर्द्दिचिकित्सितं नाम विंशोऽध्यायः॥ २०॥

# एकविंशोऽध्यायः ।

अथातो विसर्पचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

कैलासे किन्नराकीर्णे बहुप्रस्रवणौषधौ ।
पादपैर्विविधैः स्निग्धे नित्यं कुसुमसम्पदा ॥
वहद्भिर्मधुरान् गन्धान् सर्व्वतः स्वस्त्यलङ्कृते ।
विहरन्तं जितात्मानमात्रेयमृषिवन्दितम् ॥
महर्षिभिः परिवृतं सर्व्वभूतहिते रतम् ।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥
भगवन् दारुणं रोगमाशीविषविषोपमम् ।
संसर्पन्तं शरीरेषु देहिनामुपलक्षये ॥

गङ्गाधरः—अथोद्दिष्टानुक्रमाच्छर्दिचिकित्सितानन्तरं वीसर्पचिकित्सितमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—कैलास इत्यादि। कैलासो नाम पर्व्वतविशेषः। तस्य विशेषणानि किन्नराकीर्णे इत्यादीनि। बहूनि प्रस्रवणानि बह्व्य ओषध्यो यत्र तत्र। कुसुमानां सम्पदा युतैः पादपैर्वृक्षैः। मधुरान् हृदयङ्गमान् गन्धान् वहद्भिः। सर्व्वतश्चतुर्दिक्षु महर्षिगणकृतस्वस्तिकर्म्मभिरलङ्कृते तत्र कैलासे विहरन्तमित्यादिकमात्रेयविशेषणम्। इदं वक्ष्यमाणं वाक्यम्। तदाह—भगवन्

चक्रपाणिः—पूर्व्वाध्याये छर्द्दिवेगविघातादृष्टविसर्पाणामुत्पत्तेः छर्द्यनन्तरं विसर्पस्य चिकित्सितमुच्यते। छर्द्देश्च रक्तदूषकत्वं विधिशोणितीये 'छर्द्दिवेगप्रतीघाता'दित्यादिना 'शरत्कालस्वभावाच्च शोणितं संप्रदुष्यती'त्यन्तेनोक्तम् ॥ १ ॥

चक्रपाणिः—कैलासेत्यादि। प्रश्नोऽत्र गुणदोषोपदर्शनपरः। शोभने हि देशे सुमनसो गुरवः शिष्यैः परिवृताः। कुसुमसंपदा पुष्पफलसम्पत्त्या। मधुरान् गन्धान् इष्टान् गन्धान्। विहरन्तं वर्त्तमानम्। जितात्मानं जितेन्द्रियम्। आशीविषाः सर्पाः। उपलक्षये पश्यामि।

सहसैव नरास्तेन परीताः शीघ्रकारिणा।
विनश्यन्त्यनुपक्रान्तास्तत्र मे संशयो महान् ॥
स नाम्ना केन विज्ञेयः संज्ञितः केन हेतुना।
कतिधातुः कतिविधो जायते कैश्च हेतुभिः ॥ *
सुखसाध्यः कृच्छ्रसाध्यो ज्ञेयो यश्चानुपक्रमः।
कथं कैर्लक्षणैः किञ्च भगवंस्तत्र भेषजम् ॥ २ ॥
तदग्निवेशस्य वचः श्रुत्वात्रेयः पुनर्व्वसुः।
यथावदखिलं सर्व्वं प्रोवाच मुनिसत्तमः ॥ ३ ॥
विविधं सर्पति यतो विसर्पस्तेन स स्मृतः।
परिसर्पोऽथवा नाम्ना सर्व्वतः परिसर्पणात् ॥ ४ ॥

इत्यादि। अनुपक्रान्ताश्चिकित्सयानारब्धाः। संशयमाह—स नाम्नेत्यादि। नाम संज्ञा हेतुः कतिधातुः कैर्हेतुभिः कतिविधश्च सुखसाध्यः कृच्छ्रसाध्यश्चानुपक्रमश्च कथं कैर्लक्षणैश्च तत्र किं भेषजमित्येकादश प्रश्नाः ॥ २ ॥

गङ्गाधरः—तत्रोत्तरमाह—तदग्नीत्यादि। मुनिसत्तम आत्रेयः पुनर्व्वसुः ॥३॥

गङ्गाधरः—तत्र प्रथमं नाम वक्तुं हेतुपूर्व्वकं नामाह—विविधमित्यादि। विविधं सर्पति यतस्तस्माद्विसर्पो नाम स रोगः, अथवा सर्व्वतः परिसर्पणात् परिसर्पो नाम स रोगः स्मृतः, विशब्दो विविधार्थः, परिशब्दः सर्व्वतोऽर्थः। इति येन हेतुना यन्नाम्ना संज्ञितस्तदुक्तम् ॥ ४ ॥

अनुपक्रान्ता गदाः केचिद् विनश्यन्ति, यथा व्यङ्गतिलकादयः। केचित् तु उपक्रान्ता अपि चिरेण घ्नन्ति यथा मेहगुल्मादयः। अनेन तु गृहीताः शीघ्रमेव विनश्यन्तीति त्वराविशेषं चिकित्सिते दर्शयन्ति। संज्ञितः केन हेतुनेति कस्माद्धेतोः वक्ष्यमाणविसर्पाः विसर्पसंज्ञया आख्याता इत्यर्थः। कियद्धातुरिति कतिधातुकारणकः। कथं कैर्लक्षणैरिति कथम्भूतः कैर्लक्षणैर्ज्ञेय इत्यर्थः ॥ २। ३ ॥

चक्रपाणिः—विविधमित्यादिना यथाक्रमं प्रश्नानामुत्तरमाह। विविधं सर्पतीति अध ऊर्द्ध्वं तिर्य्यक् तथा स्फोटशोफादिभिः प्रसरति विसर्पः। परिसर्पशब्दार्थं व्याकरोति। परितः सर्व्वतः। परिशब्दः सर्व्वतोऽर्थे इत्यर्थः। किंवा परिसर्पणशब्देन सर्पणमात्रमुच्यते। सर्व्वतःशब्देन परिशब्दार्थो व्याक्रियते, तेनोक्तं सर्व्वतः परिसर्पणादिति ॥ ४ ॥

* कतिभेदः कियद्धातुः किंनिदानः किमाश्रयः इति चक्रधृतः पाठः।

स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुकः ।
पृथक् त्रयस्त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रयः ॥
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः ।
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः ॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः ।
यस्तु कर्दमको घोरः स पित्तकफसम्भवः ॥ ५ ॥
रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः ।
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ॥ ६ ॥

गङ्गाधरः—कैर्हेतुभिः कतिविधः कतिधातुश्चेत्यनयोरुत्तरमाह—स चेत्यादि। स विसर्पः सप्तविधो दोषैर्भवति। सप्तधातुकश्च विज्ञेयः। दोषैः सप्तविधस्तु पृथगित्यादिना। तं सप्तविधमुद्दिष्टं निर्दिशति—वातिक इत्यादि। द्वन्द्वजानां त्रयाणां संज्ञाविशेषज्ञानार्थमाह—वक्ष्यन्ते द्वन्द्वजास्त्रय इति। तद् यथा—आग्नेय इत्यादि। आग्नेयादीनि त्रीणि नामानि ॥ ५ ॥

गङ्गाधरः—सप्तधातुकत्वमुद्दिष्टं यत् तन्निर्दिशति—रक्तमित्यादि। विज्ञेयाः सप्त धातव इत्यत्र लसीका नामोपधातुविशेषो न त्वम्बुधातुमूत्रादिनिखिलमिति कुष्ठविसर्पयोर्धातुभेदाद्भेद इति; कुष्ठे ह्युक्तं—"वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च। दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः" इति। केचिदिह लसीकाशब्देनाम्बुधातुमात्रं व्याख्याय कुष्ठोक्तहेतुकुपितदोषाणां हेतुप्रभावाच्चिरकारित्वस्वभावाद्रक्तपित्तयोरप्राबल्याच्च भेदो विसर्पात्। विसर्पहेतुकुपितदोषाणां हेतुप्रभावादचिरसर्पणस्वभावः प्रबलरक्तपित्ताभ्यां दोषैरारब्धत्वाद् विसर्पाणामिति वदन्ति। तत्र हेतुप्रभावतश्चिराचिरकारित्वादिस्वभावो दोषाणां

चक्रपाणिः—सप्तविधो दोषैरिति दोषभेदात् सप्तविधो भवति। एतेन साध्यासाध्यभेदोऽप्यस्य सम्भवतीति दर्शयति ॥ ५ ॥

चक्रपाणिः—पृथगित्यादिना निर्दिष्टं सप्तविधत्वं दर्शयति। रक्तमित्यादिना सप्तधातुत्वं स्फुटयति। रक्तादिदोषत्वं कुष्ठे यद्यप्यस्ति तथापि विसर्पणशीलदोषैर्विसर्पाः। कुष्ठानि तु चिरक्रियैर्दोषैर्जायन्त इत्यादि कुष्ठचिकित्सित एव प्रपञ्चितमनुसरणीयम्। दोषास्त्रयो मला इत्यत्र दोषशब्देनैव वातादिप्राप्तौ मला इति अत्यर्थदुष्ट्या शरीरमलिनीकरणत्वं प्रतिपादयितुमुक्तम्।

लवणाम्लकटूष्णानां रसानामतिसेवनात्।
दध्यम्लमस्तुशुक्तानां सुरासौवीरकस्य च॥
व्यापन्नबहुमद्योष्ण-रागषाड़वसेवनात्।
शाकानां हरितानाञ्च सेवनाच्च विदाहिनाम्॥
कूर्च्चिकानां किलाटानां सेवनान्मन्दकस्य च।
दध्नः शिण्डाकिपूर्व्वाणामालुकानाञ्च सेवनात्॥
तिलमाषकुलत्थानां तैलानां पिष्टकस्य च।
ग्राम्यानूपौदकानाञ्च सेवनाल्लसुनस्य च॥
प्रक्लिन्नानाञ्च मत्स्यानां विरुद्धानाञ्च सेवनात्।
अत्यादानात् दिवास्वप्नादजीर्णाध्यशनाशनात्॥
क्षतबन्धप्रपतनात् घर्म्मकर्म्मातिसेवनात्।
विषवाताग्निदोषाच्च विसर्पाणां समुद्भवः॥ ७॥

भवतीति सङ्गच्छते, द्वन्द्वजानामाग्नेयादीनामचिकित्स्यत्वादिवचनात्। रक्त-पित्तप्राबल्यं लसीकाशब्देनाम्बुधातुमात्रञ्चानार्षवचनमिति॥ ६॥

गङ्गाधरः—विसर्पहेतूनाह—लवणेत्यादि। दध्यम्लमस्तुशुक्तानां दध्यम्लमस्तु-कृतशुक्तानां कूर्च्चिकानां दधिकूर्च्चिकानां किलाटानां तक्रकूर्च्चिकानां दध्नः शिण्डाकिपूर्व्वाणां दधिकृतशिखरिणी पीतालुकानां पिण्डालुकादीनां सेवनात्। प्रक्लिन्नानां मत्स्यानां संयोगविरुद्धानाञ्च मत्स्यानाम्। अत्यादानमतिमात्रया भोजनम्। अजीर्णाशनादध्यशनाशनाच्च। घर्म्मकर्म्मणां रौद्राग्निप्रभृतीनाम्

उक्तं चान्यत्र—'शरीरदूषणाद्दोषा मलिनीकरणान्मलाः। धारणाद्धातवश्च स्युर्वातपित्तकफास्त्रयः' इति॥ ६॥

चक्रपाणिः—जायते कैश्च हेतुभिरित्यस्योत्तरं—लवणाम्लेत्यादि। उष्णानामिति उष्णवीर्य्याणां सैन्धवाममूलकादीनाम्। हरितानामिति हरितशाकवर्गपठितानामार्द्रकादीनाम्। कूर्च्चिका दधिकूर्च्चिका तक्रकूर्च्चिका च किलाटा नष्टक्षीरपिण्डा। मन्दकस्येति मन्दक्षीरजातस्य। शाण्डाकीपूर्व्वाणामिति शाण्डाकीसन्धानं शेषः। अजीर्णेऽशनमजीर्णाशनं किंवा अजीर्णस्या-परिणतस्यापचनम्। अविदग्धे पूर्व्वदिनान्नेऽशनमध्यशनम्॥ ७॥

एभिर्निदानैर्व्यामिश्रैः कुपिता मारुतादयः ।
दूष्यान् सन्दूष्य रक्तादीन् विसर्पन्त्यहिताशिनाम् ॥
वहिःश्रितः श्रितश्चान्तस्तथा चोभयसंश्रितः ।
विसर्पो बलमेषान्तु ज्ञेयं गुरु यथोत्तरम् ॥
वहिर्मार्गाश्रितं साध्यमसाध्यमुभयाश्रितम् ।
विसर्पं दारुणं विद्यात् सुकृच्छ्रन्त्वन्तराश्रयम् ॥ ८ ॥
अन्तःप्रकुपिता दोषा विसर्पन्त्यन्तराश्रये ।
वहिर्वहिःप्रकुपिताः सर्व्वत्रोभयसंश्रिताः ॥ ९ ॥
मर्म्मोपघातात् संरोधादयनानां विघट्टनात् ।
तृष्णातियोगाद्वेगानां विषमाणां प्रवर्त्तनात् ॥

अतिसेवनात् । विषादिदोषाद् दुष्टविषाद् दुष्टवाताद् दुष्टाग्निनश्चेति । सर्व्वविसर्पहेतव इति कहद्भिरिति प्रश्नस्योत्तरमिदम् ॥ ७ ॥

गङ्गाधरः—सुखसाध्यादिप्रश्नोत्तरं वक्तुमाह—एभिरित्यादि । एभिर्व्यामिश्रैर्निदानैः कुपिता मारुतादयः पुनरहिताशिनां रक्तादीन् रक्तलसीकात्वङ्मांसानि दूष्यान् सन्दूष्य विसर्पन्ति विसर्पं कुर्व्वन्ति । स च विसर्पो वहिःश्रितोऽन्तःश्रित उभयाश्रितश्चेति । तेषां मध्ये यथोत्तरं बलं गुरु ज्ञेयम् । तेन वहिर्मार्गाश्रितं विसर्पं साध्यं विद्यादुभयाश्रितमसाध्यमन्तराश्रयं सुकृच्छ्रं विद्यादिति ॥ ८ ॥

गङ्गाधरः—कथमित्यस्योत्तरमाह—अन्तरित्यादि । दोषा अन्तरभ्यन्तरे प्रकुपिता अन्तराश्रये अभ्यन्तराश्रये विसर्पन्ति विसर्पं कुर्व्वन्त्येवं वहिः प्रकुपिता वहिराश्रये विसर्पन्ति तथोभयसंश्रिता दोषाः सर्व्वत्र वहिरन्तश्च विसर्पं कुर्व्वन्तीति ॥ ९ ॥

गङ्गाधरः—तद्विज्ञानमाह मर्म्मेत्यादि । मर्म्मण उरस उपघातात् संरोधाद

चक्रपाणिः—व्यामिश्रैः संमिश्रैः । साध्यासाध्यविभागज्ञानार्थं शाखाश्रितत्वादीन्याह—वहिरित्यादि । यथोत्तरमिति वहिःश्रितात् अन्तःश्रितादुभयाश्रितश्च गुरुरित्यर्थः । अन्तराश्रित इति अन्तःशरीरे । बहिरिति शाखायां सर्पति ॥ ८ । ९ ॥

विद्याद् विसर्पमन्तर्यदाशु चाग्निबलक्षयात्।
अतो विपर्य्ययाद् बाह्यमन्यं विद्यात् स्वलक्षणैः॥ १० ॥
यस्य लिङ्गानि सर्व्वाणि बलवद् यस्य कारणम्।
यस्य चोपद्रवाः कष्टा मर्म्मगो यश्च हन्ति सः॥ ११ ॥
रूक्षोष्णैः कारणैर्वायुः पूरणैर्वा समाहितः।
प्रदुष्टो दूषयन् दूष्यान् विसर्पति यथाबलम्॥ १२ ॥

अयनानां श्वासोच्छ्वासमूत्रपुरीषादीनां प्रवृत्तिमार्गाणां संरोधात् विघट्टनाच्च तृष्णातियोगात् वेगानां विषमत्वेन प्रवर्त्तनात् अन्तर्विसर्पं विद्यात् आशुचाग्निबलक्षयाच्च। अतो लक्षणेभ्यो विपर्य्ययान्मर्म्मणोऽनुपघातात् असंरोधादयनानामविघट्टनात् तृष्णातियोगाभावाद् वेगानां समानां प्रवर्त्तनाद् बाह्यं विसर्पं विद्यात्। अन्यं बाह्याभ्यन्तरं विसर्पं स्वलक्षणैर्बाह्यलक्षणाभ्यन्तर-लक्षणैर्विद्यात् इति नार्थः भावाभावयोरेकत्रासम्भवात्। असाध्यत्ववचनात् तु वक्ष्यमाणैरसाध्यलक्षणैरुभयाश्रितं विद्यादित्यर्थः॥ १० ॥

गङ्गाधरः—तत्र तेषामनुपक्रमलक्षणमाह—यस्येत्यादि। यस्य विसर्पस्य वक्ष्यमाणानि सर्व्वाणि लिङ्गानि भवन्ति यस्य च बलवत् कारणं यस्य च कष्टा उपद्रवा यश्च मर्म्मग उरोगतो विसर्पः स तमातुरं हन्ति॥ ११ ॥

गङ्गाधरः—वातजविसर्पस्य निदानपूर्व्वकसम्प्राप्तिमाह—रूक्षोष्णैरित्यादि। रूक्षोष्णैः प्रदुष्टः कुपितो वायुरथवा पूरणः स्वकारणैः रूक्षोष्णपूरणद्रव्यैः समाहितः सन् दूष्यान् रक्तलसीकात्वङ्मांसानि दूषयन् यथाबलं विसर्पति विसर्पं करोति॥ १२ ॥

चक्रपाणिः—अन्तराश्रयादिविसर्पणमाह—मर्म्मोपघातादित्यादि। मर्म्मेति हृदयम्। विद्यात् स्वलक्षणैरिति वक्ष्यमाणविसर्पलक्षणैः॥ १० ॥

चक्रपाणिः—यस्य लिङ्गानि सर्व्वाणीति अन्तराश्रयबहिराश्रयविसर्पलक्षणानि॥ ११ ॥

चक्रपाणिः—रूक्षोष्णैरित्यादिना पृथक् हेतुलक्षणमाह। पूरणैः रूक्षादिभिः पूरणेन मार्गावरोधात् कुपितः परतन्त्रो वायुर्ज्ञेयः। उष्णं यद्यपि न साक्षाद्वातकरं तथापि रूक्षसञ्चयात् उष्णं वातं करोति। उष्णसम्बन्धात् तु सामान्यसम्प्राप्तिसम्प्राप्तं इह यत् कुपितं तज्जन्यमिति ज्ञेयम्॥ १२ ॥

तस्य रूपाणि भ्रमदवथुपिपासानिस्तोदशूलाङ्गमर्दोद्वेष्टन-कम्पज्वरतमक-कासास्थिसन्धिभेद-विवर्णत्वमनारोचकाश्चक्षुषो-राकुलत्वमस्रागमनम्। पिपीलिकानां संप्रसर इवाङ्गेषु। यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशः श्यावारुणावभासो वा श्वयथुमान् निस्तोदशूलभेदायाससङ्कोचहर्षस्फुरणैरतिमात्रैः पीड्यते। अनुपक्रान्तश्चोपचीयते शीघ्रभेदैः स्फोटैस्तनुभिररुणाभासैः श्यावैर्वा तनुविषमदारुणाल्पस्रावैर्विबद्धवातमूत्रपुरीषश्च भवति। निदानोक्तान्यस्य नोपशेरते विपरीतानि चोपशेरते। इति वातविसर्पः॥ १३॥

पित्तमुष्णोपचारेण विदाह्यम्लादिभिश्चितम्।
दूष्यान् सन्दूष्य धमनीः पूरयद्वै विसर्पति॥ १४॥

गङ्गाधरः—तस्य रूपाणीत्यादि। दवथुरुपतापः। उद्वेष्टनं दण्डादिनेव ताड़नम्। अस्थिसन्धिषु भेद इव पीड़ा। चक्षुषोराकुलत्वं सजलत्वम्। अस्रागमनं मुखादितो रक्तागमः। यस्मिंश्चावकाशे स्थाने विसर्पोऽनु पश्चात् सर्पति सोऽवकाशस्तत्स्थानं श्यावारुणाभासः श्वयथुमान् वा भवति निस्तोदादिभिश्चातिमात्रैः सोऽवकाशो वै पीड्यते। अनुपक्रान्तश्चिकित्सयाऽनारब्धः स विसर्पान्वितोऽवकाशः शीघ्रभेदैः शीघ्रोद्भिन्नैः स्फोटैस्तनुभिः सूक्ष्मैररुणाभैः श्यावैर्वा तनुविषमदारुणाल्पस्रावैरुपचीयते। स आतुरो विबद्धवातादिश्च भवतीति। निदानोक्तानि सामान्यानि लवणाम्लादीनि विशेषाणि च रूक्षोष्णानि नास्य विसर्पिण उपशेरते। विपरीतानि स्निग्धशीतानि चास्योपशेरते। इति वातविसर्प उक्तः॥ १३॥

गङ्गाधरः—पित्तविसर्पमाह—पित्तमित्यादि। उष्णोपचारेण विदाह्यम्लादिभिश्चितं पित्तं दूष्यान् रक्तादींश्चतुरः सन्दूष्य वातकफैः समाहितः धमनीः पूरयत् सद् विसर्पति विसर्पं करोति। पित्तमित्युक्त्या नैकं पित्तं दोषः, सप्तधातुकः इति वचनात्। सर्व्वत्रैव स्वस्वेतरदोषयोगो बोध्यः। पित्तमिति

चक्रपाणिः—दवथुश्च पैत्तिकोऽप्यत्र उत्सर्गसिद्धविसर्पार्थपित्तरक्तसम्भवाद् भवति॥ १३॥

चक्रपाणिः—पित्तमित्यादिना पैत्तिकमाह। पूरयदितिपदं यद्यपि पैत्तिके एवोक्तं तथापि

तस्य रूपाणि—ज्वरस्तृष्णामूर्च्छाछर्दिररोचकोऽङ्गभेदः स्वेदोऽतिमात्रमन्तर्दाहः प्रलापः शिरोरुक् चक्षुषोराकुलत्वम् अस्वप्नोऽरतिर्भ्रमः शीतवातवारितर्षोऽतिमात्रं हरितहारिद्र-मूत्रवर्च्चस्त्वं हारिद्रदर्शनम्। यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशस्ताम्रहरितहारिद्रनीलकृष्णरक्तानामन्यतमः पुष्यति सोत्सेधैश्चातिमात्रं दाहसम्भेदनपरीतैः स्फोटैरुपचीयते तुल्य-वर्णास्त्राविभिरचिरपाकश्च भवति। निदानोक्तान्यस्य नोप-शेरते विपरीतानि चोपशेरते। इति पित्तविसर्पः॥ १५॥

स्वाद्वम्ललवणस्निग्ध-गुर्व्वन्नस्वप्नसञ्चितः।
कफः सन्दूषयन् दूष्यान् कृत्स्नमङ्गं विसर्पति॥ १६॥

पित्तप्रधानत्रिदोष इति वा। ननु तर्हि कुपितो वायुरिति—पूर्व्वत्र कथं त्रिदोष-लाभः स्यादिति सिद्धं सप्तधातुक इति वचनात्॥ १४॥

गङ्गाधरः—तस्य रूपाणीति—ज्वर इत्यादि। शीतवातवारितर्षः—अति-मात्रं शीतवाते शीतवारिण्यभिलाषः। यस्मिन्नङ्गावकाशे विसर्पो भवन् अनु पश्चात् सर्पति सोऽङ्गावकाशस्ताम्रवर्णादीनामन्यतमो वर्णः सन् पुष्यति पुष्टो भवति। अतिमात्रदाहसम्भेदनाभ्यां परीतैः सम्भेदनं स्फोटानामाशूद्भेदनं सोऽवकाश एवम्भूतैः स्फोटैरुपचीयते। निदानोक्तानि लवणाम्लादीनि सामान्यानि विशेषाणि च विदाह्यम्लादीनि। विपरीतानि चैषां शीतस्निग्धा-दीनि। इति पित्तविसर्प उक्तः॥ १५॥

गङ्गाधरः—कफविसर्पमाह—स्वाद्वम्लेत्यादि। स्वप्नो दिवानिद्रा॥ १६॥

समाने स्वार्थे सर्व्वस्यापि अभिहितो विधिरन्यस्याप्यनुसञ्जनीय इति न्यायात् अन्यविषयेष्वपि ज्ञेयम्। अयञ्च समानो विधिः पित्तप्रधानत्वात् विसर्पाणां पित्तप्रकारे एवोक्तः॥ १४॥

चक्रपाणिः—शीतवातशीतपयसोः तृष्णा शीतवातवारितर्षः। अवकाशो देशे॥ १५॥

चक्रपाणिः—स्वाद्वम्लेत्यादिना कफजमाह। हेत्वन्तरेष्वपि श्लेष्मणो विद्यमानेषु स्वाद्वा-दीनामभिधानम् एषामेव प्रायो विसर्पजनकत्वात्। एवं वातपित्तजहेत्वभिधानेऽपि वर्णनीयम्। कृत्स्नमङ्गं विसर्पति कृत्स्नमिति ऊर्द्ध्वम्, श्लेष्मण ऊर्द्ध्वकाये एवावस्थानात्॥ १६॥

तस्य रूपाणि शीतज्वरो गौरवं निद्रारोचकोऽविपाको मधुरास्यत्वमास्योपलेपः प्रसेकश्छर्दिरालस्यं स्तैमित्यमग्निसादो दौर्ब्बल्यम् । यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशः श्वयथुमान् पाण्डुर्नातिरक्तः स्नेहसुप्तिस्तम्भगौरवैरन्वितोऽल्पवेदनः कृच्छ्रपाकैश्चिरकारिभिर्बहलत्वगुपलेपैः स्फोटैः श्वेतपाण्डुभिरनुबध्यते । प्रभिन्नश्च श्वेतपिच्छिलं तन्तुमद्घनमनुबद्धं दुर्गन्धमास्रावं स्रवत्यूर्द्ध्वञ्च गुरुभिः स्थिरैर्जालावततैः स्निग्धैर्बहलत्वगुपलेपैरनुबध्यतेऽनुषङ्गी भवति । श्वेतत्वङ्नखनयनवदनमूत्रवर्च्चस्त्वम् । निदानोक्तान्यस्य नोपशेरते विपरीतानि चोपशेरते । इति श्लेष्मविसर्पः ॥ १७ ॥

गङ्गाधरः—तस्य रूपाणीत्यादि । प्रसेको मुखस्रावः । यस्मिंश्चावकाश इति कफविसर्पः सन् अनु पश्चाद् यस्मिन्नङ्गावकाशे सर्पति सोऽनुसर्पणावकाशः श्वयथुमानित्यादि । कृच्छ्रपाकादिभिः स्फोटैरनुबध्यते उपचीयते । बहला घना त्वक् चर्म्म तया उपलेप आवरणं येषां तैर्बहलत्वगुपलेपैः स्फोटैः । प्रभिन्नश्च स सस्फोटः श्वेतादिरूपं स्रावं स्रवतीति स एव विसर्पः प्रभिन्नः श्वेतादिकं स्रावं स्रवतीत्युच्यते । अनुबन्धं निःशेषेण न स्रवति शेषस्तु वर्त्तते इति । ऊर्द्धञ्च स्फोटानामुपरिभागे गुरुस्थिर-जालावततस्निग्धबहलत्वगुपलेपस्फोटैरनुबध्यते, एकः स्फोटो नश्यत्यपरो जायत इत्येवमनुबन्धः स्फोटानां भवति । तेन चानुषङ्गी निरन्तरानुबन्धी भवति । श्वेतत्वगादित्वं चास्य नरस्य स्यात् । निदानोक्तानि सामान्यानि लवणाम्लादीनि विशेषाणि स्वाद्वम्लादीनि च । तेषां विपरीतानि कटूष्णादीनि । इति श्लेष्मविसर्पः उक्तः ॥ १७ ॥

चक्रपाणिः—अनुषङ्गी चिरकालस्थायी ॥ १७ ॥

वातपित्तं प्रकुपितमतिमात्रं स्वहेतुभिः।
परस्परं लब्धबलं शीघ्रमङ्गे विसर्पति ॥ १८ ॥

तदुपतापादातुरः सर्व्वशरीरमङ्गारैरवकीर्य्यमाणं मन्यते छर्द्द्यतीसारमूर्च्छादाहमोहज्वर-तमकास्थिसन्धिभेदतृष्णारोचका-विपाकाङ्गभेदादिभिश्चाभिभूयते। यश्चावकाशं विसर्पोऽनुसर्पति सोऽवकाशः शान्ताङ्गारप्रकाशोऽतिरक्तो वा भवत्यग्निदग्धप्रकारैश्च स्फोटैरुपचीयते। स शीघ्रगत्वादाश्वेव मर्म्मानुसारी भवति मर्म्मणि चोपतप्ते पवनोऽतिबलं भिनत्त्यङ्गानि अतिमात्रं प्रमोहयति संज्ञां हिक्काश्वासौ जनयति प्रणाशयति निद्राम्। स नष्टनिद्रो मूढसंज्ञो व्यथितचेता न क्वचित् सुखमुपलभते परितः स्थानादासनाच्छय्यां क्रान्तुमिच्छति क्लिष्टभूयिष्ठश्चाशु निद्रां लभते दुष्प्रबोधो च भवति। एवंविधमातुरमग्निविसर्पपरीतम् अचिकित्स्यं विद्यात् ॥ १९ ॥

गङ्गाधरः—आग्नेयादीन् क्रमेणाह—वातपित्तमित्यादि। स्वहेतुभिर्वात-हेतुभिर्व्यायामादिभिर्वातः प्रकुपितः। पित्तहेतुभिः कट्वम्लोष्णादिभिः प्रकुपितं पित्तमिति द्वयं वातपित्तं प्रकुपितं परस्परमन्यतरस्मादन्यतरं लब्धबलं शीघ्रम् अङ्गे विसर्पति विसर्पं करोति ॥ १८ ॥

गङ्गाधरः—तस्य रूपाणि—तदुपतापादित्यादि। अङ्गारः प्रदीप्यमानैरिवा-ङ्गारैः। विसर्पो भूत्वा यं यमवकाशमनुविसर्पति सोऽवकाशः शान्ताङ्गारवत् कृष्णप्रकाशोऽतिरक्तो वा भवति। स्फोटैश्चाग्निदग्धप्रकारैरुपचीयते। स विसर्पः शीघ्रगत्वान्मर्म्माण्यनुसरति मर्म्मणि चोपतप्ते हृदयेऽतिबलं पवनो गात्राणि भिनत्ति। संज्ञामतिमात्रं प्रमोहयति हिक्काश्वासौ च जनयति। सुखोपलाभा-भावादासनात् स्थानात् शय्यां परितश्चतसृषु दिक्षु क्रान्तुं गन्तुमिच्छति।

चक्रपाणिः—वातपित्तमित्यादिना अग्निविसर्पलक्षणमाह। परस्परं लब्धबलमिति अन्योन्य-वृद्धं वातपित्तम् ॥ १८ ॥

चक्रपाणिः—शान्ताङ्गारप्रकाश इति निर्व्वाणाङ्गारसदृशः कृष्ण इत्यर्थः। स्थानात् अवस्थानात्

कफपित्तं प्रकुपितं बलवत् स्वेन हेतुना ।
विसर्पत्येकदेशे तु प्रक्लेदयति चाधिकम् ॥ २० ॥

तद्विकारः शीतज्वरः शिरोरुग् दाहः स्तैमित्यमङ्गावसदनं निद्रा तन्द्रा प्रमोहोऽन्नद्वेषः प्रलापोऽग्निनाशो दौर्ब्बल्यमस्थिभेदो मूर्च्छा पिपासा स्रोतसां प्रलेपो जाड्यमिन्द्रियाणामामोपवेशनमङ्गविक्षेपोऽरतिरौत्सुक्यश्चोपजायते प्रायशश्चामाशये विसर्पत्येकदेशग्राही च स्यात् । यस्मिंश्चावकाशे विसर्पो विसर्पति सोऽवकाशो रक्तपीतपाण्डरपिड़काभिरवकीर्ण इव मेचकाभो मलिनस्निग्धो बहूष्मा गुरुः स्तिमितवेदनः श्वयथुमान् गम्भीरपाको निरास्रावः शीघ्रक्लेदनश्च भवति । स्विन्नक्लिन्न-

तथा शय्यां परितः क्रमणात् दुःखाच्च क्लिष्टभूयिष्ठश्च सन्नाशु निद्रां लभते । ततो निद्रातो दुष्प्रबोधी भवति । इत्यग्निविसर्प उक्तः ॥ १९ ॥

गङ्गाधरः—तुल्यसाध्यत्वासाध्यत्वसाधर्म्म्यादाग्नेयात् परं कर्द्दमाख्यविसर्पं कफपित्ताभ्यामाह—कफपित्तमित्यादि । स्वेन हेतुना गुरुमधुरादिना कफः प्रकुपितः कट्वम्लादिना पित्तं प्रकुपितमिति द्वयं स्वेन हेतुना प्रकुपितं विसर्पहेतुभिर्बलवत् सत् शरीरस्यैकदेशे विसर्पति विसर्पं करोति । तत्र देशेऽधिकं प्रक्लेदयति च ॥ २० ॥

गङ्गाधरः—तस्येमानि रूपाणि—तद्विकार इत्यादि । शीतज्वर इत्यादि लक्षणानि । प्रायशश्चामाशये नाभेरूर्द्ध्वमधस्ताद्वक्षसो विसर्पति न सर्व्वत्र किन्तु एकदेशग्राही । यस्मिंश्चेति स विसर्पो भूत्वा यस्मिन्नङ्गावकाशेऽनुसर्पति सोऽवकाशो रक्तवर्णादिपिड़कावकीर्ण इव भवति मेचकाभादिश्च स्विन्नक्लिन्न-

क्रान्तुं गन्तुम् । एवंविधमित्यनेन अग्निविसर्पस्य अनुपहते मर्म्मणि साध्यत्वे वक्ष्यमाणावस्था उक्ता ॥ १९ ॥

चक्रपाणिः—कफपित्तमित्यादिना कर्द्दमविसर्पमाह ॥ २० ॥

चक्रपाणिः—प्रायश्चामाशये विसर्पतीति कर्द्दमस्य कफजन्यत्वात् कफपित्तयोश्च आमाशयस्थितत्वादिति भावः । एकदेशग्राही न सर्व्वशरीरव्यापकः । मलिनो मलिनाङ्गवदनकः ।

पूतिमांसश्च क्रमेणाल्परुक् संज्ञास्मृतिहन्ता भवेत् पादपृष्ठश्चावदीर्य्यते * स कर्द्दम इव चोपपीड़ितोऽन्तरं प्रयच्छत्युपाक्लिन्नमांसत्यागी सिरास्नायुसन्दर्शी कुणपगन्धिश्च भवति तं कर्द्दमविसर्पपरीतमचिकित्स्यं विद्यात् ॥ २१ ॥

स्थिर-गुरु-कठिन-मधुर-शीत-स्निग्ध-मधुरान्नपानाभिष्यन्दिसेविनामव्यायामसेविनामप्रतिकर्म्मशीलानाञ्च श्लेष्मा वायुश्च प्रकोपमापद्यते। तावुभौ दुष्टप्रवृद्धावतिबलौ प्रदूष्य दूष्यान् विसर्पाय कल्पेते। तत्र वायुः श्लेष्माणमनेकधा भिन्दन् क्रमेण ग्रन्थिमालां कृच्छ्रपाकां † कफाशये संजनयति। उत्सन्नरक्तस्य वा प्रदूष्य रक्तं सिरास्नायुमांसत्वगाश्रितानां ग्रन्थीनां मालां

पूतिमांसश्च सोऽवकाशो भवति क्रमेणैव। अयं विसर्पोऽल्परुक् संज्ञास्मृतिहन्ता च। पादयोः पृष्ठं पादपृष्ठम्। स विसर्पः कर्द्दम इव हस्तादिनोपपीड़ित उपलक्ष्यते। अन्तरमभ्यन्तरं प्रयच्छति। उपक्लिन्नमांसत्यागी पङ्कवच्छीर्णं मांसं स्खलति। तथा मांसपतने सिरादीनि दृश्यन्ते कुणपगन्धिश्च तथापचनेन शववद्गन्धोऽस्य भवति। इति कफपित्तजः कर्द्दमविसर्प उक्तः ॥ २१ ॥

गङ्गाधरः—अथ ग्रन्थिविसर्पमाह—स्थिरेत्यादि। अप्रतिकर्म्मशीलानामिति स्थिरगुर्व्वादिसेवनेन सञ्चिते कफे वाते च तदानीं तत्प्रतिकारकरणशीलरहितानाम्। तावुभौ श्लेष्मवायू कथं विसर्पाय कल्पेते इत्यत आह—तत्र वायुस्तयोर्मध्ये वायुः श्लेष्माणमनेकधा भिन्दन् क्रमेण ग्रन्थिमालां ग्रन्थीनां समूहं जनयति कफाशये नाभेरूर्द्ध्वमधस्ताद्वक्षसः। तत्रापरप्रकारमाह—उत्सन्नेत्यादि। उत्सन्नरक्तस्य रक्तं रक्तलसीकालङ्मांसश्च दूषयन् वायुः

गम्भीरपाकः अन्तःपाकः। अन्तरं प्रयच्छति अवकाशं ददाति। कर्द्दमसारूप्याच्चास्य कर्द्दमसंज्ञा ज्ञेया। कर्द्दमविसर्पपरीतम् अचिकित्स्यं विद्यात् यथोक्तसर्व्वलक्षणं कर्द्दममसाध्यं विद्यात्। असम्पूर्णलक्षणं प्रति तु चिकित्सां वक्ष्यति ॥ २१ ॥

चक्रपाणिः—स्थिरेत्यादिना ग्रन्थिविसर्पमाह। दुष्टप्रवृद्धाविति परस्परदूषकत्वेन प्रवृद्धौ। कृच्छ्रपाकसाध्यां कृच्छ्रपाका कृच्छ्रसाध्या च। कृच्छ्रपाकता च चिरेण पाको ज्ञेयः।

* परामृष्टोऽवदीर्य्यते इति वा पाठः। † कृच्छ्रपाकसाध्यामिति चक्रस्वीकृतः पाठः।

**कुरुते तीव्ररुजानां ग्रन्थीनां स्थूलानामणूनां दीर्घवृत्तरक्तानाम्। तदुपतापात् ज्वरातिसार-हिक्का-श्वास-कास-शोष-प्रमोह-वैवर्ण्यारोचकाविपाकप्रसेकच्छर्दि मूर्च्छाङ्गभङ्गनिद्रारतिसदनानि प्रादुर्भवन्त्युपद्रवा एतैरुपद्रवैरुपद्रुतः स च सर्व्वकर्म्मणां विषयमतिपतितो वर्ज्जनीयो भवतीति ग्रन्थिविसर्पः॥ २२॥**

**उपद्रवस्तु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा रोगात् पश्चाज्जायते इत्युपद्रवसंज्ञः। तत्र प्रधानं व्याधिर्व्याधेर्गुण-**

विशेषेण तदुत्सन्नं रक्तं प्रदूष्य श्लेष्मागममनेकधा भिन्दन् स्थूलानामणूनां दीर्घवृत्तरक्तानां तीव्ररुजानां ग्रन्थीनां सिराश्रितं ग्रन्थिविसर्प कुरुते, इमं विसर्पं बाह्याभ्यन्तराश्रितं विद्यात्। तस्यैतानि रूपाणि चाह—तदुपतापादित्यादि। ज्वरादिसदनान्ता उपद्रवास्तेषां ग्रन्थीनामुपतापात् प्रादुर्भवन्ति। एतैरुपद्रवैर्ज्वरादिभिरुपद्रुतो ग्रन्थिविसर्पः सर्व्वकर्म्मणां साधनविषयमतिपतितस्ततो विवर्ज्जनीयो भवति। इति ग्रन्थिविसर्प उक्तः॥ २२॥

गङ्गाधरः—ननु यथा वातादिविसर्पाणां रूपाणि भवन्ति यानि तानीवाग्नेयविसर्पादीनामुपतापाद् यानि भवन्ति किं तानि रूपाण्येवोपद्रवा उच्यन्त इत्यत आह—उपद्रवस्त्वित्यादि। यो यो मूलभूतस्य रोगस्य जन्मन उत्तरकालज एव तद्रोगाश्रयो रोग एव स्थूलोऽभिव्यक्तोऽणुर्वा व्यक्तत्वाभावात् सूक्ष्मः पश्चान्मूलभूतरोगात् पश्चाज्जायते इति स उपद्रवसंज्ञः स्यात्। ननु स कथं चिकित्स्य इत्यत आह—तत्रेत्यादि। तत्र प्रधानं व्याधिस्तस्य प्रधानस्य

उत्सन्नरक्तस्येति वृद्धरक्तस्य। शिरासनाथित्वात् ग्रन्थिविसर्पं कुरुत इति योज्यम्। तेन तीव्ररुजादियुक्तानां ग्रन्थीनां आश्रयं ग्रन्थिविसर्पं कुरुत इत्यर्थः। तदुपतापात् तेन ग्रन्थिविसर्पेण पीडनात्। सर्व्वकर्मणां विषयमतिपतितो भवतीति सर्व्वचिकित्साविषयतामतिक्रान्तो भवतीत्यर्थः। स च शब्देन यथोक्तोपद्रवयुक्त एव ग्रन्थिविसर्पः प्रत्यवमृश्यते। अयञ्च ग्रन्थिविसर्पस्तन्त्रान्तरे अपचीसंज्ञया कथ्यत इत्याहुः। विसर्पाणां रोगोपद्रवतया उक्तज्वराद्युपद्रवा ज्ञेयाः॥ २२॥

चक्रपाणिः—उपद्रवस्वरूपं व्याकरोति—उपद्रवस्त्वित्यादि। रोगोत्तरकालजोऽपि रोगमध्यकालजः। एतेन रोगसहोत्थस्य लिङ्गस्य व्यवच्छेदः। यानि च लिङ्गान्यपि कदाचित् रोगोत्तरकालजानि भवन्ति तानि रोगेण सह प्रायः उत्पद्यमानानि न रोगोत्तरकालजानीत्युच्यन्ते न तेषामुपद्रवत्वम्। रोगाश्रय इति रोगोत्पादकदोषप्रकोपजन्यतया रोगेण समं तुल्यकारणः।

भूत उपद्रवस्तस्य प्रायः प्रधानप्रशमे प्रशमो भवति। स तु पोड़ाकरतरो भवति पश्चादुत्पद्यमानो व्याधिपरिक्लिष्टशरीर-धातुकत्वात्। तस्मादुपद्रवः * त्वरमाणोऽभि धावेत्॥ २३॥

सर्व्वायतनसमुत्थं सर्व्वलिङ्गं व्यापिनं सर्व्वधात्वनुसारिणम्

व्याधेर्गुणभूतोऽप्रधानभूत उपद्रवस्तस्य प्रायः प्रधानप्रशमात् प्रशमो भवति। प्राय इति वचनात् क्वचित् प्रधानोपशमेऽपि कस्यचिदुपद्रवस्यानुवृत्तिर्भवति। स तूपद्रवः पोड़ाकरो भवति व्याधितस्य व्याध्युत्पत्तेः पश्चादुत्पद्यमानः क्लेशजनको भवति। कस्मात्? व्याधिपरिक्लिष्टशरीरत्वात्। पूर्व्वोत्पन्नव्याधिना परिक्लिष्टं हि तस्य शरीरं तदुपरि पुनर्व्याध्यन्तरे जाते क्लेशोऽधिकतरो भवति। तस्माद् व्याधिपरिक्लिष्टशरीरत्वात् तं व्याधितमभ्युपद्रवस्तु त्वरमाणो धावेत। इति कथमनुपक्रम इतिप्रश्नस्योत्तरम्॥ २३॥

गङ्गाधरः—सन्निपातजविसर्पमाह—सर्व्वेत्यादि। सर्व्वेषां वातादिपृथग्दोषजानां यान्यायतनानि निदानानि तेभ्यः समुत्थं जातं विसर्पं सर्व्वलिङ्गम् उक्तवातादिजविसर्पत्रयलिङ्गं सर्व्वाङ्गव्यापिनं सर्व्वधात्वनुसारिणं

एतेन गलगण्डोत्पन्नानां ज्वरादीनां रोगोत्तरकालजानामपि उपद्रवत्वं निषेधयति। रोग एवेत्यनेन मूलव्याधेः पृथक् रोगशब्देन व्यवह्रियमाणमुपद्रवं ग्राहयन्ति। तेन व्याध्यवस्थायाः रोगोत्तरकालजरोगाश्रयस्य च व्यवच्छेदं करोति। व्याधेरवश्यम्भावितया मूलव्याधेः स्वरूपत एव उपद्रवोऽवश्यं भवति। यद्यपि केचित् सहबलदोषा व्याधेरुपद्रवा युक्ताः सहोत्पन्नेन च उपद्रवार्थो नास्ति तथापि ये गदा उपद्रवरूपा जायन्ते ते सहोत्पन्नव्याधियोगतया उपद्रवा भण्यन्ते। परमार्थतस्तु सहभाविन उपद्रवा युक्ताः। किन्तु रोगसङ्करत्वेन तत्र जायन्त इति। एतदुपद्रवलक्षणार्थं सुश्रुतः—'तत्रोपसर्गो नाम यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजात उपसर्पति, स न्यून एव, तेनोपद्रवसंज्ञः' इति। उपद्रवप्रकारमाह—स्थूल इति। उपद्रवः संज्ञानिरुक्तिः पश्चाज्जायत इति व्याध्युत्पादसमीपे उपद्रवतीति उपद्रव इति निरुक्तेः। व्याधेर्गुणीभूत इति मूलव्याध्यपेक्षया अप्रधानमित्यर्थः। गुणीभूतत्वे हेतुमाह—तस्य प्रायः प्रधानप्रशमे शम इति। मूलव्याधिप्रशमाधीनशमत्वात् उपद्रवस्याप्राधान्यमित्यर्थः। प्रायःशब्देन च व्यभिचारवाचिना क्वचिदुपद्रवस्य स्वतन्त्रा चिकित्साप्युक्ता। उपद्रवस्य तु आशुचिकित्स्यत्वं दर्शयति। उपद्रवे नितरां क्लेशो भवति। तस्मादित्यादि त्वरया चिकित्सेत्। सा चिकित्सा च मूलव्याधिप्रशमनेन तथा स्वतन्त्रापि भवतीति उक्तमेव॥ २३॥

चक्रपाणिः—सम्प्रति प्रक्रान्तं सन्निपातविसर्पमाह—सर्व्वेत्यादि। सर्व्वायतनसमुत्थमिति

---

* उपद्रवमिति पाठान्तरम्।

आशुकारिणमत्ययकारिणमिति च मत्वा सन्निपातविसर्पम् अचिकित्स्यं विद्यात् ॥ २४ ॥

तत्र वातपित्तश्लेष्मनिमित्ता विसर्पास्त्रयः साध्या भवन्त्यग्नि-कर्द्दमाख्यौ पुनरनुपसृष्टौ मर्म्मण्यनुपहते वा सिरास्नायुमांसक्लेदे साधारणक्रियाभिरुभाववेवाभ्यस्यमानौ प्रशान्तिमापद्येयाताम्। अनादरोपक्रान्तः पुनस्तयोरन्यतरो दहेद् देहमाश्वेवाशीविष-विषवत्। तथा ग्रन्थिविसर्पमजातोपद्रवमारभेत चिकित्सितुम्। उपद्रवेणापद्रुतन्त्वेनं परिहरेत्। सन्निपातजन्तु सर्व्वधात्वनु-

रक्तादिचतुर्द्धातुदूषणपूर्व्वकजातं पश्चान्मेदःप्रभृतिधातून् सरन्तम् आशुकारिणं शीघ्रमारकमत्ययकारिणञ्च मत्वा सन्निपातविसर्पमचिकित्स्यं विद्यादिति सन्नि-पातविसर्प उक्तः ॥ २४ ॥

गङ्गाधरः—ननु के तर्हि विसर्पाः साध्या भवन्तीत्यत आह—तत्रेत्यादि। एकजास्त्रयो विसर्पाः साध्याः। अग्निकर्द्दमाख्यौ तु विसर्पौ यावचिकित्स्या-वुक्तौ तयोरपवादोऽयम्। यदि तावनुपसृष्टौ ज्वरादुपसर्गरहितौ भवतः। मर्म्मणि वक्षसि वाऽनुपहते। सिरादिक्लेदे सति यदि साधारणक्रियाभि-दैवव्यपाश्रययुक्तिव्यपाश्रयक्रियाभिरुभौ तावग्निविसर्प-कर्द्दमाख्यविसर्पा-वभ्यस्यमानौ सततमुपचर्य्यमाणौ भवतस्तदा प्रशान्तिमापद्येयाताम्। तयो-रन्यतर आग्नेयो विसर्पः कर्द्दमाख्यो वा यद्यनादरत उपक्रान्तः स्यात् साधारणक्रियाभिर्नोपक्रान्तो भवति, तदाश्वेवाशीविषविषवद्देहं दहेदिति। तथा ग्रन्थिविसर्पमजातोपद्रवं ज्वरातिसारादुपद्रवाणामजन्मनि चिकित्सितु-मारभेत तदा प्रशाम्यत्। उपद्रवे जाते त्वेनं ग्रन्थिविसर्पं परिहरेत्। सन्नि-

सर्व्वहेतुभवम्। सर्व्वलिङ्गव्याप्तिनमिति वातादिजोक्तसर्व्वलक्षणयुक्तम्। सर्व्वधात्वनुसारिणमिति विसर्पाश्रयत्वेनानुक्तानामपि धातूनामाश्रयित्वं दर्शयति। तथाहि मसूरिकायाः एवं तन्त्रान्तरे सकल-धात्वाश्रयत्वमुक्तं तदुत्सर्गतो विसर्पाणां दोषाः समासदुष्टा सप्तधातुकेतरधातुदुष्टिर्भवतीति ॥ २४ ॥

चक्रपाणिः—मर्म्मणीति हृदयादिमर्म्मणि। साधारणक्रियाभिरिति आरम्भकदोषयोः क्रियाभिः। अभ्यस्यमानाविति सततमुपचर्य्यमाणौ। अनादरोपक्रान्त इति तेन पूर्व्वं सर्व्वथा-नुपक्रमे, अनुपक्रान्त इत्यनेन मारकत्वमुक्तम्। इह तु असम्यगुपक्रम इति विशेषः।

सारित्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्चासाध्यं विद्यात्। तत्र साध्यानां साधनविधिमनुव्याख्यास्यामः।

लङ्घनोल्लेखने शस्ते तिक्तकानाञ्च सेवनम्।
कफस्थानगते सामे रूक्षशीतैश्च लेपनम्॥
पित्तस्थानगतेऽप्येतत् सामे कुर्य्याच्चिकित्सितम्।
शोणितस्यावसेकश्च विरेकश्च विशेषतः॥
मारुताशयसम्भूतेऽप्यादितः स्याद् विरूक्षणम्।
रक्तपित्तान्वयेऽप्यादौ स्नेहनं न हितं मतम्॥
वातोल्बणे तिक्तघृतं पैत्तिके च प्रशस्यते।
लघुदोषे महादोषे पैत्तिके स्याद् विरेचनम्॥
न घृतं बहुदोषाय देयं तच्च विरेचयेत्।
तेन दोषो ह्यवष्टब्धस्त्वङ्मांसरुधिरं पचेत्॥

पातजन्तु विसर्पमसाध्यं विद्यात् सर्व्वधात्वनुसारित्वादिहेतुभ्यः। इति विसर्प-निदानमुक्तम्। अथ किञ्च तत्र भेषजमिति प्रश्नस्योत्तरमाह—तत्र साध्याना-मित्यादि। लङ्घनेत्यादि। उल्लेखनं वमनम्। सामे कफस्थानगते विसर्पे रूक्षशीतैश्च वटादिवल्कलैर्लेपनम्। पित्तस्थानगतेऽपि सामे विसर्पे चिकित्सित-मेतत् कुर्य्यात्। विशेषतस्तु शोणितस्यावसेकं मोक्षणं विरेकञ्च कुर्य्यात्। मारुतेत्यादि। पक्वाशयसमुद्भूतेऽपि विसर्पे आदितः सामे विरूक्षणं स्यात्। तस्मादौ रक्तपित्तान्वयेऽपि स्नेहनं कर्म्म न हितं भवति। एषु कफादिजातेषु सामत्वात् यथोक्तमिदं हितम्, न तु दोषभेदेन व्यवस्था भवतीति। वातोल्बण-इत्यादि। तिक्तघृतं कुष्ठोक्तं लघुदोषे पैत्तिके वातोल्बणे विसर्पे प्रशस्यते। महादोषे पैत्तिकोल्बणे विसर्पे विरेचनं प्रशस्यते। न घृतमित्यादि। बहु-दोषाय मानतो बहुदोषाय न तु सङ्ख्यातः। बहुपरिमितसाश्वितदोषाय

तत्र साध्यानामित्यादिना चिकित्सामाह। उल्लेखनं वमनम्। कफस्थानगत इति ऊर्द्ध्वकायगते। मारुताशयशब्देन च पक्वाशयादधःशरीरं गृह्यते। वातोल्बणे पैत्तिके च तिक्तघृतं प्रशस्यते लघुदोषे इति छेदः। तेन लघुदोषे पैत्तिके इति योज्यम्। बहुदोषायेति पित्तस्य प्रकृतत्वात् बहुपित्तायेत्यर्थः।

तस्माद्विरेकमेवादौ शस्तं दद्याद्विसर्पिणः ।
शोणितस्यावसेकश्च तद्ध्यस्याश्रयसंज्ञितम् ॥
इति वीसर्पिणामुक्तं समासेन चिकित्सितम् ।
एतदेव पुनः सर्व्वं व्यासतः संप्रवक्ष्यते ॥ २५ । २६ ॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च ।
वमनं संविधातव्यं विसर्पे कफपित्तजे ॥
पटोलपिचुमर्द्दाभ्यां पिप्पल्या मदनेन च ।
विसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह ॥
यांश्च योगान् प्रवक्ष्यामि कल्पेषु कफपित्तिनाम् ।
विसर्पाणान्तु योज्यास्ते दोषनिर्हरणाः शिवाः ॥ २७ ॥

विसर्पिणे घृतं न देयं तञ्च विरेचयेत् । कस्मात् ? तेनेत्यादि । हि यस्मात् बहुदोषविसर्पिणो घृतेनावष्टब्ध आवृतो दोषस्त्वगादीनि पचेत् । तस्मादादौ बहुदोषाय विरेकमेव दद्यात् । शोणितावसेकञ्च दद्यात् । कस्मात् ? तद्धीत्यादि । हि यस्मात्तच्छोणितमस्य विसर्पस्य आश्रयसंज्ञितम् । इतीत्यादि । इति वीसर्पिणां चिकित्सितं समासेनोक्तम्, पुनरेवैतत् सर्व्वं व्यासतः सम्प्रवक्ष्यतेऽतःपरमिति शेषः ॥ २५ । २६ ॥

गङ्गाधरः—तत्रोल्लेखनयोगमाह—मदनमित्यादि । विसर्पे कफजे पित्तजे कफपित्तजे च मधुकादीनां कषायं कृत्वा मदनफलवीजानि कल्कीकृत्य मिश्रयित्वा वमनं संविधातव्यम् । पटोलेत्यादि । पटोलपिचुमर्द्दाभ्यां क्वथिताभ्यां मदनेन प्रक्षिप्तेन वमनं पिप्पल्या मदनेन च वमनं शस्तम् । तथेन्द्रयवैः सह मदनेन वमनं शस्तम् । यांश्चेत्यादि । कल्पेषु कल्पस्थाने मदनकल्पादिषु ॥ २७ ॥

तेनेति विरेचनघृतेन । तद्ध्यस्याश्रयसंज्ञितमिति तत् शोणितमस्य विसर्पस्य आश्रयत्वेन कथितम्, तेन शोणितावसेकात् आश्रयोच्छेदेन विसर्पोच्छेदो भवतीत्यर्थः । व्यासत इति विस्तरेण ॥ २५ । २६ ॥

चक्रपाणिः—कफपित्तिनामिति व्यस्तसमस्तकफपित्तजानाम् ॥ २७ ॥

मुस्तनिम्बपटोलानां चन्दनोत्पलयोरपि।
शारिवामलकोशीर-मुस्तानां वा विचक्षणः॥
कषायान् योजयेद् वैद्यः सिद्धान् वीसर्पनाशनान्।
किराततिक्तकं लोध्रं दुरालभां सचन्दनाम्॥
नागरं पद्मकिञ्जल्कमुत्पलं सविभीतकम्।
मधुकं नागपुष्पञ्च दद्याद् वीसर्पशान्तये॥
प्रपौण्डरीकं मधुकं पद्मकिञ्जल्कमुत्पलम्।
नागपुष्पञ्च लोध्रञ्च तेनैव विधिना पिबेत्॥ २८॥
दुरालभां पर्पटकं गुड़ूचीं विश्वभेषजम्। *
निशापर्य्युषितं दद्यात् तृष्णावीसर्पनाशनम्॥
पटोलं पिचुमर्दञ्च दार्व्वीं कटुकरोहिणीम्।
यष्ट्याह्वं त्रायमाणाञ्च दद्याद् वीसर्पशान्तये॥ २९॥
पटोलादिकषायं वा सर्पिस्त्रिवृतया सह।
मसूरविदलैर्युक्तं घृतमिश्रं प्रदापयेत्॥

गङ्गाधरः—मुस्तेत्यादि। मुस्तादीनां त्रयाणां चन्दनाद्योर्द्वयोः शारिवादीनां चतुर्णां वा कषायांस्त्रीन् कषायान विचक्षणो योजयेत्। किरातेत्यादि। प्रकरणात् किराततिक्तकादीनां दशानां क्वाथं दद्यात्। प्रपौण्डरीकमित्यादि। तेनैव विधिना क्वाथविधिना॥ २८॥

गङ्गाधरः—दुरालभामित्यादि। विश्वभेषजान्तं निशापर्य्युषितं शीतकषायविधिना दद्यात्। पटोलमित्यादि। पटोलपत्रादिकं निशापर्य्युषितं प्रकरणात्॥२९

गङ्गाधरः—पटोलादीत्यादि। एतत् पटोलादिकषायं सर्पिस्त्रिवृच्चूर्णं तत्र

चक्रपाणिः—किराततिक्तकादिरपि कषायः। तेनैव विधिनेति मुस्तयोगोक्तकषायविधिना॥ २८॥

चक्रपाणिः—निशापर्य्युषितमिति शीतकषायम्। अयञ्च शीतकषायविधिः पटोलमित्यादावपि ग्राह्यः॥ २९॥

---

* द्राक्षां पर्पटकं शुण्ठीं गुडूचीं धन्वयासकमिति पाठान्तरम्।

पटोलपत्रमुद्गानां रसमामलकस्य च ।
पाययेत् तु घृतोन्मिश्रं नरं वीसर्पपीड़ितम् ॥
यच्च सर्पिर्महातिक्तं पित्तकुष्ठनिवर्हणम् ।
निर्द्दिष्टं तदपि प्राज्ञो दद्याद् वीसर्पशान्तये ॥
त्रायमाणाघृतं सिद्धं गौल्मिके यदुदाहृतम् ।
विसर्पाणां प्रशान्त्यर्थं दद्यात् तदपि बुद्धिमान् ॥ ३० ॥
त्रिवृच्चूर्णं समालोड्य सर्पिषा पयसापि वा ।
घर्म्माम्बुना वा संयोज्य मृद्वीकानां रसेन वा ॥
विरेकार्थं प्रयोक्तव्यं सिद्धं वीसर्पनाशनम् ।
त्रायमाणाश्रृतं वापि पयो दद्याद् विरेचनम् ॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं विसर्पज्वरशान्तये ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत् ।
स एव गुरुकोष्ठाय त्रिवृच्चूर्णयुतो हितः ॥ ३१ ॥

प्रक्षिप्य प्रदापयेत् । मसूरविदलैर्युक्तं पटोलादिकषायं घृतमिश्रं प्रदापयेत् । पटोलपत्रेत्यादि । पटोलपत्रमुद्गानां रसं क्वाथं घृतोन्मिश्रम् आमलकस्य वा रसं घृतोन्मिश्रं पाययेत् । यच्चेत्यादि स्पष्टम् । त्रायमाणेत्यादि स्पष्टम् ॥३०॥

गङ्गाधरः—त्रिवृच्चूर्णमित्यादि । त्रिवृच्चूर्णं सर्पिःपयउष्णाम्बुद्राक्षारसान्यतमेन विरेकार्थं प्रयोक्तव्यमिति । त्रायमाणेत्यादि । त्रायमाणाकल्काष्टमांशं चतुर्गुणजले श्रृतं पयो दद्यात् । त्रिफलेत्यादि । त्रिवृतया सह सर्पिस्त्रिफलारससंयुक्तं प्रयोक्तव्यम् । रसमित्यादि । स एवामलकानां रस एव ॥ ३१ ॥

चक्रपाणिः—मसूरविदलैरिति मसूराणां विदलैः । न चात्र विदला श्यामा, तस्याः स्त्रीलिङ्गत्वात् ॥३०

चक्रपाणिः—त्रिफलारसादिभिः समं घृतं देयम् । गुरुकोष्ठाय इति क्रूरकोष्ठाय । दोषपूर्णकोष्ठं गुरुकोष्ठमाहुः ॥ ३१ ॥

दोषे कोष्ठगते भूय एतत् कुर्य्याद् भिषग्जितम्।
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत्॥
भिषग् वातान्वित रक्तं विषाणेनाभिनिर्हरेत्।
पित्तान्वितं जलौकाभिरलावूभिः कफान्वितम्॥
यथासन्नं विकारस्य व्यधयेदाशु वा सिराम्।
त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते॥
एवं निर्हृतदोषाणां दोषे त्वङ्मांससंश्रिते।
आदितो वाल्पदोषाणां क्रिया वाह्या प्रचक्ष्यते॥ ३२॥
उडुम्बरत्वङ्मधुकं पद्मकिञ्जल्कमुत्पलम्।
नागपुष्पं प्रियङ्गुश्च प्रदेहः सघृतो हितः॥

गङ्गाधरः—दोष इत्यादि। एतदामलकानां रसस्त्रिवृच्चूर्णयुतो भूयो बहुपरिमाणं भेषजं कोष्ठगते दोषे कुर्य्यात्। शाखादुष्टे हस्तपादे दुष्टे रुधिरे रक्तम् आदौ हरेत्। तत्र वातान्वितं रक्तं विषाणेन शृङ्गेण, पित्तान्वितं रक्तं जलौकोभिः, कफान्वितं रक्तमलावूभिरादितो हरेत्। यथासन्नमित्यादि। व्याधेर्विसर्पस्य यथासन्नमासन्नदेशमनतिक्रम्य सिरां वा व्यधयेत्। व्यधने हेतुमाह—त्वङ्मांसेत्यादि। हि यस्मात् यदि रक्तं न निर्हरेत् तदा तद्रक्तक्लेदात् त्वङ्मांसादिसंक्लेदो जायते। एवमित्यादि। एवमनेन प्रकारेण। अल्पदोषाणामादौ वाह्यक्रिया तूच्यते॥ ३२॥

चक्रपाणिः—दोषे कोष्ठगते भूय इत्यत्र भूयःशब्दः शाखाश्रयदोष वाच्यः। दुष्टरक्तं चिकित्सामाह—शाखादुष्ट इत्यादि। शाखायां दोषे रक्ते च दुष्टे। दोषविशेषेण रक्तावसेकोपायमाह—वातान्वितमित्यादि। रक्तावसेकविशेषविधानं चेह पराधिकारत्वान्नोक्तम्। तच्च सुश्रुते ज्ञेयम्। यथासन्नमिति या विकारप्रत्यासन्ना तां संव्यधयेत्। सिराव्यधश्च सर्व्वसाधारणः। रक्तानपहरणे दोषमाह—त्वङ्मांसेत्यादि। तङ्मांसेत्यादौ आदित इति विरेचनशोणितमोक्षणाभ्यां। क्रिया वाह्या इति लेपसेकादिका आह॥ ३२॥

न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ।
विसग्रन्थिश्च लेपः स्याच्छतधौतघृतप्लुतः ॥
कालेयं मधुकं हेम वन्यं चन्दन पद्मकौ ।
पत्रं * मृणालं फलिनी प्रदेहः स्याद्घृतप्लुतः ॥
शालूकश्च † मृणालश्च शङ्खं चन्दनमुत्पलम् ।
वेतसस्य च मूलानि प्रदेहः स्याद्घृतप्लुतः ॥
शारिवा पद्मकिञ्जल्कमुशीरं नीलमुत्पलम् ।
मञ्जिष्ठा चन्दनं लोध्रमभया च प्रलेपनम् ॥
नलदश्च हरेणुश्च लोध्रं मधुकमुत्पलम् ।
दूर्व्वा सर्ज्जरसश्चैव सघृतं स्यात् प्रलेपनम् ॥
यावकाः सक्तवश्चोक्ताः सर्पिषा सह योजिताः ।
प्रदेहा मधुकं वीरा सघृता यवसक्तवः ॥
बलामुत्पलशालूकं वीरामगुरुचन्दनम् ।
दद्यादालेपनं वैद्यो मृणालानि विसानि च ॥

गङ्गाधरः—उडुम्बरेत्यादि । उडम्बरो यज्ञडुम्बरः । न्यग्रोधपादा इत्यादि । तरुणा न्यग्रोधस्य पादा मूलानि कदलीगर्भः कदल्या वृक्षस्य मध्यस्थः । विसग्रन्थिम् णालग्रन्थिः । कालेयमित्यादि । कालेयं कालीयकाष्ठं हेम नागकेशरपुष्पं वन्यं कैवर्त्तमुस्तकम् मृणालमुशीरम् । शालूकश्चेत्यादि । शालूकं पद्मादीनां कन्दः मृणालमुशीरं शङ्खं शङ्खग्रन्थिः । वेतसस्य च मूलानीति । शारिवेत्यादि स्पष्टम् । नलदमित्यादि । नलदमुशीरम् । यावका इत्यादि । यावका यवानां सक्तवश्च सर्पिषा सह योजिताः प्रदेहा उक्ताः । मधुकं वीरा शालपर्णी यवशक्तवश्च सघृताः प्रदेहा उक्ताः । बलामित्यादि । उत्पल-

चक्रपाणिः—न्यग्रोधपादा इति न्यग्रोधप्ररोहाः । कदलीगर्भो गर्भस्था कदली । कालेयं कालेयकाष्ठमित्यर्थः । हेम इति नागकेशरचूर्णम् । वन्यं कैवर्त्तमुस्तकम् । शाद्वलं दूर्व्वा ।

* एला इति पाठान्तरम् । † शाद्वलमिति पाठान्तरम् ।

यवचूर्णं समधकं सघृतञ्च प्रलेपनम्।
हरेणवो मसूराश्च समुद्गाः श्वेतशालयः॥
पृथक् पृथक् प्रदेहाः स्युः सर्व्वे वा सह सर्पिषा।
पद्मिनीकर्द्दमः शीतो मौक्तिकं पिष्टमेव च॥
शङ्खः प्रवालाः शुक्तिर्वा गैरिको वा घृतप्लुतः।
पृथगेते प्रदेहाश्च हिता ज्ञेया विसर्पिणाम्॥
प्रपौण्डरीकं मधुकं बला शालूकमुत्पलम्।
न्यग्रोधपत्रं दुग्धीका सघृतं स्यात् प्रलेपनम्॥
विसानि च मृणालानि सघृताश्च कशेरुकाः।
शतावरीविदार्य्योश्च कन्दौ धौतघृतं तथा॥
न्यग्रोधोडुम्बराश्वत्थ-वेतसप्लक्षजाम्बवः।
त्वक्कल्कैर्बहुसर्पिर्भिः शीतैरालेपनं हितम्॥

शालूकं नीलोत्पलस्य कन्दः। वीरां शालपर्णीम्। चन्दनान्त एको योगः। मृणालानि विसानि चेति द्वितीयः। पद्मपुष्पवृन्तं मृणालं क्षुद्रमृणालं कन्दप्रसूतमात्रं विसम्। यवचूर्णमित्यादि। घृतान्त एको योगः। हरेणवो वर्त्तुलकलायाः श्वेतशालयो धवलवर्णशालिधान्यम्। पृथक् पृथक् सह सर्पिषा प्रदेहाः सर्व्वे वा मिलिताः सह सर्पिषा प्रदेहाः स्युः। पद्मिनीत्यादि। पद्मिनीकर्द्दमः पद्मश्रेणितलस्थकर्द्दमः शीत एव, पिष्टं पेषितं मौक्तिकम्, शङ्खादिश्च पिष्ट एव घृतप्लुतः प्रत्येकं प्रदेहः। प्रपौण्डरीकमित्यादि। प्रपौण्डरीकं पौण्डर्य्यम्। विसानीत्यादि। विसादिकन्दान्तं शतधौतघृतयुक्तं प्रलेपनम्। शतावरीत्यादि। धौतघृतं शतधौतघृतमित्यन्त एकयोगः। न्यग्रोधेत्यादि। न्यग्रोधादीनां त्वक्पिष्टो बहुघृतमिश्रः शीतस्तेनालेपनं हितम्।

मृणालमुशीरम्। वीरा विदारीकन्दः। हरेणवो वर्त्तुलकलायाः। श्वेतशालय अकुलित(?) शुक्लधान्यानि। दुग्धीका स्वनामख्याता। मृणालं पद्मनालिका। वृषपर्णी मूषिकपर्णिका।

शैवालं नलमूलानि गोजिह्वा वृषकर्णिका ।
इन्द्राणिशाकं सघृतं * देयं वा दाहशान्तये ॥
प्रदेहाः सर्व्वं एवैते रक्तपित्तोल्वणे हिताः ॥ ३३ ॥
कफजे तु † प्रवक्ष्यामि प्रदेहानपरान् हितान् ।
त्रिफलापद्मकोशीरं समङ्गा करवीरकम् ।
नलमूलान्यनन्ता च प्रदेहमुपकल्पयेत् ॥
खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम् ।
कुरुण्टकं देवदारु दद्यादालेपनं हितम् ॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकस्य च ।
इन्द्राणिशाकं काकाह्वां शिरीषकुसुमानि च ॥
शैवालं नलमूलानि वीरां गन्धप्रियङ्गुकाम् ।
त्रिफलां मधुकं वीरां शिरीषकुसुमानि च ॥

शैवालमित्यादि । वृषकर्णिका सुदर्शना । इन्द्राणिशाकं सिन्धुवारपत्रम् । उदुम्बरत्वगादीनामेतदन्तानामेते सर्व्वे प्रदेहा रक्तपित्तोल्वणे विसर्पे हिताः ॥ ३३ ॥

<u>गङ्गाधरः</u>—कफजे तु विसर्पे प्रदेहान् प्रवक्ष्यामि । त्रिफलेत्यादि । समङ्गा मञ्जिष्ठा । त्रिफलादिभिः सर्व्वैः प्रदेहमुपकल्पयेत् । खदिरमित्यादि । कुरुण्टको नीलझिण्टी । आरग्वधेत्यादि । श्लेष्मातकः शेलुवृक्षः । इन्द्राणिशाकं सिन्धुवारपत्रम् । काकाह्वा काकमाची । शिरीषकुसुमानि द्विरुक्त्या स्वल्पवृहच्छिरीषकुसुमानि । दार्व्वीत्वक् चाभया चेति द्वन्द्वकवद्भावे नपुंसकम् ।

इन्द्राणिर्निर्गुण्डी । बलाघृतमिति छेदः । प्लक्षः अल्पदीर्घपत्रः । प्रदेहा इत्यनेन पूर्व्वोक्त-प्रदेहानां भिन्नविषयाणां कफेऽनधिकारात् अपरान् प्रदेहानाह—सकफे त्वित्यादि । अनन्ता उत्पलसारिवा । कुरण्टको म्लानकः । श्लेष्मातको बहुवारक इति प्रसिद्धः । इन्द्राणिशाकं केचित् मत्स्याक्षक इति आहुः । निर्गुण्डीति परे । काकाह्वा गोष्ठोदुम्बरिका गन्धप्रियङ्गुको इति

* शिरीषत्वग्बलाघृतमिति चक्रधृतः पाठः । † सकफे तु इति चक्रसम्मतः पाठः ।

प्रपौण्डरीकं ह्रीबेरं दार्व्वीत्वगभयं बलाम्।
पृथगालेपनं दद्याद् द्वन्द्वशः सर्व्वशोऽपि वा ॥
प्रदेहाः सर्व्व एवैते देयाः स्वल्पघृतप्लुताः।
वातपित्तोल्वणे ये तु प्रदेहास्ते घृताधिकाः॥ ३४ ॥
घृतेन शतधौतेन प्रदिह्यात् केवलेन वा।
घृतमण्डेन शीतेन पयसा मधुकाम्बुना ॥
पञ्चवल्ककषायेण सेचयेच्छीतलेन वा।
वातासृक्पित्तबहुलं वीसर्पं बहुशः पृथक् ॥
सेचना ये प्रदेहास्ते त एव घृतसाधनाः।
तच्चूर्णयोगा वीसर्प-व्रणानामवचूर्णनाः ॥
दूर्व्वास्वरससंसिद्धं घृतं स्याद्व्रणरोपणम्।
दार्व्वीत्वङ्मधुकं लोध्रं केशरञ्चावचूर्णनम् ॥

एषां पृथक् पृथगेकश आलेपनं द्वन्द्वशो वैषामन्यतमयोर्द्वयोरालेपनं सर्व्वशोऽपि वालेपनं दद्यात्। यथा देयं तदाह—प्रदेहा इत्यादि। त्रिफलादय एतदन्ताः सर्व्व एव प्रदेहाः कफे स्वल्पघृतप्लुता देयाः। ये प्रदेहा वातपित्तोल्वणे विहितास्ते घृताधिका देयाः॥ ३४ ॥

गङ्गाधरः—घृतेनेत्यादि। वातरक्तपित्तोल्वणविसर्पे शतधौतघृतेन केवलेन प्रदिह्यात्। घृतमण्डशीतपयःप्रभृतिभिः सेचयेत् पृथगेतानि चत्वारि सेचनानि। सेचना इत्यादि। ये ये सेचना योगास्ते प्रदेहास्त एव घृतसाधनाः। तैर्घृतानि साध्यानि। तच्चूर्णयोगास्तेषां चूर्णयोगा विसर्पव्रणानामवचूर्णना भवन्ति। दूर्व्वेत्यादि। दूर्व्वास्वरसे चतुर्गुणे कल्कहीनं पचेद् घृतम्। दार्व्वी-

व्यस्तसमस्तयोगः। सर्व्वएवेत्यत्र एते इति कफविहिताः प्रदेहाः। वातपित्तोल्बण इत्यत्र यद्यपि साक्षात् प्रदेहा न विहिताः तथापि इहैवात्र रक्तपित्तोल्बणे विहितास्तत्रैव द्रव्यगुणतो वातहरद्रव्यकृताधिकाः अधिकसर्पिर्युताः वाते कर्त्तव्या इति ज्ञेयम् ॥ ३३। ३४ ॥

चक्रपाणिः—घृतमण्डो घृतसन्तानिकः। पञ्चवल्कं तन्त्रान्तरे उक्तम्—'न्यग्रोधोदुम्बराश्वत्थ-प्लक्ष-वेतसवल्कलैः। सर्व्वैरेकत्रसंयुक्तैः पञ्चवल्कलमुच्यते'। प्रदेहार्थद्रव्याण्येव परिपचने घृतसाधने

पटोलं पिचुमर्द्दश्च त्रिफलामधूकोत्पलम् ।
एतत् प्रक्षालनं सर्पिर्व्रणे चूर्णं प्रलेपनम् ॥ ३५ ॥
प्रदेहाः सर्व्व एवैते कर्त्तव्याः संप्रधावनाः ।*
क्षणे क्षणे प्रयोक्तव्याः सर्व्वमुद्धृत्य लेपनम् ॥
अधावनोद्धृते पूर्व्वे प्रदेहा बहुशोऽघनाः ।
देयाः प्रदेहाः कफजे पर्य्याधानोद्धृते घनाः ॥ † ३६ ॥

त्यादि । दार्व्व्यादिचूर्णमवचूर्णितं व्रणरोपणम् । पटोलमित्यादि । पटोलपत्रादीनां मिलितानां क्वाथेन प्रक्षालनम् । क्वाथकल्काभ्यां पक्वं सर्पिः । चूर्णश्चावचर्णितम् । पिष्टा च तैः प्रलेपनमिति । व्रणरोपणम् ॥ ३५ ॥

गङ्गाधरः—प्रदेहा इत्यादि । यस्मिन् विसर्पे ये प्रदेहास्ते सर्व्व एव क्वाथयित्वा संप्रधावनाः कर्त्तव्यास्ते संप्रधावनाः सर्व्वं प्रलेपनमुद्धृत्य क्षणे क्षणे प्रयोक्तव्याः । पूर्व्वं प्रलेपने अधावनोद्धृते धावनेनानुद्धृते बहुशोऽघनाः प्रदेहास्तनुद्रवप्रदेहा देयाः । कफजे विसर्पे पर्य्याधानस्य चतसृषु दिक्षु लिप्तस्य लग्नस्योद्धृते घनाः प्रदेहा देया इति क्रमः ॥ ३६ ॥

ऽवचूर्णनेऽपि विदध्यात् । दार्वीत्यादि एतैर्द्रव्यादिभिः प्रक्षालनक्वाथः कर्त्तव्यः । तथा घृतञ्च अनेनैव तथा चूर्णञ्च प्रलेपनं कर्त्तव्यम् ॥ ३५ ॥

चक्रपाणिः—संप्रसादना इति सवर्णकराः सवर्णत्वे साध्ये कर्त्तव्या इत्यर्थः । किंवा संप्रसादना इति रक्तपित्तप्रसादनाः । तेनायमर्थः । एते रक्तपित्ते प्रदेहाः कर्त्तव्याः य एते कर्त्तव्याः प्रदेहाः उक्तास्ते क्षणे क्षणे पूर्व्वं लेपनमुद्धृत्य प्रयोक्तव्याः । न चिरेण नापि पूर्व्वप्रलेपनोपरि इत्यर्थः । पूर्व्वं च लेपनमुद्धृत्य कर्त्तव्याः तथा बहुशोऽघनाः प्रतनुका इत्यर्थः । कफप्रदेहानां विशेषमाह—देया इत्यादि । पर्य्याधानोद्धृत इति शुष्कोद्धृते ॥ ३६ ॥

---

* संप्रसादना इति चक्रसम्मतः पाठः ।

† इतः परं केषुचित् पुस्तकेष्वधिकः पाठो दृश्यते—

'त्रिभागाङ्गुष्ठमात्रः स्यात् प्रलेपः कल्कपेषितः । नातिस्निग्धो न रूक्षश्च न पिण्डो न द्रवः समः ॥
न च पर्य्युषितं लेपं कदाचिदवचारयेत् । न च तेनैव लेपेन पुनर्जातु प्रलेपयेत् ॥
कुर्द्दवीसर्पशूलानि सोष्मभावात् प्रवर्त्तयेत् । लेपो ह्युपरि पट्टस्य कृतः स्वेदयति व्रणम् ॥
स्वेदजाः पिड़कास्तस्य कण्डूश्चैवोपजायते । उपर्य्युपरि लेपस्य लेपो यत्रावचार्य्यते ॥
तानेव दोषान् जनयेत् पट्टयोपरियान् कृतः । अति स्निग्धोऽतिद्रवश्च लेपो यत्रावचार्य्यते ॥
त्वचि न श्लिष्यते सम्यङ् न दोषं शमयत्यपि । तन्वालिप्तं न कुर्व्वीत संशुष्को ह्यापुटायते ॥
न चौषधिरसो व्याधिं प्राप्नोत्यपि च शुष्यति । तन्वालिप्तेन ये दोषास्तानेव जनयेद् भृशम् ॥
संशुष्कः पीड़येद् व्याधिं निस्नेहो ह्यवचारितः ॥ इति

अन्नपानानि वक्ष्यामि विसर्पाणां निवृत्तये।
लङ्घितेभ्यो हितो मन्थो रूक्षः सक्षौद्रशर्करः॥
मधुरः किञ्चिदम्लो वा दाड़िमामलकान्वितः।
सपरूषकमृद्वीकः सखर्ज्जूरः शृताम्बुना॥
तर्पणैर्यवशालीनां सस्नेहा चावलेहिका।
जीर्णे पुराणशालीनां यूषैर्भुञ्जीत भोजनम्॥
मुद्गान् मसूरांश्चणकान् यूषार्थमुपकल्पयेत्।
अनम्लान् दाड़िमाम्लान् वा पटोलामलकैः सह॥
जाङ्गलानाञ्च मांसानां रसांस्तस्योपकल्पयेत्।
रूक्षान् परूषकद्राक्षा-दाड़िमामलकान्वितान्॥
रक्ताः श्वेता महाह्वाश्च शालयः षष्टिकैः सह।
भोजनार्थे प्रशस्यन्ते पुराणाः सुपरिप्लुताः॥

गङ्गाधरः—अथान्नादीन्याह। अन्नेत्यादि। मन्थो द्रवेणालोड़िताः सक्तवः। रूक्षो घृतादिस्नेहरहितो रूक्षद्रव्यकृतसक्तवोऽपि। मधुरो मधुरद्रव्यकृतमन्थो वा दाड़िमादिभिरन्वितः किञ्चिदम्लो वा मन्थो लङ्घितेभ्यो हितः। सपरूपकेत्यादि। परुपकद्राक्षाखर्ज्जूरैः पिष्टैरेतैः सहितो मन्थः शृताम्बुनाऽर्द्धशिष्टजलेनालोड़ितः सक्तुर्लङ्घितेभ्यो हितः। तर्पणैरित्यादि। यवानां शालीनाञ्च तर्पणैर्द्रवद्रव्येणालोड़ितसक्तुभिरवलेहिका सस्नेहा च लङ्घितेभ्यो हितेति लिङ्गविपर्य्ययेण योजना। तस्मिन् मन्थावलेहे जीर्णे पुराणशालीनां भोजनमन्नं यूषैर्भुञ्जीत। यूषार्थमाह—मुद्गानित्यादि। मुद्गादीननम्लान् दाड़िमाम्लान् वा पटोलफलामलकैः सह वा यूषार्थमुपकल्पयेत्। जाङ्गलानामित्यादि। परूषाद्यन्वितान् रूक्षान् घृतादिस्नेहवर्ज्जितान् जाङ्गलमांसरसान् तस्य भोजने चोपकल्पयेत्। भोजनार्थं शालीनाह—रक्ता इत्यादि। रक्ताः शालयः श्वेताः शालयो महाह्वा महाशालयः पुराणाः संवत्सरातीताः। सुपरिप्लुताः

चक्रपाणिः—अन्नपानमाह—जीर्णे इति। अवलेहिकारूपेऽन्ने जीर्णे। जाङ्गलानामित्यादौ रूक्षानित्यनेन स्नेहविरहेण रूक्षमांसकृतत्वेन रूक्षत्वं ज्ञेयम्। रक्ताः श्वेता महाह्वा इति रक्तशालयः श्वेतशालयो महाशालयः। श्वेतशालिर्मागधे पुण्डरीकशालिरिति ख्यातः।

यवगोधूमशालीनां सात्म्यमेव प्रदापयेत् ।
येषां नात्युचितः शालिर्नरा ये च कफाधिकाः ॥ ३७ ॥
विदाहीन्यन्नपानानि विरुद्धं स्वपनं दिवा ।
क्रोधव्यायामसूर्य्याग्नि-प्रवातांश्च * विवर्ज्जयेत् ॥ ३८ ॥
कुर्य्याच्चिकित्सितादस्माच्छीतप्रायाणि पैत्तिके ।
रूक्षप्रायाणि कफजे स्नैहिकान्यनिलात्मके ॥
वातपित्तप्रशमनमग्निवीसर्पिणे हितम् ।
कफपित्तप्रशमनं प्रायः कर्दमसंज्ञके ॥ ३९ ॥
रक्तपित्तोल्वणं ज्ञात्वा ग्रन्थिवीसर्पमादितः ।
विरूक्षणैर्लङ्घनैश्च प्रदेहैः पाञ्चवल्कलैः ।
सिरामोक्षैर्जलौकाभिर्वमनैः सविरेचनैः ॥
शृतैः कषायतिक्तैश्च कालज्ञः समुपाचरेत् ॥

जलनार्द्रीकृताः परिपक्वाः । यवेत्यादि । यवादीनां मध्ये यद् यस्य सात्म्यमभ्यस्तं तत् तेषां प्रदापयेत् । येषां शालिर्नात्युचितो नात्यभ्यस्तः, ये च नराः कफाधिकास्तेषां सात्म्यं प्रदापयेत् ॥ ३७ ॥

गङ्गाधरः—वर्ज्ज्यान्याह विदाहीनीत्यादि । विरुद्धं संयोगविरुद्धम् ॥ ३८ ॥

गङ्गाधरः—कुर्य्यादित्यादि । दोषभेदेन चिकित्सामाह—अस्मादन्नपानात्मकाच्चिकित्सिताच्छीतप्रायाणि तन्नपानानि पैत्तिके विसर्पे कुर्य्यात् । रूक्षप्रायाण्यन्नपानानि कफजे कुर्य्यात् । अनिलात्मके स्नैहिकान्यन्नपानानि कुर्य्यात् । अग्निविसर्पिणे वातपित्तप्रशमनं स्नैहिकशीतप्रायं चिकित्सितं हितम् । कफपित्तप्रशमनं शीतरूक्षप्रायं कर्दमविसर्पे हितम् ॥ ३९ ॥

गङ्गाधरः—रक्तपित्तेत्यादि । ग्रन्थिविसर्पं रक्तपित्तोल्वणं ज्ञात्वादितः प्रथमतः विरूक्षणादिभिरुपाचरेत् । पाञ्चवल्कलैः प्रदेहैरिति योजना ।

यवगोधूमेत्यादि शालिर्महाशालिः, यवगोधूमशालीनां यत् सात्म्यं तदेव प्रयोजयेत् । येषाञ्च शालिर्नात्युचितः नाभ्यस्तः तेषां यवगोधूमावेव ज्ञेयौ । तयोः कफाविरुद्धत्वात् विसर्पहितत्वाच्च । उक्तं हि—'सर्व्वं मधुरं कफकरम् अन्यत्र पुराणयवशालिगोधूमात्' इति ॥ ३७ ॥

* प्रतापानिति वा पाठः ।

ऊर्द्ध्वञ्चाधश्च शुद्धाय रक्ते चाप्यवसेचिते।
वातश्लेष्महरं कर्म्म ग्रन्थिवीसर्पिणे हितम्॥ ४० ॥
उत्कारिकाभिरुष्णाभिरुपनाहः प्रशस्यते।
स्निग्धाभिर्वेशवारैर्वा ग्रन्थिवीसर्पशूलिनाम्॥
दशमूलोपसिद्धेन तैलेनोष्णेन सेचयेत्।
कुष्ठतैलेन चोष्णेन पक्वक्षारयुतेन* वा॥
गोमूत्रैः पत्रनिर्य्यूहै रूक्षोष्णैः परिषेचयेत्॥ ४१ ॥
सुखोष्णया प्रदिह्याद् वा पिष्टया चाश्वगन्धया।
शुष्कमूलककल्केन नक्तमालस्य चाथवा।
विभीतकस्य वा ग्रन्थिं कल्केनोष्णेन लेपयेत्॥

एवमुक्तवमनविरेचनाभ्यामूर्द्ध्वाधःशुद्धाय रक्ते चाप्यवसेचिते सति पित्तरक्तयोः प्रशमने जाते वातश्लेष्मणोः शेषयोर्हरणं कर्म्म ग्रन्थिविसर्पे हितम्॥ ४० ॥

गङ्गाधरः—उत्कारिकाभिरित्यादि। उत्कारिका यवगोधूमादिचूर्णं जलपक्वा लेहवद्भावे सति भवति। वेशवारो निरस्थिमांसं स्विन्नं कृत्वा पिष्ट्वा गुड़घृतकणामरिचचूर्णयुक्तं कुर्य्यादित्येष वेशवार उच्यते। दशमूलेत्यादि। एवं दशमूलकल्कचतुर्गुणजलेनोपसिद्धेन तैलेनोष्णेन ग्रन्थिविसर्पशूले सेचयेत्। तथा पक्वक्षारयुतेन भस्मीभूतः क्षारः परिस्राव्यः षड्गुणे जले, ततः पक्वः सन् क्षारो भवति तेन युक्तेन कुष्ठतैलेन चोष्णेन शूलशान्त्यर्थं सेचयेत्। गोमूत्रेत्यादि। तथा गोमूत्रैः परिषेचयेत्। एवं रूक्षोष्णैः पत्रनिर्यूहैः क्वाथैः परिषेचयेत्॥ ४१ ॥

गङ्गाधरः—अथ प्रसङ्गाद् ग्रन्थिचिकित्सामाह—सुखोष्णयेत्यादि। अश्वगन्धयेत्यत्र कृष्णगन्धयेति क्वचित् पाठः। शुष्केत्यादि। शुष्कमूलककल्केनोष्णेनाथवा नक्तमालस्य गोकरञ्जकल्केनोष्णेन। एवं विभीतकस्य कल्केनोष्णेन

चक्रपाणिः—विसर्पवर्ज्यानाह—विदाहीनीत्यादि॥ ३८—४०॥

चक्रपाणिः—उत्कारिकेत्यादिना उष्णोपनाहमाह—उष्णो बहलो लेपः। पाक्यक्षारयुतेनेति पाकेन सुश्रुतादुक्तविधानेन कृतः क्षारः पाक्यक्षारः, किंवा पाक्यं पूतिकरञ्जं लवणम्। गोमूत्रैरित्यादौ पत्रम् एरण्डादिकं पत्रम्॥ ४१ ॥

* पाक्यक्षारयुतेन इति चक्रसम्मतः पाठः।

बलां नागबलां पथ्यां भूर्ज्जग्रन्थिं विभीतकम्।
वंशपत्राण्यग्निमन्थं दद्याद् ग्रन्थिविलेपनम्॥
दन्तीचित्रकमूलत्वक् सुधार्कपयसी गुड़ः।
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि।
वहिर्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम्॥ ४२॥
दीर्घकालस्थितग्रन्थिं भिन्द्याद् वा भेषजैरमः॥
मूलकानां कुलत्थानां यूषैः सक्षारदाड़िमैः।
गोधूमान्नैर्यवान्नैश्च ससीधुमधुशर्करैः॥
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः।
त्रिफलायाः प्रयोगश्च पिप्पलीक्षौद्रसंयुतैः॥
देवदारुपटुव्योष-प्रयोगैर्गैरिकस्य च।
मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च॥

ग्रन्थिं लेपयेत्। बलामित्यादि। बलादिकं प्रत्येकं ग्रन्थिविसर्पे-लेपनं दद्यात्। दन्तीत्यादि। दन्तीमूलत्वक् चित्रकमूलत्वक् स्नुह्यर्कयोः पयसी गुड़ः भल्लातकस्यास्थि कासीसं हिराकस् इति लोके। एषां समानानां लेपो बहल उत्कलेपः शिलामपि भिन्द्यात् कफसम्भवं ग्रन्थिं वहिर्मार्गाश्रितं यत् भिन्द्यात् तत् पुनः किम्?॥ ४२॥

गङ्गाधरः—दीर्घेत्यादि। इमैर्वक्ष्यमाणैः। मूलकानामित्यादि। मूलक-कुलत्थयोर्यूषैः सक्षारदाड़िमैरित्येकं भेषजम्। गोधूमान्नैः स्विन्नगोधूम-तण्डुलैर्यवान्नैस्तथाविधैः ससीधुमधुशर्करैरिति द्वितीयम्। सक्षौद्रैर्वारुणीमण्डैः मातुलुङ्गरसान्वितैरिति तृतीयम्। पिप्पलीक्षौद्रसंयुतैस्त्रिफलायाः प्रयोगश्चतुर्थम्। देवदारु पटु सैन्धवं व्योषञ्चैषां प्रयोगैरिति पञ्चमम्। गैरिकस्य प्रयोगैरिति षष्ठम्। मुस्तादीनां त्रयाणां प्रयोगैः सप्तमम्। माक्षिकस्य प्रयोगैरिति चाष्टमम्।

चक्रपाणिः—नक्तमालं करञ्जकः। बिभीतकस्य वेत्यत्र कल्केनेति योज्यम्। दन्तीत्यादौ लेपो भिन्द्यात् शिलामपि स कफग्रन्थिं नितरां भिन्द्यादिति भावः॥ ४२॥

चक्रपाणिः—इमैरिति वक्ष्यमाणैः। गिरिजं शिलाजतु। गिरिजप्रयोगश्च रसायनोक्तो ज्ञेयः।

धूमैर्विरेकैः शिरसः पूर्व्वोक्तैर्गुल्मभेदनैः।
अयोलवणपाषाण-हेमतप्तप्रपीड़नैः॥ ४३॥
क्रियाभिराभिः सिद्धाभिर्विविधाभिर्बली स्थितः।
ग्रन्थिः पाषाणकठिनो यदि नैवोपशाम्यति॥
अथास्य दाहः क्षारेण शरैर्हेम्नाऽथवा* हितः।
पाकिभिः पाचयित्वा वा पाटयित्वा समुद्धरेत्॥
मोक्षयेद् बहुशश्चास्य रक्तमुत्क्लेशमागतम्।
पुनरस्य हृते रक्ते वातश्लेष्मजिदौषधम्॥
धूमो विरेकः शिरसः स्वेदनं परिमर्दनम्।
अप्रशाम्यति दोषे च पाचनं वा प्रशस्यते॥
प्रक्लिन्नं दाहपाकाभ्यां भिषक् शोधनरोपणैः।
वाह्यैश्चाभ्यन्तरैर्वापि व्रणवत् समुपाचरेत्॥ ४४॥

प्रलेपविधानेन प्रयोगा एते ज्ञेयाः। पूर्व्वोक्तैर्धूमैः शिरसो विरेकैस्तथा गुल्मभेदनैरौषधैस्तथायःपिण्डतप्तपीड़नेन तथा लवणादीनामेकतमतप्तप्रपीड़नैरिमैर्भेषजैर्ग्रन्थिं दीर्घकालस्थितं भिन्द्यादिति योजना॥ ४३॥

गङ्गाधरः—क्रियाभिरित्यादि। स्पष्टम्। अथास्येत्यादि। उक्तक्रियाभिर्ग्रन्थेर्भेदाभावानन्तरं क्षारेण दाहः शरर्वा हेम्ना वा हितः। पाकिभिर्व्रणशोथोक्तैः। पुनर्बहुशोऽस्योत्क्लेशमागतञ्च रक्तं मोक्षयेत्। पुनरित्यादि। एवमस्य पुनरपि रक्ते हृते वातश्लेष्मजिदौषधं धूमादिकं कार्य्यं प्रशस्यते। धूम इत्यादि। शिरसो विरेको धूमः। परिमर्द्दनमुद्वर्त्तनम्। तथा च दोषेऽप्यप्रशाम्यति सति पाचनं व्रणशोथपाचनं वा प्रशस्यते। प्रक्लिन्नमित्यादि। दाहपाकाभ्यां युक्तं प्रक्लिन्नं ग्रन्थिं वाह्यैः शोधनरोपणैर्वाभ्यन्तरैर्वा शोधनरोपणैर्व्रणवत् समुपाचरेत्॥ ४४॥

मुस्तसक्तवो मुस्तञ्चोष इत्यादिना कुष्ठोक्ताः। भल्लातकसक्तवो रसायनोक्ताः। अयोलवणेत्यादि तप्तायःप्रभृतिभिः पीड़नैरित्यर्थः॥ ४३॥

* शरैर्लौहेन इति चक्रस्वीकृतः पाठः।

कम्पिल्लकविड़ङ्गानि त्वचो दार्व्व्यास्तथैव च ।
पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रणचिकित्सितम् ॥
द्विव्रणीयोपदिष्टेन कर्म्मणा वाप्युपाचरेत् ।
देशकालविभागज्ञो व्रणान् वीसर्पजान् बुधः ॥ ४५ ॥
य एव विधिरुद्दिष्टो ग्रन्थीनां विनिवृत्तये ।
स एव गलगण्डानां कफजानां निवृत्तये ॥
गलगण्डास्तु वातोत्था ये कफानुबला नृणाम् ।
घृतक्षीरकषायाणामभ्यासान्न भवन्ति ते ॥ ४६ ॥
यानीह कर्म्माण्युक्तानि विसर्पाणां निवृत्तये ।
एकतस्तानि सर्व्वाणि रक्तमोक्षणमेकतः ॥
विसर्पो नह्यसंसृष्टो रक्तपित्तेन लक्ष्यते ।
तस्मात् साधारणं सर्व्वमेतदुक्तं चिकित्सितम् ॥

गङ्गाधरः—कम्पिल्लेत्यादि । कम्पिल्लकविड़ङ्गदार्व्वीत्वग्भिः कल्कैश्चतुर्गुणजले तैलं पक्त्वा ग्रन्थिव्रणे दद्यात् । अपरञ्चाह द्विव्रणीयेत्यादि । स्पष्टम् ॥४५॥

गङ्गाधरः—चिकित्सिततुल्यत्वादाह—य एवेत्यादि । ग्रन्थीनां वीसर्पाणाम् एष य एव विधिरुद्दिष्टः, स एव विधिः कफजानां गलगण्डानां निवृत्तये कार्य्यः । गलगण्डा इत्यादि । ये कफानुबला वातोत्था गलगण्डास्ते घृतादीनामभ्यासात् न भवन्ति ॥ ४६ ॥

गङ्गाधरः—यानीत्यादि । इह विसर्पाणां निवृत्तये यानि कर्म्माण्युक्तानि तानि सर्व्वाणि कर्म्माण्येकतः एकस्यां दिशि वर्त्तन्ते । एकं रक्तमोक्षणमेकतो वर्त्तते । कस्मात् ? विसर्पो न हीत्यादि । हि यस्माद् विसर्पो रक्तपित्तेनासंसृष्टो न लक्ष्यते सर्व्व एव विसर्पो रक्तपित्तेन संसृष्ट एव लक्ष्यते, तस्मात् साधारणं

चक्रपाणिः—पाकिभिरिति पाचनपिण्डैः । पुनश्चेत्यादिना उक्ता अपि धूमादयः पुनः अपनीतग्रन्थिविषयतया विधीयन्ते, तेन चेह न पुनरुक्तिः ॥ ४४ । ४५ ॥

चक्रपाणिः—ग्रन्थिव्रणचिकित्सिते यदुक्तं तदेवातिदिशन्नाह—य एवेत्यादिना । गलगण्डानामिति बहुवचनानि गलगण्डगण्डमालाऽपचीविवक्षितानि ॥ ४६ ॥

विशेषदोषवैशेष्यान्न च नोक्तः समासतः।
समासव्यासनिर्द्देशैरुक्तञ्चैतच्चिकित्सितम् ॥ ४७ ॥

तत्र श्लोकाः।

निरुक्ता नामभेदाश्च दोषा दूष्याश्च हेतवः।
आश्रयो मार्गतश्चैव विसर्पगुरुलाघवम् ॥
लिङ्गान्युपद्रवा ये च यल्लक्षण उपद्रवः।
साध्यत्वं न च साध्यत्वं साधनञ्च यथाक्रमम् ॥
इति पिप्रीषवे * सिद्धमग्निवेशाय धीमते।
पुनर्व्वसुरुवाचेदं वीसर्पाणां चिकित्सितम् ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थाने विसर्परोगचिकित्सितं नाम एकविंशोऽध्यायः ॥ २१ ॥

वातपित्तकफरक्तसाधारणमेतच्चिकित्सितमुक्तं दोषवैशेष्यान्न च विशेष उक्तः। न च समासतोऽप्युक्तः। समासव्यासनिर्द्देशैश्चिकित्सितञ्चैतदुक्तमिति ॥४७॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोका इति। निरुक्ता इत्यादि। पिप्रीषवे प्रेतुमिच्छवे ॥ ४८ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल प्रतिसंस्कृत एव च।
चिकित्सिते विसर्पाणामध्याये त्वेकविंशके। वद्गङ्गाधरकृते जल्पकल्पतरौ पुनः।
चिकित्सास्थानजल्पे तु षष्ठस्कन्धे विसर्पिणाम्।
चिकित्सितजल्पो नाम शाखेयमेकविंशिकी ॥ २१ ॥

चक्रपाणिः—विसर्पे रक्तमोक्षणस्तुतिमाह—यानीत्यादि। रक्तमोक्षण एव कुतः प्राधान्यमित्याह—विसर्पो नेत्यादि। साधारणमिति वातकफविसर्पे रक्तपित्तहरं चिकित्सितं युक्तमित्यर्थः ॥ ४७ ॥

चक्रपाणिः—निरुक्तमित्यादिसंग्रहः। यल्लक्षण उपद्रव इति यादृकलक्षणेनोपद्रवेण न साध्यमित्यर्थः। पिप्रक्षवे प्रष्टुमिच्छवे ॥ ४८ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां विसर्पचिकित्सितं नाम एकविंशोऽध्यायः ॥ २१ ॥

* पिप्रक्षवे इति चक्रसम्मतः पाठः।

# द्वाविंशोऽध्यायः ।

अथातस्तृष्णाचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

ज्ञानप्रशमतपोभिः ख्यातोऽत्रिसुतो जगद्धितेऽभिरतः ।
तृष्णानां प्रशमार्थं चिकित्सितं प्राह पञ्चानाम् ॥ २ ॥
क्षोभाद् भयाच्छ्रमादपि शोकात् क्रोधाद् विलङ्घनान्मद्यात् ।
क्षाराम्ललवणकटुकोष्णरूक्षशुष्कान्नसेवाभिः ॥
धातुक्षयगदकर्षणवमनाद्यतियोगसूर्य्यसन्तापैः ।
पित्तानिलौ प्रवृद्धौ सौम्यं धातुं विशोषयतः * ॥

<u>गङ्गाधरः</u>—उद्दिष्टक्रमादेतदध्यायानन्तरं तृष्णाचिकित्सितमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

<u>गङ्गाधरः</u>—ज्ञानेत्यादि । अत्रिसुतः कृष्णात्रिपुत्रः पुनर्व्वसुः । पञ्चानां तृष्णानाम् । अष्टोदरीये प्रागुक्तं पञ्च तृष्णा इति । पञ्च तृष्णा इति वातपित्तामक्षयोपसर्गात्मिका इति । तासां पञ्चानां तृष्णानामिति ॥ २ ॥

<u>गङ्गाधरः</u>—क्षोभादित्यादि । क्षुभसञ्चलने मनःशरीरयोः क्षोभः क्लेशजनकचालनम् । क्षाराम्लादिशुष्कान्नसेवाभिः । गदकर्षणं रोगान्तरेण कर्षणम् ।

<u>चक्रपाणिः</u>—विसर्पे प्रायेण तृष्णा उपद्रवरूपा भवति इति विसर्पानन्तरं तृष्णाचिकित्सितमुच्यते ॥ १ ॥

<u>चक्रपाणिः</u>—ज्ञानं विज्ञानम् । प्रशमः शान्तिः । तपश्चान्द्रायणादि । चिकित्सितं चिकित्साविधायको ग्रन्थः । निदानाद्यभिधानञ्च चिकित्सार्थमेव निदानादिज्ञानपूर्व्वकत्वाच्चिकित्सायाः । पञ्चानामिति वचनेन पञ्चानामपि चिकित्साविषयत्वं दर्शयति । न हि कासश्वासवदस्यासाध्यत्वम् । तथा सुश्रुतोक्तनिरुक्तिः पञ्चस्वपि तृष्णासु भवति । उक्तं हि सुश्रुते—'तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात् तथाद्यामसमुद्भवा च । स्यात् सप्तमी भक्तनिमित्तजा चे'ति ॥ २ ॥

<u>चक्रपाणिः</u>—क्षोभादित्यादुक्तनिदानस्य योगात् वातपित्तकर्त्तृत्वं चोन्नेयम् । पित्तानिलाविति सर्व्वतृष्णासम्प्राप्तिग्रन्थः । सौम्यान् धातूनिति सोमगुणातिरिक्तान् । प्रदूषयतः इति

---

* सौम्यान् धातून् प्रदूषयतः इति चक्रसम्मतः पाठः ।

रसवाहिनीश्च धमनीर्जिह्वामूलगलतालुकक्लोम्नः।
संशोष्य नृणां देहे कुरुतस्तृष्णामतिबलां तौ॥
पीतं पीतं हि जलं शोषयतस्तावतिबलौ न याति शमम्। *
घोरा व्याधिकृशानां प्रभवत्युपसर्गभूता सा॥ ३॥
प्राग्रूपं मुखशोषः स्वलक्षणं सर्व्वदाम्बुकामित्वम्।
तृष्णानां सर्व्वासां लिङ्गानां लाघवमपायः॥ ४॥

वमनादि वमनविरेचनादि संशोधनम्। सौम्यं धातुं कफरसादिकम्। रसवाहिनीर्धमनीर्जिह्वामूलादींश्च शोषयतः पित्तानिलौ। क्लोम कण्ठोरसोः सन्धिः। एतान् सौम्यधातुरसवाहिधमन्यादीन् संशोष्य तौ पित्तानिलौ नृणां देहेऽतिबलां तृष्णां कुरुतः। तावतिबलौ पित्तानिलौ नृभिः पीतं पीतं जलं हि यस्माच्छोषयतः। एवं जाता च सा तृष्णा न शमं याति। व्याधिकृशानां घोरा भयानिकोपसर्गभूता प्रभवति॥ ३॥

गङ्गाधरः—तस्याः प्राग्रूपमाह—प्राग्रूपमित्यादि। मुखशोषः सर्व्वासां तृष्णानां प्राग्रूपं भवति। सर्व्वासां तृष्णानां स्वलक्षणं सर्व्वदाम्बुकामित्वम्। सर्व्वासां तृष्णानां लिङ्गानां स्वस्वलिङ्गानां लाघवमपाय इति लाघवपदेन स्वाभाविकतृष्णाव्यवच्छेदः॥ ४॥

षोड़शांशेन दूषयतः। (द्वितीयाबहुवचनान्तम्।) देह इत्यनेन एतासां तृष्णानां शरीरद्वयं दर्शयति। या हि मानसी तृष्णा सा शरीरे इच्छाद्वेषात्मिका दुःखात् प्रवर्त्तते इति। या तु देहाश्रयदोषकारणा सा देहजेति भावः। स्वाभाविकतृष्णा यापि वातपित्ते आरम्भे एव, किं साप्यत्र न गृह्यते? मैवम्, इह अस्वाभाविकव्याधिप्रकरणे नाधिकार इति कृत्वा स्वाभाविकतृष्णाकरवातपित्ताभ्यां वक्ष्यमाणतृष्णाकरवातपित्तानां विशेषमाह—पीतं पीतमित्यादि। प्रकृततृष्णारम्भकौ पित्तवातौ पीतं पीतं जलं शोषयतः। अतो जलशोषणत्वात् शमं न याति। स्वाभाविक्यां जलं पीत्वा शान्तिमधिगच्छतीति भावः। उपद्रवरूपतृष्णोत्पादमाह—घोरेत्यादि। उपसर्गभूतेति उपद्रवरूपा॥ ३॥

चक्रपाणिः—तृष्णाप्राग्रूपमाह—प्राग्रूपमित्यादि। प्राग्रूपकथने एव मध्ये तृष्णानामव्यभिचारिलक्षणमाह—स्वलक्षणमिति। अव्यभिचारिलक्षणं यथा ज्वरस्य सन्तापः। पुनः प्रकृतं प्राग्रूपमाह। लिङ्गानां लाघवमिति वक्ष्यमाणवातादिजतृष्णालिङ्गानां अल्पत्वम्। पूर्व्वरूपावस्थायां वक्ष्यमाणलक्षणानि कानिचिच्च न भवन्त्येव। उक्तञ्च—'अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतम्' इति। किंवा यदेतत् प्राग्रूपं मुखशोषः सर्व्वदाम्बुकामित्वम्, एतच्च स्वलक्षणं

* तावतो न याति शममिति चक्रसम्मतः पाठः।

मुखशोषस्वरभेदभ्रमसन्तापप्रलापसंस्तम्भान्।
ताल्वोष्ठकण्ठजिह्वाकर्कशतां चित्तनाशञ्च ॥
जिह्वानिर्गममरुचिं बाधिर्यं मर्म्मदूयनं सादम्।
तृष्णोद्भूता कुरुते पञ्चविधा लिङ्गतः शृणु ताः ॥ ५ ॥
अब्धातुं देहस्य कुपितः पवनो यदा विशोषयति।
तस्मिन् शुष्के शुष्यत्यबलस्तृष्यत्यथ विशुष्यन् ॥
निद्रानाशः शिरसो भ्रमस्तथा शुष्कविरसमुखता च।
स्रोतोऽवरोध इति च स्याल्लिङ्गं वाततृष्णायाः ॥ ६ ॥

गङ्गाधरः—तृष्णायाः प्राबल्ये सामान्यलक्षणमाह—मुखशोषेत्यादि। उद्भूता प्रबला तृष्णा मुखशोषादीन् ताल्वादिकर्कशतां चित्तनाशञ्च जिह्वानिर्गमं वहिर्निःसरणं मर्म्मदूयनं वक्षस उपतापं कुरुते पञ्चविधास्ताः प्रागभिहिताः वातपित्तामक्षयोपसर्गात्मिकास्तृष्णाः शृणु। ननु अन्यत्र सप्त तृष्णा अभिहिताः, तद्यथा। तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात् तथा ह्यामसमुद्भवा च। भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्व्वशश्चेति। कथमिह पञ्च तृष्णा इति? उच्यते। वक्ष्यते ह्यत्रैव प्रतितृष्णं कारणं ततो नाधिकास्ति तृष्णा ॥५॥

गङ्गाधरः—वाततृष्णालक्षणमाह—अब्धातुमित्यादि। कुपितः पवनो यदा देहस्याब्धातुं विशोषयति तदा तस्मिन्नब्धातौ शुष्के सति अबलः पुमान् शुष्यति चाथ विशुष्यन् तृष्यति। तस्य निद्रानाशादीनि च स्युः। स्रोतोऽन्न-जलवहं तस्यावरोधः इति च वाततृष्णाया लिङ्गम् ॥ ६ ॥

तृष्णानां, तथा पूर्व्वरूपञ्च भवति। ये तु प्रागुक्तं मुखशोषः सर्व्वदाम्बुकामित्वमिति पठन्ति, तेषां मते तृष्णायाः स्वलक्षणं नोक्तं स्यात्। उक्तञ्च—'स्वलक्षणन्तु तृष्णानां सर्व्वदाम्बु-पिपासिते'ति। किंवा मुखशोषे एव सर्व्वदाम्बुकामित्वं लिङ्गानाञ्च लाघवं रोगरूपाया-स्तृष्णाया आगमनमित्यर्थः। तृष्णानां वपुरपि वक्ष्यमाणलिङ्गानामन्यथात्वम्। सर्व्वदोच्छेदो हि तृष्णालक्षणानां न भवत्येव। सहजतृष्णाप्रभावेन तल्लक्षणानां अल्पमात्रतयावस्थानात्। लिङ्गानां लाघवमाशूत्पादः। अपायो मरणमिति कृत्वा तृष्णानामसाध्यतालक्षणमिदमुच्यते ॥ ४ ॥

चक्रपाणिः—सर्व्वतृष्णानामुपद्रवानाह—मुखशोष इत्यादि। ये तु मुखशोषादीनि लक्षणा-न्याहुस्तन्मते तृष्णोपद्रवानभिधानं स्यात्। उपद्रवाश्चाध्यायसंग्रहे संगृहीताः तेनातिशयवृद्धाः मुखशोषादय उपद्रवाः। वृद्धास्तु लिङ्गानीति व्यवस्था ॥ ५ ॥

चक्रपाणिः—अब्धातुमित्यादिना पञ्चानां पृथक् सम्प्राप्तिमाह। कुपितः पवनः देहे नाना-रसादिरूपतया स्थितं अब्धातुं विशोषयति, शुष्केऽब्धातौ शुष्यतीति योज्यम्। स्रोतोवरोध इति प्रत्युपघातः ॥ ६ ॥

पित्तं मतमाग्नेयं कुपितं चेत् तापयत्यब्धातुम्।
सन्तप्तः संजनयेत् * तृष्णां दाहोल्वणां नृणाम्॥
तिक्तास्यत्वं शिरसो दाहः शीताभिनन्दता मूर्च्छा।
पीताक्षिमूत्रवर्च्चस्त्वमाकृतिः पित्ततृष्णायाः॥ ७॥

गङ्गाधरः—पित्ततृष्णालक्षणमाह—पित्तमित्यादि। आग्नेयमग्निस्तेजोनामभूतं तद्बहुलपाञ्चभौतिकं मतम्, तच्चेत् कुपितमब्धातुं तापयति, स सन्तप्तोऽब्धातुर्नृणां दाहोल्वणां तृष्णां सञ्जनयेत्। तेषां नृणां तिक्तास्यत्वादीनि च स्युः। पित्ततृष्णाया आकृतिरिति। इह अब्धातुं चेत् कुपितं पित्तं तापयतीति यदुक्तं तेन कुपितपित्तसन्तप्तः कफोऽप्यब्धातुस्तृष्णां संजनयेदिति ख्यापितम्। तस्याः सम्प्राप्तिरियमुक्तान्यत्र। वाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलाशेन भवेत् तथा च। निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रमिति॥ न ततोऽधिकमङ्गास्तृष्णायाः। एतदभिप्रायेणैव हारीतेनाप्युक्तम्—स्वाद्वम्ललवणाजीर्णैः क्रुद्धः श्लेष्मा सहोष्मणा। प्रपद्याम्बुवहं स्रोतस्तृष्णां संजनयेत् नृणाम्। शिरसो गौरवं तन्द्रा माधुर्य्यं वदनस्य च। भक्तद्वेषः प्रसेकश्च निद्राधिक्यं तथैव च। एतैर्लिङ्गैर्विजानीयात् तृष्णां कफसमुद्भवामिति। दोषतारतम्यन्तु नेह तन्त्रे विशेषेणोक्तम्। पित्तप्रधानत्वेऽब्धातुसन्तापे दाहोल्वणादितृष्णा भवति। अप्रधानपित्ततापितेऽब्धातौ खलु कफादौ हारीतोक्तलक्षणा तृष्णा भवतीति कफजव्यपदेशो हारीतादिना कृतोऽस्मिंस्तु तन्त्रे पित्तजायामन्तर्भाव इति अभिप्रायभेदान्न विरोधः॥ ७॥

चक्रपाणिः—पित्तमित्यादिना पित्तजामाह—शरीरसंख्याशारीरे एवमुक्तम् यद् द्रव-सर-मन्द-स्निग्ध-मृदु-पिच्छिलरसरुधिरवसाकफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनञ्चेत्यनेन, तथा तत्रैव यत् पित्तमित्यनेन द्वयात्मकत्वं पित्तस्य यद्यप्युक्तं तथाप्याग्नेयबाहुल्यात् पित्तस्याग्नेयमेवेति दर्शयन्नाह—पित्तं मतमाग्नेयमिति। द्वयात्मकत्वेऽपि च पित्तस्याग्नेयांशप्राधान्यात्, अन्यत्रापि सौम्याग्नेयवायव्याधिकारभेदैः पैत्तिकविकाराः आग्नेयत्वेन गृहीता एव। सन्तप्तः स हीति स अब्धातुः सन्तप्तः। सन्तप्तः समिति पाठपक्षे पित्तमेव जनयेदिति योज्यम्। यदाब्धातुजनयति तदा पित्तसन्तप्त एव जनयतीति पित्तस्यैव कर्त्तृत्वम्॥ ७॥

---

* सन्तप्तः स हीति चक्रसम्मतः पाठः।

तृष्णा यामप्रभवा साप्याग्नेयी न पित्तजनितत्वात् ।
लिङ्गं तस्याश्चारुचिराध्मानकफप्रसेकौ च ॥ ८ ॥
देहो रसजोऽम्बुभवो रसश्च तस्य क्षयाच्च तृष्येद्धि ।
दीनस्वरः प्रताम्यन् संशुष्कहृदयगलतालुः ॥ ९ ॥

गङ्गाधरः—आमजतृष्णामाह—तृष्णेत्यादि । उष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् । दुष्टमामाशयगतं रसमामं प्रचक्षते । इति । तस्मादामात् प्रभवा तु या तृष्णा साप्याग्नेयी योऽन्नरस आग्नेयान्नज एवापाचित आमः स्यात् तदामजा तृष्णा भवतीत्याग्नेयी न तु पित्तजनितत्वादाग्नेयी । तस्या लिङ्गम् अरुच्यादित्रयमिति । वातजपित्तजाभ्यामतिरिक्तामजा पृथक् पठिता । अन्यत्रामतस्त्रिदोषकोपात् त्रिदोषलिङ्गामसमुद्भवा तु हृच्छूलनिष्ठीवनसादकर्त्रीति पठ्यते ॥ ८ ॥

गङ्गाधरः—क्षयजतृष्णामाह—देह इत्यादि । मधुरादिषड्रसान्नगतषड्रसजो गर्भिण्या रसो नामाद्यधातुस्तद्भवोऽपत्यानां देह एवं रसश्च स्वकृतषड्रसान्नाहारजाम्बुभव इत्यतस्तस्य रसस्य क्षयाच्च नरस्तृष्यति । भवति खलु प्रताम्यन् सन् दीनस्वरश्च दीनश्च संशुष्कहृदयगलतालुश्च । श्रान्तो दीनस्वरइत्यादिकमुपसर्गजाया लक्षणतया व्याचष्टे, तन्न; क्षयजलक्षणानुरूपातिरिक्तमिति । अन्यत्र चोक्तम् । रसक्षयाद् या क्षयसम्भवा सा तयाभिभूतश्च निशादिनेषु । पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः ॥ रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग् व्यवस्येदिति ॥ ९ ॥

चक्रपाणिः—तृष्णेत्यादिनाऽऽमजामाह । आमशब्देन च समानलक्षणतया कफजाऽपि गृह्यते । साप्याग्नेय्यित्यनेन पूर्व्वपरिज्ञातं सर्व्वासां वातपित्तजन्यत्वं समुच्चयति । वातश्च तृष्णाकरणेनोक्तोऽपि अत्र प्रधानम् । अन्यत्राप्युक्तम्—'दर्शनं पक्तिरूष्मा च क्षुत् तृष्णा देहमार्द्दवम् । प्रभाप्रसादौ मेधा पित्तकर्म्माविकारज'मिति । आमपित्तजनितत्वादिति आमावरोधवृद्धपित्तजनितत्वादित्यर्थः ॥ ८ ॥

चक्रपाणिः—देहो रसज इत्यादिना आहाररसात् सर्व्वधातुत्वमुत्पद्यते । स च रसो देहपोषकोऽम्बुभव इति आप्यः, तस्य क्षयादिति रसक्षयात् अम्बुक्षयो भवति, तेन चाम्बुक्षयेण पुरुषः पानीयप्रार्थनारूपतृष्णायां युक्तो भवतीति दर्शयति । उक्तं हि सुश्रुते—'दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः । स्वयोनिवर्द्धनं यत् तदन्नपानं प्रकाङ्क्षतीति । इहापि चोक्तं रससंक्षये तृष्यति ॥ ९ ॥

भवति खलु योपसर्गात् तृष्णा सा शोषिणी कष्टा ।
ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहानाम् ॥
सर्व्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम् ।
घोरोपद्रवयुक्ता तृष्णा मरणाय विज्ञेया ॥
नाग्नेर्विना * हि तर्षः पवनाद्वा तौ हि शोषणे हेतू ।
अब्धातोरतिवृद्धावपां क्षये तृष्यते नरो हि ॥

गङ्गाधरः—पारिशेष्यादुपसर्गात्मिकां तृष्णामाह—भवतीत्यादि। या तृष्णा भवत्युपसर्गो ज्वराद्युपसृष्टदेहानां नराणां सा तृष्णा शोषिणी मुखादिशोषकारिणी कष्टा कष्टसाध्या कष्टदा च। ज्वरमोहक्षयकासश्वासादीत्यत्रादिशब्देन क्षतमद्यपानात्ययादिजा संगृहीता न त्वतिरिक्ता। कष्टत्वप्रसङ्गादन्यासामपि कष्टत्वमाह—सर्व्वास्त्वित्यादि। अतिप्रसक्ताः सर्व्वा एव तृष्णाः कष्टा भवन्ति। रोगान्तरकृशानाञ्च सर्व्वाः तृष्णाः कष्टा वमिप्रसक्तानाञ्च सर्व्वाः तृष्णाः कष्टा भवन्ति। परे सर्व्वासामसाध्यतामाहुः, तन्न ; सर्व्वा इति वहुवचनान्तस्य घोरेत्यादिप्रथमैकवचनान्तैरन्वयाभावात्। तस्मात् कष्टा इत्यनेन वचनविपरिणामेनान्वयः। सर्व्वास्त्विति तुशब्देन कष्टा इत्यस्यानुकर्षात्। असाध्यामाह। घोरेत्यादि। घोरा भयानका या तृष्णा भवत्युपद्रवयुक्ता वाताद्युक्तलिङ्गा सती तदुत्तरकालजातरोगयुक्ता, सा तृष्णा मरणाय विज्ञेया। इति। नन्वाभ्योऽप्यतिरिक्तास्तृष्णाः दृश्यन्ते ताः कथं नोपदिश्यन्त इत्यत आह। नाग्नेरित्यादि। हि यस्मादग्नेस्तेजसो विना पवनाद वा विना तर्षो न भवति। कस्मात् ? तावित्यादि। हि यस्मादब्धातोरतिवृद्धौ शोषणे हेतू तावग्निपवनौ भवतः, तस्मान्नरोऽपां क्षये तृष्यते। तथाहि चाह।

चक्रपाणिः—भवतीत्यादिनोपसर्गजामाह। ज्वराद्युपद्रवरूपा भवति। कष्टेति कष्टसाध्या। एवं प्राक्सूचितवातपित्तामाम्बुक्षयोपसर्गात्मिका पञ्च तृष्णा व्याहृताः। अत्रैव सुश्रुतोक्ता कफजा सामजायामवरुद्धा, क्षतजा उपसर्गात्मिकायामवरुद्धा। अन्नजाया आमेनैवान्तर्भावनीया। इदानीं तृष्णाया असाध्याया लक्षणमाह—सर्व्वास्त्वित्यादि। घोरोपद्रवयुक्तेति पीडाकरोपद्रववती। सम्प्रति तृष्णान्तराणां उक्ततृष्णायामेवान्तर्भावं दर्शयन् उक्तवक्तव्यतृष्णानामपि वातपित्तक्षयजन्यत्वमाह—नाग्निमित्यादि। कस्मात् पुनः अग्निवातौ विना तर्षो न भवतीत्याह। तौ हि अतिवृद्धौ पित्तरूपौ अग्निवातौ अब्धातुशोषणे हेतू। तस्मान्नाग्निवातौ विना तर्षः

* नाग्निमिति चक्रसम्मतः पाठः।

गुर्व्वन्नपयःस्नेहैः सम्मूर्च्छद्भिर्विदाहकाले च।
यस्तृषेद्‌ वृतमार्गे तत्राप्यनिलानलौ हेतू॥ १०।
तीक्ष्णोष्णरूक्षभावान्मद्यं पित्तानिलौ प्रकोपयति।
शोषयतोऽपां धातुं तावेव हि मद्यशीलानाम्॥
तप्तास्विव सिकतासु हि तोयमाशु शुष्यति क्षिप्तम्।
तेषां सन्तप्तानां हिमजलपानाद्‌ भवति शर्म्म॥
शिशिरस्नातस्योष्णो(ष्मा) रुद्धः कोष्ठं प्रपद्य तर्षयति।
तस्माद्‌ भजेत सहसा नोष्णः स्नाने जलं शीतम्॥

गुर्व्वन्नेत्यादि। विदाहकाले पाककाले सम्मूर्च्छद्भिः परस्परं संयोगविभागाभ्यामेकीभावमापद्यमानैर्गुर्व्वन्नपयःस्नेहैर्वृतमार्गे पवनतेजसोर्गतिवर्त्मावरणे यः पुमांस्तृष्येत् तत्रापि पवनानिलौ हेतू भवतः। तस्मादन्नजा तृष्णा नातिरिक्ता॥ १०॥

गङ्गाधरः—या चापरा मद्यजा तृष्णा तामाह—तीक्ष्णेत्यादि। मद्यं तीक्ष्णादिगुणैः पित्तानिलौ प्रकोपयति, मद्यकुपितौ तावेव पित्तानिलौ मद्यशीलानामपां धातुं शोषयतः। तप्तास्विव यथा तप्तासु सिकतासु क्षिप्तं तोयमाशु शुष्यति। तेषां मद्यसन्तप्तानां नृणां हिमजलपानाच्छर्म्म भवति। तस्माद् वातपित्तजतृष्णातिरिक्ता न मद्यजा तृष्णा। अपरा च या दृश्यते तामाह—शिशिरेत्यादि। शिशिरे स्नातस्य चोष्णो देहोष्मा रुद्धः सन् कोष्ठं जठरं प्रपद्य तर्षयति। तस्मादुष्णः सन्तप्तदेहः पुमान् स्नाने शीतं जलं सहसा न भजेत। अत्रापि देहोष्मा पित्तविशेष एव, तज्जातेयं तृष्णा नातिरिक्ता।

इत्युक्तमित्यर्थः। एवमग्निवाताभ्यां कृतेऽपां क्षये स्वरूपादेव नरस्तृष्यति। एवं पित्तवातहृताब्धातुक्षयजत्वमभिधाय अन्तर्भावनीयतृष्णामाह—गुर्व्वन्नेत्यादि। संमूर्च्छद्भिरिति एकतां गच्छद्भिः। अत्र वातो वृद्धः संमूर्च्छने अमुष्य तृष्णाकरः विदाहकाले च तृष्णा तत्र पित्तं तृष्णाकरम्॥ १०॥

चक्रपाणिः—मद्यजामपि अन्तर्भावयन्नाह—तीक्ष्णोष्णेत्यादि। सिकतासु हि तोयमिति प्रशमकथनम्। शर्म्मेति सुखम्। शीतजामन्तर्भावयन्नाह—शिशिरेत्यादि। शिशिरं शीतम्। ऊष्मा रुद्ध इति शीतस्पर्शबलेन बहिर्निर्गच्छन् रोमकूपैः उष्मावरुद्धः प्रतीपीकृतः। एतेन एतस्यापि पित्तजत्वमुक्तम्। न सहसेत्यनेन विश्रमार्थं, शीतजलसेवायां न तथाविधा तृष्णा

लिङ्गं सर्व्वास्वेतास्वनिलक्षयात् पित्तजं भवत्यथ तु।
पृथगागमाच्चिकित्सितमतः प्रवक्ष्यामि तृष्णानाम् ॥ ११ ॥
अप्संक्षयाद्धि तृष्णा संशोष्य नरं मारयेदाशु।
तस्मादैन्द्रं तोयं समधु पिबेद् तद्गुणं वान्यत् ॥
किञ्चित्तुवरानुरसं तनु लघु शीतं सुगन्धि सुरसञ्च।
अनभिष्यन्दि च यत् तत् क्षितिस्थितमथैन्द्रवज्ज्ञेयम् ॥
शृतशीतं ससितोत्पलमथवा शरपूर्व्वपञ्चमूलेन ॥ १२ ॥

आसां लिङ्गमाह—लिङ्गमित्यादि। एतासु गुर्व्वन्नजादिषु सर्व्वासु तृष्णासु यदाऽनिलक्षयो भवति, तदा पित्तजं लिङ्गं भवतीति तृष्णानिदानमुक्तम्। अथ तु निदानोपदेशादनन्तरं पृथगागमात् पृथग्वातादिजत्वेन तृष्णानामुपदेशात् तृष्णानां चिकित्सितमतः पृथक् प्रवक्ष्यामि ॥ ११ ॥

गङ्गाधरः—अप्संक्षयादित्यादि। तृष्णा हि यस्मादब्धातुसंक्षयात् संशोष्य नरमाशु मारयति, तस्मादैन्द्रं वृष्टिसम्भवं जलं समधु पिबेत् तद्गुणमैन्द्रजलगुणवदन्यद् वा जलं समधु पिबेत्। दिवार्ककिरणैर्जुष्टं जुष्टमिन्दुकरैर्निशि। वायुनास्फालितं शश्वत् तत्तुल्यं गगनाम्बुनेति। तद्गुणमन्यज्जलमाह—किञ्चिदित्यादि। किञ्चित्कषायानुरसं तनु चाघनं लघु च शीतञ्च सुगन्धि च सुरसञ्चानभिष्यन्दि च यद्भूमिस्थितं जलं तदैन्द्रजलवज्ज्ञेयमिति। शृतशीतमित्यादि। अर्द्धावशिष्टं जलं शृतं ससितोपलं शर्करामिश्रं पिबेत्। अथवा शरादिपञ्चमूलेन शृतं ससितोपलं पिबेत् ॥ १२ ॥

भवतीति दर्शयति। सम्प्रति भिन्नसंमूर्च्छनादीनां यथोक्तक्रमेण अनिलपित्तजावरोधमभिधाय सर्व्वासामेवानिलक्षयपित्तजत्वम् उपदर्शयन्नाह—लिङ्गं सर्व्वास्वित्यादि। पृथगागमादिति पृथग्हेतुत्वात्। आगच्छत्यस्मादिति आगमो हेतुः। वातादिहेतुभेदाच्चिकित्सितभेदं वक्ष्यामीत्यर्थः। किंवा पृथक् हि चिकित्सितं वक्ष्यामि। आगमादिति आयुर्व्वेदागमप्रामाण्यात्। आगमे तृष्णानां भेदेन चिकित्साभिधानात् अहमपि पृथक् चिकित्सां वक्ष्यामीत्यर्थः ॥ ११ ॥

चक्रपाणिः—अपां क्षयादित्यादिना चिकित्सामाह। ऐन्द्रमित्यान्तरिक्षम्। तद्गुणं वान्यदिति यदुक्तं तदाह—किञ्चिदित्यादि। तुवरोऽनुरसः यो रस्यते आस्वाद्यते यस्मिन्निति तुवरानुरसम्। आन्तरिक्षं जलं अव्यक्तसर्व्वरसयुक्तम्, अव्यक्तीभावस्तु गन्धरसानां प्रकृतो भवति। ऐन्द्रवदित्यनेन अन्तरिक्षानुकारि। शरेक्षुदर्भकुशकाशानां मूलमेव च इत्युक्तेन शरपञ्चमूलेन ॥ १२ ॥

लाजानां सक्तूनां समधुसितं मन्थमैन्द्रेण।
वाट्यश्चामयवानां शीतं मधुशर्करायुतं दद्यात्।
पेयां वा शालीनां दद्याद् वा कोरदूषाणाम्॥ १३॥
पयसा शृतेन भोजनमथवा मधुशर्करायुतं योज्यम्।
पारावतादिकरसैर्घृतभृष्टैर्वाप्यलवणाम्लैः॥
तृणपञ्चमूलमुञ्जातकैः पियालजैश्च जाङ्गलाः सुकृताः।
शस्ता रसाः पयो वा तः सिद्धं शर्करामधुमत्॥
शतधौतघृतेनाक्तः पयः पिबेच्छीततोयमवगाह्य।
मुद्गमसूरचणकजा रसाश्च घृतभर्ज्जिता देयाः॥ १४॥
मधुरैः सजीवनीयैः शीतैश्च सतिक्तकैः शृतं क्षीरम्।
पानाभ्यञ्जनयोगेष्विष्टं मधुशर्करायुतम्॥

गङ्गाधरः—लाजानां सक्तूनां समधुसितं समधुशर्करं मन्थमैन्द्रजलेन कृतं दद्यात्। आमयवानां वाट्यं मण्डं शीतं मधुशर्करायुतं दद्यात्। पेयां वेत्यादि। शालीनां पेयां वा कोरदूषाणां वा पेयां दद्यात्॥ १३॥

गङ्गाधरः—अथवा पयसा शृतेन पक्वेन दुग्धेन मधुशर्करायुतं भोजनमन्नं योज्यम्। भोजने व्यञ्जनार्थमाह—पारावतेत्यादि। घृतभृष्टैः पारावतादिमांसरसैर्वाप्यलवणाम्लैर्लवणाम्लवर्ज्जितैर्भोजनं दद्यात्। रसांश्चाह तृणेत्यादि। मुञ्जातक औत्तरापथिकः कन्दः। तृणपञ्चमूलं कुशादिपञ्चमूलं मुञ्जातकश्चेत्येतैः शृततायैः पियालफलरसैश्च सिद्धा जाङ्गलाः पारावतादीनां मांसरसाः शस्ताः। अथवा तैस्तृणपञ्चमूलमुञ्जातैः पियालैश्च सिद्धं पयः शर्करामधुमत् शस्तम्। शतधौतेत्यादि। तृष्णावान् नरः शतधौतघृतेनाक्तः सन् शीततोयम् अवगाह्य पयः पिबेत्। मुद्गादिरसाश्च घृतभर्ज्जिता देयास्तृष्णावते॥ १४॥

गङ्गाधरः—मधुरैरित्यादि। सजीवनीयैर्मधुरैर्द्रव्यैः शृतं क्षीरं तथा शीतैः सतिक्तकैर्द्रव्यैः शृतं क्षीरं मधुशर्करायुतं तृष्णावतां पानाभ्यञ्जनयोगेषु

चक्रपाणिः—आमयवानां वाट्यं ईषद्भृष्टयवमण्डः॥ १३॥

चक्रपाणिः—तैरिति तृणपञ्चमूल्यादिभिः। मधुरैरिति मधुररसैः। शीतैरिति शीतवीर्य्यैः॥ १४॥

तज्जं वा घृतमिष्टं पानाभ्यङ्गेषु नस्यमपि च स्यात्।
नारीपयः सशर्करमुष्ट्र्या अपि नस्यमिक्षुरसः॥
क्षीरेक्षुरसगुड़ोदकसितोपलाक्षौद्रसीधुमाध्वीकैः *।
वृक्षाम्लमातुलुङ्गैर्गण्डूषास्तालुशोषघ्नाः॥ १५॥
जम्ब्वाम्रातकबदरीवेतसपञ्चपल्लवैश्चाम्लाः।
हृन्मुखशिरःप्रदेहाः संश्रितमूर्च्छाभ्रमतृष्णाघ्नाः॥
दाड़िमदधित्थलोध्रैः सविदारीबीजपूरकैः शिरसः।
लेपो गौरामलकैर्घृतारनालयुतैश्च हितः॥
शैवलपङ्काम्बुरुहैः साम्लैः सघृतैश्च शक्तुभिर्लेपाः॥ १६॥
मस्त्वारनालार्द्रवसनकमलमणिहारसंस्पर्शाः।
शिशिराम्बुचन्दनार्द्रस्तनतटपाणितलगात्रसंस्पर्शाः॥

इष्टमिति। तज्जं वेत्यादि। तथाविधशृतक्षीरजं घृतं तृष्णावतां पानाभ्यङ्गेषु स्यान्नस्यमपि च स्यात्। नारीपय इत्यादि। सशर्करं नारीपयस्तृष्णावतां नस्यं स्यात्। उष्ट्र्या अपि पयः सशर्करं नस्यं स्यात्। इक्षुरसश्च नस्यमिष्टम्। क्षीरेत्यादि। क्षीरादीनामन्यतमेन गण्डूषास्तालुशोषघ्नाः॥ १५॥

गङ्गाधरः—जम्ब्वाम्रेत्यादि। जम्बूफलादिभिरम्ला हृदादिषु प्रदेहाः संश्रितान् मूर्च्छादीन घ्नन्ति। दाड़िमेत्यादि। दाड़िमादिभिः पञ्चभिः शिरसो लेपः संश्रितमूर्च्छादिषु हितः। गौरामलकैरारनालपिष्टैर्घृतयुतैः शिरसो लेपश्च तेषु हितः। गौरा हरिद्रा। शैवलेत्यादि। शैवलादिभिः सक्तुन्तैः षड्भिः षट् लेपास्तृष्णाघ्ना इति परेणान्वयः॥ १६॥

गङ्गाधरः—मस्त्वारनालान्यतरेणार्द्रवसनस्पर्शः कमल-मणिहारसंस्पर्शाश्च तृष्णाघ्नाः। शिशिराम्बुना चन्दनेन वार्द्राणां स्तनतटपाणितलगात्राणां

चक्रपाणिः—तज्जमिति मधुरादिशृतक्षीरजम्। मार्द्वीकं मृद्वीकारसः। गण्डूषो मुखपूरको द्रवः॥ १५॥

चक्रपाणिः—पञ्चाम्लं 'कोलवृक्षाम्लचुक्रीकासंयुतश्चाम्लवेतसः। चतुरम्लमिति प्रोक्तं पञ्चाम्लन्तु सदाडिम'मिति वचनाज्ज्ञेयम्। दधित्थः कपित्थः। गौरामलकैरिति आर्द्रं तया गौरदण्डैरामलकैः॥१६॥

* मार्द्वीकैरिति चक्रसम्मतः पाठः।

मौक्तिकक्षौमार्द्रनिवसनानां वराङ्गनानां प्रियाणाञ्च ।
हिमवद्दरीवनसरित्सरोऽम्बुजवनोपवनपादपशिशिराणाम् । *
रम्योदकयुक्तानां स्मरणं कथाश्च तृष्णाघ्नाः ॥ १७ ॥
वातघ्नमन्नपानं मृदु लघु शीतञ्च वाततृष्णायाः ।
क्षयकासनुद् घृतं क्षीरमूर्द्धं वाततृष्णाघ्नम् ॥ १८ ॥
स्याज्जीवनीयसिद्धं क्षीरं घृतं वातपित्तजे तर्षे ।
पैत्ते द्राक्षाचन्दनखर्ज्जूरोशीरमधुयुतं तोयम् ॥ †
लोहितशालिप्रस्थः सलोध्रमधुकाञ्जनोत्पलः क्षुण्णः ।
पक्त्वामलोष्ट्रमधुजलसमायुतो मृन्मये पेयः ॥

संस्पर्शाः तृष्णाघ्नाः । मौक्तिकादीनाञ्च संस्पर्शाः तृष्णाघ्नाः । आर्द्र-निवसनं निवासस्थानम् । हिमवतां शीतलानां दरीप्रभृतीनां पादपान्तानां शिशिराणां नीहारवारीणाम् एषां रम्योदकयुक्तानाञ्च संस्पर्शाः स्मरणं कथाश्च तृष्णाघ्नाः ॥ १७ ॥

गङ्गाधरः—सामान्यतस्तृष्णाचिकित्सितमुक्त्वा विशेषत आह—वातघ्नेत्यादि । वाततृष्णायां वातघ्नान्नपानं मृदु लघु शीतं न तु कठिनगुरूष्णम् । क्षयकासनुद् यद् यद् घृतमुक्तं तत्तत् पीतोर्द्धं क्षीरं पीतं वाततृष्णाघ्नम् ॥ १८ ॥

गङ्गाधरः—स्यादित्यादि । वातपित्तजे वातजे पित्तजे तदुभयजे च तर्षे । पैत्ते तर्षे द्राक्षादियुतं तोयम् । लोहितेत्यादि । रक्तशालीनां प्रस्थः शरावद्वयम् । किञ्चिल्लोध्रमधुकनीलोत्पलसहितः क्षुण्णः कुट्टितः मृन्मये पात्रे जलेन पक्त्वा अर्द्धशृतजलभूतः आमलोष्ट्रं मधु च जलञ्च तत्र प्रक्षिप्य स्थापितः स्वच्छीभूतः

चक्रपाणिः—इन्दुपादाश्चन्द्ररश्मयः ॥ १७ ॥

चक्रपाणिः—वातघ्नेत्यादि । तृष्णानां वैशेषिकचिकित्सितमाह—क्षयकासहरैः शृतं क्षयकासनुद् घृतम् । ऊर्द्धं वातः श्वासः ॥ १८ ॥

चक्रपाणिः—वातपित्तजे तर्षे इत्यत्र संसर्गजा तृष्णा असूत्रितापि असूत्रितद्वन्द्वजगुल्मन्यायेनोच्यते । पैत्ते इत्यत्र तर्षे इति शेषः । लोहितशालिप्रस्थ इत्यादौ लोध्रादीनां मिलितानां चतुःपलं प्रक्षेप्यन्यायात् पादिकं पक्वामलोष्ट्रप्रमादनञ्च दत्त्वा शालितण्डुलप्रस्थं क्षुण्णं स्थाप्यते,

* वनेन्दुपादशशिशिराणामिति चक्रः ।

† इतःपरं—लोहितकशालितण्डुलखर्ज्जूरपरुषकोत्पलद्राक्षाः । मधु पक्वलोष्ट्रमेव च जले शृतं शीतलं पेयमित्यधिकः पाठः क्वचित् ।

वटमातुलुङ्गवेतसपल्लवकुशकाशमूलयष्ट्याह्वैः।
सिद्धेऽम्भस्यग्निनिभां कृष्णां मृदं कृष्णसिकतां वा॥
तप्तानि नवकपालान्यथवा निर्व्वाप्य पाययेताच्छम्।
* अल्पा पक्वशर्करामृतवल्लीजलं वा तृषं हन्ति॥
क्षीरवतां मधुराणां शीतानां शर्करामधुमिश्राः।
शीतकषाया मृद्भृष्टसंयुक्ताः क्षयतृष्णाघ्नाः॥
व्योषवचाभल्लातकतिक्तकषायास्तथामतृष्णाघ्नाः।
यच्चोक्तं कफजायां छर्द्यां तथैव कार्य्यं स्यात्॥ १९॥
स्तम्भारुच्यविपाकालस्यछर्द्दिषु कफानुगां तृष्णाम्।
ज्ञात्वा दधिमधुतर्पणलवणोष्णजलैर्वमनमिष्टम्॥

शीतः पेय इत्युपदेशः। वटेत्यादि। वटादीनां पल्लवं कुशकाशयोर्मूलं यष्ट्याह्वञ्च जले पक्त्वार्द्धशिष्टमवतार्य्य पूते सिद्धेऽम्भसि तप्तामग्निनिभां कृष्णवर्णमृत्तिकाम् अथवा कृष्णवर्णसिकतामग्निनिभामथवा नवघटादीनां कपालानि तप्तानि प्रक्षिप्य निर्व्वाप्य शीतीकृत्याच्छं निर्म्मलं जलं पाययेत। अथवा अल्पा क्षुद्रा शर्करा कङ्कराख्या पक्वाऽग्निना तप्ता निर्व्वापिता अमृतवल्ली गुडूची तस्या जलं तया शृतं जलं तृषं हन्ति। क्षीरवतामित्यादि। क्षीरवतां वटादीनां शीतकषाया मृद्भृष्टसंयुक्ताः भृष्टमृत्संयुक्ताः निर्व्वापिताः शर्करामधुमिश्राः क्षयतृष्णाघ्नाः। एवं मधुराणां काकोल्यादीनां शीतकषाया भृष्टमृत्संयुक्ता निर्व्वापिताः शर्करामधुमिश्राः। तथा शीतानामामलकादीनां शीतकषाया भृष्टमृन्निर्वापिताः शर्करामधुमिश्राः। व्योषेत्यादि। व्योषादीनां कषाया आमतृष्णाघ्नाः। यच्च भेषजं कफच्छर्द्द्यामुक्तं तदपि तथैव तेन प्रकारेणैवामतृष्णायां कार्य्य स्यात॥ १९॥

गङ्गाधरः—स्तम्भेत्यादि। देहस्तम्भादुरपसर्गेषु कफानुगां तृष्णां ज्ञात्वा

तस्य पानयोग्या मात्रा मधुप्रक्षेपात् मृन्मये पात्रे पीयत इति वृद्धैरुपादर्शितम्। अल्पपक्वशर्करमिति पाकनिर्मित्तमधुरसहितम्। अमृतवल्ली गुडूची। मृद्भृष्टसंयुता इति भृष्टमृद्युता इत्यर्थः॥ १९॥

* अल्पपक्वशर्करमिति चक्रः।

दाड़िममदनफलं वाप्यन्यतमकषायमथ लेहम् ।
पेयमथवा प्रदद्याद् रजनीमधुशर्करायुतम् ॥ २० ॥
क्षयकासेन तुल्या क्षयतृष्णा सा गरीयसी नृणाम् ।
क्षीणक्षतशोषहितैस्तस्मात् तां भेषजैः शमयेत् ॥ २१ ॥
पानतृड़ार्त्तः पानं त्वर्द्धोदकमम्ललवणगन्धाढ्यम् ।
शिशिरस्नातः पानं मद्याम्बु गुड़ाम्बु वा तृषितः ॥
भक्तोपरोधतृषितः स्नेहतृष्णार्त्तोऽथवा तनुं यवागूम् ।
प्रपिबेद् गुरुणा तृषितो भक्तेन तदुद्धरेद् भक्तम् ॥
मद्याम्बु वाम्बु चोष्णं बलवान् तृषितः समुल्लिखेत् पीत्वा ।
मागधिकाविशदमुखः सशर्करं वा पिबेन्मन्थम् ॥ २२ ॥

दध्यादिभिर्वमनमिष्टम् । दाड़िमेत्यादि । दाड़िममदनफलं वा वमनम् । अन्यतमकषायं वमनौषधानामन्यतमकषायं रजनीमधुशर्करायुतं वा वमनं प्रदद्यात् । अथवा वमनकल्पोक्तं लेहं रजन्यादियुक्तं वमनं प्रदद्यात् । अथवा वमनोक्तं पेयं रजन्यादियुक्तं वमनं प्रदद्यात् । इति स्तम्भादिच्छर्द्यन्तोपसर्गात्मकतृष्णाचिकित्सितमुक्तम् ॥ २० ॥

गङ्गाधरः—अथ क्षयकासोपसर्गतृष्णाचिकित्सामाह—क्षयेत्यादि । क्षयकासेन या तृष्णा सा क्षयतृष्णा क्षयकासेन तुल्या, सा नृणां गरीयसी । तस्मात् क्षीणानां क्षतानां शोषाणाञ्च हितैर्भेषजैस्तां शमयेत् ॥ २१ ॥

गङ्गाधरः—मद्यपानोपसर्गतृष्णाचिकित्सामाह—पानेत्यादि । पानं मद्यपानं तस्माज्जाततृष्णार्त्तः अम्ललवणगन्धाढ्यमर्द्धोदकं पानं मद्यं पिबेदित्यध्याहार्य्यम् । पानजतृषितः शिशिराम्बुना स्नातः मद्याम्बु मद्यमिश्रमम्बु गुड़ाम्बुमिश्रं वा पानं पिबेत् । अन्नोपसर्गतृष्णाचिकित्सामाह—भक्तेत्यादि । क्षुधायामभोजनजतृषितः स्नेहपानतृषितो वा तनुमघनां यवागूं मण्डं प्रपिबेत् । गुरुणा भक्तेन तृषितः तद्भुक्तं भक्तमुल्लिखेद् वमेत् । तदुद्धरणार्थम्

चक्रपाणिः—अन्यतमकषायमिति आमलकादिकषायम् ॥ २० । २१ ॥

चक्रपाणिः—पानतृषार्त्त इति अतिशयपानजतृट्पीड़ितः । भक्तोपरोधो भक्तच्छेदः । मागधिका पिप्पली ॥ २२ ॥

बलवांस्तु तालुशोषो पिबेद् घृतं वृष्यमनु मद्यम्।
सर्पिर्जुष्ट * क्षारं मांसरसांश्चाबलः स्निग्धान्॥
अतिरूक्षदुर्ब्बलानां तृष्णां शमयेन्नृणामथाशु पयः।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः॥
स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात् तां गुड़ाम्बुना शमयेत्।
तर्षं मूर्च्छाभिहतस्य रक्तपित्तापहहेन्यात्॥ २३॥
च्छर्द्यम्लदाहमूर्च्छाभ्रमक्लममदात्ययास्रविषपित्ते।
शस्तं स्वभावशीतं शृतशीतं सन्निपातेऽम्भः॥

आह—मद्याम्बु इत्यादि। बलवान् गुरुभक्तजतृपितः पुमान् मद्याम्बु पीत्वा अथवोष्णाम्बु पीत्वा समुल्लिखेत्। वान्तः सन् मार्गविकां चर्व्वयित्वा विशदमुखः सन् सशर्करं मन्थं वा पिबेत्॥ २२॥

गङ्गाधरः—तालुशोषचिकित्सामाह—बलवांस्त्वित्यादि। तृष्णायां तालुशोषवान् बलवांस्तु वृष्यं वाजीकरणोक्तं घृतं पिबेत् तदनु मद्यं पिबेत्। अबलस्तालुशोषी सर्पिर्जुष्टमनुद्धृतसर्पिः क्षीरं सर्पिःप्रक्षिप्तं वा क्षीरं पिबेत्। स्निग्धान् मांसरसांश्च पिबेत्। अतिरूक्षेत्यादि। अथातिरूक्षा दुर्ब्बलाश्च ये तेषां या तृष्णा तामाशु शमयेत् पयः। छागो वा मधुरो हृद्यः शीतो मांसरसो घृतभृष्टः शमयेत्। स्निग्ध इत्यादि। वैद्य इति शेषः। मूर्च्छाभिहतस्य या तृष्णा तां रक्तपित्तापहैर्भेषजैर्हन्यात्॥ २३॥

गङ्गाधरः—छर्द्दीत्यादि। छर्द्द्यादिप्रपसर्गरूपा या तृष्णा तस्यां स्वभावशीतमम्भः शस्तम्, सन्निपाते त्रिदोषिकव्याधौ त्रिदोषहरद्रव्येण शृतशीतमम्भः

चक्रपाणिः— तालुशोषे यद्यपि घृतं निषिद्धं यदुक्तं 'तृष्णामूर्च्छापरीताश्च गर्भिण्यः तालुशोषिणः न पिबेयुर्घृतम्' इति, तथापि बलवतो वृष्यघृतपानं बोध्यम्। किंवा वातोल्वणावस्थायामेतद् घृतपानम्। गुड़ाम्बु स्निग्धं स्निग्धगुड़सहितत्वान्नहितम्। उक्तं हि—'यदाहारगुणैः पानं विपरीतन्तु दृश्यते'। (?) तदा दृश्यत इति। तदा मधुरतया तृष्णाहरत्वात् तु प्रभावाच्चोपयुज्यते। शीतमुष्णञ्च जलं कुत्र देयं वर्ज्यं वा कुत्रेत्याह। तर्षं मुर्च्छेत्यादिना औपसर्गिकतृष्णाचिकित्सोच्यते। विषपित्ते इति विषे पित्ते च। सन्निपाते इति सन्निपाते

* सर्पिर्भृष्टमिति वा पाठः।

हिक्काश्वासनवज्वरपीनसघृतपीतपार्श्वगलरोगे ।
कफवातकृते स्त्याने सद्यःशुद्धे च हितमुष्णम् ॥
पाण्डूदरपीनसमेहगुल्ममन्दानलातिसारेषु ।
प्लीह्नि च तोयं न हितं काममशक्ये पिबेदल्पम् ॥ २४ ॥
पूर्व्वामयातुरः सन् दीनस्तृष्णार्द्दितो जलं काङ्क्षन् ।
न लभेत चेन्मरणमाश्वेव चाप्नुयाद्दीर्घरोगं वा ॥
तस्माद्धान्याम्बु पिबेत्तृषयन् रोगी सशर्कराक्षौद्रम् ।
यद्वा तस्यान्यत् स्यात् सात्म्यं रोगस्य तच्चेष्टम् ॥
तस्यां विनिवृत्तायां तज्जोऽन्य उपद्रवः सुखं जेतुम् ।
तस्मात् पूर्व्वं तृष्णां जयेद्‌ बहुभ्योऽपि रोगेभ्यः ॥ २५ ॥

शस्तमिति। हिक्केत्यादि। हिक्कादिरोगे उपसर्गरूपा या तृष्णा कफवातकृते स्त्याने कफे शुद्धे च वमनविरेचनाभ्यां सद्यस्तप उष्णमम्भो हितमिति। पाण्डूदरेत्यादि। पाण्ड्वादिषु या तृष्णा प्लीह्नि च या तृष्णा तत्र तोयं न हितम्। अशक्ये तृष्णासहने काममिष्टतरमल्पं तोयं पिबेत् ॥ २४ ॥

<u>गङ्गाधरः</u>—पूर्व्वेत्यादि। पूर्व्वोत्पन्नामयेनातुरः सन् दीनादिर्जलं काङ्क्षन् चेन्न लभेत, तदा शीघ्रमेव मरणं प्राप्नुयादथवा दीर्घरोगं प्राप्नुयात्। तस्मादित्यादि। तस्मान्मरणदीर्घरोगान्यतरमाप्तिहेतोस्तृष्यन् रोगी धान्याम्बु धन्याकजलं शर्कराक्षौद्रयुक्तं पिबेत्। तस्य रोगस्य यद्वान्यद्द्रवद्रव्यं पाने सात्म्यं रोगिणः स्यात्तच्च पातुमिष्टं विद्यात्। तस्यामित्यादि। यस्माद् यस्य रोगस्योपद्रवस्तृष्णा तस्यामुपद्रवात्मिकायां तृष्णायां विनिवृत्तायां तद्रोगजोऽन्य उपद्रवो जेतुं सुखं यथा स्यात्तथा स्यात्। तस्मादन्योपद्रवस्य सुखजेयत्वाद्बहुभ्योऽन्येभ्योऽपि रोगेभ्यः पूर्व्वं तृष्णां जयेदिति ॥ २५ ॥

ज्वरे रोगे च। उद्भूततृष्णायां हितमिति पाण्ड्वादिरोगे तृष्णायामपि तोयं न हितम्। असह्ये तर्षे इति शेषः ॥ २३ । २४ ॥

<u>चक्रपाणिः</u>—असह्यतृष्णामयेषु जलस्याप्रदाने दोषमाह—पूर्व्वेत्यादि। पूर्व्वामयातुर इति पूर्व्वोत्पन्नगदपीड़ितः। तज्जोऽन्योपद्रव इति तृष्णाप्रशमनार्थं पीयमानपानीयजः। सुखं जेतुमिति महात्ययकरीं तृष्णामपेक्ष्य जेतुं सुखोपायो भवतीत्यर्थः ॥ २५ ॥

भवति चात्र।

हेतू यथाग्निपवनौ कुरुतः सोपद्रवं पञ्चानाम्।
तृष्णानां पृथगाकृतिरसाध्यता साधनञ्चोक्तम्॥ २६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थाने तृष्णारोगचिकित्सितं नाम
द्वाविंशोऽध्यायः॥ २२॥

गङ्गाधरः—अध्यायार्थमाह—भवतीत्यादि। हेतू इत्यादि॥ २६॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
तृष्णाचिकित्सिते द्वाविंशाध्याये भिषजा पुनः। गङ्गाधरेण च कृते
जल्पकल्पतरौ वरे। चिकित्सितस्थानजल्पे षष्ठस्कन्धे बृहत्तमे।
तृष्णाचिकित्साजल्पाख्या शाखा द्वाविंशिका मता।
तृष्णाचिकित्सा व्याख्या समाप्ता॥ २६॥

हेतुरित्यध्यायसंग्रहः। अग्निपवनौ इति यथाग्निपवनौ कुरुतः सोपद्रवां तृष्णामिति शेषः। उपद्रवाश्च मुखशोषादयः पूर्व्वमुक्ताः॥ २६॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां तृष्णाचिकित्सितं
नाम द्वाविंशोऽध्यायः॥ २२॥

# त्रयोविंशोऽध्यायः ।

अथातो विषचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

प्रागुत्पत्तिं गुणान् योनिं वेगान् लिङ्गान्युपक्रमान् ।
विषस्य ब्रुवतः सम्यगग्निवेश निबोध मे ॥ २ ॥
मथ्यमाने जलनिधावमृतार्थं सुरासुरैः ।
जज्ञे प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरिकेशो-*-ऽनलेक्षणः ।
जगद्विषण्णं तद्दृष्ट्वा विषं तत्तु विषादनात् ॥
जङ्गमस्थावरायान्तु योनौ ब्रह्मा न्ययोजयत् ॥ ३ ॥

गङ्गाधरः—उद्दिष्टक्रमाद् विषचिकित्सितमाह अथेत्यादि । सर्व्वं पूर्व्ववद्व्याख्येयम् ॥ १ ॥

गङ्गाधरः—प्रागुत्पत्तिमित्यादि । उपक्रमानित्यस्य विशेषणं सिद्धानिति ॥२

गङ्गाधरः—मथ्यमान इत्यादि । अमृतोत्पत्तेः पूर्व्वं घोरदर्शनादिरूपः पुरुषो नदादिवद् द्रवविशेषानस्राविशरीरो जज्ञे । तस्य शरीरात् स्रुतं द्रवं विषं शम्भुः पपौ । शेषं किञ्चित् द्रवस्राविशरीरं तं विषपुरुषं ब्रह्मा स्थावरयोनौ जङ्गमयोनौ न्ययोजयत् नियुक्तमकरोत् । विषादनादिति विषादकारणम् । द्वे योनी ॥ ३ ॥

चक्रपाणिः—शीतोपशमप्राधान्यसामान्यात् तृष्णाचिकित्सितमनु विषचिकित्सितमुच्यते ॥ १ ॥

चक्रपाणिः—प्रागिति । प्रागुत्पत्तिः आद्योत्पत्तिः । योनिरित्यधिष्ठानम् । लिङ्गानीति देहस्थस्थानपस्य लिङ्गानि । अत्र नापृष्टा गुरवो वदन्तीति न्यायात् शिष्यप्रश्नो ज्ञातव्यः । विषञ्च यद्यपि रोगाधिकारे न सूचितं साक्षात् तथापि विषगराभिधानात् तत्तत्कारणतया सूचितमेव रोगाधिकारे ज्ञेयम् । तेन नोत्सूत्रितमिह विषाभिधानमिति ॥ २ ॥

चक्रपाणिः—मथ्यमाने इत्यादिना प्रागुत्पत्त्यभिधानं विषस्य महाप्रभावदर्शनार्थम् । हरित्केश इति कालकेशः । स पुरुषः विषमुच्यते विषादनाद्धेतोः । एवञ्च विषशब्दनिरुक्तिर्भवति ॥ ३ ॥

* हरित्केश इति पाठान्तरम् ।

तदम्बुसम्भवं तस्माद् द्विविधं पावकोपमम्।
अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम्।
तद्वर्षास्वम्बुयोनित्वात् संक्लेदं गुड़वद् गतम्॥
सर्पत्यम्बुधरापाये तदगस्त्यो निहन्ति च।
प्रयाति मन्दवीर्य्यत्वं विषं तस्माद् घनात्यये॥ ४॥

गङ्गाधरः—इति प्रागुत्पत्तियोनिवचनमुक्त्वा भेदमाह तदम्बु इत्यादि। यस्मात्तत् क्षीरोदाम्बु सम्भवं तस्माद्द्विविधमेव स्थावरजङ्गमयोनिकं पावकोपमं भवति। प्रागुत्पत्तावग्निर्जलं सृज्यमानमनुप्राविशदिति तस्माज्जलादिदं जातमग्निवदभिव्यक्तमिति पावकोपमम्। अष्टेत्यादि। तदष्टवेगं दशगुणं चतुर्विंशत्युपक्रमं भवति। सुश्रुतेऽपि प्रागुत्पत्तिरुक्ता। तद्यथा। "प्रजामिमामात्मयोने ब्र्रह्मणः सृजतः किल। अकरोदसुरो विघ्नं कैटभो नाम दर्पितः। ततः क्रुद्धस्य वै वक्त्राद् ब्रह्मणस्तेजसोनिधेः। क्रोधो विग्रहवान् भूत्वा निष्पपाताथ दारुणः। स तं ददाह गर्ज्जन्तमन्तकाभं महाबलम्। ततोऽसुरं घातयित्वा तत् तेजोऽवर्द्धताद्भुतम्। ततो विषादो देवानामभवत् तं निरीक्ष्य वै। विषादजननात् तच्च विषमित्यभिधीयते। ततः सृष्ट्वा प्रजाः शेषं तदा तं क्रोधमीश्वरः। विन्यस्तवान् स भूतेषु स्थावरेषु चरेषु च"। इति। इत्येवं सुश्रुतोक्तविषप्रागुत्पत्तिविरोधः परिहार्य्य एवं विद्वद्भिः। य एष ब्रह्मणः कोपपुरुषो विषाख्यः सर्गकाले जातो ब्रह्मणैव स्थावरजङ्गमेषु भूतेषु विन्यस्तः स एव पुनः कृतयुगे देवासुरैः क्षीरोदे मथ्यमाने मन्थनदण्डीभूतमन्दरपर्व्वतस्य नानौषधिवृक्षप्राणिजुष्टस्य मन्थनरज्जूभूतस्य वासुकेर्मन्थनवेगाकर्षणक्लान्तस्य मुखात् निःसृतं विषं नानौषधिप्राणिस्थविषञ्चैकीभूतं पुनर्यो विषाख्यः पुरुषो जातः स उक्त इह तन्त्रे त्वाचार्य्येणेति न विरोधः। तदित्यादि। तद्विषमम्बुयोनित्वात् स्वभावेण वर्षासु प्रावृषि ऋतौ गुड़वत् संक्लेदं गतं सर्पति चलति।

चक्रपाणिः—तदम्बुसम्भवं तस्मात् द्विविधमिति—तस्मात् सम्बन्धतः उत्पन्नत्वादम्बुसम्भव तथा तस्माद् ब्रह्मणो योनिद्वयनियुक्तत्वात् द्विविधमित्यर्थः। अम्बुसम्भवत्वेन चास्य वर्षप्रकोपित्वं वक्ष्यमाणं युक्तं योनिभूतेन अस्य प्रभावप्रशमने क्रियेत इति ज्ञेयम। उक्तं हि भगवता व्यासेन 'अग्नेरापोऽक्षतोत्पत्तिरश्मनो लोहमुत्थितम्। तस्मात् सर्व्वत्रगं तेज' इति। अष्टवेगमिति मनुष्यापेक्षयाष्टवेगम। दशगुणा इत्यग्रे वक्ष्यमाणाः। उपक्रमं चिकित्सानुष्ठानभेदः। सर्व्वविषविशेषप्रकोपे हेतुमाह—तद्वर्षास्विति। गुड़ो यथा अम्बुयोनित्वात् वर्षासूपक्लिन्नो भवति तथा विषमपि

सर्पाः कीटोन्दुरा लूता वृश्चिका गृहगोधिकाः ।
जलौका मत्स्यमण्डूकाः शलभाः सर्पकण्टकाः ॥
श्वसिंहव्याघ्रगोमायुतरक्षुनकुलादयः ।
दंष्ट्रिणो ये विषं तेषां दंष्ट्रोत्थं जङ्गमं मतम् ॥ ५ ॥

अम्बुधरापाये शरदि अगस्त्यो महर्षिः स्वभावशक्त्या निहन्ति। तस्माद् घनात्यये शरदि विषं मन्दवीर्य्यत्वं प्रयाति ॥ ४ ॥

गङ्गाधरः—केषु जङ्गमेषु केषु च स्थावरेषु तद्विषं न्यस्तमित्यत आह—सर्पा इत्यादि। सर्पादयो यावन्तः प्राणिनस्तेषां ये दंष्ट्रिणस्तेषां दंष्ट्रोत्थं विषं जाङ्गमं विषं मतम्। यद्यपि सुश्रुतेनोक्तम्—"जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोड़श। समासेन मया यानि विस्तरस्तेषु वक्ष्यते॥ तत्र दृष्टिनिश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुखसन्दंशविशर्द्धितगुदास्थिपित्तशूकशवानीति। तत्र दृष्टिनिश्वासविषास्तु दिव्याः सर्पाः। भौमास्तु दंष्ट्राविषाः। मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटास्तथान्ये दंष्ट्रानखविषाः। चिपिटपिच्चटककषायवासिकसर्षपवासिकतोठकवर्च्चःकीटकौण्डिल्यकाः शकृन्मूत्रविषाः। मूषिकाः शुक्रविषाः। लूताश्च लालमूत्रपुरीषमुखसन्दंशनखशुक्रार्त्तवविषाः। वृश्चिकविश्वम्भरराजीवमत्स्योच्चिटिङ्गाः समुद्रवृश्चिकाश्च लालाविषाः। चित्रशिरःसरावकुर्दिशतदारुकारिमेदकशारिकामुखा मुखसन्दंशविशर्द्धितमूत्रपुरीषविषाः। मक्षिकाकणभजलायुका मुखसन्दंशविषाः। विषहतास्थिसर्पकण्टकवरटीमत्स्यास्थिचेत्यस्थिविषाणि। शकुलीमत्स्यरक्तराजीवरकीमत्स्याश्च पित्तविषाः। सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशूकवलभिकाशृङ्गीभ्रमराः शूकतुण्डविषाः। कीटसर्पदेहा गतासवः शवविषाः। शेषास्त्वनुक्ता मुखसन्दंशविषेष्वेव गणयितव्याः"। इति तेषां

क्लिन्नञ्च विसर्पति उत्कृष्टशक्तिकं भवति। अतएवाशाविषार्त्ताः अतिपीड़िता भवन्ति। अम्बुधराणां वृद्धिकारणं वर्षागमः। अगस्त्यप्रभावाच्च न हिनस्ति पराभिकारित्वाद्विषम् ॥ ४ ॥

चक्रपाणिः—सर्पा इत्यादिना जङ्गमस्थावरयोर्निद्वयं विषस्य सङ्क्षेपादेवाह। यद्यपि विषगुणा अग्र उद्दिष्टास्तथापि गुणानां गुण्यपेक्षत्वात् अग्रे विषस्य गुणिनः स्थावरजङ्गमभेदभिन्नस्याभिधानं विषस्य कार्य्यकारणगुणप्राधान्यख्यापनार्थम्। सर्पादीनां भेदा अग्रत एव वक्तव्याः। आदिग्रहणात् तन्त्रान्तरोक्तानां ग्रहणम्। अत्र दंष्ट्रिसर्पप्राधान्याद् दंष्ट्रिण इत्युक्तम्। तथा दंष्ट्रोत्थस्य सर्व्वविषप्राधान्यात्। अदंष्ट्रोत्थानामपि उन्दुरुविषादीनां ग्रहणम्। जङ्गमस्य विषस्य उक्ता-

मुस्तकं पुष्करं क्रौञ्चवत्सनाभं बलाहकम्।
कर्कटं कालकूटञ्च करवीरकसंज्ञकम्॥
पालकेन्द्रायुधं तैलं मेघकं कुशपुष्पकम्।
रोहिषं पुण्डरीकञ्च लाङ्गलकाञ्जनाभकम्॥
सङ्कोचं मर्कटं शृङ्गीविषं हालाहलं तथा।
एवमादीनि चान्यानि मूलजानि स्थिराणि च॥ ६॥

दंष्ट्रोत्थमेव विषं जङ्गमं मतमित्यवधारणं नोक्तं प्राधान्याद्दंष्ट्रोत्थं विषं जङ्गम मुक्तम्। अन्यच्च जङ्गमसम्भवत्वाज्जङ्गममेव विषमिति ज्ञापनार्थं लूतादीनां सविषत्वेनोक्तिः कृता॥ ५॥

गङ्गाधरः—स्थावरयोनिविषमाह—मुस्तकमित्यादि। मुस्तकादिसंज्ञकानि मूलानि स्थिराणि विषाणि। यद्यपि सुश्रुते चोक्तं—'स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते। दशाधिष्ठानमाद्यन्तु द्वितीयं षोड़शाश्रयम्। मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च। निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृतः'॥ तत्र क्लीतकाश्वमारगुञ्जा-सुगन्धगर्गरककरघाटविद्युच्छिखाविजयानि इत्यष्टौ मूलविषाणि। विषपत्रिकालम्बावरदारुककरम्भमहाकरम्भाणि पञ्च पत्रविषाणि। कुमुद्वतीरेणुकाकरम्भमहाकरम्भककर्कोटकरेणुकखद्योतकचर्म्मरी-भगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि। वेत्र-कादम्बवल्लिजकरम्भमहाकरम्भाणि पञ्च पुष्पविषाणि। अन्त्रपाचककर्त्तरीय-सौरीयककरघाटकरम्भनन्दनवराटकानि सप्त त्वक्सारनिर्य्यासविषाणि। कुमुदघ्नीस्नुहीजालक्षीर्य्याणि त्रीणि क्षीरविषाणि। फेनाश्मभष्म हरितालञ्च द्वे धातुविषे। कालकूटवत्सनाभसर्षपकपालककर्द्दमकवैराटकमुस्तकशृङ्गीविषप्रपौण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश कन्दविषाणि। इत्येवं पञ्चपञ्चाशत् स्थावरविषाणि भवन्ति। चत्वारि वत्सनाभानि मुस्तके द्वे न्यधिष्ठानानि षोड़श दृष्टिनिःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालास्पर्शमुखसन्दंशविशर्द्धितगुदास्थिपित्तशूकशवानि देहे पतितानि इत्याहुः॥ ५॥

चक्रपाणिः—स्थावरजे विषे मूलजानीति पदं मूलजस्य बहुत्वात् प्राधान्याच्च। तेन पत्रपुष्पादिजानामपि विषाणां ग्रहणम्। यदुक्तं सुश्रुते-'मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सार एव च। निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृत इति। कन्दस्त्विह मूलशब्देनैव गृहीतः। एतेषाञ्च संज्ञासम्बन्धे शबरकिरातादय एव तद्विधाः प्रमाणं, ते हि गुरुपरम्परया व्याख्यानयन्ति॥ ६॥

गरं संयोगजश्चान्यत् गरसंज्ञं गदप्रदम् ।
कालान्तरविपाकित्वान्न तदाशु हरेदसून् ॥ ७ ॥
निद्रां तन्द्रां क्लमं दाहमपाकं लोमहर्षणम् ।
शोथञ्चैवातिसारञ्च कुरुते जङ्गमं विषम् ॥
स्थावरन्तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।
फेणच्छर्द्यरुचिश्वासान् मूर्च्छाञ्च जनयेद्भृशम् ॥ ८ ॥

प्रकीर्त्तिते। षट् चैव सर्षपान्याहुः शेषाण्येकैकमेव च" इति तथापि मुस्तकादि कन्दविषाणि, तथैवमादीनि चान्यानि मूलजानि स्थिराणि चेत्युक्तया पत्रपुष्पादीनि संगृहीतानीह चान्यानीति पदेन ततो न विरोधः ॥ ६ ॥

गङ्गाधरः—गरमित्यादि। आभ्यामन्यद्विषं गरं तत् तु संयोगजं गरसंज्ञं गदप्रदं भवेत्। गदप्रदत्वाद्विषं कालान्तरे विपाकित्वात् तद् गरमाशु नासून् हरेत् ॥ ७ ॥

गङ्गाधरः—निद्रामित्यादि। जङ्गमविषस्य निद्रादिकं सामान्यलिङ्गम्। स्थावरन्त्वित्यादि। स्थावरविषस्य ज्वरादिजननं सामान्यं कर्म्म ॥ ८ ॥

चक्रपाणिः—स्थावरजङ्गमसमममेव तृतीयं विषमाह—गरसंयोगजमित्यादि। गरार्थः संयोगगुणां ते गरसंयोगाः द्रव्यभेदासंख्यां जातं गरसंयोगजम्। गरं तच्च संज्ञा यस्य तत् गरसंज्ञं चिरकारित्वाद्रोगजनकं न त्वाशुप्राणहरम्। एतदेवाह—कालान्तरेत्यादि। सुश्रुतेऽपि त्रिविधमेव विषमुक्तम् 'स्थावरं जङ्गमं चैव कृत्रिमं विषमित्यनेन। यत् तु दूषीविषमग्रे वक्ष्यति तत् त्रिविधान्तर्गतं दर्शयिष्यामः। गरन्तु द्विविधं निर्विषद्रव्यसंयोगकृतं तथा सविषद्रव्यसंयोगकृतम्। तत्राद्यं गरसंज्ञं उत्तरं तु कृत्रिममिति व्यवस्था। इमां व्यवस्थां गृहीत्वैवमुक्तं रसायनार्थे। 'दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे' इति। तथा वृद्धकाश्यपेऽप्युक्तं—'संयोगजञ्च द्विविधं तृतीयं विषमुच्यते। गरं स्यादविषं तत्र सविषं कृत्रिमं मत'मिति ॥ ७ ॥

चक्रपाणिः—निद्रामित्यादिना तथा ज्वरमित्यादिना जङ्गमस्थावरविषस्य लिङ्गानि, जङ्गमस्थावरयोः परस्परोपरोधात् ॥ ८ ॥

जङ्गमं स्यादूर्द्ध्वभागमधोभागन्तु मूलजम्।
तस्माद्दंष्ट्राविषं मौलं हन्ति मौलञ्च दंष्ट्रिजम्॥ ९॥

गङ्गाधरः—तयोर्गतिभेदमाह—जङ्गमं स्यादित्यादि। जङ्गममिह दंष्ट्राविष दंष्ट्राविषमूलविषयोरेवोर्द्ध्वगत्यधोगतिस्वभावात् परस्परोपघातित्वं नत्वन्येषां पुष्पादिलालादिविषाणां गतिभेदेऽपि परस्परोपघातित्वं तत्स्वभावात्। विशेषणमुक्तं सुश्रुते—"उद्वेष्टनं मूलविषैः प्रलापो मोह एव च। जृम्भाङ्गोद्वेष्टन-श्वासा ज्ञेयाः पत्रविषेण तु। मुष्कशोफः फलविषैर्दाहोऽन्नद्वेष एव च। भवेत् पुष्पविषैश्छर्द्दिराध्मानं मोह एव च। त्वक्सारनिर्य्यासविषैरुपयुक्तैर्भवन्ति हि। आस्यदौर्गन्ध्य-पारुष्य-शिरोरुक् कफसंस्रवाः। फेणागमः क्षीरविषे विड्भेदो जिह्मजिह्वता। हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि। प्रायेण कालघातीनि विषाण्येतानि निर्द्दिशेत्। कन्दजानि तु तीक्ष्णानि तेषां वक्ष्यामि विस्तरम्। स्पर्शाज्ञानं कालकूटे वेपथुः स्तम्भ एव च। ग्रीवाभङ्गो वत्सनाभे पीतविण्मूत्रनेत्रता। सर्षपे वातवैगुण्यमानाहो ग्रन्थिजन्म च। ग्रीवादौर्ब्बल्य-वाक्सङ्गौ पालकेऽनुमताविह। प्रसेकः कर्द्दमाख्ये तु विड्भेदो नेत्रपीतता। वैराटकेनाङ्गदुःखं शिरोरोगश्च जायते। गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु। शृङ्गीविषेणाङ्गसाददाहोदरविवृद्धयः। पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धि-स्तथोदरे। वैवर्ण्यं मूलकैश्छर्द्दिर्हिक्काशोफप्रमूढताः। चिरेणोच्छ्वसिति श्यावो नरो हालाहलेन च। महाविषेण हृदये ग्रन्थिशूलोद्गमौ भृशम्। कर्कटेनोत्पतत्यूर्द्ध्वं हसन् दन्तान् दशत्यपि। कन्दजान्युग्रवीर्य्याणि प्रयुक्तानि त्रयोदश। सर्व्वाणि कुशलैर्ज्ञेयान्येतानि दशभिर्गुणैः। रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च। विकाशि विशदञ्चैव लघ्वपाकि च तत् स्मृत"मिति॥ ९॥

चक्रपाणिः—तद्गतधर्म्ममभिधाय हेतुमत्परस्परोपघातकत्वमाह—जङ्गममित्यादि। तस्मादिति परस्परं विरुद्धगामित्वात्। एतेन च यद्वक्ष्यति दंष्ट्राविषं मौलं हन्ति मौलञ्च दंष्ट्रिजम्। तदुपपन्नं भवति। ननु, विषं विषघ्नमुक्तम् यत् प्रभावस्तत्र कारणमिति—आत्रेयभद्रकाप्यीये प्रभावेण विषस्य विषहरणाभिधानात् इत्युपपत्तिविरुद्धं वर्णनम्। यदि प्रभावः कारणं न स्यात् तदा यत्किञ्चिदूर्द्ध्वभागं मदनफलादि तद् दंष्ट्राविषहरं स्यात्। यच्चाधोभागं त्रिवृतादि तत् मौलविषं हन्यात्। नचैतदिष्टम्, तस्मात् प्रभावस्यैवानुगुणे ईषन्मात्रकारणमेतत् अधोभागत्वमूर्द्ध्वभागत्वञ्चेति॥ ९॥

तृण्मोहदन्तहर्षप्रसेकवमथुक्लमा भवन्त्याद्ये ।
वेगे रसप्रदोषादसृक्प्रदोषाद्द्वितीये तु ॥
वैवर्ण्यभ्रमवेपथजृम्भामूर्च्छाङ्गभङ्गचिमिचिमातङ्काः ।
दुष्टपिशितात्तृतीये मण्डलकण्डूसहितकोठाः ॥
वातादिजाश्चतुर्थे दाहच्छर्द्यङ्गशूलमूर्च्छाद्याः ।
नीलादीनां तमसश्च दर्शनं पञ्चमे वेगे ॥
षष्ठे हिक्का भङ्गः स्कन्धे स्यात्तु सप्तमेऽष्टमे मरणम् ।
नृणां चतुष्पदां स्याच्चतुर्व्विधः पक्षिणां त्रिविधः ॥ १० ॥

गङ्गाधरः—पूर्व्वमष्टवेगमित्युक्तं तदाह। तृण्मोहेत्यादि। स्थावरविषाणां उपयोगादाद्ये वेगे रसधातुप्रदूषणात् तृडादयो भवन्ति। सुश्रुते ह्युक्तम्। "स्थावरस्योपयुक्तस्य वेगे तु प्रथमे नृणाम्। श्यावा जिह्वा भवेत् स्तब्धा मूर्च्छा श्वासश्च जायते"। द्वितीये तु वेगेऽसृक्प्रदोषात् वैवर्ण्यादयो भवन्ति। सुश्रुते च 'द्वितीये वेपथुः स्वेदो दाहः पाण्डुरुजस्तथा। विषमामाशयप्राप्तं कुरुते हृदि वेदनाम्' इति। तृतीये वेगे दुष्टपिशितान्मांसप्रदूषणान्मण्डलादयो भवन्ति। सुश्रुते च "तालुशोषं तृतीये तु शूलं चामाशये भृशम्। दुर्व्वर्णे हरिते शूने जायेते चास्य लोचने"। इति। वातादिजाश्चतुर्थे वेगे वातादिप्रदूषणाद् दाहादयः स्युः। सुश्रुते च "पक्वाशयगते तोदो हिक्का कासोऽन्त्रकूजनम्। चतुर्थे जायते वेगे शिरसश्चातिगौरवम्" इति। नीलादीनामिति। पञ्चमे वेगे नीलादीनां दर्शनं तमसश्च दर्शनं स्यादिति। सुश्रुते च "कफप्रसेको वैवर्ण्यं पर्व्वभेदश्च पञ्चमे। सर्व्वदोषप्रकोपश्च पक्वाधाने च वेदना" इति। षष्ठे वेगे हिक्का स्यात्। सुश्रुते च "षष्ठे प्रज्ञाप्रणाशश्च भृशं वाप्यतिसार्य्यते" इति। भङ्ग इत्यादि। सप्तमे वेगे स्कन्धे भङ्गः स्यात्। अष्टमे वेगे मरणं स्यादिति सप्तमवेगस्य चरमावस्थवेगोऽष्टम इष्ट इह तन्त्रे। सुश्रुते तु सप्तैव वेगा उक्तास्तत्र सप्तमे सन्निरोधो मरणं चरमावस्थामभिप्रेत्योक्तम्। "स्कन्ध-पृष्ठ-कटीभङ्गः सन्निरोधश्च सप्तमे" इति। इत्येवं लक्षणं नृणां स्यात्।

चक्रपाणिः—तृण्मोहेत्यादिना दंष्ट्रिविषवेगलक्षणमाह— सुश्रुते 'एकैककलातिक्रमेण सप्तवेगा उदीरिताः। इह कलालङ्घन इति सप्तवेगाः, अष्टमे तु सप्तकलालङ्घनोत्तरकालं मारको वेग'

आदो भ्रमति चतुष्पदोऽवसीदति ततः शून्यः।
मन्दाहारो म्रियते श्वासेन चतुर्थवेगे तु ॥
ध्यायत्यादो वेगे पक्षी प्रभ्राम्यति द्वितीये तु।
स्रस्ताङ्गश्च तृतीये विषवेगे याति पञ्चत्वम् ॥ ११ ॥
लघु रूक्षमाशु विशदं व्यवायि तीक्ष्णं विकाशि सूक्ष्मञ्च।
उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः ॥
रौक्ष्याद् वातमशैत्यात् पित्तं सौक्ष्म्यादसृक् प्रकोपयति।
कफमव्यक्तरसत्वादन्नरसांश्चानुवर्त्तेत ॥

अथ चतुष्पदां गानाह। चतुष्पदां चतुर्विधो वेगः स्यात्। पक्षिणां त्रिविधः ॥ १० ॥

गङ्गाधरः—आद्य इत्यादि। चतुष्पदो विषोपयोगादादो वेगे भ्रमति घूर्णते। ततो द्वितीये वेगेऽवसीदति। ततः तृतीये वेगे शून्य इव सन् मन्दाहारो भवति। चतुर्थवेगे तु श्वासेन म्रियते। ध्यायतीत्यादि। पक्षी स्थावरविषोपयोगादादो वेगे ध्यायति। द्वितीये तु प्रभ्राम्यति घूर्णते। तृतीये विषवेगे स्तब्धाङ्गः सन् पञ्चत्वं यातीति। इति विषाणां स्थावराणामष्टवेगा उक्ताः ॥११॥

गङ्गाधरः—अथ दशगुणं विषमिति यदुक्तं तदाह—लघ्वित्यादि। आशुकारित्वमाशुगुणः। व्यवायीति। व्यवायी देहमखिलं व्याप्य पाकाय कल्पते। विकाशीति। विकाशी विकशत्येवं सन्धिबन्धं विमोक्षयन्। प्रतिगुणतः कर्म्माण्याह—रौक्ष्यादित्यादि। विषमित्यनुवर्त्तते। विषं रौक्ष्याद् वातं प्रकोपयति। अशैत्यादुष्णत्वात् पित्तं प्रकोपयति। सौक्ष्म्याद्

इति सुश्रुते विशेषः। वातादिजा इति यथायोग्यतया एकदोषद्विदोषत्रिदोषजाः, आदिशब्दः प्रकारवाची। सुश्रुतवचनान्नीलादीनामित्यत्र आदिशब्देन प्रधानवाचिना नीलप्रधानेतरवर्णदर्शनं भवति। षष्ठ हिक्केति च्छेदः। विषवेगप्रस्तावात् चतुष्पादपक्षिणोऽपि विषवेगानाह। एतद् वेगाभिधानेन विषवेगहतस्य मांसं नोपादेयम्। यतस्तस्य विषार्दितस्य सर्व्वं शरीरं विषवद् भवति। चतुष्पादादीनां अन्यवेगत्वं सत्त्वान्यत्वात्। अवसीदतीत्यादि द्वितीये। शून्य इत्यादि तृतीये ॥ १० । ११ ॥

चक्रपाणिः—विषगुणानाह—लघ्वित्यादि। प्रत्येकं गुणानां कार्य्यमाह। अशैत्यादिति उष्णत्वात्। सौक्ष्म्यादसृक्प्रकोपणं असृजोऽपि सूक्ष्ममार्गानुसारित्वात्। अव्यक्तरसत्वात् कफम्

शीघ्रं व्यवायिभावादाशु व्याप्नोति केवलं कायम् ।
तीक्ष्णत्वान्मर्म्मघ्नं प्राणघ्नं तद् विकाशित्वात् ॥
दुरुपक्रमं लघुत्वाद्वैशद्यात् स्यादसक्तगतिदोषात् ॥ १२ ॥

असृक् प्रकोपयति अव्यक्तरसत्वात् कफं प्रकोपयति अनुरसांश्चानुवर्त्तते । शीघ्रत्वाद् व्यवायित्वाच्च केवलं कृत्स्नं कायमाशु व्याप्नोति । तीक्ष्णत्वात् मर्म्मघ्नं विकाशित्वात् तद्विषं प्राणघ्नमिति । लघुत्वाद् दुरुपक्रमं दुश्चिकित्स्यम् । कस्मात्? वैशद्यात् असक्तगतिदोषात् । वैशद्यगुणतो विषेण दोषाः प्रकुपिताः सक्तगतयो यतो न स्युरस्थिरगतय एव दोषाः स्युस्तस्माल्लाघवाद् दुरुपक्रमं भवति विषम् । इति दश गुणकर्म्माणि सुश्रुते चोक्तानि । "तद्रौक्ष्यात् कोपयेद् वायुमौष्ण्यात् पित्तं सशोणितम् । मानसं मोहयेत् तैक्ष्ण्यादङ्गबन्धान् छिनत्त्यपि । शरीरावयवान् सौक्ष्म्यात् प्रविशेद् विकरोति च । आशुत्वादाशु तद्धन्ति व्यवायात् प्रकृतिं भजेत् । क्षपयेच्च विकाशित्वाद् दोषान् धातून् मलानपि । वैशद्यादतिरिच्येत दुश्चिकित्स्यश्च लाघवात् । दुर्ज्जरश्चाविपाकित्वात् तस्मात् क्लेशयते चिरम् । स्थावरं जङ्गमं यच्च कृत्रिमं चापि यद्विषम् । सद्यो व्यापादयेत् तत् तु ज्ञेयं दशगुणान्वितम्" इति ॥ १२ ॥

अत्रग्रहणेन योगवाही भवति, विषमपि रसमांसानुयातं सर्व्वत्रानुगतं भवति । शीघ्रमित्यादौ शीघ्रत्वादाशु व्याप्नोति, व्यवायित्वात् केवलं देहं व्याप्नोतीति विज्ञेयम् । व्यवायित्वं सर्व्वतः प्रसरणशीलत्वं पानीयपतिततैलवत् । तीक्ष्णत्वान्मर्म्मघ्नमिति । मर्म्मणां सौम्यानां मृदूनां तीक्ष्णेन विरुद्धत्वात् बोद्धव्यम् । विकासित्वादिति विकसनशीलत्वात् । सर्व्वत्र हि कस् हिंसार्थः । लघुत्वादित्यनवस्थितत्वात् । यस्य चानवस्थितत्वं तस्य भेषजेणोपक्रममकिञ्चित्करम् । असक्ता विश्रान्ता दोषेषु गतिर्यस्य तत् असक्तगतिदोषं लघुत्वादनवस्थितत्वम् । विशदं पिच्छाभागरहितत्वात् क्वचिन्न सज्जति । अत्र च गुणानां प्रतिनियमेन विरुद्धकर्म्मकरणे विपर्य्यासिद्धत्वमेव ज्ञेयम् । तेन रूक्षादिभिः श्लेष्मक्षयात् यद् द्रवाशङ्कनीयं सुश्रुते च विषगुणे अपाकित्वमुक्तं तदाशुकारिविषे तु प्रयोजनमिति नेहोक्तम् । तथाहि विषिनस्तावन्तं कालमपेक्षन्ते येन यावदस्य पाको भवत्यविचार्य्यं । सुश्रुते च कालान्तरप्रकोपादि यदद्व्यमुक्तं तदिहापि दूषीविषे चिन्तनीयमिति ॥ १२ ॥

दोषस्थानप्रकृतीः प्राप्यान्यतमं ह्युदीरयेत्।
स्याद्वातिकस्य वातस्थाने कफपित्तलिङ्गमीषत्तु।
तृण्मोहारतिमूर्च्छागलग्रहच्छर्द्दिफेणादि॥
पित्ताशयस्थितं पैत्तिकस्य कफपित्तयो *-र्विषं तद्वत्।
तृट्कासज्वरवमथुक्लमदाहतमोऽतिसारादि॥
कफदेशगतं कफाधिकस्य † वातपित्तयोश्च दर्शयति।
लिङ्गं श्वासगलग्रहकण्डूलालावमथ्वादि॥ १३॥
दूषीविषञ्च शोणितदुष्ट्यारुःकिटिमकोठलिङ्गञ्च।
विषमेकैकं दोषं सन्दूष्य हरत्यसूनेवम्॥

गङ्गाधरः—दोषेत्यादि। दोषस्थानप्रकृतीनामन्यतमं प्राप्य हि यस्मात् विषं दोषस्थानप्रकृतीरुदीरयेत्। तद्यथा। स्यादित्यादि। वातिकस्य षड्विंशतिजातिदर्व्वीकरस्य सर्पस्य, वातस्थाने स्थितं ईषत् कफपित्तलिङ्गं तृण्मोहादि फेनान्तमुदीरयेत्। पित्ताशयेत्यादि। पैत्तिकस्य द्वाविंशतिजाति-मण्डलिनः सर्पस्य विषं पित्ताशयस्थितं कफवातयोर्लिङ्गं तृट्कासादि तद्वत् किञ्चिदुदीरयेत्। कफेत्यादि। कफदेशगतं विषं, कफाधिकस्य दशविधस्य राजिमतः सर्पस्य विषं वातपित्तयोर्लिङ्गं श्वासादिकमीषत् दर्शयति॥ १३॥

गङ्गाधरः—दूषीविषञ्चेत्यादि। दूषीविषञ्च स्थावरजङ्गमकृत्रिमान्यतरं विषं विषघ्नौषधादिभिर्हतवीर्य्यं देहादनिर्गतं विषं, शोणितदुष्ट्या खल्वरु-र्व्रणः, व्रणप्रभृतिलिङ्गञ्च दर्शयति। दूषीविषत्वं यथा स्याद्विषं तदुक्तं

चक्रपाणिः—सम्प्रति स्थानविशेषप्राप्त्या लिङ्गविशेषानाह—वातिकस्येत्यादि। विषमत्र यद्यपि त्रिदोषकोपनं स्थानप्रकृतिविशेषप्राप्त्या तद्दोषप्रकोपमधिकं करोति। वातिकस्येति वातप्रकृतेः। वातस्थाने पक्वाशयादौ कफपित्तलिङ्गमीषदितिवचनेन वातलिङ्गानि बहूनि भवन्ति तानि तृष्मूर्च्छेत्यादिनोक्तानि ज्ञेयानि। एवं उत्तरत्रापि योज्यम्। कफवातयोस्तद्वदिति ईषदित्यर्थः। कफस्येत्यादौ चकारात्कफप्रकृतेरित्यर्थः। ईषद्वातपित्तयोरिति योज्यम्॥ १३॥

चक्रपाणिः—दूषीविषलक्षणमाह—दूषीत्यादौ। कोठो वरटीदंशशोथाकारः। कालान्तरप्रकोपं दूषीविषम्। उक्तञ्चान्यत्र 'यस्माद् दूषयते धातून् तस्माद्दूषीविषं स्मृत'मिति। एवम्भूतञ्च गरमेव प्रायो भवति। तथा स्थावरं जङ्गमञ्च भवति। यदुक्तं सुश्रुते "जीर्णं

* कफवातयोरिति चक्रसम्मतः पाठः। † कफस्य दर्शयेद वातपित्तयोश्चैतत् इति चक्रसम्मतः पाठः।

क्षरति विषतेजसास्रक् तत् खानि निरुध्य मारयति जन्तुम्।
पीतं मृतस्य हृदि तिष्ठति दष्टविद्धयोर्दंशदेशे स्यात्॥
नीलौष्ठदंशदन्तशैथिल्यकेशपतनाङ्गभङ्गविक्षेपाः।
शिशिरैर्न लोमहर्षो नाभिहते दण्डराजी स्यात्।
क्षतजं क्षताच्च नायात्येतानि भवन्ति मरणलिङ्गानि॥ १४॥

सुश्रुते। "यत् स्थावरं जङ्गमकृत्रिमं वा देहादशेषं यदनिर्गतं तत्। जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा। स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति॥ वीर्य्याल्पभावान्न निपातयेत् तत् कफावृतं वर्षगणानुवन्धि। तेनार्द्दितो भिन्नपुरीषवर्णो विगन्धवैरस्यमुखः पिपासी। मूर्च्छन् वमन् गद्गदवाग्विषण्णो भवेच्च दूष्योदरलिङ्गजुष्टः॥ आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी। भवेन्नरो ध्वस्तशिरोरुहाङ्गो विलून पक्षस्तु यथा विहङ्गः॥ स्थितं रसादिष्वथवा यथोक्तान् करोति धातुप्रभवान् विकारान्। कोपञ्च शीतानिलदुर्द्दिनेषु यात्याशु पूर्व्वं शृणु तत्र रूपम्॥ निद्रागुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथवाङ्गमर्द्दः। ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठमोहान्॥ धातुक्षयं पादकरास्यशोफं दकोदरं छर्द्दिमथातिसारम्। वैवर्ण्यमूर्च्छाविषमज्वरान् वा कुर्य्यात् प्रवृद्धां प्रबलां तृषां वा। उन्मादमन्यज्जनयेत् तथान्यदानाहमन्यत् क्षपयेच्च शुक्रम्। गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान् विकारांश्च बहुप्रकारान्॥ दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः। यस्माद् दूषयते धातूंस्तस्माद्दूषीविषं स्मृतम्" इति। अथ विषं यथा मारयति तदाह—विषमित्यादि। विषं खल्वेकैकं दोषं वातादिकं सन्दूष्यामून् हरति। एवं विषतेजसाऽसृक् रक्तं क्षरति तच्च विषं खानि गलश्रोत्रनेत्रादीनां खानि रन्ध्राणि निरुध्य जन्तुं मारयति। अथ पीतादिविषस्थितिस्थानमाह—पीतमित्यादि। पीतं विषं मृतस्य हृदि तिष्ठति। दष्टस्य विद्धस्य च मृतस्य दंशदेशे वेधदेशे च स्थितं स्यात्। नीलौष्ठादयश्च दष्टविद्धयोः स्युः। शिशिरैरतिहिमैर्जलैर्लोमहर्षो न

विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा। स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति।" इहापि दूषीविषाः कीटाः हीनवीर्य्यविषा वक्तव्याः। विषमेकैकमित्यादिना स्याद्वातिकस्येत्यादिना यदुक्तं तस्यैकैकदोषस्यात्यर्थकोपमाह—संदूष्येति अत्यर्थं दूषयित्वा। क्षरतीत्यादिना पीतविषलक्षणमाह। विषं मृतस्य हृदि तिष्ठति, दष्टविद्धयोः

स्याद, दण्डाभिहते दण्डराजी दण्डस्य रेखा न स्यात्। क्षताच्च दंशन-वेधनक्षताच्च क्षतजं रक्तं नायाति। एतानि पीतविषस्य दष्टविद्धयोर्मरण-लक्षणानि भवन्ति। अत्र सुश्रुते चोक्तम्—"जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोड़श। समासेन मया यानि विस्तरस्तेषु वक्ष्यते। तत्र दृष्टि-निश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तव-मुखसन्दशविशर्द्धितगुदास्थिपित्तशूक-शवानीति। तत्र दृष्टिनिश्वासविषा दिव्याः सर्पाः। भौमास्तु दंष्ट्राविषाः। मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पाद-कीटास्तथाऽन्ये दंष्ट्रानखविषाः। चिपिटपिच्चटककषायवासिकसर्षपवासिक-तोटकवर्चःकीटकौण्डिल्यकाः शकृन्मूत्रविषाः। मूषिकाः शुक्रविषाः। लूताश्च लालामूत्रपुरीषमुखसन्दंशनखशुक्रार्त्तवविषाः। वृश्चिक-विश्वम्भर-राजीव-मत्स्योच्चिड़िङ्गाः समुद्रवृश्चिकाश्च लालाविषाः। चित्रशिरःसरावकुर्दिशतदारुकारि-मेदकशारिकामुखा मुखसन्दंशविशर्द्धितमूत्रपुरीषविषाः। मक्षिकाकणभजलायुका मुखसन्दंशविषाः। विषहतास्थिसर्पकण्टकवरटीमत्स्यास्थि चेत्यस्थिविषाणि। शकुलीमत्स्यरक्तराजीचरकीमत्स्याश्च पित्तविषाः। सूक्ष्मतुण्डोच्चिड़िङ्गवरटी-शतपदी-शूकवलभिका-शृङ्गी-भ्रमराः शूकतुण्डविषाः। कीटसर्पदेहा गतासवः शवविषाः। शेषास्त्वनुक्ता मुखसन्दंशविषेष्वेव गणयितव्याः। भवन्ति चात्र। राज्ञोऽरिदेशे रिपवस्तृणाम्बुमार्गान्नधूमश्वसनान् विषेण। सन्दूषयन्त्येभिरति-प्रदुष्टान् विज्ञाय लिङ्गैरभिशोधयेच्च॥ दुष्टं जलं पिच्छिलमुग्रगन्धि फेनान्वितं राजिभिरावृतञ्च। मण्डूकमत्स्यं म्रियते विहङ्गा मत्ताश्च सानूपचरा भ्रमन्ति॥ मज्जन्ति ये चात्र नराश्वनागास्ते च्छर्दिमोहज्वरदाहशोफान्। गच्छन्ति तेषा-मपहृत्य दोषान् दुष्टं जलं शोधयितुं यतेत॥ धवाश्वकर्णासनपारिभद्राः सपाटलाः सिद्धकमोक्षकौ च। दग्धाः सराजद्रुमसोमवल्कास्तद्भस्म शीतं वितरेत् सरःसु। भस्माञ्जलिश्चापि घटे निधाय विशोधयेदीप्सितमेवमम्भः॥ १॥ क्षितिप्रदेशं विषदूषितन्तु शिलास्थलीं तीर्थमथेरिणं वा। स्पृशन्ति गात्रेण तु येन येन गोवाजिनागोष्ट्रखरा नरा वा। तच्छूनतां यात्यथ दह्यते च विशीर्य्यते लोमनखास्तथैव॥ तत्राप्यनन्तां सह सर्व्वगन्धैः पिष्ट्वा सुराभिर्विनियोज्य मार्गम्। सिञ्चेत् पयोभिस्तु मृदन्वितैस्तं विड़ङ्गपाठाकटभीजलैर्वा। ॥ २॥ तृणेषु भक्तेषु च दूषितेषु सीदन्ति मूर्च्छन्ति वमन्ति चान्ये। विड़्भेद-

दंशदेशे विषं स्यात्। विषमृतस्य विशेषज्ञानार्थं लक्षणमाह—नीलौष्ठेत्यादि। दण्डराजिः दण्डकारा रेखा॥ १४॥

मूर्च्छन्त्यथवा म्रियन्ते तेषां चिकित्सां प्रणयेद् यथोक्ताम् ॥ विषापहै-र्वाप्यगदैर्विलिप्य वाद्यानि चित्राण्यपि वादयेत । तारः सुतारः ससुरेन्द्रगोपः सर्व्वैश्च तुल्यः कुरुविन्दभागः । पित्तेन युक्तैः कपिलान्वयेन वाद्यप्रलेपो विहितः प्रशस्तः ॥ वाद्यस्य शब्देन हि यान्ति नाशं विषाणि घोराण्यपि यानि सन्ति ॥३॥ धूमेऽनिले वा विषसम्प्रयुक्ते खगाः श्रमार्त्ताः प्रपतन्ति भूमौ । कासप्रतिश्याय-शिरोरुजश्च भवन्ति तीव्रा नयनामयाश्च ॥ लाक्षाहरिद्रातिविषाभयाब्दहरेणु-कैलादलवल्ककुष्ठम् । प्रियङ्गुकाश्चाप्यनले निधाय धूमानिलौ चापि विशो-धयेत ॥ ४ ॥ इति । सवातं गृहधूमाभं पुरीषं योऽतिसार्य्यते । आध्मातो-ऽत्यर्थमुष्णास्रो विवर्णः सादपीड़ितः । उद्वमत्यथ फेनश्च विषपीतं तमादिशेत् ॥ न चास्य हृदयं वह्निर्विषदुष्टं दहत्यपि । तद्धि स्थानं चेतनायाः स्वभावाद् व्याप्य तिष्ठति ॥ स्वभावादेव तिष्ठेत् तु महारादंशयोर्विषम् । व्याप्य सावयवं देहं दिग्धविद्धाहिदष्टयोः । लौल्याद्विषान्वितं मांसं यः खादेत् मृतमात्रयोः । यथाविषं स रोगेण क्लिश्यते म्रियतेऽपि वा । अतश्चाप्यनयोर्मांसमभक्ष्यं मृतमात्रयोः । मुहूर्त्तात् तदुपादेयं महारादंशवर्ज्जितम्" ॥ इति । असाध्यता चोक्ता । "अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु । याम्ये सपित्र्ये परिवर्ज्जनीया ऋक्षे नरा मर्म्मसु ये च दष्टाः ॥ दर्व्वीकराणां विषमाशु-घाति सर्व्वाणि चोष्णैर्द्विगुणी भवन्ति । अजीर्णपित्तातपपीड़ितेषु बाल-प्रमेहिष्वथ गर्भिणीषु । वृद्धातुरक्षीणबुभुक्षितेषु रूक्षेषु भीरुष्वथ दुर्द्दिनेषु । शस्त्रक्षते यस्य न रक्तमेति राज्यो लताभिश्च न सम्भवन्ति । शीताभिरद्भिश्च न लोमहर्षो विषाभिभूतं परिवर्ज्जयेत् तम् ॥ जिह्वा सिता यस्य च केशशातो नासावभङ्गश्च सकण्ठभङ्गः । कृष्णः सरक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वञ्च स वर्ज्जनीयः ॥ वर्त्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्द्ध्वमधश्च यस्य । दंष्ट्रा-निपाताः सकलाश्च यस्य तञ्चापि वैद्यः परिवर्ज्जयेत् तु । उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाप्यथवा विवर्णम् । सारिष्टमत्यर्थमवेगिनञ्च जह्याच्च तं कर्म्म न तत्र कुर्य्यादिति ।

अथ विषविज्ञानीये । धन्वन्तरिं महाप्राज्ञं सर्व्वशास्त्रविशारदम् । पादयोरुपसंगृह्य सुश्रुतः परिपृच्छति ॥ सर्पसङ्ख्यां विभागञ्च दष्टलक्षणमेव च । ज्ञानञ्च विषवेगानां भगवन् वक्तुमर्हसि ॥ तस्य तद् वचनं श्रुत्वा प्राब्रवीद् भिषजां वरः । असङ्ख्या वासुकिमुखा विख्यातास्तक्षकादयः ॥ महीधराश्च नागेन्द्रा हुताग्निसमतेजसः । ये चाप्यजस्रं गर्ज्जन्ति वर्षन्ति च

तपन्ति च॥ ससागरगिरिद्वीपा यैरियं धार्य्यते मही। क्रुद्धा निःश्वासदृष्टिभ्यां ये हन्युरखिलं जगत्॥ नमस्तेभ्योऽस्ति तेषां न कार्य्यं किञ्चित् चिकित्सया। ये तु दंष्ट्राविषा भौमा ये दशन्ति च मानुषान्। तेषां सङ्ख्यां प्रवक्ष्यामि यथावदनुपूर्व्वशः॥ अशीतिरेव सर्पाणां भिद्यते पञ्चधा तु सा॥ दर्व्वीकरा मण्डलिनो राजिमन्तस्तथैव च। निर्व्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः। दर्व्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः। तेषु दर्व्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः। द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश। निर्व्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा। वैकरञ्जोद्भवाः सप्त चित्रामण्डलिराजिलाः। पदाभिमृष्टा दुष्टा वा क्रुद्धा ग्रासार्थिनोऽपि वा। ते दशन्ति महाक्रोधास्तेषां त्रैविध्यमुच्यते। सर्पितं रदितं वापि तृतीयमथ निर्व्विषम्। सर्पाङ्गाभिहतं केचिदिच्छन्ति खलु तद्विदः। पदानि यत्र दन्तानामेकं द्वे वा बहूनि च। निमग्नान्यल्परक्तानि यान्युद्धृत्य करोति हि। चञ्चुमालकयुक्तानि वैकृत्यकरणानि च। संक्षिप्तानि सशोफानि विद्यात् तत् सर्पितं भिषक्॥ राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा। विज्ञेयं रदितं तत् तु ज्ञेयमल्पविषञ्च तत्॥ अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः। पदं पदानि वा विद्यादविषं तच्चिकित्सकः। सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः। कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतं तु तत्॥ व्याधितोद्विग्नदष्टानि ज्ञेयान्यल्पविषाणि तु। तथातिवृद्धबालातिदष्टमल्पविषं स्मृतम्। सुपर्णदेवब्रह्मर्षियक्षसिद्धनिषेविते। विषघ्नौषधियुक्ते च देशे न क्रमते विषम्॥ रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः। ज्ञेया दर्व्वीकराः सर्पाः फणिनः शीघ्रगामिनः॥ ज्ञेया मण्डलिनः सर्पा ज्वलनार्कसमप्रभाः। मण्डलैर्व्विविधैश्चित्राः पृथवो मन्दगामिनः। स्निग्धाः विविधवर्णाभिस्तिर्य्यगूर्द्ध्वन्तु राजिभिः। चित्रिता इव ये भान्ति राजिमन्तस्तु ते स्मृताः॥ मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगाः। सुगन्धिनः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः॥ क्षत्रियाः स्निग्धवर्णास्तु पन्नगा भृशकोपनाः। सूर्य्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाम्बुजम्॥ कृष्णा वज्रनिभा ये च लोहिता वर्णतस्तथा। धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः॥ महिषद्वीपवर्णाभास्तथैव परुषत्वचः। भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्त्तिताः॥ कोपयन्त्यनिलं जन्तोः फणिनः सर्व्व एव तु। पित्तं मण्डलिनश्चापि कफञ्चानेकराजयः॥ अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम्। ज्ञेयौ दोषौ

च दम्पत्योर्व्विशेषश्चात्र वक्ष्यते ॥ रजन्याः पश्चिमे यामे सर्पाश्चित्राश्चरन्ति हि । शेषेषूक्ता मण्डलिनो दिवा दर्व्वीकराः स्मृताः ॥ दर्व्वीकरास्तु तरुणा वृद्धा मण्डलिनस्तथा । राजिमन्तो वयोमध्ये जायन्ते मृत्युहेतवः ॥ नकुलाद् दलिता बाला वारिविप्रहताः कृशाः । वृद्धा मुक्तत्वचो भीताः सर्पास्त्वल्पविषाः स्मृताः ॥ तत्र दर्व्वीकराः कृष्णसर्पो महाकृष्णः कृष्णोदरः श्वेतकपोतो महाकपोतो बलाहको महासर्पः शङ्खपालो लोहिताक्षो गवेधुकः परिसर्पः खण्डफणः ककुदः पद्मो महापद्मो दर्भपुष्पो दधिमुखः पुण्डरीको भ्रूकुटीमुखो विष्किरः पुष्पाभिकीर्णो गिरिसर्प ऋजुसर्पः श्वेतोदरो महाशिरा अलगर्द्द आशीविष इति ॥ मण्डलिनस्तु । आदर्शमण्डलः श्वेतमण्डलो रक्तमण्डलश्चित्रमण्डलः पृषतो रोध्रपुष्पो मिलिन्दको गोनसो वृद्धगोनसः पनसो महापनसो वेणुपत्रकः शिशुको मदनः पालिंहिरः पिङ्गलस्तन्तुकः पुष्पपाण्डुः षड़गोऽग्निको वभ्रुः कषायः कलुषः पारावतो हस्ताभरणश्चित्रक एणीपद इति ॥ राजिमन्तस्तु । पुण्डरीको राजिचित्रोऽङ्गुलराजिर्विन्दुराजिः कर्द्दमकस्तृणशोषकः सर्षपकः श्वेतहनुर्दर्भपुष्पश्चक्रको गोधूमकः किक्किसाद इति ॥ निर्विषास्तु । गलगोली शूकपत्रोऽजगरो दिव्यको वर्षाहिकः पुष्पशकली ज्योतीरथः क्षीरिकः पुष्पकः अहिपताकोऽन्धाहिको गोराहिको वृक्षेशय इति ॥ वैकरञ्जास्तु त्रयाणां दर्व्वीकरादीनां व्यतिकराज्जाताः । तद यथा । माकुलिः पोटगलः स्निग्धराजिरिति । तत्र कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जातो माकुलिः । राजिलेन गोनस्यां वैपरीत्येन वा जातः पोटगलः । कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जातः स्निग्धराजिरिति ॥ तेषामाद्यस्य पितृवद्विषोत्कर्षः, द्वयोर्मातृवदित्येके । त्रयाणां वैकरञ्जानां पुनर्दिव्येलकरोध्रपुष्पकराजिचित्रकाः पोटगलः पुष्पाभिकीर्णो दर्भपुष्पो वेल्लितकः सप्त तेषामाद्यास्त्रयो राजिलवत् । शेषा मण्डलिवत् । एवमेतेषां सर्पाणामशीतिरिति ॥ तत्र महानेत्रजिह्वास्यशिरसः पुमांसः । सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः । उभयलक्षणमन्दविषा अक्रोधा नपुंसका इति ॥ तत्र सर्व्वेषां सर्पाणां सामान्यत एव दष्टलक्षणं वक्ष्यामः । किं कारणम् ? विषं हि निशितनिस्त्रिंशाशनिहुतवहदेश्यमाशुकारि मुहूर्त्तमप्युपेक्षितमातुरमभिपातयति । न चावकाशोऽस्ति वाक्समूहमनुसर्तुम् ॥ प्रत्येकमपि दष्टलक्षणेऽभिहिते सर्पत्रैविध्यं भवति । तस्मात् त्रैविध्यमेव वक्ष्यामः । एतद्ध्यातुरहितमसम्मोहकरञ्च ॥ अपि चात्रैव सर्व्वसर्पव्यञ्जनावरोधः ॥ तत्र दर्व्वीकरविषेण त्वङ्नयननखदशनमूत्रपुरीषदंशकृष्णत्वं रौक्ष्यं शिरसोगौरवं सन्धिवेदना कटीपृष्ठग्रीवा-

दौर्ब्बल्यं जृम्भणं वेपथुः स्वरावसादो घुघु रको जड़ता शुष्कोद्गारः कासश्वासौ हिक्का वायोरूर्द्ध्वगमनं शूलोद्वेष्टनं तृष्णा लालास्रावः फेणागमनं स्रोतोऽवरोधस्तास्ताश्च वातवेदना भवन्ति॥ मण्डलिविषेण त्वगादीनां पीतत्वं शीताभिलाषः परिधूपनं दाहस्तृष्णा मदो मूर्च्छा ज्वरः शोणितागमनमूर्द्ध्वमधश्च मांसानामवशातनं श्वयथुर्दंशकोथः पीतरूपदर्शनमाशुकोपस्तास्ताश्च पित्तवेदना भवन्ति॥ राजिमद्विषेण शुक्लत्वं त्वगादीनां शीतज्वरो रोमहर्षः स्तब्धत्वं गात्राणामादंशशोफः सान्द्रकफप्रसेकश्छर्दिरभीक्ष्नमक्ष्णोः कण्डूः कण्ठे श्वयथुर्घु घुरक उच्छ्वासनिरोधस्तमःप्रवेशस्तास्ताश्च कफवेदना भवन्ति॥ पुरुषाभिदष्ट ऊर्द्ध्वं प्रेक्षतेऽधस्तात् स्त्रिया, सिराश्चोत्तिष्ठन्ति ललाटे। नपुंसकदष्टस्तिर्य्यक्प्रेक्षी भवति। गर्भिण्या पाण्डमुखो ध्मातश्च। सूतिकया शूलार्त्तो रुधिरं मेहत्युपजिह्विका चास्य भवति। ग्रासार्थिनान्नं काङ्क्षति, वृद्धेन मन्दा वेगाश्च। बालेनाशु मृदवश्च। निर्व्विषेणाविषलिङ्गं। अन्धाहिकेनान्धत्वमित्येके॥ ग्रसनादजगरः शरीरप्राणहरो न विषात्। तत्र सद्यःप्राणहराहिदष्टः पतति शस्त्राशनिहत इव भूमौ स्तब्धाङ्गः स्वपितीति॥ तत्र सर्व्वेषां सर्पाणां विषस्य सप्त वेगा भवन्ति। तत्र दर्व्वीकराणां प्रथमे वेगे विषं शोणितं दूषयति। तत् प्रदुष्टं कृष्णतामुपैति। तेन कार्ष्ण्यं पिपीलिकापरिसर्पणमिव चाङ्गे भवति॥ द्वितीये मांसं दूषयति तेनात्यर्थं कृष्णता शोफो ग्रन्थयश्चाङ्गे भवन्ति॥ तृतीये मेदो दूषयति। तेन दंशक्लेदः शिरोगौरवं स्वेदश्चक्षुर्ग्रहणञ्च॥ चतुर्थे कोष्ठमनुप्रविश्य कफप्रधानान् दोषान् दूषयति। तेन तन्द्राप्रसेकसन्धिविश्लेषा भवन्ति॥ पञ्चमेऽस्थीन्यनुप्रविशति। प्राणमग्निञ्च दूषयति। तेन पर्व्वभेदो हिक्का दाहश्च भवति॥ षष्ठे मज्जानमनुप्रविशति, ग्रहणीञ्चात्यर्थं दूषयति। तेन गात्राणां गौरवमतिसारो हृत्पीड़ा मूर्च्छा च भवति॥ सप्तमे शुक्रमनुप्रविशति। व्यानञ्चात्यर्थं कोपयति। कफञ्च सूक्ष्मस्रोतोभ्यः प्रच्यावयति। तेन श्लेष्मवर्त्तिप्रादुर्भावः कटीपृष्ठभङ्गश्च सर्व्वचेष्टाविघातो लालास्वेदयोरतिप्रवृत्तिरुच्छ्वासनिरोधश्च भवति॥ १॥

तत्र मण्डलिनां प्रथमे वेगे विषं शोणितं दूषयति। तत् तु प्रदुष्टं शीततामुपैति, तत्र परिदाहः पीतावभासता चाङ्गानां भवति॥ द्वितीये मांसं दूषयति, तेनात्यर्थं पीतता-परिदाहौ दंशे श्वयथुश्च भवति। तृतीये मेदो दूषयति, तेन पूर्व्ववच्चक्षुर्ग्रहणं तृष्णा दंशे क्लेदः स्वेदश्च भवति॥ चतुर्थे कोष्ठमनुप्रविश्य ज्वरमापादयति॥ पञ्चमे परिदाहं सर्व्वगात्रेषु करोति। षष्ठसप्तमयोः

पूर्व्ववत् ॥ २ ॥ राजिमतां प्रथमे वेगे विषं शोणितं दूषयति। तत् प्रदुष्टं पाण्डुतामुपैति, तेन लोमहर्षः शुक्लावभासश्च पुरुषो भवति। द्वितीये मांसं दूषयति, तेन पाण्डुतात्यर्थं जाड्यं शिरःशोफश्च भवति। तृतीये मेदो दूषयति, तेन चक्षुर्ग्रहणं दन्तक्लेदः स्वेदो घ्राणाक्षिस्रावश्च भवति। चतुर्थे कोष्ठमनुप्रविश्य मन्यास्तम्भं शिरोगौरवञ्चापादयति। पञ्चमे वाक्सङ्गं शीतज्वरञ्च करोति। षष्ठसप्तमयोः पूर्व्ववदिति ॥ भवन्ति चात्र। "धात्वन्तरेषु याः सप्त कलाः सम्परिकीर्त्तिताः। तास्वेकैकामतिक्रम्य वेगं प्रकुरुते विषम् ॥ येनान्तरेण हि कलां कालकल्पं भिनत्ति हि। समीरणेनोह्यमानं तत् तु वेगान्तरं स्मृतम् ॥ शूनाङ्गः प्रथमे वेगे पशुर्ध्यायति दुःखितः। लालास्रावो द्वितीये तु कृष्णाङ्गः पीड्यते हृदि ॥ तृतीये च शिरोदुःखं कण्ठग्रीवञ्च भज्यते। चतुर्थ वेपते मूढः खादन् दन्तान् जहात्यसून् ॥ केचिद्वेगत्रयं प्राहुरन्तश्चैतेषु तद्विदः ॥ ध्यायति प्रथमे वेगे पक्षी मुह्यत्यतः परम्। द्वितीये विह्वलः प्रोक्तस्तृतीये मृत्युमृच्छति ॥ केचिदेकं विहङ्गेषु विषवेगमुशन्ति हि। मार्जारनकुलादीनां विषं नातिप्रवर्त्तते" ॥ इति। "पूर्व्वमुक्ताः शुक्रविषा मूषिका ये समासतः। नामलक्षणभैषज्यैरष्टादश निबोध तान् ॥ लालनः पुत्रकः कृष्णो हंसिकश्चिक्किरस्तथा। छुच्छुन्दरोऽलसश्चैव कषायदशनोऽपि च। कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा। कोकिलोऽरुणसञ्ज्ञश्च महाकृष्णस्तथोन्दुरः। श्वेतेन महता सार्द्धं कपिलेनाखुना तथा। मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः ॥ शुक्रं पतति यत्रैषां शुक्रघृष्टैः स्पृशन्ति वा। नखदन्तादिभिस्तस्मिन् गात्रे रक्तं प्रदुष्यति। जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च। पिड़कोपचयश्चोग्रा विसर्पाः किटिमानि च। पर्व्वभेदोरुजस्तीव्रा ज्वरो मूर्च्छा च दारुणा। दौर्ब्बल्यमरुचिः श्वासोवमथुर्लोमहर्षणम् ॥ दष्टरूपं समासोक्तमेतद् व्यासेन वक्ष्यते ॥

अथातः कीटा उच्यन्ते—सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः। वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः ॥ सर्व्वदोषप्रकृतिभिर्युक्ताश्चापरिणामतः। कीटत्वेपि सुघोरास्ते सर्व्व एव चतुर्व्विधाः ॥ कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः। उच्चिड़िङ्गोऽग्निनासा च चिच्चिड़िङ्गो मयूरिका। आवर्त्तकस्तथोरभ्रसारिकामुखवैदलौ। शरावकुर्द्दोऽभीराजी परुषश्चित्रशीर्षकः। शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः। अष्टादशेति वायव्याः कीटाः पवनकोपनाः ॥ तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः ॥ कौण्डिल्यकः

कलभको वरटी पत्रवृश्चिकः। विनासिका ब्रह्मणिका बिन्दुलो भ्रमरस्तथा। बाह्यकी चिप्पिटः कुम्भी वर्च्चःकीटोऽरिमेदकः। पद्मकीटो दुन्दुभिको मकरः शतपादकः। पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी। क्लीतः क्रिमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः। एते ह्यग्निप्रकृतयश्चतुर्विंशतिरीरिताः। तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः॥ विश्वम्भरः पञ्चशुक्तः पञ्चकृष्णोऽथ कोकिलः। सरैयकः प्रचलको वलभः किटिमस्तथा। सूचीमुखः कृष्णगोधा यश्च काषायवासिकः। कीटगर्द्दभकश्चैव तथा त्रोटक एव च। त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः॥ तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः॥३॥ तुङ्गीनासो विचिलकस्तालको वाहकस्तथा। कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः। तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा। अग्निकीटाश्च घोराः स्युर्द्वादश प्राणनाशनाः॥ तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत्। तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः। क्षाराग्निदग्धवद्दंशो रक्तपीतासितारुणः। ज्वराङ्गमर्द्दरोमाञ्चवेदनाभिः समन्वितः। छर्द्यतीसारतृष्णाश्च दाहो मोहो विजृम्भिका। वेपथुश्वासहिक्काश्च दाहः शीतञ्च दारुणम्। पिड़कोपचयः शोफो ग्रन्थयो मण्डलानि च। दद्रवः कर्णिकाश्चैव विसर्पाः किटिमानि च। तैर्भवन्तीह दष्टानां यथास्वञ्चाप्युपद्रवाः॥ येऽन्ये तेषां विशेषास्तु तूर्णं तेषां समादिशेत्। दूषीविषप्रकोपाच्च तथैव विषलेपनात्। लिङ्गं तीक्ष्णविषेष्वेतच्छृणु मन्दविषेष्वतः॥ प्रसेकोऽरोचकश्छर्द्दिशिरोगौरवशीतताः। पिड़काकोठकण्डूनां जन्म दोषविभागतः॥ योगैर्नानाविधैरेषां चूर्णानि गरमादिशेत्। दूषीविषप्रकाराणां तथैवाप्यनुलेपजात्॥ एकजातीनत ऊर्द्ध्वं कीटान् वक्ष्यामि भेदतः। सामान्यतो दष्टलिङ्गैः साध्यासाध्यक्रमेण च॥ त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः। चत्वार एते कलभा व्याख्यातास्तीव्रवेदनाः॥ तैर्दष्टस्य श्वयथुरङ्गमर्द्दो गुरुता गात्राणां दंशश्च कृष्णो भवति॥१॥ प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो महाशिराः। तथा निरुपमश्चापि पञ्चगोधेरकाः स्मृताः॥ तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत्। रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः॥२॥ गलगोली श्वेता कृष्णा रक्तराजी रक्तमण्डला सर्व्वश्वेता सर्षपिकेत्येव षट्। ताभिर्दष्टे सर्षपिकावर्ज्जं दाहशोफक्लेदा भवन्ति। सर्षपिकया हृदयपीड़ाऽतिसारश्च॥३॥ शतपद्यस्तु परुषा कृष्णा चित्रा कपिलिका रक्ता श्वेताऽग्निप्रभाचेत्यष्टौ। ताभिर्दष्टे शोफो वेदना दाहश्च हृदये। श्वेताग्निप्रभाभ्यामेतदेव दाहो मूर्च्छा चातिमात्रं श्वेतपिड़कोत्-

पत्तिश्च ॥४॥ मण्डूकाः। कृष्णः सारः कुहकोहरितो रक्तो यववर्णाभो भृकुटी कोटिकश्चेत्यष्टौ। तैर्दष्टस्य दंशकण्डूर्भवति। पीतफेणागमश्च वक्त्रात्। भृकुटी-कोटिकाभ्यामेतदव दाहश्छर्द्दिर्मूर्च्छा चातिमात्रम् ॥५॥ विश्वम्भराभिदष्टे दंशः सर्षपाकाराभिः पिड़काभिश्चीयते शीतज्वरार्त्तश्च पुरुषो भवति ॥६॥ अहि-तुण्डिकाभिर्दष्टे तोददाहकण्डूश्वयथवो मोहश्च ॥७॥ कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्द्यतिसारज्वरादिभिरभिहन्यते॥८॥ शूकवृत्तादिभिर्दष्टे कण्डूकोठाः प्रवर्द्धन्ते शूकश्चात्र लक्ष्यते ॥९॥ पिपीलिकाः। स्थूलशीर्षा सम्वाहिका ब्राह्मणिका अङ्गलिका कपिलिका चित्रवर्णेति षट्। ताभिर्दष्टे दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ॥१०॥ मक्षिकाः। कान्तारिका कृष्णा पिङ्गलिका मधूलिका काषायी स्थालिकेत्येवं षट्। ताभिदष्टस्य दाहशोफौ भवतः। स्थालिकाकाषायीभ्या-मेतदव पिड़काश्च सोपद्रवा भवन्ति ॥११॥ मशकाः। सामुद्रः परिमण्डलो हस्ति मशकः कृष्णः पार्व्वतीय इति पञ्च। तैर्दष्टस्य तीव्रकण्डूर्दंशशोफश्च। पार्व्व-तीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः। नखावकृष्टेऽत्यर्थं पिड़काः सदाहपाका भवन्ति॥ जलौकसां दष्टलक्षणमुक्तं प्राक्। तद्यथा। जलमासामायुरिति जलायुकाः। जलमासामोक इति जलौकसः। ता द्वादश। तासां सविषाः षट् तावत्य एव निर्व्विषाः॥ तत्र सविषाः कृष्णा कर्व्वरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति। तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा। वर्म्मि-मत्स्यवदायता छिन्नोन्नतकुक्षिः कर्व्वुरा। रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा। इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा। ईषदसितपीतिका विचित्रपुष्पाकृति-चित्रा सामुद्रिका। गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति॥ ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूमूर्च्छा ज्वरो दाहश्छर्द्दिर्मदः सदनमिति लिङ्गानि भवन्ति॥ तत्र महागदः पानालेपननस्यकर्म्मादिषूपयोज्यः। इन्द्रा-युधादष्टमसाध्यमिति षट् सविषा जलौकसः सचिकित्सा व्याख्याताः॥ भवन्ति चात्र। गौधेरकः स्थालिका च ये च श्वेताग्निसंप्रभे। भृकुटी कोटिकश्चैव न सिध्यन्त्येकजातिषु॥ शवमूत्रपुरीषैस्तु सविषैरवमर्षणात्। स्युः कण्डूदाहकोठारुःपिड़कातोदवेदनाः। प्रक्लेदवांस्तथा स्रावो भृशं सम्पा-चयेत्त्वचम्॥ त्रिविधा वृश्चिकाः प्रोक्ता मन्दमध्यमहाविषाः। गोशकृत्-कोथजा मन्दा मध्याः काष्ठेष्टिकोद्भवाः। सर्पकोथोद्भवास्तीक्ष्णा ये चान्ये विषसम्भवाः॥ मन्दा द्वादश मध्यास्तु त्रयः पञ्चदशोत्तमाः। दशविंशति-रित्येते सङ्ख्या परिकीर्त्तिताः॥ कृष्णः श्यावः कर्व्वुरः पाण्डवर्णो गोमूत्राभः

कर्कशो मेचकश्च । श्वेतोरक्तो रोमशः शाद्वलाभो रक्तश्चते मन्दवीर्य्या मतास्तु ॥ एभिर्दष्टे वेदना वेपथुश्च गात्रस्तम्भः कृष्णरक्तागमश्च । शाखादष्टे वेदना चोर्द्ध मेति दाहस्वेदो दंशशोफो ज्वरश्च ॥१२॥ रक्तः पीतः कपिलेनोदरेण सर्व्वे धूम्राः पर्व्वभिश्च त्रिभिः स्युः । एते मूत्रोच्चारपूत्यण्डजाता मध्या ज्ञेयास्त्रिप्रकारोरगाणाम् । यस्यैतेषामन्वयात् यः प्रसूतो दोषोत्पत्तिं तत्स्वरूपाश्च कुर्य्यात् ॥ जिह्वाशोफो भोजनस्यावरोधो मूर्च्छा चोग्रा मध्यवीर्य्याभिदष्टे ॥ श्वेतश्चित्रः श्यामलो लोहिताभो रक्तः श्वेतो रक्तनीलोदरो च । पीतो रक्तो नीलपीतोऽपरस्तु रक्तो नीलो नीलशुक्रस्तथा च ॥ रक्तो बभ्रुः पूर्व्ववच्चैकपर्व्वा यश्चापर्व्वा पर्व्वणी द्वे च यस्य । नानारूपा वर्णतश्चापि घोरा ज्ञेयाश्चैते वृश्चिकाः प्राणचौराः ॥ जन्मैतेषां सर्पकोथात् प्रदिष्टं देहेभ्योवा घातितानां विषेण । एभिर्दष्टे सर्पवेगप्रवृत्तिः स्फोटोत्पत्तिर्भ्रान्तिदाहौ ज्वरश्च ॥ खेभ्यः कृष्णं शोणितं चापि तीव्रं तस्मात् प्राणैस्त्यज्यते शीघ्रमेव ॥ इति ॥ लूताविषं घोरतमं दुर्विज्ञेयतमन्तु तत् । दुश्चिकित्स्यतमं वापि भिषग्भिर्मन्दबुद्धिभिः । सविषं निर्व्विषञ्चैतदित्येवं परिशङ्किते । विषघ्नमेव कर्त्तव्यमविरोधि यदौषधम् ॥ अगदानां हि संयोगो विषजुष्टस्य युज्यते । निर्विषे मानवे युक्तोऽगदः सम्पद्यते सुखम् ॥ तस्मात् सर्व्वप्रयत्नेन ज्ञातव्यो विषनिश्चयः । अज्ञात्वा विषसद्भावं भिषग् व्यापादयेन्नरम् ॥ प्रोद्भिद्यमानस्तु यथाङ्कुरेण न व्यक्तजातिः प्रविभाति वृक्षः । तद्वद् दुरालक्ष्यतमं हि तासां विषं शरीरे प्रविकीर्णमात्रम् ॥ ईषच्च कण्डूः प्रचलं सकोठमव्यक्तवर्णं प्रथमेऽहनि स्यात् । अन्तेषु शूनं परिनिम्नमध्यं प्रव्यक्तरूपञ्च दिने द्वितीये ॥ त्र्यहेण तद्दर्शयतीह दंशं विषं चतुर्थेऽहनि कोपमेति । अतोऽधिकेऽह्नि प्रकरोति जन्तोर्विषप्रकोपप्रभवान् विकारान् ॥ षष्ठे दिने विप्रसृतश्च सर्व्वान् मर्म्मप्रदेशान् भृशमावृणोति ॥ तत् सप्तमेऽत्यर्थपरीतगात्रं व्यापादयेन्मर्त्यमतिप्रवृद्धम् ॥ यास्तीक्ष्णचण्डोग्रविषा हि लूतास्ताः सप्तरात्रेण विनाशयन्ति ॥ अतोऽधिकेनापि निहन्युरन्या यासां विषं मध्यमवीर्य्यमुक्तम् । यासां कनीयो विषवीर्य्यमुक्तं ताः पक्षमात्रेण विनाशयन्ति । तस्मात् प्रयत्नं भिषगत्र कुर्य्यादादंशपाताद्विषघातियोगैः ॥ विषन्तु लालानखमूत्रदंष्ट्रारजःपुरीषैरथ चेन्द्रियेण । सप्त प्रकारं विसृजन्ति लूतास्तदुग्रमध्यावरवीर्य्ययुक्तम् ॥ सकण्डुकोठं स्थिरमल्पमूलं लालाकृतं मन्दरुजं वदन्ति ॥ शोफश्च कण्डूश्च पुलाकिका च धूमायनं चैव नखाग्रदंशे । दंशन्तु मूत्रेण सकृष्णमध्यं सरक्तपर्य्यन्तमवेहि दीर्णम् । दंष्ट्राभिरुग्रं

एभ्योऽन्यथा चिकित्सा तेषाञ्चोपक्रमान् शृणु मे।
मन्त्रारिष्टोत्कर्त्तन-निष्पीड़न-चूषणाग्निपरिषेकाः।
अवगाहन-रक्तमोक्षण-वमन-विरेक।पधानानि॥
हृदयावरणाञ्जननस्यधूपलेहौषधप्रधमनानि।
प्रतिसारणं प्रतिविषं संज्ञासंस्थापनं लेपः॥

कठिनं विवर्णं जानीहि दंशं स्थिरमण्डलञ्च॥ रजःपुरीषेन्द्रियजं हि विद्धि स्फोटं विपक्वामलपीलुपाण्डुम्। एतावदेतत् समुदाहृतन्तु वक्ष्यामि लूताप्रभवं पुराणम्। सामान्यतो दृष्टमसाध्यसाध्यं चिकित्सितञ्चापि यथाविशेषम्॥ विश्वामित्रो नृपवरः कदाचिदृषिसत्तमम्। वशिष्ठं कोपयामास गत्वाश्रमपदं किल। कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दवः। अपतन् दर्शनादेव अधस्तात्तीक्ष्णवर्च्चसः। लूने तृणे महर्षीणां धेन्वर्थे सम्भृतेऽपि च। ततो जातास्त्विमे घोरा नानारूपा महाविषाः। अपकाराय वर्त्तन्ते नृपसाधन वाहने। यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः। तस्माल्लूतेति भाष्यन्ते सङ्ख्यया ताश्च षोड़श॥ कृच्छ्रसाध्यास्तथाऽसाध्या लूतास्तु द्विविधाः स्मृताः। तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु। त्रिमण्डला तथा श्वेता कपिला पीतिका तथा। आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता। ताभिर्दष्टे शिरोदुःखं कण्डूर्दंशे च वेदना। भवन्ति च विशेषेण गदाः श्लैष्मिकवातिकाः॥ सौवर्णिका लाजवर्णा जालिन्येनीपदी तथा। कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृता॥ ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च। ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः। पिड़का विविधाकारा मण्डलानि महान्ति च। शोफा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा॥ सामान्यं सर्व्वलूतानामेतदादंशलक्षणम्। विशेषलक्षणं तासां वक्ष्यामि सचिकित्सितमिति॥ १४॥

गङ्गाधरः—अथ विषं गुणतो वेगतश्चोक्त्वा चतुर्विंशत्युपक्रममिति यदुक्तं तद्वक्तुमाह—एभ्योऽन्यथेत्यादि। नीलौष्ठाद्यसाध्यलक्षणेभ्योऽन्यथा चत्तदा चिकित्सा कार्य्या। तेन तेषां साध्यानां विषाणामुपक्रमान् शृणु॥ चतुर्विंशतिमुपक्रमान् निर्द्दिशति—मन्त्रेत्यादि। मन्त्रेत्यादिमृतसञ्जीवनान्ताः

चक्रपाणिः—मन्त्रेत्यादिना मन्त्रस्य विषहरेषु श्रेष्ठत्वादग्रेऽभिधानात्। 'विषं तेजो-

मृतसञ्जीवनमेव च विंशतिरेते चतुर्भिरधिकाः।
स्युरुपक्रमा यथा ये यत्र योज्याः शृणु तथा तान् ॥ १५ ॥
दंशात्तु विषं दष्टस्य विसृतं वैलिकां * भिषग्बद्ध्वा।
निष्पीड़येद्द्रुतं दंशमुद्धरेन्मर्मवर्जं वा ॥

चतुर्भिरधिका विंशतिरुपक्रमास्तेषां ये यत्र योज्यास्तान् शृणु। सुश्रुते तूक्तम्। "यथाऽव्यक्तरसं तोयमन्तरीक्षान्महीगतम्। तेषु तेषु प्रदेशेषु रसं तं तं प्रयच्छति। एवमेवं विषं यद् यद् द्रव्यं व्याप्यावतिष्ठते। स्वभावादेव तं तस्य रसं समनुवर्त्तते॥ विषे यस्माद् गुणाः सर्व्वे तीक्ष्णाः प्रायेण सन्ति हि। विषं सर्व्वमतो ज्ञेयं सर्व्वदोषप्रकोपणम्। ते तु वृत्तिं प्रकुपिता जहति स्वां विषार्द्दिताः॥ नोपयाति विषं पाकमतः प्राणान् रुनद्धि च। श्लेष्मणावृतमार्गत्वादुच्छासोऽस्य निरुध्यते। विसंज्ञः सति जीवेऽपि तस्मात्तिष्ठति मानवः॥ शुक्रवत् सर्व्वसर्पाणां विषं सर्व्वशरीरगम्। क्रुद्धानामेति चाङ्गेभ्यः शुक्रं निर्मन्थनादिव॥ तेषां वड़िशवद् दंष्ट्रास्तासु सज्जति चागतम्। अनुद्वृत्ता विषं तस्मान्न मुञ्चन्ति च भोगिनः॥ यस्मादत्यर्थमुष्णन्तु तीक्ष्णञ्च पठितं विषम्। अतः सर्व्वविषेषूक्तः परिषेकस्तु शीतलः॥ मन्दकीटेषु नात्युक्तं बहु वातकफं विषम्। अतः कीटविषे चापि स्वेदो न प्रतिषिध्यते॥ कीटैर्दष्टानुग्रविषैः सर्पवत् समुपाचरेदिति॥ १५॥

गङ्गाधरः—दंशात्तु इत्यादि। सर्पदष्टस्य विषं दंशादेशाद्विसृतं बुद्ध्वा भिषग् वैलिकामरिष्टां शाखायां द्रुतं बद्ध्वा निपीड़येत्। शाखाभ्योऽन्यत्र दष्टस्य

मरैर्मन्त्रैः सत्यब्रह्मतपोमयैः। यथा निवार्य्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः"॥ अरिष्टा द्विविधा, मन्त्रेण रज्ज्वादिभिर्वा विषोपरिबन्धः। उपधानं विषमं मस्तके भेषजदानम्। हृदयावरणं हृदयरक्षकमौषधम्। प्रतिविषं विषान्तरप्रयोगः। मृतसञ्जीवनकरं भेषजम्। शेषं अग्रग्रन्थेन स्फुटं भविष्यति॥ १५॥

चक्रपाणिः—अविमृतमित्यप्राप्तमरणं, वेणिकां बद्ध्वेति। एतेन सामान्याभिधानेन मन्त्रव्यापारेऽपि अभिधानं कल्पते। उक्तं चान्यत्र 'अरिष्टानामपि मन्त्रैः बध्नीयान्मन्त्रकोविदः। सा च बन्धादिभिर्बद्धा विषप्रतिकरी मता"। निष्पीड़येदिति निष्पीड़नेन, उद्धरेदिति उत्-

* अविमृतं वेणिकामिति च चक्रसम्मतः पाठः।

तं दंशं वा चूषेन् मुखेन यवचूर्णपांशुपूर्णेन ।
प्रच्छन् शृङ्गजलौकोव्यधनैः स्राव्यं ततो रक्तम् ॥
रक्ते विषप्रदुष्टे दुष्येत् प्रकृतिस्ततस्त्यजेत् प्राणान् ।
तस्मात् प्रघर्षणैरसृग् वर्त्तमानं प्रवर्त्त्यं स्यात् ॥ १६ ॥
त्रिकटुगृहधूमरजनीपञ्चलवणाः सवार्त्ताकाः ।
घर्षणमतिप्रवृत्ते वटादिभिः शीतलैः प्रलेपः ॥
रक्तं हि विषाधानं वायुरिवाग्नेः प्रदेहसेकैस्तत् ।
शीतैः स्कन्दति तस्मिन् स्कन्ने व्यपयाति विषवेगः ॥

मर्म्मवर्ज्जं दंशं दंशस्थानमुत्कृत्योद्धरेत् । दंशोद्धरणासम्भवे यवादिचूर्णपूरितमुखेन तं दंशं विषवासस्थानं दंशं चूषेत् । सुश्रुते चोक्तम्—"सर्व्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः । दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥ प्लोतचर्म्मान्तवल्कानां मृदुनान्यतमेन च । न गच्छति विषं देहमरिष्टाभिर्निवारितम् ॥ दहेद दंशमथोत्कृत्य यत्र बन्धो न जायते । आचूषणच्छेददाहाः सर्व्वत्रैव तु पूजिताः ॥ प्रतिपूर्य्य मुखं वस्त्रैर्हितमाचूषणं भवेत् ॥ स दष्टव्योऽथवा सर्पो लोष्ट्रो वापि हि तत्क्षणम् ॥ अथ मण्डलिना दष्टं न कथञ्चन दाहयेत् । स पित्तविषबाहुल्याद् दंशो दाहाद् विसर्पतीति । प्रच्छन्नित्यादि । दंशं प्रच्छन् शस्त्रेण प्रच्छन् एवं शृङ्गादिभिस्ततो रक्तं स्राव्यम् । कस्मात् ? रक्ते इत्यादि । विषप्रदुष्टे रक्ते सति प्रकृतिदुष्येत् । ततः प्रकृतिदूषणात् प्राणान् त्यजेत् । यदि तु विषदुष्टं रक्तं न प्रवर्त्तते तदा प्रघर्षणैः प्रवर्त्त्यं स्यात् ॥ १६ ॥

गङ्गाधरः—घर्षणमाह—त्रिकट्वित्यादि । वार्त्ताको गोष्ठवार्त्ताकुः । त्रिकट्वादिकं समभागेन चूर्णं मिश्रयित्वा दंशस्थानघर्षणं कार्य्यम्, ततोऽप्रवर्त्तमानमसृक् प्रवर्त्तते । यदि प्रच्छनादिभिरतिप्रवर्त्तते रक्तं, तदा वटादिभिः शीतलैर्वल्कलैर्लेपः कार्य्यः । कस्मात् ? रक्तं हीत्यादि । हि यस्माद् रक्तं विषाधानं

कृत्यापहरेत् । मर्म्मवर्ज्जमिति मर्म्मण्यभिघातं निषेधयति । यवचूर्णपांशुपूर्णेन मुखेन चूषेत् । दंशमुखावरणं विषसम्बन्धपरिहारार्थम् । प्रच्छन्निति रक्तमोक्षणमुपक्रममाह । उपक्रमाणाञ्च व्यतिक्रमाभिधानेन नियमेन क्रमयोगं निषेधयति । रक्तस्रावणोपपत्तिमाह—प्रकृतिरिति देहधात्वादिस्वभावः । प्रघर्षणैरिति व्रणादिभिः प्रघर्षणेन चेत्यर्थः ॥ १६ ॥

चक्रपाणिः—प्रतिसारणमिति विवृत्तं प्रघर्षणमिति * । विषाधानमिति विषस्य प्रसारकम् । स्कन्दति

* व्याख्यानमिदं चतुर्व्विंशत्युपक्रमान्तर्गतस्य प्रतिसारणमिति पदस्य । अतस्तत्रैवैतत् पठितव्यम् ।

विषवेगान्मदमूर्च्छाविषादहृदयद्रवाः प्रवर्त्तन्ते।
शीतैर्निवर्त्तयेत् तान् न वीज्यश्च लोमहर्षः स्यात्॥
तरुरिव मूलच्छेदाद् दंशच्छेदान्न वृद्धिमेति विषम्।
आचूषणमानयनं जलस्य सेतुर्यथा तथारिष्टाः॥ १७॥
त्वङ्मांसगतो दाहो दहति विषं स्रावणं हरति रक्तात्।
पीतं वमनैः सद्यो हरेद् विरेकैर्द्वितीये तु॥

वायुरिवाग्नेरग्नेर्वायुरिव तत् तु शीतप्रदेहसेकैः स्कन्दति स्त्यानीभवति तस्मिन् विषाधाने रक्ते स्कन्ने स्त्याने सति विषवेगो व्यपयाति। इति रक्तमोक्षणफलमुक्त्वा व्यजनमाह—विषवेगादित्यादि। मदादयो विषवेगात् प्रवर्त्तन्ते जायन्ते। तान् मदादीन् शीतैर्द्रव्यैः परिषेकादिभिः निवर्त्तयेत्। वीज्यश्च न लोमहर्षः स्यात्। तरुरिवेत्यादि। मूलच्छेदाद् यथा तरुर्न वृद्धिमेति तथा दंशच्छेदाद् दंशस्थानोत्कर्त्तनाद् विषं न वृद्धिमेति। आचूषणमानयनमतो न विषं देहे वर्त्तते। जलस्य वेगेन गच्छतो यथा सेतुर्गतिनिरोधकृत् तथाऽरिष्टा मन्त्रेण बद्धा विषगतिनिरोधिन्य इति। सुश्रुतेऽरिष्टाबन्धनमुक्तम्। "अरिष्टामपि मन्त्रैश्च बध्नीयान्मन्त्रकोविदः। सा तु रज्ज्वादिभिर्बद्धा विषप्रतिकरी मता॥ देवब्रह्मर्षिभिः प्रोक्ता मन्त्राः सत्यतपोमयाः। भवन्ति नान्यथा क्षिप्रं विषं हन्युः सुदुस्तरम्॥ विषं तेजोमयैर्मन्त्रैः सत्यब्रह्मतपोमयैः। यथा निवार्य्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः॥ मन्त्राणां ग्रहणं कार्य्यं स्त्रीमांसमधुवर्ज्जिना। जिताहारेण शुचिना कुशास्तरणशायिना॥ गन्धमाल्योपहारैश्च बलिभिश्चापि देवताः। पूजयेन्मन्त्रसिद्ध्यर्थं जपहोमैश्च यत्नतः॥ मन्त्रास्तु विधिनाप्रोक्ता हीना वा स्वरवर्णतः। यस्मान्न सिद्धिमायान्ति तस्माद् योज्योऽगदक्रमः॥ समन्ततः सिरा दंशाद् विध्येत् तु कुशलो भिषक्। शाखाग्रे वा ललाटे वा वेध्यास्ता विसृते विषे। रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम्। तस्माद् विस्रावयेद् रक्तं सा ह्यस्य परमा क्रिया" इति॥ १७॥

गङ्गाधरः—त्वङ्मांसेत्यादि। त्वङ्मांसगतं विषं दाहो दहति। रक्तस्य स्रावणं रक्ताद् विषं हरति। पीतं विषं सद्यस्तत्क्षणं वमनैर्हरेत्। द्वितीये तु

स्थिरं भवति। तरुरिवेत्यादिना च्छेदादीनां विषहरोपपत्तिमाह। सेतुर्यथेति विषविरोधक इत्यर्थः।

आदौ हृदयं रक्ष्यं तस्यावरणं पिबेद् यथालाभम् ।
मधु सर्पिर्मज्जानं गैरिकमथ गोमयरसं वा ॥
इक्षुं सुपक्कमथवा काकं निष्पीड्य तद्रसं वामलम् ।
छागादीनां वासृग् भस्म मृदं वा पिबेदाशु ॥
क्षारोऽगदस्तृतीये शोथहरं छर्दनं समध्वम्बु ।
गोमयरसश्चतुर्थे वेगे सकपित्थमधुसर्पिर्भिः ॥
काकाण्डशिरीषाभ्यां स्वरसेनाश्च्योतनाञ्जने नस्यम् ।
स्यात् पञ्चमेऽथ षष्ठे संज्ञासंस्थापनं कार्य्यम् ॥

वेगे विरेकं हरेत् । एवमादौ पूर्व्वं हृदयं रक्ष्यम्, तस्य हृदयस्यावरणं विषवेग-गमनबोधकरमावरणं यथालाभं पिबेत् । मधुप्रभृति । तत्र काकं सुपक्वं निष्पीड्य तस्य रसम् । छागादीनामसृक् पिबेत् । भस्म मृदं वाशु पिबेत् । इति द्वितीये वेगे । सुश्रुते चोक्तम् । "समन्तादगदैर्दंशं मच्छयित्वा प्रलेपयेत् । चन्दनोशीरयुक्तेन वारिणा परिषेचयेत् ॥ पाययेतागदांस्तांस्तान् क्षीरक्षौद्र-घृतादिभिः । तदलाभे हिता वा स्यात् कृष्णा वल्मीकमृत्तिका ॥ कोविदार-शिरीषार्क-कटभीर्वापि भक्षयेत् । न पिबेत् तैलकौलत्थ-मद्यसौवीरकाणि च ॥ द्रवमन्यत् तु यत् किञ्चित् पीत्वा पीत्वा समुद्वमेत् । प्रायो हि वमनेनैव सुखं निर्ह्रियते विषम् ॥ फणिनां विषवेगे तु प्रथमे शोणितं हरेत् । द्वितीये मधुसर्पिर्भ्यां पाययेताऽगदं भिषक् ॥" इति । क्षार इत्यादि । तृतीये विषवेगे क्षारोऽगदस्तथा समध्वम्बु शोथहरं वमनम् । चतुर्थे विषवेगे सकपित्थ-मधुसर्पिर्भिर्युक्तो गोमयरसः । पञ्चमे वेगे काकाण्डशिरीषाभ्यां स्वरसेन चक्षुषि आश्च्योतनमञ्जनञ्च दद्यात्, तथा नस्यञ्च तयोः स्वरसेन कुर्य्यादिति । काकाण्डः कृष्णशिम्बी । अथ षष्ठे वेगे संज्ञास्थापनं हिङ्गुकैटर्य्यारिमेदवचा-चोरक-वयस्था-गोलोमी-जटिला-पलङ्कषाशोकरोहिणीनां संज्ञास्थापनीयानां

द्वितीयवेगे इति शेषः । आदाविति सर्व्वोपक्रमादौ । तस्येति हृदयस्य । यथालाभमिति वक्ष्यमाणहृदयावरणयोगेषु यथाप्राप्तहृदयावरणम् । क्षारोऽगदो वक्ष्यमाणं तद् विशेषेण शोफहरमिति

गोपित्तयुक्तरजनी-*-मञ्जिष्ठामरिचपिप्पलीपानम्।
विषपानं दष्टानां विषपीते दंशनं चान्ते ॥ १८ ॥
शिखिपित्तार्द्धयुतं स्यात् पलाशवीजमगदो मृतेषु वरः।
वार्त्ताकफाणितागारधूमगोपित्तनिम्बं वा ॥
गोपित्तयुतैर्गुड़िका सुरसोग्राद्विरजनीमधुककुष्ठैः। †
शस्तामृतेन तुल्या शिरोषपुष्पकाकाण्डरसैर्वा ॥
काकाण्डसुरसगवाक्षीपुनर्नवावायसीशिरोषफलैः।
तद्वदरिष्टजलमृते ‡ लेपौषधनस्यपानानि ॥ १९ ॥

कषायपानादिकं कार्य्यम्। गोपित्तेत्यादि। गोपित्तयुक्तरजन्यादीनां कल्ककषायरूपेण पानञ्च संज्ञास्थापनम्। विषपानमिति। दष्टानां सर्पदंष्ट्रादष्टानां मौलविषस्य पानं विषपीतेऽन्ते शेषवेगे दंष्ट्राविषैर्दंशनम् ॥ १८ ॥

गङ्गाधरः—शिखीत्यादि। मृते विषेण मृत इव लक्षिते शिखिपित्तमर्द्धं तद्द्विगुणं पलाशवीजं पानाल्पादौ वरोऽगदः, वार्त्ताकादिपञ्चकं वा वरोऽगदो विषमृते। सुरसादिभिः षड्भिर्गोपित्तयुक्तैर्गुड़िका विषमृते शस्ता। शिरीषपुष्पकाकाण्डरसैर्वा सुरसादिभिर्गुड़िकाऽमृतेन तुल्या। काकाण्डः कृष्णशिम्वी। काकाण्डादिशिरीषफलान्तैस्तद्वद् गुड़िका अरिष्टजलमृते लेपादीनि शस्तानि। सुश्रुते च। "नस्यकर्म्माञ्जने युञ्ज्यात् तृतीये विषनाशने। वान्तं चतुर्थे पूर्व्वोक्तां यवागूमथ दापयेत्॥" शीतोपचारं कृत्वादौ भिषक् पञ्चमषष्ठयोः। दापयेच्छोधनं तीक्ष्णं यवागूञ्चापि कीर्त्तिताम्॥ सप्तमे त्ववपीड़ेन शिरस्तीक्ष्णेन शोधयेत्। तीक्ष्णमेवाञ्जनं दद्यात् तीक्ष्णशस्त्रेण मूर्द्ध्नि च। कुर्य्यात् काकपदं चर्म्म सासृग् वा पिशितं क्षिपेत्॥ पूर्व्वे मण्डलिनां वेगे दर्व्वीकरवदाचरेत्। अगदं मधुसर्पिर्भ्यां द्वितीये पाययेत च। वामयित्वा यवागूञ्च पूर्व्वोक्तामथ दापयेत्। तृतीये शोधितं तीक्ष्णैर्यवागूं पाययेद्धिताम्।

शेषः। काकाण्डा शुशुभेदः। गोपित्तयुता रजनी आश्च्योतनादिषु ज्ञेया। अन्ते इति सर्व्वोपक्रमशेषे सप्तमे वेगे सर्पेण दंशनं कार्य्यम ॥ १७। १८ ॥

चक्रपाणिः—अष्टमे वेगे शिखिपित्तेत्यादिना मृतसञ्जीवनयोगमाह— मृत इति उद्बन्धत्वादिभिस्त्रिभिः सम्बध्यते। लेपौषधनस्यपानानि इत्यादि उद्बन्धत्वत्यादिषु यथायोग्यतया ज्ञयानि ॥ १९ ॥

* गोपित्तयुता रजनीति पाठान्तरम्। † सुरसाग्रन्थिद्विरजनीमधुककुष्ठैरिति वहुषु ग्रन्थेषु पाठः।
‡ उद्बन्धविषजलमृते इति चक्रसम्मतः पाठः।

पृक्काप्लवस्थौणेयकाक्षीशैलेयरोचनातगरम् ।
ध्यामककुङ्कुममांसीसुरसाग्रैलालकुष्ठघ्नम् ॥
बृहतीशिरीषपुष्पश्रीवेष्टपद्मचारटीविशालाः ।
सुरदारुपद्मकेशरसावरकमनःशिलाकौन्त्यः ॥
जात्यर्कपुष्परसरजनीद्वयहिङ्गुपिप्पलीलाक्षाः ।
जलमुद्गपर्णीचन्दनमदनमधुकसिन्धुवाराश्च ॥
शम्पाकलोध्रमयूरकगन्धफलीनाकुलीविडङ्गाश्च ।
पुष्ये संहृत्य समं पिष्ट्वा गुटिका विधेयाः स्युः ॥

चतुर्थे पञ्चमे वापि दर्व्वीकरवदाचरेत् । काकोल्यादिर्हितः षष्ठे पयश्च मधुरो गणः । हितोऽवपीडे ऽगदः सप्तमे विषनाशनः ॥ अथ राजिमतां वेगे प्रथमे शोणितं हरेत् । अगदं मधुसर्पिर्भ्यां संयुक्तं पाययेत च । वान्तं द्वितीये ऽगदं पाययेद् विषनाशनम् । तृतीयादिषु त्रिष्वेव विधिर्दर्व्वीकरोदितः । षष्ठेऽञ्जनं तीक्ष्णतममवपीडश्च सप्तमे । गर्भिणीबालवृद्धानां सिराव्यधविवर्जितम् । विषार्त्तानां यथोदिष्टं विधानं शस्यते मृदु ॥ रक्तावसेकाञ्जनानि नरतुल्यान्यजाविके । गवाश्वयोश्च द्विगुणं त्रिगुणं महिषोष्ट्रयोः । चतुर्गुणन्तु नागानां केवलं सर्व्वपक्षिणाम् । परिषेकान् प्रदेहांश्च सुशीतान् अवचारयेत् । माषकं त्वञ्जनस्येष्टं द्विगुणं नस्यतो हितम् । पाने चतुर्गुणं पथ्यं वमनेऽष्टगुणं पुनः । देशप्रकृतिसात्म्यर्त्तु विषवेगबलाबलम् । प्रधार्य्य निपुणो बुद्ध्या ततः कर्म्म समाचरेत् । वेगानुपूर्व्वमित्येतत् कर्म्मोक्तं विषनाशनम् ॥" इति ॥१९

गङ्गाधरः—पृक्वेत्यादिना मृतसञ्जीवनोऽगदः । पृक्का-विडङ्गान्तानि पुष्ये नक्षत्रे संहृत्य समं पिष्ट्वा जलेन गुटिका विधेयाः स्युः । तानि संहृत्य वा पुष्ये नक्षत्रे जलेन पिष्ट्वा गुड़िका विधेयाः स्युः । अत्र पृक्का पिड़ङ, प्लवः कैवर्त्तमुस्तकम् । स्थौणेयं ग्रन्थिपर्णम् । काक्षी सौराष्ट्रमृत् । शैलेयं शैलजम् । रोचना गोरोचना । ध्यामकं गन्धतृणम् । सुरसाग्रं निर्गुण्डी-मञ्जरी । एला स्थूला । आलं हरितालम् । कुष्ठघ्नमेड़गजा । श्रीवेष्टकं नवनीतखोटी । पद्मचारटी कुम्भाड़लता । सावरको धवललोध्रः । जात्यर्कयोः पुष्पं, तस्य रसः ।

चक्रपाणिः—पृक्केत्यादौ काक्षी सौराष्ट्रिकी मृत् । कुष्ठघ्नः खदिरः । कौन्ती रेणुका । मयूरकः

सर्व्वविषघ्नो जयकृत् विषमृतसञ्जीवनो ज्वरनिहन्ता।
घ्रेय-विलेपन-धारण-धूमग्रहणैर्गृहस्थश्च॥
भूतविषजन्त्वलक्ष्मीकार्म्मणमन्त्राग्न्यशन्यरीन् हन्यात्।
दुःस्वप्न-स्त्रीदोषानकालमरणाम्बुचौरभयम्॥
धनधान्यकार्य्यसिद्धिश्रीपुष्ट्यायुर्व्विवर्द्धनो धन्यः।
मृतसञ्जीवन एष प्रागमृताद् ब्रह्मणा विहितः॥ २०॥

मृतसञ्जीवनोऽगदः।

मन्त्रैर्धमनीबन्धोऽपामार्जनं कार्य्यमात्मरक्षणञ्च।
दोषस्य विषं यस्य स्थाने स्यात् तं जयेत् पूर्व्वम्॥
वातस्थाने स्वेदो दध्ना नतकुष्ठकल्कपानञ्च।
मधुघृतपयोऽम्बुपानावगाहसेकाश्च पित्तस्थे॥

जलं बालकम्। सिन्धुवार इह निर्गुण्ड्याकारश्वेतपुष्प इति भेदः। शम्पाकः चतुरङ्गुलः। लोध्रमिह रक्तलोध्रम्। मयूरकमपामार्गः। गन्धफली प्रियङ्गुः। नाकुली रास्ना। कार्म्मणः परद्रोहोपायो मन्त्रः। विषमृतसञ्जीवनोऽगदः॥ २०॥

गङ्गाधरः—मन्त्वरिष्टाबन्धनं कथं कुर्य्यादित्यत आह—मन्त्रैरित्यादि। धमनीबन्धो विषप्रसरणनिवृत्त्यर्थं धमनीबन्धः कार्य्यो दंशदेशादूर्द्ध्वं चतुरङ्गुले मन्त्रैः सिद्धैर्विषघ्नमन्त्रैस्तथाऽपामार्ज्जनं मन्त्रैः कार्य्यमात्मरक्षणञ्च कार्य्यम्। यस्य दोषस्य स्थाने विषं स्यात् तं दोषं पूर्व्वं जयेत्। तद् यथा। वातस्थाने विषे स्वेदः कार्य्यः, नतकुष्ठयोः कल्कं दध्ना पिबेत्। पित्तस्थे पित्तस्थानगते

क्षपामार्गः। गन्धफली प्रियङ्गुः। नाकुली रास्ना। धारणशब्देन शरीरे धारणम्। गृहस्थ इति गृहे तिष्ठन्। मन्त्रोऽभिचारमन्त्रः। स्त्रीदोषा इति स्त्रीदत्तगरादिदोषाः। प्रागमृतादिति अमृतोत्पत्तेः प्राक्, एतेन चामृतसमानत्वञ्चास्य दर्श्यते॥ २०॥

चक्रपाणिः—मन्त्रैरित्यादौ अपामार्ज्जनमिति प्रतिलोमेन मार्ज्जनं मन्त्रैरेव कार्य्यम्। आत्मरक्षा भूतावेशानभिभवार्थम्। जयेदिति स्थानिनं दोषं जयेत्। स्वेदो यद्यपि निषिद्धत्वेनोक्तः तथापि वातस्थानविशेषत्वाद् विधीयते। स्वेदस्तु प्रायो भोजनादिविधानवत, अस्य प्रयोगश्चतुर्व्विंशत्युप-

क्षारोऽगदः कफस्थानगते स्वेदस्तथा सिराव्यधनम् ।
दूषीविषेऽथ रक्तस्थिते सिराकर्म्म पञ्चविधम् ॥
भेषजमेवं कल्प्यं भिषजा विज्ञाय सर्व्वदा सर्व्वम् ।
स्थानं जयेत् पूर्व्वं स्थानस्थस्याविरुद्धञ्च ॥ २१ ॥
विषदूषितकफमार्गस्रोतःसंरोधरुद्धवायुस्तु ।
मृत इव श्वसेन्मर्त्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च ॥
चर्म्मकषायाः कल्कं विल्वसमं मूर्द्ध्नि काकपदमस्य ।
कृत्वा दद्यात् कटभीकटुकट्फलप्रधमनञ्च ॥
छागगव्यमाहिषाविककौक्कुटाण्डजमांसम् ।
दद्यात् काकपदोपरि मत्ते विषेणैव सहसा ॥

विषे मधुपानं घृतपानं पयःपानमम्बुपानमवगाहसेकौ चाम्बुभिरेव। कफस्थानगते क्षारोऽगदः स्वेदश्च तथा सिरावेधश्च। रक्तस्थिते दूषीविषे पञ्चविधं सिराकर्म्म पञ्च सिरावेधः। भिषजा एवमेतत् प्रकारं विज्ञाय सर्व्वदा सर्व्वं भेषजं कल्प्यम्। पूर्व्वं स्थानं जयेत्। स्थानस्थस्य दोषस्याविरुद्धञ्च कर्म्म कुर्य्यात् ॥ २१ ॥

गङ्गाधरः—दूषितकफेन वायुगतिस्रोतसां रोधात् संरुद्धो वायुयस्य स मर्त्यो मृत इव मरणकाले यथा श्वसेत् तथा श्वसेत्। तत्र किं म्रियते न च म्रियते। असाध्यलिङ्गैर्विहीनश्च स्यात्। चर्म्मकषायाः कल्कं विल्वसमं पलमात्रमस्य मूर्द्ध्नि काकपदं त्रिरेखाकारं छेदनं कृत्वा कटभीकटुकीकट्फलानां प्रधमनं दद्यात्। छागेत्यादि। विषेण सहसा मत्ते काकपदोपरि छागादिमांसं

कर्म्मे नोक्तः। किंवा अग्निशब्देन स्वेदोऽपि गृह्यते। पित्तस्थ इति पित्तस्थानस्थे। दूषीविष इत्यादौ पञ्चविधसिराकर्म्म इति पञ्चशिराव्यधः। स्थानस्थस्येति स्थानगतविषस्याविरुद्धञ्च कुर्य्यादिति शेषः ॥ २१ ॥

चक्रपाणिः—स्रोतःसंरोधेन रुद्धो वायुर्यस्य सः। असाध्यलिङ्गैरिति प्रागुक्तनीलौष्ठादिभिः। चर्म्मकषाया इति चर्म्मचटिकाकषायाः। काकपदमिति काकपदकमिव व्रणम्। कटु इत्यत्र

नासाक्षिकर्णजिह्वाकण्ठनिरोधेषु कर्म्म नस्तः स्यात्।
वार्त्ताकबीजपूरकज्योतिष्मत्यादिभिः पिष्टैः ॥
अञ्जनमक्ष्युपरोधे कर्त्तव्यं वस्तमूत्रपिष्टैस्तु।
दारुव्योषहरिद्राकरवीरकरञ्जनिम्बसुरसैस्तु ॥ २२ ॥
श्वेतावचाश्वगन्धाहिङ्गुमृताकुष्ठसैन्धवं लसुनम्।
सर्षपकपित्थमध्यं टुण्टुकमूलकरञ्जबीजानि ॥
व्योषं शिरीषपुष्पं द्वे च निशे वंशलोचनञ्च समम्।
पिष्ट्वाथ वस्तमूत्रेण च गोश्च पित्तेन * सप्ताहम् ॥
व्यत्यासभावितोऽयं निहन्ति शिरसि स्थितं विषं क्षिप्रम्।
सर्व्वज्वरभूतग्रहविसूचिकाजीर्णमूर्च्छार्त्तिं ॥
उन्मादापस्मारौ काचपटलनीलिकाशिरोदोषान्।
शुष्काक्षिपाकपिल्वार्व्वुदार्म्मकण्डूतमोदोषान् ॥
क्षयदौर्व्वल्यमदात्ययपाण्डुगदांश्चाञ्जनात् तथा मोहान्।
लेपाद्द दिग्धक्षतलीढ़दष्टाद्यष्टविधविषघाती ॥

खण्डीकृतं दद्यात्। नासादिनिरोधे नस्तः कर्म्म स्यात्। कैरित्यत आह—वार्त्ताकेत्यादि। वार्त्ताकं बीजपूरं ज्योतिष्मत्यादिकञ्च पिष्ट्वा नस्यं दद्यात्। अक्ष्युपरोधेऽञ्जनं दारुप्रभृतिभिमूत्रपिष्टैर्दद्यात् ॥ २२ ॥

<u>गङ्गाधरः</u>—श्वेतेत्यादि। श्वेता श्वेतापराजिता। कपित्थमध्यं शस्यम्। टुण्टुकः श्योनाकस्तस्य मूलम्। वंशलोचनान्तं सर्व्वं समं वस्तमूत्रेण पिष्ट्वा भावनामेकां दत्त्वा गोपित्तेनापरां ततो वस्तमूत्रेण चैकामित्येवं सप्ताहं व्यत्यासभावितोऽयमगदः शिरसि स्थितं विषं क्षिप्रं निहन्ति अञ्जनात् तथा लेपात्। दिग्धाद्यष्टविधं दिग्धं शरादिषु लिप्तं क्षतं लीढ़ं दष्टं पीतं विद्धं दूषीविषं

कटुकफला तिक्तालाबु, किंवा कटु लिकुट। ज्योतिष्मतीत्यादीनि षड्विरेचनशताश्रितीयोक्तानि

* गोऽश्वपित्तेनेति वा पाठः।

अर्शःस्वानद्धेषु च गुदलेपो योनिलेपनश्च स्त्रीणाम्।
मूढ़े गर्भे दुष्टे ललाटलेपः प्रतिश्याये॥
वृद्धौ किटिमे कुष्ठे श्वित्रे विचर्च्चिकादिषु च लेपः।
गज इव तरून् विषगदान् निहन्त्यगदो गन्धहस्त्येषः॥२३॥

गन्धहस्तीनामागदः॥

पत्रागुरुमुस्तैला निर्य्यासाः पञ्च चन्दनं तथा पृक्का।
त्वङ् नलदोत्पलबालकहरेणुकोशीरव्याघ्रनखाः॥
सुरदारुकनककुङ्कुमध्यामकुष्ठप्रियङ्गवस्तगरम्।
पञ्चाङ्गानि शिरीषात् व्योषालमनःशिलाजाज्यः॥
श्वेता कटभी करञ्जो रक्षोघ्नः सिन्धुवारिका रजनी।
सुरसाञ्जनगैरिकमञ्जिष्ठानिम्बपत्रनिर्य्यासाः॥
वंशत्वगश्वगन्धाहिङ्गु दधित्थाम्लवेतसं वृक्षाः।
मधुमधुकसोमराजीवचारुहारोचनातगरम्॥

गरञ्चेति। आनद्धेष्वर्शःस्वनेनागदेन गुदलेपः। स्त्रीणां मूढ़े गर्भे योनिलेपनञ्च। दुष्टे प्रतिश्याये ललाटलेपः। एष गन्धहस्तीनामाऽगदः। (गन्धहस्ती अगदः)॥२३॥

<u>गङ्गाधरः</u>—पत्रेत्यादि। पत्रं तेजपत्रमेलान्तं द्वन्द्वसमस्तं पदं, पञ्च निर्य्यासाः "सज्जेरसो गुग्गुलुश्चाप्यहिफेनश्च शिह्लकम्। लोहवान इति ज्ञेया निर्य्यासाः पञ्च कोविदैः"। लोहवान लोबान इति ख्यातः। पृक्का पिड़ङ्गशाकम्। त्वक् गुड़त्वक्। नलदं जटामांसी। व्याघ्रनखः कालाकड़ः, हिंसा नाम। कनकं नागकेशरम्। पियङ्गव इति पदच्छेदः। शिरीषात् पञ्चाङ्गानि मूलत्वक्पत्रपुष्पफलानि। आलं हरितालम्। अजाजी जीरकम्। श्वेता श्वेतापराजिता। कटभी स्वल्पशिरीषः। करञ्जो गोकरञ्जः। रक्षोघ्नः सर्षपः। सिन्धुवारिका निसुन्दारः। सुरसा तुलसी। अञ्जनं रसाञ्जनम्। निम्बस्य पत्रं निर्य्यासश्च। वंशस्य त्वक् नेली। वृक्षा राजवृक्षाः। रुहा दूर्व्वा। रोचनातगरं पीततगर-

शिरोविरेचनानि। दार्व्वित्यादौ श्वेता कटभी। व्यत्यासाद्भावित इति गोपित्तेन भावयित्वा अश्वपित्तेन भावितः॥२२।२३॥

अगदोऽयं वैश्रवणायाख्यातस्त्र्यम्बकेण षष्ठाङ्गः।
अप्रतिहतप्रभावः स्मृतो महागन्धहस्तीति॥
पित्तेन गवां पेष्या गुड़िका सिद्धा तु पुष्ययोगेण।
पानाञ्जनप्रलेपैः प्रसाधयेत् सर्व्वकर्म्माणि॥
पिल्लं कण्डूं तिमिरं रात्र्यन्धं काचमर्व्वुदं पटलम्।
हन्ति सततप्रयोगाद्धितमितपथ्याशिनां पुंसाम्॥
विषमज्वरानजीर्णान् दद्रुकण्डूविसूचिकापामाः।
कुष्ठं किटिमं श्वित्रं विचर्च्चिकां चोपहन्ति नृणाम्॥
विषमूषिकलूतानां सर्व्वेषां पन्नगानाञ्च।
आशु विषं नाशयते मूलजमथ कन्दजं सर्व्वम्॥
एतेन लिप्तगात्रः सर्पान् गृह्णाति भक्षयेच्च विषम्।
कालपरीतोऽपि नरो जीवति नित्यं निरातङ्कः॥
आनद्धे गुदलेपो योनिलेपश्च मूढ़गर्भाणाम्।
मूर्च्छार्त्तिषु च ललाटे लेपनमाहुः प्रधानतमम्॥
भेरीमृदङ्गपटहान् छत्राण्यमुना तथा ध्वजपताकाः।
लिप्त्वाऽहिविषनिरस्त्यै प्रध्वनयेद्ध दर्शयेन्मतिमान्॥
यत्र च सन्निहितोऽयं न तत्र बालग्रहा न रक्षांसि।
न चैव कार्म्मणमन्त्रा भजन्ति नाथर्व्वणो मन्त्राः॥

पादुका। इति षष्ठाङ्गोऽयमगदो वैश्रवणाय कुवेराय त्र्यम्बकेण शिवेनाख्यातो महागन्धहस्तीति नाम्ना। पत्रादीनां पञ्चिर्गवां पित्ते पेष्या, पुष्यनक्षत्रे पिष्ट्वा गुड़िका कार्य्या सिद्धा स्यात्। एतेनागदेन लिप्तगात्रः पुमान् सर्पान् गृह्णाति धारयितुं शक्तः स्यात्, तथा विषं भक्षयेच्च खादितुं शक्तः स्यान्नास्य व्यापत् स्यात्। भेर्य्यादिकमनेन लिप्त्वाऽहिविषनिरस्त्यै निरासार्थं ध्वनयेत्, तद्ध्वनिश्रवणेन विषं निरस्तं स्यात्। छत्राणि ध्वजपताकाश्च लिप्त्वाऽहिविषनिरस्त्यै मतिमान् वद्यो दर्शयेद् विषार्त्तम्। बालग्रहाः स्कन्दादयः। नचैवं

सर्व्वग्रहा न तत्र प्रभवन्ति नचाग्निशस्त्रनृपचौराः।
लक्ष्मीश्च तत्र भजते यत्र महागन्धहस्त्यस्ति॥
संपिष्यमाणे चात्रेमं सिद्धमन्त्रमुदाहरेत्।
मम माता जया नाम जयो नामेति मे पिता।
सोऽहं जय-जयापुत्रो विजयोऽथ जयामि च॥
नमः पुरुषसिंहाय विष्णवे विश्वकर्म्मणे।
सनातनाय कृष्णाय भवाय विभवाय च॥
तेजो वृषाकपेः साक्षात् तेजो ब्रह्मेन्द्रयोर्यमे।
यथाहं नाभिजानामि वासुदेवपराजयम्॥
मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम्।
अनेन सत्यवाक्येन सिध्यतामगदो ह्ययम्॥
निहिनिहि मिनिमिनि संसृष्टे
रक्ष सर्व्वं भेषजोत्तमे स्वाहा॥ २४॥

महागन्धहस्तीनामागदः॥

ऋषभकजीवकयष्टीमधुकोत्पलधान्यकेसराजाज्यः।
ससितगिरिकोलमध्याः पेयाः श्वासज्वरादिहराः॥
हिङ्गु च कृष्णायुक्तं कपित्थरसयुक्तमुग्रलवणाश्च।
समधुसितौ पातव्यौ ज्वरहिक्काकासश्वासघ्नौ॥

कार्म्मणमन्त्राः परद्रोहोपायकुमन्त्रा भजन्ति द्रोहाय नाथर्व्वणोप्याभिचारिकमन्त्रा न भजन्ति। संपिष्यमाणेऽत्र निगदे सिद्धमन्त्रमिममुदाहरेत्। यो वैद्यः पुष्ये नक्षत्रे गोपित्तेनागदमिमं पिंष्यात्, स इमं वक्ष्यमाणं सिद्धमन्त्रं पठन् पिंष्यादिति। तन्मन्त्रमाह—मम मातेत्यादि। स्वाहान्तोऽयं मन्त्रश्चतुर्भिः श्लोकैर्निहीत्यादुत्तरैरिति। महागन्धहस्त्यगदः॥ २४॥

गङ्गाधरः—ऋषभकेत्यादि। ऋषभकादयः सितगिरिमृत्कोलमज्जसहिताः पिष्टाः पेयाः श्वासज्वरादिहराः। हिङ्गित्यादि कृष्णायुक्तं हिङ्गु इत्येकः।

चक्रपाणिः—ऋषभकेत्यादिना विषोपद्रवश्वासादिचिकित्सोच्यते। सितगिरिः श्वेता-

लेहः कोलास्थ्यञ्जनलाजोत्पलघृतर्वमिं हन्ति।
बृहतीद्वयाढ़कीपत्रधूमवर्त्तिस्तु हिक्काघ्नी॥
शिखिवर्हबलाकास्थीनि सर्षपाश्चन्दनञ्च घृतयुक्तम्।
धूमो गृहशयनासनवस्त्रादिषु शस्यते विषजित्॥
घृतयुक्ते नतकुष्ठे भुजगपतिशिरः शिरीषकुसुमं वा।
धूमोऽगदः स्मृतोऽयं सर्व्वविषघ्नः श्वयथुहृच्च॥
जतुसेव्यपत्रगुग्गुलुभल्लातककुभपुष्पसर्ज्जरसाः।
श्वेता धूमा उरगाखुकीटवस्त्रक्रिमिहराः स्युः॥ २५॥
तरुणपलाशक्षारं स्रुतं पचेच्चूर्णितः सह समांशैः।
लोहितमृद्रजनीद्वयमधुकसुरसशुक्लमञ्जरीभिः॥

कपित्थरसयुक्तमुग्रलवणं सावर्चलमित्येकः। इति द्वौ समधुसितौ पातव्यौ। लेह इत्यादि। कोलास्थिमज्जादिभिर्लेहो विषे वमिं हन्ति। अत्र घृतेन लेहः। वृहत्यादीनां त्रयाणां पत्रं पिष्ट्वा धूमपानार्था वर्त्तिः कार्य्या हिक्काघ्नी। शिखीत्यादि। शिखिनो वर्हं पुच्छं, बकस्यास्थीनि, शिखिपुच्छादिचतुष्कं कुट्टयित्वा घृतयुक्तं गृहादिषु धूपयेत्। स च धूमो विषजित् गृहादिषु शस्यते। घृतेत्यादि। नतं कुष्ठञ्चेति द्वे घृतयुक्ते धूपयेदयमेको धूमः। भुजगपतिशिरो दर्व्वीकरादिसर्पस्य मस्तकं शुष्कीकृत्य शिरीषपुष्पञ्चैकीकृत्य धूपयेदयञ्च धूमोऽगदः स्मृतः। जत्वित्यादि। जतु लाक्षा। सेव्यमुशीरम्। ककुभोऽर्ज्जुनस्तस्य पुष्पञ्च। श्वेता श्वेतापराजिता। एतान् पिष्ट्वा धूपयेत्। प्रत्येकमेषां धूमा उरगादिहराः स्युः। वस्त्रक्रिमिर्वस्त्रे जाता यूकाः॥ २५॥

गङ्गाधरः—तरुणेत्यादि। पलाशस्य तरुणं वृक्षं छित्वा पाटयित्वा संशोष्य क्षारं कृत्वा चतुर्गुणे षड्गुणे वा तोये गोलयित्वैकविंशतिवारं परिस्राव्य स्रुतं तज्जलं चतुर्गुणं लोहितमृदादिभिः समांशैश्चूर्णितैः सह पचेत्।

पराजिता। कोलमध्यं बदरमज्जा। भुजगपतिशिर इति द्विमुखसर्पशिरः। पलाशक्षारस्रुतमिति क्षारकल्पेन परिस्राव्य धारितम्, लोहितमृत् गैरिकम्, सुरसमञ्जरी पर्णासभेदः॥ २४—२६॥

लाक्षासैन्धवमांसीहरेणुहिङ्गुद्विसारिवाकुष्ठैः ।
सव्योषवाह्लीकैर्दर्व्वीलेपेन घट्टयेद् यावत् ॥
सर्व्वविषशोथगुल्मत्वग्दोषार्शोभगन्दरप्लीह्नः ।
शोथापस्मारक्रिमिभूतस्वरभेदकण्डुपाण्डुगदान् ।
मन्दाग्नित्वं कासं सोन्मादं नाशयेयुरथ पुंसाम् ।
गुटिकाश्छायाशुष्काः कोलसमास्ताः समुपयुक्ताः ॥ २६ ॥
क्षारगुड़िकाः ।
पीतविषदष्टविद्धेष्वेतद्विषे च वाच्यमुद्दिष्टम् ।
सामान्यतः पृथक्त्वान्निर्द्देशमतः शृणु यथावत् ॥ २७ ॥
रिपुयुक्तेभ्यो नृभ्यः स्वेभ्यः स्त्रीभ्योऽथवा भयं नृपतेः ।
आहारविहारगतं तस्मात् प्रेष्यान् परीक्षेत ॥ २८ ॥
अत्यर्थशङ्कितः स्याद् बहुवागथवाल्पवाग् विगतलक्ष्मीः ।
प्राप्तः प्रकृतिविकारं विषप्रदाता नरो ज्ञेयः ॥

यावद्दर्व्वीप्रलेपस्तावद्दर्व्वीप्रलेपेन घट्टयेत् । कोलप्रमाणा गुड़िकाः कृत्वा छायाशुष्काः कार्य्यास्ताः गुटिकाः समुपयुक्ताः सर्व्वविषादीन् नाशयेयुः । लोहितमृत् रक्तवर्णगिरिमृत् । रजनीद्वयम् सुरसस्य शुक्लनिगुण्ड्या मञ्जरी, श्वेततुलसी-मञ्जरी वा । द्विसारिवा श्यामलताऽनन्तमूलञ्च । वाह्लीकं हिङ्गु, तेन हिङ्गुभागद्वयम् । क्षारगुड़िका ॥ २६ ॥

गङ्गाधरः—पीतेत्यादि । पीतविषादिषु सामान्यतो विषे यद् वाच्यं तदेतदुद्दिष्टं, अतःपरं पृथक्त्वान्निर्द्देशं यथावच्छृणु ॥ २७ ॥

गङ्गाधरः—तद्यथा—रिपुयुक्तेभ्य इत्यादि । नृपते राजमात्रस्य तथान्यस्य रिपुयुक्तेभ्यो रिपुभावयुक्तेभ्यो नृभ्यो व्यभिचारादिदोषवतीभ्यः स्त्रीभ्यश्च विषतो भयं भवति । आहारविहारगतं आहारद्रव्यमिश्रितं विषं ते नृपतये प्रेष्यभृत्यर्द्ददति विहारद्रव्येषु च । तस्मात् प्रेष्यान् परीक्षेत ॥ २८ ॥

गङ्गाधरः—विषदाता ह्येवं ज्ञेयः । तद्यथा । अत्यर्थेत्यादि । विषदाता नरोऽत्यर्थं शङ्कितः स्याद् अतिशङ्की स्वभावत एव स्यात् । बहुवागल्पवाग्

चक्रपाणिः—अतः शृण्विति विषस्य लक्षणं भेषजस्य पृथक् निर्द्देशं शृणु इति । (विषयुक्तमिति विषयुक्तेत्यर्थः ।) स्त्रीभ्य इति सौभाग्यार्थं प्रवृत्ताभ्यः । आहारविहारगतम् इति आहारविहारा

वाष्पसंवृतो भवति। विगतलक्ष्मीः शरीरकान्तिस्तस्य विगता भवति। प्रकृतिविकारं प्राप्तः स्यात्। य एवम्भूतः स्यात् स नरो विषदाता ज्ञेयः। सुश्रुते चोक्तम्। "धन्वन्तरिः काशिपतिस्तपोधर्म्मभृतां वरः। सुश्रुतप्रभृतीन् शिष्यान् शशासाऽहतशासनः॥ रिपवो विक्रमाक्रान्ता ये च स्वे कृत्यतां गताः। सिसृक्षवः क्रोधविषं विवरं प्राप्य तादृशम्। विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः। स्त्रियो वा विविधान् योगान् कदाचित् सुभगेच्छया। विषकन्योपयोगाद् वा क्षणाज्जह्यादसून् नरः। तस्माद् वैद्येन सततं विषाद्रक्ष्यो नराधिपः॥ यस्माच्च चेतोऽनित्यत्वमश्ववत् प्रथितं नृणाम्। न विश्वसेत् ततो राजा कदाचिदपि कस्यचित्॥ कुलीनं धार्म्मिकं स्निग्धं सुभृतं सततोत्थितम्। अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम्। क्रोधपारुष्यमात्सर्य्यमदालस्यविवर्जितम्। जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम्। मेधाविनम् असंश्रान्तमनुरक्तं हितैषिणम्। पटुं प्रगल्भं निपुणं दक्षं मायाविवर्ज्जितम्। पूर्व्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहिताऽगदम्। महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम्॥ प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि। सजालकं गवाक्षाढ्यमात्मवर्गनिषेवितम्। विकक्षसृष्टसंसृष्टं सवितानं कृतार्च्चनम्। परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम्॥ तत्राध्यक्षं नियुञ्जीत प्रायो वैद्यगुणान्वितम्॥ शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः। संविभक्ताः सुमनसो नीचकेशनखाः स्थिराः। स्नाता दृढं संयमिनः कृतोष्णीषाः सुसंयताः। तस्य चाज्ञा विधेयाः स्युर्व्विविधाः परिकर्म्मिणः॥ आहारस्थितयश्चापि भवन्ति प्राणिनो यतः। तस्मान्महानसे वैद्यः प्रमादरहितो भवेत्। महानसिकवोढारः सौपौदनिकपौपिकाः। भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन॥ इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः। विद्याद् विषस्य दातारमेभिर्लिङ्गैश्च बुद्धिमान्॥ न ददात्युत्तरं पृष्टो विवक्षन् मोहमेति च। अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत्। स्फोटयत्यङ्गुलीर्भूमिम् अकस्माद् विलिखेद्धसेत्। वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते। क्षामो विवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्त्यपि। आलभेतासकृद् दीनः करेण च शिरोरुहान्। निर्य्ययासुरपद्वारैर्वीक्षते च पुनःपुनः। वर्त्तते विपरीतस्तु विषदाता विचेतनः। केचिद् भयात् पार्थिवस्य त्वरिता वा तदाज्ञया। असतामपि सन्तोऽपि चेष्टां कुर्व्वन्ति मानवाः। तस्मात् परीक्षणं कार्य्यं भृत्यानामादितो नृपैः। अन्ने पाने दन्तकाष्ठे तथाभ्यङ्गेऽवलेखने। उत्सादने

दृष्ट्वैवं नतु सहसा भोज्यं न्यसेत् तदग्रमग्नौ तु ।
सविषं हि प्राप्यान्नं बहून् विकारान् भजत्यग्निः ॥
शिखिबर्हविचित्रार्च्चिस्तीक्ष्णः सरूक्षकुणपगन्धिश्च ।
स्फुटति सशब्दमेकावर्त्तो विहतार्च्चिरपि च स्यात् ॥
पात्रस्थश्च विवर्णं भोज्यं स्यान्मक्षिकाश्च मारयति ।
क्षामस्वरश्च काकं कुर्य्याद्द विरजेच्चकोराक्षि ॥ २९ ॥

कषाये च परिषेकेऽनुलेपने। स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च। पादुका-पादपीठेषु पृष्ठेषु गजवाजिनाम्। विषजुष्टेषु चान्येषु नस्य-धूमाञ्जनादिषु। लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम्"॥ इति। परीक्षणमाह—दृष्ट्वैवमित्यादि। नृपेण सहसा न तु, भोज्यमेवं दृष्ट्वा त्वग्नौ तत् भोज्यस्य परीक्षणं कुर्य्यात्। तद्यथा। सविषमित्यादि। सविषमन्नमग्नौ क्षिप्तं सम्प्राप्याग्निर्बहून् विकारान् भजति। शिखिबर्हविचित्रार्चिः स्यात् सरूक्षशवगन्धिश्च तीक्ष्णश्च सोऽग्निर्भवति। सशब्दं सोऽग्निः स्फुटति। एकावर्त्तो एकस्मिन्नावर्त्तने भ्रमे विहतार्चिरपि स्यात् सोऽग्निरिति। पात्रस्थं तत् सविषं भोज्यं विवर्णं स्यात्। तच्च पतिता मक्षिका मारयति। काकं तत् सविषं भोज्यं दृष्टवन्तं क्षामस्वरं कुर्य्यात्। तत्सविषभोज्यदर्शनात् चकोराक्षि विरजेत् विरागयुक्तं स्यात्। सुश्रुते चोक्तम्। "नृपभक्ताद् बलिं न्यस्तं सविषं भक्षयन्ति ये। तत्रैव ते विनश्यन्ति मक्षिका वायसादयः। हुतभुक् तेन चान्नेन भृशं चट्चटायते। मयूरकण्ठप्रतिमो जायते चापि दुःसहः। भिन्नार्चिस्तीक्ष्णधूमश्च न चिराच्चोपशाम्यति। चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु। दृष्ट्वान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः। कोकिलः स्वरवैकृत्यं क्रौञ्चस्तु मदमृच्छति। हृष्येन्मयूर उद्विग्नः क्रोशतः शुक-सारिके। हंसः क्ष्वेडति चात्यर्थं भृङ्गराजस्तु कूजति। पृषतो विसृजत्यश्रु विष्ठां मुञ्चति मर्कटः॥ सन्निकृष्टांस्ततः कुर्य्याद्राजस्तान् गृहपक्षिणः। वेश्मनोऽथ विभूषार्थं रक्षार्थं चात्मनः सदा॥" इति॥ २९॥

सविषा इत्यनुवर्त्तते। विरजेत् चकोराक्षीति दृष्ट्वा सविषमन्नं, काकांश्च क्षामस्वरान् दर्शनेनैव कुर्य्यादिति ज्ञेयम्॥ २७—२९॥

पाने नीला राजी वैवर्ण्यं स्वाञ्च नेक्षते छायाम्।
विकृतामथवा पश्यति लवणाक्ते फेनमाला स्यात्॥ ३०॥
पानान्नयोः सविषयोर्गन्धेन शिरोरुजा हृदि च मूर्च्छा च।
स्पर्शेन पाणिशोथः सुप्त्यङ्गुलिदाहतोदनखभेदाः॥
मुखताल्वोष्ठचिमिचिमा जिह्वा शूनवती जड़ा विवर्णा च।
द्विजहर्षहनुस्तम्भास्यदाहनानागलविकाराः॥

गङ्गाधरः—पान इत्यादि। पाने पानीयजलादिद्रव्ये सविषे नीला राजी स्यात्, तत्पानीयस्य वैवर्ण्यञ्च स्यात्, तत्र पानीये द्रव्ये पुमान् स्वां छायाञ्च नेक्षते, अथ यदि पश्यति तदा विकृतां छायां छिद्रादिमतीं पश्यति। लवणाक्ते विषे फेनमाला फेनसमूहः स्यादिति। सुश्रुते चोक्तम्। "द्रवद्रव्येषु सर्व्वेषु क्षीरमद्योदकादिषु। भवन्ति विविधा राज्यः फेनबुद्बुदजन्म च॥ छायाश्चात्र न दृश्यन्ते दृश्यन्ते यदि वा पुनः। भवन्ति यमलाश्छिन्नास्तन्व्यो वा विकृतास्तथा॥ शाकसूपान्नमांसानि क्लिन्नानि विरसानि च। सद्यः पर्य्युषितानीव विगन्धानि भवन्ति च॥ गन्धवर्णरसैर्हीनाः सर्व्वे भक्ष्याः फलानि च। पक्वान्याशु विशीर्य्यन्ते पाकमामानि यान्ति च॥" इति॥ ३०॥

गङ्गाधरः—पानान्नयोरित्यादि। सविषयोः पानान्नयोर्गन्धेन शिरोरुजा हृदये च रुजा स्यात्। मूर्च्छा च भवति। स्पर्शेन तयोः सविषपानान्नयोः पाणिभ्यां संस्पर्शे पाणिशोथः पाणिसुप्तिः स्पर्शाज्ञानं अङ्गुलिदाहतोदौ नखभेदश्च। सुश्रुते च। "पाणिमाप्तं पाणिदाहं नखशातं करोति च। अत्र प्रलेपः श्यामेन्द्र-गोपासोमोत्पलानि च॥" मुखेत्यादि। विषजुष्टेन द्रव्येण जिह्वानिर्लेखने कवले वा कृते मुखादिषु चिमिचिमा स्यात्। जिह्वा तु शूनवती शोफयुता जड़ा विवर्णा च भवति। द्विजानां दन्तानां हर्षो हनुस्तम्भ आस्यदाहो नानागलविकारश्च। सुश्रुते च। "जिह्वानिर्लेखकवलौ दन्तकाष्ठवदादिशेत्। अथास्य धातकीपुष्पपथ्याजम्बूफलास्थिभिः। सक्षौद्रैः प्रच्छिते शोफे कर्त्तव्यं प्रतिसारणम्। अथवाङ्कोठमूलानि त्वचः सप्तच्छदस्य च।

चक्रपाणिः—पान इति मद्यादौ पेये। छायामिति प्रतिबिम्बम्। लवणाक्ते इति पानविशेषणम्॥ ३०॥

आमाशयं प्रविष्टे वैवर्ण्यं स्वेदसदनमुत्क्लेदः ।
दृष्टिहृदयोपरोधो बिन्दुशतैश्चीयते चाङ्गम् ॥
पक्वाशयन्तु याते मूर्च्छामददाहमोहबलनाशाः ।
तन्द्रा कार्श्यञ्च विषे पाण्डुत्वञ्चोदरस्थे स्यात् ॥ ३१ ॥
दन्तौष्ठमांसशोफाः शीर्य्यन्ते दन्तपवने कूर्च्चास्तु ।
केशच्युतिः शिरोरुक् ग्रन्थयो विशीर्णाश्च कूर्च्चः स्यात् ॥

शिरीषमापका वापि सक्षौद्राः प्रतिसारणम् ॥" इति। आमाशयमित्यादि। प्रमादान्मोहाद् वा यदि विषजुष्टमन्नं सेवते तदा तस्यामाशयं प्रविष्टे विषे वैवर्ण्यादयः, दृष्टिहृदयरोधश्च। बिन्दुरूपस्फोटशतैरङ्गमुपचीयते। सुश्रुते चान्यत्। "स चेत् प्रमादान्मोहाद् वा तदन्नमुपसेवते। अष्ठीलावत् ततो जिह्वा भवत्यरसवेदिनी। तुद्यते दह्यते चापि श्लेष्मा चास्यात् प्रसिच्यते। तत्र वाष्पेरितं कर्म्म यच्च स्याद् दान्तकाष्ठिकम्। मूर्च्छां छर्दिमतीसारमाध्मानं दाहवेपथू। इन्द्रियाणाञ्च वैकृत्यं कुर्य्यादामाशयं गतम्। तत्राशु मदनालावू-विम्बीकोषातकीफलैः। छर्द्दनं दध्युदश्विद्भ्यामथवा तण्डुलाम्बुना॥ उपक्षिप्तस्य चान्नस्य वाष्पेणोर्द्ध्वं प्रसर्पता। हृत्पीड़ा भ्रान्तनेत्रत्वं शिरोदुःखञ्च जायते। तत्र नस्याञ्जने कुष्ठं रामठं नलदं मधु। कुर्य्याच्छिरीषरजनी-चन्दनैश्च प्रलेपनम्। हृदि चन्दनलेपन्तु तथा सुखमवाप्नुयात्॥" इति। पक्वाशयन्त्वित्यादि। मोहात् प्रमादात् सविषान्नभक्षणात् पक्वाशयं याते विषे मूर्च्छादयः स्युः। उदरस्थे विषे तन्द्रा कार्श्यं पाण्डुत्वञ्चेति। उदरगतमात्रे आमाशयगतं नोच्यते। अत्र सुश्रुते च। "दाहं मूर्च्छामतीसारं नृणामिन्द्रियवैकृतम्। आटोपं पाण्डुतां कार्श्यं कुर्य्यात् पक्वाशयं गतम्॥ विरेचनं ससर्पिष्कं तत्रोक्तं नीलिनीफलम्। दध्ना दूषीविषारिश्च पेयो वा मधुसंयुतः॥" इति॥ ३१॥

गङ्गाधरः—दन्तौष्ठेत्यादि। दन्तकाष्ठगते विषे दन्तौष्ठमांसशोफः। दन्तपवने कूर्च्चाश्च शीर्य्यन्ते। कूर्च्चाः कूँचीति लोके। उक्तं सुश्रुते। "विशीर्य्यते

चक्रपाणिः—मुखेत्यादिना मुखसम्बन्धे विषलक्षणम्। दन्तेत्यादिना दन्तधावनकूर्चादीनां

दुष्टेऽञ्जनेऽक्षिदाहः स्रावोऽप्युपदेहशोथरागाश्च।
आद्यैरादौ कोष्ठः स्पृश्यैस्त्वग् दह्यते दुष्टैः॥
स्नानाभ्यङ्गोत्सादनवस्त्रालङ्कारवर्णकैर्दुष्टैः।
कण्ड्वर्त्तिकोठपिड़कारोमोद्गमचिमिचिमाः शोफाः॥
एते च करचरणतोददाहक्लमाविपाकाश्च।
भूपादुकाश्वगजचर्म्मकेतुशयनासनैर्दुष्टैः॥

कूर्च्चकस्तु दन्तकाष्ठगते विषे। जिह्वादन्तौष्ठमांसानां श्वयथुश्चोपजायते॥" अथास्य धातकीपुष्पेत्याद्यौषधं जिह्वानिर्लेखककवले दर्शितम्। विषजुष्टेन द्रव्येण शिरोलेपने कृते केशच्युतिः शिरसि रुक् ग्रन्थयो जायन्ते कूर्च्चश्च विशीर्णः स्यात्। सुश्रुते च। "केशशातः शिरोदुःखं खेभ्यश्च रुधिरागमः। ग्रन्थिजन्मोत्तमाङ्गेषु विषजुष्टे तु लेपने॥" इति। दुष्टे इत्यादि। विषेण दुष्टेऽञ्जने नेत्रदत्तेऽक्षिदाहः। अक्ष्णोरेव स्रावश्चातिशयोपदेहशोथरागाः। सुश्रुते च। "अश्रूपदेहो दाहश्च वेदना दृष्टिविभ्रमः। अञ्जने विषसंसृष्टे भवेदान्ध्यमथापि वा। तत्र सद्योघृतं पेयं तर्पणञ्च समागधम्। अञ्जनं मेषशृङ्गस्य निर्य्यासो वरुणस्य च। मुष्ककस्याजकर्णस्य फेनो गोपित्तसंयुतः। कपित्थमेषशृङ्ग्योश्च पुष्पं भल्लातकस्य वा। एकैकं कारयेत् पुष्पं बन्धूकाङ्कोठयोरपि॥" इति। अथ विषेण दुष्टैराद्यैः खाद्यद्रव्यैः खादितैरादौ कोष्ठो दह्यते। एवं विषेण दुष्टैः स्पृश्यद्रव्यैः स्पृष्टैरादौ त्वग् दह्यते। इति। स्नानेत्यादि। विषेण दुष्टैः स्नानादिभिर्द्रव्यैः स्नानादिषु कण्डूप्रभृतयः शोफाश्च स्युः। तदुक्तं सुश्रुते—"पिच्छिलो बहलोऽभ्यङ्गो विवर्णो वा विषान्वितः। स्फोटजन्म रुजा स्रावस्त्वक्पाकः स्वेदनं ज्वरः। दरणञ्चापि मांसानामभ्यङ्गे विषसंयुते॥ तत्र शीताम्बु-सिक्तस्य कर्त्तव्यमनुलेपनम्। चन्दनं तगरं कुष्ठमुशीरं वेणुपत्रिका। सोमवल्ल्यमृता श्वेता पद्मं कालीयकं त्वचम्। कपित्थरसमूत्राभ्यां पानमेतच्च युज्यते। उत्सादने परीषेके कषाये चानुलेपने। शय्यावस्त्रतनुत्रेषु ज्ञेयमभ्यङ्गलक्षणैः॥" इति। एते चेत्यादि। राज्ञो भूपादुकादिभिर्विषेण दुष्टैरेते च कण्ड्वर्त्तिकोठपिड़कारोमोद्गमचिमिचिमशोफाः करचरणतोदादयश्च स्युः। उक्तं सुश्रुते। "अस्वास्थ्यं कुञ्जरादीनां लालास्रावोऽक्षिरक्तता। स्फिक्पायु-

विषदुष्टामामेव लक्षणं प्रकरणाज्ज्ञेयम्। दन्तपवनस्य कूर्च्चः दन्तमलशोधनकूर्च्चः। विशीर्य्येत

माल्यमगन्धं म्लायति शिरोरुजारोमहर्षकरम् ।
स्तम्भयति खानि नासामुपहन्त्यथ दर्शने धूमः ॥
कूपतड़ागादिजलं दुर्गन्धं सकलुषं विवर्णञ्च ।
पीतं श्वयथुं कोठान् पिड़काश्च करोति मरणञ्च ॥ ३२ ॥

मेढ्रमुष्केषु युक्तेषु स्फोटसम्भवः । तत्राभ्यङ्गवदेवेष्टा यानवाहनयोः क्रिया ॥ शोफः स्रावस्तथा स्वापः पादयोः स्फोटजन्म च । भवन्ति विषजुष्टाभ्यां पादुकाभ्यामसंशयम् ॥ उपानत्पादपीठानि पादुकावत् प्रसादयेत् । भूषणानि हतार्च्चींषि न विभान्ति यथा पुरा । स्वानि स्थानानि हन्युश्च दाहपाकावदारणैः ॥" इति । माल्यमित्यादि । विषेण दुष्टं माल्यमगन्धं सत् म्लायति शिरोरुजादिकरञ्च । सुश्रुते च । "शिरोऽभ्यङ्गः शिरस्त्राणं स्नानमुष्णीषमेव च । स्रजश्च विषसंसृष्टाः साधयेदनुलेपवत् ॥" इति । विषदुष्टो धूमः नासया पीतः खानि छिद्राणि स्तम्भयति । नासामुपहन्त्यथ दर्शने चक्षुषी उपहन्ति । सुश्रुते च । "शोणितागमनं खेभ्यः शिरोरुक् कफसंस्रवः । नस्यधूमगते लिङ्गमिन्द्रियाणान्तु वैकृतम् ॥ तत्र दुग्धैर्गवादीनां सर्पिः सातिविषैः शृतम् । पाने नस्ये च सश्वेतं हितं समदयन्तिकम् ॥" इति । अन्यच्च । "गन्धहानिर्विवर्णत्वं पुष्पाणां म्लानता भवेत् । जिघ्रतश्च शिरोदुःखं वारिपूर्णे च लोचने ॥ तत्र वाष्पेरितं कर्म्म मुखालेपे च यत् स्मृतम् ॥ मुखालेपे मुखं श्यावं युक्तमभ्यङ्गलक्षणैः । पद्मिनीकण्टकप्रख्यैः कण्टकैश्चोपचीयते । सक्षौद्रञ्च घृतं पानं प्रलेपश्चन्दनं घृतम् । पयस्या मधुकं फञ्जी बन्धुजीवपुनर्नवम् ॥ कर्णतैलगते श्रोत्र-वैगुण्यं शोफवेदने । कर्णस्रावश्च तत्राशु कर्त्तव्यं प्रतिपूरणम् । स्वरसो बहुपुत्रायाः सघृतः क्षौद्रसंयुतः । सोमवल्करसश्चापि सुशीतो हित इष्यते ॥" इति । कूपेत्यादि । राज्ञा स्वराष्ट्राक्रमनिवारणार्थं शत्रूणां स्वराज्ये कूपतड़ागादिजलं यदि विषयोगाद् दूषितं क्रियते अथवा शत्रुभिः क्रियत, तदा तज्जलं दुर्गन्धादि भवति । पीतश्च श्वयथुकोठादीनि करोति ॥ ३२ ॥

इत्यस्य शीर्णः स्यात् । खाद्यैरिति भोज्यैः । स्पृश्यैरित्यभ्यङ्गादिभिः । माल्यमिति विषदुष्टं माल्यम् । नासामुपहन्तीति दर्शनमिति चक्षुः ॥ ३१ । ३२ ॥

आदौ चामाशयगे वमनं त्वक्स्थे प्रदेहसेकादि।
कुर्य्यात् भिषक् चिकित्सां दोषबलञ्चैव हि समीक्ष्य ॥३३॥
इति मूलविषविशेषाः प्रोक्ताः शृणु जङ्गमस्यातः।
सविशेषचिकित्सितमेवादौ तत्रोच्यते तु सर्पाणाम् ॥
दर्व्वीकरा मण्डलिनो राजिमन्तस्तथैव च।
सर्पा यथाक्रमं वातपित्तश्लेष्मप्रकोपणाः ॥
दर्व्वीकरः फणी ज्ञेयो मण्डली मण्डलाः फणाः।
बिन्दुलेखो हि चित्राङ्गः पन्नगः स्यात् स राजिमान् ॥
विशेषात् कटुकं रूक्षमम्लोष्णं स्वादु शीतलम्।
विषं यथाक्रमं तेषां तस्माद् वातादिकोपनम् ॥ ३४ ॥

गङ्गाधरः—तत्रादौ तज्जलमिश्रिते पीते विषे त्वामाशयगे वमनं भिषक् दोषबलं समीक्ष्य चिकित्सां कुर्य्यात्। त्वक्स्थे विषे प्रदेहसेकादि चिकित्सां कुर्य्यात्। इति मूलविषविशेषाः प्रोक्ताः व्याख्याताः। अत ऊर्द्ध्वं जङ्गमस्य विषस्य विशेषान् शृणु। सुश्रुते चोक्तम्। "युक्तसेनस्य नृपतेः परानभिजिगीषतः। भिषजा रक्षणं कार्य्यं यथा तदुपदेक्ष्यते। विजिगीषुः सहामात्यैर्यात्रायुक्तः प्रयत्नतः। रक्षितव्यो विशेषेण विषादेव नराधिपः ॥ पन्थानमुदकं छायां भक्तं यवसमिन्धनम्। दूषयन्त्यरयो यस्माज्जानीयाच्छोधयेत्तथा ॥ तस्य लिङ्गं चिकित्सा च कल्पस्थाने प्रचक्ष्यते ॥" इति ॥ ३३ ॥

गङ्गाधरः—दर्व्वीकरेत्यादि। दर्व्वीकरादयस्त्रिविधाः सर्पा यथाक्रमं वातपित्तश्लेष्मप्रकोपणाः। तत्र दर्व्वीकरो नाम सर्पः फणी फणावान् शीघ्रगामी ज्ञेयः। मण्डली मण्डलमस्य फणा मण्डला मण्डलाकारा मन्दगामी पृथुश्च स मण्डली सर्पः। यः पन्नगो बिन्दुलेखावान् चित्राङ्गश्च स्यात् स राजिमान् सर्प उच्यते। यस्मात् तेषां दर्व्वीकरमण्डलिराजिमतां विषं विशेषाद् यथाक्रमं कटुकरूक्षमम्लोष्णं स्वादुशीतलं तस्माद् वातादिकोपनम्। दर्व्वीकराणां विषं

चक्रपाणिः—मण्डलीति मण्डलयुक्तम्। बिन्दुना लेखया च विचित्रम् अङ्गं यस्य स तथा। दर्व्वीकरादीनान्तु प्रपञ्चस्त्विह पराधिकारत्वेन न कृतः। विशेषादित्यादौ कटुकरूक्षमधिकं दर्व्वीकराणाम्, अम्लोष्णं मण्डलीनाम्, स्वादुशीतं राजिमताम्, त्रिदोषकोपनत्वेन वातादिकोपनम्। विशेषादिह विषञ्च यद्यप्यव्यक्तरसमुक्तं तथापीह कटुकादिरसविधानं अनुरसाभिप्रायेण ज्ञेयम्।

दर्व्वीकरकृतो दंशः सूक्ष्मदंष्ट्रापदोऽसितः ।
निरुद्धरक्तः कूर्म्माभो वातव्याधिकरो मतः ॥
पृथ्वर्पितः सशोफश्च दंशो मण्डलिभिः कृतः ।
पीताभः पीतरक्तश्च पित्तरक्तविकारकृत् ॥
राजिमद्भिः कृतो दंशः पिच्छिलः स्थिरशोफकृत् ।
स्निग्धः पाण्डुश्च सान्द्रासृक् श्लेष्मव्याधिसमीरणः ॥ ३५ ॥
वृत्तभोगो महाकायः श्वसन् * ऊर्द्ध्वेक्षणः पुमान् ।
समाङ्गः शिरसा स्थूलः स्त्रीत्वतः स्याद् विपर्य्ययात् ॥
क्लीवः स्रस्तस्त्वधोदृष्टिः स्वरहीनः प्रकम्पते ।
स्त्रिया दष्टो विपर्य्यस्तरेभिः पुंसा नरो मतः ॥

कटु-रूक्षं वातकोपनम्, मण्डलिनां विषमत्युष्णं पित्तकोपनम्, राजिमतां विषं स्वादु-शीतलं श्लेष्मकोपनमिति ॥ ३४ ॥

गङ्गाधरः—तेषां दंशलक्षणान्याह—दर्व्वीकराणां दंष्ट्रापदो दंष्ट्राचिह्नमसितः निरुद्धरक्तश्च कूर्म्माभ ऊर्द्ध्वमध्यदेशः वातव्याधिकरः। मण्डलिभिः कृतो दंशः पृथक्रूपेणार्पितः सशोफश्च पीताभः पीतरक्तवर्णः पित्तरक्तविकारकृत्। राजिमद्भिः सर्पैः कृतो दंशः पिच्छिलः स्थिरशोफकृत् स्निग्धश्च पाण्डुश्च सान्द्रासृक् च श्लेष्मरोगसमीरणकृत् ॥ ३५ ॥

गङ्गाधरः—वृत्तेत्यादि। यः सर्पो वृत्तभोगः सुदृश्यफणः महाकायश्च श्वसन् भवत्यूर्द्ध्वेक्षणः समाङ्गः शिरसा स्थूलः स्थूलमस्तकः स पुमान् सर्पो ज्ञेयः। अतो विपर्य्ययात् असम्यग्वृत्तभोगा अमहाकायाऽधोदर्शना अल्पं श्वसन्ती न च समाङ्गी अस्थूलमूर्द्धा च स्त्रीसर्पी स्यात्। अत आभ्यां विपर्य्ययात् क्लीवः सर्पः। एषां मध्ये स्त्रिया दष्टो नरः स्रस्तो भ्रष्टगतिः स्वरहीनोऽधोदृष्टिः प्रकम्पते। यथा आतपे कटुकत्वं तद्वदिहापि, किंवा अव्यक्तदशायामेव अम्लकटुकादीनामभिव्यक्तत्वं ज्ञेयम्। पृथ्वर्पित इति अवगाढदंष्ट्रार्पितः ॥ ३४ । ३५ ॥

चक्रपाणिः—वृत्तभोगीत्यादिना सर्पाणां तीव्रविषज्ञानार्थं पुनर्भेदमाह। तत्कृतचिकित्साभेद इहानुक्तोऽपि तन्त्रान्तरे ज्ञेयः। तथाहि 'सायिले पच्यते रात्रौ स्त्रियस्तीव्रविषाः सदा'। तथा 'स्त्रीदष्टो भिषजा कार्य्यः सूपचारस्त्वनारभे' इति। क्लीवो नपुंसकः। स्वरहीन इत्यादि।

---

* सर्पन् इति पाठान्तरम्।

व्यामिश्रलिङ्गरेतैस्तु शण्डदष्टं वदेन्नरम्।
इत्येतदुक्तं सर्पाणां स्त्रीपुंक्लीवनिदर्शनम्॥
पाण्डुवक्त्रस्तु गर्भिण्या शूनौष्ठोऽप्यसितेक्षणः।
जृम्भाक्रोधोपजिह्वार्त्तो लूतया * रक्तमूत्रवान्॥
सर्पो गोधेरको नाम गोधायाः स्याच्चतुष्पदः।
कृष्णसर्पेण तुल्यः स्यान्नाना स्युर्मिश्रजातयः॥
गूढ़सम्पादितं वृत्तं पीड़ितं लम्बितार्पितम्।
सर्पितञ्च भृशावाधं दंशा येऽन्ये न ते भृशाः॥
तरुणाः कृष्णसर्पास्तु गोनसाः स्थविरास्तथा।
राजिमन्तो वयोमध्ये भवन्त्याशीविषोपमाः॥ ३६॥

एभिर्विपर्य्यस्तैर्लक्षणैः पुंसा दष्टो नरो मतः, ऊर्द्ध ह्ययं प्रेक्षते। न च स्वरहीनो भवति नच कम्पते। एतैर्व्यामिश्रलक्षणैस्तु ऊर्द्ध्वाधोदृष्टिरीषत्स्वरभङ्गो यः स्यात् तं नरं शण्डदष्टं वदेत्। गर्भिण्या सर्प्या दष्टो नरः पाण्डुवक्त्रः शूनौष्ठोऽसितेक्षणश्च स्यात्। (अथ कीटदष्टलक्षणमाह—जृम्भेत्यादि। १) लतया (सुतया) दष्टो नरो जृम्भाद्यार्त्तो रक्तमूत्रवान् भवति। गोधेरको गोधाया जातश्चतुष्पदः सर्पो गोधेरको नाम, स कृष्णसर्पेण तुल्यः स्यात्। मिश्रजातयस्तु नानाविधाः स्युः। यद् दंशनं गूढ़सम्पादितं तद् भृशाबाधं यच्च वृत्तं वर्त्तुलं लम्बितार्पितं लम्बिताकृतिदंशनं यच्च पीड़ितं यच्च सर्पितं तत् सर्व्वं भृशाबाधं भृशमाबाधं करोति। ये चान्ये दंशास्ते तु न भृशा न भृशबाधकाः। तरुणा इत्यादि। दर्व्वीकराः कृष्णसर्पास्तरुणा युवान आशीविषोपमा भवन्ति। गोनसा मण्डलिनः स्थविरा आशीविषोपमा भवन्ति। राजिमन्तस्तु वयोमध्ये यौवनादुत्तरवयस्काः प्राग्वार्द्धक्याद् आशीविषोपमा भृशा भवन्ति॥ ३६॥

गूढ़सम्पादितमत्यवगाढं वृत्तम् ऊर्द्ध्वं परिवृत्तं पीड़ितमतिमात्ररुजाकरम्। लम्बितार्पितम् अर्पितसकलदंष्ट्राप्राप्तलक्षणम्। वयोभेदेन दर्व्वीकरादीनां तीव्रतामाह—तरुणा इत्यादि कृष्णसर्पा इति। गोनसाः इति मण्डलिनः। आशीविषोपमा इति दृष्टिनिश्वासविषोपमाः॥ ३६॥

* लूतयेत्यत्र सूतयेति बहुसम्मतः पाठः।

सर्पदंष्ट्राश्चतस्रस्तु तासां वामाधरासिता।
पीता वामोत्तरा दंष्ट्रा रक्ता श्यावाधरोत्तरा॥
यन्मात्रः पतते बिन्दुर्गोबालात् सलिलोद्धृतात्।
वामाधरायां दंष्ट्रायां तन्मात्रं स्यादहेर्विषम्॥
एकद्वित्रिचतुर्वृद्धिर्विषभागोत्तरोत्तरा।
सवर्णास्तत्कृता दंशा बहूत्तरविषा भृशाः॥ ३७॥

गङ्गाधरः—सर्पदंष्ट्रा इत्यादि। सर्पाणां चतस्रो दंष्ट्रा बृहद्दन्ता वर्त्तन्ते। तासां दंष्ट्रानां चतसृणां मध्येऽधरा वामा दंष्ट्रा अधस्ताद् या साऽसिता कृष्णा। या चोत्तरा ऊर्द्धा वामा दंष्ट्रा सा पीता। दक्षिणा त्वधरा दंष्ट्रा रक्ता उत्तरा दक्षिणा दंष्ट्रा श्यावा भवति। यन्मात्र इत्यादि। गोबालात् गोः पुच्छैकस्माद्बालात् सलिलोद्धृताद् यावन्मात्रो जलस्य विन्दुः पतते अहेः सर्पस्य वामाधरदंष्ट्रायां तन्मात्रं विषं स्यात्। विषभागस्य उत्तरोत्तरदंष्ट्राया-मेकद्वित्रिचतुर्वृद्धिः। तस्या एकस्या दंष्ट्राया एकभागस्तदूर्द्ध्वं वामदंष्ट्रायां द्वौ भागौ तथाविधौ द्वौ विन्दू दक्षिणायामधरदंष्ट्रायां त्रयो विन्दव उत्तरायां चत्वारो विन्दव इति। सवर्णा इत्यादि। सर्पो यया दंष्ट्रया दशति तया कृता दंशास्तद्दंष्ट्रायाः सवर्णाः स्युः। बहूत्तरविषा भृशा इति उत्तरोत्तरदंष्ट्रादंशा बहुविषा भृशाश्च भवन्ति॥ ३७॥

चक्रपाणिः—सर्पदंष्ट्रा इत्यादिना दंष्ट्राभेदं दंशविशेषज्ञानार्थमाह। दंशस्याधरोत्तरेति दक्षिणाधरा रक्ता दक्षिणोत्तरा तु श्यावा। एकद्वित्रिचतुर्वृद्धिर्विषभागोत्तरोत्तरमिति एकद्वित्रि-चतुरुपजातवृद्धिविषविभागे उत्तरोत्तरमिति वाक्यार्थः। सवर्णा यथास्वदंष्ट्रासमानवर्णाः। बहूत्तरविषा इति उत्तरोत्तरं बहुविषाः यथोत्तरं बहुविषाः। भृशा इति दुःखसाध्याः। दुःखत्व-मपि यथोत्तरं ज्ञेयम्। ननु पूर्व्वं दर्व्वीकरादीनां दंशस्य वर्णभेद उक्तः, इदानीन्तु दंष्ट्राभेदेन वर्णभेद उच्यते, तेन सर्व्वत्रैव दर्व्वीकरादौ सर्व्ववर्णोपपत्तिः, ततः पूर्व्वोक्तदंशवर्णविरोधः। उक्तञ्च अत्रैवार्थे आषाढ़वर्मणा - यत् तु दर्व्वीकरमण्डली असितः पीतश्च वर्णतो दंश इति लक्षणेन। यस्मात् अनेकवर्णास्तु दंशाः। अत्रोच्यते दंष्ट्रानुकारिवर्णानाम उल्लेखो दंशमात्र-स्थिते विषे भवति। दर्व्वीकरादिषु विहितो यः वर्णः स प्रविसृते विषे भवतीति अवस्थाभेदान्न विरोधः। उक्तञ्च परिहारवार्त्तिके 'दंशस्वतः वर्णं दोषजे विसृजेद्' इति॥ ३७॥

सर्पाणामेव विण्मूत्रात् कीटाः स्युः कीटसम्मताः।
दूषीविषाः प्राणहरा इति सङ्क्षेपतो मताः॥
गात्रं रक्तं सितं कृष्णं श्यावं वा पिड़कायुतम्।
सकण्डूरागवीसर्प-पाकि स्यात् कुथितं तथा॥
कीटैर्दूषीविषैर्दष्टं लिङ्गं प्राणहरं शृणु।
सर्पदष्टे तथा शोथो वर्द्धते सोग्रगन्ध्यसृक्॥
दंशेऽक्षिगौरवं मूर्च्छा स रुगार्त्तः श्वसित्यपि।
तृष्णारुचिपरीतश्च भवेद्द दूषीविषार्द्दितः॥ ३८॥
दंशमध्ये तु यत् कृष्णं श्यावं वा जालकान्वितम्।
दद्र्वाकृति भृशं पाक-क्लेदकोथज्वरान्वितम्।
दूषीविषाभिर्लूताभिस्तं दष्टमिति निर्द्दिशेत्॥

गङ्गाधरः—सर्पानुक्त्वा कीटानाह—सर्पाणामित्यादि। सर्पाणामेव विण्मूत्रात् ये कीटाः स्युस्ते कीटा दूषीविषाः प्राणहरा इति द्विविधाः सविषकीटतया सम्मता इति सङ्क्षेपतः कीटा मताः, विस्तरस्त्वेषां सुश्रुतोक्तो दर्शितः प्राक्। तत्र दूषीविषकीटदष्टलक्षणमाह—गात्रमित्यादि। दूषीविषैः कीटैर्दष्टं गात्रं दष्टप्रदेशरूपं गात्रं रक्तादिकं स्यात्। प्राणहरं कीटं लिङ्गैः शृणु। प्राणहरकीट-लक्षणमाह—सर्पदष्टे यथा शोथस्तथा प्राणहरकीटदष्टे शोफ उग्रगन्ध्यसृग् वर्द्धते। दूषीविषकीटदंशलक्षणमुक्तम्, तदर्द्दितपुरुषलक्षणमाह—दंशेऽक्षीत्यादि। दूषीविषकीटदंशेऽक्षिगौरवं मूर्च्छा च स्यात्। स दूषीविषकीटार्द्दितः पुरुषो रुगार्त्तः सन् श्वसित्यपि तृष्णारुचिपरीतश्च भवेदिति॥ ३८॥

गङ्गाधरः—दूषीविषकीटविशेषदष्टलक्षणमाह—दंशमध्ये त्वित्यादि। यस्य पुंसो दंशमध्ये कृष्णादि स्यात् तं दूषीविषाख्यलूताभिर्दष्टमिति निर्द्दिशेत्।

चक्रपाणिः—कीटोत्पत्तिमाह—सर्पाणामित्यादि। कीटशब्दनिरुक्त्यर्थमनयोरुपादानम्, तेन अन्यान्यपि कीटकारणानि भवन्तीति ज्ञेयम्। उक्तं हि सुश्रुते—'सर्पाणां शुक्रविण्मूत्रशवपूत्यण्ड-सम्भवाः। वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः' इति। कीटाश्च यद्यपि सुश्रुते वातपित्तकफसन्निपातकोपनाः कुम्भीनसादयः सप्तषष्टिः प्रतिपादिताः, तथापीह दूषीविषाः प्राणहरविषाः इति द्विविधाः। उग्रगन्ध्यसृक् वर्द्धते इति उग्रगन्धिलोहितम्॥ ३८॥

चक्रपाणिः—दंशस्य मध्य इत्यादिना दूषीविषलूतादष्टलक्षणम्। लूताश्च अन्यत्राष्टौ साध्याः

सर्व्वासामेव तासाञ्च दंशे लक्षणमुच्यते ।
शोफः श्वेता सिता रक्ता पीता वा पिड़का ज्वरः ।
प्राणान्तको भवेद् दाहः श्वासहिक्काशिरोग्रहाः ॥
आ दंशाच्छोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः ।
रोमहर्षश्च दाहश्चाप्याखुदूषीविषार्द्दिते ॥
मूर्च्छाङ्गशोथवैवर्ण्य-क्लेदशब्दाश्रुतिज्वराः ।
शिरोगुरुत्वं लालासृक्छर्द्दिश्चासाध्यमूषिकैः ॥
कार्ष्ण्यं श्यावत्वमथवा नानावर्णत्वमेव च ।
मोहोऽथ वर्च्चसो भेदो दष्टे स्यात् कृकलासकैः ॥
दहत्यग्निरिवादौ तु भिनत्तीवोर्द्धमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात् तु तिष्ठति ॥

षोड़शविधा लूतास्तासामष्टौ कृच्छ्रसाध्या दूषीविषाख्या इह तन्त्रे, शेषा असाध्याः प्राणहरास्तत्र आद्या अष्टौ त्रिमण्डला श्वेता कपिला पीतिका आलविषा मूत्रविषा रक्ता कसना चेति कृच्छ्रसाध्या आभिर्दष्टमिति निर्द्दिशेत् । शेषास्त्वष्टौ सुश्रुतोक्ताः प्राग् दर्शिताः । शोफ इत्यादिना तासां लक्षणमाह—दंशमध्ये शोफः श्वेतादिः पिड़का ज्वरश्च दाहादिश्च प्राणान्तके लूतादष्टे भवेत् । प्राणान्तकलूता अष्टौ । सौवर्णिका लाजवर्णा जालिनी एणीपदी कृष्णा अग्निवर्णा काकाण्डा मालागुणा चेति ।

मूषिकदष्टमाह—आ दंशादित्यादि । आखुविषार्द्दिते आ दंशात् सर्व्वत्र पाण्डुवर्णं शोणितं भवति मण्डलादीनि च भवन्ति । अष्टादश मूषिकाः सुश्रुतोक्ता दर्शितास्तेषामेतानि लक्षणानि आखूनां येषां दष्टे भवन्ति त आखवो दूषीविषा उच्यन्ते । येषु वक्ष्यमाणलक्षणानि स्युस्तेऽसाध्यमूषिका उच्यन्ते । मूर्च्छेत्यादीन्यसाध्यमूषिकदष्टलक्षणानि भवन्ति शुक्रविषा मूषिकाः । कार्ष्ण्यमित्यादि । कृकलासकैर्दष्टे कार्ष्ण्यादीनि भवन्ति । वृश्चिकदष्टलक्षणमाह—दहतीत्यादि । वृश्चिकस्य विषमादौ दंशनमात्रेऽग्निरिव दहति । आशु च ऊर्द्धं भिनत्तीव याति, पश्चाद् दंशे तिष्ठति ।

असाध्याश्चाष्टौ त्रिमण्डलाः सौवर्णिकादय उक्तास्तथा दूषिकत्वात् कण्टकवृश्चिकमण्डूकमत्स्य-जलौकाशतपदीमशकमक्षिकाणां सुश्रुतादिषु प्रपञ्चार्थिभिः प्रपञ्चोऽनुसरणीयः । इह तु तन्त्रकारेण

दष्टोऽसाध्यस्तु हृद्घ्राण-रसनोपहतो नरः।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्॥
विसर्पः श्वयथुः शूलं ज्वरश्छर्द्दिरथापि च।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्य्यते॥
हृष्टरोमोच्चटिङ्गेन स्तब्धलिङ्गो भृशार्त्तिमान्।
दष्टः शीतोदकेनैव सिक्तान्यङ्गानि मन्यते॥
एकदंष्ट्रार्द्दितः शूनः सपीतः सरुजस्तथा।
छर्द्दिर्निद्रा च सविषैर्मण्डूकदष्टलक्षणम्॥
मत्स्यास्तु सविषाः कुर्य्युर्दाहशोथरुजस्तथा।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः॥
विदाहं श्वयथुं तोदं स्वेदन्तु गृहगोधिका।
दंशे स्वेदं रुजं दाहं कुर्य्याच्छतपदीविषम्॥

असाध्यवृश्चिकदष्टलक्षणमाह—दष्ट इत्यादि। वृश्चिकैर्दष्टोऽसाध्यस्तु हृदि घ्राणे रसनायां चोपहतो नरः पतद्भिर्मांसैरत्यर्थं वेदनार्त्तः सन्नसून् जहाति। विसर्प इत्यादि। कणभैश्च मरविशेषैर्दष्टे विसर्पादीनि स्युर्दंशश्च विशीर्य्यत इति लक्षणम्। हृष्टेत्यादि। उच्चटिङ्गेन दष्टः पुमान् हृष्टरोमादिः सन् शीतोदकेन सिक्तानीवाङ्गानि मन्यते। एकेत्यादि। सविषैर्मण्डूकैर्दष्टस्य लक्षणं एकदंष्ट्रार्पितो दंशः स्याच्छूनश्च सपीतः सरुजश्च, छर्द्दिश्च निद्रा च भवति। मत्स्या इत्यादि। सविषा मत्स्या दष्टवन्तो दाहादीनि कुर्य्युः। जलौकसस्तु सविषाः कण्ड्वादिकं कुर्य्युस्तत्र सुश्रुतोक्तविशेषः प्राग् दर्शितः। विदाहमित्यादि। गृहगोधिका विदाहादीनि कुर्य्यात्। शतपदीविषं दंशे स्वेदादीनि कुर्य्यात्।

प्रपञ्चो न क्रियते। आ दंशादित्यादि आखुविषलक्षणम्। कणभश्च कीटविशेष इति सुश्रुते कीटविशेषे पठितः। एकदंष्ट्रार्द्दित इति एकया एव दंष्ट्रया कृतो दंश इत्यर्थः। अस्थिसारा विषा उक्ता जलौकाश्च, षट्पदा च उक्ताः संदंशविषाः। गलगोलिकां ज्येष्ठामित्याहुः। अन्ये तु

**कण्डूमान् मशकैरीषच्छोथः स्यान्मन्दवेदनः ।**
**असाध्यकीटसदृशमसाध्यमशकक्षतम् ॥**
**सद्यःप्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ।**
**पिड़का मक्षिकादंशे तासान्तु स्थगिकाऽसुहृत् ॥ ३९ ॥**

कण्डूमानित्यादि । मशकैर्दष्टे पुमान् कण्डूमान् ईषच्छोथो यस्य स ईषच्छोथः । तत्रासाध्यमशकक्षतमसाध्यकीटसदृशं स्यात् । पञ्चधा मशकाः सामुद्रः परिमण्डलो हस्तिमशकः कृष्णः पर्व्वतीयश्चेति । तत्र पर्व्वतीया असाध्या इति । सद्य इत्यादि । मक्षिका षड़्विधा तासां पञ्चविधाभिः स्थगिकावर्ज्जाभिर्दंशे सद्यःस्राविणीप्रभृतिः पिड़का स्यात् । स्थगिका नाम मक्षिकाऽसुहृत् प्राणहृत् । मक्षिका तु कान्तारिका कृष्णा पिङ्गलिका मधुलिका काषायी स्थगिका चेति । सुश्रुते चान्यच्च विषमुक्तम् । "शृगालश्वतरक्ष्वृक्ष-व्याघ्रादीनां यदानिलः । श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः । तदा प्रस्रस्तलाङ्गूल-हनुस्कन्धोऽतिलालवान् । अत्यर्थवधिरोऽन्धश्च सोऽन्योऽन्यमभिधावति । तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु । सुप्तता जायते दंशे कृष्णश्चातिस्रवत्यसृक् । दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः । येन चापि भवेद्दष्टस्तस्य चेष्टारुतं नरः । बहुशः प्रतिकुर्व्वाणः क्रियाहीनो विनश्यति । दंष्ट्रिणा येन दष्टश्च तद्रूपं यदि पश्यति । अप्सु वा यदि वादर्श रिष्टं तस्य विनिर्द्दिशेत् ॥ त्रस्यत्यकस्माद् योऽभीक्ष्णं श्रुत्वा दृष्ट्वापि वा जलम् । जलत्रासन्तु विद्यात् तं रिष्टं तदपि कीर्त्तितम् ॥ अदष्टो वा जलत्रासी न कथञ्चन सिध्यति । प्रसुप्तोऽथोत्थितो वापि स्वस्थस्त्रस्तो न सिध्यति ॥ विस्राव्य दंशं तैदंष्ट्रे सर्पिषा परिदाहितम् । प्रदिह्यादगदैः सर्पिः पुराणं वापि पाययेत् । अर्कक्षीरयुतश्चास्य दद्याच्छोधविरेचनम् । श्वेतां पुनर्नवाञ्चास्य दद्याद् धुस्तूरकायुताम् । पललं तिलतैलञ्च रूपिकायाः पयो गुड़ः । निहन्ति विषमालर्क मेघवृन्दमिवानिलः ॥ मूलस्य शरपुङ्खायाः कर्षं धुस्तूरकार्द्धिकम् । तण्डुलोदकमादाय पेषयेत् तण्डुलैः सह । उन्मत्तकस्य पत्रैस्तु संवेष्ट्याऽपूपकं पचेत् । खादेद्दोषधकाले तद् अलर्कविषदूषितः ॥ करोत्यन्यान् विकारांस्तु तस्मिन् जीर्य्यति चौषधे । विकाराः शिशिरे याप्या गृहे वारिविवर्ज्जिते । ततः शान्तविकारस्तु स्नात्वा चैवापरेऽहनि । शालि-

शरणमाहुः । शतपदी कारण्डा । असाध्यमशकक्षतमिति पञ्चसु मशकेषु पर्व्वतीयमशकक्षतमसाध्यमाहुः । उक्तं हि सुश्रुते "पर्व्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः ।" स्थगिका असुहृत् इति कान्तारिकादिषु सुश्रुतोक्तषण्मक्षिकासु स्थगिकाख्या मक्षिका प्राणहरीत्यर्थः ॥ ३९ ॥

श्मशानचैत्यवल्मीक-यज्ञाश्रमसुरालये ।
पक्षसन्धिषु मध्याह्ने सार्द्धरात्रेऽष्टमीषु च ।
न सिध्यन्ति नरा दष्टाः पाषण्डायतनेषु च ॥
दृष्टिश्वासमलस्पर्श-विषैराशीविषैस्तथा ।
विनश्यन्त्यप्रतिहता दष्टाः सर्व्वेषु मर्म्मसु ॥ ४० ॥
येन केनापि सर्पेण सम्भवः सर्व्व एव च ।
भीतमत्तावलोष्णात्तुत्तृष्णार्त्ते वर्द्धते भृशम् ।
विषं प्रकृतिकालौ चेत् तुल्यौ प्राणाल्पमन्यथा ॥

पष्टिकयोभक्तं क्षीरेणोष्णेन भोजयेत् । दिनत्रये पञ्चमे वा विधिरेषोऽर्द्धमात्रया । कर्त्तव्यो भिषजाऽवश्यमलर्कविषनाशनः । कुप्येत् स्वयं विषं यस्य न स जीवति मानवः । तस्मात् प्रकोपयेदाशु स्वयं यावन्न कुप्यति । बीजरत्नौषधीगर्भैः कुम्भैः शीताम्बुपूरितैः । स्नापयेत् तं नदीतीरे समन्त्रैर्वा चतुष्पथे । बलिं निवेद्य तत्रापि पिण्याकपललं दधि । माल्यानि च विचित्राणि मांसं पक्कामकं तथा ॥ अलकाधिपते यक्ष सारमेयगणाधिप । अलर्कजुष्टमेतन्मे निर्व्विषं कुरु मा चिरात् । दद्यात् संशोधनं तीक्ष्णमेवं स्नातस्य देहिनः । अशुद्धस्य सुरूढ़ेऽपि व्रणे कुप्यति तद् विषम् । श्वादयोऽभिहिता व्याला वातपित्तप्रकोपणाः । अतः करोति दष्टस्तैस्तेषां चेष्टां रुतं नरः । बहुशः प्रतिकुर्व्वाणो न चिरान् म्रियते च सः ॥ नखदन्तक्षतं व्यालैर्यत् कृतं तद् विमर्दयेत् । सिञ्चेत् तैलेन कोष्णेन ते हि वातप्रकोपणाः ॥" इति ॥ ३९ ॥

गङ्गाधरः—श्मशानेत्यादि । श्मशानादिषु दष्टा न सिध्यन्ति । पाषण्डानां सन्न्यासिवेशधारिणामायतनेषु स्थानेषु । दृष्टिश्वासेत्यादि । दृष्टिविषादिभिराशीविषैश्च सर्पदष्टा न सिध्यन्ति । सर्व्वेषु मर्म्मसु दष्टाश्च विनश्यन्ति ॥ ४० ॥

गङ्गाधरः—भीतेत्यादि । भीते जने मत्ते चाबले च उष्णार्त्ते क्षुधार्त्ते तृष्णार्त्ते च विषं भृशं वर्द्धते । विषमित्यादि । विषस्य प्रकृतिकालौ चेत् तुल्यौ तथा विषं

चक्रपाणिः—सम्प्रति स्थानकालस्वभावप्रदेशे दष्टानां सर्पाणामसाध्यतामाह—श्मशानेत्यादि । चैत्यः ग्रामदेवताप्रायो महातरुः । पक्षसन्धिष्विति अमावास्यापौर्णमासीषु । पाषण्डाः कापालिकादयः । आशीविषविषैः इत्यस्यैव लक्षणं दृष्टिश्वासमलस्पर्शविषैरिति । उक्तं हि तन्त्रान्तरे—'दृष्टिश्वासादिभिर्ज्ञेयाः सर्पाः आशीविषाः, आशुघातित्वात्" ॥ ४० ॥

चक्रपाणिः—विषवृद्धिहेतुमाह—भीतेत्यादि । प्रकृतिकालौ तुल्यौ यथा विषस्य प्रबलपित्त-

वारिविप्रहताः क्षीणा भीता नकुलनिर्ज्जिताः।
मुक्तत्वचो वृद्धबालाः सर्पा मन्दविषाः स्मृताः ॥ ४१ ॥
सर्व्वदेहाश्रितं क्रोधाद् विषं सर्पो विमुञ्चति।
तदेवाहारहेतोर्वा भयाद् वा न प्रमुञ्चति ॥ ४२ ॥
प्रायो वातोल्वणविषा उच्चिड़िङ्गाः सवृश्चिकाः।
वातपित्तोल्वणाः कीटाः श्लैष्मिकाः कणभादयः ॥
यस्य यस्य तु दोषस्य लिङ्गाधिक्यं प्रतर्कयेत्।
तस्य तस्यौषधैः कुर्य्यात् विपरीतगुणैः क्रियाम् ॥ ४३ ॥
हृत्पीड़ोर्द्ध्वानिलः स्तम्भः सिरायामोऽस्थिपर्व्वरुक्।
घूर्णनोद्वेष्टनं गात्रे श्यावता वातिके विषे ॥
संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता।
दंशावदरणं शोथो रक्तपित्तञ्च पैत्तिके ॥

प्राणाल्पमल्पबलं तदा न वर्द्धते। वारीत्यादि। वारिबाहुल्येन प्रहताः सर्पाः क्षीणा व्याध्यनाहारादिना क्षीणा भीता विरोधिपक्षिदावाग्न्यादिभ्यो भीता नकुलनिर्ज्जिता एवं मुक्तत्वचो मुक्तनिर्म्मोकास्तथा वृद्धा बालाश्च सर्पाः मन्दविषाः स्मृताः ॥ ४१ ॥

गङ्गाधरः—सर्व्वेत्यादि। शुक्रवत् सर्व्वदेहगतं विषं सर्पः क्रोधाद् दंष्ट्रास्यागतं विमुञ्चति। तदेव विषमाहारहेतोर्न मुञ्चति भयाद् वा न मुञ्चति ॥ ४२ ॥

गङ्गाधरः—प्राय इत्यादि। उच्चिड़िङ्गा वृश्चिकाश्च प्रायो वातोल्वणविषाः। कीटास्तु वातपित्तोल्वणाः। कणभादयः श्लैष्मिकाः। तेषां चिकित्सामाह—यस्येत्यादि। यस्य यस्य सर्पादेर्दोषस्य लिङ्गाधिक्यं प्रतर्कयेत्, तस्य तस्य दोषस्य विपरीतगुणैरौषधैः क्रियां कुर्य्यात् ॥ ४३ ॥

गङ्गाधरः—तेषां वातादिविषलिङ्गमाह—हृदित्यादि। वातिके वातोल्वणविषोच्चिड़िङ्गादिविषे हृत्पीड़ादि लिङ्गम्। संज्ञेत्यादि। पैत्तिके वातपित्तोल्वण-

प्रकृतिः शरदृतुस्तु काल इति ज्ञेयम्। अल्पमन्यथेति भीतत्वादिविपर्य्यये अल्पं विषं भवति। वारीत्यादौ मन्दविषत्वमाह। प्रागुक्तं 'सर्व्वदेहाश्रितं क्रोधाद्' इति सर्व्वदेहाश्रितमपि दंष्ट्रिष्वेव विषं विशेषेण ज्ञेयम् ॥ ४१। ४२ ॥

चक्रपाणिः—विषचिकित्सार्थं वातोल्वणत्वादिभेदमाह—वातोल्वणेत्यादि। विपरीतगुणै-

छर्द्यरोचकहृल्लास-प्रसेकोत्क्लेशगौरवैः।
सशैत्यमुखमाधुर्य्यैर्विद्यात् श्लेष्माधिकं विषम्॥ ४४॥
खण्डेन च व्रणालेपस्तैलाभ्यङ्गश्च वातिके।
स्वेदो नाड़ीपुलाकाद्यैर्बृंहणश्च विधिर्हितः॥
सुशीतैः स्तम्भयेत् सेकैः प्रदेहैश्चापि पैत्तिकम्।
लेखनच्छेदनस्वेद-वमनैः श्लैष्मिकं जयेत्॥
विषेष्वपि च सर्व्वेषु सर्व्वस्थानगतेषु च।
अवृश्चिकोच्चिड़िङ्गेषु प्रायः शीतो विधिः स्मृतः॥ ४५॥
वृश्चिके स्वेदमभ्यङ्गं घृतेन लवणेन च।
सेकांश्चोष्णान् प्रयुञ्जीत भोज्यं पानञ्च सर्पिषः॥
एतदेवोच्चिड़िङ्गेषु प्रतिलोमञ्च पांशुभिः।
उद्वर्त्तनं सुखाम्बुष्णैस्तथावच्छादनं घनैः॥ ४६॥

कीटविषे संज्ञानाशादि लिङ्गं स्यात्। छर्दीत्यादि। छर्द्यादिभिर्लिङ्गैः श्लेष्माधिकं विषं कणभादिदष्टं विद्यात्॥ ४४॥

गङ्गाधरः—तेषां क्रमेणौषधमाह—खण्डेनेत्यादि। खण्डं गुड़मध्ये स्वयंजातदृढ़रूपम्। नाड़ी कुष्माण्डनालादिका। पुलाकस्तुच्छधान्यम्। सुशीतैरित्यादि। सुशीतसेकप्रदेहैः पैत्तिकं जयेत्। लेखनादिभिः श्लैष्मिकं जयेत्। विषेष्वित्यादि। वृश्चिकोच्चिड़िङ्गविषवर्ज्जेषु सर्व्वेषु विषेषूष्णतीक्ष्णत्वात् सर्व्वस्थानगतेषु च प्रायः शीतो विधिः स्मृतः॥ ४५॥

गङ्गाधरः—वृश्चिक इत्यादि। वृश्चिकोच्चिड़िङ्गविषयोर्वातोल्वणत्वात् वृश्चिके विषे स्वेदाभ्यङ्गं घृतेन लवणेन च उष्णान् सेकान् प्रयुञ्जीत भोज्यं चोष्णं प्रयुञ्जीत सर्पिषः पानञ्च। एतदित्यादि। एतदेव विधानमुच्चिड़िङ्गेषु कार्य्यम्। पांशुभिः प्रतिलोमञ्च उद्वर्त्तनम्। तथा सुखाम्बूष्णैः सुखाम्बुना उष्णीकृतैः घनैराच्छादनैरवच्छादनं कार्य्यम्॥ ४६॥

रित्यादिना औषधैः। विषगताधिकवातादिलिङ्गमाह—हृत्पीड़ेति। वातादिभेदेन चिकित्सामाह—खण्डेनेत्यादि। पुलाकस्तुच्छधान्यम्। घनैरिति पांशुभिः॥ ४३—४६॥

स्यात् त्रिदोष-*-प्रकोपात् तु तथा धातुविपर्य्ययात् ।
शिरोऽभितापलाल्लास्र-व्यथावक्रकुदेव च ॥
अन्येऽप्येवंविधा व्याड़ाः कफवातप्रकोपणाः ।
हृच्छिरोरुग्ज्वरस्तम्भ-तृष्णामूर्च्छाकराः स्मृताः ॥
कण्डूनिस्तोदवैवर्ण्यं सुप्तिक्लेदोपशोषणम् ।
विदाहरागरुक्पाकाः शोथा ग्रन्थिनिकुञ्चनम् ॥
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ।
ज्वरश्च सविषे लिङ्गं विपरीतञ्च निर्व्विषे ॥
तत्र सर्व्वे यथादोषं प्रयोज्याः स्युरुपक्रमाः ।
पूर्व्वोक्तविधिमन्यञ्च यथावद्द वदतः शृणु ॥ ४७ ॥

गङ्गाधरः—स्यादित्यादि । उच्चिड़िङ्गविषं यस्मात् त्रिदोषप्रकोपात् तथा धातुविपर्य्ययात् शारीरधातुगुणविपरीतगुणत्वात् शिरोऽभितापादिकृत् । वक्रं वक्रीभावः शरीरस्य । अन्येऽपीत्यादि । एवंविधा उच्चिड़िङ्गप्रकाराः कफवात-प्रकोपणा व्याड़ा हृद्रोगादिकराः स्मृताः । सविषनिर्व्विषजन्तुलक्षणमाह—कण्डित्यादि । कण्ड्वादिज्वरान्तं सविषे प्राणिनि लिङ्गम्, निर्व्विषे दष्टे कण्ड्वादि-विपरीतं लिङ्गम् । तत्र चिकित्सामाह—तत्र सर्व्वस्मिन् सविषव्याड़दष्टे यथादोषं चतुर्व्विंशत्युपक्रमेषु यो य उपक्रमो योग्यस्ते उपक्रमाः प्रयोज्याः स्युः । तत्र पूर्व्वोक्तं विधिमन्यञ्च विधिं यथावद् वदतो मत्तः शृणु ॥ ४७ ॥

चक्रपाणिः—श्वा त्रिदोषेत्यादि—सविषकुक्कुरादिलक्षणं, अत्रैव च शुनस्त्रिदोषप्रकोपो भवति । केचित तु शिरोभितापत्वादि यथोक्तकुक्कुरे तद्दष्टे च भवतीति वदन्ति । विस्तरश्चास्य सुश्रुत एव । अन्येऽप्येवंविधेति—अन्येऽपि शृगालतरक्ष्वादयः एवं सन्तः कृच्छ्ररोगादिकरा भवन्तीत्यर्थः । उक्तं हि सुश्रुते—'श्वशृगालतरक्ष्वृक्ष-व्याघ्रादीनां यदानिलः । श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञा-वहाश्रितः ॥' इति । कण्डूनिस्तोद इत्यादिना सामान्येन सविषकीटादिदंशलिङ्गं अविषप्राणिदंश-लिङ्गञ्चोच्यते । सर्व्वे इति चतुर्व्विंशतियथोक्तोपक्रमाः, पूर्व्वोक्तम् इत्यत्र वक्ष्यमाणचिकित्सितम्, पूर्व्वोक्ते विधावपि अवस्थाविशेषविधायकतया कर्त्तव्या इत्यर्थः । यदा पूर्व्वोक्ता इति पाठः तदा उपक्रमा इत्यस्य विशेषणमेतत् ॥ ४७ ॥

* श्वा त्रिदोषेति चक्रसम्मतः पाठः ।

हृदि दाहे प्रसेके च विरेकवमनं भृशम्।
यथावस्थं प्रयोक्तव्यं शुद्धे संसर्ज्जनक्रमः॥
शिरोगते विषे नस्तः कुर्य्यान्मूलानि बुद्धिमान्।
बन्धुजोवस्य भार्ग्या वा सुरसस्यासितस्य च॥
दक्षकाकमयूराणां मांसासृङ् मस्तके क्षते।
मूर्द्धि देयमधो दष्टे मूर्द्धि दष्टस्य पादयोः॥
पिप्पलीमरिचक्षार-वचासैन्धवशिग्रुकाः।
पिष्टा रोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात्॥
कपित्थमामं ससिताक्षौद्रं कण्ठगते विषे।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात्॥
विषे पक्वाशयगते पिप्पलीरजनीद्वयम्।
मञ्जिष्ठाञ्च समं पिष्ट्वा गोपित्तेन पिबेन्नरः॥

गङ्गाधरः—हृदीत्यादि। हृदि दाहे च मुखप्रसेके च भृशं विरेचनवमनं यथावस्थं प्रयोक्तव्यम्। शुद्धे सति विरेचनेन वमनेन च संसर्ज्जनक्रमः पेयादि-पथ्यक्रमः कार्य्यः। शिरोगत इत्यादि। शिरोगते विषे बन्धुजीवाद्यन्यतमस्य मूलानि बुद्धिमान् नस्तः कुर्य्यात् नस्यं कुर्य्यात्। असितसुरसः कृष्णतुलसी। दक्षेत्यादि। व्याडेन मस्तके क्षते दक्षादीनां मांसमसृक् च मूर्द्धि देयम्। दक्षः कुक्कुटः। पादयोरधो दष्टे दष्टस्य मूर्द्धि दक्षादीनां मांसासृक् देयमिति। पिप्पलीत्यादि। रोहितमत्स्यपित्तेन पिष्टाः पिप्पल्यादयोऽञ्जनादक्षिगतं विषं घ्नन्ति। कपित्थेत्यादि। आमं कपित्थफलशस्यं सिताक्षौद्रसहितं कण्ठगते विषे लिह्यात्। आमाशयगते विषे नतात्तगरपादुकाच्चूर्णपलं ताभ्यां सितामधुभ्यां लिह्यात्। विष इत्यादि। पक्वाशयगते विषे पिप्पल्यादि-

चक्रपाणिः—ऊर्द्धं दष्टस्य पादयोरित्यत्रापि क्षतयोरेव पादयोर्विशेषेण संक्रमणार्थं मांसासृक्-दानं देयम्। ताभ्यामिति सिताक्षौद्राभ्याम्। नतं तगरम्।

रक्तं मांसञ्च गोधायाः शुष्कचूर्णीकृतं हितम्।
विषे रसगते पानं कपित्थरससंयुतम् ॥
शेलोर्मूलत्वगग्राणि बदरोडुम्बराणि च।
कटभ्याश्च पिबेद्रक्त-गते मांसगते पिबेत् ॥
सक्षौद्रं खदिरारिष्टं कौटजं मूलमम्भसा।
सर्व्वेषु च बले द्वे च मधूकं मधुकं नतम् ॥
पिप्पली मरिचं क्षारं नवनीतेन मूर्च्छितम्।
प्रवृद्धे श्लेष्मणि भिषक् प्रदद्यात् प्रतिसारणम् ॥ ४८ ॥
मांसीकुङ्कुमपत्रत्वक्रजनीनतचन्दनैः।
मनःशिलाव्याघ्रनख-सुरसैरम्बुपेषितैः ॥
पाननस्याञ्जनालेपाः सर्व्वशोथविषापहाः ॥ ४९ ॥
शिरोषपुष्पस्वरसे सप्ताहं मरिचं सितम्।
भावितं सर्पदष्टानां नस्यपानाञ्जने हितम् ॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुष्पलम्।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ॥ ५० । ५१ ॥

चतुष्कं समं गोपित्तेन पिष्ट्वा पिबेत्। रक्तमित्यादि। रसधातुगते गोधाया रक्तं मांसञ्च संशोष्य चूर्णीकृतं कपित्थरससंयुतं पानं हितम्। शेलोरित्यादि। रक्तगते विषे शेलोश्चालित्रफलवृक्षस्य मूलत्वक् बदरादीनां शाखाया अग्राणि कटभ्याश्चाग्राणि पिष्ट्वा जलेन पिबेत्। मांसगते सक्षौद्रं खादिरारिष्टं पिबेत्। तथा कौटजं मूलमम्भसा पिष्ट्वा पिबेत्। सर्व्वेषु सर्व्वधातुगते विषे द्वे बले मधुकं मधूकञ्च नतञ्चाम्भसा पिष्ट्वा पिबेत्। पिप्पलीत्यादि। प्रतिसारणं घर्षणम् ॥४८॥

गङ्गाधरः—मांसीत्यादि। मांस्यादिभिः सुरसान्तैरम्बुपेषितैः पानादयः॥४९॥

गङ्गाधरः—शिरीषेत्यादि। सितं मरिचं श्वेतमरिचं शोभाञ्जनवीजं सप्ताहं शिरीषपुष्पस्वरसे भावितं नस्यपानाञ्जने सर्पदष्टानां हितम्। द्विपलमित्यादि।

शेलुः श्लेष्मातकः। मांसगत इति उत्तरेण संवध्यते। खदिरश्चारिष्टश्चेति खदिरारिष्टः, किंवा खदिरकृतोऽरिष्टः। मधुकं नतमिति च्छेदः। पिप्पलीत्यादि प्रतिसारणम्। मरिचं सितमिति शोभाञ्जनकं वीजम् ॥ ४८—५१ ॥

सिन्धुवारस्य मूलञ्च श्वेता च गिरिकर्णिका।
पानं दर्व्वीकरैर्दष्टे नस्यं समधु पाकलम्॥
मञ्जिष्ठामधुयष्ट्याह्वा-जीवकर्षभकाः सिता।
काश्मर्य्यवटशुङ्गानि पानं मण्डलिनां विषे॥
व्योषं सातिविषं कुष्ठं गृहधूमो हरेणुका।
कटुका तगरं क्षौद्रं हन्ति राजीमतां विषम्॥
गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम्।
अपि वासुकिना दष्टः पिवेद्‌ दधिघृताप्लुतम्॥
क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः।
मुक्तालेपो वरः शोथ-दाहतोदज्वरापहः॥ ५२॥

नतस्य पलं कुष्ठस्य पलमिति नतकुष्ठाभ्यां द्विपलं घृतस्य द्विपलं क्षौद्रस्य द्विपलमिति घृतक्षौद्रचतुष्पलमिति चतुष्कं पिवेत्। एतत् तक्षकदष्टानामपि अन्यसर्पदष्टानाञ्च सुखप्रदमेतत् पानम्॥ ५०। ५१॥

गङ्गाधरः—सिन्धुवारेत्यादि। सिन्धुवारमूलं श्वेतापराजितामूलं द्वयं जलेन पिष्ट्वा पानं दर्व्वीकरैर्दष्टे हितम्। पाकलं कुष्ठं समधु नस्यं हितम्। मञ्जिष्ठेत्यादि। मञ्जिष्ठा च मधु च यष्ट्याह्वा च जीवकश्च ऋषभकश्च सिता च काश्मर्य्यवटयोः शुङ्गानि सर्व्वं समं पिष्ट्वा जलेन मण्डलिनां विषे पानं हितम्। व्योषमित्यादि। व्योषादि दशद्रव्यं पिष्ट्वा प्रकरणात् पानं राजिमतां विषं हन्ति। गृहेत्यादि। गृहधूमादिसमूलतण्डुलीयान्तं समं पिष्ट्वा दधिघृताप्लुतं वासुकिनापि अन्यैरपि सर्पैर्दष्टः पिवेत्। क्षीरीत्यादि। कीटदष्टे वमनादिना शुद्धे नरे क्षीरिवृक्षाणां वटोडुम्बरादीनां त्वगालेपस्तत्कीटविषापहः। तस्मिन् कीटविषे मुक्तालेपो मुक्तां जलेन पिष्ट्वा लेपो वरः श्रेष्ठः शोथाद्यपहः॥ ५२॥

चक्रपाणिः—श्वेता चेति गिरिकर्णिकाविशेषणम्। तेन श्वेतापराजिता गृह्यते। केचित् गिरिकर्णिकां स्यन्दनमाहुः। पाकलं कुष्ठम्। मुक्ता मौक्तिकम्॥ ५२॥

चन्दनं पद्मकोशीर-शिरीषाः सिन्धुवारकाः।
क्षीरशुक्ला नतं कुष्ठ-सारिवोदीच्यपाटलाः॥
शेलुस्वरसपिष्टोऽयं लूतानां सार्व्वकार्म्मिकः।
यथायोगं प्रयोक्तव्यः समीक्ष्यालेपनादिषु॥
मधूकं मधुकं कुष्ठं सारिवोदीच्यपाटलाः।
सनिम्बसारिवाक्षौद्रं पानं लूताविषापहम्॥
कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट्।
दन्ती त्रिवृत् सैन्धवैले कर्णिकापातनं तयोः॥
कटभ्यर्ज्जुनशरीष-शेलुक्षीरद्रुमत्वचः।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः॥ ५३॥
त्वचश्च नागरञ्चैव समांशं श्लक्ष्णपेषितम्।
पेयमुष्णाम्बुना सर्व्वं मूषिकाणां विषापहम्॥
कुटजस्य फलं पिष्टं तगरं जालमालिनी।
तिक्तेक्ष्वाकुश्च योगोऽयं पानप्रधमनादिभिः॥

गङ्गाधरः—चन्दनमित्यादि। क्षीरशुक्ला क्षीरविदारी शुक्लनिर्य्यास-भूमिकुष्माण्डः। चन्दनादिपाटलान्तं सर्व्वं शेलुस्वरसे वालिकफलस्वरसे पिष्टोऽयमगदो लूतानां विषे सार्व्वकार्म्मिकः पानमस्याञ्जनालेपादिषु सर्व्वेषु कर्म्मसु हितस्तेषु लेपनादिषु यथायोगं प्रयोज्यः। मधूकमित्यादि। सारिवाद्वयम् अनन्तमूलं श्यामलता च। सारिवान्तं जले पिष्ट्वा गोलयित्वा मधु मिश्रयित्वा पानं लूताविषापहम्। कुसुम्भपुष्पमित्यादि। कुसुम्भपुष्पादीनि एलान्तानि पिष्ट्वा दंशे लेपात् तयोः कीटलूतयोः कर्णिकाया आलस्य दंशस्थाने विद्धस्थितस्य पातनं स्यात्। कटभीत्यादि। कटभ्यादीनां त्वचः कषायादिविधिना कीटलूतादंशव्रणापहाः स्युः॥ ५२॥

गङ्गाधरः—त्वचमित्यादि। त्वचं गुड़त्वचम्। कुटजस्येत्यादि। जालमालिनी

चक्रपाणिः—क्षीरशुक्ला विदारी। कर्णिकापातनं तयोरिति कीटलूतादंशयोः या कर्णिका, तस्याः

वृश्चिकोन्दूरलूतानां सर्पाणाञ्च विषापहः।
समानममृतेनेदं गराजीर्णञ्च नाशयेत्॥
सर्व्वेऽगदा यथायोगं प्रयोज्याः स्युस्त्रिकण्टके॥ ५४॥
कपोतविड् मातुलुङ्गं शिरीषकुसुमाद्रसः।
शङ्खिन्याकेपयः शुण्ठी करञ्जो मधु वार्श्चिके।
स्नुक्क्षीरपिष्टं शैरीषं फलं दर्दुरजे हितम्॥
मूलानि श्वेतभण्डीनां व्योषं सर्पिश्च मत्स्यजे।
कीटदष्टक्रियाः सर्व्वाः समानाः स्युर्जलौकसाम्॥ ५५॥
वातपित्तहरीप्राया क्रिया प्रायः प्रशस्यते।
वार्श्चिकस्योच्चिड़िङ्गस्य कणभस्यौन्दुरेऽगदः॥ ५६॥
वचा वंशत्वचः पाठा नतं सुरसमञ्जरीम्।
द्वे बले नाकुली कुष्ठं शिरीषो रजनीद्वयम्॥
गुहामतिगुहां श्वेतां चाजगन्धां शिलाजतु।
कत्तृणं कटभी चारो गृहधूमो मनःशिला॥

जालिनी घोषकविशेषः। सर्व्व इत्यादि। त्रिकण्टके त्रिकण्टकमत्स्यकण्टकविद्धे विषे सर्व्वेऽगदा यथायोगं प्रयोज्याः स्युः॥ ५४॥

गङ्गाधरः—कपोतविट्प्रभृतिर्मध्वन्तो वार्श्चिके वृश्चिकविषे प्रयोज्यः। दर्दुरजे भेकविषे शैरीषं फलं स्नुक्क्षीरपिष्टं लेपनाद्धितम्। मूलानीत्यादि। श्वेतभण्डामूलादिकं ससर्पिर्मत्स्यजे विषे लेपने हितम्। कीटदष्टे या या क्रिया प्रोक्ता ताः सर्व्वाः क्रिया जलौकसां दंशे समानाः स्युः॥ ५५॥

गङ्गाधरः—वातेत्यादि। वातपित्तहरीप्राया क्रिया प्रायो वार्श्चिकस्य तथोच्चिड़िङ्गस्य विषे प्रशस्यते। औन्दुरे विषेऽगदः प्रशस्यते॥ ५६॥

गङ्गाधरः—तदगदमाह—वचेत्यादि। वंशत्वचो वंशनेली। सुरसमञ्जरी तुलसीमञ्जरी। गुहा शालपर्णी। अतिगुहा पृश्निपर्णी। श्वेता श्वेतापराजिता।

पातनमित्यर्थः। जालमालिनी घोषकः। तिक्तेक्ष्वाकु इति तिक्तालाबुः। दर्दुरो भेकः। श्वेतभण्डा अपराजिता। वार्श्चिकस्येत्यादि यो योग उक्तः स कर्त्तव्यः, एवं कणभस्या प विषस्य। औन्दूरे उक्तो यो योगः स कर्त्तव्यः॥ ५३—५६॥

रोहितमत्स्य-*-पित्तेन पिष्टोऽयं परमोऽगदः ।
नस्याञ्जनादिलेपेषु हितो विश्वम्भरादिषु ॥ ५७ ॥

परमोऽगदः ॥

स्वर्ज्जिकाजशकृत्क्षारः सुरसोऽथाक्षिपीड़कः ।
मदिरामण्डसंयुक्तो हितः शतपदीविषे ॥
कपित्थमक्षिपीड़ोऽर्क-वीजं त्रिकटुकं तथा ।
करञ्जौ द्वे हरिद्रे च गृहगोधाविषं जयेत् ॥
काकाण्डयुक्तः सर्व्वेषां विषाणां तण्डुलीयकः ।
प्रधानं वर्हिपित्तेन तद्वद् वायसपीलुकः ॥ ५८ ॥
शिरीषफलमूलत्वक्पुष्पपत्रैः समैर्घृतैः ।
श्रेष्ठः पञ्चशिरीषोऽयं विषाणां प्रवरो वधे ॥

अजगन्धा यमानी। क्षारो यवक्षारः कटभीक्षारो वा। वचादिमनःशिलान्तः रोहितमत्स्यपित्तेन पिष्टः परमोऽयमगदः स्यात्। विश्वम्भरः कीटविशेषः। परमोऽगदः ॥ ५७ ॥

गङ्गाधरः—स्वर्ज्जिकेत्यादि। स्वर्ज्जिकाऽजशकृत् दग्ध्वा क्षारः कार्य्यः। अक्षिपीड़कः पीड़यित्वा यद्रसोऽक्ष्णि दीयते सोऽन्नपीड़ोऽक्षिपीड़कः। मदिरामण्डसंयुक्तः शतपदीविषे लेपो हितः। कपित्थमित्यादि। कपित्थादिकं पीड़यित्वाऽक्ष्णि दत्तं गृहगोधाविषं जयेत्, तथाऽर्कवीजं त्रिकटुकमक्षिपीड़ः। एवं करञ्जौ द्वे हरिद्रे चाक्षिपीड़ः। काकाण्डेत्यादि। काकाण्डः कृष्णशिम्बी तद्युक्तस्तण्डुलीयकः सर्व्वेषां विषाणां प्रधानम्। वर्हिपित्तेन वायसपीलुकः काकजङ्घा तद्वत् सर्व्वेषां विषाणां प्रधानमौषधम् ॥ ५८ ॥

गङ्गाधरः—शिरीषेत्यादि। शिरीषस्य फलं मूलं त्वक् च पुष्पञ्च पत्रञ्च

चक्रपाणिः—नाकुली रास्ना, गुहा पृश्निपर्णी, अतिगुहा शालपर्णी, अजगन्धा फोकान्दीति ख्याता। पित्तेनेति गोपित्तेन। विश्वम्भरादयः कीटा एव श्लेष्मकोपनाः सुश्रुतोक्ताः ॥ ५७ ॥

चक्रपाणिः—अक्षिपीड़कः श्वेतपीतशिम्बीभेदः। वायसी काकमाची ॥ ५८ ॥

* रोहितकस्य इति वा पाठः।

चतुष्पद्भिर्द्विपद्भिर्वा नखदन्तविषञ्च यत्।
शूयते पच्यते चापि स्रवति ज्वरयत्यपि ॥ ५६ ॥

पञ्चशिरीषोऽगदः ॥

सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥
दुरन्धकारे दष्टस्य केनचिद् विषशङ्कया।
विषोद्वेगाज्ज्वरश्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत्।
ग्लानिर्मोहोऽतिसारो वाप्येतच्छङ्काविषं मतम् ॥
चिकित्सितमिदं तस्य कुर्य्यादाश्वासनं बुधः।
सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु।
पानं समन्त्रपूताम्बु-प्रोक्षणं सान्त्वहर्षणम् ॥ ६० ॥

घृतञ्चेति समं सर्व्वं पिष्टमयं पञ्चशिरीषोऽगदः सर्व्वविषाणां वधे प्रवरः। चतुष्पदादिभिर्यन्नखदन्तविषं शूयत इत्यादि तेषां वधे च प्रवरः ॥ ५९ ॥

गङ्गाधरः—सोमेत्यादि। सोमवल्कः श्वेतखदिरः। सोमवल्कादिगैरिकान्तानां लेपः नखदन्तविषापहः। दुरन्धकार इत्यादि। घोरान्धकारे दर्शनानर्हे केनचित् प्राणिना निर्व्विषेणापि दष्टस्य विषशङ्कया विषोद्वेगात् ज्वरादिर्भवेदेतच्छङ्काविषं मतम्। तस्येदं चिकित्सितम्—बुध आश्वासनमाश्वासजनकं वाक्यं कुर्य्यात्। सितादिमध्वन्तानां पानं मन्त्रपूताम्बुप्रोक्षणं सान्त्वं मनोज्ञवचनं हर्षणञ्च वचनम्। तत्र वैगन्धिको गन्धकं शोधितम् ॥ ६० ॥

चक्रपाणिः—श्रेष्ठः पञ्चशिरीषोऽयमिति पदं शिरीषाद्यपेक्षया पञ्चशिरीषस्य श्रेष्ठत्वं ब्रूते। प्रवर इति पदं विषहरयोगान्तरेषु श्रेष्ठतामाह, तेन न पुनरुक्तिः। किंवा श्रेष्ठ इति श्रेष्ठशिरीषफलादिकृतः। द्विपदा वनमानुषमर्कटादयः ॥ ५९ ॥

चक्रपाणिः—अश्वकर्णः सर्ज्जभेदः। दुरन्धकार इत्यादिना शङ्काविषमाह—केनचिदिति। निर्व्विषेणापि शङ्कया, विषोद्वेगात् इति विषशङ्कयैव प्रादुर्भावादित्यर्थः। शङ्का चेयं प्रभावादेव विषजनिका। वैगन्धिकं कोरदूषः कोद्रवः ॥ ६० ॥

शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः।
भोजनार्थे प्रशस्यन्ते लवणार्थञ्च सैन्धवम्॥
तण्डुलीयकजीवन्ती-वार्त्ताकसुनिषण्णकाः।
मण्डूकपर्णी कुलकं शाकं चुञ्चोश्च शस्यते॥
हरेणुमुद्गान् यूषार्थमम्लार्थं धात्रीदाड़िमम्।
रसाश्चैणाश्च शिखिनां लावतैत्तिरपार्षताः॥
अविदाहीनि चान्नानि विषार्त्तानां भिषग्जितम्॥ ६१॥
विरुद्धाध्यशनक्रोध-क्षुद्भयायासमैथुनम्।
वर्ज्जयेद् विषमुक्तोऽपि दिवास्वप्नं विशेषतः॥ ६२॥
मुहुर्म्मुहुः शिरोन्यासः शोथः शुष्कौष्ठकण्ठता।
ज्वरोऽङ्गमर्द्दः स्तब्धाक्षि-गात्रत्वं हनुकम्पनम्॥
लोमापगमनं ग्लानिररतिर्वेपथुश्र्रमः।
चतुष्पदां भवत्येतद् दष्टानामिह लक्षणम्॥ ६३॥

गङ्गाधरः—विषार्त्तानामन्नार्थं द्रव्यमाह—शालय इत्यादि। प्रियङ्गुर्नाम धान्यविशेषः। लवणार्थं सैन्धवम्। शाकार्थं तण्डुलीयादिकम्। चुञ्चुशाकं पञ्चाङ्गुलवृक्षस्य पत्रम्। यूषार्थं हरेण्वादिकम्। हरेणुर्वर्त्तुलकलायः। अम्लार्थं धात्रीदाड़िमम्। एणादीनां मांसस्य रसाः। अविदाहीनि सर्व्वाण्यन्नानि। एतत् सर्व्वं सर्व्वविषार्त्तानां भिषग्जितमिति॥ ६१॥

गङ्गाधरः—वर्ज्जनीयमाह—विरुद्धेत्यादि। विषार्त्तो विषमुक्तोऽपि सर्व्वं विरुद्धाशनादिकं वर्ज्जयेत्॥ ६२॥

गङ्गाधरः—मुहुरित्यादि। चतुष्पदां गवादीनां सर्पादिदष्टानामेतल्लक्षणं भवति। मुहुर्म्मुहुः शिरोन्यासः शिरोविक्षेपः। लोमापगमनं लोम्नां लुञ्छनम्॥ ६३॥

चक्रपाणिः—कुलकं कारवेल्लकम्। अन्ये पटोलभेदमाहुः॥ ६१—६३॥

देवदारु हरिद्रे द्वे सुरसं चन्दनागुरु।
रास्ना गोरोचनाजाजी गुग्गुलिक्षुरसो नतम्॥
चूर्णं ससैन्धवानन्तं गोपित्तमधुसंयुतम्।
चतुष्पदानां दष्टानामगदः सार्व्वकार्म्मिकः॥ ६४॥
सौभाग्यार्थं स्त्रियः स्वेद-रजोनानाङ्गजान् मलान्।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान्॥
तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते।
मर्म्मप्रधमनाध्मानं श्वयथुर्हस्तपादयोः॥
जठरं ग्रहणीरोगो यक्ष्मा गुल्मः क्षयो ज्वरः।
एवंविधानि चान्यस्य व्याधेर्लिङ्गानि दर्शयेत्॥ ६५॥
स्वप्ने मार्ज्जारगोमायु-व्यालान् सनकुलान् कपीन्।
प्रायः पश्यति नद्यादीन् शुष्कांश्च सवनस्पतीन्॥

गङ्गाधरः—देवदार्व्वित्यादि। चतुष्पदानां गवादीनां सर्पादिदष्टानां सार्व्वकार्म्मिकः पानालेपनसेकादिषु सर्व्वकर्म्मस्वयमगदः॥ ६४॥

गङ्गाधरः—अथ वैरोधिकयोगमाह—सौभाग्यार्थमित्यादि। स्त्रियो मन्दबुद्धय एव सौभाग्यार्थं वशीकरणाद्यर्थं स्वेदादीन् मलानन्नमिश्रितान् प्रयच्छन्ति शत्रुप्रयुक्तान् गरांश्च शत्रुभिः सौभाग्यकरमिदमित्युक्त्वा दत्तान् गरांश्च स्त्रियः प्रयच्छन्ति। भुक्तैस्तैः पुरुषस्यास्य पाण्ड्वादिरुपजायते। एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि भुक्तं तन्मलादिकं दर्शयेत्॥ ६५॥

गङ्गाधरः—स पुमान् स्वप्ने प्रायो मार्जारादीन् पश्यति। नद्यादीन् जलाशयान् शुष्कान् प्रायः स्वप्ने पश्यति। वनस्पतींश्च शुष्कान् प्रायः

चक्रपाणिः—अन्नमिश्रितानिति भक्ष्यमिश्रितान्। गरश्चास्योपजायत इति वक्ष्यमाणमर्म्मप्रधमनादिलक्षणो व्याधिर्जायते॥ ६४।६५॥

कालश्च गौरमात्मानं स्वप्ने गौरश्च कालकम् ।
विकर्णनासिकं वापि प्रपश्येदहतेन्द्रियः ॥
तमवेक्ष्य भिषक् प्राज्ञः पृच्छेत् किं कैः कदा सह ।
जग्धमित्यवगम्याशु प्रदद्याद् वमनं बुधः ॥
सूक्ष्मं ताम्ररजश्चास्मै सक्षौद्रं हृद्विशोधनम् ।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥
हेम सर्व्वविषाण्याशु गरांश्च विनियच्छति ।
न सज्जते हेमपाङ्गे विषं पद्मदलेऽम्बुवत् ॥ ६६ ॥
नागदन्तीत्रिवृद्दन्ती-द्रवन्तीस्नुक्पयःफलैः ।
साधितं माहिषं सर्पिर्गोमूत्राढ़कपाचितम् ॥
सर्पकीटविषार्त्तानामौषधञ्च प्रशान्तये ॥ ६७ ॥

स्वप्ने पश्यति। कालः कृष्णवर्णः पुमान् स्वप्ने प्राय आत्मानं स्वं गौरं पश्यति, गौरश्च पुमान् स्वप्ने आत्मानं कालकं कृष्णवर्णं पश्यति। एवमहतेन्द्रियः स पुमान् स्वप्ने प्राय आत्मानं विकर्णनासिकं वा प्रपश्येत्। भिषक् प्राज्ञस्तमवेक्ष्य पृच्छेत्—भोः कदा कैः सह किं भवता जग्धम् ? इति। ततस्तादवगम्य बुध आशु वमनं प्रदद्यात्। वमनन्तु सूक्ष्मं ताम्ररजः सक्षौद्रं हृद्विशोधनं प्रदद्यात्। हृदि शुद्धे सति हेमचूर्णस्य शाणं दापयेत्। कस्मात् ? यस्मात् हेम स्वर्णं सर्व्वविषाणि गरांश्चाशु नियच्छति। यतो हेमपस्याङ्गे विषं न सज्जते पद्मदलेऽम्बुवदिति ॥ ६६ ॥

गङ्गाधरः—नागदन्तीत्यादि। त्रिवृ दन्ती। दीर्घमूला नागदन्ती ह्रस्वमूला त्रिवृद्दन्ती ह्रस्वमूलक्षुद्रवृक्षा द्रवन्ती। स्नुक्पयः। फलं मदनम्। एभिः कल्कैः पादिकैर्गोमूत्राढ़कपाचितं प्रस्थोन्मितं माहिषं पुराणं सर्पिः सर्पादिविषार्त्तानां प्रशान्तये औषधम् ॥ ६७ ॥

विहतेन्द्रिय इति रोगोपहतेन्द्रियः। पृच्छेदित्यादौ पृच्छायां गरावधारणमेव फलमवगम्यते। सूक्ष्ममित्यादौ अमृतताम्रचूर्णं देयम्। अमृतेनैव वमनं भवति। हेमप इति हेम पिबतीति हेमपः ॥६६॥

चक्रपाणिः—नागदन्ती दन्तीभेदः। फलं मदनफलं न तु फलैरिति पाठः। अयं योगः

शिरीषत्वक् त्रिकटुकं त्रिफला चन्दनोत्पले।
द्वे बले सारिवे श्वेता-*-सुरभीनिम्बपाटलाः॥
बन्धुजीवाढ़कीमूर्व्वा-वासासुरसवतुसकान्।
पाठाङ्कोठाश्वगन्धार्क-मूलयष्ट्याह्वपद्मकान्॥
विशालां बृहतीं द्राक्षां कोविदारं शतावरीम्।
कटभीदन्त्यपामार्ग-पृश्निपर्णीरसाञ्जनम्॥
श्वेतौ † बालाश्वखुरकौ कुष्ठदारुप्रियङ्गुकान्।
विदारीं मधूकात् सारं करञ्जस्य फलत्वचौ॥
रजन्यौ लोध्रमक्षांशं पिष्ट्वा साध्यं घृताढ़कम्।
तुल्याम्बुच्छागगोमूत्र-त्र्याढ़के तद्विषापहम्॥
अपस्मारज्वरोन्माद-भूतग्रहगरोदरम्।
पाण्डुरोगान् क्रिमीन् गुल्मान् प्लीहोरुस्तम्भकामलाः॥

गङ्गाधरः—शिरीषेत्यादि। द्वे बले द्वे च सारिवे। श्वेता श्वेतापराजिता। सुरभी सुगन्धा गन्धरास्ना। श्वेतौ श्वेतवर्णौ द्वौ बालाश्वस्य खुरकौ। मधूकात् सारं मधूकवृक्षस्य सारभूतकाष्ठम्। करञ्जस्य गोकरञ्जस्य फलञ्च त्वक् च। एषामक्षांशं पिष्ट्वा घृताढ़कं षोड़शशरावं घृतं तुल्याम्बु षोड़शशरावजलं छागमूत्रसार्द्धाढ़कं गोमूत्रसार्द्धाढ़कमिति त्र्याढ़के छागगवयोर्मूत्रे चतुर्गुणद्रवे साध्यं तद् घृतं विषापहम्। अमृतं घृतम्। अथात्र क्षारागद इति यत् प्राग्विहितं तत् तन्त्रान्तरोक्तमनुमतम्। तदुक्तं सुश्रुते। "धवाश्वकर्णतिनिशपलाशपिचुमर्दपाटलिपारिभद्रकाम्रोडुम्बरकरहाटकककुभसर्ज--कपीतनश्लेष्मातकाङ्कोठकामलक--प्रग्रहकुटजशमीकपित्थाश्मान्तकार्कचिरबिल्वमहावृक्षारुष्करारलुमधुकमधुशिग्रुशाकगोजीमूर्व्वातिल्वकेक्षुरकगोपघण्टारिमेदानां भस्मान्याहृत्य गवां मूत्रेण क्षारकल्पेन परिस्राव्य विपचेत्। दद्याच्चात्र पिप्पलीमूलतण्डुलीयक-वराङ्गचोचकमञ्जिष्ठा-

अनुकरण पठ्यते। नागदन्ती त्रिवृद्दन्ती द्रवन्ती स्नुक्क्षीरफलं गोमूत्रसिद्धं माहिषं घृतं पाययेदिति॥ ६७॥

* शारिवास्फोता इति पाठान्तरम्। † श्वेतभण्डश्चेति पाठान्तरम्।

हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः ।
हन्यात् सञ्जीवयेच्चाशु विषोद्वेगमृतान् नरान् ।
नाम्नैतदमृतं सर्व्व-विषाणां स्याद् घृतोत्तमम् ॥ ६८ ॥

अमृतं घृतम् ।

तत्र श्लोकाः ।

छत्री झर्झरपाणिश्च चरेद् रात्रौ तथा दिवा ।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्ति हि पन्नगाः ॥ ६९ ॥
दष्टमात्रो दशेदाशु तं सर्पं लोष्ट्रमेव च ।
उपर्य्यरिष्टान् बध्नीयाद् दंशं छित्वा दहेत वा ॥

करञ्जिकाहस्तिपिप्पलीमरिचोत्पलसारिवाविडङ्गगृहधूमानन्तासोमसरलावाह्लीक-गुहाकोशाम्रश्वेतसर्षपवरुणलवण-प्लक्षनिचुलक वद्धमान वञ्जुलपुत्रश्रेणीसप्तपर्ण-दण्डकैलवालुकानागदन्त्यतिविषाभयाभद्रदारुकुष्ठहरिद्रावचाचूर्णानि लोहानाञ्च समभागानि ; ततः क्षारवदागतपाकमवतार्य्य लोहकुम्भे निदध्यात् । अनेन दुन्दुभिं लिम्पेत् पताकातोरणानि च । श्रवणात् दर्शनात् स्पर्शात् विषात् सम्प्रतिमुच्यते । एष क्षारागदो नाम शर्करास्वश्मरीषु च । अर्शःसु वात-गुल्मेषु कासशूलोदरेषु च । अजीर्णे ग्रहणीदोषे भक्तद्वेषे च दारुणे । शोफे सर्व्वसरे चापि देयः श्वासे च दारुणे । एष सर्व्वविषार्त्तानां सर्व्वथैवोपयुज्यते । तथा तक्षकमुख्यानामयं दर्पाङ्कुशोऽगदः ।" क्षारागदः ॥ ६८ ॥

<u>गङ्गाधरः</u>—तत्र श्लोका इति । छत्रीत्यादि । पुमान् रात्रौ च दिवा च छत्रपाणिः झर्झरशब्दकृद्वस्तुपाणिश्च सन् विचरेत् । कस्मात् ? यदि चादृश्यस्थाने पथि सन्निकटे पन्नगा वर्त्तन्ते तेषां दंशसम्भवे ते पन्नगा हि यस्मात् तच्छत्रच्छाया-झर्झरशब्दाभ्यां वित्रस्ताः सन्तो हि प्रणश्यन्ति दंशार्थोद्यमभग्नाः स्युरिति ॥६९॥

<u>गङ्गाधरः</u>—यद्येवं न चरेत् तदा चेत् सर्पो दशेत् तत्प्रतिकारमाह—दष्टमात्र इत्यादि । दष्टमात्रो नरस्तं यदि साहसेन ग्रहीतुं शक्नोति तदाशु दशेत्,

<u>चक्रपाणिः</u>—शिरीषत्वगित्यादौ आस्फोता अफरमल्लिका । सुरसी पर्णासभेदः । बन्धुजीवः पुत्रजीवकः । खुरकः स्यन्दनः किंवा कोकिलाक्षः ॥ ६८ ॥

<u>चक्रपाणिः</u>—छत्रीत्यादौ छत्री दिवा रात्रौ झर्झरपाणिश्चरेदिति वदन्ति । झर्झरिकः सुरसुर इति ख्यातः । छायाशब्दैः यथासंख्यं वित्रस्ताः ॥ ६९ ॥

वज्रं मरकतः सारः पिचुको विषमुष्टिका।
कर्कोटकं सर्पमणिर्वैदूर्य्यं गजमौक्तिकम् ॥
धार्य्यं वरमणिर्याश्च वरौषध्यो विषापहाः।
खगाश्च सारिकाः क्रौञ्चाः शिखिहंसशुकादयः ॥ ७० ॥

इतीदमुक्तं द्विविधस्य विस्तरैर्बहुप्रकारैर्विषरोगभेषजम्।
अधीत्य यः सम्यगिह प्रयोजयेद् व्रजेद्विषाणामविसह्यतां भिषग् ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थाने विषरोगचिकित्सितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

तद्दशकस्तु लोष्ट्रं दशेत्। उपरि दंशदेशादुपरि चतुरङ्गुले यन्त्रेणारिष्टां वध्नीयात्, अरिष्टाबन्धनानर्हदेशे दंशं छित्त्वा दहेत वा। वज्रमित्यादि। सर्पादिदंशनवारणार्थं वज्रादिकं पुंसा धार्य्यम्। वरमणिश्च धार्य्यः विषापहा वरौषध्यश्च धार्य्याः। खगाश्च विषापहाः सारिकादयो विषतो रक्षणार्थं सविषान्नविज्ञानाथ गृहे धार्य्या इति ॥ ७० ॥

गङ्गाधरः—अध्यायार्थमुपसंहारेणाह—इतीदमित्यादि। द्विविधस्य स्थावरजङ्गमस्य। इति ॥ ७१ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बलप्रतिसंस्कृत एव तु। चिकित्सिते विषाणान्तु त्रयोविंशेऽध्याये पुनः। वैद्यगङ्गाधरकृते जल्पकल्पतरौ ततः। चिकित्सास्थानजल्पे तु षष्ठस्कन्धे विषस्य च। चिकित्सितजल्पो नाम शाखा त्रयोदशी स्मृता ॥ २३ ॥

इत्यगदतन्त्रम् ॥

चक्रपाणिः—दंशकाले यत् कर्त्तव्यं तदाह—दष्टमात्र इत्यादि। धारणादेव विषापहमाह—वज्रमित्यादि। सारमिति सवज्रम्। पिचुको मणिरुत्तरापथे प्रसिद्धः। विषमूषिका विषमणिः। कर्कोटकमणिः पद्मरागः। वरमणिशब्देन नानामणीनां ग्रहणम्। वरौषध्य इति तन्त्रान्तरोक्ताः अक्षीरा-जलपिप्पली-अजरुहा-काकोलीप्रभृतयः। इतीदमित्यादिसंग्रहः। व्रजेद्विषाणामिति विषाणि सोढुं पारयन्तीति भावः ॥ ७० । ७१ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां विषचिकित्सितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्व्विंशोऽध्यायः ।

अथातो मदात्ययचिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

सुरः सुरेशसहितैर्या पुरा प्रतिपूजिता ।
सौत्रामण्यां हूयते या कर्म्मभिर्या प्रतिष्ठिता ॥
यज्ञे हि या च शक्रस्य सोमोऽतिपतितो यया ।
नीरजस्तमसाविष्टस्तस्माद् दुर्गात् समुद्धृतः ॥
विधिभिर्वेदविहितैर्ययेज्यन्ते महात्मभिः ।
दृश्या स्पृश्या प्रकल्प्या च यज्ञे या यज्ञसिद्धये ॥

गङ्गाधरः—उद्दिष्टक्रमाद् विषतुल्यगुणत्वाच्चानन्तरं मद्यविकारचिकित्सितमाह—अथात इत्यादि । पूर्व्ववत् सर्व्वं व्याख्येयम् । मद्यविकारविशेषमदात्ययचिकित्सितमधिकृत्य कृतोऽध्याय इति मदात्ययचिकित्सितमिति ॥ १ ॥

गङ्गाधरः—मदात्ययरोगे वाच्ये मद्यस्य गुणादय उच्यन्ते । तद्यथा—सुरैरित्यादि । इन्द्रसहितः सुरैः पुरा या सुरा प्रतिपूजिता । सौत्रामण्यामिष्टौ या सुरा हूयते । या कर्म्मभिर्वैदिकैः प्रतिष्ठिता प्रतिष्ठां गता । या च शक्रस्य यज्ञे प्रतिष्ठिता । नीरजोऽब्जः सोमः समुद्रमन्थने जलादुत्थितः सोमस्तमसाविष्टोऽतिपतितस्तस्मात् तमस आवेशाद् दुर्गाद् यया सुरया समुद्धृतः । यया सुरया महात्मभिर्वेदविधिभिरिज्यन्ते । या यज्ञसिद्धये यज्ञे महात्मभिर्दृश्यादृश्यत्वेन प्रकल्प्या, स्पृश्यास्पृश्यत्वेन प्रकल्प्या च,

चक्रपाणिः—मोहजनकत्वसामान्यात् तथा विषसमानगुणजन्यत्वाच्च विषचिकित्सितमनु मदात्ययस्य चिकित्सितमुच्यते सुरैरित्यादिना । मदिरास्तुत्या तथा वक्ष्यमाणनिन्दया विषसमानसुरायाः सुतकलत्रनाशाय अविधिपानञ्च अत्यर्थनिन्दितफलवत्त्वं दर्शयति । या सुरा परिपूजिता इत्यनेन प्रथमं देवैरेव परिपूजिता ततः सुरयोगात् सुरेति उपदिष्टा इति दर्शयति । सौत्रामणिर्यज्ञविशेषः तस्मिन् हूयते, या सुरा कर्म्मभिः प्रतिष्ठितेति याज्ञिकैः अभिसवनं सुरया क्रियते इत्युच्यते । सौत्रामणिहोमे तु यत्रैवेयमङ्गमुच्यते शक्रस्य, सोमोऽतिपतित इति शुक्रस्यातिपातेन सोमः क्षपितबलो निर्व्वीर्य्यो भूतः । स किल पुनरपि अनयापनीतक्षयः आपादि इत्येषा श्रुतिः । अतिपातेन परीतः अतिपतितः । प्रकल्प्या इत्यभिषोतव्या सन्धानीयेति यावत् । यज्ञसिद्धय इति यज्ञविधौ कानिचित् यूपवह्न्यादीनि कानिचित् तु पुरुषार्थानि अङ्गयादीनि कानिचित्

योनिसंस्कारनामाद्यैर्विशेषैर्बहुधा च या।
भूत्वा भवत्येकविधा सामान्यान्मदलक्षणात्॥
या देवानमृतं भूत्वा स्वधा भूत्वा पितॄंश्च या।
सोमो भूत्वा द्विजातीन् या युङ्क्ते श्रेयोभिरुत्तमैः॥
आश्विनं या महत्तेजो वीर्य्यं सारस्वतश्च या।
बलमैन्द्रश्च या सिद्धा सोमे सौत्रामणौ च या॥
शोकारतिभयोद्वेग-नाशिनी या महाबला।
या प्रीतिर्या रतिर्या वाक् या पुष्टिर्या च निर्वृतिः॥
या सुरासुरगन्धर्व्व-यक्षराक्षसमानुषैः।
रतिः सुरेत्यभिहिता तां सुरां विधिना पिबेत्॥ २॥

योन्यादिविशेषश्च बहुधा या यज्ञे प्रकल्प्या भूत्वापि सामान्यान्मदलक्षणादेकविधा भवति। या सुरा खल्वमृतं भूत्वा देवानुत्तमैः श्रेयोभिर्युङ्क्ते। या च स्वधा पितृयजने कव्यरूपा भूत्वा पितॄनुत्तमैः श्रेयोभिर्युङ्क्ते। या सोमो भूत्वा यज्ञकर्म्मसूत्तमैः श्रेयोभिर्द्विजातीन् युङ्क्ते। या सुरा खल्वाश्विनमश्विनीकुमारयोर्महत्तेजः। या सारस्वतं वीर्य्यम्। या चैन्द्रं बलम्। या सोमे यागे सिद्धा सुरा नाम सौत्रामणियज्ञे या च सिद्धा सुरा नाम। या शोकादिनाशिनी महाबला। या प्रीतिप्रभृतिरूपा। या सुरासुरादिभिः सर्व्वैरेव रतिः सा सुरेत्यभिहिता, तां सुरां विधिना पिबेदिति॥ २॥

यज्ञार्थानि पुरुषार्थानि यथा सपिष्टकाल्यादीनि तदिह सुरा यज्ञीया इत्यनेन रसनादिवत् पुरुषार्था इत्युच्यते। यज्ञसिद्धये भवतीत्यनेन यूपादिवत् यज्ञार्थं सुरा उच्यते। योनीत्यादौ विशेषशब्दः प्रत्येकमभिसम्बध्यते। योनिः कारणं तद्विशेषाः धान्य-फलपुष्पकाण्डपत्रत्वचः मूलसारशर्करानवम्यः सूत्रस्थानोक्ताः। संस्कारोऽपि बहुप्रकारसंस्कारयोगः। नामविशेषाः सुरामधुमैरेयादयः। आदिग्रहणात् प्रभावगुणादीनां ग्रहणम्। मदो लक्षणं यस्य तस्मात् मदलक्षणात्। सामान्यात् मद्यस्वरूपात्। अमृतं भूत्वेत्यादौ सुराधिष्ठात्री देवता अमृतादिरूपेण देवादीन् तर्पयतीति दर्शयति। श्रेयोभिरिति महत्कल्याणैः। आश्विनं यन्महत्तेज इत्यादौ सुराधिष्ठातृदेवताया एव तेजः वीर्य्यादिकारणत्वाद्वीर्य्यं ज्ञेयम्। तेजः सर्व्वदेवतादिगं तथा सारस्वतं वीर्य्यं मन्त्रबलं तथा सौत्रामण्यां सूयते सोमः इत्यनेन सोमरूपत्वमुच्यते। या प्रीतिरित्यादौ प्रीत्यादिकारणत्वेन प्रीत्यादिरूपतया निर्द्देशो ज्ञेयः॥ १। २॥

शरीरकृतसंस्कारः शुचिरुत्तमगन्धवान् ।
उद्दामगन्धिभिर्वस्त्रैरमलैर्वा यथानुगैः ॥
विचित्रविविधस्रग्वी रत्नाभरणभूषितः ।
देवद्विजातीन् संपूज्य स्मृत्वा मङ्गलमुत्तमम् ॥
देशे यथर्त्तुके शस्ते कुसुमप्रकरीकृते ।
संवाससम्मते मुख्ये धूपसम्मोदभूषिते * ॥
सूपधाने सुसंस्तीर्णे विहिते शयनासने ।
उपविष्टोऽथवा तिर्य्यक् स्वशरीरसुखे स्थितः ॥
सौवर्णै राजतैश्चापि तथा मणिमयैरपि ।
भाजनैर्विविधैश्चित्रैः सुकृतैश्च पिबेत् सदा ॥
रूपयौवनमत्ताभिः शिक्षिताभिर्विशेषतः ।
वस्त्राभरणमाल्यैश्च भूषिताभिर्यथर्त्तुकैः ॥
शौचानुरागरक्ताभिः प्रमदाभिरितस्ततः ।
सञ्चार्य्यमाणमिष्टाभिः पिबेन्मद्यमनुत्तमम् ॥ ३ ॥
मद्यानुकूलैर्हरितैः फलैर्हरितकैः शुभैः ।
लवणैर्गन्धपिशुनैरवदंशैर्यथर्त्तुकैः ॥
भृष्टैर्मांसैर्बहुविधै-†-र्भूजलाम्बरचारिणाम् ।
पौरोगववर्गविहितैर्भक्ष्यैश्च विविधात्मकैः ॥

गङ्गाधरः—विधिमाह—शरीरेत्यादि। यथर्त्तुके देशे यस्मिन् ऋतौ यो देश उपयुज्यते तस्मिन् देशे सदा यदा पातुकामस्तदा पिबेत्। रूपयौवनमत्तादिभिः प्रमदाभिरिष्टाभिरितस्ततः सञ्चार्य्यमाणं नीयमानमुत्तमं मद्यं पिबेत् ॥ ३ ॥

चक्रपाणिः—विधिना पिबेदित्युक्त विधिमाह—शरीरेत्यादि। शरीरे स्नानवस्त्रादिभिर्बाह्यः अन्तश्च प्रकृत्याद्यपेक्षया स्निग्धोष्णाद्यादिभिः कृतः संस्कारो येन स शरीरकृतसंस्कारः। स्वशरीर-

* धूपसम्मोदबोधिते इति पाठान्तरम्। † मृदुताबरचारिणा इति क्वचित् पाठः।

पिबेत् संपूज्य विबुधानाशिषः सम्प्रयुज्य च।
प्रदाय यजनश्चाग्रे त्वर्थिभ्यः पृथिवीतले ॥ ४ ॥
अभ्यङ्गोत्सादनस्नान-वासोधूपानुलेपनैः।
स्निग्धोष्णैर्भावितश्चान्यैर्वातिको मद्यमाचरेत्॥
शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः।
पैत्तिको भावितश्चान्यैः पिबन् मद्यं न सीदति॥
उपचारैश्चाशिशिरैर्यवगोधूमभुक् पिबेत्।
श्लैष्मिको धन्वजैर्मांसैर्मद्यं मारीचकैः सह॥
कफपित्तात्मकेभ्यश्च माध्वीकं * माधवञ्च यत्।
बहुद्रवं बहुगुणं बहुकर्म्म मदात्मकम्॥
विधिर्वसुमतामेष भविष्यद्विभवाश्च ये।
यथोपपत्तिकैर्मद्यं पातव्यं मात्रया हितम्॥ ५ ॥

<u>गङ्गाधरः</u>—यैः सह पिबेत् तदाह—पिबेदित्यादि। विबुधान् देवान् सम्पूज्याशिषश्च सम्प्रयुज्य पृथिवीतले येऽर्थिनस्तेभ्योऽर्थमेव यजनमच्चेनं प्रदाय पिबेत्॥४

<u>गङ्गाधरः</u>—प्रकृतिभेदे विधिमाह—अभ्यङ्गेत्यादि। स्निग्धोष्णैरभ्यङ्गादिभिस्तथाऽन्यैरपि स्निग्धोष्णभक्ष्यैर्वातिको जनो मद्यं पिबेत्। शीतोपचारैरित्यादि। मधुरस्निग्धशीतवीर्य्यस्पर्शाभ्यङ्गादिभिस्तथान्यैः पित्तहरैर्भावितः पैत्तिकः पुरुषो मद्यं पिबन् न सीदति। उपचारैरित्यादि। अशिशिरैरुष्णरूक्षादिभिरभ्यङ्गादिभिः उपचारैर्धन्वमांसैर्मारीचकैर्मरिचप्रधानैः सह मद्यं यवगोधूमभुक् श्लैष्मिको नरः पिबेत्। कफेत्यादि। कफपित्तात्मकेभ्यश्च नरेभ्यो हितं तन्मद्यं यन्माध्वीकं यच्च माधवं बहुद्रवं बहुजलाभिश्रितम्। तत् तु बहुगुणं बहुकर्म्म पुष्ट्याद्यनेककर्म्मकरं मदात्मकञ्च। विधिरित्यादि। ये भविष्यद्विभवास्तेषां यथोपपत्तिकैर्वर्त्तमानविभवानुरूपैर्मात्रया हितं मद्यं पातव्यमिति॥ ५ ॥

सुखे स्थित इति यथाशरीरसुखं स्थितः। सुकृतैरिति संस्कृतैः। शिक्षिताभिरिति अभ्यस्ताभिः। गन्धपिशुनैरिति गन्धाढ्यैः। पौरोगवगो इति अश्विनीबलदेवचण्डा इत्यर्थः, तैः॥ ३।४ ॥

<u>चक्रपाणिः</u>—सामान्यं विधिमुक्त्वा वातिकादीनां पानविधिमाह—अभ्यङ्गेत्यादि। मरिचकैरिति मरिचसंस्कृतैः। वसुमतामिति धनवतां भविष्यद्विभवा उत्पद्यमानधनाः।

* मार्द्वीकमिति पाठान्तरम्।

वातिकेभ्यो हितं मद्यं प्रायो गौड़िकपैष्टिकम् ।
गुणैर्दोषैश्च तन्मद्यमुभयञ्चोपलक्ष्यते ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥
यथोपेतं पुनर्मद्यं प्रसङ्गाद् येन पीयते ।
रूक्षव्यायामनित्येन विषवद् याति तस्य तत् ॥ ६ ॥
मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान् ।
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥
लघूष्णतीक्ष्णसूक्ष्माम्ल-व्यवायाशुगमेव च ।
रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥

गङ्गाधरः—मद्यविशेषविधानमाह—वातिकेभ्य इत्यादि । वातिकेभ्यो नरेभ्यो हितं गौड़िकं पैष्टिकञ्च मद्यं यत् तदुभयं मद्यमपि गुणैश्च दोषैश्चोपलक्ष्यते । कथं गुणैरुपलक्ष्यते तदाह—विधिनेत्यादि । शरीरकृतसंस्कार इत्यादिना पृथिवीतले इत्यन्तेनोक्तेन विधिना । हितगौड़िकपैष्टिकाभ्यामविरोधिभिरन्नैरिति गुणैरुपलक्ष्यते । कथं दोषैरित्यत आह—यथोपेतमित्यादि । यथा येन प्रकारेण यद् यदा उपेतं मद्यं भवति तत् तथैव मद्यप्रसङ्गादेव येन रूक्षव्यायामनित्येन नरेण पीयते तस्य तन्मद्यं विषवद् याति विषवद्भावमेति ॥ ६ ॥

गङ्गाधरः—मद्यस्य मदजननप्रकारमाह—मद्यमित्यादि । स्वगुणैर्दशभि-

यथोपपत्तिरिति यथापरिच्छेदोपपत्तिः । कफपित्तयोर्वा विपर्य्ययतन्त्रयुक्त्या कफाधिकेभ्यः माधवं पित्ताधिकेभ्यो मार्द्वीकम् । मार्द्वीकं मृद्वीकाकृतं मधुकृतन्तु माधवम् । बहुद्रवमिति नानाविधद्रव्यसम्पादितम् । बहुगुणमिति भूरिवक्ष्यमाणलघ्वादिगुणं दोषकरञ्च द्वितीयमद इति भावः । विधिनेति यथोक्तविधिना । काल इति यस्य मद्यस्य य उचितगुणः कालः तस्मिन् । हितैरन्नैरिति मद्यहितैरन्नैः । यथोपेतमिति यदेव मद्यं तत् प्रसङ्गादिति अतियोगेन विषवदिति मोहाद् विकारकर्तृत्वात् ॥ ५ । ६ ॥

चक्रपाणिः—मद्यं यथा मदयति तथा प्राह—मद्यमिति । दशभिरिति लघ्वादिभिर्गुणैः

गुरु शीतं मृदु स्निग्धं मधुरं बहलं स्थिरम्।
प्रसन्नं पिच्छिलं श्लक्ष्णमोजो दशगुणं स्मृतम्॥ ७॥
गौरवं लाघवात् शैत्यमौष्ण्यादम्लस्वभावतः।
माधुर्य्यं मार्दवं तैक्ष्ण्यात् प्रसादञ्चाशुभावनात्॥
रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतामपि।
विकाशिभावात् पैच्छिल्यं वैशद्यात् सान्द्रतां तथा।
सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान्॥ ८॥
सत्त्वं तदाश्रयञ्चाशु संक्षोभ्य कुरुते मदम्॥
रसवातादि-*-मार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम्।
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते॥

रोजसो दश गुणान् संक्षोभ्य चेतो विक्रियां नयति। मद्यस्य दश गुणानाह—लघूष्णमित्यादि। ओजसो दश गुणानाह—गुर्व्वित्यादि॥ ७॥

गङ्गाधरः—मद्यं पीतं हृदयमाविश्य येन गुणेनौजसो यं गुणं संक्षोभयति तदाह—गौरवमित्यादि। मद्यं पीतं हृदयमाविश्य स्वस्य लाघवादोजसो गौरवं निहन्ति। इत्येवंप्रकारेण स्वगुणैर्मद्यमोजसो गुणान् निहन्ति॥ ८॥

गङ्गाधरः—कथं चेतो विक्रियां नयतीत्यत आह—सत्त्वमित्यादि। सत्त्वं मनस्तदाश्रयं हृदयं चाशु संक्षोभ्य मद्यं मदं कुरुते। कस्मात्? रसेत्यादि।

दशानामपि गुर्व्वादीनामोजोगुणानामवस्कन्दनकैः चेतः विक्रियां नयति। येन गुणेन मद्यस्य ओजो गुणः क्षीणो भवति तदाह—गुरुत्वं लाघवादित्यादि। प्रसादञ्चाशुभावनादिति प्रसादाख्यगुणं आशुगत्वात् हन्ति। आशुगत्वञ्च यद्यपि प्रसादविरुद्धं न भवति तथापि प्रतिकूलतया ओजःप्रसादं हन्ति। तत्राशुगुणत्वेन प्रसादो नश्यति इति ज्ञेयम्। व्यवायित्वात् स्थिरत्वमिति व्यवायित्वं व्यापकं तच्च स्थिरत्वं तद्विपरीतत्वादेव हन्ति। आशुगत्वव्यवायित्वयोश्चायं विशेषः—आशुगं शीघ्रं गच्छति, व्यवायि तु सर्व्वव्यापकम्। विकासित्वं विकसनशीलत्वं स्थिरत्वादेव। श्लक्ष्णविपरीतत्वात् श्लक्ष्णतां हन्ति, एते विकासित्वाशुगत्वगुणा यद्यपि गुणगणनायां न पठितास्तथाप्यसंख्येयत्वाद् गुणानाम् एषामपि गुणत्वं सिद्धम्। ये तु तत्र पठितास्ते तावत् सिद्धतमा ज्ञेयाः॥७।८॥

चक्रपाणिः—आश्रयोपघातात् आश्रितोपघातो भवतीति दर्शयन्नाह—सत्त्वमित्यादि। सत्त्वस्य चेत आश्रयः। रसधात्वित्यादि। रसधात्वादिवहानां दशधमनीनां हृदयं स्थानम्, रसवहा एव

* रसधात्वादीति चक्रसम्मतः पाठः।

अतिपीतेन मद्येन विहतेनौजसा च तत् ।
हृदयं विकृतिं याति तत्रस्था ये च धातवः ॥ ९ ॥
ओजस्यविहते पूर्व्वो हृदि च प्रतिबोधिते ।
मध्यमो विहतेऽल्पे तु विहते तूत्तरो मदः ॥
नैवं विघातं कुरुते मद्यं पैष्टिकमोजसः ।
विकाशिरूक्षविशदा गुणास्तत्राति नोल्वणाः ॥ १० ॥

रसादीनां ये मार्गा ये धमन्यस्तेषां सत्वादीनाञ्च तथौजसः सर्व्वधातूनां प्रधानस्य स्थानं हृदयं यस्मादुच्यते, तस्मात् तेषां स्थानस्य संक्षोभान्मदं मद्यं कुरुते। अतिपीतेनेत्यादि। अतिपीतमद्येन खल्वोजोविघातेन हृदयविकृतिर्भवति। तत्र हृदये स्थिता ये च रसवातादिधातवः सत्त्वबुद्धीन्द्रियात्मानश्च विकृतिं यान्ति ॥ ९ ॥

गङ्गाधरः—तत्र प्रथमादिमदप्रकारमाह—ओजसीत्यादि। अनतिपीतेन मद्येन खल्वोजसि अविहते हृदयं प्रतिबुद्धं वर्त्तते, तस्मिन् प्रतिबोधिते सति पूर्व्वः प्रथमो मदो भवति। ओजसि अल्पे विहते हृदि च मध्यमप्रतिबोधिते मध्यमो मदः स्यात्। विहते ओजसि हृदि च उत्तरो मदः स्यात्। मद्यविशेषे विघातविशेषमाह—नैवमित्यादि। पैष्टिकं मद्यमोजस एवं विघातं न कुरुते। कस्मात्? तत्र पष्टिके मद्ये विकाशित्वादयो गुणा न सन्त्यत्युल्बणास्तस्मान्नैवं विघातं कुरुते ॥ १० ॥

या दश धमन्य उक्तास्ता एव वातादिवहाः। यदुक्तम्—वातपित्तश्लेष्मणां सर्व्वशरीरगाणां स्रोतांस्ययनभूतानि। धात्वादीनान्तु सर्व्वशरीरगाणामपि विशेषेण हृदयं स्थानमुक्तम्। 'षडङ्गमङ्गविज्ञानमिन्द्रियाणान्तु पञ्चगम्'। धातव इति सत्त्वबुद्धीन्द्रियादयः। सत्त्वं विहतमेवं ओजसो गुणैः गुणानसत्त्वं नयतीत्युत्सर्गं नयति ॥ ९ ॥

चक्रपाणिः—प्रथमं मदमाह—ओजस्यविहते इति हृदयाश्रितबुद्ध्यादौ प्रतिबोधिते। हृदयशब्देन हि तत्स्थोपचाराद् हृदयाश्रिता बुद्ध्यादयोऽभिधीयन्ते। यथा मञ्चाः क्रोशन्तीति न्यायेन बुद्ध्यादिबोधनम्। प्रथममदकार्य्यप्रभावात् मध्यमोत्तममदोपपत्तिसामर्थ्यमाह—विहत इति ओजसः अल्पे विघाते मध्यमो मदो भवति। विहत इति विशेषेण हते अत्यर्थं हते। उत्तम इति तृतीयः ॥ १० ॥

हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम्।
विकाराश्च यथासत्त्वं चित्रा राजसतामसाः॥
जायन्ते मोहनिद्रान्ता मद्यस्यातिनिषेवणात्।
स मद्यविभ्रमो नाम्ना मद इत्यभिधीयते॥ ११॥
पीयमानस्य मद्यस्य विज्ञातव्यास्त्रयो मदाः।
प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान् प्रचक्षते॥ १२॥
प्रहर्षणः प्रीतिकरः पानान्नगुणदर्शकः।
पाठगीतप्रभाष्याणां कथानाञ्च प्रवर्त्तकः॥
न च बुद्धिस्मृतिहरो विषयेषु न चाक्षमः।
सुखं निद्राप्रबोधश्च प्रथमः सुखदो मदः॥ १३॥
मुहुः स्मृतिर्मुहुर्मोहो व्यक्ताऽव्यक्ता च वाङ् मुहुः।
युक्तायुक्तप्रलापश्च प्रपलायनमेव च॥

गङ्गाधरः—हृदीत्यादि। हृदि मद्यगुणाविष्टे सति हर्षतर्षरतिसुखानि स्युः। यथासत्त्वं यथा सात्त्विकादिमनस्तथा विकारा मनसो मदरूपा विकारा जायन्ते। स मदो नाम्ना मद्यविभ्रम इत्यभिधीयते॥ ११॥

गङ्गाधरः—मद्यमदाः कतिधेत्यत आह—पीयेत्यादि। त्रयो मदास्तत्र प्रथम इत्युक्तमः॥ १२॥

गङ्गाधरः—एषां लक्षणमाह—प्रहर्षण इत्यादि। पानान्नगुणदर्शकः यत् पीयते यदद्यते तेषां गुणान् दर्शयति न तु लोपयति। इति प्रथमो मदः सुखदः॥ १३॥

चक्रपाणिः—हृदीत्यादिना सामान्येन मदलक्षणमाह। तर्षोऽभिलाषः। यथासत्त्वमिति राजसे राजसाः तामसे तामसाः। चित्रा इति नानाप्रकाराः। मोहनिद्रान्ता इति मोहनिद्रावसानाः॥ ११। १२॥

चक्रपाणिः—प्रथमादिमदानां लक्षणमाह—प्रहर्षण इत्यादि। पानान्नगुणदर्शक इति पानान्नगुणान् बोधयतीत्यर्थः। विषयेषु तु विषयसेवासु। न चाक्षमः नासमर्थकर इत्यर्थः॥ १३॥

चक्रपाणिः—युक्तायुक्तप्रलाप इति संज्ञासंज्ञिवचनः। प्रपलायनं घूर्णनम्। योजना

स्थानपानान्नसंकथ्य-योजनाः सविपर्य्ययाः ।
लिङ्गान्येतानि जानीयादाविष्टे मध्यमे मदे ॥ १४ ॥
मध्यमं मदमुत्क्रम्य मदमप्राप्य चोत्तरम् ।
न किञ्चिन्नाशुभं कुर्य्युर्नरा राजसतामसाः ॥
को मदं तादृशं विद्वानुन्मादमिव दारुणम् ।
कुर्य्यादध्वानमासन्नं * बहुदोषमिवाध्वगः ॥ १५ ॥

गङ्गाधरः—मध्यममदमाह—मुहुरित्यादि। स्थानं पानमन्नं संकथ्यं परस्परभाष्यं यत् तेषां क्षणं योजनाश्च भवन्ति, क्षणं तेषां विपर्य्ययाश्च भवन्ति। मध्यमे मदे लिङ्गान्येतानि भवन्ति ॥ १४ ॥

गङ्गाधरः—अथात्र मध्यमोत्तरयोर्मदयोः सन्धौ मदे लक्षणमाह—मध्यममित्यादि। राजसतामसा नरा मध्यमं मदमुत्क्रम्य उत्तीर्य्य तृतीयमुत्तरं मदञ्चाप्राप्य किञ्चिच्छुभं कर्म्म न कुर्य्युः किञ्चिदशुभं न कुर्य्युरेवं भवति। शुभाशुभकर्म्मवर्ज्जी स्यात्। उन्मादमिव दारुणं तादृशं शुभाशुभाकारिणं मदं को जनः कुर्य्यात्? कोऽपि न कुर्य्यात्। अध्वगो जनः को बहुदोषमध्वानमासन्नं कुर्य्यादितिवदिति राजसानां तामसानामेव च मध्यमोत्तरमदसन्धौ भवति न तु सात्त्विकानां तथाविधः सन्धिकाले मदो भवति। इमं सन्ध्यवस्थं मदं कश्चित् तृतीयं मदं प्रकल्प्य लक्षणमुक्तवान्। "गच्छेदगम्यां न गुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः। ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः॥" इति। सुश्रुते तु नैष सन्धिमद उक्तः। "त्रयवस्थश्च मदो ज्ञेयः पूर्व्वो मध्योऽथ पश्चिमः। पूर्व्वं वीर्य्यरतिप्रीति हर्षभाष्यादिवर्द्धनम्। प्रलापो मध्यमे हर्षो युक्तायुक्ता क्रिया तथा। विसंज्ञः पश्चिमे शेते नष्टकर्म्मक्रियागुणः॥" इति ॥१५॥

सविपर्य्ययेति स्थानादीनां सम्यग् योजना कदाचिद् भवति, कदाचिच्च स्थानादियोजनाऽसम्यक्तया भवतीत्यर्थः ॥ १४ ॥

चक्रपाणिः—मध्यममदमित्युक्त्वा मद्यस्य त्रिविधो मद उक्तः। तथापि द्वितीयमदावसाने तृतीयमदाप्राप्त्यवस्थायामेव अत्यन्तनिन्दितां दर्शयन् तृतीयमदस्य अत्यन्तनिन्दितां दर्शयति। येन यस्य तृतीयमदस्य पूर्व्वरूपावस्थैव सर्व्वाशुभकरणादिहेतुतया नितान्तं निन्द्या इत्यर्थः। इयञ्च मध्यमदातिक्रमात् तृतीयमदप्राप्त्यवस्थामभिधाय परमार्थतः चतुर्थमदावस्थानुमिता भवति। अस्वन्तं अशोभनान्तम् ॥ १५ ॥

* अस्वन्तमिति चक्रसम्मतः पाठः ।

तृतीयन्तु मदं प्राप्य भग्नदार्व्विव निष्क्रियः।
बहुमोहावृतमना जीवन्नपि मृतैः समः॥
रमणीयान् स विषयान् न वेत्ति न सुहृज्जनम्।
यदर्थं पीयते मद्यं रतिं ताञ्च न विन्दति॥
कार्य्याकार्य्यं सुखं दुःखं यच्च लोके हिताहितम्।
यदवस्थो न जानाति कोऽवस्थां तां व्रजेद् बुधः॥
स दूष्यः सर्व्वभूतानां निन्द्यश्चासह्य एव च।
व्यसनित्वादुदर्के च स दुःखं व्याधिमश्नुते॥ १६॥
प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षे च यत् परम्।
मनःसमाधौ तत् सर्व्वमायत्तं सर्व्वदेहिनाम्॥ १७॥
मदेन मनसश्चास्य संक्षोभः क्रियते महान्।
महामारुतवेगेन तटस्थस्येव शाखिनः॥

गङ्गाधरः—तृतीयमदलक्षणमाह—तृतीयन्त्वित्यादि। जीवन्नपि मृतैः समो विसंज्ञः स रमणीयान् विषयान् न वेत्ति न च सुहृज्जनं वेत्ति। यदर्थं मद्यं पीयते ताञ्च रतिं न विन्दति। यदवस्थः सन् नरो न कार्य्याकार्य्यादिकं जानाति तामवस्थां को बुधो व्रजेत्। स तदवस्थां गतो नरो दूष्यः सर्व्वभूतानां निन्द्यश्चासह्यश्च। कस्मात्? व्यसनित्वात्। "व्यसनं क्लीवलिङ्गं स्याद्व्यापत्तौ काम-कोपजे। दोषे भ्रंशे च" इति। उदर्के उत्तरकाले स दुःखं व्याधिमश्नुते॥ १६॥

गङ्गाधरः—इह प्रेत्य च मोक्षे च यत् श्रेयस्तत् सर्व्वं सर्व्वदेहिनां मनःसमाधावायत्तं युक्ते मद्ये तु मनःसमाधिर्भवतीति भावः॥ १७॥

गङ्गाधरः—तृतीयमदकृन्मद्यपानदोषमाह—मदेनेत्यादि। मदेनातिपीतेन पीतवतोऽस्य मनसो महान् संक्षोभः क्रियते। यथा तटस्थस्य शाखिनः

चक्रपाणिः—भग्नदार्व्विति भग्नवृक्ष इव पतितस्तिष्ठति। उदर्क उत्तरकालः। स दुःखं व्याधिमिति मदात्ययम्॥ १६॥

चक्रपाणिः—प्रेत्य चेहेत्यादिना प्रेत्येति जन्मान्तरे। तटस्थस्येति वचनेन वातोत्क्षेप्यतां दर्शयति।

मद्यप्रसङ्गं तं ज्ञात्वा महादोषं महागदम् ।
सुखमित्यधिगच्छन्ति रजोमोहपराजिताः ॥
मद्योपहतविज्ञानाद् विमुक्ताः सात्त्विकैर्गुणैः ।
श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मद्यलालसाः ॥ १८ ॥
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रितः ।
सोन्मादमदमूर्च्छाद्याः सापस्मारापतानकाः ॥
यत्रैकः स्मृतिविभ्रंशस्ततः सर्व्वमसाधुवत् ।
इत्येवं मद्यदोषज्ञा मद्यं निन्दन्ति तत्त्वतः ॥ १९ ॥
सत्यमेते महादोषा मद्यस्योक्ता न संशयः ।
अहितस्यातिमात्रस्य पीतस्यातो * विवर्ज्जितम् ॥
किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् ॥ २० ॥

महामारुतवेगेन महान् संक्षोभः क्रियते। तं मद्यप्रसङ्गं तृतीयमदासक्तिं महादोषं महागदं ज्ञात्वापि रजोमोहपराजिता नराः सुखमिति मत्वाऽधिगच्छन्ति। सात्त्विकैर्गुणैर्विमुक्ता रजोमोहपराजिता मद्योपहतविज्ञानात् तृतीयमदेनान्धा मदान्धा मद्यलालसाः श्रेयोभिर्विप्रयुज्यन्ते वियोगवन्तः स्युः ॥ १८ ॥

गङ्गाधरः—मद्य इत्यादि। मद्ये मोहादिः संश्रितः। सोन्मादमदादयश्च मद्ये संश्रिताः। यत्र मद्ये खल्वेको मुख्यः स्मृतिविभ्रंशस्ततः सर्व्वमन्यन्मद्येऽसाधुवदिति। इत्येवं मद्यदोषज्ञा मद्यं निन्दन्ति तत्त्वतः ॥ १९ ॥

गङ्गाधरः—सत्यञ्चैते महादोषा मद्यदोषज्ञैरसंशयं मद्यस्योक्ताः। अतिमात्रस्य मद्यस्य पीतस्याहितस्य विवर्ज्जनमत इष्टम्। किन्तु मद्यं स्वभावेन यथैवान्नं

मद्यमित्यादिना स्वमतमाह—एते दोषा मद्यस्य अहितादिधर्म्मयुक्तस्यैव भवन्ति न विपरीतस्येति भावः। विधिवर्ज्जितमिति क्रियाविशेषणम्। मद्यस्य विधिवदुपयोगे गुणवत्तां अविध्युपयोगे च दोषवत्तामाह—किन्त्वित्यादि। अयुक्तियुक्तमित्यविधिप्रयुक्तम्। उभयथा देशकालमात्रापेक्षया नपेक्षया योजनया उक्तं शुभमशुभञ्च कार्य्यकरं भवति ॥ १७—२० ॥

* पीतस्य विधिवर्जितम् इति चक्रधृतः ।

प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ २१ ॥
हर्षमूर्जो मुदं पुष्टिमारोग्यं पौरुषं बलम् ।
युक्त्या पीतं करोत्याशु मद्यं मदसुखप्रदम् ॥
रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम् ।
प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम् ।
स्वापनं नष्टनिद्राणां मूकानां वाग्विशोधनम् ।
बोधनञ्चातिनिद्राणां विबन्धानां विबन्धनुत् ॥
वधबन्धपरिक्लेश-दुःखानाञ्चाप्यबोधनम् ।
मद्योत्थानाञ्च रोगाणां मद्यमेव प्रबाधकम् ॥

तथा स्मृतम् । कथमित्यत आह—अयुक्तीत्यादि । यथान्नमयुक्तियुक्त रोगाय भवति, युक्तियुक्तं तदन्नं यथामृतं तथा भवति ॥ २० ॥

गङ्गाधरः—तथा कथं स्यादित्यत आह—प्राणा इत्यादि । यथा प्राणभृतामन्नं प्राणाः प्राणहेतुः । आयुर्घृतमितिवत् । तदन्नमयुक्त्या युक्तमसून् निहन्ति । तर्हि विषतुल्यगुणं मद्यं कथमन्नवद् भवतीत्यत आह—प्राणा इत्यादि । प्राणहरञ्च विषं यत् तच्च युक्तियुक्तं रसायनं भवति ॥ २१ ॥

गङ्गाधरः—हर्षमित्यादि । यथा विषं युक्तियुक्त्या रसायनं तथा युक्त्या

चक्रपाणिः—तच्च शुभाशुभकार्य्यमाह—प्राणा इत्यादि । प्राणहेतुत्वात् प्राणाः । तदयुक्त्येति अतिमात्रत्वादिना । युक्तियुक्तं रसायनमिति यथा 'विषस्य तु तिलं दद्यात्' इति रसायनप्रयोगे तिलस्य रसायनत्वं ज्ञेयम् ॥ २१ ॥

चक्रपाणिः—विधिपीतमद्यगुणानाह—हर्षमूर्ज्ज इत्यादि । हर्षं उत्साहकं शारीरम् । मुदमिति मनःसन्तोषम् । पौरुषमिति शुक्रम् । आश्विति वचनात् शीघ्रं हर्षादीनि करोति, न परिणामक्रियामपेक्षते । मदसुखमिति सुखप्रदमदम्, प्रथमं मदमिति यावत् । अन्ये तु मदसुखप्रदामिति पठन्ति । तत्रापि मदसुखं प्रथममदारम्भ एव । रोचनमित्यादिना मद्यगुणानाह—स्वापनं नष्टनिद्राणां तथा बोधनञ्चातिनिद्राणामिति कार्य्यद्वयकारकम् । निद्राकरत्वप्रभावादेव, किंवा नष्टनिद्राणां निद्राभिघातहेतुचिन्तनादिविस्मारकतया निद्राकरं भवति । अतिनिद्राणां निद्राहेतुमनोवहस्रोतोरोगादिहन्तृतया प्रबोधकं भवतीति ज्ञेयम् । 'मद्योत्थानाञ्च रोगाणां मद्यमेव

रतिर्विषयसंयोगे प्रीतिसम्भोगवर्द्धनम् ।
अपि प्रवयसां मद्यमुत्सवामोदकारकम् ॥ २२ ॥
पञ्चस्वर्थेषु काम्येषु या रतिः प्रथमे मदे ।
यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवि ॥
बहुदुःखक्षतस्यास्य शोकैरुपहतस्य च ।
विश्रामो जीवलोकस्य मद्यं युक्त्या निषेवितम् ॥ २३ ॥
अन्नपानवयोव्याधि-बलकालात्रिकाणि षट् ।
ना दोषान् त्रिविधं सत्त्वं ज्ञात्वा मद्यं पिबेत् सदा ॥
एषां त्रिकाणामष्टानां योजना युक्तिरिष्यते ।
यया युक्त्या पिबन्मद्यं मद्यदोषैर्न युज्यते ॥

पीतं मद्यं हर्षादिकं करोति, तथाशु मदसुखनदादि भवति। प्रवयसां यूनाम् ॥ २२ ॥

<u>गङ्गाधरः</u>—पञ्चस्वर्थेषु शब्दादिषु यूनां वृद्धतमानां वा प्रथमे मदे या रतिस्तस्या रतेरुपमा भुवि नास्ति। युक्त्या निषेवितं मद्यं बहुदुःखक्षतादेर्नरस्य विश्रामः ॥ २३ ॥

<u>गङ्गाधरः</u>—मद्यपाने का पुनर्युक्तिर्भवतीत्यत आह—अन्नेत्यादि। ना मद्यं पिपासुः पुमानन्नादीनष्टौ त्रिकान् ज्ञात्वा मद्यं पिबेत्। मद्यपानेऽष्टानां त्रिकाणां योजना युक्तिरिष्यते। त्रीण्यन्नानि अशितखादितलीढानि पार्थिवाप्यतैजसानि गुरुलघुमिश्राणि शीतोष्णमिश्राणीत्येवमादीनि। तथा त्रीणि

प्रबाधकम्' इति हेतुविपरीतार्थकारिताप्रभावाद् इत्यर्थः। रतिर्विषयसंयोगे प्रीतिसंयोगवर्द्धनमिति विषयाणां शब्दादीनां संयोगे प्रीतिं संयोगञ्च वर्द्धयति। पीतमद्यः यदा विषयैः शब्दादिभिः संयुज्यते तदा तेष्वपि प्रीतिमान् भवति। प्रीतश्च सुखाकाङ्क्षी सन् पुनस्तेन संयुज्यते। प्रवयसामिति वृद्धानाम्। उत्सवः औत्सुक्यम्। आमोदो हर्षः ॥ २२ ॥

<u>चक्रपाणिः</u>—ननु विषयः स्वभावादेव प्रीतये भवति। तत किं मद्येन तत् क्रियते इति आशङ्क्य प्रथममदस्य विशिष्टरतिकर्त्तृत्वमाह—पञ्चस्वित्यादि। रतिरिवह अत्यर्थसुखजनकत्वात्। विश्राम इति दुःखादिशमहेतुः। जीवलोक इति जीवमानलोकः ॥ २३ ॥

<u>चक्रपाणिः</u>—युक्त्या निषेवितमित्यत्रोक्तां मद्यपाने युक्तिमाह—अन्नपानेत्यादि। तत्रान्नं त्रिविधं वातपित्तकफकरम्। एवं पानमपि त्रिविधम्। बाल्यादिभेदाद् वयोऽपि त्रिविधम्। व्याधिरपि

मद्यस्य च गुणान् सर्व्वान् यथोक्तान् स समश्नुते ।
धर्म्मार्थयोरपीड़ायै नरः सत्त्वगुणोत्थितः ॥ २४ ॥
सत्त्वानि तु प्रबुध्यन्ते प्रायशः प्रथमे मदे ।
द्वितीये व्यक्ततां यान्ति मध्ये चोत्तरमध्ययोः ॥
सत्त्वसम्बोधकं हर्ष-मोहप्रकृतिदर्शकम् ।
हुताश इव भूतानां मद्यन्तूभयकारकम् ॥

पानानि पार्थिवाप्यतैजसानि । तत्र पार्थिवमिक्षुरसादि । आप्यं क्षीरजलादि । तैजसं घृतादि । वयांसि त्रीणि प्रथममध्यमवार्द्धक्यानि । व्याधयस्त्रयः वातिकपैत्तिकश्लैष्मिकाः । त्रीणि बलानि प्रवरमध्यमावराणि । त्रयः कालाः शीतोष्णवर्षलक्षणाः । इति त्रिकाणि षट् । त्रीन् दोषान् वातादीन् त्रिविधं सत्त्वं मनः सात्त्विकं राजसं तामसञ्चेत्यष्टौ त्रिकाणि भवन्ति । एषां योजना युक्तिर्यया युक्त्या मद्यं पिबन् मद्यपानदोषैर्न सत्त्वगुणान्वितो नरः पुमान् युज्यते । ये मद्यस्य गुणा उक्तास्तान् मद्यगुणांश्च तया युक्त्या युक्तं मद्यं पिबन्नश्नुते धर्म्मार्थयोरपीड़ायै च भवति ॥ २४ ॥

गङ्गाधरः—सत्त्वानीत्यादि । प्रथमे मदे प्रायशः सत्त्वानि मनांसि प्रबुध्यन्ते । द्वितीये मध्यमे मदे सत्त्वानि व्यक्ततां यान्ति । उत्तरमध्ययोर्मदयोर्मध्ये सन्धौ च शेषे च व्यक्ततां सत्त्वानि यान्ति । कथं सत्त्वानि प्रबुध्यन्त इत्यत आह— सत्त्वेत्यादि । सर्व्वभूतानां हुताश इव मद्यन्तु सत्त्वसम्बोधकं सात्त्विकादिमनः-

मृदुमध्यतीव्रभेदेन त्रिविधः, किंवा सौम्याग्नेयवायव्यभेदेन त्रिविधः । बलं प्रवरावरमध्यभेदात् त्रिविधम् । कालस्तु शीतोष्णवर्षलक्षणस्त्रिविधः । त्रिविधं सत्त्वं शुद्धं राजसं तामसञ्च । योजनेति सम्यग् योजनानुरूपा । सम्यग् युक्तिमवधारयति— यया युक्त्येत्यादिना । सत्त्वगुणोच्छ्रितः समश्नुते इति योज्यम् । तत्र वातापेक्षया युक्तिः, यथा— वातहरमन्नमुपयुज्य वातहरं मद्यं पेयम्, एवं पित्तहरकफहरत्वेऽपि पित्तकफहरान्नोपयोगे तद्धरं मद्यं योज्यम् । एवं पानाद्यपेक्षयापि योजना व्याख्याता भवति । बाल्ये स्थविरे चातीक्ष्णं मद्यं यौवने तीक्ष्णम् । सम्प्रति व्याध्यपेक्षयापि योजना । यथा मृदुव्याधौ तीक्ष्णोष्णं, उष्णे च शीतमधुरं वर्षाकाले तु स्निग्धं दीपनञ्च मद्यम् । दोषभेदेन तु मद्यं वाते स्निग्धोष्णं गौडिकादि, पित्ते शीतमधुरं शार्करादि, कफे रूक्षं माधवादि । उक्तं हि 'वातिकेभ्यो हितं मद्यं प्रायो गौडिकपैष्टिकम । कफपित्ताधिकेभ्यस्तु मद्यं माधवशार्करम्' इति । दोषग्रहणेनैव वातलादिप्रकृतिरपि गृहीता । सत्त्वभेदेनापि सात्त्विकेन तीक्ष्णं राजसतामसैर्मध्यमल्पञ्च ॥ २४ ॥

चक्रपाणिः—सत्त्वानीति मनांसि । अव्यक्ततामीषद्व्यक्ततां मध्ये चाव्यक्ततां याति । उत्तमे

प्रधानावरमध्यानां रुक्माणां व्यक्तिदर्शकः।
यथाग्निरेव सत्त्वानां मद्यं प्रकृतिदर्शकम्॥ २५॥
सुगन्धिमाल्यगन्धर्वा सुप्रणीतमनाकुलम्।
मिष्टान्नपानविशदं सदा मधुरसंकथम्॥
सुखप्रपानं सुमदं हर्षप्रीतिविवर्द्धनम्।
स्वत्तु * सात्त्विकमापानं न चोत्तरमदप्रदम्॥
वैगुण्यं सहसा यान्ति मद्ययोगात् † न सात्त्विकाः।
सहसा न च गृह्णाति मदः सत्त्वबलाधिकम्॥ २६॥

सम्बोधकं हर्षमोहप्रकृतिदर्शकञ्चेत्युभयकारकम्। कथं हुताश इव मद्यमित्यत आह—प्रधानेत्यादि। अग्निरेव यथा रुक्माणां स्वर्णानां प्रधानादीनां त्रिविधानां व्यक्तिदर्शकः स्वर्णमग्नौ क्षिप्तं दग्धं सदुत्तमं मध्यममधमञ्चाग्निरेव दर्शयति, तथा मद्यं पीतं सत्त्वानां सात्त्विकराजसतामसानां प्रकृतिदर्शकमिति॥ २५॥

गङ्गाधरः—यथोत्तरं मदं न प्राप्नोति मद्यपः सात्त्विकादिभेदेन तदाह—सुगन्धीत्यादि। तत् सात्त्विकमापानं मद्यस्य यत्र चोत्तरमदप्रदं सुगन्धि यत् माल्यगन्धर्वा युक्तं सुप्रणीतादिकञ्च यत् भवति, सुप्रणीतं मन्त्रसंस्कृतम्। मिष्टैर्मधुरैरन्नैः पानैश्च विशदं निर्म्मलम्। मधुरसंकथं परस्परं मधुरं मनोज्ञमालापं कुर्व्वन्ति यत्र। स्वत्तं स्वस्य ऋतुर्यत्र तत् आपानम्। सात्त्विका हि नरा मद्ययोगात् सहसा वैगुण्यं मनोवैगुण्यं न यान्ति। सत्त्वबलाधिकं नरं मद्यं न षड़्रसान् गृह्णाति। द्विकर्म्मकोऽयं ग्रहिः॥ २६॥

तु सर्व्वथापि अव्यक्तं भवतीति भावः। केचित् तु 'सत्त्वसम्बोधकं हर्षं' इत्यादिकं पठन्ति। प्रकृतिदर्शको हुताशो यथा सुवर्णस्य शुद्धाशुद्धतां दर्शयति मद्यं तथाकारकमिति मनःप्रबोधकं मनोगुणादर्शकञ्च। रुक्माणामिति हेमरूपाणाम्। व्यक्तिदर्शक इति आकारदर्शकः॥ २५॥

चक्रपाणिः—सात्त्विकादिभेदेन पानं त्रिविधमाह—सुगन्धीत्यादि। शोभनो गन्धो यस्य तत् सुगन्धि। स्वन्तमिति स्वतन्त्रम्। न चोत्तममदप्रदमिति नोत्तममदकरम। कदाचिदपि मद्यपानात् द्वितीयमदाशङ्का न भवति। उत्तममदः सात्त्विके न भवतीत्यर्थः। उत्तममदाप्राप्तौ हेतुमाह—वैगुण्यमित्यादि। सत्त्वयोगादिति सत्त्वाख्यगुणयोगात्। सत्त्वाख्यो हि गुणः प्रकाशकतया न मोहेनाभिभूयत इति भावः॥ २६॥

* स्वत्तु इत्यत्र स्वन्तं शस्तमिति च पाठो दृश्यते। † सत्त्वयोगादिति चक्रसम्मतः पाठः।

सौम्यासौम्यकथाप्रायं विशदाविशदं क्षणे।
चित्रं राजसमापानं प्रायेणाश्वन्तमाकुलम्।
हर्षप्रीतिकथोपेतमदुष्टं पानभोजने॥ २७॥
सम्मोहक्रोधनिद्रान्तमापानं तामसं स्मृतम्॥ २८॥
आपाने सात्त्विकान् बुद्धा तथा राजसतामसान्।
जह्यात् सहान्यैः पीत्वा तु मद्यदोषानुपाश्नुते॥
सुखशीलाः सुसम्भाषाः सुमुखाः सम्मताः सताम्।
कलासु वाक्यविषया विषयप्रबलाश्च ये॥
परस्परविधेया ये येषामैक्यं सुहृत्तया।
प्रहर्षप्रीतिमाधुर्य्यैरापानं वर्द्धयन्ति ते॥ २९॥

गङ्गाधरः—राजसलक्षणमाह सौम्यासौम्येत्यादि। क्षणे सौम्यकथा क्षणेऽसौम्यकथा यत्र तदापानं राजसं द्वितीयमदलक्षणयुक्तं राजसपुरुषस्य भवति। प्रायेणाशु शीघ्रमन्तो यस्य तत्। पानभोजने चादुष्टमिति राजसलक्षणम्॥ २७॥

गङ्गाधरः—तामसस्य लक्षणमाह—सम्मोहेत्यादि। तामसमापानं मदरूपं सम्मोहक्रोधनिद्राभिरन्तमस्य भवति॥ २८॥

गङ्गाधरः—एवं सात्त्विकादिज्ञानप्रयोजनमाह—आपान इत्यादि। मद्यस्य आपाने सम्यक्पाने प्रथमादिमदविशेषेण सात्विकान् नरान् तथा राजसान् तामसांश्च बुद्धा सात्त्विकादिः स्वेतरौ जह्यात्। कस्मात्? अन्यैः सह मद्यं पीत्वा तु मद्यदोषानुपाश्नुते। सात्त्विको राजसतामसैः सह पीत्वा राजसः, सात्त्विकतामसैः सह पीत्वा तामसः, सात्त्विकराजसैः सह पीत्वा मद्यदोषान्

चक्रपाणिः—सौम्यासौम्येत्यादि राजसपानमाह—सौम्यासौम्यकथासम्बन्धात्। विशदाविशदमिति प्रसन्नाप्रसन्नम्। चित्रमिति नानाप्रकारकम्। सम्मोहेत्यादिना तामसमाह—क्रोधो निद्रा च अन्ते यस्य तत् क्रोधनिद्रान्तम्॥ २७। २८॥

चक्रपाणिः—येरित्यनेन राजसतामसाः प्रत्यवमृश्यन्ते, तैरिव समं पिबन् तत्प्रसक्त्या स्वयमपि अतिपिबन् माद्यंश्च द्वितीयतृतीयमददोषान् प्राप्नोति। उपादेयान् सात्त्विकान् आह—सुखशीला इत्यादि। सुमुखा इति प्रियाः। कलासु विशदाः कलाकुशलाः। आपानं वर्द्धयन्तीति आपाने प्रसादं वर्द्धयन्ति न पानप्रसक्तिं वर्द्धयन्तीत्यर्थः। तस्याऽनिन्दितत्वात्॥ २९॥

उत्सवादुत्सवतरं येषाञ्चान्योऽन्यदर्शनम् ।
ये सहायाः सुखं पाने तैः पिबन् सह मोदते ॥
रूपगन्धरसस्पर्शैः शब्दैश्चाति मनोहरैः ।
पिबन्ति सुसहाया ये ते व सुकृतिभिः समाः ॥
पञ्चभिर्विषयैरिष्टैरुपेतैर्मनसः प्रियैः ।
देशे काले पिबेन्मद्यं प्रहृष्टेनान्तरात्मना ॥
स्थिरसत्त्वशरीरा ये पुराणा मद्यपान्वयाः ।
बहुमद्योचिता ये च माद्यन्ति सहसा न ते ॥ ३० ॥
क्षुत्पिपासापरीताश्च दुर्ब्बला वातपैत्तिकाः ।
रूक्षाल्पप्रमिताहारा विश्रब्धाः सत्त्वदुर्ब्बलाः ॥
क्रोधिनोऽनुचिताः क्षीणाः परिश्रान्ता मदक्षताः ।
स्वल्पेनापि मदं शीघ्रं यान्ति मद्येन मानवाः ॥ ३१ ॥

उपाश्नुते। समानैः सह पाने यथा स्यात् तदाह—सुखशीला इत्यादि। ये सुखशीलादयस्ते खल्वापानं वर्द्धयन्ति ॥ २९ ॥

गङ्गाधरः—कस्माद् वर्द्धयन्ति ते इत्यत आह—उत्सवादित्यादि। येषामन्योऽन्यदर्शनमुत्सवादुत्सवतरं ये च सुखं पाने सहायाः स्युस्तैः सह पिबन् मोदते। हर्षान्तरहेतुमाह—रूपेत्यादि। मनोहरै रूपादिभिः सुसहाया ये मद्यं पिबन्ति, ते सुकृतिभिः समा भवन्ति। पञ्चभिर्विषयैरित्यादि। देशे काले प्रहृष्टेनान्तरात्मना मनसा इष्टैः पञ्चभिरर्थैरुपेतैः सह मद्यं पिबेत्। स्थिरेत्यादि। स्थिरे सारभूते सत्त्वशरीरे येषां ते पुराणाः पुराभवा मद्यपान्वयाः मद्यपानां वंशाः। बहुमद्योचिता अभ्यस्तबहुमद्यास्ते सहसा न माद्यन्ति ॥ ३० ॥

गङ्गाधरः—क्षुदित्यादि। क्षुत्पिपासापरीतादयो ये ते स्वल्पेनापि मद्येन शीघ्रं मदं यान्ति। इति मद्यस्य पाने कृत्स्नं शुभाशुभादिकमुक्तम् ॥ ३१ ॥

चक्रपाणिः—मनोरमैरित्यत्र साधीयांस इति शेषः। एवं पानस्य प्रकृत्यनवद्यत्वात्। स्थिरसत्त्वेत्यादौ पुराणा इति पूर्व्वमुपयुक्तमद्याः। मद्यपान्वया इति मद्यपवंशजाः। तेषां मद्यपानं विकारकरं न भवति विषकन्याविषमिव ॥ ३० । ३१ ॥

ऊर्द्ध्वं मदात्ययस्यातः सम्भवं सलक्षणम्।
अग्निवेश चिकित्साञ्च प्रवक्ष्यामि यथाक्रमम्॥ ३२॥
स्त्रीशोकभयभाराध्व-कर्म्मभिर्योऽतिकर्षितः।
रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया॥
रूक्षं परिणतं मद्यं निशि निद्रां निहत्य च।
करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम्॥
हिक्काश्वासशिरःकम्प-पार्श्वशूलप्रजागरैः।
विद्याद् बहुप्रलापस्य वातप्रायं मदात्ययम्॥ ३३॥
तीक्ष्णोष्णं मद्यमम्लञ्च योऽतिमात्रं निषेवते।
अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः॥
तस्योपजायते पित्ताद् विशेषेण मदात्ययः।
लक्षणानि भवन्त्यस्य यानि तानि निबोध मे॥
तृष्णादाहज्वरस्वेद-मोहातिसारविभ्रमैः।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्॥ ३४॥

गङ्गाधरः—ऊर्द्ध्वमित्यादि। अत ऊर्द्ध्वं मदात्ययस्य सम्भवादिकं प्रवक्ष्याम्यग्निवेश॥ ३२॥

गङ्गाधरः—तत्रादौ सम्भवमाह स्त्रीत्यादि। एषां पीतं तन्मद्यं वातप्रायं मदात्ययं करोति। तस्य लक्षणं हिक्केत्यादि॥ ३३॥

गङ्गाधरः—तीक्ष्णोष्णमित्यादि। तीक्ष्णोष्णादीनामतिसेवनात् पित्ताद् विशेषेण मदात्यय उपजायते। तस्य लिङ्गं तृष्णादि॥ ३४॥

चक्रपाणिः—मद्यपानदोषगुणमभिधाय मदात्ययकरं हेत्वादिमाह—ऊर्द्ध्वमित्यादि। सम्भवमिति कारणम्॥ ३२॥

चक्रपाणिः—वातप्रायमित्यादौ प्रायशब्देन वक्ष्यमाणानां सर्व्वमदात्ययानां त्रिदोषजन्यत्वं

तरुणं मधुरप्रायं गौड़ं पैष्टिकमेव वा ।
मधुरस्निग्धगुर्व्वाशी यः पिबत्यतिमात्रया ॥
अव्यायामदिवास्वप्न-शय्यासनसुखे रतः ।
मदात्ययं कफप्रायं प्राप्नोति स परं पुमान् ॥
छर्द्यरोचकहृल्लास-तन्द्रास्तैमित्यगौरवैः ।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ ३५ ॥
विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपकाः ।
त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः ॥
हन्त्याशु हि विषं किञ्चित् किञ्चिद्रोगाय कल्पते ।
यथा विषं तथैवान्त्यो ज्ञेयो मद्यकृतो मदः ॥
तस्मात् त्रिदोषजं लिङ्गं सर्व्वत्रापि मदात्यये ।
दृश्यते रूपवैशेष्यात् पृथक्त्वञ्चापि लक्ष्यते ॥ ३६ ॥

गङ्गाधरः—तरुणमित्यादि । कफप्रायं कफप्रधानम् । सर्व्वो हि मदात्ययस्त्रैदोषिकः । छर्द्यादिकं तस्य लिङ्गम् ॥ ३५ ॥

गङ्गाधरः—वातप्रायादिकं कुत उच्यते, इत्यत आह—विषस्येत्यादि । ये गुणा विषस्य तेऽपि मद्यस्य दश गुणा दृश्यन्ते, ते च सन्निपातप्रकोपकाः । कुतो न मद्येन म्रियन्त इत्यत आह । विषे त्विति । तत्तुल्यतां दर्शयति । हि यस्माद् विषे गुणा बलवत्तरास्तस्मात् यथा किञ्चिद् विषमाशु हन्ति किञ्चिद् विषं रोगाय कल्पते, तथैवान्त्यो मद्यस्य तृतीयो मद आशुघातको ज्ञेयः । तस्मात् त्रिदोषजं लिङ्गं सर्व्वत्रापि मदात्यये दृश्यते, रूपवैशेष्यादुल्बणदोषेण पृथक्त्वञ्च लक्ष्यते ॥ ३६ ॥

दर्शयति—स तु वात इति । पैत्तिकः वातोल्बणस्यैव मदात्ययः वातपित्तसंयोगतया भवति ॥ ३३—३५ ॥

चक्रपाणिः—मद्यस्य त्रिदोषकरत्वे हेतुमाह—विषस्येत्यादि । यद्यपि मद्यमम्लं विषं त्वव्यक्तमधुरं तथापि बहुगुणसामान्यात् त एव मद्ये दृश्यन्ते इत्युक्तम् । तथैवान्त्यो मद इति—प्राणहरो मदकरश्चेत्यर्थः । पृथक्त्वमिति वातिकत्वादिना पार्थक्यम् ॥ ३६ ॥

शरीरदुःखं बलवत् प्रमोहो हृदयव्यथा ।
अरुचिः प्रतता तृष्णा ज्वरः शीतोष्णलक्षणः ॥
शिरःपार्श्वास्थिसन्धीनां वेदना विद्यते यथा ।
जायतेऽतिबला जृम्भा स्फुरणं वेपनं श्रमः ॥
उरोविबन्धः कासश्च श्वासो हिक्का प्रजागरः ।
शरीरकम्पः कर्णाक्षि-मुखरोगास्त्रिकग्रहः ॥
छर्द्दिर्विड्भेद उत्क्लेशो वातपित्तकफात्मकः ।
भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम् ॥
तृणभस्मलतापर्ण-पांशुभिश्चावपूरणम् ।
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते ॥
व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च ।
मदात्ययस्य रूपाणि सर्व्वाण्येतानि लक्षयेत् ॥ ३७ ॥

गङ्गाधरः—विशेषलक्षणमुक्तम्। सामान्यलक्षणमाह—शरीरदुःखमित्यादि। शीतोष्णलक्षणो ज्वरः क्षणे शीतं क्षणे चौष्ण्यम्। यथा विक्षते क्षते जाते वेदना तथा शिरःप्रभृतिवेदना। जृम्भा चातिबला। वातपित्तकफात्मको मदात्ययः सर्व्व एव। असतां मिथ्याभूतानां दर्शनम्। स्वप्ने तृणादिभिः अवपूरणं स मन्यते। विहङ्गैश्च प्रधर्षणं स्वप्ने स मन्यते, भ्रान्तचेताश्च भवति। एतानि सर्व्वाणि मदात्ययस्य रूपाणि लक्षयेत् ॥ ३७ ॥

चक्रपाणिः—शरीरदुःखमित्यादि सर्व्वमदात्ययस्य सामान्यं लक्षणं ब्रूते। किंवा त्रिदोषमदात्ययस्यैव लक्षणम्। यतो रोगसंग्रहे वातपित्तकफसन्निपातैश्चत्वारो मदात्यया उक्ताः। 'पुनश्च पञ्चमः प्रोक्तो विषजो रौधिरश्च यः। सर्व्वे एते मदाः प्रोक्ता वातपित्तकफत्रयात्' इत्यनेन मदात्ययस्य वातादित्वेन चातुर्व्विध्यमुक्तम्। मद एव आत्ययिको गदो मदात्यय इत्युच्यते। स्फुरणं किञ्चित्कम्पनम्। वेपनं एकदेशकम्पनम्। वातपित्तकफात्मक इति उत्क्लेशविशेषण समस्तसर्व्वदोषः।

सर्व्वं मदात्ययं विद्यात् त्रिदोषमधिकन्तु यम्।
दोषं मदात्यये पश्येत् तमादौ प्रतिकारयेत् ॥
कफस्थानानुपूर्व्व्या वा क्रिया कार्य्या मदात्यये।
पित्तमारुतपर्य्यन्तं प्रायेण हि मदात्ययः ॥ ३८ ॥
मिथ्यातिहीनपीतेन यो व्याधिरुपजायते।
सम्यक्पीतेन * तेनैव स मद्येनोपशाम्यति ॥ ३९ ॥
जीर्णाय मद्यदोषाय मद्यमेव प्रदापयेत्।
प्रकाङ्क्षालाघवे जाते मद्यमस्मै हितं भवेत् ॥
सौवर्च्चलानुसंविद्धं शीतं सविड्सैन्धवम्।
मातुलुङ्गार्द्रकोपेतं जलयुक्तं प्रमाणवत् ॥ ४० ॥

<u>गङ्गाधरः</u>—कस्मात्? सर्व्वमित्यादि। यस्मात् सर्व्वं मदात्ययं त्रिदोषं विद्यात्, तत्र मदात्ययेऽधिकन्तु यं दोषं पश्येत् तं दोषमादौ प्रतिकारयेत्। अथवा कफस्थानानुपूर्व्व्या पित्तमारुतपर्य्यन्तं मदात्यये क्रिया कार्य्या। हि यस्मात् प्रायेण मदात्ययः पित्तमारुतपर्य्यन्तं स्यात् ॥ ३८ ॥

<u>गङ्गाधरः</u>—मिथ्येत्यादि। यो मदात्ययो व्याधिर्मिथ्यातिहीनयोगेन पीतेन मद्येनोपजायते, स मदात्ययः सम्यक्पीतेन तेनैव मद्येन प्रशाम्यति ॥ ३९ ॥

<u>गङ्गाधरः</u>—जीर्णेत्यादि। जीर्णान्ने न त्वजीर्णान्ने। किं शुद्धं मद्यमस्मै हितं स्यादित्यत आह—सौवर्च्चलेत्यादि। सौवर्च्चलादियुक्तं मद्यमस्मै हितमिति ॥ ४० ॥

कफस्थानेत्यादि। कफस्थानानुपूर्व्व्या चात्र कफस्थानोद्भूततया प्रथमकफसम्बन्धात् सन्निपातज्वर इव ज्ञेयः। आदौ कफप्रबलतामेवाह। पित्तमारुतपर्य्यन्त इत्यनेन कफादित्वं दर्शयति ॥ ३७।३८ ॥

<u>चक्रपाणिः</u>—समपीतेन तेनैवेति यज्जातीयेन मद्येन मदात्ययो जनितस्तज्जातीयेनैव शाम्यति। यथा विषं मौलं दंष्ट्रीयेण शाम्यति तथा मद्यमपि विजातीयेन मद्येन शाम्यतीत्येके, किन्तु तेनैवेत्यस्य मद्यजातिं परामृशति। तेनावश्यं तज्जातीयमेव मद्यं ज्ञेयम्। यतोऽनन्तरं वक्ष्यति 'यच्च यस्मै हितं भवेत्' इति। तथा 'दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये' इत्यनेन येन केनचिन्मद्येन उद्भूते वातमदात्यये पैष्टिकयुक्तं तथा सशर्करञ्चेत्यादि विशेषविधानं बहु करिष्यति।

* समपीतेनेति चक्रसम्मतः पाठः।

तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना।
मद्येनान्नरसोत्क्लेदो विदग्धः क्षारतां गतः॥
अन्तर्दाहं ज्वरं तृष्णां प्रमोहं विभ्रमं मदम्।
जनयत्याशु तच्छान्त्यै मद्यमेव प्रयोजयेत्॥
क्षारो हि याति माधुर्य्यं शीघ्रमम्लोपसंहितः।
श्रेष्ठमम्लेषु मद्यञ्च यैर्गुणैस्तान् प्रवक्ष्यते॥ ४१॥
मद्यस्याम्लस्वभावस्य चत्वारोऽनुरसाः स्मृताः।
मधुरश्च कषायश्च कटुकस्तिक्त एव च॥
गुणाश्च दश पूर्व्वोक्तास्तैश्चतुर्दशभिर्गुणैः।
सर्व्वेषां मद्यमम्लानामुपर्य्युपरि वर्त्तते॥ ४२॥

गङ्गाधरः—तीक्ष्णेत्यादि। तीक्ष्णादिना मद्येनोत्क्लिद्यतेऽन्नरसः स चान्नरसस्योत्क्लेदो विदग्धः सन् क्षारतां क्षारत्वं गच्छति। क्षारतां गतस्त्वन्तर्दाहादिकं जनयति। तच्छान्त्यै मद्यमेव प्रयोजयेत्। कस्मात्? क्षारो हीत्यादि। क्षारतां गतः अन्नरसः पुनरम्लेन मद्येन माधुर्य्यं गच्छति, हि यस्मात् क्षारो भावः खल्वम्लोपसंहितः शीघ्रं माधुर्य्यं याति। ननु मद्यमुष्णं तीक्ष्णञ्च तेन क्षारो न कथं वर्द्धते अन्यदम्लं वा न कुतः प्रयुज्यते इत्यत आह—श्रेष्ठमित्यादि। अम्लेषु मध्ये मद्यं श्रेष्ठम्, यैर्गुणैस्तु श्रेष्ठं तान् गुणान् प्रवक्ष्यते व्याख्यास्यति॥ ४१॥

गङ्गाधरः—मद्यस्येत्यादि। अम्लस्वभावस्य मद्यस्यानुरसाश्चत्वारो लवणवर्ज्जम्। गुणाश्च दश पूर्व्वोक्ता लघूष्णादयस्तत्राम्लसहितत्वेन दश गुणा इत्येते चतुर्दशगुणा मिलिता मद्ये सन्ति नान्येष्वम्लेषु, तस्मात् तैश्चतुर्दशभिर्गुणैः सर्व्वेषामम्लानामुपर्य्युपरि मद्यं वर्त्तते॥ ४२॥

तेन तज्जातीयं मद्यजातीयञ्च मद्यं मदात्यये देयम्। अन्नरसोत्क्लेद इत्यत्राम्लरसक्लेदेति पठन्ति। क्षारमाधुर्य्याय यदाम्लमद्यदानं तदा किमिति अन्यदम्लं न दीयते इत्याह—क्षारो हीत्यादि॥ ३९—४१॥

मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतःसु मारुतः।
वेदनां कुरुते तीव्रां शिरस्यस्थिषु सन्धिषु॥
विष्यन्दनार्थं दोषस्य तस्य मद्यं विशेषतः।
व्यवायितीक्ष्णोष्णतया देयमम्लेषु सत्स्वपि॥
स्रोतोविबन्धनुन्मद्यं मारुतस्यानुलोमनम्।
रोचनं दीपनञ्चाग्नेरभ्यासात् सात्म्यमेव च॥
उरःस्रोतःसु शुद्धेषु मारुते चानुलोमिते।
निवर्त्तन्ते विकाराश्च सात्म्यस्तस्य मदोदयः॥ ४३॥
वीजपूरकवृक्षाम्ल-कोलदाड़िमसंयुतम्।
यमानीहवुषाजाजी-शृङ्गवेरावचूर्णितम्॥
सस्नेहः सक्तुभिर्युक्तमवदंशैश्चिरोत्थितम्।
दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये॥ ४४॥

गङ्गाधरः—मद्य त्यादि। मद्योत्क्लिशदोषेण स्रोतःसु क्रुद्धो मारुतो वर्त्तते। शिरःप्रभृतिषु च वेदनां कुरुते। तस्य स्रोतःस्थमद्योत्क्लिष्टदोषस्य विष्यन्दनार्थं द्रवीकृत्य स्रावणार्थं व्यवायित्वादिमत्त्वान्मद्यं सत्स्वप्यन्येष्वम्लेषु विशेषतो देयमिति। स्रोत इत्यादि। मद्यं स्रोतोविबन्धनुदित्येवमादिकं तस्य सम्यक् पानेन उरःस्रोतःसु शुद्धेषु मारुते चानुलोमिते मद्यकृता विकारा निवर्त्तन्ते सात्म्यश्च मदोदयस्तस्य स्यादिति॥ ४३॥

गङ्गाधरः—तत्र दोषभेदे मद्यप्रयोगमाह। वीजपूरकेत्यादि। शृङ्गवेरं शुण्ठी। सक्तुभिरेवावदंशैर्युक्तं चिरोत्थितं पुराणं पैष्टिकं मद्यम्। वीजपूरकादेरतदन्त एकयोगः॥ ४४॥

चक्रपाणिः—उपर्युपरीति अत्यर्थं श्रेष्ठ इत्यर्थः। मदोदय इति मदनिमित्तास्तर्षोदयः। केचित् तु ज्वरप्रधानास्तर्षोदय इत्यर्थे उन्नेय इत्याहुः। अवदंशो यमुपयुज्य मद्यं पीयते।

दृष्ट्वा वातोल्बणं लिङ्गं रसैश्चैनमुपाचरेत्।
लावतित्तिरिदक्षाणां स्निग्धाम्लैः शिखिनामपि॥
पक्षिणां मृगमत्स्यानामानूपानाञ्च संस्कृतैः।
भूशयप्रसहानाञ्च रसैः शाल्योदनेन च॥ ४५॥
स्निग्धोष्णलवणाम्लैश्च वेशवारैर्मुखप्रियैः।
स्निग्धैर्गोधूमकैश्चान्यैर्वारुणीमण्डमिश्रितैः॥
सितासार्द्रकगर्भाभिः स्निग्धाभिः पूपवर्त्तिभिः।
माषपूपलिकाभिश्च वातिकं समुपाचरेत्॥ ४६॥
नातिस्निग्धैर्न चाम्लेन सिद्धं समरिचार्द्रकम्।
मेध्यं प्रकटितं मांसं दाड़िमस्य रसेन वा॥
पृथङ्मुञ्जातकोपेतं * सधान्यमरिचार्द्रकम्।
रसप्रलेहयूषैश्च सुखोष्णैः सह दापयेत्॥
भक्तेन वारुणीमण्डं दद्यात् पातुं पिपासवे।
दाड़िमस्य रसं वापि जलं वा पाञ्चमूलिकम्॥

गङ्गाधरः—दृष्ट्वेत्यादि। वातोल्वणं लिङ्गं दृष्ट्वा वक्ष्यमाणैर्मांसरसैरेनं वातमदात्ययिनमुपाचरेत्। रसार्थं मांसान्याह। लावेत्यादि। शाल्योदनेन चोपाचरेत्॥ ४५॥

गङ्गाधरः—स्निग्धोष्णेत्यादि। सिता चार्द्रकश्च गर्भे यासां ताभिः पूपवर्त्तिभिर्माषपूपलिकाभिश्च॥ ४६॥

गङ्गाधरः—नातिस्निग्धैरित्यादि। अतिस्निग्धैर्न सिद्धं न चाम्लेन सिद्धं प्रकटितं व्यक्तं मेध्यं मांसं दापयेत्। अथवा दाड़िमस्याम्लेन रसेन प्रकटितं मेध्यं मांसं दापयेत्। मुञ्जातकोपेतं मेध्यं मांसं सधान्यमरिचार्द्रकं पृथग् दापयेत्। रसादिभिः सुखोष्णैः सह मेध्यं मांसं दापयेदिति।

दक्षः कुक्कुटः। वेशवारः स चोक्तलक्षणः। रसप्रलेपनमिति रसप्रलेपनरूपतया निर्व्यूढरस-

* लिजातकोपेतमिति पाठान्तरम्।

धान्यनागरतोयं वा दधिमण्डमथाऽपि वा ।
अम्लकाञ्जिकमण्डं वा शुक्तोदकमथापि वा ॥
कर्म्मणा तेन सिद्धेन विकार उपशाम्यति ।
मात्राकालप्रयुक्तेन बलं वर्णश्च वर्द्धते ॥ ४७ ॥
रागषाड़वसंयोगविविधैर्भक्तरोचनैः ।
पिशितैः शाकपिष्टान्नैः क्लिप्तैर्गोधूमशालिभिः * ॥
अभ्यङ्गोत्सादनस्नानैरुष्णैः प्रावरणैर्घनैः ।
घनैरगुरुपङ्कैश्च धूपैश्चागुरुजैर्घनैः ॥
नारीणां यौवनोष्णानां निर्दयैरुपगूहनैः ।
श्रोण्यूरुकुचभारैश्च संरोधोष्णसुखप्रदैः ॥
शयनाच्छादनैरुष्णैरुष्णैश्चान्तर्गृहैः सुखैः ।
मारुतप्रबलः शीघ्रं प्रशाम्यति मदात्ययः ॥ ४८ ॥
मद्यं खर्ज्जूरमृद्वीका-परूषकरसैर्युतम् ।
सदाडिमरसं शीतं सक्तुभिश्चावचूर्णितम् ॥

भक्तेनेत्यादि । दधिमण्ड दधिमस्तु । अम्लकाञ्जिकमण्डमम्लीभूतकाञ्जिकस्योपरिस्तनभागः । मात्राकालप्रयुक्तेन तेन यथोक्तेन कर्म्मणा विकारो वातमदात्ययः ॥ ४७ ॥

गङ्गाधरः—रागषाड़वेत्यादि । अगुरुपङ्कैर्घनैर्घनघृष्टैः । अगुरुजैर्घनैर्निविड़ैर्धूपैश्च । यौवनोष्णानां नारीणां श्रोण्यादिभारैः संरोधोष्णतया सुखप्रदैर्निर्दयैरुपगूहनैर्गाढ़ैरुपगूढ़ीकरणैः मारुतप्रबलो मदात्ययः शीघ्रं प्रशाम्यति ॥ ४८ ॥

गङ्गाधरः—मद्यमित्यादिना पित्तमदात्ययचिकित्सितमाह—खर्ज्जूरादिरसयुतं मद्यं शीतं पैष्टिकं सदाड़िमरसं सक्तुभिरवचूर्णितं प्रक्षितं पित्तमदात्यये प्रलेपमिति यावत् । अगुरुपङ्कैरिति अगुरुलेपः । घनैरिति बहलैः । संरोधोष्णसुखावहैरिति संरोधजनितोष्मणा सुखकारकः ॥ ४२—४८ ॥

* यवगोधूमशालिभिरिति पाठान्तरम् ।

सशर्करं वा माध्वीक-संयुक्तमथवापरम्।
दद्याद् बहूदकं काले पातुं पित्तमदात्यये॥ ४९॥
शशान् कपिञ्जलानेणान् लावानसितपुच्छकान्।
मधुराम्लान् प्रयुञ्जीत भोजने शालिषष्टिकान्॥
पटोलयूषमिश्रं वा छागलं कल्पयेद्रसम्।
सतीनमुद्गमिश्रं वा दाड़िमामलकान्वितम्॥
द्राक्षामलकखर्ज्जूर-परूषकरसेन वा।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान्॥ ५०॥
आमाशयस्थमुत्क्लिष्टं कफपित्तं मदात्यये।
विज्ञाय बहुदोषस्य तृड् विदाहान्वितस्य च॥
मद्यं द्राक्षारसं तोये दत्त्वा तर्पणमेव वा।
निःशेषं वामयेच्छीघ्रमेवं रोगाद् विमुच्यते॥ ५१॥

दद्यात्। अथवा सशर्करं मद्यं पित्तमदात्यये दद्यात्। अथवा माध्वीकमद्य-संयुक्तमपरं मद्यं दद्यात्। काले पिपासाकाले बहूदकं वा मद्यं पातुं दद्यात॥ ४९॥

गङ्गाधरः—भोजनार्थमाह—शशानित्यादि। असितपुच्छकान् कालपुच्छकान् गण्डरिकान् मधुराम्लान भोजने प्रयुञ्जीत। अन्नार्थं शाल्यादीन्। पटोलेत्यादि। छागलं मांसरसं पटोलयूषमिश्रं, पक्वपटोलद्रव इह पटोलयूषः। अथवा सतीनमुद्गमिश्रं छागलं मांसरसं दाड़िमामलकान्वितं कल्पयेत्। द्राक्षेत्यादि। विविधात्मकान् तर्पणादीन् प्रत्येकम्॥ ५०॥

गङ्गाधरः—आमाशयस्थमित्यादि। मदात्यये त्रयो दोषाः कुप्यन्ति। तत्र बहुदोषस्य तृड़ादियुक्तस्य कफपित्तमामाशयस्थमुत्क्लिष्टं विज्ञाय तोये मद्यं द्राक्षारसञ्च दत्त्वाऽथवा तर्पणं सक्तुकादिकृतं दत्त्वा निःशेषं वामयेत्। एवं शीघ्रं पित्तमदात्ययरोगाद् विमुच्यते॥ ५१॥

चक्रपाणिः—मद्यमित्यादिना पैत्तिके विधिमाह। सतीनो वर्त्तुलकलायः। रोगाद् विमुच्यत इति प्रकृतमदात्ययाद् विमुच्यत इत्यर्थः॥ ४९—५१॥

काले पुनस्तर्पणञ्च क्रमं कुर्य्यात् प्रकाङ् क्षिते ।
तेनाग्निर्दीप्यते तस्य दोषशेषान्नपाचकः ॥ ५२ ॥
कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च ।
तृष्यते सविदाहे च सोत्क्लेशे हृदयोरसि ॥
गुडूचीभद्रमुस्तानां पटोलस्याथवा भिषक् ।
रसं सनागरं दद्यात् तैत्तिरैः प्रतिभोजनम् ॥ ५३ ॥
तृष्यते चातिबलवद्वातपित्तसमुद्भवे ।
दद्याद् द्राक्षारसं पातुं शीतं दोषानुलोमनम् ॥
जीर्णे च मधुराम्लेन छागमांसरसेन तम् ।
भोजनं भोजयेन्मद्यमनुतर्षञ्च पाययेत् ।
अनुतर्षस्य मात्रा सा यया नो हन्यते * मनः ॥
तृष्यते मद्यमल्पाल्पं प्रदेयं स्याद् बहूदकम् ।
तृष्णा येनोपशाम्येत मदं येन च नाप्नुयात् ॥

गङ्गाधरः—वमनानन्तरं कर्त्तव्यमाह—काल इत्यादि। पुनर्बुभुक्षायामाहारप्रकाङ्क्षिते तस्मिन् वामिते आहारकाले तर्पणञ्च कुर्य्यात्। ततः पेयादिक्रमं कुर्य्यात्, तेन तस्य नरस्य दोषशेषस्यान्नस्य च पाचकोऽग्निर्दीप्यते ॥ ५२ ॥

गङ्गाधरः—कास इत्यादि। सरक्तष्ठीवकासादिषु गुडूच्यादीनां रसं क्वाथं पटोलपत्रस्य वा रसं सनागरं दद्यात्। तैत्तिरैर्मांसरसैः प्रतिभोजनं दद्यात् ॥ ५३ ॥

गङ्गाधरः—तृष्यत इत्यादि। अतिबलवद्वातपित्तसमुद्भवे मदात्यये तृष्यते नराय शीतं द्राक्षारसं पातुं दद्यात्। तद्द्राक्षारसे जीर्णे भोजनादनुतर्षं मद्यं पाययेत्। अनुतर्षस्य मद्यमात्रा सा, यया मात्रया मनो न हन्यते। तृष्यत इत्यादि। अम्लेनाम्लीकृतं मद्यं बहूदकं तृष्यते देयम्।

चक्रपाणिः—क्रममिति। दोषशेषः कोष्ठलेपकोऽत्र ज्ञेयः। गुडूचीत्यादौ रसमिति क्वाथम्। तित्तिरिप्रतिभोजनं जीर्णे भोजने यस्मिन् तित्तिरिः प्रतिभुज्यते तत्। अनुतर्षञ्च पाययेदिति

* क्रूयते इति वा पाठः ।

परूषकाणां पीलूनां रसं शीतमथाम्बु वा।
पर्णिनीनां चतसृणां पिबेद् वा शीतलं जलम्।
मुद्गदाडिमलाजानां तृष्णाघ्नं वा पिबेद् रसम्॥
कोलदाड़िमवृक्षाम्ल-चुक्रीकाचुक्रिकारसः।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति॥ ५४॥
शीतानि चान्नपानानि शीतशय्यासनानि च।
शीतवातजलस्पर्शाः शीतान्युपवनानि च॥
क्षौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च।
चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः॥
हैमराजतकांस्यानां पात्राणां शीतवारिभिः।
पूर्णानां हिमपूर्णानां दृतीनां पवनाहतः॥

तेन येन मदेन तृष्णोपशाम्येत येन च मदं नाप्नुयात्। परूषेत्यादि। अथवा परूपकाणां शीतमम्बु अर्द्धशृतं क्वाथं तथा पीलूनाम्। तथा मिलितानां चतसृणां पर्णिनीनां शीतलमर्द्धशृतं जलं वा, मुद्गादीनां वा रसमर्द्धशृतं तृष्णाघ्नं पिबेत्। कोलेत्यादि। कोलादिरसः पञ्चाम्लकः पञ्चभिरम्लैर्निष्पादितो मुखालेपः। वृक्षाम्लं तिन्तिड़ीकफलम्। चुक्रीका नाम शाकविशेषः। चुक्रिका अम्लोटकम्॥ ५४॥

गङ्गाधरः—शीतानीत्यादि। पित्तमदात्यये दाहादिषु प्रयोज्या भवन्त्येते। क्षौमादीनां चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाश्च स्पर्शाः। वारिभिः पूर्णानां हैमादिपात्राणां स्पर्शाः। हिमपूर्णानां दृतीनां स्पर्शः पवनाहतश्च

भोजनसमये तृषां लक्षीकृत्य पाययेत्। अनुपानस्य मात्रामाह—अनुतर्षेत्यादि। मुहुर्मुहुर्दीयमानस्य मनो न दूष्यत इति न विकृतिं याति। एतेन तृषायां मनोहन्तृ यन्मद्यं न भवति तदनुतर्षसंज्ञं भवतीत्यर्थः। तृष्णाघ्नमिति कषायरूपं रसम्। चुक्रिका चाङ्गेरी॥ ५२—५४॥

संस्पर्शाश्चन्दनार्द्राणां स्त्रीणां पित्तमदात्यये ।
शीतवीर्य्यं यदन्यच्च तत् सर्व्वं विनियोजयेत् ॥
जलयन्त्राणि वर्षाणि वातयन्त्रवहानि च ।
कल्पनीयानि भिषजा दाहे धारागृहाण्यपि ॥
परिषेकावगाहेषु व्यजनानाञ्च सेचने ।
शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये ॥ ५५ ॥
फलिनीलोध्रसेव्याम्बु-हेमपत्रं कुटन्नटम् ।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥
कुमुदोत्पलपत्राणां सिक्तानां चन्दनाम्बुना ।
हितः स्पर्शो मनोज्ञानां दाहे मद्यसमुत्थिते ॥
कथाश्च विविधाश्चित्राः शब्दाश्च शिखिनां शुभाः ।
तोयदानाञ्च संशब्दा नाशयन्ति मदात्ययम् ॥
बदरीपल्लवोत्थश्च यश्चैवारिष्टकोद्भवः ।
फेनिलायाश्च यः फेनस्तैर्दाहे लेपनं हितम् ॥
सुरा समण्डा दध्यम्लं मातुलुङ्गरसो मधु ।
सेके प्रदेहे शस्यन्ते दाहघ्नाः साम्लकाञ्जिकाः ॥

स्पर्शः। चन्दनार्द्राणां स्त्रीणां संस्पर्शः पित्तमदात्यये हितः। यच्चान्यच्छीतवीर्य्यं तत् सर्व्वं विनियोजयेत्। जलेत्यादि। जलयन्त्राणि जलानां यन्त्राणि वातस्य यन्त्रवहाणि वर्षाणि च धारागृहाण्यपि दाहे भिषजा कल्पनीयानि। परिषेकेत्यादि। शिशिरं स्वतः शीतलं तोयम् ॥ ५५ ॥

गङ्गाधरः—फलिनीत्यादि। फलिन्यादिकं कालीयककाष्ठस्वरसोपेतम्। कुटन्नटं कैवर्त्तमुस्तकम्। कुमुदेत्यादि। चन्दनाम्बुना सिक्तानां कुमुदादीनां स्पर्शो हितः। कथाश्चेत्यादि। तोयदानां संशब्दाः सुशब्दा न तु कुशब्दाः। बदरीत्यादि। अरिष्टकोद्भवः निम्बपत्रस्वरसोद्भवः फेनः। फेनिलायाः फेनावत्या ओषध्याः। सुरेत्यादि। समण्डा सुरा दधि चाम्लं

चक्रपाणिः—बदरीत्यादौ बदरीपत्राणि मथित्वा तज्जः फेनो ग्राह्यः। अरिष्टको निम्बः।

कर्म्मणानेन सिद्धेन विकार उपशाम्यति।
धीमतो वैद्यवश्यस्य शीघ्रं पित्तमदात्ययः॥ ५६॥
उल्लेखनोपवासाभ्यां जयेत् कफमदात्ययम्।
तृष्यते सलिलञ्चास्मै दद्याद्ध्रीवेरसाधितम्॥
बलया पृश्निपर्ण्या वा कण्टकार्य्याथवा शृतम्।
सनागराभिः सर्व्वाभिराभिर्वा शृतशीतलम्॥
दुःस्पर्शेन समुस्तेन शृतं पर्पटकेन वा।
जलं मुस्तैः शृतं वापि दद्याद् दोषविपाचनम्॥
एतदेव च पानीयं सर्व्वत्रापि मदात्यये।
निरत्ययं पीयमानं पिपासाज्वरनाशनम्॥ ५७॥
निरामं काङ्क्षितं काले पाययेद् बहुमाक्षिकम्।
शार्करं मधु वा * जीर्णमरिष्टं सीधुमेव वा॥
रूक्षं तर्पणसंयुक्तं यवान्नं वा प्रदापयेत्।
व्योषयूषमथाम्लं वा सिद्धं वा साम्लवेतसम्॥

मातुलुङ्गरसो मधु च मिलिताः साम्लकाञ्जिका एते सेके प्रदेहे दाहघ्नाः। कर्म्मणेत्यादि। पित्तमदात्ययचिकित्सोपसंहार एषः॥ ५६॥

गङ्गाधरः कफमदात्ययचिकित्सितमाह—उल्लेखनेत्यादि। कफमदात्ययं भिषगुल्लेखनोपवासाभ्यां जयेत्। तृष्यते चास्मै कफमदात्ययवते ह्रीवेर-बलापृश्निपर्णीकण्टकारीणामेकतमेन शृतं समस्तेन वा शृतं शीतलं जलं दद्यात्। दुःस्पर्शेनेत्यादि। दुरालभामुस्तकशृतं पर्पटशृतं वा मुस्तकशृतं वा शीतलं जलं दोषपाचनं दद्यात्। एतदेवेत्यादि। एतदेव सर्व्वं ह्रीवेरसाधितादिकम्॥ ५७॥

गङ्गाधरः—एतेन दोषपाचनेन जलेन काले च निरामं मदात्ययवन्तं काङ्क्षितं पातुं बहुमाक्षिकं जलं पाययेत्। शार्करं शर्करामिश्रितं वा जलं जीर्णं वा मधु पाययेत्। अरिष्टं वा सीधुं वा पाययेत्। भोक्तुं काङ्क्षितं रूक्षं तर्पणसंयुक्तं तर्पणञ्च यवान्नं वा प्रदापयेत्। व्योषयूषं व्योषसाधितं

उल्लेखनेत्यादिना—कफमदात्ययचिकित्सितम्। तृष्यते सलिलमित्यादौ षड्ङ्गविधिना

* माध्वमिति चक्रेण पठ्यते।

छागमांसरसं रूक्षमम्लं वा जाङ्गलं रसम् ।
स्थाल्यामथ कपाले वा भृष्टं नीरसवर्त्ति तम् ॥
कट्वम्ललवणं मांसं भक्षयन् वृणुयान्मधु ।
व्यक्तमारोचकं मांसं मातुलुङ्गरसायुतम् ॥
प्रभूतकटुसंयुक्तं यमानीनागरान्वितम् ।
यवगोधूमकश्चान्नं रूक्षं यूषेण भोजयेत् ॥
कुलत्थानाञ्च शुष्काणां मूलकानां रसेन वा ।
भृष्टं दाड़िमपञ्चाम्ल-मुद्गयूषं यवाष्टमम् ॥
यथाग्नि भक्षयेत् काले प्रभूतार्द्रकपेषितम् ।
पिबेच्च निगदं मद्यं कफप्राये मदात्यये ॥ ५८ ॥

यूषं अथाम्लं वा सिद्धं मुद्गादियूषं साम्लवेतसं प्रदापयेत् । रूक्षं घृतादिस्नेहभर्ज्जनरहितं छागमांसरसं प्रदापयेत् । अम्लं वा जाङ्गलमांसरसं प्रदापयेदिति । स्थाल्यामित्यादि । छागं वा जाङ्गलं वा मांसं स्थाल्यां भृष्टमथवा कपाले भृष्टं नीरसवर्त्ति कट्वम्ललवणयुतं तं नरं भक्षयन् भिषक् मधु पिबेस्त्वमिति वृणुयात् । व्यक्तेत्यादि । छागजाङ्गलानां मांसं पक्वं व्यक्तमरिचयुक्तं मातुलुङ्गरसेन पुनरायुतं प्रभूतकटुसंयुक्तं तिक्तबहुद्रव्ययुक्तं यमानीनागरान्वितं भक्षयन् मधु वृणुयात् । यवेत्यादि । रूक्षं यवगोधूमकमन्नं यूषेण कुलत्थानां भोजयेत् । शुष्काणां मूलकानां रसेन वा भोजयेत् । भृष्टमित्यादि । दाड़िमत्वक् कोलदाड़िमवृक्षाम्लचुक्रीकाचुक्रिकाश्चेति पञ्चाम्लं मुद्गयूषश्च यवश्चाष्टमो यत्र तद्दाड़िमादियवाष्टमं भृष्टं प्रभूतार्द्रकपेषितं काले भोजनाकाङ्क्षायां यथाग्नि भक्षयेत् । पिबेच्च तदनु निगदं नाम यदौषधं तच्च मद्यं पिबेत् ॥ ५८ ॥

जलसाधनं स्मारयति । मधुकृतं माधवम् । व्योषप्रधानो यूपः । निर्द्रवं वर्त्तितमिति । निर्द्रव रसैर्वर्त्तितम् । वृणुयादिति व्याप्नुयात् । आर्द्रकपेषितमिति आर्द्रखण्डानि पेषितानि ॥५५—५८॥

सौवर्च्चलमजाज्यश्च वृक्षाम्लं साम्लवेतसम्।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम्॥
एतल्लवणमष्टाङ्गमग्निसन्दीपनं परम्।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम्॥
एतदेव पुनर्युक्त्या मधुराम्लैर्द्रवीकृतम्।
गोधूमान्नयवान्नानां मांसानाञ्चातिरोचनम्॥ ५९ ॥
पेषयेत् कटुकैर्युक्तां श्वेतां वीजविवर्ज्जिताम्।
मृद्वीकां मातुलुङ्गस्य दाड़िमस्य रसेन वा॥
सौवर्च्चलैलामरिचैरजाजीभृङ्गदीप्यकैः।
स रागः क्षौद्रसंयुक्तः श्रेष्ठो रोचनदीपनः॥ ६० ॥
मृद्वीकाया विधानेन कारयेत् कारवीमपि।
शुक्तं मत्स्यण्डिकोपेतं रागं रोचनदीपनम्॥

गङ्गाधरः—सौवर्च्चलेत्यादि। एकैकं भागं सौवर्च्चलादीनां चतुर्णामेकभागापेक्षयार्द्धांशं त्वगेलामरिचानां प्रत्येकं शर्करायाश्चैकभाग इत्यष्टाङ्गलवणं नाम। एतदेवेत्यादि। एतदेवाष्टाङ्गलवणं युक्त्या यथायोग्यं मधुराम्लैर्दाड़िमादिभिर्मधुरैरम्लैर्द्रवीकृतं सत्, गोधूमान्नस्य यवान्नस्य मांसानाञ्चातिरोचनं भवति॥ ५९ ॥

गङ्गाधरः—पेषयेदित्यादि। श्वेतां मृद्वीकां वीजवर्ज्जितां कटुकैर्युक्तां यथायोग्यमरिचादियुक्तां मातुलुङ्गस्य रसेन पेषयेत्। अथवाम्लस्य दाड़िमस्य रसेन वा पेषयेत्। तत्र सौवर्च्चलादिकचूर्णं यथायोग्यं दत्त्वा मधु च दत्त्वा मिश्रीकृतो यः स रागो नाम श्रेष्ठो रोचनदीपनः॥ ६० ॥

गङ्गाधरः—मृद्वीकेत्यादि। एतन्मृद्वीकारागविधानेन कारवीं क्षुद्रकृष्णजीरकं रागं कारयेत्। मत्स्यण्डकोपेतं शुक्तं चुक्रं नाम सन्धानं रागं कारयेत्।

चक्रपाणिः—सौवर्च्चलमित्यादौ त्वगेलामरिचादीनां प्रत्येकमेव भागार्द्धत्वम्। शर्कराभागः पूर्व्वैकद्रव्यभागः॥ ५९॥

चक्रपाणिः—श्वेतामिति मृद्वीकाम्। श्वेता च द्राक्षा काश्मीरभवा ज्ञेया। कारवीति

आम्रामलकपेशीणां रागान् कुर्य्यात् पृथक् पृथक्।
धान्यसौवर्च्चलाजाजी-कारवीमरिचान्वितान् ॥
गुड़ेन मधुशुक्तेन व्यक्ताम्लमधुरीकृतान्।
तैरन्नं रुच्यते दिग्धं भुक्तं सम्यक् च जीर्य्यति ॥ ६१ ॥
रूक्षाम्लेनान्नपानेन सोष्णेन शिशिरेण वा।
व्यायामलङ्घनाभ्याञ्च युक्तया जागरणेन च ॥
कालयुक्तेन रूक्षेण स्नानेनोद्वर्त्तनेन च।
प्राणवर्णकराणाञ्च प्रहर्षाणाञ्च सेवया ॥
सेवया वसनानाञ्च गुरूणामगुरोरपि।
सङ्कोचोष्णसुखाङ्गानामङ्गनानाञ्च सेवया ॥
सुखशिक्षितहस्तानां स्त्रीणां संवाहनेन च।
मदात्ययः कफप्रायः शीघ्रं समुपशाम्यति ॥ ६२ ॥

आम्रेत्यादि। आम्रपेशीनामामलकपेशीणाञ्च रागान् धान्यादियुक्तान् गुड़ेन मधुशुक्तेन वा व्यक्ताम्लान् मधुरांश्च कृतान् पृथक् पृथक् रागान् कुर्य्यात्। आहारद्रव्यमन्नव्यञ्जनादीनि भोक्तुं रज्यन्ते अनेनेति रागः। आचार इति प्राकृतम्। तैः रागैर्दिग्धं भक्तमन्नं रुच्यते भुक्तञ्च सम्यक् जीर्य्यति ॥ ६१ ॥

गङ्गाधरः—रूक्षेत्यादि। रूक्षादिकान्नपानादिना कफप्रायो मदात्ययः शीघ्रं समुपशाम्यति. प्राणकराणां वर्णकराणाञ्च सेवया। गुरूणां वसनानाम्। अगुरोः कृष्णागुर्व्वनुलेपनस्य। अङ्गनानां सङ्कोचोष्णसुखाङ्गानाम्। सङ्कोचेनोष्णतया सुखमङ्गं यासां तासां सेवया। हस्तपादाद्यङ्गमर्द्दने सुखशिक्षितौ हस्तौ यासां तासां स्त्रीणां संवाहनेन शरीरमर्द्दनेन समुपशाम्यतीति ॥ ६२ ॥

अल्पद्राक्षा। आम्रामलकयोः पेशीति अन्तःफलगतं सम्यग् गृह्यते। सङ्कोचोष्णसुखाङ्गीनां सङ्कोचेन संश्लेषण उष्णसुखमङ्गं यासां तासाम्। केचित् तु सङ्कोचं कुसुममाहुः ॥ ६०—६२ ॥

यदिदं कर्म्म निर्द्दिष्टं पृथग् दोषोल्बणं प्रति।
सन्निपाते दशविधे तद्विकल्प्यं भिषग्विदा॥
यश्च दोषविकल्पज्ञो यश्चौषधविकल्पवित्।
स साध्यान् साधयेद् व्याधीन् साध्यासाध्यविभागवित्॥ ६३
वनानि रमणीयानि पद्मिन्यः सलिलाशयाः।
विशदान्यन्नपानानि सहायाश्च प्रहर्षणाः॥
माल्यानि गन्धयोगाश्च वासांसि विविधानि च।
गन्धर्व्वशब्दाः कान्ताश्च गोष्ठ्यश्च हृदयप्रियाः॥
सङ्कथा-हास्य-गीतानां विशदाश्चैव योजनाः।
प्रियाश्चानुमता नार्य्यो नाशयन्ति मदात्ययम्॥ ६४॥
नाक्षोभ्य हि मनो मद्यं शरीरमविहत्य च।
कुर्य्यान्मदात्ययं तस्मादेष्टव्या हर्षिणी क्रिया॥

गङ्गाधरः—यदिदमित्यादि। दशविधे सन्निपाते एकैकोल्बणसन्निपाते यदिदं कर्म्म निर्द्दिष्टं तदेव द्व्युल्बणत्रय-हीनमध्याधिकदोषजषट्क-समत्रिदोषजैका इति दश ये सन्निपातास्तत्र भिषजा विकल्प्यम्। यश्चेत्यादि। स्पष्टम्॥ ६३॥

गङ्गाधरः—वनानीत्यादि। रमणीयवनादीनि मदात्ययं सर्व्वं नाशयन्ति। विशदान्यनाविलानि प्रहर्षणाः सहायाः वयस्याः। गन्धर्व्वशब्दाः सङ्गीतशब्दाः कान्ताः मनोज्ञाः गोष्ठीजना हृदयप्रियाः। संकथादीनां योजनाः। स्वानुमताः प्रिया नार्य्यः॥ ६४॥

गङ्गाधरः—कस्मादित्यत आह—नाक्षोभ्येत्यादि। हि यस्मान्मद्यं मनोऽक्षोभ्य अक्षोभयित्वा "छन्दसि बहुलमिति" ल्यप्, शरीरञ्चाविहत्य न मदात्ययं

चक्रपाणिः—यदिदमित्यादिना सान्निपातिकमदात्ययचिकित्सामाह। यद्यपि त्रयोदशविधः सन्निपातो वृद्धदोषाणां युक्तस्तथापि सर्व्वमदात्ययानां त्रिदोषजत्वात् यदेतद् वातादिमदात्ययचिकित्सितमुक्तं तदेकदोषोल्बणसन्निपातजमदात्ययचिकित्सितं भवति। तेन हीनमध्याधिकभेदसन्निपातैः यद्दशावशिष्टाः सन्निपातास्तान् अभिप्रेत्यैवमुक्तम्। सन्निपाते दशविधे तद्विकल्प्यमिति हीनमध्याधिकदोषत्रयोद्भूतमदात्ययेषु हीनमध्याधिकदोषभेदेन विकल्प्य चिकित्सा कर्त्तव्या॥ ६३॥

चक्रपाणिः मदात्ययस्य प्रहर्षिणीं चिकित्सामाह—वनानीत्यादि॥ ६४॥

चक्रपाणिः—यस्मात् पुनर्मदात्यये प्रहर्षिणी चिकित्सा कार्य्या, तद्धेतुमाह—नाक्षोभ्य इति।

आभिः क्रियाभिः सिद्धाभिः शमं याति मदात्ययः।
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत्॥ ६५॥
लङ्घनैः पाचनैर्दोष-शोधनैः शमनैरपि।
विमदस्य कफे क्षीणे जाते दौर्ब्बल्यलाघवे॥
तस्य मद्यविदग्धस्य वातपित्ताधिकस्य च।
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः॥
पयसा विहते रोगे बले जाते निवर्त्तयेत्।
क्षीरप्रयोगं मद्यञ्च क्रमेणाल्पाल्पमाचरेत्॥ ६६॥
विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते।
ध्वंसो विक्षेपकश्चैव * रोगस्तस्योपजायते॥
व्याध्युपक्षीणदेहस्य दुश्चिकित्स्यतमौ हि तौ।
तयोर्लिङ्गं चिकित्सा च यथावदुपदेक्ष्यते॥ ६७॥

कुर्य्यात्, तस्माद् हर्षजननी क्रिया एष्टव्या भवति। आभिरित्यादि। आभिर्मद्ययोगयुक्ताभिः क्रियाभिश्चेन्न मदात्ययः शमं याति, तदा मद्यक्रममस्य मुक्त्वा क्षीरं प्रयोजयेत्॥ ६५॥

गङ्गाधरः—कथं पयोऽत्र युज्यते तदाह—लङ्घनैरित्यादि। विमद्यस्य मद्यात् विगतस्य मदात्यये लङ्घनादिभिः कफक्षये दौर्ब्बल्यलाघवे जाते मद्यविदग्धस्य वातपित्ताधिकस्य पयस्तथा स्यात् यथा ग्रीष्मोपतप्तस्य तरोर्वर्षं जलवृष्टिः स्यादिति। पयसेत्यादि। मदात्यये रोगे पयसा विहते सति बले च जाते क्षीरप्रयोगं निवर्त्तयेत्। क्रमेणाल्पाल्पं मद्यञ्चाचरेत्॥ ६६॥

गङ्गाधरः—किमर्थं क्रमेणाल्पाल्पमाचरेदित्यत आह—विच्छिन्नेत्यादि। क्षीरप्रयोगे क्रियमाणे मद्यं विच्छिद्यते। ततो विच्छिन्नमद्यः सन् योऽतिमद्यं सहसा निषेवते ध्वंसको विक्षेपकश्चैव नाम रोगस्तस्योपजायते। व्याध्युपेत्यादि। तयोर्ध्वंसकविक्षेपयोरिति॥ ६७॥

क्षीरप्रयोगस्य विषयमाह—लङ्घनैरित्यादि। तत्र कार्य्यक्षीरवृत्तिकमं पुनर्मद्याभ्यासक्रमञ्चाह—पयसाभिहत इत्यादि। क्रमेणेति कालक्रमेण। अल्पाल्पमिति स्तोकं स्तोकम्॥ ६५। ६६॥

चक्रपाणिः—एतद्विपर्य्ययेण मद्यसेवायां दोषमाह—विच्छिन्नेत्यादि। ध्वंसकविटक्षयौ

* ध्वंसको विटक्षयश्चैवेति चक्रसम्मतः पाठः।

श्लेष्मप्रसेकः कण्ठास्य-शोषः शब्दासहिष्णुता।
मोहस्तन्द्रातियोगश्च ज्ञेयं ध्वंसकलक्षणम्॥
हृत्कण्ठरोगः सम्मोहश्छर्द्दिरङ्गरुजा ज्वरः।
तृष्णा कासः शिरःशूलमेतद् विक्षेपलक्षणम्॥ ६८॥

गङ्गाधरः—श्लेष्मेत्यादि। शब्दानां श्रवणे सहिष्णुता न भवति। हृत्कण्ठेत्यादि। एतद्विक्षेपलक्षणमिति ध्वंसकविक्षेपयोभदेऽपि। सुश्रुते—विच्छिन्नमद्यपानस्य सहसातिमद्यपाने मदात्ययोक्तलिङ्गमतिदिष्टमिति। तद् यथा—विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते। तस्य पानात्ययोद्दिष्टा विकाराः सम्भवन्ति हि॥ इति। मदात्ययात् पृथगेव विच्छिन्नमद्यस्यातिमद्यपानजविकार उक्तो न नाम्नाभिहितः, इह तु तन्त्रे नाम्ना द्वौ रोगावेतावुक्तौ ; न ततो विरोधः। ये च पुनः सुश्रुते परमदपानाजीर्णपानविभ्रमाख्यत्रयोऽपरे रोगा उक्ताः पानात्ययैककारणास्ते पुनरिह तन्त्रे नोक्ताः, तत्रायमभिप्रायः—सुश्रुते पानात्ययस्य वातपित्तकफसन्निपातस्य चतुर्व्विधस्य लक्षणान्युक्तानि, तत्र वातादिलक्षणानि उक्त्वाऽतिदेशेन सन्निपातलक्षणमुक्तम्। तद् यथा—सर्व्वात्मके भवति सर्व्वविकारसम्पदिति। द्व्युल्वणहीनमध्याधिकसमदोषाणां दशविधानां सन्निपातानां लक्षणं कल्पनीयमिति ख्यापितम्, तत्र नामविशेषज्ञापनार्थं परमदादयस्त्रयो विशेषणोक्ताः। तद् यथा—उष्मा शरीरगुरुता विरसाननत्वं, श्लेष्माधिकत्वमरुचिर्मलमूत्रसङ्गः। लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः॥ इति कफवातोल्वणसन्निपातजोऽयम्। आध्मानमुद्गिरणमम्लरसो विदाहोऽजीर्णस्य पानजनितस्य वदन्ति लिङ्गम्। ज्ञेयानि तत्र भिषजा सुविनिश्चितानि, पित्तप्रकोपजननानि च कारणानीति पानाजीर्णं च वातपित्तोल्वणसन्निपातजमाध्मानादिदर्शनात् चकाराद् वातप्रकोपजननानि कारणानीति। हृद्गात्रतोदवमथुज्वरकण्ठधूम मूर्च्छाकफस्रवणमूर्द्धरुजो विदाहः। द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेन धीराः॥ इति पित्तकफोल्वणसन्निपातज एष इति न विरोधः। नायं पानविभ्रमो रोगः स य इह पूर्व्वमुक्तः। जायन्ते मोहनिद्रार्त्ता मद्यस्यातिनिषेवणात्। स

वक्ष्यमाणलक्षणौ सुश्रुतेनाप्युक्तौ। केचित् तु 'विच्छिन्नमद्यः सहसा यस्तु मद्यं निषेवते। तस्य पानस्यातियोगाद विकारः सम्भवेदिति' ग्रन्थेन ध्वंसकस्यावरोधं वर्णयन्ति॥ ६७। ६८॥

तयोः कर्म्म तदेवेष्टं वातिके यन्मदात्यये।
तौ हि प्रक्षीणदेहस्य जायेतां दुर्बलस्य वै॥
वस्तयः सर्पिषः पानं प्रयोगाः क्षीरसर्पिषोः।
अभ्यङ्गोत्सादनस्नानान्यन्नपानञ्च वातनुत्॥
ध्वंसको विक्षेपश्चैव कर्म्मणानेन शाम्यतः॥ ६९॥
युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते।
निवृत्तः सर्व्वमद्येभ्यो नरो यः स्याज्जितेन्द्रियः।
शारीरमानसैर्धीमान् विकारैर्न स युज्यते॥ ७०॥

मद्यविभ्रमो नाम्ना मद इत्यभिधीयत इति मदविशेषत्वेनोक्त्या रोगत्वाभावात्। सुश्रुते च असाध्यतालक्षणञ्चोक्तम्। तद्यथा—हीनोत्तरौष्ठमतिशीतममन्ददाहं तैलप्रभास्यमपि पानहतं विजह्यात्। जिह्वौष्ठदन्तमसितं त्वथवापि नीलं पीते च यस्य नयने रुधिरप्रभे वा। हिक्का ज्वरो वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं भजन्ते॥ ६८॥

गङ्गाधरः—ध्वंसकविक्षेपयोश्चिकित्सामाह—तयोरित्यादि। वातिकमदात्यये यदुक्तं कर्म्म तत्तयोर्ध्वंसकविक्षेपयोरिष्टम्। कस्मात्? तौ हीत्यादि। कर्म्मान्तरञ्चाह—वस्तय इत्यादि। कर्म्मणानेन वातमदात्ययोक्तकर्म्म वस्त्यादिकर्म्म च यदिहोक्तमिति॥ ६९॥

गङ्गाधरः—युक्तेत्यादि। सम्यग्योगतो युक्तमद्यस्य नरस्य न मद्योत्थो व्याधिर्जायते। तर्हि किं युक्त्या सर्व्व एव मद्यं पिबेदित्यत आह—निवृत्त इत्यादि। सर्व्वमद्येभ्यो युक्तायुक्तसर्व्वमद्येभ्यो यो निवर्त्तते जितेन्द्रियः सन् स शारीरमानसैर्मद्यविकारैर्न युज्यते इति मद्यनिवृत्तौ महाफलं युक्तपाने दोषो नास्ति। एतदभिप्रायेण मनुना चोक्तम्—न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेति॥ ७०॥

चक्रपाणिः—एतयोश्चिकित्सामाह—तयोरित्यादि। कर्म्म इति चिकित्सा। तौ हीत्यादिना दुर्बलतया वातप्रधानतां दर्शयति। युक्तमद्यस्येति यथोक्तविधिना मद्यमाचरतः। सर्व्वथा-मद्यपरित्यागफलमाह—निवृत्त इत्यादि। जितेन्द्रिय इति विशेषणं मद्यनिवृत्तावेव प्रयोजनीयम्। शारीरमानसैर्विकारैरिति मद्यव्यापत्तिजन्यैरेव शारीरमानसैर्विकारैः। न युज्यत इति शारीर-मानसविकारैर्मद्यनिवृत्त्या न युक्तो भवति॥ ६९। ७०॥

तत्र श्लोकाः।

यत्प्रभावा भगवती सुरा पेया यथा च सा।
यद्द्रव्या यस्य या चेष्टा योगश्चापेक्षते यथा॥
यथा मदयते यैश्च गुणैर्युक्ता महागुणा।
यो मदो मदभेदाश्च ये त्रयः स्वस्वलक्षणाः॥
ये च मद्यकृता दोषा गुणा ये च मदात्मकाः।
यच्च त्रिविधमापानं यथासत्त्वञ्च लक्षणम्॥
ये सहायाः सुखाः पाने विरज्यत्प्रमदा नराः।
मदात्ययस्य यो हेतुर्लक्षणञ्च यथायथम्॥
मद्यं मद्योत्थितान् रोगान् हन्ति यश्च क्रियाक्रमः।
सर्व्वं तदुक्तमखिलं मदात्ययचिकित्सिते॥ ७१॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थाने मदात्ययचिकित्सितं नाम चतुर्विंशोऽध्यायः॥ २४॥

गङ्गाधरः— अध्यायार्थमुपसंहरति। तत्र श्लोका इत्यादि॥ ७१॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बलप्रतिसंस्कृत एव च। मदात्ययचिकित्सिते चतुर्व्विंशोऽध्याये पुनः। वैद्यगङ्गाधरकृते जल्पकल्पतरौ पुनः। चिकित्सितस्थानजल्पे षष्ठस्कन्धे मदात्यये। चिकित्सितजल्पो नाम शाखा चतुर्व्विंशी स्मृता॥ २४॥

चक्रपाणिः— यत्प्रभावेत्यादि अध्यायसंग्रहः। संग्रहार्थो व्यक्त एव॥ ७१॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां मदात्ययचिकित्सितं नाम चतुर्व्विंशोऽध्यायः॥ २४॥

## पञ्चविंशोऽध्यायः ।

अथातो द्विव्रणीयचिकित्सितं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

परावरज्ञमात्रेयं गतमानमदव्यथम् ।
अग्निवेशो गुरुं काले पूजयन्निदमब्रवीत् ॥
भगवन् पूर्व्वमुद्दिष्टौ द्वौ व्रणौ रोगसंग्रहे ।
तयोर्लिङ्गं चिकित्साञ्च वक्तुमर्हसि शर्म्मद ॥ २ ॥
हुताशवेशस्य वचस्तत्श्रुत्वा गुरुरब्रवीत् ।
यौ व्रणौ पूर्व्वमुद्दिष्टौ निजश्चागन्तुरेव च ॥
श्रूयतां विधिवत् सौम्य तयोर्लिङ्गं सभेषजम् ।
निजः शरीरदोषोत्थ आगन्तुर्बाह्यहेतुजः ॥

गङ्गाधरः—अथोद्दिष्टक्रमाद् द्विव्रणीयचिकित्सितमाह—अथात इत्यादि। पूर्व्ववत् सर्व्वं व्याख्येयमिति ॥ १ ॥

गङ्गाधरः—परावरज्ञमित्यादि। परं यतो यत् परमुत्कृष्टं यतो यदवरमपकृष्टं तदुभयज्ञम्। कठवल्ल्यामुक्तम्—"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरिति॥" इदं किमब्रवीत्—भगवन्नित्यादि। रोगसंग्रहेऽष्टोदरीये पूर्व्वमुद्दिष्टौ द्वौ व्रणाविति निर्दिष्टौ च तत्रैव। द्वौ व्रणाविति निज आगन्तुश्चेति। तयोर्लिङ्गं चिकित्साञ्च वक्तुमर्हसीत्यब्रवीदग्निवेशः ॥ २ ॥

गङ्गाधरः—हुताशेत्यादि। निजश्चागन्तुरेव चेति निर्दिष्टौ द्वौ व्रणौ, तयोर्लिङ्गं

चक्रपाणिः—मद्यमत्तस्य सम्प्रहारादिना व्रणोत्पत्तौ व्रणचिकित्सार्थं द्विव्रणीय उच्यते। परो मोक्षः अवरं तज्ज्ञानातीति परावरज्ञः ॥ १ ॥

चक्रपाणिः—लिङ्गं चिकित्साञ्चेत्यत्र हेतोरपि ग्रहणम्। दोषाः शारीरा एव, तथापीह शरीरपदं स्नायुदोषादिषु नियुक्तदोषन्युदासार्थम्। निजागन्तुव्रणभेदमाह—मन्त्रेत्यादि। निजः सम्यम्

वधबन्धप्रपतनाद् दंष्ट्रादन्तनखक्षतात्।
आगन्तवो व्रणास्तद्वद् विषस्पर्शाग्निशस्त्रजाः॥
मन्त्रागदप्रलेपाद्यै र्भेषजैर्हेतुभिश्च ते।
लिङ्गैकदेशश्चोद्दिष्टा विपरीता निजैर्व्रणाः॥
व्रणानां निजहेतूनामागन्तूनामशाम्यताम्।
कुर्य्याद् दोषबलावेक्षी निजानामौषधं यथा॥
यथास्वैर्हेतुभिर्दुष्टा वातपित्तकफा नृणाम्।
बहिर्मार्गं समाश्रित्य जनयन्ति निजान् व्रणान्॥ ३॥

सभेषजं श्रूयतामिति। निज इत्यादि। शारीरदोषवातपित्तकफेभ्यो व्रणो निज उच्यते। वाह्यहेतुजो व्रण आगन्तुज उच्यते। तत्र वाह्यहेतूनाह। वधेत्यादि। यथा वधादिभ्यो व्रणा जायन्ते तद्वद् विषादिजाश्च। ते व्रणा मन्त्रादिभिरुद्दिष्टास्तेभ्यो विपरीता निजैर्वातादिभिर्हेतुभिर्जाता व्रणाः। व्रणानामित्यादि। निजहेतूनामागन्तूनाञ्च व्रणानामशाम्यतां दोषबलावेक्षी निजानां व्रणानामौषधं यथा कुर्य्यात् तदाह—यथास्वैरित्यादि। यथास्वैर्वाह्यहेतुभिर्व्यायामादिभिर्दुष्टा वातादयः॥ ३॥

आगन्तवो व्रणाः विपरीताः मन्त्रादिभिर्भेषजैश्च तथा हेतुभिश्च वधबन्धनादिभिस्तथा लिङ्गैकदेशैश्च। स वै लिङ्गैकदेशः यथा आगन्तुः पूर्व्वमुदेति पश्चाद् वातादीन् कोपयति। निजे तु पूर्व्वं वातादयः प्रकुप्यन्ति पश्चाद् व्याश्रय उत्पद्यन्ते। आगन्तुर्व्यथापूर्व्वमुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति इत्यादि, आगन्तुव्रणस्य भिन्नविषयतया विशिष्टेह वक्तव्या। तेन तस्याः चिकित्सामपि समासादेव तावदाह—व्रणानामित्यादि। आगन्तूनां व्रणानां मन्त्रादिचिकित्सया अशाम्यतां तथा निजानां वक्ष्यमाणैरौषधैः दोषबलावेक्षी सन् कुर्य्यादिति योजना। आगन्तूनां चेह चिकित्सया प्रशमनं निजदोषानुबन्धादेव ज्ञेयम्। अतएवेह निजहेतूनामिति कृतम्। यथास्वैरित्यादिना निजव्रणहेतुसंप्राप्त्यादिकथनम्। अत्र यथास्वैर्हेतुभिरिति वचनेन वातादीनां स्वातन्त्र्येण प्रकोपं दर्शयति। अहेतुदुष्टो दोषः स्वतन्त्रो भवति। किञ्च यथास्वैर्हेतुभिरिति वचनेन य एव वातादिकोपहेतवस्त एवात्र निजव्रणकारका भवन्ति। न पुनरत्र व्रणानां विशिष्टो हेतुरस्ति, सामान्यवातादिहेतुस्तु विशिष्टव्रणलक्षणकार्य्योत्पत्तिः सम्प्राप्तिभेदाद् भवतीति ज्ञेयम्॥ २।३॥

स्तब्धः खरोऽग्निसंस्पर्शो * मन्दस्रावो महारुजः ।
तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः ॥
सम्पूरणैः स्नेहपानैः स्निग्धैः स्वेदोपनाहनैः ।
प्रदेहपरिषेकैश्च वातव्रणमुपाचरेत् ॥ ४ ॥
तृष्णामोहज्वरक्लेद-दाहदुष्टयवदारणैः ।
व्रणं पित्तकृतं विद्यात् गन्धैः स्रावैश्च पूतिकैः ॥
शीतलैर्मधुरैः स्निग्धैः प्रदेहपरिषेचनैः ।
सर्पिःपानैर्विरेकैश्च पैत्तिकं शमयेद् व्रणम् ॥ ५ ॥
बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः ।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरकारी कफव्रणः ॥
कषायकटुरूक्षोष्णैः प्रदेहैः परिषेचनैः ।
कफव्रणं प्रशमयेत् तथा लङ्घनशोधनैः ॥ ६ ॥

गङ्गाधरः—तत्र वातादिव्रणलक्षणमाह । स्तब्ध इत्यादि । अग्निसंस्पर्शोऽग्निरिव स्पृश्यते । तस्य चिकित्सामाह—सम्पूरणैरित्यादि । सम्पूरणानि वातहराणि द्रवद्रव्याणि ॥ ४ ॥

गङ्गाधरः—पित्तव्रणलक्षणमाह । तृष्णेत्यादि । पूतिकैर्गन्धैः पूतिकैश्च स्रावैरिति । अस्य चिकित्सामाह । शीतलैरित्यादि । प्रदेहादिविशेषणानि शीतादीनि ॥ ५ ॥

गङ्गाधरः—बहुपिच्छेत्यादिना कफव्रणः । चिरकारी चिरेण जायते प्रशाम्यति च । तस्य चिकित्सामाह । कषायेत्यादि । प्रदेहपरिषेचनविशेषणानि कषायादीनि ॥ ६ ॥

चक्रपाणिः—स्तब्धः कठिनेत्यादिना वातादिव्रणानां लक्षणानि तथा चिकित्सासूत्रञ्चाह । प्रदेहैः परिषेकैश्चेत्यत्र स्निग्धैरित्यनुवर्त्तते । चिरकारीति चिरं करोतीति चिरकारी । चिकित्सासमासाभिधानञ्च सुखग्रहणार्थमेव ॥ ४—६ ॥

* स्तब्धः कठिनसंस्पर्श इति चक्रसम्मतः पाठः ।

तौ द्वौ नानात्वभेदेन भिन्नाः स्युर्विंशतिर्व्रणाः।
तेषां परीक्षा त्रिविधा प्रदुष्टा द्वादश स्मृताः॥
स्थानान्यष्टौ तथा गन्धाः परिस्रावाश्चतुर्द्दश।
षोड़शोपद्रवा दोषाश्चत्वारो विंशतिस्तथा॥
तथा चोपक्रमाः सिद्धाः षट्त्रिंशत् समुदाहृताः।
विभज्यमानान् शृणु मे सर्व्वानेतान् यथेरितान्॥ ७॥
कृत्योऽकृत्यस्तथा दुष्टस्तथा मर्म्मस्थितो नवः।
संवृतो दारुणोत्सन्नः सविषो विषमस्थितः॥
असाध्योत्सङ्ग एवैषां व्रणान् विद्यात् विपर्य्ययात्।
इति नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः॥ ८॥

गङ्गाधरः—अथ द्वयोर्भेदान्तरमाह। तौ द्वावित्यादि। तौ द्वौ निजागन्तू व्रणौ नानात्वभेदात् विंशतिर्व्रणाः स्युः। तेषां त्रिविधा परीक्षा इत्येवमादीन् विभज्यमानान् शृणु॥ ७॥

गङ्गाधरः—नानात्वभेदेन विंशतिं व्रणानाह। कृत्य इत्यादि। कृत्यः सुखेन क्रियासाध्यस्तद्विपरीतो दुःखेन क्रियासाध्यः। अकृत्योऽसाध्यः तद्विपरीतो याप्यः। दुष्टस्तद्विपरीतस्त्वदुष्टः। मर्म्मस्थितस्तद्विपरीतस्त्वमर्म्मस्थितः। नवस्तद्विपरीतः पुराणः। संवृतस्तद्विपरीतस्त्वसंवृतः। दारुणोत्सन्नस्तद्विपरीतस्त्वदारुणोत्सन्नः। सविषस्तद्विपरीतो निर्व्विषः। विषमस्थितः तद्विपरीतः समस्थितः। असाध्युत्सङ्गस्तद्विपरीतः साध्युत्सङ्गः। इत्येवं कृत्यादीनामेषां दशानां विपर्य्ययात् दश व्रणान् विद्यादिति नानात्वभेदेन विंशतिर्व्रणा निरुक्ताः॥ ८॥

चक्रपाणिः—तौ द्वावित्यादि। नानात्वकारको भेदः नानात्वभेदः। प्रकर्षेण दुष्टाः प्रदुष्टाः॥ ७॥

चक्रपाणिः—कृत्योऽकृत्येत्यादिना व्रणभेदा व्याक्रियन्ते। तत्र कृत्यः छेदनेनोपरमणीयः। उतकृत्यस्तु नात्र किञ्चित्करणीयमस्ति परं रोपणीय एव। किंवा कृत्यः साध्यः उतकृत्यस्त्वसाध्यः। कृत्यादयः षट् सविपर्य्यया एवोक्ताः, संवृतादयस्तु सप्तोद्दिष्टाः सविपर्य्ययाः सन्तः चतुर्द्दश। उत्सन्न उद्गतमांसः किंवा व्रणाद् वहिः पूयस्योत्सर्गात् विषमस्थितः। सुश्रुते तु तत्राभिसंवृतो अभिविवृतेत्यादिना यद् दुष्टव्रणलक्षणमुक्तं तदतिसंवृतादिविषयम्। इह तु संवृतत्वमात्रमुच्यते। तेनेह दुष्टव्रणेन संवृतस्य ग्रहणमुद्भावनीयम्॥ ८॥

दर्शनप्रश्नसंस्पर्शैः परीक्षा त्रिविधा स्मृता ।
वयोऽवस्थाशरीराणामिन्द्रियाणाञ्च दर्शनात् ॥
हेत्वर्त्तिसात्म्याग्निबलं परीक्ष्यं वचनाद् बुधैः ।
स्पर्शान्मार्द्दवशैत्ये च परीक्ष्ये सविपर्य्यये ॥ ९ ॥
श्वेतोऽवसन्नचर्म्माति-स्थूलचर्म्मातिपिञ्जरः ।
नीलः श्यावोऽतिपिड़को रक्तः कृष्णोऽतिपूतिकः ॥
रोप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादश व्रणाः ॥ १० ॥*
त्वक्सिरामांसमेदोऽस्थि-स्नायुमर्म्मान्तराश्रयाः ।
व्रणस्थानानि निर्द्दिष्टान्यष्टावेतानि संग्रहे ॥ ११ ॥

गङ्गाधरः—तेषां त्रिधा परीक्षामाह—दर्शनेत्यादि । दर्शनेन परीक्षामाह—वय इत्यादि । वय-आदीनां दर्शनात् परीक्षा । वचनात् प्रश्नाद् बुधैर्हेत्वादि परीक्ष्यम् । स्पर्शान्मार्द्दवादि परीक्ष्यम्, काठिन्यमुष्णत्वञ्च तद्विपरीतम् ॥ ९ ॥

गङ्गाधरः—अथ द्वादश प्रदुष्टानाह—श्वेत इत्यादि । श्वेतोऽवसन्नचर्म्मा च अतिस्थूलचर्म्मा च । अतिपिञ्जरश्च नीलश्च श्यावश्चातिपिड़कश्च रक्तश्च कृष्णश्चातिपूतिकश्च रोप्यश्च कुम्भीमुखश्च । इति द्वादश प्रदुष्टा व्रणाः ॥ १० ॥

गङ्गाधरः—अथाष्टौ स्थानान्याह—त्वगित्यादि । अन्तरमभ्यन्तरम् ॥ ११ ॥

चक्रपाणिः—परीक्षात्रैविध्यं विभजते—दर्शनेत्यादि । इन्द्रियाणि च यद्यपि अतीन्द्रियत्वात् अनुमानगम्यानि, तथापीह तदधिष्ठानानां इन्द्रियशब्देनोपादानम् । अग्निश्च यद्यपि अग्निं जरणशक्त्येति वचनादनुमानविषयोक्तस्तथापि प्रश्नेनाग्निरवगम्यते एवेति कृत्वा इह वचनपरीक्षणीयत्वेनोक्तः । सविपर्य्यये इति काठिन्यौष्ण्ययुक्ते । अनुमानञ्च यद्यपि परीक्षाधिकारे प्रोक्तं "द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्चेत्यादिना तथाप्यनुमानस्य प्रत्यक्षपूर्व्वकत्वम्," किन्तु दर्शनपूर्व्वकत्वादनुमानस्य दर्शनादिना अनुमानमपि इन्द्रियादिग्राहकं संगृहीतमुक्तमिति पश्यामः । दर्शनशब्दश्चात्र साक्षादुपलब्धिवचनः । तेन व्रणगतगन्धेऽपि व्रणपरीक्षणं संगृहीतं भवति । दर्शनशब्देन च गृहीतोपदर्शनेति भूयसा व्याप्रियमाणत्वात् ॥ ९ ॥

चक्रपाणिः—श्वेतोऽवसन्नेत्यादिना प्रदुष्टव्रणानाह । रोप्यलक्षणं तन्त्रान्तरादवगन्तव्यम् । यथाहि भोजः—"रूढा व्रणाः प्रकुप्यन्ति अन्तर्दोषाः पुनःपुनः । वहिर्दुष्टा भवन्त्येव रोप्यास्ते तु प्रकीर्त्तिताः" इति । एतेषामेव श्वेतादीनां भेदानां चतुर्व्विंशतित्वं दर्शयन्नाह—कल्पेनानेनेति । व्रणदुष्टिकारककारणयोगभेदेन भिद्यमानाः चतुर्व्विंशतिभेदा भवन्तीत्यर्थः । त्वगित्यादि स्थान-

* इतः परं वक्ष्यमाणः 'चतुर्व्विंशतिरुद्दिष्टा' इत्यादिपाठः क्वचिद् दृश्यते ।

सर्पिस्तैलवसापूय-रक्तश्यावाम्लपूतिकाः।
व्रणानां व्रणगन्धज्ञैरष्टौ गन्धाः प्रकीर्त्तिताः॥ १२॥
लसीकाजलपूयासृग्घरिद्रारुणपिञ्जराः।
कषायनीलहरित-स्निग्धरुक्षसितासिताः
इति रूपैः समुद्दिष्टा व्रणस्रावाश्चतुर्द्दश॥ १३॥
विसर्पः पक्षघातश्च शिरःस्तम्भोऽपतानकः।
मोहोन्मादव्रणरुजा ज्वरस्तृष्णा हनुग्रहः॥
कासश्छर्द्दिरतीसारो हिक्का श्वासः सवेपथुः।
षोड़शोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकः॥ १४॥
चतुर्व्विंशतिरुद्दिष्टा दोषाः कल्पान्तरेण च।
स्नायुक्लेदाच्छिराच्छेदाद्‌ गाम्भीर्य्यात् क्रिमिभक्षणात्॥

गङ्गाधरः—अथाष्टौ गन्धानाह—सर्पिरित्यादि। सर्पिर्गन्धादयोऽष्टौ गन्धाः। श्यावगन्धिधमगन्धिः॥ १२॥

गङ्गाधरः—अथ चतुर्द्दश परिस्रावानाह। लसीकेत्यादि। लसीकादयः चतुर्द्दश व्रणस्रावाः॥ १३॥

गङ्गाधरः—अथ व्रणानामुपद्रवान् षोड़शाह। विसर्प इत्यादि। व्रणानां रुजाऽतिवेदना। विसर्पादयः षोड़शोपद्रवाः॥ १४॥

गाङ्गाधरः—अथ चत्वारश्च विंशतिश्चेति चतुर्व्विंशतिर्दोषा व्रणानामुच्यन्ते। चतुर्व्विंशतिरित्यादि। कल्पान्तरेण च न तु वातादिभेदेन। तत् कल्पान्तरं दर्शयति। स्नायुक्लेदादित्यादि। व्रणानामप्रशमहेतवो भवन्ति चतुर्व्विंशतिर्दोषाः। तद्‌यथा। स्नायुक्लेदश्च चिराच्छेदश्च गाम्भीर्य्यञ्च क्रिमिभक्षणञ्च

निर्देशः। सर्पिरित्यादिना गन्धनिर्देशः। श्यावगन्धं दध्यादेः समानं गन्धमाहुः। केचित् तु शवस्य गन्धः शावः, अम्लसहचरितगन्धोऽम्लगन्ध इति वदन्ति॥ १०—१२॥

चक्रपाणिः—लसीकेत्यादिना स्रावानाह। प्रकारान्तरोद्दिष्टान् चतुर्व्विंशतिदोषानाह—

अस्थिभेदात् सशल्यत्वात् सविषत्वादतर्कणात्।
नखकाष्ठावबाधाच्च मर्म्मलोमाभिघट्टनात्॥
मिथ्याबन्धादतिस्नेहादतिभेषज्यकर्षणात्।
अजीर्णादतिभुक्ताच्च विरुद्धासात्म्यभोजनात्॥
शोकात् क्रोधाद् दिवास्वप्नाद् व्यवायात् क्षोभणात् तथा।
व्रणा न प्रशमं यान्ति निष्क्रियत्वाच्च देहिनाम्॥ १५॥
परिस्रावाच्च गन्धाच्च दोषाच्चोपद्रवैः सह।
व्रणानां बहुदोषाणां कृच्छ्रत्वञ्चोपजायते॥ १६॥
त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः।
धीमतोऽभिनवः काले सुखे साध्यः सुखव्रणः॥
गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः।
सर्व्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः॥ १७॥

अस्थिभेदश्च सशल्यत्वञ्च सविषत्वञ्च अतर्कणञ्च नखावबाधश्च काष्ठावबाधश्च मर्म्माभिघट्टनञ्च लोमाभिघट्टनञ्च मिथ्याबन्धश्च अतिस्नेहश्च अतिभेषज्यकर्षणञ्च अजीर्णञ्च अतिभुक्तञ्च विरुद्धभोजनञ्च असात्म्यभोजनञ्च शोकश्च क्रोधश्च दिवास्वप्नश्च व्यवायश्च क्षोभणञ्चेति चतुर्व्विंशतिदोषाद् व्रणा न प्रशमं यान्ति। न चैतावता दोषेण व्रणानां कृच्छ्रसाध्यत्वमस्त्यन्यभावाच्च। निष्क्रियत्वाच्च देहिनां व्रणा न प्रशमं यान्ति॥ १५॥

गङ्गाधरः—परिस्रावाद् गन्धाद् दोषादुपद्रवाद् बहुदोषत्वाद् व्रणानां कृच्छ्रत्वञ्चोपजायते॥ १६॥

गङ्गाधरः—सुखसाध्यत्वमाह—त्वङ्मांसज इत्यादि। सुखे देशे यत्र क्लेशातिशयो न स्यादौषधदानादिषु च सुखं स्यात्। तरुणस्य यूनः। अनुपद्रवो विसर्पादुपद्रवहीनः। धीमत इति क्रियाकरणे पथ्यसेवायां रतिमतः। सुखे काले हिमशिशिरे। गुणैरित्यादि। त्वङ्मांसजत्वादिगुणानामन्यतमैर्बहुभिर्गुणैर्हीनो

स्नायुक्लेदेत्यादि। अत्र नखकाष्ठप्रभेद एकं कारणम्। मर्म्मलोमातिघट्टनं द्वितीयं कारणम्। तृतीयं निष्क्रियत्वम्। असाध्यो निष्प्रतीकार इत्यर्थः। असाध्यत्वमभिप्रायापि निरुपक्रमताभिधानेन सोपक्रममसाध्यं याप्यं निषेधयति॥ १३—१७॥

व्रणिनामादितः कार्य्यं यथासत्त्वं विशोधनम्।
ऊर्द्ध्वभागैरधोभागैः शस्त्रैर्वस्तिभिरेव च ॥
सद्यः शुद्धशरीराणां प्रशमं यान्ति हि व्रणाः।
यथाक्रममतश्चोर्द्ध्वं शृणु सर्व्वानुपक्रमान् ॥ १८ ॥

व्रणस्ततः कृच्छ्रसाध्यः स्मृतः। सर्व्वैरित्यादि। त्वङ्मांसजत्वादिसर्व्वगुणैः विहीनो व्रणोऽसाध्यो ज्ञेयः। तर्हि किं याप्य इति। निरुपक्रमो न तु याप्यः। सुश्रुते चासाध्यलक्षणादिकञ्चोक्तम्। तद्यथा—"अत ऊर्द्ध्वमसाध्यान् वक्ष्यामः। मांसपिण्डवदुद्गताः प्रसेकिनोऽन्तःपूया वेदनावन्तोऽश्वापानवदुद्वृत्तौष्ठाः। केचित् कठिना गोशृङ्गवदुन्नतमृदुमांसप्ररोहाः। अपरे दुष्टरुधिरास्राविणस्तनुपिच्छिला-स्राविणो वा मध्योन्नताः। केचिदवसन्नशुषिरपर्य्यन्ताः। शणतूलवत् स्नायु-जालवन्तो दुर्दर्शा वसामेदोमज्जमस्तुलुङ्गस्राविणश्च दोषसमुत्थाः। पीतासितमूत्र-पुरीषवातवाहिनश्च कोष्ठस्थाः क्षीणमांसानाञ्च सर्व्वतोगतयश्चाणमुखा मांसबुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःकण्ठस्थाः। क्षीणमांसानाञ्च पूयरक्तनिर्व्वाहिणोऽरोचकाविपाककासश्वासोपद्रवयुक्ताः। भिन्ने वा शिरः-कपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुर्भावः कासश्वासौ वा यस्येति। भवन्ति चात्र। वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्। आगन्तुजो व्रणः सिध्येन्न सिध्येद्दोषसम्भवः॥ अमर्म्मोपहिते देशे सिरासन्ध्यस्थिवर्जिते। विकारो योऽनुपर्य्येति तदसाध्यस्य लक्षणम्॥ क्रमेणोपचयं प्राप्य धातूननुगतः शनैः। न शक्य उन्मूलयितुं वृद्धो वृक्ष इवामयः॥ स स्थिरत्वान्महत्त्वाच्च धात्वनुक्रमणेन च। निहन्त्यौषधवीर्य्याणि मन्त्रान् दुष्टग्रहो यथा॥ अतो यो विपरीतः स्यात् सुखसाध्यः स उच्यते। अवद्धमूलः क्षुपको यद्वदुत्पाटने सुखः" इति ॥ १७ ॥

गङ्गाधरः—अथ षट्त्रिंशतमुपक्रमानाह— व्रणिनामित्यादि। आदितो व्रणिनां यथासत्त्वं यादृशबलवत्पुरुषस्तादृशमूर्द्ध्वादिविशोधनं कार्य्यम्। कस्मात्? हि यस्मात् सद्यो व्रणाः शुद्धशरीरिणां प्रशमं यान्ति। यथाक्रममित्यादि। सर्व्वान् षट्त्रिंशतम् ॥ १८ ॥

चक्रपाणिः— अवसरप्राप्तायां षट्त्रिंशदुपक्रमरूपायां चिकित्सायां वक्तव्यायां संशोधनस्य

शोथघ्नं षड्विधञ्चैव शस्त्रकर्म्मावपीड़नम् ।
निर्व्वापणं ससन्धानं स्वेदः शमनमेव च * ॥
शोधनरोपणौ चैव कषायौ सप्रलेपनौ ।
द्वे तैले तद्घृते पत्र-च्छादनं † द्वे च बन्धने ॥
आद्यमुत्सादनं दाहो द्विविधः सावसादनः ।
काठिन्यमार्द्दवकरे धूपने लेपने शुभे ॥
व्रणावचूर्णनं वर्ण्यं रोपणं लोमरोहणम् ।
इति षट्त्रिंशतं विद्याद् व्रणानां समुपक्रमान् ॥ १९ ॥
पूर्व्वरूपं भिषग् बुद्धा व्रणानां शोथमादितः ।
रक्तावसेचनं कुर्य्यादजातव्रणशान्तये ॥

गङ्गाधरः—षड्विधं शोथघ्नं वक्ष्यमाणव्रणशोथघ्नं कर्म्म । शस्त्रकर्म्म चावपीड़नञ्च निर्व्वापणञ्च सन्धानञ्च स्वेदश्च शमनञ्च शोधनकषायश्च रोपणकषायश्च शोधनप्रलेपनञ्च रोपणप्रलेपनञ्च शोधनतैलञ्च रोपणतैलञ्च शोधनघृतञ्च रोपणघृतञ्च पत्रच्छादनञ्च सव्यबन्धनञ्च दक्षिणबन्धनञ्च आद्यञ्चोत्सादनञ्च दाहश्च द्विविधः अवसादनञ्च काठिन्यकरधूपनञ्च मार्द्दवकरधूपनञ्च काठिन्यकरलेपनञ्च मार्द्दवकरलेपनञ्च व्रणावचूर्णनञ्च वर्ण्यञ्च रोपणञ्च लोमरोहणञ्चेति । इति षट्त्रिंशतं व्रणानामुपक्रमान् विद्यात् ॥ १९ ॥

गङ्गाधरः—तत्र यदा यो यत्र कार्य्यस्तदाह । पूर्व्वरूपमित्यादि । व्रणानां पूर्व्वरूपं शोथं व्रणशोथं भिषगादितो दोषलक्षणेन बुद्धा अजातव्रणशान्तये

प्राधान्योपदर्शनार्थं पृथगभिधानम् । व्रणानामित्यादि उपक्रमानाह—शोफघ्नमित्यादिना । शोफघ्न उपक्रमो वक्ष्यमाणः । षट्शस्त्रकर्म्मेति पाटनादि शल्यतन्त्रोक्तं कर्म्मान्तर्भावनीयम् । किन्त्वेषणं शस्त्रकर्म्म तत् पृथगेव । अवपीड़नं कल्कादीनां वासीपूयनिर्गमनार्थं वक्ष्यति । निर्व्वापणं दाहोष्मशमनम् । 'शोधनौ रोपणीयौ च कषायौ संप्रलेपनौ' इति शोधनरोपणकषायौ भेदाद् वक्ष्यति, तथापि शोधनरोपणकर्म्मद्वयकर्त्तृकतया द्वित्वमेव । अत्र तैलघृतयोस्तद्गुणीयत्वम् । काश्मीरास्तु "द्वौ स्नेहौ तद्गुणाविति" पठन्ति । पत्रच्छेदने इति पत्रमेकमुपक्रमः । छेदनञ्च द्विविधं बाह्यान्तरभेदेन वक्ष्यमाणम् । उत्सादनञ्च व्रणोत्थापनम् । अवसादनमुत्सन्नव्रणमांसक्षयकरम् । काठिन्यमार्द्दवकरे धूपनोन्मर्द्दने इति काठिन्यकरं धूपनम्, एवमुन्मर्द्दनमपि ज्ञेयम् । व्रणावचूर्णनं द्विविधम् । एवं षट्त्रिंशदुपक्रमा भवन्ति । शल्यतन्त्रे तु षष्टिरुपक्रमा ये उक्तास्तेऽप्यन्तर्भावनीयाः ॥ १८ । १९ ॥

चक्रपाणिः—यथावस्थमुपक्रममाह—पूर्व्वरूपमित्यादि । त्रिशोफीये व्रणपूर्व्वरूपशोथचिकित्सा-

* एषणेति पाठान्तरम् ।

† पत्रच्छेदने इति चक्रधृतः पाठः ।

शोधयेद् बहुदोषान् वै ह्यणुदोषान् विलङ्घयेत्।
पूर्वं कषायसर्पिर्भिर्जयेद् वा मारुतोत्तरम् ॥ २० ॥

रक्तावसेचनं जलौकादिभिः कुर्य्यात् न छेदनं कुर्य्यादिति षड्विधेषु व्रणशोथघ्नेषु उपक्रमेषु प्रथम उपक्रमो रक्तावसेचनम्। बहुदोषान् शोथवत ऊर्द्ध्वाधः शोधयेत्। अणुदोषान् अल्पदोषवतः शोथिनो विलङ्घयेदिति। पूर्व्वरूपव्रणशोथविज्ञानमुक्तं सुश्रुते। तद्यथा—"शोफसमुत्थाना ग्रन्थिविद्रध्यलजीप्रभृतयः प्रायेण व्याधयोऽभिधास्यन्ते अनेकाकृतयस्तैर्विलक्षणः पृथुग्रथितः समो विषमो वा त्वङ्मांसस्थायी दोषसङ्घातः शरीरैकदेशोत्थितः शोफ इत्युच्यते, स षड्विधो वातपित्तकफशोणितसन्निपातागन्तुनिमित्तः। तस्य दोषरूपव्यञ्जनैर्लक्षणानि व्याख्यास्यामः। तत्र वातशोफोऽरुणः कृष्णो वा परुषो मृदुरनवस्थितास्तोदादयश्चात्र वेदनाविशेषा भवन्ति। पित्तशोफः पीतो मृदुः सरक्तो वा शीघ्रानुसारी चोषादयश्चात्र वेदनाविशेषा भवन्ति। श्लेष्मशोफः पाण्डुः शुक्लो वा कठिनः शीतः स्निग्धो मन्दानुसारी कण्ड्वादयश्चात्र वेदनाविशेषा भवन्ति। सर्व्ववर्णवेदनः सन्निपातजः। पित्तवच्छोणितजोऽतिकृष्णश्च। पित्तरक्तलक्षण आगन्तुर्लोहितावभासश्च। स यदा वाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रशमयितुं क्रियाविपर्य्ययाद् बहुत्वाद् वा दोषाणां तदा पाकाभिमुखो भवति। तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय। तत्र मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्य्यं मन्दवेदनताऽल्पशोफता चामलक्षणमुद्दिष्टम्। सूचीभिरिव निस्तुद्यते दश्यत इव पिपीलिकाभिस्ताभिश्च संसृप्यत इव छिद्यते इव शस्त्रेण भिद्यत इव शक्तिभिस्ताड्यत इव दण्डेन पीड्यत इव पाणिना घट्यत इव चाङ्गुल्या दह्यते पच्यते इव चाग्निक्षाराभ्यामोषचोषपरिदाहाश्च भवन्ति। वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति। आध्मातवस्तिरिवाततश्च शोफो भवति। त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासाभक्तारुचिश्च पच्यमानलिङ्गम्। वेदनोपशान्तिः पाण्डुताऽल्पशोफता वलीप्रादुर्भावस्त्वक्परिपोटनं निम्नदर्शनमङ्गुल्यावपीड़िते प्रत्युन्नमनं वस्ताविवोदकसञ्चरणं पूयस्य प्रपीड़यत्येकमन्तमन्ते चावपीड़िते मुहुर्म्मुहुस्तोदः कण्डूरनुन्नतता च व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम्। कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषक् मोहमुपैति। यत्र हि त्वक्सवर्णता शीतशोफता स्थौल्यमल्परुजताऽश्मवद्घनता

न्यग्रोधोडुम्बराश्वत्थ-प्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रदेहः स्याच्छोथनिर्व्वापणः परः ॥
विजया मधुकं वीरा विसग्रन्थिः शतावरी ।
नीलोत्पलं नागपुष्पं प्रदेहः स्यात् सचन्दनः ॥
सक्तवो मधुकं सर्पिः प्रदेहः स्यात् सशर्करः ।
अविदाहीनि चान्नानि शोथभेषजमुत्तमम् ॥ २१ ॥
स चेदेवमुपक्रान्तः शोथो न प्रशमं व्रजेत् ।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥

न तत्र मोहमुपेयादिति। भवन्ति चात्र। आमं विपच्यमानञ्च सम्यक पक्वञ्च यो भिषक्। जानीयात् स भवेद् वैद्यः शेषास्तस्करवृत्तयः॥ वाताद्दते नास्ति रुजा न पाकः पित्ताद्दते नास्ति कफाच्च पूयः। तस्मात् समस्ताः परिपाककाले पचन्ति शोफांस्त्रय एव दोषाः॥ कालान्तरेणाभ्युदितन्तु पित्तं कृत्वा वशे वातकफौ प्रसह्य। पचत्यतः शोणितमेष पाको मतोऽपरेषां विदुषां द्वितीयः॥ तत्रामच्छेदे मांससिरास्नाय्वस्थिसन्धिव्यापादनमतिमात्रं शोणितातिप्रवृत्तिर्वेदनाप्रादुर्भावोऽवदरणमनेकोपद्रवदर्शनं क्षतविद्रधिर्वा भवति। स यदा भयमोहाभ्यां पक्वमपक्वमिति मन्यमानश्चिरमुपेक्षते व्याधिं वैद्यस्तदा गम्भीरानुगतो द्वारमलभमानः पूयः स्वमाश्रयमवदीर्य्योत्सङ्गं महान्तमवकाशं कृत्वा नाड़ीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति। भवन्ति चात्र। यश्छिनत्त्याममज्ञानाद् यश्च पक्वमुपेक्षते। श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ॥" इति। अत्र वातशोथनिर्व्वापणार्थमाह—पूर्व्वमित्यादि। मारुतोत्तरं व्रणशोथं रक्तावसेचनलङ्घनाभ्यामृते कषायसर्पिर्भिर्वा पूर्व्वं जयेत्॥ २०॥

गङ्गाधरः—न्यग्रोधेत्यादि। न्यग्रोधादीनां वल्कलं जलेन पिष्ट्वा घृतं मिश्रयित्वा प्रदेहः कार्य्यः सर्व्वशोफे। विजयेत्यादि। विजया शक्राशनपत्रम्। एषां प्रदेहोऽपि सर्व्वशोथनिर्व्वापणः। सक्तव इत्यादि। यवादीनां सक्तवः। अविदाहीनि चान्नपानानि आमशोथनिर्व्वापणे भेषजमिति॥ २१॥

गङ्गाधरः—स चेदित्यादि। स आमव्रणशोथः। तस्योपनाहैः पाकं

तैलेन सर्पिषा वापि ताभ्यां वा सक्तुपिण्डिका।
सुखोष्णा शोथपाकार्थमुपनाहः प्रशस्यते॥
सतिला सातसीवीजा दध्नाम्ला सक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता समुपनाहने॥ २२॥
रुग्दाहरागतोदश्च विदग्धं शोफमादिशेत्।
जलवस्तिसमस्पर्शं सुपक्वं पीड़ितोन्नतम्॥
उमाथ गुग्गुलुः सौधं पयो दक्षकपोतयोः।
विट् पलाशभवः क्षारो हेमक्षीरी मुकूलकः॥
इत्युक्तो भेषजगणः पक्वशोथप्रभेदनः।
सुकुमारस्य कृच्छ्रस्य शस्त्रन्तु परमुच्यते॥ २३॥

कृत्वा पाटनं हितं कुर्य्यात्। पाकार्थमाह—तैलेनेत्यादि। यवादिसक्तून् जलेन पक्त्वा तिलतैलेन घृतेन वा तैलघृताभ्यां वा मेलयित्वा कृता पिण्डिका सुखोष्णा व्रणशोफे उपनाहो देयः पाकार्थं प्रशस्यते। सतिलेत्यादि। कृष्ण-तिलातसी सुराकिण्वकुष्ठसैन्धवयुक्ता यवादिसक्तुपिण्डिका दध्नाम्लेनाम्ला सम्यगुपनाहने व्रणशोथपाकार्थं शस्ता॥ २२॥

गङ्गाधरः—रुगित्यादि। यदा व्रणशोफे रुक् च दाहश्च रागश्च तोदश्च पिपी-लिकादिदंशादिवत् तदा शोफं विदग्धं पच्यमानमादिशेत्। यदा शोफं जल-वस्तिसमस्पर्शं पीड़ितं सन्तमुन्नतं जानीयात् तदा सुपक्वं शोफमादिशेत्। इति रक्तावसेचनसंशोधनलङ्घनकषायसर्पिर्निर्व्वापणपाचनानीति षट् शोथघ्नानि कर्म्माणि। अथ पाटनार्थं शस्त्रकर्म्माह। तत्र सुकुमारादीनां पाटनमाह—उमेत्यादि। उमा क्षुमा सौधं सुधायाः पयः। दक्षस्य कुक्कुटस्य कपोतस्य पारावतस्य विट्। पलाशक्षारः। हेमक्षीरी स्वर्णक्षीरी। मुकूलको दन्ती। इत्येषामेकैकस्य पक्वशोथे मुखकरणयोग्यमात्रस्थाने लेपः प्रभेदनः। सुकुमाररोगान्तरकर्षितशस्त्रभीरु-बालादीनां परमं शस्त्रमिदम्॥ २३॥

नागतव्रणोपक्रमे चोक्ताः कषायास्तैः सर्पिर्भिश्चेति कषायसर्पिर्भिः। उपनाहैरिति सोष्ण-बहललेपैः। किण्वं सुरावीजम्। उमा अतसी। सौधं पयः स्नुहीक्षीरम्। हेमक्षीरी कङ्कुष्ठम्। मुकूलको दन्ती। सुकुमारस्येति। कृच्छ्रस्येत्यस्य सुकुमारस्य शस्त्रं परं भेदनमिति सम्बन्धः॥ २०—२३॥

पाटनं व्यधनञ्चैव छेदनं लेखनन्तथा ।
प्रच्छनं सीवनञ्चैव षड् विधं शस्त्रकर्म्म सत् ॥
नाड़ीव्रणाः पक्वशोथास्तथा क्षतगुदोदरम् ।
अन्तःशल्याश्च ये शोफाः पाट्यास्ते तद्विधाश्च ये ॥
दकोदराणि सम्पक्का गुल्मा ये ये च रक्तजाः ।
व्यध्याः शोणितरोगाश्च विसर्पपिड़कादयः ॥
अर्शःप्रभृत्यधीमांसं छेदनेनोपपादयेत् ॥
तद्वृत्तान् स्थूलपर्य्यन्तानुत्सन्नान् कठिनान् व्रणान् ।
किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान् ॥
वातासृग्ग्रन्थिपिड़काः सकोठा रक्तमण्डलाः ।
कुष्ठान्यभिहतश्चाङ्गं शोफांश्च प्रच्छयेद्‌ भिषक् ॥
कुक्ष्युदरादिकं सीव्यं गम्भीरं यद्‌ विपाटितम् ।
इति षड् विधमुद्दिष्टं शस्त्रकर्म्म मनीषिभिः ॥ २४ ॥

गङ्गाधरः—इत्येकं शस्त्रमुक्त्वा शस्त्रकर्म्माण्याह—पाटनमित्यादि। पाटनादिकं षड् विधं शस्त्रकर्म्म सत् साधु भवति। तत्र पाटनक्रियार्हानाह। नाड़ीव्रणा इत्यादि। क्षतगुदोदरं तद्विधा येऽन्ये शोफास्ते पाट्या ज्ञेयाः। व्यधार्हानाह। दकोदराणीत्यादि। सम्पक्का गुल्मा ये ये वा रक्तगुल्माः शोणितरोगाश्च विसर्पादयो व्यध्याः। छेद्यानाह। अर्श इत्यादि। अर्शःप्रभृतीनि प्रभृतिशब्देनाल्पमूलार्व्वुदादीनि। लेख्यानाह। तद्वृत्तानित्यादि। अर्शःप्रभृतीन् वृत्तान् वर्त्तुलान् स्थूलपर्य्यन्तानुत्सन्नान् उच्चैर्भूतान् कठिनान् व्रणांश्च किलासादीनि च लेखनेन तीक्ष्णशस्त्राग्रेण किञ्चित् किञ्चिद् विदरणेनोपपादयेत्। प्रच्छनमाह। वातासृगित्यादि। अभिहतमनिर्गतरक्तमङ्गं प्रच्छयेत्। पाठीनमत्स्यदन्तादिना किञ्चिद् विध्येत्। सीवनमाह। कुक्ष्युदरादिकं यद् गम्भीरं विपाट्यते तत् पुनः सीव्यं स्यात्। इति षड् विधं शस्त्रकर्म्म ॥ २४ ॥

चक्रपाणिः—पाटनमित्यादिना प्रोक्ते षड् विधशस्त्रकर्म्मणि एषणीशस्त्रशस्त्रोक्तकर्म्माविरोधोऽत्र बोद्धव्यः। पाटनादीनां पृथग्विषयमाह—नाड़ीव्रणा इत्यादि। सम्पक्का गुल्मा ये ते व्यध्याः। तथा रक्तजा इति रक्तगुल्माः विधिशोणितीयोक्ताः विसर्पादयः व्यध्याः साध्यसिराव्यध्याः।

सूक्ष्माननाः कोषवन्तो ये व्रणास्तान् प्रपीड़येत् ॥
कलायाश्च मसूराश्च गोधूमाः सहरेणवः।
कल्कीकृताः प्रशस्यन्ते निःस्नेहा व्रणपीड़ने ॥ २५ ॥
शाल्मलीत्वग्बलामूलं तथा न्यग्रोधपल्लवाः।
न्यग्रोधादिकमुद्दिष्टं बलादिकमथापि वा ॥
आलेपनं निर्व्वापणं तद्विधान्यैश्च सेचनम्।
सर्पिषा शतधौतेन पयसा मधुकाम्बुना ॥
निर्व्वापयेत् तु शीतेन रक्तपित्तोत्तरान् व्रणान् ॥ २६ ॥
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा।
सन्दधीत समं वैद्यो बन्धनैश्चोपपादयेत् ॥
तान् मांससंस्थितान् ज्ञात्वा फलिनीलोध्रकट्फलैः।
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥

गङ्गाधरः—अथ प्रपीड़नमाह—सूक्ष्मानना इत्यादि। सूक्ष्माननादीन् व्रणान् प्रपीड़येत्। कैरित्यतः प्रपीड़नद्रव्यमाह। कलाय इत्यादि। कलायो वर्त्तुलत्रिपुटकलायः। हरेणवश्चातिवर्त्तुलकलायाः। निःस्नेहा घृतादिरहिता रूक्षा एव ॥ २५ ॥

गङ्गाधरः—शाल्मलीत्वगित्यादि। शाल्मलीत्वक् च बलामूलञ्च न्यग्रोधपल्लवाश्चेति। एवं पूर्व्वमुद्दिष्टं न्यग्रोधादिकं न्यग्रोधोडुम्बरेत्यादिना, बलादिकं वा बलागुड़ूचीत्यादिना वक्ष्यमाणं तद्विधैरन्यैर्वा सेचनम्। शतधौतसर्पिषा केवलेन पयसा मधुकाम्बुना वा सेचनम् ॥ २६ ॥

गङ्गाधरः—निर्व्वापणमुक्त्वा सन्धानमाह—लम्बानीत्यादि। छेदादितो मांसानि यानि लम्बन्ते तानि सन्दधीत मधुसर्पिषा प्रलिप्य बन्धनैश्च उपपादयेत्। ततो लम्बमानानि मांसानि संस्थितान् व्रणांस्तान् ज्ञात्वा

लेख्यानीति लेखनावस्थां प्राप्तानि। व्रणपीड़न इति व्रणपीड़नश्च लेपो निःस्नेहः व्रणमुखं वर्जयित्वा कर्त्तव्यः ॥ २४ । २५ ॥

चक्रपाणिः—न्यग्रोधादिकमिति। न्यग्रोधोदुम्बराश्वत्थेत्यादिनोक्तम्। अत्रैव बलादिकं

पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः।
धातकीलोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः॥ २७॥
अस्थि भग्नं च्युतं सन्धिं सन्दधीत समं पुनः।
समेन सममङ्गेन कृत्वान्येन परीक्षकः॥
स्थिरैः काकनिकाबन्धैः * कुशिकाभिश्च संस्थितम्।
पट्टः प्रभूतसर्पिष्कैर्बध्नीयादचलं सुखम्॥ २८॥
अविदाहिभिरन्नैश्च पैष्टिकैः समुपाचरेत्।
ग्लानिर्हि न हिता चास्य सन्धिविश्लेषकारिका॥ २९॥
विच्युताभिहताङ्गानां विसर्पादीनुपद्रवान्।
उपक्रमेद् यथाकालं कालज्ञः स्वाच्चिकित्सितात्॥ ३०॥

फलिन्यादिचूर्णैरवचूर्णयेत्। अथवा शुक्तिचूर्णसमन्वितैः पञ्चवल्कलचूर्णैरवचूर्णयेत्। धातक्यादिचूर्णैर्वावचूर्णयेत् तथा सति व्रणा रोहन्ति॥ २७॥

गङ्गाधरः—अस्थि भग्नमित्यादि। भग्नमस्थि। च्युतं विश्लिष्टं सन्धिं समं सन्दधीत। कथमिति तदाह। समेनेत्यादि। यदस्थि भग्नं तत् समेनान्येनाङ्गेन समं कृत्वा स्थिरैः काकनिकानामबन्धैः कुशिकाभिः कुशावेष्टनैः संस्थितमस्खलितं कृत्वा प्रभूतसर्पिष्कैः पट्टैः पटनिर्म्मितपट्टैः अचलं यथा स्यात्तथा सुखं बध्नीयात्॥ २८॥

गङ्गाधरः—अविदाहिभिः पैष्टिकैः पिष्टकृतैरन्नैः समुपाचरेत्। किमर्थमेवंविधैरन्नैः समुपाचरेदित्यत आह—ग्लानिरित्यादि। हि यस्मादस्यास्थिभग्नस्य च्युतसन्धेश्चाहाराभावेन ग्लानिर्न हिता, यतः सन्धिविश्लेषकारिका॥ २९॥

गङ्गाधरः—विच्युतेत्यादि। विच्युतमभिहतं वाङ्गं येषां तेषां व्रणे विसर्पादीन् उपद्रवानुक्तान् स्वात् स्वाच्चिकित्सिताद् यथाकालमुपक्रमेत्। परस्मैपदमुत्सर्गोऽपि क्वचिद्भवतीति नात्मनेपदमिति॥ ३०॥

शोथहरोपक्रमोपदिष्टम्। लम्बानीत्यादिना सन्धानोपक्रममाह। शुक्तिर्बदरिका। समेन सममङ्गेनेति समेन समं सदृशं कृत्वा सन्दधीतेति योज्यम्। कवलिकाकुशिकाबन्धौ सुश्रुते द्रष्टव्यौ॥ २६—२९॥

चक्रपाणिः—विच्युताभिहताङ्गानामिति आनाहादिंतेति केचित् पठन्ति। स्वचिकित्सिता-

* कवलिकाबन्धैरिति पाठान्तरम्।

शुष्का महारुजः स्तब्धा ये व्रणा मारुतोत्तराः।
स्वेद्याः शङ्करकल्पेन ते स्युः कृशरपायसैः॥
ग्राम्यवैलाम्बुजानूपैर्वैशवारैः सुसंस्कृतैः।
उत्कारिकाभिश्चोष्णाभिः सुखी स्याद् व्रणितस्तथा॥३१॥
सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः।
तेषां तिलानुमाञ्चैव भृष्टान् पयसि निर्वृतान्।
तेनैव पयसा पिष्ट्वा दद्यादालेपनं बुधः॥
बला गुडूची मधुकं पृश्निपर्णी शतावरी।
जीवन्ती शर्करा क्षीरं तैलं मत्स्यवसा घृतम्।
संसिद्धा समधूच्छिष्टा शूलघ्नी स्नेहशर्करा॥ ३२॥

गङ्गाधरः—इति सन्धानमुक्त्वा स्वेदमाह। शुष्का इत्यादि। शुष्कादयो मारुतोत्तरा ये व्रणास्ते शङ्करस्वेदकल्पेन स्वेद्याः स्युः, कैः? कृशरपायसैः कृशरैस्तिलकल्कैः पायसैश्च। ग्राम्यादिमांसैः वेशवारीकृतैर्वा स्वेद्याः। तथा उष्णाभिरुत्कारिकाभिर्यवादीनां स्वेद्याः स्युः, तथा सति व्रणितः सुखी स्यात्॥ ३१॥

गङ्गाधरः—इति स्वेदमुक्त्वा व्रणानां शमनलेपनमाह। सदाहा इत्यादि। सदाहादिवातोत्तरव्रणेषु भृष्टांस्तिलानुमाश्च भृष्टां पयसि क्षिप्त्वा शीतीकृत्य तेनैव पयसा पिष्ट्वा लेपनं व्रणेषु दद्यात्। दाहादिशान्तिर्भवति। बलेत्यादि। क्षीरं गव्यम्, तैलं तिलस्य। मत्स्यवसा रोहितादिमत्स्यतैलम्। घृतं गव्यम्। तलमत्स्यवसाघृतानि समानानि मिलितानां पादिकं कल्कं बलादीनां क्षीरं चतुर्गुणं पक्त्वा वस्त्रेण पूत्वा तस्मिन् स्नेहे उष्णे सति मधूच्छिष्टमष्टमांशं शर्करां तत्समां प्रक्षिपेदियं संसिद्धा स्नेहशर्करा व्रणशूलघ्नी प्रलेपनात्। स्नेहशर्करेति वचनादत्र प्रक्षेप्या शर्करा मधूच्छिष्टं मिलित्वा पादिकमिति॥३२॥

दिति विसर्पोद्दिष्टचिकित्सितात्। बला गुडूचीत्यादि। अत्र बलादीनि पिष्टानि तथा शर्करा-क्षीरमधूच्छिष्टतैलादिभिः उत्कारिकां कृत्वा, अन्ये तु बलादिकल्केन तैलादिस्नेहं चतुर्गुणं साधयित्वा स्नेहपानादिकं मधूच्छिष्टप्रक्षेपं प्राहुः। स्नेहस्यार्द्रसंहतावस्थितत्वात् मधुशर्करावत्

द्विपञ्चमूलोत्क्वथितेनाम्भसा मस्तुनाथवा * ।
सर्पिषा वा सतैलेन कोष्णेन परिषेचयेत् ॥ ३३ ॥
यवचूर्णं समधुकं सतिलं सह सर्पिषा ।
दद्यादालेपनं कोष्णं दाहशूलोपशान्तये ॥ ३४ ॥
उपनाहश्च कर्त्तव्यः सतिलो मुद्गपायसः ।
रुग्दाहयोः प्रशमनो व्रणेष्वेवं विधिः स्मृतः ॥ ३५ ॥
सूक्ष्मानना बहुस्रावाः कोषवन्तश्च ये व्रणाः ।
न च मर्म्मस्थितास्तेषामेषणं हितमुच्यते ॥
द्विविधामेषणां विद्यान्मृद्वीश्च कठिनामपि ।
औद्भिदैर्मृदुभिर्नालैर्लोहानां वा शलाकया ॥
गम्भीरं मांसले देशे पाट्यं लोहशलाकया ।
एवंविधाद् व्रणं नालैर्विपरीतमतो भिषक् ॥ ३६ ॥

गङ्गाधरः—द्विपञ्चेत्यादि । सदाहादिवातोत्तरव्रणान् दशमूलक्काथेन मस्तुना वा कोष्णेन सतैलसर्पिषा वा परिषेचयेत् ॥ ३३ ॥

गङ्गाधरः—यवचूर्णमित्यादि । सतिलं कृष्णतिलम् । त्रीणि समानानि जलेन पिष्ट्वा घृतेन मिश्रयित्वा प्रलेपनम् ॥ ३४ ॥

गङ्गाधरः—उपनाह इत्यादि । कृष्णतिलान् मुद्गांश्च समानान् दुग्धेन पक्त्वा पायसः कृतः प्रलेपाद् रुग्दाहप्रशमन इत्येवं विधिः प्रशमनः स्मृतः ॥ ३५ ॥

गङ्गाधरः—इति शमनमुक्त्वा शोधनादीनि वक्तुं तद्विषयमाह—सूक्ष्मानना इत्यादि । कोषवन्तोऽभ्यन्तरे मांसादिशून्याः नाडीवद्गतिमन्तः । न च मर्म्मस्थिता मर्म्मस्थानजान् विहाय ये तेषामेषणं हितम् । कथमेषणं स्यादित्यत आह—द्विविधमित्यादि । मृद्वीमेषणां कठिनाञ्च विद्यात् । कैर्मृद्वी कैश्च कठिना स्यात् ? औद्भिदैर्मृदुभिर्नालैर्मृद्वी एषणा । लोहानां शलाकया कठिनैषणा । तयोर्विषयमाह—गम्भीरमित्यादि । गम्भीरं मांसले देशे

स्नेहशर्करेति व्यपदेशात् । द्विपञ्चमूलक्वथितेनेति अम्भसा पयसा सर्पिःस्तैले योजनीये इति ।

* पयसाथवेति चक्रसम्मतः पाठः ।

पूतिगन्धान् विवर्णांश्च बहुस्रावान् महारुजः।
व्रणानशुद्धान् विज्ञाय शोधनैः समुपाचरेत् ॥
त्रिफला खदिरो दार्व्वी न्यग्रोधादिर्बला कुशाः।
निम्बकूलकपत्राणि कषायाः शोधने हिताः ॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद् घृतम्।
मधुकं निम्बपत्राणि लेपः स्याद् व्रणशोधनः ॥ ३७ ॥
नातिरक्तो नातिपाण्डुर्नातिश्यावो न चातिरुक्।
न चोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः ॥
न्यग्रोधोडुम्बराश्वत्थ-कदम्बप्लक्षवेतसाः।
करवीरार्ककुटजाः कषाया व्रणरोपणाः ॥
चन्दनं पद्मकिञ्जल्कं दार्व्वीत्वङ् नालमुत्पलम्।
मेदे मूर्व्वा समङ्गा च यष्ट्याह्वं व्रणरोपणम् ॥

लोहशलाकयान्वेष्य पाट्यम्। एवंविधाद् गम्भीरान्मांसलदेशाद् विपरीतमगम्भीरममांसले देशे व्रणं नालैरन्वेष्य पाटयेत् ॥ ३६ ॥

गङ्गाधरः—तत्र शोधनार्हानाह। पूतिगन्धानित्यादि। पूतिगन्धादीन् व्रणान् खल्वशुद्धान् विज्ञाय शोधनैः समुपाचरेत्। शोधनयोगानाह। त्रिफलेत्यादि। न्यग्रोधादिः पूर्व्वमुक्तः। एषां कषायेण व्रणं धौतं कुर्य्यात्। शोधनलेपमाह। तिलेत्यादि। तिलेत्यादयोऽष्टौ ह्येको लेपो मिलिता। तिलाष्टकः ॥३७

गङ्गाधरः—शोधनकषायलेपावुक्त्वा रोपणकषायलेपावाह। तद्विषयमाह—नाड़ीत्यादि। उत्सन्नो व्रणस्थाने चेन्न वर्त्तते, व्रणश्च चतुर्दिक्षु च नोत्सङ्गवान् चेन्न स्यात्, तदा शुद्धो व्रण इति ज्ञात्वा स व्रणो रोप्यः। रोपणकषायमाह—न्यग्रोधेत्यादि। न्यग्रोधादिनामेषां कषायेण व्रणधौतं कुर्य्याद्रोपणार्थमिति। रोपणप्रलेपनमाह—चन्दनमित्यादि। चन्दनादिभिर्लेपनं व्रणरोपणम्।

द्विविधामिति औद्भिदैर्मृदुभिर्नालैः मृद्वीं लौहशलाकया कठिनाम्। पाट्यमिति एषणीयम्। निम्ब एव वृद्धनिम्ब उच्यते। किंवा कूलकेति पाठः। कूलकः पटोलः ॥ ३०—३७ ॥

चक्रपाणिः—नातिरक्त इत्यादिना शुद्धव्रणलक्षणमभिधाय रोपणमाह—न्यग्रोधेत्यादि।

प्रपौण्डरीकं जीवन्तीं गोजिह्वां धातकीं बलाम् ।
रोपणं सतिलं दद्यात् प्रदेहं सघृतं व्रणे ॥
कम्पिल्लकं विडङ्गानि वत्सकं त्रिफलां बलाम् ।
पटोलं पिचुमर्दञ्च लोध्रं मुस्तं प्रियङ्गुकम् ॥
धातकीं खदिरं सर्ज्जमेलामगुरुचन्दनम् ।
पिष्ट्वा साध्यं भवेत् तैलं तत् परं व्रणरोपणम् ॥
प्रपौण्डरीकं मधुकं काकोल्यौ द्वे च चन्दने ।
सिद्धमेतैः समैस्तैलं परं स्याद्‌ व्रणरोपणम् ॥
दूर्व्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा ।
दार्व्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं ज्ञात्वा रोपणे घृतमुत्तमम् ॥ ३८ ॥

प्रलेपान्तरमाह। प्रपौण्डरीकमित्यादि। प्रपौण्डरीकादितिलान्तं सघृतं प्रदेहं व्रणरोपणं दद्यात्। अथ शोधनतैलमाह। कम्पिल्लकमित्यादि। कम्पिल्लकादीनि पादिकानि पिष्ट्वा कल्कं दत्त्वा चतुर्गुणजले तैलं साध्यम्। तत् तैलं परं व्रणशोधनं भवेत्। रोपणतैलमाह। प्रपौण्डरीकमित्यादि। काकोल्यौ द्वे चन्दने च द्वे। प्रपौण्डरीकादिकं कल्कं चतुर्गुणं जलम्। रोपणतैलान्तरमाह। दूर्व्वेत्यादि। दूर्व्वास्वरसं चतुर्गुणे कल्कहीनमेकं तैलम्। कम्पिल्लककल्केन चतुर्गुणजलेऽपरं तैलम्। दार्व्वीत्वक्‌कल्केन चतुर्गुणजलेन सिद्धमपरं तैलम्। अथ शोधन-रोपणे घृते आह—येनेत्यादि। कम्पिल्लकादिचन्दनान्तैः कल्कैः घृतं चतुर्गुणजले पक्वं व्रणशोधनम्। प्रपौण्डरीकादिकल्कसिद्धं घृतं चतुर्गुणजले व्रणरोपणम्, तथा दूर्व्वास्वरसे चतुर्गुणे त्वकल्कं घृतं सिद्धम्। कम्पिल्लककल्केन चतुर्गुणजले सिद्धं घृतमपरम्। दार्व्वीत्वक्‌कल्केन चतुर्गुणजलेनापरं सिद्धं घृतं रोपणमिति। घृतं रक्तपित्तोत्तरं ज्ञात्वा साधयेत्। तैलं वातकफोत्तरे साधयेदिति ख्यापितम् ॥ ३८ ॥

कषाया इति बहुवचननिर्द्देशात् समस्तप्रयोगान् सूचयति। दार्व्वीति दारुहरिद्रा। व्रणशोधनीयं तैलं साधयेत्। यथोक्ततैलद्रव्यैरेव घृतं साधयेदिति। घृतविषयमाह—रक्तपित्तोत्तरमित्यादि।

कदम्बार्ज्जुनजम्बूनां पाटल्याः पिप्पलस्य च।
व्रणप्रच्छादने विद्वान् पत्राण्यर्कस्य चादिशेत् ॥ ३९ ॥
वामोऽथवाप्यवामश्च * पट्टो व्रणहितः परः।
बन्धश्च द्विविधः शस्तो व्रणानां सव्यदक्षिणः ॥ ४० ॥
लवणाम्लकटूष्णानि विदाहीनि गुरूणि च।
वर्ज्जयेदन्नपानानि व्रणी मैथुनमेव च ॥ ४१ ॥
नातिशीतगुरुस्निग्धमविदाहि यथाव्रणम्।
अन्नपानं व्रणहितं हितश्चास्वपनं दिवा ॥ ४२ ॥
स्तन्यानि जीवनीयानि बृंहणीयानि यानि च।
उत्सादनार्थं निम्नानां व्रणानां तानि कल्पयेत् ॥ ४३ ॥

गङ्गाधरः—अथ व्रणच्छादने शोधनरोपणे पत्राण्याह। कदम्बेत्यादि। कदम्बादीनां पत्रं व्रणप्रच्छादने आदिशेत् ॥ ३९ ॥

गङ्गाधरः—बन्धनद्वयमाह। वाम इत्यादि। वामः पट्टोऽथवाप्यवामो दक्षिणः पट्ट इति द्विविधो बन्धो व्रणहितः सव्यदक्षिणः शस्तः ॥ ४० ॥

गङ्गाधरः—अथाद्यमिति खाद्यं वर्ज्ज्यमाह—लवणेत्यादि। मैथुनवर्ज्जनं प्रसङ्गादुक्तम्, आद्यशब्देन पथ्यापथ्ययोर्विवक्षितत्वात् ॥ ४१ ॥

गङ्गाधरः—नातीत्यादि। नातिशीतादिकं खाद्यम्। दिवा चास्वपनं हितमिति मैथुनवत् ॥ ४२ ॥

गङ्गाधरः—अथोत्सादनमाह—स्तन्येत्यादि। स्तन्यजननानि दश। जीवनीयानि दश। बृंहणीयानि दश। निम्नानां व्रणानामुत्सादनार्थं कल्पयेत् ॥ ४३ ॥

रोपणीयमिति वचनात् रोपणमेव घृतं कर्त्तव्यं नतु शोधनार्थं घृतं कर्त्तव्यमित्यर्थः। सव्यदक्षिण इति वामदक्षिणः। अत्रैव शल्योक्तचतुर्द्दशबन्धावरोधः कार्य्यः ॥ ३८—४२ ॥

चक्रपाणिः—स्तन्यानि षड्विरेचनाशताश्रितीयोक्तानि। अश्मकासीसं धातुकासीसम्। अधोभागानि त्रिवृतादीनि विरेचनद्रव्याणि।

---

* राज्ञोऽथ बादरश्चैवेति पाठान्तरम्।

रुधिरेऽतिप्रवृत्ते तु भिन्ने छेद्येऽधिमांसके ।
कफग्रन्थिषु गण्डेषु वातस्तम्भेषु रुक्षु च ॥
गूढ़पूयलसीकेषु गम्भीरेषु व्रणेषु च ।
सुप्तेषु चाङ्गदेशेषु कर्म्माग्नेः संप्रशस्यते ॥
मधूच्छिष्टेन तैलेन मज्जक्षौद्रवसाघृतैः ।
तप्तैर्वा विविधैर्लौहैर्दहेद् दाहविशेषवित् ॥
रूक्षाणां सुकुमाराणां गम्भीरान्मारुतोत्तरान् ।
दहेत् स्नेहमधूच्छिष्टैर्लौहैः क्षौद्रैस्ततो घृतैः ॥ ४४।४५ ॥
बालदुर्ब्बलवृद्धानां गर्भिण्या रक्तपित्तिनाम् ।
तृष्णाज्वरपरीतानामबलानां विषादिनाम् ।
नाग्निकर्म्मोपदेष्टव्यं स्नायुमर्म्मव्रणेषु च ।
सविषेषु सशल्येषु नेत्रकोष्ठव्रणेषु च ॥ ४६ ॥

गङ्गाधरः—द्विविधदाहविषयमाह—रुधिरेऽतीत्यादि । वातस्तम्भेषु रुजासु च सुप्तेषु स्पर्शज्ञानरहितेषु अग्नेः कर्म्म दाहः संप्रशस्यते । यथा दहेत् तदाह । मधूच्छिष्टेनेत्यादि । दाहविशेषवित् मधूच्छिष्टादीनेकैकं तप्तं कृत्वा रुधिरातिप्रवृत्तव्रणच्छेद्यभेद्यादिषु सिञ्चेत् ततो दाहः स्यादित्येकः, अपरस्तु तथा विविधैर्दाह्यस्थानानुरूपैर्लौहैरग्निना तप्तैर्दहेत् । रूक्षाणामित्यादि । रूक्षादीनां गम्भीरान् वातोत्तरान् स्नेहमधूच्छिष्टैर्दहेत् । ततोऽन्यान् लौहैः क्षौद्रैर्घृतैर्दहेदिति ॥ ४४।४५ ॥

गङ्गाधरः—अदाह्यानाह—बालेत्यादि । बालादीनामग्निकर्म्म दाहो नोपदेष्टव्यम्, स्नाय्वादिव्रणेषु च नाग्निकर्म्मोपदेष्टव्यमिति ॥ ४६ ॥

छेद्ये इति छेदनाह । तप्तैरिति रूक्षस्निग्धदाहभेदविषयं दर्शयन्नाह—सुकुमाराणामित्यादिना । दाहविशेषविदिति स्निग्धरूक्षादिरूपं तथा बिन्दुवलयादिरूपं जानातीति दाहविशेषवित् । विषादिनामिति भक्षितविषाणाम् ॥ ४३—४६ ॥

रोगदोषबलापेक्षी मात्राकालाग्निकोविदः।
शस्त्रकर्म्माग्निकृत्येषु क्षारमप्यवचारयेत् ॥ ४७ ॥
भूर्ज्जग्रन्थ्यश्मकाशीशं समभागानि गुग्गुलुः।
व्रणावसादनं तद्वत् कलविङ्ककपोतविट् ॥
कठिनत्वं व्रणा यान्ति गन्धसारैश्च धूपिताः।
सर्पिर्मज्जवसातैलैः शैथिल्यं यान्ति हि व्रणाः ॥
रुजः स्रावाश्च गन्धश्च क्रिमयश्च व्रणाश्रिताः।
काठिन्यं मार्द्दवञ्चापि धूपनेनोपशाम्यति ॥ ४८ ॥
लोध्रन्यग्रोधशुङ्गाश्च खदिरं त्रिफला घृतम्।
प्रलेपो व्रणशैथिल्य-सौकुमार्य्यप्रसाधकः ॥ ४९ ॥
सरुजः कठिनाः स्तब्धा निरास्रावाश्च ये व्रणाः।
यवचूर्णैः ससार्षपकैर्बहुशस्तान् प्रलेपयेत् ॥ ५० ॥

गङ्गाधरः—दाहवद्गुणत्वात् क्षारदाहमाह—रोगेत्यादि। रोगाद्यपेक्षी मात्रादिकोविदः। शस्त्रकर्म्मयोग्येष्वग्निकर्म्मकृत्येषु क्षारमप्यवचारयेत्। क्षारविधानमिह विस्तरत्वान्नोक्तं कायप्रधानचिकित्सितशास्त्रत्वादस्य तन्त्रस्य शल्यतन्त्राल्पवचनं न दुष्यति ॥ ४७ ॥

गङ्गाधरः—अथ व्रणावसादनमाह—भूर्ज्जेत्यादि। भूर्ज्जग्रन्थिरश्म च काशीशञ्च गुग्गुलुश्च समानि प्रलेपो व्रणावसादकरः, तद्वदवसादनः कलविङ्कविट् कपोतविट् च। कलविङ्कश्चटकः। अथ काठिन्यकरमार्द्दवकरधूपने आह। कठिनत्वमित्यादि। गन्धसारः श्वेतचन्दनम्। तेन धूपिता व्रणाः कठिनत्वं यान्ति। सर्पिरादिभिर्धूपिताः कठिना व्रणाः शैथिल्यं मार्द्दवं यान्ति। अनयोर्धूपनयोः कर्म्मान्तरमाह—रुज इत्यादि ॥ ४८ ॥

गङ्गाधरः—काठिन्यमार्द्दवकरे आलेपने चाह—लोध्रेत्यादि। लोध्रशुङ्गादीनां प्रलेपः व्रणशैथिल्ये काठिन्यस्य सौकुमार्य्यस्य च प्रसाधकः ॥ ४९ ॥

गङ्गाधरः—सरुजः कठिनाश्चैवमादयो ये व्रणास्तान् ससार्षपकैर्यवचूर्णैः बहुशः प्रलेपयेत् ॥ ५० ॥

चक्रपाणिः—यद्यपि शस्त्रकर्म्मसु क्षारः पृथक् पठितस्तथापि शस्त्रादीनां उपक्रमगृहीतत्वात्

मुद्गषष्टिकशालीनां पायसैर्वा यथाक्रमम् ।
सघृतैर्जीवनीयैर्वा तर्पयेत् तानभीक्ष्णशः ॥ ५१ ॥
ककुभोडुम्बराश्वत्थ-लोध्रकट्फलजाम्बवैः ।
त्वचमाशु निगृह्णाति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥ ५२ ॥
मनःशिलाले मञ्जिष्ठा शताह्वा रजनीद्वयम् ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ५३ ॥
अयोरजः सकाशीशं त्रिफलाकुसुमानि च ।
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥
कालीयकनताम्रास्थि-हेमकालरसोत्तमैः ।
लेपः सगोमयरसः सवर्णकरणः परः ॥
ध्यामकाश्वत्थनिचुल-मूलं लाक्षाथ गैरिकम् ।
सहेम साऽमृतासंज्ञं काशीशञ्चेति वर्णकृत् ॥ ५४ ॥

गङ्गाधरः—मुद्गादीनामन्यतमस्य पायसैर्वा तान व्रणांस्तर्पयेल्लेपयेत् । अथवा सघृतैर्जीवनीयैर्दशभिस्तान् व्रणांस्तर्पयेत् । तेन मृदवो नीरुगादयश्च व्रणा भवन्ति ॥ ५१ ॥

गङ्गाधरः—अथ व्रणावचूर्णनमाह—ककुभेत्यादि । ककुभादीनां त्वक्-चूर्णैश्चूर्णिता अवगुण्ठिता व्रणा आशु त्वचं निगृह्णाति निश्चयेन गृह्णाति ॥ ५२ ॥

गङ्गाधरः—अथ वर्ण्यमाह—मनःशिलेत्यादि । आलं हरितालम् । त्वग्विशुद्धि-र्गात्रसवर्णता । अयोरज इत्यादि । त्रिफलानां कुसुमानि नवत्वचि व्रणस्य गात्रसवर्णकृष्णत्वं कुरुते । कालीयकेत्यादि । कालीयककाष्ठं नतमाम्रास्थि हेम नागकेशरं कालः कृष्णागुरु रसोत्तमः पारदः, एभिः सगोमयरसो लेपः । ध्यामकेत्यादि । ध्यामकं गन्धतृणं ध्यामकादीनां मूलं हेम नागकेशरं अमृतासंज्ञा गुडूची । ध्यामकादीनां लेपो वर्णकृत् ॥ ५३ । ५४ ॥

क्षारमप्यवचारयेदिति वचनेन क्षारोऽपि विहितः । तर्पयेदिति तर्पणार्थं लेपं कारयेत् ॥ ४७—५१ ॥

चक्रपाणिः—ककुभेत्यादिप्रकरणेन त्वग्जननं तथा वर्णकरणं तथा रोमजननमिति उपक्रम-त्रयमाह । त्वचमाश्वेव गृह्णन्ति इति सद्यो भवन्ति । त्रिफलाकुसुमानीति त्रिफलापुष्पाणि । नता प्रियङ्गुः । हेमकाला मञ्जिष्ठा । रसोत्तमः पारदः घृतं वा । अमृतासङ्गः कपिकच्छुः ॥५२—५४॥

चतुष्पदानां त्वग्रोम-खुरशृङ्गास्थिभस्मना।
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः॥ ५५॥
षोड़शोपद्रवा ये च व्रणानां परिकीर्त्तिताः।
तेषां चिकित्सा निर्द्दिष्टा यथा स्वस्वचिकित्सिते॥ ५६॥

तत्र श्लोकौ।

द्वौ व्रणौ व्रणभेदाश्च परीक्षा दुष्टिरेव च।
स्थानानि गन्धाः स्रावाश्च सोपसर्गाः क्रियाश्च याः॥
व्रणाधिकारे संप्रश्नमेतन्नवकमुक्तवान्।
मुनिर्व्याससमासाभ्यामग्निवेशाय धीमते॥ ५७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थाने द्विव्रणीयचिकित्सितं नाम पञ्चविंशोऽध्यायः॥ २५॥

गङ्गाधरः—वर्ण्यमुक्त्वा रोपणलोमरोहणे आह—चतुष्पदानामित्यादि। चतुष्पदानां त्वगादीनां भस्मना तैलाक्ता व्रणभूमिश्चूर्णिता घर्षिता पुनर्लोमवती भवेदिति॥ ५५॥

गङ्गाधरः—षट्त्रिंशदुपक्रमानुक्त्वा उपद्रवाणां विसर्पादीनां चिकित्सामाह—षोड़शेत्यादि। स्वस्वचिकित्सिते यथा निर्द्दिष्टाश्चिकित्सास्तथा चिकित्साः परिकीर्त्तिताः॥ ५६॥

गङ्गाधरः—अध्यायार्थमुपसंहरति। तत्र श्लोकाविति। द्वौ व्रणावित्यादि॥ इति॥ ५७॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़वल-प्रतिसंस्कृत एव च।
द्विव्रणीयचिकित्सिते त्वध्याये पञ्चविंशके। वैद्यगङ्गाधरकृते जल्पकल्पतरौ पुनः। चिकित्सितस्थानजल्पे षष्ठस्कन्धे द्विव्रणीये। चिकित्सितजल्पो नाम शाखेयं पञ्चविंशिका॥ २५॥ शल्याङ्गं समाप्तम्।

चक्रपाणिः—द्वौ व्रणावित्याद्यध्यायसंग्रहः व्यक्तः॥ ५५—५७॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां द्विव्रणीयचिकित्सितं नाम पञ्चविंशोऽध्यायः॥ २५॥

# षड्विंशोऽध्यायः ।

## अथातस्त्रिमर्म्मीयचिकित्सितं व्याख्यास्यामः,

## इतिह स्माह भगवानात्रेयः ॥ १ ॥

**सप्तोत्तरं मर्म्मशतं यदुक्तं शरीरसङ्ख्यामधिकृत्य तेभ्यः ।**
**मर्म्माणि वस्तिं हृदयं शिरश्च प्रधानभूतान्यृषयो वदन्ति ॥**
**प्राणाशयात् तानि हि पीड़यन्तो वातादयोऽसूनपि पीड़यन्ति ।**
**तत्संश्रितानामनुपालनार्थं महागदानां शृणु सौम्य रक्षाम् ॥२॥**

गङ्गाधरः—अथोद्दिष्टानुक्रमात् त्रिमर्म्मीयचिकित्सितमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—सप्तोत्तरमित्यादि। शरीरसङ्ख्याशारीरे सप्तोत्तरं मर्म्मशतमिति यदुक्तं तेभ्यस्त्रीणि मर्म्माणि प्रधानभूतान्यृषयो वदन्ति वस्तिश्च हृदयञ्च शिरश्चेति। कस्मात् प्रधानभूतानि ? प्राणाशयात्। प्राणानामाशया हि वस्त्यादयः प्रधानतमा इति। तानि वस्तिहृदयशिरांसि पीड़यन्तो वातादयोऽसूनपि पीड़यन्ति। तस्मात् ततोऽनुपालनार्थं प्राणरक्षणार्थं तत्त्रिमर्म्मसंश्रितानां महागदानां सम्बन्धे रक्षां सौम्य शृणु ॥ २ ॥

चक्रपाणिः—द्विव्रणीये द्विसंख्यावच्छिन्नरोगचिकित्साभिधानानन्तरं द्विसंख्यावच्छिन्नशिरोहृदय-वस्तिचिकित्साभिधानार्थं त्रिमर्म्मीयचिकित्सोच्यते। त्रिमर्म्मीयेण हि त्रिमर्म्माश्रिता रोगा अभिधीयन्ते। तेन त्रिमर्म्मीयरोगानधिकृत्य कृतं चिकित्सितं त्रिमर्म्मीयचिकित्सितमवधारयति सप्तोत्तरमित्यादि। शरीरसंख्यामधिकृत्येति शरीरसङ्ख्याशारीरे उक्तमधिकृत्येत्यर्थः। हृदयादिमर्म्मप्राधान्ये हेतुमाह—प्राणाश्रयानिति। हृदयादीनां प्राणाश्रयत्वे उपपत्तिमाह—तानिति। हृदयाद्युपघातेन यस्माद् विशेषतः प्राणोपघातो भवति तस्मात् हृदयाद्याश्रिताः प्राणा उच्यन्ते। यथा भित्त्युपघातोपहन्यमानं चित्रं भित्त्याश्रयमुच्यते। तत्संश्रितानामिति प्राणाश्रयाणां हृदयादीनां महान्तो गदा येषां भवन्ति तेषां महागदानां वस्त्यादीनां रक्षां शृणु किंवा तत्संश्रितानामिति वस्त्यादिसंश्रितानां महागदानां रक्षामिति चिकित्साम् ॥ १। २ ॥

कषायतिक्तोषणरूक्षभोज्यैः सन्धारणोदीरणमैथुनैश्च।
पक्वाशये कुप्यति चेदपानः स्रोतांस्यधोगानि बली स रुद्ध्वा॥
करोति विण्मारुतमूत्रसङ्गं क्रमादुदावर्त्तमतश्च घोरम्॥ ३॥
रुग् वस्तिहृत्कुक्ष्युदरेष्वभीक्ष्णं सपृष्ठपार्श्वेष्वतिदारुणा स्यात्॥
आध्मानहृल्लासविकर्त्तिकाश्च तोदोऽविपाकश्च सवस्तिशोफः।
वर्च्चोऽप्रवृत्तिर्जठरे च गण्डो
ह्यूर्द्ध्वश्च वायौ विहते गुदे स्यात्।
कृच्छ्रेण शुष्कस्य चिरात् प्रवृत्तिः
स्याद् वा तनुः सा खररूक्षशीता॥ ४॥
ततश्च रोगा ज्वरमूत्रकृच्छ्र-प्रवाहिकाहृद्ग्रहणीप्रदोषाः।
छर्द्द्यान्ध्यबाधिर्य्यशिरोभितापा वातोदराष्ठीलमनोविकाराः॥
तृष्णास्रपित्तार्द्दितगुल्मकास-श्वासप्रतिश्यायरुचिपार्श्वरोगाः।
अन्ये च रोगा बहवोऽनिलोत्था भवन्त्युदावर्त्तकृताः सुघोराः।
चिकित्सितञ्चास्य यथावदूर्द्ध्वं प्रवक्ष्यते तच्छृणु चाग्निवेश॥ ५॥

गङ्गाधरः—कषायेत्यादि। कषायादिभिर्हेतुभिरपानवायुर्यदि पक्वाशये कुप्यति, तदा बली सोऽपानः खल्वधोगानि स्रोतांसि रुद्ध्वा विड़ादिसङ्गं करोति ततः क्रमाद् विड़ादिसङ्गाद् घोरमुदावर्त्तं करोति॥ ३॥

गङ्गाधरः—तदुदावर्त्तलक्षणमाह—रुगित्यादि। वस्त्यादिष्वभीक्ष्णमतिदारुणा रुक् स्यात्। विकर्त्तिका गुदे कर्त्तनवत् पीड़ा। जठरे वर्च्चोऽप्रवृत्तिः स्यात्। वायावूर्द्ध्वं विहते गुदे गण्डः स्यात्। शुष्कस्य वर्च्चसः कृच्छ्रेण चिरात् प्रवृत्तिः, सा प्रवृत्तिस्तनुरल्पा स्यात् खररूक्षशीता च॥ ४॥

गङ्गाधरः—ततो वर्च्चस एवं प्रवृत्तितः ज्वरादयो रोगा भवन्ति। अन्ये चानिलोत्था बहवो रोगा उदावर्त्तकृता भवन्ति। इति। तस्य नवेगानधारणीये वेगसन्धारणजरोगचिकित्सा विशेषेणोक्ता॥ ५॥

चक्रपाणिः—वस्त्यादिजानां यथाक्रमं हेत्वादिमाह—कषायेत्यादि। ऊषणः कटुकः। पक्वाशय इत्यादिना उदावर्त्तसम्प्राप्तिलिङ्गचिकित्सितानि प्राह। ननु कथमपानः कुपितः अपानस्यैव सङ्गं करोतीति? ब्रूमः। आत्मनैवायं दुष्टः सम्यगप्रवर्त्तमानः आत्मनः सङ्गं करोति।

तं तैलशीतज्वरनाशनाक्तं स्वेदैर्यथोक्तैः प्रविलीनदोषम् ।
उपाचरेद् वर्त्तिनिरूहबस्ति-स्नेहैर्विरेकैरनुलोमनान्नैः ॥ ६ ॥
श्यामात्रिवृन्मागधिकां सदन्तीं गोमूत्रपिष्टां दशमाषभागाम् ।
सनीलिकां द्विर्लवणां गुड़ेन वर्त्तिं कराङ्गुष्ठनिभां विदध्यात् ॥
पिण्याकसौवर्च्चलहिङ्गुभिर्वा ससर्षपत्र्यूषणयावशूकैः ।
क्रिमिघ्नकम्पिल्लकशङ्खिनीभिः सुधार्कजक्षीरगुड़ैर्युताभिः ।
स्यात् पिप्पलीसर्षपराठवेश्म-धूमैः सगोमूत्रगुड़ैश्च वर्त्तिः ॥ ७ ॥

गङ्गाधरः—पुनरिह कषायादिसर्व्वहेतुजोदावर्त्तचिकित्सामाह—तमित्यादि। तमुदावर्त्तिनं नरं तैलमिश्रितेन शीतज्वरनाशनागुर्व्वादितैलेनाक्तं यथोक्तस्वेदैः प्रविलीनदोषं वर्त्यादिभिरुपाचरेत् ॥ ६ ॥

गङ्गाधरः—तत्र वर्त्तिमाह—श्यामेत्यादि। श्यामात्रिवृतादीनां प्रत्येकं दशमाषान् द्विर्लवणां द्विगुणितसैन्धवान् गोमूत्रेण श्लक्ष्णं पिष्ट्वा गुड़ेन यथार्द्धेण पिष्ट्वा कराङ्गुष्ठनिभां वर्त्तिं विदध्यात्। तां वर्त्तिं घृताक्तां घृताक्ते गुदे यथायोग्यं प्रवेशयेदिति। अथवा पिण्याकादियावशूकान्तैर्गुड़ेन वर्त्तिं विदध्यादिति पूर्व्वेणान्वयः। क्रिमिघ्नेत्यादि। क्रिमिघ्नो विड़ङ्गः। सुधा स्नुही, सुधार्कजक्षीरं सुधाक्षीरमर्कक्षीरञ्चेति क्रिमिघ्नादिगुड़ान्तैरेका वर्त्तिः स्यात्। अथवा पिप्पल्यादिगुड़ान्तैश्च वर्त्तिः स्यात्। अत्र राठो मदनफलतण्डुलः ॥ ७ ॥

यथा मन एव मनोनिग्रहं करोति। उक्तं 'इन्द्रियाभिग्रहः कर्म्म मनसस्तस्य निग्रहः' इति। ऊर्द्ध्वश्चेति ऊर्द्ध्वगमनस्वभावः। तैलं ज्वरनाशनोक्तमिति शीतज्वरनाशनमगुर्व्वाद्युक्तम्। वर्त्तिः फलवर्त्तिः ॥ ३—६ ॥

चक्रपाणिः—श्यामेत्यादि। फलवर्त्तौ श्यामा त्रिवृद्भेदः। दश भागा माषा यस्यां सा दशभागमाषा। द्विर्लवणेति द्विर्भागलवणा। गुडेनेति वचनेन यावता गुडेन वर्त्तिः कर्त्तुं युज्यते

श्यामाफलेक्ष्वाकु सपिप्पलीकं नाड्याथवा तत् प्रधमेत चूर्णम्।
रक्षोघ्नतुम्बीकरहाटकृष्णा-चूर्णं सजीमूतकसैन्धवं वा।
स्निग्धे गुदे तान्यनुलोमयन्ति नरस्य वर्च्चोऽनिलमूत्रसङ्गम् ॥८॥

तेषां विघातेषु भिषग् विदध्यात्
स्वभ्यक्तसुस्विन्नतनोर्निरूहम्।
ऊर्द्ध्वानुलोमौषधमूत्रतैल-
क्षाराम्लवातघ्नयुतं सुतीक्ष्णम् ॥
वातेऽधिकेऽम्लं लवणं सतैलं
क्षीरेण पित्ते तु कफे समूत्रम्।
समूत्रवर्च्चोऽनिलसङ्गमाशु
गुदं सिराश्च प्रगुणीकरोति ॥ ६ ॥

गङ्गाधरः—श्यामेत्यादि। श्यामा श्याममूला त्रिवृत्। फलं मदनफलम्। श्यामादीनां चूर्णं नाड्या नलिकायां निक्षिप्य नलिकाग्रं गुदे प्रवेश्य फत्कारेण जठरे प्रवेशयेदित्येवं प्रधमेत्। रक्षोघ्नेत्यादि। अथवा रक्षोघ्नः सर्षपः। सर्षपादि चूर्णं नाड्या प्रधमेत्। वर्त्तिचूर्णानां प्रदानक्रमफलं आह—स्निग्धे इत्यादि। घृतादिस्नेहेनाभ्यक्ते गुदे तानि वर्त्तिचूर्णानि ॥ ८ ॥

गङ्गाधरः—यद्यत्र वर्त्तिचूर्णप्रयोगे प्रशमनं न स्यात् तत्राह—तेषामित्यादि। तेषां वर्त्तिचूर्णानां विघातेषु स्वभ्यक्तसुस्विन्नतनोस्तस्योदावर्त्तिनो निरूहं विदध्यात्। निरूहन्तूर्द्ध्वानुलोमौषधादियुतं सुतीक्ष्णम्। वाते इत्यादि। वाते अधिकेऽम्ललवणतैलं निरूहं, पित्तेऽधिके क्षीरेण निरूहम्, अथ कफेऽधिके समूत्रमानुलोमिककफघ्नद्रव्यकृतं विदध्यात्। स निरूहो मूत्रादिसङ्गं गुदं सिराश्च प्रगुणीकरोति। विगुणभावाभावः प्रगुण इति ॥ ९ ॥

तावन्मानो गुडो देयः। यावच्छूकैरित्यन्तेन द्वितीया वर्त्तिः माषगुडनैव कर्त्तव्या। शङ्खिनी श्वेतबुन्दा, वेश्मधूमोऽगारधूमः, फलं मदनफलम्, रक्षोघ्नः सर्षपः, करहाटो मदनः ॥ ७।८ ॥

चक्रपाणिः—तेषां विघात इति फलवर्त्तिचूर्णानामुक्तानां कार्य्याकरणे ऊर्द्ध्वाऽनुलोमौषधं वमनविरेचनौषधम्। वातेऽधिक इत्यादिना दोषभेदेन साधनमाह। उदावर्त्त पित्तकफौ वातकोपितावेव

त्रिवृत्सुधापत्रतिलादिशाक-ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात् प्रसन्नागुड़सीधुपायी ॥
भूयोऽनुबन्धे तु भवेद्ध विरेच्यो मूत्रप्रसन्नादधिमण्डशुक्तैः । *
स्वस्थन्तु पश्चादनुवासयेत् तं
रौक्ष्याद्धि सङ्गोऽनिलवर्च्चसोः स्यात् ॥ १०—१३ ॥
द्विरुत्तरं हिङ्गु वचा सकुष्ठा सुवर्च्चिका चैव विड़ङ्गचूर्णम् ।
सुखाम्बुनानाहविसूचिकार्त्ति-हृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् ॥
वचाभयाचित्रकयावशूकान् सपिप्पलीन् सातिविषान् सकुष्ठान् ।
कोष्णाम्बुनानाहविमूढ़वातान् पीत्वा जयेदाशु रसौदनाशी ॥

गङ्गाधरः—आहारद्रव्यमाह । त्रिवृदित्यादि । त्रिवृत्पत्रादिशाकं ग्राम्यादि मांसरसः । अन्ये च सृष्टानिलादयः, तैर्यवान्नमद्यात् । प्रसन्नादिकञ्चानु पिबेत् । एवंकृते यद्यनुबन्धो वर्त्तते तत्राह । भूय इत्यादि । एवंकृतेऽपि भूयोऽनुबन्धे सति मूत्रादिभिर्विरेच्यः । तथा विरेचनेन स्वस्थं तमुदावर्त्तिनं पश्चादनुवासयेत् स्नेहनार्थम् । कस्मात् ? रौक्ष्याद्धीत्यादि । हि यस्मात् रौक्ष्यात् पुनरनिलवर्च्चसोः सङ्गः स्यात् तस्मादनुवासयेत् ॥ १०—१३ ॥

गङ्गाधरः—अथात्र वेगसन्धारणादिनाप्यानाहः स्यात्, तस्य च चिकित्सामाह—द्विरुत्तरमित्यादि । हिङ्गुप्रभृतीनामुत्तरोत्तरं द्विगुणं चूर्णं सुखाम्बुना पीतमानाहादिघ्नम् । वचेत्यादि । वचादिकुष्ठान्तं चूर्णं कोष्णाम्बुना पीत्वा

र्जयी । प्रसन्ना मद्योपरि स्वच्छो भागः । गुडकृतः सीधुः गुडसीधुः । भूयोऽनुबन्ध इति उदावर्त्तानुबन्धे । एतच्च विरेचनं वस्तिदानञ्च सप्ताहादूर्द्ध्वम् । यदुक्तं 'नरो विरिक्तस्तु निरूहदानं विवर्ज्जयेत्

* इतः परं क्वचिदधिकः पाठो दृश्यते । यथा—गुल्मोदरब्रध्नार्शःप्लीहोदावर्त्तयोनिशुक्रगदे । मेदःकफसंसृष्टे मारुतरक्तेऽवगाढे च ॥ गृध्रसीपक्षवधादिषु विरेचनाहेषु वातरोगेषु । वाते विबद्धमार्गे मेदःकफपित्तरक्तेन ॥ पयसा मांसरसैर्वा त्रिफलारसयूषमूत्रमदिराभिः ॥ ११ ॥ दोषानुबन्धयोगात् प्रशस्तमेरण्डजं तैलम् । तद्वातनुत् स्वभावात् संयोगवशाद् विरेचनाच्च जयेत् ॥ मेदोऽसृक्पित्तकफोन्मिश्रानिलरोगजित् स्यात् । बलकोष्ठव्याधिवशादापञ्चपला भवेन्मात्रा । मृदुकोष्ठबलानां सह भोज्यं तत् प्रयोज्यं स्यात् ॥ १२ ॥

हिङ्गूग्रगन्धाविड़शुण्ठ्यजाजी-हरीतकीपुष्करमूलकुष्ठम्।
यथोत्तरं भागविवृद्धमेतत् प्लीहोदराजीर्णविसूचिकासु ॥ १४ ॥
स्थिरादिवर्गस्य पुनर्नवायाः श्यामाकपूतीककरञ्जयोश्च।
सिद्धः कषायो द्विपलांशिकानां प्रस्थो घृतात् स्यात् प्रतिबन्धवाते।
फलञ्च मूलञ्च विरेचनोक्तं हिंस्राकर्मूले दशमूलमग्रम्।
स्नुक् चित्रकश्चैव पुनर्नवा च तुल्यानि सर्व्वैर्लवणानि पञ्च ॥
स्नेहैः समूत्रैः सह जर्ज्जराणि शरावसन्धौ विपचेत् सुलिप्ते।
पक्वं सुपिष्टं लवणं तदन्नैः पानैस्तथानाहरुजाघ्नमद्यात् ॥ १५ ॥

रसौदनाशी त्वानाहादीन् जयेत्। हिङ्ग्वग्रेत्यादि। हिङ्गुप्रभृतिकं यथोत्तरं भागवृद्धं पुष्करं स्वनामख्यातवृक्षविशेषस्तस्य मूलं तदभावे कुष्ठमपि द्विवारं ग्राह्यम् ॥ १४ ॥

गङ्गाधरः—स्थिरादीत्यादि। स्थिरादिवर्गः शालपर्ण्यादिपञ्चमूली। द्विपलांशिकानां शालपर्ण्यादीनामष्टानां षोड़शशरावजले पक्वानां चतुर्थांशावशिष्टः कषायः प्रस्थः, प्रस्थश्च घृतात् सिद्धः पक्वः प्रतिबन्धवाते हितः स्यात्। फलञ्चेत्यादि। विरेचनोक्तं फलिनीमूलिनीषु विरेचनोक्तं फलञ्च मूलञ्च हिंस्रामूलमर्कमूलञ्च। पुनर्नवान्तानि यावन्ति तैः सर्व्वैस्तुल्यानि पञ्च लवणानि। स्नेहैश्चतुर्भिर्यथालाभं मूत्रैश्च यथालाभं सह जर्ज्जरीकृतानि कुट्टयित्वैव शरावमध्ये स्थापयित्वाऽन्येन शरावेण पिधाय सन्धौ सुलिप्ते धूमनिर्गमाभावो यथा स्यात् तथा सुलिप्ते विपचेत्। पक्वं सुपिष्टं तल्लवणं पानैरन्नैः सहाद्यात्। आनाहलक्षणमुक्तं सुश्रुते—"आमं शकृद् वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन। प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति। तस्मिन् भवत्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः। आमाशये शूलमथो गुरुत्वं हृल्लास उद्गार-

सप्तदिनान्यवश्यम्। शुद्धो निरूहेण विरेचनञ्चे'ति। द्विरुत्तरमित्यादौ यथोत्तरद्रव्याणां द्वैगुण्यम्। सुवर्च्चिका स्वर्ज्जिकाक्षारः। सुखाम्बुना पीतमिति शेषः। उग्रगन्धा अजमोदा ॥ ९—१४ ॥

चक्रपाणिः—स्थिरादिवर्गस्येति अल्पपञ्चमूलस्य। श्यामाकपूतिककरञ्जयोश्चेत्यत्र पूतिकशब्दः करञ्जविशेषणम्। तथाहि जतूकर्णः—"सर्षप उग्रपूतिकः पुनर्नवा स्थिराद्यमित्यादि।" फलञ्च मूलञ्च विरेचनोक्तमिति दीर्घञ्जीवितीये मूलिनीविरेचनकर्म्मण्युक्तम्। किंवा कल्पे विरेचन-

**हृत्स्तम्भमूर्द्धामयगौरवाभ्यामुद्गारसङ्गेन सपीनसेन।**
**आनाहमामप्रभवं जयेत् तु प्रच्छर्द्दनैर्लङ्घनपाचनैश्च ॥ १६ ॥**

इत्युदावर्त्तः।

**व्यायामतीक्ष्णौषधरूक्षमद्य-प्रसङ्गनित्यद्रुतपृष्ठयानात्।**
**आनूपमांसाध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥१७**

विघातनश्च। स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा च शकृद्वमिश्च। श्वासश्च पक्वाशयजे भवन्ति लिङ्गानि चात्रालसकोदितानि।" अलसकलक्षणानि तत्रैव यथा। "कुक्षिरानह्यतेऽत्यर्थं ताम्यत्यथ च कूजति। निरुद्धो मारुतश्चापि कुक्षावुपरि धावति। वातवर्चोनिरोधश्च कुक्षौ यस्य भृशं भवेत्। तस्यालसकमाचष्टे हिक्कोद्गारौ च यस्य तु॥" इति ॥ १५ ॥

गङ्गाधरः—इह शकृज्जातानाहलक्षणं नोक्त्वा चिकित्साञ्चाभिधायामजानाहलक्षणमाह—हृत्स्तम्भेत्यादि। हृत्स्तम्भश्च मूर्द्धि आमयगौरवञ्च ताभ्यामुद्गारविघातेन पीनसेन चामप्रभवमानाहं ज्ञात्वा प्रच्छर्दनादिभिर्जयेत्। सुश्रुते तूदावर्त्तस्यासाध्यलक्षणमुक्तम्। "तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरुपद्रुतम्। शकृद् वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत्॥" इति ॥ १६ ॥

गङ्गाधरः—इत्युदावर्त्तानाहरोगौ वस्तिगतावुक्त्वाऽपरान् वस्तिगतानाह। व्यायामेत्यादि। स्युर्मूत्रकृच्छ्राणीति मूत्रस्य कृच्छ्रेण प्रवृत्तिर्विघात इत्यनर्थान्तरम्। तेन सुश्रुते मूत्राघातविकृच्छ्रयोरिति रोगद्वयमुद्दिष्टं कृत्वा मूत्रोपघातशब्देन द्वयोरवरोधः कृतः। तद्यथा। "वातेन पित्तेन कफेन सर्व्वैस्तथाऽभिघातैः शकृदश्मरीभ्याम्। तथाऽपरः शर्करया सुकष्टो मूत्रोपघातः कथितोऽष्टमस्तु॥" इति शकृत्प्रतिघातज इहोक्तः, नोक्तः शुक्रप्रतिघातज इति। इहापि निर्देशाद् वातादिलक्षणानां वातजपित्तजकफजसान्निपातजाश्मरीजशर्कराजाभिघातजानि व्याहतशुक्रजञ्चात्रोक्तं शकृत्प्रतिघातजं नोक्तमिति विरोधो नाशङ्क्यः। सुश्रुते ह्यश्मरीजकृच्छ्रे शुक्रजावरोधमभिप्रेत्य शुक्रजमूत्रकृच्छ्रं नोक्तमिह तु तन्त्रे शकृत्प्रतिघातजं वातमूत्रकृच्छ्रेऽवरोधान्न पृथगुक्तमिति यस्तु व्याख्यातवान् सुश्रुते शर्कराजमूत्रकृच्छ्रं न पठितमिह तु पठितम्—

योगेषु वक्ष्यमाणम्। हृदित्यादिना उदावर्त्तस्यैव हेतुलक्षणविशेषेण आनाहसंज्ञां प्रदर्श्य तस्य भेषजमाह ॥ १५।१६ ॥

पृथङ्मलाः स्वैः कुपिता निदानैः सर्व्वेऽथवा कोपमुपेत्य वस्तौ।
मूत्रस्य मार्गं परिपीड़यन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥१८॥
तीव्रा हि रुग् वङ्क्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात्।
पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥
वस्तेः सलिङ्गस्य गुरुत्वशोथौ
मूत्रं सपिच्छं कफमूत्रकृच्छ्रे।
सर्व्वाणि रूपाणि च सन्निपातात्
भवन्ति तत् कृच्छ्रतमञ्च कृच्छ्रम् ॥ १९ ॥

"एषाश्मरी मारुतभिन्नमूर्त्तिः स्याच्छर्करा मूत्रपथात् क्षरन्तीति।" सुश्रुते च "अश्मरी शर्करा चैव तुल्ये सम्भवलक्षणे" रिति, ततोऽश्मरीजेन शर्कराजग्रहणमिति, तद्भ्रान्त्या व्याख्यातवान। सुश्रुते हि—"तथाऽपरः शर्करया सुकष्टो मूत्रोपघातः कथितोऽष्टमस्तु" इत्युक्तम्, अन्यथाष्टत्वव्याघातः स्यात्। इहापि तन्त्रे शर्कराजसहितान्येवाष्टौ पूर्य्यन्ते तश्च विना सप्त स्युरिति ॥ १७ ॥

गङ्गाधरः—सम्प्राप्तिमाह। पृथङ्मला इत्यादि। इति चत्वारि दोषजानि ॥१८

गङ्गाधरः—एषां लक्षणान्याह। तीव्रा हीत्यादि। इह वातजे मूत्रकृच्छ्रे शकृत्प्रतिघातस्यावरोधः, सुश्रुते हि वातप्रकोपस्तत्रोक्तः। "शकृतस्तु प्रतीघाताद् वायुर्विगुणतां गतः। आध्मानञ्च सशूलञ्च मूत्रसङ्गं करोति हि ॥" इति। पीतमित्यादिना पित्तमूत्रकृच्छ्रलक्षणम्। वस्तेरित्यादिना कफमूत्रकृच्छ्रलक्षणम्। सर्व्वाणीत्यादिना सन्निपातजमूत्रकृच्छ्रलक्षणमिति। सुश्रुतेऽप्युक्तम्। अल्पमल्पं समुत्पीड्य मुष्कमेहनवस्तिभिः। फलद्भिरिव कृच्छ्रेण वाताघातेन मेहति। हारिद्रमुष्णं रक्तं वा मुष्कमेहनवस्तिभिः। अग्निना दह्यमानाभैः पित्ताघातेन मेहति। स्निग्धं शुक्लमनुष्णञ्च मुष्कमेहनवस्तिभिः। संहृष्टरोमा गुरुभिः श्लेष्माघातेन मेहति। दाहशीतरुजाविष्टो नानावर्णं मुहुर्म्मुहुः। ताम्यमानः सुकृच्छ्रेण सन्निपातेन मेहति ॥ १९ ॥

चक्रपाणिः—व्यायामेत्यादिना निदानमुक्त्वा वातपित्तकफसन्निपातजानां मूत्रकृच्छ्राणां सम्प्राप्तिमाह—पृथगित्यादि। तीव्रा हि रुगित्यादिना चतुर्णां रूपमाह ॥ १७—१९ ॥

विशोषयेद्‌ वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा।
यदा तदाश्मर्य्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः॥
कदम्बपुष्पाकृतिरश्मतुल्या श्लक्ष्णा त्रिपुट्यप्यथवाऽपि मृद्वी।
मूत्रस्य चेन्मार्गमुपैति रुद्ध्वा मूत्रं रुजं तस्य करोति वस्तौ॥
मृद्‌नाति मेढ्रं स तु वेदनार्त्तो मुहुः शकृन्मुञ्चति वेपते च।
ससेवनीमेहनवस्तिशूलं विशीर्णधारञ्च करोति मूत्रम्॥

गङ्गाधरः—अथाश्मरीजमूत्रकृच्छ्रे वक्तव्येऽश्मरीजन्मप्रकारमाह—विशोषयेदित्यादि। इयन्तु सम्प्राप्तिः सामान्याश्मरीणाम्। यदा पवनो रिरंसोर्मैथुनविघातादमैथुनाद्‌ वा वस्तिगतं शुक्रं विशोषयेत् तदा शुक्राश्मरी जायते, यदा च वस्तिगतं मूत्रं सपित्तं विशोषयेत् तदा पित्ताश्मरी स्याद्, यदा वा स्वयुक्तं वस्तिगतं कफं विशोषयेत् तदा वाताश्मरी स्यात्। यदा स्वयुक्तं वस्तिगतं समूत्रं कफं विशोषयेत् तदा कफाश्मरी स्यात्। यथा क्रमेण शुष्केषु गोः पित्तेषु रोचना भवति। इति। शुक्रजा वातजा पित्तजा कफजा चेति चतस्रोऽश्मर्य्यः स्युः। तस्या रूपाण्याह। कदम्बेत्यादि। काचित् कदम्बपुष्पदलाकृतिः काचिदश्मतुल्या काचित् श्लक्ष्णा अथवा काचित् त्रिपुटी त्रिकोणा अथवा काचिन्मृद्वीति, अपिशब्दादन्यादृशी चाश्मरी स्यात्। तज्जमूत्रकृच्छ्रमाह—मूत्रस्य चेदित्यादि। साश्मरी चेन्मूत्रस्य मार्गमुपैति तदा तस्य वस्तौ मूत्रं रुद्ध्वा रुजं करोति। स तु पुमान् वेदनार्त्तो मेढ्रं मृद्‌नाति मुहुः। शकृन्मुञ्चति वेपते च मुहुः। सेवन्यादिवेदनासहितं विशीर्णधारं मूत्रं स करोति। शिश्ने

चक्रपाणिः—विशोषयेदित्यादिना चतुःप्रकारानप्यश्मरीरोगानाह। तन्त्रान्तरे अश्मर्य्यस्तु वातपित्तकफशुक्रजा उक्ताः, यद्यपि सर्व्वाश्मरीषु दोषत्रयजन्यत्वमस्ति 'संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः। तद्वद् बलासं बस्तिस्थमुष्मा संहन्ति सानिलः' इति सुश्रुते प्रतिपादितम्, तथाप्येकदोषाभिप्रायेण वातजादिव्यपदेशो ज्ञेयः। वातजायामश्मर्य्यां प्रबलेन वायुना मूत्रशोषे क्रियमाणे तत्कृतः कफ एवाश्मरीरूपः क्रियते। एवं पित्ताश्मर्य्यामपि ज्ञेयम्। अतएव सुश्रुते श्लेष्माधिष्ठानाः सर्व्वा एवाश्मर्य्य उक्ताः। अश्मर्य्युत्पादे दृष्टान्तमाह—पित्तेष्विव रोचना गोरिति। पित्तेष्विति बहुवचनं पित्तबहुत्वापेक्षया। कदम्बपुष्पाकृत्यादयो विशेषाः दोषभेदत्वेनोन्नेयाः।

**क्षोभात् क्षते मूत्रयतीह सास्रं तस्याः सुखं मूत्रयति व्यपायात्।**
**एषाश्मरी मारुतभिन्नमूर्त्तिः स्याच्छर्करा मूत्रपथात् क्षरन्ती ॥२०**

लग्नायामश्मर्य्यां मूत्रस्यानिर्गमनेन क्षोभात् शिश्नमध्ये क्षते सति सास्रं कृच्छ्रेण मूत्रयति। तस्या अश्मर्य्या व्यपायात् सुखं मूत्रयति। इति। सुश्रुते चोक्तम्—"चतस्रोऽश्मर्य्यो भवन्ति श्लेष्माधिष्ठानाः। तद्यथा— श्लेष्मणा वातेन पित्तेन शुक्रेण चेति। तत्रासंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसम्पृक्तोऽनुप्रविश्य वस्तिमश्मरीं जनयति। तासां पूर्व्वरूपाणि वस्तिपीड़ारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रा ज्वरावसादौ वस्तगन्धित्वं मूत्रस्येति। यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलम्। पूर्व्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः। अथ जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणञ्च गोमेदकप्रकाशमनाविलं ससिकतं विसृजति। धावनलङ्घनप्लवनपृष्ठयानाध्वगमनैश्चास्य वेदना भवति। तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याधः परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि, तस्य मूत्रप्रतिघाताद् दाल्यते भिद्यते निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च भवति। अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति, तां श्लैष्मिकीमिति विद्यात्। पित्तयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघातादुष्यते चष्यते दह्यते पच्यत इव च वस्तिरुष्णवातश्च भवति। अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति, तां पैत्तिकीमिति विद्यात्। वातयुक्तस्तु श्लेष्मा सङ्घातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतीघातात् तीव्रा वेदना भवति तयात्यर्थं पीड्यमानो दन्तान् खादति नाभिं पीड़यति मेढ्रं मृद्नाति पायुं स्पृशति विशर्द्धते विदहति वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति। अश्मरी चात्र श्यामा परुषा विषमा खरा कदम्बपुष्पवत् कण्टकाचिता भवति, तां वातिकीमिति

तत्र वातेन कदम्बपुष्पाकृतिः त्रिपुटी च, पित्तेनाश्मतुल्या श्लक्ष्णा, मृद्वी कफेन शुक्रेण च। क्षोभात् क्षत इति अश्मरीक्षोभात् मूत्रमार्गे वस्तौ। तस्या इत्यश्मर्य्याः। व्यपायादिति मूत्रमार्गापगमात्। सुखमिति निर्वेदनम्। एषेत्यादिना शर्करामाह—भिन्नमूर्त्तिरिति भेदितमूर्त्तिः अतएव मूत्रपथात् क्षरन्तीत्युक्तम्। तेन वातेन द्विधा त्रिधा भिन्नाश्मरी मूत्रपथेन क्षरन्ती शर्करेव भवति ॥२०॥

विद्यात्। प्रायेणैतास्तिस्रोऽश्मर्य्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद् विशेषेण बालानां भवन्ति। तेषामेवाल्पवस्तिकायत्वादनुपचितमांसत्वाच्च वस्तेः सुखग्रहणाहरणा भवन्ति। महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति। मैथुनाभिघातादमैथुनाद् वा शुक्रं चलितमनिर्गच्छद् विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति संहृत्य चोपशोषयति सा मूत्रमार्गमावृणोति मूत्रकृच्छ्रं वस्तिवेदनां वृषणयोश्च श्वयथुमापादयति पीड़ितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते, तां शुक्राश्मरीमिति विद्यात्। भवन्ति चात्र। शर्करासिकतामेहो भस्माख्योऽश्मरिवैकृतम्। अश्मर्य्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना। पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः। या भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते। हृत्पीड़ा सक्थिसदनं कुक्षिशूलः सवेपथुः। तृष्णोर्द्ध्वगोऽनिलः कार्श्यं दौर्ब्बल्यं पाण्डुगात्रता। अरोचकाविपाकौ तु शर्करार्त्ते भवन्ति च। मूत्रमार्गप्रवृत्ता सा सक्ता कुर्य्यादुपद्रवान्। दौर्ब्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम्। पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीड़नं वमिम्। नाभिपृष्ठकटीमुष्क-गुदवङ्क्षणशेफसाम्। एकद्वारस्तनुत्वको मध्ये वस्तिरधोमुखः। अलाब्वा इव रूपेण सिरास्नायुपरिग्रहः। वस्तिर्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम्। एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः। मूत्राशयो मलाधारः प्राणायतनमुत्तमम्। पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः। तर्पयन्ति सदा मूत्रं सरितः सागरं यथा। सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः। नाड़ीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्। जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्य्यते। आ मुखात् सलिले न्यस्तः पार्श्वेभ्यः पूर्य्यते नवः। घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्य्यते। एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा। मूत्रयुक्त उपस्नेहात् प्रविश्य कुरुतेऽश्मरीम्। अप्सु स्वच्छास्वपि यथा निषिक्तासु नवे घटे। कालान्तरेण पङ्कः स्यादश्मरीसम्भवस्तथा। संहन्त्यापो यथा दिव्या मारुतोऽग्निश्च वैद्युतः। तद्वद् बलासं वस्तिस्थमुष्मा संहन्ति सानिलः। मारुते प्रगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते। विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि। मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च। मूत्रदोषाश्च ये केचिद् वस्तेरेव भवन्ति हि॥" इति। अथाश्मरीशर्करयोर्भेदमाह—एषेत्यादि। येषाश्मरी नामाभिहिता सा यदा मारुतभिन्नमूर्त्तिर्मारुतेन पित्तपच्यमाना भिन्ना भिन्ना क्षुद्रीकृता मूर्त्तिर्भवत्यस्याः सा तदा शर्करा नामोच्यते, मूत्रपथात् क्षरन्ती सतीति अश्मरीतोऽन्या शर्करा न त्वश्मरीग्रहणेन गृह्यते, ततः शर्कराजमूत्रकृच्छ्रमश्मरीजमूत्रकृच्छ्रात् पृथगिति।

**शुक्रं मलाश्चैव पृथक् पृथग् वा मूत्राशयस्थाः परिपीड़यन्ति।**
**तद्व्याहतं मेहनवस्तिशूलं मूत्रं सशुक्रं कुरुते विबद्धम्॥**
**स्तब्धश्च शूनो भृशवेदनश्च तुदेत वस्तिवृषणौ च तस्य॥२१॥**
**क्षताभिघातात् क्षतजं क्षयाद् वा प्रकोपितं वस्तिगतं विबद्धम्।**
**तीव्रार्त्ति मूत्रेण सहाश्मरीत्वमायाति तस्मिन्नतिसञ्चिते च।**
**आध्मातता वस्तिसुगौरवञ्च वस्तेर्लघुत्वञ्च विनिःसृते स्यात्॥२२॥**

सुश्रुते च—"अश्मरी शर्करा चैव तुल्ये सम्भवलक्षणैः। शर्करायां विशेषन्तु शृणु कीर्त्तयतो मम। पच्यमानस्य पित्तेन भिद्यमानस्य वायुना। श्लेष्मणोऽवयवा भिन्नाः शर्करा इति संज्ञिताः। हृत्पीड़ा वेपथुः शूलं कुक्षौ वह्निः सुदुर्ब्बलः। ताभिर्भवति मूर्च्छा च मूत्राघातश्च दारुणः। मूत्रवेगनिरस्तासु तासु शाम्यति वेदना। यावदन्या पुनर्नैति गुटिका स्रोतसो मुखम्। शर्करासम्भवस्यैतन्मूत्राघातस्य लक्षणम्॥" इति॥२०॥

गङ्गाधरः—शर्कराजमूत्रकृच्छ्रलक्षणमुक्त्वा शुक्रजमूत्रकृच्छ्रमाह—शुक्रमित्यादि। शुक्रं मलाश्च वातादयः समस्ताः पृथग् वा मूत्रायणस्था यदा परिपीड़यन्ति, तदा तद् वातादिमलव्याहतं मेहनवस्तिशूलं यथा स्यात् तथा सशुक्रं मूत्रं विबद्धं कुरुते, पुमान् मूत्रयतीत्यर्थः। तस्य नरस्य वस्तिस्तब्धश्चेत्यादिः स्यात्। वृषणौ च स्तब्धावित्येवमादी स्यातामिति शुक्रप्रतिघातजमूत्रकृच्छ्रमिदं सुश्रुतेन न पठितं शुक्राश्मरीजेऽवरोधात्॥२१॥

गङ्गाधरः—आगन्तुमूत्रकृच्छ्रमाह—क्षताभिघातादित्यादि। शल्यादिभिः क्षताद् दण्डादिभिरभिघाताद् वा वस्तिगतं क्षतजं रक्तं प्रकोपितमथवा क्षयाद् रसादीनां प्रकोपितं वस्तिगतं क्षतजं विबद्धं सत् मूत्रेण सह तीव्रार्त्ति सदश्मरीत्वमायाति। तस्मिन् क्षतजेऽतिसञ्चिते आध्मातता भवति वस्तावेव,

चक्रपाणिः—शुक्रं मला इत्यादिना शुक्रमूत्रकृच्छ्रलक्षणम्। शुक्राशयस्था इति शुक्रमार्गस्थिताः॥२१॥

चक्रपाणिः—क्षतेत्यादिना रक्तजं मूत्रकृच्छ्रमाह। क्षतजमिति रक्तम्। क्षयाद् वा प्रकोपितमिति अतिव्यवायात् शुक्रक्षये सति वायुनोदीर्य्य वस्तिमानीतम्। आध्माततामिति वस्तिपूर्णताम्। तस्मिन्निति वस्तिसञ्चितरक्ते। एवं सूत्रस्थानोद्दिष्टाष्टौ मूत्राघाता मूत्रकृच्छ्रशब्देनेह निर्द्दिश्य व्याकृताः। ये तु त्रिमर्म्मीयसिद्धौ त्रयोदश मूत्राघाता वक्तव्यास्ते सूत्रस्थानेऽसूचिता अपि एकादशक्षुद्रकुष्ठवदन्तर्भावनीयाः। मूत्राघातमूत्रकृच्छ्रयोश्चायं विशेषो यन्मूत्रकृच्छ्रे मूत्रं कृच्छ्रेण

**अभ्यञ्जनस्नेहनिरूहवस्ति-स्वेदोपनाहोत्तरवस्तिसेकान्।**
**स्थिरादिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥ २३ ॥**
**पुनर्नवैरण्डशतावरीभिः पत्तूरवृश्चीरबलाश्मभिद्भिः।**
**द्विपञ्चमूलेन कुलत्थकोल-यवैश्च तोयोत्क्वथिते कषाये ॥**
**तैलं वराहर्क्षवसा घृतं तैस्तैरेव कल्कैर्लवणैश्च साध्यम्।**
**तन्मात्रयाशु प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥२४॥**

बस्तिसुगौरवञ्च। विनिःसृते तस्मिन्नश्मरीभूते क्षतजे बस्तेर्लघुत्वं स्यादिति आगन्तुजमष्टमं मूत्रकृच्छ्रमिति। सुश्रुते चोक्तम्। "मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च। स्रोतःसु मूत्राघातस्तु जायते भृशवेदनः। वातवस्तेस्तु तुल्यानि तस्य लिङ्गानि लक्षयेत्"॥ इति। वातवस्त्यादयो मूत्राघातसंज्ञकाः सुश्रुतोक्ता दर्शयिष्यन्तेऽत ऊर्द्ध्वमिति। इति मूत्रकृच्छ्राख्यमूत्राघातनिदानमुक्तं भवति॥ २२॥

गङ्गाधरः—अथातश्चिकित्सितमाह—अभ्यञ्जनेत्यादि। अनिलमूत्रकृच्छ्रे अभ्यञ्जनादयः सेकान्ताः कार्य्याः। स्थिरादिभिः शालपर्ण्यादिभिः पञ्चमूलै-र्वातहरैश्चान्यैः सिद्धान् रसांश्चाद्यादिति॥ २३॥

गङ्गाधरः—पुनर्नवेत्यादि। पुनर्नवादिभिस्तोयोत्क्वथिते कषाये चतुर्गुणे तैस्त्रिभिः कल्कैः पञ्चभिश्च लवणैः पादिकैस्तैलं साध्यम्, तथा वराहवसा साध्या, तथा ऋक्षस्य हरिणस्य वसा साध्या, तथा गव्यं घृतं साध्यमिति। एवं पत्तूरादिभिश्चतुर्भिस्तोयेनाष्टगुणेनोत्क्वथिते कषाये चतुर्गुणे तैरेव चतुर्भिः पञ्चभिर्लवणैः पादिकैः कल्कैस्तैलादिकं साध्यम्। पत्तूरः शालिञ्चः। अश्मभित् अम्ललोटिका अश्मान्तको वा। तथा द्विपञ्चमूलेन दशमूलेनाष्टगुणतोयोत्क्वथिते चतुर्भागावशिष्टे चतुर्गुणे कषाये तैर्दशमूलैः पञ्चभिर्लवणैः पादिकैः कल्कैः तैलादिकं साध्यम्। तथा कुलत्थकोलयवैश्चाष्टगुणतोयोत्क्वथिते चतुर्भागशेषे कषाये चतुर्गुणे तरेव त्रिभिः पञ्चभिर्लवणैश्च कल्कैः पादिकैस्तैलादिकं साध्य-

वहति मूत्राघाते मूत्रं शोष्यते प्रविहन्यते। सुश्रुतेऽपि च मूत्रकृच्छ्रमूत्राघातयोर्विशेषोऽध्याय-भेदेनवोक्तः। अन्ये तु मूत्रकृच्छ्राविशेषेणैव मूत्राघातानाहुः। यथायोग्यतया वातपित्तजादिचतुर्षु मूत्रकृच्छ्रेषु मूत्राघातान् अन्तर्भावयन्ति, तेन न पृथङ्मूत्राघाताभिधानम्॥ २२॥

चक्रपाणिः—मूत्रकृच्छ्रचिकित्सामाह—अभ्यञ्जनेत्यादि। स्थिरादिभिः पञ्चमूलैर्वातहरैरिति

एतानि चान्यानि वरौषधानि हितानि पिष्टान्यपि चोपनाहे।
स्युर्लाभतस्तैलफलानि चैव स्नेहाम्लयुक्तानि सुखोष्णवन्ति ॥२५॥
सेकावगाहाः शिशिराः प्रदेहा ग्रैष्मो विधिर्वस्तिपयोविरेकाः।
द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥ २६ ॥
शतावरीकाशकुशश्वदंष्ट्रा-विदारिशालीक्षुकशेरुकाणाम्।
क्वाथं सुशीतं मधुशर्कराभ्यां युक्त्या पिबेत् पैत्तिकमूत्रकृच्छ्रे ॥
पिबेत् कषायं कमलोत्पलानां शृङ्गाटकानामथवा विदार्य्याः।
दण्डोत्पलानामथवापि मूलं पूर्व्वेण कल्पेन तथाम्बु शीतम् ॥२७॥

मिति। तत् तैलादिकं मात्रया पीतमाशु शूलान्वितं मारुतमूत्रकृच्छ्रं प्रतिहन्ति ॥ २४ ॥

गङ्गाधरः—एतानीत्यादि। एतानि पुनर्नवादीनि पत्तूरादीनि द्विपञ्चमूलानि कुलत्थादीनि च तथान्यानि तन्त्रान्तरोक्तानि हितानि वरौषधानि पिष्टान्युपनाहे हितानि स्युर्यथालाभतः। तैलफलानि च तिलक्षमादीनि स्नेहघृतादिभिरम्लैस्तिन्तिडीकादिभिश्च युक्तानि पिष्टानि सुखोष्णवन्ति उपनाहे हितानि स्युरिति। वातमूत्रकृच्छ्रचिकित्सितमुक्तम् ॥ २५ ॥

गङ्गाधरः—अथ पित्तमूत्रकृच्छ्रचिकित्सितमाह—सेकेत्यादि। शिशिराः सेकादयः। तथा तस्याशितीयोक्तो ग्रैष्मो विधिः। तथा वस्तिश्च पयश्च विरेकश्चेति त्रयो द्राक्षादिभिः कार्य्याः ॥ २६ ॥

गङ्गाधरः—शतावरीत्यादि। शतावर्य्यादीनां मूलक्वाथं सुशीतं मधुशर्कराभ्यां युक्तं युक्त्या पिबेत्। पिबेदित्यादि। कमलादीनां कषायं पूर्व्वकल्पेन मधुशर्कराभ्यां युक्तं पिबेदथवा दण्डोत्पलाया मूलं क्वाथयित्वा मधुशर्कराभ्यां युतं पिबेत्, तथा शीतमम्बु मधुशर्कराभ्यां युतं पिबेत् ॥ २७ ॥

वातहरत्वेन प्रतिपादितः। पत्तूरः सालिञ्चिका। अश्मभित् पाषाणभेदः। अन्यानि चैवङ्गुणानि आस्फोतादीनि ॥ २३—२५ ॥

चक्रपाणिः—ग्रैष्मो विधिरिति। तस्याशितीयोक्तग्रीष्मविधिः, तत्र शिशिरावेव सेकावगाहौ यद्यप्युक्तौ तथापि विशेषेण शिशिरसेकावगाहकरणार्थं पुनरभिधानम्। दण्डोत्पलं अश्म इति ख्यातम्। पूर्व्वेण कल्पेनेति क्वाथेन मधुशर्करयोर्योगेन च ॥ २६। २७ ॥

एर्व्वारुवीजं त्रपुषात् कुसुम्भात् सकुङ्कुमः स्याद् वृषकश्च पेयः ।
द्राक्षारसेनाश्मरिशर्करासु कृच्छ्रेषु सर्व्वेष्वपि शस्तमेतत् ॥ २८॥
एर्व्वारुवीजं मधुकं सदार्व्वि पैत्ते पिबेत् तण्डुलधावनेन ।
दार्व्वीं तथवामलकीरसेन समाक्षिकां पित्तकृते तु कृच्छ्रे ॥२९॥
क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः ।
तक्रं सतिक्तौषधसिद्धतैलमभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ ३० ॥
व्योषं श्वदंष्ट्रा क्रिमिमारसास्थि-*-कोलप्रमाणं मधुमूत्रयुक्तम् ।
पिबेत् त्रुटिं क्षौद्रयुतां कदल्या रसेन कैटर्य्यरसेन वापि ॥
तक्रेण युक्तं शितिमारकस्य वीजं पिबेत् कृच्छ्रविघातहेतोः ।
पिबेत् तथा तण्डुलधावनेन प्रबालचूर्णं कफमूत्रकृच्छ्रे ॥

<u>गङ्गाधरः</u>—एर्व्वारुवीजमित्यादि । एर्व्वारुवीजं कर्कटीवीजं द्राक्षारसेन पिष्ट्वा पेयम्, त्रपुषं कुष्माण्डवद् वृहत् फलं मायाम्बुफलमुच्यते तस्य वीजम्, कुसुम्भवीजम्, वृषको वासकः सकुङ्कुमो द्राक्षारसेन पेयः ॥ २८ ॥

<u>गङ्गाधरः</u>—एर्व्वारुवीजमित्यादि । एर्व्वारुवीजादित्रयं तण्डुलधावनजलेन पिष्ट्वा पिबेत्, तथा दार्व्वीमामलकरसेन पिष्ट्वा गोलयित्वा समाक्षिकां पित्तकृते कृच्छ्रे पिबेत् ॥ २९ ॥

<u>गङ्गाधरः</u>—पित्तकृच्छ्रे उक्त्वा कफकृच्छ्रचिकित्सितमाह—क्षारोष्णेत्यादि । सतिक्तौषधसिद्धं तैलमभ्यङ्गश्च पानञ्च स्यात् । ऊषणं मरिचमुष्णतीक्ष्णत्वेऽपि प्राधान्यात् पुनरुक्तम् ॥ ३० ॥

<u>गङ्गाधरः</u>—व्योषमित्यादि । क्रिमिमारं विडङ्गं सास्थिकोलं सवीजवदरफलं तेषां प्रमाणं मात्रां मधुमूत्रयुतं पिबेदित्यन्वयः । त्रुटिं सूक्ष्मैलां क्षौद्रयुतां कदल्या मूलरसेनाथवा कैटर्य्यस्य कैवर्त्तमुस्तकस्य क्वाथेन पिबेदिति पूर्व्वणान्वयः । तक्रेणेत्यादि । शितिमारकः शालिञ्चस्तस्य वीजं कफेन

<u>चक्रपाणिः</u>—त्रपुषात् कुसुम्भादित्यत्र वीजमिति सम्बध्यते ॥ २८ । २९ ॥

<u>चक्रपाणिः</u>—क्षारोष्णेत्यादि । कफकृच्छ्रे भेषजे क्षारादिभिर्युक्तमन्नपानं प्रयोज्यम् । ऊषणं कटुकम् । त्रुटिरेला । सारसः पक्षी स्वनामख्यातः । कोलप्रमाणमिति अष्टमाषकमाणम् । कैटर्यः

* अटिसारसास्थि इति पाठान्तरम् ।

सप्तच्छदारग्वधकेवुकैला-धवाः करञ्जः कुटजो गुडूची।
साध्या जले तेन पिबेद् यवागूं सिद्धां कषायं मधुसंयुतं वा ॥३१
सर्व्वं त्रिदोषप्रभवे तु वायोः स्थानानुपूर्व्व्या प्रसमीक्ष्य कार्य्यम्।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात् पित्ते विरेकः पवने तु वस्तिः॥३२
क्रिया हिता त्वश्मरिशर्कराभ्यां या मूत्रकृच्छ्रे कफमारुतोत्थे।
कार्य्याश्मरीभेदनपातनाय विशेषयुक्तं शृणु कर्म्म सिद्धम्॥३३॥
पाषाणभेदं वृषकं श्वदंष्ट्रा-पाठाभयाव्योषशटीनिकुम्भाः।
हिंस्राखराह्वाशितिमारकाणामेर्व्वारुकाच्च त्रपुषाच्च वीजम्॥

कृच्छ्रस्य। प्रवालचूर्णं तण्डुलधावनेन जलेन। सप्तेत्यादि। सप्तच्छदादि-गुडूच्यन्तानां कषमात्रा प्रस्थमात्रे जले साध्या, अर्द्धशिष्टेन तेन जलेन सिद्धां यवागूं पिबेत्। तेषां कषायमष्टगुणे जले चतुर्भागावशिष्टं मधुयुतं वा पिबेत्॥ ३१॥

गङ्गाधरः— कफमूत्रकृच्छ्रचिकित्सितमिदमुक्त्वा सन्निपातमूत्रकृच्छ्र-चिकित्सामाह—सर्व्वमित्यादि। त्रिदोषप्रभवे तु मूत्रकृच्छ्रे वायोः स्थानानु-पूर्व्व्या प्रसमीक्ष्य सर्व्वं वातादिप्रत्येकोक्तं मेलयित्वा कार्य्यम्। तत्र त्रिभ्यो दोषेभ्यो मध्ये कफेऽधिके सन्निपातजे पूर्व्वं वमनं पित्तेऽधिके विरेकः पवनेऽधिके वस्तिः स्यात्॥ ३२॥

गङ्गाधरः—अथाश्मरीशर्करामूत्रकृच्छ्रचिकित्सामाह—क्रियेत्यादि। कफ मारुतोत्थे कफोत्थे मारुतोत्थे च मूत्रकृच्छ्रे या क्रिया उक्ता सा अश्मरीशर्करा-जाभ्यां मूत्रकृच्छ्राभ्यां हिता कार्य्या। अश्मरीभेदनाय पातनाय च विशेषयुक्तं कर्म्म शृणु॥ ३३॥

गङ्गाधरः—पाषाणेत्यादि। पाषाणभेदं चाङ्गेरी अश्मान्तको वा। कश्चित् तु प्रस्तरचूर इत्याह। वृषकं वासकं निकुम्भो दन्ती खराह्वा यमानी पारशीय-

पार्य्यतो निम्बः। शितिमारकः शालिञ्चः। सर्व्वमित्यादि। एतदेव वातादिभेषजं मिलितं त्रिदोषप्रभवे कृच्छ्रे कर्त्तव्यम्। तच्च समेष्वपि दोषेषु वायोः स्थानानुपूर्व्व्या कर्त्तव्यम्॥ ३०—३२॥

चक्रपाणिः—क्रिया हिता सेति या कफमारुतोत्थे कृच्छ्रे विहिता सा शर्करायामश्मर्य्याञ्च कर्त्तव्या। खराह्वाजमोदा, चूर्णं पिबेदित्यत्र जलेनैव पानम्। इक्षुरकः कोकिलाक्षः, कुन्दुरुकः

उत्कुञ्चिका हिङ्गु सवेतसाम्लं स्याद्‌ द्वे वृहत्यौ हवुषा वचा च ।
चूर्णं पिबेदश्मरिभिद्‌ विपक्वं सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥३४
मूलं श्वदंष्ट्रात्तुरकोरुवूकात्‌ त्तीरेण पिष्टं वृहतीद्वयाच्च ।
आलोड्य दध्ना मधुरेण पेयं दिनानि सप्ताश्मरिभेदनार्थम्‌ ॥३५
पुनर्नवायोरजनीश्वदंष्ट्रा-फल्गुप्रबालाश्च सदर्भपुष्पाः ।
त्तीराम्बुमद्येक्षुरसप्रपिष्टं पेयं भवेदश्मरिशर्करासु ॥ ३६ ॥
एला शताह्वा लवणानि पञ्च कम्पिल्लकं गोक्षुरकस्य बीजम्‌ ।
यवाग्रजं कुन्दुरुकाश्मभेदावेर्व्वारुकाच्च त्रपुषाच्च बीजम्‌ ।
चूर्णीकृतं चित्रकहिङ्गुमांसो-यमानीतुल्यं त्रिफलाद्विरंशम्‌ ।
अम्लैरनुष्णै रसमद्ययूषैः पेयानि गुल्माश्मरिभेदनानि ॥ ३७ ॥

देशजा। हिंस्रादीनां पञ्चानां बीजं उत्कुञ्चिका कृष्णजीरकं हवुषा आउच इति लोके। एषां चूर्णमश्मरीभित्‌। तः पाषाणभेदादिभिः कल्कैर्गोमूत्रचतुर्गुणं सर्पिर्विपक्वञ्चाश्मरीभित्‌ ॥ ३४ ॥

गङ्गाधरः—मूलमित्यादि। श्वदंष्ट्रादीनां मूलं क्षीरेण पिष्टं सप्तदिनमश्मरीभेदनार्थं पेयम्‌। वृहतीद्वयाच्च मूलं मधुरेणानम्लेन दध्ना पिष्टमालोड्य पेयमिति ॥ ३५ ॥

गङ्गाधरः—पुनर्नवेत्यादि। अयो मारितपुटितलौहरजः। फल्गु काठोडुम्बरफलम्‌। प्रबालश्च चूर्णितः। दर्भपुष्पं उल्लाकपुष्पम्‌। सर्व्वमिदं क्षीराद्यन्यतमेन पिष्टं पेयमिति ॥ ३६ ॥

गङ्गाधरः—एलेत्यादि। एर्व्वारुत्रपुषयोर्बीजम्‌। त्रपुषबीजान्तं सर्व्वं समं नीत्वा चूर्णीकृतं यावन्मितं भवति तत्‌ सर्व्वं चित्रकादीनां चतुर्णां प्रत्येकं समानानां मिलितानां तुल्यं त्रिफलाद्विरंशं त्रपुषबीजान्तसर्व्वचूर्णाद्‌ द्विगुणं त्रिफलाचूर्णमेकीकृत्य सर्व्वाणि मात्रयानुष्णैरम्लैः पेयानि मांसरसमद्ययूषैर्वा पेयानि ॥ ३७ ॥

शितिमारकः कुन्दकुसुमख्यातः। त्रिफलाद्विभागमिति त्रिफलायाः प्रत्येकं मूलभागात्‌ भागद्वयम्‌। अम्लैरिति काञ्जिकादिभिः। अशुक्तैरिति शुक्तवर्जितैः। मद्यग्रहणात्‌ तत्र वस्तिशोधनत्वं अश्मरीभेदकप्रकर्षख्यापनार्थं पुनरुच्यते ॥ ३३—३७ ॥

विल्वप्रमाणो घृततैलभृष्टो यूषः कृतः शिग्रुकमूलकल्कात्।
शीतोऽश्मभित् स्याद् दधिमण्डयुक्तः पेयः प्रकामं लवणेन युक्तः॥
जलेन शोभाञ्जनमूलकल्कः शीतो हितश्चाश्मरिशर्करासु॥ ३८॥
सितोपला वा समयावशूका कृच्छ्रेषु सर्व्वेष्वपि भेषजं स्यात्॥३९
पीत्वा च मद्यं निगदं रसेन हयेन वा शीघ्रजवेन यायात्।
तैः शर्करा प्रच्यवतेऽश्मरी च शाम्येन्न चेत् शल्यविदुद्धरेत् ताम्॥४०

गङ्गाधरः—विल्वेत्यादि। शिग्रुमूलकल्ककर्षः। मुद्गादिविदलं प्रास्थिकजलाच्चतुर्दशभागैकभागं पक्त्वा चतुर्थभागशिष्टो यूषः कृतो घृततैले मिलिते सम्भृष्टस्तस्माद् विल्वप्रमाणः पलप्रमाणो यूषः शीतः प्रकाममिच्छानुरूपं लवणयुक्तो दधिमण्डयुक्तो दधिमस्तुना युक्तः पेयोऽश्मभित्। जलेनेत्यादि। शोभाञ्जनमूलकल्कः शीत एव जलेन पिष्ट्वा पेयः॥ ३८॥

गङ्गाधरः—समयावशूका सितोपला वा जलेन पीता॥ ३९॥

गङ्गाधरः—पीत्वेत्यादि। निगदसंज्ञं मद्यं मांसरसेन पीत्वा शीघ्रजवेन हयेनाश्वेन यायाद् गच्छेत्। तैरिति एतदन्तैः पूर्व्वोक्तैः शर्कराश्मरी च प्रच्यवते। चेदेतैर्न शर्करा चाश्मरी च शाम्येत, तदा शल्याङ्गायुर्व्वेदविद् वैद्यस्तां शर्कराश्मरीञ्चोद्धरेत्। शल्याङ्गप्रधानसुश्रुते चोक्तम्। "घृतैः क्षारैः कषायैश्च क्षीरैः सोत्तरवस्तिभिः। यदि नोपशमं गच्छेत् छेदस्तत्रोत्तरो विधिः। कुशलस्यापि वैद्यस्य यतः सिद्धिरिहाध्रुवा। उपक्रमो जघन्योऽयमतः सम्परिकीर्त्तितः। अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत्। तस्मादापृच्छ्य कर्त्तव्यमीश्वरं साधुकारिणा। अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्नशरीरं भुक्तवन्तं कृतबलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य, ततो बलवन्तमविक्लवमाजानुसमे फलके प्रागुपवेश्य पुरुषञ्च, तस्योत्सङ्गे निषण्णपूर्व्वकायमुत्तानमुन्नतकटीकं वस्त्राधारकोपविष्टं सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेण शाटकैर्वा। ततः स्वभ्यक्तनाभिप्रदेशस्य वामपार्श्वं विमृद्य मुष्टिनावपीड़येदधोनाभेर्यावदश्मर्य्यधः प्रपन्नेति। ततः स्नेहाभ्यक्ते क्लृप्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायानुसेवनीमासाद्य प्रयत्नबलाभ्यां पायुमेढ्रान्त-

चक्रपाणिः—अश्मभिदिति अश्मरिभेदी। सितोपला शर्करा। शल्यवित् हरेदिति शल्यवित्

मानीय निर्व्वलीकमनायतमविषमञ्च वस्तिं सन्निवेश्य भृशमुत्पीड़येदङ्गुलीभ्यां यथा ग्रन्थिरिवोन्नतं शल्यं भवति। स चेद् गृहीतशल्ये तु विवृताक्षो विचेतनः। हतवल्लम्बशीर्षश्च निर्व्विकारो मृतोपमः॥ न तस्य निर्हरेच्छल्यं निर्हरेत् तु म्रियेत सः। विना त्वेतेषु रूपेषु निहर्त्तुं समुपाचरेत्॥ सव्ये पार्श्व सेवनीं यवमात्रेण मुक्त्वाऽवचारयेत् शस्त्रमश्मरीप्रमाणं, दक्षिणतो वा क्रिया-सौकर्य्यहेतोरित्येके। यथा च न भिद्यते चूर्ण्यते वा तथा प्रयतेत। चूर्णमल्प-मप्यवस्थितं हि पुनः परिवृद्धिमेति। तस्मात् समस्तामग्रवक्त्रेणाददीत। स्त्रीणान्तु वस्तिपार्श्वगतो गर्भाशयः सन्निकृष्टस्तस्मात्तासामुत्सङ्गवच्छस्त्रं पातयेदतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवेत्। पुरुषस्य वा मूत्रप्रसेकक्षणना-न्मूत्रक्षरणम्। अश्मरीव्रणादृते भिन्नो वस्तिरेकधा न भवति, द्विधाभिन्न-वस्तिराश्मरिको न सिध्यति। अश्मरीव्रणनिमित्तमेकधाभिन्नवस्तिर्जीवति क्रियाभ्यासात् शास्त्रविहितच्छेदान्निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति। उद्धृत-शल्यन्तूष्णोदकद्रोण्यामवतार्य्य स्वेदयेत् तथा हि वस्तिरसृजा न पूर्य्यते। पूर्ण वा क्षीरिवृक्षकषायन्तु पुष्पनेत्रेण विदध्यात्। भवति चात्र। क्षीरिवृक्षकषायन्तु पुष्पनेत्रेण योजितम्। निर्हरेदश्मरीं तूर्णं रक्तं वस्तिगतञ्च यत्॥ मूत्रमार्ग-विशोधनार्थञ्चास्मै गुड़सौहित्यं वितरेत्। उद्धृत्य चैनां मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धामुष्णां सघृतां यवागूं पाययेदुभयकालं त्रिरात्रम्। त्रिरात्रादूर्द्ध्वं गुड़प्रगाढ़ेन पयसा मृद्वोदनमल्पं भोजयेद् दशरात्रं मूत्रासृग्विशुद्ध्यर्थं व्रणक्लेदनार्थञ्च दशरात्रादूर्द्ध्वं फलाम्लैर्जाङ्गलरसैरुपाचरेत्। ततो दशरात्रं चैन-मप्रमत्तः स्वेदयेत् स्नेहेन द्रवस्वेदेन वा। क्षीरिवृक्षकषायेण चास्य व्रणं प्रक्षालयेत्। लोध्रमधुकमञ्जिष्ठाप्रपौण्डरीककल्केन व्रणं प्रतिग्राहयेत्। एतेष्वेव हरिद्रायुतेषु तैलं घृतं वा विपक्वं व्रणाभ्यञ्जनमिति। स्त्यानशोणितं चोत्तर-वस्तिभिरुपाचरेत्। सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे व्रणं यथोक्तेन विधिना दहेदग्निना। स्वमार्गप्रतिपन्ने चोत्तरवस्त्यास्थापनानुवासनैरुपाचरेत् मधुरकषायैरिति। यदृच्छया वा मूत्रमार्गप्रतिपन्नामन्तरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसापहरेत्। एवञ्चाशक्ये विदार्य्य वा नाड़ीं शस्त्रेण वड़िशे-नोद्धरेत्। रूढ़व्रणश्चाङ्गनाश्वनगनागरथद्रुमान् नारोहेत वर्षम्, नाप्सु प्लवेत, भुञ्जीत वा गुरु। मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदवस्तीन् परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्तेः। शुक्रवहच्छेदान्मरणं क्लैव्यं वा। मुष्कस्रोत-उपघाताद् ध्वजभङ्गः। मूत्रप्रसेकक्षणनान्मूत्रप्रक्षरणम्। सेवनी-

रेतोविघातप्रभवे तु कृच्छ्रे समीक्ष्य दोषं प्रतिकर्म्म कुर्य्यात् ।
कार्पासमूलं वसुकाश्मभेदौ बला स्थिरादीनि गवेधुका च ॥
वृश्चीरमैन्द्री च पुनर्नवा च शतावरी मध्वशनाखुपर्ण्यौ ।
तत्क्वाथसिद्धं पवने नरस्य पित्ताधिके क्षीरमथाऽपि सर्पिः ॥
कफे तु यूषादिकमन्नपानं संसर्गजे सर्व्वहितः क्रमः स्यात् ॥४१॥
एवं न चेच्छाम्यति तस्य दद्यात् सुरां पुराणां मधु माध्विकं वा ।
विहङ्गमांसानि च बृंहणार्थं वस्तिश्च शुक्राशयशोधनार्थम् ।
शुद्धस्य तृप्तस्य च वृष्ययोगाः प्रियानुकूलाः प्रमदा विधेयाः ॥४२
रक्तोद्भवे तूत्पलनालताल-काशेक्षुबालेक्षुकशेरुकाणि ।
पिवेत् सिताक्षौद्रयुतानि खादेदिक्षुं विदारीं त्रपुषाणि चैव ॥

योनिच्छेदाद् रुजः प्रादुर्भावः । वस्तिगुदविद्धलक्षणं प्रागुक्तमिति । भवतश्चात्र । मर्म्माण्यष्टावसम्बुध्य स्रोतोजानि शरीरिणाम् । व्यापादयेद् बहून् मर्त्त्यान् शस्त्रकर्म्मापटुर्भिषक् । सेवनी मुष्क(शुक्र)हरणी स्रोतसी फलयोर्गुदम् । मूत्रसेकं मूत्रवहं मूत्रवस्तिरस्तथाष्टमः ॥ इति ॥ ४० ॥

गङ्गाधरः—अथ शुक्रविघातजमूत्रकृच्छ्रचिकित्सामाह—रेत इत्यादि । कार्पासमूलादीनां क्वाथसिद्धं क्षीरमथवा सर्पिः पित्ताधिके पवने । कफेऽधिके तु तेषां क्वाथसिद्धं यूषव्यञ्जनादिकं यवाग्वाद्यन्नपानञ्च । संसर्गजे सर्व्वेषु वातादिषु त्रिषु हितो यः क्रमः स विहितः स्यात् ॥ ४१ ॥

गङ्गाधरः—एवमित्यादि । एवमुक्तक्रमेण चेद्रेतोविघातजमूत्रकृच्छ्रं न शाम्यति, तदा तस्य पुराणां सुरां दद्यात् । मधु वा पुराणं माध्विकं वा पुराणमेव । विहङ्गमांसेन तृप्तस्य वस्तिना शुद्धशुक्राशयस्य च वृष्ययोगा वाजीकरणोक्ताः प्रिया अनुकूलाश्च प्रमदा विधेयाः । इति ॥ ४२ ॥

गङ्गाधरः—रक्तजमूत्रकृच्छ्रचिकित्सामाह—रक्तोद्भवे त्वित्यादि । शल्यादिभिः क्षतेऽभिघाते वा क्षयाद् वा जाते रक्तोद्भवे मूत्रकृच्छ्रे उत्पलनालादीनि समानि पिष्ट्वा सिताक्षौद्रयुतानि पिवेत् । इक्षुं खादेत्

उक्तविधानेनाश्मरीमाकर्षेत् । समीक्ष्येति दोषमुल्बणं समीक्ष्य । मध्वशनाखुपर्ण्यौ मधुपर्णी गुडूची, अशनपर्णी अपराजिता । संसर्गज इति त्रिदोषजे ॥ ३८—४१ ॥

**घृतं श्वदंष्ट्रास्वरसेन सिद्धं क्षीरेण चैवाष्टगुणेन पेयम् ।**
**स्थिरादिकानां कतकादिकानामेकैकशो वा विधिनैव तेन ॥४३॥**
**क्षीरेण वस्तिर्मधुरौषधैः स्यात् तैलेन वा स्वादुफलोत्थितेन ।**
**यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते तत् कारयेच्छोणितमूत्रकृच्छ्रे ॥४४॥**
**व्यायामसन्धारणशुष्कभक्त-पिष्टान्नवातार्ककरव्यवायान् ।**
**खर्ज्जूरशालूककपित्थजम्बू-विसं कषायं न रसं भजेत ॥ ४५ ॥**

विदारीमूलं त्रपुषफलानि च खादेत् । घृतमित्यादि । श्वदंष्ट्रास्वरसेनाष्टगुणेन क्षीरेण चाष्टगुणेन सिद्धं घृतं पेयम् । स्थिरादिकानां शालपर्ण्यादिपञ्चमूलानामेकैकशालपर्ण्यादीनामेकैककतकादीनां सर्व्वेषां स्थिरादीनां सर्व्वेषां कतकादीनां वा तेनैव विधिनाष्टगुणेन स्वरसेनाष्टगुणेन क्षीरेण सिद्धं घृतं पेयमिति ॥ ४३ ॥

गङ्गाधरः—क्षीरेणेत्यादि । क्षीरेण वस्तिः स्यादथवा मधुरौषधैर्जीवनीयैर्वस्तिः स्यात् । स्वादुफलानां वीजोत्थितेन तैलेन वा वस्तिः स्यात् । पैत्ते मूत्रकृच्छ्रे यदौषधं विहितं तदपि शल्यादिक्षते रक्तजमूत्रकृच्छ्रे कारयेदिति ॥ ४४ ॥

गङ्गाधरः—सर्व्वेषु वर्ज्ज्यान्याह—व्यायामेत्यादि । सन्धारणं मूत्रादिवेगानाम्, शुष्कद्रव्यभक्षणञ्च पिष्टान्नञ्च वातश्चार्ककरञ्च व्यवायश्च खर्ज्जूरादीनि च, कषायं रसञ्च मूत्रकृच्छ्री न भजेत । इह मूत्रकृच्छ्रे मूत्राघातानां हेतुत्वादवरोधमभिमेत्य नोक्तिः । सुश्रुते च पृथङ्मूत्राघात उक्तः, तद्यथा—"वातकुण्डलिकाऽष्ठीला वातवस्तिस्तथैव च । मूत्रातीतः सजठरो मूत्रोत्सङ्गक्षयौ तथा । मूत्रग्रन्थिर्मूत्रशुक्रमुष्णवातस्तथैव च । मूत्रौकसादौ द्वौ चापि रोगा द्वादश कीर्त्तिताः । रौक्ष्याद् वेगविघाताद्वा वायुर्वस्तौ सवेदनम् । मूत्रं संगृह्य चरति विगुणः कुण्डलीकृतः । सृजेदल्पाल्पमथवा सरुजञ्च शनैःशनैः । वात-

चक्रपाणिः—खादेदिति सिद्धान्येव खादेत् । घृतं श्वदंष्ट्रेत्यादौ साहचर्य्यात् केचित् श्वदंष्ट्रास्वरसं अष्टगुणं वदन्ति । तत्र स्नेहसम एव स्नेहेषु भवति । यतः हि जतुकर्णे 'कल्काच्चतुर्गुणः स्नेहः स्वरसः स्नेहसम्मितः' इति । तेन क्षीरवत् सर्व्वस्नेहेषु स्वरसाभिधानं ज्ञेयम् । स्थिरादिकानां मधुररसपाकानां कतककाश्मर्य्यादीनां उक्तो गणो ज्ञेयः । विधिनैव तेनेति पूर्व्वघृतविधानैः

कुण्डलिकां तान्तु व्याधिं विद्यात् सुदारुणम्। शकृन्मार्गस्य वस्तेश्च वायुरन्तरमाश्रितः। अष्ठीलावद्घनं ग्रन्थं करोत्यचलमुन्नतम्। विण्मूत्रानिलसङ्गश्च तत्राध्मानञ्च जायते। वेदना जायते वस्तौ वाताष्ठीलेति तां विदुः। वेगं विधारयेद् यस्तु मूत्रस्याकुशलो नरः। निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः। मूत्रसङ्गो भवेत् तेन वस्तिकुक्षिनिपीड़ितः। वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः। सन्धार्य्य वेगं मूत्रस्य यो भूयः स्रष्टुमिच्छति। तस्य नाभ्येति यदि वा कथञ्चित् सम्प्रवर्त्तते। प्रवाहतो मन्दरुजमल्पमल्पं पुनःपुनः। मूत्रातीतन्तु तं विद्यान्मूत्रवेगविघातजम्। मूत्रस्य विहते वेगे तदुदावर्त्तहेतुना। अपानः कुपितो वायुरुदरं पूरयेद् भृशम्। नाभेरधस्तादाध्मानं जनयेत् तीव्रवेदनम्। तं मूत्रजठरं विद्यादधोवस्तिनिरोधजम्। वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिनः। मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः। स्रवेच्छनैरल्पमल्पं सरुजं वाथ नीरुजम्। विगुणानिलजो व्याधिर्मूत्रसङ्गः स संज्ञितः। रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ। सदाहवेदनं कृच्छ्रं कुर्य्यातां मूत्रसंक्षयम्। अभ्यन्तरे वस्तिमुखे वृत्तोऽल्पः स्थिर एव च। वेदनावानतिष्पन्दो मूत्रमार्गनिरोधनः। जायते सहसा यस्य ग्रन्थिरश्मरिलक्षणः। स मूत्रग्रन्थिरित्येवमुच्यते वेदनादिभिः। प्रत्युपस्थितमूत्रस्तु मैथुनं योऽभिनन्दति। तस्य मूत्रयुतं रेतः सहसा सम्प्रवर्त्तते। पुरस्ताद् वापि मूत्रस्य पश्चाद् वापि कदाचन। भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते। व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलावृतम्। वस्तिमेढ्रगुदञ्चैव प्रदहन् स्रावयेदधः। मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा। कृच्छ्रात् प्रवर्त्तते जन्तोरुष्णवातं वदन्ति तम्। विशदं पीतकं मूत्रं सदाहं बहलं तथा। शुष्कं भवति यच्चापि रोचनाचूर्णसन्निभम्। मूत्रौकसादनं विद्याद्रोगं पित्तकृतं बुधः। शुक्रं भवति यच्चापि शङ्खचूर्णप्रपाण्डरम्। पिच्छिलं संहतं श्वेतं तथा कृच्छ्रं प्रवर्त्तते। मूत्रौकसादं तं विद्यादामयं चापरं कफात्। कषायकल्कसर्पींषि भक्ष्यान् लेहान् पयांसि च। क्षारमद्यासवस्वेदान् वस्तींश्चोत्तरसंज्ञितान्। विदध्यात् मतिमांस्तत्र विधिञ्चाश्मरिनाशनम्। मूत्रोदावर्त्तयोगांश्च कार्त्स्न्येनात्र प्रयोजयेत्। इत्यादि। इति त्रिमर्म्मीये वस्तिगता रोगाः सनिदानचिकित्सिता व्याख्याताः॥ ४५॥

श्वदंष्ट्रास्थाने स्थिरादीनि प्रत्येकं कल्पनीयानि। स्वादुफलोत्थितेनेति मधुराक्षोटादिफलनिष्पन्नेन। व्यायामेत्यादिना मूत्रकृच्छ्रे पथ्यान्याह॥ ४२—४५॥ वस्तिरोगचिकित्सितं समाप्तम्।

व्यायामतीक्ष्णातिविरेकवस्तिच्छर्द्यामसन्धारणकर्षणानि ।
चिन्ताभयत्रासगदाभिचारा हृद्रोगकर्त्तृणि तथा विघातः ॥४६॥

वैवर्ण्यमूर्च्छाज्वरकासहिक्का-
श्वासास्यवैरस्यतृषाप्रमोहाः ।
छर्द्दिः कफोत्क्लेशरुजोऽरुचिश्च
हृद्रोगजाः स्युर्विविधास्तथान्ये ॥ ४७ ॥

हृच्छून्यभावद्रवशोषभेदस्तम्भाः समोहाः पवनाद् विशेषः ।
पित्तात् तमोदूयनदाहमोहाः सन्त्रासतापज्वरपीतभावाः ॥

स्तब्धं गुरु स्यात् स्तिमितञ्च मर्म्म
कफात् प्रसेकज्वरकासतन्द्राः ।
विद्यात् त्रिदोषन्त्वपि सर्व्वलिङ्गं
तीव्रार्त्तितोदं क्रिमिजं सकण्डुम् ॥ ४८ ॥

गङ्गाधरः—अथ हृदयमर्म्मजा रोगा व्याख्यायन्ते। त्रियन्तःशिरसीये प्रागुक्तं पञ्चैव हृदयामया इति, तेषाञ्च शोकोपवासेत्यादिना सनिदानलक्षणान्युक्तानि। पुनरिह चिकित्सार्थं सनिदानलक्षणान्याह—व्यायामेत्यादि। व्यायामाद्यभिचारान्तानि तथा विघातश्चेत्यन्तानि हृद्रोगकर्त्तृणि भवन्ति ॥ ४६ ॥

गङ्गाधरः—हृद्रोगसामान्यलक्षणमाह—वैवर्ण्येत्यादि। हृद्रोगजा हृद्रोगे जायन्त इति ॥ ४७ ॥

गङ्गाधरः—विशेषलक्षणमाह। हृच्छून्येत्यादि। हृदयस्य शून्यभावश्च द्रवश्च धक्धक्करणं शोषश्च भेदश्च स्तम्भश्च, पवनादेव विशेषः। पित्तादाह—पित्तादित्यादि। स्तब्धमित्यादि कफहृद्रोगलक्षणम्। मर्म्म प्रकरणादिह हृदयम्। विद्यादित्यादिना त्रिदोषहृद्रोगलक्षणम्। तीव्रार्त्तितोदं क्रिमिजमितीह

चक्रपाणिः—निदानादिक्रमेण हृद्रोगचिकित्सामाह—गदातिचार इत्यसम्यगुपचारः। वैवर्ण्यादिषु हृद्रोगजेषु हृद्रोगजा इति वचनं हृद्रोगोत्पत्तिसमकालमेव वैवर्ण्यादयो भवन्तीति ज्ञापनार्थम्। यस्मात् तरुणकासे वैवर्ण्यादय उपद्रवा भवन्ति इह तु वैवर्ण्यादयः हृद्रोगमुत्पादयन्ति। हृद्रोगश्च त्रियन्तःशिरसीये विस्तरेणोक्तः। चिकित्साप्रकरणात् इह सङ्क्षेपेणाभिधीयते। मर्म्मेति हृदयम् ॥ ४६—४८ ॥

तैलं ससौवीरकमस्तुतक्रं वाते प्रपेयं लवणं सुखोष्णम्।
मूत्राम्बुसिद्धं लवणैश्च तैलमानाहगुल्मार्त्तिहृदामयघ्नम्॥
पुनर्नवा दारु सपञ्चमूलं रास्नां यवान् कोलकुलत्थविल्वम्।
पक्त्वा जले तेन पचेत् तु तैलमभ्यङ्गपानेऽनिलहृद्गदघ्नम्॥४९॥
हरीतकीनागरपुष्कराह्वैर्वयःकयस्थालवणैश्च कल्कैः।
सहिङ्गुभिः साधितमग्रसर्पिर्गुल्मे सहृत्पार्श्वगदेऽनिलोत्थे॥५०॥
सपुष्कराह्वं फलपूरमूलं महौषधं शठ्यभया च कल्काः।
क्षाराम्बुसर्पिर्लवणैर्विमिश्राः स्युर्वातहृद्रोगविकर्त्तिकाघ्नाः॥ ५१॥
क्वाथः कृतः पौष्करमातुलुङ्ग-पलाशपूतीकशटीसुराह्वैः।
सनागराजाजिवचायमानिः सक्षार उष्णो लवणश्च पेयः॥ ५२॥

सङ्क्षेपवचनम्। कियन्तःशिरसीये विस्तरेण दर्शितं "त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते" इत्यादि॥ ४८॥

गङ्गाधरः—अथैषां चिकित्सितमाह—तैलमित्यादि। वातहृद्रोगे सौवीरादियुक्तं तैलं प्रपेयम्। मूत्राम्बुभ्यां समाभ्यां सिद्धं सैन्धवं लवणं सुखोष्णं प्रपेयम्। लवणैश्च पञ्चभिस्तैलं प्रपेयमानाहादिघ्नम्। पुनर्नवेत्यादि। पुनर्नवादीनि जलेऽष्टगुणे पक्त्वा, पादावशेषे क्वाथे चतुर्गुणे सति तेन तैलं पचेत्। अभ्यङ्गार्थं पानार्थञ्च॥ ४९॥

गङ्गाधरः—हरीतकीत्यादि। वयःस्थामलकी कयस्था सूक्ष्मैला। एभिः कल्कैश्चतुर्गुणे जलेऽग्रसर्पिर्गव्यसर्पिः॥ ५०॥

गङ्गाधरः—सपुष्कराह्वमित्यादि। फलपूरमूलं मातुलुङ्गमूलं पुष्करादीनां पञ्चानां कल्काः पञ्च पृथगेव क्षाराम्बुना सर्पिषा सैन्धवलवणेन मिश्राः॥५१॥

गङ्गाधरः—क्वाथ इत्यादि। पौष्करादिसुराह्वान्तैः कृतः क्वाथः नागरादियमान्यन्तचूर्णयुक्तः पेयः। लवणः सैन्धवाख्यः सयवक्षार उष्णः सह जलेन पेयः॥५२

चक्रपाणिः—तैलमित्यादिना चिकित्सामाह। तैलादीनाम् अत्र समभागत्वं ज्ञेयम्। वयःकयस्थेति गुडूचीस्वरसग्रहणम्। अग्रसर्पिरिति अत्राग्रपदं सम्यक् सर्पिषः प्राधान्यख्यापनार्थम्। विकर्त्तिकेह हृदयपरिकर्त्तिकाकारा वेदना। क्वाथः कृत इत्यादौ नागरादीनां कल्कं पौष्करादीनां क्वाथमाहुः॥ ४९—५२॥

पथ्याशटीपौष्करपञ्चकोलात् समातुलुङ्गाद् यमकेन कल्कः ।
गुड़प्रसन्नालवणैश्च भृष्टो हृत्पार्श्वपृष्ठोदरयोनिशूले ॥ ५३ ॥
स्यात् त्र्यूषणं द्वे त्रिफले सपाठे निदिग्धिकागोक्षुरकौ बले द्वे ।
मेदे त्रुटिस्तामलकी स्वगुप्ता त्रुटिर्मधूकं मधुकं स्थिरा च ॥
शतावरी जीवकपृश्निपर्ण्यौ द्रव्यैरिमैरक्षसमैः सुपिष्टैः ।
प्रस्थं घृतस्य प्रपचेद् विधिज्ञः प्रस्थेन दध्ना त्वथ माहिषेण ॥
मात्रां पलं चार्द्धपलं पिचुं वा प्रयोजयेन्माक्षिकसंप्रयुक्तम् ।
श्वासे सकासे त्वथ पाण्डुरोगे हलीमके हृद्ग्रहणीप्रदोषे ॥५४॥
शीतः प्रदेहः परिषेचनञ्च तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैः स्यात् कृच्छ्रे च पित्तापहमन्नपानम् ॥५५॥

गङ्गाधरः—पथ्येत्यादि । पथ्यादिमातुलुङ्गान्तानां कल्कः गुड़ादिभिः सह मिश्रितः यमकेन घृततैलाभ्यां भृष्टः हृदादिशूले हितः ॥ ५३ ॥

गङ्गाधरः—स्यादित्यादि । द्वे त्रिफले । हरीतकी चामलकी विभीतकमिति त्रयी । त्रिफलाऽथापरा—द्राक्षा काश्मर्य्यं सपरुषकमिति । द्वे बले मेदे च द्वे । त्रुटिः सूक्ष्मैला, पुनः पाठात् स्थूलैला च, भागद्वयं वा । जीवकपृश्निपर्ण्यावित्येकं पदम् । एषामक्षसमैः कल्कैर्माहिषदध्ना प्रस्थेन घृतप्रस्थं विपचेत् । शीते मधु पादिकं प्रक्षिपेत् । तस्य पलमर्द्धपलं कर्षमाणञ्च क्रमेणोत्तमादिमात्रां प्रयोजयेत् श्वासादौ । त्र्यूषणादिघृतम् ॥ ५४ ॥

गङ्गाधरः—वातहृद्रोगचिकित्सितमुक्त्वा पित्तहृद्रोगचिकित्सितमाह—शीत इत्यादि । शीतस्य सर्व्वत्रान्वयः । द्राक्षादिभिरर्द्धशृतैर्जलैरन्नपानं स्यात् ॥५५॥

चक्रपाणिः—पथ्याशटीत्यादीनां कल्कः यमकेन भृष्टः गुडप्रसन्नालवणैश्च पेय इति व्याख्येयम् ॥ ५३ ॥

चक्रपाणिः—द्वे त्रिफले इत्यत्र द्राक्षाकाश्मर्य्यपरूषकाणि द्वितीया त्रिफला । त्रुटी एला सूक्ष्मैला ॥ ५४ ॥

चक्रपाणिः—शीत इति पित्तहृद्रोगचिकित्सिते ॥ ५५ ॥

पिष्ट्वा पिवञ्चापि सिताजलेन
यष्ट्याह्वयं तिक्तकरोहिणीञ्च ।
क्षतेषु सर्पींषि हितानि सर्पि-
र्गुड़ाश्च ये तान् प्रसमीक्ष्य सम्यक् ॥ ५६ ॥

दद्याद् भिषक् धन्वरसान्नगव्य-क्षीराशिनां पित्तहृदामयेषु ।
तैरेव सर्व्वे प्रशमं प्रयान्ति पित्तामयाः शोणितसंश्रया ये ॥५७॥

द्राक्षाबलाश्रेयसिशर्कराभिः खर्ज्जूरवीरर्षभकोत्पलैश्च ।
काकोलिमेदायुगजीवकैश्च क्षीरेण सिद्धं महिषीघृतं स्यात् ॥
कशेरुकाशैवलशृङ्गवेर-प्रपौण्डरीकं मधुकं विसस्य ।
ग्रन्थिश्च सर्पिः पयसा पचेत् तैः क्षौद्रान्वितं पित्तहृदामयघ्नम् ॥
स्थिरादिकल्कैः पयसा च सिद्धं द्राक्षारसेनेक्षुरसेन वापि ।
सर्पिर्हितं स्वादुफलेक्षुजाश्च रसाः सुशीता हृदि पित्तदुष्टे ॥५८

गङ्गाधरः—पिष्ट्वे त्यादि। यष्ट्याह्वयादिद्वयं सिताजलेन पिष्ट्वा पिबेत् ॥५६॥

गङ्गाधरः—उरसः क्षतेषु यानि सर्पींषि ये च सर्पिर्गुड़ा उक्तास्तान् धन्वरसान्नगव्यक्षीराशिनां दद्यात् ॥ ५७ ॥

गङ्गाधरः—द्राक्षेत्यादि। द्राक्षादिभिः कल्कैरेकं घृतम्, खर्ज्जूरादिभिरेकम्, काकोल्यादिभिरेकमिति घृतत्रयम्; सर्व्वत्र क्षीरं चतुर्गुणम्। कशेरुकेत्यादि। विसस्य मृणालस्य ग्रन्थिः। एतदन्तैः कल्कैः पयसा चतुर्गुणेन सर्पिः पचेत्। शीते मधु पादिकम्। स्थिरादीत्यादि। स्थिरादिः शालपर्ण्यादिः कल्कः पयश्चतुर्गुणमथवा द्राक्षारसश्चतुर्गुणः किंवा चतुर्गुण इक्षुरस इति घृतत्रयं हितम्। एवं स्वादुफलजा द्राक्षादिफलजा रसा इक्षुरसाश्च सुशीता हिताः ॥ ५८ ॥

चक्रपाणिः—क्षतेष्विति क्षतक्षीणचिकित्सिते। श्रेयसी रास्ना। खर्ज्जूरं खर्ज्जूरफलम्। क्षौद्रान्वितमिति साधनोत्तरकालं पादिकमधुयुक्तम्। स्वादुफलेत्यादौ रसा इति स्वरसाः ॥ ५६—५८ ॥

स्विन्नस्य वान्तस्य विलङ्घितस्य क्रिया कफघ्नी कफमर्म्मरोगे ।
कौलत्थधान्यश्च रसैर्यवान्न-पानानि तीक्ष्णानि सशर्कराणि * ॥
मूत्रे शृताः कट्फलशृङ्गवेर-पीतद्रु पथ्यातिविषाः प्रदेयाः ।
तथा शटीशुण्ठिवचोपकुल्या-रास्नावचापुष्करमूलचूर्णम् ॥
उडुम्बराश्वत्थवटार्ज्जुनाख्ये पालाशरौहीतकखादिरे च ।
क्वाथे त्रिवृत्त्र्यूषणचूर्णसिद्धो लेहः कफघ्नो युत उष्णतोयैः ॥
शिलाह्वयं वा भिषगप्रमत्तः प्रयोजयेत् कल्पविधानदृष्टम् ।
प्राश्याथवागस्त्यहरीतकी† च रसायनं ब्राह्मयमथामलक्याः ॥५९॥
त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्व्वेषु हितं विधेयम् ।
हीनातिमध्यत्वमवेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म्म शस्तम् ॥

गङ्गाधरः—पित्तहृद्रोगचिकित्सितमुक्त्वा कफहृद्रोगचिकित्सितमाह—स्विन्नस्येत्यादि। कौलत्थधान्ययो रसैः पक्वं यवान्नं तैरद्धशृतञ्च पानमित्येवं तीक्ष्णान्यन्नपानानि सशर्कराणि हितानि। मूत्रे इत्यादि। कट्फलादयोऽतिविषान्ता गोमूत्रे शृताः क्वाथरूपा देयाः। तथा शट्यादीनां चूर्णं प्रदेयम्। उडुम्बरेत्यादि। उडुम्बरादिकार्ज्जुनान्तक्वाथे पालाशखादिरान्ते क्वाथे त्रिवृतादिचूर्णं दत्त्वा सिद्धो लेहः पक्त्वा लेहः कार्य्यः, स चोष्णसलिलयुक्तः पेयः। शिलाह्वयमित्यादि। शिलाजतुनामकं लेहं भिषक् प्रयोजयेत्। तथा अगस्त्यहरीतकीलेहं प्रयोजयेत्। ब्राह्मं रसायनं तथामलकीरसायनं प्रयोजयेत् ॥५९॥

गङ्गाधरः—अथ त्रिदोषजहृद्रोगचिकित्सितमाह—त्रिदोषज इत्यादि। सर्व्वेषु वातादिजेषु प्रत्येकं विहितं मिलित्वा विधेयम्। तत्र हीनादिदोषमवेक्ष्य तथानु-

चक्रपाणिः—स्विन्नस्येत्यादि कफजहृद्रोगचिकित्साधिकारः। शङ्कराणीति कल्याणकराणि। कल्पशब्देन च क्षुद्ररसायनमुच्यते। प्राश इति च्यवनप्राशः। अगस्त्येति लेहविशेषणम् ॥ ५९ ॥

चक्रपाणिः—त्रिदोषज इत्यादौ आदौ लङ्घनविधानं हृदयस्य कफस्थानतया, तद्गदे त्रिदोषजेऽपि कफ एवादौ लङ्घनेन जेय इति मत्वा कृतम्। त्रिदोषजे उल्वणदोषचिकित्सासूत्रमाह—हीनाधीत्यादि। हीनत्वमधिकत्वं मध्यमत्वञ्च दोषाणामवेक्ष्य यत् कर्म्म शस्तं अधिकदोष-

* च शङ्कराणीति पाठान्तरम्। † प्राशस्तथागस्त्यहरीतकी च इति वा पाठः।

भुक्तेऽधिकं जीर्य्यति शूलमल्पं
जीर्णे स्थितं स्यात् सुरदारु कुष्ठम्।
सतिल्वकं द्वे लवणे विड़ङ्ग-
मुष्णाम्बुना सातिविषं पिबेत् सः॥
जीर्णेऽधिके स्नेहविरेचनं स्यात्
फलैर्विरेच्यो यदि जीर्य्यति स्यात्।
त्रिष्वेव कालेष्वधिके तु शूले
तीक्ष्णं हितं मूलविरेचनं स्यात्॥ ६० ॥

प्रायोऽनिलो रुद्धगतिः प्रकुप्यत्यामाशये शोधनमेव तस्मात्।
कार्य्यं तथा लङ्घनपाचनञ्च सर्व्वं क्रिमिघ्नं क्रिमिहृद्गदे च ॥६१॥

रूपेण त्रयाणामपि कर्म्म शस्तं स्यात्। भुक्त इत्यादि। त्रिदोषजे हृद्रोगे भुक्ते भुक्तमात्रे शूलमधिकं स्यात्, अन्ने जीर्य्यति त्वल्पं शूलम्, जीर्णेऽन्ने शूलं स्थितं स्यात्। तत्र स हृद्रोगी सुरदारुप्रभृतीनामतिविषान्तानां चर्णमुष्णाम्बुना पिबेत्। जीर्ण इत्यादि। यस्मिन् हृद्रोगे त्रिदोषजेऽन्ने जीर्णेऽधिकं शूलं स्यात् तत्र स्नेहविरेचनमेरण्डतैलादिना हितं स्यात्। तत्रान्ने जीर्य्यति सति यद्यधिकं शूलं स्यात् तदा फलैर्विरेचनोक्तफलिनीनां फलैर्विरेच्यः स स्यात्। त्रिषु भुक्तमात्रजीर्य्यज्जीर्णेषु कालेषु शूलेऽधिके तीक्ष्णं मूलं विरेचनं मूलिनीषु मध्ये यत् तीक्ष्णं मूलं विरेचनं तद्धितं स्यात्॥ ६० ॥

<u>गङ्गाधरः</u>—क्रिमिहृद्रोगचिकित्सामाह—प्राय इत्यादि। क्रिमिहृद्रोगे च यस्मादनिलो रुद्धगतिः सन्नामाशये प्रायः प्रकुप्यति तस्मादेवैवं शोधनं कार्य्यम्,

क्षपकतया तत् कार्य्यमिति वाक्यार्थः। भुक्तेऽधिकमित्यादिना सान्निपातिकहृद्रोगे प्रायो भाविशूलं लक्षणभेदेन विभजन् चिकित्सति। भुक्तेऽधिकमित्यादिना श्लेष्मशूलमुच्यते। स्थितमिति प्रशान्तम्। जीर्णेऽधिकमित्यादिना अनिलशूलम्। जीर्य्यति अधिकमित्यनेन पैत्तिकं ब्रूते। फलैरिति द्राक्षाकाश्मर्य्यादिभिः। त्रिष्वेवेत्यादिना सान्निपातिकशूलमाह। मूलविरेचनं त्रिवृन्मूलादिभिर्विरेचनम्॥ ६० ॥

<u>चक्रपाणिः</u>—विरेचनोपपत्तिमाह—प्रायोऽनिल इत्यादि। अत्र चानिलकोपे यद्यपि वस्तिरुचिता तथापि आमाशयशोधनं विरेचनमेव ज्ञेयम्। क्रिमिघ्नमिति व्याधितरूपीये क्रिमिहरत्वेनोक्तं विधानम्॥ ६१ ॥

इति हृद्रोगचिकित्सितम्।

सन्धारणाजीर्णरजोऽतिभाष्य-क्रोधर्त्तुवैषम्यशिरोऽभितापैः ।
प्रजागरातिस्वपनाम्बुशीतैरवश्यया मैथुनवाष्पधूमैः ।
संस्त्यानदोषे शिरसि प्रदुष्टो वायुः प्रतिश्यायमुदीरयेत् तु ॥
घ्राणार्त्तितोदौ क्षवथुर्जलाभः स्रावोऽनिलात् सस्वरशीर्षरोगः ।
नासाग्रपाकज्वरवक्त्रशोषास्तृष्णात्र पीतस्रवणानि पित्तात् ॥
कासारुचिस्रावघनप्रसेकाः कफाद्‌ गुरुः स्रोतसि चापि कण्डूः ।
सर्व्वाणि रूपाणि तु सन्निपातात्
स्युः पीनसेऽतीव रुजोऽतिदुःखे ॥ ६२ ॥

तथा लङ्घनपाचनञ्च कार्य्यम् । सर्व्वं क्रिमिघ्नं भेषजं यद् यत् प्रागुक्तं तत् सर्व्वं कार्य्यमिति । इति त्रिमर्म्मीये हृदयमर्म्मविकाराः सनिदानचिकित्सिता व्याख्याता भवन्ति ॥ ६१ ॥

गङ्गाधरः—अथ शिरोमर्म्मगतानां चिकित्सिते वक्तव्ये प्रथममल्पत्वान्नासारोगमाह—सन्धारणेत्यादि । अधार्य्यवेगानां प्रवर्त्तमानानां सन्धारणमजीर्णञ्च रजोधूलिर्नासया प्रविष्टं प्रजागरो रात्रिजागरणम् अम्बुशीतैरम्बुनः शैत्यसेवनेन, अवश्यया अवश्याशब्दो निहारवाची । संस्त्यानो दोषः कफादिर्यत्र तस्मिन् शिरसि सति । एभिः प्रदुष्टो वायुः प्रतिश्यायमुदीरयेत् । तस्य लक्षणं घ्राणेत्यादि । घ्राणस्यार्त्तितोदौ स्वररोगः स्वरभङ्गः शीर्षरोगः शिरःपीड़ा, वातात् प्रतिश्याये भवन्ति । पित्तात् प्रतिश्याये नासाग्रपाकादीनि स्युः । कफात् प्रतिश्याये कासादिकण्ड्वन्तानि स्युः । सन्निपातात् पीनसे प्रतिश्यायेऽतिदुःखेऽतीव रुजो भवन्ति, सर्व्वाणि च घ्राणार्त्तितोदादिकण्ड्वन्तानि भवन्ति ॥ ६२ ॥

चक्रपाणिः—क्रमागतशिरोरोगचिकित्सायां वक्तव्यायां शिरोरोगहेतुं प्रतिश्यायमेव तावदाह । शालाक्ये उक्तम्—'भूयिष्ठं व्याधयः सर्व्वे प्रतिश्यायनिमित्तजाः । तस्मात् रोगः प्रतिश्यायः पूर्व्वमेवोपदिश्यते' इति । यद्यपि राजयक्ष्मचिकित्सिते प्रतिश्याय उक्त एव, तथापि तत्र यक्ष्मपूर्व्वतया तथोक्तः । इह तु स्वतन्त्रः प्रतिश्याय उच्यत इति विशेषः । रजो धूलिः । अतिस्वप्नो दिवास्वप्नः । अवश्यायः तुषारः । संस्त्यानदोषे इति निभृतदोषे । घ्राणार्त्तीत्यादिना वातादिप्रतिश्यायानां चतुर्णां क्रमाल्लक्षणमाह । सस्वरमूर्द्धरोग इति स्वररोगः स्वरभेदः । कफात्

सर्व्वोऽतिवृद्धोऽहितभोजनात् तु दुष्टप्रतिश्याय उपेक्षितः स्यात् ॥
ततश्च रोगाः क्षवथुश्च नासा-शोषः प्रतीनाहपरिस्रवौ च।
घ्राणस्य पूतित्वमपीनसश्च सपाकशोथोऽर्ब्बुदपूयरक्तः ॥
अरूंषि शीर्षश्रवणाक्षिरोगाः खालित्यहर्य्यर्ज्जुनलोमभावाः।
तृट्श्वासकासज्वररक्तपित्त-वैवर्ण्यशोषाश्च ततो भवन्ति ॥ ६३ ॥
रोधाभिघातस्रवशोषपाकैर्घ्राणं युतं यस्य न वेत्ति गन्धम्।
दुर्गन्धि चास्यं बहुशः प्रकोपि-दुष्टप्रतिश्यायमुदाहरेत् तम् ॥

गङ्गाधरः—सर्व्व इत्यादि। सर्व्व एव प्रतिश्यायः पुनरहितभोजनादतिवृद्धश्चेदुपेक्ष्यते तदा दुष्टप्रतिश्यायः स्यात्। ततश्चेत्यादि। ततो दुष्टप्रतिश्यायाद्रोगा इमे भवन्ति क्षवथुश्चेत्यादयः। सुश्रुते चोक्तम्। "अपीनसः पूतिनस्यं नासापाकस्तथैव च। तथा शोणितपित्तश्च पूयशोणितमेव च। क्षवथुभ्रंशथु-दीप्तो नासानाहः परिस्रवः। नासाशोषेण सहिता दशैकश्चेरिता गदाः। चत्वार्य्यर्शांसि चत्वारः शोफाः सप्तार्ब्बुदानि च। प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः। एकत्रिंशन्मितास्ते तु नासारोगाः प्रकीर्त्तिताः ॥" इति ॥ ६३ ॥

गङ्गाधरः—तत्र दुष्टप्रतिश्यायलक्षणमाह—रोधेत्यादि। घ्राणं नासिका रोधादिभिर्युक्तं यस्य नरस्य गन्धं न वेत्ति। आस्यञ्च दुर्गन्धि तस्य तं बहुशः प्रकोपिणं दुष्टप्रतिश्यायमुदाहरेत्। सुश्रुते चोक्तम्। "दुर्गन्धोच्छ्वास-वदनस्तथा गन्धं न वेत्ति च। मूर्च्छन्ति चात्र क्रिमयः श्वेताः कृष्णास्तथाणवः। क्रिमिमूर्द्धविकारेण समानञ्चास्य लक्षणम्। प्रक्लिद्यति पुनर्नासा पुनश्च परिशुष्यति। मुहुरानह्यते चापि मुहुर्विव्रियते तथा। निश्वासोच्छ्वास-दौर्गन्ध्यं तथा गन्धान् न वेत्ति च। एवं दुष्टप्रतिश्यायं जानीयात् कृच्छ्र-साधनम्। सर्व्व एव प्रतिश्याया नरस्याप्रतिकारिणः। कालेन रोगजनना जायन्ते दुष्टपीनसाः। वाधिर्य्यमान्ध्यमघ्राणं घोरांश्च नयनामयान्। कासाग्नि-

गुर्व्वीत्यादौ गुरुशब्दः कण्डूविशेषणम्। स्रोतसीति नासास्रोतसि। सर्व्वोऽतिवृद्ध इत्यादिना दुष्टप्रतिश्यायलक्षणमाह। अत्र मुखरोगं ये न पठन्ति ते शिरोरोगग्रहणेनैव मुखरोगस्य ग्रहणमिति मन्यन्ते। एतेषां दुष्टप्रतिश्यायक्षवथादीनां शालाक्यादिषु विस्तरः। अत्र तु पराधिकारत्वात् सङ्क्षेप एव ॥ ६२। ६३ ॥

संस्पृश्य मर्म्माण्यनिलस्तु मूर्द्धि विश्वक्पथस्थः क्षवथुं करोति ।
क्रुद्धः स संशोष्य कफन्तु नासा-शृङ्गाटकघ्राणविशोषणञ्च ॥
उच्छ्वासमार्गञ्च कफः सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत् तम् ।
यो मस्तुलुङ्गाद्घनपीतपक्वः कफः स्रवेदेष परिस्रवस्तु ।
वैवर्ण्यदौर्गन्ध्यमुपेक्षया तु स्यात् पूतिनस्यं श्वयथुभ्रमश्च ॥

सादशोफांश्च वृद्धाः कुर्व्वन्ति पीनसाः ॥" इति । प्रतिश्यायपीनसावेकपर्य्यायौ । क्षवथुप्रभृतयो रोगा नासारोगाः स्वतन्त्राश्च वृद्धप्रतिश्यायजाश्च भवन्ति । सुश्रुते शोणितजप्रतिश्यायः पञ्चम उक्तः । "रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्त्तते । ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीड़ितः ॥" इति । न स तन्त्रेऽस्मिन्नुक्तः, पित्तप्रतिश्याये रक्तयोगे रक्तस्राववचनात् तत्रावरोधः कृतः, ऋते हि दोषान्न रक्तं व्याधिकरणे प्रभवतीत्यभिप्रायः । क्षवथुप्रभृतीनां क्रमेण लक्षणान्याह—संस्पृश्येत्यादि । मूर्द्धि विश्वक्पथस्थोऽनिलो नासास्थमर्म्माणि संस्पृश्य क्षवथुं करोति । सुश्रुते तु—"घ्राणाश्रिते मर्म्मणि संप्रदुष्टे यस्यानिलो नासिकया निरेति । कफानुयातो बहुशः सशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः । तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद् वा । सूत्रादिभिर्वा तरुणास्थिमर्म्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति" ॥ इति । नासाशोषमाह । क्रुद्धः स वायुः कफं संशोष्य नासाशृङ्गाटके नासापुटके घ्राणे च विशोषणञ्च करोति । सुश्रुते च—"घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च । समुच्छ्वसित्यूर्द्ध्वमधश्च कृच्छ्राद् यस्तस्य नासापरिशोष उक्तः ॥" इति । नासाप्रतिनाहमाह—उच्छ्वासेत्यादि । यस्य सवातः कफ उच्छ्वासमार्गं रुन्ध्यात् तस्य तं प्रतिनाहमुदाहरेत् । सुश्रुते च—"कफावृतो वायुरुदानसंज्ञो यदा स्वमार्गं विगुणः स्थितः स्यात् । घ्राणं वृणोतीव तदा स रोगो नासाप्रतीनाह इति प्रदिष्टः ॥" परिस्रवमाह—य इत्यादि । मस्तुलुङ्गाद्घनश्च पीतश्च पक्वश्च यः कफः स्रवेत् स एष नासापरिस्रवः । सुश्रुते चोक्तः—"अजस्रमच्छं सलिलप्रकाशं यस्याविवर्णं स्रवतीह नासा । रात्रौ विशेषेण च तं विकारं नासापरिस्रावमिति व्यवस्येदिति" द्विधैव परिस्रवो घनकफश्च जलवच्चेति न विरोधः । घ्राणपूतित्वमाह—वैवर्ण्यमित्यादि । प्रतिश्यायस्योपेक्षया वैवर्ण्यदौर्गन्ध्यं नासायां स्यात्

चक्रपाणिः—रोधाभिघातेत्यादिना दुष्टप्रतिश्यायादीनां क्रमेण लक्षणान्याह—क्रुद्ध इत्यादौ

आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति यस्य नासा।
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत् तमपीनसेन।
तञ्चानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम् ॥६४
सदाहरागः श्वयथुः सपाकः स्यात् घ्राणपाकोऽपि च रक्तपित्तात्।
घ्राणाश्रितास्रृक्प्रभृतीन् प्रदूष्य कुर्व्वन्ति नासाश्वयथुं मलाश्च ॥
घ्राणे तथोच्छ्वासगतिं निरुध्य मांसप्रदोषादपि चार्व्वुदानि।
घ्राणात् स्रवेद्वा श्रवणान्मुखाद्वा पित्तात्तमस्रन्त्वपि पूयरक्तम् ॥
कुर्य्यात् सपित्तः पवनः कफादीन् सन्दूष्य चारूंषि सदाहपाकम् ॥६५

श्वयथुश्च भ्रमश्च स्यात्, तत् पूतिनस्यं विद्यात्। अपीनसमाह—आनह्यत इत्यादि ॥ ६४ ॥

गङ्गाधरः—नासापाकमाह—सदाहेत्यादि। पाकवान् श्वयथुः स्फोटविशेषः। सुश्रुते च—"घ्राणाश्रितं पित्तमरूंषि कुर्य्याद् यस्मिन् विकारे बलवांश्च पाकः। तं नासिकापाकमिति व्यवस्येत् विक्लेदकोथावपि यत्र दृष्टौ ॥" इति। नासाशोथमाह—घ्राणाश्रितेत्यादि। असृक्प्रभृतीन् शोथोक्तान् दूष्यान् घ्राणाश्रितान् मला वातादयः प्रदूष्य चतुर्व्विधं नासाश्वयथुं कुर्व्वन्ति। सुश्रुते च—"दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात् तथार्शांसि तथैव शोफान्।" इति। नासार्व्वुदमाह—घ्राणे इत्यादि। घ्राणे मांसप्रदोषादुच्छ्वासगतिं निरुध्य सप्तधार्व्वुदानि भवन्ति। सुश्रुते च—"शालाक्यसिद्धान्तमवेक्ष्य वापि सर्व्वात्मकं सप्तविधार्व्वुदन्तु।" पूयरक्तमाह। घ्राणादित्यादि। पित्तात्तमस्रं पीतरक्तम्। सुश्रुते च—"दोषैर्विदग्धैरथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः। नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥" इति। अथारूंषि चाह—कुर्य्यादित्यादि। सपित्तः पवनः कफादीन् कफरक्तादीन् सन्दूष्य सदाहपाकमरूंषीति नाम कुर्य्यात्। सुश्रुते—द्वौ नासारोगावपरावुक्तौ भ्रंशथुर्दीप्तश्चेति। तद्यथा—"प्रभ्रश्यते नासिकयैव यश्च सान्द्रो विदग्धो लवणः कफस्तु। प्राक् सञ्चितं मूर्द्धि च पित्ततप्तं तं भ्रंशथुं व्याधिमुदाहरन्ति ॥ घ्राणे भृश

स इत्यनिलः। मस्तुलुङ्गादिति मस्तिष्कात्। सपित्त इत्यादिना अरुंषिकामाह—सा तु शिरोभवा ज्ञेया ॥ ६४। ६५ ॥

भृशार्त्तिशूलं स्फुरतीह वातात्
पित्तात् सदाहार्त्ति कफाद् गुरु स्यात् ॥
सर्व्वैस्त्रिदोषं क्रिमिजं सकण्डु
दौर्गन्ध्यतोदार्त्तियुतं शिरः स्यात् ॥ ६६ ॥

मुखामये मारुतजे तु शोथः कार्कश्यरौक्ष्ये ऽतिबला रुजश्च ।
कृष्णारुणं निष्पतनं सशीतं प्रस्रंसनस्यन्दनतोदभेदाः ॥
तृष्णाज्वरस्फोटकदाहपाका धूमायनञ्चाप्यवदीर्णता च ।
पित्तात् समूर्च्छा विविधा रुजश्च वर्णाश्च शुक्लारुणपाण्डुवर्ज्जाः ॥
कण्डूर्गुरुत्वं सितविज्जलत्वं स्वेदोऽरुचिर्जाड्यकफप्रसेकौ ।
उत्क्लेशमन्दानलता च तन्द्रा रुजश्च मन्दाः कफवक्त्ररोगे ॥

दाहसमन्विते तु विनिःसरेद् धूम इवेह वायुः। नासा प्रदीप्तेव च यस्य जन्तो-र्व्याधिन्तु तं दीप्तमुदाहरन्ति" ॥ ६५ ॥

गङ्गाधरः—अथ शीर्षास्यकर्णाक्षिरोगाः क्रमेणोच्यन्ते। भृशार्त्तीत्यादि। पञ्च शिरोरोगाः कियन्तःशिरसीये विस्तरेणोक्ताः, इह चिकित्सार्थं संग्रहेणाह। वातात् शिरो भृशार्त्तिशूलं स्फुरतीव। पित्तात् सदाहार्त्ति सत् शिरः स्फुरतीव। कफात् गुरु सत् शिरः स्फुरतीव। त्रिदोषं शिरः सर्व्वे रूपैः स्फुरति। क्रिमिजशिरोरोगयुतं शिरः सकण्डु स्याद् दौर्गन्ध्यादियुतश्च स्यादिति पञ्च शिरोरोगाः ॥ ६६ ॥

गङ्गाधरः—अथास्यरोगा उच्यन्ते। मुखामय इत्यादि। मारुतजे मुखरोगे शोफादयस्तोदभेदान्ता भवन्ति। कार्कश्यरौक्ष्ये द्विवचनान्तत्वेन प्रगृह्यमपि उत्सर्गे विधिः संहिता विवक्षिता न तु प्रकृतिभाव इति। तृष्णेत्यादि। शुक्लाऽरुणपाण्डुवर्णभिन्ना वर्णाः। पित्तान्मुखामये तृष्णादयः स्युः। कण्डूरित्यादि। कफवक्त्ररोगे कण्डूप्रभृतयः स्युः। सितं श्वेतं विज्जलं पिच्छिलं मुखम्।

चक्रपाणिः—भृशार्त्तीत्यादिना यद्यपि प्रतिश्यायोत्पन्नत्वेन शिरोरोगाणां लक्षणमुच्यते, तथापि स्वतन्त्रोत्पन्नानामपि शिरोरोगाणामेतदेव लक्षणं ज्ञेयम्। एवं मुखरोगादिषु लक्षणेषु वाच्यम्। सर्व्वैस्त्रिदोषमिति वातादिमिलितैर्लक्षणैस्त्रिदोषं स्यादित्यर्थः ॥ ६६ ॥

चक्रपाणिः—निष्पतनमिति मुखेनैव। तृष्णेत्यादि पित्तजमुखरोगलक्षणम्। यद्यपि शालाक्ये

सर्व्वाणि रूपाणि तु वक्त्ररोगे
भवन्ति यस्मिन् स तु सन्निपातात् ॥ ६७ ॥

संस्थानदूष्याकृतिनामभेदाच्चैते चतुःषष्टिविधा भवन्ति ॥
शालाक्यतन्त्रे विहितानि तेषां निमित्तरूपाकृतिभेषजानि ।
यथाप्रदेशञ्च चतुर्व्विधस्य चिकित्सितं वक्त्रगदस्य वक्ष्ये ॥६८॥

सर्व्वाणीत्यादि। सन्निपाताद् वक्त्ररोगः स तु यस्मिन् वक्त्ररोगे सर्व्वाणि शोथादीनि मन्दरुजान्तानि रूपाणि भवन्ति ॥ ६७ ॥

गङ्गाधरः—इति चत्वारो ये मुखामयास्तत्र ते संस्थानदूष्याकृतिनामभेदाच्चैकश्चतुःषष्टिधा चेति पञ्चषष्टिधा भवन्ति। तेषां शालाक्यप्रधानतन्त्रे निमित्तादीनि विस्तरेण विहितानि। कायप्रधानतन्त्रे त्वस्मिन् न विस्तरेणोक्तानि भवन्ति। अथ चतुर्व्विधस्य तु वक्त्रगदस्य यथाप्रदिष्टं चिकित्सितमहं वक्ष्ये। सुश्रुते तु ते पञ्चषष्टिधा मुखरोगा उक्ताः। तद् यथा। "मुखरोगाः पञ्चषष्टिः सप्तस्वायतनेषु, तत्रायतनानि ओष्ठौ दन्तमूलानि दन्ता जिह्वा तालु कण्ठः सर्व्वाणि चेति। तत्राष्टावोष्ठयोः पञ्चदश दन्तमूलेषु अष्टौ दन्तेषु पञ्च जिह्वायां नव तालुनि सप्तदश कण्ठे त्रयः सर्व्वेष्वायतनेषु। तत्रौष्ठप्रकोपा वातपित्तश्लेष्मसन्निपातरक्तमांसमेदोऽभिघातनिमित्ताः। कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुगन्वितौ। दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥ आचितौ पिड़काभिस्तु सर्षपाकृतिभिर्भृशम्। सदाहपाकसंस्रावौ नीलौ पीतौ च पित्ततः ॥ सवर्णाभिस्तु चीयेते पीड़काभिरवेदनौ। कण्डूमन्तौ कफाच्छूनौ पिच्छिलौ शीतलौ गुरू ॥ सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च। सन्निपातेन विज्ञेय वनेकपिड़काचितौ ॥ खर्ज्जूरफलवर्णाभिः पिड़काभिः समाचितौ। रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुन्नतौ। जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥ मेदसा घृतमण्डाभा कण्डूमन्तौ स्थिरौ मृदू। अच्छस्फटिकसङ्काशमास्रावं स्रवतो गुरू ॥

मुखरोगाणां प्रपञ्चः, तथाप्यत्रैव सर्व्वेषां चतुर्व्विधमुखरोगेऽन्तर्भावं दर्शयन्नाह—संस्थानेत्यादि। संस्थानं महारोगः दूष्यं रक्तादि आकृतिर्लिङ्गं इत्यादिभेदाः चतुःषष्टिविधा भवन्ति, ते च शालाक्ये एवोन्नेयाः। मुखरोगाणान्तु चतुःषष्टित्वं वैदेहमतानुसारेणोक्तम्। सुश्रुते तु पञ्चषष्टिमुखरोगा उक्तास्तथापीह चतुर्व्विधेष्वेव यथाप्रदेशं अन्तर्निवेशः कृतः ॥ ६७। ६८ ॥

जाभौ विदीर्य्यते पाट्यते चाभिघाततः। ग्रथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥ दन्तमूलगतास्तु शीतादो दन्तपुप्पुटको दन्तवेष्टकः शौषिरो महाशौषिरः परिदर उपकुशो दन्तवैदर्भो वर्द्धनोऽधिमांसो नाड्यः पञ्चेति। शोणितं दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते। दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च। दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम्। शीतादो नाम स व्याधिः कफशोणितसम्भवः ॥ दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान्। दन्तपुप्पुटको ज्ञेयः कफरक्तनिमित्तजः ॥ स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च। दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥ श्वयथुर्दन्तमूलेषु रुजावान् कफरक्ततः। लालास्रावी स विज्ञेयः कण्डूमान् शौषिरो गदः ॥ दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते। दन्तमांसानि पच्यन्ते मुखञ्च परिपीड्यते। यस्मिन् स सर्व्वजो व्याधिर्महाशौषिरसंज्ञकः ॥ दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्। पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ वेष्टेषु दाहः पाकश्च तेभ्योदन्ताश्चलन्ति च। आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः। आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते। यस्मिन् उपकुशः स स्यात् पित्तरक्तकृतो गदः ॥ घृष्टेषु दन्तमूलेषु संरम्भो जायते महान्। भवन्ति च चला दन्ता स वैदर्भोऽभिघातजः ॥ मारुतेनाधिको दन्तो जायते तीव्रवेदनः। वर्द्धनः स मतो व्याधिर्जाते रुक् च प्रशाम्यति ॥ हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः। लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥ दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ दन्तगतास्तु दालनः क्रिमिदन्तको दन्तहर्षो भञ्जनकः शर्करा कपालिका श्यावदन्तको हनुमोक्षश्चेति। दाल्यन्ते बहुधा दन्ता यस्मिंस्तीव्ररुगन्विताः। दालनः स इति ज्ञेयः सदागतिनिमित्तजः ॥ कृष्णच्छिद्री चलः स्रावी ससंरम्भो महारुजः। अनिमित्तरुजो वाताद् विज्ञेयः क्रिमिदन्तकः ॥ दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च। यस्य तं दन्तहर्षन्तु व्याधिं विद्यात् समीरणात् ॥ वक्त्रं वक्रं भवेद् यस्मिन दन्तभङ्गश्च तीव्ररुक्। कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥ शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै। सा दन्तानां गुणघ्नी तु विज्ञेया दन्तशर्करा ॥ दलन्ति दन्तवल्कानि यदा शर्करया सह। ज्ञेया कपालिका सैव दशनानां विनाशिनी ॥ योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः। श्यावतां नीलतां वापि गतः स श्यावदन्तकः ॥ वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः। हनुमोक्ष इति ज्ञेयो व्याधिरर्द्दितलक्षणः ॥ जिह्वागतास्तु कण्टकास्त्रिविधा-

स्त्रिभिर्दोषैरलास उपजिह्विका चेति। जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। पित्तेन पीता परिदह्यते च चिता सरक्तैरपि कण्टकैश्च। कफेन गुर्व्वी बहला चिता च मांसोद्गमैः शाल्मलकण्टकाभैः॥ जिह्वातले यः श्वयथुः प्रगाढ़ः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम्॥ जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नाम्य जातः कफरक्तयोनिः। प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति॥ तालुगतास्तु गलशुण्डिका तुण्डिकेर्य्यऽध्रुषो मांसकच्छपोऽर्व्वुदं मांससङ्घात-स्तालुपुप्पुटस्तालुशोषस्तालुपाकश्चेति। श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोफो ध्मातवस्तिप्रकाशः। तृष्णाकासश्वासकृत् सम्प्रदिष्टो व्याधिर्वैद्य-र्गलशुण्डीति नाम्ना॥ शोफः स्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु॥ शोफः स्तब्धो लोहितस्तालुदेशे रक्ताज् ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः। कूर्म्मोत्सन्नोऽवेदनः शीघ्रजन्माऽरक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात्॥ पद्माकारं तालुमध्ये तु शोफं विद्याद् रक्तादर्व्वुदं प्रोक्तलिङ्गम्॥ दुष्टं मांसं श्लेष्मणा नीरुजश्च तालवन्तःस्थं मांससङ्घातमाहुः॥ नीरुक् स्थायी कोलमात्रः कफात् स्यान्मेदोयुक्तात् पुप्पुटस्तालुदेशे॥ शोषोऽत्यर्थं दीर्य्यते चापि तालु श्वासो वातात् तालुशोषः सपित्तात्॥ पित्तं कुर्य्यात् पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वदन्ति॥ कण्ठगतास्तु रोहिण्यः पञ्च कण्ठशालूकमधिजिह्वो बलयो बलास एकवृन्दो वृन्दः शतघ्नी शिलायुर्गलविद्रधिर्गलौघः स्वरघ्नो मांसतानो विदारी चेति। गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक् समस्ताश्च तथैव शोणितम्। प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् सासुहरा तु रोहिणी॥ जिह्वां समन्ताद् भृशवेदना ये मांसाङ्कुराः कण्ठनिरोधिनः स्युः। तां रोहिणीं घातकृतां वदन्ति वातात्मकोपद्रवगाढ़युक्ताम्। क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्ततः स्यात्। स्रोतोनिरोधिन्यपि मन्दपाका गुर्व्वी स्थिरा सा कफसम्भवा वै॥ गम्भीरपाकाऽप्रतिवार्य्यवीर्य्या त्रिदोषलिङ्गा त्रयसम्भवा स्यात्। स्फोटाचिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिकेयम्॥ कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः। खरः स्थिरः शस्त्रनिपातसाध्यस्तं कन्ठशालूकमिति ब्रुवन्ति॥ जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वाप्रबन्धोपरि रक्तमिश्रः। ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्ज्जयेदागत-पाकमेनम्॥ बलास एवायतमुन्नतञ्च शोफं करोत्यन्नगतिं निवार्य्य। तं सर्व्वथवाप्रतिवार्य्यवीर्य्यं विवर्ज्जनीयं वलयं वदन्ति॥ गले च शोफं कुरुतः

**वातादिभिः शोकभयातिलोभ-क्रोधैर्मनोघ्नाशनरूपगन्धैः ।**
**अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन ।**
**कट्वम्लमुष्णं विरसञ्च पूति पित्तेन विद्याल्लवणञ्च वक्त्रम् ।**
**माधुर्य्यपैच्छिल्यगुरुत्वशैत्य-विबन्धसम्बन्धयुतं कफेन ॥ ६६ ॥**

प्रवृद्धा श्लेष्मानिलौ श्वासरुजोपपन्नम् । मर्म्मच्छिदं दुस्तरमेतदाहुर्बलाससंज्ञं निपुणा विकारम् ॥ वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्य-मृदुर्गुरुश्च । नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥ समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति । तच्चापि पित्तक्षतजप्रकोपाद् विद्यात् सतोदं पवनात्मजं तम् ॥ वर्त्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पिशितप्ररोहैः । नानारुजोच्छ्वासकरी त्रिदोषा ज्ञेया शतघ्नीव शतघ्नसाध्या ॥ ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्तिः । संलक्ष्यते सक्तमिवाशनञ्च सशस्त्रसाध्यस्तु शिलायुसंज्ञः ॥ सर्व्वं गलं व्याप्य समुत्थितो यः शोफो रुजा यत्र भवन्ति सर्व्वाः । स सर्व्वदोषो गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्व्वजस्य ॥ शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता । कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्त्यतेऽसौ ॥ योऽतिप्रताम्यन् श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः । कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात् स्वरघ्नः ॥ प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण । स मांसतानः कथितोऽवलम्बी प्राणप्रणुत् सर्व्वकृतो विकारः ॥ सदाहतोदं श्वयथुं सरक्तमन्तर्गले पूतिविशीर्णमांसम् । पित्तेन विद्याद् वदने विदारीं पार्श्वे विशेषात् स तु येन शेते ॥ सर्व्वसरास्तु वातपित्तकफशोणित-निमित्ताः । स्फोटैः सतोदैर्वदनं समन्तात् यस्याचितं सर्व्वसरः स वातात् । रक्तैः सदाहैस्तनुभिः सपीतैर्यस्याचितञ्चापि स पित्तकोपात् । कण्डूयुतैरल्परुजः सवर्णैर्यस्याचितं चापि स वै कफेन ॥ रक्तेन पित्तोदित एक एव कैश्चित् प्रदिष्टो मुखपाकसंज्ञः ॥ इति पञ्चषष्टिधा मुखरोगाः ॥ ६८ ॥

गङ्गाधरः—अथ मुखगतत्वादरुचिमाह—वातादिभिरित्यादि । वातादि-जारोचकलक्षणानि क्रमेणाह—परिहृष्टेत्यादि । अरोचकोऽनिलेन मतः । कट्वम्लादिवक्त्रं पित्तेनारोचके विद्यात् । कफेन वक्त्रं लवणं माधुर्य्यादि-सम्बन्धयुतं विद्यात् ॥ ६९ ॥

अरोचके शोकभयातिलोभ-क्रोधाद्यहृद्याशुचिगन्धजे स्यात्।
स्वाभाविकं वक्त्रमथारुचिश्च त्रिदोषजे नैकरसं भवेत् तु ॥७०॥
नादोऽतिरुक् कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात्।
शोथः सरागो दरणं विदाहः सपीतपूतिस्रवणञ्च पित्तात्॥
वैश्रुत्यकण्डूस्थिरशोफशुक्ल-स्निग्धश्रुतिः श्लेष्मभवेऽल्परुक् च।
सर्व्वाणि लिङ्गानि तु सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ॥७१

गङ्गाधरः—शोकादिजेऽरोचके स्वाभाविकं वक्त्रं भवेदथ चारुचिः स्यात्। त्रिदोषजेऽरोचके त्वनेकरसं वक्त्रं भवेदिति। मुखगता रोगा व्याख्याता भवन्ति ॥ ७० ॥

गङ्गाधरः—अथ कर्णरोगा उच्यन्ते। नाद इत्यादि। वातात् कर्णे नादोऽतिरुक् कर्णमलस्य शोषः स्रावश्चापोऽश्रवणञ्च स्यात्। पित्तात् सरागः शोथादिः कर्णे स्यात्। श्लेष्मभवे वैश्रुत्यादि स्यात्। सन्निपातात् कर्णरोगे सर्व्वाणि वातादिजकर्णरोगलिङ्गानि स्युः स्रावस्तत्र यो दोषोऽधिकस्तद्वर्णः स्यात्। एत एव कर्णरोगाः शालाक्येऽष्टाविंशतिविधा उक्ताः। तद् यथा सुश्रुते—"कर्णशूलं प्रणादश्च वाधिर्य्यं क्ष्वेड एव च। कर्णस्रावः कर्णकण्डूः कर्णगूथस्तथैव च। क्रिमिकर्णप्रतीनाहौ विद्रधिर्द्विविधस्तथा। कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्व्विधम्। तथार्व्वुदं सप्तविधं शोफश्चापि चतुर्व्विधः। एते कर्णगता रोगा अष्टाविंशतिरीरिताः॥ समीरणः श्रोत्रगतोऽन्यथाचरः समन्ततः शूलमतीव कर्णयोः। करोति दोषैश्च यथास्वमावृतः स कर्णशूलः कथितो दुराचरः॥ यदा तु नाड़ीषु विमार्गमागतः स एव शब्दाभिवहासु तिष्ठति। शृणोति शब्दान् विविधांस्तदा नरः प्रणादमेनं कथयन्ति चामयम्॥ स एव शब्दाभिवहा यदा सिराः कफानुयातो व्यनुसृत्य तिष्ठति। तदा नरस्याप्रतिकारसेविनो भवेत् तु वाधिर्य्यमसंशयं खलु॥ श्रमात् क्षयात् रुक्षकषायभोजनात्

चक्रपाणिः—वातादिभिरित्यनेनारोचकानाह—अतिलोभेनारुचिरुच्यते। अतिलोभेनारुचिकरणं दर्शयति ॥ ६९। ७० ॥

चक्रपाणिः— नाद इत्यादिना कर्णरोगानाह— एते च शालाक्ये अष्टाविंशतिरुक्ताः। तथापि चतुर्ष्वेव कर्णरोगेषु शेषाणामपि कर्णरोगाणामवरोधो व्याख्येयः, शेषाणामपि वातादिजन्यत्वात् ॥ ७१ ॥

**अल्पस्तु रागोऽनुपदेहवांश्च सतोदभेदोऽनिलजाक्षिरोगः ।**
**पीतोपदेहश्च भृशोष्णवाही पित्तात् सदाहोऽतिरुजः सरागः ॥**
**शुक्लोपदेहो बहुपिच्छिलास्रु नेत्रं कफात् स्यात् गुरुता सकण्डूः ।**
**सर्व्वाणि रूपाणि तु सन्निपातात्**
**षट्सप्ततिर्नेत्रगदास्तु भेदात् ॥ ७२ ॥**

समीरणः शब्दपथे व्यवस्थितः । विरिक्तशीर्षस्य च शीतसेविनः करोति हि क्ष्वेड़मतीव कर्णयोः ॥ शिरोऽभिघातादथवा निमज्जतो जले प्रपाकादथवापि विद्रधेः । स्रवेत् तु पूयं श्रवणोऽनिलावृतः स कर्णसंस्राव इति प्रकीर्त्तितः ॥ कफेन कण्डूः प्रचितेन कर्णयोर्भृशं भवेत् स्रोतसि कर्णसंज्ञिते । विशोषिते श्लेष्मणि पित्ततेजसा नृणां भवेत् स्रोतसि कर्णगूथकः ॥ स कर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद् विकारः शिरसोऽभितापनः ॥ यदा तु मूर्च्छन्त्यथवापि जन्तवः सृजन्त्यपत्यान्यथवाऽपि मक्षिकाः । तदञ्जनत्वाच्छ्रवणो निरुच्यते भिषग्भिराद्यैः क्रिमिकर्णकस्तु सः ॥ क्षताभिघातप्रभवस्तु विद्रधिर्भवेत् तथा दोषकृतोऽपरः पुनः । स रक्तपीतारुणमस्रमास्रवेत् प्रतोदधूमायनदाहचोषवान् । भवेत् प्रपाकः खलु पित्तकोपतो विकोथविक्लेदकरश्च कर्णयोः ॥ स्थिते कफे स्रोतसि पित्ततेजसा विलाप्यमाने भृशसम्प्रतापनात् । अवेदनो वाप्यथवा सवेदनो घनं स्रवेत् पूति स पूतिकर्णकः ॥ अर्शांसि षट् चाप्युपदिष्टलिङ्गान्यथैव शोफाब्बुदलिङ्गमीरितम् । मया पुरस्तात् प्रसमीक्ष्य योजयेदिहैव तानि प्रयतो भिषग्वरः ॥" इति । अष्टाविंशतिः कर्णरोगा व्याख्याताः ॥ ७१ ॥

गङ्गाधरः—अथाक्षिरोगा उच्यन्ते अल्पस्त्वित्यादि । अनिलजाक्षिरोगोऽल्पो रागः उपलेपाभाववान् सतोदभेदश्च । पित्तादक्षिरोगः पीतोपदेहादिः । कफादक्षिरोगः शुक्लोपदेहः नेत्रं बहुपिच्छिलास्र । नेत्रे सकण्डूगुरुता स्यात् । सन्निपातादक्षिरोगे सर्व्वाणि वातादित्रिदोषोक्तानि रूपाणि भवन्ति । ते वातादिजा अक्षिरोगाः संस्थानदूष्याकृतिनामभिर्भेदात् षट्सप्ततिर्भवन्ति ॥ ७२ ॥

चक्रपाणिः—अल्पस्त्वित्यादिना चत्वारोऽक्षिरोगाऽभिधीयन्ते । उपदेहो दूषिकम् अत्यर्थोष्णस्रावि । अनुक्तनेत्रामयेषु आचार्य्याणां विप्रतिपत्तिश्चेत्त । रोगाणां षट्सप्ततिः विदेहः, प्राह करालस्तु षण्णवतिः, अशीतिं कौशतकिः प्राह । उक्तं 'तत्र षट्सप्ततिविधं स्थानासन्ने तु षोड़श । त्रयोदश तु शुक्लस्थाः षड् रोगाः कृष्णभागजाः । पञ्चविंशतिर्दृष्टिस्थाः षोड़शेति

तेषामभिव्यक्तिरतिप्रदिष्टा शालाक्यतन्त्रेषु चिकित्सितञ्च।
पराधिकारेषु न विस्तरोक्तिः शस्तेति तेनात्र न नः प्रयत्नः ॥ ७३

गङ्गाधरः—ते कीदृशा इत्यत आह—तेषामित्यादि। तेषां षट्सप्ततेरक्षिरोगाणामतिप्रदिष्टा अतिशयेन शालाक्याङ्गप्रधानतन्त्रेषु उपदिष्टा, तेषां चिकित्सितञ्चातिप्रदिष्टम्। अस्मिन् कायचिकित्साङ्गप्रधाने तन्त्रे पराधिकारेषु विस्तरोक्तिर्न प्रशस्ता भवतीत्यस्मान्नोऽस्माकं विस्तरोक्तौ न प्रयत्न इति। सुश्रुते च ते विस्तरेणोक्ताः। तद् यथा—"विद्याद् द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितम्। द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषङ्नयनबुद्बुदम्। सुवृत्तं गोस्तनाकारं सर्व्वभूतगुणोद्भवम् ॥ पलं भुवोऽग्नितो रक्तं वातात् कृष्णं सितं जलात्। आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे ॥ दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद विशारदः। नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते। कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः ॥ मण्डलानि च सन्धींश्च पटलानि च लोचने। यथाक्रमं विजानीयात् पञ्च षट् च षडेव च ॥ पक्ष्मवर्त्मश्वेतकृष्ण-दृष्टीनां मण्डलानि च। अनुपूर्व्वन्तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् ॥ पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः। शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः ॥ ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः ॥ द्वे वर्त्मपटले विद्याच्चत्वार्य्यन्यानि चाक्षिणि। जायते तिमिरं येषु व्याधिः परमदारुणः ॥ तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम्। मेदस्तृतीयं पटलमाश्रितन्त्वस्थि चापरम्। पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥ सिराणां कण्डराणाञ्च मेदसः कालकस्य च। गुणाः कालपरः श्लेष्मा बन्धनेऽक्ष्णोः सिरायुतः। सिरानुसारिभिर्दोषैर्विगुणैरूर्द्धमागतैः। जायन्ते नेत्रभागेषु रोगाः परमदारुणाः ॥ तत्राविलं ससंरम्भमश्रुपूर्णोपदेहवत्। गुरूषाचोषरागाद्यैर्जुष्टञ्चाव्यक्तलक्षणैः। सशूलं वर्त्मकोशेषु शूकपूर्णाभमेव च। विहन्यमानं रूपे वा क्रियास्वक्षि यथा पुरा ॥ दृष्ट्वैव धीमान् बुध्येत दोषेणाधिष्ठितञ्च तत् ॥ तत्र सम्भवमासाद्य यथादोषं भिषगजितम्। विदध्यान्नेत्रजा रोगा बलवन्तः स्युरन्यथा ॥ सङ्क्षेपतः क्रियायोगो निदानपरिवर्ज्जनम्। वातादीनां प्रतीघातः प्रोक्तो विस्तरतः

च सर्व्वगाः' इति। एतेषां ज्ञानोपायमाह—तेषामित्यादि। अभिव्यक्तिरिति लक्षणम्। नेत्ररोगानभिधाने कारणमाह पराधिकारेष्विति ॥ ७२। ७३ ॥

पुनः ॥ उष्णाभितप्तस्य जले प्रवेशाद् दूरेक्षणात् स्वप्नविपर्य्ययाच्च । प्रसक्तसंरोदन-शोककोप-क्लेशाभिघातादतिमैथुनाच्च ॥ शुक्तारनालाम्लकुलत्थमाष-निषेवणाद् वेगविनिग्रहाच्च । स्वेदाद् रजोधूमनिषेवणाच्च छर्द्दविघाताद् वमनातियोगात् । वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः ॥ वाताद् दश तथा पित्तात् कफाच्चैव त्रयोदश । रक्तात् षोड़श विज्ञेयाः सर्व्वजाः पञ्चविंशतिः । तथा वाह्यौ पुनर्द्वौ च रोगाः षट्सप्ततिः स्मृताः ॥ हताधिमन्थो निमिषो दृष्टिगम्भीरिका च या । यच्च वातहतं वर्त्म न ते सिध्यन्ति वातजाः ॥ याप्योऽथ तन्मयः काचः साध्याः स्युः स्यन्दमारुताः । शुष्काक्षिपाकाधिमन्थ-स्यन्दमारुतपर्य्ययाः ॥ असाध्यो ह्रस्वजाड्यो यो जलस्रावश्च पैत्तिकः । परिम्लायी च नीलश्च याप्यः काचोऽथ तन्मयः ॥ अभिष्यन्दोऽधिमन्थोऽम्ला-ध्युषितं शुक्तिकाह्वया । दृष्टिः पित्तविदग्धा च पोथक्यो लगणश्च यः ॥ क्रिमिग्रन्थिपरिक्लिन्न-वर्त्मशुक्लार्म्मपिष्टकाः । श्लेष्मोपनाहः साध्यास्तु कथिताः श्लेष्मजेषु तु ॥ रक्तस्रावोऽजकाजातं शोणितार्शोऽवलम्बितम् । शुक्रं न साध्यं काचश्च याप्यस्तज्जः प्रकीर्त्तितः ॥ मन्थस्यन्दौ क्लिष्टवर्त्म हर्षोत्पातौ तथैव च । सिराजा व्यञ्जनाख्या च सिराजालश्च यत् स्मृतम् । पर्व्वण्यथाव्रणं शुक्रं शोणितार्म्मार्ऽज्जुनश्च यः । एते साध्या विकारेषु रक्तजेषु भवन्ति हि ॥ पूयस्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽलजी । असाध्याः सर्व्वजा याप्याः काचः कोपश्च पक्ष्मणः ॥ वर्त्मावबन्धो यो व्याधिः सिरासु पिड़का च या । प्रस्तार्य्यर्म्माधिमांसार्म्म-स्नाय्वर्म्मोत्सङ्गिनी च या । पूयालसश्चार्व्वुदश्च श्याव-कर्द्दमवर्त्मनी । तथार्शोवर्त्मशुष्कार्शः शर्करावर्त्म यच्च वै । सशोफश्चाप्यशोफश्च पाको वहलवर्त्म च । अक्लिन्नवर्त्म कुम्भीका विसवर्त्म च सिध्यति ॥ सनिमित्तो-ऽनिमित्तश्च द्वावसाध्यौ तु वाह्यजौ । षट्सप्ततिर्विकाराणामेषा संग्रहकीर्त्तना ॥ नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः । शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः । सर्व्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु । वाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ । भूय एतान् प्रवक्ष्यामि सङ्ख्यारूपचिकित्सितै रिति ॥ अथातः सन्धिगता व्याख्यास्यन्ते । पूयालसः सोपनाहः स्रावाः पर्व्वणिकाऽलजी । क्रिमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव ॥ पक्वः शोथः सन्धिजः संस्रवेद् यः सान्द्रं पूयं पूतिपूयालसः सः । ग्रन्थिर्नाल्पो दृष्टिसन्धा-वपाकः कण्डूप्रायो नीरुजस्तूपनाहः ॥ गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्य्युः स्रावान् रुग्विहीनान् स्वलिङ्गान् । तान् वै स्रावान् नेत्रनाडीमथैके तस्या लिङ्गं

कीर्त्तयिष्ये चतुर्द्दश॥ पाकः सन्धौ संस्रवेद्यस्तु पूयं पूयास्रावो नैकरूपः प्रदिष्टः। श्वेतं सान्द्रं पिच्छिलं यः स्रवेच्च श्लेष्मास्रावो नीरुजः स प्रदिष्टः। रक्तास्रावः शोणितोत्थः सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम्। पीताभासं नीलमुष्णं जलाभं पित्तास्रावः संस्रवेत् सन्धिमध्यात्॥ ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज् ज्ञेया पर्व्वणी वृत्तशोफा। जाता सन्धौ कृष्णशुक्लेऽलजी स्यात् तस्मिन्नेवाख्यापिता पूर्व्वलिङ्गैः। क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कण्डूं कुर्य्युः क्रिमयः सन्धिजाताः। नानारूपा वर्त्मशुक्लस्य सन्धौ चरन्तोऽन्तर्नयनं दूषयन्तः॥ अथातो वर्त्मगता व्याख्यास्यन्ते। पृथग्दोषा समस्ताश्च यदा वर्त्मव्यपाश्रयाः। सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः। विवर्त्त्य(द्ध्य) मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान्। विकारान् जनयन्त्याशु नामतस्तान् निबोधत॥ उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा। तथार्शोवर्त्मशुष्कार्शस्तथैवाञ्जननामिका। वहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धकः। क्लिष्टकर्द्दमवर्त्माख्यौ श्याववर्त्म तथैव च। प्रक्लिन्नमपरिक्लिन्नं वर्त्म वातहतञ्च यत्। अर्व्वुदं निमिषश्चापि शोणितार्शश्च यत् स्मृतम्। लगणो विसनामा च पक्ष्मकोपस्तथैव च। एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः। नामभिस्ते समुद्दिष्टा लक्षणैस्तान् प्रचक्ष्महे॥ पिड़काभ्यन्तरमुखी वाह्याऽधोवर्त्मसंश्रया। ज्ञेयोत्सङ्गिनी नाम तद्रूपपिड़कान्विता॥ कुम्भीकवीजप्रतिमाः पिड़काः पक्ष्मवर्त्मनोः। आध्मायन्ते तु भिन्ना याः कुम्भीकपिड़कास्तु ताः॥ कण्डूस्रावान्विता गुर्व्व्यो रक्तसर्षपसन्निभाः। पिड़काश्च रुजावत्यः पोथक्य इति संज्ञिताः॥ पिड़काभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता। पिड़का या खरा स्थूला सा ज्ञेया वर्त्मशर्करा॥ सूक्ष्माः खराश्च वर्त्मस्था तदर्शोवर्त्म कीर्त्त्यते। दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसम्भवः। व्याधिरेष समाख्यातः शुष्कार्श इति संज्ञितः॥ दाहतोदवती ताम्रा पिड़का वर्त्मसम्भवा। मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका॥ वर्त्मोपचीयते यस्य पिड़काभिः समन्ततः। सवर्णाभिः समाभिश्च विद्याद् वहलवर्त्म तत्॥ कण्डूमताऽल्पतोदेन वर्त्मशोफेन यो नरः। न समं छादयेदक्षि भवेद् बन्धः स वर्त्मनः॥ मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च। अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म तदादिशेत्॥ क्लिष्टं पुनः पित्तयुक्तं विदहेच्छोणितं यदा। तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्द्दमम्॥ यद् वर्त्म वाह्यतोऽन्तश्च श्यावं शूनं सवेदनम्। दाहकण्डूपरिक्लेदि श्याववर्त्मेति तन्मतम्॥ अरुजं वाह्यतः शूनमन्तः क्लिन्नं स्रवत्यपि। कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म तदुच्यते॥

यस्य धौतानि धौतानि संबध्यन्ते पुनःपुनः । वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥ विमुक्तसन्धिनिश्चेष्टं वर्त्म यन्न निमील्यते । एतद् वातहतं विद्यात् सरुजं यदि वाऽरुजम् ॥ वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् । विद्यादर्बुदं पुंसां सरक्तमवलम्बितम् ॥ निमेषिणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः । चालयेदक्षिवर्त्मानि निमेषः स गदो मतः ॥ छिन्नाश्छिन्ना विवर्द्धन्ते वर्त्मस्था मृदवोऽङ्कुराः । दाहकण्डूरुजोपेतास्तेऽर्शः शोणितसम्भवम् ॥ अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः । सकण्डूः पिच्छिलः कोलप्रमाणो लगणस्तु सः ॥ शूनं यद् वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् । बिसमन्तर्जलमिव बिसवर्त्मेति तन्मतम् ॥ पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च । निर्व्वर्त्तयन्ति पक्ष्माणि तैर्जुष्टञ्चाक्षि दूयते । उत्पाटितैः पुनः शान्तिः पक्ष्मभिश्चोपजायते । वातातपानलद्वेषी पक्ष्मकोपः स उच्यते ॥ इति । अथ शुक्लगता व्याख्यास्यन्ते । प्रस्तारिशुक्लक्षतजाधिमांस-स्नाय्वर्म्मसंज्ञाः खलु पञ्च रोगाः । स्युः शुक्तिका चार्ज्जुनपिष्टकौ च जालं सिराणां पिड़काश्च याः स्युः ॥ रोगा बलासग्रथितेन सार्द्धमेकादशाक्ष्णोः खलु शुक्लभागे ॥ प्रस्तारि ग्रथितमिहार्म्म शुक्लभागे विस्तीर्णं तनु रुधिरप्रभं सनीलम् ॥ शुक्लाख्यं मृदु कथयन्ति शुक्लभागे सश्वेतं सममिह वर्द्धते चिरेण ॥ यन्मांसं प्रचयमुपैति शुक्लभागे पद्माभं तदुपदिशन्ति लोहितार्म्म ॥ विस्तीर्णं मृदु बहलं यकृत्प्रकाशं श्यावं वा तदधिकमांसजार्म्म विद्यात् ॥ शुक्ले यत् पिशितमुपैति वृद्धिमेतत् स्नाय्वर्म्मेत्यभिपठितं खरं प्रपाण्डु ॥ श्यावाः स्युः पिशितनिभास्तु बिन्दवो ये शुक्त्याभाः सितनियताः स शुक्तिसंज्ञः ॥ एको यः शशरुधिरोपमस्तु बिन्दुः शुक्लस्थो भवति तमर्ज्जुनं वदन्ति ॥ उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो बिन्दुर्यः स भवति पिष्टकः सुवृत्तः ॥ जालाभः कठिनशिरो महान् सरक्तः सन्तानः स्मृत इह जालसंज्ञितस्तु ॥ शुक्लस्थाः सितपिड़काः सिरावृता यास्ता विद्यादसितसमीपजाः सिराजाः ॥ कांस्याभो भवति सिरावृतः सिते यो बिन्दुर्वा स तु निरुजो बलासकाख्यः ॥ इति । अथातः कृष्णगता व्याख्यास्यन्ते । यत् सव्रणं शुक्रमथाव्रणं वा पाकात्ययश्चाप्यजका तथैव । चत्वार एतेऽभिहिता विकाराः कृष्णाश्रयाः संग्रहतः पुरस्तात् ॥ निमग्नरूपं हि भवेत् तु कृष्णे सूच्येव विद्धं प्रतिभाति यद् वै । स्रावं स्रवेदुष्णमतीव रुक् च तत् सव्रणं शुक्रमुदाहरन्ति ॥ दृष्टेः समीपे न भवेत् तु यच्च न चावगाढ़ं न च संस्रवेद्धि । अवेदनावन्न च युग्मशुक्रं तत् सिद्धिमायाति

कदाचिदेव॥ सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नाति रुगश्रुयुक्तम्। विहायसीवाभ्रदलानुकारि तदव्रणं साध्यतमं वदन्ति॥ गम्भीरजातं बहलञ्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम्॥ विच्छिन्नमध्यं पिशितावृतं वा चलं सिरासक्तमदृष्टिकृच्च। द्विलग्नगतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्ज्जनीयम्॥ उष्णाश्रुपातः पिड़का च कृष्णे यस्मिन् भवेन्मुद्गनिभञ्च शुक्रम्। तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत् तित्तिरिपक्षतुल्यम्॥ सञ्छाद्यते श्वेतनिभेन सर्व्व-दोषेण यस्यासितमण्डलन्तु। तमक्षिपाकात्ययमक्षिकोप-समुत्थितं तीव्ररुजं वदन्ति॥ अजापुरीषप्रतिमो रुजावान् सलोहितो लोहित-पिच्छिलास्रः। विदार्य्य कृष्णं प्रचयोऽभ्युपैति तञ्चाजकाजातमिति व्यवस्येत्॥ इति। अथातः सर्व्वगता व्याख्यास्यन्ते। स्यन्दास्तु चत्वार इहोपदिष्टा-स्तावन्त एवेह तथाधिमन्थाः। शोफान्वितोऽशोफयुतश्च पाकावित्येवमेते दश सम्प्रदिष्टाः॥ हताधिमन्थोऽनिलपर्य्ययश्च शुष्काक्षिपाकोऽन्यत एव वातः। दृष्टिस्तथाम्लाध्युषिता सिराणामुत्पातहर्षावपि सर्व्वभागाः। प्रायेण सर्व्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः। तस्मादभिष्यन्दमुदीर्य्यमाण-मुपाचरेदाशु हिताय धीमान्॥ निस्तोदनस्तम्भनरोमहर्ष-सङ्घर्षपारुष्यशिरोऽभि-तापाः। विशुष्कभावाः शिशिरास्रता च वाताभिपन्ने नयने भवन्ति॥ दाह-प्रपाकौ शिशिराभिनन्दा धूमायनं वाष्पसमुच्छ्रयश्च। उष्णाश्रुता पीतक-नेत्रता च पित्ताभिपन्ने नयने भवन्ति॥ उष्णाभिनन्दा गुरुताक्षिशोफः कण्डूप-देहौ सिततातिशैत्यम्। स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति॥ ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च। पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति॥ वृद्धैरेतैरभिष्यन्दै-र्नराणामक्रियावताम्। तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः॥ उत्-पाट्यत इवात्यर्थं नेत्रं निर्म्मथ्यते तथा। शिरसोऽर्द्धन्तु तं विद्यादधिमन्थं स्वलक्षणैः॥ नेत्रमुत्पाट्यत इव मथ्यतेऽरणिवच्च यत्। संघर्षतोदनिर्भेद-मांस-संरब्धमाविलम्॥ कुञ्चनास्फोटनाध्मान-वेपथुव्यथनैर्युतम्। शिरसोऽर्द्धञ्च येन स्यादधिमन्थः स मारुतात्॥ रक्तराजिचितं स्रावि वह्निनेवावदह्यते। यकृत्पिण्डोपमं दाहि क्षारेणाक्तमिव क्षतम्। प्रपक्वोच्छूनवर्णान्तं सस्वेदं पीतदर्शनम्। मूर्च्छाशिरोदाहयुतं पित्तेनाक्ष्यधिमन्थितम्॥ शोफवन्नाति-संरब्धं स्रावकण्डूसमन्वितम्। रूपं पश्यति दुःखेन पांशुपूर्णमिवाविलम्। नासाध्मानशिरोदुःख-युतं श्लेष्माधिमन्थितम्॥ बन्धुजीवप्रतीकाशं ताम्यति

स्पर्शनाक्षमम्। रक्तास्रावं सनिस्तोदं पश्यत्यग्निनिभा दिशः। रक्तमग्नारिष्टवच्च कृष्णभागश्च लक्ष्यते। यच्च दीप्तं रक्तपर्य्यन्तं तद्रक्तेनाभिमन्थतिम्॥ हन्याद् दृष्टिं सप्तरात्रात् कफोत्थोऽधीमन्थोऽसृक्सम्भवः पञ्चरात्रात्। षड्रात्राद् वा मारुतोत्थो निहन्यान्मिथ्याचारात् पैत्तिकः सद्य एव॥ कण्डूपदेहाश्रुयुतः पक्वोडुम्बरसन्निभः। दाहसंहर्षताम्रत्व शोफनिस्तोदगौरवैः। जुष्टो मुहुः स्रवेद् वास्रमुष्णशीताम्बु पिच्छिलम्। संरम्भी पच्यते यश्च नेत्रपाकः स शोफजः॥ शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे॥ अन्तःसिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन्। हताधिमन्थं जनयेत् तमसाध्यं विदुर्बुधाः॥ पक्ष्मद्वयाक्षिभ्रुवमाश्रितस्तु यत्रानिलः सञ्चरति प्रदुष्टः। पर्य्यायशश्चापि रुजः करोति तं वातपर्य्यायमुदाहरन्ति॥ यत् कूणितं दारुणरुक्षवर्त्म विलोकने वाविलदर्शनं यत्। सुदारुणं यस्य निरोधने च शुष्काक्षिपाकोपहतं तदक्षि॥ यस्यावटू कर्ण शिरोहनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा। कुर्य्याद्रुजोऽति भ्रुवि लोचने वा तमन्यतोवातमुदाहरन्ति॥ अम्लेन भुक्तेन विदाहिना वा सञ्छाद्यते सर्व्वत एव नेत्रम्। शोफान्वितं लोहितकैः सनीलैरेतादृगम्लाध्युषितं वदन्ति॥ अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः। मुहुर्विरज्यन्ति च ताः समन्ताद् व्याधिः सिरोत्पात इति प्रदिष्टः॥ महान् सिरोत्पात उपेक्षितस्तु जायेत रोगस्तु सिराप्रहर्षः। ताम्राच्छमस्रं स्रवति प्रगाढ़ं तथा न शक्नोत्यभिवीक्षितुञ्च॥ इति। अथातो दृष्टिगता व्याख्यास्यन्ते। मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम्। खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः। आवृतां पटलेनाक्ष्णो बाह्ये न विवराकृतिम्। शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः। रोगान् तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे। पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम्॥ सिराभिरभिसंप्राप्य विगुणोऽभ्यन्तरे भृशम्। प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः। अव्यक्तानि स रूपाणि सर्व्वाण्येव प्रपश्यति॥ दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते। मक्षिकामशकान् केशान् जालकानि च पश्यति। मण्डलानि पताकाश्च मरीचीः कुण्डलानि च। परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि वा। दूरस्थान्यपि रूपाणि मन्यते च समीपतः। समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात्। यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति॥ ऊर्द्धं पश्यति नाधस्तात् तृतीयं पटलं गते। महान्त्यपि च रूपाणि छादितानीव वाससा। कर्णनासाक्षियुक्तानि विपरीतानि चेक्षते। यथादोषञ्च रज्येत

दृष्टिर्दोषे बलीयसि। अधःस्थिते समीपस्थं दूरस्थञ्चोपरिस्थिते। पार्श्वस्थिते तथा दोषे पार्श्वस्थानि न पश्यति॥ समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति। दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा। द्विधास्थिते त्रिधा पश्येद् बहुधा चानवस्थिते॥ तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः। रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाशः स उच्यते। तस्मिन्नपि तमोभूते नातिरूढ़े महागदे। चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः। निर्म्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति। स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः॥ तत्र वातेन रूपाणि भ्रमन्तीव स पश्यति। आविलान्यरुणाभानि व्याविद्धानि च मानवः॥ पित्तेनादित्यखद्योत शक्रचापतडिद्गुणान्। शिखिबर्हविचित्राणि नीलकृष्णानि पश्यति॥ गौरचामरगौराणि श्वेताभ्रप्रतिमानि च। पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रे चैवाभ्रसंप्लवम्। सलिलप्लावितानीव परिजाड्यानि मानवः। कफेन पश्येद् रूपाणि स्निग्धानि च सितानि च॥ तथा रक्तेन रक्तानि तमांसि विविधानि च। हरितश्यावकृष्णानि धूमधूम्राणि चेक्षते॥ सन्निपातेन चित्राणि विप्लुतानीव पश्यति। बहुधा वा द्विधा वापि सर्व्वाण्येव समन्ततः। हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च पश्यति। पित्तं कुर्य्यात् परिम्लायि मूर्च्छितं रक्ततेजसा। पीता दिशस्तथोद्यन्तमादित्यमिव पश्यति। विकीर्य्यमाणान् खद्योतैर्वृक्षांस्तेजोभिरेव च। लिङ्गनाशाः षट् सर्व्वथादृष्टिरोधवातपित्तकफशोणितसन्निपातजाः तिमिराणि चेति षट्। वक्ष्यामि षड्विधं रागलिङ्गनाशमतः परम्। रागोऽरुणो मारुतजः प्रदिष्टः पित्तात् परिम्लाय्यथवापि नीलः। कफात् सितः शोणितजस्तु रक्तः समस्तदोषस्तु विचित्ररूपः॥ रक्तजं मण्डलं दृष्टौ स्थूलकाचारुणप्रभम्। परिम्लायिनि रोगे स्यात् म्लाय्यानीलञ्च मण्डलम्। दोषक्षयात् कदाचित् स्यात् स्वयं तत्र च दर्शनम्॥ अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा। पित्तात् मण्डलमानीलं कांस्याभं पीतमेव वा। श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डरम्। चलत्पद्मपलाशस्थः शुक्लबिन्दुरिवाम्भसः। मृज्यमाने च नयने मण्डलं तद् विसर्पति॥ प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम्। दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे। यथास्वदोषलिङ्गानि सर्व्वष्वेव भवन्ति हि॥ इति वातजपित्तजद्विविधकफजरक्तजसन्निपातजाः षड्रागास्तत्र दृष्टिमध्ये मण्डलानि षड्विधानि पित्तादेव परिम्लायिरोगस्तत्र रक्तजकाचप्रभं म्लायि चानीलञ्च मण्डलं वातादरुणादि पित्तादानीलकांस्याभं श्लेष्मणा बहलादि रक्तात् प्रवालादिरूपम् विचित्रः सन्निपातादिति। तद् द्रढयति। षड्लिङ्गनाशाः

तेजः सवातं खलु केशभूमिं
दग्ध्वा तु कुर्य्यात् खलितिं नरस्य।
किञ्चित्तु दग्ध्वा पलितानि कुर्य्याद्
हरित्प्रभत्वञ्च शिरोरुहाणाम्॥ ७४॥

षड़िमे च रोगा दृष्ट्याश्रया षट् च षड़ेव च स्युः। तथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्वथ धूमदर्शी। यो ह्रस्वजाड्यो नकुलान्धता च गम्भीरसंज्ञा च तथैव दृष्टिः॥ पित्तेन दुष्टेन गतेन दृष्टिं पीता भवेद् यस्य नरस्य दृष्टिः। पीतानि रूपाणि च मन्यते यः स मानवः पित्तविदग्धदृष्टिः॥ प्राप्ते तृतीयं पटलन्तु दोषे दिवा न पश्येन्निशि वीक्षते च॥ तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि हि मन्यते तु। त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य। दिवा स सूर्य्यानुगृहीतदृष्टिर्वीक्षेत रूपाणि कफाल्पभावात्॥ शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः। स धूमकान् पश्यति यो हि भावांस्तं धूमदर्शीति वदन्ति रोगम्॥ स ह्रस्वजाड्यो दिवसेषु कृच्छ्रात् ह्रस्वानि रूपाणि च यो न पश्येत्। रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत्॥ विद्योतते येन नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्। चित्राणि रूपाणि दिवा स पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः॥ दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुच्यतेऽभ्यन्तरतश्च याति। रुजावगाढ़ा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः॥ बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च। निमित्ततस्तत्र शिरोऽभितापात् ज्ञेयस्त्वभिष्यन्दनिदर्शनैश्च॥ सुरर्षिगन्धर्व्वमहोरगाणां सन्दर्शनेनापि च भास्वराणाम्। हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः॥ तत्राक्षि विस्पष्टमिवावभाति वैदूर्य्यवर्णा विमला च दृष्टिः। विदीर्य्यते सीदति हीयते वा नृणामभीघातहता तु दृष्टिः॥ इत्येते नयनगता महाविकाराः सङ्ख्याताः पृथगिह षट् च सप्ततिश्च। एतेषां पृथगिह विस्तरेण सर्व्वं वक्ष्येऽहं तदनु चिकित्सितञ्च तावत्॥” इति॥ ७३॥

गङ्गाधरः—इत्येवमक्षिरोगानन्तरं खालित्यमाह—तेज इत्यादि। सवातं तेजः केशभूमिं दग्ध्वा नरस्य खलितिं कुर्य्यात्। केशभूमिं किञ्चिदल्पं दग्ध्वा

चक्रपाणिः—तेज इत्यादिना खालित्यलक्षणमाह। तेजःशब्देन देहोष्माभिमतः, स वाताद्युक्तः खालित्यं करोतीति योजनीयम्। केचित् तु तेजःशब्देन पित्तमपि वर्णयन्ति। हरित्-

इत्यूर्द्ध जत्रुस्थगदैकदेशः
प्रोक्तश्चिकित्सा च परं निबोध।
अतःपरं भेषजसंग्रहन्तु
निबोध सङ्क्षेपत उच्यमानम् ॥ ७५ ॥

वातात् सकासवैस्वर्य्ये सक्षारं पीनसे घृतम्।
पिबेद्रसं पयश्चोष्णं स्नैहिकं धूममेव वा ॥
शताह्वात्वग्बलामूलं श्योनाकैरण्डमूलजम्।
आरग्वधं पिबेद्वर्त्तिं मधूच्छिष्टवसाघृतैः ॥
अथवा सघृतान् सक्तून् कृत्वा मल्लकसम्पुटे।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ ७६ ॥

पलितानि अर्ज्जुनवर्णानि शिरोलोमानि कुर्य्यात्। धवलोऽर्ज्जुन उच्यते। एवं केशभूमिं किञ्चित् दग्ध्वा शिरोरुहाणां हरित्प्रभत्वं हरितवर्णत्वं कुर्य्यादिति ॥ ७४ ॥

गङ्गाधरः—तृट्श्वासादयो ये प्रतिश्यायाज्जायन्ते ते प्रागभिहिताः। उपसंहरति। इतीत्यादि। ऊर्द्ध्वजत्रुस्थगदानामेकदेशः कियान् प्रोक्तः, न तु कार्त्स्न्येन ॥ ७५ ॥

गङ्गाधरः—तत्र नवप्रतिश्यायचिकित्सितमाह—वातादित्यादि। वातात् पीनसे नवप्रतिश्याये कासवैस्वर्य्ययुते सक्षारं घृतं पिबेत्। मांसरसञ्च पिबेदेवमुष्णं पयश्च पिबेन्न तु शीतं पयः, तथा स्नैहिकं धूमं वा पिबेत्। धूममाह—शताह्वेत्यादि। त्वक् गुड़त्वक्। शताह्वादित्रयं मधूच्छिष्टवसाघृतैर्वर्त्तिं कृत्वा धूमं पिबेत्। एवं श्योनाकैरण्डमूलजं चूर्णं मधूच्छिष्टवसाघृतैर्वर्त्तिं कृत्वा धूमं पिबेत्। एवमारग्वधमूलं पिष्ट्वा मधूच्छिष्टवसाघृतैर्वर्त्तिं कृत्वा धूमं पिबेत्। अथवा यवादीनां सक्तून् सघृतान् मल्लकपुटे शरावपुटेऽङ्गाराग्नौ प्रक्षिप्य नवप्रतिश्यायवतां वैद्यो धूमं प्रयोजयेत् ॥ ७६ ॥

प्रभत्वमिति कपिलत्वम्। शिरोरुहाणामिति केशानाम्। भेषजसंग्रहमिति भेषजाभिधायकं ग्रन्थम् ॥ ७४। ७५ ॥

चक्रपाणिः—अथातः क्रमात् चिकित्साभिधीयते। प्रतिश्याये धूमस्य बोधनात् स्नैहिकधूमम

शङ्खमूर्द्धललाटान्ते पाणिस्वेदोपनाहनम्।
स्वभ्यक्ते क्षवथुस्राव-रोधादौ सङ्करादयः॥ ७७॥
घ्रेया रोहिषतर्कारी-वचाजोरकचोरकाः।
त्वक्पत्रमरिचैलानां चूर्णा वा सोपकुञ्चिकाः॥ ७८॥
स्रोतःशृङ्गाटनासाक्षि-शोषे तैलञ्च नावनम्।
प्रभाव्याजे तिलान् क्षीरे तेन पिष्टान् तदुष्मणा।
मन्दस्विन्नान् सयष्ट्याह्वान् चूर्णांस्तेनैव पीड़येत्॥
दशमूलस्य निक्काथे रास्नामधुककल्कवत्।
सिद्धं ससैन्धवं तैलं दशकृत्वोऽणु तत् स्मृतम्॥ ७९॥

गङ्गाधरः—शङ्खादिषु स्वेदोपनाहनं वैद्यः प्रयोजयेत्। तत्र स्वेदानाह। स्वभ्यक्त इत्यादि। क्षवथुस्रावयो रोधादौ सङ्करादयः स्वेदास्तैलाभ्यक्ते देहे प्रयोज्याः॥ ७७॥

गङ्गाधरः—रोहिषादिचोरकान्ताश्चर्णिता घ्रेया नस्यं कार्य्यम्। रोहिषं गन्धतृणं तर्कारी जयन्ती तस्या मूलं चोरकः पिङ्ग इति लोके। अथवा सोपकुञ्चिकास्त्वगादीनां चूर्णा घ्रेया नस्यं कार्य्यमिति॥ ७८॥

गङ्गाधरः—एवं वातप्रतिश्याये स्रोतःप्रभृतिशोषे तैलमतः परं वक्ष्यमाणं नावनं कार्य्यमिति। तैलमाह—प्रभाव्येत्यादि। आजे क्षीरे कृष्णान् तिलान् प्रभाव्य भावयित्वा तेनाजेन क्षीरेण पिष्टांस्तांस्तिलांस्तदुष्मणा तस्यैवाजक्षीरं हण्डिकायां प्रक्षिप्य मुखं वस्त्रेण बद्धा तद्वस्त्रोपरि तांस्तिलान् विन्यस्य चुल्ल्यामारोप्याधस्तादग्निना ज्वाला देया, तदुष्मणा मन्दस्विन्नांस्तांस्तिलान् यष्ट्याह्वचूर्णमिश्रितान् तेनैवाजदुग्धेन पीड़येत्। तत् तिलतैलं दशमूलक्काथे चतुर्गुणे पादिकरास्नादिसैन्धवान्तकल्कयुक्तं सिद्धं पक्वमित्येवंप्रकारेण दशकृत्वः सिद्धमणु

अग्रेऽभिधाय पाणिस्वेदोपनाहनं पाणिस्वेदश्च उपनाहनञ्च पाणिस्वेदोपनाहनम्। अवरोध इत्यत्र अवरोधशब्देन प्रतीनाहोऽभिधीयते। सङ्करादयः प्रच्छानकादयः स्वेदाध्यायोक्ताः स्वेदाः॥७६।७७॥

चक्रपाणिः—तर्कारी जीवन्ती। शृङ्गाटनासाक्षिशोषे नावनं तैलं युक्तम्। तत् तैलमाह—प्रभाव्याजे इत्यादि। तदुष्मणेति क्षीरोष्मणा, मन्दस्विन्नानिति मन्दं स्विन्नान्। सयष्ट्याह्वचूर्णानिति यष्ट्याह्वचूर्णस्याप्रधानत्वात् तिलचूर्णात् पादिकत्वम्। तेनैव पीडयेदिति अजाक्षीरेण। एवं तैलस्य दशमूलनिःक्काथादिभिः दशकृत्वो पाकात् सिद्धं तैलं वातपीनसे युञ्ज्यात्।

स्निग्धस्यास्थापनदोषं निर्हरेद् वातपीनसे ।
स्निग्धाम्लोष्णैश्च लघ्वन्नं ग्राम्यादीनां रसैर्हितम् ॥
उष्णाम्बुना स्नानपानं निवातोष्णप्रतिश्रयः ।
चिन्ताऽव्यवायव्यायाम-वाक्चेष्टाविरतो भवेत् ।
वातजे पीनसे धीमानिच्छन्नेवात्मनो हितम् ॥ ८० ॥
पित्ते सर्पिः पिबेत् सिद्धं शृङ्गवेरशृतं पयः ।
पाचनार्थं पिबेत् पक्वे कार्य्यं मूर्द्धविरेचनम् ॥
पाठाद्विरजनीमूर्व्वा-पिप्पलीजातिपल्लवैः ।
दन्त्या च सिद्धं तत् तोयं नस्यं स्यात् पक्वपीनसे ॥ ८१।८२
पूयास्रक्तपित्तघ्नाः कषाया नावनानि च ।
पाकदाहाढ्यरूक्षेषु शीताः सेकाः प्रलेपनाः ।
स्नेहनस्योपचाराश्च कषायाः स्वादुशीतलाः ॥ ८३ ॥

तत् अणुतैलं स्मृतमिति। प्रतिश्यायस्यामतालक्षणमुक्तमन्यत्र। "शिरोगुरुत्वमरुचिर्नासास्रावस्तनुस्वरः । क्षामः ष्ठीवत्यथाभीक्ष्णमामपीनसलक्षणम् । आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति । स्वरवर्णविशुद्धिश्च पक्वपीनसलक्षणम् ॥" इति । स्निग्धस्येत्यादि । पक्के पीनसे स्निग्धस्यास्थापनदोषं निर्हरेत् । स्निग्धादिभिर्ग्राम्यादिमांसरसैर्लघ्वन्नं हितम् । उष्णाम्बुना स्नानं पानञ्चोष्णाम्बुनः । निवाते चोष्णे च गृहे प्रतिश्रयः । चिन्तादिभ्यश्च विरतो भवेत् ॥ ८० ॥

गङ्गाधरः—अथ पित्तप्रतिश्यायचिकित्सामाह—पित्ते इत्यादि । सिद्धं पक्वं पित्तहरैर्द्रव्यैः सर्पिः पिबेत् । शृङ्गवेरशृतं पयश्च पिबेत् । पक्के पीनसे मूर्द्धविरेचनं कार्य्यम् । मूर्द्धविरेचनार्थं नस्यमाह—पाठेत्यादि । पाठादिदन्त्यन्तैः कल्कैः सिद्धं तोयं पक्वपीनसे पित्तजे नस्यं स्यात् ॥ ८१ । ८२ ॥

गङ्गाधरः—पूयेत्यादि । पूयास्रघ्ना रक्तपित्तघ्नाश्च ये कषाया यानि नावनानि च तानि शीताः सेकाः प्रलेपनाश्च शीताः नासापाकादिषु हिताः स्युः । स्नेहस्य नस्यमुपचाराश्च कार्य्याः । स्वादुशीतलाः कषायाश्च हिताः ॥ ८३ ॥

स्निग्धाम्लेत्यादिना आचारमाह—निवातोष्णप्रतिश्रय इति निवातोष्णगृहस्थायी । पित्ते सर्पिः पिबेत् सिद्धमित्यत्र शृङ्गवेरसिद्धमेव सर्पिर्देयम् । रक्तपित्तघ्ना इति रक्तपित्तचिकित्सोक्ताः ॥७८—८३॥

मन्दपित्ते प्रतिश्याये स्निग्धैः कुर्य्याद् विरेचनम्।
घृतं क्षीरं यवाः शालिर्गोधूमा जाङ्गला रसाः।
शीताम्लास्तिक्तशाकानि यूषा मुद्गादिभिर्हिताः॥ ८४॥
गौरवारोचकेष्वादौ लङ्घनं कफपीनसे।
स्वेदाः सेकाश्च पाकार्थं लिप्ते शिरसि सर्पिषा॥
लसुनं मुद्गचूर्णेन व्योषक्षारघृतैर्युतम्।
देयं कफघ्नवमनमुत्क्लिष्टश्लेष्मणे हितम्॥
अपीनसे पूतिनस्ये घ्राणस्रावे सकण्डुके।
धूमः शस्तोऽवपीड़श्च कटुभिः कफपीनसे॥
मनःशिलावचाव्योष-विड़ङ्गं हिङ्गु गुग्गुलुः।
चूर्णैः प्रायः प्रधमनः कटुभिस्त्रिफलैः सह॥
भार्गीमदनतर्कारी-सुरसादिविपाचितम्।
तैलं सर्षपजं बल्यं कफपीनसशान्तये॥

गङ्गाधरः—मन्दपित्त इत्यादि। स्निग्धैरेरण्डतैलादिभिः। घृतादयश्च भोजने हिताः॥ ८४॥

गङ्गाधरः—अथ कफामपीनसचिकित्सामाह। गौरवेत्यादि। आदौ कफपीनसे गौरवारोचकेषु लङ्घनम्। कफपाकार्थं सर्पिषा लिप्ते शिरसि स्वेदाश्च सेकाश्च। लसुनमित्यादि। उत्क्लिष्टश्चेत् श्लेष्मा भवति तदा मुद्गचूर्णव्योषचूर्णयवक्षारघृतयुतं लसुनं कफघ्नं वमनं हितं देयम्। अपीनस इत्यादि। अपीनसादिषु धूमोऽवपीड़श्च शस्तः। कफपीनसे कटुभिरवपीड़श्च शस्तः। मनःशिलेत्यादि। मनःशिलादीनां चूर्णैः प्रायः प्रधमनो द्विमुखनलिकया फत्कारेण नासिकापुटे देयः, त्रिफलैः सह कटुभिर्मरिचादिभिः कटुद्रव्यैः प्रधमनः। भार्गीत्यादि। तर्कारी जयन्ती। सुरसादिर्गणः। एतै-

चक्रपाणिः—मन्दपित्ते इति ईषत्पित्ते देयम्। कफघ्नवमनमिति कफघ्नद्रव्यकृतं वमनं देयमित्यर्थः।

आर्त्तकालवचालं वा विड़ङ्गं कुष्ठपिप्पली।
कृत्वा कल्कं करञ्जञ्च तैलं तैः सार्षपं पचेत्॥
पाकान्मुक्ते घने नस्यमेतन्मेदोऽन्विते कफे।
स्निग्धस्य व्याहते वेगे छर्द्दनं कफपीनसे॥
वमनीयश्रृतक्षीर-तिलमाषयवागुना।
यवाग्वा मदनक्षीर-तिलमाषोपसिद्धया॥ ८५॥
कफघ्नमन्नं वार्त्ताक-कुलत्थाढ़किमुद्गजाः।
यूषाः सकुलकव्योषाः शस्तास्तोयोष्णसेविनः॥ ८६॥
सर्व्वजित् पीनसे दुष्टे कार्य्यं शोफे तु शोफनुत्।
क्षारोऽर्व्वुदाधिमांसेषु क्रिया सर्व्वेष्ववेक्ष्य च॥ ८७॥

विपाचितं तैलं मेदोऽन्विते कफे नस्यम्। तथा आर्त्तकालादिकरञ्जान्तं कल्कं कृत्वा सार्षपतैलं पचेत्। पाकान्मुक्ते परिपक्वे पीनसे मेदोऽन्विते कफे क्षरिते एतत्तैलं नस्यं स्यात्। आर्त्तः कुष्ठं काला अगुरु आलं हरितालम्। स्निग्धस्येत्यादि। कफपीनसे वेगे व्याहते स्निग्धस्य छर्द्दनं वमनं कार्य्यम्। छर्द्दनमाह—वमनीयेत्यादि। फलिनी-मूलिनीवमनीयद्रव्यैः श्रृतं क्षीरञ्च तिलाश्च माषाश्च यवागूश्च तेन छर्द्दनम्। समाहारात् क्लीवम्। मदनादुग्रपसिद्धया यवाग्वा वा छर्द्दनमिति॥ ८५॥

गङ्गाधरः—भोजनमाह—कफघ्नमित्यादि। कफघ्नधान्यकृतमन्नं वार्त्ताकादियूषाः सव्योषाः शस्ताः तोयञ्चोष्णम्। इति कफपीनसचिकित्सा॥८६॥

गङ्गाधरः—सन्निपातपीनसचिकित्सामाह—सर्व्वजिदित्यादि। त्रिदोषजे पीनसे सर्व्वजित् सर्व्वदोषजित् वातादिदोषजिद् गद् यदुक्तं तत् त्रयाणां मिश्रं कार्य्यम्। दुष्टे पीनसे च सर्व्वजित् कर्म्म कार्य्यम्। रक्तजे पित्तजित् कार्य्यमिति। प्रतिश्यायचिकित्सामुक्त्वा प्रतिश्यायाज्जातशोफादिचिकित्सामाह—शोफे त्वित्यादि। प्रतिश्यायाज्जाते शोफे शोफजित् कर्म्म कार्य्यम्। प्रतिश्यायाज्जातेष्वर्व्वुदादिषु क्षारो देयः। सर्व्वेष्वपीनसादिषु नासारोगेषु अवेक्ष्य रोगविशेषं क्रिया कार्य्या॥ ८७॥

कटुभिः फलैरिति मरीचपिप्पल्यादिभिः। पाकान्मुक्त इति पाकावसानाच्च्युते। व्याहते वेग इति पीनसस्य वेगे मन्दीभूते। शोफे चेति नासाशोफे॥ ८४—८७॥

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान्।
पानान्नमुपहारांश्च कुर्य्याद् वातामयापहान्॥
तैलभृष्टैरगुर्व्वाद्यैः सुखोष्णैश्चोपनाहनम्।
जीवनीयैः सुमनसां मत्स्यमांसैश्च शस्यते॥ ८८॥
रास्नास्थिरादिभिः सिद्धं सक्षीरं नस्यमर्त्तिनुत्।
तैलं रास्नादिकाकोली-शर्कराभिरथापि वा॥ ८९॥
बलामधुकयष्ट्याह्व-विदारीचन्दनोत्पलैः।
जीवकर्षभकद्राक्षा-शर्कराभिश्च साधितः॥
प्रस्थस्तैलस्य सक्षीरो जाङ्गलार्द्धतुलारसे।
नस्यं सर्व्वोर्द्ध्वजत्रुघ्नं वातपित्तामयापहम्॥ ९०॥
दशमूलबलारास्ना-त्रिफलामधुकैः सह।
मायूरं पक्षपित्तान्त्र-शकृत्पादास्यवर्ज्जितम्॥

<u>गङ्गाधरः</u>—इति नासारोगचिकित्सितमुक्त्वा प्रतिश्यायाज्जाते शिरोरोगास्यरोगकर्णरोगाक्षिरोगचिकित्सितमाह। वातिके इत्यादि। उपहारा आहारोपयोगिनः। तैलभृष्टैरित्यादि। अगुर्व्वादिगण उक्तोऽगुर्व्वादितैले ज्वरचिकित्सिते। शिरस उपनाहनम्। जीवनीयैर्दशभिरुपनाहनञ्च सुमनसां मालत्यादिपुष्पाणामुपनाहनञ्च मत्स्यमांसैश्चोपनाहनं शिरसि शस्यते॥ ८८॥

<u>गङ्गाधरः</u>—रास्नेत्यादि। स्थिरादिः शालपर्ण्यादिपञ्चमूलम्। नस्यमेतं वातिके शिरोरोगेऽर्त्तिनुत्। अथवा रास्नादिकाकोलीशर्कराभिः सिद्धं तैलं नस्यं शिरोऽर्त्तिनुत्। रास्नादिरिह पूर्व्वो रास्ना स्थिरादिपञ्चमूलञ्च॥ ८९॥

<u>गङ्गाधरः</u>—बलेत्यादि। बलादिभिः शर्करान्तैः कल्कैः तैलप्रस्थस्य पादिकैः समक्षीरं तत् तैलं जाङ्गलमांसरसोऽर्द्धतुला। सिद्धमिदं तैलं नस्यं सर्व्वोर्द्ध्वजत्रुजरोगघ्नमिति॥ ९०॥

<u>गङ्गाधरः</u>—दशमूलेत्यादि। पक्षादिवर्ज्जितं मायूरं मांसमस्थि च दशमूला-

<u>चक्रपाणिः</u>—दशमूलादीनां प्रत्येकं त्रिपलमानम्। समं मयूरं पक्षादिवर्ज्जितं

जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुकैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम्॥
कर्णनासाक्षिजिह्वास्य-गलरोगविनाशनम्।
मायूरमितिविख्यातमूर्द्धजत्रुगदापहम्॥ ९१॥

दिभिः सह जलेऽष्टगुणे पक्त्वा चतुर्थांशशेषे तस्मिन् क्वाथे क्षीरसमं घृतप्रस्थं पचेत् मधुरैर्जीवनीयैर्दशभिः कल्कैः कार्षिकैर्घृतस्य पादिकैः। अत्र क्वचित् पाठः। "दशमूलबलारास्नामधुकैस्त्रिपलैः सह" इति। तेन दशमूल्यादीनां प्रत्येकं त्रिपलग्रहणेन त्रयोदशद्रव्याणामेकोनचत्वारिंशत् पलानि भवन्ति पक्षादिवर्ज्जितमायूरमांसास्थि च तत्सममष्टगुणे जले पचेदिति कश्चित्। अन्ये तु दशमूल्यादिकमेकोनचत्वारिंशत्पलं मायूरमांसास्थि चाकृतिमानादेकमेव मयूरं पक्षादिवर्ज्जं यावत् स्यात् तावद् गृह्णन्ति। जलञ्चाष्टगुणमेव सर्व्वद्रव्यापेक्षया ददति। "त्रिफला मधुकैः सहे"ति पाठे दशमूल्यादीनां मानानुक्तेस्तत्सगतश्चतुर्गुणद्रव्यसाध्यत्वात् स्नेहस्यात्र समक्षीरविधानात् त्रिगुणः क्वाथः कार्य्यो यावता दशमूल्यादिमायूरमांसास्थिसमुदायेन तावदत्र ग्राह्यं तत्र दशमूल्यादिद्रव्यं यावत् तावन्मायूरं मांसमस्थि च ग्राह्यं न त्वाकृतिमानेनैकस्य मयूरस्य क्वाथाल्पत्वापत्तेः। एतदभिप्रायेणाखुभिः कुक्कुटैर्हंसैरिति वक्ष्यमाणवचनेऽनेन कल्पेन क्वाथसाधने वहुवचनान्तप्रयोगा आखुभिरित्यादयः कृताः। अन्यथाखुरण्याकृतिमानेनैकः कुक्कुटश्च हंसश्च शशश्च गृह्यतां वहुवचनमनर्थकं स्यात्। तथा च दशमूल्यादीनां मानानुक्तौ षोड़शानां प्रत्येकं सार्द्धं पलं मिलित्वा चतुर्विंशतिपलं, मायूरमांसास्थि चतुर्विंशतिपलं, तत्र मांसस्यास्थ्नो नियमो नास्ति नास्ति पक्षादिवर्ज्जनाच्छेषं यावन्मांसमस्थि च लभ्यते तावदेव चतुर्विंशतिपलमिति दशमूल्यादिमांसास्थ्यन्तं पट् शरावमष्टचत्वारिंशच्छरावमिते जले पक्त्वा द्वादशशरावावशेषे क्वाथे घृतात् त्रिगुणे समक्षीरे घृतप्रस्थं पचेत्। स्वल्पमायूरघृतम्॥ ९१॥

जलद्रोणे एव पचेत्। जलद्रोणो हि यत्र क्वाथार्थं घृतप्रस्थात् पादावशेषत्वम् समचतुर्गुणो भवति। किञ्च दशमूलादीनाम् ऊनचत्वारिंशत्पलेन मयूरेण च चतुःषष्टिपले क्वाथ्ये द्रोणमानं जलं देयम्। किंवा दशमूलादीनां मयूरेण च मिलित्वा यावत् क्वाथ्यं भवति तच्चतुर्गुणजलमुत्सर्गपरिभाषयैव देयम्। मधुरैरिति जीवनीयगणोक्तैर्दशभिः। जीवनीयानि मधुरत्वप्रकर्षादिह मधुरशब्देनोच्यन्ते॥ ८८—९१॥

एतेनैव कषायेण घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः॥
जीवन्तीत्रिफलामेदा-मृद्वीकर्द्धिपरूषकैः।
समङ्गाचविकाभार्गी-काश्मरीकर्कटाह्वयैः॥
आत्मगुप्तामहामेदा-तालखर्ज्जूरमस्तकैः।
मृणालविसखर्ज्जूर-मधुकैश्च सजीरकैः॥
शतावरीविदारीक्षु-वृहतीसारिवायुगैः।
मूर्व्वाश्वदंष्ट्रर्षभक-शृङ्गाटककशेरुकैः॥
रास्नास्थिरातामलकी-सूक्ष्मैलाशठीपौष्करैः।
पुनर्नवातुगाक्षीरी-काकोलीधन्वयासकैः॥
मधुकाक्षोड़वादाम-मुञ्जाताभिषुकैरपि।
द्रव्यैरेभिर्यथालाभं पूर्व्वकल्पेनसाधितम्॥
पाने नस्ये तथाभ्यङ्गे वस्तौ चैतत् प्रदापयेत्।
शिरोरोगेषु सर्व्वेषु कासे श्वासे च दारुणे॥

गङ्गाधरः—एतेनैवेत्यादि। जीवन्त्यादीनां प्रत्येकं यथालाभं कार्षिकैः कल्कैर्यथालाभे कल्कस्य ःपूनाधिक्यमाने दोषाभावः। तालखर्ज्जूरयोर्मस्तकं तथा खर्ज्जूरस्य फलम्। आक्षोड़ः कर्परालः, आखरोट इति लोके। वादामश्च लोके तन्नाम्ना प्रसिद्ध एव। मुञ्जात उत्तरदेशे कन्दविशेषः। अभिषुकः फलविशेषः। एभिर्यथालाभं द्रव्यैः कार्षिकैः कल्कैः एतेनैव दशमूल्यादिमयूरान्तक्वाथेन चतुर्गुणेन पयसा तु समेन क्षीरं स्नेहसमं मतमित्युक्तेः। अथवा चतुर्गुणेन पयसेति दशमूल्यादिमयूरान्तक्वाथेन त्रिगुणेनेति घृतप्रस्थं

चक्रपाणिः—एतेनैवेति दशमूलादिमयूरक्वाथेन यथोक्तविधानकृतेन। द्वितीयखर्ज्जूरशब्देन खर्ज्जूरफलं गृह्यते। अक्षोडवातामादीनि औत्तरपथिकानि। पूर्व्वयोगोक्तक्वाथविधानं यद्यप्ये-

मन्यापृष्ठग्रहे शोषे स्वरभेदे तथार्द्दिते।
योन्यसृक्शुक्रदोषेषु शस्तं बन्ध्यासुतप्रदम्॥
महामायूरमित्येतत् घृतमात्रेयपूजितम्॥ ९२॥
( चतुःप्रयोगमेवेदमग्निवेशप्रकाशितम्। )

महामायूरघृतम्॥

आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान्।
कल्पेनानेन विपचेत् सर्पिरूर्द्ध्वगदापहम्॥ ९३॥
पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत्॥
चन्दनोशीरयष्ट्याह्व-बलाव्याघ्रनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्यात् शृतैर्वा परिषेचनम्॥

विपाचयेत्। इति पूर्व्वकल्पेन साधितं घृतमेतत् पानादौ प्रयोजयेत्। महामायूरं घृतम्॥ ९२॥

गङ्गाधरः—आखुभिरित्यादि। कल्पेनानेन मायूरमहामायूरघृतसाधनकल्पेन। आखुभिः कुक्कुटैर्हंसैः शशकैश्च पक्षादिवर्ज्जितैर्मांसास्थिभिर्दशमूल्यादिभिः सह क्काथेन त्रिगुणेन समक्षीरेण मधुकैः कार्षिकैः कल्कैर्घृतप्रस्थं पचेदिति। आखुघृतम्। जीवन्त्यादिभिः कल्कैः कार्षिकैश्चतुर्गुणेन पयसा चतुर्गुणेन च पित्तादिवर्ज्जिताखुसहितदशमूल्यादिक्काथेन घृतप्रस्थं पचेदिति। महाखुघृतम्। एवं कुक्कुटघृतं महाकुक्कुटघृतं हंसघृतं महाहंसघृतं शशकघृतं महाशशकघृतञ्च पचेत्। इति वातजशिरोरोगचिकित्सा॥ ९३॥

गङ्गाधरः—अथ पित्तजशिरोरोगचिकित्सामाह—पैत्त घृतमित्यादि। पैत्ते शिरोरोगे घृतं सेकाः शीता लेपाश्च शीता नावनञ्च शीतम्। जीवनीयानि सर्पींषि पित्तनुत् पानान्नञ्च। शीतप्रदेहमाह—चन्दनेत्यादि। क्षीरपिष्टैश्चन्दनादिभिर्लेपः शिरसि। शृतैर्वा जले क्काथविधिना पक्वैश्चन्दनादिभिः क्कथितैः

तेनैव कषायेणत्यादिना सिद्धम्, तथापि पुनः पूर्व्वकल्केनेति वचनेन यथालाभमिति च पदेन यथालाभं करणीयत्वं दर्शयति॥ ९२॥

चक्रपाणिः—अत्र मयूरस्थाने मूषकादीन् दर्शयन्नाह—आखुभिरित्यादिना। आखुना मयूर

त्वक्पत्रशर्कराकल्कः सुपिष्टस्तण्डुलाम्बुना।
कार्य्योऽवपीड़ः सर्पिश्च नस्यं तस्यानु पैत्तिके॥
यष्ट्याह्वचन्दनानन्ता-क्षीरसिद्धं हितं घृतम्।
नावनं शर्कराद्राक्षा-मधुकैश्चापि पित्तजे॥ ९४॥
कफजे स्वेदितं नस्य-धूमप्रधमनादिभिः।
शुद्धं प्रलेपपानान्नैः कफघ्नैः समुपाचरेत्॥ ९५॥
पुराणसर्पिषः पानस्तीक्ष्णैर्वस्तिभिरेव च।
कफानिलोद्भवे दाहः शेषयो रक्तमोक्षणम्॥
एरण्डनलदक्षौम-गुग्गुल्वगुरुचन्दनैः।
धूमवर्त्तिं पिबेद्‌ गन्धैरकुष्ठतगरैस्तथा॥ ९६॥
सन्निपातोद्भवे कार्य्या सन्निपातहरी क्रिया।
क्रिमिजे चापि कर्त्तव्यं तीक्ष्णं मूर्द्धविरेचनम्॥ ९७॥

शिरसः परिषेचनम्। शीतनावनमाह। त्वक्पत्रेत्यादि। तण्डुलाम्बुपिष्टं त्वगादिकं पोट्टलीकृत्यावपीड्य नासापुटे नस्यं देयम्। तस्यानु पश्चात् सर्पिश्च नस्यं देयमित्येकयोगः। यष्ट्याह्वेत्यादि। घृतात् पादिकं यष्ट्याह्वाद्यनन्तान्तं कल्कं दत्त्वा चतुर्गुणे क्षीरे सिद्धं घृतं नावनं हितम्। शर्करादिभिश्च नावनं हितमिति केचित्। तैः कल्कैः सिद्धं घृतं नावनमित्यपरे। इति पित्तज-शिरोरोगचिकित्सा॥ ९४॥

गङ्गाधरः—अथ कफजशिरोरोगचिकित्सामाह—कफज इत्यादि। कफजे शिरोरोगे प्रथमं स्वेदेनोपपन्नं ततो नस्यादिभिः शुद्धं कफघ्नैः प्रलेपादिभिः समुपाचरेत्। तथा पुराणसर्पिःपानैस्तथा तीक्ष्णैर्वस्तिभिः समुपाचरेत्। कफानिलोद्भवे शिरोरोगे दाहः। शेषयोः सन्निपात-क्रिमिजयो रक्तमोक्षणमिति सूत्रम्। धूममाह। एरण्डेत्यादि। अकुष्ठतगरैर्गन्ध-

पेक्षया अल्पमानेनाप्यत्रैकेनापि साधनं कर्त्तव्यम्। शृतैर्वा इत्यत्र क्षीरशृतैः। सर्पिश्च नस्यमित्यस्य अवपीडस्य पश्चात् सर्पिषा नस्यं देयम्॥ ९३—९५॥

चक्रपाणिः— फानिलोद्भवे दाह इत्यत्र कफोद्भवे अनिलोद्भवे च। सुश्रुतवचनात् ललाट-शङ्खदेशे दाहः कर्त्तव्यः। उक्तं हि सुश्रुते—'शिरोरोगाधिमन्थप्रभृतिषु ललाटप्रदेशे दहेत्।

त्वग्दन्तीव्याघ्रकरज-विड़ङ्गनवमालिकाः।
अपामार्गफलं वीजं नक्तमालशिरीषयोः।
क्षवकोऽश्मन्तको विल्वं हरिद्रा हिङ्गु यूथिका।
फणिज्झकश्च तैस्तैलमवीमूत्रे चतुर्गुणे।
सिद्धं स्यान्नावनं चूर्णञ्चैषां प्रधमनं भवेत्॥ ९८॥
फलं शिग्रुकरञ्जाभ्यां सव्योषं चावपीड़कः।
कषायः स्वरसः क्षारश्चूर्णं कल्कोऽवपीड़कः।
शुक्ततिक्तकटुक्षौद्र-कषायैः कवलग्रहः॥ ९९॥
धूमः प्रधमनं शुद्धिरधश्छर्द्दनलङ्घने।
भोज्यश्च मुखरोगेषु यथास्वं दोषनुद्धितम्॥ १००॥

द्रव्यैरुक्तां वर्त्तिं धूमं पिबेत्। सन्निपाते सन्निपातहरी क्रिया च कार्य्या। क्रिमिजे शिरोरोगे तीक्ष्णं शिरोविरेचनं कार्य्यम्॥ ९५—९७॥

गङ्गाधरः—त्वगित्यादि। त्वक् गुड़त्वक्। व्याघ्रकरजो व्याघ्रनखः। नवमालिका नवमल्लिका। नक्तमालशिरीषयोर्वीजम्। क्षवको हाँचिका। अश्मान्तक अम्ल-लोटकः। फणिज्झकः पर्णासभेदः। त्वगादिभिरेतैः कल्कैः पादिकैश्चतुर्गुणे मेषीमूत्रे सिद्धं तैलं नावनं भवेदेवमेषां त्वगादीनां चूर्णं प्रधमनं द्विमुखनलिका-च्छिद्रे क्षिप्त्वा नासापुटे दद्यात् फूत्कारेण॥ ९८॥

गङ्गाधरः—फलमित्यादि। शिग्रुकरञ्जाभ्यां फलं सव्योषं गृहीत्वा जलेन पिष्ट्वाऽवपीड़को देयः। तथा तेषां शिग्रुफलादीनां कषायः स्वरसः क्षारश्चूर्णश्च कल्कश्चावपीड़ो देयः। कवलग्रहश्च शुक्तादिभिः कार्य्य इति सङ्क्षेपेण शिरोरोगचिकित्सितमुक्तम्॥ ९९॥

गङ्गाधरः—अथ मुखरोगचिकित्सितमाह—धूम इत्यादि। अधःशुद्धि-र्विरेचनम्। यथास्वं दोषनुद्भोज्यश्च मुखरोगेषु हितम्॥ १००॥

अकुष्ठतगरैरिति अगुर्व्वादिगन्धैः। कुष्ठतगरवर्ज्जनञ्चात्र मस्तुलुङ्गस्रावर्ज्जनार्थम्। उक्तञ्च शालाक्ये—'न तु कुष्ठं स्रावयतो धूमवर्त्तिं प्रयोजयेत्। मस्तुलुङ्गं प्रकर्षेण तस्मात् तं नैव योजयेत्'॥ इति शिरोरोगचिकित्सा॥ ९६—९९॥

यवक्षारं पिप्पलीश्च सदार्व्वीत्वग् रसाञ्जनम्।
पाठां तेजोवतीं पथ्यां समभागानि चूर्णयेत्॥
सक्षौद्रं धारयेदेतत् मुखरोगेषु बुद्धिमान्।
सीधुमाधवमाध्वीकैः श्रेष्ठोऽयं कवलग्रहः॥
तेजोह्वामभयां मूर्व्वां समङ्गां कटुकीं घनम्।
पाठां रसाञ्जनं लोध्रं दार्व्वीं कुष्ठञ्च चूर्णयेत्।
दन्तानां घर्षणं रक्त-स्रावकण्डूरुजापहम्॥
पञ्चकोलकतालीश-पत्रैलामरिचत्वचः।
पलाशमुष्ककक्षार-यवक्षाराश्च चूर्णिताः॥
गुड़े पुराणे द्विगुणे क्थिते गुड़िकाः कृताः।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि।
कण्ठरोगेषु सर्व्वेषु धार्य्याः स्युरमृतोपमाः॥ १०१॥
गृहधूमो यवक्षारः पाठा व्योषं रसाञ्जनम्।
तेजोह्वा त्रिफला लोध्रं चित्रकञ्चेति चूर्णितम्॥
सक्षौद्रं धारयेदेतद् गलरोगविनाशनम्।
काणकं * नाम तच्चूर्णं दन्तास्यगलरोगनुत्॥ १०२॥

गङ्गाधरः—यवक्षारमित्यादि। यवक्षारादिकं समभागेन चूर्णीकृत्य क्षौद्रेण गोलयित्वा मुखे धारयेत्। सीधुप्रभृतिभिः कवड़ग्रहः श्रेष्ठः। तेजोह्वादिकं चूर्णयित्वा दन्तवेष्टेभ्यो रक्तस्रावकण्डूरुजापहं तेन दन्तानां घर्षणम्। पञ्च-कोलेत्यादि। पलाशादीनां क्षाराः पञ्चकोलादीनां चूर्णाद् द्विगुणे पुराणगुड़े क्थिते पक्वे गुड़िकाः कर्कन्धुमात्राः कृताः मुष्ककस्य भस्मनि सप्ताहं स्थितास्ततः परं सर्व्वेषु कण्ठरोगेषु धार्य्याः स्युः॥ १०१॥

गङ्गाधरः—गृहेत्यादि। गृहधूमादिकं समं सर्व्वं चूर्णितं कृत्वा क्षौद्रेणालोड्य मुखे धारयेदिति। काणकं चूर्णम्॥ १०२॥

चक्रपाणिः—शुद्धिरधः इति विरेचनम्। दार्व्वीत्वगिति दार्व्यास्त्वग्। रुजापहमिति

* कालकमिति बहुषु ग्रन्थेषु पाठः।

मनःशिला यवक्षारो हरितालं ससैन्धवम्।
दार्व्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम्॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम्॥ १०३ ॥
मृद्वीका कटुका व्योषं दार्व्वीत्वक् त्रिफला घनम्।
पाठा रसाञ्जनं मूर्व्वा तेजोह्वा चेति चूर्णितम्॥
क्षौद्रयुक्तं विधातव्यं गलरोगे भिषग्जितम्।
योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः॥ १०४ ॥
कटुकातिविषापाठा-दारुमुस्तकलिङ्गकाः।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः॥
स्वरसः क्वथितो दार्व्व्या घनीभूतो रसक्रिया।
सक्षौद्रा मुखरोगास्टग्-दोषनाड़ीव्रणापहा॥ १०५ ॥

गङ्गाधरः—मनःशिलेत्यादि। मनःशिलादिदार्व्वीत्वगन्तं चूर्णयित्वा माक्षिकेणालोड्य घृतमण्डेन मूर्च्छितं मर्द्दितं कण्ठरोगेषु धारयेदिति। पीतकं चूर्णम्॥ १०३ ॥

गङ्गाधरः—मृद्वीकेत्यादि। मृद्वीकादिकं समांशं चूर्णयित्वा क्षौद्रयुक्तं गलरोगे धार्य्यम्। योगास्तु य एते त्रयः काणक-पीतक-मृद्वीकादिचूर्णास्ते वातपित्तकफापहाः प्रोक्ताः॥ १०४ ॥

गङ्गाधरः—कटुकेत्यादि। कटुकादयः षट् गोमूत्रे क्वथिताः पेया एक एव योगः। स्वरस इत्यादि। दार्व्व्याः स्वरसः क्वथित एव पुनः पक्त्वा घनीकृतो रसक्रिया नाम भवति। सा रसक्रिया सक्षौद्रा मुखरोगाद्यपहा॥ १०५ ॥

रोगपीड़ाहरम्। पञ्चकोलेत्यादौ चूर्णसमुदायात् गुडो द्विगुणः। कर्कन्धूमात्रा इत्यष्टमाषकमानाः। केचित् रोध्रस्थाने लोहं पठन्ति। तथोक्तं हि सुश्रुते—'पाठां रसाञ्जनं व्योषं तेजोह्वात्रिफलाग्निकम्। गृहधूमयवक्षारं शस्तं चूर्णन्तु कालकमिति। वातपित्तकफापहा इति प्रत्येकम्। कालक-पीतक-मृद्वीकादयस्त्रयो योगास्त्रिदोषहराः। रसक्रियेति घनीभूतरसस्य संज्ञा॥ १००—१०५ ॥

तालुशोषे सतृष्णस्य सर्पिरौत्तरभक्तिकम्।
नावनं मधुराः स्निग्धाः शीताश्चैव रसा हिताः ॥ १०६ ॥
मुखपाके सिराकर्म्म शिरःकायविरेचनम्।
मूत्रतैलघृतक्षीर-क्षौद्रैश्च कवलग्रहाः ॥
सक्षौद्रपाठामृद्वीका-त्रिफलाजातिपल्लवाः।
कषायतिक्तक्वाथाश्च शीताः स्युर्मुखधावनाः ॥ १०७ ॥
तुलां खदिरसारस्य द्वितुलामरिमेदसः।
प्रक्षाल्य जर्ज्जरीकृत्य चतुर्द्रोणेऽम्भसः पचेत् ॥
द्रोणशेषं कषायञ्च पक्त्वा भूयः पचेच्छनैः।
ततस्तस्मिन् घनीभूते चूर्णीकृत्यावभागिकम् ॥

गङ्गाधरः—तालुशोष इत्यादि। औत्तरभक्तिकं सर्पिः पीत्वा भक्तं भुञ्जीत। एवं नावनं हितम्। मधुरस्निग्धशीता मांसरसा भोजने हिताः ॥ १०६ ॥

गङ्गाधरः—मुखपाक इत्यादि। सिराकर्म्म सिरावेधः। शिरोविरेचनम्, कायविरेचनञ्च द्विविधं वमनं विरेचनञ्च। गोमूत्रादीनामेकैकेन कवड़ग्रहश्च मुखपाके कार्य्यः। सक्षौद्रेत्यादि। जात्याः पल्लवाः पाठादयः कथिता मधुयुक्ता मुखधावनाः स्युस्तथा कषायतिक्तद्रव्याणां क्वाथाश्च शीता मुखधावनाः स्युः ॥ १०७ ॥

गङ्गाधरः—तुलामित्यादि। खदिरसारस्य श्वेतखदिरसारस्य तुलां न तु बब्बोलस्य। अरिमेदसो विट्खदिरस्य सारस्य द्वितुलाम्। तिस्रस्तुलास्त्रिषु द्रोणेषु अम्भसः पक्तव्याः स्युः 'तुलाद्रव्ये जलद्रोण' इत्युक्तेस्तत्राह चतुर्द्रोणेऽम्भसः पचेदिति। द्रोणशेषं तं कषायं पूत्वा भूयः शनैः पचेत्। घनीभूते तस्मिन्

चक्रपाणिः—तालुशोष इत्यादौ सतृष्णस्येतिपदेन तृष्णायुक्तस्य तालुशोष औत्तरभक्तिकमपि सर्पिःपानं न निषेधयति। तालुशोषे च तृष्णामूर्च्छापरीताश्च गर्भिण्यस्तालुशोषिण इत्यादिना यद्यपि स्नेहपानं निषिद्धम्, तथापीह औत्तरभक्तिकं सर्पिश्च विशेषविधानात् कर्त्तव्यमेव। सिराकर्म्मेति सिराव्यधनम्। तच्च सुश्रुतवचनात् तालुनि जिह्वायाञ्च कर्त्तव्यम् ॥ १०६। १०७ ॥

चक्रपाणिः—तुलामित्यादिना खदिरादिगुटिकामाह। द्वितुलामरिमेदसो विटखदिरस्य खदिर

चन्दनं पद्मकोशीरं मञ्जिष्ठाधातकीघनम्।
प्रपौण्डरीकं यष्ट्याह्वं त्वगेलापद्मकेशरम्॥
लाक्षारसाञ्जनं मांसी-त्रिफलालोध्रबालकम्।
रजन्यौ फलिनीमेलां समङ्गां कट्फलं वचाम्॥
यवासागुरुपत्तङ्ग-गैरिकाञ्जनमावपेत्।
लवङ्गजातीकक्कोल-जातीकोषान् पलोन्मितान्॥
कर्पूरकुडवञ्चापि क्षिपेत् शीतेऽवतारिते।
ततस्तु गुड़िकाः कार्य्याः शुष्काश्चास्येन धारयेत्॥
तैलञ्चानेन कल्केन कषायेण च साधयेत्।
दन्तानां चालनध्वंस-सौषिर्य्यक्रिमिरोगनुत्॥
मुखास्यपाकदौर्गन्ध्य-जाड्यारोचकनाशनम्।
स्रावोपलेपपैच्छिल्य-वैस्वर्य्यगलशोषनुत्॥
दन्तास्यगलरोगेषु सर्व्वेष्वेतत् परायणम्।
खदिरादिगुड़िकेयं तैलञ्च खदिरादिकम्॥ १०८॥

खदिरादिगुड़िका खदिरादितैलञ्च।

क्वाथ चन्दनादिकमक्षमात्रं चूर्णयित्वावपेत्। ततोऽवतार्य्य स्थापयेत् शीते सति लवङ्गादीनां प्रत्येकं पलं चूर्णं कर्पूरस्य कुड़वं पुनरावपेत्। ततो गुड़िकाः कार्य्याः शुष्काश्चास्येन धारयेदिति। खदिरगुड़िका। तैलञ्चेत्यादि। अनेन चन्दनाद्यञ्जनान्तेन कल्केन पादिकेन। खदिरविट्खदिरयोः सारस्य कषायेण चतुर्गुणेन तैलञ्च साधयेदिति कश्चिदाह। परिमाणमपि खदिरसारस्य तुला विट्खदिरसारस्य द्वितुलेति पूर्व्वोक्तं तुलात्रयं चतुर्द्रोणजले क्वाथयेत् पादशेषे तस्मिन् क्वाथे चतुर्गुणे तैलाढ़कम्, चन्दनादीनामञ्जनान्तानामक्षमात्रं प्रत्येकं कल्कं दत्त्वा पचेत्, लवङ्गादीनां पलमात्रं कर्पूरस्य कुड़वमानञ्च पूते शीते तत्र कल्क इत्याह। इति खदिरतैलम्। अनयोर्गुणानाह दन्तास्येत्यादि॥१०८॥

सारस्य तु तुला विभक्ता एव। पत्तङ्गं रक्तचन्दनम्। लवङ्गादीनाम् अत्र पलमानत्वम्। दन्तास्यगदरोगाः पृथक् शालाक्योक्ता ज्ञेयाः। परायणमिति परमयनं श्रेष्ठं भेषजमिति यावत्। इति मुखरोगचिकित्सा॥ १०८॥

अरुचौ कवलग्राहाः धूमाः समुखधावनाः ।
मनोज्ञमन्नपानञ्च हर्षणाश्वासनानि च ॥
कुष्ठसौवर्च्चलाजाजी-शर्करामरिचं विड़म् ।
धात्र्य लापद्मकोशीर-पिप्पलीचन्दनोतूपलम् ॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ।
आर्द्रदाड़िमनिर्य्यासश्चाजाजीशर्करायुतः ॥
सतैलमाक्षिका एते चत्वारः कवलग्रहाः ।
चतुरोऽरोचकान् हन्युर्वातादेरकजसर्व्वजान् ॥ १०६ ॥
कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाड़िमम् ।
सौवर्च्चलं गुड़ः क्षौद्रं सर्व्वारोचकनाशनम् ॥ ११० ॥
वस्तिः समीरणे पित्त विरेको वमनं कफे ।
कुर्य्याद् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ १११ ॥

गङ्गाधरः—अथारुचिचिकित्सितमाह—अरुचावित्यादि । कवड़ग्रहादयः कार्य्या मनोज्ञञ्चान्नपानं कार्य्यम् । कुष्ठेत्यादि । कुष्ठादिविड़ान्त एकः कवड़ग्रहः । धात्र्यादुत्पलान्तोऽपरः । लोध्रादियवाग्रजान्तस्तृतीयः । आर्द्रदाड़िमनिर्य्यासादिशर्करान्तश्चतुर्थः । चतुर्ष्वेव तैलमाक्षिके देये भवतः । चतुर इति यथाक्रमं वाताद्यरोचकान् ॥ १०९ ॥

गङ्गाधरः—कारवीत्यादि । कारवी कृष्णजीरकमजाजी जीरकम् । वृक्षाम्लं तिन्तिड़ीकम् । क्षौद्रान्तानि सर्व्वाणि समानि ॥ ११० ॥

गङ्गाधरः—वस्तिरित्यादि । मनोघ्नजेऽरोचके हृद्यान्यनुकूलानि कर्म्माणि ( इत्यरोचकचिकित्सा ) ॥ १११ ॥

चक्रपाणिः—अरोचकचिकित्सामाह—कुष्ठेत्यादिना । अर्द्धश्लोकोक्ताश्चत्वारो योगाः वातपित्तकफसन्निपातजेषु अरोचकेषु क्रमात् ज्ञेयाः ॥ १०९—१११ ॥

सर्पींष्युपरिभक्तानि स्वरभेदेऽनिलात्मके।
चतुष्प्रयोगैस्तैस्तैश्च बलारास्नामृताह्वयैः॥
बर्हितित्तिरिदक्षाणां पञ्चमूलीश्रृतान् रसान्।
मायूरक्षीरसर्पिर्वा पिबेत् त्र्यूषणमेव वा॥
पैत्तिके तु विरेकः स्यात् पयश्च मधुरैः श्रृतम्।
सर्पिर्गुड़ो घृतं तिक्तं जीवनीयं वृषस्य वा॥
कफजे स्वरभेदे तु तीक्ष्णं मूर्द्धविरेचनम्।
विरेको वमनं धूमो यवान्नकटुसेवनम्॥
भार्गीवचाभयाव्योष-क्षारमाक्षिकचित्रकान्।
लिह्यात् पिप्पलीपथ्ये वा तीक्ष्णं मद्यं पिबेच्च सः॥
रक्तजे स्वरभेदे तु संस्कृता जाङ्गला रसाः।
द्राक्षाविदारीक्षुरसाः सक्षौद्रघृतशर्कराः॥

गङ्गाधरः—मुखरोगविशेषत्वात् स्वरभेदरोगचिकित्सितमाह—सर्पींषी-त्यादि। अनिलात्मके स्वरभेदे उपरिभक्तानि सर्पींषि तथा बलारास्नामृताह्वयैस्तैस्तैः क्वाथचूर्णलेहकवडग्रहैश्चतुःप्रयोगै रुपाचरेदिति। बर्हीत्यादि। पञ्चमूलीक्वाथश्रृतान् बर्हिप्रभृतीनां मांसरसान् पिबेत्। मायूरसर्पिः क्षीरसर्पिर्वा पिबेदथवा त्र्यूषणं पिबेत्। पैत्तिक इत्यादि। मधुरैर्मधुरवर्गैः। सर्पिर्गुड़ इत्यादि। सर्पिर्गुड़ः क्षतरोगचिकित्सितोक्तः। तिक्तं घृतं जीवनीयं घृतं वृषस्य घृतम्। कफज इत्यादि। यवान्नकटुसेवनं यवान्नसेवनं कटुद्रव्यसेवनञ्च। भार्गीत्यादि। भार्ग्यादिचित्रकान्तं चूर्णीकृत्य मधुना लिह्यात्। अथवा पिप्पलीपथ्ये चूर्णीकृत्य पिबेत्। तीक्ष्णं वा मद्यं पिबेत्। रक्तज इत्यादि। संस्कृताः घृते सम्भृष्टा जाङ्गला रसाः एवं द्राक्षादिस्वरसाः प्रत्येकं क्षौद्रघृतशर्करा-

चक्रपाणिः—सर्पींष्युपरिभक्तानीत्यादिना स्वरभेदचिकित्सामाह। वातादिस्वरभेदलक्षणं यद्यपीह नोक्तम्, तथापि राजयक्ष्मचिकित्सोक्तमेव बोद्धव्यम्। यद्यपि तत्र चिकित्सोक्ता, तथापि इह स्वरभेदस्याधिकृतत्वात् पुनरप्युच्यते। चतुष्प्रयोगैरिति अभ्यङ्गगण्डूषलेहमस्तुप्रयोगैः। बलारास्नामृताह्वयैः वातव्याधौ वक्ष्यमाणैः। जीवनीयघृतं वातरक्ते वक्ष्यमाणम्। वृषघृतं रक्तपित्तचिकित्सोक्तम्।

यच्चोक्तं क्षयकासघ्नं तच्च सर्व्वं चिकित्सितम् ।
रक्तजस्वरभेदघ्नं सिराव्यधनमेव च ॥
सन्निपाते हिताः सर्व्वाः क्रिया न तु सिराव्यधः ।
इत्युक्तं स्वरभेदस्य समासेन चिकित्सितम् ॥ ११२ ॥
अथ वक्ष्ये समासेन कर्णरोगचिकित्सितम् ।
कर्णशूले तु वातघ्नी हिता पीनसवत् क्रिया ।
प्रदेहाः पूरणं नस्यं पाके स्रावे व्रणक्रिया ।
भोज्यानि च यथादोषं दद्यात् स्नेहांश्च पूरणान् ॥ ११३ ॥
बालमूलकशुण्ठानां क्षारो हिङ्गु सनागरम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्च्चलं यवक्षारः स्वर्जिकोद्भिदसैन्धवम् ।
भूर्ज्जग्रन्थिर्विड़ं मुस्तं मधुशुक्तं चतुर्गुणम् ॥

युक्ताः । यच्च क्षयकासघ्नमुक्तं तत् सर्व्वं रक्तजस्वरभेदघ्नं तथा सिराव्यधनमपि । सन्निपाते स्वरभेदे सर्व्वाः क्रियाः कार्य्या, न तु सिराव्यधः कार्य्य इति । ( स्वरभेदचिकित्सा ) ॥ ११२ ॥

गङ्गाधरः—इति मुखरोगचिकित्सितमुक्त्वा कर्णरोगचिकित्सामाह— कर्णशूल इत्यादि । वातपीनसे या वातघ्नी क्रियोक्ता सा कर्णशूले हिता । प्रदेहादिनस्यान्तञ्च वातघ्नं हितम् । कर्णस्य पाके स्रावे च व्रणवत् क्रिया कार्य्या । यथादोषं भोज्यानि च दद्यात् कर्णपूरणान् स्नेहांश्च दद्यात् ॥ ११३ ॥

गङ्गाधरः—पूरणस्नेहमाह—बालेत्यादि । बालमूलकं शुष्कीकृत्य दग्ध्वा क्षारः कार्य्यः स च हिङ्गु च नागरञ्च । स्वर्जिकाक्षार औद्भिदं लवणमुत्कारिका लवणम् । मुस्तान्तः कल्कः मधुशुक्तं मधुप्रधानं शुक्तं चतुर्गुणम्, मधुशुक्तं

रक्तजे स्वरभेदे च इति रक्तघ्नं स्वरभेदघ्नं चिकित्सितमिति सम्बन्धः । इति स्वरभेद-चिकित्सा ॥ ११२ ॥

चक्रपाणिः—बालमूलकशुण्ठीत्यत्र क्षारवत् तैलम् । मधुशुक्तं चतुर्गुणमिति मधुप्रधानं शुक्तं चतुर्गुणम् । शुक्तञ्च शुचौ भाण्डे द्रवनागरधान्ययुक्तं त्रिरात्रस्थं तत् शुक्तमुच्यते ।

मातुलुङ्गरसश्चैव कदल्या रस एव च।
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम्॥
वाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः।
पूरणादस्य तैलस्य क्रिमयः कर्णमाश्रिताः॥
क्षिप्रं प्रणाशं गच्छन्ति कृष्णात्रेयस्य शासनात्।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम्॥ ११४॥
हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम्।
कर्णशूले प्रधानन्तु पूरणं हितमुच्यते॥ ११५॥
देवदारुवचाशुण्ठी-शताह्वाकुष्ठसैन्धवैः।
तैलं सिद्धं वस्तमूत्रे कर्णशूलनिवारणम्॥ ११६॥
वराटकान् समाहृत्य दग्ध्वा मृद्भाजने शुभे।
तद्भस्म स्रावयित्वा तु गन्धतैलं विपाचयेत्॥

यथा—"जम्वीराणां फलरसः प्रस्थैकः कुड़वोन्मितम्। माक्षिकं तत्र दातव्यं पलैका पिप्पली मता। एतदेकीकृतं सर्व्वं मधुभाण्डे विनिक्षिपेत्। धान्यराशौ स्थितं मासं मधुशुक्तं तदुच्यते॥" मातुलुङ्गरसश्च तैलाच्चतुर्गुणः कदल्याः कन्दस्य रसश्च तैलाच्चतुर्गुणः, एभिस्तैलं विपक्तव्यम्। क्षारतैलम्॥ ११४॥

गङ्गाधरः—हिङ्ग्वित्यादि। हिङ्ग्वादित्रयं कल्कश्चतुर्गुणश्च जलम्॥ ११५॥

गङ्गाधरः—देवदार्व्वित्यादि। देवदार्व्वादिसैन्धवान्तः कल्कश्चतुर्गुणे वस्तमूत्रे सिद्धं तैलम्॥ ११६॥

गङ्गाधरः—वराटकानित्यादि। मृद्भाजने स्थापयित्वा वराटकान् दग्ध्वा तेषां भस्म चतुर्गुणे जले षड्गुणे वा एकविंशतिवारान् स्रावयित्वा चतुर्गुणे

मातुलुङ्गकदलीरसौ तैलसमौ। यथोक्तं जतूकर्णे—'मधुनः शुक्तग्रहणेनैव गृहीतत्वात् शुक्तञ्च मूलकशताह्वाद्विक्षारवचाचतुर्लवणकुष्ठदारुरसाञ्जननागरशोभाञ्जनहिङ्गुघनभूर्ज्जैः मातुलुङ्गकदलीरसैश्चतुर्गुणैः शुक्तैस्तैलं विपक्वं बाधिर्य्यशूलजन्तुघ्नम्॥ ११३—११६॥

तत् तैलं भिषजा योज्यं विधिना कर्णपूरणे ।
रसाञ्जनस्य शुण्ठ्याश्च कल्काभ्यां कर्णशूलनुत् ॥ ११७ ॥
मुखकर्णाक्षिरोगेषु यथोक्तं पीनसे विधिम् ।
कुर्य्याद् भिषक् समीक्ष्यादौ दोषकालबलाबलम् ॥ ११८ ॥
उत्पन्नमात्रे तरुणे नेत्ररोगे विड़ालकः ।
कार्य्यो दाहोपदेहाश्रु-शोफरागनिवारणः ॥
नागरं सैन्धवं सर्पिर्मण्डेन च रसक्रिया ।
निघृष्टं वातजे तद्वन्मधुसैन्धवगैरिकम् ॥
तथा सावरकं लोध्रं घृतभृष्टं विड़ालकम् ।
कार्य्या हरीतकी तद्वत् घृतभृष्टा रुजापहा ॥ ११९ ॥

तस्मिन् क्षारजले गन्धतैलं गान्धिकैः कृतं पुष्पवासितं तैलं रसाञ्जनशुण्ठ्योः कल्काभ्यां विपाचयेत् । गन्धतैलम् ॥ ११७ ॥

गङ्गाधरः—मुखेत्यादि । पीनसे यथोक्तं यस्य दोषस्य यो विधिरुक्तस्तं विधिं मुखादिरोगेषु दोषकालबलाबलमादौ समीक्ष्य भिषक् कुर्य्यात् । इति कर्णरोगचिकित्सा ॥ ११८ ॥

गङ्गाधरः—इति कर्णरोगचिकित्सितमुक्त्वा क्रमिकत्वादक्षिरोगचिकित्सितमाह—उत्पन्नमात्र इत्यादि । विड़ालकः "शालाक्याङ्गोऽक्ष्णोर्वहिर्लेपो विड़ालकसंज्ञः" । नागरमित्यादि । नागरचूर्ण यावत् तावच्च सैन्धवं यावता सर्पिर्मण्डेन द्रवीभूय निघृष्यते तावता निघृष्टं रसक्रिया वातजे नेत्ररोगे विड़ालकं दद्यादेवं मधु च सैन्धवञ्च गैरिकञ्च निघृष्टं रसक्रिया नेत्रे विड़ालकं दद्यात् । तथा सावरकं पट्टिकाख्यं श्वेतलोध्रं घृतभृष्टं विड़ालकं दद्यात् । तथा हरीतकी घृते भृष्टा कार्य्या विड़ालकं दद्यात् ॥ ११९ ॥

चक्रपाणिः—वराटकानित्यत्र तद्भस्मेति वराटकदाहभस्म गालयेत् । गन्धतैलमिति सुगन्धद्रव्यकल्कयुक्तं तैलम्, किंवा गन्धद्रव्याधिवासितं तैलम् ॥११७ । ११८॥ इति कर्णरोगचिकित्सा ।

चक्रपाणिः—उत्पन्नमात्रे इत्यादिना नेत्ररोगचिकित्सितमाह । विडालकः नेत्रबहिर्लेपः शालाक्ये उच्यते । निघृष्टमित्यादौ तद्वदिति रसक्रियावदित्यर्थः । हरीतत्वात् हरीतकीघृतयुक्तो

पैत्तिके चन्दनानन्ता-मञ्जिष्ठाभिर्विड़ालकः।
कार्य्यः पद्मकयष्ट्याह्व-मांसीकालीयकैस्तथा॥
रोचनामुस्तलवण-गैरिकैश्च रसक्रिया।
कफे कार्य्यस्तथा चौद्रं प्रियङ्गुः समनःशिला॥
सन्निपाते तु सर्व्वैः स्याद् वहिरक्ष्णोः प्रलेपनम्।
प्रक्षाल्य स्पृशता कार्य्यं सम्यङ् नेत्राञ्जनं त्र्यहात्॥ १२०॥
आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितम्।
कोष्णः सैरण्डबृहती-तर्कारीमधुशिग्रुभिः॥
द्राक्षादार्व्वीसमञ्जिष्ठ-लाक्षाद्धिमधुकोत्पलैः।
क्वाथः सशर्करः शीतः पूरणं रक्तपित्तनुत्॥

गङ्गाधरः—अथ पैत्ते नेत्ररोग आह—पैत्तिके इत्यादि। जलन पिष्टाभिश्चन्दनादिभिर्विड़ालकः पैत्तिकेऽक्षिरोगे कार्य्यः। तथा पद्मकादिभिर्विड़ालकः कार्य्यः। तथा रोचनादिभिस्तु रसक्रिया कार्य्या। द्रवेण घृष्ट्वा पक्त्वा घनीकृता रसक्रियोच्यते। अथ कफजेऽक्षिरोगे आह—कफ इत्यादि। प्रियङ्गुमनःशिले द्वे समे मधुना पिष्ट्वा विड़ालकः कार्य्यः। सन्निपाते तु नेत्ररोगे सर्व्वैर्वातादिप्रत्येकदोषोक्तैर्मिलितैरक्ष्णोर्वहिः प्रलेपनं स्यात्। प्रक्षाल्येत्यादि। एवं वहिरालेपनं त्र्यहं दत्त्वा त्र्यहात् परं प्रक्षाल्य चक्षुषी सम्यक् स्पृशता नेत्राञ्जनं कार्य्यम्॥ १२०॥

गङ्गाधरः—तदञ्जनमाह—आश्च्योतनमित्यादि। मारुतजे सैरण्डादिभिर्बिल्वादिभिः पञ्चमूलैः कृतः क्वाथः कोष्ण आश्च्योतनं चक्षुःपूरणं हितम्। तर्कारी जयन्ती। द्राक्षेत्यादि। द्राक्षादिभिः कृतः क्वाथः सशर्करः शीतश्चक्षुषोः

विड़ालकः। सन्निपाते तु सर्व्वैरिति प्रत्येकमुक्तविड़ालकद्रव्यैः प्रलेपनं कार्य्यमित्यर्थः। नेत्राञ्जनं त्र्यहादित्यत्र प्रायोऽक्षिरोगाणां त्र्यहेण पाकात् त्र्यहादित्युक्तम्। पाकलक्षणं तन्त्रान्तरे—प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता। मन्दवेदनता कण्डूः पक्वाक्षिगदलक्षणम्॥११९।१२०॥

नागरत्रिफलानिम्ब-वासालोध्ररसः कफे ।
कोष्णमाश्च्योतनं मिश्रैर्भेषजैः सान्निपातिके ॥ १२१ ॥
बृहत्येरण्डमूलत्वक् शिग्रोर्मूलं ससैन्धवम् ।
अजाक्षीरेण पिष्टा स्याद् वर्त्तिर्वाताक्षिरोगनुत् ॥
सुमनःक्षारकं शङ्खं त्रिफलां मधुकं बलाम् ।
पित्तरक्तापहा वर्त्तिः पिष्टा दिव्येन वारिणा ॥
सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः ।
फेनः शैलेयकं सर्ज्जो वर्त्तिः श्लेष्माक्षिरोगनुत् ॥
अमृताह्वा बिसं बिल्वं पटोलं छागलं शकृत् ।
प्रपौण्डरीकं यष्ट्याह्वं दार्व्वी कालानुसारिवा ॥
सुधौतं जर्ज्जरीकृत्य हृत्वा चार्द्धपलांशिकान् ।
कर्षश्च शुक्लमरिचाज्जातीपुष्पात् नवात् पलम् ।
चूर्णं कृत्वा त्रिदोषघ्नी वर्त्तिर्दृष्टिप्रसादनी ॥ १२२ ॥

पूरणमाश्च्योतनं रक्तपित्तनुत् । द्विमधुकम् अनूपजं ( जलजं ) स्थलजञ्च । नागरे- त्यादि । नागरादीनां रसः क्वाथः कोष्णं कफे आश्च्योतनं चक्षुषोः पूरणमिति । सान्निपातिकेऽक्षिरोगे मिश्रैरेभिः प्रत्येकदोषोक्तैर्भेषजैराश्च्योतनं कार्य्यम्॥१२१

गङ्गाधरः—अञ्जनमाह—बृहतीत्यादि । बृहत्येरण्डशिग्रूणां मूलत्वचः सैन्धवञ्च अजाक्षीरेण पिष्ट्वा वर्त्तिः कार्य्या वाताक्षिरोगनुद् भवत्यञ्जनेन । सुमन इत्यादि । सुमना मालती तस्याः क्षारं शङ्खं शङ्खनाभिः । सुमनःक्षारकादीनि दिव्यवारिणा पिष्ट्वा वर्त्तिः कार्य्या पित्तरक्ताक्षिरोगापहा । सैन्धवमित्यादि । समुद्रजः फेनः समुद्रफेनः शैलेयकं शैलजं सर्ज्जो धूनकः, एभिर्वर्त्तिः कार्य्या श्लेष्माक्षिरोगनुदञ्जनेन । अमृतेत्यादि । अमृताह्वा गुड़ूची बिसं मृणालं छागलं शकृत् छागपुरीषं कालानुसारिवा अनन्तमूलम् । सर्व्वं सुधौतं कृत्वा

चक्रपाणिः—आश्च्योतनमक्षिसेकः । सुमनसः क्षारं जातीसुमनःक्षारः । श्वेतमरिचं

* श्लक्ष्णं पिष्ट्वा तु भिषजा वर्त्तिः कार्य्या प्रयत्नतः । प्रयोक्तव्या त्रिदोषघ्नी वर्त्तिर्दृष्टिप्रसादनी ॥ इति पाठान्तरम् ।

शङ्खविद्रुमवैदूर्य्य-लोहताम्रप्लवास्थिभिः ।
स्रोतोजश्वेतमरिचैर्वर्त्तिः सर्व्वाक्षिरोगनुत् ॥
शाणार्द्धं मरिचाद्द्वौ च पिप्पल्यर्णवफेनयोः ।
शाणार्द्धं सैन्धवाच्छाणं कृत्वा सौवीरकाञ्जनात् ॥
पिष्टं सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम् ।
काचकण्डूकफार्त्तानां मलानाञ्च विशोधनम् ॥
वस्तमूत्रे त्र्यहं स्थाप्यं विड्चूर्णं सुभावितम् ।
चूर्णाञ्जनं हि तैमिर्य्य-क्रिमिपिल्लमलापहम् ॥
सौवीरमञ्जनं तुल्यं ताप्यो धातुर्मनःशिला ।
चक्षुष्या मधुकं लोह-मणयः पौष्पमञ्जनम् ॥
सैन्धवं शौकरी दंष्ट्रा कण्टकं चाञ्जनं शुभम् ।
तिमिरादिषु चूर्णं वा वर्त्तिर्वेयमनुत्तमा ॥

जर्ज्जरीकृत्य कुट्टयित्वा प्रत्येकमर्द्धपलांशिकान् हृत्वा शुक्रमरिचात् शोभाञ्जन-वीजात् कर्षञ्च हृत्वा नवात् नूतनाज्जातिपुष्पात् पलं हृत्वा चूर्णं कृत्वा वर्त्तिः कार्य्या त्रिदोषघ्नी ॥ १२२ ॥

गङ्गाधरः—शङ्खेत्यादि । शङ्खः प्रसिद्धः शङ्खनाभिः । लोहरजस्ताम्र-रजश्चातिसूक्ष्मं प्लवो भेकस्तस्यास्थि । स्रोतोजो रसाञ्जनं श्वेतमरिचं शोभाञ्जन-वीजम् । शाणार्द्धमित्यादि । मरिचाच्छाणार्द्धं पिप्पलीसमुद्रफेनयोर्द्वौ शाणौ मिलितयोः प्रत्येकमेकशाणः, सैन्धवाच्छाणार्द्धं सौवीराञ्जनाच्छाणं हृत्वा चित्रायां नक्षत्रे सुसूक्ष्मं सर्व्वं पिष्टमिदं चूर्णाञ्जनं शुभम् । चूर्णाञ्जनम् । वस्तमूत्र-इत्यादि । विड्लवणचूर्णं छागमूत्रे त्र्यहं स्थाप्यं सुभावितं तच्चूर्णाञ्जनं तैमिर्य्याद्यपहम् । चूर्णाञ्जनम् । सौवीरमित्यादि । सौवीरं सुवीरा यमुना तत्र जातमञ्जनं ताप्यं स्वर्णमाक्षिकं धातुः मधुकं लोहमणयः अयस्कान्त-मणयः पौष्पमञ्जनं पुष्पकाशीशम्, एते सर्व्वे चक्षुष्याः । सैन्धवमित्यादि ।

शोभाञ्जनवीजं पुष्पं पुष्पाञ्जनं प्लवः पक्षिविशेषः द्वौ च पिप्पल्यर्णवफेनौ शाणावित्यर्थः । चित्रायाम्

कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं सिता।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति।
तिमिरं पटलं काचं मलञ्चाशु सुखावती॥ १२३॥

सुखावती वर्त्तिः।

त्रिफला कुक्कुटाण्डत्वक् काशीशमयसो रजः।
नीलोत्पलं विडङ्गानि फेनश्च सरितां पतेः॥
आजेन पयसा पिष्ट्वा भावयेत् ताम्रभाजने।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत्॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः।
नेत्राञ्जनेन विधिना भिषजा संप्रयोजिता॥ १२४॥

दृष्टिप्रदा वर्त्तिः।

वदने कृष्णसर्पस्य निहितं मासमञ्जनम्।
ततस्तस्मात् समुद्धृत्य सुशुष्कं चूर्णयेद् बुधः॥

शौकरी दंष्ट्रा शूकरस्य दंष्ट्रा। कण्टकं शाल्मल्याः, तिमिरादिषु एतच्चूर्णं शुभमञ्जनमेवञ्चैषां वर्त्तिरुत्तममञ्जनम्। कतकस्येत्यादि। कतकं जलशोधनफलं निर्म्मलीति लोके। शङ्खः शङ्खनाभिः। फेनः समुद्रफेनः। कतकफलादीनि जलेन पिष्ट्वा वर्त्तिः कार्य्या। सुखावती वर्त्तिः॥ १२३॥

गङ्गाधरः—त्रिफलेत्यादि। काशीशं धातुकाशीशं सरितां पतेः फेनः समुद्रफेनः। आजेनैव पयसा सप्तरात्रं ताम्रभाजने भावयेत्। भूयश्चाजेन क्षीरेण पिष्ट्वा वर्त्तयेत्। दृष्टिप्रदा वर्त्तिः॥ १२४॥

गङ्गाधरः—वदन इत्यादि। कृष्णसर्पस्य वदने रसाञ्जनं मासमेकं निहितं

सुमनःक्षारकैः शुष्कैरर्द्धांशैः सैन्धवेन च।
एतन्नेत्राञ्जनं कार्य्यं तिमिरघ्नमनुत्तमम्॥
पिप्पल्यः किंशुकरसो वसा सर्पस्य सैन्धवम्।
घृतञ्च जीर्णं सर्व्वाक्षि-रोगघ्नी स्याद्रसक्रिया॥
शस्ता सर्व्वाक्षिरोगेषु काचार्व्वुदमलेषु च।
धात्रीरसाञ्जनक्षौद्र-सर्पिर्भिस्तु रसक्रिया।
पित्तरक्ताक्षिरोगघ्नो तैमिर्य्यपटलापहा॥ १२५॥
खालित्ये पलिते वल्यां हरिलोम्नि च साधितुम्।
तैलैर्नस्यैः शिरोवक्त्र-प्रदेहैश्चाप्युपाचरेत्॥ १२६॥
सिद्धं विदारिगन्धाद्यैर्जीवनीयैरथापि वा।
नस्यं स्यादणुतैलं वा खालित्यपलितापहम्॥

स्थापयेत्। ततो मासादूर्द्ध्वं समुद्धृत्य सुशुष्कं चूर्णयेत्। तस्य रसाञ्जनचूर्णस्यार्द्धांशैर्मालतीपुष्पस्य क्षारः सैन्धवेन चार्द्धांशेन मिश्रितमेतन्नेत्राञ्जनं कार्य्यम्। पिप्पल्य इत्यादि। पलाशस्य मूलच्छेदोद्भवो रसः सर्पस्य वसा स्नेहः जीर्णं पुराणं घृतं सर्व्वमेकीकृत्य घृष्टं रसक्रियानाम नेत्राञ्जनम्। धात्रीत्यादि। धात्र्या आमलक्या रसस्तत्र रसाञ्जनक्षौद्रसर्पींषि दत्त्वा घृष्टं रसक्रियानाम नेत्राञ्जनम्। इति नेत्ररोगचिकित्सा॥ १२५॥

गङ्गाधरः—इति नेत्ररोगचिकित्सितमुक्त्वा खालित्यादिचिकित्सितमाह। खालित्ये पलिते वल्यां श्लथचर्म्मणि हरिलोम्नि च साधितुं खालित्यादिसाधनार्थं तैलादिभिस्तं तं पुरुषमुपाचरेत्॥ १२६॥

गङ्गाधरः—तत्रादौ तैलमाह—सिद्धमित्यादि। विदारिगन्धादिभिः शालपर्ण्यादिभिः पञ्चमूलैः कल्कैश्चतुर्गुणजले सिद्धं तैलमथवा जीवनीयैर्दशभिः कल्कैश्चतुर्गुणजले सिद्धं तैलं तस्याशीतीयोक्तमणुतैलं वा खालित्यपलितापहं

इति चिताक्षतले। ताप्यो धातुः तापीजदीभवः। चक्षुष्या वनकुलत्थिका। पौष्पमञ्जनं पुष्पाञ्जनम्। अभिन्नचक्षप इति अभिन्नपाकस्य॥ १२१—१२५॥ इति नेत्ररोगचिकित्सा।

चक्रपाणिः—खालित्ये इत्यादिना खालित्यादिचिकित्सितमाह। हरिल्लोम्नीति कपिललोम्नि।

लाक्षाकालारसालोह-वराभृङ्गरजोरसात् । *
प्रस्थस्तु कुड़वस्तैलात् यष्ट्याह्वप(फ)लकल्कितः ॥
सिद्धः शिलासमे पात्रे मेषशृङ्गादिषु स्थितः ।
नस्यं स्याद् भिषजा सम्यग् योजितं पलितापहम् ॥१२७॥
भिषजा क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ ।
उत्पाट्य पलिते देयौ तावुभौ पलितापहौ ॥ १२८ ॥
क्षीरात् समार्कवरसात् द्विप्रस्थं मधुकोत्पले ।
विपचेत् तैलकुड़वं तन्नस्यं पलितापहम् ॥ १२६ ॥
आदित्यवन्यमूलानि कृष्णसैरीयकस्य च ।
सुरसस्य च पत्राणि पत्रं कृष्णशणस्य च ॥
मार्कवः काकमाची च मधुकं देवदारु च ।
पृथग् दशपलांशानि पिप्पली त्रिफलाञ्जनम् ॥

नस्यं भवति। लाक्षत्यादि। लाक्षा च कालारसा शिह्लकरसः लोहमगुरु वरा त्रिफला भृङ्गराजरसः। एषां प्रत्येकं रसप्रस्थः तैलात् कुड़वः यष्ट्याह्वस्य प(फ)लं पादिकः कल्कः। पत्तया सिद्धस्ततृतैलकुड़वः शिलासमे दृढ़े पात्रे मेषमहिषशृङ्गादिषु वा स्थितः। तत् तैलं खालित्यादिषु नस्यं स्यात् ॥१२७॥

गङ्गाधरः—भिषजेत्यादि। अथवा दुग्धिकाकरवीरौ क्षीरपिष्टौ पलितं शुक्लकेशं सञ्चमुत्पाट्य तस्मिन् पलिते प्रलेपौ देयौ ॥ १२८ ॥

गङ्गाधरः—क्षीरादित्यादि। क्षीरस्य प्रस्थं मार्कवस्य भृङ्गराजस्य रस-प्रस्थमिति द्विप्रस्थं यष्टीमधुनीलोत्पलञ्च द्वे कल्के पादिके तैलकुड़वं विपचेत् तत् तैलं पलितापहं नस्यम् ॥ १२९ ॥

गङ्गाधरः—आदित्येत्यादि। आदित्यवन्यं सूर्य्यभक्ता तस्या मूलं कृष्णसैरीयकस्य नीलझिण्टीमूलं सुरसस्य कृष्णस्यैव कृष्णतुलसीपत्राणि कृष्णपुष्पशणस्य च पत्रम्। मार्कवः भृङ्गराजः। पृथगेषां दश दश पलानि।

शिलासमे पात्रे इति अश्ममये पात्रे। आदित्यवल्ल्या मूलानीति आदित्यवल्ली सूर्य्यभक्ता। कृष्ण-

* क्षीरात् सहचरात् भृङ्गराजाच्च सुरसात् रसात् इति पाठान्तरम्।

प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम्।
आम्रास्थि कर्द्दमः कृष्णो मृणालं रक्तचन्दनम्॥
नीली भल्लातकास्थीनि काशीशं मदयन्तिका।
सोमराज्यसनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ॥
❀ पुष्कराज्र्जनकाश्मर्य्याण्याम्रजम्बूफलानि च।
पृथक् पञ्चपलैर्भागैः सुपिष्टैराढ़कं पचेत्॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम्।
कुर्य्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः॥
लौहपात्रे ततः पूतं संशुद्धमुपयाजयेत्।
पाने नस्तःक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्व्वरोगनुत्।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम्॥ १३०॥

महानीलतैलम्।

पिप्पल्यादीनां पृथक् पञ्च पलानि। पिष्टैरेतः कल्कैर्वैभीतकस्य तैलस्याढकं षोड़शशरावं तच्चतुर्गुणं धात्रीरसं लौहपात्र पचेत्। अथवा यावत् तद्रसः शुष्कः स्यात् तावदादित्यकिरणे लौहपात्रे स्थापयित्वा आदित्यपाकं कुर्य्यात्, ततः पूतं वस्त्रपूतं तैलं संशुद्धं केवलमुपयोजयेत् पानादिषु। अत्राञ्जनं रसाञ्जनं कृष्णागुरु च नीलोत्पलञ्च। आम्रास्थिमध्यं कृष्णवर्णः कर्द्दमः पङ्कः। नीली नीलिनी-पत्रं भल्लातकस्यास्थीनि काशीशं हिराकस् इति लोके। मदयन्तिका मल्लिका। असनः पीतशालः। कृष्णः पिण्डीतो मदनफलं कृष्णश्च चित्रकः। पुष्करं पद्मपुष्पं आम्रजम्बूफलानि चामानि। इति महानीलतैलम्॥ १३०॥

सरीयकः कृष्णा झिण्टी। सोमराजी। शस्त्रं कृष्णं लोहम्। कृष्णपिण्डितचित्रकाविति कृष्णमदन-कृष्णचित्रकौ। आदित्यपाकमिति आदित्यरश्मिसम्बन्धादेव पक्कम्। अत्र भागैरिति बहुवचनात् पृथग्भागे सिद्धेऽपि पृथगितिपदं सिद्धस्यापि त्रिफलापृथग्भागस्य द्योतनार्थं कल्क-भूयस्त्वात्॥ १२६—१३०॥

❀ पुष्पाण्यर्ज्जुनकाश्मर्य्योरित्यन्यः पाठः

प्रपौण्डरीकमधुक-पिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुड़वो द्विगुणामलकीरसः ॥
सिद्धः स प्रतिमर्षः स्यात् सर्व्वशीर्षगदापहः ।
पलितघ्नो विशेषेण कृष्णात्रेयेण भाषितः ॥ १३१ ॥
क्षीरं पियालं यष्ट्याह्वं जीवकाद्यो गणस्तिलाः ।
कृष्णा * वक्तप्रलेपः स त्वचि रोमवलोहितः ॥
तिलाः सामलकाश्चैव किञ्जल्को मधुकं मधु ।
रञ्जयेद् बृंहयेच्चैतत् केशान् मूर्द्धप्रलेपनात् ॥
पचेत् सैन्धवयुक्ताम्लैरयश्चूर्णं सतण्डुलम् ।
तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशि ॥
तत् प्रातस्त्रिफलाधौतं स्यात् कृष्णस्निग्धमूर्द्धजम् ।
अयश्चूर्णोऽम्लपिष्टश्च रागः सत्रिफलो वरः ॥ १३२ ॥

गङ्गाधरः—प्रपौण्डरीकेत्यादि। प्रपौण्डरीकादिभिः प्रत्येकं कार्षिकैः कल्कः ॥ १३१ ॥

गङ्गाधरः—क्षीरमित्यादि। जीवकाद्यो गणो जीवनीयदशकः। कृष्णास्तिलाः स एष वक्तप्रलेपः। तिला इत्यादि। कृष्णास्तिला आमलकफलानि किञ्जल्कः पद्मस्य मधुकं मधु चैतत् सर्व्वं पिष्ट्वा मूर्द्ध्नि प्रलेपनात् केशान् रञ्जयेत् बृंहयेच्च। पचेदित्यादि। सैन्धवं चाम्लद्रवश्चायसश्चूर्णश्च तण्डुलश्च पचेत्। अम्लद्रव्यद्रवं पाकोपयुक्तं देयम्। प्रलेपयोग्यमवतार्य्यम्। तेन प्रलेपेन अस्निग्धं रूक्षं तैलादिवर्ज्जितं शिर आलिप्तं निशि चोषितं प्रातःकाले त्रिफलाक्वाथेन धौतं तत्र कृष्णं स्निग्धश्च मूर्द्धजं स्यात्। अयश्चूर्ण इत्यादि। अम्लद्रवद्रव्यपिष्ट एवायसश्चूर्णस्त्रिफलासहितः प्रलेपः वरो राग उत्तमः केशरञ्जनमिति ॥ १३२ ॥

चक्रपाणिः—सामलका इत्यादियोगाः केशरञ्जकाः। पचेत् सैन्धवेत्यादौ सैन्धवायश्चूर्ण-

* वक्त्रे प्रलेपः स्यात् हरिलोमनिवारणः इति तथा यष्ट्याह्वतिलकिञ्जल्क-क्षौद्रमामलकानि च इति च पाठान्तरं क्वचिद् दृश्यते ।

कुर्य्याच्छेषेषु रोगेषु क्रियां स्वां स्वाच्चिकित्सितात्।
शेषेष्वादौ च निर्द्दिष्टा सिद्धौ चान्या प्रवक्ष्यते॥ १३३॥

तत्र श्लोकाः।

वातपित्तकफा नृणां वस्तिहृन्मूर्द्धसंश्रयाः।
तस्मात् तत्स्थानसामीप्यात् हर्त्तव्या वमनादिभिः॥
अध्यात्मलोको वातादैर्लोको वातरवीन्दुभिः।
पीड्यते धार्य्यते चापि विकृताविकृतैस्तथा॥
विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्।
दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव॥ १३४॥

गङ्गाधरः—उपसंहरति। कुर्य्यादित्यादि। शेषेषु रोगेषु स्वात् चिकित्सितात् स्वां क्रियां कुर्य्यात्। शेषेषु रोगेष्वादौ खल्वितः पूर्व्वं क्रिया निर्द्दिष्टा, सिद्धौ सिद्धिस्थाने चान्या क्रिया प्रवक्ष्यते इति॥ १३३॥

गङ्गाधरः— श्लोका इत्यादि। वातेत्यादि। नृणां वस्त्यादिसंश्रया वातादयस्तद्वस्त्यादिस्थानसामीप्याद् वमनादिभिर्हर्त्तव्याः। अध्यात्मेत्यादि। अध्यात्मलोक आत्मानमधिकृत्य लोक एकैकः प्राणी वाताद्यैर्विकृताविकृतैः पीड्यते धार्य्यते च तथा, यथा वातरवीन्दुभिर्विकृताविकृतैरयं बाह्यो लोकः पीड्यते धार्य्यते च। ननु तर्हि शारीरा वातादयो विकृतिमापन्ना वातरवीन्दव इव लोकं प्राणिनं पीड़यन्तु अविकृतास्तु धारयन्तु, ते हि परस्परं विरुद्धगुणाः परस्परं कथं न पीड़यन्तीत्याशङ्कायामविकृता विकृताश्च दोषा यथा न पीड़यन्ति वातरवीन्दव इव तथा उच्यते। विरुद्धैरित्यादि।

तण्डुलानां समत्वं सिद्धमिति। शेषेषु रोगेष्विति श्वासकासज्वररक्तपित्तशोषेषु पीनसोपद्रवतयोक्तेषु। शेषेषु रोगेष्वित्यादौ शेषशब्दनिर्द्देशेन अनुक्तत्रिमर्म्मजरोगग्रहणम्। आदौ निर्द्दिष्टा इति सामान्यादिहैव त्रिमर्म्मजरोगादिष्टा चिकित्सा ज्ञेया। सिद्धौ चान्या प्रवक्ष्यते इति त्रिमर्म्मजानां सिद्धौ वक्ष्यते॥ १३१—१३३॥

चक्रपाणिः—उक्तानुक्तचिकित्सार्थमाह—वातपित्तकफा इत्यादिषु वमनादीनां कर्म्मणां मध्ये यस्य कर्म्मणः समीपदोषहरणसामर्थ्यं भवति, तेन कर्म्मणा हर्त्तव्येति। वातादीनामेव विकृताविकृतानां देहपीड़कत्वमाह—अध्यात्मेत्यादि। अध्यात्मलोकश्चेतनलोकः। लोक इति जगत्। अत्र दृष्टान्ते इन्दुस्थानीयः श्लेष्मा रविस्थानीयं पित्तम्, विकृतैः पीड्यते अविकृतैर्धार्य्यते इति व्यवस्था। दोषाणां यस्य गुणविरोधात् सम्भूय कार्य्यकरणे यथा विरोधो न भवति तदाह—विरुद्धैरपीति। परस्परविरुद्धैरपि यथा श्लेष्मणः स्नेहपैच्छिल्यगौरवादीनां वातगुणै रौक्ष्य-

एते वातपित्तकफा विरुद्धैरपि गुणैर्दोषा अविकृताः शरीरधातून् न पीड़यन्तो धारयन्ति तत्र परस्परं नोपघ्नन्ति। कस्मात्? सहजसात्म्यत्वात् सहजतया सात्म्यत्वात्। यावन्तो भावाः शरीरे जायमाने सहैकत्र जायन्ते केचित् तुल्यगुणाः केचिद् विरुद्धगुणाः सर्व्व एव ते सात्म्या आत्मना सहैकीभावमापन्नाः। शरीरारम्भे ह्यारम्भका विरोधिगुणैर्विरोधमावहन्तो यो यस्य यावद् ह्रासं कर्त्तुं शक्तस्तावद् ह्रासं कुर्व्वन्नेव शारीरतत्तद्वस्तुरूपेण निष्पद्यते सहात्मीभावश्चापद्यते विरोधश्च नावहतीति। स्थितिकाले निदानविशेषैः प्रकुपितास्तु शरीरधातून् दूषयन्त एव पीड़यन्ति न परस्परमुपघ्नन्ति सहजसात्म्यत्वान्मरणकाले तु घ्नन्त एव पीड़यन्तीति। अध्यात्मलोकस्थितिकाले वातादयो विरुद्धैरपि गुणैर्दोषा अकुपिताः परस्परं नोपघातकाः। सहजसात्म्यत्वात् शरीरधातुधारकतया त्वविकृतभूतप्रकृतिरूपेण शरीरेण सहजाता एवैकात्मीभावात् शारीरधात्वपीड़कत्वम्। परस्परं नोपघ्नन्तीति परस्परोपघातकत्वाभावस्तु साध्यते तत्र हेतुः सहजसात्म्यत्वादिति। सहजसात्म्यत्वञ्च जायमानानां शरीरधातुधारकतया दोषा दोषानुशयिप्रकृतिरूपेण शरीरेण सहजाततया त्वात्मना सहैकीभूतत्त्वं न त्वघातकत्वमतो न साध्याविशिष्टत्वम्। न ह्यनुपघातकत्वमबाधकत्वं सहजसात्म्यत्वञ्चाबाधकत्वमिति। यथा घोरं विषमहीन् नोपहन्ति। यथा च शरीरेण सहजाततया विषमहीनां सात्म्यं तथा वातादयो देहेन सह जाततया सात्म्यास्तस्मात् परस्परं नोपघ्नन्तीति। निदानविशेषैस्तु प्रकुपिता वातादयः ज्वरादिषु व्याधिषु रसरक्तादीन् दूषयन्त एव ज्वरादिना प्राणिनः पीड़यन्ति। विशोषयेद् वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा। यदा तदाश्मर्य्युपजायते त्विति मूत्रपित्तादिविशोषणेन दूषयन्नेव वायुः अश्मर्य्युपजननेन पीड़यति न हन्ति स्थितिकाले असाध्यतायां मरणकाले हन्ति च। तथा च। सहजत्वात् सात्म्यत्वाच्चेत्येवं न हेतुद्वयम्। रसरक्तादयो हि यथा सहजास्तथा वातादयोऽपि सहजा यथा च वातादयः सात्म्याः परस्परं तथा वातादेरपि रसरक्तादयः सात्म्या इति रसरक्ताद्युपघातकत्वं वाताद्यनुपघातकत्वं नोपपद्यत इति। तत्र दृष्टान्तः। घोरमित्यादि। यथा घोरं विषमहीन् न हन्ति सहजसात्म्यत्वात्। विषं हि शरीरे जायमाने

लाघवादिभिः विपरीतानाञ्च परस्परोपघातकत्वं यद् दृष्टं तदिह दोषसंसर्गे न भवति। कुतो न घ्नन्तीति? आह—सहजसात्म्यत्वादिति। स्वाभाविकसात्म्यभावोऽनुपघातकत्वम्। अयञ्च स्वभावः कर्म्मजन्यो वा भवतु उभयथाप्यचिन्त्य एव। नात्र युक्तिबाधा भवति तेन परस्परगुणोपघात-

भवति चात्र।

त्रिमर्म्मजानां रोगाणां निदानाकृतिभेषजम्।
विस्तरेण पृथग् दिष्टं त्रिमर्म्मीयचिकित्सितम्॥ १३५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थाने त्रिमर्म्मीयचिकित्सितं नाम
षड़्विंशोऽध्यायः॥ २६॥

तैरेवाङ्गः सह जायते प्राणहरमप्यन्येषां सहजतया सर्पस्य सात्म्यं सहात्मनेकीभूतं तथा वातादयस्तस्मात् स्वास्थ्यावस्थाविषयमिदमुक्तं न तु कुपितावस्थवातादिविषय इति॥ १३४॥

गङ्गाधरः—अध्यायार्थमाह—भवति चात्र। त्रिमर्म्मजानामित्यादि॥१३५॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
चिकित्सिते त्रिमर्म्मीये षड़्विंशेऽध्याय एव च। वैद्यगङ्गाधरकृते जल्पकल्पतरौ पुनः। चिकित्सितस्थानजल्पे षष्ठस्कन्धे चिकित्सिते। त्रिमर्म्मीयजल्पो नाम शाखेयं षड़्विंशिका॥ २६॥ शालाक्याङ्गं समाप्तम्।

व्यभिचारः चन्द्रिकाकृतः सुश्रुते प्रपञ्चितः स न भवति। विरुद्धस्याप्यनुपघाते दृष्टान्तमाह—घोरं विषमहीनिव॥ १३४॥

चक्रपाणिः—त्रिमर्म्मजानामिति संग्रहो व्यक्तः॥ १३५॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां त्रिमर्म्मीयचिकित्सितं
नाम षड़्विंशोऽध्यायः॥ २६॥

## सप्तविंशोऽध्यायः ।

अथात ऊरुस्तम्भचिकित्सितं व्याख्यास्यामः,
इति ह स्माह भगवानात्रेयः ॥ १ ॥

श्रिया परमया ब्राह्म्या परया च तपःश्रिया ।
अहीनपूर्व्वं चन्द्रार्कादिभ्यो मेरुमिवाचलम् ॥
धीधृतिस्मृतिविज्ञान-ज्ञानकीर्त्तिक्षमालयम् ।
अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥
भगवन् पञ्चकर्म्माणि निर्द्दिष्टानि पृथक् त्वया ।
निर्द्दिष्टान्यामयानां हि सर्व्वेषामेव भेषजम् ॥
दोषजोऽस्त्यामयः कश्चिद् यस्यैतानि भिषग्वर ।
न स्युः शक्तानि शमने साध्यस्य क्रियया सतः ॥
अस्त्यूरुस्तम्भ इत्युक्तो गुरुणा तस्य कारणम् ।
सलिङ्गभेषजं भूयः पृष्टस्तेनाब्रवीद् गुरुः ॥ २ ॥

गङ्गाधरः—अथोद्दिष्टानुक्रमादूरुस्तम्भचिकित्सितमाह—अथेत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—श्रियेत्यादि । अहीनपूर्व्वं पूर्व्वं चन्द्रार्कादिभ्यो न हीनं मेरुमचलमिव धीधृत्याद्यालयं गुरुमात्रेयं कालेऽग्निवेशः संशयं पृष्टवान् । भगवन्नित्यादि । हे भगवन् त्वया पृथक् पञ्चकर्म्माणि निर्द्दिष्टानि सर्व्वेषामामयानां कर्म्माणि निर्द्दिष्टानि । भेषजञ्च निर्द्दिष्टम् । कश्चिद्दोषजस्त्वामयोऽस्ति यस्य साध्यस्य सतो वर्त्तमानस्यामयस्य शमने खल्वेतानि कर्म्माणि न शक्तानि । हे भिषग्वर ! भगवता गुरुणा भवताऽस्त्यूरुस्तम्भ इत्युक्तोऽष्टोदरीये एक

चक्रपाणिः—त्रिमर्म्मीयानपि बहून् रोगान् पञ्चकर्म्मसाध्यान् दृष्ट्वा पञ्चकर्म्मसाध्ये ऊरुस्तम्भे जातस्मरण आचार्य्यः ऊरुस्तम्भचिकित्सितमाह, भवति हि विरोधदर्शनात् तद्विरोधस्मरणम् । अहीनमिति सर्व्वदा युक्तम् । समस्तानीति मिलितानि । दोषज इतिपदं मानसागन्तुनिरासार्थम् । तन्निरासस्तु तयोः पञ्चकर्म्माविषयतया प्रसिद्धत्वात् । तथा दोषजस्याप्यसाध्यस्य

स्निग्धोष्णगुरुशीतानि जीर्णाजीर्णे * समश्नतः ।
द्रवशुष्कदधिक्षीर-ग्राम्यानूपौदकामिषैः ॥
पिष्टान्यपक्वमद्याति-दिवास्वप्नप्रजागरैः ।
लङ्घनाध्यशनायास-भयवेगविधारणैः ॥
स्नेहाच्चामं चितं कोष्ठे वातादीन् मेदसा सह ।
रुद्ध्वा सुगौरवादूरू यात्यधोगः सिरादिभिः ॥
पूरयेत् सक्थिजङ्घोरु दोषो मेदोबलोत्कटः ।
अविधेयपरिस्पन्दं जनयत्यल्पविक्रमम् ॥ ३ ॥
महासरसि गम्भीरे पूर्णेऽम्बु स्तिमितं यथा ।
तिष्ठति स्थिरमक्षोभ्यं तद्वदूरुगतः कफः ॥

ऊरुस्तम्भ इत्युक्तस्तस्योरुस्तम्भस्य कारणं सलिङ्गभेषजं भूयः पृष्टोऽग्निवेशेन गुरुरात्रेयोऽब्रवीत् ॥ २ ॥

गङ्गाधरः—तत्र कारणमाह—स्निग्धेत्यादि। स्निग्धाशनादिवेगविधारणान्तैर्हेतुभिः स्नेहाच्च चितमाममपक्वं कोष्ठे मेदसा सह वातादीन् रुद्ध्वाऽधोगः सिरादिभिः सुगौरवादूरू याति। ततो मेदोबलोत्कटो दोषः सक्थिजङ्घोरु पूरयेत्। तज्जङ्घादिकर्माविधेयपरिस्पन्दं विधातुमशक्यः परिस्पन्दो यस्य तदल्पविक्रमञ्च जनयति ॥ ३ ॥

गङ्गाधरः—यथा पूर्ण जलैर्महासरसि गम्भीरे स्तिमितं सदम्बु तिष्ठति।

साध्यमे पञ्चकर्म्माणि न समर्थानि, तन्निरासार्थमाह—साध्यस्य सतः इति सम्बन्धः। भूयो ऊरुस्तम्भस्य कारणादीनि पृष्टो गुरुः ॥ १ । २ ॥

चक्रपाणिः—जीर्णाजीर्णैः प्रभूतजीर्णैः स्तोकशेषाजीर्णे इति। आमं चितमिति रसशेषरूपम्। कोष्ठे वातादीन् मेदसा सहेति मेदःसहितमामं वातादीनां रोधकं ज्ञेयम्। आमञ्च त्रिदोषसहितमेव शिरादिभिः ऊरू याति। दोषो मेदोबलोत्कट इति दोषः आमसंरुद्धवातादिः। यदा दोषो मलोत्कट इति पाठः, तदामस्य विशेषणम्। तद्विग्रहेणैव यद्यपि जङ्घोर्व्वोर्ग्रहणं प्राप्तं तथापि तयोरभिधानं विशेषेण तत्पूरणोपदर्शनार्थम्। अविधेयपरिस्पन्दमिति अस्वाधीनेन्द्रियम्। अल्पविक्रमम् इति वातेनाल्पक्रियम् अक्रियं वा करोतीत्यर्थः ॥ ३ ॥

चक्रपाणिः—महासरसीत्यादि दृष्टान्तेन ऊरुस्तम्भारम्भकप्रधानस्य कफस्य प्रबलतामाह।

---

* जीर्णाजीर्णैरिति क्वचित् पाठः।

गौरवायाससङ्कोच-दाहरुक्सुप्तिकम्पनैः ।
सतोदभेदस्फुरणैर्युक्ता देहं निहन्त्यसून् ॥ ४ ॥
गुरुः श्लेष्मा * समेदस्को वातपित्तेऽभिभूय तु ।
स्तम्भयेत् स्थैर्य्यशैत्याभ्यामूरुस्तम्भस्ततो मतः ॥ ५ ॥
प्राग्रूपं तस्य निद्राति-ध्यानं स्तिमितता ज्वरः ।
लोमहर्षोऽरुचिश्छर्दि र्जङ्घोर्व्वोः सदनं तथा ॥
वातशङ्किभिरज्ञानात् तस्य स्यात् स्नेहनात् पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ६ ॥

तद्वद्गुरुगवः कफः स्थिरमसंक्षोभ्यं यथा स्यात् तथा तिष्ठति। स पुनर्गौरवादिभिर्देहं युक्त्वाऽसून् निहन्ति ॥ ४ ॥

गङ्गाधरः—कस्मादूरुस्तम्भ उच्यते गुरुरित्यादि। समेदस्को गुरुः श्लेष्मा वातपित्त अभिभूय च स्थैर्य्यशैत्याभ्यामूरू यस्मात् स्तम्भयेत् तत ऊरुस्तम्भो मतः। वातपित्तेऽभिभूयेति प्रगृह्यस्य न प्रकृतिभावोऽपवादविषयेऽप्युत्सर्गाभिनिवेशात् ॥ ५ ॥

गङ्गाधरः—तस्य पूर्व्वरूपमाह—प्राग्रूपमित्यादि। जङ्घोर्व्वोः सदनमवसादः। इत्येवं पूर्व्वरूपे खलूरुस्तम्भपूर्व्वरूपतया ज्ञानाभावात् वातव्याधिरयमित्येवमाशङ्किभिस्तस्य नरस्य स्नेहक्रियाकरणात् तु पादयोः सदनादि स्यात् ॥ ६ ॥

यद्यपि ऊरुस्तम्भस्य त्रिदोषजनितत्वमिहोक्तं तथा सूत्रस्थानेऽपि एकोरुस्तम्भः त्रिदोषमात्रजन्य इत्यनेनोक्तस्तथापि कफप्राधान्यादत्र कफ एवोपदिष्टः। अतएवाग्रे ऊरुश्लेष्मेत्यादिना ऊरुस्तम्भशब्दनिरुक्तिं उत्पादसामग्रीञ्चाह ॥ ४ ॥

चक्रपाणिः—स्थैर्य्यशैत्याभ्यामित्यनेन स्तम्भनक्रियामाह। तथाच स्थैर्य्यशैत्ययोः कफगुणयोः स्तम्भनकरणे कारणतां दर्शयति। ऊरुस्तम्भे स्नेहप्रयोगजं दोषमाह—वातशङ्किभिरित्यादि। वातशङ्का चास्मिन् सुप्तिसङ्कोचादिना वातसमानलिङ्गदर्शनाद् भवति। अस्य संस्नेहेन दोषाः कृच्छ्रादुद्धरणमित्यन्तोक्ताः ॥ ५ । ६ ॥

* ऊरुश्लेष्मेति चक्रसम्मतः पाठः ।

जङ्घोरुग्लानिरत्यर्थं शश्वच्चानाहवेदना।
पदञ्च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च॥
संस्थाने पीड़ने गत्यां चालने चाप्यनीश्वरः।
अन्यनेयौ हि संभग्नावूरू पादौ च मन्यते॥ ७॥
यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत्।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम्॥ ८॥
तस्य न स्नेहनं कार्य्यं न वस्तिर्न विरेचनम्।
न चैव वमनं यस्मात् तन्निबोधत कारणम्॥
वृद्धये श्लेष्मणो नित्यं स्नेहनं वस्तिकर्म्म च।
तत्स्थस्योद्धरणे चैव न समर्थं विरेचनम्॥

गङ्गाधरः—रूपमाह—जङ्घोरुग्लानिरित्यादि। अन्यनेयौ संभग्नाविवोरू पादौ च स मन्यते॥ ७॥

गङ्गाधरः—असाध्यलक्षणमाह—यदेत्यादि। अन्यथा दाहार्त्त्याद्यभावे साधयेद्, यदि नवः स्यादिति साध्यलक्षणम्॥ ८॥

गङ्गाधरः—तस्येत्यादि। तस्योरुस्तम्भिनः स्नेहनादिकं यस्मान्न कार्य्यं तत्कारणमाह—वृद्धय इत्यादि। स्नेहनं वस्तिकर्म्म च श्लेष्मणो वृद्धये नित्यमव्यभिचारि, तस्मान्न स्नेहनं वस्तिकर्म्म च कार्य्यं स्यात्। एवं तत्स्थस्य खलूरुस्थस्य श्लेष्मण उद्धरणे विरेचनं न समर्थं तस्मान्न विरेचनं कार्य्यम्।

चक्रपाणिः—जङ्घोरुग्लानिरित्यादि तु लक्षणं भिन्नसामग्रीकं ब्रूते, अन्ये तु दोषप्रयोगकृतं असाध्यलक्षणमेतदाहुः॥ ७। ८॥

चक्रपाणिः—सम्प्रति स्नेहवस्त्यादिकप्रतिषेधोपपत्तिमाह—तस्येत्यादि। स्नेहस्य दोषो यद्यपि पूर्व्वं उक्तः, तथापीदानीं यथा दोषकारकं स्नेहनं भवति तथा प्रतिपाद्यते। शिरोविरेचनञ्चात्र सर्व्वथैवासम्भाव्यमानत्वादेव नोपन्यस्तमिति ज्ञेयम्। स्नेहनमिति स्नेहनं वस्तिकर्म्म च श्लेष्मवृद्धिकरत्वान्न युक्तम्। किंवा वस्तिकर्म्मविशेषणं स्नेहनमिति पदम्। तेनानुवासनमिति लभ्यते। निरूहस्तु विरेचनशब्देनैव शोधनाभिधायिना गृहीत एव, अतएव ऊरुस्तम्भदोषोद्धरणासमर्थाशोधन-

श्लेष्मस्थानगतः श्लेष्मा पित्तञ्च वमनात् सुखम्।
हर्त्तुमामाशयस्थौ च स्रंसयेत् तावुभावपि॥
पक्काशयस्थाः सर्व्वेऽपि वस्तिभिर्मूलनिर्ज्जयात्।
शक्या न त्वाममेदोभ्यां स्तब्धा जङ्घोरुसंस्थिताः॥
वातस्थाने हि तच्छैत्यात् तयोः स्तम्भाच्च तद्गताः।
न शक्याः सुखमुद्धर्त्तुं जलं निम्नादिव स्थलात्॥
तस्य संशमनं कुर्य्यात् क्षपणं शोधनं तथा।
आधिक्यादामकफयोर्युक्त्यपेक्षः सदा भिषक्॥ ९॥

श्लेष्मस्थानगतो यः श्लेष्मा पित्तञ्च स्वस्थानञ्च यत् तद् वमनाद् हर्त्तुं सुखं भवति, तस्मादामाशयस्थौ तावुभौ पित्तश्लेष्माणावपि वमनेन स्रंसयेत्। पक्काशयस्थाः सर्व्वेऽपि वातपित्तकफा वस्तिभिर्मूलनिर्ज्जयात् जेतुं शक्या भवन्ति, न तु जङ्घोरुसंस्थिता आममेदोभ्यां स्तब्धा जेतुं शक्याः। कस्मात्? वातस्थाने हीति। हि यस्मादस्मिन्नूरुस्तम्भे तच्छैत्याद् वातशैत्याद् वातस्थाने दोषास्तयोर्जङ्घोर्व्वोः स्तम्भाच्च न सुखं हर्त्तुं शक्या यथा निम्नात् स्थलाज्जलं हर्त्तुं न सुखं शक्यमिति। तस्माद् वमनं न कार्य्यमिति। स्नेहनवस्तिकर्म्मविरेचनवमनप्रतिषेधाद् यत् कार्य्यं तदाह—तस्येत्यादि। क्षपणं शोधनं क्षपणेन यच्छोधयति तच्छोधनं कुर्य्यात्। कस्मात्? आमकफयोराधिक्यात्। कथं क्षपयेदित्यत उक्तं युक्त्यपेक्ष इति। युक्त्या क्षपणशोधनं कुर्य्यात्॥ ९॥

विवरणे एव निरूहोऽप्युक्तः। उक्तदोषहरणासामर्थ्यं वमनविरेचननिरूहाणां क्रमेण विवृण्वन्नाह—श्लेष्मस्थानगत इत्यादि। हर्त्तुं शक्यमिति विभक्तिलिङ्गविपरिणामाद् योजनीयम्। तावुभौ निर्हर्त्तुमशक्यौ। सर्व्वे हि वातपित्तश्लेष्माणः। मूलनिर्ज्जयादितिपदं वमनमित्यनेन तथा वस्तिरित्यनेन योज्यम्। मूलनिर्जयादिति मूलच्छेदात्। वमनादीनां साध्यं विषयं दर्शयित्वा असाध्यं विषयमाह—शक्येत्यादि। तथा मेदसः स्तब्धत्वेन वमनादीनां जङ्घोरुस्थानेऽसमर्थत्वं ज्ञेयम्। ऊरुस्तम्भदोषस्य वमनादीनामसामर्थ्ये हेत्वन्तरमाह—वातस्थान इति। जङ्घोरुरूपे वातस्थाने। तच्छैत्यादिति वातशैत्यात्। चिकित्सामाह—तस्येत्यादि। तस्योरुस्तम्भस्य शमनं कर्त्तव्यं न शोधनमित्यर्थः। क्षपणं शोधनम् आमकफयोः कुर्य्यादिति योजना। तत्र क्षपणं शोषणं द्रवभागविशोषणम्॥ ९॥

रूक्षोपचारं स यदा यवश्यामाककोद्रवान्।
शाकैरलवणैर्दद्यात् जलतैलोपसाधितैः॥
सुनिषण्णकनिम्बार्क-वेत्राग्रवधपल्लवैः।
वायसीवास्तुकैस्तिक्तैरन्यैश्च कुलकादिभिः॥ १० ॥
क्षारारिष्टप्रयोगैश्च हरीतक्यास्तथैव च।
मधूदकस्य पिप्पल्याश्चोरुस्तम्भविनाशनम्॥ ११ ॥
समङ्गाशाल्मलीबिल्वं मधुना सह ना पिबेत्।
तथा श्रीवेष्टकोदीच्य-देवदारुनतान्यपि॥
चन्दनं धातकी कुष्ठं तालीशं नलदं तथा।
मुस्तं हरीतकी लोध्रं पद्मकं तिक्तरोहिणी॥
देवदारु हरिद्रे द्वे वचा कटुकरोहिणी।
पिप्पली पिप्पलीमूलं सरलं देवदारु च॥
चव्यं चित्रकमूलञ्च देवदारु हरीतकी। *
सक्षौद्रानर्द्धश्लोकोक्तान् कल्कानूरुग्रहापहान्॥ १२ ॥

गङ्गाधरः—युक्त्या किं कुर्य्यात् तदाह—रूक्षोपचारं कुर्य्यादिति पूर्व्वेणान्वयः। स यदान्नं काङ्क्षति तदा यवाद्यन्नानि जलतलसाधितः शाकैर्दद्यात्। शाकान्याह। सुनिषण्णकेत्यादि। कुलकादिभिरन्यैस्तिक्तैः पटोलपत्रादिभिस्तिक्तैः। जलतैलोपसाधितैरिति योजना॥ १० ॥

गङ्गाधरः—क्षारारिष्टयोः प्रयोगैर्हरीतक्यादिप्रयोगैश्च ऊरुस्तम्भविनाशनं स्यात्॥ ११ ॥

गङ्गाधरः—संशमनानाह। समङ्गेत्यादि। अर्द्धश्लोकोक्तानूरुग्रहापहान्

चक्रपाणिः—वायसी काकमाची। कुलकं कारवेल्लकम्। शाल्मलं शाल्मली। श्रीवेष्टकस्तता। एतानि मधुना पिबेदिति सम्बन्धः। मुस्तेत्यादिकाः पञ्च योगाः अर्द्धश्लोकोक्ता उरुग्रहापहाः॥१०—१२

* इतःपरं "भल्लातकं समूलाञ्च पिप्पलीं पञ्च तान् पिबेत्" इत्यधिकः पाठः चक्रसम्मतः।

शार्ङ्गेष्टां मदनं दन्तीं वत्सकस्य फलं वचाम् ।
भल्लातकं समूलाश्च पिप्पलीं क्वथितान् पिबेत् ॥
मूर्व्वामारग्वधं पाठां करञ्जं कुलकं तथा ।
पिबेत् तुल्यं मधुयुतं चूर्णं वा वारिणाप्लुतम् ॥
सक्षौद्रं दधिमण्डैर्व्वा ऊरुस्तम्भविनाशनम् ।
मूर्व्वामतिविषां कुष्ठं चित्रकं कटुरोहिणीम् ॥
पूर्व्ववद् गुग्गुलुं मूत्रे रात्रिस्थितमथापि वा ।
स्वर्णक्षीरीमातिविषां मुस्तं तेजोवतीं वचाम् ॥
सुराह्वां कटुकं कुष्ठं पाठां कटुकरोहिणीम् ।
लेहयेन्मधुना चूर्णं सक्षौद्रं वा जलप्लुतम् ॥
फलीं व्याघ्रनखं हेम पिबेद्वा मधुसंयुतम् ।
त्रिफलां पिप्पलीं मुस्तं चव्यं कटुकरोहिणीम् ।
लिह्याद्वा मधुना चूर्णमूरुस्तम्भार्द्दितो नरः ॥ १३ ॥

सप्त कल्कान् मधुना सह पिबेदिति। पुनः सक्षौद्राणीति द्वितीयादियोगेषु मधुनिवृत्तिभ्रान्तिनिरासार्थम् ॥ १२ ॥

गङ्गाधरः—शार्ङ्गष्टामित्यादि। शार्ङ्गष्टादीन् पक्त्वा क्वथितान् तान् पिबेत्। मूर्व्वामित्यादि। मूर्व्वादीनां चूर्णं मधुना पिबेद् वारिणाप्लुतं वा पिबेत्। सक्षौद्रमित्यादि। मूर्व्वादिकटुरोहिण्यन्तानां चूर्णं सक्षौद्रं पिबेद् दधिमण्डैर्व्वा पिबेदिति पूर्व्वेणान्वयः। पूर्व्ववदित्यादि। गोमूत्रे रात्रिस्थितं दिवाशुष्कमित्येवं सप्ताहं पूर्व्ववद्भावितं गुग्गुलुमथवा सक्षौद्रं दधिमण्डैर्व्वा पिबेदिति पूर्व्वेणान्वयः। स्वर्णक्षीरीमित्यादि। स्वर्णक्षीर्य्यादीनां चूर्णं मधुना लेहयेदथवा जलाप्लुतं सक्षौद्रं पिबेत्। फलीमित्यादि। फली प्रियङ्गुः। हेम नागकेशरम्, फलीप्रभृतित्रयं चूर्णयित्वा मधुयुतं पिबेत्। त्रिफलादीनां चूर्णञ्च मधुना लिह्यात् ॥१३

चक्रपाणिः—शार्ङ्गेष्टा गुञ्जा, स्वादुकण्टकं विकङ्कतम्। पूर्व्ववदिति पूर्व्वेण सम्बध्यते। गुग्गुलुञ्च मूत्रे उषितं पिबेदिति योज्यम्। जलान्वितं पिबेदिति शेषः। फली न्यग्रोधः। हेम नागकेशरम् ॥ १३ ॥

अपतर्पणतश्च स्याद् दोषः सन्तर्पयेत् तु तम्।
युक्त्या जाङ्गलजैर्मांसैः पुराणैश्चैव शालिभिः॥
रूक्षणाद् वातकोपश्चेन्निद्रानाशार्त्तिपूर्व्वकः।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः॥ १४॥
पीलुपर्णी पयस्या च रास्ना गोक्षुरकं वचा।
सरलागुरुपाठाश्च तैलमेभिर्विपाचयेत्॥
सक्षौद्रं प्रसृतं तस्मादञ्जलिञ्चापि ना पिबेत्।
अपतर्पणतो रौक्ष्यादूरुस्तम्भी विमुच्यते॥ १५॥
कुष्ठश्रीवेष्टकोदीच्यं सरलं दारु केशरम्।
अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत्॥
सक्षौद्रं मात्रया तच्चाप्यूरुस्तम्भार्दितः पिबेत्।
रौक्ष्यान्मुक्त ऊरुस्तम्भात् ततश्च स विमुच्यते॥ १६॥

गङ्गाधरः—नन्वेवमामश्च कफश्च यदि तर्हि किमपतर्पयेदेनमित्यत आह—अपतर्पणतश्चेत्यादि। दोषः स्यादूरुस्तम्भदोषस्य दुष्टिः स्यादपतर्पणतस्तस्माद् युक्त्या सन्तर्पयेत्। कैरित्यत आह—युक्त्येत्यादि। रूक्षणादित्यादि। अन्यैरेवमेव रूक्षोपचारैर्यदि निद्रानाशादिपूर्व्वको वातकोपः स्यात्, तदा तत्र स्नेहस्वेदक्रमो वातामयोक्तः कार्य्यः॥ १४॥

गङ्गाधरः—तत्र स्नेहक्रममाह—पीलुपर्णीत्यादि। पीलुपर्णी मूर्व्वा, पयस्या क्षीरविदारी। पाठान्तैः कल्कैश्चतुर्गुणजले तैलं विपाचयेत्। तत्तैलं सक्षौद्रं प्रसृतं पलद्वयं कोष्ठापेक्षयाञ्जलिं कुड़वं वा पिबेत्॥ १५॥

गङ्गाधरः—कुष्ठेत्यादि। अजगन्धा यमानी। कुष्ठादिभिः कल्कैः सार्षपं तैलं चतुर्गुणजले पचेत्। तच्चापि तैलं मात्रया सक्षौद्रं पिबेत्॥ १६॥

चक्रपाणिः—आवस्थिकं क्रममाह—अपतर्पणेत्यादिना। रूक्षणादित्यादिना स्नेहविधानमावस्थिकम्, तेन सामान्येनाव विहितस्नेहनिषेधेन समं न विरोधि, अस्य विरोधापवादत्वात्॥ १४॥

चक्रपाणिः—पीलुपर्णी मोरटः, रास्नाभेद इत्यन्ये। सक्षौद्रमिति पादिकक्षौद्रम्। अजगन्धा

द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् ।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढ़के ॥
आरनालात् पचेत् प्रस्थं तैलस्यैतदपत्यदम् ।
गृध्रस्यूरुग्रहार्शोऽर्त्ति-सर्व्ववातविकारनुत् ॥ १७ ॥
पलाभ्यां पिप्पलीमूल-नागरादष्टकट्वरः ।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ॥ १८ ॥

अष्टकट्वरं तलम् ।

इत्याभ्यन्तरमुद्दिष्टमूरुस्तम्भस्य भेषजम् ।
श्लेष्मणः क्षपणान्त्वन्यद् वाह्यं शृणु चिकित्सितम् ॥१९॥
वल्मीकमृत्तिका मूलं करञ्जात् सफलत्वचम् ।
इष्टकानां ततश्चूर्णैः कुर्य्यात् उत्सादनं भृशम् ॥

गङ्गाधरः—द्वे पले इत्यादि । सैन्धवाद् द्वे पले शुण्ठ्याः पञ्च पलानि द्वे द्वे पले ग्रन्थिकचित्रकात् । भल्लातकास्थीनि विंशतिराकृतिमानान्नतु विंशतिः पलानि । तथा आरनालाद् द्वे आढ़के, तैस्तैलस्य प्रस्थं पचेत् । इत्यपत्यदं तैलं गृध्रस्यादिनुत् ॥ १७ ॥ अपत्यदतैलम् ।

गङ्गाधरः—पलाभ्यामित्यादि । पिप्पलीमूलपलं नागरपलमिति पलाभ्यां कल्काभ्यामष्टगुणकट्वरैस्तैलप्रस्थो दध्ना समः पक्वः गृध्रस्याद्यपहः । दध्नः ससारकस्यैव तक्रं कट्वरमुच्यते ॥ १८ ॥ अष्टकट्वरतैलम् ।

गङ्गाधरः—इतीत्यादि । अन्यच्च श्लेष्मणः क्षपणं वाह्यं चिकित्सितं शृण ॥ १९ ॥

गङ्गाधरः—वल्मीकेत्यादि । वल्मीकमृत्तिका । करञ्जात् सफलत्वचं मूलम् ।

अजमोदा । भल्लातकास्थीनि विंशतिरिति अभिधानेन । पलाभ्यामिति पिप्पलिसमुदायात् पलाभ्याम् । अष्टकटर इति तैलादष्टगुणः कट्वरः । कट्वरं तक्रम् ॥ १५—१९ ॥

मूलैर्वाप्यश्वगन्धाया मूलरर्कस्य वा भिषक्।
पिचुमर्दस्य वा मूलैरथवा देवदारुणः॥
क्षौद्रसर्षपवल्मीक-मृत्तिकासंयुतैर्भिषक्।
गाढ़मुत्सादनं कुर्य्यात् ऊरुस्तम्भे प्रलेपनम्॥ २०॥
दन्तीद्रवन्तीसुरसा-सर्षपैश्चापि बुद्धिमान्।
तर्कारीविश्वसुरस-शिग्रुवत्सकनिम्बजैः॥
पत्रमूलफलैस्तोयं शृतमुष्णञ्च सेचनम्।
पिष्टन्तु सर्षपं मूत्रेऽध्युषितं स्यात् प्रलेपनम्॥
वत्सकः सुरसः कुष्ठं गन्धा तुम्बुरुशिग्रुकौ।
हिंस्रार्कमूलवल्मीक-मृत्तिकाः सकुठेरकाः॥
दधिसैन्धवसंयुक्तं कार्य्यमेतैः प्रलेपनम्।
ऊरुस्तम्भविनाशाय भिषजा जानता क्रमम्॥ २१॥
श्योनाकं खदिरं निम्बं वृहत्यौ सरलाशनौ।
शोभाञ्जनकतर्कारी-श्वदंष्ट्रासुरसार्ज्जकम्॥

वल्मीकमृत्तिकादीष्टकान्तचूर्णैरुत्सादनं कुर्य्यात्। मूलैरित्यादि। अश्वगन्धादीनां मूलं प्रत्येकं क्षौद्रादिसंयुक्तं गाढ़मुत्सादनं कुर्य्यात्। चत्वारो योगाः॥२०॥

गङ्गाधरः—दन्तीत्यादि। दन्त्यादिभिः प्रलेपनम्। तर्कारीप्रभृतिभिश्च प्रलेपनम्। एषां पत्रादिभिः शृतमुष्णं तोयं सेचनम्। पिष्टन्त्वित्यादि। गोमूत्रेऽध्युषितं सर्षपं पिष्ट्वा प्रलेपनम्। वत्सक इत्यादि। गन्धा अश्वगन्धा हिंस्रार्कयोर्मूलं वत्सकादिकुठेरकान्तं दध्ना पिष्ट्वा सैन्धवयुक्तं प्रलेपनं कार्य्यम्॥ २१॥

गङ्गाधरः—श्योनाकमित्यादि। सुरसः श्वेतपर्णाशः अर्ज्जकः कृष्णपर्णासः,

चक्रपाणिः—पिचुमर्दो निम्बः। द्रवन्ती दन्तीभेदः। तर्कारी जयन्ती। गन्धा इत्यश्वगन्धा-

अग्निमन्थकरञ्जौ च जले निकाथ्य सेचयेत् ।
प्रलेपो मूत्रपिष्टैर्वाप्यूरुस्तम्भनिवारणः ॥ २२ ॥
कफक्षयार्थं व्यायामेष्वेनं शक्येषु चोत्सृजेत् ।
स्थानान्याक्रामयेत् कालं * शर्करासिकतास्तथा ॥
प्रतारयेत् प्रतिस्रोतो नदीं शीतजलां शिवाम् ।
सरश्च विमलं शीतं स्थिरतोयं पुनःपुनः ॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ॥ २३ ॥
यत् स्यात् कफप्रशमनं न च मारुतकोपनम् ।
तत् सर्व्वं सर्व्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ।
शरीरं बलमग्निश्च कार्य्यैषा रक्षता क्रिया ॥ २४ ॥

श्योनाकादिकरञ्जान्तानि जले निकाथ्य सेचयेत् । गोमूत्रः पिष्टा तैः प्रलेपो देयः ॥ २२ ॥

गङ्गाधरः—कफेत्यादि । कफक्षयार्थमेनमूरुस्तम्भिनं शक्येषु व्यायामेषु चोत्सृजेत् नियोजयेत् । व्यायाममाह । स्थानानीति स्वस्थानाद् गच्छन्नाक्रामेत् । तथा शर्करासिकता आक्रामेत् । नदीं प्रतिस्रोतः प्रतारयेत् । सरश्च प्रतारयेत् । तथा कुर्व्वतः कफे विशुष्के ऊरुग्रहः शान्तिं व्रजेत् ॥ २३ ॥

गङ्गाधरः—यत् स्यादित्यादि । इत्यनुक्तभेषजसंग्रहवचनम् । शरीरमिति । शरीरादीनि रक्षता रोगिणा त्वेषा क्रिया कार्य्या ॥ २४ ॥

इपका इह ग्राह्याः । कुठेरकः पर्णासः । शक्येषु वोढुं शक्येषु । अत्र जलप्रतरणं कथमस्य श्लेष्मक्षयकरं भवति ? यस्माज्जलसम्बन्धमात्रेण श्लेष्मवृद्धिरेव प्राप्ता । उच्यते—जलेन बहिर्निर्गच्छदूष्मणः निरुद्धस्यान्तःप्रवेशात् श्लेष्मसङ्घातभेदनं भवति, तथा प्रतरणक्रियया श्लेष्मा विच्छिद्यते ; समानाभिमता क्रिया अत्र योग्यत्वात् क्रियत एव, उक्तं हि—'भवेत् कदाचित् कार्य्येषु विरुद्धाभिमता क्रिया' इति ॥ १९—२४ ॥

* कल्यमिति वा पाठः ।

तत्र श्लोकः।

हेतुप्राग्रूपलिङ्गानि कर्म्मायोग्यत्वकारणम्।
भेषजं द्विविधञ्चोक्तमूरुस्तम्भचिकित्सिते ॥ २५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थाने ऊरुस्तम्भचिकित्सितं नाम
सप्तविंशोऽध्यायः ॥ २७ ॥

गङ्गाधरः—तत्र श्लोक इति। हेत्वित्यादिनाध्यायार्थसंग्रहः ॥ २५ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
ऊरुस्तम्भचिकित्सिते सप्तविंशेऽध्याये पुनः। वैद्यगङ्गाधरकृते जल्प-
कल्पतरौ पुनः। चिकित्सितस्थानजल्पे षष्ठस्कन्धे चिकित्सिते।
ऊरुस्तम्भस्य जल्पाख्या शाखेयं सप्तविंशिका ॥ २७ ॥

चक्रपाणिः—अनुक्तचिकित्सापरिग्रहार्थमाह—श्लेष्मण इत्यादि। हेतुरित्यादिः संग्रहः। कर्म्मायोग्यत्व हेतुः वृद्धये श्लेष्मण इत्यादिनोक्तो ज्ञेयः। द्विविधमिति आन्तरं बाह्यञ्च। भेषजमिति औषधम् ॥ २५ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां ऊरुस्तम्भचिकित्सितं
नाम सप्तविंशोऽध्यायः ॥ २७ ॥

# अष्टाविंशोऽध्यायः ।

## अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः,
## इतिह स्माह भगवानात्रेयः ॥ १ ॥

वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम् ।
वायुर्विश्वमिदं सर्व्वं प्रभुर्वायुः प्रकीर्त्तितः ॥
अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः ।
वायुः स्यात् सोऽधिकं जीवेत् वीतरोगः समाः शतम् ॥ २ ॥

गङ्गाधरः—अथोद्दिष्टक्रमाद् वातरोगचिकित्सितमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—वायुरित्यादि । वायुरायुर्हेतुत्वादायुः । वायुर्धाता देहधारणकर्त्ता । इदं सर्व्वं विश्वं जगत् धारणाद् वायुः । कथमायुर्वायुरित्यत आह—अव्याहतेत्यादि । यस्याव्याहतगतिमदादिर्वायुः स्यात्, सोऽधिकं समाः शतं जीवेदिति ॥ २ ॥

चक्रपाणिः—ऊरुस्तम्भभेषजे विरूक्षणाद् वातप्रकोपो भवतीति सम्बन्धादूरुस्तम्भानन्तरं वातव्याधिचिकित्सितमारभ्यते । वात एव व्याधिरिति, पक्षे विकृतश्च वातः सर्व्वाङ्गैकाङ्गरूपतामापन्नः विविधपीड़ाकरत्वाद् वातव्याधिरुच्यते । यदा वाताद् व्याधिरिति पक्षस्तदा वाताद् दोषदूष्यसंमूर्च्छनविशेषरूपत्वात् सर्व्वाङ्गैकाङ्गरूपो व्याधिर्वातव्याधिरुच्यते । ज्वरादयस्तु यद्यपि वातादुत्पद्यन्ते तथापि ते दोषान्तरेणापि वातं विना भवन्तीति कृत्वा नात्र शास्त्रे वातव्याधिशब्देनोच्यन्ते । येऽपि चात्र कफपित्तावृतत्वाद् वाताद् विकाराः व्याधित्वेन वक्तव्याः तेऽतिप्रधानं वातं विना न भवन्तीति कृत्वा वातव्याधिरूपाः । एवं यथा वातिकाश्च व्याधयः पृथक्चिकित्सयोच्यन्ते तथा पित्तजाः कफजाश्च चिकित्स्यन्तामिति न वाच्यम् । यतः पित्तकफकृतानां व्याधीनां न तथा प्राधान्यं यथा वातजानाम् । तेन वातजानामेव पृथक् चिकित्सोच्यते । कफपित्तजानान्तु अनाविष्कृतानां वमनविरेचनादिकफपित्तचिकित्सैव युक्तेति ज्ञेयम् ॥ १ ॥

चक्रपाणिः—वायोर्विकारं ज्ञापयितुं तत्स्वभावज्ञानं विना विकृतिविज्ञानस्यापार्थक्यात् स्वभावमेव तावदाह—वायुरित्यादि । यद्यपि शरीरेन्द्रियसत्त्वात्मसंयोगमायुस्तथापि तादृशसंयोगप्रधानत्वाद् वायुरपि प्रकृतिरुच्यते । एवं शरीराधारतया वायुरेव बलम् । हेतुत्वं दर्शयन्नाह, अव्याहतगतिः अपरित्यक्तस्वमार्गः । स्थानस्थ इति न विमार्गः । प्रकृतौ स्थित इति अक्षीणवृद्धः । वीतरोग इति निरोगः ॥ २ ॥

प्राणोदानसमानाख्य-व्यानापानैः स पञ्चधा ।
देहं तन्त्रयते सम्यक् स्थानेष्वव्याहतश्चरन् ॥ ३ ॥
स्थानं प्राणस्य शीर्षोरः-कण्ठजिह्वास्यनासिकाः ।
ष्ठीवनक्षवथूद्गार-श्वासाहारादि कर्म्म च ॥
उदानस्य पुनः स्थानं नाभ्युरःकण्ठ एव च ।
वाक्प्रवृत्तिः प्रयत्नोज्जोबलवर्णादि कर्म्म च ॥
स्वेददोषाम्बुवाहीनि स्रोतांसि समधिष्ठितः ।
अन्तरग्नेश्च पार्श्वस्थः समानोऽग्निबलप्रदः ॥
देहं व्याप्नोति सर्व्वन्तु व्यानः शीघ्रगतिर्नृणाम् ।
गतिप्रसारणाक्षेप-निमेषादिक्रियः सदा ॥

गङ्गाधरः—कथं वायुर्बलश्च धाता च तदुच्यते । प्राणेत्यादि । प्राणादिभिर्भेदैः पञ्चधा स वायुर्देहं तन्त्रयते नियमयति स्वस्वस्थानेषु चरन्नव्याहत एव नियमयति ॥ ३ ॥

गङ्गाधरः—प्राणादीनां स्थानादीन्याह—स्थानमित्यादि । शीर्षादयः प्राणस्य स्थानम् । तस्य येन येन कर्म्मणा तन्त्रणं तदाह—ष्ठीवनेत्यादि । उदानस्य स्थानकर्म्माण्याह—उदानस्येत्यादि । नाभ्यादीन्युदानस्य स्थानानि । वाक्प्रवृत्त्यादिकं कर्म्म च । समानस्य स्थानकर्म्मणी आह—स्वेदेत्यादि । स्वेदादिवाहीनि स्रोतांसि समधिष्ठितः समानः अन्तरग्नेर्जाठराग्नेः पार्श्वस्थश्च अग्निबलप्रदः । व्यानस्थानकर्म्मणी आह—देहमित्यादि । सर्व्वं देहं व्याप्नोतीति व्यानः

चक्रपाणिः—प्राणोदानेत्यादिना व्यवहारार्थं संज्ञोपदर्शनपूर्व्वकं प्राणादीनां स्थानं कर्म्म चाह—देहं तन्त्रयते इत्यादि । स्थानेष्विति वक्ष्यमाणात्मीयस्थानेषु । आहारादीत्यत्र आदिग्रहणादन्नविधारणनिःसरणादीनि गृह्यन्ते । प्राणोदानयोर्यद्यपि समानमुरःस्थानं तथापि कर्म्मभेदाद् भेद एव । यथैव एकगृहस्थितमालाकारकुम्भकारयोः । प्रयतनं प्रयत्नः । ऊर्जो बलवर्णनिष्पादनमुच्यते । स्वेददोषाम्बुवाहीनीत्यादौ स्वेदवाहीनि तथाम्बुवाहीनि च स्रोतांसि स्रोतोविमाने पृथगेवोक्तानि ज्ञेयानि । दोषवहानि च स्रोतांसि सर्व्वशरीरचराण्येव । उक्तं हि—'वातपित्तश्लेष्मणां पुनः सर्व्वशरीरचराणां स्रोतांसि अयनभूतानि' । गतीत्यादौ आदिशब्देन

वृषणौ वस्तिमेढ्रञ्च नाभ्यूरू वङ्क्षणौ गुदम्।
अपानस्थानमन्त्रस्थः शुक्रमूत्रशकृत्क्रियः॥
सृजत्यार्त्तवगर्भौ च युक्ताः स्थानस्थिताश्च ते।
स्वकर्म्म कुर्व्वते देहो धार्य्यते तैरनामयः॥
विमार्गस्था ह्ययुक्ता वा रोगैः स्वस्थानकर्म्मजैः॥
शरीरं पीड़यन्त्येते प्राणानाशु हरन्ति वा॥ ४॥
सङ्ख्यामप्यतिवृत्तानां तज्जानां हि प्रधानतः।
अशीतिर्नखभेदाद्या रोगाः सूत्रे निदर्शिताः॥

शीघ्रगतिः। नृणां गत्यादिक्रियाकृत्। अपानस्य स्थानकर्म्मणी आह—वृषणावित्यादि। वृषणादिगुदान्तमपानस्य स्थानम्, अन्त्रस्थश्चापानः शुक्रादिप्रवर्त्तनक्रियाकृत्। आर्त्तवगर्भौ च सृजति। (पञ्चानां कर्म्माण्याह) ते प्राणादयः स्थानस्थिता युक्ताश्च समयोगयुक्ताः स्वकर्म्म कुर्व्वते अनामयो देहश्च तैर्धार्य्यते। विमार्गस्था इत्यादि। हि यस्माद् विमार्गस्थास्त्वेते प्राणादयोऽयुक्ता अयोगातियोगमिथ्यायोगयुक्ता वा स्वस्थानकर्म्मजै रोगैः शरीरं पीड़यन्ति प्राणान् वाशु हरन्ति॥ ४॥

<u>गङ्गाधरः</u>—कै रोगैः पीड़यन्ति कथं वा प्राणान् हरन्तीत्यत आह—सङ्ख्यामित्यादि। तज्जानां रोगाणां सङ्ख्यामतिवृत्तानामसङ्ख्येयानां मध्ये

आकुञ्चनप्रसारणादीनाञ्च ग्रहणम्। अन्त्रस्थ इति वस्त्यादिगतः। सृजतीति निःसारयतीति यावत्। आर्त्तवगर्भौ च सृजतीति सम्बन्धः। एतानि कर्म्माणि यादृशाः कुर्व्वन्ति तदाह—युक्ता इति अव्यापन्नाः। स्थानस्थिता इति यथोक्तस्थानस्थिताः। यस्मादेवम्भूताः अतो देहो धार्य्यते। वातानां वैगुण्यं कर्म्माह—विमार्गस्था इत्यादि। स्वस्थानकर्म्मजैरिति यस्य वायोर्यत् स्थानमुक्तं तत्स्थानगतैः। तथा ष्ठीवनादि यद्वायोः कर्म्म उक्तं तज्जैश्च रोगैः शरीरं पीड़यन्ति। प्राणान् वातरोगेण हरन्ति च। अत्र वायोरेव भूरिप्रधानरोगकर्त्तृतया भिन्नचिकित्साप्रयोगतया पञ्चभेदा उक्ताः, न पित्तकफयोः अनतिप्रयोजनत्वात्। तथाहि तन्त्रान्तरे पित्तमपि पाचकरञ्जकसाधकालोचकभ्राजकभेदात् पञ्चविधमुक्तम्। तेषाञ्च यथाक्रमं पक्वामाशयहृदयदृष्टित्वक्स्थानमुक्तम्। तथा श्लेष्मापि अवलम्बक-क्लेदक-बोधक-तर्पक-श्लेषकभेदात् पञ्चविधः। तेषाञ्च स्थानानि यथाक्रमं हृदयामाशय जिह्वा-शिरः-सन्धयः। कर्म्माणि च यथाक्रममवलम्बनान्नक्लेदनरसबोधनाक्षितर्पणश्लेषणानि पृथगुक्तानि। प्रकृतवातव्याधि-

तानुच्यमानान् पर्य्यायैः सहेतूपक्रमान् शृणु ।
केवलं वायुमुद्दिश्य स्थानभेदात् तथावृतम् ॥ ५ ॥
रूक्षशीताल्पलघ्वन्न-व्यवायातिप्रजागरैः ।
विषमादुपचारात्तु दोषासृक्स्रवणादति ॥
लङ्घनप्लवनात्यध्व-व्यायामातिविचेष्टितैः ।
धातूनां संक्षयाच्चिन्ता-शोकरोगातिकर्षणात् ॥
वेगसन्धारणादामादभिघातादभोजनात् ।
मर्म्माबाधाद् गजोष्ट्राश्व-शीघ्रयानापतंसनात् ॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान् व्याधीन् सर्व्वाङ्गैकाङ्गसंश्रयान् ॥ ६ ॥

प्रधानतोऽशीतिर्व्याधयो नखभेदाद्याः सूत्रस्थाने महारोगाध्याये निदर्शिताः। तानशीतिं वातजान् पर्य्यायैः सहेतूपक्रमानुच्यमानान् शृणु। केवलं वायुमुद्दिश्य स्थानभेदात् शृणु तथा चावृतं वायुं शृणु ॥ ५ ॥

गङ्गाधरः—तेषां वातरोगाणां हेतुमाह—रूक्षेत्यादि। रूक्षाद्यन्नम्। विषमादसम्यगुपचारात्। दोषाणां वमनादिनाऽतिस्रवणादसृजश्चाभिघातादिनाऽतिस्रवणात्। लङ्घनाभोजनयोरत्र भेदो लङ्घनमभोजनभिन्नचतुःप्रकारसंशुद्ध्यादि, उत्पतनं वा। रूक्षान्नादिशीघ्रयानापतंसनान्तेभ्यो हेतुभ्यो बली बलवाननिलो रिक्तानि शून्यानि स्रोतांसि पूरयित्वा सर्व्वाङ्गैकाङ्गसंश्रयान् विविधान् व्याधीन् करोति ॥ ६ ॥

कथनायैव संख्यानिर्देशः। अशीतिरित्यादि सूत्रे इति महारोगाध्याये। पर्य्यायैरिति संज्ञान्तरैः। कथं पुनस्तेऽशीतिर्नखभेदाद्या उपदिष्टाः? उच्यन्ते—केवलं वायुमुद्दिश्य केचित् उक्तास्तथा चावृतं वातमुद्दिश्य केचित् उक्ताः ॥ ३—५ ॥

चक्रपाणिः—रूक्षेत्यादिना सम्प्रति निदानमाह। विषमादुपचारादिति उपचारवैरूप्यात्। दोषासृगित्यादौ दोषशब्देन पुरीषमपि गृह्यते। अवतंसनं गजादिभ्यः पतनम्। किंवा अवतंसनं धातूनां कर्षणम्। रिक्तानीति स्रोतांसि स्नेहादिगुणशून्यानीत्यर्थः ॥ ६ ॥

अव्यक्तं लक्षणं तेषां पूर्व्वरूपमिति स्मृतम् ।
आत्मरूपन्तु तद् व्यक्तमपायो लघुता पुनः ॥ ७ ॥
सङ्कोचः पर्व्वणां स्तम्भो भेदोऽस्थिपर्व्वणामपि ।
लोमहर्षः प्रलापश्च पाणिपादशिरोग्रहः ॥
खाञ्ज्यपाङ्गुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता ।
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् ।
भेदस्तोदोऽर्त्तिराक्षेपो मोहश्चायास एव च ॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः ।
हेतुस्थानविशेषाच्च भवेद् रोगविशेषकृत् ॥ ८ ॥

गङ्गाधरः—अव्यक्तेत्यादि । तेषां विविधानां व्याधीनां यद् यत् स्वस्वलक्षणं तदेवाव्यक्तं यदा, तदा पूर्व्वरूपं तस्य व्याधेस्तादिति स्मृतम् । आत्मरूपन्तु खलु तस्य तस्य व्याधेः स्वस्वलक्षणन्तु तद्व्यक्तमेवेति ततो भेदः । अपायस्तु तेषां लघुता यदा तदा ज्ञेयः । लक्षणं वक्ष्यते ॥ ७ ॥

गङ्गाधरः—विविधान् यान् व्याधीन् करोति तानाह—सङ्कोच इत्यादि । पर्व्वणां सङ्कोचः । शिरःप्रभृतीनां हुण्डनं वक्रत्वम् । तत्र विकृतिविशेषः पूर्व्वं महारोगाध्यायेऽभिहितः । शिरोरुक् च शिरोग्रहशब्देनोक्तत्वादिह शिरोहुण्डनं केशभूमिस्फुटनञ्च शङ्खभेदश्च ललाटभेदश्चेति । नासाहुण्डनं घ्राणनाशः । अक्षिहुण्डनमक्षिशूलमक्षिव्युदासश्च । जत्रुहुण्डनं वक्षोघर्षश्च वक्ष-उपरोधश्च वक्षस्तोदश्च । ग्रीवाहुण्डनं ग्रीवास्तम्भश्च मन्यास्तम्भश्च । अनुक्तानाम्

चक्रपाणिः—अव्यक्तं लक्षणमित्यादिना पूर्व्वरूपमाह । अपायेति वायोश्चपलत्वेन वात-व्याधीनाम् अपगतत्वमिव । लघुता च शरीरस्य । न सर्व्वथा वातलिङ्गाभावो येन प्रकृतलिङ्गानि सन्त्येव । अथवा वातलिङ्गानां लघुता ॥ ७ ॥

चक्रपाणिः—कुपितानां कार्य्यमाह । हुण्डनं शिरःप्रभृतीनाम् अन्तःप्रवेशः । अन्ये तु केशभूमिस्फुटनं शङ्खललाटभेदश्च इत्याहुः । नासाहुण्डनं घ्राणनाशः । अक्षिहुण्डनमक्षिव्युदासः । जत्रुहुण्डनं वक्ष-उपरोधः । ग्रीवाहुण्डनं ग्रीवास्तम्भः । उक्तं हि—व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि

तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्च्चसोः।
ब्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलश्च मारुते ॥
सर्व्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जने।
वेदनाभिः परीतश्च स्फुटन्तीवास्य सन्धयः ॥
ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्करा।
जङ्घोरुत्रिकपात्पृष्ठ-रोगशोषौ गुदे स्थिते ॥
रुक् पार्श्वोदरहृन्नाभेस्तृष्णोद्गारविसूचिकाः।
कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते ॥
पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥
श्रोत्रादिष्विन्द्रियबधं कुर्य्यात् क्रुद्धः समीरणः ॥
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते।
आतन्यते सरागा च पर्व्वरुक् त्वग्गतेऽनिले ॥
रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः।
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥

उपसंहारार्थमाह—एवंविधानीत्यादि। हेतुविशेषात् स्थानविशेषाच्च रोगविशेषकृत् कुपितोऽनिलो भवति। तद्विशेषोऽत ऊर्द्ध्वं वक्ष्यते ॥ ८ ॥

गङ्गाधरः—तत्र स्थानविशेषे रोगानाह—तत्रेत्यादि। कोष्ठाश्रिते दुष्टे मारुते मूत्रनिग्रहादि। सर्व्वाङ्गकुपिते गात्रस्फुरणादि। गुदे स्थिते वाते विण्मूत्रादिग्रहादि। आमाशयस्थिते वाते पार्श्वरुगादि। पक्वाशयस्थो वातोऽन्त्रकूजनादि करोति। श्रोत्रादिषु स्थितः क्रुद्धः समीरण इन्द्रियबधं कुर्य्यात्। त्वग्गतेऽनिले त्वग्रूक्षादि स्यात्। असृग्गतेऽनिले रुजस्तीव्रा इत्यादयः स्युः।

नामया इति। हेत्वित्यादि वातव्याधिविशेष हेतुस्थानविशेषः। उक्तं हि—प्रकुपितास्तु प्रकोपणविशेषान् दूष्यविशेषान् दूषयन्ति ॥ ८ ॥

चक्रपाणिः—सर्व्वाङ्गकुपिते इति कृत्स्नदेहकुपिते। गुदे इत्युत्तरगुदे। आतन्यते विस्तार्यते।

गुर्व्वङ्गं तुद्यते स्तब्धं दण्डमुष्टिहतं यथा ।
सरुक् स्तिमित-*-मत्यर्थं मांसमेदोगतेऽनिले ॥
भेदोऽस्थिपर्व्वणां सन्धि-शूलं मांसबलक्षयः ।
अस्वप्नः सन्तता रुक् च मज्जास्थिकुपितेऽनिले ॥
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ।
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥
बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव च ।
सर्व्वाङ्गैकाङ्गरोगांश्च कुर्य्यात् स्नायुगतोऽनिलः ॥
शरीरं मन्दरुक् शोथं शुष्यति स्पन्दते तथा ।
सुप्तास्तन्व्यो महत्यो वा सिरा वाते सिरागते ॥
वातपूर्णदृतिस्पर्शः शोथः सन्धिगतेऽनिले ।
प्रसारणाकुञ्चनयोः सन्धिवृत्तिश्च वेदना ॥
इत्युक्तं स्थानभेदेन वायोर्लक्षणमेव च ॥ ६ ॥

मांसमेदोगतेऽनिले गुर्व्वङ्गमित्यादयः स्युः। मज्जास्थिकुपितेऽनिले अस्थिपर्व्व-भेदादयः स्युः। कुपितः शुक्रस्थोऽनिलः क्षिप्रं शुक्रत्यागादीन् जनयेत्। स्नायु-गतोऽनिलः बाह्यायामादीन् कुर्य्यात्। सिरागते वाते मन्दरुगादि शरीरं स्यात् सिराः सुप्तादयः स्युः। सन्धिगतेऽनिले वातपूर्णदृतिस्पर्शशोथादयः स्युः ॥ ९ ॥

भुक्तस्य स्तम्भ इति भुक्तस्तम्भः, भुक्तवतो गात्रस्तम्भो भवतीति। गुर्व्वङ्गमित्यादिना मांसमेदोगत-लक्षणम्। तथा भेदोऽस्थिपर्व्वणामित्यादि अस्थिमज्जगयोः समानं लक्षणम्। समानेऽपि लक्षणे विविधाशितपीतीयोक्तविशिष्टधातुलक्षणैर्विशेष उन्नेयः। सन्ततेति सानुबन्धा। क्षिप्रं मुञ्चति बध्नातीति व्यवायकाले क्षिप्रं मुञ्चति वा चिरं धारयते। विकृतिमित्यादिना विकारयुक्तं गर्भं जनयति। बाह्येत्यादिना स्नायुगतवातलक्षणत्वेनोक्तानि बहिरायामादीनि अग्रे वक्तव्यानि। भूतौ चायामौ खल्लीं कुब्जत्वं सर्व्वैकाङ्गत्वं कुर्य्यात्। स्नायुगत इति स्नायुगतोऽनिल इत्यनेन स्नायुगतानिलजन्यावुक्तौ। इह च सिरागतवातजन्यत्वेनोक्तौ तेनोभयवचनात् एतावायामौ शिरा-स्नायुगतवातजन्यावेव भवतः। उक्तं हि अन्यत्र—महाहेतुर्बली वायुः शिराः स्नायवः कण्डराः

* श्रमितमिति पाठान्तरम्।

अतिवृद्धः शरीरार्द्धमेकं वायुः प्रपद्यते।
यदा तदोपशोष्यासृक् बाहुं पादञ्च जानु च॥
तस्मिन् सङ्कोचयत्यूर्द्ध्वं मुखं जिह्मं करोति च।
वक्रीकरोति नासाभ्रू-ललाटाक्षिहनूस्तथा॥
तदा वक्रं व्रजत्यास्येऽभोजनं वक्रनासिकम्।
स्तब्धं नेत्रं कथयतः क्षवथुश्च निगृह्यते॥
दीना जिह्वा समुत्क्षिप्ताऽफला * सज्जति चास्य वाक्।
दन्ताश्चलन्ति बध्येते श्रवणौ भिद्यते स्वरः॥
पादहस्ताक्षिजङ्घोरु-शङ्खश्रवणगण्डरुक्।
अर्द्धे तस्मिन् मुखार्द्धे वा केवले स्यात् तदर्द्दितम्॥ १०॥

गङ्गाधरः—अथार्द्दितलक्षणमाह—अतिवृद्ध इत्यादि। अतिवृद्धो वायुः शरीरार्द्धम् अथवैकं केवलं शरीरं यदा प्रपद्यते, तदाऽसृगादिकमुपशोष्य तस्मिन् शरीरार्द्धे ( ऊर्द्ध्व ) केवले वा शरीरे ऊर्द्ध्व सङ्कोचयति। मुखञ्च जिह्मं कुटिलं करोति। नासादिकं वक्रीकरोति। हनूरिति शसन्तं पदम्। तदा खल्वास्ये वक्रं व्रजति सति कुटिलीभूते सति अभोजनं भोजने शक्तिहीनं वक्रनासिकं कथयतः स्तब्धं नेत्रं भवति। जिह्वा समुत्क्षिप्ता दीना चाफला च स्यात्। ततोऽस्य वाक् सज्जति। दन्ताश्चलन्ति श्रवणे च बध्येते स्वरश्च भिद्यते। पादादिषु रुग् भवति। अर्द्ध तस्मिञ्छरीरे मुखार्द्ध वा केवले कृत्स्ने मुखे वा रुक् स्यात् तदर्द्दितं नाम वातरोगः। इति॥ १०॥

शिराः मन्यापृष्ठाश्रिता बाह्याः संशोष्यायामयेद् बहिरिति। मन्दरुक्शोफमिति मन्दरुजं मन्दशोफञ्च। सुप्ता इति निःस्पन्दाः॥ ९॥

चक्रपाणिः—इदानीमतिबलान् वातविकारानभिधातुमुद्यतोऽर्द्दितमाह—अतिवृद्ध इत्यादि। अतिग्रहणेन वायोर्बलवत्त्वम्। अप्रकुपितत्वमाह—एकमिति। वामं दक्षिणं वा सङ्कोचयति। अभोजनमिति न समं मुखेन खादति किन्तु वक्त्रैकदेशेन। दीनेति अगम्भीरा, जिह्मेति कुटिला, समुत्क्षिप्तेति निःसारिता। बाध्येते श्रवणौ यद्यपि एकपार्श्वाश्रयो विकारोऽयं तथापि प्रभावात् कर्णयोर्बाधा भवति। केवल इति अर्द्ध एव। ननु यदि देहार्द्धव्यापित्वं अर्द्दितस्य तदार्द्दितेन अर्द्धाङ्गेन च को भेदः? ब्रूमः—अर्द्दितेऽवेगितया सर्व्वकालं वेदना न भवति, अर्द्धाङ्गे तु

* अबलेति पाठान्तरम्।

मन्ये संश्रित्य वातोऽन्तर्यदा नाड़ीः प्रपद्यते।
मन्यास्तम्भं तदा कुर्य्यादन्तरायामसंज्ञकम्॥
अन्तरायम्यते ग्रीवा मन्या च स्तभ्यते भृशम्।
दन्तानां दंशनं लाला पृष्ठाक्षेपः शिरोग्रहः॥
जृम्भा वदनसङ्गश्चाप्यन्तरायामलक्षणम्।
इत्युक्तस्त्वन्तरायामः——————
——————बहिरायाम उच्यते॥ ११। १२॥

पृष्ठमन्याश्रिता बाह्याः शोषयित्वा सिरा बली।
ततः कुर्य्याद्धनुस्तम्भं बहिरायामसंज्ञकम्॥
चापवन्नाम्यमानस्य पृष्ठतो नीयते शिरः।
उर उत्क्षिप्यते मन्ये स्तब्धे ग्रीवा च मृद्यते॥

गङ्गाधरः—अथान्तरायामलक्षणमाह—मन्ये इत्यादि। कुपितो वातो यदा द्वे मन्ये संश्रित्यान्तर्नाड़ीः प्रपद्यते, तदान्तरायामसंज्ञकं मन्यास्तम्भं कुर्य्यात्। तत्रान्तः क्रोड़देशे ग्रीवा आयम्यते आयता स्यात्, मन्या च भृशं स्तभ्यते, दन्तानाञ्च दंशनं लाला च स्यात्, पृष्ठाक्षेपः पृष्ठे देशे वक्रं स्यात् वदनसंङ्गो मुखचालनाक्षमता॥ ११। १२॥

गङ्गाधरः—बहिरायाममाह—पृष्ठेत्यादि। पृष्ठं मन्याश्चाश्रिता बाह्या याः सिरास्ता बली वातः शोषयित्वा बहिरायामसंज्ञकं हनुस्तम्भं कुर्य्यात्। चापवत् धनुर्वत् नाम्यमानस्य पृष्ठतः शिरो नीयते। उरो वक्ष उत्क्षिप्यते ऊर्द्ध्वं क्षिप्यते

व्याप्त्या सर्व्वदैव भवति। उक्तं हि—'स्वस्थः स्यादर्द्दितायामः मुहुर्वेगागमे गते' इति। किंवा यथोक्तविशिष्टत्वादर्द्दितः, अर्द्धाङ्गे तु नैतानि सर्व्वाणि भवन्ति॥ १०॥

चक्रपाणिः—मन्ये इत्यादि अन्तरायाममाह। अन्तः यदा नाड़ीः प्रपद्यते मन्यासम्बद्धा एव शिराः यदि अन्तः प्रपद्यत इत्यर्थः। अन्तरायामसंज्ञितमिति एवंविधो मन्यास्तम्भः अन्तरायाम उच्यते। अपरस्तु मन्यास्तम्भो वक्ष्यमाणबहिरायाम इति वक्तव्यः। तन्त्रान्तरे तु मन्यास्तम्भः आयामयोः पूर्व्वरूपत्वेनोक्तः। अन्तः आयम्यत इति अन्तः आकृष्यते॥ ११।१२॥

चक्रपाणिः—पृष्ठमन्याश्रिता इति पृष्ठानुगतमन्यासम्बन्धाः। बाह्या इति शिराविशेषणम्। बाह्याश्च शिराः पृष्ठगता एव। केचित् तु पृष्ठमन्याश्रिता इति वातविशेषणं पठन्ति। पृष्ठतो नीयत इति पृष्ठं प्रति आकृष्यते। जातवेग इति अतिवेगः॥ १३॥

दन्तानां दंशनं जृम्भा लालास्रावश्च वाग्ग्रहः।
जातवेगो निहन्त्येष वैकल्यं वा प्रयच्छति ॥ १३ ॥
हनुमूले स्थितो बन्धात् स्रंसयत्यनिलो हनू।
विवृतास्यत्वमथवा कुर्य्यात् संवृतमाननम् ॥
हनुग्रहश्च संस्तभ्य हनू संवृतवक्त्रताम् ॥ १४ ॥
* मुहुर्म्मुहुश्चाक्षिपति गात्राण्याक्षेपकोऽनिलः।
पाणिपादौ च संशोष्य ससिराः स्नायुकण्डराः ॥
पाणिपादशिरःपृष्ठ-श्रोणीः स्तभ्नाति मारुतः।
दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः ॥ १५ ॥

मन्ये द्वे स्तब्धे स्यातां ग्रीवा च मृग्यते। दन्तदंशनादि स्यात्। एष जातवेग एव निहन्ति नरम्, नरस्य वैकल्यं वा प्रयच्छति। वहिरायामः ॥ १३ ॥

गङ्गाधरः—हनुस्तम्भमाह—हनुमूलस्थितोऽनिलो हनुबन्धात् द्वे हनू स्रंसयति। ततो विवृतास्यतां कुर्य्यादथवा संवृतमाननं कुर्य्यात्। हनू संस्तभ्य संवृतवक्त्रतां हनुग्रहश्च कुर्य्यादिति ॥ १४ ॥

गङ्गाधरः—आक्षेपकमाह—मुहुर्म्मुहुरित्यादि। योऽनिलो गात्राणि मुहुर्म्मुहुराक्षिपति गजारूढ़स्येव गात्राणि चालयति सोऽनिल आक्षेपकः। तस्यावस्थाविशेषं दण्डकमाह—पाणीत्यादि। पाणी पादौ च संशोष्य ससिराः स्नायुकण्डराश्च संशोष्य मारुतः पाणिपादादीनि स्तभ्नाति। दण्डवदिति दण्डवत् स्तब्धगात्रस्य दण्डको नाम स आक्षेपकोऽनुपक्रमोऽसाध्यः ॥ १५ ॥

चक्रपाणिः—हनुस्तम्भसङ्कोचयोर्लक्षणं हनुमूले स्थित इत्यादि। स्रंसयतीति विवर्त्तयति। विवृतास्यत्वमथवाशब्देन संवृतवक्त्रतां पाक्षिकीञ्चापेक्षते। संस्तभ्येति निश्चलं कृत्वा संवृतमुखतां करोति। एतद् द्वयमपि हनुस्तम्भे एव ॥ १४ ॥

चक्रपाणिः—मुहुरित्यादि आक्षेपलक्षणम्, पाणिपादञ्च संशोष्येत्यादि आक्षेपकसम्प्राप्तिः

* हनुमूल स्थितो वायुः करोति बहुकष्टदम्। इत्यधिकः पाठः क्वचिद् दृश्यते।

स्वस्थः स्यादर्द्दितादीनां मुहुर्वेगे गतेऽगते ।
पीड्यते पीड़नैस्तैस्तैर्भिषगेतान् विवर्ज्जयेत् ॥ १६ ॥
हत्वैकं मारुतः पक्षं दक्षिणं वाममेव वा ।
करोति चेष्टाविरतिं रुजं वाक्स्तम्भमेव च ॥
गृहीत्वार्द्धं शरीरस्य सिराः स्नायूर्विशोष्य च ।
पादं सङ्कोचयत्येकं हस्तं वा तोदशूलकृत् ॥
एकाङ्गरोगं तं विद्यात् पवनात् कुशलो भिषक् ।
सर्व्वाङ्गरोगं तद्वच्च सर्व्वदेहानुगेऽनिले ॥ १७ ॥
स्फिक्पूर्व्वा कटिपृष्ठोरु-जानुजङ्घापदं क्रमात् ।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥

गङ्गाधरः—अर्द्दितादीनामेतदन्तानां मुहुर्वेगे गतेऽतीते सति स्वस्थ आपाततः स्यात् । अगते वेगे पीड्यते ॥ १६ ॥

गङ्गाधरः—हत्वेत्यादि । कुपितो मारुत एकं दक्षिणं वामं वा पक्षं हत्वा चेष्टाविरतिप्रभृतिं करोति । इति पक्षवधः । गृहीत्वेत्यादि । वायुः शरीरस्यार्द्ध गृहीत्वा सिरास्नायूर्विशोष्य तोदशूलकृत् सन् पादमेकमेकं हस्तं वा सङ्कोचयति, तमेकाङ्गरोगं विद्यात् । सर्व्वाङ्गं शरीरस्य गृहीत्वा सिरास्नायूर्विशोष्य तोदशूलकृद् वायुः पादौ हस्तौ वा सङ्कोचयति तं सर्व्वाङ्गं रोगं विद्यादिति ॥ १७ ॥

गङ्गाधरः—स्फिगित्यादि । स्फिक्पूर्व्वा गृध्रसी पूर्व्वं स्फिचं स्तम्भरुक्तोदैर्गृहीत्वा क्रमात् कट्यादीनि स्तम्भरुक्तोदैर्गृह्णाति मुहुश्च स्पन्दते, सा

लक्षणम् । पाणिपादशिर इत्यादि दण्डकलक्षणम् । अर्द्दितादीनां दण्डकान्तानां समानं रूपमाह—स्वस्थः स्यादित्यादि । अर्द्दितहनुस्तम्भादिषु मुहुर्म्मुहुर्वेगित्वं दृश्यते, तदर्द्दितान्तर्गतमेव लक्षणम् ॥ १५ । १६ ॥

चक्रपाणिः—हत्वैकमित्यादि पक्षवधलक्षणम् । गृहीत्वार्द्धमित्यादि एकाङ्गलक्षणम् । सर्व्वाङ्गं सर्व्वदेहजमिति सर्व्वाङ्गलक्षणम् । स्फिक्पूर्व्वेत्यादि प्रथमं स्फिक् स्तम्भरुक्तोदैर्गृह्णाति, पश्चात्

वाताद् वातकफात् तन्द्रा-गौरवारोचकान्विता।
खल्ली तु पादजङ्घोरु-करमूलावमोटनी ( नात् ) ॥ १८ ॥
स्थाननामानुरूपैः स्वैर्लिङ्गैः शेषान् विनिर्द्दिशेत्।
सर्व्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ १९ ॥
वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च।
वातपित्तकफा देहे सर्व्वस्रोतोऽनुगामिनः ॥
वायुरेव हि सूक्ष्मत्वाद् वायोस्तत्राप्युदीरणः।
कुपितस्तौ समुद्धूय तत्र तत्राक्षिपन् गदान्।
करोत्यावृतमार्गत्वात् रसादींश्चोपशोषयेत् ॥ २० ॥

गृध्रसी वातात् केवलात्। वातकफात् तु तन्द्रादियुक्ता। इति गृध्रसीलक्षणम्। खल्लीत्यादि। पादमूलाद्यवमोटिनी खल्लीत्युच्यते ॥ १८ ॥

गङ्गाधरः—स्थाननामानुरूपैः स्वैर्लिङ्गैः शेषान् उक्तार्द्दितादिभ्योऽन्यान वातरोगान् विनिर्द्दिशेत्। इति ॥ १९ ॥

गङ्गाधरः—अथ वायोरावरणजरोगानाह—वायोरित्यादि। धातुक्षयाद् वायोः कोपे मार्गस्य वायोरावरणेन च कोपो भवति, वातपित्तकफा देहे सर्व्वस्रोतोऽनुगामिनो हेतवः स्युः। कथं तर्हि वायोः कोपे वातादयः सर्व्वस्रोतोऽनुगामिनः स्युरित्यत आह—वायुरेव हीत्यादि। हि यस्मादेको वायुरपरस्य वायोर्धातुक्षयात् मार्गावरणेन कोपे सूक्ष्मत्वादुदीरणः प्रेरकः। तौ

कटिपृष्ठोरुजानुजङ्घापदं गृह्णाति, सा गृध्रसी वातात्। वातकफात् सा पूर्व्वोक्तलक्षणा सती तन्द्र्यभिधेया भवति। एवं गृध्रसीद्वयं यद् द्वे गृध्रस्यौ वातात् वातकफाद् द्वे इत्यनेनोक्ते अपि विवृते भवतः ॥ १७ । १८ ॥

चक्रपाणिः—अनुक्तानां परिग्रहार्थमाह—स्थाननामेत्यादि। शेषान् अनुरूपैर्लिङ्गैः भेदशूलादिभिः निर्द्दिशेदिति ज्ञेयम्। केचित् स्थानानामनुरूपैरिति पठन्ति। तत्र नखभेदस्थानानुरूपञ्च लिङ्गं नखस्फुटनरूपं भवति। एवं चापरवातविकारेष्वपि महारोगोक्तेषु स्थानानुरूपं लिङ्गमनुसर्त्तव्यम्। वातस्य पित्तादिसंसर्गं ज्ञापयन्नाह—सर्व्वेष्वित्यादि। पित्ताद्यैरिति पित्तकफरक्तादिभिः। अथावृतस्य वायोः कथं कुपितत्वं भवति, भवतु मार्गरोधात् वातकोपः। आवरकेण तु पित्तेन कफेन वातकोपनस्य कथं सम्भवो भवतीत्याह—वातपित्तेत्यादि। तृतीयमेलके वायोः प्राधान्यमाह—सूक्ष्मत्वादिति। सूक्ष्ममार्गानुसारितया प्रेरकत्वात्। तस्मात्

लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमः क्लमः ।
कट्वम्ललवणोष्णैश्च विदाहः शीतकामिता ॥
शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ।
लङ्घनायासरूक्षोष्ण-कामता च कफावृते ॥
रक्तावृते सदाहार्त्तिस्त्वङ्मांसान्तरयोर्भृशम् ।
भवेत् सरागः श्वयथुर्जायन्ते मण्डलानि च ॥
कठिनाश्च विवर्णाश्च पिड़काः श्वयथुस्तथा ।
हर्षः पिपीलिकानाञ्च संसार इव मांसगे ॥
चलः स्निग्धो मृदुः शीतः शोफोऽङ्गेष्वरुचिस्तथा ।
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसावृतः ॥

पित्तकफौ समुद्धूय तत्र तत्र मार्ग आक्षिपन् गदान् करोति। आवृतमार्गत्वाद् रसादींश्चोपशोषयेदिति ॥ २० ॥

गङ्गाधरः—येन येनावृतः सन् यद् यल्लिङ्गं करोति तदाह । लिङ्गमित्यादि । पित्तावृते वायौ लिङ्गं दाहादि । तत्र कट्वादिभिः सेवितैर्विदाहः शीतकामिता च स्यात् । शैत्येत्यादि । कफावृते वायौ शैत्यादीनि स्युः कट्वाद्युपशयोऽधिकं भवति । लङ्घनादिकामता च स्यात् । रक्तावृत इत्यादि । रक्तावृते वायौ त्वङ्मांसयोरन्तरे भृशं सदाहार्त्तिः सरागः श्वयथुर्भवेत् । मण्डलानि च जायन्ते । मांसादिधातुगतवातकार्य्याण्याह—कठिना इत्यादि । मांसगे वायौ कठिनपिड़कादि स्यात् । पिपीलिकानां संसारः संसरणमिव हर्षः स्यात् । चल इत्यादि । मेदसावृतो वातश्चल इत्यादिलक्षण आढ्यवात इति ज्ञेयः, स कृच्छ्र-

त्रिष्वपि दोषेषु वायुरेव उक्तन्यायेन प्रधानम्, अतः कुपितः पित्तकफौ समुदीर्य्य ताभ्यामावृतमार्गोऽपि तत्र तत्र प्रदेशे गदान् करोति । तथा रसादींश्च तत्र तत्र क्षिपन् संशोषयेत् ॥ १९ । २० ॥

चक्रपाणिः—आवरणकृतं वातकोपं दर्शयित्वा आवरणविशेषकृतं लिङ्गमाह—पित्तावृत इत्यादि । कट्वाद्युपशय इति कट्वाद्यादिकफविपरीतैरुपशयः । अधिकमिति······ । मांसगे इति मांसावृते । मांसगतस्य रक्तादिगतस्य च वातस्य लक्षणमुच्यते । आढ्यवात इति आयुर्व्वेदसंज्ञा मेदसा आवृत-

स्पर्शमस्थ्यावृते तूष्णं पीड़नञ्चाभिनन्दति ।
संभज्यते सीदति च सूचीभिरिव तुद्यते ॥
मज्जावृते विनमति जृम्भते परिवेष्टते ।
शूलञ्च पीड्यमाने च पाणिभ्यां लभते सुखम् ॥
शुक्रावेगोऽतिवेगो वा निष्फलत्वञ्च शुक्रगे ।
भुक्ते कुक्षौ रुजा जीर्णे शाम्यन्त्यन्नावृतेऽनिले ॥
मूत्राप्रवृत्तिराध्मानं वस्तौ मूत्रावृतेऽनिले ।
वर्च्चसोऽतिविबन्धोऽधः स्वे स्थाने परिकृन्तति ॥
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ।
चिरात् पीड़ितमन्नेन दुःखं शुष्कं शकृत् सृजेत् ॥
श्रोणिवङ्क्षणपृष्ठेषु रुग्विलोमश्च मारुतः ।
अस्वस्थं हृदयञ्चैव वर्च्चसा त्वावृतेऽनिले ॥ २१ ॥

साध्यः । स्पर्शमित्यादि । अस्थ्यावृते वाते स्पर्शन्तूष्णमभिनन्दति पीड़नञ्चाभिनन्दति संभज्यतेऽङ्गमिति शेषः । मज्जावृत इत्यादि । मज्जावृते वायौ नरो विनमतीत्यादि । शूलञ्च स्यात् । तत्र पाणिभ्यां पीड्यमाने देहे सुखं लभते । शुक्रावेग इत्यादि । शुक्रगे वायौ शुक्रस्यावेगोऽतिवेगो वा निष्फलत्वञ्च गर्भजननफलरहितत्वं स्यात् । भुक्त इत्यादि । अन्नावृतेऽनिले भुक्तेऽन्ने कुक्षौ रुजा जीर्णेऽन्ने शाम्यन्ति । मूत्रेत्यादि । मूत्रावृतेऽनिले मूत्रस्याप्रवृत्तिर्वस्तौ चाध्मानं स्यात् । वर्च्च इत्यादि । वर्च्चसावृतेऽनिले वर्च्चसोऽधोऽतिविबन्धः स्वे स्थाने विबन्धस्थाने परिकृन्तति । भुक्तेऽन्ने सत्याशु स्नेहो जरामाशु व्रजति भुक्तेऽन्ने चानह्यते पुरीषम् । अन्नेन पीड़ितं शुष्कं शकृत् नरश्चिराद् दुःखं यथा स्यात्तथा सृजेत् । श्रोण्यादिषु रुक् मारुतश्च विलोमो नानुलोमः । हृदयञ्चास्वस्थमिति ॥ २१ ॥

वातस्य । स्वस्थान इति पक्वाशये । परिकृन्तति परिकर्त्तिकां जनयति । साध्यासाध्यविभागा इति

गात्रश्लेषो हनुस्तम्भः कुञ्चनं कुब्जतार्द्दितम्।
सन्धिच्युतिः पक्षवधः पाङ्गुल्यं खुड्डवातता ॥
स्तम्भनं चाढ्यवातश्च रोगा मज्जास्थिगाश्च ये।
एते स्थानस्य गाम्भीर्य्यात् यत्नात् सिध्यन्ति वा न वा ॥
नवान् बलवतस्त्वेतान् साधयेन्निरुपद्रवान् ॥ २२ ॥
क्रियामतःपरं सिद्धां वातरोगापहां शृणु।
केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत्।
वायुं सर्पिर्वसातैल-मज्जपानैर्नरं ततः ॥
स्नेहक्लान्तं समाश्वास्य पयोभिः स्नेहयेत् पुनः।
यूषैर्ग्राम्याम्बुजानूप-रसैर्वा स्नेहसंयुतैः ॥

गङ्गाधरः—गात्रेत्यादि। गात्रश्लेषादयो वातरोगा ये त एते स्थानगाम्भीर्य्यात् यत्नात् सिध्यन्ति वा न वा। नवांस्तु खल्वेतान् गात्रश्लेषादीन् निरुपद्रवान् बलवतो नरस्य साधयेत् ॥ २२ ॥

गङ्गाधरः—इत्यन्यावृतवातरोगानुक्त्वा तेषां चिकित्सितं वक्तुमुच्यते। क्रियामत इत्यादि। केवलमित्यादि। केवलं वायुं निरुपस्तम्भं स्तम्भहीनमादौ सर्पिरादिभिः स्नेहैरुपाचरेत्। सर्पिरादिपानैः स्नेहक्लान्तं नरं ततः समाश्वास्य पयोभिः पुनः स्नेहयेत्। स्नेहसंयुतैर्यूषैरथवा स्नेहसंयुतैर्ग्राम्यादिमांसरसैः

स कृच्छ्र इत्यादि। अत्र कुब्जत्वपङ्गुत्वादयो यद्यपि साक्षान्न प्रपञ्चितास्तथापि विशेषदोषेणैव तल्लक्षणं ज्ञेयम्। खण्डवातता गुल्फवातता किंवा सन्निपातवातः। मज्जास्थिगा इति मज्जास्थिगतवातजन्या इत्यर्थः। स्थानस्य गाम्भीर्य्यादिति गम्भीरस्थानाश्रितत्वात्। अन्ये तु गाम्भीर्य्यस्वमाहुः। वैद्यस्तु नावश्यं सर्व्वस्य अव्याहतज्ञानो भवति। तेन संशयाभिधानमिति ज्ञेयम्। नवानामप्येषां निरुपद्रवतया साध्यतामाह—नवानित्यादि। उपद्रवाश्चात्र शङ्कग्राहितयानुक्ता अपि सामान्योपलक्षणयुक्ता एव केचित् गदा विज्ञेयाः। किंवा अध्यायशेषे हृद्रोगविद्रधीत्यादिना वक्ष्यमाणा उपद्रवा ज्ञेयाः ॥ २१ । २२ ॥

चक्रपाणिः—अवसरप्राप्तां क्रियामाह—क्रियामत इत्यादि। केवलमित्यादौ केवलमिति असंसृष्टम्। निरुपस्तम्भमित्यनावृतम्। कैः स्नेहैः कथञ्चोपाचरेदित्याह—सर्पिर्वसातैलमज्जपानैरिति। स्नेहपानामन्तरं कर्त्तव्यमाह—नरं ततः स्नेहक्लान्तमित्यादि। स्नेहपानोद्विग्नं समा-

कृशरापायसैः साम्ल-लवणैः सानुवासनैः।
नावनैस्तर्पणैश्चान्यैः सुस्निग्धं स्वेदयेत् तु तम् ॥
स्वभ्यक्तं स्नेहसंयुक्तनाड़ीप्रस्तरसङ्करैः।
तथान्यैर्विविधैर्योगैर्यथायोगमुपाचरेत् ॥ २३ ॥
स्नेहाक्तं स्विन्नमङ्गन्तु वक्रं स्तब्धमथापि वा।
शनैर्नमयितुं शक्यं यथेष्टं शुष्कदारुवत् ॥
हर्षतोदरुगायास-शोथस्तम्भग्रहादयः।
स्विन्नस्याशु प्रशाम्यन्ति मार्दवञ्चोपजायते ॥
स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः।
वलमग्निबलं पुष्टिं प्राणांश्चाप्यतिवर्द्धयेत् ॥
असंस्कृतं पुनः स्नेहैः स्वेदैश्चाप्युपपादयेत्।
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ॥ २४ ॥

कृशरादिभिश्च स्नेहयेत्। ततः सुस्निग्धं तं स्वभ्यक्तं स्नेहेन नाड़ीस्वेदादिभिः स्नेहसंयुक्तैः स्वेदयेत्। तथा यथायोगं विविधैरन्यैर्योगैश्चोपाचरेत् ॥ २३ ॥

गङ्गाधरः—एवं स्नेहपूर्व्वस्वेदफलमाह—स्नेहाक्तमित्यादि। स्नेहाक्तं स्विन्नं वक्रं वा स्तब्धं वा शनैर्यथेष्टं यथाभिमतं नमयितुं शक्यं स्यात् शुष्कदारुवत्। हर्षादयश्च स्विन्नस्याशु प्रशाम्यन्ति मार्द्दवञ्च जायते। स्नेहश्च प्रयोजितः शुष्कान् धातूनाशु पुष्णाति। वलादिकं वर्द्धयेत्। स्नेहैः स्वेदैश्चाप्यसंस्कृतं नरं पुनः स्नेहैः स्वेदैश्चोपपादयेत्। तथा सति स्नेहमृदौ कोष्ठे सति अनिलामया न तिष्ठन्ति ॥ २४ ॥

श्वास्येति विश्राम्य स्नेहयेदिति तर्पणैः। पानैरित्यत्र यावदित्यादि अनुवर्त्तते। अन्यैरिति कुटीभूमिस्वेदादिभिः। यथायोगमिति सर्व्वथा स्नेहपूर्व्वकस्वेदम् ॥ २३ ॥

चक्रपाणिः—स्नेहपूर्व्वकस्वेदगुणमाह—स्नेहार्द्रं स्विन्नमित्यादि। स्वेदाध्याये स्नेहपूर्व्वप्रयुक्तेन स्वेदेनेत्युक्तोऽपि अयं स्नेहपूर्व्वकः स्वेदगुणः पुनः प्रकरणागतत्वादुच्यते। आशुप्रयोजित इत्यस्य पुष्णातीत्यनेन सम्बध्यते। अनिलामयाः न तिष्ठन्ति न स्थायिनो भवन्तीत्यर्थः ॥ २४ ॥

यद्यनेन सदोषत्वात् कर्म्मणा न प्रशाम्यति ।
मृदुभिः स्नेहसंयुक्तैर्भेषजैस्तं विशोधयेत् ॥ २५ ॥
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ।
पयस्येरण्डतैलं वा पिबेद्दोषहरं शिवम् ॥
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ।
स्रोतो बध्नाति तं रुद्ध्वा तस्मात् तमनुलोमयेत् ॥ २६ ॥
दुर्ब्बलो यो विरेच्यः स्यात् तं निरूहैरुपाचरेत् ।
पाचनैर्दीपनीयैर्वा भोजनैस्तद्युतैर्नरम् ॥

गङ्गाधरः—यदीत्यादि । अनेन निरुक्तेन कर्म्मणा यदि सदोषत्वादवशिष्ट-दोषवत्त्वाद् वातामयो न प्रशाम्यति, तदा स्नेहयुक्तैर्मृदुभिर्भेषजैस्तं विशोधयेत् विरेचनेन ॥ २५ ॥

गङ्गाधरः—स्नेहमृदुविरेचनमाह—घृतमित्यादि । तिल्वकं लोध्रं तत्-सिद्धं घृतमथवा सातलया सप्तलया सिद्धं घृतम् अथवा पयस्येरण्डतैलं दोष-हरं पिबेत् । एतेन यत् स्यात् तदाह—स्निग्धेत्यादि । हि यस्मात् स्निग्धा-द्याहारैश्चितो मलस्तं मलं रुद्ध्वा स्रोतो बध्नाति तस्मात् तं मलमनुलोमयेद् विरेचनेनानेनेति ॥ २६ ॥

गङ्गाधरः—अविरेच्यस्य विधिमाह—दुर्ब्बल इत्यादि । यो हि विरेच्यो दुर्ब्बलस्तथा यश्चाविरेच्यस्तं निरूहैरुपाचरेत् । अथवा पाचनादिभिर्युतै-

चक्रपाणिः—यद्यनेन सदोषत्वादित्यादि । अत्र केवलो वा निरामस्तम्भः वायुः चिकित्स्यत्वेनाधि-कृतः । स दोषमुपपन्नः कर्म्मणा न प्रशाम्यति, तेनोक्तस्य कर्म्मणोऽपि तत्राशुद्धिः मलजनकत्वात् । वक्ष्यति हि 'स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः' इति, किंवा सदोषत्वादित्यनेन उत्तर-कालीनं वायोः संशमनमुच्यते । असंसृष्टत्वञ्च यदुक्तं तदुपक्रमारम्भकाले ज्ञेयम् । सदोषत्वञ्च स्नेहप्रयोगेणानुपशये ज्ञेयम् । संशोधनकरणे च हेतुः शमनमेवोत्तरकालीनं कुतो भवतीत्याह—स्निग्धेत्यादि ॥ २५।२६ ॥

चक्रपाणिः—दुर्ब्बलो योऽविरेच्य इति दुर्ब्बलत्वप्रकर्षेण अविरेच्य इत्यर्थः । अत्यर्थदुर्ब्बलतायां विधिमाह—पाचनैर्दीपनीयैरिति । यथा पाचनैः तथा दीपनैः, तथा अनास्थाप्यास्त्वतिस्निग्ध इत्यादौ अपि दुर्ब्बलः पठितः । पाचनं किञ्चिद्दीपनं यथा पटोलम्, दीपनं किञ्चित् पाचनं यथा त्रिफला, उक्तं हि सुश्रुते—'त्रिफला कफपित्तास्र-मेहकुष्ठविनाशिनी । चक्षुष्या दीपनी चेति । तथा

संशुद्धस्योत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ।
स्वाद्वम्ललवणैः स्निग्धैराहारैः सततं पुनः॥
नावनैर्धूमपानैश्च सर्व्वानेवोपपादयेत्।
इति सामान्यतः प्रोक्तं वातरोगचिकित्सितम्॥ २७॥
विशेषतस्तु कोष्ठस्थे वाते क्षीरं * पिबेन्नरः।
पाचनीयैरसैर्युक्तैरन्यैर्वा पाचयेन्मलान्॥
गुदपक्वाशयस्थे तु कर्म्मोदावर्त्तनुद्धितम्।
आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया॥
सर्व्वाङ्गकुपितेऽभ्यङ्गो वस्तयः सानुवासनाः।
स्वेदाभ्यङ्गावगाहाश्च हृद्यं चान्नं त्वगाश्रिते॥
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम्।
विरेको मांसमेदःस्थे निरूहाः शमनानि च॥

भोजनैस्तं नरमुपाचरेत्। संशुद्धस्येत्यादि। एवं संशुद्धस्य वातरोगिणोऽग्नौ चोत्थिते पुनः स्नेहस्वेदौ हितौ स्वाद्वम्लाद्याहारैर्नावनधूमपानैस्ततः पुनः स सर्व्वानेव वातरोगानुपपादयेत्। इति सामान्यतो वातरोगचिकित्सितमुक्तम्॥ २७॥

गङ्गाधरः—विशेषत आह—विशेषतस्त्वित्यादि। विशेषतः कोष्ठगते वाते नरः क्षीरं पिबेत्। पाचनीयरसैर्युक्तैर्वान्यैर्मलान् पाचयेत्। गुदेत्यादि। गुदस्थे पक्वाशयस्थे च। आमाशयस्थे शुद्धस्य विरेचनेन दोषहरी क्रिया। सर्व्वाङ्गकुपितेऽभ्यङ्गादयः। त्वगाश्रिते वाते स्वेदादयः। शीता इत्यादि।

पाचनैरित्यस्य दीपनैरिति विशेषणं कृतम्। भोज्यैर्वा तद्युतैरिति पाचनदीपनसंयुक्तैर्भोज्यैः। उत्थिते चाग्नौ इति दीप्ते वह्नौ॥ २७॥

चक्रपाणिः—स्थानविशेषेण क्रियाविशेषमाह—विशेषतस्त्वित्यादिना अधो नाभेः शस्यते चावपीडक इत्यन्तेन। क्षारं यवक्षारं किंवा क्षारमिति ग्रहण्यादिनिर्द्दिष्टं दीपनक्षारम्।

* क्षारमिति चक्रसम्मतः पाठः।

वाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ।
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ॥
विबद्धमार्गं दृष्ट्वा च शुक्रं दद्याद् विरेचनम् ।
विरिक्तप्रतिभुक्तस्य पूर्व्वोक्तां कारयेत् क्रियाम् ॥ २८ ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥
हृदि प्रकुपिते सिद्धमंशुमत्या पयो हितम् ।
मत्स्यान् नाभिप्रदेशस्थे सिद्धान् बिल्वशलाटुभिः ॥
वायुना वेष्ट्यमाने तु गात्रे स्यादुपनाहनम् ।
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ॥

रक्तस्थे शीतप्रदेहादयः। मांसमेदःस्थे विरेकादयः। वाह्याभ्यन्तरतः स्नेहैः अभ्यङ्गपानैरस्थिमज्जगतं वातं जयेत्। हर्ष इत्यादि। शुक्रस्थे वाते हर्षः स्त्रीभिरालापादिना बलकरं शुक्रकरमन्नपानं हितम्। विबद्धमार्गं शुक्रं दृष्ट्वा विरेचनं दद्यात्। विरिक्तस्य प्रतिभुक्तस्य पूर्व्वोक्तां हर्षबलशुक्रकरान्नपानक्रियां कारयेत् ॥ २८ ॥

गङ्गाधरः—वातेन गर्भे शुष्के शुष्यतां बालानाञ्च शुष्कगर्भशुष्यद्बालानामुत्थापने पोषणे सितादिभिर्युक्तं पयो हितम्। हृदीत्यादि। हृदि प्रकुपिते वातेऽंशुमत्या शालपर्ण्या सिद्धं पयो हितम्। नाभिप्रदेशस्थे बिल्वशलाटुभिः सिद्धान् मत्स्यान् दद्यात्। वायुना वेष्ट्यमाने गात्रे उपनाहनं स्यात्।

उदावर्त्तनुत् कर्म्म त्रिमर्म्मीये तं तैलशीतज्वरनाशनोक्तमित्यादिनोक्तं ज्ञेयम्। स्वेदेत्यादि त्वग्गतानिलचिकित्सितम्। हर्षो मनोहर्षणम्। विरेचनानन्तरं प्रतिभोजिनः विरिक्तप्रतिभुक्तस्य। पूर्व्वोक्तामिति शुक्रजननहर्षिणीं क्रियाम्। गर्भे इति सितादिभिः सिद्धं पयो हितम्। अंशुमती शालपर्णी। मत्स्या इति नाभिप्रदेशे कुपिते वाते बिल्वशलाटुभिः सिद्धा देयाः। नाभिप्रदेशे वातस्य कोपोऽनुक्तोऽपि तत्रभवशूलादिभिरिव ज्ञेयम्। वेष्ट्यमान इति अवमोट्यमाने।

बाहुशीर्षगते नस्यं पानञ्चौत्तरभक्तिकम्।
वस्तिकर्म्म त्वधो नाभेः शस्यते चावपीड़कः ॥ २९ ॥
अर्द्दिते नावनं मूर्द्धि तैलं तर्पणमेव च।
नाड़ीस्वेदोपनाहाश्चाप्यानूपपिशितहिताः ॥
स्वेदनं स्नेहसंयुक्तं पक्षाघाते विरेचनम्।
अन्तरा कण्डराङ्गुल्योः शिरोवस्त्यग्निकर्म्म च ॥
गृध्रसीषु प्रयुञ्जीत खल्ल्यां तूष्णोपनाहनम्।
पायसैः कृशरैश्चैव शस्तैस्तैलघृतान्वितैः ॥ ३० ॥
व्यादितास्ये हनुं स्विन्नमङ्गुष्ठाभ्यां प्रपीड़येत्।
प्रदेशिनीभ्यां चोन्नाम्य चिवुकोन्नमनं हितम् ॥

सङ्कुचिते वाते माषसैन्धवसाधितं तैलमभ्यङ्गः। बाहुशीर्षगते वाते नस्यम् औत्तरभक्तिकं स्नेहपानञ्च। नाभेरधो वाते वस्तिकर्म्म शस्यतेऽवपीड़श्च ॥२९॥

गङ्गाधरः—अर्द्दिते वाते नावनं नस्यं मूर्द्धि तैलं तर्पणञ्च। नाड़ीत्यादि। अर्द्दिते वाते नाड़ीस्वेदादय आनूपपिशितैर्हिताः। एवं पक्षाघाते स्नेहसंयुक्तं स्वेदनं विरेचनञ्च। गृध्रसीषु कण्डराङ्गुल्योरन्तरा शिरोवस्तिरग्निकर्म्म च यथायोग्यं प्रयुञ्जीत। खल्ल्यान्तूष्णोपनाहनं तैलघृतान्वितैः पायसैः कृशरैः शस्तैः प्रयुञ्जीत ॥ ३० ॥

गङ्गाधरः—व्यादितास्य इत्यादि। व्यादितास्ये हनुस्तम्भे स्विन्नं हनुं प्रदेशिनीभ्यामङ्गुलीभ्यां चिवुकमुन्नाम्य प्रपीड़येत्। इत्येवं चिवुकोन्नमनं

उपनाहनञ्च वातहरद्रव्यैरेव कर्त्तव्यम्। नस्ये पाने च उक्तमाषसैन्धवसाधितमेव तैलम्। अत्र च माषस्य क्वाथः सैन्धवस्य कल्कः। २८। २९ ॥

चक्रपाणिः—अर्द्दितादिचिकित्सामाह—अर्द्दित इत्यादि। तर्पणमित्यादि नावनविशेषणम्। अन्तराकण्डराङ्गुल्योरिति कण्डराङ्गुल्योर्मध्ये सिराव्यधनं कर्त्तव्यम्। गृध्रसीष्विति बहुवचनं व्याधिभेदतया गदितम्। व्यात्ताननमिति विवृतास्यम्। प्रदेशिनी अङ्गुष्ठानन्तराङ्गुली।

स्रस्तं स्वं गमयेत् स्थानं तथा स्विन्नश्च नामयेत् ।
प्रत्येकं स्थानदूष्यादि-क्रियां सर्व्वत्र कारयेत् ॥ ३१ ॥
सर्पिस्तैलवसामज्ज-पानाभ्यञ्जनवस्तयः ।
स्वेदः स्निग्धो निवातश्च स्थानं प्रावरणानि च ॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यच्च तत् सर्व्वं प्रशस्तं वातरोगिणाम् ॥ ३२ ॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ।
अजशीर्षाम्बुजानूप-क्रव्यादपिशितैः समम् ॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान् ।
भोजयेद्‌ वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम् ॥
एतैरेवोपनाहांश्च पिशितैः संप्रकल्पयेत् ।
घृततैलयुतैः साम्लैः स्विन्नक्षुण्णैरनस्थिभिः ॥ ३३ ॥

हितम्। स्रस्तमित्यादि। स्रस्तमङ्गं स्विन्नं स्वं स्थानं गमयेत् ऊर्द्ध्वं गतं तथा स्विन्नं नामयेत्। प्रत्येकमित्यादि। सर्व्वत्र वातरोगे प्रत्येकं स्थान-दूष्यादिक्रियां कारयेत् ॥ ३१ ॥

गङ्गाधरः—एवं सर्पिरादिचतुःस्नेहपानादयः। स्वेदादयः। स्वाद्वम्लादि-भोजनानि ॥ ३२ ॥

गङ्गाधरः—बलाया इत्यादि। बलाया रसे पञ्चमूलस्य महतो रसे वा दशमूलस्य रसे वा छागशीर्षं साधयित्वा रसं कूलाम्बुजपिशितं वा तस्मिं स्तस्मिन् रसे रसं साधयित्वा आनूपमांसं वा तस्मिंस्तस्मिन् रसे पक्त्वा रसं साधयित्वा क्रव्यादमांसं वा तस्मिंस्तस्मिन् रसे पक्त्वा रसं साधयित्वा दध्यम्लव्योषं दत्त्वा वातरोगार्त्तं तेन तेन रसेन व्यक्तलवणेन भोजयेत्। एतैरेवाजशीर्षादिपिशितैरनस्थिभिः स्विन्नक्षुण्णैः स्विन्नं कृत्वा पेषितैः

अनुक्तविशेषचिकित्साग्रहणार्थमाह—प्रत्येकमित्यादि। स्थानं पक्वाशयादि। दूष्यं रसरक्तादि। आदिग्रहणात् आवरणग्रहणम्। स्थानदूष्यापेक्षः क्रियाविशेषस्तु कोष्ठस्थ इत्यनेनैवोक्तः ॥ ३०।३१ ॥

चक्रपाणिः—सर्व्वविकारशमनं चिकित्सितमाह—सर्पिस्तैलमित्यादि ॥ ३२ ॥

पत्रोत्क्वाथपयस्तैल-द्रोण्यः स्युरवगाहने।
स्वभ्यक्तानां प्रशस्यन्ते सेकाश्चानिलरोगिणाम् ॥ ३४ ॥
आनूपौदकमांसानि दशमूलं शतावरीम्।
कुलत्थान् बदरान् माषान् तिलान् रास्नाबलायवान् ॥
वसादध्यारनालाम्लैः सह कुम्भ्यां विपाचयेत्।
नाड़ीस्वेदं प्रयुञ्जीत पिष्टैश्चाप्युपनाहनम् ॥
तैश्च सिद्धं घृतं तैलमभ्यङ्गं पानमेव च ॥ ३५ ॥
मुस्तं कुष्ठं तिलाः किण्वं सुराह्वं लवणं नतम्।
दधिक्षीरचतुःस्नेहैः शस्तं स्यादुपनाहनम् ॥ ३६ ॥
उत्कारिकावेशवार-क्षीरमाषतिलौदनैः।
एरण्डबीजगोधूम-यवकोलस्थिरादिभिः ॥

साम्लैरम्लकाञ्जिकादियुक्तैर्घृततैलयुक्तैश्चोपनाहान् कल्पयेत्। बहुवचनात् प्रत्येकश्चाजशीर्षादीनां पिशितैरुपनाहाः कार्य्या इति ॥ ३३ ॥

गङ्गाधरः—पत्रोत्क्वाथेत्यादि। वातहरप्रसारण्यादिपत्राणामुत्क्वाथा अवगाहने शस्ताः। पयसो द्रोणी तैलद्रोणी चावगाहने शस्ता। तथा वातहरस्नेहेनाभ्यक्तगात्राणां सेका वातहरद्रव्यक्वाथं धारया सेचयेत् ॥ ३४ ॥

गङ्गाधरः—आनूपेत्यादि। आनूपमांसादीनि यवान्तानि वसादिभिर्द्रवैः सह कुम्भीमध्ये तन्मुखरोधेन पचेत्। तेन नाड़ीस्वेदं प्रयुञ्जीत। अथवा पिष्टैस्तैश्च तथा पक्त्वा उपनाहं प्रयुञ्जीत। एवं तैरानूपमांसादियवान्तैः पादिकैः कल्कैर्दध्यारनालाम्लैश्चतुर्गुणैः स्नेहत्वाद् वसया समया सिद्धं घृतं तैलञ्चाभ्यङ्गं पानञ्च प्रयुञ्जीत ॥ ३५ ॥

गङ्गाधरः—मुस्तमित्यादि। मुस्तादिकं दध्यादिभिः पिष्ट्वा उपनाहनं शस्तं स्यात् ॥ ३६ ॥

गङ्गाधरः—उत्कारिकेत्यादि। वातरोगिणां सरुजं गात्रमुत्कारिका-

सस्नेहैः सरुजं गात्रमालिप्य बहलं भिषक् ।
एरण्डपत्रैर्बध्नीयात् रात्रौ कल्यं विमोक्षयेत् ॥
क्षीराम्बुना ततः सिक्तं पुनश्चैवोपनाहितम् ।
मुञ्चेद्द रात्रौ दिवा बद्धं चर्म्मभिस्त सलोमभिः ॥ ३७ ॥
फलानां तैलयोनोनामम्लपिष्टान् सुशीतलान् ।
प्रदेहानुपनाहांश्च गन्धैर्वातहरैरपि ।
कृशरापायसैश्चैव कारयेत् स्नेहसंयुतः ॥ ३८ ॥
रूक्षशुद्धानिलार्त्तानामतः स्नेहान् प्रवक्ष्यति ।
विविधान् विविधव्याधि-प्रशमायामृतोपमान् ॥ ३९ ॥
द्रोणेऽम्भसः पचेद्द भागान् दशमूलचतुष्पलान् ।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ॥

दिभिर्बहळं घनमालिप्य रात्रावेरण्डपत्रैर्बध्नीयात् । कल्यं प्रातर्विमोक्षयेत् । उत्कारिकया यवादिकृतया सस्नेहया बहलालेप एकोऽपरो वेशवारेण सस्नेहेन, तृतीयः क्षीरमाषतिलौदनैः सस्नेहैः, चतुर्थ एरण्डादिभिः सर्व्वैः सस्नेहैरिति। एवं प्रातर्बन्धमोक्षणं कृत्वा क्षीराम्बुना सिक्तं धौतं कृत्वा पुनर्दिवा तथैव बहलमालिप्य सलोमभिश्चर्म्मभिर्बध्नीयादेवं दिवाबद्धं रात्रौ मुञ्चेत् ॥ ३७ ॥

गङ्गाधरः—फलानामित्यादि । तैलयोनीनां तिलसर्षपातसीत्यादीनां फलानि पिष्ट्वा सुशीतान् प्रदेहानुपलेपांश्च कारयेत् । वातहरैर्गन्धैरेलादिभिः स्नेहसंयुतैरपि प्रदेहानुपलेपांश्च कारयेत् । कृशरया स्नेहयुतयाऽथवा पायसैः स्नेहसंयुतैः प्रदेहानुपलेपांश्च कारयेदिति ॥ ३८ ॥

गङ्गाधरः—रूक्षेत्यादि । ये शुद्धवातरोगार्त्ता रूक्षास्तेषां स्नेहान् प्रवक्ष्यति ॥ ३९ ॥

गङ्गाधरः—द्रोणेऽम्भस इत्यादि । दशमूलस्य प्रत्येकं चतुष्पलान् भागान्

चक्रपाणिः—बलाया इत्यादौ बला पृथक्शब्दः । बलादीनां रसाः साधनद्रव्याणि । अम्लक्षीरादयश्चत्वारः साध्याः । एवं द्वादश रसा भवन्ति । कल्यमिति प्रभाते ॥ ३३—३७ ॥

चक्रपाणिः—फलानां तैलयोनीनामिति तिलातस्यादीनाम् । प्रदेहानुपनाहांश्चेत्यत्र प्रदेहः उपनाहापेक्षया तनुर्लेपः । गन्धैरित्यगुर्व्वाद्यैः । रूक्षेत्यादौ शुद्धानिलार्त्ताः केवलवातपीड़िताः ॥ ३८।३९

पादशेषरसैः पिष्टैर्जीवनीयैः सशर्करैः।
तथा काश्मर्य्यखर्ज्जूर-द्राक्षाबदरफल्गुभिः॥
सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत्।
निरत्ययः प्रयोक्तव्यः पानाभ्यञ्जनवस्तिषु॥ ४०॥
चित्रकं नागरं रास्नां पौष्करं पिप्पलीं शटीम्।
पिष्ट्वा विपाचयेत् सर्पिर्वातरोगहरं परम्॥ ४१॥
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत्।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं शीर्षगतेऽनिले॥ ४२॥
ग्राम्यानूपौदकानाञ्च भित्वास्थीनि पचेज्जले।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत्॥
जीवकर्षभकास्फोता-विदारीकपिकच्छुभिः।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम्॥

यवादीनां प्रत्येक प्रस्थोन्मितभागैः सहाम्भसो द्रोणे पचेत्। पादशेषे रसे जीवनीयैः सशर्करैः पिष्टैः कल्कैः पादिकैः सर्पिषः प्रस्थः सिद्ध एको योगः। तथा दशमूलादिक्काथे काश्मर्य्यादिभिः कल्कैः पादिकैः समक्षीरैः सर्पिषः प्रस्थः सिद्धो द्वितीययोगः। कश्चित् तु तथा काश्मर्य्यादिभिः कल्कैः सक्षीरैश्चतुर्गुणक्षीरैः सिद्धो घृतप्रस्थ इति व्याचष्टे॥ ४०॥

गङ्गाधरः—चित्रकमित्यादि। चित्रकादिकः कल्कः पादिकश्चतुर्गुणं जलम्॥ ४१॥

गङ्गाधरः—बलेत्यादि। बलाबिल्वाभ्यामष्टगुणं क्षीरं चतुर्गुणजले पक्वं शेषं क्षीरं चतुर्गुणं घृतमण्डमकल्कं पाचयेत्। तस्य शुक्तिरर्द्धपलं प्रकुञ्चः पलं वा नस्यम्॥ ४२॥

गङ्गाधरः—ग्राम्येत्यादि। ग्राम्यादीनां जन्तूनामस्थीनि भित्त्वा जले पचेत् ततः स्थापयेत्, अथ स्थिरजलोपरि स्नेह उत्तिष्ठति तं मज्जस्नेहं द्विक्षीर-

चक्रपाणिः—घृतमण्डः घृतस्योपरितनो भागः। शुक्तिरर्द्धपलम्॥ ४०—४२॥

तत् सिद्धं नावनाभ्यङ्गात् तथा पानानुवासनात्।
सिरापर्व्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम्॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम्॥ ४३ ॥ *
प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुड़वद्वयम्।
कृष्णगन्धात्वगाढ़क्योः पृथक् पञ्चपलं भवेत्॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम्।
जलद्रोणे पचेत् पाद-शेषे प्रस्थोन्मितं पृथक्॥
सुरारनालदध्यम्ल-सौवीरकतुषोदकम्।
कोलदाड़िमवृक्षाम्ल-रसांस्तैलं घृतं वसाम्॥
मज्जानञ्च पयश्चैव जीवनीयपलानि षट्।
कल्कान् दत्त्वा महास्नेहं सम्यगेनं विपाचयेत्॥

भागिकं दशमूलस्य कषायेण चतुर्गुणेन जीवकादिभिः कल्कैः पचेदित्येकयोगः। वातघ्नवर्गैर्जीवनीयदशभिश्च कल्कैः पादिकैर्द्विगुणक्षीरं द्विगुणजलं (दशमूलस्य कषायम्) पचेत्। एवं सिद्धं तन्मज्जस्नेहद्रव्यं नावनादितः सिरादिस्थं मारुतं प्रणुदति। ये स्युरित्यादि। एतद् वक्ष्यमाणमतःपरम्॥ ४३ ॥

गङ्गाधरः—तदाह—प्रस्थः स्यादित्यादि। कृष्णगन्धा शोभाञ्जनस्तस्य त्वक् चाढ़की च तयोः पृथक् पञ्चपलम्। रास्नाया द्वे पले चित्रकस्य द्वे पले। दशमूलं प्रत्येकं पलम्। सर्व्वं जलद्रोणे पचेत्। पादशेषे तत्र क्वाथे तथा सुरादीनामष्टानां पृथक् प्रस्थोन्मितं द्रवं तैलादिस्नेहचतुष्टयस्य प्रत्येकं

चक्रपाणिः—तद्वत्सिद्धेति बलाबिल्वशृतक्षीरसिद्धा। चुलुकी शिशुमारः। प्रत्यग्रेति। नस्यपानेष्विति नस्येषु पानेषु योजयेत्। कृष्णगन्धात्वक् शोभाञ्जनत्वक्। महास्नेहमिति

* तद्वत् सिद्धा वसा नक्र-मत्स्य-कूर्म्मचुलूकजाः। प्रत्यग्रा विधिनानेन नस्यपानेषु शस्यते॥ इत्यधिकः पाठः क्वचित्।

शिरामज्जास्थिगे वाते सर्व्वाङ्गैकाङ्गरोगिषु।
वेपनाक्षेपशूलेषु तदभ्यङ्गं प्रदापयेत् ॥ ४४ । ४५ ॥
समूलपत्रां निर्गुण्डीं पीड़यित्वा रसेन तु।
तेन सिद्धं समं तैलं नाड़ीकुष्ठानिलार्त्तिषु॥
हितं पामापचीनान्तु पानाभ्यञ्जनपूरणम्।
कार्पासास्थिफलोत्थानां रसे सिद्धञ्च वातनुत् ॥ ४६ ॥
मूलकस्वरसे क्षीर-समे स्थाप्यं त्र्यहं दधि।
तस्याम्लस्य त्रिभिः प्रस्थैस्तैलप्रस्थं विपाचयेत् ॥
यष्ट्याह्वशर्करारास्ना-लवणार्द्रकनागरैः।
सुपिष्टैः पलिकैः पानात् तदभ्यङ्गाच्च वातनुत् ॥ ४७ ॥
पञ्चमूलीकषायेण पिण्याकं बहुवार्षिकम्।
पक्त्वाम्भसि रसे तस्मिंस्तैलप्रस्थं विपाचयेत् ॥

प्रस्थोन्मितं पयश्च प्रस्थोन्मितं जीवनीयदशानां प्रत्येकं षट् पलानि कल्कान् दत्त्वा महास्नेहं पचेदिति ॥ ४४ । ४५ ॥ महास्नेहः।

गङ्गाधरः—समूलेत्यादि। समूलपत्रनिर्गुण्डीरसेन चतुर्गुणेन समं सार्द्धं तैलं सिद्धं न तु समानांशम्। कार्पासेत्यादि। कार्पासस्यास्थिसहितफलानि कुट्टयित्वोत्थितानां कल्कानां पीड़नेन जाते रसे चतुर्गुणे सिद्धं तैलं वातनुत् ॥४६॥

गङ्गाधरः—मूलकेत्यादि। क्षीरसमे मूलकस्वरसे दधि दत्त्वा त्र्यहं स्थाप्यम्, तस्य जातस्याम्लस्य दध्नस्त्रिभिः प्रस्थैस्तैलप्रस्थं यष्ट्याह्वादिभिः प्रत्येकं पलिकैः कल्कैर्विपाचयेत्, तत्तैलं पानाभ्यङ्गाभ्यां वातनुत् ॥ ४७ ॥

गङ्गाधरः—पञ्चमूलीत्यादि। पञ्चमूलीक्वाथे समाने बहुवार्षिकं तिल-

चतुःस्नेहः। तेन सिद्धं तैलमित्यत्र सममिति निर्गुण्डीरससमम्। नाड़ीव्रणः अपची च हन्वस्थिकक्षादिदेशभवा ॥ ४४—४६ ॥

चक्रपाणिः—मूलकस्वरस इत्यादौ मूलकस्वरसे समक्षीरे दधि स्थाप्यम्। तस्याम्लस्येति मूलकरसाद्यम्लतां गतस्य। अत्र च त्रिभिः प्रस्थैरिति वचनात् मूलकरसादीनां प्रत्येकं प्रस्थमानत्वम। उक्तं हि जतूकर्ण—'विपचेत् दधिमूलकरसपयसा' इत्यादि ॥ ४७ ॥

चक्रपाणिः— पञ्चमूलीकषायेणेत्यादौ पञ्चमूलीकषायं तथा पिण्याकक्वथितं जलञ्च पृथक्‌देयमिति

पयसाष्टगुणेनैतत् सर्व्ववातविकारनुत् ।
संसृष्टे श्लेष्मणा चैतत् वाते शस्तं विशेषतः ॥ ४८ ॥
यवकोलकुलत्थानां श्रेयस्याः शुष्कमूलकात् ।
बिल्वाच्चाञ्जलिमेककं द्रवैरम्लैर्विपाचयेत् ॥
तेन तैलं कषायेण फलाम्लैः कटुभिस्तथा ।
पिष्टैः सिद्धं महावातैरार्त्ते शीते प्रयोजयेत् ॥ ४६ ॥
सर्व्ववातविकाराणां तैलान्यन्यान्यतः शृणु ।
चतुःप्रयोगाण्यायुष्य-वर्ण्यान्यन्यतमानि च ।
रजःशुक्रप्रदोषघ्नान्यपत्यजननानि च ।
निरत्ययानि सिद्धानि सर्व्वदोषहराणि च ॥ ५० ॥
सहाचरतुलायास्तु रसे तैलाढ़कं पचेत् ।
मूलकल्काद् दशपलं पयो दत्त्वा चतुर्गुणम् ॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं भिषक् ।
विनीय दारुणेष्वेतद् वातव्याधिषु योजयेत् ॥ ५१ ॥

पिण्याकं जले चतुर्गुणे पक्त्वा स्रावयित्वा तस्मिन् रसे भागानुक्त्या समाने तैलप्रस्थमष्टगुणेन पयसा विपाचयेत्, एतत् तैलं सर्व्ववातनुत् ॥ ४८ ॥

गङ्गाधरः—यवेत्यादि। यवादीनां प्रत्येकमञ्जलिमेकं कुड़वं द्रवैरम्लैः काञ्जिकैरष्टगुणैर्विपाचयेत्। पादावशेषेण तेन कषायेण चतुर्गुणेन तिन्तिड्यादिफलाम्लकटुत्रयकल्कैः सिद्धं तैलं महावातैरार्त्ते शीते प्रयोजयेत् ॥ ४९ ॥

गङ्गाधरः—सर्व्वेत्यादि। चतुःप्रयोगाणि पानाभ्यङ्गानुवासननस्यप्रयोगाणि तैलान्यन्यानि शृणु ॥ ५० ॥

गङ्गाधरः—सहाचरेत्यादि। सहाचरस्य झिण्ट्यास्तुलां जलद्रोणे पक्त्वा पादशेषे रसे तैलाढ़कं चतुर्गुणं पयो दत्त्वा सहाचरस्यैव मूलकल्क दशपलं दत्त्वा पचेत्। सिद्धे तैले पूते शर्कराया अष्टादशपलं प्रक्षिप्य स्थाप्यम् ॥ ५१ ॥

केचिद् वदन्ति। पञ्चमूलीकषायेणैव जलस्य पूर्णमानत्वात् शास्त्रपरिभाषया पञ्चकल्को देय इत्युच्यते।

श्वदंष्ट्रास्वरसप्रस्थौ द्वौ समौ पयसा सह।
षट्पलं शृङ्गवेरस्य गुड़स्याष्टपलन्तथा॥
तैलप्रस्थं विपक्वं तैर्दद्यात् सर्व्वानिलार्त्तिषु।
जीर्णे तैले च दुग्धेन पेयाकल्पः प्रशस्यते॥ ५२॥
बलाशतं गुडूच्याश्च पादं रास्नाष्टभागिकम्।
जलाढ़कशते पक्त्वा दशभागस्थिते रसे॥
दधिमस्त्विक्षुनिर्य्यास-शुक्तैस्तैलाढ़कं समैः।
पचेत् साजपयोऽर्द्धांशैः कल्कैरेभिः पलोन्मितैः॥
शटीसरलदार्व्वेला-मञ्जिष्ठागुरुचन्दनैः।
पद्मकातिविषामुस्त-सूर्पपर्णीहरेणुभिः॥
यष्ट्याह्वसुरसव्याघ्र-नखर्षभकजीवकैः।
पलाशरसकस्तूरी-नलिकाजातिकोषकैः॥
पृक्काकुङ्कमशैलेय-जातीकटुफलाम्बुभिः।
त्वक्चन्दनैलाकर्पूर-तुरुष्कश्रीनिवासकैः॥

गङ्गाधरः—श्वदंष्ट्रेत्यादि। श्वदंष्ट्रायाः स्वरसस्य द्वौ प्रस्थौ पयसा सह समौ तेन पयसोऽपि द्वौ प्रस्थौ शृङ्गवेरस्य शुण्ठ्याः षट्पलं गुड़स्याष्टपलं कल्कं दत्त्वा तैस्तैलप्रस्थं पक्वं पातुं दद्यात्। जीर्ण तैले पयसा पेयाकल्पः प्रशस्यते॥ ५२॥

गङ्गाधरः—बलेत्यादि। बलायाः शतं पलानि तस्य पादं गुडूच्याः पञ्चविंशतिपलानि। रास्नाया अष्टमो भागो गुडूच्यास्तेन रास्नाया सार्द्धद्वादशपलम् (बलायाः शतं पलानां गुडूच्याः पादं तेन चतुःशतपलं गुडूच्याः। रास्नाया अष्टमो भागो गुडूच्यास्तेन रास्ना पञ्चाशत्पलमिति क्वचित् पाठः) एकीकृत्य जलाढ़कशते षोड़शशतशरावजले पक्त्वा दशभागकभागे स्थिते षष्ट्युत्तरशतशरावे रसे दध्यादिभिः समैः प्रत्येकं तैलसमैः अजापयोऽर्द्धांशसहितैरष्टशरावान्वितैः पलोन्मितैरेभिः शट्यादिभिर्नागकेशरान्तैः कल्कैस्तलाढ़कं पचेदिति। सूर्पपर्णी माषपर्णी मुद्गपर्णी च। पलाशरसः पलाशवृक्षनिर्य्यासः। जातीकटोः फलं जातिफलं कटफलं लताकस्तूरी। अम्बु बालकं तुरुष्कः

लवङ्गनतकक्कोल-कुष्ठगन्धप्रियङ्गुभिः ।
स्थौणेयतगरध्याम-वचामदनकप्लवैः ॥
सनागकेशरैः सिद्धे दद्याच्चात्रावतारिते ।
पत्रकल्कं ततः पूतं विधिना तत् प्रयोजयेत् ॥
कासं श्वासं ज्वरं मूर्च्छा-छर्द्दिगुल्मान् क्षतं क्षयम् ।
प्लीहशोषावपस्मारमलक्ष्मीञ्च विनाशयेत् ॥
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ।
अग्निवेशाय गुरुणा कृष्णात्रेयेण भाषितम् ॥ ५३ ॥

बलातैलम् ।

अमृतायास्तुलाः पञ्च द्रोणेष्वष्टस्वपां पचेत् ।
पादशेषे समक्षीरं तैलस्याढ्कं पचेत् ॥
एलामांसीनतोशीर-सारिवाकुष्ठचन्दनैः ।
शतपुष्पाबलामेदा-महामेदर्द्धिजीवकैः ॥
काकोलीक्षीरकाकोली-श्रावण्यतिबलानखैः ।
महाश्रावणिजीवन्ती-विदारीकपिकच्छुभिः ॥

शिह्लकवृक्षनिर्य्यासः । गन्धप्रियङ्गुः । एषु कल्केषु मध्ये तूत्तमसुगन्धिद्रव्याणि कस्तूरीजातीकोषकुङ्कुमजातिफलकर्पूरलवङ्गानि पाककाले तैलमध्ये न दत्त्वा तैले सिद्धे पूतेऽवतारिते चोष्ण एव सम्यक् पिष्ट्वा चूर्णीकृत्य पत्रकल्कं प्रयोजयेत् । "पक्वे पूते चोष्ण एव सम्यग् यत् परिपेषितम् । दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते ॥" इति ॥ ५३ ॥　　　　बलातैलम् ।

गङ्गाधरः—अमृताया इत्यादि । अमृताया गुडूच्याः पञ्च तुलाः अपामष्टसु द्रोणेषु पचेत् । पादशेषे क्वाथे तैलस्याढ्कमष्टशरावं क्षीरञ्चाष्टशरावं तत्र

गन्धशास्त्रे च चूर्णस्वरसपुष्पाणां सिद्धयः शीते अवतारिते दीयन्ते गन्धवृद्ध्यर्थम् । पत्रकल्कमिति तेन कर्पूरादिपत्रकल्कः अवतारितेऽपि देयः ॥ ४८—५३ ॥

वचागोक्षुरकैरण्ड-रास्नाकालासहाचरैः।
शतावरीतामलकी-कर्कटाख्याहरेणुभिः॥
वीरासहैलर्षभक-त्रिदशाह्वैश्च कार्षिकैः। *
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन च॥
कल्कैस्तत् क्षीणवीर्य्याग्नि-बलसंमूढ़चेतसा।
उन्मादारत्यपस्मारैरार्त्तांश्च प्रकृतिं नयेत्॥
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम्।
कृष्णात्रेयेण गुरुणा भाषितं वैद्यपूजितम्॥ ५४॥

अमृतातैलम्।

रास्नासहस्रनिर्य्यूहे तैलद्रोणं विपाचयेत्।
गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चानिलार्त्तिनुत्॥ ५५॥

एलादित्रिदशाह्वान्तैः कार्षिकैर्मञ्जिष्ठायास्त्रिकर्षेण मधुकस्य चाष्टपलेनैतैः कल्कैः पचेत्। अत्र श्रावणी मुण्डेरी महाश्रावणी रक्तमुण्डेरी काला कालानुसारिवा। सहा नीलझिण्टी एला पुनः सूक्ष्मैला त्रिदशाह्वो देवदारु॥ ५४॥

अमृतातैलम्।

गङ्गाधरः—रास्नेत्यादि। रास्नायाः सहस्रपलस्य दशद्रोणे जले पाकात् पादावशेषे निर्य्यूहे अमृतातैलोक्तैरेलाद्यैर्हैमवतैश्च श्वेतवचागन्धैश्च तैलद्रोणं विपाचयेत्। तदनिलार्त्तिनुत्॥ ५५॥ रास्नातैलम्।

चक्रपाणिः—अमृताया इत्यादौ श्रावणी बृहन्मुण्डी, काला सारिवा, त्रिदशाह्वः देवदारु॥५४॥

चक्रपाणिः—रास्नासहस्रपलस्य निर्य्यूहे। हैमवतैरिति हिमालयभूतैः। एलाद्यैरिति अमृताद्यतैलोक्तैः एलामांसीनतेत्यादिनोक्तैः॥ ५५॥

* वीराशल्लकिमुस्तत्वक् पत्तर्षभकवालकैः। सहैलाकुङ्कमस्पृक्का-त्रिदशाह्वैश्च कार्षिकैः॥ इति पाठान्तरम्।

एष कल्पस्तु बलायाः प्रसारण्यश्वगन्धयोः।
क्वाथकल्कपयोभिर्वा बलादीनां पचेत् पृथक् ॥ ५६ ॥

रास्नादितैलम्।

मूलकस्वरसं क्षीरं तैलं दध्यम्लकाञ्जिकम्।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥
पिप्पल्यतिविषारास्ना-चविकागुरुचित्रकैः।
भल्लातकवचाकुष्ठ-श्वदंष्ट्राविश्वभेषजैः ॥
पुष्कराह्वशटीबिल्व-शताह्वानतदारुभिः।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥ ५७ ॥

मूलकाद्यतैलम्।

गङ्गाधरः—एष इत्यादि। एष रास्नातैलकल्प एव बलायाः गोरक्षतण्डुलायाः प्रसारण्या अश्वगन्धायाश्च। तद्यथा। बलायाः सहस्रपलं दशद्रोणजले पक्त्वा पादावशेषे निर्य्यूहे हैमवतैर्गन्धैरमृतातैलोक्तैरेलादैः कल्कः पादिकैस्तैलद्रोणं विपाचयेदिति बलातैलम्। तथा प्रसारण्याः सहस्रपलं दश द्रोणे जले पक्त्वा पादशेषे निर्य्यूहे हैमवतैर्गन्धैरमृतातैलोक्तैरेलादैः पादिकैस्तैलद्रोणं पचेदिति प्रसारणीतैलम्। तथाश्वगन्धायाः सहस्रपलं दशद्रोणे जले पक्त्वा पादशेषे निर्य्यूहे हैमवतैर्गन्धैरमृतातैलोक्तैरेलाद्यैः पादिकैस्तैलद्रोणं विपाचयेदिति अश्वगन्धातैलम्। क्वाथेत्यादि। बलादीनां बलाप्रसारण्यश्वगन्धानां प्रत्येकं क्वाथश्चतुर्गुणः पादभागः कल्कः समक्षीरं तैलं पचेदिति। बलातैलप्रसारणीतैलाश्वगन्धातैलानि ॥ ५६ ॥

गङ्गाधरः—मूलकेत्यादि। मूलकस्वरसञ्च क्षीरमम्लदधि चाम्लकाञ्जिकञ्च तैलञ्च तुल्यं बलादिभिर्दारुवन्तैः कल्कैः पादिकैर्विपाचयेत्। चित्रकद्वयं श्वेतरक्तभेदादिह ग्राह्यम्। तत् सिद्धं तैलं पीतम् ॥ ५७ ॥ मूलकादितैलम्।

चक्रपाणिः—एष कल्प इत्यनन्तरोक्तेषु बलादिष्वपि वक्तव्यः ॥ ५६ । ५७ ॥

वृषमूलगुडूच्योश्च द्विशतस्य शतस्य तु ।
चित्रकात् साश्वगन्धाच्च क्काथे तैलाढ़कं पचेत् ॥
सक्षीरं वायुना भग्ने दद्यात् जर्ज्जरिते तथा ।
प्राक्तैलावापसिद्धश्च भवेदेतद् गुणोत्तरम् ॥ ५८ ॥
रास्नाशिरीषयष्ट्याह्व-शुण्ठीसहचरामृताः ।
श्योणाकं दारुकं मांसी-हयगन्धात्रिकण्टकाः ॥
एषां दशपलान् भागान् कषायमुपकल्पयेत् ।
ततस्तेन कषायेण सर्व्वगन्धैश्च कार्षिकैः ॥
दध्यारनालमाषाम्ल-मूलकेक्षुरसैः शुभैः ।
पृथक् प्रस्थोन्मितैः सार्द्धं तैलप्रस्थं विपाचयेत् ॥
प्लीहपार्श्वग्रहश्वास-कासमारुतकोपनुत् ।
रास्नातैलमिति ख्यातं पुनर्व्वसुनिदर्शितम् ॥ ५९ ॥

रास्नातैलम् ।

गङ्गाधरः—वृषमूलेत्यादि । वृषमूलस्य शतपलं गुडूच्याः शतपलमिति द्विशतस्य चित्रकात् शतपलस्याश्वगन्धायाः शतपलस्य च क्काथे एकैकद्रोणजले पक्त्वा षोड़शषोढ़शशरावावशेषे तैलाढ़कं समक्षीरमकल्कं पचेत् । वृषमूलादितैलम् । एतत्तैलं प्राक् तैलस्य बलाचित्रकसैन्धवादिनतदार्व्वन्तैः कल्कैः सिद्धश्च गुणोत्तरं स्यादकल्कादस्मादिति ॥ ५८ ॥

सकल्कवृषमूलादितैलम् ।

गङ्गाधरः—रास्नेत्यादि । रास्नादीनां त्रिकण्टकान्तानामेकादशानां प्रत्येकं दशपलमष्टगुणे जले पक्त्वा पादशेषे क्काथे दध्यादीनां प्रत्येकं प्रस्थमितैः सह कार्षिकैः सर्व्वगन्धैस्तैलप्रस्थं विपाचयेत् ॥ ५९ ॥ रास्नातैलम् ।

चक्रपाणिः—वृषमूलेत्यादौ अश्वगन्धाचित्रकाभ्यां मिलिताभ्यां क्काथे । प्राक् तैलात् सोपसिद्ध-मिति मूलकस्वरसेत्याद्युक्ततैलेन समं सिद्धम् । द्विगुणोत्तरमिति पाठे वृषमूलादिक्काथसिद्धात् तैलात् द्विगुणं श्रेष्ठम् ॥ ५८ ॥

यवकोलकुलत्थानां मत्स्यानां शिग्रुबिल्वयोः ।
रसेन मूलकानाञ्च तैलं दधिपयोऽन्वितम् ॥
साधयित्वा भिषक् दद्यात् सर्व्ववातामयापहम् ।
लसुनस्वरसे सिद्धं तैलमेभिश्च वातनुत् ॥
तैलान्येतान्यृतुस्नातामङ्गनां पाययेत च ।
पीत्वान्यतममेतेषां वन्ध्यापि जनयेत् सुतम् ॥ ६० ॥
यच्च शीतज्वरे तैलमगुर्व्वाद्यमुदाहृतम् ।
अनेकशतशस्तच्च सिद्धं स्याद्‌ वातरोगनुत् ॥
वक्ष्यन्ते यानि तैलानि वातशोणितिकेऽपि च ।
तानि तानि च शान्त्यर्थं सिद्धिकामः प्रयोजयेत् ॥ ६१ ॥
नास्ति तैलात् परं किञ्चिदौषधं मारुतापहम् ।
व्यवाय्युष्णगुरुस्नेहात् संस्काराद्‌ बलवत्तरम् ॥
गणैर्वातहरैस्तस्माच्छतशोऽथ सहस्रशः ।
सिद्धं क्षिप्रतरं हन्ति सूक्ष्ममार्गस्थितान् गदान् ॥ ६२ ॥

गङ्गाधरः—यवेत्यादि। यवादीनां प्रत्येकं रसेन तैलसमेन तैलं साधयित्वा भिषक् दद्यात्। एभिर्यवादिरसैर्लसुनस्वरसे च तैलं सिद्धं वातनुत्। तैलान्येतानीति बलातैलादीनि ॥ ६० ॥

गङ्गाधरः—यच्चेत्यादि। ज्वरचिकित्सिते प्रोक्तमगुर्व्वादितैलमनेकशतशः बहुशतवारं पक्त्वा सिद्धं वातरोगनुत् स्यात्। वातशोणितिके वातरक्तचिकित्सिते यानि तैलानि वक्ष्यन्ते तानि तानि च तैलानि वातरोगाणां शान्त्यर्थं प्रयोजयेत् ॥ ६१ ॥

गङ्गाधरः—नास्तीत्यादि। वातहरैर्गणैर्भद्रदार्व्वादिभिः। शतशः शतशतवारान् पक्वं सहस्रशः सहस्रसहस्रवारान पक्वम् ॥ ६२ ॥

चक्रपाणिः—सर्व्वगन्धैरिति बलातैलोक्तैः सर्व्वगन्धैः। सार्द्धं सहितम्। मूलकतैलाग्रमिति संज्ञया, अथवा रास्नादीनां मूलेनैव क्वाथसाधनेन साधितम्। लशुनस्वरस इत्यादौ एभिश्चेति यवादिक्वाथैः अनन्तरोक्तैः। अनेकशः शतशश्च तेनैव विधानेन साधितम्॥ ५९—६२ ॥

क्रिया साधारणी सर्व्वा संसृष्टा चापि शस्यते।
वातपित्तादिभिः स्रोतःस्वावृतेषु विशेषतः॥
पित्तावृते विशेषेण शीतामुष्णां तथा क्रियाम्।
व्यत्यासात् कारयेत् सर्पिर्जीवनीयञ्च शस्यते॥
धन्वमांसं यवाः शालिर्यापनाः क्षीरवस्तयः।
विरेकः क्षीरपानञ्च पञ्चमूलीबलाशृतम्॥
मधुयष्टीबलातैल-घृतक्षीरैश्च सेचनम्।
पञ्चमूलीकषायेण कुर्य्याद्वा शीतवारिणा॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः।
स्वेदा निरूहास्तीक्ष्णाश्च वमनं सविरेचनम्॥
पुराणसर्पिस्तैलञ्च तिलसर्षपजं हितम्।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत्॥ ६३॥

गङ्गाधरः—क्रियेत्यादि। साधारणवातोक्ता क्रिया तथा संसृष्टा चापि या क्रिया सा वाताद्यावृतेषु स्रोतःसु विशेषतः शस्यते। पित्तावृत इत्यादि। व्यत्यासादावरकदोषविपर्य्यासात् क्रियामावृतवाते कारयेत्। जीवनीयं सर्पिश्चावृतवाते शस्यते। धन्वमांसादिकम्, यापना वस्तयः क्षीरवस्तयश्च वक्ष्यन्ते सिद्धिषु। पञ्चमूली स्वल्पा वातपित्तहरत्वात्। मधुयष्टी यष्टीमधुक्वाथेन बलातैलेन घृतेन क्षीरेण च सेचनं पञ्चमूल्याः स्वल्पायाः कषायेण शीतवारिणा वा सेचनं पित्तावृते कुर्य्यादिति। कफावृत इत्यादि। तिलसर्षपजं तैलं तिलतैलं सार्षपतैलञ्च न तु मिश्रितम्। संसृष्ट इत्यादि। कफपित्ताभ्यामावृते वाते त्वादौ पित्तं निर्जयेत्॥ ६३॥

चक्रपाणिः—सम्प्रति दोषान्तरादिसंसृष्टवातचिकित्सामाह—क्रिया साधारणीत्यादि। साधारणीति या वाते सा संसर्गिणी च पित्तादौ समाना, न केवलं संसृष्टवायौ साधारणी किन्तु वातपित्तादिभिरावृतेऽपि साधारणी कर्त्तव्या। केचित् तु वातपित्तादिभिरिति पठन्ति। पाठः सुगमः। विशिष्टसूचितां क्रियामाह—पित्तावृते इत्यादि। व्यत्यासादिति परिवर्त्तनेन शीतां कृत्वोष्णां उष्णाञ्च कृत्वा शीतां कुर्य्यादित्यर्थः। यापनाः वस्तयः सिद्धौ वक्ष्यमाणाः। पित्तमादौ विनिर्जयेत् इति वचनेन कफापेक्षया पित्तस्याशुकारितया पित्तजयमेवोपदिशति॥ ६३॥

आमाशयगतं मत्वा कफं वमनमादिशेत् ।
पक्वाशये विरेकन्तु पित्ते सर्व्वत्रगे तथा ॥
स्वेदैर्विष्यन्दितः श्लेष्मा यदा पक्वाशयस्थितः ।
पित्तं वा दर्शयेल्लिङ्गं वस्तिभिस्तौ विनिर्हरेत् ॥
श्लेष्मणानुगतं वातमुष्णैर्गोमूत्रसंयुतैः ।
निरूहैः पित्तसंसृष्टं निर्हरेत् क्षीरसंयुतैः ॥
मधुरौषधसिद्धैश्च तैलैस्तमनुवासयेत् ।
शिरोगते तु सकफे धूमनस्यादि कारयेत् ॥
हृते पित्ते कफे च स्यादुरःस्रोतोऽनुगोऽनिलः ।
सर्व्वेषां स्यात् क्रिया तत्र कार्य्या केवलवातिकी ॥
कारयेत् रक्तसंसृष्टे वातशोणितिकीं क्रियाम् ।
प्रमेहवातमेदोघ्नीमामवाते प्रयोजयेत् ॥

गङ्गाधरः—आमाशयेत्यादि। कफमामाशयगतं मत्वा वमनमादिशेत्। पक्वाशय इत्यादि। सर्व्वत्रगे पित्ते विरेकमादिशेत्। स्वेदैरित्यादि। स्वेदविष्यन्दितो द्रवीभूतः श्लेष्मा यदा पक्वाशयस्थितः स्यात् पित्तं वा स्वलिङ्गं दर्शयेत् तदा तौ पित्तकफौ वस्तिभिर्विनिर्हरेत्। श्लेष्मणेत्यादि। श्लेष्मानुगतं वातमुष्णैरुष्णद्रव्यकृतनिरूहैर्गोमूत्रयुतैर्निर्हरेत्। पित्तसंसृष्टं वातं मधुरौषधसिद्धैः क्षीरसंयुतैर्निरूहैर्निर्हरेत्। तैलैश्च मधुरौषधसिद्धैस्तं पित्तसंसृष्टं वातमनुवासयेत्। शिरोगते त्वित्यादि। सकफे वाते। हृत इत्यादि। हृते पित्ते च कफे च यदुरःस्रोतोऽनुगोऽनिलः स्यात् तदा सर्व्वेषां वातानां केवलवातिकी क्रिया कार्य्या। कारयेदित्यादि। रक्तसंसृष्टे वाते वातरक्तक्रियाम्, आमवाते

चक्रपाणिः—आमाशयगतं मत्वा कफमिति वातानुबन्धिकफस्यैव चिकित्सा। पक्वाशये विरेकन्त्वित्यत्र कफ इत्यनुवर्त्तते। सर्व्वत्रग इति अन्यस्थानगतेऽपि पित्ते। यद्यपि दोषान्तरस्थाने गते तद्दोषप्रधानमेव कर्म्म वमनं वस्तिर्वोक्तं तथाप्यनेन विरेचनमिति यौगिकं तत्र दर्शयति। सकफ इति सकफे वाते। स्रोतोऽनुगिति केचित् पठन्ति। तथाच सूक्ष्मस्रोतोऽनुग इति केचित् पठन्ति, सूक्ष्मस्रोतोऽनुगत इत्यर्थः। प्रमेहवातमेदोघ्नीति प्रमेहघ्नीं वातघ्नीं मेदोघ्नीञ्च।

स्वेदाभ्यङ्गरसक्षीर-स्नेहा मांसावृते हिताः।
महास्नेहोऽस्थिमज्जस्थे पूर्व्ववद्रेतसावृते ॥
अन्नावृते तदुल्लेखः पाचनं दीपनं लघु।
मूत्रलानि च मूत्रस्थे स्वेदाः सोत्तरवस्तयः ॥
एरण्डतैलं वर्च्चःस्थे वस्तिः स्नेहाश्च भेदिनः।
स्वस्थानस्थो बली दोषः प्राक् तं स्वैरौषधैर्जयेत् ॥

प्रमेहघ्नीं वातघ्नीं मेदोघ्नीं क्रियां प्रयोजयेत्। आमवातलक्षणञ्चान्यत्रोक्तम्।—"विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च। स्निग्धं भुक्तवतो ह्यन्नं व्यायामं कुर्व्वतस्तथा। वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति। तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते। वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः। स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः। व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः। युगपत् कुपितावन्तस्त्रिकसन्धिप्रवेशकौ। स्तब्धञ्च कुरुते गात्रमामवातः स उच्यते। अङ्गमर्द्दोऽरुचिस्तृष्णा चालस्यं गौरवं ज्वरः। अपाकः शूनताङ्गानामामवातस्य लक्षणम्। स कष्टः सर्व्वरोगाणां यदा प्रकुपितो भवेत्। हस्तपादशिरोगुल्फ-त्रिकजानूरुसन्धिषु। करोति सरुजं शोथं यत्र दोषः प्रपद्यते। स देशो रुज्यतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः। जनयेत् सोऽग्निदौर्ब्बल्यं प्रसेकारुचिगौरवम्। उत्साहहानिं वैरस्यं दाहञ्च बहुमूत्रताम्। कुक्षौ कठिनतां शूलं तथा निद्राविपर्य्ययम्। तृट्छर्द्दिभ्रममूर्च्छाश्च हृद्ग्रहं विड्विबद्धताम्। जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान्। पित्तात् सदाहरागश्च सशूलं पवनानुगम्। स्तिमितं गुरुकण्डूञ्च कफदुष्टं तमादिशेत्। एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते। सर्व्वदेहचरः शोथः स कष्टः सान्निपातिकः॥" स्वेदेत्यादि। मांसावृते वाते स्वेदादयो हिताः। अस्थिमज्जस्थे वाते महास्नेह उक्त एव हितः। रेतसावृते वाते पूर्व्वमेव शुक्रस्थे यद्यदुक्तं तद्धितम्। अन्नावृत इत्यादि। तस्यान्नस्योल्लेखो वमनम्। मूत्रलानि मूत्रकारीणि। एरण्डेत्यादि। एरण्डतैलं भेदिनो विरेचका वस्तिस्नेहाः।

महास्नेह इति चतुःस्नेहः अत्रैवोक्तः। पूर्व्ववद्रेतसावृत इति शुक्रस्थे वाते या क्रिया पूर्व्वमुक्ता सा रेतसावृतेऽपि वाते कार्य्या। उल्लेख इति उल्लेखनं वमनम्। मूत्रलानीति मूत्रविरेचनिकानि। स्वस्थानेत्यादि स्वस्थानस्थो यस्मात् स्थानोपबृंहणाद बली दोषो भवति तस्मात् स्वैरौषधैर्जयेत्।

वमनैर्वा विरेकैर्वा वस्तिभिः शमनेन वा।
इत्युक्तमावृते वाते पित्तादिभिर्यथायथम्॥ ६४॥
मारुतानाञ्च पञ्चानामन्योऽन्यावरणं शृणु।
लिङ्गं व्याससमासाभ्यामुच्यमानं मयानघ॥ ६५॥
प्राणो वृणोत्युदानादीन् प्राणं वृण्वन्ति तेऽपि च।
उदानाद्यास्तथान्योऽन्यं सर्व्व एव यथाक्रमम्॥
विंशतिर्वरणान्येतान्युल्वणानां परस्परम्।
मारुतानाञ्च पञ्चानां तानि सम्यक् प्रतर्कयेत्॥ ६६॥

स्वस्थानस्थ इत्यादि। दोषो यदि स्वस्थाने तिष्ठन् बलवान् भवति तदा तं प्राक् स्वैरौषधैर्जयेत्। कैरित्यत आह। वमनैः कफं स्वस्थानस्थं बलिनं जयेत्। विरेकैः पित्तं वस्तिभिर्वायुं शमनेन वा तं तं जयेत्॥ ६४॥

गङ्गाधरः—अथ वायोर्वाय्वावरणं यदुक्तं तल्लक्षणमाह—मारुतानाञ्चेत्यादि। व्याससमासाभ्यां विस्तरसंक्षेपाभ्याम्॥ ६५॥

गङ्गाधरः—तद्यथा। प्राण इत्यादि। उदानादीन् शेषांश्चतुरः। ते च चत्वारः प्राणं वृण्वन्ति। एवमुदानाद्याश्चत्वारः। उदानः शेषान् चतुर आवृणोति उदानञ्च शेषा आवृण्वन्ति। समानः शेषांश्चतुर आवृणोति समानञ्च शेषा आवृण्वन्ति। व्यानः शेषानावृणोति व्यानञ्च शेषा आवृण्वन्ति। अपानः शेषानावृणोति अपानञ्च शेषा आवृण्वन्तीति सर्व्वसंक्षेपोक्तिः। विंशतिर्वरणान्यावरणान्येतानि उल्वणदोषाणां परस्परं भवन्ति॥ ६६॥

कतमैः स्वैरौषधैरित्याह—वमनैरित्यादि। शमनेनेति कफादिशमनेनैव। शमनञ्च शोधनानन्तरं शोधनार्हे वा ज्ञेयम्॥ ६४॥

चक्रपाणिः—मारुतानाम् अन्योऽन्यावरणमाह—मारुतानामित्यादि। यद्यपि चेह वायोरमूर्त्तत्वं वातकलाकलीये प्रोक्तम्, तथापीदममूर्त्तत्वमकठिनवाचकं न त्ववयवप्रतिषेधकम्। तेन वायोः वायुं प्रति आवरणमुपपन्नमेव। दृष्टा च वायुना वाय्वन्तरेण अपघातेन वातकुण्डलिका बहिरपनीतेन तेन वातादीनां परस्परमावरणमुपपन्नमेव। प्राणो वृणोत्युदानादीनित्यादिना विंशत्यावरणान्युक्तानि। प्राणो वृणोत्युदानादीनित्यनेन चत्वार्य्यावरणानि, प्राणं वृण्वन्ति तेऽपि चेत्यनेन

सर्व्वेन्द्रियाणां शून्यत्वं ज्ञात्वा स्मृतिबलक्षयम्।
व्याने प्राणावृते लिङ्गं कर्म्म तत्रोर्द्ध्वजत्रुकम्॥
स्वेदोऽत्यर्थं लोमहर्षस्त्वग्दोषः सुप्तगात्रता।
प्राणे व्यानावृते तत्र स्नेहयुक्तं विरेचनम्॥
प्राणावृते समाने स्युर्जड़गद्गदमूकताः।
चतुःप्रयोगाः शस्यन्ते स्नेहास्तत्र सयापनाः॥
समानेनावृते प्राणे ग्रहणीपार्श्ववेदना।
शूने चामाशये तत्र दीपनं सर्पिरिष्यते॥
शिरोग्रहः प्रतिश्यायो निश्वासोच्छ्वाससंग्रहः।
हृद्रोगो मुखशोषश्चाप्युदाने प्राणसंवृते।
तत्रोर्द्ध्वभागिकं कर्म्म कार्य्यमाश्वासनं तथा॥

गङ्गाधरः—सर्व्वेन्द्रियाणामित्यादि। प्राणावृते व्याने सर्व्वेन्द्रियाणां शून्यत्वं स्मृतिबलक्षयञ्च ज्ञात्वा तत्रोर्द्ध्वजत्रुकं कर्म्म कुर्य्यात्। स्वेद इत्यादि। व्यानावृते प्राणे स्वेदादयः स्युः। तत्र स्नेहयुक्तं विरेचनं कार्य्यम्। प्राणावृते इत्यादि। समाने प्राणावृते जड़ादयः स्युः। तत्र स्नेहाः पानाभ्यङ्गानुवासननस्येषु चत्वारः प्रयोगाः स्युः। यापना वस्तिश्च। समानेन इत्यादि। प्राणे समानेनावृते ग्रहण्यादयः स्युः। आमाशये शूने स्फीते तत्र दीपनं सर्पिर्हितम्। शिरोग्रह इत्यादि। प्राणसंवृते उदाने शिरोग्रहादयः स्युः।

चत्वारि। उदानाद्यास्तथान्योऽन्यमित्यनेन द्वादशावरणान्युच्यन्ते। तत्रोदानेन व्यानादीनां त्रयाणामावरणमिति त्रीणि, तथा व्यानाद्यैश्चोदानावरणे त्रीणि, तथा व्यानेन समानापानावरणौ द्वौ, समानापानाभ्यां व्यानावरणौ च द्वौ, परिशिष्टयोश्चान्योऽन्यावरणे द्वे, एवं द्वादशावरणानि पूर्व्वाष्टकयुक्तानि विंशतिर्भवन्ति। उल्वणानामिति वृद्धानाम्, किंवा उल्वणानामिति आविष्कृततमानां मिलितानामेतेषां द्वित्र्यादिसंसर्गात् बहुविधमावरणं भवतीति दर्शयति। शिरोग्रह इत्यादिना अष्टावावरणानि प्रायो भावानि। अनुक्तशेषोपग्रहणार्थमाह। ऊर्द्ध्वभागिकं कर्म्मेति उपर्युक्त-

कर्म्मौजोबलवर्णानां नाशो मृत्युरथापि च ।
उदानेनावृते प्राणे तं शनैः शीतवारिणा ।
सिञ्चेदाश्वासयेच्चैनं सुखञ्चैवोपपादयेत् ॥
ऊर्द्ध्वगेनावृतेऽपाने छर्द्दिश्वासादयो गदाः ।
स्युर्वाते तत्र वस्त्यादि भोज्यञ्चैवानुलोमनम् ॥
मोहोऽल्पाग्निरतीसार ऊर्द्ध्वगेऽपानसंवृते ।
वाते स्युर्वमनं तत्र दीपनं ग्राहि चाशनम् ॥
छर्द्द्याध्मानमुदावर्त्तो गुल्मार्त्तिः परिकर्त्तिका ।
लिङ्गं व्यानावृतेऽपाने तं स्निग्धैरनुलोमयेत् ॥
अपानेनावृते व्याने भवेद् विण्मूत्ररेतसाम् ।
अतिप्रवृत्तिस्तत्रापि सर्व्वं संग्रहणं हितम् ॥
मूर्च्छातन्द्राप्रलापोऽङ्ग-सादोऽग्न्योजोबलक्षयः ।
समानेनावृतेऽपाने व्यायामो लघु भोजनम् ॥
स्तब्धताल्पाग्निता स्वेदश्चेष्टाहानिर्निमीलनम् ।
उदानेनावृते व्याने तत्र पथ्यं मितं लघु ॥

तत्रोर्द्ध्वभागिकं कर्म्म तथाश्वासनञ्च कार्य्यम् । कर्म्मेत्यादि । उदानसंवृत प्राणे कर्म्मादीनां नाशः, अथवा मृत्युश्च स्यात् । तं शनैः शीतवारिणा सिञ्चेदित्यादि । ऊर्द्ध्वगेनेत्यादि । ऊर्द्ध्वगेन प्राणेन । मोह इत्यादि । अपानेन संवृते ऊर्द्ध्वगे प्राणे वाते मोहादयः स्युः । तत्र वमनादि कार्य्यम् । छर्द्दीत्यादि । व्यानावृतेऽपाने छर्द्दादयः स्युः । तं स्निग्धै-रनुलोमयेत् । अपानेनेत्यादि । अपानेनावृते व्याने विड़ाद्यतिप्रवृत्तिः । तत्र सर्व्वं संग्रहणं कर्म्म कार्य्यम् । मूर्च्छेत्यादि । अपाने समानेनावृते मूर्च्छादयः स्युः । तत्र व्यायामो लघु भोजनं कार्य्यम् । स्तब्धतेत्यादि । उदानेनावृते व्याने स्तब्धतादयः स्युः । तत्र लघु च परिमितञ्च पथ्यं कार्य्यम् ।

पञ्चान्योऽन्यावृतानेवं वातान् बुध्येत लक्षणैः।
एषां स्वकर्म्मणां हानिर्वृद्धिर्वावरणे मता॥ ६७॥
यथास्थूलं समुद्दिष्टमेतदावरणं पृथक्।
स्वलिङ्गभेषजं सम्यक् शृणु मे बुद्धिवृद्धये॥ ६८॥
स्थानान्यवेक्ष्य वातानां वृद्धिं हानिञ्च कर्म्मणाम्।
द्वादशावरणान्यन्यान्युपलक्ष्य भिषग्जितम्॥
कुर्य्यादभ्यञ्जनस्नेह-नस्यपानादि सर्व्वशः।
उष्णं क्रममनुष्णञ्च व्यत्यासादवचारयेत्॥
उदाने योजयेदूर्द्ध्वमपाने चानुलोमनम्।
समानं शमयेच्चैव त्रिधा व्यानञ्च योजयेत्॥

अनुक्तानुपसंहरति। पञ्चेत्यादि। एवमनेन प्रकारेण लक्षणैरन्योन्यावृतान् पञ्च वातान् बुध्येत। तत्र लक्षणान्याह—एषामित्यादि। एषां प्राणादीनामपरेणावरणेन। स्वकर्म्मणामावृतस्य कर्म्मणां हानिः स्यादावरणस्य कर्म्मणां वृद्धिर्मता॥ ६७। ६८॥

गङ्गाधरः—स्थानानीत्यादि। वातानां प्राणादीनां स्थानान्यवेक्ष्य कर्म्मणां वृद्धिञ्च हानिञ्चावेक्ष्यान्यानि द्वादशावरणान्युपलक्ष्य अभ्यञ्जनादि भिषग्जितं कुर्य्यात्। उष्णानुष्णक्रमञ्च व्यत्यासादवचारयेत्। उदान इत्यादि। उदाने त्वावृते ऊर्द्ध्वं भेषजं योजयेत्। अपाने त्वावृतेऽनुलोमनं योजयेत्।

स्नेहपाननस्यादिकम्। आश्वासयेदिति स्थिरीकारयेत्। ऊर्द्ध्वगेनावृते प्राणेन। अनुक्तावरणरूपमाह—एषां स्वकर्म्मणामित्यादि। अत्र आवार्य्याणां बलीयावरणात् स्वकर्म्महानिर्भवति, आवरकस्य तु स्वकर्म्मवृद्धिर्भवति यदावरणेन आवार्य्यः प्रकुपितो न भवति तदा स्वकर्म्मणां वृद्धिर्भवतीति व्यवस्था। अन्ये तु आवरणीयस्य स्वकर्म्मवृद्धिर्भवतीति व्यवस्थामाहुः॥ ६५—६८॥

चक्रपाणिः—अनुक्तावरणलक्षणज्ञानोपायमाह—स्थानान्यवेक्ष्येति। कर्म्मवृद्ध्या व्याख्यातं पूर्व्ववत्। स्थानान्यवेक्ष्येत्यनेन वातानां स्थानगतविकारेण च वातविकृतिर्ज्ञातव्येति दर्शयति। उष्णं क्रममनुष्णञ्चेत्यत्र उष्ण एव क्रमो वाते युज्यते, तथापि स्थानापेक्षया रक्तादिदूष्यं क्रमविपर्य्ययस्य कारणं ज्ञेयम्। विकृतवातानां प्रकृतिस्थापनमाह—उदाने योजयेदूर्द्ध्वमित्यादि। एतच्च स्वमार्गयोजनं वातानां यथोक्तवमनादिक्रियायोगविधानेन कर्त्तव्यम्। समानं शमयेदिति

प्राणो रक्ष्यश्चतुर्भ्योऽपि स्थाने ह्यस्य स्थितिर्ध्रुवम् ।
स्वस्थानं गमयेदेवं वृतानेतान् विमार्गगान् ॥ ६९ ॥
मूर्च्छा दाहो भ्रमः शूलं विदाहः शीतकामिता ।
छर्द्दनञ्च विदग्धस्य प्राणे पित्तसमावृते ॥
ष्ठीवनं क्षवथूद्गारो निश्वासोच्छ्वाससंग्रहः ।
प्राणे कफावृते रूपाण्यरुचिश्छर्द्दिरेव च ॥
मूर्च्छाद्यानि च रूपाणि दाहो नाभ्युरसोः क्लमः ।
ऊर्द्ध्वभ्रंशश्च श्वासश्चाप्युदाने पित्तसंवृते ॥
आवृते श्लेष्मणोदाने वैवर्ण्यं वाक्स्वरग्रहः ।
दौर्ब्बल्यं गुरुगात्रत्वमरुचिश्चोपजायते ॥
अतिस्वेदस्तृषा दाहो मूर्च्छायोऽरतिरेव च ।
पित्तावृते समाने स्युरुपतापस्तथोष्मणः ॥
अस्वेदो वह्निमान्द्यञ्च रोमहर्षस्तथैव च ।
कफावृते समाने स्युर्गात्राणाञ्चातिशीतता ॥

आवृतं समानन्तु शमयेत्, एवमावृतं व्यानमूर्द्धानुलोमशमनैस्त्रिधा योजयेत् । आवृतः प्राणश्चतुर्भ्यो रक्ष्यः । अस्य हि स्थाने स्वस्थाने ध्रुवं स्थितिः कार्य्या । एवं वृतानेतान् विमार्गगान् स्वस्थानं गमयेत् ॥ ६९ ॥

गङ्गाधरः—प्राणादीनां प्रत्येकं पित्ताद्यावरणमाह—मूर्च्छेत्यादि । पित्तसमावृते प्राणे मूर्च्छादयः स्युः । ष्ठीवनमित्यादि । कफावृते प्राणे ष्ठीवनादयः स्युः । मूर्च्छेत्यादि । उदाने पित्तसंवृते मूर्च्छाद्यानि पूर्व्वोक्तानि मूर्च्छादाहभ्रमादीनि । आवृत इत्यादि । उदाने श्लेष्मणावृते वैवर्ण्यादयः स्युः । अतिस्वेद इत्यादि । समाने पित्तावृतेऽतिस्वेदादयः स्युः । अस्वेद इत्यादि ।

देहमध्यं कुर्य्यादित्यर्थः । त्रिधा व्यानन्तु योजयेदिति ऊर्द्ध्वमधो मध्ये त्रिधा योजयेत् । प्राणो रक्ष्यः स्थाने एव पालनीयः । चतुर्भ्य इत्यनेन इतरेभ्यःकुतोऽयं विशेषरक्षणीय इत्याह—स्थाने ह्यस्य स्थितिर्ध्रुवेति । अस्य प्राणस्य स्थाने चेति सम्यगवस्थाने सति स्थितिर्जीवनरूपा ध्रुवा ॥ ६९ ॥

चक्रपाणिः—प्राणादीनां पित्तेन कफेन तथा पित्तकफाभ्यां चावरणलक्षणान्याह—मूर्च्छा दाहो

व्याने पित्तावृते तु स्याद् दाहः सर्व्वाङ्गगः क्लमः।
गात्रविक्षेपसङ्गश्च सन्तापश्च सवेदनः॥
गुरुता सर्व्वगात्राणां पर्व्वसन्ध्यस्थिजा रुजा।
व्याने कफावृते लिङ्गं गतिसङ्गस्तथा रुजः॥
हारिद्रमूत्रवर्च्चस्त्वं तापश्च गुदशेफसोः।
लिङ्गं पित्तावृतेऽपाने रजसश्चाभिवर्त्तनम्॥
भिन्नामश्लेष्मसंसृष्ट-गुरुवर्च्चःप्रवर्त्तनम्।
श्लेष्मणा संवृतेऽपाने कफमेहस्य चागमः।
लक्षणानान्तु मिश्रत्वं पित्तस्य च कफस्य च।
उपलक्ष्य भिषग् विद्वान् मिश्रमावरणं वदेत्॥ ७०॥
यद् यस्य वायोर्निर्द्दिष्टं स्थानं तत्रेतरौ स्थितौ।
दोषौ बहुविधान् व्याधीन् दर्शयेतां यथानिजम्॥

कफावृते समानेऽस्वेदादयः स्युः। व्यान इत्यादि। पित्तावृते व्याने दाहादयः स्युः। सर्व्वाङ्गगः क्लमः क्लान्तिश्च। गुरुतेत्यादि। व्याने कफावृते सर्व्वगात्रगुरुतादयः स्युः। हारिद्रेत्यादि। अपाने पित्तावृते हारिद्रमूत्रत्वादयः स्युः। भिन्नामेत्यादि। अपाने श्लेष्मणा संवृते भिन्नामश्लेष्मसंसृष्टगुरुवर्च्चःप्रवर्त्तनादीनि स्युः। लक्षणानामित्यादि। पित्तकफावृते प्राणादौ पित्तस्य कफस्य च लक्षणानां मिश्रत्वमुपलक्ष्य मिश्रमावरणं कफपित्तावरणं वदेत्॥ ७०॥

गङ्गाधरः—यद् यस्येत्यादि। यस्य प्राणादेर्वायोर्यत् स्थानं पूर्व्वं निर्द्दिष्टं तत्र वायोः स्थाने स्थितावितरौ पित्तकफौ दोषौ बहुविधान् व्याधीन् दर्शयेतां

भ्रम इत्यादि। मूर्च्छादीनि दाह इत्यादिना प्रागुक्तानि श्लेष्माणं शोषयेयुः। अत्र पित्तनावृते समाने अग्न्युत्तजनाभावादुष्णोपघातो ज्ञेयः। गात्रविक्षेपसङ्गश्च गात्रविक्षेपणोपरमः। मिश्रमावरणमिति कफपित्तमावरणम्॥ ७०॥

आवृतं श्लेष्मपित्ताभ्यां प्राणश्चोदानमेव च ।
गरीयस्त्वेन पश्यन्ति भिषजः शास्त्रचक्षुषः ॥
विशेषाज्जीवितं प्राणे उदाने संश्रितं बलम् ।
स्यात् तयोः पीड़नात् हानिरायुषश्च बलस्य च ॥ ७१ ॥
सर्व्वेऽपि ते परिज्ञाताः परिसंवत्सरास्तथा ।
उपेक्षणादसाध्याः स्युरथ वा दुरुपक्रमात् ॥ ७२ ॥
हृद्रोगो विद्रधिः प्लीहा गुल्मोऽतिसार एव च ।
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥
तस्मादावरणं वैद्यः पवनस्योपलक्षयेत् ।
पञ्चात्मकस्य वातेन पित्तेन श्लेष्मणापि वा ॥
भिषग्जितैस्ततः सम्यगुपलक्ष्य समाचरेत् ।
अनभिष्यन्दिभिः स्निग्धैः स्रोतसां शुद्धिकारकैः ॥ ७३ ॥

यथानिजं यथास्वम् । आवृतमित्यादि । श्लेष्मपित्ताभ्यामावृतं प्राणश्चोदानश्च सर्व्वेष्वावृतेषु वायुषु गरीयस्त्वेन पश्यन्ति । कस्मादित्यतस्तदाह—विशेषादित्यादि । यतो विशेषात् प्राणे संश्रितं जीवितमायुः, उदाने संश्रितं बलं स्यात् । तयोः प्राणोदानयोः पित्तकफाभ्यां पीड़नादायुषो बलस्य च हानिः स्यात् ॥ ७१ ॥

गङ्गाधरः—सर्व्वेऽपीत्यादि । ते सर्व्वेऽपि प्राणादय आवृता अपरिज्ञाताः सर्व्वतोभावेनाज्ञातास्तथा परिसंवत्सरा अब्दातीताः उपेक्षणाच्चासाध्याः स्युः । अथ दुरुपक्रमात् दुष्टचिकित्सयारम्भादसाध्याः स्युः ॥ ७२ ॥

गङ्गाधरः—हृद्रोग इत्यादि । पित्ताद्यावृतानां प्राणादीनामुपेक्षणात् हृद्रोगादय उपद्रवा भवन्ति । तस्मात् वैद्यः पवनस्य पञ्चात्मकस्य प्राणादेरावरणं वातेन

चक्रपाणिः—यथानिजानिति यथात्मीयान् । गरीयस्त्वेनेत्यधिकत्वेन । एतद्गरीयस्त्वे हेतुमाह—विशेषादित्यादि । संश्रितमित्यधीनम् । परिज्ञेया इति याथातथ्येन ज्ञातव्याः । सम्यग्ज्ञाता अपि उपेक्षणात् याथातथ्येन ज्ञाता अपि परिसंवत्सरात् तथेति परिसंवत्सराः उपेक्षणीयाः स्युरिति योज्यम् । हृद्रोग इत्यादिना उपद्रवान्याह । पञ्चात्मकस्येति प्राणादिभेदेन पञ्चस्वरूपस्य ॥ ७१—७३ ॥

कफपित्ताविरुद्धं यद् यच्च वातानुलोमनम्।
सर्व्वस्थानावृतेऽप्याशु तत् कार्य्यं मारुते हितम्।
यापना वस्तयः प्रायो मधुराः सानुवासनाः।
प्रसमीक्ष्य बलाधिक्यं मृदु वा स्रंसनं हितम्॥
रसायनानां सर्व्वेषामुपयोगः प्रशस्यते।
शैलस्य जतुनोऽत्यर्थं पयसा गुग्गुलोस्तथा॥
लेहं वा भार्गवप्रोक्तमभ्यसेत् क्षीरभुङ् नरः।
अभयामलकीयोक्तानेकादश मिताशनः॥ ७४॥
अपानेनावृते सर्व्वं दीपनग्राहि भेषजम्।
वातानुलोमनं यच्च पक्वाशयविशोधनम्॥
इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम्।
प्राणादीनां भिषक् कुर्य्यात् वितर्क्य स्वयमेव तत्॥ ७५॥

स्वेतरेण पित्तेन कफेन चोपलक्षयेत्। उपलक्ष्य ततः परं भिषग्जितैरनभिष्यन्द्यादिभिः सम्यक् समाचरेत्॥ ७३॥

गङ्गाधरः—अपरञ्च भिषग्जितमाह—कफेत्यादि। कफपित्तयोरविरुद्धं यत् यच्च वातानुलोमनं तत् सर्व्वस्थानावृते मारुते हितमाशु कार्य्यम्। यापना वस्तयो वक्ष्यन्ते सिद्धिषु मधुरा वस्तयः सानुवासना अनुवासनश्च। एवं बलाधिक्यं प्रसमीक्ष्य मृदु स्रंसनं विरेचनं वा हितम्। सर्व्वेषां रसायनानां प्रयोगः प्रशस्यते शिलाजतुनः प्रयोगश्चात्यर्थं पयसा गुग्गुलोः प्रयोगः। तथा भार्गवप्रोक्तं लेहं च्यवनप्राशं क्षीरभुङ्नरोऽभ्यस्येत्। एवमभयामलकीयोक्तान् एकादश रसायनयोगान् मिताशनोऽभ्यसेत्॥ ७४॥

गङ्गाधरः—अपानेनेत्यादि। अपानेनावृते प्राणादौ सर्व्वं दीपनादि भेषजं यच्च वातानुलोमनं पक्वाशयशोधनं तदभ्यसेत्। उपसंहरति—इति

चक्रपाणिः—प्रसमीक्ष्येत्यादौ बलाधिक्ये सति स्रंसनं मृदु कर्त्तव्यमित्यभिप्रायः। अत्यर्थं प्रशस्यत इति सम्बन्धः। लेहं वा भार्गवप्रोक्तमिति च्यवनप्राशम्, च्यवनो हि भार्गव उच्यते। उक्तं हि आयुर्व्वेदसमुत्थाने—"भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः।" इति॥ ७४॥

पित्तावृते तु पित्तघ्नैर्मारुतस्यानुलोमनैः ।
कफावृते कफघ्नैश्च भिषक् कुर्य्यात् प्रतिक्रियाम् ॥ ७६ ॥
लोके वाय्वर्कसोमानां दुर्विज्ञेया यथा गतिः ।
तथा शरीरे वातस्य पित्तस्यापि कफस्य च ॥
क्षयं वृद्धिं समत्वञ्च तथैवावरणं भिषक् ।
विज्ञाय पवनादीनां न प्रमुह्यति कर्म्मसु ॥ ७७ ॥

तत्र श्लोकौ ।

पञ्चात्मनः स्थानवशाच्छरीरे
स्थानानि कर्म्माणि च देहधातोः ।
प्रकोपहेतुः कुपितश्च रोगान्
स्थानेषु चान्येषु वृतोऽवृतश्च ॥

संक्षेपत इत्यादि । आवृतानां प्राणादीनां चिकित्सितं यत् संक्षेपत इति प्रोक्तम्, भिषक् स्वयमेव तद् वितर्क्य विस्तरेण चिकित्सितं कुर्य्यात् ॥ ७५ ॥

गङ्गाधरः—पित्तेत्यादि । पित्तावृते पित्तघ्नैर्मारुतस्यानुलोमनैरित्येवं शेषं ( कफावृते कफघ्नमारुतानुलोमनैश्च प्रतिक्रियां ) कुर्य्यात् ॥ ७६ ॥

गङ्गाधरः—लोक इत्यादि । यथा भूलोकादिलोके वाय्वर्कसोमानां गतिः दुर्विज्ञेया, तथा शरीरे वातपित्तकफानां गतिर्दुर्विज्ञेया । क्षयमित्यादि । पवनादीनां क्षयं वृद्धिं समत्वञ्च तथैवावरणं विज्ञाय भिषक् कर्म्मसु चिकित्सा-क्रियासु न प्रमुह्यतीति ॥ ७७ ॥

चक्रपाणिः—वातस्यानुलोमनश्चिकित्सितं कुर्य्यादिति नियोजनीयम् । वातादीनां दुर्विज्ञेयता दृष्टान्तेन दर्शयति लोक इत्यादि । क्षयमित्यादौ आवरणमपि क्षयवृद्धिसमत्वं निर्द्दिष्टमेव, तथापि आवरणस्य विशेषलक्षणचिकित्सार्थं पृथगभिधानम् । कर्म्मस्विति चिकित्सासु ॥ ७५—७७ ॥

चक्रपाणिः—पञ्चात्मन इत्यादिसंग्रहे पञ्चात्मनः स्थानवशात् इति च्छेदः । देहधातोरिति

वाणीश्वरः प्राणभृतां करोति
क्रिया च तेषां निखिला निरुक्ता।
तां देशसात्म्यर्त्तुबलान्यवेक्ष्य
प्रयोजयेच्छास्त्रमतानुसारी ॥ ७८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते चिकित्सितस्थाने वातरोगचिकित्सितं नाम अष्टाविंशोऽध्यायः ॥ २८ ॥

गङ्गाधरः—तत्र श्लोकाविति। पञ्चात्मन इत्यादि। पञ्चात्मनः पवनस्य। वाणीश्वरः प्राणः। समापयति—अग्नीत्यादि ॥ ७८ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
अष्टाविंशेऽध्याय एतद्वातरोगचिकित्सिते। वैद्यगङ्गाधरकृते जल्पकल्पतरौ पुनः। चिकित्सितस्थानजल्पे षष्ठस्कन्धे चिकित्सिते। वातरोगिक-जल्पाख्या शाखाष्टाविंशिका मता ॥ २८ ॥

देहधारकरूपस्याविकृतस्य वायोरित्यर्थः। उक्तचिकित्साकरणापेक्षणीयं संग्रहेणाह तामित्यादि। देशाद्यपेक्षया सूत्रस्थाने विवृता देशादिभेदेन प्रकरणतया विस्तारिता प्रपञ्चिता ॥ ७८ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां वातव्याधिचिकित्सितं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

## ऊनत्रिंशोऽध्यायः।

अथातो वातरक्तचिकित्सितं व्याख्यास्यामः,
इति ह स्माह भगवानात्रेयः॥ १॥

हुताग्निहोत्रमासीनमृषिमध्ये पुनर्व्वसुम्।
पृष्टवान् गुरुमेकाग्रमग्निवेशोऽग्निवर्च्चसम्॥
अग्निमारुततुल्यस्य संसर्गस्यानिलासृजोः।
हेतुलक्षणभैषज्यान्यथास्मै गुरुरब्रवीत्॥ २॥

लवणाम्लकटुक्षार-स्निग्धोष्णाजीर्णभोजनैः।
क्लिन्नशुष्काम्बुजानूप-मांसपिण्याकमूलकैः॥
कुलत्थमाषनिष्पाव-शाकादिपललेक्षुभिः।
दध्यारनालसौवीर-शुक्ततक्रसुरासवैः॥

गङ्गाधरः—अथोद्दिष्टक्रमाद् वातरक्तचिकित्सितमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद् व्याख्येयम्॥ १॥

गङ्गाधरः—हुताग्निहोत्रमित्यादि। अनिलासृजोः संसर्गस्य वातरक्तस्य, अथेत्येवं पृष्टवतेऽस्मै अग्निवेशाय॥ २॥

गङ्गाधरः—लवणाम्लेत्यादि। क्लिन्नं वा शुष्कं वाम्बुजादिमांसम्। पललं

चक्रपाणिः—वातव्याधिचिकित्सितानन्तरं वातरक्तचिकित्सितमुच्यते। वातरक्ताभ्यां जनितो व्याधिः वातरक्तं किंवा वात एव अवस्थान्तरप्राप्तं वातरक्तम्। अग्निमारुततुल्यस्येत्यनेन वातरक्तस्य दुर्निवारत्वं शीघ्रकारित्वञ्चाह। लवणेत्यादिना हेतुमाह। प्रायशः सुकुमाराणामित्यनेन सुकुमारशरीरे लवणादिहेतुसेवया शीघ्रं दुष्टवातशोणितं सम्भवतीति दर्शयति। संसृष्टमन्नं सुखेन भुञ्जते तेषां संसृष्टान्नसुखभोजिनाम्। अत्र लवणानि यद्यपि वातशोणितहेतुतयोक्तानि तथापि शोणितदुष्टिकारणम् एतत् प्राधान्यात् ज्ञेयम्। वातदुष्टिकारणन्तु कषायेत्यादिनोक्तम्, तत्र लवणादि

विरुद्धाध्यशनक्रोध-दिवास्वप्नप्रजागरैः।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम्।
अचंक्रमणशीलानां कुप्यते वातशोणितम्॥
अभिघातादशुद्धाच्च प्रदुष्टे शोणिते नृणाम्।
कषायकटुतिक्तानां रूक्षाणामतिभोजनात्॥
हयोष्ट्रखरयानाम्बु-क्रीड़ाप्लवनलङ्घनैः।
उष्णे चात्यध्वगमनाद् व्यवायाद् वेगनिग्रहात्॥
वायुर्विवृद्धो वृद्धेन रक्तेनावरितः पथि।
कृत्स्नं संदूषयेद् रक्तं तज्ज्ञेयं वातशोणितम्॥
ः वातबलासाख्यमाढ्यवातश्च नामभिः॥ ३॥

तिलकल्कः। सुकुमारा मृदुदेहावयवास्तेषां मिथ्याहारादीनाम्। अभिघातादित्यादि। अभिघाताशुद्धिभ्यां नृणां रक्ते दुष्टे कषायादीनामतिभोजनात् हययानादिभिर्विवृद्धो वायुर्वृद्धेन रक्तेन पथि वातस्य गमनस्रोतसि आवरितः सन् कृत्स्नं रक्तं सन्दूषयेत्। तद् वातशोणितं ज्ञेयम्। तच्च खुड्डादिकं नामभिरुच्यते॥ ३॥

च मिश्रितं सत् वातशोणितोत्पादकं भवति। यत् तु कुप्यते वातशोणितमिति अनेन लवणादीनां वातशोणितकारणत्वमुक्तम्, तद् वातशोणितजनकशोणितदुष्टिकारणात् ज्ञेयम्। अशुद्धेरति शुद्धिकालेऽसंशोधनात्। केचिदभिघातात् अशुद्ध्या चेतिस्थाने अधुना वातवैषम्यमिति पठन्ति। अशुद्ध्या चेति चकारेण लवणादिषु प्रजागरैरित्यन्तं शोणितदुष्टिकारणं समुच्चिनोति। अत्र शोणितवातस्य विच्छिद्य हेतुवर्गपाठेन द्वयोरप्यत्र स्वतन्त्रं प्रकोपं दर्शयति। उष्णे काले च जनितात् तद्वैषम्यात्। वायुरित्यादिना सम्प्राप्तिमाह—वायुः क्रुध्यति स्रोतसि इति वृद्धोऽपि स्वहेतोर्वायुः पुनः शोणिताद्यावरणविशेषेण क्रुद्धः। व्यवहारार्थं तन्त्रान्तरप्रसिद्धसंज्ञाभेदानप्याह—खुडमित्यादि। खुडदेशप्राप्तः खुडः। वातस्यावरणेन बलमस्य यस्मिन् तत् शोणितमिति वातबलाशम्। खुडशब्देन सन्धिरुच्यते। वातस्यावरणेन आढ्यानां प्रायो भवतीति आढ्यरोगः॥ १—३॥

तस्य स्थानं करौ पादावङ्गुल्यः सर्व्वसन्धयः।
कृत्वादौ हस्तपादेषु मूलं देहं विधावति॥
सौक्ष्म्यात् सर्व्वसरत्वाच्च पवनस्यासृजस्तथा।
तद् द्रवत्वात् सरत्वाच्च देहं गच्छेत् सिरायणैः॥
पर्व्वस्वभिहतं क्रुद्धं वक्रत्वादवतिष्ठते।
स्थितं पित्तादिसंसृष्टं तास्ताः सृजति वेदनाः॥
करोति दुःखं तेष्वेव तस्मात् प्रायेण सन्धिषु।
भवन्ति वेदनास्तास्ता अत्यर्थं दुःसहा नृणाम्॥ ४॥
स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक्।
सन्धिशैथिल्यमालस्यं सदनं पिड़कोद्गमः॥
जानुजङ्घोरुकट्यंस-हस्तपादाङ्गसन्धिषु।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च॥
कण्डूः सन्धिषु रुग् भूत्वा भूत्वा नश्यति चासकृत्।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्व्वलक्षणम्॥ ५॥

गङ्गाधरः—तस्येत्यादि। तस्य स्थानं करपादाङ्गुलीसन्धयः। तत्र हस्तपादेष्वादौ मूलं कृत्वा तद् वातशोणितं पवनस्यासृजश्च सौक्ष्म्यादितो देहं विधावति। तच्च वातशोणितं द्रवत्वात् सरत्वाच्च सिरायणैर्देहं गच्छेत्। पर्व्वसु क्रुद्धं तद्रक्तमभिहतं वक्रत्वादवतिष्ठते। तत्र स्थितं पित्तादिसंसृष्टं तास्ताः पित्तजा वेदनाः सृजति। करोति प्रायेण तत्र सन्धिषु दुःखं करोति॥ ४॥

गङ्गाधरः—पूर्व्वरूपमाह—स्वेद इत्यादि। स्वेदोऽत्यर्थं न वा स्वेदः।

चक्रपाणिः—वातशोणितस्य वैशेषिकं स्थानमाह। तस्य स्थानमित्यादि। करपादग्रहणेनैव अङ्गुलीनां ग्रहणे प्राप्ते अङ्गुलीनां बहुपर्व्वतया विशेषाधिष्ठानत्वोपदर्शनार्थं पुनरभिधानम्। मूलमास्थायेति आस्पदं कृत्वा। तत्र हेतुमाह—सौक्ष्म्यादित्यादि। सूक्ष्ममार्गानुसारित्वात्। वातशोणितस्य देहं सर्पतः विशेषेण पर्व्वस्थानम्। शिरायनैरिति शिरारूपैर्मार्गैः। वक्रत्वादिति पर्व्वणां वक्रत्वात्। पित्तादिसंसृष्टमिति पित्तेन कफेन च हेत्वन्तरयुक्तेन वायुना युक्तम्। तस्मादिति सन्धिष्ववस्थानात्। स्वेद इत्यादिना पूर्व्वरूपमाह। स्वेदोऽत्यर्थं न वेति च यद्यपि कुष्ठपूर्व्वरूपे उक्तं तथाप्यसमानभूरिसम्बन्धात् अन्यतरपूर्व्वरूपत्वे निश्चयः॥ ४। ५॥

उत्तानमथ गम्भीरं द्विविधं तत् प्रचक्ष्यते।
त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम्॥
कण्डूदाहरुजायाम-तोदस्फुरणकुञ्चनैः।
अन्विता श्यावरक्ता त्वक् बाह्ये ताम्रा तथोच्यते॥
गम्भीरे श्वयथुः स्तब्धः कठिनोऽथ भृशार्त्तिमान्।
श्यावस्ताम्रोऽथवा दाह-तोदस्फुरणपाकवान्॥
रुग्विदाहान्वितोऽभीक्ष्णं वायुः सन्ध्यस्थिमज्जसु।
छिन्दन्निव चरत्यन्तं वक्रीकुर्व्वंश्च वेगवान्॥
करोति खञ्जं पङ्गुं वा शरीरे सर्व्वतश्चरन्।
सर्व्वैर्लिङ्गैस्तु विज्ञेयं वातासृगुभयाश्रयम्॥ ६॥

कार्ष्ण्यं शरीरस्य। यदि कुत्रचित् क्षतं भवति तदा तत्रातिरुग् भवति। सन्धिषु रुग् भूत्वा भूत्वा नश्यति॥ ५॥

गङ्गाधरः—उत्तानमित्यादि। त्वगाद्याश्रितमुत्तानं गम्भीरन्तु मेदोमज्जाद्यन्तराश्रयम्। तत्रोत्ताने लक्षणमाह—कण्डूदाहेत्यादि। बाह्ये उत्ताने वातरक्त त्वक् कण्ड्वादिभिरन्विता श्यावरक्ता च भवति तथा ताम्रवर्णा चोच्यते। गम्भीर इत्यादि। गम्भीरे वातरक्ते यः श्वयथुः स स्तब्धादिः स्यात्। वायुस्तु सन्धिषु चास्थिषु मज्जसु च छिन्दन्निव चरति। वेगवानन्तं करपादाङ्गुलीप्रभृत्यङ्गं वक्रीकुर्व्वन् खञ्जं पाङ्गुल्यं वा सर्व्वतश्चरन् करोति। सर्व्वैरित्यादि। कण्ड्वादेरतदन्तैः सर्व्वैर्लिङ्गैरुभयाश्रयं उत्तानगम्भीराश्रयं वातासृक् विज्ञेयम्॥६

चक्रपाणिः—अवगाढानवगाढचिकित्साभेदार्थमाह—उत्तानमित्यादि। अन्तराश्रयमिति त्वङ्मांसव्यतिरिक्तगम्भीरधात्वाश्रयम्। सर्व्वैर्लिङ्गैरिति। उत्तरवर्गाभ्युक्तैर्मिलित्वा अयञ्च तृतीयः प्रकारः, बाह्याभ्यन्तरप्रकारो वेति कृत्वा रोगसंग्रहे द्विविधं वातशोणितमुक्तम्। उत्तानमगाढमित्येके भाषन्ते। तत् तु न सम्यक्, कस्मात्? कुष्ठवदुत्तानं भूत्वा कालान्तरेण अवगाढं भवतीत्यनेन अद्वैविध्यं सिद्धम्। तदा आचार्य्ययोः परमाप्तयोः सुश्रुताग्निवेशयोः एकस्यापि अप्रामाण्यं न सङ्गतमिति कृत्वा अविरोधमस्य व्याख्यास्यामः। तथाहि सुश्रुतेनोक्तम्। द्विविधं वातशोणितमुत्तानमवगाढञ्चेत्येके भाषन्ते तत तु न सम्यक्। तद्धि कुष्ठवदुत्तानीभूत्वा कालान्तरेणावगाढीभवति तस्मान्न द्विविधम्। उत्तानं वातशोणितं कुष्ठवद् गम्भीरं भवतीत्युच्यते। न तु सर्व्वमेव उत्तानं भूत्वा गम्भीरं भवतीति प्रतिज्ञायते। तेन यो ब्रूते उत्तानमेवावतिष्ठते तं प्रति सुश्रुत-

तत्र वातोऽधिको वा स्याद् रक्तं पित्तं कफोऽपि वा ।
संसृष्टैश्च समस्तैश्च यच्च तच्छृणु लक्षणैः ॥ ७ ॥
विशेषतः सिरायामस्तोदस्फुरणभेदनम् ।
शोथस्य कार्ष्ण्यं रौक्ष्यञ्च श्यावतावृद्धिहानयः ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
कुञ्चनस्तम्भने शीत-प्रद्वेषश्चानिलोत्तरे ॥
रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदान्वितो भृशम् ॥
विदाहो वेदना मूर्च्छा स्वेदस्तृष्णा मदो भ्रमः ।
रागः पाकश्च भेदश्च शोषश्चोक्तानि पैत्तिके ॥
स्तैमित्यं गौरवं स्वेदः सुप्तिर्मन्दा च रुक् कफे ।
हेतुलक्षणसंसर्गाद् वदेद् द्वन्द्वं त्रिदोषजम् ॥ ८ ॥

<u>गङ्गाधरः</u>—तत्रेत्यादि । तत्रोभयाश्रये संसृष्टैश्च समस्तैश्च वातोऽधिकः स्यात् पित्तश्च रक्तश्च कफश्चाधिको भवति तल्लक्षणं शृणु ॥ ७ ॥

<u>गङ्गाधरः</u>—विशेषत इत्यादि । अनिलोत्तरे वातरक्ते सिरायामः सिराणां दैर्घ्यं तोदादीनि च । रक्त इत्यादि । रक्ते रक्ताधिके वातरक्ते यः शोथः सोऽतिरुक् तोदः इत्यादि स्यात् । विदाह इत्यादि । पैत्तिके पित्ताधिके वातरक्ते विदाहादयः स्युः । स्तैमित्यमित्यादि । कफे कफाधिके वातरक्ते स्तैमित्यादि स्यात् । हेतुलक्षणद्वन्द्वसर्व्वाणां संसर्गाद् द्वन्द्वं वातरक्तं त्रिदोषजञ्च वदेत् ॥ ८ ॥

वचनं बाधकम् । चरके तु उत्तानमेवावतिष्ठते इति नैवोक्तम् । किन्तु प्रथमोत्पत्तौ किञ्चिदुत्तानमुत्पद्यते किञ्चित् तु गम्भीरमिति, तेन न विरोधश्चरकसुश्रुतयोः ॥ ६ ॥

<u>चक्रपाणिः</u>—तत्र वातेऽधिके इत्यादौ पित्तवृद्धिः शोणितवृद्धिः कफवृद्धिर्ज्ञेया । संसृष्टैरिति द्वित्रिमेलकैः, समस्तैरिति चतुर्मिलितैः । शिरायामेत्यादिना वाताद्युल्बणानां चतुर्णां लक्षणमाह । आयामो विस्तरणम्, श्यावता श्याववर्णत्वम् । श्वयथुरित्यादिना उद्रिक्तरक्तस्य विशेषणम् । द्वन्द्वं त्रिदोषजमित्यत्र अधिकशोणितानुबन्धोऽपि गृहीतव्यः । तेन वातादिचतुष्टयमेलकजम् अपि वातशोणितं ज्ञेयम् । अत एव द्वित्रिसर्व्वाधिकभेदात् द्विविधस्यापि वातशोणितस्य पूर्व्वटीकाकृद्भिः

एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्।
त्रिदोषजमसाध्यं स्याद् यस्य च स्युरुपद्रवाः॥ ९॥
अस्वप्नारोचकश्वास-मांसकोथशिरोग्रहाः।
मूर्च्छायमदरुक्तृष्णा-ज्वरमोहप्रवेपकाः॥
हिक्कापाङ्गल्यवीसर्प-पाकतोदभ्रमक्लमाः।
अङ्गुलीवक्रता स्फोटा दाहमर्म्मग्रहार्व्वुदाः॥ १०॥
एतैरुपद्रुतं वर्ज्ज्यं मोहेनैकेन वापि यत्।
संप्रस्रावि विवर्णञ्च स्तब्धमर्व्वुदकृच्च यत्॥
वर्ज्जयेच्चैव सङ्कोच-करमिन्द्रियतापनम्।
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम्॥ ११॥

<u>गङ्गाधरः</u>—एकेत्यादि। एकदोषानुगं नवं वातरक्तं साध्यम् द्विदोषजं याप्यम्, त्रिदोषजमसाध्यं स्यात्, यस्य च वाताद्यधिकस्यापि उपद्रवाः स्युस्तदप्यसाध्य स्यात्॥ ९॥

<u>गङ्गाधरः</u>—उपद्रवानाह—अस्वप्नेत्यादि। अस्वप्नाद्यर्व्वुदान्ता उपद्रवा भवन्ति॥ १०॥

<u>गङ्गाधरः</u>—एतैरित्यादि। एतैः समस्तैरुपद्रवैरुपद्रुतं वातरक्तं वर्ज्ज्यं न त्वेकैकेन वहुभिर्व्वोपद्रुतम्। तत्रैकेन मोहेनोपद्रुतं यत् तदपि वर्ज्ज्यम्। मांसस्रावित्रभृतिकं यच्च तदपि विवर्ज्जयेत्। सङ्कोचकरमिन्द्रियतापनं यच्च तदपि वर्ज्जयेत्। नन्वनेकोपद्रवयुक्तं किं साध्यमित्यत आह—अकृत्स्नेत्यादि। एकाद्य-

पञ्चचत्वारिंशद्भेदा उक्ताः। करणादीनि तु प्रकरणान्तरेण षट्त्रिंशद्विधमुक्तम्। उक्तं हि—"वातोत्तरं प्रवृद्धासृक् पञ्चविंशद्विधं मतम्। पित्तात् षट्त्रिंशद्विधं योगात् कफाद् दशेति। एते भेदाः अनतिप्रयोजनत्वान्न विवृता॥ ७। ८॥

<u>चक्रपाणिः</u>—साध्यादिविभागमाह—एकदोषानुगमित्यादि। यस्य च स्युरुपद्रवा इति साध्यत्वेनोक्तस्यापि वक्ष्यमाणोपद्रवयोगादसाध्यता। त्रिदोषस्य असाध्यत्वेऽपि यद् वक्ष्यति "खजनमथिता पेया वातरक्ते त्रिदोषजे" इति, तत् असंपूर्णलक्षणत्रिदोषजाभिप्रायेण। मूर्च्छा इव मूर्च्छा, पाङ्गुल्यं पङ्गुता। मोहेनैकेनेति इतरोपद्रवाणां मेलकैरसाध्यत्वम्, मोहस्तु एक एव असाध्यताकर इत्यर्थः। ये तु मेहेनैकेनेति पठन्ति ते मेहेन वातशोणितस्य विरुद्धोपक्रमतया मेहयोगेनासाध्यताम्

रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः ।
निविश्यान्योऽन्यमावाध्य वेदनाभिर्हरेदसून् ॥
तत्र मुञ्चेदसृक् शृङ्ग-सूच्यलावुजलौकसा ।
प्रच्छनैर्वा सिराभिर्वा यथादोषं यथाबलम् ॥
रुग्दाहतोदरागार्त्तादसृक् स्राव्यं जलौकसा ।
शृङ्गैस्तु वै चिमिचिमा कण्डूरुग् दूयनात् हरेत् ॥
देशाद् देशं व्रजत् स्राव्यं सिराभिः प्रच्छनेन वा ।
अङ्गग्लानौ तु न स्राव्यं रूक्षे वातोत्तरे च यत् ॥
गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुसिरामयान् * ।
ग्लानिश्चापि ससङ्कोचां कुर्य्याद् वायुरसृक्क्षयात् ॥

कृत्स्नेनोपद्रवेणोपद्रुतं वातरक्तं याप्यं निरुपद्रवन्त्वेकदोषानुगं साध्यं स्यात् ॥ ११ ॥

गङ्गाधरः—अत्र साध्ये क्रियार्थमाह—रक्तेत्यादि। वातरक्ते मारुतः शाखासन्धिषु निविश्य रक्तमार्गमाशु निहन्ति ततो रक्तश्च मारुतश्चान्योऽन्यमावाध्य वेदनाभिरसून् हरेत्। तत्रासृक् शृङ्गादिभिर्मुञ्चेत्। यथादोषमाह—रुगित्यादि। रुगादियुक्ताद् वातरक्तादसृक् जलौकसा मुञ्चेत। चिमिचिमादियुक्तात् शृङ्गैर्हरेत्। देशाद् देशं व्रजद् वातरक्तेऽसृक् सिराभिः प्रच्छनेन वा स्राव्यम्। अयोग्यमाह—अङ्गग्लानावित्यादि। अङ्गग्लान्यादौ कस्मान्न स्राव्यमित्यत आह—गम्भीरमित्यादि। अङ्गग्लानौ रूक्षे वातोत्तरे च वायुः (स्नायुसिरामुखात्) आहुः। वातशोणितस्य हि प्रायेण मधुरशीतोपक्रमः, तद्विपरीतस्तु मेदस्येति विरुद्धोपक्रमता। विवर्णमिति विपरीतवर्णम्, विवर्णत्वमल तु वातानुषङ्गोपद्रवः ॥ ९—११ ॥

चक्रपाणिः—वातशोणितस्य रक्तहरणार्थं रूपमाह—रक्तमार्गमित्यादि। रक्तस्य मार्गं मारुतो निहन्ति, शाखासन्धिषु निविश्य रक्तनिरोधाद् अन्योऽन्यमावाध्य रक्तेन वातं वातेन च रक्तं आवाध्य वेदनाभिः हरेदसूनिति योज्यम्। अत एवाह। अत्र वातशोणिते असृक् विमुञ्चेदिति भावः। असृङ्मोक्षणेन आवरकव्यपगमात् वायुरपि प्रसन्नो भवति ततश्च व्याध्युपरमः। देशाद् देशं व्रजदिति प्रसरणशीलम्। स्रावनार्हे शोणितेऽपि अतिस्रावणाद् दोषमाह—गम्भीरमित्यादि।

* स्नायुसिरामयात् तथा स्नायुसिरामुखादिति वा पाठः क्वचित्।

खाञ्जगादीन् वातरोगांश्च मृत्युञ्चात्यवसेचनात्।
कुर्य्यात् तस्मात् प्रमाणेन स्निग्धाद्रक्तं विनिर्हरेत्॥ १२॥
विरेच्य स्नेहयित्वादौ स्नेहयुक्तैर्विरेचनैः।
रूक्षैर्वा मृदुभिः शस्तमसकृद् वस्तिकर्म्म च॥
सेकाभ्यङ्गप्रदेहान्न-स्नेहाः प्रायोऽविदाहिनः।
वातरक्ते प्रशस्यन्ते विशेषन्तु निबोध मे॥ १३॥
वाह्यमालेपनाभ्यङ्ग-परिषेकोपनाहनैः।
विरेकास्थापनस्नेह-पानैर्गम्भीरमाचरेत्॥ १४॥
सर्पिस्तैलवसामज्ज-पानाभ्यञ्जनवस्तिभिः।
सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत्॥
विरेचनैर्घृतक्षीर-पानैः सेकैः सवस्तिभिः।
शीतैर्निर्व्वापणैश्चापि रक्तपित्तोत्तरं जयेत्॥

असृक्क्षयात् गम्भीरश्वयथुप्रभृतीन् कुर्य्यात्। अत्यवसेचनात्तु सर्व्वस्मिन्नेव वातरक्ते खाञ्जगादीन् कुर्य्यात्। तस्मात् स्निग्धाद् वातरक्तिपुरुषात् प्रमाणेन रक्तं विनिर्हरेत्॥ १२॥

गङ्गाधरः—अथ क्रियान्तरमाह—विरेच्येत्यादि। आदौ स्नेहयित्वा वातरक्तिनं स्नेहयुक्तैर्विरेचनै रूक्षैर्वा मृदुभिर्विरेचनैर्विरेच्यासकृद् वस्तिकर्म्म शस्तम्, सेकादयश्च वातरक्ते प्रशस्यन्ते, ततो विशेषन्तु निबोधेति॥ १३॥

गङ्गाधरः—विशेषमाह—वाह्यमित्यादि। आलेपनादुपनाहान्तैर्वाह्यमुत्तानमुपाचरेत्। विरेकादिभिर्गम्भीरमुपाचरेत्॥ १४॥

गङ्गाधरः—तत्र वातादिविशेषे विशेषमाह—सर्पिरित्यादि। सर्पिरादिभिः वातोत्तरमुत्तानमुपाचरेत्। विरेचनादिभिस्तु रक्तोत्तरं पित्तोत्तरञ्चोत्तानं

खाञ्जगादीनिति खाञ्जपाङ्गुल्यकुब्जत्वादीन् कुर्य्यादिति च्छेदः। प्रमाणेनेति अविकारिमात्रया॥ १२॥

चक्रपाणिः—विरेचनविधानमाह। स्नेहयुक्तै रूक्षैर्वेति विकल्पद्वयम्। स्नेहयुक्तविरेचनम् ईषत्स्निग्धविषयम्, रूक्षैस्तु विरेचनं अतिस्निग्धविषयम्। मृदुभिरित्यनेन वातक्षोभभयाद् अत्र तीक्ष्णविरेचनं निषेधयति। वस्तिकर्म्मेति अनुवासननिरूहरूपम्। प्रायोऽविदाहिन इति नितराम्

वमनं मृदु नात्यर्थं स्नेहसेको विलङ्घनम् ।
कोष्णा लेपाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥
कफवातोत्तरे शीतैः प्रलिप्ते वातशोणिते ।
विदाहशोफरुक्कण्डू-विवृद्धिः स्तम्भनाद्ध भवेत् ॥
रक्तपित्तोत्तरे * दाहः क्लेदोऽवदारणं भवेत् ।
उष्णैस्तस्माद्ध भिषक् दोष-बलं बुद्ध्वा चरेत् क्रियाम् ॥१५॥
दिवास्वप्नं ससन्तापं व्यायामं मैथुनं तथा ।
कटूष्णगुर्व्वभिष्यन्दि-लवणाम्लञ्च वर्ज्जयेत् ॥ १६ ॥
पुराणयवगोधूम-नीवाराः शालिषष्टिकाः ।
भोजनार्थे रसार्थन्तु विष्किरप्रतुदा हिताः ॥
आढक्यश्चणका मुद्गा मसूराः समुकुष्टकाः ।
यूषार्थे बहुसर्पिष्काः प्रशस्ता वातशोणिते ॥
सुनिषण्णकवेत्राग्र-काकमाचीशतावरीम् ।
वास्तुकोपोदिकाशाकं शाकं सौवर्च्चलं तथा ॥

जयेत् । वमनमित्यादि । कफोत्तरे उत्ताने वातरक्ते वमनादयः शस्यन्ते । द्वन्द्वजक्रियामाह—कफवातोत्तर इत्यादि । कफवातोत्तरे उत्ताने शीतैः प्रलिप्ते स्तम्भनाद् विदाहादिवृद्धिः स्यात् । पित्तरक्तोत्तरे तूष्णैर्लिप्ते दाहादिकं भवेत् । तस्माद् दोषबलं बुद्ध्वा क्रियां चरेत् ॥ १५ ॥

गङ्गाधरः—वर्ज्ज्यान्याह—दिवेत्यादि । वातरक्ते दिवास्वप्नादिकं वर्ज्जयेत्॥१६

गङ्गाधरः—पथ्यान्याह—पुराणेत्यादि । पुराणयवादयो भोजनार्थं विष्किरादयो मांसरसार्थम् । यूषार्थे बहुसर्पिष्का आढक्यादयः शस्ताः । शाकन्तु

अविदाहिनः । विशेषमिति विशिष्टचिकित्सितम् । बाह्यमित्युक्त्वा कफोत्तरे वातोत्तरे च शीतप्रलेपदोषमाह—कफवातोत्तर इत्यादि । शीतलेपेन विदाहोऽत्र उष्णरोधाद् भवतीति ज्ञेयम् । पित्तोत्तरे रक्तोत्तरे च उष्णैः प्रलेपैर्दोषमाह—रक्तपित्तोत्तर इत्यादि । दोषबलं बुद्ध्वा अनुगुणामेव क्रियामाचरेत्, वातकफोत्तरे उष्णा रक्तपित्तोत्तरे शीता मिश्रे च मिश्रा ॥ १३—१६ ॥

* वातपित्तोत्तरे इति क्वचित् पाठः ।

घृतमांसरसे भृष्टं शाकसात्म्याय दापयेत्।
व्यञ्जनार्थं तथा गव्यं माहिषाजं पयो हितम्॥
इति संक्षेपतः प्रोक्तं वातरक्तचिकित्सितम्।
एतदेव पुनः सर्व्वं व्यासतः संप्रवक्ष्यते॥ १७॥
श्रावणीक्षीरकाकोली-जीवकर्षभकैः समैः।
सिद्धं समधुकैः सर्पिः सक्षीरं वातरक्तनुत्॥ १८॥
बलामतिबलां मेदामात्मगुप्तां शतावरीम्।
काकोलीं क्षीरकाकोलीं रास्नां मृद्वीकां पेषयेत्॥
घृतं चतुर्गुणक्षीरं तैः सिद्धं वातरक्तनुत्।
हृत्पाण्डुरोगवीसर्प-कामलाज्वरनाशनम्॥ १९॥
त्रायन्तिका तामलकी द्विकाकोली शतावरी।
कशेरुका कषायेण कल्कैरेभिः पचेद् घृतम्॥
दत्त्वा परूषकद्राक्षा-काश्मर्य्येक्षुरसान् समान्।
पृथक् विदार्य्याः स्वरसं तथा क्षीरं चतुर्गुणम्॥

सुनिषण्णकादिशाकम्। लवणं सौवर्च्चलम्। घृतेत्यादि। शाकसात्म्याय सुनिषण्णकादीनां शाकं घृतमांसरसे भृष्टं व्यञ्जनार्थं दापयेत्। तथा गव्यं माहिषमाजञ्च पयो हितमिति। इतीत्यादि स्पष्टम्॥ १७॥

गङ्गाधरः—व्यासत आह—श्रावणीत्यादि। श्रावणी मुण्डेरी। श्रावण्यादि-मधुकान्तैः कल्कैश्चतुर्गुणक्षीरे सिद्धं सर्पिः सर्व्ववातरक्तनुत्॥ १८॥

गङ्गाधरः—बलामित्यादि। बलादि-मृद्वीकान्तः कल्कः॥ १९॥

गङ्गाधरः—त्रायन्तिकेत्यादि। त्रायन्ती त्रायमाणा तामलकी भूम्यामलकी। त्रायन्तिकादीनां षण्णां घृतसमेन कषायेण एभिः षड्भिर्घृतपादिकैः कल्कैश्च

चक्रपाणिः—सौवर्च्चलमिति सूर्य्यावर्त्तशाकम्। व्यञ्जनार्थमिति भोजनसाधनतया। आजं पयश्चेत्यादि उपक्रमः। एतदेवेति संक्षिप्तप्रयोगकथनं प्रपञ्चेन प्रपञ्चयति॥ १७॥

चक्रपाणिः—श्रावणी मुण्डी। चतुर्गुणक्षीरमित्यनेन द्रवान्तरभावात् चतुर्गुणक्षीरमेव घृताद् भवति। त्रायन्तीत्यादौ कल्कैरेभिरित्यनेन पृथक् विदार्य्यन्तानां कल्कत्वम्, कशेरुकाकषायः। परूषकस्वरसादीनां प्रत्येकं घृतसमानत्वे विदारीरसस्यापि तथा वचनात् समत्वम्। अत्र जतूकर्णः—

एतत् प्रायौगिकं सर्पिः पारूषकमिति स्मृतम् ।
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे ॥ २० ॥

पारूषकं घृतम् ।

द्वे पञ्चमूले वर्षाभूमेरण्डं सपुनर्नवम् ।
मुद्गपर्णीमहामेदा-माषपर्णीशतावरीः ॥
शङ्खपुष्पीमवाक्पुष्पीं रास्नामतिबलां बलाम् ।
पृथक् द्विपलिकान् कृत्वा जलद्रोणे विपाचयेत् ॥
पादशेषं समं क्षीरं धात्रीक्षुच्छागलान् रसान् ।
घृताढ़केन संयोज्य शनैर्मृद्वग्निना पचेत् ॥
कल्कं दत्त्वा च मेदे द्वे काश्मर्य्यफलमुत्पलम् ।
त्वक्क्षीरीं पिप्पलीं द्राक्षां पद्मबीजं पुनर्नवाम् ॥
नागरं क्षीरकाकोलीं पद्मकं बृहतीद्वयम् ।
वीरां शृङ्गाटकं भव्यमुरुमालं निकोठकम् ॥
खर्ज्जूराक्षोड़वादाम-मुञ्जाताभिषुकं तथा ।
शीते [illegible] ताढ़के सिद्धे क्षौद्रं शीते प्रदापयेत् ॥

घृतं परूषकादीनां रस प्रत्येकं घृतसमं दत्त्वा विदार्य्याः स्वरसं घृताच्चतुर्गुणं तथा क्षीरं चतुर्गुणं दत्त्वा पचेत् । प्रायौगिकं नित्यं प्रयोगाय सम्पद्यते ॥ २० ॥

पारूषकं घृतम् ।

गङ्गाधरः—द्वे पञ्चमूले इत्यादि । पुनर्नवाद्वयम् । अवाकपुष्पी शतपुष्पा । द्विपञ्चमूलादीनां प्रत्येकं द्विपलं नीत्वा जलद्रोणे विपाचयेत् । पादशेषं तं क्वाथं षोड़शशरावं क्षीरञ्च षोड़शशरावं धात्रीरसं षोड़शशरावमिक्षुरसं षोड़शशरावं छागमांसरसं षोड़शशरावं घृताढ़केन घृतस्य षोड़शशरावेण सह संयोज्य

"रसैः परूषककाश्मर्य्यककशेरुकीविदारीद्राक्षेक्षूणां चतुष्के पयसि द्विकाकोलीतामलकीत्रायन्ती-शतावरीः पिष्ट्वा पिबेत् घृतं प्रयोगेण, तद् वातास्रजित् सर्पिः परूषकं नामेति ॥ १८—२० ॥

चक्रपाणिः—द्वे पञ्चमूल इत्यादौ वर्षाभूः श्वेतपुनर्नवा, अवाक्पुष्पी अधःपुष्पीति ख्याता ।

सम्यक् सिद्धश्च विज्ञाय सुगुप्तं सन्निधापयेत्।
कृतरक्षाविधं तच्च प्राशयेदक्षसम्मितम्॥
पाण्डुरोगं ज्वरं हिक्कां स्वरभेदं भगन्दरम्।
पार्श्वशूलं क्षयं कासं प्लीहानं वातशोणितम्॥
सर्व्वाङ्गैकाङ्गरोगांश्च मूत्रसङ्गञ्च नाशयेत्।
बलवर्णकरं धन्यं बलीपलितनाशनम्।
जीवनीयमिदं सर्पिर्वृष्यं बन्ध्यासुतप्रदम्।
अग्निवेशाय गुरुणा कृष्णात्रेयेण भाषितम्॥ २१॥

जीवनीयं घृतम्।

द्राक्षामधुकतोयाभ्यां सिद्धं वाससितोपलम्।
घृतं पिबेत् तथा क्षीरे गुडूचीस्वरसे श्रृतम्॥ २२॥
जीवकर्षभकौ मेदामृष्यप्रोक्तां शतावरीम्।
मधुकं मधुपर्णीञ्च काकोलीद्वयमेव च॥
मुद्गमाषाख्यपर्ण्यौ च दशमूलं पुनर्नवाम्।
बलामृताविदारीश्च साश्वगन्धाश्मभेदकाः॥

मेदाद्वयादिकं कल्कं पादिकं दत्त्वा मृद्वग्निना शनैः पचेत्। अक्षसमं तद् घृतं प्राशयेत्। वीरां काकोलीं भव्यादिकं देशविशेषे स्वनामप्रसिद्धम्॥ २१॥

जीवनीयं घृतम्।

गङ्गाधरः—द्राक्षेत्यादि। द्राक्षामधुकक्काथे चतुर्गुणेऽकल्कं घृतं पक्त्वा पादिकां सितोपलां प्रक्षिप्यालोड्य घृतं पिबेत्। तथा क्षीरे चतुर्गुणे श्रृतं ससितोपलं, गुडूचीस्वरसे चतुर्गुणे श्रृतं घृतं ससितोपलं पादिकां शर्करां प्रक्षिप्य पिबेत्॥ २२॥

गङ्गाधरः—जीवकेत्यादि। ऋष्यप्रोक्ता शूकशिम्बी। मधुपर्णी गुडूची अमृता च गुडूची तस्माद् भागद्वयम्। जीवकादीनां कल्कं जीवकादीनां कषायश्च

क्षीरादीनां स्नेहसमत्वम्। सुगुप्तमिति वाताद्यस्पर्शनीयं यथा भवति तथा विधाय प्राशयेदिति। द्राक्षेत्यादौ ससितोपलमिति प्रक्षिप्तशर्करम्॥ २१। २२॥

कुर्य्यात् कल्कं कषायञ्च ताभ्यां तैलं घृतं पचेत् ।
लाभतश्च वसामज्ज धन्वप्रतुदवैष्किरम् ॥
चतुर्गुणेन पयसा तत् सिद्धं वातशोणितम् ।
सर्व्वदेहाश्रितं हन्ति व्याधीन् घोरांश्च वातजान् ॥ २३ ॥
स्थिरां श्वदंष्ट्रां बृहतीं सारिवाञ्च शतावरीम् ।
काश्मरीमात्मगुप्ताञ्च वृश्चीरं द्वे बले तथा ॥
एषां क्वाथे चतुःक्षीरे पृथक् तैलं पृथग् घृतम् ।
मेदा शतावरी यष्टी जीवकर्षभकौ बला ॥ *
पक्त्वा मात्रा ततः क्षीर-त्रिगुणाध्यर्द्धशर्करा ।
खजेन मथिता पेया वातरक्ते त्रिदोषजे ॥ २४ ॥

कुर्य्यात् ताभ्यां पादिककल्क-चतुर्गुणकषायाभ्यां तैलं घृतञ्चेति द्वयमेकीकृत्य चतुर्गुणेन पयसा पचेत्। लाभतस्तु धन्वादिवसामज्ज च तत्र दत्त्वा (समं चतुःस्नेहं चतुर्गुणेन क्षीरेण ताभ्यां पादिककल्कचतुर्गुणकषायाभ्यां) पचेत् ॥ २३ ॥

गङ्गाधरः—स्थिरामित्यादि। स्थिरादीनां क्वाथे तैलसमाने घृतसमे चतुर्गुणे क्षीरे तैलं घृतं वा मेदादिकल्केन पक्त्वा स्थाप्यम्, ततो मात्रा यावती पातु योग्या सा क्षीरत्रिगुणा त्रिगुणदुग्धयुता सार्द्धैकगुणशर्करासहिता खजेन मथिता पेया, एवं प्रतिदिनं पेया। यद्यपि त्रिदोषमसाध्यमुक्तं तथापि चाबलवद्वातरक्ते त्रिदोषजेऽपि यापनार्थमुक्तम् ॥ २४ ॥

चक्रपाणिः—ऋष्यप्रोक्ता अतिबला काला मञ्जिष्ठा मधुपर्णी विकङ्कतम्। धन्वप्रतुदवैष्किरमिति वसामज्जविशेषणम् ॥ २३ ॥

चक्रपाणिः—स्थिरामित्यादौ चतुःक्षीर इति चतुर्गुणं क्षीरम्। पृथक् तैलं पृथग् घृतमित्यनेन संमिश्रपाकं निषेधयति। क्षीरत्रिगुणा सार्द्धभागा शर्करा यस्यां मात्रायां सा त्रिगुणाध्यर्द्धशर्करा। खजः पञ्चाङ्गुलो हस्तः मन्थानो वा ॥ २४ ॥

* मेदाशतावरीयष्टी-जीवन्तीजीवकर्षभैरिति पाठान्तरम्।

तैलं पयः शर्कराञ्च पाययेद् वा सुमूर्च्छितम्।
सर्पिस्तैलवसाक्षौद्रमिश्रितं वा पिबेत् पयः॥
अंशुमत्या श्रृतः प्रस्थः पयसः ससितोपलः।
पाने प्रशस्यते तद्वत् पिप्पलीनागरैः श्रृतः॥
बलाशतावरीरास्ना-दशमूलैः सपीलुभिः।
श्यामैरण्डस्थिराभिर्वा वातार्त्तिघ्नं श्रृतं पयः॥
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम्।
पिबेद् वा सत्रिवृच्चूर्णं पित्तरक्तेऽनिलात्मके॥ २५॥
क्षीरेणैरण्डतैलं वा प्रयोगेण नरः पिबेत्।
बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः॥
कषायममृतानां वा घृतभृष्टं पिबेन्नरः।
क्षीरानुपानं त्रिवृता-चूर्णं द्राक्षारसेन वा॥ २६॥

गङ्गाधरः—तैलमित्यादि। तैलं पयः शर्करां युक्त्या स्वजेन सुमूर्च्छितां कृत्वा पाययेत्। सर्पिरादिभिः सह पयः स्वजेन मिश्रितं कृत्वा वा पिबेत्। अंशुमत्येत्यादि। अंशुमती शालपर्णी पयसोऽष्टमांशा जलं चतुःप्रस्थं पयसः प्रस्थः पक्त्वा पयोऽवशिष्टं पादिकां सितोपलां दत्त्वा पिबेत्। तद्वत् पिप्पली-नागरः श्रृतं ससितोपलं पयः पिबेत्। बलेत्यादि। बलादिभिरष्टमांशश्चतुर्गुणजले श्रृतं पयः श्यामादिभिरष्टमांशश्चतुर्गुणजले श्रृतं पयो वातार्त्तिघ्नम्। धारेत्यादि। धारोष्णं क्षीरं गोमूत्रयुक्तं दोषानुलोमनं पित्तरक्तेऽधिके वातरक्तेऽनिलात्मके च पिबेत्, अथवा धारोष्णं क्षीरं त्रिवृच्चूर्णयुक्तं दोषानुलोमनं पिबेत्॥ २५॥

गङ्गाधरः—क्षीरेणेत्यादि। एरण्डतैलं क्षीरेण प्रयोगेण नित्यं पिबेत्। जीर्णे क्षीरौदनमश्नीयात्। अमृतानां गुडूचीनां कषायं घृतभृष्टं क्षीरानुपानं पिबेत्, अथवा द्राक्षारसेन त्रिवृताचूर्णं पिबेद् विरेकार्थमित्यनुवर्त्तते॥ २६॥

चक्रपाणिः—अंशुमती शालपर्णी। ससितोपल इति शर्कराद्विपलम्। इयञ्च क्षीरमात्रा उत्तमाग्नीन् प्रति। धारोष्णमिति दोहकालमेव धारयति। अग्नियोगादिना उष्णीकृतं मूत्रञ्च क्षीरसमम्, सत्रिवृच्चूर्णं धारोष्णं क्षीरमिति सम्बन्धः। प्रयोगेणेत्यभ्यासेन॥ २५। २६॥

काश्मर्य्यं त्रिवृतां द्राक्षां त्रिफलां सपरूषकाम् ।
शृतां पिबेद् विरेकार्थे लवणक्षौद्रसंयुताम् ॥
त्रिफलायाः कषायं वा पिबेत् क्षौद्रेण संयुतम् ।
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिकः ॥ २७ ॥
योगैश्च कल्पनिर्द्दिष्टैरसकृत् तं विरेचयेत् ।
मृदुभिः स्नेहसंयुक्तैर्ज्ञात्वा वायुमनावृतम् ॥
निर्हरेद् वा मलं तस्य सघृतैः क्षीरवस्तिभिः ।
न हि वस्तिसमं किञ्चिद् वातरक्तचिकित्सितम् ॥ २८ ॥
वस्तिवङ्क्षणपार्श्वोरु-पर्व्वास्थिजठरार्त्तिषु ।
उदावर्त्ते च शस्यन्ते निरूहाः सानुवासनाः ॥
दद्याच्चेमानि तैलानि वस्तिकर्म्मणि बुद्धिमान् ।
नस्याभ्यञ्जनसेके च दाहशूलहराणि च ॥ २९ ॥
मधुपर्ण्याः * पलशतं कषाये पादशेषिते ।
तैलाढ़कं समक्षीरं पचेत् कल्कैः पलोन्मितैः ॥

गङ्गाधरः—काश्मर्य्यमित्यादि। काश्मर्य्यफलादिकां क्वाथयित्वा सैन्धव-क्षौद्रे प्रक्षिप्य विरेकार्थं पिबेत्। त्रिफलाया इत्यादि। त्रिफलाकषायं क्षौद्रयुक्तं पिबेत्। कफाधिको वातरक्ती धात्रीप्रभृतीनां कषायं वा पिबेत् ॥ २७ ॥

गङ्गाधरः—योगैरित्यादि। कल्पस्थाने निर्दिष्टविरेचनयोगैमृदुभिः स्नेह-संयुक्तैरसकृत् तं नरं विरेचयेत्। निर्हरेदित्यादि। तस्य वा मलं सघृतक्षीर-वस्तिभिर्निर्हरेत्। हि यस्मात् वस्तिसमं वातरक्तचिकित्सितं नास्ति ॥ २८ ॥

गङ्गाधरः—वस्तीत्यादि। वस्त्यादिष्वार्त्तिषु उदावर्त्ते च निरूहा अनुवासनञ्च शस्यन्ते। दद्यादित्यादि। इमानि वक्ष्यमाणानि तैलानि वस्तिकर्म्मणि अनुवासने दद्यात्। नस्यादौ च दाहादिहराणि तानि स्युः ॥ २९ ॥

गङ्गाधरः—मधुपर्ण्या इत्यादि। मधुपर्णी गुड़ूची शतपले जलद्रोणः।

चक्रपाणिः—क्षीरप्रधानो वस्तिः क्षीरवस्तिः। मधुयष्ट्या इत्यादौ मधुकतुलायां जलद्रोणं

* मधुयष्ट्या इति चक्रधृतः पाठः।

शतपुष्पावरीमूर्व्वा-पयस्यागुरुचन्दनैः।
स्थिराहंसपदीमांसी-द्विमेदामधुपर्णिभिः॥
काकोलीक्षीरकाकोली-तामलक्यृद्धिपद्मकैः।
जीवकर्षभजीवन्ती-त्वक्पत्रनखबालकैः॥
प्रपौण्डरीकमञ्जिष्ठा-सारिवैन्द्रीवितुन्नकैः।
चतुःप्रयोगात् तद्धन्ति तैलं मारुतशोणितम्॥
सोपद्रवं साङ्गशूलं सर्व्वगात्रानुगं तथा।
वातासृक्पित्तदाहार्त्ति-ज्वरघ्नं बलवर्णकृत्॥ ३०॥
मधुकस्य शतं द्राक्षा खर्ज्जूराणि परूषकम्।
मधूकोदनपाक्यौ च प्रस्थं मुञ्जातकस्य च॥
काश्मर्य्याढ़कमित्येतच्चतुर्द्रोणे पचेदपाम्।
शेषेऽष्टभागे पूते च तस्मिंस्तैलाढ़कं पचेत्॥
तथामलककाश्मर्य्य-विदारीक्षुरसैः समैः।
चतुर्द्रोणेन पयसा कल्कं दत्त्वा विपाचितम्॥

शतपुष्पादीनां प्रत्येकं पलं कल्कः। वितुन्नकस्तामलकीप्रभेदः भागद्वयं वा। चतुःप्रयोगादिह प्रोक्तवस्तिकर्म्मनस्याभ्यञ्जनसेकैः प्रयोगात्॥ ३०॥

मधुपर्ण्यादितैलम्।

गङ्गाधरः—मधुकस्येत्यादि। यष्टीमधुपलशतं द्राक्षादीनां प्रत्येकं प्रस्थः। काश्मर्य्यस्य गम्भारीफलस्याढ़कं चतुर्द्रोणे जले पचेत्। अष्टभागे शेषे द्वात्रिंशच्छरावे तैलाढ़कं षोड़शशरावं आमलकरसं काश्मरीफलरसं विदारी-

दत्त्वा तैलाढ़कं पचेत्। वरी शतावरी। हंसपदी स्वनामख्याता। वितुन्नकं धान्यकम्। चतुःप्रयोगादिति पानाभ्यङ्गवस्तिनस्यप्रयोगात्॥ २७—३०॥

चक्रपाणिः—मधुकस्य शतमिति शतधा पाकेन मधुकपलशतात् सिद्धमित्यर्थः।

कदम्बामलकाक्षोड़-पद्मवीजकशेरुकम् ।
शृङ्गाटकं शृङ्गवेरं लवणं पिप्पलीं सिताम् ॥
जीवनीयञ्च संसिद्धं क्षौद्रप्रस्थेन संसृजेत् ।
नस्याभ्यञ्जनपानेषु वस्तौ चापि नियोजयेत् ॥
वातव्याधिषु सर्व्वेषु मन्यास्तम्भे हनुग्रहे ।
सर्व्वाङ्गैकाङ्गवाते च क्षतक्षीणे क्षतज्वरे ॥
सुकुमारकमित्येतत् वातासृगामयनाशनम् ।
स्थिरवर्णकरं तैलमारोग्यबलपुष्टिदम् ॥ ३१ ॥

सुकुमारकतैलम् ।

गुडूचीं मधुकं ह्रस्वां पञ्चमूलीं पुनर्नवाम् ।
रास्नामेरण्डमूलञ्च जीवनीयानि लाभतः ॥
पलानां शतकैर्भागैर्बलापञ्चशतं तथा ।
कोलबिल्वयवान् माषान् कुलत्थांश्चाढ़कोन्मितान् ॥
काश्मर्य्याणां सुशुष्काणां द्रोणं द्रोणशतेऽम्भसि ।
साधयेज्जर्ज्जरं धौतं चतुर्द्रोणञ्च शेषयेत् ॥

रसमिक्षुरसं तैलसमं दत्त्वा चतुर्द्रोणेन पयसा कदम्बादिकं कल्कं दत्त्वा पचेत् । पक्वे पूते शीते क्षौद्रप्रस्थं प्रक्षिप्य मिश्रयेत् । नस्याभ्यञ्जनपानेषु वस्तौ चेति चतुःप्रयोगे विनियोजयेत् । ओदनपाकी नीलझिण्टी ॥ ३१ ॥

सुकुमारकतैलम् ।

गङ्गाधरः—गुड़ूचीमित्यादि । ह्रस्वां पञ्चमूलीं शालपर्ण्यादिपञ्चमूलीं गुड़ूच्यादीनां जीवनीयान्तानां प्रत्येकं पलशतं बलायाः पञ्चशतपलं कोलादीनां प्रत्येकमाढ़कं काश्मर्य्यफलानां सुशुष्काणां द्रोणं द्वात्रिंशच्छरावं सर्व्वमेकत्र द्रोणशतेऽम्भसि चतुःषष्टिशतशरावेऽम्भसि साधयेत् चतुर्द्रोणं शेषं कुर्य्यात् ।

तैलद्रोणं पचेत् तेन दत्त्वा पञ्चगुणं पयः ।
पिष्ट्वा त्रिपलिकांश्चैव चन्दनोशीरकेशरान् ॥
पत्रैलागुरुकुष्ठानि तगरं मधुयष्टिकाम् ।
मञ्जिष्ठाष्टपलञ्चैव तत् सिद्धं सार्व्वयौगिकम् ॥
वातरक्ते क्षतक्षीणे भारार्त्ते क्षीणरेतसि ।
वेपनोत्क्षिप्तभग्नानां सर्व्वाङ्गैकाङ्गरोगिणाम् ॥
योनिदोषमपस्मारमुन्मादं विषमज्वरम् ।
हन्यात् पुंसवनञ्चैतत् तैलाग्र्यममृताह्वयम् ॥ ३२ ॥

अमृताख्यं तैलम् ।

पद्मवेतसयष्ट्याह्व-फेनिलापद्मकोत्पलैः ।
पृथक् पञ्चपलैर्दर्भ-बलाकिंशुकचन्दनैः ॥
जले श्रृतैः पचेत् तैल-प्रस्थं सौवीरसम्मितम् ।
लोध्रकालीयकोशीर-जीवकर्षभकेशरैः ॥

तेन चतुर्द्रोणक्वाथेन तैलद्रोणं पञ्चगुणं पञ्चद्रोणं पयो दत्त्वा चन्दनादीनां मधुयष्टिकान्तानां प्रत्येकं त्रिपलं पिष्ट्वा मञ्जिष्ठाष्टपलञ्च कल्कं दत्त्वा पचेत्। सिद्धमेतत् तैलं सार्व्वयौगिकं पानाभ्यञ्जनादिषु सर्व्वेषु यौगिकम्। वातरक्त इत्यादौ श्रितमित्यूह्यम् ॥ ३२ ॥ अमृताख्यं तैलम् ।

गङ्गाधरः—पद्मेत्यादि । पद्मं पुष्पं वेतसोऽशोकः । फेनिलाः कोलं पद्मकं पद्मकाष्ठं दर्भं उलुपा कश्चित् कुशमूलमाह । पद्मादीनां चन्दनान्तानां पृथक् पञ्चपलैरष्टगुणे जले श्रृतैः पादशेषैस्तैलप्रस्थं सौवीराम्लस्य च प्रस्थं लोध्रादीनां

गुडूच्यादीनां प्रत्येकं शतपलत्वम् । कोलादीनां प्रत्येकमाढ़कमानत्वम् । काश्मर्य्याणामिति गम्भारीफलानाम् । सार्व्वयौगिकमिति पानादिचतुःप्रयोगे यौगिकत्वम् । पुंसवनमिति पुंसूतिकारकम् ॥ ३१ । २ ॥

चक्रपाणिः—पद्मवेतसेत्यादौ फेनिला उपोदका । सौवीरसम्मितमिति स्नेहसमं सौवीरकम् ।

मदयन्तीलतापत्र-पद्मकेशरपद्मकैः ।
प्रपौण्डरीककाश्मर्य्य-मांसीमेदाप्रियङ्गुभिः ॥
कुङ्कुमस्य पलार्द्धेन मञ्जिष्ठायाः पलेन च ।
महापद्ममिदं तैलं वातासृक्ज्वरनाशनम् ॥ ३३ ॥

महापद्मतैलम् ।

पद्मकाशीरयष्ट्याह्व-रजनीक्काथसाधितम् ।
स्यात् पिष्टैः सर्ज्जमञ्जिष्ठा-वीराकाकोलिचन्दनैः ॥
खुड्डाकपद्मकमिदं तैलं वातास्रदाहनुत् ।
आत्रेयेणाग्निवेशाय भाषितं हितकाम्यया ॥ ३४ ॥

खुड्डाकपद्मतैलम् ।

* मधुपर्ण्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे ।
क्षीरे साध्यं शतकृत्वस्तदेवं मधुकाच्छते ॥

कुङ्कुमान्तानां प्रत्येकं पलार्द्धेन मञ्जिष्ठायाः पलेन च पचेत् । तत्र कुङ्कुमपलार्द्धं यत्रकल्कं दद्यादिति युक्तिः ॥ ३३ ॥ महापद्मतैलम् ।

गङ्गाधरः—पद्मकेत्यादि । महापद्मतैलादनन्तरमिदं खुड्डाकपद्मकसंज्ञत्वादिह पद्मकशब्देन पद्मपुष्पमेव न तु पद्मकाष्ठं महापद्मे प्रथमं पद्मशब्दोपादानात पद्मसंज्ञा कृता तत इह पद्मशब्देनैवेति सामान्ये सति खुड्डाकविशेषणं न तु पद्मकशब्देन पद्मकाष्ठग्रहणे संज्ञाहेतु पद्मसामान्यं भवति. खुड्डाकविशेषणञ्च नर्थकं स्यात् न च मध्ये निर्द्दिष्टेन पद्मकशब्देन संज्ञाकरणव्यवहार आचार्य्याणामिति पद्मपुष्पोशीरादीनां क्काथे चतुर्गुणे सर्ज्जादिभिः पादिकैः कल्कैः साधितं खुड्डाकपद्ममिदं तैलं वातास्रदाहनुत् स्यात् ॥ ३४ ॥ खुड्डाकपद्मतैलम् ।

गङ्गाधरः—मधुपर्ण्या इत्यादि । मधुपर्णी गुडूची तस्याः पलं पिष्ट्वा कल्कं दत्त्वा चतुर्गुणे क्षीरे तैलप्रस्थं साध्यमित्येवं शतकृत्वः साधयित्वा शतवार-

लोध्रादिभिः कार्षिकैः । कुङ्कुमञ्च द्विकार्षिकम् । खुड्डाकपद्ममिह अल्पपद्मकसंज्ञा वैद्यव्यवहारार्था ॥ ३३ । ३४ ॥

चक्रपाणिः—शतेन यष्टिमधुकादित्यादौ यष्टिमधुपलशतं दशगुणेन क्षीरेण साध्यम् । तैले

* शतेन यष्टिमधुकात् साध्यं दशगुणं पयः । तस्मिंस्तैले चतुर्द्रोणे मधुकस्य पलेन तु । सिद्धं मधुककाश्मर्य्य-रसैर्वा वातरक्तनुत् ॥ इति चक्रसम्मतोऽधिकः पाठः ।

सिद्धं देयं विषोन्माद-वातास्रश्वासकासनुत्।
हृत्पाण्डुरोगवीसर्प-कामलादाहनाशनम् ॥ ३५ ॥
शतपाकमधुपर्णीतैलम्।

बलाकषायकल्काभ्यां तैलं क्षीरसमं पचेत्।
सहस्रं शतवारं वा वातासृग्वातरोगनुत् ॥
रसायनमिदं श्रेष्ठमिन्द्रियाणां प्रसादनम्।
जीवनं बृंहणं स्वर्य्यं शुक्रासृग्दोषनुत् परम् ॥ ३६ ॥
सहस्रपाकं शतपाकं बलातैलम्।

गुडूचीक्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा।
सिद्धं मधुककाश्मर्य्य-रसैर्वा वातरक्तनुत् ॥ ३७ ॥
गुडूच्यादीनि तैलानि।

आरनालाढ़के तैलं पादं सर्ज्जरसं घृतम्।
प्रभूते खजिते तोये ज्वरदाहार्त्तिनुत् परम् ॥ ३८ ॥

पाकादुत्तरं मधुकात् शते मधुकस्य पलशतं जलद्रोणे पक्त्वा पादशेषक्वाथे तदेवं सिद्धं विषादिनुद् देयम् ॥ ३५ ॥ शतपाकमधुपर्णीतैलम्।

गङ्गाधरः—बलेत्यादि। बलाकषायकल्काभ्यां बलायाश्चतुर्गुणकषायेण बलाया एव कल्केन पादिकेन क्षीरसमं तैलं पचेत्। सहस्रं वारान् शतवारं वा ॥ ३६ ॥ सहस्रपाकशतपाके बलातैले।

गङ्गाधरः—गुडूचीत्यादि। गुडूच्याः क्वाथेन चतुर्गुणेन तैलसमेन दुग्धेन सिद्धमकल्कमेकं तैलम्। द्राक्षारसेन वा चतुर्गुणेनाकल्कं सिद्धमपरं तैलम्। मधुककाश्मर्य्ययोर्मिलितयो रसैः क्वाथैश्चतुर्गुणैः सिद्धमकल्कं तृतीयं तैलम् ॥३७
गुडूच्यादीनि तैलानि।

गङ्गाधरः—आरनालेत्यादि। आरनालस्याढ़कं तत्पादं तैलं सर्ज्जरसञ्च तैलसमं घृतञ्च तैलसममिति त्रयं तस्मिन्नारनाले पक्त्वावतार्य्य तस्य यथा

चतुर्द्रोणे स्थितं, तदेव मधुकाच्छतमिति शतधापाकेन मधुकपलशतात् सिद्धमित्यर्थः। अनेन च मधुकपलशतसाधनोपदेशेन शतकृत्व इति शब्दस्य विपुलवाचितां निषेधयति ॥ ३५ ॥

चक्रपाणिः—बलाकषायेत्यादिनोक्तशतसहस्रपाके अत्यम्बुपाकात् स्नेहक्षयं पश्यन्तः शतगुणेन सहस्रगुणेन वा द्रवेण एकदैव पाकं व्याख्यानयन्ति। किन्तु तावती स्नेहमात्रा अ

समधूच्छिष्टमाञ्जिष्ठंससर्ज्जरससारिवम् ।
पिण्डतैलं तदभ्यङ्गात् वातरक्तरुजापहम् ॥ ३९ ॥

पिण्डतैलम् ।

दशमूलशृतं क्षीरं सद्यः शूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ।
स्तम्भाक्षेपणशूलार्त्तं कोष्णैर्दाहे तु शीतलैः ॥
तद्वद् गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः ।
निक्वाथैर्जीवनीयानां पञ्चमूलस्य वा भिषक् ॥

योग्यं किञ्चित् तैलं तोये प्रभूते खजिते मन्थनदण्डेन मथिते सति तल्लेपनं ज्वरादिनुत् स्यात् ॥ ३८ ॥

गङ्गाधरः—समधूच्छिष्टेत्यादि । तैलं प्रस्थोन्मितं मधूच्छिष्टादिचतुष्कं कल्कं पादिकं दत्त्वा चतुर्गुणे जले पक्त्वा वस्त्रपूतं कुर्य्यात् तत् पिण्डतैलम् ॥ ३९ ॥

पिण्डतैलम् ।

गङ्गाधरः—दशमूलेत्यादि । दशमूलमष्टमांशं क्षीराज्जलं चतुर्गुणं पक्त्वा क्षीरावशेषं, तेन परिषेकः प्रायानिले । तद्वत् कोष्णेन सर्पिषाऽनिलप्राये परिषेकः । स्नेहैरित्यादि । मधुरगणद्रव्यैः सिद्धैश्चतुर्भिः स्नेहैः स्तम्भाक्षेपण-शूलार्त्तं कोष्णैः परिषेचयेत् । दाहे तु तैः शीतलैः परिषेचयेदिति । तद्वदित्यादि । तैलविमिश्रितैर्गव्यादिक्षीरैः कोष्णेन स्तम्भादिषु परिषेचयेद् दाहे तु शीतलैः ।

कर्त्तव्या या पाकापेक्षया निःशेषा भवति । क्षीरञ्चात्र स्नेहवर्द्धकमस्ति तेन यथाश्रुतमेव आचार्य्यवचनं प्रमाणमिति पश्यामः, किञ्च प्रत्यासन्ने एव पाके द्रवत् स्नेहकल्कोद्गमनमत्र कर्त्तव्यम् । तेन स्नेहापेक्षयैव भवति । गुडूचीत्यादौ द्रवात् पादिकस्नेह इति न्यायात् प्रस्थं तैलस्य भवति । खजितमिति मथितम् ॥ ३६—३८ ॥

चक्रपाणिः—समधूच्छिष्टेत्यादौ मधूच्छिष्टादीनि कल्कः जलञ्च द्रवं देयम् । पिण्डतैल-भाषयात्र वस्त्रपूतमेव एतत् तैलं कर्त्तव्यम् । अत्र तैले एव सर्ज्जरसस्थाने मधूच्छिष्टादीनां प्रक्षेपात् तत् तैलं अभ्यङ्गे उच्यत इति जतूकर्णवचनादुन्नीयते, उक्तं हि—काञ्जिकसर्ज्जरसशृतं खजितं बहुना जलेन दाहहितम् । विकसानन्तासिक्थकसर्ज्जरसैर्युक्तं अभ्यञ्जनमिति ॥ ३९ ॥

द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम्।
सेकार्थं तण्डुलक्षौद्र-शर्कराम्बु च शस्यते ॥ ४० ॥
कुमुदोत्पलपद्माद्यैर्मणिहारैः सचन्दनैः।
शीततोयानुगैर्दाहे प्रोक्षणं स्पर्शनं हितम् ॥
चन्द्रपादाम्बुसंसिक्ते क्षौमपद्मदलच्छदे।
शयने पुलिनस्पर्शे शीतमारुतवीजिते ॥
चन्दनार्द्रस्तनकराः प्रिया नार्य्यः प्रियंवदाः।
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥ ४१ ॥
सरागे सरुजे दाहे रक्तं विस्राव्य लेपयेत्।
मधुकाश्वत्थत्वङ्मांसी-वीरोडुम्बरशाद्वलैः ॥
जलजैर्यवचूर्णैर्वा सयष्ट्याह्वपयोघृतैः।
सर्पिषा जीवनीयैर्वा पिष्टैर्लेपोऽर्त्तिदाहनुत् ॥

जीवनीयानां निकाथः पञ्चमूलस्य वा महतो निकाथैस्तद्वत् स्तम्भादौ कोष्णैर्दाहे तु शीतलैर्भिषक् परिषेचयेत्। द्राक्षेत्यादि। द्राक्षारसादिकं सेकार्थं पृथक् पृथक् शस्यतेऽनिलप्राये ॥ ४० ॥

गङ्गाधरः—कुमुदेत्यादि। वातरक्ते दाहे शीततोयानुगैः शीततोयसिक्तैः कुमुदादिभिः सचन्दनैः प्रोक्षणं स्पर्शनञ्च हितम्। चन्द्रेत्यादि। पुलिनस्पर्शे पुलिनदेशे विस्तारिते शयने शय्यायां चन्द्रपादेन चन्द्रकिरणेनाम्बुना वा सिक्ते क्षौमवस्त्रच्छदे पद्मदलच्छदे वा व्यजनकृतशीतमारुतवीजिते शयानस्य चन्दनार्द्रस्तनकराः प्रियाः प्रियंवदाः स्पर्शशीता नार्य्यः सुखस्पर्शा दाहादिकं घ्नन्ति ॥ ४१ ॥

गङ्गाधरः—सराग इत्यादि। सरागादौ वातरक्ते रक्तं विस्राव्य मधुरादिभिः लेपयेत्। वीरा काकोली। शाद्वलः नवतृणस्थानमृत्तिका। जलजैरित्यादि। यष्ट्याह्वपयोघृतसहितैर्जलजैः पद्मादिपुष्पैर्यवैर्वा। जीवनीयैः

चक्रपाणिः—मधुरसिद्धैः स्नेहैरिति जीवनीयसिद्धस्नेहैः। तण्डुलेत्यादौ प्रत्येकं त्रिभिरम्बुशब्दः सम्बध्यते। शीततोयानुगैरिति शीततोयसिक्तैः। चन्द्रपादाम्बुसंसिक्त इति तुषारजल-

एलापियालमधुक-विसं मूलञ्च वेतसात्।
आजेन पयसा पिष्ट्वा प्रलेपो दाहरागनुत्॥
प्रपौण्डरीकमञ्जिष्ठा-दार्व्वीमधुकचन्दनैः।
सितोपलैरकासक्तु-मसूरोशीरपद्मकैः॥
लेपो रुग्दाहवीसर्प-रुक्शोफविनिवारणः।
पित्तरक्तोत्तरे त्वेते लेपान् वातोत्तरे शृणु॥ ४२॥
वातघ्नैः साधितः स्निग्धः सक्षीरमुद्गपायसैः।
तिलसर्षपपिण्डैर्वाप्युपनाहा रुजापहाः॥
औदकप्रसहानूप-वेशवाराः सुसंस्कृताः।
जीवनीयौषधस्नेह-युक्ताः स्युरुपनाहने॥
स्तम्भतोदरुगायास-शोफाङ्गग्रहनाशनाः।
जीवनीयौषधस्नेहा सपयस्का वसापि वा॥
घृतं सहचरान्मूलं जीवन्ती छागलं पयः।
लेपः पिष्टास्तिलास्तद्वत् भृष्टाः पयसि निर्वृताः॥

पिष्टैः सर्पिषा युक्तैर्वा लेपः। एलेत्यादि। मूलञ्च वेतसादित्यशोकस्य मूलं वेतसवृक्षस्य मूलं वा। प्रपौण्डरीकेत्यादि। एरका शरमूलम्, रुक् साधारण-रुजा, वीसर्पस्य रुक्। पित्तेत्यादि। सराग इत्यादिभिरुक्तास्त्वेते प्रलेपा ज्ञेयाः। वातोत्तरे तु लेपान् शृणु॥ ४२॥

<u>गङ्गाधरः</u>—वातघ्नैरित्यादि। वातघ्नैर्भद्रदार्व्वादिभिः साधितः स्निग्ध उपनाहस्तथा सक्षीरमुद्गपायसैरुपनाहः तिलसर्षपपिण्डैर्वाप्युपनाहः, इत्येते तूपनाहा रुजापहाः। औदकेत्यादि। औदकादिमांसवेशवाराः सुसंस्कृताः जीवनीयौषधदशकेन घृतादिस्नेहेन च युक्ता उपनाहने स्युः। जीवनीयेत्यादि। दश जीवनीयौषधानि स्नेहाश्च तैलादयः सपयस्का वसा वा उपनाहने

निषिक्तः। पुलिनं नदीतटः। पुलिनस्पर्शेन शीते शयने। पयसि निर्वृता इति क्षीरे निर्वापिता।

क्षीरपिष्टमुमालेपमेरण्डस्य फलानि च।
कुर्य्याच्छूलनिवृत्त्यर्थं शताह्वां वाधिकेऽनिले ॥ ४३ ॥
समूलाग्रच्छदैरण्ड-क्वाथे द्विप्रास्थिकं पृथक्।
घृतं तैलं वसा मज्जा चानूपमृगपक्षिणाम् ॥
कल्कार्थे जीवनीयानि गव्यं क्षीरमथाजकम्।
हरिद्रोत्पलकुष्ठैला-शताह्वाश्वहनच्छदान् ॥
बिल्वमात्रान् पृथक् पुष्पं काकुभञ्चापि साधयेत्।
मधूच्छिष्टपलान्यष्टौ दत्त्वा शीतेऽवतारिते ॥
शूलेनैवार्द्दिताङ्गानां लेपः सन्धिगतेऽनिले।
वातरक्ते स्रुते भग्ने खञ्जे कुष्ठे च शस्यते ॥ ४४ ॥
शोफगौरवकण्ड्वाद्यैर्युक्ते चास्मिन् कफोत्तरे।
मूत्रक्षारसुरापक्क-घृतमभ्यञ्जने हितम् ॥
पद्मकं त्वक् समधुकं शारिवा चेति तैर्घृतम्।
सिद्धं समधुशुक्तं स्यात् सेकाभ्यङ्गः कफोत्तरे ॥

स्युः। घृतमित्यादि। सहचरात् झिण्ट्या मूलम्। घृतादिभिर्लेप एकः। तद्वत्। भृष्टास्तिलाः पयसि पयसि क्षिप्ता भृष्टा निर्व्वापिताः पिष्टा लेपस्तद्वत्। क्षीरपिष्टमित्यादि। अधिकेऽनिले वातरक्ते क्षीरपिष्टमुमालेपं कुर्य्यात्। एरण्डस्य फलानि च क्षीरपिष्टानि लेपं कुर्य्यात्। शताह्वां वा क्षीरपिष्टां लेपं कुर्य्यात् ॥ ४३ ॥

गङ्गाधरः—समूलेत्यादि। एरण्डस्य समूलाग्रच्छदस्य क्वाथे चतुर्गुणे द्विप्रास्थिकं घृतं तैलं वा आनूपमृगपक्षिणां वसा मज्जा वा तत्र कल्कार्थ जीवनीयानि दश हरिद्रादीन् काकुभं पुष्पं पृथक् प्रत्येकं बिल्वमात्रान् पलमात्रान् गव्यक्षीरं स्नेहसममाजकं क्षीरञ्च स्नेहसममेकत्र साधयेत्। सिद्धं तत् पूतावतारिते अशीते उष्ण एव मधूच्छिष्टस्य अष्टौ पलानि दत्त्वा तेन लेपः शस्यते ॥ ४४ ॥

गङ्गाधरः—अथ कफोत्तरे विधिमाह—शोफेत्यादि। शोफादियुक्ते कफोत्तरे

क्षीरं तैलं गवां मूत्रं घृतञ्च कटुकैः शृतम् ।
परिषेके प्रशंसन्ति वातरक्ते कफाधिके ॥ ४५ ॥
लेपः सर्षपनिम्बार्क-हिंस्राक्षीरतिलैर्हितः ।
श्रेष्ठः सक्तुघृतक्षीर-कपित्थत्वग्भिरेव च ॥ ४६ ॥
गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।
प्रलेपः शूलनुद् वात-रक्ते वातकफोत्तरे ॥
मधुशिग्रोर्हितं तद्वद् वीजं धान्याम्लपेषितम् ।
मुहूर्त्तं लिप्तमम्लैश्च सिञ्चेद् वातकफोत्तरे ॥
त्रिफलाव्योषपत्रैला-त्वक्क्षीरीचित्रकं वचा ।
विड़ङ्गं पिप्पलीमूलं लोमशां वृषकत्वचम् ॥
ऋद्धिं लाङ्गलिकां चव्यं समभागानि चूर्णयेत् ।
कल्कैर्लिप्त्वायसीं पात्रीं मध्याह्ने भक्षयेत् ततः ॥
वर्ज्जयेद् दधिशुक्तानि क्षारं वैरोधिकानि च ।
वातास्रे सर्व्वदोषेऽपि हितं शूलार्द्दिते परम् ॥ ४७ ॥

ऽस्मिन् वातरक्ते। क्षीरमित्यादि। कटुकैस्त्रिकटुकादिभिः शृतं क्षीरादेरेकैकं परिषेके प्रशंसन्ति ॥ ४५ ॥

गङ्गाधरः—लेप इत्यादि। सर्षपादिभिर्लेपः कफाधिके वातरक्ते हितः। सक्तुप्रभृतिभिर्लेपश्च श्रेष्ठः ॥ ४६ ॥

गङ्गाधरः—गृहेत्यादि। वातकफोत्तरे गृहधूमादिप्रलेपः। मधुशिग्रोरित्यादि। रक्तशोभाञ्जनस्य वीजं धान्याम्लपेषितं तद्वद् वातकफाधिके हितम्। एतेन मुहूर्त्तं लिप्तमम्लैः काञ्जिकादिभिः सिञ्चेत्। त्रिफलेत्यादि। त्वक्क्षीरी वंशलोचना। लोमशा जटामांसी। त्रिफलादीनि चव्यान्तानि समभागानि चूर्णयेत् जलेन पेषयेत्। तैः कल्कैरायसीं लौहमयीं पात्रीं प्रातर्लिप्त्वा मध्याह्ने तान् कल्कान् भक्षयेदेवं प्रतिदिनं कुर्य्यात्, दध्यादिकं वर्ज्जयेत् ॥ ४७ ॥

तगरं त्वक् शताह्वैला मुस्तं कुष्ठं हरेणुका।
दारुव्याघ्रनखश्चाम्ल-पिष्टं वातकफास्रनुत् ॥
बुद्ध्वा स्थानविशेषांश्च दोषाणाञ्च बलाबलम्।
चिकित्सितमिदं कुर्य्यादूहापोहविकल्पवित् ॥ ४८ ॥
कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा।
अतिवृद्धेऽनिले नादौ शस्तं स्नेहनबृंहणम् ॥
व्यायामशोधनारिष्ट-मूत्रपानैर्विरेचनैः।
तक्राभयाप्रयोगैश्च क्षपयेत् कफमेदसी ॥ ४९ ॥
बोधिवृक्षकषायन्तु प्रपिबेन्मधुना सह।
वातरक्तं जयत्याशु त्रिदोषमपि दारुणम् ॥
पुराणयवगोधूम-मध्वरिष्टसुरासवैः।
शिलाजतुप्रयोगैश्च गुग्गुलोर्माक्षिकस्य च ॥

गङ्गाधरः—तगरमित्यादि। तगरादिव्याघ्रनखान्तमम्लपिष्टं वायसीं पात्रीं प्रातर्लिप्तं मध्याह्ने भक्षयेदिति प्रकरणात्। अनुक्तमुपसंहर्त्तुमाह—बुद्ध्वेत्यादि। ऊहस्तर्कोऽपोहो वितर्कः ॥ ४८ ॥

गङ्गाधरः—कुपित इत्यादि। मेदसः कफस्य वा मार्गसंरोधात् कुपितेऽनिलेऽतिवृद्धे वातरक्ते आदौ स्नेहनबृंहणं न शस्तम्, तत्र कफमेदसी व्यायामादिभिः क्षपयेत् ॥ ४९ ॥

गङ्गाधरः—अपरश्चाह—बोधीत्यादि। बोधिवृक्षोऽश्वत्थस्तस्य क्वाथं मधु प्रक्षिप्य पिबेत्। पुराणेत्यादि। गुग्गुलोः प्रयोगैर्माक्षिकस्य च प्रयोगैः।

उमा अतसी। अग्रच्छदानीति वरुणपत्राणि। अम्लैरिति काञ्जिकादिभिः। बुद्ध्वेत्यादि अवस्थाकर्त्तव्यमाह— ऊहापोहविकल्पविदिति पूर्व्वोक्तचिकित्सितस्य ऊहापोहविकल्पज्ञः ॥ ४०—४८ ॥

चक्रपाणिः—कुपित इत्यादि। मेदसः कफस्य वा अतिवृद्ध्या कृतात् मार्गसंरोधात् कुपितेऽनिले आदौ स्नेहनं तथा बृंहणञ्च न शस्तमिति चकारार्थः। अत्र स्नेहनबृंहणनिषेधे सति कर्त्तव्य-

पश्चाद् वाते क्रियां कुर्य्याद् वातरक्तप्रसादनीम् ।
गम्भीररक्तमाक्रान्तं स्याच्चेद् वा तद् विवर्ज्जयेत् ॥ ५० ॥
रक्तपित्ताधिके त्वामात् पाकमाशु नियच्छति ।
भिन्नं च्यवति वा रक्तं विदग्धं पूयमेव च ॥
तयोश्चिकित्सां व्रणवत् भेदशोधनदारणैः * ।
कुर्य्यादुपद्रवाणाञ्च क्रियां स्वां स्वां चिकित्सया ॥ ५१ ॥

तत्र श्लोकाः ।

हेतुः स्थानानि मूलञ्च यस्मात् प्रायेण सन्धिषु ।
कुप्यति प्राक् च तद्रूपं द्विविधस्य च लक्षणम् ॥
पृथग् भिन्नस्य लिङ्गञ्च दोषाधिक्यमुपद्रवाः ।
साध्यं याप्यमसाध्यञ्च क्रिया साध्यस्य चाखिला ॥

कफमेदसोः क्षपणे सति पश्चाद् वाते वातरक्तप्रसादनीं क्रियां कुर्य्यात्। गम्भीरेत्यादि। वातरक्तं गम्भीररक्तं चेदाक्रान्तं स्यात् तदा तं विवर्ज्जयेत् ॥ ५०

गङ्गाधरः—रक्तेत्यादि। रक्तपित्ताधिके तु आमादपक्वत्वादाशु पाकं नियच्छति। पक्वं भिन्नं वातरक्तं रक्तं वा च्यवति। तच्च विदग्धं पक्वं सत् पूयमेव च च्यवति। तयोरामं रक्तच्यावकं विदग्धं पूयच्यावकमित्यनयो-श्चिकित्सां व्रणवद् भेदशोधनदारणैः कुर्य्यात्। उपद्रवाणाञ्चास्वमारोचका-दीनां चिकित्सया स्वां स्वां क्रियां कुर्य्यादिति ॥ ५१ ॥

माह—व्यायामेत्यादि। एतत्क्रियोत्तरकालीनं कर्त्तव्यमाह—पश्चाद्वात इत्यादि। कफमेदोवृत एव निर्ज्जितकफमेदसि वाते वातरक्तप्रसादनी क्रिया कार्य्या, अत्रैवोक्ता स्नेहप्रयोगादिका। वातविकारत्वात् वातव्याधिचिकित्सित जनयेत्। एतच्च वातेन गम्भीर एव वातरक्ते प्रायो भवति इति दर्शयितुं गम्भीर इति कृतम्। गम्भीरानुगते हि वातरक्ते रक्तं बहुलमाक्रान्तं रक्तस्य हि रक्ताधारा त्वक् स्थानं तेन रक्तावसेचनमाचरेदिति ॥ ४९। ५० ॥

चक्रपाणिः—रक्तस्यावस्थिकं विधिमाह—रक्तेत्यादि। रक्तवृद्ध्या पित्तवृद्ध्या चेति रक्तपित्तातिवृद्ध्या पाकं नियच्छति वातरक्तमिति शेषः। तयोरित्यादि। वृद्धपित्तवृद्धरक्तकृतपाकयोः वातरक्तयोश्चिकित्सामतिदिशन्नाह व्यधेत्यादि। उपद्रवचिकित्सामाह— कुर्य्यादित्यादि ॥ ५१ ॥

* व्यधशोधनदारणैरिति चक्रसम्मतः पाठः ।

वातरक्तस्य निर्दिष्टा समासव्यासतस्तथा।
महर्षिणाग्निवेशाय तथैवावस्थिकी क्रिया॥ ५२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थाने वातरक्तचिकित्सितं नाम
एकोनत्रिंशोऽध्यायः॥ २९॥

गङ्गाधरः—अध्यायार्थमुपसंहर्त्तुमाह—तत्र श्लोका इति। हेतुस्थानानीत्यादि। इति॥ ५२॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
षष्ठे चिकित्सितस्थान एकोनत्रिंश एव च। वातरक्तचिकित्सिते त्वध्याये
पुनरेव तु। वैद्यगङ्गाधरकृते जल्पकल्पतरौ पुनः। चिकित्सितस्थानजल्पे
षष्ठस्कन्धे चिकित्सिते। वातशोणितजल्पाख्या
शाखैकोनत्रिंशी मता॥ २९॥

चक्रपाणिः—हेतुस्थानानीत्यादि। दोषाधिक्यमुपद्रवाः साध्यं याप्यमसाध्यञ्चेति अननुक्रमेण संग्रहं करोति उपद्रवाणां स्तोकास्तोकभावित्वेन साध्यत्वासाध्यत्वयाप्यत्वख्यापनार्थम्॥ ५२॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां वातरक्तचिकित्सितं
नाम ऊनत्रिंशोऽध्यायः॥ २९॥

# त्रिंशोऽध्यायः ।

अथातो योनिव्यापच्चिकित्सितं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

तीर्थदिव्यौषधिमतश्चित्रधातुशिलावतः ।
पुण्ये हिमवतः पार्श्वे सुरसिद्धर्षिसेविते ॥
विहरन्तं तपोयोगात् तत्त्वज्ञानार्थदर्शिनम् ।
कृष्णात्रेयं जितात्मानमग्निवेशोऽनुपृष्टवान् ॥
भगवन् यदपत्यानां मूलं नार्य्याः परं नृणाम् ।
तद्विघातो गदैश्चासां क्रियते योनिमाश्रितैः ॥
तस्मात् तेषां समुत्पत्तिमुत्पन्नानाञ्च लक्षणम् ।
सौषधं श्रोतुमिच्छामि प्रजानुग्रहकाम्यया ।
इति शिष्येण पृष्टस्तु प्रोवाचर्षिवरोऽत्रिजः ॥ २ ॥

गङ्गाधरः—अथोद्दिष्टानुक्रमाद् योनिव्यापदिकचिकित्सितमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—तीर्थेत्यादि । तीर्थानि दिव्यौषधयश्च तद्वतो हिमवतः पर्व्वतराजस्य चित्रधातुशिलावतः पार्श्वे पुण्ये सुरादिसेविते विहरन्तं कृष्णात्रेयं गुरुमग्निवेशोऽनुपृष्टवान । यत् पृष्टवांस्तदाह । भगवन्नित्यादि । नृणामपत्यानां परं मूलं कारणं नार्य्या यद् भवति तद्विघातस्त्वासां नारीणां योनिमाश्रितगदैः क्रियते तस्मात् तेषां योन्याश्रितानां गदानामुत्पत्त्यादिकं श्रोतुमिच्छामि । इतीत्यादि । इति शिष्येणाग्निवेशेन पृष्टोऽत्रिजः पुनर्व्वसुः प्रोवाच ॥ २ ॥

चक्रपाणिः—वातरक्तचिकित्सानन्तरं पारिशेष्यात् वातकृतत्वाच्च योनिव्यापच्चिकित्सितमुच्यते । उक्तं हि—"न हि वाताहते योनिर्नारीणां संप्रदुष्यतीति ।" दिव्यानि तीर्थानि गङ्गादीनि, दिव्याश्चौषध्यो ब्रह्मसुवर्च्चलैन्द्रीप्रभृतयः यस्मिन् स दिव्यतीर्थौषधिः । चित्रधातुः नानावर्णधातुः । तत्त्वज्ञानेन अर्थान् द्रष्टुं शीलं यस्य तं तत्त्वज्ञानार्थदर्शिनम् । मूलमिति कारणम् । तद्विघातो योनिव्यापत्कारणविघातः । तेषामिति योनिगदानाम्, समुत्पत्तिरिति उत्पत्तिः कारणे कार्य्योप-

विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे।
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च।
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक्॥ ३॥
वातलाहारचेष्टाया वातलायाः समीरणः।
विवृद्धो योनिमाश्रित्य योनेस्तोदं सवेदनम्॥
स्तम्भं पिपीलिकासृप्तिमिव कर्कशतां तथा।
करोति सुप्तिमायासं वातजांश्चापरान् गदान्।
सा स्यात् सशब्दरुक् फेन-तनुरूक्षार्त्तवानिलात्॥ ४॥
व्यापल्लवणकट्वम्ल-क्षारादैः पित्तजा भवेत्।
दाहपाकज्वरोष्णार्त्ता नीलपीतसितार्त्तवा।
भृशोष्णकुणपस्रावा योनिः स्यात् पित्तदूषिता॥ ५॥

गङ्गाधरः—तद्यथा। विंशतिरित्यादि। रोगसंग्रहेऽष्टोदरीयेऽध्याये। ता योनिव्यापदः स्त्रीणां मिथ्याचारेण प्रदुष्टेनार्त्तवेन च जायन्ते बीजदोषाच्च जायन्ते दैवाच्च दिष्टाज्जायन्ते ताः पृथक् विंशतिं शृण॥ ३॥

गङ्गाधरः—वातलेत्यादि। वातलायाः जन्मप्रभृतिवातोल्बणप्रकृतिकाया नार्य्याः। पिपीलिकानां सृप्तिं सर्पणमिव आर्त्तवप्रवृत्तिकाले सशब्दं सरुक् च यथा स्यात् तथा सफेनं तनु चाघनं रूक्षश्चार्त्तवं सा योनिः सृजेदिति। सशब्दाद्यार्त्तवा सा योनिः स्यात्॥ ४॥

गङ्गाधरः—व्यापदित्यादि। लवणादीनामतिसेवनात् पित्तजा योनेर्व्यापद् भवेत्। तस्य लक्षणमाह—दाहेत्यादि। सा पित्तदूषिता पित्तजव्यापद्युता योनिर्दाहाद्यार्त्ता नीलाद्यार्त्तवा भृशोष्णादिस्रावा स्यात्॥ ५॥

चारात्। रोगसंग्रह इति अष्टोदरीये। मिथ्याचारेण असम्यगाचरणेन। प्रदुष्टेनार्त्तवेनेति वातादिदुष्टार्त्तवेन योनिव्यापद् भवति। बीजदोषादिति बीजार्त्तवदोषात्। दैवादिति अकर्म्मवशात्। एतेषाञ्च यथायोग्यतया कारणत्वम् अग्रे वक्ष्यमाणकारणत्वभेदेन योनिव्यापत्सु उपपादितमेव, दैवन्तु सर्व्वत्रैव साधारणकारणम्॥ १—३॥

चक्रपाणिः—वातलाया इति विशेषेण वातलयोनिव्यापदुत्पादोपदर्शनार्थम्। पिपीलिकासृप्तिमिति पिपीलिका-परिसर्पणाकारा वेदना। सशब्दरुक्फेनतनुरूक्षार्त्तवेति एवम्भूतार्त्तवा भवति,

कफोऽभिष्यन्दिभिर्वृद्धो योनिञ्चेद्‌ दूषयेत् स्त्रियाः।
स कुर्य्यात् पिच्छिलां शीतां कण्डूग्रस्तामवेदनाम्।
पाण्डुवर्णां तथा पाण्डु-पिच्छिलार्त्तववाहिनीम्॥ ६॥

समाश्रित्य * रसान् सर्व्वान् दूषयित्वा त्रयो मलाः।
योनिगर्भाशयस्थाः स्वैर्योनिं युञ्जन्ति लक्षणैः।
सा भवेद्‌ दाहशूलार्त्ता शुक्लपिच्छिलवाहिनी॥ ७॥

पित्तरक्तकरैर्नार्य्या रक्तं पित्तेन दूषितम्।
अतिप्रवर्त्तते योन्यां लब्धे गर्भेऽपि सास्त्रजा॥
योनिगर्भाशयस्थं चेत् पित्तं संदूषयेदसृक्।
सारजस्का मता कार्श्य-वैवर्ण्यजननी भृशम्॥ ८॥

गङ्गाधरः—कफ इत्यादि। पाण्डुत्वमार्त्तवस्य कफकृतश्वेतमिश्रितत्वेन रक्तवर्णस्य॥ ६॥

गङ्गाधरः—समाश्रित्येत्यादि। त्रयो मलाः सर्व्वान् रसान् शारीरान् दूषयित्वा योनिगर्भाशयस्थाः स्वैर्वातादिलिङ्गैर्योनिं युञ्जन्ति। ततः सा योनिर्दाहशूलार्त्ता शुक्लपिच्छिलद्रववाहिनी स्यात्॥ ७॥

गङ्गाधरः—पित्तेत्यादि। पित्तरक्तकरैर्द्रव्यैः। सासृजा गर्भे लब्धेऽपि सार्त्तवा भवति। इत्येषा रक्तयोनिः। योनीत्यादि। योनिगर्भाशययोरुभयोः स्थितं दुष्टं पित्तञ्चेदार्त्तवं दूषयेत् तदा सा योनिररजस्का मता देहकार्श्यादिजननी॥८॥

तेन वातिकरूपा योनिव्यापत्। एवमेव पैत्तिकश्लैष्मिकसान्निपातिकयोनिव्यापदामपि पैत्तिक-कफजसान्निपातिकदोषप्रभवत्वं वर्णयन्ति। रक्तयोनिरिह असृग्दरसंज्ञया चिकित्साप्रस्तावे वक्तव्या। नैवम्, ये तु एतद्व्यापदां प्रदरं भिन्नमेव मन्यन्ते तेषामत्र विरोधः। इति प्रदर-चिकित्सार्थं प्रकरणान्तरम् अत्राध्याये पठिष्यन्ति। समश्नन्त्या इति पथ्यापथ्यमेलकेनोप-पन्नमन्नादि भक्षयन्त्याः॥ ४—७॥

चक्रपाणिः—रक्तपित्तकरैरित्यादौ गर्भे लब्धेऽपि रक्तमतिप्रवर्त्तते तेनास्या गर्भो भवति। सा अप्रजा रक्तयोनिः इत्यर्थः। ये तु सास्रजा इति पठन्ति ते यस्यां लब्धेऽपि गर्भे अस्रमति-प्रवर्त्तते सा तादृशरक्तस्रुत्या अस्रजा भवतीति वदन्ति। योनौ गर्भे तिष्ठतीति योनिगर्भाशयस्था सा अरजस्केति अनार्त्तवा॥ ८॥

* समाश्रित्य इत्यत्र समश्नन्त्याः तथा गर्भेऽपि सासृजा इत्यत्र बीजेऽपि साऽप्रजा इति चक्रधृतः पाठः।

योन्यामधावनात् कण्डूर्जाताः कुर्व्वन्ति जन्तवः।
सा स्यादचरणा कण्डूा तयातिनरकाङ्क्षिणी ॥ ९ ॥
अतिव्यवायात् पवनः शोथसुप्तिरुजः स्त्रियाः।
योनौ करोति कुपितः सा चातिचरणा मता ॥ १० ॥
मैथुनादतिबालायाः पृष्ठकटूरुवङ्क्षणम्।
रुजयन् दूषयेद् योनिं वायुः प्राक्चरणा हि सा ॥ ११ ॥
गर्भिण्याः श्लेष्मलाभ्यासाच्छर्द्दिनिश्वासनिग्रहात्।
वायुर्वृद्धः कफं योनिमुपनीय प्रदूषयेत् ॥
पाण्डुं सतोदमास्रावं श्वेतं स्रवति वा कफम्।
कफवातामयव्याप्ता सा स्याद् योनिरुपप्लुता ॥ १२ ॥
पित्तलाया नृसंवासे क्षवथूद्गारधारणात्।
पित्तसम्मूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः ॥

गङ्गाधरः—योनिरित्यादि। अधावनाद् योन्यां जन्तवो जाताः कण्डूं कुर्व्वन्ति। तया कण्डा सा योनिरतिनरकाङ्क्षिणी स्यादतो नाम्ना सा स्यादचरणा ॥ ९ ॥

गङ्गाधरः—अतिव्यवायादित्यादि। अतिव्यवायात् सा योनिरतिचरणा मता ॥ १० ॥

गङ्गाधरः—मथुनादित्यादि। अतिबालाया मैथुनात् सा योनिः प्राक्चरणा नाम ॥ ११ ॥

गङ्गाधरः—गर्भिण्या इत्यादि। उपप्लुता नाम योनिः ॥ १२ ॥

गङ्गाधरः—पित्तलेत्यादि। पित्तलाया नार्य्या यां योनिं नृसंवासे

चक्रपाणिः—अचरणा कण्डूा तयेति कृमिजनितयोनिकण्डा। व्यवायस्यातिचरणेन व्यापत् अतिचरणा। रुजयन् इति दुःखयन्। उचितव्यवायकालात् प्राक् व्यवायाचरणात् प्राक्चरणा उच्यते। गर्भिण्या इत्यादौ आस्रावमिति श्लेष्मानिलमास्रावम्। कफवातामयैः उपपन्ना उपप्लुता इत्युच्यते ॥ ९—१२ ॥

चक्रपाणिः—नृसंवासे इति रमणजनसान्निध्ये सर्व्वतः वातपित्तविकारोत्पन्नत्वात् परिप्लुता।

शूना स्पर्शासहा सार्त्तिर्नीलपीतमसृक् स्रवेत् ।
श्रोणिवङ्क्षणपृष्ठार्त्ति-ज्वरार्त्तायाः परिप्लुता ॥ १३ ॥
वेगोदावर्त्तनाद् योनिमावर्त्तयति मारुतः ।
सा रुगार्त्ता रजः कृच्छ्रेणोदावृत्य विमुञ्चति ॥
आर्त्तवे या विमुक्ते तु तत्क्षणं लभते सुखम् ।
रजसो गमनादूर्द्ध्वं ज्ञेयोदावर्त्तिनी बुधैः ॥ १४ ॥
अकाले वाहमानाया गर्भेण पिहितोऽनिलः ।
कर्णिकां जनयेद् योनौ श्लेष्मरक्तेन मूर्च्छितः ॥
रक्तमार्गविरोधिन्या तया कर्णिकयान्विता ।
सा योनिः सर्व्वभिषजा नामतः कर्णिनी मता ॥ १५ ॥
रौक्ष्याद् वायुर्यदा गर्भं जातं जातं विनाशयेत् ।
दुष्टशोणितजं नार्य्याः पुत्रघ्नी नाम सा मता ॥ १६ ॥

पुंसम्भोगे क्षवथूद्गारधारणात् पित्तसंमूर्च्छितोऽनिलो दूषयति सा योनिः परिप्लुता नाम ॥ १३ ॥

गङ्गाधरः—वेगेत्यादि । वेगानामुदावर्त्तनादधो वेगधारणात् । उदावृत्य ऊर्द्ध्वं मारुतेनावृत्य बद्धम् । इत्येवं प्रकारेण रजस ऊर्द्ध्वगमनादुदावर्त्तिनी नाम योनिः ॥ १४ ॥

गङ्गाधरः—अकाल इत्यादि । अकाले वाहमानायाः अल्पकाले गर्भं वहन्त्या गर्भेण पिहितोऽनिलः । कर्णिकां पद्मकर्णिकामिव चाक्रिकाम्, सा कर्णिनी नाम योनिः ॥ १५ ॥

गङ्गाधरः—रौक्ष्यादित्यादि । पुत्रघ्नी नाम सा योनिः ॥ १६ ॥

योनिमुदावर्त्तयते इति योनिमुदावर्त्तवृत्तां करोति । विकारेण रजसः ऊर्द्ध्वगमनात् उदावर्त्तिनीति उच्यते । वाहमानाया इत्यादि अप्रासगर्भनिष्क्रमणकाले प्रवाहणं कुर्व्वन्त्याः । कर्णिकामिति कर्णिकाकारं ग्रन्थिम् ॥ १३—१५ ॥

चक्रपाणिः—रौक्ष्यादिति रूक्षगुणोत्कर्षात्, दुष्टशोणितजमिति वचनादिह वायुना दुष्टिरपि क्रियते इति दर्शयति । अत्र च यद्यपि सामान्येनैव गर्भविनाश उक्तः, तथापि पुत्रस्यैव प्राधान्यात्

व्यवायमतितृप्ताया भजन्त्यास्त्वन्नपीड़ितः ।
वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः ॥
योनेर्मुखं वक्रयति सास्थिमांसानिलार्त्तिभिः ।
भृशार्त्तिमैथुनासक्ता योनिरन्तर्मुखी मता ॥ १७ ॥
गर्भस्थायाः स्त्रिया रौक्ष्याद् वायुर्योनिं प्रदूषयेत् ।
मातृदोषादणुद्वारां कुर्य्यात् सूचीमुखी तु सा ॥ १८ ॥
व्यवायकाले रुन्धन्त्या वेगान् प्रकुपितोऽनिलः ।
कुर्य्याद् विण्मूत्रसङ्गार्त्तां शोषं योनिमुखस्य च ॥
षड़हात् सप्तरात्राद् वा शुक्रं गर्भाशयं गतम् ।
सरुजं नीरुजं वापि या स्रवेत् सा तु वामिनी ॥ १९ ॥

गङ्गाधरः—व्यवायमित्यादि । भोजनेनातितृप्ताया नार्य्याः व्यवायं भजन्त्या मिथ्यास्थिताङ्गाया अन्नपीड़ितो वायुः । सा योनिरन्तर्मुखी मता ॥ १७ ॥

गङ्गाधरः—गर्भस्थाया इत्यादि । यस्या दुहिता गर्भस्था तस्या मातृदोषाद् रूक्षाद्याहारविहाराद् योन्यारम्भकवीजभागस्य रौक्ष्याद् वायुर्गर्भनिर्म्माता वायुः योनिं प्रदूषयेत्, अणुद्वारां सूक्ष्मद्वारां तस्या दुहितुर्योनिं कुर्य्यात् । सा योनिः सुचीमुखी नाम मता ॥ १८ ॥

गङ्गाधरः—व्यवायेत्यादि । या नारी व्यवायकाले समुपस्थितान् वेगान् विण्मूत्राणां रुणद्धि, तस्या अनिलः कुपितः सन् तां विण्मूत्रसङ्गार्त्तां कुर्य्यात् । योनिमुखस्य च शोषं कुर्य्यादिति शुष्का नाम योनिः । षड़हादित्यादि । या योनिः षड़हात् सप्तरात्राद् वा गर्भाशयगतं शुक्रं सरुजं नीरुजं वा स्रवेत् सा योनिर्वामिनी नाम ॥ १९ ॥

पुत्रघ्नीति व्यपदेशो ज्ञेयः । व्यवायमिततृप्ताया इत्यादौ अतितृप्तायाः व्यवायं भजन्त्याः मिथ्यास्थिताङ्गायाः मिथ्यास्थिताङ्गत्वेन वक्रतया अन्तः मुखनयनमभिप्रेतम् । गर्भस्थाया इत्यादौ रौक्ष्यादिति रूक्षगुणात् । मातृदोषादिति मातुः गर्भकाले वातप्रकोपहेतुरूपाचारात् ॥ १६—१८ ॥

चक्रपाणिः—शोषं योनिमुखस्येत्यनेन योनिमुखशोषात् शुष्कयोनिसंज्ञा । षड़हादित्यादिना

बीजदोषात् तु गर्भस्थ-मारुतोपहताशया ।
ऋतुद्वेषिण्यस्तनी या षण्डी स्यादनुपक्रमा ॥ २० ॥
विषमदुःखशय्याति-मैथुनात् कुपितोऽनिलः ।
गर्भाशयस्य योन्याश्च मुखं विष्टम्भयेत् स्त्रियाः ।
असंवृतमुखी सार्त्तिः सफेनार्त्तववाहिनी ।
मांसोत्सन्ना महायोनिः पर्व्ववङ्क्षणशूलिनी ॥ २१ ॥
इत्येतैर्लक्षणैः प्रोक्ता विंशतिर्योनिजा गदाः ।
न शुक्रं धारयत्येभिर्दोषैर्योनिरुपद्रुता ॥
तस्माद् गर्भं न गृह्णाति स्त्री गच्छत्यामयान् बहून् ।
गुल्मार्शःप्रदरादींश्च वाताद्यैश्चातिपीड़नम् ॥ २२ ॥

गङ्गाधरः—बीजेत्यादि । या नारी जन्मकाले बीजदोषाद् गर्भस्थमारुतेन गर्भाशयारम्भकवायुना उपहतगर्भाशया जाता सा ऋतुद्वेषिणी चास्तनी च भवति, तस्याः सा योनिः पण्डी, सा पुनरनुपक्रमा न साध्या ॥ २० ॥

गङ्गाधरः—विषमेत्यादि । कुपितोऽनिलः गर्भाशयस्य योन्याश्च मुखं विष्टम्भयेत् स्तम्भयेत् विवृतमेव वर्त्तते, सा विवृता नाम खलु असंवृतमुखी महायोनिर्नाम च ॥ २१ ॥

गङ्गाधरः—इत्येतैरित्यादि । एभिर्दोषैरुपद्रुता योनिर्न शुक्रं धारयति । तस्मादित्यादि । गुल्मार्शःप्रदरादींश्चेति गुल्मार्शसी उक्ते प्रदरं वक्ष्यते ॥ २२ ॥

शुक्रवमनात् वामिनीति उच्यते । मारुतोपहताशयेति मारुतोपहतगर्भाशया । बीजदोषादिति सामान्यवचनेनापि आर्त्तवरूपबीजदोष एवात्र ज्ञेयः, गर्भाशयोपघातकरत्वात् । उक्तं हि—यदा अस्याः शोणितं गर्भाशयबीजभागं प्रकोपमापद्यते तदा वन्ध्यां जनयति । विषममिति क्रिया-विशेषणं विषमं यथा भवति तथा मैथुनादित्यर्थः । विष्टम्भयेदिति विस्तारयेत् । मांसोत्सन्नेति उत्सन्नमांसा ॥ १९—२१ ॥

चक्रपाणिः—दोषैर्योनिरुपद्रुतेत्यनेन दोषशब्देन योनिदूषका यथोक्ता गदा उच्यन्ते । उक्तं हि—रोगा हि दोषशब्दं लभन्ते । तस्मादिति । योन्युपद्रवान् प्रदरादीन् इत्यत्र योनिव्यापच्छेषं प्रदरमाहुः । तेन योनिव्यापदभावे प्रदरदोषोत्पादं वर्णयन्ति, ये तु योनिव्यापद्भिन्नमेव

आसां षोड़श यास्त्वन्त्या आद्ये द्वे पित्तदोषजे।
परिप्लुता वामिनी च वातपित्तात्मिके मते।
कर्णिन्युपप्लुते वात-कफात् शेषास्तु वातजाः।
देहं वातादयस्तासां स्वैर्लिङ्गैः पीड़यन्ति हि॥ २३॥
स्नेहनस्वेदवस्त्यादि वातजास्वनिलापहम्।
कारयेद् रक्तपित्तघ्नं शीतं पित्तकृतासु च॥
श्लेष्मजासु तु रूक्षोष्णं कर्म्म कुर्य्याद् विचक्षणः।
सन्निपाते विमिश्रन्तु संसृष्टासु च कारयेत्॥ २४॥
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत् पुनः।
पाणिना नामयेज्जिह्मां संवृतां वर्द्धयेत् पुनः॥

गङ्गाधरः—आसामित्यादि। आसां विंशतेर्व्यापदां मध्ये पित्तरक्तकररित्यादिभिरुक्ता यास्त्वन्त्याः षोड़शयोनिव्यापदस्तासामाद्ये द्वे सासृजा चारजस्का चेति द्वे पित्तजे। शेषास्तु चतुर्द्दश वातजाः। देहमित्यादि। हि यस्मात् तासां देहं वातादयः पीड़यन्ति, तस्माद् वातजासु योनिव्यापत्सु अनिलापहं स्नेहनादि कारयेत्। पित्तकृतासु रक्तपित्तघ्नं शीतं कारयेत्। श्लेष्मजासु तु रूक्षोष्णं कर्म्म कुर्य्यात्। सन्निपाते विमिश्रं तिसृणामुक्तं कर्म्म विशेषेण मिश्रीकृत्य कुर्य्यात्। संसृष्टासु परिप्लुतावामिन्योर्वातपित्तोक्तं विमिश्रं कारयेत्। कर्णिन्युपप्लुतयोर्वातकफोक्तं विमिश्रं कारयेत्॥ २३। २४॥

गङ्गाधरः—विशेषेण कर्म्म चाह—स्निग्धेत्यादि। स्निग्धस्विन्नां कृत्वा दुःस्थितां योनिं स्थापयेत् पुनः सुस्थितां कुर्य्यात्, जिह्मां कुटिलां योनिं पाणिना

प्रदरमिच्छन्ति तेषामत्र विरोधो नास्त्येव। सम्प्रति आद्यव्यापच्चतुष्टयं त्यक्त्वा शेषषोड़शव्यापत्सु वातादिलिङ्गं चिकित्साज्ञानार्थं दोषविभागं दर्शयन्नाह—आसामित्यादि। आद्ये द्वे इति रक्तयोन्यरजस्के। देहं वातादय इति तासां वातादिविभागेन उक्तयोनिव्यापदां वातादयो देहमिति स्वैर्लिङ्गैः पीड़यन्ति तेन वाताद्यहितत्वं तासामुपपन्नम् इति भावः। अन्ये तु देहशब्देनात्र योनिस्थानमेवोच्यत इत्याहुः॥ २२। २३॥

चक्रपाणिः—लिङ्गानन्तरं चिकित्सामाह—स्नेहनेत्यादि। स्नेहनादीनाम् अनिलापहत्वे सिद्धेऽपि अनिलापहमिति विशेषेण अनिलापहद्रव्यकृतस्नेहनादिप्रतिपादनार्थम्। संसृष्टासु इति द्वन्द्वजासु। स्थापनप्रकारमाह। स्निग्धस्विन्नामिति स्वर्वत्रानुवर्त्तते। जिह्मामिति वक्राम्।

प्रवेशयेन्निःसृताञ्च विवृतां परिवर्त्तयेत् ।
योनिः स्थानापवृत्ता हि शल्यभूता मता स्त्रियाः ॥
सर्व्वां व्यापन्नयोनिन्तु कर्म्मभिर्वमनादिभिः ।
मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत् ।
सर्व्वतः सुविशुद्धायाः शेषं कर्म्म विधीयते ॥ २५ ॥
वातव्याधिहरं कर्म्म वातार्त्तानां सदा हितम् ।
औदकानूपजैर्मांसैः क्षीरैः सतिलतण्डुलैः ॥
सवातघ्नौषधैर्नाड़ी-कुम्भीस्वेदमुपाचरेत् ।
आक्तां लवणतैलेन साश्मप्रस्तरसङ्करैः ।
स्विन्नामुष्णाम्बुसिक्ताङ्गीं वातघ्नैर्भोजयेद् रसैः ॥ २६ ॥
बलाद्रोणद्वयक्वाथे घृततैलाढ़कं पचेत् ।
स्थिरापयस्याजीवन्ती-वीरर्षभकजीवकैः ॥

सरला यथा स्यात् तथा नामयेत्, संवृतां योनिं पुनः पाणिना वर्द्धयेद् विवृतां कारयेत्, निःसृताञ्च योनिं पाणिना प्रवेशयेत्, विवृतां योनिं महायोनिं परिवर्त्तयेत् संवृणुयात् । स्थानादपसृत्य वृत्ता योनिः शल्यभूता । सर्व्वामित्यादि । सर्व्वामेव व्यापन्नयोनिं नारीं स्निग्धस्विन्नां मृदुभिः पञ्चभिर्वमनादिभिरुपाचरेत् । सर्व्वत इत्यादि । सर्व्वत ऊर्द्ध्वाधः प्रभृतितः । शेषं कर्म्म यत् तद् विधीयते ॥ २५ ॥

गङ्गाधरः—तद् यथा वातेत्यादि । वातार्त्तानां वातयोनिव्यापन्नानाम् । औदकेत्यादि । औदकादिमांसैरथवा सतिलतण्डुलैः क्षीरैरथवा सवातघ्नौषधैः क्षीरैर्नाड़ीस्वेदं कुम्भीस्वेदं वा उपाचरेत् । आक्तामित्यादि । सैन्धवलवणतैलेन मिलितेनाक्तामभ्यक्तां नारीं प्रस्तरस्वेदेन सङ्करस्वेदेन वा स्विन्नामुष्णाम्बुना सिक्ताङ्गीं वातघ्नैर्मांसरसैर्भोजयेत् ॥ २६ ॥

विवृतामिति विवृत्तमुखां परिवर्त्तयेदिति परितो वर्त्तनेन संवृतां कुर्य्यात् । पञ्चभिरितिपदं सकलकर्म्मणां मृदुतया कर्त्तव्योपदर्शनार्थम् । अत्र च वमनादीनां सर्व्वदेहोपकारकतया योनिगतरोगहरणेऽपि सामर्थ्यं भवत्येवेति ज्ञेयम् । शेषं कर्म्मेति वक्ष्यमाणम् ॥ २४—२६ ॥

चक्रपाणिः—बलाद्रोणद्वयेत्यादौ बलाद्रोणद्वयस्य क्वाथ इति बलायाः द्रोणद्वयप्रमाणवा ।

श्रावणीपिप्पलीमूल-पीलुमाषाख्यपर्णिभिः।
शर्कराक्षीरकाकोली-काकनासाभिरेव च ॥
पिष्टैश्चतुर्गुणक्षीरे सिद्धं पेयं यथाबलम्।
वातपित्तकृतान् रोगान् हत्वा गर्भं ददाति तत् ॥ २७ ॥

बलातैलम्।

काश्मर्य्यत्रिफलाद्राक्षा-कासमर्दपरूषकः।
पुनर्नवाद्विरजनी-शुकनासासहाचरैः ॥
शतावर्य्या गुडूच्याश्च प्रस्थमक्षसमैर्घृतात्।
सिद्धं पिबेद् वातयोनि-दोषघ्नं गर्भदं परम् ॥ २८ ॥

काश्मर्य्यादिघृतम्।

पिप्पलीः किंशुकाजाजी-वृषकं सैन्धवं वचाम्।
यवक्षाराजमोदे च शर्करां चित्रकन्तथा ॥
पिष्ट्वा प्रसन्नयालोड्य घृतभृष्टानि दापयेत्।
योनिपार्श्वार्त्तिहृद्रोग-गुल्मार्शोविनिवृत्तये ॥ २९ ॥

गङ्गाधरः—बलेत्यादि। बलाया द्रोणद्वयक्वाथे बलायाश्चतुःषष्टिशरावमष्ट-द्रोणे जले पक्त्वा पादशेषे द्रोणद्वये क्वाथे तैलाढकं षोड़शशरावमितं तैलं स्थिरादिभिः काकनासान्तैः कल्कैस्तैलपादिकैश्चतुर्गुणक्षीरे सिद्धं पक्वं तैलं यथाबलं पेयम्। स्थिरा शालपर्णी पयस्या क्षीरविदारी वीरा काकोली श्रावणी मुण्डेरी माषाख्यपर्णी माषपर्णी। काकनासा काउया ठुटीति लोके ॥ २७ ॥ बलातैलम्।

गङ्गाधरः—काश्मर्य्येत्यादि। काश्मर्य्यादिगुड़ूच्यन्तैरक्षसमैः कल्कैर्घृतात् प्रस्थं चतुर्गुणजले सिद्धं पिबेत् ॥ २८ ॥ काश्मर्य्यादिघृतम्।

इति वा उभयथापि द्रोणद्वयमान एव क्वाथो भवति। पयस्या अर्कपुष्पी, मुद्गपीलुमाषाख्यः पर्णीशब्दः प्रत्येकमभिसम्बध्यते। तत्र पीलुपर्णी मोरटा, केचित् मूर्व्वामाहुः। प्रसन्ना मदिराया उपरितनो

वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ।
पिबेत् सलवणैर्मद्यैः पिप्पलीकुञ्चिके तथा ॥
रास्नाश्वदंष्ट्रावृषकैः शृतं शूले पिबेत् पयः ।
गुडूचीत्रिफलादन्ती-क्वाथैश्च परिषेचयेत् ॥
सैन्धवं तगरं कुष्ठं वृहती देवदारु च ।
समांशैः साधितं कल्कैस्तैलं धार्य्यं रुजापहम् ॥ ३० ॥
गुडूचीमालतीरास्ना-वलामधुकचित्रकैः ।
निदिग्धिकामहादारु-यूथिकाभिश्च कार्षिकैः ॥
तैलप्रस्थं गवां मूत्रे क्षीरे च द्विगुणे पचेत् ।
वातार्त्तानाञ्च योनीनां सेकाभ्यङ्गपिचुक्रियाः ॥ ३१ ॥
वातार्त्तायाः पिचुं दद्यात् योनौ च प्रणयेत् ततः ।
हिंस्राकल्कन्तु वातार्त्ता कोष्णमभ्यज्य धारयेत् ।
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफातुरा ॥

गङ्गाधरः—पिप्पलीरित्यादि। पिप्पल्यादीनि पिष्ट्वा प्रसन्नयालोड्य आलोडनयोग्यया घृते सम्भृष्टानि पातुं दापयेत् ॥ २९ ॥

गङ्गाधरः—वृषकमित्यादि। वृषकादिकं सलवणैर्मद्यैः पिष्ट्वा पिबेत्। मदयन्तिका मल्लिका। तथा पिप्पलीमुपकुञ्चिकाञ्च पिष्ट्वा सलवणैर्मद्यैः पिबेत्। रास्नेत्यादि। रास्नादिभिरष्टभागिकैश्चतुर्गुणजले शृतं पयः पिबेत्। गुडूच्यादिक्वाथैश्च सेचयेत्। सैन्धवमित्यादि। सैन्धवादिभिः समांशैः कल्कैः साधितं तैलं पिचुना योनौ धार्य्यम् ॥ ३० ॥

गङ्गाधरः—गुडूचीत्यादि। गुडूच्यादिभिर्यूथिकान्तैः कल्कैः कार्षिकैः गवां मूत्रे द्विगुणे क्षीरे च द्विगुणे तैलप्रस्थं पचेत्। तेन सेकादिक्रिया ॥ ३१ ॥

गङ्गाधरः—वातार्त्ताया इत्यादि। योनिमभ्यज्य हिंस्राकल्कं कोष्णं योनौ धारयेत्। पञ्चेत्यादि। आम्रादीनां पञ्चानां वल्कस्य कल्कं पित्तार्त्ता,

भागः। शूल इति योनिशूले। तैलं धार्य्यमिति पिच्छिलायां योनौ धार्य्यम्। योनौ च

पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च।
पित्तघ्नौषधसिद्धानि कार्य्याणि भिषजा तथा॥ ३२॥

शतावरीमूलतुलाश्चतस्रः संप्रपीड़येत्।
रसेन क्षीरतुल्येन पचेत् तेन घृताढ़कम्॥
जीवनीयैः शतावर्य्या मृद्वीकाभिः परूषकैः।
पिष्टैः पियालैश्चाक्षांशैर्द्वियष्टिमधुकैर्भिषक्॥
सिद्धशीते च मधुनः पिप्पल्याश्च पलाष्टकम्
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम्॥
ब्राह्मणान् प्राशयेत् पूर्व्वं लिह्यात् पाणितलं तथा।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत्॥
क्षतक्षयं रक्तपित्तं श्वासं कासं हलीमकम्।
कामलां वातरक्तञ्च विसर्पं हृच्छिरोग्रहम्॥

श्यामा अनन्तमूलं श्यामादीनां कल्कं कफातुरा योनौ धारयेत्। पित्तलानामित्यादि। पित्तहराः शीताः सेकादयः क्रियाः कार्य्याः, स्नेहनार्थं घृतानि कार्य्याणि पित्तघ्नौषधसिद्धानि॥ ३२॥

गङ्गाधरः—शतावरीत्यादि। शतावर्य्या मूलस्य चतस्रस्तुलाः पञ्चाशच्छरावं पिष्ट्वा प्रपीड़येद् यावांस्तद्रसो भवति, तेन रसेन क्षीरतुल्येन घृताढ़कं जीवनीयादिभिर्द्वियष्टिमधुकान्तैरक्षांशैः कल्कैः पचेत्। पक्वे पूते शीते च सति मधुनोऽष्टपलं पिप्पल्याश्चाष्टपलं सिताया दशपलञ्च दत्त्वा विमिश्रितं तत्

प्रणयेदिति योनौ उत्तरवस्तिना प्रवेशयेत्। श्यामादीनामिति रोगभिषग्जितीये श्यामात्रिवृता-चतुरङ्गुलेत्यादिनोक्तानाम्॥ २७—३२॥

चक्रपाणिः—शतावरीमूलतुला इत्यादौ आर्द्रशतावरीमूलपीड़नेन यावद् रसो भवति

उन्मादारत्यपस्मारान् वातपित्तात्मकान् जयेत्।
शतावरीघृतमिदं कृष्णात्रेयेण पूजितम्॥ ३३॥

शतावरीघृतम्।

एवमेव क्षीरसर्पिर्जीवनीयोपसाधितम्।
गर्भदं पित्तलानाञ्च रोगाणां स्याद् भिषग्जितम्॥
योन्याः श्लेष्मप्रदुष्टाया वर्त्तिः संशोधनो हिता।
वाराहे बहुशः पित्ते भावितैर्लक्तकैः कृता॥
भावितं पयसार्केण यवचूर्णं ससैन्धवम्।
वर्त्तिः कृता मुहुर्धार्य्या ततः सेच्या सुखाम्बुना॥
पिप्पलीमरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधिनी॥ ३४॥

पूर्व्व ब्राह्मणान् प्राशयेत् भोजयेत्। ब्राह्मणभोजनादुत्तरं तद् घृतं पाणितलं लिह्यात्॥ ३३॥ शतावरीघृतम्।

गङ्गाधरः—एवमेवेत्यादि। एवमनेन प्रकारेण क्षीरघृतं क्षीरोत्थं सर्पि-र्जीवनीयदशककल्कसाधितं गर्भदमित्यादि स्यात्। योन्या इत्यादि। संशोधनी वर्त्तिर्हिता या या तां तामाह—वाराह इत्यादि। वाराहे पित्ते बहुशो भावितैरलक्तकैः कृता वर्त्तिर्योनौ दत्ता हितेत्यन्वयः। भावितमित्यादि। ससैन्धवं यवचूर्णमार्केण पयसा भावितं वर्त्तिः कृता मुहुर्योनौ धार्य्या न तु चिरकालम्, ततः सुखाम्बुना योनिः सेच्या। पिप्पलीत्यादि। पिप्पल्यादीनि पिष्ट्वा जलेन वर्त्तिः प्रदेशिन्याङ्गुल्या तुल्या कार्य्या, कृता सा योनौ धार्य्या योनिशोधिनी॥ ३४॥

तेन समं क्षीरं घृतं वक्ष्यमाणकल्कः पाचनीयम्। द्वियष्टिमधुकैरिति द्विभागमधुयष्टिकैः, किंवा जलस्थलयष्टिमधुकद्वययुक्तैः॥ ३३॥

चक्रपाणिः—एवमेवेत्यादौ शतावरीचतुःशतपलरससमेनेत्यर्थः। क्षीरोत्थितं सर्पिः जीवनीयान्यत्र कल्कः। पयसार्कस्येति अर्कक्षीरेण। सेच्येति परिषिञ्चनीया। प्रदेशिनीतुल्या प्रदेशिन्यङ्गुली-समानपरिणाहेन दैर्घ्येण च॥ ३४॥

उडुम्बरशलाटूनां द्रोणमब्द्रोणसंयुतम् ।
सपञ्चवल्ककुनक-मालतीनिम्बपल्लवम् ॥
निशां स्थाप्य जले तस्मिंस्तैलप्रस्थं विपाचयेत् ।
लाक्षाधवपलाशत्वक्-निर्य्यासैः शाल्मलेन च ॥
पिष्टैः सिद्धन्तु तत्तैल-पिचुर्योनौ रुजापहः ।
सशर्करैः कषायैश्च शीतैः कुर्व्वीत सेचनम् ॥
पिच्छिला विवृता काल-दुष्टा योनिश्च दारुणा ।
सप्ताहात् सिध्यति क्षिप्रमपत्यञ्चापि विन्दति ॥ ३५ ॥
उडुम्बरस्य दुग्धेन षट्कृत्वो भावितात् तिलात् ।
तैलं क्वाथेन तास्वेव सिद्धं धार्य्यञ्च पूर्व्ववत् ॥ ३६ ॥

गङ्गाधरः—उडुम्बरेत्यादि । यत्रोडुम्बरस्यामफलानि द्रोणसम्मितानि अब्द्रोणसंयुतं पञ्चवल्कलकुनकादिपत्रं मिलित्वा द्रोणम्, सर्व्वं द्रोणद्वयं कुट्टयित्वा अपां द्रोणे निशां संस्थाप्य रसं निष्पीड्य गालयेत्, तेन रसेन लाक्षाधवत्वङ्निर्य्यासपलाशत्वङ्निर्य्यासशाल्मलनिर्य्यासैः पिष्टैः कल्कैः सिद्धं तैलं यत् तत्तैलपिचुः तत्तैलार्द्रीकृततूलकपत्री योनौ धार्य्या, ततः परं उडुम्बरादीनां निम्बपल्लवान्तानां कषायैः शीतैः सशर्करैर्योनिसेचनं कुर्व्वीत। तस्याशीः पिच्छिलेत्यादि ॥ ३५ ॥

गङ्गाधरः—उडुम्बरस्येत्यादि । उडुम्बरस्य दुग्धेन क्षीरेण तिलान् षट्कृत्वो भावयेत् । भावितात् तत्तिलात् पीड़ितादुत्पन्नं तैलं तस्यैवोडुम्बरस्य त्वक्क्वाथेन चतुर्गुणेन सिद्धं तैलं पूर्व्ववत् पिचुना धार्य्यम्, तत उडुम्बरकषायेण सशर्करेण योनिसेचनं कुर्व्वीत । तस्य पिच्छिलाद्याशीः पूर्व्ववत् ॥ ३६ ॥

चक्रपाणिः—उडुम्बरशलाटूनामित्यादौ पञ्चवल्कादिसहितानां द्रोणं समभागं द्रव्यमानं गृहीतम् । निर्य्यासैरिति पलाशस्यैव निर्य्यासैः । लाक्षा च पलाशव्यतिरेकेण भवतीति ज्ञेयम् । सशर्करैः कषायैरिति उडुम्बरशलाटादिकृतकषायैरेवेत्यर्थः । कालदुष्टा चिरकालदुष्टा । उडुम्बरस्य

धातक्यामलकीपत्र-स्रोतोजमधुकोत्पलैः ।
जम्ब्वाम्रमध्यकाशीश-लोध्रकट्फलतिन्दुकैः ॥
सौराष्ट्रिकादाड़िमत्वगुडुम्बरशलाटुभिः ।
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥
तैलप्रस्थं पिचुं दद्यात् योनौ च प्रणयेत् ततः ।
कटीपृष्ठत्रिकाभ्यङ्गं स्नेहवस्तिञ्च दापयेत् ॥
पिच्छिला स्राविणी योनिर्विप्लुतोपप्लुता तथा ।
उत्ताना चोन्नता शूना सिध्येत् सस्फोटशूलिनी ॥ ३७ ॥
करीरधवनिम्बार्क-रेणु(वेणु)कोषाम्रजाम्बवैः ।
जिङ्गिनीविषमूलानां क्वाथैर्माध्वीकसीधुभिः ॥
संयुक्तैर्धावनं मिश्रैर्योनिस्रावनिवारणम् ।
कुर्य्यात् सतक्रगोमूत्र-शुक्तैर्वा त्रिफलारसैः ॥
पिप्पल्ययोरजःपथ्या-प्रयोगा मधुना हिताः ।
श्लेष्मलायां कटुप्रायाः समूत्रा वस्तयो हिताः ॥

गङ्गाधरः—धातकीत्यादि। धातक्यामलक्योः पत्रम्। स्रोतोजः शङ्खनाभिः। जम्ब्वाम्रयोरस्थिमध्यं मज्जा। सौराष्ट्रिकी मृत्। दाड़िमफलत्वक्, उडुम्बरस्यापक्वानि फलानि। अक्षमात्रैरेतैः कल्कैरजामूत्रे द्विगुणे क्षीरे चाजाया एव द्विगुणे तैलप्रस्थं पचेत्। तेन योनौ पिचुं दद्यात्, ततः प्रणयेत् जलेन सेचयेत्। ततः कट्याद्यभ्यङ्गं दापयेत्। स्नेहवस्तिञ्च दापयेत्। पिच्छिलेत्यादिराशीः ॥ ३७ ॥

गङ्गाधरः—करीरेत्यादि। करीरो मरुजो द्रुमविशेषः। कोषाम्रः ओड़िआम्र इति लोके। जिङ्गिनी मञ्जिष्ठा। करीरादीनां प्रत्येकक्वाथैर्जिङ्गिनीविषमूलानां क्वाथैर्माध्वीकसीधुभिः संयुक्तैर्मिश्रैर्योनिधावनं कुर्य्यात् योनिस्रावनिवारणम्। त्रिफलारसैः सतक्रगोमूत्रशुक्तैर्वा योनेर्धावनं कुर्य्यात्। पिप्पलीत्यादि। मधुना पिप्पलीप्रयोगो मधुना मारितपुटितलौहरजःप्रयोगो मधुना

दुग्धेनेति उदुम्बरक्षीरेण। क्वाथेन तस्यैवेति उदुम्बरस्य क्वाथेन। सौराष्ट्रिका अपरमृत्तिका। अजामूत्रे क्षीरे चेति अजाक्षीरे प्रत्येकं द्विगुणे। उत्तानेत्युन्नता ॥ ३१—३७ ॥

पित्ते समधुरक्षीरा वाते तैलाम्लसंयुताः।
सन्निपातसमुत्थायाः कर्म्म साधारणं मतम्॥ ३८॥
रक्तयोन्यामसृग्वर्णैरनुबन्धं समीक्ष्य च।
ततः कुर्य्याद् यथादोषं रक्तस्थापनमौषधम्॥
तिलचूर्णं दधि घृतं फाणितं शौकरो वसा।
क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम्॥
वराहस्य रसो मेध्यः सकौलत्थोऽनिलाधिके।
शर्कराक्षौद्रयष्ट्याह्व-नागरैर्वा युतं दधि॥
पयस्योत्पलशालूकं विसकालीयकाम्बुदम्।
सपयःशर्कराक्षौद्रमेकशोऽसृग्दरे पिबेत्॥ ३९॥

पथ्याचूर्णप्रयोग इत्येते प्रयोगा योनिस्रावे हिताः। श्लेष्मलायां योनौ कटुप्रायाः समूत्रवस्तयश्च हिताः। पित्ते समधुरक्षीरा वस्तयो हिताः, वाते तैलाम्लसंयुता वस्तयो हिताः। सन्निपातसमुत्थायाः साधारणं त्रिषु दोषेषूक्तं कर्म्म हितं मतम्॥ ३८॥

गङ्गाधरः—रक्तयोन्यामित्यादि। रक्तयोन्यां वातादिवर्णैरसृक् समीक्ष्यानुबन्धं समीक्ष्य च यथादोषं रक्तस्थापनमौषधं जातिसूत्रीयोक्तं कुर्य्यात्। तिलेत्यादि। तिलचूर्णादिकं क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम्। रक्तयोनिरेव प्रदरमुच्यते। शौकरी वसा वराहस्य वसा। वराहस्येत्यादि। कुलत्थरससहितवराहमांसरसोऽनिलाधिके, तथा शर्करादियुतं दधि चानिलाधिके प्रदरे। पयस्येत्यादि। पयस्या क्षीरविदारी। पयस्यादीनामेकैकं सपयःशर्कराक्षौद्रमनिलाधिकेऽसृग्दरे पिबेत्॥ ३९॥

चक्रपाणिः—शरीरो मरुद्रुमः। कोषाम्रः स्वनामख्यातः। जिङ्गिनी प्रसिद्धा। कर्म्म साधारणं वातादिजयोनिदोषोक्तं मिलितं त्रिदोषजायां कर्त्तव्यम्। रक्तयोन्यामित्यादि असृग्वर्णैरनुबन्धं वीक्ष्येति असृग्वर्णविशेषः दोषानुबन्धं परीक्ष्य॥ ३८। ३९॥

पाठा जम्ब्वाम्रयोर्मध्यं शिलोद्भेदं रसाञ्जनम् ।
अम्बष्ठा शाल्मलीवेष्टं समङ्गा वत्सकत्वचम् ॥
वाह्लीकातिविषे लोध्रं बिल्वं मुस्तं सगैरिकम् ।
कट्वङ्गं मधुकं शुण्ठी मृद्वीका रक्तचन्दनम् ॥
कट्फलं वत्सकानन्ता-धातकीमधुकाञ्जनम् ।
पुष्येणोद्धृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत् ।
तानि क्षौद्रेण संयुज्य पिबेत् तण्डुलवारिणा ॥
अर्शःसु चातिसारेषु रक्तं यच्चोपवेश्यते ।
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत् ॥
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ।
स्त्रीणां श्यावारुणं यच्च प्रसह्यापि निवर्त्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ ४० ॥

पुष्यानुगं चूर्णम् ।

तण्डुलीयकमूलन्तु सक्षौद्रं तण्डुलाम्बुना ।
रसाञ्जनञ्च लाक्षाञ्च छागेन पयसा पिबेत् ॥

गङ्गाधरः—पाठेत्यादि । पाठा चाम्बष्ठा चेति द्विरुक्तत्वाद् भागद्वयम् । वाह्लीकं हिङ्गु । कट्वङ्गं श्योनाकः । वत्सकमिन्द्रयवः । पाठादीनि तुल्यान्युद्धृत्य पुष्येण श्लक्ष्णचूर्णानि कारयेत् । कश्चिदाह पुष्येणोद्धृत्य यदा तदा चूर्णानि कारयेदिति । तानि क्षौद्रेण प्रक्षयित्वा तण्डुलोदकेन पिबेदिति । शेषमाशीरिति ॥ ४० ॥ पुष्यानुगं चूर्णम् ।

गङ्गाधरः—तण्डुलीयकेत्यादि । तण्डुलीयोऽल्पमारिषः, स चात्र रक्तो ग्राह्यः । तस्य मूलं सक्षौद्रं तण्डुलाम्बुना पिबेदथवा रसाञ्जनञ्चाथवा लाक्षां छागेन

चक्रपाणिः—पाठेत्यादौ अम्बष्ठा पाठाभेदः । अन्ये तु पाठाभागद्वयग्रहणार्थं पुनः अम्बष्ठेतिपदं वर्णयन्ति । उक्तं हि—"घृते तैले च योगे च यद् द्रव्यं पुनरुच्यते । भागतो द्विगुणं तद्धि ग्रहणीयं मनीषिभिः" इति । शाल्मलीवेष्टनं शाल्मलीवेष्टः । वाह्लीकमिति कुङ्कुमम् । पुष्येणेति पुष्यनक्षत्रे उद्धृत्य । नीलं श्वेतं सपीतकमिति रजोदोषविशेषणम् ॥ ४० ॥

पत्रकल्कौ घृतभृष्टौ राजादनकपित्थयोः।
पित्तानिलहरौ पित्ते सर्व्वथैवास्रपित्तजित्॥
मधुकं त्रिफला लोध्रं मुस्तं सौराष्ट्रिका मधु।
मद्यैर्निम्बगुडूच्यौ वा कफजेऽसृग्दरे पिबेत्॥
विरेचनं महातिक्तं पित्तजेऽसृग्दरे हितम्।
हितं गर्भपरिस्रावे यच्चोक्तं तच्च कारयेत्॥ ४१॥
काश्मर्य्यकुटजक्काथ-सिद्धमुत्तरवस्तिना।
रक्तयोन्यरजस्कानां पुत्रघ्न्याश्च हितं घृतम्॥ ४२॥
मृगाजाविवराहासृग् दध्यम्लक्षौद्रसर्पिषा।
अरजस्का पिबेत् सिद्धं जीवनीयैः पयोऽपि वा॥ ४३॥

पयसा पिबेत्। पत्रेत्यादि। राजादनस्य पत्रकल्को घृतभृष्टः कपित्थस्य वा पत्रकल्को घृतभृष्टः पित्तानिलहरः। पित्तेऽसृग्दरे सर्व्वथा रक्तपित्ताधिकारोक्तमौषधं विधीयते। मधुकमित्यादि। कफजेऽसृग्दरे मधुकादि मध्वन्तं मद्यैः पिबेत्। निम्बगुडूच्यौ वा चूर्णीकृतौ मद्यैः पिबेत्। विरेचनमित्यादि। महातिक्तं घृतं गर्भपरिस्रावे जातिसूत्रीयोक्तं यच्च तच्च पित्तजे कारयेत्॥ ४१॥

गङ्गाधरः—काश्मर्य्यत्यादि। काश्मर्य्यं गम्भारीफलं तस्य कुटजस्य मिलितस्य क्काथे चतुर्गुणेऽकल्कं सिद्धं घृतमुत्तरवस्तिना रक्तयोन्यादौ हितम्॥ ४२॥

गङ्गाधरः—मृगेत्यादि। मृगाद्यन्यतमस्यासृक् दध्यम्लाद्यन्यतमेनारजस्का पिबेत्। अथवा जीवनीयकल्कसिद्धं पयः पिबेत्॥ ४३॥

चक्रपाणिः—विरेचनमित्यादौ विरेचनमेव त्रिवृतादि पिबेत्। तथा महातिक्तकं घृतं कुष्ठोक्तं पिबेदिति योज्यम्। गर्भपरिस्रावे यचोक्तमिति जातिसूत्रीये गर्भचिकित्सितं यदुक्तं तत् कारयेत्। मृगाजावीत्यादौ मृगादीनामसृक् दध्यम्लफलसर्पिषा पिबेदिति योज्यम्। अम्लक्षौद्रसर्पिषेति वा पाठः॥ ४१—४३॥

कर्णिन्यचरणाशुष्क-योनिप्राक्चरणासु च ।
कफवाते च दातव्यं तैलमुत्तरवस्तिना ॥
गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ॥
स्रोतसां शोधनं क्लेद-शोथकण्डूहरञ्च तत् ॥ ४४ ॥
वातघ्नैः शतपाकैश्च तैलः प्रागतिचारिणी ।
आस्थाप्या चानुवास्या वा स्वेद्या चानिलसूदनैः ।
स्नेहद्रव्यैस्तथाहारैरुपनाहैश्च युक्तितः ॥
शताह्वायवगोधूम-किण्वकुष्ठप्रियङ्गुभिः ।
बलाखुपर्णिकास्नेहैः संयावा धारणे मताः ॥ ४५ ॥
वामिन्युपप्लुतानाञ्च स्नेहस्वेदादिकः क्रमः ।
कार्य्यस्ततः स्नेहपिचुस्ततः सन्तर्पणं भवेत् ॥ ४६ ॥

गङ्गाधरः—कर्णिनीत्यादि। कर्णिन्यादिषूत्तरवस्तिना तैलं दातव्यम्। गोपित्त इत्यादि। त्रिःसप्तेति एकविंशतिवारं भावितं क्षौमवस्त्रचेलं क्षुमा मसिना तस्य वल्कलकृतं वस्त्रं क्षौमं योनौ दद्यात्। किण्वं मद्यकिट्टं चूर्णयित्वा मधुना मिश्रीकृत्य योनौ दद्यात् ॥ ४४ ॥

गङ्गाधरः—वातघ्नरित्यादि। प्रागतिचारिणी प्राक्चरणा योनिरतिचरणा च योनिर्वातघ्नैर्वातरोगोक्तैस्तैलैः शतपाकैश्च तैलैरास्थाप्या चानुवास्या च। अनिलसूदनैश्च स्नेहद्रव्यैः स्वेद्यास्तथानिलसूदनैराहारैः स्नेहद्रव्यैर्युक्तित उपनाहैश्च स्नेहद्रव्यैरुपचर्य्या। शताह्वेत्यादि। शताह्वादीनां संयावाः कल्कप्रक्षितालक्तकपत्राणि योनौ धारणे मताः ॥ ४५ ॥

गङ्गाधरः—वामिनीत्यादि। स्नेहस्वेदादिक इति आदिपदेन विरेचनादिकं गृह्यते ॥ ४६ ॥

चक्रपाणिः—तैलमुत्तरवस्तिनेत्यत्र जीवनीयसिद्धं तैलम्। गोपित्त इत्यादि दद्यादचरणापहमिति। संयाव उत्कारिका। धारणे स्मृत इति धारणकारक इत्यर्थः ॥ ४४—४६ ॥

शल्लकीजिङ्गिनीजम्बू-धवत्वक्पञ्चवल्कलैः।
कषायैः साधितः स्नेह-पिचुः स्याद् विप्लुतापहः॥ ४७॥
कर्णिन्यां वर्त्तिका कुष्ठ-पिप्पल्यर्काग्रसैन्धवैः।
वस्तमूत्रकृता धार्य्या सर्व्वञ्च श्लेष्मनुद्धितम्॥ ४८॥
त्रैवृतः स्नेहनं स्वेदो ग्राम्यानूपौदका रसाः।
दशमूलीपयोवस्तिश्चोदावर्त्तानिलार्त्तिषु॥ ४९॥
त्रैवृतेनानुवास्यैव वस्तिरुत्तरसंज्ञकः।
एतदेव महायोन्यां स्रस्तायाञ्च विधीयते॥
वराहकुक्कुटवसा घृतं मधुरकैः शृतम्।
संप्रवेश्य महायोनिं बध्नीयात् क्षौमलक्तकैः॥
प्रसुप्तां सर्पिषाभ्यज्य क्षीरस्विन्नां प्रवेशयेत्।
बध्नीयाद् वेशवारस्य पिण्डेनामूत्रकालतः॥

गङ्गाधरः—शल्लकीत्यादि। शल्लकी वृक्षविशेषः। जिङ्गिनी मञ्जिष्ठा। जम्बूधवयोस्त्वक्। आम्रादिपञ्चवल्कलैश्च क्वाथैश्चतुर्गुणैरकल्कसाधिततैलादिस्नेहपिचुर्व्विप्लुतापहः॥ ४७॥

गङ्गाधरः—कर्णिन्यामित्यादि। कर्णिन्यां योनौ कुष्ठादि सैन्धवान्तैर्वस्तमूत्रपिष्टैः कृता वर्त्तिका योनौ धार्य्या। सर्व्वञ्च श्लेष्मनुत् कर्म्म हितम्॥४८॥

गङ्गाधरः—त्रैवृत इत्यादि। उदावर्त्तायामनिलार्त्तिषु त्रिवृताप्रयोगः। ग्राम्यादिमांसरसाः। दशमूली गव्यं पयः। त्रैवृतेनेत्यादि। त्रैवृतेन तैलेनानुवास्या। महायोन्यामुत्तरवस्तिर्विधीयते। एतदेव स्रस्तायां योनौ विधीयते। वराहेत्यादि। वराहकुक्कुटयोर्वसा च घृतञ्चेति यमकं मधुरकैर्जीवनीयैः कल्कैः शृतं म्रक्षयित्वा महायोनिं संप्रवेश्य तद्घृताक्तैः क्षौमालक्तकैर्बध्नीयात्। प्रसुप्तामित्यादि। प्रसुप्तां योनिं सर्पिषाभ्यज्य क्षीरस्विन्नां प्रवेशयेत्। ततो वेशवारस्य पिण्डेन बध्नीयात्। आमूत्रकालतो मूत्रवेगकालपर्य्यन्तम्, मूत्रवेगे मुञ्चेत्।

चक्रपाणिः—त्रैवृतं स्नेहनमिति सर्पिस्तैलवसास्नेहनम्। एतदेवेति त्रैवृतमेव अनुवासनवस्तिः

यच्च वातविकाराणां कर्म्मोक्तं तच्च कारयेत् ।
सर्व्वव्यापत्सु मतिमान् महायोन्यां विशेषतः ॥
न हि वाताद्दते योनिर्नारीणां संप्रदुष्यति ।
शमयित्वा तमन्यस्य कुर्य्याद् दोषस्य भेषजम् ॥ ५० ॥
रोहीतकान्मूलकल्कं पाण्डरेऽसृग्दरे पिबेत् ।
जलेनामलकीवीज-कल्कं वा ससितामधुम् ॥
मधुनामलकं चूर्णं रसं वा लेहयेच्च ताम् ।
न्यग्रोधस्य कषायेण लोध्रकल्कं तथा पिवेत् ॥
आस्रावे क्षौमपट्टं वा भावितं तेन धारयेत् ।
श्लक्ष्णत्वक्चूर्णपिष्टं वा धारयेन्मधुना कृतम् ॥
योन्या स्नेहाक्तया लोध्र-प्रियङ्गुमधुकस्य वा ।
धार्य्या मधयुता वर्त्तिः कषायाणाञ्च सर्व्वशः ॥

यच्चेत्यादि। सर्व्वयोनिव्यापत्सु कस्माद् वातविकारोक्तं कर्म्म कुर्य्यात्? तत आह—न हीत्यादि। तं वातमादौ शमयित्वान्यस्य दोषस्य भेषजं कुर्य्यात् ॥ ४९ । ५० ॥

गङ्गाधरः—रोहीतकेत्यादि। पाण्डरे श्वेतव्रण। जलेनेति पूर्व्वणान्वयः। ससितामधुमामलकीकल्कं पिवेत्। मधुनेत्यादि। पाण्डरेऽसृग्दरे आमलकस्य चूर्णं रसं वा मधुना लेहयेत् न्यग्रोधस्य कषायेण वा लोध्रकल्कं लेहयेत्। आस्राव इत्यादि। आस्रावे योनेस्तेन न्यग्रोधकषायेण लोध्रकल्केन वा भावितं क्षौमपट्टं योनौ धारयेत्। न्यग्रोधस्य लोध्रस्य वा श्लक्ष्णं त्वक्चूर्णं त्वक्पिष्टं वा मधुना द्रवीकृतं क्षौमपट्टं योनौ धारयेत्। योन्येत्यादि। लोध्रादीनां पिष्टानां मधुयुता कृता वर्त्तिः स्नेहाक्तया योन्या धार्य्या। तेषां लोध्रादीनां कषायाणाञ्च

उत्तरवस्तिश्च। आमूत्रकालत इति मूत्रकालपर्य्यन्तं बन्धनं कुर्य्यात्। सर्व्वव्यापत्सु वातचिकित्साकरणे हेतुमाह—न हि वाताद्दत इत्यादि ॥ ४७—५० ॥

चक्रपाणिः—पाण्डुरे प्रदर इति श्वेतप्रदरे। भावितं तेनेति न्यग्रोधत्वक्कषायेण भावितम्।

स्रावच्छेदार्थमभ्यक्तां धूपयेद्‌ वा घृत
सरलागुग्गुलुयवैः सतैलकटुमत्स्यकः ॥
काशीशं त्रिफला काची समङ्गाम्रास्थि धातकी।
पच्छिल्ये चौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ॥
पलाशसर्ज्जजम्बूत्वक्-समङ्गामोचधातकी।
सपिच्छिला परिक्लिन्ना स्तम्भनः कल्क इष्यते ॥
स्तब्धानां कर्कशानाञ्च कार्य्यं मार्द्दवकारकम्।
धारयेद्‌ वेशवारं वा कृशरां पायसं तथा ॥
दुर्गन्धानां कषायः स्यात्‌ तौवरः कल्क एव च।
चूर्णो वा सर्व्वगन्धानां पूतिगन्धापकर्षणः ॥ ५१ ॥
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः।
अदुष्टे प्राकृते वीजे * गर्भावक्रमणे सति ॥

अथवा कषायरसद्रव्याणां सर्व्वशो वर्त्तिसेकादिभिः प्रयोगः। स्रावेत्यादि। योनेः स्रावस्य छेदार्थं स्राविणीं योनिं स्नेहाभ्यक्तां सतैलकटुमत्स्यकैस्तैलपोष्ठी-मत्स्याभ्यां सहितैः सरलागुग्गुलुयवैः पिष्टैर्घृतप्लुतैर्धूपयेत्। काशीशमित्यादि। योनेः पैच्छिल्ये काशीशादीनां चूर्णः क्षौद्रसंयुतो योनौ देयः। काक्षी आढ़की-मूलम्। पलाशेत्यादि। मोच आमकदली। एषां कल्कः सपिच्छिलादि-स्तम्भनः। स्तब्धानामित्यादि। मार्द्दवकारकं किञ्चिदाह वेशवारं वा कृशरां वा पायसं वा योनौ धारयेत्। दुर्गन्धानामित्यादि। दुर्गन्धानां योनीनां कषायो रस एव यत्र यत्र द्रव्ये तत्तद्‌ द्रव्यस्य चूर्णस्तुवरीकल्क आढ़कीकल्क-श्चूर्णो वा सर्व्वगन्धानां द्रव्याणां चूर्णो वा पूतिगन्धापकर्षणः ॥ ५१ ॥

गङ्गाधरः—एवमित्यादि। एवमनेन प्रकारेण योनिषु शुद्धासु योषितो गर्भं विन्दन्ति, कथं विन्दन्ति? प्राकृतेऽदुष्टे खल्वविकृते वीजे रेतसि सिक्ते सति गर्भावक्रमणे च परलोकात्‌ जीवावक्रमणे गर्भाशयप्रवेशे सति। यदि वीजं सहजगुणसम्पन्ने शुक्रशोणितवीजे अदुष्टे सति गर्भं योषितः विन्दन्ति। जीवोपक्रमणं पूर्व्वकर्म्म-प्रेरितात्‌ सुयोगाद्‌ भवति। यस्मात्‌ पुरुषस्य शुक्रमप्यत्र कारणम्, तस्मात्‌ शुक्रस्यापि परीक्षापूर्व्विका

* जीवोपक्रमणे इति चक्रधृतः पाठः।

पञ्चकर्म्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ।
परीक्ष्य वर्णैर्दोषाणां दुष्टिघ्नैस्तमुपाचरेत् ॥ ५२ ॥

भवति चात्र ।

सलिङ्गा व्यापदो योनेः सनिदानचिकित्सिताः ।
उक्ता विस्तरतः सम्यङ् मुनिना तत्त्वदर्शिना ॥ ५३ ॥
पुनरेवाग्निवेशस्तु पप्रच्छ भिषजां वरम् ।
आत्रेयमुपसङ्गम्य शुक्रदोषास्त्वयानघ ॥
रोगाध्याये समुद्दिष्टास्त्वष्टौ पुंसामशेषतः ।
तेषां हेतुं पृथक् श्रेष्ठ दुष्टादुष्टस्य चाकृतिम् ॥
चिकित्सितञ्च कार्त्स्न्येन क्लैव्यं यच्च चतुर्व्विधम् ।
उपद्रवेषु योनीनां प्रदरो यश्च कीर्त्तितः ॥

दुष्टं स्यात् तर्हि किं कर्त्तव्यमित्यत उच्यते । पञ्चेत्यादि । पुरुषस्यापि चेन्द्रियं शुक्रं वर्णैः परीक्ष्य यद्दोषवर्णं शुक्रं स्यात् तदा तस्य पुरुषस्य पञ्चभिः कर्म्मभिः विशुद्धस्य तेषां दोषाणां दुष्टिघ्नैर्भेषजैस्तं पुरुषमुपाचरेत् । इति । योनिव्यापच्चिकित्सितार्थमाह—भवति चात्रेति ॥ ५२ ॥

गङ्गाधरः—सलिङ्गा इत्यादि । मुनिना पुनर्व्वसुना । इति योनिव्यापदधिकारः ॥ ५३ ॥

गङ्गाधरः—अथात्र गर्भग्रहणप्रसङ्गात् पुरुषस्य रेतोदोषमाह—पुनरेवेत्यादि । रोगाध्यायेऽष्टोदरीये अष्टौ रेतोदोषा इति उद्देशपुनर्निर्द्देशः कृतः । अष्टौ रेतोदोषा इति "तनु शुष्कं फेनिलमश्वेतं पूत्यपिच्छिलमन्यधातूपहितमवसादि चेति"

चिकित्सामाह—पञ्चकर्म्मेत्यादि । दोषाणां वातादीनां वर्णैर्यदि दुष्टं भवति, तदा वातादिवर्णयोगात् वातादिहरैर्भेषजैः उपाचरेदित्यर्थः ॥ ५१ । ५२ ॥

चक्रपाणिः—अत्रान्तरे पुनरेवेत्यादिग्रन्थं शुक्रदोषादिलक्षणचिकित्साभिधायकं केचित् पठन्ति, तच्चान्ये अन्याय्यं वदन्ति । उपपत्तिञ्च वर्णयन्ति यत् शुक्रादिदोषाः वाजीकरणेनैव चिकित्सिताः, क्लैव्यञ्च शारीरे एव प्रतिपादितम्, प्रदरश्चैवेह योनिव्यापच्चिकित्सिते इति ये

तेषां निदानं लिङ्गञ्च चिकित्साञ्चैव तत्त्वतः।
समासव्यासभेदेन ब्रूहि नो भिषजां वर ॥ ५४ ॥
तस्मै शुश्रूषमाणाय प्रोवाच मुनिपुङ्गवः।
वीजं यस्माद् व्यवायेषु हर्षयोनिसमुत्थितम्।
शुक्रं पौरुषमित्युक्तं तस्माद् वक्ष्यामि तच्छृणु ॥ ५५ ॥
यथा वीजमकालाम्बु-क्रिमिकीटाग्निदूषितम्।
न विरोहति संदुष्टं तथा शुक्रं शरीरिणाम् ॥ ५६ ॥
अतिव्यवायाद् व्यायामादसात्म्यानाञ्च सेवनात्।
अकाले वाप्ययोनौ वा मैथुनं न च गच्छतः ॥
रूक्षतिक्तकषायाति-लवणाम्लोष्णसेवनात्।
नारीणामरसज्ञत्वात् सरणाज्जरया तथा ॥

पुंसामष्टौ शुक्रदोषा अशेषतस्त्वया समुद्दिष्टाः। तेषां शुक्रदोषाणां पृथक् हेत्वादीनि, तथा चतुर्विधं क्लैव्यं यच्च तत्रैवाध्याये चत्वारि क्लैव्यानीत्युद्दश्य-निर्द्देशः कृतश्चत्वारि क्लैव्यानीति वीजोपघातात् ध्वजभङ्गात् जरायाः शुक्रक्षया-च्चेति। यदुक्तं तेषां निदानादीनि य इह योनिव्यापदामुपद्रवेषु यः प्रदर उक्त-स्तेषां निदानादीनि तत्त्वतः समासव्यासाभ्यां ब्रूहीति अग्निवेशः पप्रच्छ ॥ ५४ ॥

गङ्गाधरः—तस्मा इत्यादि। यस्माद्धेतोः पौरुषं शुक्रं हर्षयोनिसमुत्थितं हर्षात् कामोद्रेकात् योनितः शुक्रस्याकरतः समुत्थितं व्यवायेषु वीजमित्युक्तं तस्मात् तद् वक्ष्यामि तच्च शृणु ॥ ५५ ॥

गङ्गाधरः—यथेत्यादि। धान्यादीनां वीजं यथा खल्वकालवर्षादिभिर्दूषितं न विरोहति, तथा शरीरिणां दुष्टं शुक्रं न विरोहति ॥ ५६ ॥

गङ्गाधरः—तस्य दुष्टिकारणानि चाह—अतिव्यवायादित्यादि। असात्म्यानां सेवनात्। अकाले मैथुनं गच्छतः अयोनौ वा मैथुनं गच्छतः। मैथुनं न च

तु पठन्ति ते पूर्व्वोक्तसंक्षेपस्य विस्तराभिधानादिति वर्णयन्ति। एवमस्यार्थस्य विवादेऽपि काश्मीरादिदेशानुमतत्वात् किञ्चित् व्याकरणं कुर्म्म एव। शुक्रगुणोपवर्णने हेतुमाह—वीजं यस्मादित्यादि। यस्माद् वीजभूतं गर्भस्य शुक्रं तस्माद् वक्ष्यामि। व्यवायेषु हर्षयोनिः तस्मादुत्थितं पौरुषमिति पुरुषचिह्नम्। शुक्रेणैव हि पुरुष उच्यते। मैथुनं न च गच्छत इति

चिन्ताशोकादविस्रम्भाच्छस्त्रक्षाराग्निविभ्रमात् ।
भयात् क्रोधादतीसाराद् व्याधिभिः कर्षितस्य च ॥
वेगाघातात् क्षताच्चापि धातूनां संप्रदूषणात् ।
दोषाः पृथक् समस्ता वा प्राप्य रेतोवहाः सिराः ।
शुक्रं सन्दूषयन्त्याशु तद् वक्ष्यामि विभागतः ॥ ५७ ॥
फेनिलं तनु रूक्षञ्च विवर्णं पूति पिच्छिलम् ।
अन्यधातूपसंसृष्टमवसादि तथाष्टमम् ॥ ५८ ॥
फेनिलं तनु रूक्षञ्च कृच्छ्रेणाल्पञ्च मारुतात् ।
भवत्युपहतं शुक्रं न तद् गर्भाय कल्पते ॥
सनीलमथवा पीतमत्युष्णं पूतिगन्धि वा ।
दहल्लिङ्गं विनिर्याति शुक्रं पित्तेन दूषितम् ॥
श्लेष्मणा रुद्धमार्गन्तु भवत्यत्यर्थपिच्छिलम् ॥

गच्छतः पुंसः, नारीणां रसज्ञत्वाभावात् सरणात् गमनात्। जरया हेतुना। अविस्रम्भात् प्रकाशस्थानात्। पृथग्दोषाः रेतोवहाः सिराः प्राप्य शुक्रं सन्दूषयन्ति ॥ ५७ ॥

<u>गङ्गाधरः</u>—फेनिलमित्यादि। रूक्षमिति यच्छुष्कमुक्तं तत्। विवर्णमित्यश्वेतमुक्तं यत् तत् ॥ ५८ ॥

<u>गङ्गाधरः</u>—तेषु दोषनियममाह—फेनिलमित्यादि। कृच्छ्रेणाल्पमवसादि नाम, चत्वार्य्येतानि वाताद् भवन्ति। वातोपहतं तत्तच्छुक्रं न गर्भाय कल्पते। सनीलमित्यादि। सनीलमथवा पीतमित्येवं विवर्णं यच्छुक्रं विनिर्याति अत्युष्णं पूतिगन्धि वा यच्छुक्रं लिङ्गं दहद् विनिर्याति तत् पित्तेन दूषितं शुक्रं भवति। श्लेष्मणेत्यादिना पिच्छिलस्य लक्षणम्।

उचितमैथुनकाले। मैथुनागमनं शुक्रवेगप्रतीघातादेव दर्शयति—अविस्रम्भादिति अविश्वासात्। वक्ष्यामीति दुष्टं शुक्रं वक्ष्यामि ॥ ५३—५७ ॥

स्त्रीणामत्यर्थगमनादभिघातात् क्षतादपि।
शुक्रं प्रवर्त्तते जन्तोः प्रायेण रुधिरान्वयम्॥
वेगसन्धारणाच्छुक्रं वायुना विहते पथि।
कृच्छ्रेण याति ग्रथितमवसादि तथाष्टमम्॥
इति दोषाः समाख्याताः शुक्रस्याष्टौ सलक्षणाः॥ ५९॥
स्निग्धं घनं पिच्छिलञ्च मधुरञ्चाविदाहि च।
रेतः शुद्धं विजानीयात् शुद्धस्फटिकसन्निभम्॥ ६०॥
वाजीकरणयोगैस्तैरुपयोगैः सुखहितम्।
रक्तपित्तहरैर्योगैर्योनिव्यापदिकैस्तथा।
दुष्टं भवेद् यदा शुक्रं तदा तत् समुपाचरेत्॥ ६१॥
घृतं यज्जीवनीयोक्तं च्यवनप्राश एव च।
गिरिजस्य प्रयोगश्च रेतोदोषान् व्यपोहति॥
वातान्विते हिताः शुक्रे निरुहाः सानुवासनाः॥

स्त्रीणामित्यादिनाऽन्यधातूपसंसृष्टलक्षणम्। कृच्छ्रेणाल्पञ्च मारुतादिति यदुक्तं तदाह—वेगेत्यादि। विण्मूत्रशुक्रादिवेगसन्धारणात् कुपितेन वायुना शुक्रसरणपथे विहते सति शुक्रं ग्रथितं भवत् कृच्छ्रेण निर्याति तदवसादि शुक्रमष्टममित्यष्टौ शुक्रस्य दोषाः सलक्षणाः समाख्याताः॥ ५९॥

गङ्गाधरः—शुद्धन्तु शुक्रमाह—शुद्धन्तु शुक्रं स्निग्धं घनमीषत् पिच्छिलमत्यर्थपिच्छिलस्य दोषतयोक्तेः, अपिच्छिलस्य शुष्कत्वेनोक्तेः। शुद्धस्फटिकसन्निभन्तु स्वाभाविकवर्णमिति॥ ६०॥

गङ्गाधरः—एषां चिकित्सितमाह—वाजीत्यादि। यदा शुक्रमष्टविधदोषेण दुष्टं भवेत्, तदा तच्छुक्रं वाजीकरणादिप्रयोगैरुपाचरेत्॥ ६१॥

गङ्गाधरः—घृतमित्यादि। जीवनीयनाम्नोक्तं घृतम्, गिरिजस्य शिलाजतुनः। वातान्वित इत्यादि। वातान्विते फेनिलतनुरूक्षावसादिशुक्रे

चक्रपाणिः—रुधिरान्वयमिति रुधिरयुक्तम्। शुक्राभिधानप्रसङ्गात् विशुद्धशुक्रलक्षणमाह—स्निग्धमित्यादि॥ ५८—६१॥

ब्राह्मरमामलकीयश्च पैत्ते शस्तं विरेचनम् ।
मागध्यमृतलौहानां त्रिफलाया रसायनम् ॥
कफोद्भवं शुक्रदोषं हन्याद् भल्लातकस्य च ।
अन्यधातूपसंसृष्टं शुक्रं वीक्ष्य भिषक् क्रियाम् ॥
यथादोषं प्रयुञ्जीत दोषधातुभिषग्जितम् ।
सर्पिःपयोरसाः शालि-यवगोधूमषष्टिकाः ॥
प्रशस्ताः शुक्रदोषेषु वस्तिकर्म्म विशेषतः ।
इत्यष्टशुक्रदोषाणां मुनिनोक्तं चिकित्सितम् ॥ ६२ ॥
रेतोदोषोद्भवं क्लैव्यं यस्माच्छुद्धैव सिध्यति ।
अतो वक्ष्यामि ते सम्यगग्निवेश यथायथम् ॥
वीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ।
क्लैव्यं सम्पद्यते तस्य शृणु सामान्यलक्षणम् ॥ ६३ ॥

ब्राह्मं रसायनमुक्तम्, अभयामलकीयश्च रसायनम्। पैत्ते शुक्रे विवर्ण पूतिगन्धिनि विरेचनं शस्तम्। मागधीत्यादि। मागध्याः पिप्पल्या रसायनं पिप्पलीवर्द्धमानम् अमृतलौहममृतसारलौहं तन्त्रान्तरोक्तं त्रिफलारसायनञ्च। कफेत्यादि। भल्लातकस्य रसायनमुक्तं कफोद्भवमत्यर्थपिच्छिलं हन्यात्। अन्येत्यादि। अन्यधातूपसंसृष्टं वातादिदुष्टं भवति तत्र वातादिलक्षणं शुक्रं वीक्ष्य यथादोषं स्निग्धोष्णस्निग्धशीतरूक्षोष्णादिकां क्रियां प्रयुञ्जीत, यथादोषं यथाधातु भिषग्जितञ्च योज्यम्। सर्पिरित्यादि। रसा मांसानाम् ॥ ६२ ॥

गङ्गाधरः—इति शुक्रदोषलिङ्गादिकमुक्त्वा क्लैव्यानाह—रेतोदोषेत्यादि। यस्माद्रेतोदोषोद्भवं क्लैव्यं शुद्धया विरेचनादिनैव शुध्यति, अतो यथायथं क्लैव्यं ते वक्ष्यामि। वीजेत्यादि। वीजोपघातादष्टविधशुक्रदोषाद् एकं क्लैव्यम्, ध्वजोपघातात् शिश्नोपघाताद् द्वितीयम्, तृतीयं जरया वार्द्धक्येन, शुक्रक्षया- च्चतुर्थम्, तस्य चतुर्व्विधक्लैव्यस्य सामान्यलक्षणं शृणु ॥ ६३ ॥

चक्रपाणिः—मागध्यमृतेत्यादौ मागधी पिप्पली। अमृतलौहममृतसारलौहम्। भल्लातक-

सङ्कल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम्।
न याति लिङ्गशैथिल्यात् कदाचिद् याति वा यदि ॥
श्वासार्त्तः स्विन्नगात्रश्च मोघसङ्कल्पचेष्टितः।
म्लानशिश्नश्च निर्वीर्य्यः स्यादेतत् क्लैब्यलक्षणम् ॥
सामान्यलक्षणं ह्येतद् विस्तरेण प्रवक्ष्यते ॥ ६४ ॥
शीतरूक्षाल्पसंक्लिष्ट-विषमासात्म्यभोजनात्।
शोकचिन्ताभयत्रासात् स्त्रीणाञ्चातिनिषेवणात् ॥
अभिचारादविस्रम्भाद् रसादीनाञ्च संक्षयात्।
वातादीनाञ्च वैषम्याद् विरुद्धाध्यशनात् श्रमात् ॥
नारीणामरसज्ञत्वात् पञ्चकर्म्मापचारतः।
वीजोपघाताद् भवति पाण्डुवर्णः सुदुर्ब्बलः ॥

गङ्गाधरः—सङ्कल्पेत्यादि। सङ्कल्पः सततं मैथुनविषयेप्सा मनसः कर्म्म प्रबलं यस्य। तादृशोऽपि चामनोज्ञामप्रियामवश्यां स्त्रियं नरो न याति। तत्र स्त्रियमपि प्रियां वश्यां मनोज्ञां लिङ्गशैथिल्यात् न याति, यदि कदाचिद् याति तदा व्यवायश्रमात् श्वासार्त्तः स्विन्नगात्रश्च सन् मोघसङ्कल्पचेष्टितः स्याद्रेतःसेकाभावेन सङ्कल्पश्चेष्टितञ्च मोघो व्यर्थः स्यादिति म्लानशिश्नश्च सन् निर्वीर्य्यो निःशक्तिः स्यादेतत् क्लैव्यस्य सामान्यलक्षणं भाषितम्, विस्तरेण प्रत्येकेन पुनः शृणु लक्षणमिह वक्ष्यते ॥ ६४ ॥

गङ्गाधरः—शीतेत्यादि। शीतरूक्षाणामल्पसंक्लिष्टानां विषमाणामसात्म्यानाञ्च भोजनात्। अविस्रम्भः प्रकाशभावः, रहस्ये हि हर्षोद्गमो भवति। विरुद्धाशनादध्यशनात् पूर्व्वदिनाहाराजीर्णे भोजनादिति। श्रमादतिश्रमादिति। वीजोपघातादेतेभ्यो हेतुभ्यो वीजस्य शुक्रस्योपघातात् क्लैव्यं भवति तत्र पाण्ड-

स्येति रसायनमिति अनुवर्त्तते। शुद्धैवेति एतैः शुद्धैः। सङ्कल्पेत्यादौ लिङ्गशैथिल्यादिति लिङ्गापगमात्। मोघे सङ्कल्पचेष्टिते यस्य सः। तथा वायोः क्षयात् बीजक्षयानुपपत्तेः,

अल्पप्राणोऽल्पहर्षश्च प्रमदासु भवेन्नरः।
हृत्पाण्डुकामलारोग-तमकश्रमपीड़ितः॥
छर्द्यतीसारशूलार्त्तः कासज्वरनिपीड़ितः।
वीजोपघातजं क्लैव्यं ध्वजभङ्गकृतं शृणु॥ ६५॥
अत्यम्ललवणक्षार-विरुद्धासात्म्यभोजनात्।
अत्यम्बुपानाद् विषमात् पिष्टान्नगुरुभोजनात्॥
दधिक्षीरानूपमांस-सेवनाद् व्याधिकर्षणात्।
कन्यानां गमनाच्चापि अयोनिगमनादपि॥
दीर्घरोम्नीं * चिरोत्सृष्टां तथैव च रजस्वलाम्।
दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुताम्॥
ईदृशीं प्रमदां मोहाद् यो गच्छेत् कामहर्षितः।
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः॥
अधावनाद् वा मेढ्रस्य शस्त्रदन्तनखक्षतात्।
काष्ठप्रहारनिष्पेषात् शूकानाञ्चातिसेवनात्।
रेतसश्च प्रतीघाताद् ध्वजभङ्गः प्रवर्त्तते॥ ६६॥

वर्णादिः पुरुषः स्यात्, प्रमदासु गमनेऽल्पप्राणोऽल्पहर्षः हृद्रोगादिपीड़ितः छर्द्याद्यार्त्तः कासादिपीड़ितश्च भवतीति वीजोपघातजं क्लैव्यमुक्तम्। अथ ध्वज-भङ्गकृतं क्लैव्यं शृणु॥ ६५॥

गङ्गाधरः—अत्यम्लेत्यादि। विषमात्। पिष्टान्नादिभोजनात्। कन्यानामिति वालिकानां क्षुद्रयोनिमुखानाम्। अयोनिः पाय्वादिः। दीर्घाधोलोम्नीम्। चिरोत्सृष्टां वहुकालत्यक्तमैथुनां दुर्गन्धयोनिं दोषदुष्टयोनिं परिस्रुतयोनिम्। चतुष्पदः पशुः। शेफसोऽभिघातो हस्तादिभिः। अधावनादधौतात्; मेढ्रस्य शस्त्रादिभिः क्षतात्। दन्तक्षतं काममत्ताभिरनुरागात् मेढ्रे सम्भवति। काष्ठस्य वातादीनाञ्च संक्षयादित्यत्र प्राकृतवाता दिक्षयेणैव शुक्रानुत्पादो ज्ञेयः। शूकानाञ्चातिसेवनादिति अतिवृद्ध्यर्थं कृतप्रयोगात्॥ ६२—६६॥

* दीर्घरोगामिति पाठान्तरम्।

श्वयथुर्वेदना मेढ्र-रागश्चैवोपजायते।
स्फोटास्तीव्राश्च जायन्ते लिङ्गपाको भवत्यपि॥
मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि।
पुलाकोदकसङ्काशः श्यावः श्यावारुणस्तथा॥
वलयीकुरुते चापि कठिनश्च परिग्रहः।
ज्वरस्तृष्णा भ्रमो मूर्च्छा छर्दिश्चाप्युपजायते॥
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम्।
अग्निनेव च दग्धस्य तीव्रो दाहः प्रवर्त्तते॥
वस्तौ वृषणयोर्वापि सेवन्यां वङ्क्षणेषु च।
कदाचित् पिच्छिलो वापि पाण्डुः स्रावश्च जायते॥

प्रहारनिर्घर्षणाभ्याम्, शूकस्य जलशूकस्य शिश्नवृद्धिकामेनातिसेवनात्। रेतसः शुक्रस्य प्रवर्त्तमानस्य प्रतिघातात् ध्वजभङ्ग उपदंशो नाम रोगः प्रवर्त्तते। सुश्रुते ह्युपदंश एवायं नाम्ना रोग उक्तः। तद्यथा—"तत्रातिमैथुनाद् ब्रह्मचर्य्याद् वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढ़रोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्षसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनादर्दनाद् हस्ताभिघाताच्चतुष्पदीगमनादचौक्षसलिलप्रक्षालनादवपीड़नात् शुक्रमूत्रवेगविधारणान्मैथुनान्ते वाप्यप्रक्षालनादिभिर्मेढ्रभागस्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति तमुपदंशमित्याचक्षते" इति॥ ६६॥

गङ्गाधरः—अथ ध्वजभङ्गप्रवृत्तौ यथा स्यात् तदाह—श्वयथुरित्यादि। श्वयथुः क्षतेऽक्षते वा मेढ्रे श्वयथुर्वेदना मेढ्ररागश्च जायते। तीव्राः स्फोटा लिङ्गपाकश्च भवति। पुलाकोदकसङ्काशस्तुच्छधान्यजलवच्छायवर्णोऽथवा श्यावारुणवर्णः परिग्रहः स्फीतदेशः शिश्ने वलयीकुरुते कठिनश्च भवति। ज्वरादिश्चोपजायते। पक्वः शोफो रक्तादिवर्णं स्रावं स्रवेत्। अग्निना दग्धस्याङ्गस्य यथा तीव्रो दाहस्तथा वस्त्यादिषु तीव्रो दाहः प्रवर्त्तते। कदाचित् पिच्छिलः पाण्डुश्च

श्वयथुर्जायते मन्दः स्तिमितोऽल्पपरिस्रवः।
चिरादुपैति वा पाकं शीघ्रं वाथ प्रमुच्यते॥
जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च।
विशीर्य्यते मणिश्चास्य मेढ्रं मुष्कमथापि वा॥
ध्वजभङ्गकृतं क्लैव्यमित्येतत् समुदाहृतम्।
एतं पञ्चविधं केचित् ध्वजभङ्गं प्रचक्षते॥ ६७॥
क्लैव्यं जरासम्भवं हि प्रवक्ष्याम्यथ तच्छृणु।
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते॥

स्रावः स्यात्। कदाचिच्च शयथुर्मन्दः स्यात् स्तिमितश्चाल्पपरिस्रवश्च स्यात्। चिराद् वाप्यचिराद् वा पाकमुपैति अथ प्रमुच्यते चिकित्सयारोग्यमापद्यते। उपेक्षया तु क्रिमयो जायन्ते, क्लिद्यते च मेढ्रं पूतिगन्धि च स्यादथास्य पुंसो मेढ्रस्य मणिरग्रदेशो यो विकशति स च विशीर्य्यते मेढ्रं सर्व्वं विशीर्य्यते मुष्कं वा यदा विशीर्य्यते तदायं ध्वजभङ्गो यस्तत्कृतं क्लैव्यं सुतरां भवति मेढ्रमणिसर्व्वाङ्गमेढ्रमुष्काभावादिति। एतमित्यादि। एतं ध्वजभङ्गमुपदंशं केचित् पञ्चविधं प्रचक्षते। भिन्नाधिकारादिह नोक्तमेतेनानुमतमेव। तदुक्तं सुश्रुते। "स पञ्चविधस्त्रिभिर्दोषैः पृथक् समस्तैरसृजा चैकः। तत्र वातिके पारुष्यं त्वक्परिपुटनं स्तब्धमेढ्रता परुषशोफता विविधाश्च वातवेदनाः। पैत्तिके ज्वरः श्वयथुः पक्वोडुम्बरसङ्काशस्तीव्रदाहः क्षिप्रपाकः पित्तवेदनश्च। श्लैष्मिके श्वयथुः कण्डूमान् कठिनः स्निग्धः श्लेष्मवेदनश्च। सर्व्वजे सर्व्वलिङ्गदर्शनमवदरणं शेफसः क्रिमिप्रादुर्भावो मरणञ्च। रक्तजे कृष्णस्फोटप्रादुर्भावोऽत्यर्थमसृक्प्रवृत्तिः पित्तलिङ्गान्यत्यर्थं ज्वरदाहौ शोषश्च याप्यश्चैव कदाचित्।" इति॥ ६७॥

गङ्गाधरः—ध्वजभङ्गकृतक्लैव्यमुक्त्वा जराजक्लैव्यमाह—क्लैव्यमित्यादि। जरासम्भवं हि क्लैव्यं प्रवक्ष्यामि तत् शृणु। प्राणिनां वयस्त्रिविधं जघन्यमध्य-

चक्रपाणिः—तत्र श्वयथुर्वेदना मेढ्रे इति वातेन, स्फोटाश्चेति पित्तेन, मांसादिवृद्धिरिति कफेन, ज्वरस्तृष्णेत्यादि रक्तेन, अग्निनेवेति सन्निपातेन। एतत् पञ्चविधं केचित् ध्वजभङ्गं वदन्ति। तथोक्तेन वातपित्तकफरक्तसन्निपातभेदेन पञ्चविधत्वमित्यर्थः॥ ६७॥

अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम्।
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात्॥
बलवीर्य्येन्द्रियाणाञ्च क्रमेणैव परिक्षयात्।
परिक्षीणादायुषश्चाप्यनाहाराच्छ्रमात् क्लमात्॥
जरासम्भवजं क्लैव्यमित्येतैर्हेतुभिर्नृणाम्।
जायते तेन स क्षिप्रं क्षीणधातुः सुदुर्ब्बलः॥
विवर्णो दुर्ब्बलो दीनः स क्षिप्रं व्याधिमृच्छति।
एतज् जरासम्भवं हि चतुर्थं क्षयजं शृणु॥ ६८॥
अतीवचिन्तनाच्चैव शोकात् क्रोधाद् भयात् तथा।
ईर्ष्योत्कण्ठामदोद्वेगान् सदा विशति यो नरः॥
कृशो वा सेवते रूक्षमन्नपानं तथौषधम्।
दुर्ब्बलप्रकृतिश्चैवाप्यनाहारो भवेद् यदि॥

प्रवरमिति। तत्र जघन्ये बाल्ये षोड़शाब्दपर्य्यन्तमनुद्भूतशुक्रः पुमान्। मध्ये षष्टिवर्षपर्य्यन्तमुद्भूतशुक्रः। ततोऽनन्तरं यथा स्यात् तदाह। अथेत्यादि। प्रवयसां वार्द्धक्यारम्भावधिक्रमेण शुक्रं नृणां क्षीयते स्वयमेवावस्थास्वभावात्। प्रायशःपदेन वाजीकरणसेविनां व्यवच्छेदः। तदाह रसादीनां संक्षयादिति तदवस्थास्वभावात्। अवृष्यसेवनाच्च। क्रमेण बलादीनां परिक्षयात्। आयुषश्च परिक्षीणात्। कालस्वभावादाहारालपत्वादित्वात्। श्रमात्। क्लमात्। जरासम्भवं क्लैव्यमेतैर्हेतुभिर्जायते इति। क्लैव्ये जाते स पुमान् तेन क्लैव्येन क्षीणधात्वादिः क्षिप्रं स्यात्। क्षिप्रञ्च व्याधिमृच्छतीति जरासम्भवं क्लैव्यमुक्तम्। क्षयजं चतुर्थं क्लैव्यं शृणु॥ ६८॥

गङ्गाधरः—अतीवेत्यादि। अतीवचिन्तनादिभ्यो हेतुभ्यो यदा मानव ईर्ष्योत्कण्ठादीन् विशति, अथवा कृशो नरो रूक्षान्नपानौषधं सेवते, अथवा

चक्रपाणिः—वृष्यादिसेविनां न क्षीयते शुक्रमिति दर्शयति। प्रवयसां शुक्रक्षये हेतुमाह—रसादीनामित्यादि। एते च रसक्षयादयो हेतवः बाधकस्वभावादेव भवन्ति। जघन्येत्यादौ प्रायशः क्षीयते इति वचनात् प्रवयसामपि शुद्धसाराणाम्॥ ६८॥

असात्म्यभोजनो यो हि हृदये यो व्यवस्थितः।
रसः प्रधानधातुर्हि क्षीयेताशु ततो नृणाम्॥
रक्तादयश्च क्षीयन्ते क्षीयन्ते देहिनस्ततः।
शुक्रावसानास्तेभ्योऽपि शुक्रं धाम परं मतम्॥
चेतसो वातिहर्षेण व्यवायं सेवतेऽति यः।
तस्याशु क्षीयते शुक्रं ततः प्राप्नोति संक्षयम्॥
घोरं व्याधिमवाप्नोति मरणं वा समृच्छति।
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता।
एतन्निदानलिङ्गाभ्यामुक्तं क्लैव्यं चतुर्व्विधम्॥ ६९॥
केचित् क्लैव्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे।
वदन्ति शेफसश्छेदाद् वृषणोत्पाटनेन च॥

दुर्ब्बलप्रकृतिः पुमान् यद्यनाहारो भवेत्, योऽसात्म्यभोजनः, तस्य तस्य यः प्रधानधातुर्हृदये व्यवस्थितो रसः स क्षीयेत। ततो रक्तादयश्च शुक्रावसानाः शुक्रान्ताः षड्धातवः क्षीयन्ते ततो नरश्चाशु क्षीयेतेति। तेभ्यो रसादिभ्यः परं धाम शुक्रं मतम्। अनुलोमक्षयमुक्त्वा प्रतिलोमक्षयमाह—चेतसो वेत्यादि। अथवा चेतसोऽतिहर्षेण व्यवायं योऽतिसेवते, तस्य शुक्रमाशु क्षीयते स पुमांस्ततः शुक्रक्षयात् संक्षयमाप्नोति, घोरं व्याधिं मरणं वा समृच्छति। ततः क्षयजं क्लैव्यं सुतरां भवतीति। तस्माद् विशेषेण शुक्रमारोग्यमिच्छता रक्ष्यमिति। उपसंहरति एतदित्यादि। एतन्निदानलिङ्गाभ्यां चतुर्व्विधं क्लैव्यमुक्तं भवति॥ ६९॥

गङ्गाधरः—केचिदित्यादि। केचिन्मुनयः क्लैव्ये द्वे ध्वजभङ्गोद्भवं क्षयोद्भवञ्चेति द्वे असाध्ये वदन्ति। मेढ्राभावान्नितरामसाध्यं ध्वजभङ्गकृतं क्लैव्यमिति। प्रसङ्गादागन्तुक्लैव्यमाह। शेफसश्छेदात् क्लैव्यं स्याद् वृषणोत्पाटनात्

चक्रपाणिः—केचिदित्यादौ ध्वजभङ्गक्षयोद्भवे वक्ष्यमाणविशेषभङ्गक्षयोद्भवे। मेदमुद-

मातापित्रोर्व्वीजदोषादशुभैश्चाकृतात्मनः।
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः सिराः।
शोषयन्त्याशु तन्नाशाद् रेतश्चाप्युपहन्यते॥
तत्र सम्पूर्णसर्व्वाङ्गः स भवत्यपुमान् पुमान्।
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात्॥ ७० ॥
चिकित्सितमतश्चोर्द्ध्वं समासव्यासतः शृणु॥
शुक्रदोषेषु निर्द्दिष्टं भेषजं यन्मयानघ।
क्लैव्योपशान्तये कुर्य्यात् क्षीणक्षतहितञ्च यत्॥
वस्तयः क्षीरसर्पिश्च वृष्ययोगाश्च ये मताः।
रसायनप्रयोगाश्च सर्व्वानेतान् प्रयोजयेत्।
समीक्ष्य देहदोषाग्नि-बलं भेषजकालवित्॥ ७१ ॥
व्यवायहेतुजं क्लैव्यं यच्च धातुविपर्य्ययात्।
दैवव्यपाश्रयं तत्र भेषजं संप्रयोजयेत्॥

क्लैव्यं स्यात्। कर्म्मजमाह—मातेत्यादि। मातापित्रोर्व्वीजदोषाद् अकृत-सुकृतकर्म्मात्मनोऽशुभैः पूर्व्वकर्म्मभिर्गर्भस्थस्य जीवस्य गर्भारम्भका दोषा यदा रेतोवहाः सिराः प्राप्य शोषयन्ति, तदा तत्सिरानाशाद्रेतश्चाप्युपहन्यते। तत्र स पुमान सर्व्वसम्पूर्णाङ्गः सन्नपुमान पुंस्त्वहीन एव भवति। एते सर्व्वे क्लीवा असाध्याः सन्निपातसमुच्छ्रयात्। इति क्लैव्यमुक्तम्॥ ७० ॥

गङ्गाधरः—चिकित्सितमित्यादि। चिकित्सितमत ऊर्द्ध्वमस्य शृणु। शुक्रदोषेत्यादि। पूर्व्वं यच्छुक्रदोषेषु। क्षीणक्षतयोर्यद्धितम्। वृष्ययोगा वाजीकरणे॥ ७१ ॥

गङ्गाधरः— व्यवायेत्यादि। व्यवायहेतुजं क्षयजं क्लैव्यम्।

भावयति वृषणोत्पाटनेनेत्यन्तेन। मातापित्रोरित्यादिनोच्यते। स पुमान् स्त्रीपुरुषव्यापार-करणासमर्थत्वात् अपुमान् भवति। व्यवायहेतुजमितिपदं वीजदोषोत्पन्नसहजव्युदासार्थम्।

समासेनैतदुद्दिष्टं भेषजं क्लैब्यशान्तये ।
विस्तरेण प्रवक्ष्यामि क्लैब्यानां भेषजं पुनः ॥ ७२ ॥
सुस्निग्धस्विन्नगात्रस्य स्नेहयुक्तं विरेचनम् ।
अन्नाशनं ततः कुर्य्यादथवास्थापनं पुनः ॥
प्रदद्यान्मतिमान् वैद्यस्ततस्तमनुवासयेत् ।
पलाशैरण्डमुस्ताद्यैः पश्चादास्थापयेत् ततः ॥
वाजीकरणयोगाश्च पूर्व्वं ये समुदाहृताः ।
भिषजा ते प्रयोज्याः स्युः क्लैब्ये वीजोपघातजे ॥ ७३ ॥
ध्वजभङ्गकृतं क्लैब्यं ज्ञात्वा तस्याचरेत् क्रियाम् ।
प्रदेहान् परिषेकांश्च कुर्य्याद्वा रक्तमोक्षणम् ॥
स्नेहपानञ्च कुर्व्वीत सस्नेहञ्च विरेचनम् ।
व्रणवच्च क्रियाः सर्व्वास्ततः कुर्य्याद्विचक्षणः ॥ ७४ ॥
जरासम्भवजे क्लैब्ये क्षयजे चापि कारयेत् ।
स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥

सुस्निग्धेत्यादि। स्नेहयुक्तं विरेचनं कुर्य्यादित्यन्वयः। ततोऽन्नाशनं कुर्य्यादथवास्थापनं दद्यात् ततस्तमनुवासयेत्। अनुवासनानन्तरं पुनः पलाशादिभिरास्थापयेत्। ततो वाजीकरणयोगा वाजीकरणोक्ताः॥ ७२। ७३॥

गङ्गाधरः—वीजोपघातजक्लैब्यचिकित्सितमुक्त्वा ध्वजभङ्गकृतस्य चिकित्सामाह—ध्वजेत्यादि। ध्वजभङ्गे प्राग् ध्वजविनाशात् क्लैब्यं ज्ञात्वा तस्य क्रियामाचरेत्। ध्वजविनाशे त्वसाध्यत्वात्। प्रदेहादिकां क्रियां व्रणशोधनरोपणादिकाम्॥ ७४॥

गङ्गाधरः—अथ जरासम्भवक्लैब्यचिकित्सामाह—जरेत्यादि। सस्नेहं

हेतुविपर्य्ययादिति दोषवैषम्यात्। दैवव्यपाश्रयैश्चेत्यादिना अभिचारादिजक्लैब्यचिकित्सां ब्रूते। अभिचारादिजञ्च क्लैब्यं दैवव्यपाश्रयचिकित्साभिधानादेव स्वीकर्त्तव्यम्॥ ६९—७२॥

चक्रपाणिः—पलाशैरण्डमुस्ताद्यैरिति। तत्र एरण्डपलादि एरण्डमूलत्रिफलादिग्रन्थे

क्षीरसर्पिर्वृष्ययोगा वस्तयश्चैव यापनाः।
रसायनप्रयोगाश्च तयोर्भेषजमुच्यते।
विस्तरेणैतदुद्दिष्टं क्लैव्यानां भेषजं परम्॥ ७५॥

क्लैव्यचिकित्सा।

यः पूर्व्वमुक्तः प्रदरः शृणु हेत्वादिभिः पृथक्।
यात्यर्थं सेवते नारी लवणाम्लगुरूणि च॥
कटून्यथ विदाहीनि स्निग्धानि पिशितानि च।
ग्राम्यौदकानि मेध्यानि कृशरां पायसं दधि॥
शुक्तमत्स्यसुरादीनि भजन्त्याः कुपितोऽनिलः।
रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः सिराः॥
रजोवहाः समाश्रित्य रक्तमादाय तद्रजः।
तस्माद् विवर्द्धयत्याशु रसभावाद् विमानता॥

शोधनं न तु रूक्षम्। क्षीरेत्यादि। क्षीरादुत्थितं सर्पिः क्षीरसर्पिर्नवनीतम्, यापना वस्तयो वक्ष्यन्ते सिद्धिषु। तयोरिति जरासम्भवक्लैव्यक्षयजक्लैव्ययोः॥ ७५॥

गङ्गाधरः—इति क्लैव्यचिकित्सितमुक्त्वा प्रदरप्रश्नोत्तरमाह—यः पूर्व्वमित्यादि। यात्यर्थमित्यादि। या नारी लवणादीन्यत्यर्थं सेवते तानि भजन्त्यास्तस्या नार्य्याः कुपितोऽनिलः प्रमाणं स्वपरिमाणस्थं रक्तमार्त्तवमुत्क्रम्य उद्गतं कृत्वा गर्भाशयगता रजोवहाः सिराः समाश्रित्य तद्रजोरक्तमादाय विवर्द्धयत्याशु तस्माद्रसभावाद् विमानता भवति, स्वमानाद् विवृद्धमानता

वक्ष्यमाणा मुस्तादयः सिद्धौ वक्ष्यमाणाः। वस्तिद्वयेऽप्यत्र बहुवचनं व्यक्तिसद्भावापेक्षया ज्ञेयम्॥ ७३—७५॥

चक्रपाणिः—यः पूर्व्वमुक्तः प्रदर इत्यादौ उपद्रवरूपतया पूर्व्वमुक्तः प्रदर इति वदन्ति। किन्तु रक्तयोनिचिकित्सिते असृग्दरसंज्ञयैव रक्तयोनिसामान्याच्च निर्दिष्टदोषभेदेन च तत्रैव रक्तयोनिरसृग्दररूपा व्याकृता, तेनेह पुनः असृग्दरलक्षणाभिधानं पूर्व्वटीकाकृतामपि समानम्। ये येत्यादिग्रन्थं पठन्ति ते तस्यैवायं प्रभेदः प्रपञ्चो वा क्रियत इति वर्णयन्ति। वयन्तु भूरिपुस्तकेषु

तस्मादसृग्दरं प्राहुरेतत् तन्त्रविशारदाः ॥
रजः प्रदीर्य्यते यस्मात् प्रदरस्तेन कथ्यते ॥ ७६ ॥
सामान्यतः समुद्दिष्टं कारणं लिङ्गमेव च ॥
चतुर्व्विधं व्यासतस्तु वातादैः सन्निपाततः।
अतः परं प्रवक्ष्यामि हेत्वाकृतिभिषग्जितम् ॥ ७७ ॥
रूक्षादिभिर्मारुतस्तु रक्तमादाय पूर्व्ववत्।
कुपितः प्रदरं कुर्य्यात् लक्षणं तस्य मे शृणु ॥ ७८ ॥
तनु फेनिलरूक्षञ्च श्यावमारुणमेव च।
किंशुकोदकसङ्काशं सरुजं वाथ नीरुजम् ॥
कटीवङ्क्षणहृत्पार्श्व-पृष्ठश्रोणिषु मारुतः।
वेदनां कुरुते तीव्रामेतद् वातात्मकं विदुः ॥ ७९ ॥
अम्लोष्णलवणक्षारैः पित्तं प्रकुपितं यदा।
पूर्व्ववत् प्रदरं कुर्य्यात् पैत्तिकं लिङ्गतः शृणु ॥ ८० ॥

भवति। तस्मादेतदायुर्व्वेदतन्त्रविशारदा असृग्दरं प्राहुः। यस्माद्रजो रक्तं प्रदीर्य्यते तेन प्रदरश्च कथ्यते ॥ ७६ ॥

गङ्गाधरः—सामान्यत इत्यादि। व्यासतस्तु चतुर्व्विधं पृथग्वातादैः सन्निपाततश्च। तेषां हेत्वादिकमतःपरं प्रवक्ष्यामि। तद् यथा—रूक्षेत्यादि। आदिना वायोः प्रकोपणानि ज्ञेयानि ॥ ७७। ७८ ॥

गङ्गाधरः—तन्वित्यादि। तन्वादिरूपमार्त्तवं मारुतः कुरुते। कट्यादिषु तीव्रां वेदनाञ्च कुरुते ॥ ७९ ॥

गङ्गाधरः—अम्लोष्णेत्यादि। पूर्व्ववत्—रक्तं प्रमाणमुत्क्रम्येत्यादुक्तरूपम् ॥ ८० ॥

पाठदर्शनादस्य व्याख्यानं कुर्म्मः। गर्भाशयगता इति गर्भाशयसम्बद्धाः। असृग्दरशब्दव्युत्पत्तिमाह—कुपितोऽनिल इति। रक्तं प्रमाणमुत्क्रम्य इति रक्तं प्रमाणाधिकं कृत्वा रक्तमादाय तद्रजो यस्माद् विवर्द्धयति वृद्धेन रक्तेन योजयित्वा रजो विवर्द्धयति यस्मात्, तस्माद् असृजो मेलकरूपत्वाद् अयं व्याधिरसृग्दर इत्युच्यते। प्रदीर्य्यते इति विस्तारयति

सनीलमथवा कृष्णमत्युष्णं पीतकं तथा।
नितान्तरक्तं स्रवति मुहुर्म्मुहुरथार्त्तिमत् ॥
रागदाहतृषामोह-ज्वरभ्रमसमायुतम्।
असृग्दरं पैत्तिकं तत् श्लैष्मिकन्तु प्रवक्ष्यते ॥ ८१ ॥
गुर्व्वादिभिर्हेतुभिश्च पूर्व्ववत् कुपितः कफः।
प्रदरं कुरुते तस्य लक्षणं तत्त्वतः शृणु ॥ ८२ ॥
पिच्छिलं पाण्डुवर्णञ्च गुरु स्निग्धञ्च शीतलम्।
स्रवत्यसृक् श्लेष्मलञ्च तथा मन्दरुजाकरम् ॥
छर्द्यरोचकहृल्लास-श्वासकाससमायुतम्।
त्रिलिङ्गसंयुतं विद्यान्नैकावस्थमसृग्दरम् ॥ ८३। ८४ ॥
नारी त्वतिपरिक्लिष्टा यदा प्रक्षीणशोणिता।
सर्व्वहेतुसमाचारादतिवृद्धस्तदानिलः ॥
रक्तमार्गेण सृजति प्रत्यनीकबलं कफम्।
दुर्गन्धं पिच्छिलं शीतं विदग्धः पित्ततेजसा ॥

गङ्गाधरः—सनीलमित्यादि। नितान्तं निरन्तरम् ॥ ८१ ॥

गङ्गाधरः—गुर्व्वादिभिरित्यादि आदिना शेषकारणानि द्रवादीनि। अत्रापि पूर्व्ववदिति रक्तं प्रमाणमुत्क्रम्येत्यादुरक्तम्। पिच्छिलमित्यादिना लिङ्गम्। श्लेष्मलं श्लेष्मयुक्तमार्त्तवम्। त्रिलिङ्गेत्यादि। नैकावस्थं नानारूपतयावतिष्ठते ॥ ८२—८४ ॥

गङ्गाधरः—नारीत्यादिना तस्य लक्षणम्। सर्व्वहेतूनां वातादीनां सर्व्वषां हेतूनां समाचारात् अतिवृद्धोऽनिलः प्रत्यनीकबलं बलहानिकरं कफं रक्तमार्गेण सृजति। कफं पुनर्दुर्गन्धादिरूपम्। पित्ततेजसा विदग्धः

असृक् प्रदीर्य्यते यस्मिन्निति असृग्दर इत्येषा निरुक्तिरप्यत्र बोद्धव्या। नैकावस्थमिति नानावस्थम् ॥ ७६—८४ ॥

वसामेदश्च यावद्धि तमुपादाय वेगवान् ।
सृजत्यार्त्तवमार्गेण सर्पिर्मज्जवसोपमम् ॥
शश्वत् स्रवत्यथास्रावं तृष्णादाहज्वरान्विताम् ।
क्षीणरक्तां दुर्व्बलाञ्च तामसाध्यां विवर्ज्जयेत् ॥ ८५ ॥
मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुवन्धि च ।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥
गुञ्जाफलसवर्णञ्च यद्वा वालक्तकसन्निभम् ।
इन्द्रगोपकसङ्काशमार्त्तवं शुद्धमादिशेत् ॥ ८६ ॥
वाताद्व्यानाञ्च योनीनां यदुक्तमिह भेषजम् ।
चतुर्णां प्रदराणाञ्च तत् सर्व्वं कारयेद्भिषक् ।
रक्तातिसारिणां यच्च तथा लोहितपित्तिनाम् ।
रक्तार्शसाञ्च यत् प्रोक्तं भेषजं तच्च कारयेत् ॥ ८७ ॥

प्रदरचिकित्सा ।

स वेगवाननिलः यावद् वसा मेदश्च तावत् तमुपादाय सर्पिर्मज्जवसोपमम् आर्त्तवमार्गेण रक्तक्षरणपथेन सृजति। अथास्रावं शश्वत् स्रवति तृषाद्यन्वितमिति सन्निपातप्रदरलक्षणम्। तस्यासाध्यतामाह—क्षीणेत्यादि। क्षीणरक्तां क्षीणार्त्तवां दुर्व्बलाञ्च तां सन्निपातप्रदरवतीं नारीमसाध्यां विवर्ज्जयेत् ॥ ८५ ॥

गङ्गाधरः—शुद्धार्त्तवलक्षणमाह—मासादित्यादि। यदार्त्तवं मासात् प्रवर्त्तते निष्पिच्छदाहार्त्ति पिच्छदाहार्त्तिभ्यो निर्गतं पञ्चरात्रमनुवध्नाति प्रकाशरूपेणाल्पशः, नैवातिबहुलं नात्यल्पं तदार्त्तवं शुद्धमादिशेत्। लक्षणान्तरञ्च गुञ्जेत्यादि। इन्द्रगोपकः कीटविशेषो रक्तवर्णः ॥ ८६ ॥

गङ्गाधरः—अथ प्रदरभेषजमाह—वाताद्व्यानामित्यादि। योनिव्यापत्सु वातदूषितयोनीनां यदुक्तमिहाध्याये भेषजं तच्चतुर्णामेव प्रदराणां सर्व्वं कारयेत्। रक्तातिसारिणामित्यादि। स्पष्टम्। इति प्रदरचिकित्सितमुक्तम् ॥ ८७ ॥

चक्रपाणिः—प्रसङ्गाल्लक्षणमाह—नारीत्यादि। पञ्चरात्रानुबन्धीति पञ्चरात्रमनुबध्नातीति

धात्रीस्तनस्तन्यसम्पदुक्ता विस्तरतः पुरा।
स्तन्यसञ्जननञ्चैव स्तन्यस्य च विशोधनम्॥
वातादिदुष्टलिङ्गञ्च क्षीणस्य च चिकित्सितम्।
तत् सर्व्वमुक्तं ये त्वष्टौ क्षीरदोषाः प्रकीर्त्तिताः॥
वातादिष्वेव तान् विद्याच्छास्त्रचक्षुर्भिषग्वरः।
त्रिविधास्तु यतः शिष्यास्ततो वक्ष्यामि विस्तरम्॥ ८८॥
अजीर्णासात्म्यविषम-विरुद्धात्यर्थभोजनात्।
लवणाम्लकटुक्षार-प्रक्लिन्नानाञ्च सेवनात्॥
मनःशरीरसन्तापादस्वप्नान्निशि चिन्तनात्।
प्राप्तवेगप्रतीघातादप्राप्तोदीरणेन च॥
परमान्नं गुड़घृतं मत्स्यञ्च कृशरां दधि।
अभिष्यन्दीनि मांसानि ग्राम्यानूपौदकानि च॥

गङ्गाधरः—अथ स्तन्यदोषचिकित्सितमाह—धात्रीत्यादि। पुरा जातिसूत्रीये। ये त्वष्टौ क्षीरदोषाः प्रकीर्त्तिता अष्टोदरीये अष्टौ क्षीरदोषा इत्युद्देशं कृत्वा पुनर्निर्देशः कृतः। अष्टौ क्षीरदोषा इति वैवर्ण्यं वैगन्ध्यं वैरस्यं पैच्छिल्यं फेनसङ्घातो रौक्ष्यं गौरवमतिस्नेहश्चेति तानष्टौ दोषान् वातादिष्वेव दोषेषु शास्त्रचक्षुर्भिषग्वरो विद्यात्। मध्यमोऽवरश्च भिषक् तथा वेदितुं न शक्नोति। शिष्या हि त्रिविधास्ततो मध्यमावरशिष्यप्रबोधनार्थं वातादिदोषक्रमेण विस्तरं वक्ष्यामि॥ ८८॥

गङ्गाधरः—तद्यथा—अजीर्णेत्यादि। निशि अस्वप्नात्। अप्राप्तवेगानां

पञ्चरात्रानुबन्धी। द्वादशरात्रकालस्य किं न निर्देशः? द्वादशरात्रपर्य्यन्तं गर्भाशयस्थस्यार्त्तवस्य प्रवृत्तिरिति ज्ञेयम्। गुञ्जाफलसवर्णमित्यादिना वर्णभेदश्चार्त्तवे प्रकृतिभेदादेव भवति॥ ८५—८७॥

चक्रपाणिः—सम्प्रति प्रदरचिकित्सामभिधाय स्त्रीरोगाभिधानप्रसङ्गाद् अपरमपि स्त्रीरोगं स्तन्यदोषमभिधित्सुराह—धात्रीस्तनस्तन्येत्यादि। त्रिविधास्तु यतो शिष्या ततो वक्ष्यामीति त्रिविधभेदेषु शिष्येषु मन्दबुद्धिशिष्याणां सुखप्रतिपत्त्यर्थम्॥ ८८॥

भुक्त्वा भुक्त्वा दिवास्वप्नात् मद्यस्याति च सेवनात् ।
अभिचारादनायासाद् व्याधिभिः कर्षणेन च ॥
दोषाः क्षीराश्रयाः प्राप्य सिराः स्तन्यं प्रदूष्य च ।
कुर्य्युरष्टविधं भूयो दोषतस्तन्निबोध मे ॥ ८६ ॥
वैरस्यं फेनसङ्घातो रौक्ष्यञ्चेत्यनिलात्मके ।
पित्ताद् वैवर्ण्यदौर्गन्ध्ये स्नेहपैच्छिल्यगौरवम् ॥
कफाद् भवति रौक्ष्याद्यैरनिलः स्वैः प्रकोपणैः ।
क्रुद्धः क्षीराश्रयः प्राप्य रसं स्तन्यं प्रदूषयेत् ॥
विरसं वातसंसृष्टं कृशो भवति तत् पिबन् ।
न चास्य स्वदते क्षीरं कृच्छ्रेण च विवर्द्धते ॥
तथैव वायुः कुपितः स्तन्यमन्तर्विलोडयन् ।
करोति फेनसङ्घातं ततः कृच्छ्रात् प्रवर्द्धते ॥
तेन क्षामस्वरो बालो बद्धविण्मूत्रमारुतः ।
वातिकं शीर्षरोगं वा पीनसं वा स गच्छति ॥
पूर्व्ववत् कुपितः स्तन्ये स्नेहं शोषयतेऽनिलः ।
रूक्षं तत् पिबतो रौक्ष्याद् बलह्रासश्च जायते ॥ ६० ॥

उदीरणेन प्रेरणेन । कृशरा तिलकल्कः । परमान्नादीनि भुक्त्वा भुक्त्वा दिवास्वप्नात् । दोषा वातादयः क्षीराश्रयाः स्तन्यवहाः सिराः प्राप्य स्तन्यं प्रदूष्य चाष्टविधं दोषं वैवर्ण्यादिकं कुर्य्युस्तद् भूयो दोषतो वातादितो निबोध ॥ ८९

गङ्गाधरः—वैरस्यमित्यादि । अनिलात्मके वातदूषिते स्तन्ये वैरस्यादित्रयं भवति । पित्तात् स्तन्ये वैवर्ण्यं दौर्गन्ध्यञ्च द्वे भवतः । कफात् स्तन्ये स्नेहादित्रयं भवति । तद् यथा स्यात् तदाह—रौक्ष्याद्यैरित्यादि । तत् पिबन् शिशुः कृशो भवति । न चास्य शिशोः क्षीरं स्वदते कृच्छ्रेण शरीरमस्य विवर्द्धते । तथवेत्यादिना फेनसङ्घातसम्प्राप्तिः । ततस्तत्पानात् शिशुः कृच्छ्रेण विवर्द्धते इत्यादि । पूर्व्ववदित्यादिना रौक्ष्यसम्प्राप्तिः । स्वैः

पित्तमुष्णादिभिः क्रुद्धं स्तन्याश्रयमभिप्लुतम्।
करोति स्तन्यवैवर्ण्यं नीलपीतासितादिकम्॥
विवर्णगात्रः स्विन्नः स्यात् तृष्णालुर्भिन्नविट् शिशुः।
नित्यमुष्णशरीरश्च नाभिनन्दति तं स्तनम्॥
पूर्व्ववत् कुपिते पित्ते दौर्गन्ध्यं क्षीरमृच्छति।
पाण्डूमयस्तत् पिबतः कामला वा भवेच्छिशोः॥ ६१॥
क्रुद्धो गुर्व्वादिभिः श्लेष्मा क्षीराश्रयगतः स्त्रियाः।
स्नेहान्वितं वा तत् क्षीरमतिस्निग्धं करोति सः॥
छर्द्दनः क्लेशनस्तेन लालालुर्जायते शिशुः।
नित्योपदिग्धैः स्रोतोभिर्निद्राक्लमसमन्वितः।
श्वासकासपरीतश्च प्रसेकतमकान्वितः॥
अभिभूय कफः स्तन्यं पिच्छिलं कुरुते यदा।
लालालुः शूनवक्त्राक्षो जड़ः स्यात् तत् पिबन् शिशुः॥

प्रकोपणैः क्रुद्धोऽनिलः क्षीराश्रयः सन् स्तन्ये स्नेहं शोषयते, ततो रूक्षं स्तन्यं स्यात्, तत् पिबतो बालस्य बलह्रासश्च जायते। इति त्रयः स्तन्यदोषा वातजाः॥ ९० ॥

गङ्गाधरः—पित्तजौ द्वावाह—पित्तमित्यादि। उष्णादिभिः स्वैः प्रकोपणैः क्रुद्धं पित्तं स्तन्याश्रयं वर्णमभिप्लुतं कुर्व्वत् स्तन्यवैवर्ण्यं करोति नीलादिरूपम्। तत् पिबन् शिशुर्विवर्णगात्र इत्यादिः स्यात्। पूर्व्ववदित्यादि। पूर्व्ववदुष्णादिभिः स्वैः प्रकोपणैः क्रुद्धे पित्ते क्षीरमृच्छति सति स्तन्ये दौर्गन्ध्यं स्यात्। तत् पिबतः शिशोः पाण्डूमयः कामला वा स्यात्॥ ९१॥

गङ्गाधरः—इति पित्तदोषौ द्वावुक्त्वा कफदोषांस्त्रीनाह—क्रुद्ध इत्यादि। गुर्व्वादिभिः स्वैः प्रकोपणैः क्रुद्धः श्लेष्मा स्त्रियाः क्षीराश्रयस्तनगतः सन् तत् क्षीरं स्नेहान्वितमतिस्निग्धं वा करोति। तत् पिबन् शिशुश्छर्द्दन इत्यादिः स्यात्। अभिभूयेत्यादि। स्वैः प्रकोपणैः क्रुद्धः कफः स्तन्यमभिभू

कफः क्षीराशयगतो गुरुत्वात् क्षीरगौरवम्।
कुर्य्यात् स्नेहान्वितं पीतं तद्भावात् कफरोगवान्।
अन्यांश्च विविधान् रोगान् कुर्य्यात् क्षीरसमाश्रितान्॥९२॥
क्षीरे वातादिभिर्दुष्टे सम्भवन्ति यदात्मकाः।
तत्रादौ क्षीरशुद्ध्यर्थं धात्रीं स्नेहोपपादिताम्।
संस्वेद्य विधिवद्वैद्यो वमनेनोपपादयेत्॥९३॥
वचाप्रियङ्गुयष्ट्याह्व-कफवत्सकसर्षपैः।
कल्कैर्निम्बपटोलानां क्वाथैः सलवणैर्वमेत्॥
सम्यग्वान्तां यथान्यायं कृतसंसर्ज्जनां ततः।
दोषकालबलापेक्षी स्नेहयित्वा विरेचयेत्॥
त्रिवृतामभयां वापि त्रिफलारससंयुताम्।
पाययेन्मधुसंयुक्तां विरेकार्थं भिषग्वरः॥

पिच्छिलं कुरुते। तत् पिबन् शिशुर्लालालुरित्यादिः स्यात्। कफ इत्यादि। गुर्व्वादिभिः क्रुद्धः कफः क्षीराश्रयस्तनगतः सन् गुरुत्वात् क्षीरस्य गौरवं कुर्य्यात्। स्नेहान्वितं तत् गुरु क्षीरं पीतं शिशुना तद्गुरुभावात् तस्य शिशोः कफरोगा जायन्ते ये तज्जानन्यांश्च विविधान् क्षीरसमाश्रितान् रोगान् कुर्य्यात्॥९२॥

गङ्गाधरः—इत्यष्टौ वातादिभेदेन दोषानुक्त्वैषां चिकित्सामाह—क्षीर इत्यादि। यदात्मका वैवर्ण्यादियद्यद्रूपा दोषाः सम्भवन्ति। तत्रादौ क्षीरशुद्ध्यर्थं स्नेहोपपादितां धात्रीं संस्वेद्य वमनेनोपपादयेत्॥९३॥

गङ्गाधरः—वचेत्यादि। स्निग्धा स्विन्ना सा धात्री वचादिकल्कैर्युक्तैः निम्बादिक्वाथैः सलवणैर्वमेत्, तत्र वचादिषु कफः श्लेष्मातकः। सम्यग्वान्तां यथान्यायं कृतसंसर्ज्जनां कृतपेयादिक्रमाहारां पुनः स्नेहयित्वा दोषाद्यपेक्षी वैद्यो विरेचयेत्। विरेचनयोगमाह—त्रिवृतामित्यादि। त्रिवृतां

सम्यग् विरिक्तां मतिमान् कृतसंसर्ज्जनां पुनः।
ततो दोषावशेषघ्नैरन्नपानैरुपाचरेत् ॥ ९४ ॥
शालयः षष्टिका वापि श्यामाका भोजने हिताः।
प्रियङ्गवः कोरदूषा यवा वेणुयवास्तथा ॥
वंशवेत्रकलायाश्च शाकार्थे स्नेहसंस्कृताः।
मुद्गान् मसूरान् यूषार्थे कुलत्थांश्च प्रकल्पयेत् ॥ ९५ ॥
निम्बवेत्राग्रकुलक-वार्त्ताकामलकैः शृतान्।
सव्योषसैन्धवान् यूषान् दापयेत् स्तन्यशोधनान् ॥
शशान् कपिञ्जलानेणान् संस्कृतांश्च प्रदापयेत् ॥
शार्ङ्गेष्टासप्तपर्णत्वक्-वस्तगन्धाशृतं जलम्।
दापयेत् स्तन्यशुद्ध्यर्थमथवा रोहिणीशृतम् ॥ ९६ ॥

त्रिफलारससंयुतां मधुसंयुक्तां पाययेत्, अथवा अभयां त्रिफलारससंयुतां मधुसंयुक्तां पाययेत्। विरिक्तां कृतसंसर्ज्जनां तां धात्रीं पुनस्ततो दोषशेषघ्नैरन्नपानैरुपाचरेत् ॥ ९४ ॥

गङ्गाधरः—अन्नार्थमाह—शालय इत्यादि। प्रियङ्गवो धान्यविशेषाः। वंशादयोऽपि शाकार्थे स्नेहसंस्कृताः, वंशो वंशकरीरः, वेत्रं वेत्राग्रम्, यूषार्थ मुद्गादीन् कल्पयेत् ॥ ९५ ॥

गङ्गाधरः—यूषसंस्कारमाह—निम्बेत्यादि। कुलकं पटोलपत्रम्। निम्बादिभिः क्वथितः कल्कैर्वा शृतान् सव्योषसैन्धवान् यूषान् दापयेत्। शशानित्यादि। शशादींश्च संस्कृतान् रसान् कृत्वा प्रदापयेत्। पानार्थमाह। शार्ङ्गष्टेत्यादि। शार्ङ्गष्टा काकजङ्घा। वस्तगन्धा अजमोदा। रोहिणी कटुरोहिणी ॥ ९६ ॥

अमृतासप्तपर्णत्वक्-क्वाथञ्चैव सनागरम् ।
किराततिक्तकक्वाथं श्लोकपादेरितान् पिबेत् ॥
त्रीनेतान् स्तन्यशुद्ध्यर्थमिति सामान्यभेषजम् ।
कीर्त्तितं स्तन्यदोषाणां पृथगन्यन्निबोध मे ॥ ९७ ॥
पाययेद् द्विरसक्षीरा द्राक्षामधुकशारिवाः ।
श्लक्ष्णपिष्टां पयस्याञ्च समालोड्य सुखाम्बुना ।
स्तन्यसंशोधनार्थन्तु धात्रीन्तु पाययेद् भिषक् ॥ ९८ ॥
पञ्चकोलकुलत्थैश्च पिष्टैरालेपयेत् स्तनौ ।
शुष्कौ प्रक्षाल्य निर्दुह्यात् तथा स्तन्यं विशुध्यति ॥ ९९ ॥
फेनसङ्घातवत् क्षीरं यस्यास्तां पाययेत् स्त्रियम् ।
पाठानागरशार्ङ्गेष्टा-मूर्व्वाः पिष्ट्वा सुखाम्बुना ॥
अञ्जनं नागरं दारु-बिल्वमूलप्रियङ्गवः ।
स्तनयोः पूर्व्ववत् कार्य्यं लेपनं क्षीरशोधनम् ॥

गङ्गाधरः—अमृतेत्यादि । श्लोकस्यास्य पादत्रयेण त्रीन् योगान् पिबेत् । अमृता सप्तपर्णत्वक् कल्कीकृत्य जलेन पेया । इत्येकः । सनागरं तयोः क्वाथञ्च पिबेदिति द्वितीयः । किराततिक्तक्वाथं पिबेदिति तृतीयः ॥ ९७ ॥

गङ्गाधरः—इति सामान्यभेषजं स्तन्यदोषस्य पृथगन्यत् शृणु । पाययेदित्यादि । द्विरसक्षीरा द्विगुणजलक्षीरा द्राक्षामधुकसारिवाः पक्त्वा शेषं क्षीरं पाययेत् । द्विगुणजलक्षीरमष्टांशद्राक्षादिकल्कं पक्त्वा पाययेत् । श्लक्ष्णेत्यादि । पयस्यां क्षीरकाकोलीं श्लक्ष्णपिष्टां सुखाम्बुना समालोड्य पाययेत् ॥ ९८ ॥

गङ्गाधरः—पञ्चेत्यादि । पञ्चकोलकुलत्थैः पिष्टैर्जलेनालिप्य स्तनौ शुष्कौ पुनः प्रक्षाल्य निर्दुह्यान्निःशेषेण दुग्धं गालयेदिति ॥ ९९ ॥

गङ्गाधरः—फेनेत्यादि । यस्याः स्त्रियाः फेनसङ्घातवत् क्षीरं तां पाठादिकान् पिष्ट्वा सुखाम्बुना पाययेत् । शार्ङ्गेष्टा काकजङ्घा । अञ्जनमित्यादि । अञ्जनं रसाञ्जनं प्रियङ्गवो धान्यविशेषाः । पूर्व्ववत् स्तनौ लिप्त्वा शुष्कौ निर्दुह्यात् ।

चक्रपाणिः— क्वाथञ्चैव सनागरम् इत्यत्र नागरकृत एव क्वाथो ज्ञेयः ॥ ८९—९९ ॥

किरातत्तिक्तकं शुण्ठी सामृता क्वाथयेद् भिषक्।
तं क्वाथं पाययेद् धात्रीं स्तन्यदोषनिबर्हणम्॥
स्तनौ चालेपयेत् पिष्टैर्यवगोधूमसर्षपैः।
षड्विरेकाश्रितीयोक्तैरौषधैः स्तन्यशोधनैः॥ १०० ॥
रूक्षक्षीरा पिबेत् क्षीरं तैर्वा सिद्धं घृतं पिबेत्।
पूर्व्ववज्जीवकाद्यञ्च पञ्चमूलञ्च लेपनम्॥
श्लक्ष्णं पिष्ट्वा जलेनैव लेपनं भिषजा स्त्रियाः।
स्तनयोः संविधातव्यं सुखोष्णं स्तन्यशोधनम्॥ १०१ ॥
यष्टीमधुकमृद्वीका-पयस्यासिन्धुवारिका।
शीताम्बुना पिबेत् कल्कं क्षीरवैवर्ण्यनाशनम्॥
द्राक्षामधुककल्केन स्तनौ चास्याः प्रलेपयेत्।
प्रक्षाल्य वारिणा चैव निर्दुह्यात् तौ पुनःपुनः॥ १०२ ॥
विषाणिकाजश्रृङ्ग्यौ च त्रिफलां रजनीं वचाम्।
पिबेत् क्षीराम्बुना पिष्ट्वा क्षीरदौगन्ध्यनाशनम्॥

किरातेत्यादि। किराततिक्तकादीनां क्वाथं कृत्वा तं पाययेत्। स्तनावित्यादि। यवादिभिश्च पिष्टैः स्तनावालेपयेदित्येको योगः। षड्विरेकेत्यादि। षड्-विरेकशताश्रितीयोक्तैः स्तन्यविशोधनैर्दशभिः॥ १०० ॥

गङ्गाधरः—रूक्षेत्यादि। शृत क्षीर रूक्षक्षीरा स्त्री पिबेत्। तैः सिद्धं घृतं वा पिबेत्। पूर्व्ववदित्यादि। जीवकाद्यं दशकं पञ्चमूलञ्च वृहत् पूर्व्ववदालेपनं सुखोष्णं स्तनयोः कृत्वा शुष्कीभावे प्रक्षाल्य निर्दोहनं विधातव्यमिति॥१०१॥

गङ्गाधरः—यष्टीत्यादि। पयस्या क्षीरकाकोली, सिन्धुवारिका निर्गुण्डी। एषां कल्कं शीताम्बुना पिबेत्। द्राक्षेत्यादि। अस्या विवर्णक्षीराया धात्र्याः द्राक्षाकल्केन स्तनौ लिप्त्वा शुष्कौ वारिणा प्रक्षाल्य निर्दुह्यादेव पुनः-पुनः॥ १०२ ॥

गङ्गाधरः—विषाणिकेत्यादि। विषाणिकादिकं क्षीराम्बुना मिलितेन पिष्ट्वा पिबेत्। अजश्रृङ्गी द्विधा विषाणी चाजश्रृङ्गी च तस्माद् भागद्वयम्।

लिह्याद् वाप्यभयाचूर्णं सव्योषं माक्षिकप्लुतम्।
क्षीरदौर्गन्ध्यनाशार्थं धात्री पथ्याशिनी तथा॥
सारिवोशीरमञ्जिष्ठा-श्लेष्मातैर्वा सचन्दनैः।
पत्राम्बुचन्दनोशीरैः स्तनौ चास्याः प्रलेपयेत्॥ १०३॥
स्निग्धक्षीरा दारु मुस्तं पाठां पिष्ट्वा सुखाम्बुना।
पीत्वा ससैन्धवं क्षिप्रं क्षीरशुद्धिमवाप्नुयात्॥ १०४॥
पाययेत् पिच्छिलक्षीरां शार्ङ्गेष्टामभयां वचाम्।
मुस्तनागरपाठाश्च पीताः स्तन्यविशोधनाः॥
तक्रारिष्टं पिबेच्चापि अर्शसां यन्निदर्शितम्।
विदारीबिल्वमधुकैः स्तनौ चास्याः प्रलेपयेत्॥ १०५॥
त्रायमाणामृतानिम्ब-पटोलत्रिफलाश्रृतम्।
गुरुक्षीरा पिबेदेतत् स्तन्यदोषविशुद्धये।
पिबेद् वा पिप्पलीमूल-चव्यचित्रकनागरम्॥
बलानागरशार्ङ्गेष्टा-मूर्व्वाभिर्लेपयेत् स्तनौ।
पृश्निपर्णीपयस्याभ्यां स्तनौ चास्याः प्रलेपयेत्॥ १०६॥

लिह्याद् वेत्यादि। स्पष्टार्थम्। सारिवेत्यादि। अस्या दुर्गन्धिक्षीरायाः स्तनौ सचन्दनैः सारिवादिभिः प्रलेपयेत्। अथवा सचन्दनैः पत्रादिभिर्वा स्तनौ प्रलेपयेत्॥ १०३॥

गङ्गाधरः—स्निग्धेत्यादि। ससैन्धवं दार्व्वादिकं सुखाम्बुना पिष्ट्वा पीत्वा स्निग्धक्षीरा नारी क्षीरशुद्धिमवाप्नुयात्॥ १०४॥

गङ्गाधरः—पाययेदित्यादि। शार्ङ्गेष्टा काकजङ्घा, शार्ङ्गेष्टामभयां वा वचां वा पाययेत्। मुस्तादिकाः पीताः। तक्रारिष्टं वाप्यर्शोनिर्दिष्टं पिबेत् पिच्छिलक्षीरा नारी। विदारीप्रभृतिभिः पिष्टैरस्याः पिच्छिलक्षीरायाः स्तनौ प्रलेपयेत्॥ १०५॥

गङ्गाधरः—त्रायमाणेत्यादि। गुरुक्षीरा नारी त्रायमाणादिश्रृतं क्वाथं पिबेत्। पिबेद् वेत्यादि। पिप्पलीमूलादि नागरान्तं क्वथितं पिबेद् वा।

अष्टावेते क्षीरदोषा हेतुलक्षणभेषजैः ।
निर्द्दिष्टाः क्षीरदोषोत्थास्तत्रोक्ताः केचिदामयाः ॥ १०७ ॥
दोषदूष्या मलाश्चैव महतां ये तथामयाः ।
त एव सर्व्वे बालानां मात्रा त्वल्पतरा मता ॥
निवृत्तिर्वमनादीनां मृदुत्वं परतन्त्रता ।
वाक्चेष्टयोश्च सामर्थ्यं वीक्ष्य बालेषु शास्त्रवित् ॥
भेषजं चाल्पमात्रन्तु यथाव्याधि प्रयोजयेत् ।
मधुराणि कषायाणि क्षीरवन्ति मृदूनि च ॥ १०८ ॥

बलादिभिः स्तनौ लेपयत् । पृश्निपर्णीत्यादि । पृश्निपर्ण्यादिभ्यां द्वाभ्यामस्याः गुरुक्षीरायाः स्तनौ प्रलेपयेदिति ॥ १०६ ॥

गङ्गाधरः—अष्टावित्यादिना क्षीरदोषहेतुत्वादुपसंहारः । प्रसङ्गाद् बालस्य चिकित्सामाह—निर्द्दिष्टा इत्यादि। तत्र क्षीरदोषोत्था ये केचिदामया निर्द्दिष्टास्तथा महतां युववृद्धानां ये दोषदूष्या आमयाश्च निर्द्दिष्टास्त एव सर्व्व रोगा ते च योगा बालानां विधीयन्ते तत्र मात्रा त्वल्पतरा मता । यथावयो बालकानां मात्रा विधेया। निवृत्तिरित्यादि। तत्र वमनादीनां संशोधनानां बालेषु निवृत्तिः, कस्मात् ? यतो मृदुत्वं परतन्त्रता च बालानामिति। वागित्यादि। वाक्चेष्टयोः सामर्थ्यं वीक्ष्य बालेषु यथाव्याधि भेषजमल्पमात्रं प्रयोजयेत्। मधुराणि कषायाणि क्षीरवन्ति मृदूनि च प्रयोजयेत् ॥ १०७ । १०८ ॥

चक्रपाणिः—पूर्व्ववत् जीवकाद्यमित्यत्र जीवकाद्यं जीवनीयम् । एवं दुष्टक्षीरे उत्पन्नवातविकाराणां रूपं दर्शयित्वा यथाकर्त्तव्यं भेषजमाह । दोषा वातादयः । दूष्याणि रक्तादीनि । मलाः मूत्रस्वेदादयः । एते दोषादयो महतामिव बालानामपि भवन्ति । किन्तु तेषां दोषादीनां मात्रा तु अल्पतरा इति विशेषः । तेन दोषादिमात्रापेक्षया भेषजमात्राप्यल्पा भवतीति भावः । निवृत्तिर्वमनादीनामित्यादि । द्विविधा बाला भवन्ति स्वतन्त्रवृत्तयः परतन्त्रवृत्तयश्च । तत्र परतन्त्रवर्त्ती बालानां वमनादीनां निवृत्तिः कर्त्तव्या, वाक्चेष्टयोश्च बालकस्य सामर्थ्यं वीक्ष्य स्वतन्त्राणां वमनादीनां मृदुत्वं शास्त्रविद् वैद्यः प्रयोजयेत् । तथा संशमनमपि भेषजम् अल्पमात्रं यथाव्याधि प्रयोजयेत् । किंवा बालेषु मृदुतां परतन्त्रताञ्च वीक्ष्य वमनादीनां निवृत्तिर्विधातव्या । वाक्चेष्टयोश्च बालेषु सामर्थ्यं वीक्ष्य संशमनं भेषजमल्पमात्रं यथाव्याधि

अत्यर्थस्निग्धरूक्षोष्णमम्लं कटु विपाकि च।
गुरु चौषधपानान्नमेतद्‌ बालेषु गर्हितम् ॥ १०९ ॥
समासात् सर्व्वरोगाणामेतद्‌ बालेषु भेषजम् ।
निर्द्दिष्टं शास्त्रविद्‌ वैद्यः प्रविभज्य प्रयोजयेत् ॥ ११० ॥

स्तन्यदोषबालरोगौ ।

भवन्ति चात्र ।

इति सर्व्वविकाराणामुक्तमेतच्चिकित्सितम् ।
स्थानमेतद्धि तन्त्रस्य रहस्यं परमुच्यते ॥
अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च ।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते ॥
तानेतान् कापिलबलिः शेषान् दृढ़बलोऽकरोत् ।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम् ॥१११।११२॥

गङ्गाधरः—वर्ज्ज्यान्याह—अत्यर्थेत्यादि । अत्यर्थस्निग्धादिकं बालेषु गर्हितम् । समासादित्यादि । स्पष्टम् ॥ १०९—११२ ॥ स्तन्यदोषबालरोगौ ।

गङ्गाधरः—उपसंहरति—भवन्ति चात्रेत्यादि। इतीत्यादि। इत्येतच्चिकित्सितं स्थानं सर्व्वविकाराणामुक्तम् । एतस्य तन्त्रस्य पुनरेतत् परं रहस्यमुच्यते । किं रहस्यमित्यत आह—अस्मिन्नित्यादि । अस्मिंश्चिकित्सितस्थाने शेषाः सप्तदशाध्यायाः कल्पा द्वादशाध्यायाः सिद्धयश्च द्वादशाध्याया नासाद्यन्ते चरकप्रतिसंस्कृतेऽग्निवेशतन्त्रेऽधुना न प्राप्यन्ते, केवलाग्निवेशतन्त्रे तु प्राप्यन्ते। तान् अग्निवेशतन्त्रोक्तान् एतानध्यायान् चिकित्सितस्थाने सप्तदशाध्यायान् शेषान् कापिलबलिः कपिलबलस्यापत्यं दृढ़बलोऽकरोत् प्रतिसंस्कृतानकरोत् ॥ १११ । ११२ ॥

प्रयोजयेदिति योजनीयम् । मधुराणीत्यादिना बालेषु कर्त्तव्यं भेषजमाह । अत्यर्थमित्यादि । बालेषु निषिद्धभेषजमाह । शास्त्रविद् वैद्यः प्रविविच्य निर्द्दिष्टं प्रयोजयेदिति ॥ १००—११० ॥

चक्रपाणिः—सर्व्वविकाराणां चिकित्सास्थानोक्तम् उपसंगृह्णाति । सर्व्वविकाराणामिति वचनेन अनुक्तानामपि विकाराणामेतत् चिकित्साबीजसूत्रमिति दर्शयति । रहस्यपदेन न कस्मैचित् पापिष्ठाय प्रकाशनीयमिति द्योतयति । सम्प्रति दृढ़बलः स्वकीयस्थानविषयं दर्शयन्नाह—अस्मिन्नित्यादि । सप्तदशाध्याया इति चिकित्सास्थाने सप्तदशाध्यायादन्ते यक्ष्मचिकित्सितान्तान् अष्टौ अध्यायान् तथा अतीसारावसर्पद्विव्रणीयमदात्ययोक्तान् परिशिष्टसंस्कारस्य दृढ़ा अतिशयसम्पादकत्वादात्मनो निर्द्दिष्टविषयमेव दर्शयन्नाह—तन्त्रस्यास्येत्यादि ॥ १११ । ११२ ॥

रोगा येऽप्यत्र नोद्दिष्टा बहुत्वान्नामरूपतः।
तेषामप्येतदेव स्याद् दोषादीन् वीक्ष्य भेषजम्॥
दोषदूष्यनिदानानां विपरीतं हितं ध्रुवम्।
उक्तानुक्तान् गदान् सर्व्वान् सम्यग् युक्तं नियच्छति॥
देशकालप्रमाणानां सात्म्यासात्म्यस्य चैव हि।
सम्यग्योगोऽन्यथा ह्येषां पथ्यमप्यन्यथा भवेत्॥ ११३॥

गङ्गाधरः—अनुक्तानां भेषजमाह—रोगा इत्यादि। तेषां रोगाणां दोषादिविपरीतं हितं द्रव्यं सम्यग्युक्तमुक्तानुक्तान नियच्छति। तथा देशादीनां सात्म्यासात्म्यस्य च सम्यग्योगोऽप्युक्तानुक्तान् विकारान् नियच्छति। अन्यथा सम्यग्युक्तं पथ्यमप्यन्यथाऽपथ्यं भवेत्॥ ११३॥

चक्रपाणिः—सम्प्रति उक्तानुक्तरोगचिकित्सातिदेशार्थमाह—रोगा येऽप्यत्रेत्यादि। तच्चिकित्सास्थानोक्तं भेषजं तदेव हि भेषजं नामरूपादिना विशेषेणानुक्तानां सामान्यतश्च वातादिजन्यतया दोषानपेक्ष्य तथायुक्तं सत् भेषजं भवतीत्यर्थः। दोषादीनिति दोषदूष्यनिदानानि अग्रे वक्ष्यमाणानि, किंवा दोषभेषजदेशकालशरीरसत्त्वप्रकृतिवयांसि सूत्रस्थानोक्तानि। अथ कथमेतद भेषजम् अनुक्तानां गदानां भेषजं भवतीत्याह—दोषदूष्येत्यादि। दोषा वातादयः, दूष्याणि रक्तादीनि, निदानानि रूक्षादीनि, एषां विपरीतं भेषजं हितमिति। ततः सम्यग् युक्तं सत् उक्तानुक्तगदान् ध्रुवं नियच्छति। उक्तानि नामरूपादीनि, अनुक्तानि नामरूपादिविशेषेण अनुक्ता ये तानि। एतेन यदेव दोषादिविपरीततया प्रतिपादितं भेषजं तदेव अनुक्तानां गदानां दोषादिसमत्वं बुद्ध्वा भेषजं योज्यमिति ज्ञेयम्। यद्यपि च निदानविपरीतं भेषजं तद्दोषविपरीतेनैव ग्रहीतुं पार्य्यते, यतो निदानेषु दोषप्रकोपः क्रियते, तस्य च दोषाद् विपरीतं यत् यथा रूक्षनिदानवृद्धे वायौ रूक्षस्य विपरीता स्नेहाः स निदानविपरीत एव, तथापि दोषस्यैव वैपरीत्येन भेषजप्रयोगोपदर्शनार्थं निदानविपरीतोपादानमिह यथायथं संयोजनीयम्। अथ दोषादिविपरीतं सम्यग्योगेन यद् गदान् नियच्छतीत्युक्तं ततो येन सम्यग्योगेन कालगृहीतपक्षसव्यपक्षसम्यग्योगेनैव कृतम्। तमेव सम्यग्योगमाह—देशकालेत्यादि। येषान्तु देशाद्यपेक्षया योगानामुदाहरणानि आचार्य्येणैव दत्तानि आस्वादामाशयस्थानित्यादिना त्रिदोषघ्नं बहुशीत्यन्तेन। तत्रेह देशः आतुरस्यैवोक्तः भूमिः। इदानीं तद्दोषादिभिस्तत्र अस्यौषधकालो दशविधः। प्रमाणमौषधस्य त्रिविधम् अल्पं बहु समञ्च। समञ्च द्विविधं देशशरीरयोः। असात्म्यं उक्तसात्म्यविपरीतम्। सम्यग्योगो यथावत् प्रयोगः। विपर्य्यये दोषमाह। अन्यथा ह्येषां पथ्यमपि अन्यथा भवेत्। एषां दोषादीनां……भेषजं दोषादिविपरीतमपि अन्यथेति अपथ्यं भवति। यानि चापराणि बलसत्त्वादीनि दशविधदोषाद्यन्तरगतानि नेहोक्तानि तानि दोषादिष्वन्तर्भवनीयानि॥ ११३॥

आस्यादामाशयस्थांश्च रोगान् नस्तः शिरोगतान्।
गुदात् पक्काशयस्थांश्च हन्त्याशु द्रवमौषधम्॥
शरीरावयवोत्थेषु विसर्पपिड़कादिषु।
यथादोषं * प्रदेहादि शमनं स्याद् विशेषतः॥ ११४॥
दिनातुरौषधव्याधि-जीर्णलिङ्गर्त्त्ववेक्षणम्।
कालं विद्याद् दिनावेक्षं पूर्व्वाह्ने वमनं यथा॥
रोग्यवेक्षा यथा प्रातर्निरन्नो बलवान् पिबेत्।
भेषजं लघुपथ्याद्यैर्युक्तमद्यात् तु दुर्ब्बलः॥
भैषजग्रकालो भुक्तादौ मध्ये पश्चान्मुहुर्म्मुहुः।
सामुद्गं भक्तसंयुक्तं ग्रासे ग्रासान्तरे दश॥

गङ्गाधरः—आस्यादित्यादि। आस्यादास्यमारभ्यामाशयस्थान् रोगान् तथा नस्तः नासिकामारभ्य शिरोगतान् रोगानेवं गुदमारभ्य पक्काशयस्थांश्च रोगान् द्रवमौषधमाशु हन्ति। शरीरेत्यादि। स्पष्टम्॥ ११४॥

गङ्गाधरः—दिनेत्यादि। चिकित्साक्रियाविधौ दिनाद्यवेक्षणं कालं षड्‌विधं विद्यात्। तत्र दिनावेक्षं कालं पूर्व्वाह्ने यथा वमनं विद्यात्। रोग्यवेक्षेत्यादि। रोग्यवेक्षा यथा बलवान् रोगी प्रातरेव निरन्न औषधं पिबेत्। दुर्ब्बलो रोगी लघुपथ्याद्यैर्युक्तं भेषजं पिबेदिति। औषधावेक्षणं कालमाह—भैषज्यकाल इत्यादि। एको भुक्तादौ भैषज्यकालः, द्वितीयो

चक्रपाणिः—अत्र उदाहरणमाह—आस्यादित्यादि। आस्यादित्यादौ तृतीयास्थाने पञ्चमी। तेन आस्येन दत्तमौषधं वमनादामाशयस्थान् गदानाशुतरान्निहन्ति। एवं नासिकया दत्तमौषधं शिरोगतान् निहन्ति। गुदेन दत्तमौषधं पक्काशयस्थान् निहन्ति। सम्यग्‌योगे देशापेक्षामाह—शरीरावयवेष्वित्यादि। यथादेशमिति व्याधिदेशे। प्रदेहादीति प्रदेहपरिषेकोपनाहनादि देशसामर्थ्य-कालमपेक्ष्य देयमिति॥ ११४॥

चक्रपाणिः—सोदाहरणं कालविभागपूर्व्वकमाह—दिनातुरेत्यादि। तत्र दिनापेक्षादिकालान् क्रमादुदाहरति। दिनापेक्षः रोग्यपेक्षेति रोगिणो विशेषेण बलवत्त्वमबलवत्त्वञ्चापेक्ष्य भवतीत्यर्थः। औषधमुपयुज्यापि उपेक्षणम् अभुञ्जानः औषधम्। भैषज्यकाला इत्यादि। अत्र भुक्तादावित्यनेन

* यथादेशमित्यन्यः पाठः।

अपाने विगुणे पूर्व्वं समाने मध्यभोजनम्।
व्याने तु प्रातराशाद्यमुदाने भोजनोत्तरम् ॥
वायौ प्राणे प्रदुष्टे तु ग्रासे ग्रासान्तरिष्यते।
श्वासकासपिपासासु त्ववचार्य्यं मुहुर्म्मुहुः ॥

भुक्तमध्यम्, तृतीयो भुक्तात् पश्चात्। चतुर्थो मुहुर्म्मुहुः। पञ्चमः सामुद्गं सम्पुटकं द्वयोराहारयोर्मध्ये काले। षष्ठो भक्तसंयुक्तम्। सप्तमो ग्रासे। अष्टमो ग्रासान्तरे। प्रातर्निरन्नं पथ्यादियुक्तमिति द्वौ कालौ पूर्व्वमुक्तौ। तद्विषयमाह—अपान इत्यादि। अपाने वायौ विगुणे पूर्व्वं प्राग्भक्ताद् भैषज्यं सेव्यम्। समाने विगुणे मध्यभोजनं भोजनमध्यकाले। व्याने विगुणे प्रातःकाले आशाद्यमौषधमाश्यमाद्यं लेह्यं पेयम्। उदाने विगुणे भोजनोत्तरम् औषधमाद्यम्। प्राणे वायौ प्रदुष्टे तु ग्रासे ग्रासान्तः प्रतिग्रासमध्ये।

कालद्वयमुच्यते। यथा प्रातर्निषिद्धं तथा प्रातर्भोजनञ्च तथा पश्चादित्यनेन च कालद्वयं प्रातर्भोजनोत्तरम् अपरस्तु सायं भोजनोत्तरम्। कालञ्च मध्यभुक्तन्तु यदर्द्धं भुक्त्वा उपयुज्यते पश्चात् पुनरर्द्धं भुज्यते। मुहुर्भुक्तं नाम यद् भोजनसमये प्रतिक्षणं योज्यम्। सामुद्गं नाम यदन्नस्य आदावन्ते च समुद्गवत् आचरणं तत् सामुद्गमभिधीयते। भुक्तमिति पदं भुक्तादावित्यादिभिः प्रत्येकं सम्बध्यते। सम्भुक्तं नाम यदन्नेन संयोगान्मिश्रितं भुज्यते। ग्रासान्तरे तु भुक्तं नाम यत् ग्रासादनुभुज्यते; अन्ये तु ग्रासग्रासान्तरे इति पठन्ति एकं भेषजकालं अतिभुक्तमिति।…… कालान्तरमभिधाय देशौषधकालपूरणं कुर्व्वन्ति अतएव वायौ प्राणे दुष्टे तु ग्रासे ग्रासान्तरे इष्यत इति वचनेन आचार्य्येण एक एव काल उक्तः। तत्र ग्रासस्य ग्रासान्तरमध्ये यदौषधं तत् ग्रासान्तरमुच्यते। भुक्तभुक्तस्य ……उपेक्ष्य ग्रासमपेक्ष्य भोजनमिति बोधनात् गृहीतकालः षड्विधः। एवं व्यवस्थिते अपाने विगुणे इत्यादि पुनर्व्याक्रियते। एते च कालाः यद्यपि रोगविशेषविषयतया विहिताः, तथापि भेषजस्यैवामी अन्नपानादिविधेयस्य काला भवन्ति; अपानवैगुण्यादयस्तु गदाः इह भेषजविशेषतयोपदर्शनार्थम्। यदौषधं तस्य पूर्व्वम् अर्थात् पूर्व्वकाल इत्यादि अर्थो बोद्धव्यः। यस्तु व्याध्यपेक्षः कालः स व्याध्यवस्थारूप इह वक्तव्य इति विशेषः। औषधमित्यादिना औषधं संस्कृतमनुपयुज्यते, अलघु लघु वा तत् सम्भुक्तशब्देन उच्यते। ये तु ग्रासे ग्रासान्तर इति पठन्ति तेन ग्रासे ग्रासान्तरे च भैषज्योपयोगेन कालद्वयमाहुः। संयुतमिति सम्भोज्यमित्यस्यैव विशेषणं वर्णयन्ति।

सामुद्रं हिक्किने देयं लघुनान्नेन संयुतम्।
संभोज्यश्चौषधं भोज्यैर्विचित्रैररुचौ हितम्॥
ज्वरे पेयाः कषायाश्च क्षीरं सर्पिर्विरेचनम्।
षड़हे षड़हे देयं कालं वीक्ष्यामयस्य च॥
क्षुद्वेगमोक्षौ लघुता विशुद्धिर्जीर्णलक्षणम्।
तदा भेषजमादेयं स्याद् दोषवदतोऽन्यथा॥
चयादयश्च दोषाणां वर्ज्यं सेव्यश्च यत्र यत्।
ऋताववेक्ष्य तत् कर्म्म सर्व्वं पूर्व्वमुदाहृतम्॥ ११५॥

श्वासादिषु मुहुर्म्मुहुरवचार्य्यम्। हिक्किनः सामुद्रं देयं लघुनान्नेन संयुतम्। भक्तसंयुक्तं विचित्रैर्भोज्यैः सहौषधं भोज्यमरुचौ हितम्। इति दश काला औषधावेक्षणा भवन्ति। अथ व्याध्यवेक्षणं कालमाह—ज्वर इत्यादि। ज्वरे प्रथमं लङ्घनं लङ्घनानन्तरं पेया प्रथमे षड़हे प्रथमदिनावधिसप्ताहे, ततोऽष्टम दिवावधि षड़हे कषायास्ततश्चतुर्द्दशदिनावधिषड़हे क्षीरं ततो विंशदिनावधि- षड़हे सर्पिस्ततः षड् विंशदिनावधिषड़हे विरेचनमिति। एवमामयस्य कालं वीक्ष्य च पेयादिकक्रमः। पूर्व्वापरकालेऽपि। अथ जीर्णलिङ्गावेक्षणं कालमाह—क्षुदित्यादि। क्षुधा तथा वेगस्य मलमूत्रयोर्मोक्षः शरीरोदरयो- र्लघुता उद्गारशुद्धिश्च जीर्णलक्षणमिति। जीर्णलक्षणे भेषजं सेव्यमन्यथा भेषजं दोषवत् स्यादिति। अथ ऋत्ववेक्षणं कालमाह—चयादय इत्यादि। दोषाणां यत्रर्त्तौ यस्य चयप्रकोपप्रशमाः पूर्व्वं ते प्रोक्ताः सूत्रस्थाने, यत्र ऋतौ यद् वर्ज्यं यच्च सेव्यं तत् सर्व्वं पूर्व्वं तस्याशितीये उदाहृतम्, तदवेक्ष्य कर्म्म कार्य्यम्॥ ११५॥

भुक्तमिति तु पदं सर्व्वान्नकालेऽपि योजनीयं भेषजविशेषणमिति व्याख्यानयन्ति। औषधापेक्षं कालमभिधाय व्याध्यपेक्षं कालमाह—ज्वर इत्यादि। उत्सर्गविधिना ज्वराद् आरभ्य षड़हे षड़हे यथाक्रमं देयमिति उच्यते। षड़हादिक्रमे पेयादिदानं न विरोधमावहति। सामान्यविधिर्विशेषविधिं न बाधते तस्य सर्व्वत्रैव अनुल्लङ्घनीयत्वात्। क्षुदादिभिः [illegible] ॥ ११५॥

उपक्रमाणां करण(।)प्रतिषेधे च कारणम्।
व्याख्यातमबलानां सविकल्पानामवेक्षणे॥ ११६॥
मुहुर्म्मुहुश्च रोगाणामवस्था आतुरस्य च।
अवेक्षमाणस्तु भिषक् चिकित्सासु न मुह्यति॥ ११७॥
इत्येवं षड्विधं कालमनवेक्ष्य भिषग्जितम्।
प्रयुक्तमहिताय स्याच्छस्यस्याकालवर्षवत्॥ ११८॥
व्याधीनामृत्वहोरात्र-वयसां भोजनस्य च।
विशेषो भिद्यते यस्तु कालावेक्षः स उच्यते॥ ११९॥
वसन्ते श्लेष्मजा रोगाः शरत्काले तु पित्तजाः।
वर्षासु वातिकाश्चैव प्रायः प्रादुर्भवन्ति हि॥

गङ्गाधरः—उपक्रमाणामित्यादि। यस्योपक्रमस्य यत्र यत्र (करणस्याप्रतिषेधस्तत्र) करणप्रतिषेधे कारणं व्याख्यातं षडुपक्रमणीये। अबलानां सविकल्पानामवेक्षणे पूर्व्वं व्याख्यातमिति॥ ११६॥

गङ्गाधरः—एवं सति मुहुर्म्मुहुश्च रोगाणामातुरस्य चावस्थामवेक्षमाणो वद्यश्चिकित्सायां न मुह्यति॥ ११७॥

गङ्गाधरः—इति षट्कालावेक्षणप्रयोजनमाह—इत्येवमित्यादि। इत्येवं षट् कालमनवेक्ष्यानालोच्य भिषग्जितं प्रयुक्तमहिताय स्यात्, शस्यस्याकालवर्षवत्॥ ११८॥

गङ्गाधरः—कः पुनः कालावेक्ष इत्यत आह—व्याधीनामित्यादि। व्याधीनां वातादिजातानां योऽपृत्तूनां विशेषो भिद्यते यश्चाहर्विशेषो भिद्यते यश्च रात्रिविशेषो भिद्यते यश्च वयसो विशेषो भिद्यते यश्च भोजनस्य विशेषो भिद्यते, स स विशेषः कालावेक्षः कालावेक्षणमुच्यते॥ ११९॥

गङ्गाधरः—तद्यथा—वसन्त इत्यादि। वसन्तादिषु श्लेष्मरोगादयः

निशान्ते दिवसान्ते च वर्द्धन्ते वातजा गदाः ।
प्रातः क्षपादौ कफजास्तयोर्मध्ये तु पित्तजाः ॥
वयोऽन्तमध्यप्रथमे वातपित्तकफामयाः ।
बलवन्तो भवन्त्येव स्वभावाद्द्वयसो नृणाम् ॥
जीर्णान्ते वातजा रोगा जीर्य्यमाणे तु पित्तजाः ।
श्लेष्मजा भुक्तमात्रे तु लभन्ते प्रायशो बलम् ॥ १२० ॥
नाल्पं हन्त्यौषधं व्याधिं यथापोऽल्पा महानलम् ।
दोषवच्चातिमात्रं स्यात् शस्यस्यात्युदकं यथा ॥
संप्रधार्य्य बलं तस्मादामयस्यौषधस्य च ।
नैवातिबहुलात्यल्पं भैषज्यञ्चावचारयेत् ॥ १२१ ॥

स्युरिति व्याधीनामुक्तं विशेषावेक्षणम् । निशान्त इत्यादि । निशान्ते दिवसान्ते च वातजा गदा वर्द्धन्ते तथा प्रातः पूर्व्वाह्ने क्षपादौ रात्रेरादौ कफजा गदा वर्द्धन्ते तयोर्निशामध्ये दिनमध्ये च पित्तजा गदा वर्द्धन्ते । इत्यहोरात्रावेक्षणं व्याधीनाम् । वयोऽन्त इत्यादि । वयसोऽन्ते वातजा गदा बलवन्तो भवन्ति मध्ये पित्तजाः प्रथमे कफजाः । इति वयोऽवेक्षणम् । जीर्णान्त इत्यादि । जीर्णान्ते भोजनस्य वातजा रोगा वर्द्धन्ते भोजने जीर्य्यमाणे पित्तजाः भुक्तमात्रे तु श्लेष्मजाः प्रायशो बलं लभन्ते । इति वयोभोजनावेक्षणं व्याधीनामिति ॥ १२० ॥

गङ्गाधरः—मात्रावदौषधप्रयोग एव कार्य्यो न त्वतिमात्राल्पमात्राभ्याम्, कस्मादित्यत आह—नाल्पमित्यादि । अल्पमात्रमौषधं व्याधिं न हन्ति यथाल्पा आपो न महानलं घ्नन्ति । तर्ह्यतिमात्रं व्याधिं किं हन्तीत्यत आह—अतिमात्रमौषधञ्च दोषवत् स्यात् यथात्युदकं शस्यस्य दोषवत् । तस्मात् आतुरस्य बलं सम्प्रधार्य्यामयस्य बलं सम्प्रधार्य्य औषधस्य च बलं सम्प्रधार्य्य नैवातिबहुलं नात्यल्पं यथा स्यात् तथा भैषज्यमवचारयेत् ॥ १२१ ॥

औचित्याद् यस्य यत् सात्म्यं देशस्य पुरुषस्य च ।
अपथ्यमपि नैकान्तात् सन्त्यज्य लभते सुखम् ॥
वाह्लीकाः शाड्वलाश्चीनाः शुलीका यवनाः शकाः ।
मांसगोधूममाध्वीक-शस्त्रवैश्वानरोचिताः ॥
मत्स्यसात्म्यास्तथा प्राच्याः क्षीरसात्म्याश्च सैन्धवाः ।
अश्मकावन्तिकानान्तु तैलाम्लं सात्म्यमुच्यते ॥
कन्दमूलफलं सात्म्यं विद्यान्मलयवासिनाम् ।
सात्म्यं दक्षिणतः पेया मण्डश्चोत्तरपश्चिमे ।
मध्यदेशे भवेत् सात्म्यं यवगोधूमगोरसाः ॥
सात्म्यं ह्याशु बलं धत्ते नातिदोषञ्च बह्वपि ।
योगैरेवं चिकित्सन् हि देशाद्यज्ञोऽपराध्यति ॥
तेषां तत्सात्म्ययुक्ताश्च वयोऽवस्थायुतास्तथा ।
आयुर्ब्बलशरीरादि-भेदा हि बहवो मताः ॥ १२२ ॥

गङ्गाधरः—अपथ्यस्यापि सात्म्यस्यावर्ज्जनमाह—औचित्यादित्यादि । यस्य जनस्य देशस्यौचित्याद् यद् द्रव्यं सात्म्यं पुरुषस्य प्रकृत्यौचित्याच्च यस्य यत् सात्म्यं तदुपस्थितरोगेष्वपथ्यमपि नैकान्तात् त्यजेत् । ऐकान्तात् सन्त्यज्य न सुखं लभते । तत्र देशौचित्यात् सात्म्यमाह—वाह्लीका इत्यादि । वाह्लीकादयः देशौचित्यात् मांसाद्युचिताः । प्राच्या मत्स्यसात्म्याः । सैन्धवाः क्षीरसात्म्याः । अश्मका आवन्तिकाश्च तैलाम्लसात्म्याः । मलयवासिनः कन्दमूलफलसात्म्याः । पेयासात्म्याः दाक्षिणात्याः । उदीच्याः पाश्चात्याश्च मण्डसात्म्याः । मध्यदेशवासिनो यवगोधूमगोरससात्म्याः । तेषां तत्सात्म्ययुक्तास्तथा वयोऽवस्थायुताश्च आयुर्बलशरीरादिभेदा बहवो मता इति ॥ १२२ ॥

चक्रपाणिः—उक्तप्रयोगैरेव चिकित्सां कुर्व्वाणो दोषमाह—योगैरेवमित्यादि । देशादीत्यनेन देशाद्यज्ञानात् देशादिविगुणचिकित्साकारकं पुरुषं लक्षयति । अपराध्यतीति नेप्सितं साधयति । देशाद्यज्ञ इत्यत्रादिशब्देन वयोबलादीनां ग्रहणम् । वयोबलशरीरप्रकृतिरूपत्वानां

तथान्तःसन्धिमार्गाणां दोषाणां गूढ़चारिणाम् ।
भवेत् कदाचित् कुत्रापि विरुद्धाभिमता क्रिया ॥
पित्तमन्तर्गतं गूढ़ं स्वेदसेकोपनाहनैः ।
नीयते वहिरुष्णैर्हि तथोष्णं शमयन्ति ते ॥
वाह्यैः शीतैश्च सेकाद्यैरुष्मान्तर्यो हि पीड़ितः ।
सोऽणुगूढ़ं कफं हन्ति शीतः शीतैस्तथा व्रजेत् ॥
श्लक्ष्णपिष्टो घनो लेपश्चन्दनस्यापि दाहकृत् ।
त्वग्गतस्योष्मणो रोधाद् दाहहृत् त्वन्यथागुरोः ॥
छर्दिघ्नी मक्षिकाविष्ठा मक्षिका बहु वामयेत् ।
द्रव्येषु च विदग्धेषु चैवं तेषु च विक्रिया ॥

गङ्गाधरः—इति देशसात्म्यानां मांसादीनामपथ्यानामपि नैकान्तः परिहारः कार्य्य इति दर्शयित्वा अपरमाह—तथेत्यादि। तथान्तर्गतानां दोषाणां सन्धिगतानां दोषाणां गूढ़चारिणाञ्च दोषाणां कदाचित् कुत्रापि रोगे विरुद्धा क्रियाप्यभिमता भवेत्। तद्यथा—पित्तमित्यादि। अन्तर्गतं गूढ़मुष्णं पित्तमुष्णैः स्वेदादिभिर्वहिर्नीयते। तथा स्वेदादयः पित्तमुष्णं शमयन्ति। वाह्यैरित्यादि। शीतैर्वाह्यैः सेकादिभिर्योऽन्तरुष्मा पीड़ितः, सोऽन्तरुष्मा अणुं सूक्ष्मं गूढ़ं कफं हन्ति। तथा शीतैः शीतः कफो शमं व्रजेत्। तद् यथा। श्लक्ष्णेत्यादि। चन्दनस्य दाहहरस्य शीतस्य श्लक्ष्णपिष्टो घनो लेपो दाहकृत्। कस्मात्? त्वग्गतस्योष्मणो रोधात्। एवमतोऽन्यथा अगुरोरुष्णस्यापि दाहकरस्य श्लक्ष्णपिष्टोऽघनस्तनुलेपो दाहहृत्। एवमङ्गविशेषेऽपि कर्म्मविशेषः स्यात्। तद्यथा। छर्दीत्यादि। मक्षिकाविष्ठा छर्दिघ्नी, मक्षिका तु बहु वामयेत्।

ग्रहणं यस्मात् तत् वयोबलशरीरादि। यदि वायुः सर्व्वात्मना कुप्यति, तदा तस्य वायोः यद् विपरीतं तैलं तत् कर्त्तव्यम्। यदा तु शीतेन वायुर्व्वृद्धः तदा सर्व्वात्मना वातविपरीत तैलमुत्सृज्य यदेव शीतवातस्याहितं तस्यैवंगुणस्य शैत्यप्रशमाय हेतुविपरीतमुष्णं भेषज कर्त्तव्यम्, चोक्तं 'शीतेनोष्णकृतान् रोगान् शमयन्ति भिषग्विदः' इत्यादि। इह तु

एतस्मादौषधादीनि परीक्ष्य दश तत्त्वतः।
कुर्य्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलम्॥ १२३॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना।
क्षीणे मार्गीकृते दोषे शेषः सूक्ष्म इवानलः॥
तस्मात् तमनुबध्नीयात् प्रयोगेणानपायिना।
दार्ढ्यार्थं प्राक्प्रयुक्तस्य सिद्धस्याप्यौषधस्य तु॥ १२४॥
कठिनादूनभावाच्च दोषोऽन्तःकुपितो महान्।
पथ्यैर्मृद्वल्पतां नीतो मृदुर्दोषकरो भवेत्॥
पथ्यमप्यश्नतस्तस्माद् यो व्याधिरुपजायते।
ज्ञात्वैवं वृद्धिमभ्यासमथवान्यस्य कारयेत्॥
सातत्यात् स्वाद्वभावाच्च पथ्यं द्वेष्यत्वमागतम्।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः॥

तथा सति द्रव्येषु विदग्धेषु तेषु चैवं विक्रिया विपरीतक्रिया। एतस्माद्धेतो-रौषधादीनि दश प्रागुक्तानि विमाने तत्त्वतः परीक्ष्य प्राज्ञश्चिकित्सितं कुर्य्यात्, न केवलं योगैरिति॥ १२३॥

गङ्गाधरः—निवृत्त इत्यादि। निवृत्तो व्याधिः स्वल्पेनापि हेतुना पुनरायाति। निवृत्तो रोगः कस्मात् पुनरायाति तत्राह। दोषे मार्गीकृते सति क्षीणेऽपि शेषो वर्त्तते सूक्ष्मोऽनल इव। तस्मात् तं निवृत्तदोषं पुमांसम् अनपायिना प्रयोगेणानुबध्नीयाच्चिरमुपाचरेत्। किमर्थमित्यत आह—दार्ढ्यार्थं प्राक्प्रयुक्तस्य सिद्धस्यौषधस्य येनौषधेन व्याधिर्निवृत्तोऽभूत्। तस्य सिद्धेर्दार्ढ्यार्थमनपायिना प्रयोगेणानुबध्नीयात् चिरमाचरेत्॥ १२४॥

गङ्गाधरः—कठिनेत्यादि। कठिनादूनभावाच्च अन्तःकुपितो महान् दोषो हि पथ्यैर्मृद्वल्पतां नीतो मृदुरपि दोषकरो भवेत्। तस्मात् पथ्यमप्यश्नतो जनस्य यो व्याधिरुपजायते, तस्यैवं वृद्धिं ज्ञात्वान्यस्य पथ्यस्याभ्यासं कारयेत्। तत्र पथ्यद्वेषे कर्त्तव्यमाह— सातत्यादित्यादि। पथ्यं सततप्रयोगाद् यदि

दोषादीनां व्यस्तसमस्तानां ग्रहणात् दोषदूष्यसमुदायात्मा व्याधिरपि लभ्यते, तेन व्याधि-

मनसो वानुकूलत्वात् तुष्टिरूर्ज्जा रुचिर्बलम् ।
सुखोपभोगता च स्याद् व्याधेश्चातो बलक्षयः ॥
लौल्याद् दोषक्षयाद् व्याधि-वैधर्म्म्याद् वापि याऽरुचिः ।
तासु पथ्योपचारः स्याद् योगेनाद्यं विकल्पयेत् ॥ १२५ ॥

भवन्ति चात्र श्लोकाः ।

विंशतिर्व्यापदो योनेर्निदानं लिङ्गमेव च ।
चिकित्सा चापि निर्दिष्टा शिष्याणां हितकाम्यया ॥
शुक्रदोषास्तथा चाष्टौ निदानाकृतिभेषजैः ।
क्लैव्यान्युक्तानि चत्वारि चत्वारः प्रदरास्तथा ॥
तेषां निदानं लिङ्गञ्च भेषज्यञ्चैव कीर्त्तितम् ।
क्षीरदोषास्तथा चाष्टौ दोषाकृतिभिषग्जितैः ॥
रेतसो रजसश्चैव कीर्त्तितं शुद्धिलक्षणम् ।
उक्तानुक्तचिकित्सा च सम्यग्योगस्तथैव हि ॥
देशादिगुणयोगाश्च कालः षड् विध एव च ।
देशे देशे च यत् सात्म्यं यथा वैद्योऽपराध्यति ॥

द्वेष्यत्वं स्वादुलाभावाच्च यदि द्वेष्यत्वमागच्छेत्, तदा तैस्तः स्वादुकरैः कल्पनाविधिभिः पुनस्तदेव द्वेष्यत्वगतं पथ्यं प्रियत्वं गमयेत् नयेत् । किमर्थमित्यत आह—मनस इत्यादि । मनसो वानुकूलत्वादूर्ज्जा तुष्टिश्च बलञ्च सुखोपभोगता च स्यात् । अतो व्याधेश्च बलक्षयः स्यात् । लौल्यादित्यादि । मनसो लौल्याच्चाञ्चल्यात् दोषक्षयादपि व्याधिः स्यात्, वैधर्म्म्याद् वापि याऽरुचिः स्यात्, तासु पथ्योपचारः स्यात् । योगेनाद्यं खाद्यं विकल्पयेदिति ॥ १२५ ॥

विपरीतमपि भेषजमविरुद्धम् । विपरीतं भेषजमुच्यते न विपरीतगुणमात्रम्, तेन विपर्य्यस्तार्थकारिणामपि भेषजानां ग्रहणं भवति । यत् तु समानमेव क्षीणानां दोषाणां धातूनां वा भेषजं

चिकित्सा चापि निर्दिष्टा दोषाणां गूढ़चारिणाम्।
योनिव्यापदिकेऽध्याये पुनर्व्वसुनिदर्शिता॥
यस्तु सम्यङ् न जानाति शास्त्र शास्त्रार्थमेव च।
न कुर्य्यात् स क्रियां चित्रमचक्षुरिव चित्रकृत्॥ १२६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृतेऽप्राप्ते दृढ़बलप्रतिसंस्कृते
चिकित्सितस्थाने योनिव्यापच्चिकित्सितं नाम
त्रिंशोऽध्यायः॥ ३०॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—भवन्ति चात्रेत्यादि। विंशतिरित्यादि। स्पष्टार्थाः श्लोका एते॥ १२६॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढबल-प्रतिसंस्कृत एव च।
योनिव्यापदिके त्रिंशेऽध्याये चैव चिकित्सिते। वैद्यगङ्गाधरकृते जल्प-
कल्पतरौ पुनः। चिकित्सितस्थानजल्पे षष्ठस्कन्धे चिकित्सिते।
योनिव्यापदिकाध्याय-जल्पाख्या त्रिंश्युदीरिता। इति
चिकित्सितस्थानं षष्ठं समाप्तम्, जल्पश्च
तस्य समाप्त इति॥ ३०॥

भवति तद् दोषादिक्षयस्य व्याधिवृद्धिजनकत्वात् तद्विपरीतमेव भवेत्। तत्र······इति कर्त्तव्या। किन्तु तत्क्षयस्तेन क्षये दोषादिसमानमेव विपरीतमिति न कश्चिद् दोषः॥ ११६—१२६॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां चिकित्सितस्थानव्याख्यायां योनिव्यापच्चिकित्सितं
नाम त्रिंशोऽध्यायः॥ ३०॥

त्रिंशदध्याये श्लोकसंख्या ५४६१॥

समाप्तमिदं षष्ठं चिकित्सितस्थानम्॥

॥ श्रीः॥

# चरक-संहिता।

## कल्पस्थानम्।

### प्रथमोऽध्यायः।

**अथातो मदनकल्पं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः॥ १॥**

गङ्गाधरः—अथ स्थानोद्देशक्रमात् चिकित्सितस्थानानन्तरं कल्पस्थानं व्याख्यातव्यम्। तत्राध्यायोद्देशानुक्रमात् प्रथमं मदनफलकल्पमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद् व्याख्येयम्॥ १॥

चक्रपाणिः—चिकित्सितस्थाने तु तत्र तत्र विहितवमनविरेचनयोः प्रयोगान् विस्तरेणाभिधातुं चिकित्साधिकृतयोगस्थानरूपकल्पस्थानमुच्यते। यद्यपि चिकित्सायां वस्तेरपि प्रतिपादितत्वात् वस्त्यभिधायकं सिद्धिस्थानमपि चिकित्साङ्गतयाभिधातव्यम्, तथापि पञ्चकर्म्मणामौत्सर्गिकप्रवृत्तौ वमनविरेचनपूर्व्विकैव वस्तिकर्म्मप्रवृत्तिर्भवतीति कृत्वा वमनविरेचनाभिधायकं कल्पस्थानमेव वस्त्यभिधायकसिद्धिस्थानादग्रेऽभिधीयते। वमनविरेचनानां कल्पस्तिष्ठत्यस्मिन्निति कल्पस्थानम्; कल्पाभिधानेऽपि विरेचनस्यौत्सर्गिकप्रवृत्तौ वमनपूर्व्विकैव प्रवृत्तिर्भवतीति विरेचनात् वमनस्य पूर्व्वत्वात् वमनकल्पा एवाग्रेऽभिधातव्याः; वमनकल्पेष्वपि वमनद्रव्यश्रेष्ठत्वान्मदनफलस्यैवादौ कल्पोऽभिधीयते, श्रेष्ठत्वञ्च मदनफलस्य, "वमनद्रव्याणां मदनफलानि श्रेष्ठतमान्याचक्षतेऽनपायित्वात्" इत्यनेनाऽत्रैव वक्ष्यति॥ १॥

अथ खलु वमनविरेचनार्थं मदनफलादित्रिवृतादीनां वमनविरेचनद्रव्याणां सुखोपभोग्यतमैः सहान्यैर्द्रव्यैर्विविधै-स्तद्योगानां क्रियाविधेः सुखोपायस्य सम्यगुपकल्पनार्थं कल्प-स्थानमखिलेनोपदेक्ष्यामोऽग्निवेश ॥ २ ॥

गङ्गाधरः—कल्पस्थानोपदेशे प्रयोजनमाह—अथ खल्वित्यादि। प्रथमाध्याये दीर्घञ्जीवितीये मूलिन्यस्तिस्रः शणपुष्पीविम्वीहैमवत्यः फलिन्यश्चाष्टौ धामार्गवेक्ष्वाकुजीमूतकृतवेधनमदनकुटजत्रपुषहस्तिपर्णिन्यो वमनार्थं द्रव्याण्युक्ताः, तथा विरेचनार्थं मूलिन्य एकादश हस्तिदन्तीश्यामात्रिवृदधोगुडासप्तला-प्रत्यक्श्रेणीगवाक्षीविषाणिकाऽजगन्धाद्रवन्तीक्षीरिण्यः फलिन्यश्च दश शङ्खिनी-विडङ्गद्विविधक्लीतक-प्रकीर्य्योदकीर्य्यान्तःकोटरपुष्पी-हस्तिपर्णी-कम्पिल्लका-रग्वधा उक्तास्तेषु मध्ये मदनफलादीनां वमनद्रव्याणां त्रिवृतादीनां विरेचन-द्रव्याणां क्रियाविधौ सुखकरत्वात् षड्विरेचनशताश्रितीयोक्तानां षण्णां शतानां योगानां सुखोपभोग्यतमैरन्यैर्विविधैर्द्रव्यैः सह योगेन सम्यगुपकल्पनार्थं कल्पस्थानमखिलेनोपदेक्ष्यामो न त्वितरेषां वमनविरेचनमूलिनीफलिनी-द्रव्याणां सम्यगुपकल्पनार्थं तथाविधसुखवमनविरेचनकरत्वाभावादिति ॥ २ ॥

चक्रपाणिः—कल्पार्थं दर्शयन्नाह—अथ खल्वित्यादि।—अथशब्दः प्राक्प्रस्तुते; खलुशब्दः प्रकाशने; वमनविरेचनार्थमिति वमननिमित्तं विरेचननिमित्तञ्च; वमनविरेचनद्रव्याणामिति मदनफलादित्रिवृदादीनाम्, अन्यैरिति सुरासौवीरकादैः कोविदारादिप्रकारैश्च, अन्यैरित्यस्य विशेषणम्—'सुखोपभोग्यतमैः' इति; अत्र सुखायोपभोगो येषां ते सुखोपभोगाः; तेन तदात्व-सुख उपभोगो येषां ते सुखोपभोगाः; तथाहि तदात्वसुखोपभोगानां कोविदारादीनां ग्रहणं स्यात्; कल्पनार्थमिति यदस्य क्रियया सम्बन्धमदर्शयित्वैव भवितुमकारि, तदव्याख्यानप्रत्ययनार्थं व्याकरोति—भेदार्थं विभागार्थञ्चेत्यर्थ इति; तत्र भेदार्थमिति वमनविरेचनद्रव्यप्रयोगभेदार्थम्, ते च प्रयोगभेदाः 'त्रिंशद्योगशतं मदनफलेषु' इत्यादिकाः। विभागार्थमिति 'अत्र फलपिप्पलीनां द्वौ भागौ कोविदारकषायेण' इत्यादिवक्ष्यमाणद्रव्यविभागार्थम्। उपोद्घातं समाप्य प्रकृतमाह। तद्योगानामिति वमनविरेचनद्रव्यप्रयोगाणाम्; क्रियाया इतिकर्त्तव्यतया विधिः क्रियाविधिः स्वरसादिरूपतया करणानीति यावत्; तस्य क्रियाविधेर्विशेषणम्—'सुखोपायस्य' इति, सुखार्थः सुखो वा उपायो यस्य स सुखोपायस्तस्य; क्रियाविधः सम्यगुपकल्पनार्थमिति सम्यग् उपदेशार्थम् ॥ २ ॥

तत्र दोषहरणमूर्द्ध्वभागं वमनसंज्ञकमधोभागं विरेचनसंज्ञकमुभयं वा शरीरमलविरेचनाद् विरेचनशब्दं लभते। तत्रोष्णतीक्ष्णश्लक्ष्णसूक्ष्मव्यवायिविकाशीन्यौषधानि स्ववीर्य्येण हृदयमुपेत्य धमनीरनुसृत्य सम्यग्युक्त्यानुस्रोतोभ्यः केवलं शरीरगतं दोषसङ्घातमाग्नेयत्वाद् विष्यन्दयन्ति, तैक्ष्ण्याद् विच्छिन्दन्ति। स विच्छिन्नः परिप्लवः स्नेहभाविते काये स्नेहाक्त-

गङ्गाधरः—ननु किं वमनं किञ्च विरेचनमित्यत आह—तत्रेत्यादि। ऊर्द्ध्वभागं दोषहरणमिह वमनसंज्ञकमधोभागं दोषहरणञ्चेह विरेचनसंज्ञकं भवति। तर्हि षड्विरेचनशतानीति यदुक्तं तत् किमधोभागं दोषहरणान्येव षट् शतानि भवन्तीत्यत आह—उभयं वेत्यादि। उभयं वमनविरेचनं वा उभयभागं वा दोषहरणं विरेचनसंज्ञं भवति। तेन वमनविरेचनानि षट्शतानीत्यभिप्रायेणोक्तं षड्विरेचनशतानि भवन्तीति। तर्हि शीर्षविरेचनमपि किं न विरेचनमित्यत आह—शरीरेत्यादि। शरीरमलविरेचनादिह विरेचनशब्दं यथा वमनविरेचनं लभते तथा शीर्षविरेचनास्थापनादिकं विरेचनशब्दं लभते इति उभयभागं दोषहरणादिति नोक्त्वा शरीरमलेत्युक्तम्। मदनफलादिकं कुतो हेतोरूर्द्ध्वभागं दोषं हरति त्रिवृतादिकन्त्वधोभागमित्यत आह—तत्रोष्णेत्यादि। उष्णादिगुणान्यौषधानि मदनफलादीनि आग्नेयत्वाद् विष्यन्दयन्ति, तैक्ष्ण्याद् विच्छिन्दन्ति। स दोषसङ्घातः विच्छिन्नः सन्

चक्रपाणिः—वमनविरेचनशब्दार्थं विभजते—तत्रेत्यादि। ऊर्द्ध्वं मुखेन दोषनिर्हरणं भजते इत्यूर्द्ध्वभागम्, अधो गुदेन दोषनिर्हरणं भजत इत्यधोभागम्। वमनविरेचनयोरपि कदाचिद् विरेचनसंज्ञां षड्विरेचनशताश्रितीयोक्तां दर्शयन्नाह—उभयमपीत्यादि। न चैवं सति वमनविरेचनवन्निरूहेऽपि विरेचनसंज्ञाप्रसक्तिः सम्भावनीया, यतः पङ्कजशब्दवदियं विरेचनसंज्ञा वमनविरेचनयोरपि योगरूढ्या वर्त्तते। सम्प्रति द्वयोरपि वमनविरेचनद्रव्ययोः साधारणोष्णतीक्ष्णत्वादिगुणयोगकृतदोषविष्यन्दनादि साधारणकार्य्यदर्शनपूर्व्वकमग्निवाय्वात्मकत्वादिविशिष्टधर्म्मयोगादिकृतं विशिष्टञ्च कार्य्यं वमनविरेचनं दर्शयन्नाह—तत्रोष्णेत्यादि। उष्णमिति उष्णवीर्य्यम्, स्ववीर्य्येणेति स्वप्रभावेण, धमनीरनुसृत्येति सकलदेहगतधमनीरनुसृत्य, सकलदेहगतधमन्यनुसरणञ्च वीर्य्येण ज्ञेयम्, न साक्षात्; आग्नेयत्वाद विष्यन्दयन्तीति विलीनं कुर्व्वन्तीति,

**भाजनस्थमिव क्षौद्रमसज्जन् प्रवणभावादामाशयमागम्योदान-प्रणुन्नोऽग्निवाय्वात्मकत्वादूर्द्ध्वभागप्रभावादौषधस्योर्द्ध्वमुद्भिद्यते। सलिल-पृथिव्यात्मकत्वादधोभाग प्रभावादौषधस्याधः प्रवर्त्तते, उभयतश्चोभयगुणत्वादिति लक्षणोद्देशः ॥ ३।४ ॥**

परिप्लवः सर्व्वतः प्लावितः संश्च स्नेहभाविते काये स्नेहाक्तभाजनस्थं क्षौद्रं यथा न तद् भाजने सज्जते तथा असज्जन् प्रवणभावात् प्लावनत्वादामाशयमुपेत्य उदानप्रणुन्नः सन्नग्निवाय्वात्मकत्वादूर्द्ध्वभागप्रेरणप्रभावादौषधस्योर्द्ध्वमुद्भिद्यते। प्रवणेति प्रुप्लु गतौ धातुः सन्तरणादिगतिविशेषार्थत्वात् प्रवणं प्लवनमित्येकोऽर्थः। सलिलेत्यादि। एवं सलिलपृथिव्यात्मकत्वादधोभागप्रेरणप्रभावादौषधस्याधः प्रवर्त्तत इति। पूर्व्ववद्दोषसङ्घात उष्णतीक्ष्णादिगुणैर्व्विरेचनद्रव्यैः स्ववीर्य्येणा-माशयमुपेत्य धमनीरनुसृत्य सम्यग्युक्तया स्रोतोभ्यो विष्यन्द्यते केवलशरीर-गतः। तैक्ष्ण्याद् विच्छिद्यते। स विच्छिन्नः परिप्लवः स्नेहभाविते काये स्नेहाक्त-भाजनस्थक्षौद्रमिवासज्जन् प्रवणभावादामाशयमागम्यापानप्रणुन्न औषधस्य सलिलपृथिव्यात्मकत्वादधोभागप्रेरणप्रभावादधः प्रवर्त्तते। ऊर्द्ध्वज्वलनत्वादग्नेः

विच्छिन्दन्ति छिन्नं कुर्व्वन्ति। परिप्लव इतस्ततो गच्छन्, असज्जन्निति न क्वचिदपि सङ्गं गच्छन्, अणुप्रवणभावादिति अणुत्वात् प्रवणभावाच्च, प्रवणत्वमिह कोष्ठगमनोन्मुखत्वम्, अणुत्वञ्च अणु-मार्गसञ्चारित्वम्, उदानप्रणुन्न इति उदानवायुप्रेरितः, अग्निवाय्वात्मकत्वादिति अग्निवायूत्कर्ष-वत्त्वात्, ऊर्द्ध्वभागप्रभावादिति ऊर्द्ध्वभागदोषहरत्वरूपप्रभावात्। एवं सलिलपृथिव्यात्मकत्वमपि व्याख्येयम्। उभयतश्चेति ऊर्द्ध्वमधश्च क्षिप्यत इत्यर्थः, उभयगुणत्वादिति अग्निवाय्वात्मकत्वात् सलिलपृथिव्यात्मकत्वादूर्द्ध्वाधोभागप्रभावाच्चेत्यर्थः। इति लक्षणोद्देश इति अनन्तरग्रन्थेन वमन-विरेचनतद्द्रव्यस्वरूपाभिधानं कृतमित्यर्थः। अत्र च प्रकरणे सामान्येनैव वमनविरेचनद्रव्याणां "आग्नेयत्वाद् विष्यन्दयन्ति" इत्यनेनाग्नेयत्वं प्रतिपादितम्, पुनश्च विशेषेण 'अग्निवाय्वात्मक-त्वाद्' इति पदेन वमनद्रव्यस्याग्न्यात्मकत्वं प्रतिपाद्यते, तेन सामान्ये विशेषे च वमनद्रव्याणा-माग्नेयत्वप्रतिपादनात् प्रकृष्टमाग्नेयत्वं भवति, विरेचनद्रव्याणान्तु सामान्योक्ताग्नेयत्वसम्बन्धात् विशेषगुणकथनप्रस्तावे च सलिलपृथिव्यात्मकत्वाभिधानात् वमनद्रव्यापेक्षयापकृष्टमाग्नेयत्वं भवति, तथाहि सुश्रुतेऽपि वमनविरेचनयोरप्याग्नेयत्वम्, "लघुत्वसूक्ष्मतीक्ष्णोष्णविकाशित्व-र्विरेचनम्। वमनञ्च हरेद् दोषान् प्रकृत्या कृतमन्यथा" इत्यनेन, यच्चात्रोच्यते—वमनं यदि ऊर्द्ध्व-भागहरत्वप्रभावादूर्द्ध्वयति, तदाऽग्निवाय्वात्मकत्वादिति हेतुवर्णनं न युज्यते, यतः, यत् सोपपत्ति कार्य्यम्, न तत् प्रभावकृतमिति व्यपदिश्यते, उक्तं हि—"प्रभावोऽचिन्त्य उच्यते" इति, तन्न;

तत्र फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनानाम्, श्यामा-त्रिवृच्चतुरङ्गुल-तिल्वक-महावृक्षसप्तला-शङ्खिनीदन्तीद्रवन्तीनाम्, नानाविधदेशकालसम्भव-स्वादुरसवीर्य्यविपाकप्रभावग्रहणानाम्, देहदोषप्रकृतिवयोबलाग्निभुक्तिसात्म्यरोगावस्थादीनां नानात्मकत्वाच्च विचित्रगन्धवर्णरसस्पर्शानामुपभोगसुखार्थमपरि-

प्लवनत्वाद् वायोरग्निवाय्वात्मकद्रव्येण वमनम्। निम्नगत्वस्वभावात् सलिलस्य गुरुत्वात् पृथिव्याः सलिलपृथिव्यात्मकेन द्रव्येण विरेचनं भवति। उभयतश्चोभयगुणत्वादिति। यद् द्रव्यमग्निवायुसलिलपृथिव्यात्मकं तदूर्द्ध्वाधोगमनप्रभावादुभयतोभागहरं तेन दोषसङ्घात उभयतश्च प्रवर्त्तते। इति वमनविरेचनलक्षणोद्देशः संक्षेपेण वचनमिति ॥ ३।४ ॥

गङ्गाधरः—तत्रेत्यादि। तत्र वमनविरेचनद्रव्येषु मध्ये मदनफलादीनां षण्णां वमनद्रव्याणां श्यामादीनां नवानां विरेचनद्रव्याणां नानाविधदेशादिसम्भवात् स्वाद्वादिग्रहणानां देहादिनानात्वाच्च विचित्रगन्धादीनामुपभोगसुखार्थम्

यतः प्रभावस्यैवेह वमनकार्य्ये वाय्वग्न्यात्मकगुणतया वाय्वग्न्यात्मकत्वं हेतुरुपदिश्यते, न तु वाय्वग्न्यात्मकत्वं स्वतन्त्रो वमनहेतुः, तथाहि सति यदन्यदपि वाय्वग्न्यात्मकम् ऊर्द्ध्वभागदोषहरत्वप्रभावरहितम्, तदपि वमनकरं स्यात्, यथा कटुकरसे द्रव्ये तत् स्यात्, तस्मात् प्रभावगुणतयैव हेतुवर्णनम्, एवं विरेचनद्रव्येऽपि पूर्व्वपक्षसिद्धान्तावनुसर्त्तव्यौ ॥ ३ । ४ ॥

चक्रपाणिः—सम्प्रति कल्पस्थानस्य वक्तव्यतया षड् विरेचनप्रयोगशतान्यनतिसंक्षेपविस्तरप्रयोगोपदर्शनपूर्व्वकं प्रतिजानीते—तत्र फलेत्यादिना "षड्विरेचनयोगशतानि व्याख्यास्यामः" इत्यनेन। तत्र कृतवेधनान्तानां विच्छेदपाठे वमनप्रयोगप्रयोज्यत्वम्, श्यामादीनां विरेचनप्रयोगप्रयोज्यत्वञ्च दर्शयति, अत्रैव वमने विरेचने चैकैकेषान्तु पुनर्वस्तूनां मदनफलादीनां श्यामादीनाञ्च बहवः प्रयोगा अभिधीयन्ते, न पुनरेकैकमेव द्रव्यं वमनकारकं विरेचनकारकम्, स्वल्पसंख्याप्रयोगेण ग्रहणसुखता वमनविरेचनयोगस्य भवति, कार्य्यञ्च सिध्यतीत्याशङ्क्याह—नानाविधेत्यादि। यावद्रोगावस्थादिनानाप्रभाववत्त्वाच्चेति। अस्यार्थः—यस्मान्नानाविधदेशकालसम्भवाः नानाविधास्वादाः नानाविधवीर्य्याः नानाविधविपाकाः नानाविधप्रभावाश्च मदनफलादिकाः ओषधयः, तथा तत्संस्कारकाः कोविदारादिका ओषध्य उपलभ्यन्ते, पुरुषाश्च देहदोषप्रकृतिवयोबलाग्निभक्तिसात्म्यरोगावस्थाभिन्ना नानाविधा दृश्यन्ते, तेन नैकद्रव्यं सर्व्वस्मिन् देहदोषादौ

संख्येयोपयोगानामपि च सतां द्रव्याणां विकल्पमार्गोपदर्शनार्थं षड़्विरेचनयोगशतानि व्याख्यास्यामः ॥ ५ ॥

तानि तु द्रव्याणि देशकालगुणभोजनसम्यग्वीर्य्यबलाधानात् क्रियासमर्थतमानि भवन्ति ॥ ६ ॥

त्रिविधः खलु देशो जाङ्गलोऽनूपः साधारणश्चेति तत्र जाङ्गलः पर्य्याकाशभूयिष्ठः, तरुभिरपि कदरखदिराशनाश्वकर्ण-

अपरिसङ्ख्येयोपयोगानामपि च सतां विकल्पमार्गोपदर्शनार्थं षड़्विरेचनयोगशतानि व्याख्यास्यामो विस्तरेण वक्ष्यामः, षड्विरेचनशताश्रितीये यस्य यस्य मदनफलादेर्यावन्तो यावन्तो योगा उक्ता न त्वन्येषाम्। कस्मात्? तानि तु द्रव्याणि देशकालादिबलाधानात् क्रियासमर्थानि भवन्ति। नैवमन्यानि क्रियासमर्थानि स्युः ॥ ५।६ ॥

गङ्गाधरः—तत्र देशमाह—त्रिविध इत्यादि। तत्र जाङ्गल इति। पर्य्याकाशभूयिष्ठः परि सर्व्वतो दिक्षु आकाशभूयिष्ठो यो देशस्तरुभिरपि च

यौगिकं सर्व्वत्र काले वा प्राप्यते सर्व्वत्र देशे वा ; तस्माद्देहदोषादिना भेदवति पुरुषे बहून्येव द्रव्याणि बहुभिश्च प्रयोगैरुपकल्पितानि यथायोग्यतया यथाप्राप्ति च प्रयोक्तुं शक्यन्ते ; अतो बहूनामेव मदनादिद्रव्याणां बहुप्रकारप्रयोगाणामुपन्यासो युक्त इति भावः। ग्रहणादुपलम्भनात्, देहो नाना स्थूलकृशादिभेदेन ; भक्तिरिच्छा, अवस्थाशब्देनेह रोगावस्थैव ग्राह्या ; आदिशब्देनेह ऋत्वाहारयोर्ग्रहणम् ; भूरिविरेचनप्रयोगोपदर्शनप्रयोजनान्तरमप्याह—विविधेत्यादि। नानाविधगन्धवर्णरसतयानुपयोगे तत्कालमुत्तरकालञ्च सुखानुवादार्थञ्चेत्यर्थः। अथ प्रभेदान्मदनफलादीनां षट्प्रयोगशतानि भवन्ति ; येन नाधिक्यं प्रयोगाणामभिधीयत इत्याशङ्क्याह—असंख्येयेत्यादि। विकल्पमार्गोपदर्शनार्थमिति, अधिकप्रयोगकल्पनार्थमभिधीयते, एतत् षट्प्रयोगशतोपदर्शनं कर्त्तव्याधिकप्रयोगकल्पनामार्गोपदर्शकम् ; तेन परेऽप्यत्र प्रयोगाः कल्पनीयाः, ग्रन्थे निःशेषप्रयोगानभिधानं प्रयोगाणामसंख्येयत्वेनाशक्यत्वादेव ; अनतिविस्तरषट्प्रयोगशताभिधानं, मन्दबुद्धिसम्व्यवहारार्थमिति भावः ; उक्तं ह्यन्यत्र—"एतावन्तो ह्यल्पबुद्धीनां व्यवहाराय बुद्धिमताञ्च स्वालक्षण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानाय" इति ॥ ५ ॥

चक्रपाणिः—सम्प्रति वमनविरेचनद्रव्याणां देशादिसम्पत्त्या गुणोत्कर्षं दर्शयन्नाह—तानीत्यादि। देशादिभिश्चतुर्भिः 'सम्पत्'शब्दः प्रत्येकमभिसम्बध्यते ; भाजनं भेषजस्य स्थानम् ; वीर्य्यस्य बलं वीर्य्याधिकत्वमेव। देशादि सम्यक् व्याकुर्व्वन्नाह—तत्र त्रिविध इत्यादि। तत्र

धवतिनिशशल्लकीशालसोमवल्कबदरीतिन्दुकाश्वत्थवटामलकोवनगहनः अनेकशमीककुभशिंशपाप्रायः स्थिरशुष्कपवनबलविधूयमानप्रनृत्यत्तरुणविटपः प्रततमृगतृष्णाकूपोपगूढ़स्तनुखरपरुषसिकताशर्कराबहुलः लावतित्तिरिचकोरानुप्रचितभूमिभागो वातपित्तबहुलः स्थिरकठिनमनुष्यप्रायो ज्ञेयः ॥ ७ ॥

अथानूपो हिन्तालतमालनारिकेलकदलीवनगहनः सरित्समुद्रपर्य्यन्तप्रायः शिशिरपवनबहुलो वञ्जुलवनवानीरोपशोभिततीराभिः सरिद्भिरुपगतभूमिभागः अक्षितिधरनिकुञ्जोपशोभितो मन्दपवनानुवीजितक्षितिरुहगहनोऽनेकवनराजीपुष्पितवनगहनभूमिभागः स्निग्धतरुप्रतानोपगूढ़ो हंसचक्रवाकबलाकानन्दीमुखपुण्डरीककादम्बमद्गुकोयष्टिभृङ्गराजशतपत्रमत्तकोकिलानुनादिततरुणविटपः सुकुमारपुरुषः पवनकफप्रायो ज्ञेयः ॥ ८ ॥

अनयोरेव द्वयोर्देशयोर्वीरुद्वनस्पतिवानस्पत्यशकुनिमृगगणयुतः स्थिरसुकुमारबलसंहननोपपन्नः साधारणगुणयुक्तपुरुषः साधारणो ज्ञेयः ॥ ६ ॥

कदरादिभिर्वनगहनो निविड़वनः । अनेकशमीवृक्षादिप्रायः । स्थिराश्च शुष्काश्च पवनविधूयमानाश्च प्रनृत्यन्त इव तरुविटपा यत्र सः । प्रततमृगतृष्णाकूपगूढ़स्तत्र देशे तनुखरादिसिकताशर्कराबहुलो लावादिप्रचितो भूमिभागः । वातपित्तबहुलः स्थिरादिमनुष्यप्रायो जाङ्गलो देशो ज्ञेयः ॥ ७ ॥

गङ्गाधरः—अथेत्यादि । हिन्तालादिवनगहनः, अक्षितिधरः पर्व्वतहीनो निकुञ्जोपशोभितः, हंसाद्यनुनादिततरुणविटपः, सुकुमारः मृदुकोमलशरीरादिः पुरुषो यत्र । पवनकफप्रायो देश आनूप उच्यते ॥ ८ ॥

गङ्गाधरः—अनयोरित्यादि । अनयोरेव द्वयोर्जाङ्गलानूपयोर्देशयोर्ये वीरुधादयस्तैर्युतः । स्थिरादिभावोपपन्नाः साधारणगुणयुक्ताः पुरुषा यत्र स साधारणो देशो ज्ञेयः ॥ ९ ॥

केचिज्जाङ्गलादिदेशलक्षणग्रन्थं न पठन्ति, तत् तु जनपदोद्ध्वंसनीये पठितमिति कृत्वेहानार्षं वदन्ति ।

तत्र देशे जाङ्गले साधारणे वा यथाकालं शिशिरातपपवनसलिलसेविते शुचौ प्रदक्षिणे श्मशानचैत्यदेवायतनागारसभाश्वभ्ररोमवल्मीकोषरविरहिते कुशरोहिषास्तीर्णस्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा मृदावफालकृष्टेऽनुपहतेऽन्यैर्बलवत्तरैर्द्रुमैरौषधानि जातानि प्रशस्यन्ते ॥ १० ॥

तत्र यानि कालजानि पर्य्यागतसम्पूर्णप्रमाणरसवीर्य्यगन्धानि कालातपाग्निसलिलपवनजन्तुभिरनुपहत-गन्धरसस्पर्शवर्ण- प्रभावाणि प्रत्यग्राणि *, तेषां शाखापलाशमचिरप्ररूढ़ं वर्षावसन्तयोर्ग्राह्यं ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढ़पर्णानां शरदि त्वक्कन्दक्षीराणि हेमन्ते साराणि पर्णपुष्पफलमिति।

गङ्गाधरः—तत्रेत्यादि। तेषु मध्ये जाङ्गले साधारणे वा देशे यथाकालं शिशिरादिसेविते शुचौ प्रदक्षिणेऽनुकूले श्मशानादिविरहिते कुशाद्यास्तीर्णे स्निग्धादिमृत्तिके सुवर्णवर्णमृत्तिके वा मृदावफालकृष्टेऽन्यैर्बलवत्तरैर्द्रुमैरनुपहते स्थाने जातान्यौषधानि प्रशस्यन्ते ॥ १० ॥

गङ्गाधरः—तत्रेत्यादि। तत्र यानि कालजानि यानि पर्य्यागतसम्पूर्णप्रमाणादीनि तेषां शाखापलाशमचिरप्ररूढ़ं वर्षावसन्तयोर्ग्राह्यं ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढ़पर्णानां मूलानि। शरदि त्वगादीनि। हेमन्ते

चैस्तु जनपदोद्ध्वंसनीयजाङ्गलादिलक्षणं न पठ्यते, तैरत्र पठनीय एवायं ग्रन्थः। यथाकालमिति यथाकालं शिशिरादिभिः सेविते देशे, श्मशानादिभिः प्रत्येकं विरहितशब्दः सम्बध्यते, सभा जनमेलकस्थानम्, न फालेन कृष्ट इत्यफालकृष्ट ॥ ६—१० ॥

चक्रपाणिः—तत्र यानि कालजातानीत्यनेनैव कालसम्पदुच्यते। कालजातानीति स्वकालभूतानि। उपागतसम्पूर्ण इत्यादिना प्रत्यग्राणि इत्यन्तेन गुणसम्पदुच्यते। प्रत्यग्राणीति सम्पूर्णगुणतया निष्पन्नानि, तेषां शाखापलाशमित्यादिना कालसम्पदुक्तां प्रपञ्चयति, शाखाग्रहणेनैव त्वगादीनामपि ग्रहणम्। शीर्णप्ररूढ़पर्णानामितिच्छेदः। ग्रीष्मे मूलानि शिशिरे चेति कथनेन यान्याग्नेयानि तेषां मूलानि ग्रीष्मे, यानि सौम्यानि तेषां मूलानि शिशिरे ग्राह्याणीति व्यवस्थां सूचयति, उक्तं

* इतःपरम् 'उदीच्यां दिशि स्थितानि' इत्यधिकः पाठो बहुषु ग्रन्थेषु दृश्यते।

मङ्गलाचारकल्याणवृत्तः शुचिः शुक्लवासाः संपूज्य देवतामग्निमश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात्। गृहीत्वा चानुरूपगुणवद्भाजने संस्थाप्यागारेषु प्रागुत्तरद्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहारबलिकर्म्मवत्स्वग्निसलिलोपस्वेदधूमरजोमूषकचतुष्पदामनभिगमनीयानि स्ववच्छन्नानि सिक्ये च स्वासज्य स्थापयेत्।

तानि च यथादोषमुपयुञ्जीत। सुरासौवीरकतुषोदकमैरेयमेदकधान्याम्बुफलाम्बुदध्यादिभिर्वाते, मृद्वीकामलकमधुकपरूषकफलफाणितक्षीरादिभिश्च पित्ते, श्लेष्मणि तु मधुमूत्रकषायादिभिर्भावितान्यालोड़ितानि चेत्युद्देशः। तं विस्तरेण द्रव्यदोषदेहसात्म्यादीन् प्रविभज्य व्याख्यास्यामः ॥ ११ ॥

साराणि पर्णपुष्पफलञ्चेति। मङ्गलेत्यादि। मङ्गलाचारकल्याणवृत्तादिः पुमान् तत्तत्शाखापलाशादीनि गृह्णीयात्। गृहीत्वेत्यादि। यद् द्रव्यं यद्गुणं तद्गुणानुरूपगुणवद्भाजने प्रागुदग्द्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहारादिमत्स्वागारेषु संस्थाप्याग्न्यादीनामनभिगमनीयानि सुष्ठु अवच्छन्नानि तानि द्रव्याणि सिक्ये सुष्ठु आसज्य स्थापयेत्। तानीत्यादि। तानि यथोक्तशाखापलाशादीनि द्रव्याणि यथादोषं सुरादिभिर्भावितान्यालोड़ितानि वाते उपयुञ्जीत, मृद्वीकादिभिः पित्ते, मधुमूत्रादिभिः श्लेष्मणि इत्युद्देशः संक्षेपवचनम्। तं प्रयोगं विस्तरेण ॥ ११ ॥

ह्यन्यत्र—"सौम्यान्यौषधानि सौम्येषु आददीत, आग्नेयान्याग्नेयेषु" इति। भेषजग्रहणविधानमाह—मङ्गलेत्यादि। भाजनसम्पदमाह—अनुरूपेत्यादि। अनुरूपगुणवद्भाजनस्थमिति अनुरूपगुणवत्ता च भाजनस्य भेषजसमानगुणतयैव। स्ववच्छन्नानीति सम्यक् पिहितानि। संक्षेपेण मदनफलादीनां वातादिभेदेन भावनालोड़नद्रव्याण्याह—तानि च यथादोषं प्रयुञ्जीतेत्यादि। धान्याम्लं काञ्जिकम्। फलाम्लं दाड़िमरसादि। श्लेष्मणीत्यादौ कषायशब्देन श्लेष्महरद्रव्यक्वाथोऽभिप्रेतः। उद्देश इति संक्षेपाभिधानमिति। द्रव्यदेहदोषसात्म्यादीनित्यत्र आदिशब्देन प्रकृतिबलादीनां ग्रहणम् ॥ ११ ॥

वमनद्रव्याणां मदनफलानि श्रेष्ठतमान्याचक्षतेऽनपायित्वात्, तानि वसन्तग्रीष्मयोरन्तरेषु पुष्याश्वयुग्भ्यां मृगशीर्षेण वा गृह्णीयात् मैत्रे मुहूर्त्ते, करणे च यानि पक्वान्यहरितानि पाण्डून्यक्रिमीण्यकुशाल्पहस्वाल्पपूतानि प्रगृह्य कुशपुटे बद्ध्वा गोमयेनानुलिप्य यवतुषमाषशालिव्रीहिकुलत्थमुद्गपर्णानामन्यतमेनाच्छाद्य चाष्टरात्रं निदध्यात्। अत ऊर्द्ध्वं मृदुभूतानि मध्विष्टगन्धान्युद्धृत्य शोषयेत्, शुष्काणां फलानां पिप्पलीरुद्धरेत्। तासां घृतमधुदधिपललविमृदितानां पुनः शुष्काणां तासां नवं कलसं प्रमृज्य वालुकारजस्कमाकण्ठं पूरयित्वा स्ववच्छन्नं स्वनुगुप्तं सिक्ये स्वासज्य स्थापयेत् ॥ १२ ॥

अथ छर्द्दनीयं द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नं श्वश्छर्द्दि-

गङ्गाधरः—तत्रादौ श्रेष्ठत्वान्मदनफलकल्पमाह—वमनेत्यादि। अश्वयुगश्विनी, मैत्रे मुहूर्त्ते शुभमुहूर्त्ते, करणे च यानि मदनफलानि पक्वानीत्येवमादीनि तानि प्रगृह्य कुशपुटे बद्ध्वा गोमयेनानुलिप्य यवाद्यन्यतमेनाच्छाद्य च निदध्यादष्टरात्रम्। अत ऊर्द्ध्वमष्टरात्रात् परं मृदुभूतानि मधुवदिष्टगन्धानि उद्धृत्य शोषयेत्। शुष्काणां तेषां मदनफलानां पिप्पलीः कणा उद्धरेत्। तासां मदनफलपिप्पलीनां घृतादिमृदितानां पुनः शुष्काणां तासां मदनफलपिप्पलीनां नवं कलसं प्रमृज्याकण्ठं वालुकारजस्कं पूरयित्वा सुष्ठु चावच्छन्नं सुनिगुप्तं सिक्ये स्वासज्य स्थापयेत्। पूरणार्थयोगे षष्ठी तासामिति करणार्थे॥ १२॥

गङ्गाधरः—अथ वमनकरणप्रकारमाह—अथेत्यादि। द्व्यहं त्र्यहं वा स्नेह-

चक्रपाणिः—वमनद्रव्याणामित्यादिना मदनफलस्य प्राधान्योपदर्शनपूर्व्वकं प्रयोगविधिमाह। अनपायित्वादिति वमनद्रव्यान्तरापेक्षयाऽल्पव्यापत्तिकत्वात्। अन्तर इति मध्ये, स च ग्रीष्मवसन्तयोरन्तर्वर्त्तिकतिपयदिनान्येव मध्यो ज्ञयः। अश्वयुक् अश्विनी। मैत्रे मुहूर्त्ते इति शिवभुजगमित्रादीनां मध्ये मित्रदेवताक एव मैत्रे मुहूर्त्ते। फलानामिति राशीनाम्; मधुवदिष्टगन्धो येषां तानि, यानि मध्विष्टगन्धानि भवन्ति, तानि ग्राह्याणीति दर्शयति। फलपिप्पलीरिति मदनफलमध्यगतानि पिप्पलीसंस्थानि वीजानि। पूर्णं तासामिति पूरणार्थशब्दयोगात् करणे षष्ठी। स्वनुगुप्तमिति कृतरक्षाविधानम् ॥ १२ ॥

चक्रपाणिः—द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नमित्यनेन अभ्यङ्गे क्रियमाणे स्नेहसहचरितस्वेदोप-

तव्यमिति ग्राम्यानूपौदकमांसरसक्षीरदधितिलमाषतण्डुलपललशाकादिभिः समुत्क्लेशितश्लेष्माणं व्युषितं जीर्णाहारं पूर्व्वाह्णे कृतहोमबलिमङ्गलप्रायश्चित्तं निरन्नमनतिस्निग्धं यवाग्वा घृतमात्राश्च पीतवन्तम्, तासां फलपिप्पलीनामन्तर्नखमुष्टिं यावद् वा साधु मन्येत जर्ज्जरीकृत्य यष्टिमधुकषायेण कोविदारकर्व्वुदारनीपविदुलबिम्बीशणपुष्पी- सदापुष्पीप्रत्यक्पुष्पीकषायाणामन्यतमेन वा रात्रिमुषितविमृदितं मधुसैन्धवसंयुक्तं सुखोष्णं कृत्वा पूर्णं शरावं मन्त्रेणाभिमन्त्रयेत् ।

क्रियया स्निग्धं ततः स्वेदेन स्विन्नं छर्द्दनीयमातुरं श्वः परस्मिन्नहनि छर्द्दयितव्यमिति कृत्वा पूर्व्वदिने ग्राम्यादिमांसरसक्षीरादि पललं मांसं भक्षयित्वा समुत्क्लेशितश्लेष्माणं व्युषितं रात्रौ कृतवासं जीर्णाहारं प्रातःकाले कृतहोमादिकं निरन्नमनतिस्निग्धं तं जनं यवाग्वा घृतमात्रां पीतवन्तम्, तासां पूर्व्वस्थापितानां मदनफलपिप्पलीनामन्तर्नखमुष्टिपरिमितमथवा यावन्मात्रेण सम्यग्वमनं भवतीति मन्येत तावन्मात्रं जर्ज्जरीकृत्य श्लक्ष्णं पिष्ट्वा यष्टिमधुकषायेण कोविदारादीनाम् अन्यतमेन कषायेण वा रात्रिमुषितं प्रातर्विमृदितं घृतमधुसंयुक्तं सुखोष्णं कृत्वा

पादनं द्व्यहं त्र्यहं वा विधीयते, "त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः" इत्यनेन तथाप्रयुज्यमानस्नेहस्य सप्तरात्रं त्रिरात्रं वा प्रकर्ष उच्यते इति न विरोधः । एतच्चाभ्यङ्गस्वेदसहितस्नेहस्वेदकरणं पानस्नेहान्तदिवसमारभ्य क्रियते, तेन स्नेहपानविश्रामदिनेन समं तदन्तपूरणमभ्यङ्गस्नेहसहितस्वेदप्रयोगस्य भवति ; स्नेहपानाच्च यद् विश्रामदिनम्, 'एकाहात् परतस्तद्वद् भुक्त्वा प्रच्छर्द्दनं पिबेत्' इत्यनेनोक्तम्, तथैवेहापि । कफोत्क्लेशकारिभोजनमाह— छर्द्दयितव्यमित्यादिना । श्व इति परस्मिन्नह्नि । व्युषितमिति रात्रिमतिक्रान्तम् । निरन्नमिति पक्षच्छेदः । अनतिस्निग्धमित्यादिना वमनदिन एव घृतमात्रायुक्तयवागूपानपूर्व्वकं वमनमनतिस्निग्धपुरुषविषयं ब्रूते । अन्ये तु पूर्व्वदिन एवानतिस्निग्धस्य घृतमात्रां पीतवत एव यवाग्वाः पानमाहुः—"स्निग्धस्विन्नाय वमनं दत्तं सम्यक् प्रवर्त्तते ; अथापरेद्युः पूर्व्वाह्णे साधारणे काले वमनद्रव्यकषायकल्कचूर्णस्नेहानामन्यतमस्य" इत्यादि सुश्रुतोक्तेः । अन्तर्नखमुष्टिमिति अन्तरीकृतनखमुष्टिपरिमाणम्, यावद् वा साधु मन्येत इत्यनेन मात्राया बलदोषादिभेदेनास्थिरत्वमित्याह । यष्टीमधुकस्य कोविदारादिषु विच्छेदपाठ उत्तरप्रयोगेषु कोविदारादेर्यष्टीमधुविरहितस्य ग्रहणार्थः, कोविदारः स्वनामख्यातः, स शरदि पुष्पति । कर्व्वुदारस्तु काञ्चनारः, स वसन्ते पुष्पति । नीपः कदम्बः, विदुलो वेतसः । शणपुष्पी घण्टारवा, सदापुष्पी अर्कपुष्पिका, प्रत्यक्पुष्पी अपामार्गः ।

ओँ ब्रह्मदक्षाश्विरुद्रेन्द्र-भूचन्द्रार्कानिलानलाः।
ऋषयः सौषधग्रामा भूतसङ्घाश्च पान्तु ते ॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥

इत्येवमभिमन्त्र्य भिषगुदङ्मुखः प्राङ्मुखं पाययेत्। श्लेष्मज्वरगुल्मप्रतिश्यायार्त्तं विशेषेण पुनःपुनः आ पित्तागमात्, तेन साधु वमतीति ॥ १३ ॥

हीनवेगन्तु पिप्पल्यामलकवचासर्षपकल्कलवणोष्णोदकैः पुनःपुनः प्रवर्त्तयेदा पित्तदर्शनादिति। एष सर्व्वच्छर्द्दनीययोगविधिः। सर्व्वेषु मधुसैन्धवं कफविलयनच्छेदनार्थं वमनेषु विदध्यात्। न चोष्णविरोधो मधुनश्छर्द्दनयोगयुक्तस्यापकप्रत्यागमनाद् दोषनिर्हरणाच्चेति ॥ १४ ॥

पूर्णं शरावं मन्त्रेण वक्ष्यमाणेनात्रैवाभिमन्त्रयेत्। मन्त्रमाह—ओमित्यादि। ब्रह्मदक्षाश्वीत्यादि अस्तु ते इत्यन्तेन मन्त्रेणाभिमन्त्र्य प्राङ्मुखमातुरमुदङ्मुखो वैद्यः पाययेत् तत् पूर्णं शरावमौषधम्। श्लेष्मज्वराद्यार्त्तं विशेषेण पुनःपुनरा पित्तागमनात्। तेन साधु वमतीति ॥ १३ ॥

गङ्गाधरः—यदि तेनौषधेनाल्पवेगः स्यात् तत्राह—हीनेत्यादि। पीतवमनौषधं पुरुषं हीनवेगं पिप्पल्यादिर्मिश्रितोष्णजलैः पीतैः पीतः पुनःपुनरा पित्तदर्शनात् प्रवर्त्तयेत्। इत्येष सर्व्वच्छर्द्दनीययोगविधिः। सर्व्वेषु वमनेषु योगेषु कफस्य विलयनार्थं छेदार्थञ्च मधुसैन्धवं विदध्यात्। ननु मधु

रात्रिमुषितं पर्य्युषितमिति शृतकषायात् कषायान्तरोपदर्शनं पक्षान्तरम्, किंवा कषायपान एव शीतकषायविधानमिहोच्यते। पूर्णं शरावमिति मङ्गलार्थं पूर्णकुम्भवत्। पुनःपुनरिति यावत् पित्तागमनं न भवति, तावत् पुनःपुनः कषायं पिबेदित्यर्थः, अन्यत्राप्युक्तम्—"पित्तान्तमिष्टं वमनं विरेकादर्द्धम्" इत्यादि ॥ १३ ॥

चक्रपाणिः—वमनाऽयोगकारकहीनवेगप्रवृत्तिप्रतिकारार्थमाह—हीनवेगमित्यादि। यद्यपि चोष्णत्वाद् वमनयोगेषु मधुसैन्धवयोगो न भवति, तथापि 'सर्व्वेषु' इति पदं बाहुल्यार्थम्, वमनार्थकषाये उष्णे मधु प्रक्षेपविरोधित्वान्न युज्यते, उक्तं हि—'मधूष्णमुष्णार्त्तमथवा" इत्यादि। एव-

**फलपिप्पलीनां द्वौ भागौ कोविदारादिकषायेण त्रिःसप्तकृत्वो भावयेत्*, तेन रसेन तृतीयं भागं पिप्पलीः पिष्ट्वा हरीतकीभिर्विभीतकैरामलकैर्वा तुल्या वर्त्तयेत्। तासामेकां द्वे वा पूर्व्वोक्तानामेव कषायाणामन्यतमस्याञ्जलिमात्रेण विमृद्य बलवच्छ्लेष्मप्रसेकग्रन्थिज्वरोदरादिषु पाययेदिति समानं पूर्व्वेण ॥ १५ ॥**

चोष्णविरुद्धं कथमिहोष्णवमनयोगे विदध्यादित्यत आह—न चेत्यादि। न चोष्णविरोधोऽत्र मधुनः, कस्मात्? छर्द्दनयोगयुक्तस्य मधुनः खलु जाठराग्निना त्वपक्वस्यैव प्रत्यागमनाद् दोषनिर्हरणाच्चेति। अथ षड्विरेचनशताश्रितीये यदुक्तम्—"त्रयस्त्रिंशद्योगशतं प्रणीतं फलेष्वि"ति तन्मदनफलेषु त्रयस्त्रिंशदधिकशतयोगा उद्दिष्टास्तेषु यष्टिमधुकोविदारादीनां नवानां कषाययोगेन मदनफलस्य नव योगा इमे प्रोक्ताः ॥ १४ ॥

<u>गङ्गाधरः</u>—अथापरानष्टौ योगानाह—फलपिप्पलीनामित्यादि। उक्तरूपाणां मदनफलपिप्पलीनां द्वौ भागौ पूर्व्वोक्तकोविदारादीनामष्टानां कषायेण त्रिःसप्तकृत्व एकविंशतिं वारान् भावयेत्। ततस्तेनाष्टविधकषायेषु येन भावितं भागद्वयं तेनैव कषायेण तद्भिन्नमपरमेकं भागं गृह्णीयात्, तं तृतीयभागं मदनफलं पिष्ट्वा मिलितत्रिभागा मदनफलपिप्पलीर्हरीतकीविभीतकामलकैस्तुल्याः तुल्यमानाः वर्त्तयेत्। वाशब्दः पूर्व्वोक्तनवयोगापेक्षया न तु हरीतक्यादिविकल्पः, अष्टयोगाधिक्यात्। कर्षमात्रां तासामेकां द्वे वा वर्त्तिके पूर्व्वोक्तानां कोविदारादीनामष्टानामन्यतमेनैकेनाञ्जलिमात्रेण विमृद्य बलवच्छ्लेष्मादिषु

माशङ्क्य समाधानमाह—न चोष्णविरोधो मधुन इत्यादि। अविपक्वप्रत्यागमनादित्यनेन पच्यमानं मधु उष्णयुक्तं विरुध्येतेति दर्शयति। दोषाभिहरणाच्चेत्यादि, मधु उष्णविरुद्धमपि वमनयोग उष्णे इष्यते, तस्य दोषनिर्हरणादेव न विरोधो भवतीति दर्शयति, एवं वस्तियोगेऽपि मधुन उष्णाविरोधो वर्णनीयः। एतेन यष्टीमध्वादिनवद्रव्यकृतनवभिः कषायैर्नव योगाः ॥ १४ ॥

<u>चक्रपाणिः</u>—फलपिप्पलीनां द्वौ भागावित्यादौ फलपिप्पलीनां भागत्रयं कर्त्तव्यम्, तत्र भागद्वयं षड्गुणेन कोविदारादिकषायेण क्षारपरिस्रावणविधिवदेकविंशतिवारान् परिस्रावणीयम्, कोविदारादीनाञ्चाष्टानामष्टौ कषायाः पृथक्परिस्रावणे प्रयोक्तव्याः, येन कषायेण च परिस्राव्य फलपिप्पलीभागद्वयं हरीतक्यादिमात्रा तृतीयभागफलपिप्पलीकल्कस्य क्रियते, तेनैव कषायेण मात्रायोगाः, एवमष्टौ हरीतक्यादिमात्रया निर्दिष्टाः फलपिप्पलीयोगा भवन्ति। मात्राविकल्पश्च

* स्रावयेदिति चक्रस्वीकृतः पाठः।

फलपिप्पलीक्षीरं तेन वा क्षीरयवागूमधोभागे रक्तपित्ते हृद्दाहे च * तृषितस्य वा दध्युत्तरम्। कफच्छर्दितमकमुख-प्रसेकेषु तत् पूर्णशरावम्, तस्य पयसः शीतस्य सन्तालिकाञ्जलिं पित्ते प्रकुपिते उरःकण्ठहृदये च तदनु कफोपदिग्धे इति समानं पूर्व्वेण। फलपिप्पलीशृतक्षीरात् नवनीतमुत्पन्नं फलादि-कल्ककषायसिद्धं कफाभिभूताग्निं विशुष्कदेहश्च मात्रया पायये-दिति समानं पूर्व्वेण॥ १६॥

पाययेदिति पूर्व्वेण समानमाशीर्भिरित्यष्टौ योगाः कोविदाराद्यष्टकषायैः पानादिति वर्त्तिष्वष्टौ॥ १५॥

गङ्गाधरः—फलेत्यादि। मदनफलस्य पिप्पलीक्षीरं पाययेदिति पूर्व्वे-णान्वयः; मदनफलपिप्पलीसिद्धं क्षीरमधोगे रक्तपित्ते पाययेत्। अथवा तेन क्षीरेण सिद्धां यवागूं हृद्दाहे च पाययेत्। तेन क्षीरेण जातमुत्तरकालं दधि तृषितस्य दद्यादिति त्रयो योगाः। कफेत्यादि। पूर्णं शरावं तत् क्षीरं कफच्छर्दि-तमकश्वासमुखप्रसेकेषु पाययेदिति क्षीरेऽन्तर्भावान्नाधिकम्। तस्य मदनफल-पिप्पलीसिद्धक्षीरस्य शीतस्य सन्तालिकायाः क्षीरसेति ख्यातायाः अञ्जलिं पित्ते प्रकुपिते पाययेत्। पूर्व्वेणाशीर्व्वचनेन समानम्। फलेत्यादि। मदनफलपिप्पली-कल्कसिद्धं क्षीरं मथित्वोत्पादितं नवनीतं मदनफलमधुककोविदारादीनां

दोषबलादिविकल्पकृतो ज्ञेयः। समानं पूर्व्वेणेति पूर्व्वयोगवदिह स्नेहस्वेदाभिमन्त्रणादिविधानं कर्त्तव्यमित्यर्थः। एवमन्यत्रापि पूर्व्ववच्छब्दार्थो ज्ञेयः॥ १५॥

चक्रपाणिः—फलपिप्पल्या क्षीरपाकविधिना साधितं क्षीरं फलपिप्पलीक्षीरम्, अयमेको योगः। तेनेति फलपिप्पलीसाधितक्षीरेण, तज्जस्येति फलपिप्पलीक्षीरजातस्य दध्नः। उत्तरकमिति सरम्, सन्तानिका क्षीरोपरिस्थस्त्यानीभागः। फलादीनि फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेध-नानि षट्, एते क्षीरयोगचतुष्टयेन घृतयोगेन च समं पञ्च योगा अध्यायसंग्रहे वक्तव्याः॥ १६॥

* तज्जस्य वा दध्न उत्तरकम् इति चक्रः।

फलपिप्पलीनां यष्ट्यादिकषायेण त्रिःसप्तकृत्वः परिभावितेन पुष्परजःप्रकाशेन चूर्णेन बृहत्सरसि सञ्जातं बृहत्सरोरुहं सायाह्ने अवचूर्णयेत् । तद्ध रात्रिव्युषितं प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्राकृशराक्षीरयवागूनामन्यतमां सैन्धवफाणितयुक्तामाकण्ठ-मापीतवन्तमाघ्रापयेत् सुकुमारमुत्क्लिष्टकफपित्तमोषवद्धं विणम् इति समानं पूर्व्वेण ॥ १७ ॥

फलपिप्पलीनां भल्लातकविधिस्नुतं स्वरसं पक्त्वा सफाणितम् आ तन्तुलीभावात् लेहं दापयेत् । शुष्कं वा चूर्णीकृतं जीमूतकादिकषायेण पित्ते कफस्थानगते पाययेदिति समानं पूर्व्वेण । फलपिप्पलीचूर्णानि पूर्व्ववत् कोविदारादीनां षराणाम् कल्कं पादिकं दत्त्वा तेषां चतुर्गुणे कषाये सिद्धं कफाभिभूताग्न्यादि मात्रया पाययेदिति पूर्व्वेण समानमाशिषा । इति पयोमुखे पञ्च योगाः ॥ १८ ॥

गङ्गाधरः—फलेत्यादि । मदनफलपिप्पलीनां चूर्णेन पुष्परजःप्रकाशेन पुष्परेणुसमसूक्ष्मरूपेण यष्ट्यादिकषायेण यष्टीमधुककोविदारादीनां नवानां कषायेण त्रिःसप्तकृत एकविंशतिवारान् परिभावितेन बृहत्सरोवरजातबृहत्-पद्मपुष्पं सायाह्ने प्रक्षयित्वाधिवासयेत् । रात्रिव्युषितं तत् पद्मपुष्पं प्रभाते पुनस्तेनैव फलपिप्पलीचूर्णेनावचूर्णितं अक्षितमुद्धृत्य हरिद्रां कृशरां क्षीरयवागूं वा सैन्धवफाणितयुक्तां कण्ठपर्य्यन्तं पीतवन्तं सुकुमारादिकमाघ्रापयेत् । समानं पूर्व्वेणाशिषेति । एको योगो घ्रेये ॥ १७ ॥

गङ्गाधरः—फलेत्यादि । भल्लातकतैलस्रावविधिना मदनफलपिप्पलीनां स्वरसं सफाणितम् आ तन्तुलीभावात् पक्त्वा लेहं दापयेत् । इत्येको योगो लेहे । शुष्कमित्यादि । मदनफलपिप्पलीजातं शुष्कं चूर्णीकृतं जीमूतादीनां घोषकादीनां कषायेण पित्ते पाययेदिति एको योगश्चूर्णे । अथ वर्त्तिक्रियासु

चक्रपाणिः—फलपिप्पलीनां फलादिकषायेणेत्यादिना एकं घ्रेययोगमाह । पुष्परजःप्रकाश-मिति पुष्पधूलिसदृशम् । हरिद्राभिधानकृशरः हरिद्राकृशरः । भल्लातकविधिस्नुतमिति रसायनोक्त-भल्लातकस्नेहग्रहणविधानेन परिस्नुतं स्वरसं पेयम् । फाणितयोगोऽयमेकः ; तदातपशुष्कञ्चेत्या-दिना चूर्णयोगोऽप्येकः ॥ १७ ॥

चक्रपाणिः—फलपिप्पलीचूर्णानीत्यादौ फलादिषट्कषायभेदेन कृतत्वात् षट् वर्त्तिप्रयोगा ज्ञेयाः ;

अन्यतमकषायभावितानि वर्त्तिक्रियाः कोविदारादिकषायोपसर्ज्जनाः पेया इति समानं पूर्व्वेण ॥ १८ ॥

फलपिप्पलीनामारग्वधवृक्षकुटजस्वादुकण्टकपाठापाटलिशार्ङ्गेष्टामूर्व्वा-सप्तपर्णनक्तमाल-पिचुमर्द्दपटोलसुषवीगुडूचीसोमवल्कदीपिकापिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेराणामन्यतमस्य कषायेण सिद्धो लेह इति समानं पूर्व्वेण ॥ १९ ॥

फलपिप्पली-सातलाहरेणुकाशतपुष्पाकुस्तुम्बुरुतगरकुष्ठत्वक्-चोरकमरुवकागुरुगुग्गुल्वेलवालुक-श्रीवेष्टक-परिपेलवमांसीशैलेय-

षड्योगानाह—फलपिप्पलीचूर्णानीत्यादि। पूर्व्ववत् फलानि संस्थापितानि यानि तेषां मदनफलानां पिप्पल्याश्चूर्णानि कोविदारादीनां षण्णां कोविदारकर्व्वुदारनीपविदुलविम्बीशणपुष्पीणामेकतमस्य कषायेण भावितानि वर्त्तीः कर्षमात्राः कुर्य्यादिति वर्त्तिक्रियास्तासामेकां द्रवा पीतवता मदनफल कोविदारादिकषायाणामन्यतममुपसर्ज्जनं कुर्य्यादिति वर्त्तिक्रियाः फलादिकषायोपसर्ज्जनाः पेया इति समानं पूर्व्वेण पूर्व्वोक्ताशिषा। इति वर्त्तिक्रियासु योगाः षट् ॥ १८ ॥

गङ्गाधरः—अथ लेहे विंशतिं योगानाह—फलपिप्पलीत्यादि। आरग्वधवृक्षो राजवृक्षः। स्वादुकण्टको वैकङ्कतः, बुँइछि इति लोके। शार्ङ्गेष्टा काकजङ्घा गुञ्जामूलं वा। सप्तपर्णः। सुषवी कारवेल्लः। सोमवल्कः श्वेतखदिरः। दीपिका यमानीमूलम्। एषां विंशतेरन्यतमस्य कषायेण मदनफलपिप्पलीनां चूर्णस्य लेहः कार्य्य इति लेहे विंशतिर्योगाः ॥ १९ ॥

गङ्गाधरः—अथ मोदके विंशतिमाह—फलपिप्पलीत्यादि। सातला चर्म्मकषा, त्वक् गुड़त्वक्, चोरकश्चोरहुलीति, पिड़ङ्शाकः, मरुवकः पिण्डीतकः मदन

वर्त्तिक्रियायां चतुर्गुणेन क्वाथेन शलाकाकारवर्त्तिः कर्त्तव्या, अत्रापि च तथा लेहादौ च सामान्योक्तैर्मधुप्रक्षेपो युक्तः, तच्चैके मधुनः पाकविरोधान्नानुमन्यन्ते। फलपिप्पलीनामारग्वधेत्यादिना आरग्वधादिविंशतिद्रव्यक्वाथभेदेन कृतत्वाद् विंशतिर्लेहा ज्ञेयाः। वृक्षकः कुटजः, स्वादुकण्टको विकङ्कतः, शार्ङ्गेष्टा गुञ्जा, सुषवी कारवेल्लकम्, द्वीपिका हिंस्रा, कण्टकारीत्यन्ये ॥ १८। १९ ॥

चक्रपाणिः—फलपिप्पलीष्वित्यादिनोत्कारिका मोदकाश्च प्रत्येकं विंशतिः। चोरको गन्ध-

स्थौणेयसरलपारावतांघ्र्यशोकरोहिणीनां विंशतेरन्यतमस्य कषायेण साधयित्वा, उत्कारिका उत्कारिकाकल्पेन मोदका वा मोदककल्पेन यथादोषविभक्ति प्रयोज्या इति समानं पूर्व्वेण । फलपिप्पलीस्वरसकषायभावितानि तिलतण्डुलपिष्टानि त्वक्कषायोपसज्जनानि शष्कुलीकल्पेन शष्कुल्यः पूपकल्पेन पूपा इति समानं पूर्व्वेण । एतेनैव कल्पेन सुरससुमुखकुठेरकगण्डीरकानाम् ॥ २० ॥

वृक्ष एव । परिपेलवः कवत्तमुस्तकम् । पारावतांघ्रिलतापुटकी । अशोकरोहिणो कटुकी । एषां विंशतेरन्यतमस्य कषायेण मदनफलपिप्पलीचूर्णं पक्त्वा उत्कारिकाकल्पेनोत्कारिका कार्य्या, पाल इति लोके । मोदककल्पेन मोदका वा कार्य्या यथादोषविभागं प्रयोज्या इति पूर्व्वणोक्ताशिषा समानमिति । विंशतिर्योगा मोदके, विंशतिरुत्कारिकायामिति । अथ षोड़श शष्कुलीयोगानाह—फलेत्यादि । मदनफलपिप्पलीनां स्वरसाख्यकषायेण भावितानि तिलतण्डुलपिष्टानि त्वक्कषायोपसज्जनानि गुड़त्वक्कषायेण पिष्टानि शष्कुलीकल्पेन तण्डुलपिष्टककोटराभ्यन्तरे पूरयित्वा शष्कुल्यः कार्य्या इत्येकः शष्कुलीयोगः । पूपकल्पेन पूपा इति । तान्येव तिलतण्डुलपिष्टानि कषायोपसज्जनानि पूपकल्पेन मुद्गमाषवत्तुलकलायपिष्टकसहितमिश्रितानि कृत्वा पूपा वटकाः कार्य्या इत्येकः पूपयोगः । अपरान् पञ्चदश पञ्चदश शष्कुलीपूपयोगानाह—एतेनैवेत्यादि । एतेनैव शष्कुलीकल्पेन पूपकल्पेन सुरसादीनां चतुर्णां मिलित्वैकं कषायं कारयेत् । तेन कषायेण भावितानि मदनफलकषायभावितानि तिलतण्डुलपिष्टानि सुरसादीनां कषायेण पुनर्भावितानि शष्कुलीकल्पेन शष्कुल्यः कार्य्याः पूपकल्पेन पूपाः कार्य्या इत्येकः शष्कुलीयोगः एकश्च पूपयोगः ॥ २० ॥

द्रव्यं स्वनामख्यातम्, परिपेलवं कवर्त्तमुस्तकम्, स्थौणेयको ग्रन्थिपर्णकम्, पारावतपदी ज्योतिष्मती, अशोकरोहिणी अशोकसदृशपलाशलता, कटुरोहिणीत्यन्ये । केचिदत्र स्थौणेयकं परित्यज्याऽपाकीपाद्या विंशतिं पूरयन्ति, अपाकीपादी स्वनामख्याता । उत्कारिकाकल्पेनेति सूदशास्त्रोक्तोत्कारिकाविधानेन । फलपिप्पलीस्वरसेत्यादिना शष्कुलीकल्पेनेत्यादिना एतेनैव कल्पेनेत्यादिना च सुमुखादिपञ्चदशद्रव्यकषायेण पृथक् शष्कुल्यपूपयोः करणात् पञ्चदश योगा भवन्ति ; एवं मिलित्वा शष्कुलीपूपयोः पृथक् षोड़श योगा भवन्ति ॥ २० ॥

तालशालपर्णासत्त्वककालकगृञ्जनकभूस्तृणशाककासमर्द्द-भृङ्गराजानां पोटेत्तुवालिकाकालकण्टककाण्डेरकाणामन्यतमस्य कषायेषु कारयेदिति समानं पूर्व्वेण। * यथावत् षाड़वराग-लेहमोदकोतूकारिकातर्पणपानकमांसरसयूषमद्यानि मदनफल-पाचितानि तेनोपसंसृज्य यथादोषरोगविभक्ति दद्यात्, तैः साधु वमतीति॥ २१ ॥ भवन्ति चात्र।

मदनः करहाटश्च राठः पिण्डीतकः फलम्।
श्वसनश्चेति पर्य्यायैरुच्यते तस्य कल्पना ॥ २२ ॥

गङ्गाधरः—अपरान् चतुर्द्दश योगानाह—तालेत्यादि। तालादीनां चतुर्द्दशानामन्यतमस्य कषाये च शष्कुलीः पूपांश्च कारयेत्। कालकः कालशाकः। शाकः शाकवृक्षः स्वनामख्यातः। पोटः पोटगलो नल इति प्रसिद्धः। कालकण्टको डाउक इति ख्यातः। इति चतुर्द्दश शष्कुलीयोगाः पूपयोगाश्चेति षोड़श षोड़श योगाः शष्कुलीपूपयोः। अथ षाड़वादीन् दश योगनाह—यथेत्यादि। यथावत् षाड़वादीनां यद् यथा क्रियते तत् तथैव मदनफलपिप्पलीकषाय-पाचितं तेनैव मदनफलकषायेणोपसंसृज्य यथादोषरोगविभागं दद्यात्, तैः साधु वमति। षाड़वं मदनफलकषायेण पाचितं दद्यात्। रागञ्च मदनफल कषायपाचितं दद्यात्। लेहञ्चाम्लकृतं मदनफलकषायपाचितं दद्यात्। मोदकं मदनफलकषायपाचितं दद्यात्। उत्कारिकां तिक्षुरादिकृतां मदनफलपाचितां दद्यात्। तर्पणं द्रवालोड़ितसक्तुकृतं मदनफलकषायपाचितं दद्यात्। पानकं शर्करोदकादिकं मदनफलकषायपाचितं दद्यात्। मांसरसं मदनफलकषाय पाचितं दद्यात्। यूषं मदनफलकषायपाचितं दद्यात्। मद्यं मदनफलकषाय पाचितं दद्यादिति दश योगा इत्येते त्रयस्त्रिंशदुत्तरशतं मदनफलस्य योगा व्याख्याताः॥ २१ ॥

गङ्गाधरः—भवन्ति चात्र। मदन इत्यादि पर्य्यायः। तस्य कल्पना।

चक्रपाणिः—पोटा इक्षुगन्धा, दाण्डेरका गुन्द्राख्यगुल्मः, नलो वा। तथा वदरषाड़वेत्यादिना दश योगाः। वदरकृतषाड़वो वदरषाड़वः॥ २१ ॥

चक्रपाणिः—मदनस्य व्यवहारार्थं पर्य्यायानाह, मदनः करहाट इत्यादि। तस्य कल्पेति

* वदरषाड़व इति चक्रधृतः पाठः।

नव योगाः कषायेषु वर्त्तिष्वष्टौ पयोमुखे ।
पञ्चैको घ्रेयेऽथ लेहे चूर्णे वर्त्तिक्रियासु षट् ॥
विंशतिर्विंशतिर्लेह-मोदकोतूकारिकासु च ।
शष्कुलीपूपयोश्चोक्ता योगाः षोड़श षोड़श ॥
दशान्ये षाड़वादेरषु त्रयस्त्रिंशदिदं शतम् ।
योगानां विधिवद् दृष्टं फलकल्पे महर्षिणा ॥ २३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
मदनकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥

कषायेषु यष्टीमधुककोविदारादीनां कषायेषु नव योगाः। वर्त्तिषु पुनरष्ट योगाः। पयोमुखे क्षीरप्रभृतौ पञ्च योगाः। घ्रेये चैको लेहे चैकश्चूर्णे चैकः। षट् च योगा वर्त्तिक्रियासु। लेहे विंशतिर्मोदके विंशतिरुतूकारिकायां विंशतिः। शष्कुल्यां षोड़श पूपे षोड़श षाड़वादिषु दशसु दशेति त्रयस्त्रिंशदुत्तरं शतं योगा मदनफलस्येति ॥ २२ । २३ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च ।
कल्पस्थाने फलकल्पे प्रथमेऽध्याय एव च । वैद्यगङ्गाधरकृते जल्प-
कल्पतरौ पुनः । कल्पस्थाने सप्तमे तु स्कन्धेऽध्याय इहादिमे ।
फलकल्पे जल्पाभिधा त्वाद्या शाखा प्रकाशिता ॥ १ ॥

य एवम्भूतैः पर्य्यायैर्व्याख्यातः, तस्येयं कल्पना। अत्र च पर्य्यायाभिधानं भूरिप्रयोगेषु विहित-त्वेनाभ्यर्हितत्वाज् ज्ञेयम्। एवमन्यत्रापि पर्य्यायाभिधाने प्रयोजनं वर्णनीयम्। मदनयोगस्य नवादिसंख्योत्कर्षनिरासार्थं सुखस्मरणार्थञ्च संग्रहेणाह—नव योगा इत्यादि । अस्य चार्थो यथास्थाने व्याहृतः ॥ २२ । २३ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां मदनकल्पो नाम
प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः ।

अथातो जीमूतकल्पं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

कल्पं जीमूतकस्येमं फलपुष्पाश्रयं शृणु ।
खरागरी च वेणी च तथा स्याद् देवताड़कः ॥
जीमूतकं त्रिदोषघ्नं यथास्वौषधकल्पितम् ।
प्रयोक्तव्यं ज्वरश्वास-हिक्काकोठामयेषु च * ॥ २ ॥
यथोक्तगुणयुक्तानां जीमूतानां यथाविधि ।
पयः पुष्पेषु निर्वृत्ते फले पेयं शृतं पयः ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमाज्जीमूतकल्पमाह—अथात इत्यादि। षड्विरेचनशताश्रितीये यदुक्तम्—"एकोनचत्वारिंशज्जीमूतकेषु योगाः" इति तदेकोनचत्वारिंशद्योगमुदाहर्त्तु मिमं जीमूतकल्पं व्याख्यास्यामः। न तु दीर्घञ्जीवितीये फलिनीषु वमने जीमूतस्य फलमुक्तं तत्फलमात्रस्य योगानुदाहर्त्तु मिति ॥ १ ॥

गङ्गाधरः—तदेव व्यनक्ति। कल्पमित्यादि। इमं जीमूतस्य कल्पं फलपुष्पाश्रयं शृणु न केवलं फलाश्रयमिति। तज्जीमूतं खरागरी वेणी देवताड़क इति पर्य्यायैरुक्तम्। यथास्वौषधकल्पितं त्रिदोषघ्नमिति ज्वरादिषु प्रयोक्तव्यमिति ॥२

गङ्गाधरः—यथेत्यादि। तान् योगानाह। यथोक्तगुणयुक्तानां जीमूतानां घोषकाणां पुष्पेषु यथाविधि पयःपाकविधिना निर्वृत्तं सिद्धं पयः पेयमित्येकः।

चक्रपाणिः—मदनकल्पानन्तरमनपायित्वादेवेक्ष्वाकादिद्रव्यप्राधान्यात् जीमूतकस्य, जीमूतकल्पोऽभिधीयते। एवं यथायथमनपायित्वप्रकर्षः, तथा पूर्व्वनिवेशनं ज्ञेयम्। ततोऽवसरन्यायेनाध्यायसम्बन्धोऽत्रवोक्तो ज्ञेयः। मदनफलस्य स्नेहस्वेदादिपूर्व्वकत्ववदिहापि क्रमोऽतिदेशाद्बोद्धव्यः। फलपुष्पाणामिति वचनेन जीमूतस्य पत्रनालादिषु वमनप्रयोगं निषेधति। गरागरी चेत्यादि पर्य्यायकथनम्। जीमूतः पीतघोषकः। त्रिदोषघ्नमिति यथास्वं वातहरादिद्रव्ययुक्तम्, तथा वातादिहरद्रव्यकल्पितञ्च सत् त्रिदोषघ्नं भवति। हिक्काद्येष्विति आद्यशब्देन काशादीनामामयानां हिक्कारोगगतदोषजन्यानां ग्रहणम् ॥ १ । २ ॥

चक्रपाणिः—यथोक्तविधानग्रहणगृहीतानां पयः पुष्प इत्येको योगः, निर्वृत्त इत्यादि द्वितीयो

* हिक्काद्येष्विति चक्रधृतः पाठः ।

लोमने * क्षीरसन्तानं दध्युत्तरमलोमने ।
शृते पयसि दध्यम्लं जातं हरितपाण्डरे † ॥
जीर्णानाञ्च सुशुष्काणां न्यस्तानां भाजने शुचौ ।
चूर्णस्य पयसा शुक्तिं वातपित्तार्द्दितः पिबेत् ॥ ३ ॥
आसुत्य च सुरामण्डे मृदित्वा प्रस्रुतं पिबेत् ।
कफजेऽरोचके कासे पाण्डुरोगे सयक्ष्मणि ॥
द्वे वापोथ्याथवा त्रीणि गुडूच्या मधुकस्य वा ।
कोविदारादिकानां वा निम्बस्य कुटजस्य वा ॥

यथोक्तगुणयुक्तानां जीमूतानां फले यथाविधि शृतं पयः पेयं वमनार्थमिति प्रकरणात्, इति द्वितीयो योगः। लोमने इति दोषाणामनुलोमभावे क्षीरसन्तानं जीमूतफलशृतस्य क्षीरस्य सन्तानं घनीकृतं क्षीरसेति लोके पेयम्, इति तृतीयः। अलोमने दोषाणां प्रतिलोमभावे दध्युत्तरं क्षीरसन्तानं पेयम्, पीत्वा तूत्तरं दधि पेयम्, इति चतुर्थः। जीमूतानां फलैः शृते पयसि जातमम्लं दधि हरितपाण्डरे देहे सति पेयं वमनार्थमिति पञ्चमः। जीर्णानां पक्वानां सुशुष्काणां जीमूतफलानां शुचौ भाजने न्यस्तानां चूर्णस्य शुक्तिं पलार्द्धं पयसा युक्तां वातपित्तार्द्दितः पिबेत्, इति षष्ठः। इत्येते योगाः षट् क्षीरे व्याख्याताः ॥३

<u>गङ्गाधरः</u>—आसुत्येत्यादि। मदिरामण्डे जीमूतस्य फलान्यासुत्यासवं कृत्वा मृदित्वा प्रस्रुतमासवं पिबेत् कफजारोचकादिषु। इत्येको मदिरामण्ड योगः। अथापरे द्वादश योगाः। जीमूतस्य द्वे फले अथवा त्रीणि फलान्यापोथ्य

योगः, निवृत्त इत्युत्पन्नमात्रे फले, तत्र क्षीरं साधयित्वा तेन क्षीरेण पेया साधनीया। रोमशे इत्यादि तृतीयः, रोमश इति उपगतरोम्नि फले, अत्रापि रोमशफलसाधितक्षीरात् सन्तानिका ज्ञेया। दध्युत्तरमित्यादिकश्चतुर्थो योगः, अत्राप्युपगतरोमावस्थफलसाधितक्षीरसम्भूतदधिसरं ज्ञेयम्। शृते पयसीत्यादि पञ्चमः। दध्यम्लमित्यम्लावस्थं दधि जातम्। हरितपाण्डुक इति हरितपाण्डवस्थाप्राप्ते जीमूतकफले। जीर्णानामित्यादिकः षष्ठः क्षीरयोगः। एते योगाः क्षीरसम्बन्धेन विधीयमानत्वादक्षीराकारा अपि क्षीरप्रयोगत्वेनैव संग्रहे 'षट् क्षीरे' इत्यनेन संग्रहीतव्याः ॥ ३ ॥

<u>चक्रपाणिः</u>—आसुत्येत्यादि मदिरायोग एक उच्यते। आसुत्येति निशापर्युषितं कृत्वा, योगे पक्वजीमूतकफलमेवाधिकृतम्, तथा उत्तरयोगेष्वपि पक्वमेव फलमधिकृतं ज्ञेयम्, "फलं

* रोमशे इति चक्रधृतः पाठः।　　　　† हरितपाण्डुके इति पाठान्तरम्।

कषायेष्वासुतं पूत्वा तेनैव विधिना पिबेत् ॥
अथवारग्बधादीनां सप्तानां पूर्व्ववत् पिबेत् ॥
एकैकशः कषायेण श्लेष्मपित्तज्वरार्द्दितः।
वर्त्तयः फलवच्चाष्टौ कोलमात्रास्तु ता मताः ॥ ४ ॥
जीवकर्षभकेक्षूणां शतावर्य्या रसेन वा।
पित्तश्लेष्मज्वरे दद्याद् वातपित्तज्वरे तथा ॥ ५ ॥

कुट्टयित्वा गुडूच्यादीनां द्वादशानामन्यतमस्य कषाये स्थापयेद् यावदासुतं स्यात्, तत् पूत्वा तेनैव कषायेण युक्तं विधिना मृदित्वा वमनार्थं पिबेत्। कोविदारकर्व्वुदारनीपविदुरविम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्पी इत्यष्टौ कोविदारादयः प्रागुक्ताः। तत्र कोविदारो रक्तकाञ्चनालः। कर्व्वुदारः श्वेतकाञ्चनालः। नीपः कदम्बः। विदुलो जलवेतसः। विम्बी ओष्ठोपमाफलम्। शणपुष्पी घण्टारवा। सदापुष्पी रक्तार्कः। प्रत्यक्पुष्पी अपामार्गः। इति द्वादश योगाः। अथारग्बधादिषु सप्त योगानाह—अथेत्यादि। आरग्बधादीनां सप्तानामारग्बधवृक्षकुटजस्वादुकण्टकपाठापाटलाशार्ङ्गष्टामूर्व्वाणां पूर्व्ववदेषामेकैकशः कषाये द्वे वा त्रीणि जीमूतफलानि कुट्टयित्वा स्थापयेत्, तच्च काले स्वासुतं पूत्वा तेनैव कषायेण युक्तं मृदित्वा पिबेदिति। वर्त्तिषु चाष्टौ योगानाह—वर्त्तय इत्यादि। मदनफलवदष्टौ जीमूतफलवर्त्तयोऽष्टौ कृताः कोलमात्रा मताः। तद्यथा—कोविदारादीनामष्टानामन्यतमस्य कषायेण जीमूतफलानां द्वौ भागौ त्रिःसप्तकृत्वो भावयेत्। तेन कषायेण पुनर्जीमूतफलस्यापरमभावितं तृतीयं भागं पिष्ट्वा हरीतकीविभीतकामलकैस्तुल्यां सर्व्वं भावितं पिष्टञ्च जीमूतफलं वर्त्तिं कोलमात्रां कुर्य्यात्, इति। अष्टौ वर्त्तयः ॥ ४ ॥

गङ्गाधरः—जीवकादिषु चतुरो योगानाह—जीवकर्षभकेत्यादि। जीमूतस्य

पर्य्यागतं ग्राह्यम्" इत्यौत्सर्गिकवचनात्। द्वे चेत्यादिना द्वादशकषायभेदात् द्वादशयोगा उच्यन्ते; तेनैव विधिनेति मदनकल्पोक्तेन साधनविधिना। अथवेत्यादौ आरग्बधादिसप्तद्रव्यकषायभेदात् सप्त योगा भवन्ति। आरग्बधादयः—आरग्बधवृक्षकस्वादुकण्टककरहाटपाटलिशार्ङ्गेष्टामूर्व्वान्ताः पूर्व्वाध्यायोक्ताः। "मात्राः स्युः" इत्यादिना अष्टौ मात्रायोगानाह। फलवदिति मदनफले यथा अष्टौ मात्रायोगा उक्ताः, तथा इहापि कर्त्तव्याः, विशेषतस्तु एताः कोलमात्राः कर्त्तव्याः, न तु फलवद्धरीतक्यादिप्रमाणाः कर्त्तव्या इत्यर्थः ॥ ४ ॥

तथा जीमूतकक्षीरात् समुत्पन्नं पचेद्‌ घृतम् ।
फलादीनां कषायेण श्रेष्ठन्तु वमनं स्मृतम् ॥ ६ ॥

तत्र श्लोकौ ।

षट् क्षीरे मदिरामण्डे एको द्वादश चापरे ।
सप्त चारग्वधादीनां कषायेऽष्टौ च वर्त्तिषु ॥
जीवकादिषु चत्वारो घृतञ्चैकं प्रकीर्त्तितम् ।
कल्पे जीमूतकानाञ्च त्रिंशद्योगा नवाधिकाः ॥ ७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
जीमूतकल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥

फलं कल्कीकृत्य जीवकादीनां चतुर्णामन्यतमस्य रसेन वमनार्थं पित्तश्लेष्म-ज्वरादौ दद्यात् । इति जीवकादिषु चत्वारो योगाः ॥ ५ ॥

गङ्गाधरः—तथेत्यादिना घृतमाह । जीमूतकफलैः सिद्धं क्षीरं मथित्वा समुत्पन्नं नवनीतं घृतं फलादीनां मदनफलकोविदारादीनां यथायोगं कषायेण चतुर्गुणेन पचेत् । इत्येकयोगः । इत्येकोनचत्वारिंशद्योगा जीमूतस्य व्याख्याता उपसंह्रियन्ते ॥ ६ ॥

गङ्गाधरः—तत्र श्लोकाविति । क्षीरे षड़्योगाः मदिरामण्डे त्वेकः अपरे द्वादश सप्त चारग्वधादिभिः वर्त्तिष्वष्टौ जीवकादिषु चत्वार एकं घृतमिति जीमूतकल्पेऽस्मिन् नवाधिकास्त्रिंशद्योगा व्याख्याता इति ॥ ७ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च ।
कल्पस्थाने तु जीमूत-कल्पेऽध्याये द्वितीयके । वैद्यगङ्गाधरकृत जल्पकल्प-
तरौ पुनः । कल्पस्थाने सप्तमेऽस्मिन् स्कन्धेऽध्याये द्वितीयके ।
जीमूतकल्पजल्पाख्या शाखा द्वितीयकेरिता ॥ २ ॥

चक्रपाणिः—जीवकेत्यादिना चतुरो योगाः पानसाधनकषायभेदात् । तथेत्यादिना घृतयोग-मेकमाह । षट्क्षीर इत्यादिना संग्रहार्थो व्याकृत एव यथास्थानम् ॥ ५—७ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां जीमूतककल्पो
नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

**अथात इक्ष्वाकुकल्पं व्याख्यास्यामः,**
**इतिह स्माह भगवानात्रेयः ॥ १ ॥**

सिद्धं वक्ष्याम्यथेक्ष्वाकु-कल्पं येषाञ्च शस्यते ।
पञ्चचत्वारिंशदुक्ता योगा अस्मिन् महर्षिणा ॥ २ ॥
लम्बाऽथ कटुकालाबूस्तुम्बी पिण्डफला तथा ।
इक्ष्वाकुः फलिनी चैव प्रोच्यतेऽस्यास्तु कल्पना ॥
कासश्वासकफच्छर्दि-तृड्वर्त्तिकफकर्षिते ।
प्रताम्यति नरे चैव वमनार्थन्तु सेष्यते ॥ ३ ॥
अपुष्पायाः प्रवालानां मुष्टिं प्रादेशसम्मितम् ।
क्षीरप्रस्थे शृतं देयं पित्तोद्रिक्ते कफज्वरे ॥ ४ ॥

गङ्गाधरः—उद्देशानुक्रमादिक्ष्वाकुकल्पमाह—अथात इत्यादि । पूर्ववत् सर्व्वं व्याख्येयम् ॥ १ ॥

गङ्गाधरः—सिद्धमित्यादि । लम्बा कटुकालाबूस्तुम्बी पिण्डफला फलिनी चेक्ष्वाकुश्चेति पर्य्यायैरिक्ष्वाकुः प्रोच्यतेऽस्याः कल्पना च पञ्चचत्वारिंशदिक्ष्वाकुर्विति यदुक्तं सा प्रोच्यते । कासादिकर्षिते प्रताम्यति नरे च वमनार्थं सेक्ष्वाकुरिष्यते ॥ २ । ३ ॥

गङ्गाधरः—अपुष्पाया इत्यादि । अपुष्पाया इक्ष्वाकोः प्रवाला नवीना अग्रभागा ये तेषां प्रादेशसम्मितं वितस्तिमात्रं तदग्रभागं मुष्टिं पलप्रमाणं क्षीरप्रस्थे शृतं देयमिति । शेषमाशीरित्येको योगः ॥ ४ ॥

चक्रपाणिः—उक्ताध्यायसम्बन्धादिक्ष्वाकुकल्पोऽभिधीयते । तेषाञ्च शस्यते इक्ष्वाकुकल्पः, यान् वक्ष्यामीति योज्यम् । लम्बेत्यादि पर्य्यायकथनम् । तदिष्यते इति इक्ष्वाकुकल्पनमिष्यते ॥१—३ ॥

चक्रपाणिः—अपुष्पस्येत्यादिना एकः क्षीरयोगः । अपुष्पस्येति अनुत्पन्नपुष्पस्य । मुष्टिं प्रादेशसम्मितमिति प्रदेशिन्या मूलपर्य्यन्तकृतमुष्टिपरिमाणम्, एवञ्च नात्र मुष्टिः पलवचनः । क्षीरप्रस्थे यथोक्तमानमिक्ष्वाकुमवाप्य चतुर्गुणपानीयं दत्त्वा क्षीरं साधनीयम् ॥ ४ ॥

पुष्पादिषु च चत्वारः क्षीरे जीमूतके यथा ।
योगा हरितपाण्डूनां सुरामण्डेन पञ्चमः ॥ ५ ॥
फलस्वरसभागञ्च त्रिगुणक्षीरसाधितम् ।
उरःस्थिते कफे दद्यात् स्वरभेदे सपीनसे ॥ ६ ॥
जीर्णे सद्योधृते क्षीरे प्रक्षिपेत् तु तथा दधि * ।
जातं स्यात् कफजे कासे श्वासे छर्द्याञ्च शस्यते ॥ ७ ॥
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः ।
तेन तक्रं विपक्वं वा सक्षौद्रलवणं पिबेत् ॥ ८ ॥

गङ्गाधरः—पुष्पादिष्वित्यादि। जीमूतके यथा पुष्पादिषु चत्वारो योगास्तथेक्ष्वाकामपि। क्षीरे इक्ष्वाकुपुष्पं पक्त्वा पेयमित्येकः। तथा क्षीरे शृतमिक्ष्वाकुफलं पेयमिति द्वितीयः। इक्ष्वाकुफले क्षीरं पक्त्वा क्षीरसन्तानं क्षीरसेति ख्यातं पीत्वोत्तरं दधि पेयमिति तृतीयः। इक्ष्वाकुफले शृते क्षीरे जातमम्लं दधि चतुर्थः। इति हरितपाण्डूनां वमनार्थं चत्वारो योगा इति। इक्ष्वाकुफलं सुरामण्डे आसुत्य प्रक्षिप्य स्थापयित्वा काले पक्वं जातरसमासवं कृत्वा मृदित्वा प्रसृतं पिबेत् कफजारुच्यादिष्विति पञ्चमो जीमूतवत्। इति षट् सह पूर्व्वेण ॥ ५ ॥

गङ्गाधरः—फलेत्यादि। इक्ष्वाकुफलस्य स्वरसस्य एकभागं त्रिगुणक्षीरे साधितं वमनार्थं दद्यात् ॥ ६ ॥

गङ्गाधरः—जीर्ण इत्यादि। गोराहारे जीर्ण प्रातःकाले सद्योधृते तत्क्षणं धृते क्षीरे धारोष्णे त्रिगुणे इक्ष्वाकुफलस्वरसभागमेकं प्रक्षिपेत् तथा जातं दधि स्यात्। कफजकासादौ दद्यात् इत्यष्टमः ॥ ७ ॥

गङ्गाधरः—मस्तुनेत्यादि। इक्ष्वाकुफलात् तन्मध्यस्थं शस्यं दधिमस्तुना पक्वं

चक्रपाणिः—पुष्पादिष्वित्यादिना चतुरः क्षीरयोगानाह। जीमूतके यथा "पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता। रोमशे क्षीरसन्तानं दध्युत्तरमरोमशे" इत्यनेनोक्तम्, तथेहापि योगचतुष्टयं करणीयम्। हरितेत्यादिना सुरायोगमाह। हरितपाण्डूनामिक्ष्वाकुफलानां सुरामण्ड जीमूतकवद् योगः कर्त्तव्यः। जीमूतकविधानातिदेशेन "आसुत्य वा सुरामण्डे मृदित्वा प्रसृतं पिबेत्" इति ग्रन्थोक्तविधानमिहापि भवति। फलस्वरसेत्यादिना षष्ठः क्षीरयोगोऽभिधीयते। त्रिगुणक्षीरसाधितमिति त्रिगुणेन क्षीरेण साधितम्, तच्च चतुर्गुणेन तोयेन साधनीयम्। फलशब्देन इक्ष्वाकुफलमुच्यते। जीर्णे इत्यादिना सप्तमः क्षीरयोगः। मध्योद्धृते इत्युद्धृतमध्ये।

* जीर्णे मध्योद्धृते क्षीरं प्रक्षिपेत् तद् यदा दधि। इति चक्रसम्मतः पाठः।

अजाक्षीरेण वीजानि भावयेत् पाययेत च।
विषगुल्मोदरग्रन्थि-गण्डेषु श्लीपदेषु च ॥ ९ ॥
तुम्ब्याः फलरसैः शुष्कैः सपुष्परवचूर्णितम्।
छर्द्दयेन्माल्यमाघ्राय गन्धं सम्यक् * सुखोचितः ॥ १० ॥
भक्षयेत् फलमध्यं वा गुड़ेन पललेन वा।
इक्ष्वाकुफलतैलं वा सिद्धं वा पूर्व्ववद् घृतम् ॥ ११ ॥

पिवेत्। अथवा तेनेक्ष्वाकुफलमध्येन शस्येन पक्वं तक्रं सक्षौद्रलवणं पिवेदिति द्वाविंति दश। इति सुरामस्त्वादिषु त्रयः ॥ ८ ॥

गङ्गाधरः—अजेत्यादि। इक्ष्वाकुवीजान्यजादुग्धेन चूर्णयित्वा भावयेत्, भावितानि तानि तेनाजाक्षीरेणैव पाययेत च विषादिषु। इत्येक इत्येकादश। इति पयस्यग्री ॥ ९ ॥

गङ्गाधरः—तुम्ब्या इत्यादि। इक्ष्वाकाः सह पुष्पैः फलस्वरसं शुष्कीकृत्य तैश्चूर्णैरवचूर्णितं माल्यं पुष्पमाल्यं गन्धमाघ्राय सुखोचितो जनश्छर्द्दयेत्। इत्येको घ्रेययोगः ॥ १० ॥

गङ्गाधरः—भक्षयेदित्यादि। इक्ष्वाकुफलमध्यं गुड़ेन भक्षयेत्। पललेन वा तदिक्ष्वाकुफलमध्यं भक्षयेत्, मांसेन पक्वेत्यर्थः। इक्ष्वाकुफलवीजानां तैलं पिवेत्। एवं पूर्व्ववत् जीमूतघृतवत घृतं सिद्धं पिवेत्। तद्यथा। इक्ष्वाकुफलैः पक्वं क्षीरं मथित्वा यदुद्धृतं नवनीतं तद्घृतं फलादीनां मदनफलमधुक-कोविदारादीनां कषायेण चतुर्गुणेन पिवेत्। तद् वमनार्थं श्रेष्ठमिति। गुड़-पललतैलघृतयोगाश्चत्वार इति षोड़श ॥ ११ ॥

अजाक्षीरेणेत्यादिनाऽष्टमः क्षीरयोगः। तेन तक्रमित्यादिना तक्रयोगः। तेनेति तुम्बीफल-मध्येन ॥ ५—८ ॥

चक्रपाणिः—तुम्ब्या इत्यादिना घ्रेययोगमाह। गन्धसम्पत्सुखोचित इति गन्धसम्पत् सौगन्धवत्त्वम्, तया गन्धसम्पदा सुखमुचितमभ्यस्तं येन सः। अवचूर्णितमिक्ष्वाकुफलरस-भावितं माल्यञ्चाघ्रायैवं वमत्यनभ्यस्तदुर्गन्ध इति भावः। भक्षयेदित्यादिना वमनयोगमेकमाह। फलमध्यमिक्ष्वाकुफलमध्यम्। इक्ष्वाकुफलकल्कसाधितं तैलमिक्ष्वाकुफलतैलम्, अयमेक एव तैलयोगः। पूर्व्ववदिति जीमूतकवत्, तेन "तथा जीमूतकक्षीरात्" इत्यादिनोक्तविधानेन जीमूतकस्थाने इक्ष्वाकुफलं दत्त्वेह घृतं साधनीयम् ॥ ९—११ ॥

* सम्यक सुखोचित इत्यत्र गन्धसम्पत्सुखोचित इति चक्रधृतः पाठः।

पञ्चाशद्दशवृद्धानि फलिनीनां यथोत्तरम्।
पिबेद् विमृद्य बीजानि कषाये स्वासुतं पृथक्॥ १२॥
यष्ट्याह्वकोविदारादैर्मुष्टिमन्तर्नखं पिबेत्।
कषायैः कोविदारादैर्वर्त्तयः फलवत् स्मृताः॥ १३॥
विल्वमूलकषायेण तुम्बीबीजाञ्जलिं पचेत्।
घृतस्यापि त्रयो भागास्त्रयस्त्रिकटुकस्य च॥

गङ्गाधरः—पञ्चाशदित्यादि। फलिनीनामिक्ष्वाकूणां बीजानि दश पिष्ट्वा विमृद्य पिबेदित्येकः। एवं यथोत्तरं दशवृद्ध्या विमृद्य पिबेत्। तेन विंशतिं बीजानि पिबेदिति द्वितीयः, त्रिंशद्बीजानि पिबेदिति तृतीयः, चत्वारिंशद्-बीजानि पिबेदिति चतुर्थः, पञ्चाशद्बीजानि पिबेदिति पञ्चमः। इति वर्द्धमाने पञ्च। आसवक्रियायामेकः। कषाये वमनोपगानां कषाये सुष्ठु आसवं कृत्वा पिबेदिति पृथग्योगा वर्द्धमानासवक्रियासु षट्। इति द्वाविंशतिः॥ १२॥

गङ्गाधरः—यष्ट्याह्वेत्यादि। इक्ष्वाकुबीजानामन्तर्नखं मुष्टिमानं यष्ट्याह्व कोविदारादैर्नवभिः कषायैः पिष्ट्वा पिबेदिति मधुकादिषु कषायेष्वन्ये नव योगा इत्येकत्रिंशत्। कोविदारादैरष्टभिः कषायैश्च मदनफलवदष्टौ वर्त्तयः स्मृताः। तद्यथा। इक्ष्वाकुबीजचूर्णानि कोविदारादीनामष्टानामन्यतम-कषायेण कर्षमात्रा वर्त्तयः कार्य्या मदनफलकोविदारादीनां कषायमुपमृद्य वर्त्तीकृताः पेया इत्यष्टौ वर्त्तय इति एकोनचत्वारिंशत्॥ १३॥

गङ्गाधरः—विल्वमूलेत्यादि। तुम्बीबीजानामञ्जलिं कुडवं चूर्णीकृतं तद्भागापेक्षया घृतस्य त्रयो भागाः कुडवत्रयं मिलितत्रिकटुकस्य च त्रयो भागा

चक्रपाणिः—पञ्चाशदित्यादिना षड् वर्द्धमानकयोगानाह। पञ्चाशदारभ्य दशकेन वृद्धानीक्ष्वाकुबीजानि शतं पूर्य्यम्, तेन षड् योगा भवन्ति। तेन यथासंख्यमदनफलादीनां षण्णां कषाये आसुताः सन्तो विमृदिताः पातव्याः। अन्ये तु दशबीजादारभ्य पञ्चाशद्बीजपर्य्यन्तं दोषाद्यपेक्षया पातव्यम्, तत्र मदनादिकषायभेदादेव योगभेद इत्याहुः॥ १२॥

चक्रपाणिः—यष्ट्याह्वेत्यादिना नवकषाययोगानाह। तत्र यष्ट्याह्वमेकम्। कोविदारादयो

सघृतो वीजभागश्च पिष्टानर्द्धांशिकांस्तथा।
महाजालिनिजीमूत-कृतवेधनवत्सकान्॥
तं लेहं साधयेद्द दर्व्व्या घट्टयेन्मृदुवह्निना।
यावत् स्यात् तन्तुमत् तोये पतितन्तु न शीर्य्यते॥
तं लिह्यात् मात्रया लेहं प्रमथ्याश्च पिवेदनु।
कल्प एषोऽग्निमन्थादौ चतुष्के पृथगुच्यते॥ १४॥
शक्तुभिर्वा पिवेन्मन्थं तुम्बीस्वरसभावितैः।
कफजे तु ज्वरे श्वासे कण्ठरोगेष्वरोचके॥

घृततुल्या महाजालिन्यादींश्चतुरः वीजभागादर्द्धांशिकान् प्रत्येकमर्द्धकुड़वान् पिष्टान् यश्च सघृतो वीजभाग इक्ष्वाकुकुड़वस्तं चैकीकृत्य विल्वमूलकषायेण पचेत्। लेहं साधयेन्मृदुवह्निना दर्व्व्या च घट्टयेत् यावत् तन्तुमत् स्यात् तोये क्षिप्तन्तु न शीर्य्यते च। तत्रासन्नपाके त्रिकटुकचूर्णं प्रक्षिपेदित्येवं सिद्धं तं लेहं मात्रया लिह्यात्। तदनु प्रमथ्यां दीपनपाचनयोगं पिवेत्। इत्येको लेहः, एष एव कल्पोऽग्निमन्थादौ चतुष्केऽग्निमन्थश्योनाकगाम्भारीपाटलानां मूलकषाये पृथगुच्यते। इति पञ्च लेहाः। इति चतुश्चत्वारिंशत्॥ १४॥

मदनकल्पोक्ता अष्टौ। कषायैरित्यादिना मदनफलसदृशविधा अष्टौ मात्रालक्षिताः प्रयोगा उच्यन्ते; विल्वेत्यादिना एको लेहः। तथा कल्प इत्यादिना चत्वारो लेहा अन्ते द्रष्टव्याः, एवं पञ्च लेहाः। अञ्जलिः पलचतुष्टयः। अत्र च "ततश्च कुड़वं यावत् तोयमष्टगुणं भवेत्" इति वचनात् विल्वमूलकषायस्याष्टावञ्जलयो देयाः, ततश्चतुर्भागावशेषेण कुड़वद्वयम्, फाणितमर्द्धश्च इक्षुरसः। 'चतुर्थः फाणितस्य च' एतस्य स्थाने, 'त्रयस्त्रिकटुकस्य च' इति पठन्ति। सघृतो घृतस्यैको भागः। अर्द्धांशिकानिति एकभागार्द्धमानान् प्रत्येकं महाजालिन्यादीन्। महाजालिनी पीतकोषातकी। कृतवेधनो घोषकभेदः, ज्योत्स्निकेति ख्यातः। यावत् स्यात् तन्तुमदित्यादिना लेहपाकलक्षणमाह। एतच्च लक्षणं लेहान्तरेष्वपि योजनीयं ज्ञेयम्। न शीर्य्यते न विस्तीर्य्यते। प्रमथ्याश्च पिवदन्विति अतीसारचिकित्सिते "पिप्पली नागरं धान्यम्" इत्यादिनोक्तप्रमथ्यानां मध्ये अन्यतमप्रमथ्याकृतं कषायं पिवेदित्यर्थः। 'प्रमथ्याश्च' इत्यत्र केचित् 'मन्थश्चापि' पठन्ति। अग्निमन्थादाविति प्रत्येकमग्निमन्थश्योनाकपाटलागाम्भारीमूलचतुष्कं पञ्चमूलकथनप्रस्तावे रसायने कथितम्॥ १३। १४॥

गुल्मे मेहे प्रसेके च कल्पं मांसरसे पिवेत् ।
नरः साधु वमत्येवं न च दौर्ब्बल्यमश्नुते ॥ १५ ॥

तत्र श्लोकाः ।

पयस्यष्टौ सुरामण्ड-मस्तुतक्रेषु च त्रयः ।
प्रेयं सपललं तलं वर्द्धमानासवेषु * षट् ॥
घृतमेकं कषायेषु नवान्ये मधुकादिषु ।
अष्टौ वर्त्तिक्रिया लेहाः पञ्च पक्वरसस्तथा ॥
योगा इक्ष्वाकुकल्पेऽस्मिन् चत्वारिंशच्च पञ्च च ।
उक्ता महर्षिणा सम्यक् प्रजानां हितकाम्यया ॥ १६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
इक्ष्वाकुकल्पो नाम तृतीयोऽध्यायः ॥ ३ ॥

गङ्गाधरः—शक्तुभिरित्यादि । पक्वरसतुम्बीस्वरसेन भावितैः शक्तुभिर्मन्थं पिबेद् वेत्यक इति पञ्चचत्वारिंशद् योगा इक्ष्वाकुषु । एतन्मन्थस्य रोगभेदे प्रयोगमाह—कफजे त्वित्यादि । मांसरसे कल्पमिममिक्ष्वाकुकं पिवेत् । व्याधिभेदे पानान्नातिरिक्तम् ॥ १५ ॥

गङ्गाधरः—अत्र संग्रहश्लोकाः । तत्र श्लोका इति । पक्वरस इति मन्थ इत्यर्थः ॥१६

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । अप्राप्ते तु दृढ़वल-प्रतिसंस्कृत एव च ।
कल्पस्थाने किलेक्ष्वाकु-कल्पेऽध्याये तृतीयके । वैद्यगङ्गाधरकृते जल्पकल्प-
तरौ पुनः । कल्पस्थाने सप्तमे तु स्कन्धेऽध्याये तृतीयके । इक्ष्वाकुकल्प-
जल्पाख्या शाखा तृतीयिका मता ॥ ३ ॥

चक्रपाणिः—शक्तुभिरित्यादिनैको मन्थयोगः । गुल्मे ज्वरे इत्यादिना रसैकयोगमाह । कल्कमिक्ष्वाकुवीजकल्कम् । पयस्यष्टावित्यादिसंग्रहार्थो व्याकृत एव । अत्र फलेष्विति मदनफलादिष्विति । घृतं यद्यपि वर्द्धमानपूर्व्वपठितम्, तथापि छन्दोऽनुरोधादिह पश्चात् पठितम् ॥१५।१६

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां इक्ष्वाकुकल्पो नाम तृतीयोऽध्यायः ॥ ३ ॥

* फलेष्विति चक्रधृतः पाठः ।

## चतुर्थोऽध्यायः ।

अथातो धामार्गवकल्पं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

कर्कोटकी कोठफला महाजालिनिरेव च ।
धामार्गवश्च पर्य्यायैराजकोषातकी तथा ॥
गरे गुल्मोदरे कासे वातश्लेष्मामये स्थिते ।
कफे च कण्ठवक्त्रस्थे कफसञ्चयजेषु च ॥
रोगेष्वेषु प्रयोज्यः स्यात् स्थिराश्च गुरवश्च ये ।
पुष्पं फलं प्रवालञ्च विधिना तस्य संहरेत् ॥ २ ॥
प्रवालस्वरसं शुष्कं कृत्वा च गुड़िकाः पृथक् ।
कोविदारादिभिः पेयाः कषायैर्मधुकस्य च ॥ ३ ॥

गङ्गाधरः—अथोद्देशक्रमात् धामार्गवकल्पमाह—अथात इत्यादि । धामार्गवः पीतघोषकः । प्रागुक्तधामार्गवः षष्टिधायोगयुक्त इति तद्धामार्गवकल्पे षष्टिं योगान् व्याख्यास्याम इति । सर्व्वं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—कर्कोटकीत्यादि । कर्कोटकीत्यादिभिः पर्य्यायैर्धामार्गव उच्यते । गरे इत्यादि । सगरादिषु प्रयोज्यः स्यात्, ये च गुरवः स्थिराश्च रोगास्तेष्वपि प्रयोज्यः स्यात् । प्रयोगानाह—पुष्पमित्यादि । शुच्यादिविधिना तस्य धामार्गवस्य काले पुष्पं फलं प्रवालानग्रभागान् संहरेत् ॥ २ ॥

गङ्गाधरः—तत्र प्रवालानां स्वरसं शुष्कीकृत्य गुड़िकाः कर्षमाणाः कृत्वा कोविदारादीनामष्टानामन्यतमस्य कषायैर्मधुकस्य च कषायैः पेयाः । इति पल्लवे नव योगाः ॥ ३ ॥

चक्रपाणिः—उक्तसम्बद्धधामार्गवकल्पोऽभिधीयते । तत्र कर्कोटकीत्यादिना पर्य्यायकथनम् । धामार्गवः पीतघोषकः । स्थिराश्च गुरवश्च य इत्यत्र गदा इति शेषः । विधिनेति भेषजग्रहणोक्तेन विधिना ॥ १ । २ ॥

चक्रपाणिः—प्रवालेत्यादिना नव योगानाह । प्रवालस्य स्वरसः । अत्र केचिदाहुः—कषायैः गुड़िकाकरणं पानञ्च ज्ञेयमिति ॥ ३ ॥

पुष्पादिभिः चीरयोगाश्चत्वारः पञ्चमी सुरा ।
पूर्व्ववज्जीर्णशुष्काणामतः कल्पं प्रचक्षते ॥ ४ ॥
मधुकस्य कषायेण वीजं कण्टोद्धृतं फलम् ।
सगुड़ं व्युषितं रात्रौ कोविदारादिभिस्तथा ॥
दद्याद् गुल्मोदरार्त्तेभ्यो ये चाप्यन्ये कफामयाः ।
दद्यादन्नेन वा युक्तं छर्द्दिहृद्रोगशान्तये ॥ ५ ॥
चूर्णैर्वाप्युत्पलादीनि भावितानि प्रभूतशः ।
रसक्षीरयवाग्वादि-तृप्तो घ्रात्वा वमेत् सुखम् ॥ ६ ॥

गङ्गाधरः—पुष्पादिभिरिति। धामार्गवस्य पुष्पभृतं क्षीरं फलभृतं क्षीरं प्रवालभृतं क्षीरं तृतीयं तथा धामार्गवपल्लवे सिद्धं क्षीरं घनीभूतं सन्तानं क्षीरसन्तानं चतुर्थमिति चत्वारो योगाः। पञ्चमी सुरा पूर्व्ववज्जीर्णशुष्काणाम्। तद्यथा—सुरामण्डे जीर्णं पक्वं शुष्कं धामार्गवफलादिकं भाजने स्थापयेत्, कालजातरसमासवं कृत्वा मृदित्वा पाययेदिति पञ्चमः सुरासवः। पूर्व्ववदिति जीर्णं शुष्कं धामार्गवस्य पुष्पञ्च फलञ्च प्रवालांश्च कल्कीकृत्य सुरामण्डे स्थापयेदिति कल्कैस्त्रिभिरेकः सुराकल्पः ॥ ४ ॥

गङ्गाधरः—मधुकस्येत्यादि। धामार्गवस्य फलं वीजं कण्टकादुद्धृतं सगुड़ं मधुकस्य कषायेण रात्रौ व्युषितं गुल्माद्यार्त्तेभ्यो दद्यात्। एवं कोविदारादिभिः पृथगष्टभिः कषायैः सगुड़ं कण्टोद्धृतं फलं वीजं रात्रौ व्युषितं दद्यात्। इति कषाये नव योगाः। अथान्ने त्वेकमाह—दद्यादित्यादि। धामार्गवस्य फलं चूर्णीकृत्यान्नेन संयुक्तं दद्यादित्येकः ॥ ५ ॥

गङ्गाधरः—घ्रेये त्वेकमाह—चूर्णैरित्यादि। उत्पलपुष्पपद्मपुष्पादीनि

चक्रपाणिः—पुष्पादिभिरित्यादिना जीमूतककल्पविधानेन निर्द्दिष्टाश्चत्वारः क्षीरप्रयोगाः, पञ्चमश्च सुरायोगोऽतिदिश्यते। ते च 'पयः पुष्पेऽस्य' इत्यादिनोक्ता ज्ञेयाः। पूर्व्ववदिति पूर्व्वग सम्बध्यते। जीर्णशुष्काणामित्यादिना नव कषाययोगानाह। तथा जात्या इत्यादिना एकादश कषाययोगान् वक्ष्यति। एवं विंशतिकषाययोगाः संग्रहवक्ष्यमाणा पूर्य्यन्ते ॥ ४ ॥

चक्रपाणिः—वीजकण्टोद्धृतं फलमित्यत्र च पूर्व्वनिपातानियम आहिताग्न्यादिपूर्व्वनिपातवद्बोध्यः। एवम्भूतञ्च फलं कषायेण सगुड़ेन व्युषितं रात्रौ व्युषितं कर्त्तव्यम्। उक्तं हि जतूकर्णे धामार्गवकल्पे—"धामार्गवजीर्णशुष्कफलमध्येषु सगुड़ोषिताः। कोविदारादिकषाया नव" इति। गुल्मिनाञ्चावस्थायां वमनं हितमेव। तेनेह गुल्मविषयतया वमनोपदर्शनं न विरोधि। दद्या-

चूर्णीकृतस्य वर्त्तिं वा कृत्वा वदरसम्मिताम्।
विनीयाञ्जलिमात्रे तु पिबेद् गोऽश्वशकृद्रसे॥
पृषतर्क्षकुरङ्गावि-गजोष्ट्राश्वतरस्य च।
श्वदंष्ट्राखरखड्गानामेवं पेया शकृद्रसे॥ ७॥
जीवकर्षभकौ वीरामात्मगुप्तां शतावरीम्।
काकोलीं श्रावणीं मेदां महामेदां मधूलिकाम्॥
एकैकशोऽभिसञ्चूर्ण्य सह धामार्गवेण तु।
शर्करामधुसंयुक्ता लेहा हृद्दाहकासिनाम्॥

धामार्गवफलचूर्णैः प्रभूतशो बहुशो भावितानि वासितानि मांसरसादिभिर्भुक्त्वा तृप्तो घ्रात्वा सुखं वमेदित्येको योगो घ्रेये॥ ६॥

गङ्गाधरः—शकृद्रसे द्वौ दश चाह—चूर्णीकृतस्येत्यादि। धामार्गवस्य फलवीजं चूर्णीकृत्य जलेन वर्त्तिं कोलसम्मितां कृत्वाऽञ्जलिमात्रे गोशकृद्रसेऽश्वशकृद्रसेऽञ्जलिमात्रे वा विनीय पिबेदिति शकृद्रसे द्वौ योगौ। अथ दश चाह—पृषतेत्यादि। पृषतो हरिणः। ऋक्षो भल्लूकः। कुरङ्गश्चित्रहरिणः। अविमेषः। अश्वतरः खचरः। श्वदंष्ट्रा क्षुद्रव्याघ्रविशेषः। खरो गर्द्दभः। खड्गो गण्डारः। एवं पूर्व्ववच्चूर्णीकृत्य जलेन वर्त्तिं कृत्वा धामार्गववीजं पृषतादीनां पृथक् दशानां शकृद्रसेऽञ्जलिमात्रे विनीय पिबेदिति शकृद्रसेऽपरे दश योगाः। इति द्वादश॥ ७॥

गङ्गाधरः—दश लेहानाह—जीवकेत्यादि। जीवकादीनामेककं धामार्गव-

दित्यादिना एकोऽन्नयोग उच्यते। अत्र च धामार्गवस्य संयोगेन क्षीरेण योगः। चूर्णैरित्यादिना घ्रेये एकयोगमाह। उत्पलादीनाञ्चात्र भेदोऽविवक्षितः। उत्पलस्यैक एव घ्रेययोगः। अत्र आदिशब्देन सौगन्धिकपद्मादीनां ग्रहणम्। प्रभूतशश्चूर्णैर्भावितानीति ज्ञेयम्॥ ५। ६॥

चक्रपाणिः—चूर्णीकृतस्येत्यादिना गोऽश्वशकृद्रस इति द्वौ योगौ तथा पृषतेत्यादिदशयोगा इति द्वादशशकृद्रसयोगसम्बन्धाद् द्वादश शकृद्योगा उच्यन्ते। पृषतो विन्दुचित्रितहरिणः। ऋष्यो नीलाण्डः, कुरङ्गश्चञ्चलगतिः। अश्वतरो वेगसरः। श्वदंष्ट्रश्चतुर्दंष्ट्रो मृगविशेषः॥ ७॥

चक्रपाणिः—जीवकेत्यादिना दश लेहानाह। मधूलिका मर्कट इति ख्याता। अत्र लेहेषु धामार्गवादितरद्रव्यचूर्णस्य समानत्वम्। मधुशर्करयोश्च तावती मात्रा, यावत्या लेहत्वापत्ति

सुखोदकानुपानाः स्युः पित्तोष्मसहिते कफे ।
धान्यतुम्बुरुयूषेण कल्कः सर्व्वविषापहः ॥ ८ ॥
जात्याः सौमनसायिन्याः रजन्याश्चोरकस्य च ।
वृश्चिकस्य महाक्षुद्र-सहाहैमवतस्य च ॥
विम्ब्याः पुनर्नवाया वा कासमर्द्दस्य वा पृथक् ।
एकं धामार्गवं द्वे वा कषायैः परिमृद्य तु ॥
तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः ।
घृतं मनोविकारेषु श्रेष्ठं वमनमुत्तमम् ॥ ९ ॥

तत्र श्लोकौ ।

पल्लवे नव चत्वारः क्षीर एकः सुरासवे ।
क्वाथे नवैकोऽन्ने घ्रेये दश द्वौ च शकृद्रसे ॥

फलेन सहातिसञ्चूर्ण्य शर्करामधुभ्यां दश लेहाः सुखोदकानुपानाः कासिनाम्। इति दश। त्रीन् कल्कानाह—धान्येत्यादि। धान्यक्वाथेन धामार्गवफलकल्कः तुम्बुरुक्वाथेन मुद्गादियूषेण चेति त्रयः कल्काः॥ ८॥

गङ्गाधरः—अथ घृते दश योगानाह—जात्या इत्यादि। सौमनसायिन्या जात्या इति मालत्याः। मालत्यादीनामेकैकस्य कषायेण धामार्गवस्य फलमेकं द्वे वा परिमृद्य क्षीरं पचेत्। तत् क्षीरं मथित्वा यत् सर्पिरुत्तिष्ठेत् तत् सर्पिर्मदन-फलादिभिरपामार्गतण्डुलीयोक्तैः कल्कैः साधितं स्यात्, तद्घृतं मनोविकारेषु श्रेष्ठमिति घृते दश योगा इति धामार्गवः षष्टिधायोगयुक्तः॥ ९॥

गङ्गाधरः—तदाह—तत्र श्लोकाविति। नव योगाः धामार्गवस्य पल्लवे। चत्वारः क्षीरे। एकः सुरासवे। कषायैर्नवभिर्नव योगाः। एकोऽन्ने योगः।

भवति। पित्तोष्मसहिते कफे इति उन्नतोष्मगुणेन पित्तेन युक्ते कफे। अन्ये तु पित्तोष्मशब्देन पित्तोष्मणा कृतं ज्वरमाहुः। धान्येत्यादिना एककल्कयोगमाह। धान्यतुम्बुरुक्वाथ एव धान्य-तुम्बुरुयूषः। उक्तं हि जतूकर्णे—'धान्यतुम्बुरुरसेन कल्को विषनुत्" इति॥ ८॥

चक्रपाणिः—जात्या इत्यादिना एकादशकषाययोगानाह। जाती चम्पकजाती, अन्ये यूथिका सौमनसायिनीति वदन्ति। वृश्चिरः श्वेतपुनर्नवा। महासहा क्षुद्रसहा मुद्गमाषपर्ण्यौ।

दश लेहास्त्रयः कल्का दश चैव घृते तथा।
कल्पे धामार्गवस्योक्ताः षष्टिर्योगा महर्षिणा *॥ १०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने धामार्गव-कल्पो नाम चतुर्थोऽध्यायः॥ ४॥

एको प्रेये। तथा शकृद्रसे दश च द्वौ च। दश लेहाः। कल्कास्त्रयो योगाः। घृते च दश योगा इति॥ १०॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च। कल्पस्थाने धामार्गव-कल्पेऽध्याये तुरीयके। वैद्यगङ्गाधरकृते जल्पकल्पतरौ पुनः। कल्पस्थाने सप्तमे तु स्कन्धेऽध्याये तुरीयके। धामार्गवकल्पजल्प-शाखा तुर्या समापिता।

हैमवती वचा। तच्छृतमित्यादिना एकं घृतयोगमाह। पल्लवे नवेत्यादिसंग्रहेण व्युत्क्रम-संग्रहाभिधानं छन्दोऽनुरोधात्। दश द्वाविति द्वादशेत्यर्थः॥ ९। १०॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां धामार्गवकल्पो नाम चतुर्थोऽध्यायः॥ ४॥

---

* पल्लवे नव चत्वारः क्षीरे एकः सुरासवे। कषाये विंशतिः कल्को दश द्वौ च शकृद्रसे॥ अत्र एकस्तथा प्रेये दश लेहास्तथा घृतम्। कल्पे धामार्गवस्योक्ताः षष्टिर्योगा महर्षिणा॥ इति क्वचित् पुस्तके संग्रहश्लोकौ।

## पञ्चमोऽध्यायः ।

अथातो वत्सककल्पं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

अथ वत्सकनामानि भेदं स्त्रीपुंसयोस्तथा ।
कल्पञ्चास्य प्रवक्ष्यामि विस्तरेण यथातथम् ॥ २ ॥
वत्सकः कुटजः शक्रो वृक्षको गिरिमल्लिका ।
बीजानीन्द्रयवास्तस्य तथोच्यन्ते कलिङ्गकाः ॥
बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत् ।
श्यामा चारुणपुष्पी स्त्री फलवृन्तैस्तथाणुभिः ॥
रक्तपित्तकफघ्नस्तु सुकुमारेष्वनत्ययः ।
हृद्रोगज्वरवातासृक्-विसर्पादिषु शस्यते ॥ ३ ॥
काले फलानि संगृह्य तयोः शुष्काणि संक्षिपेत् ।
तेषामन्तर्नखं मुष्टिं जर्ज्जरीकृत्य भावयेत् ॥

<u>गङ्गाधरः</u>—अथोद्देशानुक्रमात् वत्सककल्पमाह—अथात इत्यादि। षड् विरेचनशताश्रितीये यदुद्दिष्टम्—कुटजस्त्वष्टादशधा योगमेतीति, तदष्टादश योगान् कुटजस्य व्याख्यास्याम इति शेषं पूर्ववत् ॥ १ ॥

<u>गङ्गाधरः</u>—अथेत्यादि। वत्सकस्य स्त्रीपुंभेद नामानि चाह—वत्सक इत्यादि। तस्य वीजानीन्द्रयवाः कलिङ्गकाश्चोच्यन्ते। स्त्रीपुंभेदमाह—बृहत्फल इत्यादिः पुमान्। श्यामेत्यादिः स्त्री, फलञ्च वृन्तञ्च सूक्ष्मं तस्याः। तस्य गुणमाह—रक्तपित्तेत्यादि ॥ २। ३ ॥

<u>गङ्गाधरः</u>—काल इत्यादि। तयोः स्त्रीपुंसयोर्वत्सकयोः। तेषां शुष्काणां

<u>चक्रपाणिः</u>—यथोक्तसम्बन्धात् वत्सककल्पाभिधानम्। वत्सकनामानि व्यवहारार्थं स्त्रीपुरुषभेदञ्चाह—अथ वत्सकेत्यादि। अत्र वत्सकस्त्रीपुरुषभेदेन गुणभेदः प्रयोगभेदो वा न प्रतिपादितः, तथापि स्त्रीरूपवत्सकेऽरुणपुष्पाऽणुफलत्वादिविशिष्टलक्षणयुक्तेऽप्यविशेषेणोभाभ्यामेवामयनिवृत्तिः स्यादित्येतदर्थमुभयोरपि समानगुणता ज्ञातव्या। काल इति उचिते काले। फलानीति पक्क-

मधुकस्य कषायेण कोविदारादिभिस्तथा।
निशि स्थितं विमृद्यैतत् लवणक्षौद्रसंयुतम्॥
पिबेत् तद्वमनं श्रेष्ठं पित्तश्लेष्मनिबर्हणम्॥ ४॥
अष्टाहं पयसार्केण तेषां चूर्णानि भावयेत्।
जीवकस्य कषायेण ततः पाणितलं पिबेत्॥
फलजीमूतकेक्ष्वाकु-जीवन्तीनां पृथक् पृथक्॥ ५॥
सर्षपाणां मधूकानां लवणस्याम्बुना पुनः।
कृशरेणाथवा युक्तं प्रदद्याद् वमनं भिषग्॥ ६॥

वत्सकफलानामन्तर्नखं मुष्टिं जर्ज्जरीकृत्य कुट्टयित्वा मधुकस्य कषायेण कोविदारादीनामष्टानामन्यतमेन कषायेण च भावयेत्। निशि स्थितं तत्र तत्र क्वाथे निशि स्थितमेतद्वत्सकवीजं मुष्टिमितं लवणक्षौद्रसंयुतं पिबेत्। इति नवसु कषायेषु नव योगाः॥ ४॥

गङ्गाधरः—अष्टाहमित्यादि। आर्केण पयसाऽष्टाहं तेषां वत्सकवीजानां चूर्णानि भावयेत्, ततस्तस्य पाणितलं कर्षं जीवकस्य कषायेण पिबेत्। इत्येकः। फलेत्यादि। जीवन्त्यन्तानां चतुर्णामन्यतमैकैककषायेण तदार्कपयोभिरष्टाह-भावितवत्सकवीजचूर्णानि पाणितलं पिबेदिति चत्वार इति चूर्णे पञ्च योगाः॥ ५॥

गङ्गाधरः—सर्षपाणामित्यादि। सर्षपाणामम्बुना वत्सकवीजकल्कं दद्यात्, अथवा मधूकानामम्बुना प्रदद्यात् अथवा लवणस्याम्बुना प्रदद्यादिति सलिले त्रयो योगाः। अथवा कृशरेण तिलकल्केन युक्तं वत्सकवीजकल्कं प्रदद्यादिति कृशरे त्वेको योग इत्यष्टादश योगाः वत्सककल्पे प्रोक्ता इति॥ ६॥

शुष्काणि। तेषामन्तर्नखमित्यादिना कषायैर्नव योगानाह। क्षौद्रसैन्धवयोगो यद्यपि सर्व्व-वमनेष्वेव सामान्येन विहितः, तथापीह लवणक्षौद्रसंयुतमितिवचनादुत्कर्षो लवणसैन्धवयो-रभिधीयते॥ १—४॥

चक्रपाणिः—अष्टाहमित्यादिना पञ्च चूर्णयोगानाह॥ ५।६॥

तत्र श्लोकः ।

कषाये नव चूर्णे च पञ्चोक्ताः सलिले त्रयः ।
कृशरेऽष्टादश प्रोक्ता योगाः कल्पे तु वत्सके ॥ ७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने वत्सककल्पो नाम पञ्चमोऽध्यायः ॥ ५ ॥

गङ्गाधरः—तत्र श्लोकः । कषाये नवेत्यादि । स्पष्टम् ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च ।
कल्पस्थाने वत्सकस्य कल्पेऽध्याये तु पञ्चमे । वैद्यगङ्गाधरकृते
जल्पकल्पतरौ पुनः । कल्पस्थाने सप्तमे तु स्कन्धेऽध्याये च
पञ्चमे । वत्सककल्पजल्पाख्या शाखेयं पञ्चमी मता ॥ ५ ॥

चक्रपाणिः—कृशरेणेत्यादिना कृशरयोग उच्यते, अत्र च इन्द्रयवचूर्णमधिकृतत्वादेवोच्यते । कषायैरित्यादिसंग्रहश्लोको व्याख्यातार्थ एव ॥ ७ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां वत्सककल्पो नाम
पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः।

अथातः कृतवेधनकल्पं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

अथ नामानि वक्ष्यामि कल्पञ्च कृतवेधने।
क्ष्वेड़ः कोषातकी जाली मृदङ्गफलमेव च ॥
अत्यर्थं कटुतीक्ष्णोष्णं गाढ़ेष्विष्टं गदेषु च।
कुष्ठपाण्डामयप्लीह-शोफगुल्मगरादिषु ॥ २ ॥
क्षीरादि कुसुमादीनां सुरा चैतेषु पूर्व्ववत्।
सुशुष्काणान्तु बीजानामेकं द्वौ वा यथाबलम्।
कषायैर्मधुकादीनां नवभिः फलवत् पिबेत् ॥ ३ ॥

गङ्गाधरः—अथोद्देशानुक्रमात् कृतवेधनकल्पमाह—अथात इत्यादि। षड्विरेचनशताश्रितीये यदुद्दिष्टम्—कृतवेधनं पाठ्यां भवति योगयुक्तमिति, तस्य कल्पं व्याख्यास्यामः। शेषं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—अथ नामानीत्यादि। क्ष्वेड़ इत्यादिना नामानि। लटापुटकीति लोके। तस्य गुणमाह—अत्यर्थमित्यादि। अत्यर्थं कटुकं तिक्तम् ॥ २ ॥

गङ्गाधरः—तस्य योगानाह—क्षीरादीत्यादि। कृतवेधनस्य कुसुमादीनां कुसुमफलप्रवालानां क्षीरादिपूर्व्ववच्चत्वारः। तद् यथा—कृतवेधनस्य पुष्पेण क्षीरं पक्त्वा पिबेदथवा फलेन क्षीरं पक्त्वा पिबेदथवाग्रपल्लवेन क्षीरं पक्त्वा पिबेदथवा कृतवेधनफले क्षीरं पक्त्वा घनीकृतं क्षीरसन्तानं पिबेदिति क्षीरे चत्वारो योगाः। सुरासवे चैकः। सुरामण्डे कृतवेधनस्य फलकल्कं प्रक्षिप्य भाजने स्थापयेद् यावदासुतं स्यात्, ततो विमृद्य पाययेदित्येक इति पञ्च योगाः। सुशुष्काणामित्यादि। कृतवेधनबीजमेकं द्वे वा शुष्कीकृत्य चूर्णयित्वा

चक्रपाणिः—वमनकल्पपारिशेष्यात् कृतवेधनकल्पोऽभिधीयते। गाढ़ेष्विति अत्यर्थगाढ़ेषु कुष्ठादिषु। क्षीरादीत्यादिना क्षीरयोगा उच्यन्ते। क्षीरयोगचतुष्टयं मदिरायोगञ्च जीमूतककल्पविधानातिदेशेनाह। क्षीरादिशब्देन क्षीरकृतपेयाक्षीरसन्तानिकादध्युत्तराणां ग्रहणम्। एते च संग्रहेऽक्षीररूपा अपि क्षीरविकारतया क्षीरशब्देनैव गृहीताः क्षीरे द्वौ द्वौ इति वचनेन। कुसुमादीनामिति कृतवेधनस्य, पुष्पादीनां "पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृताः। लोमशे क्षीरसन्तानं दध्युत्तरमलोमशे" इति जीमूतकविधानोक्तानाम्। सुरा चैतेषु पूर्व्ववदिति यथा जीमूतककल्पविधानेन क्षीरादयः कर्त्तव्याः, तथा क्षीरादयः सुरा च कर्त्तव्याः। सुशुष्काणाम्

क्वाथयित्वा फलं तस्य पूत्वा लेहं निधापयेत् ।
कृतवेधनकल्कांशं फलाध्यर्द्धांशसंयुतम् ।
पृथगारग्वधादीनां त्रयोदशभिरासुतम् ॥ ४ ॥
* शाल्मलीमूलवृन्तान्त-पिच्छाभिर्दशभिस्तथा ।
वर्त्तयः फलवत् षट् स्युः फलादीनां घृतं तथा ॥ ५ ॥

यथाबलं मधुकादीनां नवानां नवभिः कषायर्मदनफलवत् पिबेत् । इति नव क्वाथे ॥ ३ ॥

गङ्गाधरः—तथा क्वाथे त्रयोदश चाह—क्वाथयित्वेत्यादि । तस्य कृतवेधनस्य फलं क्वाथयित्वा पूत्वा पुनः पक्त्वा लेहं निधापयेत् कारयेत् । तत् कृतवेधनफलस्य क्वाथस्याध्यर्द्धमर्द्धांशाधिकतुल्यांशस्तेन युक्तं कृतवेधनस्य कल्कं क्षिप्त्वा मिश्रयित्वा निधापयेत् । यावन्मितं फलकल्कं क्वाथयित्वा पूत्वा लेहं कुर्य्यात्, तदंशस्य सार्द्धांशकृतवेधनफलचूर्णसंयुतं तं लेहं निधापयेत् । तं लेहमारग्वधादीनाम् आरग्वधीयोक्तानामारग्वधादिनिम्बान्तानां त्रयोदशानां प्रत्येकक्वाथे प्रक्षिप्य भाजने स्थापयेद् यावदासुतं स्यात्, ततः पिबेदिति त्रयोदश क्वाथासवे । इति पूर्व्वैर्नवभिः सह क्वाथे द्वाविंशतिर्योगाः ॥ ४ ॥

गङ्गाधरः—शाल्मलीत्यादि । शाल्मल्या मूलवृन्तादीनां दशानां दशभिः पिच्छाभिः क्वथिताभिर्मूलफलपुष्पवल्कसारपत्रकण्टकमज्जवेष्टकवृन्तानामेकै-

इत्यादिना नव कषाययोगानाह । फलवदिति मदनफलं यथा यष्टीमधुकादिभिः पीयते, तथा एतदपि पातव्यमित्यर्थः । एतन्नवकषायप्रयोगेषु शेषविधिप्रत्ययकं लेहं पठन्ति—"क्वाथयित्वा रसं तस्य पूत्वा लेहं निधापयेत्" इत्यादि, तच्च सङ्गतार्थम् । उक्तञ्च जतूकर्णे—"अत्र जीवकादीनां मदनफलवत् कषायैर्लेहा भवन्ति नव" इति ॥ १—३ ॥

चक्रपाणिः—पृथगित्यादिना त्रयोदश कषाययोगानाह । एवं द्वाविंशतिः कषाययोगा भवन्ति । आरग्वधादयस्त्रयोदश मदनकल्पे 'आरग्वधवृक्षकेत्यादिना गुडूच्यन्तेनोक्ता ज्ञेयाः ॥ ४ ॥

चक्रपाणिः—शाल्मलीत्यादिना दश पिच्छायोगानाह । शाल्मली मूलमादि येषु ते शाल्मलीमूलाः । शाल्मल्यादयो विमानपठिता दश—'शाल्मलीशाल्मलकभद्रपर्ण्येलापर्ण्युपोदिकोद्दाल-

* शाल्मलीमूलचूर्णानामिति चक्रधृतः पाठः ।

कोषातकानि पञ्चाशत् कोविदाररसैः पचेत्।
तं कषायं फलादीनां कल्कैर्लेहं पुनः पचेत्॥
क्ष्वेड़स्य तत्र भागः स्याच्छेषाण्यर्द्धांशिकानि च।
कषायैः कोविदाराद्यैरष्टाभिस्तं पृथक् पिबेत्॥ ६॥

काभिस्तं लेहमासुतं पिबेदिति दश पिच्छायोगाः। वर्त्तिक्रियाः षड़ाह—वर्त्तय इति। मदनफलवर्त्तिवत् षट् कृतवेधनफलानां वर्त्तयः स्युः। तद्यथा—कृतवेधनफलादीनां चूर्णानि कोविदारादीनां षण्णां कोविदारकव्बुदारनीपविदुलविम्बीशणपुष्पीणामन्यतमकषायेण पक्त्वा वर्त्तीः कुर्य्यात्। ता वर्त्तिक्रिया मदनफलमधुककोविदारादीनां कषायोपसज्जनाः पेयाः वर्त्तीः पीत्वा मदनादिकषायमनुपिबेत् सह पिबेद् वेति। षट् वर्त्तिक्रियाः। अथ घृतञ्चैकमाह। फलादीनां घृतं तथेति तथा मदनफलादिसिद्धं घृतं ज्ञेयम्। तद्यथा—फलादीनां मदनफलादीनामपामार्गतण्डुलीयोक्तानां मदनं मधुकमित्यादीनां कषाये चतुर्गुणे कृतवेधनफलकल्कसिद्धक्षीरोत्थं घृतं पचेदित्येको घृतयोगः॥ ५॥

गङ्गाधरः—अथ लेहेऽष्टावाह—कोषातकानीत्यादि। कोषातकीफलानि कृतवेधनस्य फलानि पञ्चाशद्गुड़कानि कोविदाररसैः पचेत्। तं कषायं फलादीनां मदनफलयष्टीमधुनिम्बजीमूतकृतवेधनपिप्पलीकुटजफलेक्ष्वाकवेलाधामार्गवाणामपामार्गतण्डुलीयोक्तानां कल्कैः कोषातकीपञ्चाशत्फलमानार्द्धांशैः सह युक्तं पुनर्लेहं पचेत्। तदाह—क्ष्वेड़स्य कोषातक्याः पञ्चाशदेक एव भागः शेषाणि मदनफलादीनि प्रत्येकं तदर्द्धांशानीति। तं लेहं कोविदारादीनामष्टानामन्यतमैककाथे पिबेदित्यष्टौ लेहाः॥ ६॥

धन्वनराजादनोपचित्रागोप्यन्ताः, एतैर्योगाः पूर्य्यन्ते, एषां चूर्णानां पिच्छाभिर्युक्तया कृतत्वेनैव योगा द ज्ञेयाः। शाल्मलकः शाल्मलीभेदः रोहतको वा, भद्रपर्णी भादाली, एलापर्णी नागबला अहिंस्रेत्यन्ये। राजादनः क्षीरिका। उपचित्रा दन्ती। गोपी शारिवा। वर्त्तिक्रियाः षट् फलवदिति 'फलपिप्पलीनां चूर्णानि पूर्ववत्' इत्यनेन ग्रन्थेन या वर्त्तिक्रिया उक्ता मदनकल्पे, तद्वद् इहापि कृतवेधनचूर्णानां षट् वर्त्तिक्रियाः कर्त्तव्याः। फलादीनां घृतं तथा इत्यनेन कृतवेधनसाधितक्षीरादुत्थितं नवनीतं फलादिकषायेण साधनीयं मदनफलघृतवदित्यर्थः॥ ५॥

चक्रपाणिः—कोषातकानीत्यादि। अत्रैव क्वाथपादिककल्के कर्त्तव्ये क्ष्वेड़स्य पूर्णो भागो देयः।

कषायेषु फलादीनामानूपं पिशितं पृथक् ।
कोषातक्या समं पक्त्वा रसं सलवणं पिबेत् ॥
फलादिपिप्पलीतुल्यं तद्वन्मांसरसं पिबेत् ।
च्वेड़ं कासी पिबेत् सिद्धं मिश्रमिक्षुरसेन च ॥ ७। ८ ॥

तत्र श्लोकौ ।

क्षीरे द्वौ द्वौ सुरा चैका क्वाथे द्वाविंशतिस्तथा ।
दश पिच्छा घृतञ्चैकं षट् च वर्त्तिक्रियाः शुभाः ॥

गङ्गाधरः—मांसे सप्त योगानाह—कषायेष्वित्यादि । फलादीनामपामार्ग-तण्डुलीयोक्तानां मदनादीनां धामार्गवान्तानां दशानां पृथक् कषायान् कृत्वा तेषां मिलितानां कषाये आनूपमांसं वराहादिमांसं कोषातक्याः फलं समांशं पक्त्वा रसं सलवणं पिबेदित्येको योगो मांसरसे । मदनादीनां षड्परानाह—फलादीत्यादि । मदनफलादिपिप्पल्यन्तानामेकैकस्य तुल्यं कोषातकीफलं तद्वन्मांसरसं तयोः क्वाथेषु षट्सु पक्कमानूपमांसरसं सलवणं पिबेदिति सह पूर्व्वेण सप्त । इक्षुरसे चैकमाह—क्ष्वेड़मित्यादि । क्ष्वेड़ं कृतवेधनफलं मदन-फलादिषट्क्वाथसिद्धमिक्षुरसेन मिश्रं पिबेदित्येकः । इति कृतवेधनयोगाः षष्टिरुपसंह्रियन्ते ॥ ७। ८ ॥

गङ्गाधरः—तत्र श्लोकाविति । क्षीरे द्वौ द्वौ चत्वारः कृतवेधनस्य योगाः, सुरासवे त्वेकः, क्वाथे नव च त्रयोदश चेति द्वाविंशतिः, पिच्छायां दश,

फलादीनाञ्च प्रत्येकं क्ष्वेड़ादर्द्धभागिकत्वम् । कषायेष्वित्यादिना सप्त मांसयोगानाह । सममिति कोशातकीतुल्यं मांसम् । अत्र पिबेदित्यनेन षण्मांसरसाः, फलादीत्यनेन चकः । "फलादिपिप्पली-तुल्यं तद्वत्' इत्यनेन फलादिभिः समं मांसम् । तद्वदिति वचनात् कोशातक्याः कषायेण साधनीयम् ॥ ६।७ ॥

लेहेऽष्टौ सप्त मांसे च योग इत्तुरसेऽपरः ।
कृतवेधनकल्पेऽस्मिन् षष्टिर्योगाः प्रकीर्त्तिताः ॥ ६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
कृतवेधनकल्पो नाम षष्ठोऽध्यायः ॥ ६ ॥

वर्त्तिकाक्रियाः षट्, घृते चैकः, अष्टौ लेहाः, सप्त मांसरसे, एक इक्षुरसे। इति षष्टिर्योगा इमे ॥ ९ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत
एव च। कल्पस्थाने कृतवेध-कल्पेऽध्याये तु षष्ठके। वद्यगङ्गाधरकृते
जल्पकल्पतरौ पुनः। कल्पस्थाने सप्तमे तु स्कन्धेऽध्याये च
षष्ठके। कृतवेधनकल्पस्य जल्पशाखा तु षष्ठिका ॥ ६ ॥
इति वमनयोगाः पञ्चपञ्चाशदुत्तरशतत्रयमिति ॥ ३५५ ॥

चक्रपाणिः—क्ष्वेड़कसोमाह—क्ष्वेड़ेत्यादि। सिद्धमिति इक्षुरसेन मिश्रितं शृतसाधितं पिबेदित्यर्थः ॥ ८ । ९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां कृतवेधनकल्पो नाम
षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथातः श्यामात्रिवृतूकल्पं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

विरेचनं त्रिवृन्मूलं श्रेष्ठमाहुर्मनीषिणः ।
तस्याः संज्ञाः गुणाः कर्म्म भेदः कल्पश्च वक्ष्यते ॥ २ ॥
त्रिभण्डी त्रिवृता चैव श्यामा कूटरणा तथा ।
सर्व्वानुभूतिः सुवहा शब्दैः पर्य्यायवाचकैः ॥
कषायमधुरा रूक्षा विपाके कटुका स्मृता ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपिनी ॥
सेदानीमौषधैर्युक्ता वातपित्तकफापहा ।
कल्पे वैशेष्यमासाद्य सर्व्वरोगहरा भवेत् ॥ ३ ॥

गङ्गाधरः—अथोद्देशक्रमाच्छेषान् षड्विरेचनशतेषु पञ्चचत्वारिंशदुत्तरशतद्वययोगान् व्याख्यातुं श्यामात्रिवृतोः कल्पमाह—अथात इत्यादि। षड्विरेचनशताश्रितीये यदुद्दिष्टम्—'श्यामात्रिवृद्योगशतं प्रणीतं दशापरे चात्र भवन्ति योगाः' इति, तान् दशोत्तरशतयोगान् श्यामायास्त्रिवृतायाश्च समानान् व्याख्यास्याम इति। शेषं सर्व्वं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—विरेचनमित्यादि। तस्यास्त्रिवृतायाः संज्ञामाह—त्रिभण्डीत्यादि। त्रिभण्ड्यादिभिः पर्य्यायवाचकैः शब्दैस्त्रिवृदुच्यते। गुणानाह। कषायेत्यादि गुणाः। कफादिशमनमनिलकोपनञ्च कर्म्म स्वाभाविकम्। सेदानीमित्यादिना

चक्रपाणिः—वमनार्थकल्पानन्तरं विरेचनकल्पेषु वक्तव्येषु त्रिवृताया विरेचनद्रव्येषु सुखविरेचनतया प्रधानत्वात् त्रिवृत्कल्प एवाभिधीयते। त्रिवृतो भेद एव च श्यामा। तेन श्यामायास्त्रिवृतायाश्च कल्पः। यद्यपि चारुणमूलैव त्रिवृदत्रोत्कृष्टा वक्तव्या, तथाप्यध्यायसंज्ञायां श्यामाया आदौ पाठेनाशुदोषहन्तृतया श्यामायां प्रकर्षं दर्शयति। ये चात्र योगा वक्तव्याः, तेऽरुणया वा श्यामया वा उभाभ्यां वा दोषशरीरादिबलाबलमपेक्ष्य कर्त्तव्याः। विरेचन इत्यादौ त्रिवृन्मूलशब्देन श्याममूलाया अरुणमूलायाश्च सामान्येन मूलं गृह्यते ॥ १ । २ ॥

चक्रपाणिः—पर्य्यायत्वेन वाचकः पर्य्यायवाचकैः। सेदानीमित्यादि। वातपित्तकफा-

मूलन्तु द्विविधं तस्याः श्यामञ्चारुणमेव च।
तयोर्मुख्यतरं विद्धि मूलं यदरुणप्रभम्।
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम्॥
मोहयेदाशुकारित्वाच्छ्यामा कण्ठं क्षिणोत्यपि।
तैक्ष्ण्यात् कर्षति हृत्कण्ठमाशु दोषं हरत्यपि।
शस्यते बहुदोषाणां क्रूरकोष्ठाश्च ये नराः॥ ४॥
गुणवत्यां तयोर्भूमौ जातं मूलं समुद्धरेत्।
उपोष्य प्रयतः शुक्ले शुक्लवासाः समाहितः॥

योगजं कर्म्म। रौक्ष्याच्चानिलकोपिनी प्रसिद्धा सत्यपि सा त्रिवृता खल्विदानीं चिकित्साकाले वाताद्यपहैरौषधैः सह कल्पे वैशेष्यमासाद्य सर्व्वरोगहरा भवेदिति॥ २। ३॥

गङ्गाधरः—मूलमित्यादि। तस्यास्त्रिवृताया द्विविधं मूलं श्यामश्चारुणश्च। तत्र श्याममूला त्रिवृता श्यामा, अरुणमूला त्रिवृता त्रिवृतेवेहोच्यते। तयोररुणप्रभं मूलं मुख्यतरं सुकुमारादिषु हितम्। श्यामा या श्याममूला त्रिवृत् साशुकारित्वात् कण्ठं क्षिणोति, तैक्ष्ण्यात् हृत्कण्ठं कर्षति, दोषमप्याशु हरति। बहुदोषादीनां नृणां शस्यते चेति॥ ४॥

गङ्गाधरः—तयोरुपयोगमाह—गुणवत्यामित्यादि। जाङ्गलसाधारणदेशे गुणवत्यां कृष्णमृत्तिकायां सुवर्णमृत्तिकायां वा भूमावनूपरायां श्मशानादिवर्ज्जितायां जातं मूलं समुद्धरेत्। उपोष्य प्रयतः सन् शुक्लवासाः समाहितः

पहौषधप्रयोगेण वातहन्तृत्वमविद्यमानं भवति। कफपित्तहन्तृत्वं विद्यमानमधिकं भवतीति ज्ञेयम्। कल्पे वैशेष्यमिति कल्पनाविशेषम्। सर्व्वरोगहरेति व्यस्तसमस्तसर्व्वदोषारब्धरोगहरा या॥ ३॥

चक्रपाणिः—त्रिवृतयोर्भेदमाह—मूलन्तु द्विविधमित्यादि। मुख्यतरमिति विरेचनक्रियायामेवाव्यापत्तिकरत्वात् श्रेष्ठतरम्। सुकुमाराः शिशवश्च यद्यपि अविरेचनीया उक्ताः, तथापि तेषां विधीयमानं विरेचनं हितमिति ज्ञेयम्। मोहयेदित्यादिना श्याममूलाया गुणकर्म्मणी ब्रूते, क्षिणोतीति धातुक्षयं कुर्य्यात्॥ ४॥

चक्रपाणिः—यद्यपि मदनकल्प एव गुणवद्भूमिजातत्वादि सामान्येन भेषजानामुक्तमेव, तथापि गम्भीरानुगतत्वादिविशेषस्य इहाप्युत्तरे हाभिधाने इति तदप्रसङ्गात् इत् विद्धि......

गम्भीरानुगतं श्लक्ष्णं न तिर्य्यग् विसृतश्च यत् ।
तद् विपाटयोद्धरेद् गर्भं त्वचं शुष्कां निधापयेत् ॥ ५ ॥
स्निग्धस्विन्नो विरेच्यस्तु पेयमात्रो गतः सुखम् ।
अक्षमात्रं तयोः पिण्डं विनीयाम्लेन ना पिबेत् ॥
गोऽव्यजामहिषीमूत्र-सौवीरकतुषोदकैः ।
प्रसन्नया त्रिफलया शृतया च पृथक् पृथक् ॥ ६ ॥
एकैकं सैन्धवादीनां द्वादशानां सनागरम् ।
त्रिवृत्त्रिगुणसंयुक्तं शर्कराम्बुयुतं पिबेत् ॥ ७ ॥

सन्नेव पुमान् शुक्लपक्षे समुद्धरेत्। कीदृशं मूलमुद्धरेदिति तदाह—गम्भीरेत्यादि। तस्या यन्मूलं गम्भीरमृत्तिकायामनुगतं श्लक्ष्णमकर्कशं यन्न तिर्य्यग् विसृतं तन्मूलमुद्धरेत्। गर्भं विपाट्य चोद्धरेन्मध्यं काष्ठं, त्वचं शुष्कां निधापयेत् ॥ ५ ॥

गङ्गाधरः—विरेचनक्रममाह—स्निग्धेत्यादि। स्निग्धस्विन्नः पुमान् यो विरेच्यः स पेयमात्रः सुखं गतः स्यात्। यथा पिबेत् तदाह—अक्षेत्यादि। तयोः श्यामात्रिवृतयोरक्षमात्रं पिण्डं विनीय पेषयित्वा कल्कीकृत्याम्लेन गोलयित्वा ना पुमान् पिबेत्। इत्येकोऽम्लेन। अपरानष्टावाह—गोऽव्यजेत्यादि। तदक्षमात्रं तयोः पिण्डं गोमूत्रेण पिबेदथवा मेषीमूत्रेण पिबेदथवा छागीमूत्रेण पिबेदथवा महिषीमूत्रेण पिबेदथवा सौवीरकेण पिबेदथवा तुषोदकेन पिबेदथवा प्रसन्नया पिबेदथवा शृतया त्रिफलया पिबेदित्यष्टौ योगाः। इति अम्लादिभिरेकोऽष्टौ चेति नव ॥ ६ ॥

गङ्गाधरः—अथ सैन्धवादिभिर्दश च द्वौ चाह। सैन्धवादीनां दीर्घञ्जीवितीयोक्तानां द्वादशानां सैन्धवविड़ोद्भिदसामुद्रलवणानां चतुर्णां तदनन्तरोक्ता

गुणवत्यामित्यादि। शुक्ल इति शुक्लपक्षे। गम्भीरानुगतमिति दूरात् प्रविष्टम्। उद्धरेद् गर्भमिति मूलस्यास्थि उद्धरेत्। निधापयेदिति यथोक्तभेषज्यस्थापनविधानेन स्थापयेत् ॥ ५ ॥

चक्रपाणिः—पेयामात्रोपित इति पूर्व्वदिने पेयामात्राहारतया उषितः। यद्यपि चान्यत्र विरेचनपूर्व्वदिनेषु तथैवाहारो नियमितः—'स्नेहवद्द्रवमुष्णञ्च लघु मांसरसौदनम्' इत्यनेन, तथापि त्रिवृद्विरेचनप्रयोगे पूर्व्वदिने विशेषविधानात् पेयादानं ज्ञेयम्। किञ्चेयमेव तद्वचनात् स्निग्धोष्णमांसरससाधिता च क्रियमाणा पूर्व्वोक्तस्नेहवद्द्रवोष्णमांसरसौदनाविरुद्धा भवति। अक्षमात्रमित्यादिना नवभिरम्लादिभिर्द्रव्यैर्नव योगानाह। तयोरिति श्यामात्रिवृदरुणत्रिवृतयोः।

पिप्पली पिप्पलीमूलं मरिचं हस्तिपिप्पली।
सरलं किलिमं हिङ्गु भार्गी तेजोवती तथा॥
मुस्तं हैमवती पथ्या चित्रको रजनी वचा।
स्वर्णक्षीर्यजमोदा च शृङ्गवेरञ्च तैः पृथक्॥
एकैकार्द्धांशसंयुक्तं पिबेद् गोमूत्रसंयुतम्॥ ८॥
मधुकार्द्धांशसंयुक्तं शर्कराम्बुयुतं पिबेत्।
जीवकर्षभकौ मेदां श्रावणीं कर्कटाह्वयाम्।
माषपर्णीं मुद्गपर्णीं महतीं श्रावणीं तथा॥

नामष्टानां मूत्राणामन्यतममेकैकं नागरचूर्णसंयुक्तं त्रिवृत्कल्कात्त्रिगुणः सैन्धवादिभ्यस्तेन संयुक्तं शर्कराम्बुयुतं पिबेदिति द्वादश योगाः॥ ७॥

गङ्गाधरः—गोमूत्रेऽष्टादश चाह—पिप्पलीत्यादि। त्रिवृतामूलस्यार्द्धांशसंयुक्तं पिप्पल्यादीनामष्टादशानामेकैकं गोमूत्रसंयुतं पिबेत्। किलिमं द्रुकिलिमो देवदारु। तेजोवती चवी। तथा हैमवती श्वेतवचा, वचा तदितरा वचा। स्वर्णक्षीरी स्वनामख्याता। अजमोदा यमानीमूलं मूलिनीपूक्तत्वात्। इत्यष्टादश गोमूत्रे॥ ८॥

गङ्गाधरः—अथ यष्टीमधुयोगेन द्वावाह—मधुकेत्यादि। त्रिवृताचूर्णं मधुकचूर्णाद् द्विगुणमिति मधुकार्द्धांशसंयुतं शर्करोदकेन पिबेत्। इत्येको यष्ट्या, द्वितीयस्तु जीवकादिपूच्यते। यः पञ्चदशः स एको मधुकयोगेन योग इति द्वौ यष्टीमधुकेन। जीवकेत्यादि। जीवकादिपयस्यान्तांश्चतुर्दश। तेषामेकैकं त्रिवृच्चूर्णसमं विधिना विरेचनक्रमेण पिबेदिति। तत्र श्रावणी रक्त

एतयोश्च मिलितयोः प्रत्येकं प्रयोगादि प्रागेव प्रतिपादितम्। अम्लेनेति काञ्जिकेन। एकैकमित्यादिना सैन्धवादिभिर्द्वादश योगानाह। सैन्धवादयश्च द्वादश रोगभिषग्जितीये लवणस्कन्धोक्ता ज्ञेयाः। सनागरमिति नागरसहितं सत् प्रत्येकं सैन्धवादीनां चूर्णं द्विगुणत्रिवृताचूर्णयुक्तं पातव्यम्॥ ६।७॥

चक्रपाणिः—पिप्पलीत्यादिना पिप्पल्यादिद्रव्यभेदेन मूत्रेऽष्टादश योगानाह। मधुकेत्यादिनैकः प्रयोगः। अयञ्च संग्रहोक्तयोः यष्ट्या द्वौ इत्यनयोरेकतरः। जीवकेत्यादिना चतुर्दशयोगान् तथा

काकोलीं क्षीरकाकोलीं क्षुद्रां छिन्नरुहां तथा ।
क्षीरशुक्लां पयस्याञ्च यष्ट्याह्वां विधिना पिबेत् ।
वातपित्तहितान्येतान्यन्यानि च कफानिले ॥
क्षीरमांसेक्षुकाश्मर्य्य-द्राक्षापीलुरसैः पृथक् ।
सर्पिषा वा तयोश्चूर्णमभयार्द्धांशिकं पिबेत् ॥
लिह्याद् वा क्षौद्रसर्पिर्भ्यां संयुक्तं ससितोपलम् ।
अजगन्धातुगाक्षीरी-विदारीशर्करात्रिवृत् ॥
चूर्णितं क्षौद्रसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
सन्निपातज्वरस्तम्भ-दाहतृष्णार्दितो नरः ॥ ६—११ ॥

मुण्डीरी । महती श्रावणी श्वेतमुण्डेरी । क्षीरशुक्ला क्षीरविदारी, पयस्या तदितर विदारी, भूमिकुष्माण्डद्वयमिति यावत् । इति जीवकादौ यष्टीमधुकवर्ज्जं चतुर्दश । यष्ट्याह्वां त्रिवृच्चूर्णसमां विधिना पिबेदिति यष्ट्या द्वितीययोगः । इति षोड़श । अथ क्षीरादौ सप्त योगानाह—अन्यानि च कफानिले इति । क्षीरेत्यादि । तयोः श्यामारुणमूलयोश्चूर्णं अर्द्धांशहरीतकीचूर्णयुक्तं क्षीर-मांसादिरसैः षड्भिः प्रत्येकैः सह पिबेत् । तथा सर्पिषा सह अभयार्द्धांश युक्तं तयोश्चूर्णं पिबेदिति क्षीरादौ सप्त । अथ लेहऽष्टावाह । लिह्या-दित्यादि । तयोः श्यामारुणयोस्त्रिवृन्मूलयोश्चूर्णं समशर्करं क्षौद्रसर्पिर्भ्यां लिह्यादित्येकः । अजगन्धेत्यादि । अजगन्धा यमानीमूलम् मूलिनीप्रक्रमात् । तुगाक्षीरी वंशलोचना, विदारी भूमिकुष्माण्ड, सर्व्व समानांशं मिश्रयित्वा क्षौद्रसर्पिर्भ्यां लेह इति द्वितीयः ॥ ९—११ ॥

यष्ट्याह्वामित्येकश्चाह । अयञ्च संग्रहोक्तयोः यष्ट्या द्वौ इति द्वयोरन्यतरः । क्षुद्रा कोकिलाक्षः । क्षीरशुक्ला क्षीरविदारी । पयस्याऽर्कपुष्पी । क्षीरेत्यादिना क्षीरादौ सप्त योगानाह । पीलु औत्तरपथिकं फलम् ॥ ८—१० ॥

**चक्रपाणिः**—लिह्याद् वा मध्विव्यादिना अष्टौ लेहानाह । लिह्याद् वेत्यादिना प्रथमो लेहः ।

श्यामात्रिवृत्कषायेण कल्केन च सशर्करम् ।
साधयेद् विधिवल्लेहं लिह्यात् पाणितलं ततः ॥ १२ ॥
सक्षौद्रां शर्करां पक्त्वा कुर्य्यात् मृद्धाजनेन च ।
दद्याच्छीते त्रिवृच्चूर्णं त्वक्पत्रमरिचैः सह ।
दद्यात् तन्मात्रया लेहमीश्वराणां विरेचनम् ॥ १३ ॥
रसान् कौड़विकानिक्षु-द्राक्षापीलुपरूषकान् ।
सितोपलापलं क्षौद्रात् कुड़वार्द्धञ्च पाचयेत् ॥
तं लेहं योजयेच्छीतं त्रिवृच्चूर्णेन शास्त्रवित् ।
एतदुत्सन्नपित्तानामीश्वराणां विरेचनम् ॥ १४ ॥
शर्करामोदकान् वर्त्ति गुड़िका मांसपूपकान् ।
अनेन विधिना कुर्य्यात् पैत्तिकानां विरेचनम् ॥ १५ ॥

गङ्गाधरः—श्यामेत्यादि । श्यामात्रिवृतयोरन्यतरस्याः कषायेण कल्केन च समशर्करेण लेहं साधयेत् पक्त्वा । इति तृतीयलेहः ॥ १२ ॥

गङ्गाधरः—सक्षौद्रामित्यादि । त्रिवृच्चूर्णसमां जलेन द्रवीकृतां शर्करां पक्त्वा लेहं कुर्य्यात्, शीते सति त्वगादिभिस्त्रिभिर्मिलितैः समं त्रिवृच्चूर्णं सक्षौद्रं समक्षौद्रं दद्यात् । तं लेहमीश्वराणां राज्ञां मात्रया दद्यात् । इति चतुर्थः ॥ १३ ॥

गङ्गाधरः—रसानित्यादि । इक्षुप्रभृतीनां रसान् प्रत्येकं कौड़विकान् पृथक् पृथगेकैकं रसं कुड़वं सितोपलायाः पलं सर्व्वं लेहवत् पाचयेत्, शीतीभूते क्षौद्रात् कुड़वार्द्धं दत्त्वा कृतं तं लेहं मात्रया त्रिवृच्चूर्णेन योजयेत् । इतीक्षुरसादिषु चतुर्षु चत्वारो लेहा इति । इत्यष्टौ लेहाः ॥ १४ ॥

गङ्गाधरः—सितयापि च चतुरो योगानाह—शर्करेत्यादि । अनेन विधिना

अजगन्धा इत्यादिना द्वितीयः । अजगन्धा अजमोदा । श्यामात्रिवृदित्यादिना तृतीयो लेहः । अत्र शर्करात्रिवृच्चूर्णाभ्यां समाभ्यां क्वाथपादिकाभ्यां लेहाः कर्त्तव्याः । सक्षौद्रामित्यादिना चतुर्थः । अत्र क्षौद्रपाकयोगमहिम्ना त्रिवृच्चूर्णमात्रा पादिकं त्वक्पत्रादीनां सौगन्ध्यमात्रप्रयोजनत्वात् । अत्र तु 'ईश्वराणां विरेचनमिति वचनेन सुकुमारत्वात् स्निग्धविषयतामस्य दर्शयति । ईश्वरा हि प्रायेण सुकुमाराः स्निग्धाश्च भवन्ति । कौड़विकानित्यादिः पञ्चमः । अत्र त्रिवृच्चूर्णमनिर्द्दिष्टमानञ्च प्रक्षेपन्यायात् लेहात् पादिकं कर्त्तव्यम् । उत्सन्नपित्तानामनुद्भूतपित्तानाम् । शर्करेत्यादिना सिता-

पिप्पलीं नागरं क्षारं श्यामात्रिवृतया सह ।
लेहयेत् मधुना सार्द्धं श्लैष्मिकाणां विरेचनम् ॥ १६ ॥
मातुलुङ्गाभयाधात्री-श्रीपर्णीकोलदाड़िमात् ।
स्वरसान् भर्जितां तैले साधयेत् तत्र चावपेत् ॥
सहकारात् कपित्थाच्च मध्यमम्लञ्च यत् फलम् ।
पूर्व्ववद्द बहलीभूते त्रिवृच्चूर्णं समावपेत् ॥
त्वक्पत्रकेशरैलानां चूर्णञ्च मधुमात्रया ।
लेहोऽयं कफपूर्णानामाश्वराणां विरेचनम् ॥
पानकानि रसान् यूषान् मोदकान् रागषाड़वान् ।
अनेन विधिना कुर्य्याद्द विरेकार्थं कफाधिके ॥

पूर्व्वोक्तलेहविधिना शर्करामोदकादीन पक्त कुर्य्यादिति। शर्करां त्रिवृच्चूर्णसमां पक्त्वा मोदकादीन कुर्य्यादित्येकः ॥ १५ ॥

गङ्गाधरः—पिप्पलीमित्यादि। पिप्पल्यादिभिस्त्रिभिः समया त्रिवृतया सह मिश्रीकृत्य सर्व्वसमशर्करया मोदकादीन कृत्वा कफे मधुना लेहयेदित्येकः ॥ १६ ॥

गङ्गाधरः—मातुलुङ्गेत्यादि। मातुलुङ्गादीनां स्वरसान शर्करया समान साधयेत् पचेत्। तत्र च लेहीभूते तैले भर्जितां त्रिवृतां आवपेत् प्रक्षिपेत्। अधिकारात् इत्येकः श्लैष्मिकाणामेव। सहकारात् फलमध्यं कपित्थात् फलमध्यं यत् फलमम्लं वदरतिन्तिड़िकादिकं तस्य तस्य मध्यं तदेकसमां शर्कराञ्च पक्त्वा घनीभूते तैलभर्जितं त्रिवृच्चूर्णं त्वगादीनां चूर्णञ्च मिलितं त्रिवृच्चूर्णसमं तत्र समावपेत्। मोदकादीन् कृत्वा मधुमात्रया लेहः। इत्येक इति चत्वारः। पानकानीत्यादि। अनेन वक्ष्यमाणेन विधिना पानकादीन् कुर्य्यात्।

योगांश्चतुरो अतिदेशानुगुण्यात् लेहानां मध्य एवाह। अत्र वर्त्यादियोऽपि शर्कराकृता एव ज्ञेयाः। अनेन विधिनेति द्रवादिरससंस्कारेण त्रिवृच्चूर्णयोगेन च। पिप्पलीं नागरमित्यादिना षष्ठो लेहः। मध्यमित्यम्लकपित्थस्य मध्यं भागम्। अम्लञ्च यत् मातुलुङ्गादि। पूर्व्ववदिति कौडविकान् (कौडविकांशान) मातुलुङ्गादिरसानां दर्शयति। पानकानीत्यादिनातिदेशानुगुण्यात् पानकादिपञ्चयोगानाह। रागप्रधानः षाड़वो रागषाड़वः। अनेन विधिनेति पूर्व्वलेहोक्तविधिना।

भृङ्गैलाभ्यां समं नीतं त्रिवृतायाः सशर्करम् * ।
चूर्णं फलरसक्षौद्र-सक्तुभिस्तर्पणं पिबेत् ॥
वातपित्तकफोत्थेषु रोगेष्वल्पाग्निकेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ १७ । १८ ॥
शर्करा त्रिफला श्यामा त्रिवृन्मागधिका मधु ।
मोदकः सन्निपातोर्द्ध्व-रक्तपित्तज्वरापहः ॥ १९ ॥
त्रिवृद्भागास्त्रयः प्रोक्तास्तिस्रश्च त्रिफलात्वचः ।
विडङ्गक्षारपिप्पल्यः समास्तिस्रश्च चूर्णिताः ॥

तद् यथा—भृङ्गैलाभ्यामित्यादि। भृङ्गं गुड़त्वक्। एला स्थूला। ताभ्यां द्वाभ्यां समं त्रिवृतायाश्चूर्णं सशर्करं त्रयाणां समा शर्करा। फलानामम्लानां तिन्तिड़ीकोलाम्रबदरादीनामन्यतमं रसं यथायोग्यं क्षौद्रञ्च यथायोग्यं यवादिसक्तुकञ्च यथायोग्यमालोड्य तर्पणं पानकं पिबेत्। लोके प्रसिद्ध विधिना रसान् यूषांश्च विधाय पिबेत्। तद् यथा—यथा एकं मांसं पाकार्द्धजले पक्त्वार्द्धशेषे पूते तस्मिन् पूर्व्वोक्तभृङ्गादीनि दत्त्वा रस स्वच्छमध्यघनान्यतमं साधयित्वा शीतीकृत्य क्षौद्रं दत्त्वा पिबेत्। एवं मुद्गादिविदलं चतुर्दशगुणे तोये पक्त्वा द्रवीभूते विदलेऽर्द्धशेषे भृङ्गादीनि पूर्व्वोक्तानि तथा परिमितानि यथार्ह दत्त्वा पक्त्वा यूषः कार्य्यः, शीते भूते क्षौद्रं दत्त्वा पिबेत् तेन भुञ्जीत वा। एवं मोदकान् भृङ्गादिक्षौद्रान्तैर्द्रव्यैः कुर्य्यात्। तथा रागान् षाड़वांश्च कुर्य्यात् इति ॥ १७ । १८ ॥

गङ्गाधरः—शर्करेत्यादि। त्रिफला श्यामाऽरुणा च त्रिवृता मागधिका पिप्पली। तेषां चूर्णं समम्, सर्व्वतो द्विगुणा शर्करा। मधुना मोदकः कार्य्यः, इत्येकः ॥ १९ ॥

गङ्गाधरः—त्रिवृदित्यादि। त्रिवृच्चूर्णस्य त्रयो भागास्त्रिफलानां फल त्वचस्तिस्रस्त्रिभागान्विताः विड़ङ्गादिकास्तिस्रश्च त्रिभागान्विताश्चूर्णिताः

भृङ्गैलाभ्यामित्यादिना तर्पणयोगं प्रथममेवाह। द्वितीयस्तु तर्पणयोगो भविष्यति इति। भृङ्गं गुड़त्वक्। तैश्च शर्करेति भृङ्गलानीलीत्रिवृद्भिः। फलरसो दाड़िमरसः ॥ ११—१८ ॥

* भृङ्गैलाभ्यां समं नीलं तैस्त्रिवृत् तैश्च शर्करा। इति चक्रधृतः पाठः।

लिह्यात् सर्पिर्मधुभ्यां वा मोदकान् वा गुड़ेन तु ।
भक्षयेत् निष्परीहारमेतच्छ्रेष्ठं विरेचनम् ॥
गुल्मप्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् व्याधीनेतद् व्यपोहति ॥ २० ॥
विड़ङ्गं पिप्पलीमूलं त्रिफलाधान्यचित्रकान् ।
मरिचेन्द्रयवाजाजी-पिप्पलीहस्तिपिप्पलीः ॥
लवणान्यजमोदाश्च चूर्णितान् कार्षिकान् पृथक् ।
तिलतैलत्रिवृच्चूर्ण-भागौ चाष्टपलोन्मितौ ॥
धात्रीफलरसप्रस्थान् त्रीन् गुड़ार्द्धतुलां तथा ।
पक्त्वा मृद्वग्निना खादेद् बदरोडुम्बरोपमान् ।
गुड़ान् कृत्वा न चात्र स्याद् विहाराहारयन्त्रणा ॥
मन्दाग्नित्वं ज्वरं मूर्च्छां मूत्रकृच्छ्रमरोचकम् ।
अस्वप्नं गात्रशूलञ्च कासं श्वासं भ्रमं क्षयम् ॥
कुष्ठार्शःकामलामेह-गुल्मोदरभगन्दरम् ।
ग्रहणीपाण्डुरोगांश्च हन्युः पुंसवनाश्च ते ।
कल्याणका इति ख्याताः सर्वेष्वृतुषु योगिकाः ॥ २१ ॥

कल्याणकगुड़कः ।

मधुसर्पिर्भ्यां लिह्यात्, तेषां द्विगुणेन गुड़ेन मोदकान् कृत्वा वा मधुसर्पिर्भ्यां लिह्यात् । इत्येकः ॥ २० ॥

गङ्गाधरः—विड़ङ्गेत्यादि । अजमोदा यमानी तस्या मूलं विड़ङ्गादीन् यमान्यन्तान् प्रत्येकं कार्षिकान् तिलतैलमष्टपलं त्रिवृच्चूर्णमष्टपलं धात्रीफलानां रसस्य प्रस्थत्रयं द्वादशशरावं पुराणगुड़स्यार्द्धतुलां तेन धात्रीरसेन गोलयित्वा

चक्रपाणिः— शर्करेत्यादिमोदकः प्रथमः । तत्र च 'मोदके द्विगुणो गुड़ः' इति वचनात् गुड़शर्करां चूर्णाद् द्विगुणामिच्छन्ति । त्रिवृच्छाणा इत्यादिकेनेह मोदकवचनाच्च यद्यपि पठ्यते योगः, तथाप्यस्य लेहेनैव ग्रहणादयमष्टमो लेहो भवति ॥ १९ । २० ॥

चक्रपाणिः—विड़ङ्गमित्यादिना द्वितीयो मोदकः ॥ २१ ॥

व्योषत्वक्पत्रमुस्तैला-विड़ङ्गामलकाभयाः।
समभागा भिषग् दद्याद् द्विगुणञ्च मुकूलकम्॥
त्रिवृतोऽष्टगुणं भागं शर्कराया्श्च षड्गुणम्।
चूर्णितं गुड़िकाः कार्य्याः क्षौद्रेण पलसम्मिताः॥
भक्षयेत् कल्यमुत्थाप्य शीतञ्चानुपिबेज्जलम्।
मूत्रकृच्छ्रे ज्वरे वम्यां कासे श्वासे भ्रमे क्षये॥
तापे पाण्ड्वामयेऽल्पाग्नौ शस्ता नियन्तृणाशिनः।
योगः सर्व्वविषाणाञ्च मतः श्रेष्ठो विरेचने॥
मूत्रजानाञ्च रोगाणां विधिज्ञेनावचारितः॥ २२॥
त्रिवृत्पलं द्विप्रसृतं पथ्यात्वगुरुबूकयोः।
दश तान् मोदकान् कुर्य्यादीश्वराणां विरेचनम्॥ २३॥

वस्त्रपूतां कृत्वा मृद्वग्निना पक्त्वा घनीभूते विड़ङ्गादीन् प्रक्षिप्यावतार्य्य बदराद्युपमान् गुड़कान् कृत्वा खादेदिति। कल्याणगुड़कः। इति त्रयः॥ २१॥

गङ्गाधरः—व्योषेत्यादि। त्वक् गुड़त्वक्। व्योषादयो दश समानाः प्रत्येकं तदेकभागाद् द्विगुणं मुकूलकं दन्तीचूर्णं तदेकभागादष्टगुणं भागं त्रिवृतश्चूर्णितायाः तदेकभागात् षड्गुणं भागं शर्करायाः। तत् सर्व्वं चूर्णितं क्षौद्रेण पलसम्मिता गुड़िकाः कार्य्याः। आतुरबलापेक्षया कर्षादिमानाः कार्य्याः। इति चतुर्थः। इति पानकादिषु पञ्च॥ २२॥

गङ्गाधरः—अथ षट्सु ऋतुषु चतुरो मोदकानाह—त्रिवृदित्यादि। त्रिवृच्चूर्णस्य पलं पथ्यात्वक्चूर्णस्य प्रसृतमेकं पलद्वयम् उरुबूकस्य फलं प्रसृतमेकमिति पथ्यात्वगुरुबूकयोर्मिलित्वा द्विप्रसृतम्, तान् सर्व्वानेकीकृत्य दश मोदकान् कुर्य्यादित्युत्तमपुरुषाभिप्रायेण, ततः पुरुषबलाद्यपेक्षया मानं बोध्यम्। इत्येकः॥ २३॥

चक्रपाणिः—व्योषेत्यादिना तृतीयो मोदकः। अयं मोदकस्तन्त्रान्तरेऽभयाद्य इति ख्यातः। मुकूलकं दन्ती। अत्र मुकूलकादीनामेकद्रव्यापेक्षया द्विगुणत्वं भवति। मधु च तावन्मात्रं याव

श्यामा त्रिवृद्धैमवती नीलिनी हस्तिपिप्पली ।
समूला पिप्पली मुस्तमजमोदा दुरालभा ॥
कार्षिकं नागरपलं गुड़स्य पलविंशतिः ।
चूर्णितं मोदकान् कुर्य्याद् उडुम्बरफलोपमान् ॥
हिङ्गुसौवर्च्चलव्योष-विड़ाजाजीयमानिकैः ।
वचाजगन्धात्रिफला-चव्यचित्रकधान्यकैः ।
मोदकान् वेष्टयेच्चूर्णैस्तांस्तु तुम्बुरुदाड़िमैः ॥
त्रिकवङ्क्षणहृद्वस्ति-कुष्ठार्शःप्लीहशूलिनाम् ।
हिक्काकासारुचिश्वास-कफोदावर्त्तिनां हिताः ॥ २४ ॥
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ।
समृद्वीकारसक्षौद्रं वर्षासु हि विरेचनम् ॥ २५ ॥
त्रिवृद्दुरालभामुस्त-शर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वं शीतलं जलदात्यये ॥ २६ ॥

गङ्गाधरः—श्यामेत्यादि । श्यामा त्रिवृत्, तथारुणा त्रिवृत्, हैमवती श्वेतवचा, नीलिनीमूलम्, समूला पिप्पलीति पिप्पली पिप्पलीमूलञ्च । एषां कार्षिकं मानं नागरचूर्णस्य पलम् । गुड़स्य विंशतिपलं पक्त्वा तत्र चूर्णं प्रक्षिप्य उडुम्बरफलोपमान् मोदकान् कुर्य्यात् । इमान् मोदकान् हिङ्ग्वादिभिर्वचादिभिस्तुम्बरुदाड़िमैर्वा चूर्णैर्वेष्टयेत् । यमानिका वनयमानी अजगन्धा क्षेत्रयमानीमूलम् । इति द्वितीयः ॥ २४ ॥

गङ्गाधरः—त्रिवृतेत्यादि । त्रिवृतादीनां चूर्णं मृद्वीकारसेन पक्त्वा मोदकान् कृत्वा मधुना लिह्यात् । इति वर्षासु विरेचनम् । इति तृतीयः ॥ २५ ॥

गङ्गाधरः—त्रिवृद्दुरालभेत्यादि । त्रिवृतादिकं यष्ट्याह्वान्तं प्रत्येकं समं द्राक्षाक्वाथेन पक्त्वा मोदकान् कुर्य्यात् । जलदात्यये शरदि । इति चतुर्थः । इति चत्वारो मोदकाः ॥ २६ ॥

मोदको भवति । केचित्तु व्योषादिमिलितचूर्णात् दन्त्यादीनां द्वैगुण्यं द्विगुणशब्दादिच्छन्ति । त्रिवृद्वि-(त्याद्य)त्यादिना चतुर्थः । त्रिवृद्धैमवतीत्यादिना पञ्चममोदकः पूर्य्यते । वेष्टयेदित्यवचूर्णयेत् ॥२२—२४

चक्रपाणिः—त्रिवृतां कौटजमित्यादिना षड्ऋतुविहितान् योगान् रूक्षाणामपि शस्यते

त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम्।
स्वर्णक्षीरीश्च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥ २७ ॥
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम्।
त्रिवृत्त्रायन्तीहपुषां सातलां कटुरोहिणीम् ॥
स्वर्णक्षीरीञ्च सञ्चूर्ण्य गोमूत्रे भावयेत् त्र्यहम्।
एष सर्व्वर्त्तुको योगः स्निग्धानां मलदोषनुत् ॥ २८ ॥
श्यामा त्रिवृद् दुरालभा वत्सकं हस्तिपिप्पली।
नीलिनी त्रिफला मुस्तं कटुका च सुचूर्णितम् ॥
सर्पिर्मांसरसोष्णाम्बु-युक्तं पाणितलं ततः।
पिबेदेतत् सर्व्वकालं रूक्षाणामपि शस्यते ॥ २९ ॥
त्र्यूषणत्रिफलाहिङ्गु-कार्षिकं त्रिवृतापलम्।
सौवर्च्चलार्द्धकर्षञ्च पलार्द्धञ्चाम्लवेतसात् ॥
तच्चूर्णं शर्करातुल्यं मद्येनाम्लेन वा पिबेत्।
गुल्मपार्श्वार्त्तिनुत् सिद्धं जीर्णे चाद्याद् रसौदनम् ॥ ३० ॥

गङ्गाधरः—त्रिवृतामित्यादि। त्रिवृतादीनां चूर्णमुष्णाम्बुना हेमन्ते पिबेत्। इति प्रथमश्चूर्णः ॥ २७ ॥

गङ्गाधरः—अथ चतुरो योगानाह—त्रिवृतेत्यादि। त्रिवृताचूर्णं शर्कराश्च तुल्या उष्णेन जलेन पिबेत् ग्रीष्मे, इति द्वितीयश्चूर्णः। त्रिवृत्त्रायन्तीत्यादि। त्रिवृतादीनि सञ्चूर्ण्य त्र्यहं गोमूत्रेण भावयेत्। ततः पिबेदेष सर्व्वर्त्तुको योगः। इति तृतीयः ॥ २८ ॥

गङ्गाधरः—श्यामेत्यादि। श्याममूला चारुणमूला च त्रिवृता। श्यामादिकटुकान्तं चूर्णितं सर्पिरादन्यतमेन पाणितलं कर्षं पिबेत् सर्व्वकालम्। इति चतुर्थः ॥ २९ ॥

गङ्गाधरः—त्र्यूषणेत्यादि। त्र्यूषणादीनां प्रत्येकं कार्षिकं सर्व्वचूर्णतुल्या

इत्यन्तेनाह। जलदात्यये शरदि। सातला चर्मकषा। हेमन्ते यद्यपि प्रबलशीतवाते विरेचने

त्रिवृतां त्रिफलादन्ती-सातलाव्योषसैन्धवैः ।
कृत्वा चूर्णन्तु सप्ताहं भाव्यमामलकीरसे ।
तद् योज्यं तर्पणे यूषे पिशिते रागयुक्तिषु ॥ ३१ ॥
तुल्याम्लं त्रिवृताकल्क-सिद्धं गुल्महरं घृतम् ॥
श्यामात्रिवृतयोर्मूलं पचेदामलकैः सह ।
जले तेन कषायेण पक्त्वा सर्पिः पिबेन्नरः ॥ ३२ ॥
श्यामात्रिवृत्कषायेण सिद्धं क्षीरं पिबेत् तथा । *
साधितं वा पयस्ताभ्यां सुखं तेन विरिच्यते ॥ ३३ ॥

शर्करा । तच्चूर्णं मदेन पिबेदथवान्येनाम्लेन द्रव्येण पिबेदिति चतुर्थः । इति पञ्च चूर्णा मोदकाश्च चत्वारः । इति नव योगाः षट्सु ऋतुषु ॥ ३० ॥

गङ्गाधरः—अथ तर्पणादिषु चूर्णमाह—त्रिवृतामित्यादि । त्रिवृतां त्रिफलादिभिः सह चूर्णं कृत्वा सप्ताहमामलकीरसे भाव्यम् । तच्च चूर्णं तर्पणे यूषे पिशिते रागयोगेषु च योज्यम् । इति तर्पणादिषु चतुर्षु चूर्णमेकम्, चतुर्द्धा योगः ॥३१॥

गङ्गाधरः—घृते द्वौ योगावाह—तुल्याम्लमित्यादि । घृतं पादिकत्रिवृताकल्कसिद्धं तुल्याम्लद्रवं काञ्जिकादिकं त्रिगुणजलं पक्त्वा पिबेत् गुल्महरमित्येकः । श्यामेत्यादि । त्रिवृताया द्विविधमूलं समानामलकैः सहाष्टगुणे जले पचेत् । तेन पादावशेषेण चतुर्गुणेन कषायेण सर्पिः पक्त्वा पिबेदिति द्वितीयः । इति घृते द्वौ योगौ ॥ ३२ ॥

गङ्गाधरः—क्षीरे द्वावाह—श्यामेत्यादि । श्याममूलारुणमूलयोस्त्रिवृतोरष्टगुणे जले पाकात् पादशेषेण कषायेण चतुर्गुणेन सिद्धं क्षीरं तथा पिबेत् ।

निषिद्धं तथापि विधेयविहितं विरेचनमेव ज्ञेयः । सर्व्वर्त्तु योगौ वसन्ते वसन्तादौ च ज्ञेयौ । त्रिवृच्छ्यामेत्यादिकोऽपि सर्व्वर्त्तुको योगः । त्रपुषेत्यादिचूर्णयोगो द्वितीयः ॥ २९—३० ॥

चक्रपाणिः—त्रिवृतां त्रिफलामित्यादिकस्तर्पणयोगः । एवं सर्व्वर्त्तुकयोगेन समं द्वौ तर्पणयोगौ भवतः ॥ ३१ ॥

चक्रपाणिः—तुल्याम्लमित्येकं घृतम्, श्यामेत्यादि द्वितीयम्, श्यामात्रिवृत्कषायेणेत्यादि तृतीयम् । साधितं वेत्यादिक्षीरयोगमेकमाह । घृतेन क्षीरेण च घृतेन क्षीरेण चैकेन मिलित्वा चत्वारि घृतक्षीराणि भवन्ति ॥ ३२ । ३३ ॥

* निर्यूहेन तयोर्युक्तया सिद्धं सर्पिः पिबेत् तथा । इति पाठान्तरम् ।

त्रिवृन्मुष्टींस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत्।
पादशेषं कषायं तं पूतं गुड़तुलायुतम्॥
स्निग्धे स्थाप्यं घटे क्षौद्र-पिप्पलीफलचित्रकैः।
प्रलिप्ते विधिना मासं जातं तत् मात्रया पिबेत्।
ग्रहणीपाण्डुरोगघ्नं गुल्मश्वयथुनाशनम्॥
सुरां वा त्रिवृतापाद-कल्कां तत्क्वाथसंयुताम्॥ ३४॥
यवैः श्यामात्रिवृत्क्वाथ-स्विन्नैः कुल्माषमम्भसा।
आसुतं षड़हं पर्णे * जातं सौवीरकं पिबेत्॥
भृष्टान् वा सतुषान् शुद्धान् यवांस्तच्चूर्णसंयुतान्।
आसुतानम्भसा तद्वत् पिबेज्जातं तुषोदकम्॥ ३५॥

इत्येकः क्षीरे। ताभ्यां द्वाभ्यां त्रिवृन्मूलाभ्यां कल्कभूताभ्यामष्टांशिकाभ्यां चतुर्गुणजलेन साधितं वा पयः पिबेत्। तेन सुखं विरिच्यते। इति द्वितीयः क्षीरे योगः॥ ३३॥

गङ्गाधरः—अथ मद्ये द्वावाह—त्रिवृदित्यादि। त्रिवृतायाः सनखानष्टौ मुष्टीनम्भसो द्रोणे पचेत्। पादशेषं कषायं कृत्वा पूत्वा गुड़तुलां तत्र दत्त्वा गोलयित्वा पुनः पूतं क्षौद्रादिभिः प्रलिप्ते स्निग्धे घृतादिघटे स्थाप्यं रक्षाविधिना मासं यावत्। ततो जातं तत् मात्रया पिबेत् पाण्ड्वादिनाशनमिति त्वेको मद्ये। अपरमाह—सुरां वेत्यादि। तत्क्वाथसंयुतां सुरां त्रिवृताया अष्टमुष्टीनम्भसो द्रोणे पक्त्वा पादशेषक्वाथसंयुक्तां तुलामितां सुरां त्रिवृताकल्कपादां स्निग्धे भाण्डे मासं स्थापयित्वा ततः परं पिबेद् वा। इति द्वितीयो मद्ये॥ ३४॥

गङ्गाधरः—अथ काञ्जिके द्वावाह—यवैरित्यादि। श्यामारुणमूलयोस्त्रिवृतोः कषायेण स्विन्नैर्यवैरम्भसा यथार्हेण कृतं कुल्माषं काञ्जिकं पर्णे यवपर्णमध्ये षड़हं भाण्डे कृत्वा स्थापयेत् जातमासुतं तत् सौवीरं पिबेदित्येकः काञ्जिके। अपरश्चाह—भृष्टानित्यादि। सतुषान् यवान् शुद्धान् वा यवान् भृष्टान् समान-

चक्रपाणिः—जले द्रोण इत्यादिना प्रथमा सुरा, सुरां वेत्यादिना द्वितीया, एवं द्वौ सुरायोगौ भवतः। त्रिवृत्पादयुक्तः कल्कः यस्यां सा तथा॥ ३४॥

चक्रपाणिः—यवैरित्यादिना सौवीरकतुषोदके प्राह। एतौ द्वौ काञ्जिकयोगौ। कुल्माषः

* पल्ल इति चक्रधृतः पाठः।

तथा मदनकल्पोक्तान् षाड़वादीन् पृथग् दश ।
त्रिवृच्चूर्णेन संयोज्य विरेकार्थं प्रयोजयेत् ॥ ३६ ॥

भवन्ति चात्र ।

त्वक्केशराम्रातकदाड़िमैला-सितोपलामाक्षिकमातुलुङ्गैः ।
मद्यैस्तथाम्लैश्च * मनोऽनुकूलैयु क्तानि देयानि विरेचनानि ॥ ३७
शीताम्बुना पीतवतश्च तस्य सिञ्चेन्मुखं छर्दिविघातहेतोः ।
हृद्यांश्च मृत्पुष्पफलप्रवालानन्यांश्च दद्यादुपजिघ्रणार्थम् ॥ ३८ ॥

तत्र श्लोकाः ।

एकोऽम्लादिभिरष्टौ च दश द्वौ सैन्धवादिभिः ।
मूत्रेऽष्टादश यष्ट्या द्वौ जीवकादौ चतुर्द्दश ॥

त्रिवृच्चूर्णसंयुतान् तद्वत् पड़हमम्भसा गोलयित्वा भाण्डे यवपल्ले स्थापयेत्, तदासुतं तुषोदकं पिबेदिति द्वितीयः काञ्जिके ॥ ३५ ॥

गङ्गाधरः—अथान्यान् दश षाड़वादीनाह—तथेत्यादि । मदनकल्पोक्तान् दश षाड़वादीन् त्रिवृच्चूर्णेन संयोज्य प्रयोजयेत् । तद्यथा—यथावत् षाड़वराग-लेहमोदकोत्कारिकातर्पणपानकमांसरसयूषमद्यानि प्रसिद्धानि त्रिवृन्मूलचूर्णेन दोषाद्यनुरूपमात्रेण संयोज्य प्रयोजयेदिति षाड़वादिषु दशसु दश योगाः । इति त्रिवृताया दशोत्तरशतं योगानामिति ॥ ३६ ॥

गङ्गाधरः—तत्र प्रमाणश्लोकानाह—भवन्तीत्यादि । त्वगादिभिर्मनोऽनुकूलैः युक्तानि सर्व्वाणि विरेचनानि देयानि । विरेचनं पीतवतस्तस्य मुखं शीताम्बुना च सिञ्चेत् । कस्मात् ? छर्दिविघातहेतोर्विरेचनौषधानां कटुकत्वादिगुणेन भाविच्छर्दिनिवारणहेतोः । मृदादीनि सुगन्धिद्रव्याणि उपजिघ्रणार्थञ्च प्रदद्यात् इति ॥ ३७ । ३८ ॥

गङ्गाधरः—उपसंहारश्लोकानाह—तत्र श्लोका इत्यादि । अम्लादिभि-

उत्तस्विन्नयवपिष्टकम् । पल्ल इति धान्यादिराशौ । तच्चूर्णसंयुतानिति त्रिवृच्चूर्णसंयुतान् । तद्वदिति षड़हं पल्ले स्थितान् ॥ ३५ ॥

चक्रपाणिः—तथेत्यादिना षाड़वादियोगान् दशाह । दश षाड़वादयो बदरषाडवलेहमोद-कोत्कारिकातर्पणशाकमांसरसयूषमद्यानीति ग्रन्थेन मदनकल्पोक्ताः ॥ ३६ ॥

चक्रपाणिः—सम्प्रति दशोत्तरं योगशतमभिधाय वान्तिनिरासार्थं कृत्यलयेण सम विरेचनप्रयो-गानाह—त्वक्केशरेत्यादि ॥ ३७ । ३८ ॥

* अन्यैश्च इति बहुषु ग्रन्थेषु पाठः ।

क्षीरादौ सप्त लेहेऽष्टौ चत्वारः सितयापि च।
पानकादिषु पञ्चैव षड्तौ पञ्च मोदकाः॥
चत्वारश्च घृते क्षीरे द्वौ चूर्णे तर्प...दिषु।
द्वौ मदे्र काञ्जिके द्वौ च दशान्ये षाड़वादिषु॥
श्यामायास्त्रिवृतायाश्च कल्पेऽस्मिन् समुदाहृतम्।
शतं दशोत्तरं सिद्धं योगानां परमर्षिणा॥ ३९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने श्यामात्रिवृत्कल्पो नाम सप्तमोऽध्यायः॥ ७॥

रेकोऽष्टौ चेति नव योगाः। सैन्धवादिभिर्दश द्वौ चेति द्वादश। मूत्रेऽष्टादश। यष्टीमधुना द्वौ, पूर्व्व एको जीवकादिषु शेष एक इति द्वौ। जीवकादिषु चतुर्द्दश। क्षीरादौ सप्त। लेहेऽष्टौ। शर्करामोदकादिभिः संप्रयोज्याः पिप्पलीत्यादय श्चत्वारः। पानकादिषु प्रयोज्या भृङ्गैलाभ्यामित्यादयः पञ्च। षड्तौ त्रिवृत्-पलमित्यादयः पञ्च च चत्वारश्चेति नव मोदकादयोः योगाः। तर्पणादिषु चतुर्षु चत्वारः। घृते द्वौ, क्षीरे द्वौ, मदे्र द्वौ, काञ्जिके द्वौ, षाड़वादिषु दश। इति दशोत्तरं शतमिति॥ ३९॥

गङ्गाधरः—अध्यायं समापयति अग्नीत्यादि।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
कल्पस्थाने सप्तमे तु त्रिवृत्कल्पे तु सप्तमे। अध्यायेऽत्र वैद्यगङ्गाधरेण
तु कृते पुनः। जल्पकल्पतरौ कल्प-स्थाने स्कन्धे तु सप्तमे। सप्तमत्रिवृता-
कल्पाध्यायजल्पाह्वया त्वियम्। समाप्ता सप्तमो शाखा
स्फुटव्याख्यागुणान्विता॥ ७॥

चक्रपाणिः—एकोऽम्लादिभिरित्यादिसंग्रहो व्यक्तार्थः। यष्ट्या द्वाविति द्वयोः, यष्ट्याह्व विभिन्नेति जीवकाद्यावेको मधुकेत्यादिना चापरः॥ ३९॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां श्यामात्रिवृत्कल्पो नाम सप्तमोऽध्यायः॥ ७॥

## अष्टमोऽध्यायः ।

अथातश्चतुरङ्गुलकल्पं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

आरग्वधो राजवृक्षः शम्पाकश्चतुरङ्गुलः ।
प्रग्रहः कृतमालश्च कर्णिका रोगघातकः ॥ २ ॥
ज्वरहृद्रोगवातासृगुदावर्त्तादिरोगिषु ।
राजवृक्षोऽधिकः पथ्यो मृदुर्मधुरशीतलः ॥
बाले वृद्धे क्षतक्षीणे सुकुमारे च मानवे ।
देयो मृद्वनपायित्वाद् विशेषाच्चतुरङ्गुलः ॥ ३ ॥
फलकाले परिणतं फलं तस्य हरेद् बुधः ।
तेषां गुणवतां भारं सिकतासु निधापयेत् ॥
सप्तरात्रात् समुद्धृत्य शोषयेदातपे भिषक् ।
ततो मज्जानमुद्धृत्य शुचौ भाण्डे निधापयेत् ॥ ४ ॥

गङ्गाधरः—अथोद्दिष्टानुक्रमाच्चतुरङ्गुलकल्पमाह—अथेत्यादि । षड्विरेचनशताश्रितीये यदुक्तम्—चतुरङ्गुलो द्वादशधा योगमेतीति, तद् द्वादशयोगयुक्तं चतुरङ्गुलकल्पं व्याख्यास्यामः । शेषं पूर्ववत् । आरग्वध इत्यादयः पर्यायाः ॥१।२॥

गङ्गाधरः—गुणकर्म्माण्याह—ज्वरेत्यादि । फलेत्यादि । तस्य चतुरङ्गुलस्य । तेषां गुणवतामव्यापन्नानां भारं प्रभूतं सिकतामध्यस्थं सप्तरात्रात् परं समुद्धृत्यातपे शोषयेत् । ततो मज्जानं वीजमध्यं शस्यं समुद्धृत्य शुचौ भाण्डे निधापयेत् स्थापयेत् ॥ ३ । ४ ॥

चक्रपाणिः—श्यामात्रिवृत्कल्पानन्तरं मृदुविरेचनत्वसामान्यात् चतुरङ्गुलकल्पोऽभिधीयते । व्यवहारार्थं पर्य्यायानाह—आरग्वध इत्यादि । अधिकं पथ्य इति ज्वरादिषु विशेषेण विरेचनप्रयोगो हितः । फलकाल इति उचितफलकाले । तेषामिति फलानाम् । जातमिति भूरिद्रव्योपलक्षणम् । मज्जानमिति फलमज्जानम् ॥ १—४ ॥

द्राक्षारसेन तं दद्याद् दाहोदावर्त्तपीड़िते।
चतुर्वर्षमुखे बाले यावद् द्वादशवार्षिके॥ ५॥
चतुरङ्गुलमज्ज्ञस्तु प्रसृतं वाथवाञ्जलिम्।
सुरामण्डेन संयुक्तमथवा कोलसीधुना।
दधिमण्डेन वा सम्यक् रसेनामलकस्य वा।
कृत्वा शीतकषायं तं पिवेत् सौवीरकेण वा॥ ६॥
त्रिवृन्मज्ज्ञोस्तथा कल्कं तत्कषायेण वा पिबत्।
तथा विल्वकषायेण लवणक्षौद्रसंयुतम्॥ ७॥

गङ्गाधरः—द्राक्षेत्यादि। चतुर्वर्षावधिद्वादशवर्षपर्य्यन्तवयसि बाल दाहादिपीड़िते च पुंसि द्राक्षारसेन युतं तं चतुरङ्गुलफलमज्जानं दद्यात्। इत्येकः॥ ५॥

गङ्गाधरः—चतुरङ्गुलेत्यादि। चतुरङ्गुलमज्ज्ञः प्रसृतं पलद्वयं कोष्ठापेक्षया अञ्जलिं वा कुड़वं सुरामण्डेन संयुक्तं पिबेत्, अथवा कोलस्य सीधुना पिबेत्। अथवा दधिमस्तुना पिबेत्, अथवामलकस्य रसेन पिबेत्। अथवा तं मज्जानं प्रसृतमञ्जलिं वा शीतकषायं कृत्वा सौवीरकेण पिबेदिति पञ्च। इति षट्॥ ६॥

गङ्गाधरः—त्रिवृदित्यादि। त्रिवृता चतुरङ्गुलमज्जा च। तयोः कल्क तयोः कषायेण पिबेत्, इत्येकः। अथ विल्वकषायेणाह—तथेति। विल्वमूलकषायेण चतुरङ्गुलमज्जाकल्कं लवणक्षौद्रसंयुतं पिबेत्। इत्येकः, इति द्वौ॥ ७॥

चक्रपाणिः—द्राक्षेत्यादि प्रथमो योगः। चतुर्वर्षमुख बाले यावद् द्वादशवार्षिक इत्यनेनास्य प्रयोगस्य चतुर्वर्षादर्व्वाक् यावदूर्द्ध्वञ्च द्वादशवर्षादवश्यं विरेचनतयोपयोगिकतां बालस्य निषेधयति॥ ५॥

चक्रपाणिः—सुरामण्डेनेति द्वितीयः। कोलसीधुनेति तृतीयः। सौवीरकेण वेत्यन्तेन योगत्रयमपरं व्यक्तम्॥ ६॥

चक्रपाणिः—त्रिवृतो वा कषायेण मज्जकल्कं तथा पिबेदिति सप्तमः। तथेत्यादिनाष्टमः; कषाययोगद्वयं जतूकर्णेऽप्युक्तमेव। त्रिवृद्विल्वकषायाभ्यां सक्षौद्रलवणौ च द्वौ इति। तेन पाठान्तरं न प्रमाणम्; संग्रहे च— करिष्यति कषाये च त्रिवृतो विल्वकस्य च इति॥ ७॥

कषायेणाथवा तस्य त्रिवृच्चूर्णगुड़ान्वितम् ।
साधयित्वा शनैर्लेहं लेहयेन्मात्रया नरम् ॥ ८ ॥
चतुरङ्गुलसिद्धाद् वा क्षीराद् यदुदियाद् घृतम् ।
मज्जकल्केन धात्रीणां रसे तत् साधितं पिबेत् ॥
तदेव दशमूलस्य कुलत्थानां यवस्य च ।
कषायैः साधितं सर्पिः कल्कैः श्यामादिभिः पिबेत् ॥ ९ ॥
दन्तीक्वाथेऽञ्जलिं मज्ज्ञः शम्पाकस्य गुड़स्य च ।
दत्त्वा मासार्द्धमासस्थमासुतं तत् प्रयोजयेत् ॥ १० ॥

गङ्गाधरः—अथ लेहे त्वेकमाह—कषायेणेत्यादि। अथवा तस्य बिल्वमूलस्य कषायेण त्रिवृच्चूर्णगुड़ाभ्यां समानाभ्यामन्वितं चतुरङ्गुलमज्जकल्कं शनैर्लेहं पक्त्वा लेहयेत्, इत्येकः ॥ ८ ॥

गङ्गाधरः—घृते द्वावाह—चतुरङ्गुलत्यादि। चतुरङ्गुलमज्ज्ञस्त्वष्टगुणदुग्धं चतुर्गुणजले पक्त्वा मथित्वा यद् घृतमुदियात्, तद् घृतं चतुरङ्गुलमज्जकल्क-पादिकं चतुर्गुणे धात्रीणां रसे साधितं पिबेदित्येकं घृतम्। तदेवेत्यादिना चापरम्। तदेव चतुरङ्गुलमज्जपक्कक्षीरोत्थं सर्पिर्दशमूलस्य कषायेण कुलत्थानां कषायेण यवस्य च कषायेण मिलितचतुर्गुणेन श्यामादिभिस्त्रिवृतादिभिः अपामार्गतण्डुलीयोक्तैस्त्रिवृतां त्रिफलां दन्तीमित्यादिभिः कल्कैः पादिकैः साधितं पिबेदिति द्वितीयः। इति घृते द्वौ ॥ ९ ॥

गङ्गाधरः—अथारिष्टे त्वेकमाह—दन्तीत्यादि। दन्तीमूलक्वाथे चतुर्गुणे चतुरङ्गुलस्य मज्ज्ञोऽञ्जलिं कुड़वं गुड़स्याप्यञ्जलिं दत्त्वा मासमर्द्धमासं (?) वा स्थापयेत्। तदासुतं प्रयोजयेदित्येक इति द्वादश ॥ १० ॥

चक्रपाणिः—कषायेणेत्यादिको लेहो नवमः। चतुरङ्गुलेत्यादिना प्रथमं घृतम्। मज्ज इति चतुरङ्गुलमज्ज्ञः। तदेवेत्यादिना च द्वितीयं घृतम्। श्यामादिभिरिति मदनकल्पपठितैर्नवभिः 'श्यामात्रिवृद्दन्ती' इत्यादिना ॥ ८। ९ ॥

चक्रपाणिः—दन्तीत्यादिना अरिष्टयोगमाह। गुड़स्य चाञ्जलिमिति सम्बन्धः। मासार्द्ध-

भवति चात्र।

यस्य यत् पानमम्लं वा हृद्यं स्वाद्वथवा कटु।
लवणं वा भवेत् तेन युक्तं दद्याद् विरेचनम् ॥ ११ ॥

तत्र श्लोकौ।

द्राक्षारसे सुरासीध्वोर्दध्नि चामलकाद्रसे।
सौवीरकेऽथ त्रिवृता-विल्वानाञ्च कषायकैः॥
लेहारिष्टे घृते द्वे च योगा द्वादश कीर्त्तिताः।
चतुरङ्गुलकल्पेऽस्मिन् सुकुमाराः सुखोदयाः ॥ १२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
चतुरङ्गुलकल्पो नामाष्टमोऽध्यायः ॥ ८ ॥

गङ्गाधरः—अत्र प्रमाणमाह—यस्येत्यादि। यो य एष उक्तो योगश्चतुरङ्गुलमज्जः, यस्य जनस्य यत् पानं यदम्लं वा हृद्यं स्यात्, स्वादु वा कटु वा हृद्यं स्यात्, लवणं वा हृद्यं भवेत्, तेन युक्तं तं तं योगं तस्मै दद्यात्। इति ॥ ११ ॥

गङ्गाधरः—उपसंहारमाह द्राक्षेत्यादि। एको योगो द्राक्षारसे। सुरासीधुदधिमस्त्वामलकरससौवीरेषु पञ्च। इति षट्। त्रिवृताकषाये विल्वकषाये लेहे चारिष्टे चैकैक इति चत्वारः। घृते द्वाविति द्वादश ॥ १२ ॥

गङ्गाधरः—अध्यायं समापयति अग्नीत्यादि।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
कल्पस्थाने सप्तमेऽस्मिन्नष्टमऽध्याय एव च। चतुरङ्गुलकल्पे तु व्यग्गङ्गाधरेण
तु। कृते जल्पकल्पतरौ कल्पस्थाने तु सप्तमे। स्कन्धे जल्पाभिधा
राज-वृक्षकल्पस्य चाष्टमी। शाखेयं पूर्णतामासा
स्फुटार्था सुखसाधनी ॥ ८ ॥

मासस्थमिति सार्द्धमासस्थम्। यस्य यदित्यादिनाऽनुक्तमपरापरसाधनं विधत्ते। हृद्य न हि विरेचनयोगस्य प्रियता स्यात्। पानमम्लञ्चेति हृद्यमित्यादिभिः प्रत्येकं सम्बध्यते ॥ १० । ११ ॥

चक्रपाणिः—द्राक्षेत्यादिसंग्रहो व्यक्तः ॥ १२ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां चतुरङ्गुलकल्पो
नामाष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः ।

अथातस्तिल्वककल्पं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ।
तस्य मूलत्वचं शुष्कामन्तर्वल्कलवर्ज्जिताम् ॥
चूर्णयेत् तु त्रिधा कृत्वा द्वौ भागौ काथयेद् * भिषक् ।
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥
भागन्तु दशमूलस्य कषाये भावितं पुनः ।
शुष्कं चूर्णं ततः कृत्वा स्निग्धस्विन्ने प्रयोजयेत् ॥
दधितक्रसुरामण्ड-मात्रैर्बदरसीधुना ।
रसेनामलकानां वा ततः पाणितलं पिबेत् ॥ २ ॥

गङ्गाधरः—अथोद्दिष्टक्रमात् तिल्वककल्पमाह—अथात इत्यादि। षड्-विरेचनशताश्रितीये—लोध्रं विधौ षोड़शयोगयुक्तमिति यदुक्तम्, तल्लोध्रकल्पं व्याख्यास्याम इति। शेषं पूर्व्ववद् ॥ १ ॥

गङ्गाधरः—तिल्वक इत्यादि। तिल्वको लोध्रो बृहत्पत्रस्तिरीटक इति पर्य्यायाः। तस्य मूलस्य त्वचमन्तर्वल्कलवर्ज्जितां त्रिधा कृत्वा तदेकभागं चूर्णयेत्, शेषा द्वौ भागौ काथयेत्। तेन लोध्रस्य कषायेण तृतीयं तच्चूर्णं भावयेत्, पुनर्दशमूलकषायेण लोध्रकषायतुल्येन तच्चूर्णं भावयेत्। ततः शुष्कं चूर्णं कृत्वा स्निग्धस्विन्ने नरे पाणितलं कर्षं दध्ना प्रयोजयेत् तक्रेण वा सुरामण्डमात्रेण वा बदरसीधुना वामलकीरसेन वेति पञ्च योगाः ॥ २ ॥

चक्रपाणिः—चतुरङ्गुलवत् तिल्वकस्यानपायित्वाच्चतुरङ्गुलकल्पानन्तरं तिल्वककल्पोऽभिधीयते। अन्तर्वल्कलवर्ज्जितामिति तिल्वकस्यान्तर्वल्कलं कठिनं भवति, तदर्थं तद्वर्ज्जनम्। श्च्योतयेदिति वचनेन षड्गुणद्रवेणैकविंशतिवारान् स्रावयेदिति ज्ञेयम्। मदनफले एवम्भूतस्यैव स्रावणस्य दृष्टत्वात्। भावनाविधिश्च निरन्तरं कृत एव। दधितक्रेत्यादिना पिबेदित्यन्तेन पञ्च योगाः ॥ १ । २ ॥

* श्च्योतयेदिति चक्रसम्मतः पाठः ।

सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ॥
मेषशृङ्ग्यभयाकृष्णा-चित्रकैः सलिलैः शृतैः।
तत्तुलां सुनुयात् तच्च जातं सौवीरकं यदा।
भवेदञ्जलिना तस्य लोध्रकल्कं पिबेत् तथा ॥ ३ ॥
दन्तीचित्रकयोर्द्रोणे सलिलस्याढकं पृथक्।
समुत्क्वाथ्य गुडस्यैकां तुलां लोध्रस्य वाञ्जलिम्।
आवापयेत् परं पक्षात् मद्यपानं विरेचनम् ॥ ४ ॥
तिल्वकस्य कषायेण दशकृत्वः सुभाविताम्।
मात्रां कम्पिल्लकस्यैव कषायेण पुनः पिबेत् ॥ ५ ॥
चतुरङ्गुलकल्पेन लेहोऽन्यः कार्य्य एव च।
त्रिफलायाः कषायेण ससर्पिर्मधुफाणितः।
लोध्रचूर्णयुतः सिद्धो लेहः श्रेष्ठं विरेचनम् ॥

गङ्गाधरः—सुरामित्यादि। लोध्रकषायेण समां सुरां पक्षस्थितां प्रयोजयेदित्येका सुरा। सौवीरेण चैकमाह—मेषशृङ्ग्यादीनामष्टगुणे जले पक्वानां पादशेषस्य तस्य क्वाथस्य तुलां सुनुयात् शुचौ भाण्डे स्थापयेत्, तत् काले आसुतं सौवीरकं यदा भवति, तदा तस्याञ्जलिना लोध्रस्य मूलत्वक्कल्कं मात्रया पिबेदित्येकः सौवीरके ॥ ३ ॥

गङ्गाधरः—अरिष्टे चैकमाह—दन्तीत्यादि। सलिलस्य द्रोणे दन्त्याढकं पक्त्वा तथा सलिलद्रोणे चित्रकाढकं पक्त्वा पादशेषे गुड़तुलां लोध्रमूलत्वक्कुडवं तत्रावपेत् पक्षं स्थापयेत्। पक्षात् परं तन्मद्यपानं विरेचनम्। इत्येक एषोऽरिष्टे ॥ ४

गङ्गाधरः—कम्पिल्लके चैकमाह—तिल्वकस्येत्यादि। तिल्वकमूलत्वक्-कषायेण दशवारान् सुभावितां तिल्वकमूलत्वचं पुनः काम्पिल्लककषायेण दशवारान् सुभावितां मात्रां पिबेदित्येकः कम्पिल्लकेन ॥ ५ ॥

गङ्गाधरः—अथ त्रीन् लेहानाह—चतुरङ्गुलेत्यादि। एको लेहश्चतुरङ्गुल-

चक्रपाणिः—सुरामित्यादिना सुरायोगावाह। मेषशृङ्गीत्यादिना विशिष्टसौवीरकेण योग एकः। कम्पिल्लकस्येत्यादिना कम्पिल्लकयोगमाह। कम्पिल्लको गुण्डारोचनिका। मात्रामिति तिल्वकचूर्णमात्राम् ॥ ३—५ ॥

चक्रपाणिः—चतुरङ्गुलेत्यादिना प्रथमो लेहः। चतुरङ्गुलकल्पेनेति कषायेण, अथवा तस्य

तिल्वकस्य कषायेण कल्केन च सशर्करः ।
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ॥ ६ ॥
अष्टाष्टौ त्रिवृतादीनां मुष्टींस्तु सनखान् पृथक् ।
द्रोणेऽपां साधयेत् पाद-शेषे प्रस्थं घृतात् पचेत् ॥
पिष्टैरेव हि विल्वांशैः समूत्रलवणैर्भिषक् ।
पक्त्वा मात्रां पिबेत् काले श्रेष्ठमेतद्द् विरेचनम् ॥
लोध्रकल्केन मूत्राम्ल-लवणैश्च पचेद्द् घृतम् ।
चतुरङ्गुलकल्पेन सर्पिषी द्वे च साधयेत् ॥ ७ ॥

कल्पेन कार्य्यः । तद् यथा । तिल्वकमूलत्वक्कषायेण गुडान्वितं त्रिवृच्चूर्णं पक्त्वा लेहं कुर्य्यात् मात्रया तं लिह्यादित्येकः । त्रिफलाया इत्यादि । त्रिफलायाः क्वाथेन सर्पिश्च फाणितञ्च दत्त्वा पक्त्वा पाकशेषे लोध्रचूर्णं प्रक्षेपविधिना दत्त्वा लेहमवतारयेत् । शीते मधु दद्यात् । इत्येको लेहः । तिल्वकस्येत्यादि । तिल्वकमूलत्वककषाये तत्तिल्वकमूलत्वक्कल्कं समानशर्करायुक्तं किञ्चिद् घृतमनुरूपं दत्त्वा पचेत्, लेहीभूतमवतारयेत् । तत् श्रेष्ठं विरेचनमिति तृतीयो लेहः ॥ ६ ॥

गङ्गाधरः—घृतेन चतुरो योगानाह—अष्टाष्टावित्यादि । अपामार्गतण्डुलीयोक्तानां त्रिवृतादीनां सप्तभ्यस्त्रिवृतात्रिफलादन्तीनीलिनीसप्तलाभ्यः पृथगष्टाष्टौ सनखान मुष्टीन् जलद्रोणे पाचयेत्, पादशेषे क्वाथे घृतात् प्रस्थं त्रिवृतादीनां सप्तभिः पृथग् विल्वांशैर्मूत्रलवणेन विड्लवणेन विल्वांशेन सहितैः पिष्टैः कल्कैः पचेत् । तस्य घृतस्य मात्रां पिबेदित्येकं घृतम् । लोध्रेत्यादि । घृतप्रस्थं लोध्रमूलत्वक्कल्केन पादिकेन समगोमूत्रमम्लद्रव्यं वदरादि तस्य रसं त्रिगुणमिति चतुर्गुणे द्रवे पक्त्वावतार्य्य पूतं कृत्वा सैन्धवमष्टांशं प्रक्षिप्य स्थापयेदिति द्वितीयं घृतम् । अपरे द्वे चाह—चतुरङ्गुलेत्यादि । द्वे सर्पिषी चतुरङ्गुलकल्पेन

इत्यादिनोक्तविधानेन । तेन अत्र तिल्वकक्वाथेन गुडान्वितत्रिवृच्चूर्णं पक्त्वा लेहः कर्त्तव्यः । त्रिफलाया इत्यादिना द्वितीयो लेहः । तिल्वकस्येत्यादिना तृतीयः ॥ ६ ॥

चक्रपाणिः—अष्टाष्टावित्यादिना प्रथमं घृतम् । सनखानिति विद्यमाननखान् । अत्र त्रिवृदादिगृहीतलोध्रस्य प्रधानत्वात् द्विगुणो भागो भवति । उक्तं हि जतूकर्णे—त्रिवृदादिर्द्विगुणः क्वाथ इति । समभागत्वे लोध्रस्य प्रयोगस्य केन विशेषः स्यात् । तस्मात् यथाव्याख्यातमेव साधु । लवणमप्यत्र पलांशमेव । लोध्रेत्यादि द्वितीयं घृतम् । चतुरङ्गुलेत्यादिना घृतद्वयमतिदिश्यते ।

तत्र श्लोकौ।

दध्यादिभिः पञ्च सुरा चैका सौवीरकेऽपि च।
एकोऽरिष्टस्तथा योग एकः काम्पिल्लकेन च॥
लेहास्त्रयो घृतेनापि चत्वारः सम्प्रदर्शिताः।
योगान्ते लोध्रमूलानां कल्पे षोड़श दर्शिताः॥ ८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
तिल्वककल्पो नाम नवमोऽध्यायः॥ ६॥

साधयेदिति। तद्यथा। तिल्वकमूलत्वक्कल्केन पक्वक्षीरं मथित्वा घृतमुत्थाप्य तत् पादिकं तिल्वकमूलत्वक्कल्कं दत्त्वामलकीरसे चतुर्गुणे पचेदित्येकं सर्पिः। अपरञ्चैकं तदेव तिल्वककल्कपक्वक्षीरोत्थं घृतं दशमूलस्य कषायेण कुलत्थकषायेण यवकषायेण मिलित्वा चतुर्गुणैः कषायैः, त्रिवृतादिभिस्त्रिवृतात्रिफलादन्तीत्यादिभिरपामार्गतण्डुलीयोक्तैः पादिकैः पचेदित्यपरं सर्पिरिति घृते चत्वारो योगाः॥ ७॥

गङ्गाधरः—इति षोड़श योगास्तिल्वकस्य श्लोकाभ्यामुपसंह्रियन्ते—तत्र श्लोकाविति। दध्यादिभिः पञ्च योगाः। एका सुरा। सौवीरे चैकः। अरिष्ट एकः। कम्पिल्लके त्वेकः। लेहास्त्रयः। घृतेन चत्वारः। इति षोड़श योगाः। इति॥ ८॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
कल्पस्थाने सप्तमे तु नवमेऽध्याय एव च। लोध्रकल्पे वैद्यगङ्गाधरेण
रचिते पुनः। जल्पकल्पतरौ कल्प स्थाने स्कन्धे तु सप्तमे।
लोध्रकल्पाख्यजल्पशाखेयं नवमीरिता॥ ९॥

एवं घृतेन च चत्वारो योगा भवन्ति। चतुरङ्गुलघृते च चतुरङ्गुलसिद्धात् इत्यादिना तथा तदेव दशमूलस्य इत्यादिना प्रोक्ते द्वे। तथा च चतुरङ्गुलकल्पेन लोध्रादीनां लोध्रघृते भवतः॥ ७॥

चक्रपाणिः— पञ्च दध्यादिभिरित्यादि संग्रहो व्यक्तः॥ ८॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां
चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां तिल्वककल्पो नाम
नवमोऽध्यायः॥ ९॥

# दशमोऽध्यायः।

अथातः सुधाकल्पं व्याख्यास्याम,

इतिह स्माह भगवानात्रेयः॥ १॥

विरेचनानां सर्व्वेषां सुधा तीक्ष्णतमा मता।

सङ्घातं हि भिनत्त्याशु दोषाणां कष्टविभ्रमात्॥

तस्मान्नैषा मृदौ कोष्ठे प्रयोक्तव्या कदाचन।

न दोषनिचये चाल्पे सति मार्गपरिक्रमे॥ २॥

पाण्डुरोगोदरे गुल्मे कुष्ठे दूषीविषार्द्दिते।

श्वयथौ मधुमेहे च दोषविभ्रान्तचेतसि॥

रोगैरेवंविधैर्ग्रस्तं ज्ञात्वा सप्राणमातुरम्।

प्रयोजयेन्महावृक्षं सम्यक् स ह्यवचारितः॥

सद्यो हरति दोषाणां महान्तमपि सञ्चयम्॥ ३॥

गङ्गाधरः—अथोद्देशक्रमात् सुधाकल्पमाह—अथात इत्यादि। षड्विरेचनशताश्रितीये यदुक्तम्—महावृक्षो भवति विंशतियोगयुक्तः इति, तं विंशतियोगं सुधाकल्पं व्याख्यास्यामः। शेषं पूर्ब्ववत्॥ १॥

गङ्गाधरः—विरेचनानामित्यादि। तस्मात् तीक्ष्णतमत्वादेषा मृदौ कोष्ठे कदाचन न प्रयोक्तव्या। दोषनिचये दोषसञ्चयेऽल्पे सति मार्गं परिवर्त्त्य क्रमणे च न प्रयोक्तव्या॥ २॥

गङ्गाधरः—प्रयोगार्हमाह पाण्ड्वित्यादि। सप्राणं सबलं ज्ञात्वा सम्यगव-

चक्रपाणिः—षोडशसंख्याभिधायकं तिल्वककल्पानन्तरं यथाक्रमम् अधिकसंख्याप्रयोगाभिधानक्रमात् विंशतियोगाभिधायकसुधाकल्पोऽभिधीयते। इतश्चानन्तरमतिरिक्तसंख्याभिधानक्रमेणैव नवत्रिंशत्प्रयोगाभिधायकसुधाकल्पोऽभिधास्यते। विरेचनानामिति विरेचनद्रव्याणाम्। कष्टविभ्रमादिति दुःखसाध्यविभ्रमजनिका। तस्मादिति अतितीक्ष्णत्वात् कष्टविभ्रमत्वाच्च। सति मार्गपरिक्रम इति उपक्रममार्गान्तरे सति न सुधा प्रयोक्तव्या, तेन मार्गान्तरासम्भव एव सुधा प्रयोक्तव्या इत्यर्थः॥ १। २॥

चक्रपाणिः—पाण्डुरोगेत्यादौ मधुशब्देन प्रमेहा एवोच्यन्ते, विशिष्टस्तु वातिकमधुमेहश्चासाध्य एव। तेन तं प्रति विरेचनोपदेशोऽनर्थक एव स्यात्। मधुमेहशब्दश्च यथा प्रमेहमात्र

द्विविधः स मतो यश्च बहुभिश्चैव कण्टकः ॥
सुतीक्ष्णैः कण्टकैरल्पैः प्रवरो बहुकण्टकः ।
स नाम्ना तु गुड़ा नन्दो सुधा निस्त्रिंशपत्रकः ॥ ४ ॥
तां विपाट्योद्धरेत् क्षीरं शस्त्रेण मतिमान् भिषक् ।
द्विवर्षां वा त्रिवर्षां वा शिशिरान्ते विशेषतः ॥ ५ ॥
विल्वादीनां बृहत्याश्च कण्टकार्य्यास्तथैकशः ।
कषायेण समापन्नं कृत्वाङ्गारेषु शोषयेत् ॥

चारितः सद्यो महान्तं दोषसञ्चयं हरति। तस्य प्रकारमाह—द्विविध इत्यादि। स महावृक्षो द्विविधो मतः। यश्च बहुभिः कण्टकैर्युक्तः स एकः। यश्च सुतीक्ष्णैः अल्पैः कण्टकयुक्तः सोऽपरः, तत्र बहुकण्टकः प्रवरः। तस्य पर्य्यायमाह—स इत्यादि। नाम्ना स महावृक्षो गुड़ा च नन्दी च सुधा च निस्त्रिंशपत्रकः खड्गपत्रः। एवं स्नुही महावृक्षः इत्यादि॥ ३। ४॥

गङ्गाधरः—तां विपाट्येत्यादि। तां द्विवर्षां त्रिवर्षां वा सुधां विपाट्य शस्त्रेण क्षीरं समुद्धरेत्। विशेषतः शिशिरान्ते वसन्ते॥ ५॥

गङ्गाधरः—तस्या योगानाह—विल्वादीनामित्यादि। विल्वादिपञ्चमूलानां कषायेण समापन्नं समागतं कृत्वाङ्गाराग्निना शोषयेत्, ततो बृहत्याः कषायेण

एव वर्त्तते तत्र प्रतिपादितमेव प्रमेहचिकित्सिते। दोषवृद्ध्या विभ्रान्तं चेतो यस्मिन् तस्मिन् विभ्रान्तचेतसि उन्मादे। सप्राणमिति बलवन्तम् ॥ ३ ॥

चक्रपाणिः—प्रवरो बहुकण्टक इति अनतितीक्ष्णतयाल्पकण्टकः महावृक्षतः श्रेष्ठ इत्यर्थः। तावेति स्वल्पकण्टकबहुकण्टकौ महावृक्षौ। यद्यपि मदनकल्पे 'शरदि त्वक्कदक्षीराणि' इत्युक्तं तथापि सुधानामत्र शिशरान्ते क्षीरग्रहणमपवादरूपं ज्ञेयम्। शिशिरस्य शेषा दिवसाः शिशिरान्ताः ॥ ४।५ ॥

चक्रपाणिः—विल्वादीनामिति विल्वादिपञ्चमूलस्य। अङ्गारेषु शोषयेदिति अङ्गारोपरिस्थित-

ततः कोलसमां मात्रां पिबेत् सौवीरकेण ताम् ।
तुषोदकेण कोलानां रसेनामलकस्य च ।
सुरया दधिमण्डेन मातुलुङ्गरसेन वा ॥ ६ ॥
सातलाकाञ्चनक्षीरी-श्यामादन्तीफलत्रिकम् * ।
यथोपपत्ति सप्ताहं सुधाक्षीरेण भावयेत् ।
कोलमात्रां घृतेनातः पिबेन्मांसरसेन वा ॥ ७ ॥
त्र्यूषणं त्रिफलां दन्तीं चित्रकं त्रिवृतां तथा ।
स्नुक्क्षीरभावितां सम्यक् विदध्याद् गुड़पानके ॥ ८ ॥

ततः कण्टकार्य्याः कषायेण समापन्नमङ्गारेण शोषयेदिति शुद्धिः । तत इत्यादि । ततः कोलसमां तस्य शोधितस्य सुधाक्षीरस्य मात्रां कोष्ठबलाद्यपेक्षयाऽल्पमात्राञ्च सौवीरेण पिबेदथवा तुषोदकेनाथवा कोलानां रसेनाथवामलकस्य रसेनाथवा सुरयाथवा दधिमण्डेनाथवा मातुलुङ्गरसेन सप्तमेन पिबेत् । इति सप्त योगाः ॥ ६ ॥

गङ्गाधरः—सातलामित्यादि । सातलादीनां यथालाभमेकं सुधाक्षीरेण सप्ताहं भावयेत् । तच्चूर्णस्य कोलमात्रां कोष्ठाद्यपेक्षयाल्पमात्रां वा घृतेन पिबेदथवा मांसरसेन पिबेत् । इति द्वौ योगौ ॥ ७ ॥

गङ्गाधरः—त्र्यूषणमित्यादि । त्र्यूषणादीनि चूर्णयित्वा स्नुक्क्षीरेण भावयेत् । भावितं तच्चूर्णं गुड़पानके गुडोदके योजयेदिति । पानके त्वेकः ॥ ८ ॥

पाकस्थं तत् सुधाक्षीरं विल्वादीनामन्यतमस्य कषायेण समानं शोषणेन कठिनं कुर्य्यात्, ततः कोलमात्रगुटिका, ततः सौवीरकादीनामन्यतमेन पातव्या । एवं सौवीरकादिभेदात् सप्त योगा भवन्ति । तथात्र विल्वादिकषायस्य भेदेन भेदो विवक्षितः ॥ ६ ॥

चक्रपाणिः—सातलामित्यादिना वातसाधनघृतमांसरसभेदात् योगद्वयमाह । सातला चर्म्मकषा, श्यामादिग्रहणेनैव सातलायामपि लब्धायां पृथक् सातलाभिधानमेकयापि सातलया कृतसुधायोगस्य प्राधान्यख्यापनार्थम् ॥ ७ ॥

चक्रपाणिः— त्र्यूषणमित्यादिना पानयोगमाह । गुड़पानकमिति गुडसंस्कृतपानकम् ॥ ८ ॥

* श्यामादीनि कटुत्रिकम् इति पाठान्तरम् ।

त्रिवृतारग्वधो दन्ती सप्तला शङ्खिनी समा।
निशि स्थितं गवां मूत्रे शोषयेदातपे भिषक् ॥
सप्ताहं भावयित्वैवं स्नुक्क्षीरेणापरं पुनः।
सप्ताहं भावयेच्छुष्कं ततस्तेनापि भावितम् ॥
गन्धमाल्यं समाघ्राय प्रावृत्य पटमेव च।
सुखमाशु विरिच्यन्ते मृदुकोष्ठा नराधिपाः ॥ ९ ॥
श्यामात्रिवृत्कषायेण स्नुक्क्षीरघृतफाणितैः।
लेहं कृत्वा विरेकार्थं लेहयेन्मात्रया नरम् ॥ १० ॥

गङ्गाधरः—त्रिवृतेत्यादि। त्रिवृतादिपञ्चकं समभागं गवां मूत्रे निशि स्थितं प्रातरातपे शोषयेदित्येवं सप्ताहं भावयित्वा पुनः स्नुहीक्षीरेणापरं सप्ताहमेवंप्रकारेण निशि स्नुक्क्षीरे स्थितं प्रातरातपे शोषयेदिति सप्ताहं भावितं पुनः सप्ताहं तेनापि स्नुहीक्षीरभावितचूर्णेन भावितं गन्धपुष्पपत्रादिमाल्यं शरीरे पटं वस्त्रमावृत्य समाघ्रायाशु सुखं मृदुकोष्ठा नराधिपा विरिच्यन्ते, न तु क्रूरकोष्ठाः। इति घ्रेये त्वेको योगः ॥ ९ ॥

गङ्गाधरः—लेहं चाह—श्यामेत्यादि। श्यामारुणमूलत्रिवृते द्वे, तयोः कषायेण स्नुक्क्षीरं घृतं फाणितञ्च यथार्हं मेलयित्वा पक्त्वा लेहं कृत्वा लेहयेत्। इति लेहे त्वेकः ॥ १० ॥

चक्रपाणिः—त्रिवृदित्यादिना घ्रेययोगमाह। गोमूत्रे रजनीं कृत्वेति रजनीं व्याप्य गोमूत्रे स्थापयित्वा। पटमेवेति यथोक्तविधिभावितं पटमावृत्येत्यर्थः ॥ ९ ॥

चक्रपाणिः—श्यामेत्यादिना लेहयोगमाह। मात्रयेत्यनपायिमात्रया ॥ १० ॥

पाययेत् तु सुधाक्षीरं यूषमांसरसैर्घृतः ।
भावितं शुष्कमत्स्यं वा मांसं वा भक्षयेन्नरम् ॥ ११ ॥
क्षीरेणामलकैः सर्पिश्चतुरङ्गुलवत् पिबेत् ।
सुरां वा कारयेत् क्षीरे सुतं * वा पूर्ववत् पिबेत् ॥ १२ ॥

तत्र श्लोकौ ।

सौवीरकादिभिः सप्त सर्पिर्मांसरसेन वा ।
पानकं प्रयलेहौ च योगा यूषादिभिस्त्रयः ॥

गङ्गाधरः—यूषादिभिस्त्रीनाह—पाययेदित्यादि । कोष्ठाद्यपेक्षया सुधाक्षीरं यूषैः पाययेदथवा मांसरसैः पाययेदथवा घृतैः पाययेदिति त्रयो योगाः । शुष्कमत्स्यमांसाभ्यां द्वावाह—भावितमित्यादि । सुधाक्षीरेण भावितं शुष्कमत्स्यं भक्षयेदथवा सुधाक्षीरेण भावितं शुष्कं मांसं भक्षयेदिति द्वौ योगौ ॥११॥

गङ्गाधरः—अथ सर्पिषी द्वे चाह—क्षीरेणेत्यादि । चतुरङ्गुलवत् सर्पिः पिबेत् । तद् यथा । सुधाक्षीरेण पक्वं गोक्षीरं मथित्वोद्धृतं घृतं तत् सुधाक्षीरं पादिकं गर्भे दत्त्वामलकीरसे चतुर्गुणे पचेदित्येकं सर्पिः । अपरञ्च । अपामार्गतण्डुलीयोक्तैः श्यामादिभिः कल्कैः पादिकैर्दशमूलकषायेण कुलत्थकषायेण यवस्य कषायेण मिलित्वा चतुर्गुणैः कषायैः सुधाक्षीरपक्वगव्यक्षीरोत्थं सर्पिः पचेदित्यपरं सर्पिरिति द्वे सर्पिषी । सुरामाह—सुरां वेत्यादि । क्षीरे इति सुधाक्षीरे सुरामण्डं प्रक्षिप्य भाजने स्थापयेत्, काले जातमासुतं पूर्ववत् पिबेदित्येको योगः । इति महावृक्षस्य विंशतिर्योगाः समुदाहृता इति ॥ १२ ॥

गङ्गाधरः—तदुपसंहरति—तत्र श्लोकाविति । सौवीरकादिभिः सप्त योगाः ।

चक्रपाणिः—पाययेदित्यादिना पृथक् यूषमांसरसघृतैर्योगत्रयमाह । भावितानित्यादिना शुष्कमत्स्यमांसयोगावाह । क्षीरेणेत्यादिना एकम् । घृतं वेत्यादिना एकं वक्ष्यति । आमलकैश्चतुरङ्गुलवदिति वचनात् आमलकरसयुक्तं यच्चतुरङ्गुलं चतुरङ्गुलकल्पे 'चतुरङ्गुलम्' इत्यादिनोक्तं तस्य विधानमतिदिशति । सुरां वा कारयेत् क्षीर इति स्नुक्क्षीरभावितम् इत्यादिविधिभिः सुरां कुर्य्यात् । घृतं वा पूर्ववत् पचेदित्यत्र पूर्ववदित्यनेन तिल्वककल्पेऽतिदेशविहितघृतद्वयं पूर्ववत् इत्यादिग्रन्थविहितम् । तद्विधिरेव प्रत्यासन्नत्वादतिदिश्यते ॥ ११ । १२ ॥

* घृतं वा पूर्ववत् पचेदिति चक्रधृतः पाठः ।

द्वौ शुष्कमत्स्यमांसाभ्यां सुरैका द्वे च सर्पिषी।
महावृक्षस्य योगास्ते विंशतिः समुदाहृताः ॥ १३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
सुधाकल्पो नाम दशमोऽध्यायः ॥ १० ॥

सर्पिष्येकः, मांसरसेनकः, पानकमेकः, प्रेये चैकः, लेहे चेकः, यूषादिभिस्त्रयः, शुष्कमत्स्यमांसाभ्यां द्वौ, द्वे सर्पिषी, एका सुरेति विंशतिरिति ॥ १३ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढबल-प्रतिसंस्कृत एव च।
कल्पस्थाने सप्तमे तु दशमाध्याय एव च। सुधाकल्पे वैद्यगङ्गाधरेण
रचिते पुनः। जल्पकल्पतरौ कल्प-स्थाने स्कन्धेऽत्र सप्तमे।
दशमाध्यायस्नुक्कल्प शाखेय दशमी मता ॥ १० ॥

चक्रपाणिः—सौवीरकेत्यादिभिः संग्रहो व्याकृत एव ॥ १३ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्यटीकायां कल्पस्थानव्याख्यायां सुधाकल्पो
नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

अथातः सप्तलाशङ्खिनीकल्पं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

सप्तला चर्म्मसाह्वा च बहुफेनरसा च सा ।
शङ्खिनी तिक्तला चैव यवतिक्ताक्षिपीड़कः ॥
ते गुल्मगरहृद्रोग-कण्ठप्लीहोदरादिषु ।
विकारेष्विरूक्षतीक्ष्णत्वाद् योज्ये श्लेष्माधिकेषु च ॥ २ ॥
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निरतुषीकृतम् ।
सप्तलायाश्च मूलानि गृहीत्वा भाजने क्षिपेत् ॥ ३ ॥
अक्षमात्रं तयोः पिण्डं प्रसन्नालवणायुतम् ।
हृद्रोगे वातकफजे गुल्मे चैतत् प्रयोजयेत् ॥
पियालपीलुकर्कन्धू-*-कोषाम्रामलकदाड़िमैः ।
द्राक्षापनसखर्ज्जूर-बदराम्लपरूषकैः ॥

गङ्गाधरः—अथाद्दशक्रमात् सप्तलाशङ्खिनीकल्पमाह—अथात इत्यादि । षड्-विरेचनशताश्रितीये यदुक्तम्—एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः इति, तत् सप्तलाशङ्खिनीकल्पमेकोनचत्वारिंशद्योगं व्याख्यास्यामः । शेषं पूर्व्ववद् व्याख्येयमिति ॥ १ ॥

गङ्गाधरः—सप्तलेत्यादि । सप्तला चर्म्मसाह्वा बहुफेनरसा चेति पर्य्यायं-रुच्यते । शङ्खिनी तिक्तला यवतिक्ता चाक्षिपीड़क इति च पर्य्यायरुच्यते । ते इत्यादिना तयोर्गुणकर्म्मणी आह । ते सप्तलाशङ्खिन्यौ । नातीत्यादि । शङ्खिन्या नातिशुष्कं फलं ग्राह्यं फलिनीपूक्तत्वात्, सप्तलायाश्च मूलानि मूलिनीषूक्तत्वात् । गृहीत्वा भाजने क्षिपेत् स्थापयेत् ॥ २ । ३ ॥

गङ्गाधरः—तयोर्योगानाह—अक्षेत्यादि । तयोः सप्तलाशङ्खिन्योरक्षमात्रं पिण्डं प्रसन्नालवणाभ्यां युतं दशानां पियालादीनामन्यतमकषायेण हृद्रोगादौ

चक्रपाणिः—पूर्व्वाध्यायोक्तसम्बन्धादेव सप्तलाशङ्खिनीकल्पोऽभिधीयते । इह चाध्याये ये योगा अभिधीयन्ते ते सप्तलया वा शङ्खिन्या वा उभाभ्यां वा सम्पाद्यन्ते श्यामात्रिवृद्योगवत् ॥ १ ॥

चक्रपाणिः—ते गुल्मेत्यादि । ते सप्तलाशङ्खिन्यौ ॥ २ । ३ ॥

चक्रपाणिः—अक्षमात्रमित्यादिना कल्कस्य प्रसन्नालवणयुक्तस्य पियालादिकषायेषु षोड़श योगा

* कोलाम्रातकेति चक्रसम्मतः पाठः ।

मैरेयदधिमण्डाम्लैः सौवीरकतुषोदकैः।
सीध्वा चाप्येष कल्कः स्यात् सुखं शीघ्रविरेचनम् ॥ ४ ॥
तैलं विदारीगन्धाद्यैः पयसि क्वथिते पचेत्।
सप्तलाशङ्खिनीकल्के त्रिवृच्छ्यामार्द्धभागिके।
दधिमण्डेन संनीय सिद्धं तत् पाययेत च ॥
शङ्खिनीचूर्णभागौ द्वौ तिलचूर्णस्य चापरः।
हरीतकीकषायेण तत् तैलं पीड़ितं पिबेत्।
अतसीसर्षपैरण्ड-करञ्जेष्वेष संविधिः ॥ ५ ॥

प्रयोजयेत्। तत्र कोपाम्र ओड़िआम्रः। अम्लदाड़िमस्य कषायेण। बदराम्लमम्लबदरस्य कषायेण। इति कषायैर्दश योगाः। मैरेयेण दधिमण्डेनाम्लेन काञ्जिकेन सौवीरकेण तुषोदकेन सीध्वा चापि सह तयोरक्षमात्रं पिण्डं प्रसन्नालवणायुतं हृद्रोगादिषु प्रयोजयेदिति षट्। इति षोड़श योगाः ॥ ४ ॥

गङ्गाधरः—तैले षड़ाह—तैलमित्यादि। विदारीगन्धाद्यैः शालपर्ण्यादिभिः पञ्चमूलैः स्वतन्त्रेऽभिहितत्वात्। परतन्त्रोक्तैर्नास्मिंस्तन्त्रे विधातुमर्हति कश्चित् योगः। शालपर्ण्यादिभिः क्वथिते पक्वे पयसि चतुर्गुणे सप्तला शङ्खिनी चैकैकभागा, श्याममूला त्रिवृदरुणमूला त्रिवृत् तयोर्मिलितयोरेकभाग इत्येवं चतुर्णां कल्के तैलपादिके तैलं पचेत्। तत् तैलं दधिमण्डेन सह नीत्वा मेलयित्वा पाययेत्। इत्येको योगस्तैले। शङ्खिनीत्यादि। शङ्खिनीचूर्णस्य द्वौ भागौ, तिलचूर्णस्यैको भागः। मिलितं द्वयं पीड़ितं पीड़नचक्रेण पीड़ितमात्रं सत् तैलं मात्रया हरीतकीकषायेण पिबेदित्यपरस्तैलयोगः। अपरांश्चतुरस्तैलेष्वाह—अतसीत्यादि। एष तिलतैलसंविधिरतस्यादितैलेषु। तद्यथा। अतसीतैलम्।

भवन्ति। अत्र यद्यपि मैरेयैक्षव न कषायौ, तथापि बहुकषायान्तर्गतत्वात् कषायावेव वक्तव्यौ। संग्रहे कषाया दशषडित्यनेन व्यपदिष्टा माषराशिन्यायात्। कषायशब्देन कल्ककषायोऽभिप्रेतः। कर्कन्धूकोलबदरशब्देन त्रिप्रकारबदरग्रहणम् ॥ ४ ॥

चक्रपाणिः—तैलमित्यादिना प्रथमतैलयोगः। त्रिवृच्छ्यामार्द्धभागिक इति सप्तलाशङ्खिनीकल्कयोरर्द्धभागेन त्रिवृच्छ्यामाकल्को देयः। शङ्खिनीत्यादिना पञ्च तैलयोगानाह, एवं षट् तैलयोगा भवन्ति। तैलं तत् पीड़ितमिति शङ्खिनीचूर्णं तिलचूर्णं हरीतकीकषायेण सन्धाय पीड़ितं तत् तैलं पिबेदिति। अतस्यादिष्वेष संविधिरिति वचनेन तिलस्थानेऽतस्यादीनां प्रयोगं विभक्तं ॥५॥

शङ्खिनीसप्तलासिद्धात् क्षीरात् यदुदियाद् घृतम् ।
कल्कभागे तयोरेव त्रिवृच्छ्यामार्द्धभागिके ।
क्षीरेणालोड्य संपक्वं पिवेत् तच्च विरेचनम् ॥ ६ ॥
दन्तीद्रवन्तीकल्पोऽयमजशृङ्ग्यजगन्धयोः ।
क्षीरिणीनीलिनिकयोस्तथैव च करञ्जयोः ॥

यथा—शङ्खिनीचूर्णस्य भागद्वयमतसीचूर्णस्यैकं भागं मेलयित्वा पीड़ितं तैलं हरीतकीकषायेण पिबेत्। तथा सर्षपतैलम्। यथा—शङ्खिनीवीजचूर्णस्य द्वौ भागौ सर्षपचूर्णस्यैकं भागं मेलयित्वा पीड़ितं तैलं मात्रया हरीतकीकषायेण पिबेत्। तथा एरण्डतैलम्। यथा—शङ्खिनीवीजचूर्णस्य भागद्वयमेरण्डवीजचूर्णस्यकं भागं मेलयित्वा पीड़ितं तैलं मात्रया हरीतकीकषायेण पिबेत्। तथा गोकरञ्ज-बीजतैलम्। तद् यथा—शङ्खिनीवीजचूर्णस्य भागद्वयं गोकरञ्जवीजचूर्णस्यैकभागं मेलयित्वा पीड़ितं तैलं मात्रया हरीतकीकषायेण पिबेदिति चत्वारः। इति तैले षड्योगाः ॥ ५ ॥

गङ्गाधरः—अथ सर्पिष्यष्टावाह—शङ्खिनीत्यादि। शङ्खिनीसप्तलाभ्यां पक्वं क्षीरं मथित्वा यद् घृतं स्यात् तद् घृतं शङ्खिनीसप्तलयोः कल्के त्रिवृच्छ्यामयोररुण-मूलत्रिवृच्छ्याममूलत्रिवृतोरर्द्धभागिके सप्तलाशङ्खिन्योर्द्वौ भागौ मिलितयोः त्रिवृच्छ्यामयोरेक भाग इति चतुर्णां कल्के घृतपादिके चतुर्गुणेन क्षीरेण संपक्वं पिबेदित्येकः सर्पिषि ॥ ६ ॥

गङ्गाधरः—दन्तीत्यादि। य एष शङ्खिनीसप्तलयोः क्षीरोत्थघृतस्य कल्पोऽज-शृङ्ग्यजगन्धादिषु पञ्चसु वक्ष्यते, सोऽयमेव दन्तीद्रवन्तीकल्पः सर्पिषि बोध्यः। इति प्रसङ्गादुक्तम्। अपरान् घृते योगानाह—अजशृङ्ग्यजगन्धयो-रित्यादिषु ; यथा—शङ्खिनीसप्तलाभ्यां पक्वक्षीरोत्थं घृतं पुनस्तयोरेव सप्तला-शङ्खिन्योः कल्केऽजशृङ्ग्यजगन्धामूलयोर्द्विभागकल्कार्द्धांशकल्के सप्तलाशङ्खिन्योः कल्कस्य द्वौ भागौ अजशृङ्ग्यजगन्धयोर्मिलितयोरेकभाग इति मिलित-चतुर्णां कल्के घृतपादिके चतुर्गुणे क्षीरे साध्यमित्येकः। अपरमाह—क्षीरिणीनीलिनिकयोरिति। शङ्खिनीसप्तलाभ्यां पक्वक्षीरोत्थं घृतं, सप्तला-शङ्खिन्योर्मिलितयोः कल्को द्विभागः, क्षीरिणीनीलिनिकयोर्मिलितयोः कल्क

चक्रपाणिः—शङ्खिनीसप्तलेत्यादि प्रथमं घृतम्। दन्तीद्रवन्तीत्यादिना द्विद्विद्रव्यकल्केन सप्तलाशङ्खिनीकल्कार्द्धेन। अपि च पञ्च घृतयोगा दन्तीद्रवन्त्यादियोगात्। द्रवन्ती दन्तीभेदः।

मसूरविदलायाश्च प्रत्यक्श्रेण्यास्तथैव च।
द्विभागार्द्धांशकल्केन * तत् साध्यश्च पुनर्घृतम् ॥
सप्तलाशङ्खिनीधात्री-कषाये चापरं घृतम्।
त्रिवृत्कल्पेन सर्पिश्च त्रयो लेहाश्च पूर्व्ववत् ॥ ७ ॥

एकभागः, इत्येवं द्विभागार्द्धांशिके क्षीरिणीनीलिनिकयोः कल्के घृतात् पादिके चतुर्गुणे क्षीरे साध्यमिति द्वितीयः। अपरमाह—तथैव च करञ्जयोरिति। शङ्खिनीसप्तलाकल्कपक्कक्षीरोत्थं घृतं, सप्तलाशङ्खिन्यो मिलितयोर्द्वौ भागौ कल्कौ, गोकरञ्जनाटाकरञ्जयोर्मिलितयोरेकभागः, इत्येवं शङ्खिनीसप्तलाद्विभागार्द्धांशिके करञ्जद्वयकल्के घृतात् पादिके चतुर्गुणे क्षीरे साध्यमिति तृतीयः। अपरश्चाह—मसूरेत्यादि। शङ्खिनीसप्तलाकल्कपक्कक्षीरोत्थं घृतं शङ्खिनीसप्तलयोर्द्वौ भागौ कल्कौ मसूरविदलाया एकभागः कल्क इत्येवं शङ्खिनीसप्तलयोर्द्विभागार्द्धांशिके मसूरविदलाकल्के घृतात् पादिके चतुर्गुणे क्षीरे साध्यमिति चतुर्थः। अपरश्चाह—प्रत्यक्श्रेण्यास्तथैव चेति। शङ्खिनीसप्तलाकल्कपक्कक्षीरोत्थं घृतं सप्तलाशङ्खिन्योः कल्कौ मिलितयोर्द्विभागः प्रत्यक्श्रेण्याः कल्क एकभाग इत्येवं सप्तलाशङ्खिन्योर्द्विभागार्द्धांशिके प्रत्यक्श्रेण्याः कल्के घृतपादिके चतुर्गुणक्षीरे साध्यमिति पञ्चमः। प्रत्यक्श्रेणी द्रवन्ती। पूर्व्वेण सह षट्। अपरश्चाह—सप्तलेत्यादि। सप्तलादीनां त्रयाणां कषाये चतुर्गुणे घृतं पचेदित्यपरं सप्तमं घृतम्। अष्टमश्चाह—त्रिवृत्कल्पेनेत्यादि। त्रिवृताकल्पेनापरं सर्पिः पचेत्। तद् यथा। शङ्खिनीं सप्तलां पादिकौ कल्कीकृत्याम्लफलादिरसे समे त्रिगुणे च जले घृतं पक्त्वा पिबेदित्यष्टमं घृतम्। इत्यष्टौ योगाः सर्पिषि। त्रयो लेहाश्च पूर्व्ववदिति त्रिवृत्कल्पवत्। तद्यथा—शङ्खिनीसप्तलाकषायेण तयोः कल्कं समशर्करं लेहं पचेत्, तस्य पाणितलं लिह्यादित्येकः। शर्करां जले द्रवीकृत्य पचेत्, तन्तुलीभूते शङ्खिनीसप्तलाचूर्णं तत्समं त्वक्पत्रमरिचचूर्णं प्रक्षिपेत्, शीते मधु दत्त्वा तं लेहमीश्वराणां विरेचनं पिबेदिति द्वितीयः। तृतीयश्च यथा—इक्षुद्राक्षापीलुपरूषकाणां रसं प्रत्येकं कुडवं सितोपलायाः पलं पक्त्वा

अजशृङ्गी विषाणी। क्षीरिणी दुग्धिका। मसूरविदला श्यामलता। प्रत्यक्पर्णी मूषिकपर्णी। विडङ्गार्द्धांशकल्केनेति दन्त्यादिद्विवर्गार्द्धभागिकेन कल्केन। शङ्खिनीत्यादिना सप्तमं घृतम्।

* विडङ्गार्द्धांशकल्केनेति चक्रधृतः पाठः।

सुराकम्पिल्लके योगाः कार्य्या लोध्रवदेव च ।
दन्तीद्रवन्त्योः कल्पेन सौवीरकतुषोदके ।
अजगन्धाजशृङ्ग्योश्च कार्य्ये स्यातां विरेचने ॥ ८ ॥

तत्र श्लोकौ ।

कषायादौ दश षट् च षट् तैलेऽष्टौ च सर्पिषि ।
पञ्च मद्ये त्रयो लेहा योगाः कम्पिल्लके तथा ॥

तन्तुलीभूतेऽवतारिते शीते क्षौद्रात् कुडवार्द्धं दत्त्वा मिश्रयेत् । तं लेहं शङ्खिनीसप्तलाचूर्णेन मेलयित्वा मात्रया योजयेदिति त्रयो लेहाः ॥ ७ ॥

गङ्गाधरः—अथ मद्ये पञ्च योगानाह—सुरेत्यादि । लोध्रकल्पे यथा सुरा त्वेका । तद्यथा—सुरां सप्तलाशङ्खिनीकषायेण तुल्यां पक्षस्थितां जातां पिबेदित्येका सुरा । कम्पिल्लके चैकमाह—कम्पिल्लके लोध्रवदिति । तद्यथा—सप्तलाशङ्खिनीकषायेण दशकृत्वः सुभावितां सप्तलाशङ्खिनीचूर्णमात्रां कम्पिल्लककषायेण पुनः पिबेदिति कम्पिल्लके त्वेक एव । दन्तीद्रवन्त्योरित्यादि । दन्तीद्रवन्त्योरित्यादिना चत्वारि मद्ययोगान् । दन्तीद्रवन्तीकल्पेन अजगन्धाजशृङ्ग्योः कल्केन सौवीरकञ्च तुषोदकञ्च कार्य्यमिति चत्वारि । तद् यथा—अजगन्धायाः कषाये चतुर्गुणे निस्तुषयवान् दरदलितान् सप्तलाशङ्खिनीकल्कान् प्रक्षिप्य स्थापयेदिति सौवीरकम् । एवं सतुषयवान् प्रक्षिप्य तुषोदकं कार्य्यम् । एवमजशृङ्ग्याश्च कषाये सौवीरकं तुषोदकञ्च कार्य्यमिति चत्वारो मद्ययोगाः । पूर्व्वोक्तसुरया सह पञ्च मद्ययोगाः । इत्येकोनचत्वारिंशद् योगाः ॥ ८ ॥

गङ्गाधरः—एतदुपसंहारश्लोकावाह—तत्र श्लोकाविति । कषायादौ दश-

अत्र त्वविकृतत्वात् सप्तलाशङ्खिन्योश्च द्विगुणैकः कषायोऽभिप्रायते । लोध्रवदिति लोध्रकल्पवदिति । लोध्रकल्पे यथा त्रयो लेहाः चतुरङ्गुलकल्पेन इत्यादिनोक्ताः, तेन लोध्रस्थाने सप्तलाशङ्खिनीयोगः कर्त्तव्यः । तथा सुरायोगः कम्पिल्लयोगश्च लोध्रवदिति, अत्रापि लोध्रस्थाने सप्तलाशङ्खिनीप्रक्षेपः कर्त्तव्यः । दन्तीद्रवन्त्योरित्यादिना साधनचतुष्टयमाह । एतत् साधनचतुष्टयं पूर्व्वसुरायोगेन समं पञ्च मद्य इति वचनेन संग्रहगृहीतं सौवीरकादीनाञ्च मद्यशब्देनाभिधानमिहासुतत्वसामान्याज्ज्ञेयम् । दन्तीद्रवन्त्योः कल्पेनेति अनागतावेक्षणेन दन्तीद्रवन्तीकल्पे सौवीरकतुषोदके ये वक्तव्ये, तद् विधानमिहातिदिशति । तत्र अजगन्धाकषायेण सौवीरकतुषोदके इति वक्तव्यम्, तेनेहापि अजगन्धाकषाययुक्तसप्तलाशङ्खिन्योः सौवीरकतुषोदके कर्त्तव्ये ।

सप्तलाशङ्खिनीकल्पे त्रिंशदुक्ता नवाधिकाः।
योगाः सिद्धाः समस्तानामेकशोऽपि च ते हिताः॥ ९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने सप्तला-
शङ्खिनीकल्पो नाम एकादशोऽध्यायः॥ ११॥

त्यादि। कषायादौ दश योगाः। मैरेयादौ षट्। तैले षट्। सर्पिषि त्वष्टौ। मदे
पञ्च। लेहास्त्रयः। कम्पिल्लके त्वेकः। इति नवाधिकास्त्रिंशद् योगा उक्ताः॥९॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च।
कल्पस्थाने सप्तमे तदेकादशाध्यायेऽत्र तु। सप्तलाशङ्खिनीकल्पे वैद्य-
गङ्गाधरेण तु। कृते जल्पकल्पतरौ कल्पस्थाने तु सप्तमे। स्कन्धे
एकादशाध्याय-जल्पशाखा समापिता॥ ११॥

अत्र 'तथा दन्तीद्रवन्त्योश्च कषायेणाजगन्धायाः। गौड़ः कार्य्योऽजशृङ्ग्या वा रसैः सुखविरेचनः॥'
इत्यनेनोक्तस्य गौड़ारिष्टस्य दन्तीद्रवन्तीकल्पोक्तस्य विधानमतिदिशति॥ ६—८॥

चक्रपाणिः—कषाया इत्यादिसंग्रहो व्याकृतः॥ ९॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां सप्तलाशङ्खिनीकल्पो नाम
एकादशोऽध्यायः॥ ११॥

द्वादशोऽध्यायः।

अथातो दन्तीद्रवन्तीकल्पं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

दन्त्युडुम्बरपर्णी च निकुम्भोऽथ मुकूलकः।
द्रवन्ती नामतश्चित्रा न्यग्रोधी मूषिकाह्वया ॥
तथा मूषिकपर्णी चाप्युपचित्रा च शम्बरी।
प्रत्यक्श्रेणी सुतश्रेणी दन्ती रण्डा च कीर्त्तिता ॥
तयोर्मूलानि संगृह्य बहलानि स्थिराणि च।
दन्तिदन्तप्रकाराणि श्यावताम्राणि बुद्धिमान् ॥
पिप्पलीमधुलिप्तानि स्वेदयेन्मृत्कुशान्तरे।
शोषयेदातपेऽर्काग्न्यो-*-र्हता ह्येषां विकाशिता ॥ २ ॥

गङ्गाधरः—अथोद्देशक्रमाद् दन्तीद्रवन्तीकल्पमाह—अथात इत्यादि। षड्विरेचनशताश्रितीये यदुक्तम्—अष्टचत्वारिंशद् दन्तीद्रवन्त्योरिति, तदष्टचत्वारिंशद्योगं दन्तीद्रवन्तीकल्पं व्याख्यास्यामः। शेषं पूर्ववद्व्याख्येयमिति ॥१॥

गङ्गाधरः—तयोः पर्य्यायमाह—दन्तीत्यादि। दन्ती चोडुम्बरपर्णी च निकुम्भश्च मुकूलकश्चेति पर्य्यायैर्दन्तीनामौषधिरुच्यते। द्रवन्तीनाम चौषधिः पुनर्द्रवन्ती च चित्रा च न्यग्रोधी च मूषिका च मूषिकपर्णी चोपचित्रा च शम्बरी च प्रत्यक्श्रेणी च सुतश्रेणी च दन्ती च रण्डा चेति पर्य्यायैरुच्यते। तयोरित्यादि। दन्तिदन्तप्रकाराणि हस्तिदन्तप्रकाराणि मूलानीत्यतो नागदन्तीत्युच्यते, बहलानि घनानि, तानि मूलानि पिप्पलीकल्केन मधुना मिश्रेन लिप्तानि कुशैरावेष्ट्य मृत्तिकाभिः लिप्त्वा वह्निना स्वेदयेत्। स्विन्नानि जलेन धौतानि

चक्रपाणिः—पारिशेष्यात् दन्तीद्रवन्तीकल्पोऽभिधीयते। दन्तीद्रवन्त्योरपि तयोः पर्य्यायामाह। स्थिराणीति सारभूतानि। बहलानीति घनत्वक्कानि। हस्तिदन्तप्रकाराणीति अत्यन्तपूर्व्वोपचितानि। श्यावताम्राणीति यथाक्रमेण दन्त्याः श्यावानि द्रवन्त्यास्ताम्राणि। मृत्कुशान्तरे इति पिप्पलीमधुकल्काभ्यां परिलिप्य कुशैः परिवेष्ट्य ततो मृदावलिप्तानि स्वेदयेत्। अग्निस्वेदातपशोषणफलमाह—अग्न्यर्कौ हतो ह्येषां विकाशितामिति दन्तीद्रवन्तीमूलानां

* अग्न्यर्कौ हतो ह्येषां विकाशितामिति चक्रसम्मतः पाठः।

तीक्ष्णोष्णान्याशुकारीणि विकाशीनि गुरूणि च।
विलापयन्ति दोषौ द्वौ मारुतं कोपयन्ति च ॥ ३ ॥
दधितक्रसुरामण्डैः पिण्डमक्षसमं तयोः।
पियालकोलबदर-पीलुसीधुभिरेव च ॥
पिबेद् गुल्मोदरी दोषैरभिखिन्नश्च यो नरः।
गोमृगाजरसैः पाण्डु-क्रिमिकुष्ठी भगन्दरी ॥ ४ ॥
तयोः कल्के कषाये च दशमूलरसायुते।
विसर्पालजीकक्षासु दाहे च विपचेद् घृतम् ॥

कृत्वातपे शोषयेत्। किमर्थमित्यत आह—एषां मूलानां विकाशिताग्निसूर्य्यैर्हता स्यादित्यर्थं तथा कुर्य्यात् ॥ २ ॥

गङ्गाधरः—गुणानाह—तीक्ष्णेत्यादि। दोषौ द्वौ पित्तकफौ। मारुतं यत् कोपयन्ति तद् द्रव्यान्तरयोगात् सर्व्वरोगान घ्नन्ति ॥ ३ ॥

गङ्गाधरः—योगानाह—दधीत्यादि। तयोर्दन्तीद्रवन्त्योरन्यतरस्या मूल-पिण्डमक्षसमं दध्यादित्रयाणामन्यतमेन गुल्मादिषु पिबेदिति त्रयः। पियालादीना-मन्यतमेन क्वाथेन सीधुना वा पिबेदिति पञ्चेत्यष्टौ। गोमृगेत्यादि। पाण्ड्वाद्यामयी गोरसमृगमांसरसच्छागमांसरसानामन्यतमेन पिबेत्। गोरसः पयः। इति त्रयः ॥ ४ ॥

गङ्गाधरः—तयोरित्यादि। तयोर्दन्तीद्रवन्त्योरन्यतरस्या मूलस्य कल्के घृतात् पादिके, कषाये च तयोर्घृताच्च द्विगुणे, दशमूलरसे च द्विगुणे घृतं

विकाशितालक्षणं गुणं स्वेदोपशोषणाभ्यामग्न्यर्कौ हतः। तेन नातिदोषाणि दन्तीद्रवन्ती-मूलानि स्युरिति भावः ॥ १। २ ॥

चक्रपाणिः—तीक्ष्णोष्णानीत्यादिना तेषां गुणकथनम्। दोषौ द्वाविति पित्तश्लेष्माणौ ॥ ३ ॥

चक्रपाणिः—दधीत्यादिना सप्त भिर्द्रव्यैः सप्त प्रयोगानाह। सीधुशब्दः पियालादिभिश्चतुर्भिः पृथक् सम्बध्यते। अभिखिन्न इत्याक्रान्तः। गोमृगाजरसैरित्यत्रापि पिण्डमक्षसमं तयोरित्यनु-वर्त्तते। अत्रापि गवादिरसैस्त्रिभिस्त्रयः प्रयोगा भवन्ति ॥ ४ ॥

चक्रपाणिः—तयोरित्यादिना त्रीन् स्नेहयोगानाह। अनयोः कल्ककषाये च दशमूलरस-

तैलं मेहे च गुल्मे च सोदावर्त्तकफानिले ।
चतुःस्नेहं शकृच्छुक्र-वातसङ्गानिलार्त्तिषु ॥ ५ ॥
रसे दन्त्यजशृङ्ग्योश्च गुडक्षौद्रघृतान्वितः ।
लेहः सिद्धो विरेकार्थे देयः सन्तापदाहनुत् * ।
पित्तज्वरे वाततर्षे स्यात् स एवाजगन्धया ॥
मूलं दन्तीद्रवन्त्योश्च पचेदामलकीरसे ।
त्रींस्तु तस्य कषायस्य भागौ द्वौ फाणितस्य च ।
तप्ते सर्पिषि तैले वा भर्ज्जयेत् तत्र चावपेत् ॥

विपचेत्, विसर्पादौ पिबेत् । एवं प्रकारेण तैलं मेहादिषु पचेत् । तद् यथा—दन्तीद्रवन्त्योर्मूलस्य कल्कः पादिकः कषायो द्विगुणो दशमूलकषायो द्विगुणः, तेन तैलं पक्त्वा मात्रया तत् तैलं पिबेत् । शकृदाद्यर्त्तिषु चतुःस्नेहं पक्त्वानेन प्रकारेण पिबेत् । तद् यथा—घृतादिचतुःस्नेहं समभागेन प्रस्थं प्रत्येकमेककशरावम्, दन्तीद्रवन्त्योरन्यतरस्या मूलस्य कल्कः पादिकः, तत्कषायश्च द्विगुणः, दशमूलकषायश्च द्विगुणः । इति स्नेहे त्रय इति चतुर्दश ॥ ५ ॥

गङ्गाधरः—अथ लेहानाह—रस इत्यादि । दन्त्यजशृङ्ग्योर्दन्त्या मूलस्य मेषशृङ्ग्या मूलस्य मिलितयोः कषायं गुडघृतयुक्तं पक्त्वा तन्तुलीभूतमवतार्य्य शीते तत्र क्षौद्रं दत्त्वा लेहः सिद्ध इत्येकः । पित्तेत्यादि । पित्तज्वरादौ स एव लेहोऽजगन्धया कार्य्यः । तद् यथा—अजगन्धा यमानी तस्या मूलं दन्तीमूलञ्च जलेऽष्टगुणे पक्त्वा रसे पादशेषे कृते तत्र गुडं पादिकं घृतञ्च दत्त्वा पचेत्, लेहीभूतमवतार्य्य शीते मधु दत्त्वा लेहं सिद्धं लहयेदित्यपरो लेहः । चतुरोऽपरलेहानाह—मूलमित्यादि । आमलकीरसेऽष्टगुण दन्तीद्रवन्त्योर्मूलं पचेत् । पादशिष्टस्य तस्य कषायस्य त्रीन् भागान् फाणितस्य च द्वौ भागौ मेलयित्वा तप्ते घृते तैले वा

तुल्यभागेन घृतं पचेत विसर्पादिषु । तैलं पूर्ववन्मेहादिषु । चतुःस्नेहस्तु शकृच्छुक्र-वातसङ्गादिषु ॥ ५ ॥

चक्रपाणिः—रस इत्यादिना एको लेहः । वाततर्षे इत्यादिना द्वितीयः । स एवाजगन्धये-त्यनेन पूर्व्वोक्तो लेह एवाजशृङ्गीस्थानेऽजगन्धादानं विशिष्टं स्यापयति । मूलं दन्तीत्यादिना

* दाहसन्तापमेहनुदिति पाठान्तरम् ।

कल्कं दन्तीद्रवन्त्योश्च श्यामादीनाञ्च भागशः।
तं सिद्धं पाययेल्लेहं सुखं तेन विरिच्यते॥
रसे च दशमूलस्य तथा वभीतके रसे।
हरीतकीरसे चैव लेहानेवं पचेद् भिषक्॥ ६॥
तयोर्विल्वसमं चूर्णं तद्रसेनैव भावितम्।
असृष्टविषि वातोत्थ-गुल्मे चाम्लयुतं हितम्॥ ७॥

भर्ज्जयेत्। तत्र तप्ते दन्तीद्रवन्त्योः श्यामादीनामपामार्गतण्डुलीयोक्तानां त्रिवृता-त्रिफलानीलिनीसप्तलावचाकम्पिल्लकगवाक्षीक्षीरिण्युदकीर्य्यापीलुवारग्वधद्राक्षा-निचूलानां पञ्चदशानां दन्ती द्रवन्ती चेत्येषां सप्तदशानां कल्कं भागशः पृथक् पृथक् समं मिलित्वा क्वाथफाणितायाः पादिकमावपेत्। तं सिद्धं लेहं पाययेदिति चैकः। रसे चेत्यादि। दशमूलस्य रसेऽष्टगुणे दन्तीद्रवन्त्योर्मूलं पक्त्वा पादशिष्टस्य तस्य कषायस्य भागत्रये फाणितस्य भागद्वये तप्ते घृते तले वा भर्ज्जिते दन्तीद्रवन्त्योः श्यामादीनाञ्च पूर्ववत् कल्कमावपेत्। तं सिद्धं लेहं पाययेदित्येकः। तथा वैभीतके रसेऽष्टगुणे दन्तीद्रवन्त्योर्मूलं पक्त्वा पाद-शिष्टस्य तस्य कषायस्य भागत्रयं फाणितस्य भागद्वयं घृते तैले वा भर्ज्जितं तत्र दन्तीद्रवन्त्योः श्यामादीनाञ्च कल्कं पूर्ववदावपेत्। तं लेहं सिद्धं पाययेत्। इत्येकः। एवं हरीतकीरसे दन्तीद्रवन्त्योर्मूलमष्टगुणे पक्त्वा पादशिष्टस्य तस्य कषायस्य भागत्रयं फाणितस्य भागद्वयं मेलयित्वा घृते तैले वा भर्ज्जितं तत्र दन्तीद्रवन्त्योः श्यामादीनाञ्च कल्कं पूर्ववदावपेत्। सिद्धं तं लेहं पाययेत्। इत्येकः। इति षट् लेहा इति विंशतिः॥ ६॥

गङ्गाधरः— तयोरित्यादि। तयोर्दन्तीद्रवन्त्योर्मूलयोर्विल्वसमं पलमात्रं चूर्णं दन्तीद्रवन्तीमूलक्वाथेनैव भावितमम्लयुतं पिवेत्। असृष्टविषि बद्धपुरीषे। इत्येकश्चूर्णः॥ ७॥

तृतीयो लेहः। भागश इति प्रत्येकभागग्रहणेन। एवमेतद्दन्तैः प्रयोगैराद्यषोडशको भवेत्। रसे चेत्यादौ एवमित्यनेन पूर्व्वोक्तलेहत्रयमतिदिशति। तयोरित्यादिकश्चतुर्थः तयोरिति दन्ती-द्रवन्तीमूलयोः। असृष्ट इति विबद्धे॥ ६। ७॥

पाटयित्वेक्षुकाण्डं वा कल्केनालिप्य चान्तरा ।
स्वेदयित्वा ततः खादेत् सुखं तेन विरिच्यते ॥ ८ ॥
मूलं दन्तीद्रवन्त्योश्च सह मुद्गैर्विपाचयेत् ।
लावतित्तिरिमांसैश्च * रसास्ते स्युर्विरेचनाः ॥ ९ ॥
तयोर्वापि कषायेण यवागूं जाङ्गलं रसम् ।
माषयूषांश्च संस्कृत्य दद्यात् तैश्च विरिच्यते ॥ १० ॥
तत्कषायात् त्रयो भागा द्वौ सितायास्तथैव च ।
एको गोधूमचूर्णानां कार्य्या चोत्कारिका शुभा ॥ ११ ॥

गङ्गाधरः—पाटयित्वेत्यादि । इक्षुकाण्डं द्विधा पाटयित्वा तदभ्यन्तरे दन्तीद्रवन्त्योर्मूलकल्केन लिप्त्वा पुनरिक्षुकाण्डभागद्वयं योजयित्वा कुशेन बद्धा मृदालिप्याग्निना स्वेदयेत्, ततस्तदिक्षुकाण्डं खादेदिति चैकः ॥ ८ ॥

गङ्गाधरः—मूलमित्यादि । दन्तीद्रवन्त्योर्मूलं तत्समैर्मुद्गैः सह जलेन पचेत्, स एको मुद्गरसः । लावमांसेन सह तयोर्मूलं पचेदिति चापरो रस एकः । तित्तिरिमांसेन सह तयोर्मूलं पचेदित्यपरो रस एकः । इति मुद्गादिरसे त्रयः ॥ ९ ॥

गङ्गाधरः—तयोर्वापीत्यादि । तयोर्दन्तीद्रवन्त्योर्मूलस्य कषायेण यवागूं पक्त्वा घृतादिषु संस्कृत्य दद्यात्, अथवा तेन कषायेण जाङ्गलमांसरसं पक्त्वा संस्कृत्य दद्यात्, अथवा तेन कषायेण माषयूषांश्च पक्त्वा संस्कृत्य दद्यात्, तैर्विरिच्यते । इति त्रयो योगाः ॥ १० ॥

गङ्गाधरः—तत्कषायादित्यादि । तयोर्दन्तीद्रवन्त्योर्मूलस्य कषायात् त्रयः

चक्रपाणिः—पाटयित्वेत्यादिः पञ्चमः । कल्केनालिप्य चान्तरेति दन्तीद्रवन्तीकल्केन पाटितेक्षुकाण्डमध्ये आलिप्य ॥ ८ ॥

चक्रपाणिः—मूलं दन्तीत्यादिनाष्टौ कृताकृतरसानाह । अत्र लाववर्त्तीरकादयः—'लाववर्त्तीरकश्चैव वार्त्तीकः सकपिञ्जलः । चकोरश्चोपचक्रश्च कुक्कुभा रक्तवर्त्मकः ॥' इति अष्टावुक्ताः । तेषां प्रत्येकयोगादष्टौ रसा भवन्ति । तयोर्वापीत्यादिना यवागूयोगं जाङ्गलरसयोगं माषयूषयोगञ्चाह । एवमेते द्रवपूर्व्वयोगैर्मिलित्वा द्वितीयः षोड़शको भवेत् ॥ ९ । १० ॥

चक्रपाणिः—तत्कषायादित्यादिना कषाययोगं मोदकयोगञ्चाह । कषायादिति दन्तीद्रवन्ती-

* लाववर्त्तीरकाणाञ्च इति चक्रधृतः पाठः ।

मोदको वास्य कल्पेन कार्य्यस्तच्च विरेचनम्।
तयोर्वापि कषायेण मद्यमस्योपकल्पयेत् ॥ १२ ॥
दन्तीकषायेणालोड्य दन्तीतैलेन साधितान्।
गुड़लावणिकान् भक्ष्यान् विविधान् भक्षयेन्नरः ॥ १३ ॥
दन्तीद्रवन्तीमरिचं यमानीमुपकुञ्चिकाम्।
नागरं हेमदुग्धञ्च चित्रकञ्चेति चूर्णितम् ॥
सप्ताहं भावयेन्मूत्रे गवां पाणितलं ततः।
पिबेद् घृतेन चूर्णन्तु विरिक्तश्चापि तर्पणम् ॥
सर्व्वरोगहरं मुख्यं सर्व्वेष्वृतुषु यौगिकम्।
चूर्णं तदनपायित्वाद् बालवृद्धेषु पूजितम् ॥
दुर्भक्ताजीर्णपार्श्वार्त्ति-गुल्मप्लीहोदरेषु च।
गण्डमालास्ववाते च पाण्डुरोगे च शस्यते ॥ १४ ॥

भागाः सिताया द्वौ भागौ गोधूमचूर्णानामेको भाग इत्येतत् सर्व्वमेकीकृत्य पक्त्वा उत्कारिका कार्य्या। इत्येकः ॥ ११ ॥

गङ्गाधरः—मोदक इत्यादि। मोदको वास्य कल्पेन कार्य्यः। तद्यथा—तत्कषायात् त्रयो भागाः सिताया द्वौ भागौ गोधूमचूर्णस्यैको भागः, एतत् सर्व्वमेकीकृत्य पक्त्वा मोदकः कार्य्य इत्येकः। तयोरित्यादि। तयोर्दन्तीद्रवन्तीमूलयोः कषायेण मद्यमुपकल्पयेत्। तद् यथा—दन्तीद्रवन्त्योर्मूलं कुट्टयित्वा सुराभाण्डे स्थापयेत्, जातं तदासुतं पिबेत्। इत्येकः ॥ १२ ॥

गङ्गाधरः—दन्तीकषायेणेत्यादि। दन्तीमूलकषायेण मर्द्दितान् दन्तीतैलेन साधितान् गुड़लावणिकान् गुड़लवणयुक्तान् पूपपिष्टकादीन् भक्ष्यांश्च विविधान् भक्षयेत्। इत्येकः ॥ १३ ॥

गङ्गाधरः—दन्तीत्यादि। यमानीमूलं हेमदुग्धं यज्ञोडुम्बरम्। दन्त्यादीनां मूलं चूर्णितं गवां मूत्रे सप्ताहं भावयेत्। ततः पाणितलं कर्षं घृतेन पिबेत्। इत्येकः ॥ १४ ॥

कषायात्। मोदककरणेऽपि तत्कषायात् त्रयो भागा इत्यादिविधानमनुवर्त्तते। तयोश्चापि कषायेण

पलं चित्रकदन्त्योश्च हरीतक्याश्च विंशतिः।
त्रिवृत्पिप्पलिकर्षौ द्वौ गुड़स्याष्टपलेन तु॥
विनीय मोदकान् कुर्य्याद् दशैकं भक्षयेत् तु तम्।
उष्णाम्बु च पिबेच्चानु दशमे दशमेऽहि वा॥
एते निष्परिहाराः स्युः सर्व्वरोगनिवर्हणाः।
विरेचनं पित्तकासे पाण्डुरोगे च शस्यते।
ग्रहणीपाण्डुरोगार्शःकण्डूकोठानिलापहाः॥ १५॥
दन्तीद्विपलनिर्य्यूहो द्राक्षार्द्धप्रस्थसंयुतः।
दन्तीकल्कः समगुड़ः शीतवारासुतं पिबेत्।
विरेचनं मुख्यतमं कामलापहमुत्तमम्॥ १६॥
श्यामा दन्ती रसो गौड़ः पिप्पलीफलचित्रकैः।
लिप्तेऽरिष्टोऽनलश्लेष्म-क्रिमिपाण्डूदरापहः॥

<u>गङ्गाधरः</u>—पलमित्यादि। चित्रकस्य पलं दन्त्याः पलम्, हरीतक्या आकृतिमानाद् विंशतिगुड़काः, त्रिवृताकर्षः पिप्पलीकर्षश्च, सर्व्वं गुड़स्याष्टपलेन विनीय पक्त्वा मोदकान् दश कुर्य्यात्, तत्र एकं मोदकं तं भक्षयेदित्येकः॥१५॥

<u>गङ्गाधरः</u>—दन्तीत्यादि। दन्तीमूलस्य द्विपलस्याष्टगुणे जले पक्त्वा पादशेषनिर्य्यूहो द्राक्षाया अर्द्धप्रस्थनिर्य्यूहयुतः, दन्तीकल्कस्य द्विपलस्य समगुड़ः, तत् सर्व्वं भाजने स्थापयेत्, काले जातमासुतं पिबेदित्येकः॥ १६॥

<u>गङ्गाधरः</u>—श्यामेत्यादि। श्यामात्रिवृत्दन्तीमूलं गौड़ो रसोऽर्द्धावर्त्तितगुड़ः, पिप्पलीमदनफलचित्रकैः कल्कैर्लिप्ते भाजने तत् सर्व्वं स्थापयेत्,

मद्यमिति तृतीयः। दन्तीत्यादिना भक्ष्ययोगश्चतुर्थः। दन्तीद्रवन्तीमरिचमित्यादिकः पञ्चमः। हेमदुग्धा स्वर्णक्षीरी। चूर्णन्त्वित्यन्तं पिबेदिति सम्बन्धः॥ ११—१४॥

<u>चक्रपाणिः</u>—चित्रकेत्यादिकः षष्ठः। हरीतक्याश्च विंशतिरित्याकृतिमानेन। अयं योगस्तन्त्रान्तरेऽगस्त्यमोदक इति ख्यातः। दन्तीद्विपलेत्यादिकः सप्तमः। अत्र दन्तीद्विपलद्राक्षार्द्धप्रस्थ

तथा दन्तीद्रवन्त्योश्च कषाये साजगन्धयोः।
गौडः कार्य्योऽजश्रृङ्गया वा रसैः सुखविरेचनम्॥ १७॥
तच्चूर्णक्काथमाषाम्बु-किण्वतोयसुरोद्भवा।
मदिरा कफगुल्माल्प-वह्निपार्श्वकटीग्रहे॥ १८॥
अजगन्धाकषायेण सौवीरकतुषोदके।
सुराकम्पिल्लके योगो लोध्रवच्च तयोः स्मृतः॥ १९॥

काले जात एवारिष्ट इत्येकः। तथेत्यादि। अजगन्धा यमानी, तस्या मूलेन सहितयोर्दन्तीद्रवन्तीमूलयोः कषाये गौड़ो रसोऽर्द्धावर्त्तितगुड़ एकीकृत्य भाजने स्थाप्य, काले जातोऽरिष्टः कार्य्य इत्येकः। अजश्रृङ्गया वेति। अजश्रृङ्गी विषाणिका तस्या रसैः क्काथर्वा दन्तीद्रवन्त्योः कषाये गौड़ो रसो भाजने स्थाप्यः, काले जातोऽरिष्टः कार्य्यः। इत्येकः॥ १७॥

गङ्गाधरः—तच्चूर्णेत्यादि। दन्तीद्रवन्तीमूलस्य चूर्णः क्काथः माषकलाय-क्काथः किण्वस्य सुराकिट्टस्य तोयं जलं सुरा चेति सर्व्वं भाजने स्थाप्यम्, काले जाता मदिरा कफगुल्मादिषु हिता। इत्येकः॥ १८॥

गङ्गाधरः—अजगन्धेत्यादि। अजगन्धा यमानी तस्या मूलकषायेण दन्तीद्रवन्त्योर्मूलकल्कं कुट्टितनिस्तुषयवतुल्यं मेलयित्वा स्थापयेत्, काले जातं सौवीरकं स्यादित्येकः। अजगन्धाकषायेण यमानीमूलकषायेण दन्ती-द्रवन्त्योर्मूलकल्कं सतुषकुट्टितयवतुल्यमेकीकृत्य भाजने स्थापयेत्, काल जातं तुषोदकं स्यादित्येकः। सुरेत्यादि। लोध्रकल्पवच्च सुरायोगः कम्पिल्लक-योगः कार्य्यः। तद्यथा। तयोर्दन्तीद्रवन्त्योः शुष्कं चूर्णं कृत्वा सुरामण्डेन संयोज्य पाणितलं पिबेदिति सुरायोग एकः। अथ कम्पिल्लकयोगः। दन्ती-

क्काथः कर्त्तव्यः। दन्तीकल्कमित्यादिकोऽष्टमः। श्यामेत्यादिको नवमः। गौड़ इति गुड़प्रकृतिकः। लिप्त इत्यत्र घट इति शेषः। तथा दन्तीद्रवन्त्योश्चेत्यादिको दशमः। तथेत्यनेन पूर्व्वयोगोक्त-पिप्पल्यादिघटावलेप अतिदिश्यते। अजश्रृङ्गया वेत्यादिक एकादश। तथा अजश्रृङ्गया वा दन्ती-द्रवन्त्योः कषाये गौड़ोऽरिष्टः कार्य्य इति सम्बन्धः॥ १५—१७॥

चक्रपाणिः—तच्चूर्णेत्यादिको द्वादशः। अत्र तयोर्दन्तीद्रवन्त्योश्चूर्णक्काथाभ्यां तथा माषाम्बुना किण्वकरणपूर्व्वकं या सुरा कृता तत्सुरोद्भवा मदिरा कर्त्तव्येति वाक्यार्थः। अजगन्धेत्यादिना अपरं योगद्वयमाह—लोध्रवच्च तयोरिति। यथा लोध्रकल्पेषु सुरालोध्रकषायेण इत्यादिना

तत्र श्लोकाः ।

दध्यादिषु त्रयः पञ्च पियालादौ स्त्रयो रसैः ।
स्नेहेषु च त्रयो लेहाः षट् चूर्णे त्वेक एव च ॥
इक्ष्वावेकस्तथा मुद्ग-मांसानाञ्च रसास्त्रयः ।
यवाग्वादौ त्रयश्चैक उक्त उत्कारिकाविधौ ॥
एकश्च मोदके मद्ये चैकस्तत्क्वाथतर्पके ।
चूर्णमेकं पुनश्चैको मोदकः पञ्च चासवे ॥

द्रवन्तीमूलकषायेण दशकृत्वः सुभावितं दन्तीद्रवन्तीमूलस्य चूर्णं पुनः कम्पिल्लक-कषायेण दशकृत्वः सुभावितं ततः पुनः पिबेदित्येकः। इति त्रयश्चत्वारिंशद् योगाः। सप्तशङ्खिनीकल्पे पञ्च योगा उक्ताः दन्तीद्रवन्तीकल्पोऽयमित्यादिना। तद् यथा—दन्तीद्रवन्तीसंपकात् क्षीराद् यदुदियाद् घृतम्। तयोरेव कल्कभागावजशृङ्ग्यजगन्धयोः। क्षीरिणीनीलिनिकयोस्तथैव च करञ्जयोः। मसूरविदलायाश्च मत्यक्श्रेण्यास्तथैव च। द्विभागार्द्धांशकल्केन क्षीरेणालोड्य संपचेदिति। तद् यथा—दन्तीद्रवन्तीपकक्षीरोत्थं घृतं तयोर्दन्तीद्रवन्तीमूलयोर्द्वौ भागौ अजशृङ्ग्यजगन्धयोर्द्वयोरेकभाग इत्येवं दन्तीद्रवन्त्योः द्विभागार्द्धांशकल्केन चतुर्गुणेन क्षीरेण संपचेदित्येको घृते। तथा तथाविधक्षीरोत्थं घृतं दन्तीद्रवन्तीकल्कस्य द्वौ भागौ क्षीरिणीमूलनीलिनीमूलयोर्द्वयोरेकभागकल्कं दत्त्वा चतुर्गुणे क्षीरे पचेत्। इत्येकः। तथा करञ्जयोरिति, तथाविधक्षीरोत्थं घृतं दन्तीद्रवन्तीकल्कस्य द्वौ भागौ गोकरञ्जनाटाकरञ्जयोर्द्वयोरेकभागं कल्कं दत्त्वा चतुर्गुणे क्षीरे पचेत्। इत्येकः। एवं तथाविधक्षीरोत्थं घृतं दन्तीद्रवन्तीकल्कस्य द्वौ भागौ, मसूरविदलाया एकं भागं कल्कं दत्त्वा चतुर्गुणे क्षीरे पचेत्। इत्येकः। एवं तथाविधक्षीरोत्थं घृतं दन्तीद्रवन्तीकल्कस्य द्वौ भागौ मत्यक्श्रेण्या द्रवन्त्या मूलं पुनरेकभागं कल्कं दत्त्वा चतुर्गुणे क्षीरे पचेत्। इत्येकः। इति घृते पञ्च योगाः। इति दन्तीद्रवन्त्योरष्टचत्वारिंशद् योगाः ॥१९॥

गङ्गाधरः—तदुपसंहारश्लोकाः। तत्र श्लोका इत्यादि। दध्यादिषु त्रयः

सुरा प्रोक्ता, तथा कम्पिल्लककषायेण इत्यादिना कम्पिल्लकयोग उक्तः। तथा तयोरपि दन्तीद्रवन्त्योर्लोध्रस्य स्थाने प्रक्षेपात् सुरायोगः सौवीरकतुषोदकविधानेनैव कर्त्तव्य इति तृतीयः षोड़शकः ॥ १८ । १९ ॥

एकः सौवीरकेऽथैक-योगः स्यात् तु तुषोदके।
एका सुरा कम्पिल्लके चैकः पञ्च घृते स्मृताः॥
दन्तीद्रवन्तीकल्पेऽस्मिन् प्रोक्ताः षोड़शकास्त्रयः।
नानाविधानां योगानां भुक्तिदोषामयान् प्रति॥ २०॥
त्रिशतं पञ्चपञ्चाशद्ध योगानां वमने स्मृतम्।
द्वे शते नवकाः पञ्च योगानान्तु विरेचने॥
ऊर्द्ध्वानुलोमभागानामित्युक्तानि शतानि षट्।
प्राधान्यतः समाश्रित्य द्रव्याणि दश पञ्च च॥
यद्धि येन प्रधानेन द्रव्यं समुपसृज्यते।
तत्संज्ञको हि संयोगो भवतीति विनिश्चयः॥ २१॥

इत्यादि। व्याख्याताः प्रत्येकम्। अस्मिन् दन्तीद्रवन्तीकल्पे त्रयः षोड़शकाः अष्टचत्वारिंशद् योगाः प्रोक्ताः॥ २०॥

गङ्गाधरः—त्रिशतमित्यादि। अस्मिन् कल्पस्थाने षट्स्वध्यायेष्वादौ वमने योगानां पञ्चपञ्चाशदधिकं त्रिशतं स्मृतम्। शेषेष्वध्यायेषु षट्सु विरेचने योगानां द्वे शते पञ्चनवकाः पञ्चचत्वारिंशच्चोक्तम्। ऊर्द्ध्वानुलोमभागानामिति। षट्शतानि दश पञ्च च मदनफलादीनि प्राधान्यतः समाश्रित्योक्तानि। ननु वमन विरेचनयोर्मदनफलादित्रिवृतादिवदपराण्यपि फलिनीमुक्तानि पञ्चदश द्रव्याणि तेषां तत्र तत्र संयोगात् तत्कल्पः कथं नोक्त इत्यत आह—यद्धीत्यादि। हि यस्मात् यद् द्रव्यं येन प्रधानेन समुपसृज्यते तत्प्रधानसंज्ञक एव, तदप्रधानानां संयोगो भवतीति विनिश्चयस्तस्मान्न तेषां कल्पः पृथगुक्त इति॥२१॥

चक्रपाणिः—इतीत्यध्यायार्थसंग्रहो व्यक्त एव। भुक्तिदोषामयान् प्रति उक्तानां नानाविधानां योगानां त्रयः षोड़शकाः प्रोक्ता इति योजना। भुक्तिरिच्छा॥ २०॥

चक्रपाणिः—सम्प्रति स्थानार्थसंग्रहमाह—त्रिशतमित्यादिना। पञ्चपञ्चाशदिति पञ्चपञ्चाशद्योगाधिकं त्रिशतम्। प्राधान्यतः समाश्रित्येति प्राधान्येन मदनफलादीनि द्रवन्तीपर्यन्तानि पञ्चदशद्रव्याणि योगव्यपदेशतयाश्रित्य। अत्र वमनादियोगेषु द्रव्यान्तराणां सुरादीनामपि विद्यमानत्वात् कथं मदनफलादीनामवयवत्वेनैवामी योगा व्यपदिश्यन्त इत्याह—यद्धीत्यादि।

फलादीनां प्रधानानां गुणभूताः सुरादयः ।
ते हि तान्यनुवर्त्तन्ते मनुजेन्द्रमिवेतरे ॥ २२ ॥
विरुद्धवीर्य्यमप्येषां प्रधानानामबाधकम् ।
समानवीर्य्यन्त्वधिकं क्रियासामान्यमिष्यते ॥ २३ ॥
इष्टवर्णरसस्पर्श-गन्धार्थं प्रति चामयम् ।
अतो विरुद्धवीर्य्याणां प्रयोग इति निश्चितम् ॥ २४ ॥

गङ्गाधरः—ननु कानि प्रधानानि कानि चाप्रधानानि इत्यत आह—फलादीनामित्यादि । प्रधानानां मदनफलादीनां गुणभूता अप्रधानभूताः सुरादयः । कस्मात् ? ते हीत्यादि । हि यस्मात् ते सुरादयो मदनफलादीनि तान्यनुवर्त्तन्ते, यथा मनुजेन्द्रं राजानमितरे मनुजा अनुवर्त्तन्ते, इति ॥ २२ ॥

गङ्गाधरः—ननु वीर्य्यविरुद्धानि संसृज्यमानानि नानुवर्त्तन्ते इत्यत आह—विरुद्धेत्यादि । एषां प्रधानानां विरुद्धवीर्य्यमपि यदप्रधानं तत् संसृज्यमानं न प्रधानानां बाधकं भवति । समानवीर्य्यन्तु द्रव्यं प्रधानेन सह संसृज्यमानमधिकं क्रियासामान्यकरं भवतीति ॥ २३ ॥

गङ्गाधरः—कस्मात् तर्हि विरुद्धानां प्रयोगः क्रियत इत्यत आह—इष्टेत्यादि । आमयं प्रति यद्यदिष्टवर्णादिका गुणास्तदर्थं द्रव्यं प्रयोक्तव्यं

यद्यपि मदनादिभिः सुरादिभिश्च मिलित्वैव योगाः क्रियन्ते, तथापि फलादीनां प्राधान्यात् फलादीनां योगा एते इति व्यपदेशो भवति, न सुरादियोग इति । गुणभूता इत्यप्रधानभूताः । सुरादीनामप्राधान्य एव हेतुमाह—ते हिताननुवर्त्तन्त इति, सुरादयो हि मदनादीन् वमनविरेचनप्रकारकार्य्यानुगुणतया प्रतीघातेन चानुवर्त्तन्ते ॥ २१ । २२ ॥

चक्रपाणिः—ननु ये तावदनुगुणा मदनादीनां ते गुणभूता भवन्तु, विपरीता ये दन्त्यादय उग्रतया तथा मांसरसादयो ह्यतथा वमनप्रतिकूला मदनादीनां ते कथं गुणभूता इत्याह—विरुद्धवीर्य्यमप्येषां प्रधानानामबाधकमिति । विरुद्धवीर्य्यं गुणभूतं न स्यात्, तत् मदनादीनां कार्य्यं प्रतिहन्यात् । विरुद्धस्यापि च कार्य्यप्रतीघात अवश्यं बाधकत्वमेवेति भावः । विपरीतस्य कार्य्याबाधनरूपं महार्थत्वमभिधाय तुल्यवीर्य्यस्य कार्य्यमाह—अधिकमित्यादि । तुल्यवीर्य्ये संयुक्ते सति क्रियासामर्थ्यम् अधिकं भवतीत्यर्थः ॥ २३ ॥

चक्रपाणिः—अथ तुल्यवीर्य्यं तावत् क्रियासामर्थ्याधिक्यकारकं, तेन तत्संयोगोऽस्तु, विरुद्धवीर्य्यसंयोगास्तु किमर्थं क्रियन्त इत्याह—इष्टेत्यादि । इष्टवर्णत्वादिसम्पत्त्यर्थम्, अतो

भूयश्चैषां बलाधानं कार्य्यं स्वरसभावनैः।
सुभावितं ह्यल्पमपि कार्य्यं स्याद् बहुकर्म्मकृत्॥
स्वरसैस्तुल्यवीर्य्यैर्वा तस्माद् द्रव्याणि भावयेत्।
अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्म्मताम्।
कुर्य्यात् संयोगविश्लेष-कालसंस्कारयुक्तिभिः॥ २५॥
प्रदेशमात्रमेतावद् द्रष्टव्यमिह षट्शतम्।
स्वबुद्धैवं सहस्राणि कोटीर्वा परिकल्पयेत्॥
बहुद्रव्यविकल्पत्वाद् योगसंख्या न विद्यते॥ २६॥

भवति, अतो हेतोर्विरुद्धवीर्य्याणामपि प्रधानेन सह प्रयोगः क्रियते। प्रधानं ह्यामयं हन्ति, विरुद्धवीर्य्यन्तु तदिष्टवर्णादिकं करोतीति निश्चयः॥ २४॥

गङ्गाधरः—भावना तु यदर्थं तदाह—भूयश्चेत्यादि। एषां प्रधानाप्रधानानां बलाधानं कार्य्यम्, तस्मात् भूयश्च स्वरसभावनैर्बलाधानं कार्य्यं कर्त्तव्यम्। हि यस्मादल्पमपि द्रव्यं तुल्यवीर्य्यैः स्वरसैः सुभावितं बलवत् सत् बहुकर्म्मकृत् स्यात्। तस्मात् द्रव्याणि भावयेदिति। कस्मादल्पद्रव्यं वीर्य्याधिकं भावनाभिः स्यात् इत्यत उक्तम्—अल्पस्यापीत्यादि। द्रव्याणां संयोगविश्लेषकालसंस्कारयुक्तिभिर्द्रव्यान्तरमल्पस्यापि द्रव्यस्य महार्थत्वं कुर्य्यात्, प्रभूतस्यापि द्रव्यस्याल्पकर्म्मकत्वं कुर्य्यात्। एषामुदाहरणमुन्नेयम्॥ २५॥

गङ्गाधरः—प्रदेशेत्यादि। इह विरेचनानां यत् षट्शतमुदाहृतं तदेतावत्प्रदेश-

मदनफलादेः विरुद्धवीर्य्याणां प्रयोगः तथा विरुद्धामयञ्च प्रति विरुद्धवीर्य्याणां प्रयोगो वमनविरेचनकर्त्तव्यामयविशेषयौगिक इत्यर्थः॥ २४॥

चक्रपाणिः—अथ मदनफलादीनां वीर्य्योत्कर्षादिके विधिमाह—भूयश्चैषामित्यादि। तुल्यवीर्य्यैर्वेति तुल्यवीर्य्यैः स्वरसैः क्वाथैर्वा। तुल्यातुल्यवीर्य्यसंयोगादिकार्य्यमाह—अल्पस्यापीत्यादि। अत्राल्पमात्रस्य समानवीर्य्यसंयोगात् महार्थत्वं भवति, तथा विरुद्धवीर्य्यसंयोगात् प्रभूतमात्रस्याल्पकर्म्मता कर्त्तव्या। इयञ्चाल्पकर्म्मकता प्रभूतभेषजस्य दीप्तिकारणकोष्ठव्याप्त्यादिप्रयोजनात् क्रियते, तेन न निष्प्रयोजना। विश्लेषादप्यल्पस्य महार्थत्वं विरुद्धवीर्य्यविश्लेषात् बोद्धव्यम्। समाधिकविश्लेषात् तु प्रभूतस्याल्पकर्म्मता ज्ञेया। एवं संस्कारादपि समानासमानगुणात् महार्थत्वमल्पकर्म्मता वा युक्ता। तत्रास्याल्पकर्म्मताऽनुदाहरणीया॥ २५॥

चक्रपाणिः—सम्प्रति उक्तप्रयोगे षट्शतबीजेनानुक्तप्रयोगकल्पनं दर्शयन्नाह—प्रदेशेत्यादि।

तीक्ष्णमध्यमृदूनाञ्च तेषां शृणुत लक्षणम् ।
सुखं क्षिप्रं महावेगमसक्तं यत् प्रवर्त्तते ।
नातिग्लानिकरं पायौ हृदये न च रुक्करम् ॥
अन्नाशयमनुक्षिण्वत् कृत्स्नं दोषं निरस्यति ।
विरेचनं निरूहं वा तत् तीक्ष्णमिति निर्द्दिशेत् ॥ २७ ॥
जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम् ।
ईषन्मात्राधिकैर्युक्तं तुल्यवीर्य्यैः सुभावितम् ।
स्नेहस्वेदोपपन्नस्य तीक्ष्णतां याति भेषजम् ॥ २८ ॥

मात्रं न तु कात्स्न्येन द्रष्टव्यम् । एवमेतत्प्रकारेण द्रव्याणां विरेचनानां बहूनि सहस्राणि बह्वीः कोटीर्वा स्वबुद्धैव भिषक् परिकल्पयेदिति। किमर्थं तावन्नोक्तमित्यत आह—बहुद्रव्येत्यादि। द्रव्याणां बहुविकल्पत्वाद् योगस्य संख्या न विद्यते ॥ २६ ॥

गङ्गाधरः—तीक्ष्णेत्यादि। तथापि तेषामसंख्येयानां तीक्ष्णमध्यमृदूनां लक्षणं शृणु। सुखमित्यादि। यत् तु विरेचनद्रव्यं निरूहद्रव्यं वा क्षिप्रं महावेगमसक्तमसङ्गं सुखं यत् प्रवर्त्तते, नातिग्लानिकरं पायौ हृदये च न च रुक्करम्, अन्नाशयमामाशयमनुक्षिण्वत् कृत्स्नं दोषं निरस्यति, तद् विरेचनद्रव्यं निरूहद्रव्यं वा तीक्ष्णं निर्द्दिशेत् ॥ २७ ॥

गङ्गाधरः—कथं तीक्ष्णं स्यादित्यत आह—जलेत्यादि। जलाद्यसंसृष्टं देशादिगुणान्वितं ईषन्मात्राधिकैर्युक्तं तुल्यवीर्य्यद्रव्यैः सुभावितं सत् स्नेहस्वेदोपपन्नस्य जनस्य तीक्ष्णतां याति ॥ २८ ॥

प्रदेश एकदेशः। अथ कस्मान्निःशेषेण नैव योगाऽभिधीयन्ते इत्याह—बहुद्रव्येत्यादि। असङ्ख्यत्वान्निःशेषानभिधानमिति भावः ॥ २६ ॥

चक्रपाणिः—अथ वमनविरेचनानां तदुपोद्घाताच्च निरूहाणां तीक्ष्णमध्यमृदुतायां लक्षणं कारणञ्चाह—तीक्ष्णेत्यादि। सुखमिति दुःखमकुर्व्वत्। असक्तमित्यप्रतिबद्धम्। नातिग्लानिकरं पायाविति विरेचनस्य निरूहस्य च, हृदये न च रुक्करमिति तु वमनस्य लक्षणं ज्ञेयम्। अनुक्षिण्वदिति पीड़यत्। विरेचनञ्च उक्तं हि—उभयं हि शरीरदोषमलविरेचनात् विरेचनशब्दं लभते इति ॥ २७ ॥

चक्रपाणिः—जलाग्नीत्यादिना तीक्ष्णत्वे कारणमाह। देशकालगुणान्वितमिति अनुगुण-

किञ्चिदेभिर्गुणैर्हीनं पूर्व्वोक्तैर्मात्रया तथा।
स्निग्धस्विन्नस्य वा सम्यक् मध्यं भवति भेषजम् ॥ २६ ॥
मन्दवीर्य्यन्तु रूक्षस्य हीनमात्रन्तु भेषजम्।
अतुल्यवीर्य्यैः संयुक्तं मृदु स्यात् मन्दवेगवत् ॥ ३० ॥
अकृत्स्नदोषहरणादशुद्धी ते बलीयसाम्।
मध्यावरबलानान्तु प्रयोज्ये सिद्धिमिच्छता ॥ ३१ ॥
तीक्ष्णो मध्यो मृदुर्व्याधिः सर्व्वमध्याल्पलक्षणः।
तीक्ष्णादीनि भिषक् तेषु बलापेक्षी प्रयोजयेत् ॥ ३२ ॥

गङ्गाधरः—किञ्चिदित्यादि। पूर्व्वोक्तैरेव एभिर्गुणैः किञ्चित् हीनं तथा मात्रया किञ्चित् हीनं सम्यक् स्निग्धस्विन्नस्य भेषजं मध्यं भवति ॥ २९ ॥

गङ्गाधरः—मन्देत्यादि। रूक्षस्य जनस्य मन्दवीर्य्यं मात्राहीनं भेषजम् अतुल्यवीर्य्यैः संयुक्तं मन्दवेगवत् मृदु स्यात् ॥ ३० ॥

गङ्गाधरः—अकृत्स्नदोषहरणात् ते मध्यमन्दे भेषजे बलीयसामशुद्धी भवतः। मध्यावरबलानां ते मध्यमन्दभेषजे सिद्धिमिच्छता भिषजा प्रयोज्ये भवतः ॥३१॥

गङ्गाधरः—व्याधेस्तीक्ष्णत्वादिकमाह—तीक्ष्ण इत्यादि। सर्व्वलक्षणो व्याधिः

देशकालप्राप्तस्योत्कृष्टगुणवत्त्वम्। स्नेहस्वेदोपपन्नस्येति सुस्निग्धस्विन्नस्य। किञ्चिदित्यादिना मध्यस्य वमनादेः कारणलक्षणे आह। एभिरित्यनेन क्षिप्रत्वादि जलाग्निकीटस्पृष्टत्वादि प्रत्यवमृश्यते। मन्दवीर्य्यमित्यादिना मृदूनां लक्षणं कारणञ्चाह। मन्दवेगवदिति लक्षणम्, शेषं कारणम् ॥ २८—३० ॥

चक्रपाणिः—तीक्ष्णादिशुद्धविषयावचारणार्थमाह—अकृत्स्नेत्यादि। ते मध्याल्पशुद्धी बलीयसां पुरुषाणां कृत्स्नदोषं यस्मान्न निर्हरतः तस्मादशुद्धी। अकृत्स्नदोषहरणादितिहेतुवर्णनेन यदा बलीयसोऽल्पदोषतया कृत्स्नदोषहरणकारिके मध्याल्पशुद्धी भवतः, तदा सम्यक्शुद्धी एव ते सूचयति। मध्येत्यादि मध्यबले मध्या अवरबले तु मृद्वी शुद्धिः प्रयोज्येति वाक्यार्थः। अत्र प्रयोज्यभाषया असम्यक्शुद्धी अपि बलापेक्षया कर्त्तव्ये मध्यावरौ प्रति तयोः सम्यक्शुद्धिकर्त्तव्यत्वं भवतीति दर्शयति ॥ ३१ ॥

चक्रपाणिः—व्याधितीक्ष्णत्वादिविभागेन विशुद्धौ तीक्ष्णत्वादिविधानमाह। तीक्ष्णो मध्य इत्यादि सर्व्वमध्याल्पलक्षण इति यथासंख्यं तीक्ष्णादिव्याधिलक्षणम्। सर्व्वलक्षणस्तीक्ष्णः

देयन्त्वनिर्हृते पूर्व्वं पीते पश्चात् पुनःपुनः ।
भेषजं वमनार्थाय प्राय आ पित्तदर्शनात् ॥ ३३ ॥
बलं त्रैविध्यमालक्ष्य दोषाणामातुरस्य च ।
पुनः प्रदद्याद् भैषज्यं सर्व्वशो वा विवर्ज्जयेत् ॥ ३४ ॥
निर्हृते वापि जीर्णे वा दोषानिर्हरणे ततः ।
भेषजेऽन्यत् प्रयुञ्जीत प्रार्थयन् सिद्धिमुत्तमाम् ॥ ३५ ॥

तीक्ष्णः, मध्यलक्षणो व्याधिर्मध्यः, अल्पलक्षणो व्याधिर्मृदुरिति। तेषु तीक्ष्णादिषु व्याधिषु भिषक् तदातुरबलमवेक्ष्य तीक्ष्णादीनि भेषजानि क्रमात् प्रयोजयेत् ॥ ३२ ॥

गङ्गाधरः—देयमित्यादि। पूर्व्वमनिर्हृते दोषे वमनभेषजं देयम्, पीते सति तद् भेषजं पश्चात् पुनःपुनः वमनार्थाय पित्तदर्शनपर्य्यन्तं देयमिति। न तु सर्व्वां मात्रां पूर्व्वं दद्यात् ॥ ३३ ॥

गङ्गाधरः—बलमित्यादि। दोषाणामातुरस्य च त्रिविधं बलमालक्ष्य पुनर्भेषज्यं प्रदद्याद्, अथवा सर्व्वशो विवर्ज्जयेत् ॥ ३४ ॥

गङ्गाधरः—निर्हृत इत्यादि। भेषजे निर्हृते पीतमात्रं वमनेन निर्गते सति भेषजे जीर्णे वा दोषानिर्हरणे उत्तमां सिद्धिं प्रार्थयन् अन्यद् भेषजं निर्हरणभेषजं प्रयुञ्जीत ॥ ३५ ॥

मध्यलक्षणो मध्यः अल्पलक्षणो मृदुर्व्याधिः। बलापेक्षित्वेन व्याधेस्तीक्ष्णत्वे यदि बलं महद् भवति तदेव तीक्ष्णसाधनं कर्त्तव्यमिति दर्शयति ॥ ३२ ॥

चक्रपाणिः—वमने क्रियमाणेऽवस्थाविशेषकर्त्तव्यमाह—देयमित्यादि। पूर्व्वं पीते वमने सति अनिर्हृते दोषे सति पश्चात् पुनःपुनर्वमनार्थीयं भेषजं देयम्। आ पित्तदर्शनादिति यावत् पित्तं न दृश्यते तावत् पुनःपुनर्वमनं देयम्। वमनं हि पित्तान्ततया सम्यग् युक्तं भवति। उक्तं हि—'पित्तान्तमिष्टं वमने विरेकादर्द्धं' इति ॥ ३३ ॥

चक्रपाणिः—पुनःपुनर्भेषज्यप्रयोगस्याप्रयोगविषयमुचितविषयञ्च दर्शयन्नाह—बलेत्यादि। बलवति दोषे पुरुषेऽपि पुनः प्रयोज्यं भैषज्यम्, हीनबले दोषे पुरुषे च सर्व्वशो वा भेषजं शोधनार्थं विवर्ज्जयेत्, शोधनार्थं न कुर्य्यादित्यर्थः। वाशब्देन च मध्यमबले पुरुषे दोषे च न सर्व्वथा विवर्ज्जनम्, एकवारप्रयोगं शोधनस्य दर्शयति ॥ ३४ ॥

चक्रपाणिः—निर्हृत इत्यादि। दोषानिर्हरण इति दोषानिर्हरणकप्रयोजने भेषजे निर्हृत इति दोषमनिर्हृत्यैव निर्गते। जीर्णे चेति जीर्णे इति येन वमनमधिकुर्यात् तदुच्यते तेन वमनस्य पाकापेक्षत्वेति। अन्यत् प्रयुञ्जीतेति वमनार्थभेषजपानानन्तरं तदहरेव दद्यात् ॥ ३५ ॥

अपक्वं वमनं दोषं पच्यमानं विरेचनम्।
निर्हरेद् वमनस्यातः पाकं न प्रतिकल्पयेत्॥ ३६॥
पीते प्रस्रंसने दोषान् न निहृत्य जरां गते।
वमिते चौषधे धीरः पाययेदौषधं पुनः॥ ३७॥
दीप्ताग्निं बहुदोषं तं दृढ़स्नेहगुणं नरम्।
दुःशोध्यं तदहर्भुक्तं श्वोभूते पाययेत् पुनः॥ ३८॥
दुर्ब्बलो बहुदोषश्च दोषपाकेन यो नरः।
विरिच्यते रसैर्भोज्यैर्भूयस्तमनुसारयेत्॥ ३९॥

गङ्गाधरः—अपक्वमित्यादि। वमनमौषधमपक्वं सद् दोषं निर्हरेत्। विरेचनमौषधन्तु पच्यमानं सद् दोषं निर्हरेत्। अतो हेतोर्वमनस्य पाकं न प्रतिकल्पयेत्। वमनौषधे पीते सति दोषान्न निहृत्य जरां गतेऽथवा तदौषधे वमिते धीरः पुनर्वमनौषधं पाययेत्॥ ३७॥

गङ्गाधरः—दीप्ताग्निमित्यादि। तं बहुदोषं दीप्ताग्निं दृढ़स्नेहगुणं नरं दुःशोध्यं ज्ञात्वा तदहर्भुक्तं दोषोत्क्लेदकरमाहारं श्वः परदिने भूते पुनः वमनौषधं पाययेत्॥ ३८॥

गङ्गाधरः—दुर्ब्बल इत्यादि। दुर्ब्बल एवं बहुदोषश्च यो नरो दोषपाकेन भोज्यैरसैराहारस्तं नरमनु पश्चाद् भूयो विरेचयेत्॥ ३९॥

चक्रपाणिः—अपक्वं वमनमित्यादिना वक्तव्ये जीर्णसदृशता च वमनस्य क्षोभाकर्त्तृतया पाकोन्मुखतयात्र ज्ञेया। वमनप्रयोगेषु अयोगप्रतीकारार्थं भेषजान्तरप्रयोगे कर्त्तव्ये पाककालप्रतीक्षणं कर्त्तव्यं किमित्यत आह—पाकं न प्रतिपालयेदिति॥ ३६॥

चक्रपाणिः—वमने आवश्यकं कर्त्तव्यमभिधाय विरेचनेऽप्याह—पीते प्रस्रंसन इत्यादि। वमिते चौषध इति विरेचनौषधमात्रे वमिते। पुनरिति तदहरेव॥ ३७॥

चक्रपाणिः—विरेचनस्तोकहरणे इतिकर्त्तव्यतामाह—दीप्ताग्निमित्यादि। दृढ़स्नेहलक्षणो गुणो देहे यदा नास्ति तदास्य भेषजं न दातव्यं किन्तु स्नेह एव तावत् कर्त्तव्यः। असम्यक्स्निग्धो हि पुनरपि क्रियमाणं विरेचनमसम्यग्योगायैव भवति। दुःशुद्धमित्ययोगेनाविशुद्धम्। श्वोभूते किंवा श्वोभूयः इति पाठः। दोषपाकेनेति पक्वदोषेऽपि बहुत्वात् बहुदोषश्च विरिच्यते। रसैर्भोज्यैरित्यनुलोमनैः। अत्र च प्रवृद्धदोषेऽतियोगभयात्र पुनर्विरेचनप्रयोगमनुजानीते॥ ३८।३९॥

वमनैश्च विरेकैश्च विशुद्धस्याप्रमाणतः ।
भोजनान्तरपानाभ्यां दोषशेषं शमं नयेत् ॥ ४० ॥
दुर्ब्बलं शोधितं पूर्व्वमल्पदोषञ्च मानवम् ।
अपरिज्ञातकोष्ठञ्च पाययेदौषधं मृदु ॥
श्रेयो मृद्वसकृत् पीतमल्पबाधं निरत्ययम् ।
न चातितीक्ष्णं यत् क्षिप्तं जनयेत् प्राणसंशयम् ॥ ४१ ॥
दुर्ब्बलोऽपि महादोषो विरेच्यो बहुशोऽल्पशः ।
मृदुभिर्भेषजैर्दोषा हन्युर्ये न विनिर्हृताः ॥ ४२ ॥

गङ्गाधरः—वमनैरित्यादि । वमनैर्विरेचनः अप्रमाणतो विशुद्धस्य भोजनान्तरपानाभ्यां शेषं दोषं शमं नयेत् ॥ ४० ॥

गङ्गाधरः—दुर्ब्बलमित्यादि । दुर्ब्बलमथवा पूर्व्वं शोधितमल्पदोषं तथा यस्य कोष्ठं न परिज्ञातं मृदु वा क्रूरं मध्यं वा तं मृदुवीर्य्यमौषधं पाययेत् । कस्मात् ? श्रेय इत्यादि । यस्मान्मृदु भेषजमल्पबाधमसकृत् पीतं निरत्ययं तस्मात् श्रेयः । यच्चातितीक्ष्णं भेषजं क्षिप्तं प्रयुक्तं सत् प्राणसंशयं न जनयेत्, तदपि श्रेयः ॥४१ ॥

गङ्गाधरः—दुर्ब्बल इत्यादि । बहुदोषश्चेत् तदा दुर्ब्बलोऽपि अल्पमल्पं मृदुभिर्भेषजैर्बहुशो विरेच्यः । कस्मात् ? यस्माद् ये दोषा न विनिर्हृतास्ते हन्युरिति ॥ ४२ ॥

चक्रपाणिः—वमनविरेचनाभ्यां किञ्चिच्छेषीकृतदोषप्रतीकारार्थमाह—वमनैश्चेत्यादि । अत्र बहुवचनं वेगबहुत्वापेक्षया । अप्रमाणत इति न निःशेषेण । तत्र भोजनं पाचनं यवाग्वादिभोजनम् । अन्तरपानं कषायपानम् । ये तु प्रमाणत इति पठन्ति ते सम्यक् शुद्धावपि कोष्ठोपलेपकदोषप्रशमनार्थं भोजनान्तरपानं व्याख्यानयन्ति ॥ ४० ॥

चक्रपाणिः—मृदुशोधनोपपादनीयमाह—दुर्ब्बलमिति । शोधितं पूर्व्वशोधितस्य दुर्ब्बलतया मृदुभेषजं देयम । तीक्ष्णेन हि बलभ्रंशोऽतियोगश्च स्यात् । मृदुप्रयोगोपपत्तिमाह—श्रेय इत्यादि । असकृत्पीतमिति असकृत्पीतमल्पबाधं भवतीत्यर्थः । श्रेय इति व्यापत्तिकरतीक्ष्णापेक्षया ज्ञेयम् । न चातितीक्ष्णमिति । न चातितीक्ष्णं दुर्ब्बलानां देयम्, यस्मादतितीक्ष्णं दुर्ब्बलानां क्षिप्रं प्राणसंशयं जनयेत् ॥ ४१ ॥

यस्योर्द्ध्वं कफसंसृष्टं पित्तं यात्यानुलोमिकम्।
वमितं कवलैः शुद्धं लङ्घितं पाययेत् तु तम्॥ ४३॥
विबन्धेऽल्पं चिराद् दोषे स्रवत्युष्णं पिबेज्जलम्।
तेनाध्मानं तृषा छर्द्दिर्विबन्धश्चैव शाम्यति॥ ४४॥
भेषजं दोषरुद्धञ्च नोर्द्ध्वं नाधः प्रवर्त्तते।
सोद्गारश्च सशूलश्च स्वेदं तत्रावचारयेत्॥ ४५॥
सम्यग् विरिक्तं सोद्गारं भेषजं क्षिप्रमुल्लिखेत्।
अतिप्रवृत्तं जीर्णे तु सुशीतैः स्तम्भयेत् भिषक्॥ ४६॥

गङ्गाधरः—यस्येत्यादि। यस्य पुनर्विरेचनैरानुलोमिकं पित्तं कफसंसृष्टमूर्द्ध्वं याति विरेचनौषधेनानुलोमिकमधस्ताद् याति तं कवलैर्वमितं शुद्धं लङ्घितं पाययेत्॥ ४३॥

गङ्गाधरः—विबन्ध इत्यादि। दोषे चिरादल्पं विबद्धे स्रवति सति जलं उष्णं पिबेत्। तेनाध्मानादिकं शाम्यति॥ ४४॥

गङ्गाधरः—भेषजमित्यादि। दोषेण रुद्धं भेषजं यस्य नोर्द्ध्वं प्रवर्त्तते नाधश्च प्रवर्त्तते, सोद्गारश्च सशूलश्च तं नरं स्वेदं तत्रावचारयेत्॥ ४५॥

गङ्गाधरः—सम्यगित्यादि। सम्यग्विरिक्तं नरं सोद्गारं तद्भेषजोद्गारवन्तं तं तद्भेषजमुल्लिखेत्, अन्यथातिविरेकः स्यादिति। अतिप्रवृत्तमतियोगेन, जीर्णे तु भेषजे सुशीतजलैः स्तम्भयेत्॥ ४६॥

चक्रपाणिः—दुर्ब्बले बहुदोषे कर्त्तव्यमाह—दुर्ब्बलोऽपीत्यादि। बहुशोऽल्पश इति पुनःपुनः स्तोकमात्रया। एवम्भूतमहादोषनिर्हरणे हेतुमाह—दोषा हन्युर्ह्यनिर्हृता इति॥ ४२॥

चक्रपाणिः—यस्येत्यादावानुलोमिकं विरेचनमौषधमूर्द्ध्वं याति यस्य तं पाययेत्, विरेचनमौषधमिति शेषः। कवलैः शुद्धमिति कवलैः शोधितमुखकण्ठम्। तेनेति जलेन पीतेन॥४३—४५॥

चक्रपाणिः—अतियोगस्य कार्य्यकर्त्तव्यमाह—सुविरिक्तान्त्वत्यादि। सुविरिक्तमिति सम्यक्प्रमाणेन निर्हृतमिति यथः। सोद्गारमिति उद्गारेणापच्यमानावस्थाभिहिता। एतेन सम्यग्विरेचने भूतेऽपि यदौषधं तिष्ठति तत् तद्दिन एवोल्लिखेत्। तस्याप्यौषधैकदेशस्य अपच्यमानतायां विरेचनातियोगः स्यादिति दर्शयति॥ ४६॥

कदाचित् श्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम् ।
क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत् प्रवर्त्तते ॥ ४७ ॥
विरूक्षानाहयोर्जीर्णे विष्टभ्योर्द्ध्वं गतेऽपि वा ।
वायुना भेषजे त्वन्यत् सस्नेहं लवणं पिबेत् ॥ ४८ ॥
तृण्मोहभ्रममूर्च्छाद्याः स्युश्चेज्जीर्य्यति भेषजे ।
पित्तघ्नं स्वादु शीतञ्च भेषजं तत्र शस्यते ॥ ४९ ॥
लालाहृल्लासविष्टम्भ-लोमहर्षाः कफावृते ।
भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम् ॥ ५० ॥

गङ्गाधरः—कदाचिदित्यादि। यदि कदाचिद्भेषजं श्लेष्मणा रुद्धमुरसि तिष्ठति, तेनौषधेन श्लेष्मणि क्षीणे सति सायाह्ने वा रात्रौ वा तन्मलं प्रवर्त्तते ॥ ४७ ॥

गङ्गाधरः—विरूक्षेत्यादि। विरूक्षे जने आनाहे च जीर्णे च भेषजे वायुना विष्टभ्य ऊर्द्ध्वं गतेऽपि वा, सस्नेहलवणमन्यद् विरेचनमौषधं वा पिबेत् ॥ ४८ ॥

गङ्गाधरः—तृण्मोहेत्यादि। यस्य विरेचनभेषजे जीर्य्यति सति जीर्य्यद्धि विरेचयति तदा तृषादयश्चेत् स्युः, तदा पित्तघ्नं स्वादु शीतं भेषजं तत्र प्रशस्यते ॥ ४९ ॥

गङ्गाधरः—लालेत्यादि। यस्य पीतविरेचनौषधस्य लालादयः स्युस्तस्य कफावृते तत्र भेषजे कट्वादि तीक्ष्णादि भेषजं हितम् ॥ ५० ॥

चक्रपाणिः—कदाचिदित्यादिना विरेचनस्याविरिक्तत्वे हेतुमाह। अत्राप्युल्लेखनं कर्त्तव्यम्, तथापि श्लेष्मणा विरोधं भेषजस्य गौरवादिभिरुपलभ्य रात्रिपर्य्यन्तं भेषजस्यायोगप्रवृत्तिरुपेक्षणीयेति कर्त्तव्यमूहनीयम्। प्रवर्त्तत इति दोषसंहृतं भेषजं प्रवर्त्तते ॥ ४७ ॥

चक्रपाणिः—विरूक्षेत्यादावयोगात् विष्टभ्य ऊर्द्ध्वं गते वा भेषजे अन्यद् विरेचनं सस्नेहलवणं दातव्यम् ॥ ४८ ॥

चक्रपाणिः—तृण्मोहेत्यादिना पित्तावृतभेषजस्य लक्षणं चिकित्सितञ्चाह। जीर्य्यतीति जीर्य्यति भेषजे तृडादयो भवन्तीत्यर्थः ॥ ४९ ॥

चक्रपाणिः—लालेत्यादिना कफावृतभेषजस्य लक्षणं चिकित्सितञ्चाह ॥ ५० ॥

सुस्निग्धं क्रूरकोष्ठञ्च लङ्घयेदविरेचितम् ।
तेनास्य स्नेहजः श्लेष्मासङ्गश्चैव प्रशाम्यति ॥ ५१ ॥
रूक्षवह्वनिलक्रूर-कोष्ठव्यायामशालिनाम् ।
दीप्ताग्नीनाञ्च भैषज्यमविरेच्यैव जीर्य्यति ॥
तेभ्यो वस्तिं पुरा दत्त्वा पश्चाद् दद्याद् विरेचनम् ।
वस्तिप्रवर्त्तजान् दोषान् हरेत् सम्यग् विरेचनम् ॥ ५२ ॥
रूक्षाशनाः कर्म्मनित्या ये नरा दीप्तपावकाः ।
तेषां दोषाः क्षयं यान्ति कर्म्मणा चातपानिलैः ॥

गङ्गाधरः—सुस्निग्धमित्यादि । सुस्निग्धमपि पीतविरेचनभेषजं क्रूरकोष्ठत्वादविरेचितं लङ्घयेत् । तेन लङ्घनेनास्य स्नेहजः श्लेष्मण आसङ्गः प्रशाम्यति ॥ ५१ ॥

गङ्गाधरः—रूक्षेत्यादि । रूक्षस्य वह्वनिलस्य क्रूरकोष्ठस्य व्यायामशालिनश्च दीप्ताग्नीनाञ्च जनानां विरेचनभेषज्यमविरेच्यैव जीर्य्यति । तेभ्य इत्यादि । तेभ्यो रूक्षादिभ्यः पुरुषेभ्यः पुरा वस्तिं दत्त्वा पश्चाद् विरेचनं दद्यात् । कस्मात् ? वस्तिप्रवर्त्तजान् दोषान् विरेचनमौषधं रूक्षादीनां सम्यग् हरेत् ॥५२॥

गङ्गाधरः—रूक्षाशना इत्यादि । रूक्षाशनादीनां पुरुषाणां ये दोषाः

चक्रपाणिः—सुस्निग्धमित्यादावविरेचितमिति ईषद् विरेचितम् । स्नेहज इति स्नेहप्रयोगजनितः श्लेष्मा । सङ्गो दोषसङ्गः । तेन लङ्घनेन दोषपाकादेव प्रबलश्लेष्मोपशयः दोषसङ्गोपशमश्च क्रियत इत्यर्थः ॥ ५१ ॥

चक्रपाणिः—रूक्षादीनां विरेचनोपयोगे क्रमविशेषं सोपपत्तिकमाह—रूक्षेत्यादि । वस्तिं पुरा दत्त्वेत्यत्र वस्तिशब्देन स्नेहवस्तिमिच्छन्ति । निरूहस्तु वातकोपकतया तथा निरूहानन्तरं विरेचनस्य निषिद्धत्वादिह नेष्यते, उक्तं हि—'निरूहदानात् पवनात्ययस्ततो नरो विरिक्तस्तु निरूहदानात् । विवर्ज्जयेत् सप्तदिनान्यवश्यं शुद्धो निरूहेण' विरेचनन्तु इति । किन्तु वस्तिशब्देन निरूहश्च गृह्यते । निरूहस्य यद् वातकर्त्तृत्वमुक्तं तदेकस्यैव स्नेहवस्तिरहितस्याभ्यासात् । उत्सर्गतस्तु वातहन्तृत्वम्—'वस्तिर्वातहराणाम्' इत्यनेनैवोक्तम । निरूहानन्तरं विरेचननिषेधस्त्वौत्सर्गिकः । तेन विशेषविधिना तस्यापवादो युज्यत एव । किंवा इह वस्त्यनन्तरं यद् विरेचनं विधीयते, तच्च वस्तिदानादूर्द्ध्वं सप्ताहानन्तरमेव भविष्यतीति न कश्चिद् विरोधः । प्रवर्त्तितमिति पूर्व्वं निर्गत्योन्मुखीकृतम् ॥ ५२ ॥

चक्रपाणिः—रूक्षाशना इत्यादिना स्नेह्या अपि न व्याधिव्यतिरेकेण शोधनीया इत्याह ।

विरुद्धाध्यशनाजीर्णान् दोषानपि जयन्ति ते ।
स्नेह्यास्ते मारुताद्रक्ष्या नाव्याधौ तान् विरेचयेत् ॥ ५३ ॥
एवं ज्ञात्वा विधीन् धीरो देशकालप्रमाणवित् ।
विरेचनं विरेच्याय प्रयच्छन्नापराध्यति ॥
नातिस्निग्धशरीराय दद्यात् स्नेहविरेचनम् ।
स्नेहात् क्लिष्टशरीराय रूक्षं दद्याद् विरेचनम् ॥ ५४।५५ ॥
विभ्रंशो विषवद् यस्य सम्यग्योगो यथामृतम् ।
कालेष्ववश्यं पेयश्च तस्मात् यत्नात् प्रयोजयेत् ॥ ५६ ॥

सञ्चीयन्ते कारणान्तरेण, तेषां ते दोषा नित्यकर्म्मणां तेन कर्म्मणा क्षयं यान्ति आतपानिलश्च क्षयं यान्ति। विरुद्धेत्यादि। विरुद्धाशनादध्यशनादजीर्णाच्च जातान् दोषानपि ते कर्म्मातपानिला अपनयन्ति। परन्तु ते रूक्षाशनादयः पुरुषाः स्नेह्याः स्नेहयितव्याः, कस्मात् ? यस्मान्मारुताद्रक्ष्या रक्षणीया अतएव अव्याधौ तान् न विरेचयेत् ॥ ५३ ॥

गङ्गाधरः—एवमित्यादि। एवमनेन प्रकारेण विधीन विरेचने ज्ञात्वा देशादिवित् विरेच्याय जनाय विरेचनं प्रयच्छन्नापराध्यति। नातीत्यादि। अतिस्निग्धशरीराय स्निग्धविरेचनं न दद्यात्। यदि ह्यतिस्निग्धाय स्नेहविरेचनं न दयं तर्हि किं दद्यादत आह—स्नेहक्लिष्टशरीराय रूक्षं विरेचनं दद्यात् ॥५४।५५॥

गङ्गाधरः—विभ्रंश इत्यादि। यस्य विरेचनस्य विभ्रंशोऽसम्यग्योगो विषवदहितः, सम्यग्योगो यस्य यथामृतम्, कालेष्ववश्यं तत् पेयं तस्माद् यत्नात् सम्यग् विरेचनं प्रयोजयेदिति ॥ ५६ ॥

कर्म्मनित्या इति नित्यं व्यायामादिकर्म्मकराः। विरुद्धाध्यशनाजीर्णान् दोषान् हरन्तीति विरुद्धाशनादयो दोषरूपा न तेषां विकारं जनयन्तीत्यर्थः। विरुद्धाध्यशनादयश्च दोषजनकतया दोषशब्देनोच्यन्ते। नाव्याधाविति अविद्यमानसंशोधनैकसाध्यव्याधौ न तु तान् विशोधयेदिति। अन्यत्राप्युक्तोऽयमर्थः—'अनीरितानां दोषाणामीरणं न प्रशस्यते। उपर्युपरि दुष्टानामश्मनामिव ताडनम् ॥ ५३ ॥

चक्रपाणिः—उक्तं विधिमुपसंहरन्नाह—एवं ज्ञात्वेत्यादि। विरेच्येभ्य इति विरेचनार्हेभ्यः। विभ्रंश इत्यादौ यस्येति संशोधनस्य। ननु यद्येवमेतच्छोधनं सत् किमनेनाचरितेनेत्याह—

भवति चात्र।

द्रव्यप्रमाणन्तु यदुक्तमस्मिन्
मध्येषु तत् कोष्ठवयोबलेषु।
तन्मूलमालभ्य भवेत् विकल्प-
स्तेषां विकल्पोऽभ्यधिकोनभावः॥ ५७॥

षड्वंश्यस्तु मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः।
अष्टौ ते सर्षपाः रक्तास्तण्डुलश्चापि तद्द्वयम्।

गङ्गाधरः—अत्र प्रमाणमाह—भवति चात्रेति। अस्मिन्निति अस्मिन् शास्त्रे द्रव्याणां प्रमाणं परिमाणं यदुक्तं तत् परिमाणं मध्येषु कोष्ठादिषूक्तम्, तन्मध्य-कोष्ठादिविषयं परिमाणं मूलमालभ्य मृदुतीक्ष्णकोष्ठादिषु विकल्पो भवेत्। कस्मात्? तेषां तीक्ष्णमृदुकोष्ठादीनां विकल्पो मध्यविकल्पादधिकोनभावः, तीक्ष्णकोष्ठादिष्वधिकप्रमाणभावः, मृदुकोष्ठादिषु न्यूनप्रमाणभाव इति॥५७॥

गङ्गाधरः—ननु परिमाणं तावत् कीदृशमित्यतः परिमाणमाह—षड्वंश्य-स्त्वित्यादि। षट् तु वंश्य एका मरीचिः स्यात्। वंशी तु तत्रान्तरोक्ता, प्रसिद्धत्वादिह नोक्ता। तद् यथा—'जालान्तरगते भानोः करे वंशी विलोक्यते। त्रिसरेणुकसंज्ञा सा प्रमाणे प्रथमा तु सा' इति। मनुसंहितायाञ्च—'जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः। प्रथमं तत् प्रमाणानां त्रिसरेणुं प्रचक्षते'. इति। विष्णुसंहितायाञ्च—'जालस्थार्कमरीचिगतं रजस्त्रसरेणु-संज्ञकम्' इति। ताः षड् वंश्यः षट् त्रिसरेणवः एका मरीचिसंज्ञा। षण्मरीच्यस्तु सर्षप इति। मध्यमसर्षपो रक्तसर्षप उच्यते। सर्षपो हि त्रिविधः—राजसर्षपो

कालेष्ववश्यं प्रयोजयेदिति संशोधनसाध्यव्याधावावश्यं पेयम्। तेन अवस्थाविशेषेणावश्यकर्त्तव्य-तया न शोधनानि परिहर्त्तुं पार्य्यन्त इति भावः॥ ५४—५६॥

चक्रपाणिः—सम्प्रति यदेतच्छोधनस्य क्वचित्कर्षादिमानमुक्तं न तत् सर्व्वपुरुषविषयम्। किन्तु मध्येषु कोष्ठवयोबलेषु तन्मानं ज्ञेयमिति दर्शयन्नाह—द्रव्येत्यादि। तन्मूलमालभ्येति उक्तप्रमाणमनुक्तप्रमाणानुमानबीजं कृत्वार्थविकल्पार्थमाह। तेषां विकल्पोऽभ्यधिकोनभाव इति भेषजप्रमाणस्याधिकभाव ऊनभावश्च विकल्पय इत्यर्थः॥ ५७॥

चक्रपाणिः—प्रमाणोपोद्घातात् सर्व्वशास्त्रव्यवहारप्रमाणं नियमयन्नाह—षड्वंश्य इत्यादि। वंशीं त्रसरेणुकं वदन्ति अन्ये तु वंशीं धूलिमाहुः। अष्टौ ते सर्षपा रक्तास्तण्डुल इत्यत्र रक्ता इति

धान्यमाषो भवेदेको धान्यमाषद्वयं यवः ।
अण्डका ते तु चत्वारस्ताश्चतस्त्रश्च माषकः ॥
हेमश्च धानकश्चोक्तो भवेच्छाणस्तु ते त्रयः ।
शाणौ द्वौ द्रंक्षणं विद्यात् कोलं वदरमेव च ॥
विद्याद् द्वौ द्रंक्षणौ कर्षं सुवर्णञ्चाक्षमेव ।
विड़ालपदकञ्चैव पिचुं पाणितलं तथा ॥
स एव तिन्दुको ज्ञेयः स एव कवडग्रहः ।
द्वौ सुवर्णौ पलार्द्धं स्यात् शुक्तिरष्टमिका तथा ॥

मध्यमसर्षपो वृहत्सर्षपश्च । यो गौरसर्षप उच्यते । तेन मनुविष्णूक्तविरोधो न भवति । मनुना हि—'त्रिसरेणवोऽष्टौ विज्ञेया लिख्यैका परिमाणतः । ता राजिसर्षपास्तिस्रस्ते त्रयो गौरसर्षपः, इत्युक्तम् । एवं विष्णुना चोक्तम्—'तदष्टकं लेख्या तत्त्रयं राजिसर्षपस्तत्त्रयं गौरसर्षपः, इति । अष्टौ ते मध्यमसर्षपा रक्ताः एकस्तण्डुलः । तद्द्वयं तण्डुलद्वयं धान्यमाषो माषकलाय एकः स्यात् । धान्यमाषद्वयमेको यव इति । मनुनोक्तम्—'सर्षपाः षड् यवो मध्यस्त्रियवास्त्वेककृष्णलम्' इति । विष्णुना चोक्तम्—'तत् षट्कं यवस्तत्त्रयं कृष्णलम्' इति । अण्डका ते तु चत्वार इति ते चत्वारो यवा एका अण्डका । ता अण्डकाश्चतस्र एको माषकः । स च हेमश्च धानकश्चेति पर्य्यायेणोच्यते । भवेच्छाणस्तु ते त्रय इति ईदृशमाषकत्रयं शाणो भवेत् । दशगुञ्जात्मकमाषकचतुष्टयेण तुल्यः, इति । एतच्चान्यत्रोक्तम्—'गुञ्जाभिर्दशभिः प्रोक्तो माषको ब्रह्मणा पुरा । चत्वारो माषकाः शाणस्तद्द्वयं कोलसंज्ञितम् । वटकं द्रङ्क्षणञ्चैव कर्षस्तद्द्विगुणेन तु । अक्षः पिचुः पाणितलं सुवर्णकमुदुम्बरम् । विड़ालपदकं नल्वं किञ्चिच्च कवड़ग्रहम् । तिन्दुकं विन्दुः कोलश्च पाणिरप्यभिधीयते' इति । शाणौ द्वावित्यादि । द्वौ शाणौ द्रङ्क्षणं कोलं वदरं तोलकश्च पर्य्यायेण

सर्षपाणां विशेषणम् । तद्द्वयं धान्यमाष इति तण्डुलद्वयं धान्यमाषो भवेत् । ते तु चत्वार इति यवचत्वारः । अन्ये तु माषाश्चत्वारश्च अण्डका इति वदन्ति । त्रयो माषका शाणः । अत्र माने अष्टचत्वारिंशन्माषकमानं पलं भवति । तदेव दशरक्तिमानेन च चतुःषष्टिमाषकपलेन तुल्यं भवति । यतश्चतुर्विंशतिधान्यमाषैर्दशरक्तिका कल्प्या भवति । ततश्च दशरक्तिमाषा-

द्वे पलार्द्धं पलं मुष्टिः प्रकुञ्चोऽथ चतुर्थिका।
विल्वं षोड़शिकश्चाम्रं द्वे पले प्रसृतं विदुः॥
अष्टमानश्च विज्ञेयं कुड़वौ द्वौ च मानिका।
पलं चतुर्गुणं विद्यादञ्जलिं कुड़वं तथा॥
चत्वारः कुड़वाः प्रस्थश्चतुः प्रस्थास्तथाढ़कम्।
घटश्चोक्तः स एव स्यात् कीर्त्तितोऽष्टशरावकः॥
पात्री पात्रं तथा कंसश्चत्वारो द्रोण आढ़काः।
स एव कलसः ख्यातो घट उन्मानमर्म्मणाम्॥

विद्यात्। द्वौ द्रङ्क्षणौ त्वेकं कर्षं सुवर्णमक्षं विड़ालपदकं पिचुं पाणितलं तिन्दुकं कवड़ग्रहं पर्य्यायैर्विद्यात्। इति दश गुञ्जामाषकचतुष्टयात्मकशाण-चतुष्टयेण तुल्यः कर्ष उक्तः। 'मनुना तूक्तः—'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोड़श' इति। विष्णुसंहितायान्तु—'कृष्णलपञ्चको माषस्तद्द्वादशक-मक्षार्द्धम्। अक्षार्द्धमेव सचतुर्माषकं सुवर्णः। चतुःसुवर्णको निष्क इति। इहाक्षार्द्धमिति संज्ञा, न तु कर्षपर्य्यायाक्षार्द्धम्। स्वस्वशास्त्रे व्यवहारार्थं परिमाणस्य संज्ञाभेदो न विरुध्यते। सुश्रुतेऽपि—'पञ्चगुञ्जामितो माषको दशरक्तिकश्च यथा भवति तथैव धान्यमाषशिम्बिफलाभ्यामुक्तः,' इति। द्वौ सुवर्णावित्यादि। द्वौ तु कर्षौ पलार्द्धं स्यात् सा शुक्तिश्चाष्टमिका चेति पर्य्यायेणोच्यते। द्वे पलार्द्धे पलं मुष्टिः प्रकुञ्चश्चतुर्थिका विल्वं षोड़शिकं चाम्रं निष्कश्चेति पर्य्यायेणोच्यते। मनुनोक्तश्च—'पलं सुवर्णाश्चत्वारः पलानि धरणं दश' इति। द्वे पले प्रसृतं विदुरिति। पलद्वयं प्रसृतम् अष्टमानश्चेति पर्य्यायेणोच्यते। द्वौ कुड़वौ मानिका विज्ञेया शरावश्चेति पर्य्यायेणोच्यते। कः पुनरुच्यते कुड़व इति? पलं चतुर्गुणं चतुःपलमञ्जलिं कुड़वं पर्य्यायेण विद्यात्। चत्वारः कुड़वा एकः प्रस्थः। चत्वारः प्रस्था ये तदेकमाढकं स एव घटश्चोक्तः। स एवाष्टशरावकः पात्री पात्रं कंसश्च पर्य्यायेणोच्यते। चत्वार आढ़का द्रोणः कलसो घट उन्मानमर्म्मणञ्चेति पर्य्यायेणाभिधीयते।

चतुःषष्टिमाषकाश्चतुर्व्विंशतिधान्यमाषैर्गुणताः षट्त्रिंशदधिकपञ्चदशशतधान्यमाषा एव भवन्ति, तेन तुल्यता। सुश्रुतेऽपि तत्र द्वादशधान्यमाषाः स्वर्णमाषकः ते च चतुःषष्टिः पलमिति व्यवस्थापितम्,

द्रोणान्तु द्विगुणं सूर्पो विज्ञेयः कुम्भ एव च ।
गोणीं सूर्पद्वयं विद्यात् खारीं भारं तथैव च ॥
द्वात्रिंशच्चैव जानीयाद्द वाहं सूर्पाणि बुद्धिमान् ।
तुलां शतपलं विद्यात् परिमाणविशारदः ॥ ५८ ॥
शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्त्तितम् ।
द्विगुणं तद्द द्रवेष्विष्टं सद्यश्चैवोद्धृतेषु च ॥ ५९ ॥
यत्र मानं तुला प्रोक्ता पलं वा तत् प्रयोजयेत् ।
अनुक्ते परिमाणे तु तुलां मानं प्रकीर्त्तितम् ॥ ६० ॥

द्रोणन्तु द्विगुणं सूर्पः कुम्भश्चेति पर्य्यायेणोच्यते । सूर्पद्वयं गोणीं विद्यात् । गोणी खारी भारमिति पर्य्यायेणोच्यते । द्वात्रिंशत् सूर्पाणि वाहं जानीयात् । तुलां शतपलं विद्यादिति ॥ ५८ ॥

गङ्गाधरः—शुष्कद्रव्येष्विदं मानम्, द्रवेषु द्रव्येषु सद्य एवोद्धृतेषु खल्वार्द्रेषु तद् द्विगुणं तन्मानमिष्टम् ॥ ५९ ॥

गङ्गाधरः—यत्र तुलाशब्देन पलशब्देन च मानं कार्य्यं तत्रैव तन्मानं प्रयोजयेत्, न द्विगुणं कार्य्यमिति । अत्र मनुना रौप्यस्य मानविशेष उक्तः । 'द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः । ते षोड़श स्याद्धरणं पुराणञ्चैव राजतम् । कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः । धरणानि दश ज्ञेयः शतमानस्तु राजतः । चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ।

तेन चतुःषष्टिमाषका द्वादशधान्यमाषैर्गुणिताः सन्तः अष्टचत्वारिंशदधिकसप्तशतधान्यमाषा भवन्ति, एवं दृढ़बलोक्तमानादर्द्धेन सुश्रुतपलादिमानं भवति । एवं सुश्रुतेऽपि पञ्चरक्तिकमाषो भवति । दृढ़बलमानं मागधम्, सुश्रुतमानं कालिङ्गमिति ब्रुवता जतूकर्णेन षड्गुञ्जको माषक उक्तः ॥ ५८ ॥

चक्रपाणिः—द्विगुणं तद् द्रवेष्विष्टमित्यादि । अत्र यद्यपि सामान्येनैव द्रवस्य द्वैगुण्यमुक्तम्, तथापि तन्त्रान्तरदर्शनात् कुड़वादावेव द्रवस्य द्वैगुण्यम् । उक्तं हि—'रक्तिकादिषु मानेषु यावन्न कुड़वो भवेत् । शुष्के द्रवार्द्रयोश्चैव तुल्यं मानं प्रकीर्त्तितम् । जतूकर्णेऽप्युक्तम्—'द्विगुणाः कुड़वादयो द्रवाणाम्' इति । इहापि सुनिषण्णकचाङ्गेरी घृते 'त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः' इति वचनेन द्रवद्वैगुण्यं पारिभाषिकप्रस्थे दृढ़बलाचार्य्येण रक्तिकादौ द्वैगुण्य-परिभाषाव्यभिचारादुच्यत इत्युपपादितमेव प्राक् । आर्द्रद्वैगुण्यञ्च तस्यैव भवति यस्य यस्य द्रव्यस्य शुष्कस्य चार्द्रस्य चोपयोगः सम्भवति । यच्च नित्यमार्द्रमेवोपयुज्यते, उपयुज्यते तत्र

द्रवकार्य्येऽप्यनुक्ते तु सर्व्वत्र सलिलं मतम्।
यतश्च पादनिर्द्देशश्चतुर्भागस्ततश्च सः॥ ६१॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम्॥ ६२॥

पलानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः। मध्यमः पञ्चभिर्ज्ञेयः सहस्रन्त्वेव चोत्तमः'। इति। अत्रान्यत्रोक्तमपि चानुमतमप्रतिषेधात्; तद् यथा—न द्वैगुण्यं तुलामाने पलोल्लेखागते तथा। रक्तिकादिषु मानेषु यावन्न कुड़वो भवेत्। शुष्के द्रवार्द्रयोश्चापि न द्वैगुण्यं तथेष्यते। सर्पिःखण्डगुड़क्षौद्र-क्षीर-तैलासवादिषु। अष्टौ पलानि कुड़वो नारिकेले तथैव च। प्रस्थादिमानमारभ्य द्रवार्द्रे द्विगुणं स्मृतम्॥ वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरी, वर्षाभू-कुटजाश्वगन्धसहिते द्वे पूतिगन्धामृते। मांसं नागबला सहाचरपुरौ हिङ्ग्वार्द्रके नित्यशः, ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता घनाः॥ वासाकुटज-कुष्माण्ड शतपुत्रीसहामृता। प्रसारण्यश्वगन्धा च नागाख्या च बला तथा। नित्यमार्द्राः प्रयोक्तव्या न तासां द्विगुणं भवेत् इति। अनुक्ते इत्यादि। परिमाणस्यानुक्तौ तुल्यं मानम्॥ ६०॥

गङ्गाधरः—द्रवेत्यादि। यत्र यत्र द्रवद्रव्यकार्य्यमनुक्तं तत्र सलिलं मतम्। यत्र च पादनिर्द्देशस्तत्र चतुर्थभागकभागः, स एव पादः स्मृतः॥ ६१॥

गङ्गाधरः—स्नेहपाकेऽनुक्ते द्रवकल्कस्नेहमाने परिमाणमाह—जलेत्यादि। जलेन द्रवद्रव्यमात्रमुपलक्ष्यते। औषधमिह कल्कद्रव्यम्। यत्र जलादीनां प्रमाणं नेरितं तत्र खल्वौषधात् कल्काच्चतुर्गुणः स्नेहः, स्नेहाच्चतुर्गुणं तोयमिति द्रवद्रव्यमिति॥ ६२॥

द्वैगुण्यम्। उक्तं हि अन्यत्र—'वासाकुटजकुष्माण्ड शतपर्व्वीसहामृताः। प्रसारण्यश्वगन्धा च शतपुष्पासहाचराः। नित्यमार्द्राः प्रयोक्तव्या न तेषां द्विगुणो भवेत्' इति। एतेषाञ्च द्वैगुण्यं कृत्वा मानस्य वारद्वयग्रहणं कर्त्तव्यमित्यर्थः॥ ५९—६१॥

चक्रपाणिः—"यतश्च पादनिर्द्देशश्चतुर्भागस्ततश्च सः" इत्यस्यार्थो लोकत एव सिद्धः। तथापि स्पष्टार्थं पुनरभिधीयते। जलस्नेहौषधानामित्यादौ औषधात् स्नेहश्चतुर्गुण इति कल्काद् स्नेहश्चतुर्गुणः। स्नेहात् तोयं चतुर्गुणमिति तोयशब्दस्य द्रवोपलक्षणत्वाद् द्रवञ्च चतुर्गुण-मित्यर्थः। यत्र तु विशिष्टं मानं जलादीनामुक्तं तत्र तथैव कर्त्तव्यं 'निर्द्दिष्टं यत् तदेव तत्' इति वचनात्॥ ६२॥

स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा ।
तुल्यो कल्केन निर्य्यासो भेषजानां मृदुः स्मृतः ॥
सम्पाक इव निर्य्यासो मध्यो दर्व्वीं विमुञ्चति ।
शीर्य्यमाणे तु निर्य्यासे वर्त्यमाने खरस्तथा ॥ ६३ ॥
खरोऽभ्यङ्गे स्मृतः पाको मृदुर्नस्तःक्रियासु च ।
मध्यपाकस्तु पानार्थे वस्तौ वापि नियोजयेत् ॥ ६४ ॥
मानञ्च द्विविधं प्राहुः कालिङ्गं मागधन्तथा ।
कालिङ्गान्मागधं श्रेष्ठमेवं मानविदो विदुः ॥ ६५ ॥

तत्र श्लोकौ ।

कल्पार्थः शोधने संज्ञा पृथक् यत् तु प्रवर्त्तते ।
देशादीनां फलादीनां गुणा योगशतानि षट् ॥

गङ्गाधरः—स्नेहपाक इत्यादि । भेषजानां निर्य्यासस्तुल्यः कल्केन यः स मृदुः स्नेहपाकः । शम्पाकफलस्य मध्यस्थो निर्य्यास इव स्नेहभेषजानां निर्य्यासो यदा दर्व्वीं मुञ्चति, तदा मध्यः स्नेहपाकः स्यात् । स्नेहनिर्य्यासे शीर्य्यमाणे वर्त्यमाने सति खरः स्नेहपाकः स्यादिति ॥ ६३ ॥

गङ्गाधरः—त्रयाणां विषयानाह—खर इत्यादि । मध्यपाकस्य द्वौ विषयौ पानवस्ती इति ॥ ६४ ॥

गङ्गाधरः—मानस्य प्रकारादीनाह—कालिङ्गं मानवादिधर्म्मशास्त्रे सुश्रुते चोक्तम्, इह व्यवहारार्थं यच्च मागधं मानं सुश्रुतेनाप्युक्तं तदपि व्यवहारे तु मागधं कालिङ्गात् श्रेष्ठमत इह मागधं मानमुक्तमिति ॥ ६५ ॥

गङ्गाधरः—अथ स्थानार्थसंग्रहश्लोकानाह—तत्र श्लोकाविति । कल्पार्थ इह

चक्रपाणिः—स्नेहपाकत्रैविध्यमाह—स्नेहपाक इत्यादि । तुल्ये कल्केन निर्य्यास इति प्रक्षिप्तकल्कतुल्यतां गते पाकेन सञ्जाते निर्य्यासे सति । संयाव इवेत्यत्र संयावः समघृतगुड़गोधूमकृतपिण्ड उच्यते । शीर्य्यमाण इत्यादि खरपाकलक्षणम् । शीर्य्यमाण इति अवसीदति । वर्त्यमान इति अङ्गुलिपीड़नाद्वर्त्तितां गच्छति ॥ ६३ ॥

चक्रपाणिः—खरपाकादिविषयमाह—खर इत्यादि ॥ ६४ ॥

चक्रपाणिः—कालिङ्गमित्यादिकं केचिदत्र मानप्रतिपादकं ग्रन्थं मानार्थं वर्णयन्ति ॥ ६५ ॥

चक्रपाणिः—कल्पार्थ इत्यादि स्थानार्थसंग्रहः । कल्पार्थः कल्पार्थं मेदार्थम् इत्यादिनोक्तः ।

विकल्पहेतुर्नामानि तीक्ष्णमध्याल्पलक्षणम्।
विधिश्चावस्थिको मानं स्नेहपाकश्च दर्शितः॥ ६६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
दन्तीद्रवन्तीकल्पो नाम द्वादशोऽध्यायः॥ १२॥

कल्पस्थाने प्रथमाध्याये दर्शितः। शोधनस्य विरेचनसंज्ञा। जाङ्गलदेशादिकालादीनां गुणाः मदनफलादीनां गुणाः प्रत्यध्याये। मदनफलादीनां योगानां षट्शतानि द्वादशस्वध्यायेषु स्वेषु स्वेषूक्तानि। अस्मिन्नध्याये विकल्पहेत्वादीनि चेति॥ ६६॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। अप्राप्ते तु दृढबल-प्रतिसंस्कृत एव च।
कल्पस्थाने सप्तमेऽस्मिन द्वादशोऽध्याय एव च। दन्तीद्रवन्तीकल्पेऽत्र
वद्यगङ्गाधरेण तु। कृते जल्पकल्पतरौ कल्पस्थाने तु सप्तमे।
स्कन्धेऽत्र द्वादशाध्याये जल्पशाखा समापिता॥ १२॥

शोधनसंज्ञा—उभयं वा शरीरमलविरेचनादित्यादिनोक्ता। फलादीनां गुणा मदनफलादिकल्पे एवोक्ताः। योगशतानि षडिति 'त्रिशतं पञ्चपञ्चाशत्' इत्यादिनोक्तम्। विकल्पहेतुः—'सुखोपभोगानामित्यादिना ग्रन्थेनात्रैवाध्याये प्रोक्तः। नामानि मदनफलादीनामेव, तानि च प्रत्यध्यायमुक्तानि। तीक्ष्णमध्याल्पलक्षणमिति सुखं क्षिप्रं महावेगं इत्यादिनोक्तम्। विधिश्चावस्थिकः 'देयं त्वनिगते पूर्व्वम्' इत्यादिनोक्तः। शेषं सुगमम्॥ ६६॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां कल्पस्थानव्याख्यायां दन्तीद्रवन्तीकल्पव्याख्या-
नाम द्वादशोऽध्यायः॥ १२॥

कल्पस्थानं समाप्तम्॥

श्लोकसङ्ख्या ६७५॥

॥ श्रीः॥

# चरक-संहिता।

## सिद्धिस्थानम् ।

### प्रथमोऽध्यायः ।

अथातः कल्पनासिद्धिं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

**का कल्पना पञ्चसु कर्म्मसूक्ता क्रमश्च कस्तेषु कृताकृतेषु ।**
**लिङ्गं तथवातिकृतेषु सङ्ख्या का किं गुणाः केषु च कश्च वस्तिः ॥**
**किं वर्ज्जनीयं प्रतिकर्म्मकाले कृते कियान् वा परिहारकालः ।**
**प्रणीयमानश्च न याति वस्तिः केनेति शीघ्रं सुचिराच्च केन ॥**

गङ्गाधरः—अथ स्थानोद्देशक्रमात् कल्पस्थानादुत्तरं सिद्धिस्थानमाह। तत्र अध्यायोद्देशक्रमादादौ कल्पनासिद्धिमाह—अथात इत्यादि। सर्व्वं पूर्व्ववत्

चक्रपाणिः— पस्थानानन्तरं पारिशेष्यादेव सिद्धिस्थानमभिधीयते । सिद्धेरभिधायकं स्थानं सिद्धिस्थानम्। सिद्धिशब्देन चेह वमनादीनां वमनाद्यसम्यग्योगजन्यानां व्यापदां भेषजस्य साध्यत्वारूपा सिद्धिरुच्यते, एवम्भूतसिद्धिकारणाभिधायकतया चैतत् सिद्धिस्थानमुच्यते, किंवा कार्य्यकारणयोरभेदोपचारात् सिद्धिशब्देनेह सिद्धिकारणान्येव वमनादीनि उच्यन्ते, उक्तं हि— "सम्यक् प्रयोगञ्चैव कर्म्मणां व्यापन्नानाञ्च साधनानि सिद्धिपूर्वदेक्ष्यामः" इति । न चैवं सिद्धिस्थानसंज्ञाव्युत्पत्त्या चिकित्सास्थानादीनामपि सिद्धिस्थानसंज्ञाप्रसक्तिरुद्भावनीया, यतः इयं संज्ञाऽत्रैव योगरूढ्या वर्त्तते, नान्यत्र ॥ १ ॥

चक्रपाणिः—सिद्धिस्थानाभिधानेऽपि सकलसिद्धिस्थानापेक्षणीयपञ्चकर्म्मकल्पनाद्यभिधायक-

साध्या गदाः स्वैः शमनैश्च केचित् कस्मात् प्रयुक्तैर्न शमं व्रजन्ति।
प्रचोदितः शिष्यवरेण तस्मै पुनर्व्वसुस्तत्त्वविदेतदाह ॥ २ ॥
अहावरं सप्तदिनात् परन्तु स्निग्धो नरः स्वेदयितव्य उक्तः।
नातः परं स्नेहनमादिशन्ति सात्म्यीभवेत् सप्तदिनात् परं हि ॥३॥

व्याख्येयम्। अत्रादौ प्रश्नानाह—का कल्पनेत्यादि। का कल्पनेत्यादिका द्वादश प्रश्नाः। शिष्यवरेणेत्यग्निवेशेन। पञ्चसु कर्म्मसु का कल्पनेतिप्रश्नस्योत्तरमाह—त्र्यहावरमित्यादि। स्नेहाध्याये प्रागुक्तम्—मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया। स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानव इति त्र्यहमवरस्नेहनकालः सप्तदिन श्रेष्ठकालस्ततः परं स्वेदयितव्य इत्युक्तं यत्—अतः सप्ताहात् परं यत् स्नेहनं नादिशन्ति तत्र कारणं सप्तदिनात् परं स्नेहसेवनं हि यस्मात् सात्म्यीभवेत् तस्मान्नातः परं स्नेहनमादिशन्ति ॥ १—३ ॥

तथा प्राधान्यादादौ कल्पनासिद्धिरेवोच्यते। अत्र 'का कल्पना' इत्यादीन् शिष्यस्य द्वादश प्रश्नानभिनिवेश्य तान् यथाक्रमं व्याचष्टे प्रश्नानुगुणगुरुबुद्धिप्रकाशार्थम्। यदुक्तं भरद्वाजे—"अप्रदुष्टेन भावेन प्रसन्नेनान्तरात्मना। शिष्येण सम्यक् पृष्टस्य गुरोर्बुद्धिः प्रकाशते ॥" इति। अत्र 'का कल्पना कर्म्मसु पञ्चसूक्ता' इति प्रथमः प्रश्नः। 'क्रमश्च कः' इति द्वितीयः, 'किञ्च कृताकृतेषु लिङ्गं तथैवातिकृतेषु' इति तृतीयः, 'सङ्ख्या का' इति चतुर्थः, 'किंगुणो वस्तिः' इति पञ्चमः, 'केषु च कश्च वस्तिः' इति षष्ठः, 'किं वर्ज्जनीयं प्रतिकर्म्मकाले' इति सप्तमः, 'कृते कियान् वा परिहारकालः' इत्यष्टमः, 'प्रणीयमानश्च न याति केन वस्तिः' इति नवमः, 'केनति शीघ्रम्', इति दशमः, 'सुचिराच्च केनति' इत्येकादशः, 'साध्याः' इत्यादिको द्वादशः। साध्या इत्यादिप्रश्नस्य यद्यप्यवकाशो नास्ति, यतो हि नासाध्या गदाः प्रोक्तेन यथास्वं क्रियमाणेन भेषजेन प्रशाम्यन्ति, तथाप्यसम्यग्भेषज एव यथास्वं भेषजाभिधानादयं प्रश्नो बोद्धव्यः। कल्पनाशब्देनेह पञ्चकर्म्माङ्गकल्पनोच्यते, तेन पञ्चकर्म्माङ्गस्नेहस्वेदप्रयोगमेवाह ॥ २ ॥

चक्रपाणिः— त्र्यहावरमित्यादि प्रथमप्रश्नस्योत्तरम्। त्र्यहावरमिति त्र्यहेण त्र्यहं वा व्याप्य क्रियमाणस्नेहनेन अवरं यथा भवतीति त्र्यहावरं स्निग्धः। सप्तदिनमिति सप्तदिनं व्याप्य स्निग्धः। परमिति स्नेहप्रकर्षकालावधिना सप्तदिनं व्याप्य स्निग्धः। ततश्च कालोत्कर्षात् क्रियमाणशोभनाङ्गस्नेहनपक्षे सप्तदिनं यावत् स्निग्धः, कालाप्रकर्षपक्षे तु त्र्यहे स्निग्धः संस्वेदयितव्य इत्यर्थः। उक्तसप्तदिनस्नेहनकालानतिक्रमं सोपपत्तिकमाह—नातः परमित्यादि। अतः परमिति सप्तदिनात् परम्। कुतो नादिशन्तीत्याह—सात्म्यीभवेदित्यादि। सप्तदिनात् परेण क्रियमाणस्नेहः सप्तरात्रप्रयोगेण सात्म्यीभूतत्वान्न स्नेहनमधिकं शरीरे करोतीत्यर्थः, तेन यावन्मात-

स्नेहोऽनिलं हन्ति मृदुं करोति देहे मलानां विनिहन्ति सङ्गम् ।
स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम् ॥ ४ ॥
ग्राम्यौदकानूपरसैः समांसैरुत्क्लेशनीयः पयसा च वम्यः ।
रसैस्तथा जाङ्गलजैः सयूषैः स्निग्धैः कफावृद्धिकरैर्विरेच्यः ॥

गङ्गाधरः—स्नेह इत्यादि । मृदु देहं करोति देहे मलानां सङ्गं विनिहन्ति । स्वेदगुणमाह—स्निग्धस्येत्यादि । पञ्चकर्म्माङ्गस्नेहस्वेदगुणानुक्त्वा पूर्व्वकल्पनाया उत्तरमुक्तम् ॥ ४ ॥

गङ्गाधरः—अथ पञ्चसु क्रमश्च क इतिप्रश्नस्योत्तरमाह—ग्राम्येत्यादि । यो वम्यः स ग्राम्यादिरसादिभिरुत्क्लेशनीयः । यो विरेच्यः स जाङ्गलजरसादिभिः स्निग्धः कफावृद्धिकरः कफस्य न वृद्धिकराणि यानि जाङ्गलजरसादीनि तरुत्क्लेश-

स्नेहप्रयोगेण सप्तदिनोपयुक्तेन स्नेहनं न वृत्तम्, सा मात्रा सात्म्यीभूतैव, अधिकमात्रा या सात्म्यतां न गता, सा सप्तरात्रात् परेणापि कर्त्तव्येव । वैद्यास्तु सप्तरात्रादस्निग्धे पुरुषे किञ्चित् विश्रामं कृत्वा पुनरधिकमात्रया स्नेहं प्रयुञ्जते । एतच्च त्र्यहस्नेहनं सप्तरात्रस्नेहनञ्च मृदुक्रूर-कोष्ठविषयभेदेन । यदुक्तम्,—"मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया । स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः" इति । ननु यदि क्रूरकोष्ठस्तु सप्तरात्रेण स्निह्यतीति व्यवस्था, तत् कथमिह 'नातः परं स्नेहनमादिशन्ति' इत्यनेन सप्तरात्रेणाप्यस्नेहनमुच्यते । ब्रूमः—सत्यम्, क्रूरकोष्ठः सप्तरात्रेणैव स्निह्यति, परं क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति, यदा तु हीनमात्रा प्रयुज्यते, तदा सप्तरात्रेणापि न स्निह्यति । यदुक्तं तन्त्रान्तरे—"त्रिषड्नवरात्रेण स्नेहपानं विधीयते" इत्यनेन सप्तरात्रादूर्द्ध्वमपि स्नेहनं विहितम्, तदाचार्य्यानभिमतमेव, किंवा, सप्तरात्रादूर्द्ध्वमसात्म्यभूताऽधिकमात्राप्रयोगाभिप्रायेण तद् वर्णनीयम् । अत्र च सप्तरात्रादूर्द्ध्वं स्नेह-प्रयोगस्य निषेधात्, त्र्यहादर्व्वाक् प्रयोगस्य वा निषेधात्, सद्यः स्नेहप्रयोगेणैकदिनेनापि स्नेहन-मनुजानीत इति ब्रूवते । मध्यकोष्ठान्तरं प्रति स्नेहनप्रकर्षकालो यद्यपि नोक्तः, तथापि मध्य-विषया पञ्चदिनेन मध्यकोष्ठस्य स्नेहनं ज्ञेयम् । यत् तु केचित् "मृदुकोष्ठं प्रति त्र्यहादूर्द्ध्वं न स्नेहनं कर्त्तव्यं सात्म्यीभावादिति चार्थो लभ्यते" इति व्याख्यायते, तन्न नः प्रीणाति, यतः सात्म्यीभावः सप्तदिनानि व्याप्य निवर्त्तत एवाचार्य्येणोक्तः, तेन अत्यल्पमात्राप्रयुक्तेन स्नेहेन त्र्यहात् यदि न स्निह्यति मृदुकोष्ठः, तदाऽधिकदिनान्यपि तत्र स्नेहः कर्त्तव्यः ॥ ३ ॥

चक्रपाणिः—एवं संशोधनाङ्गस्नेहफलमाह—स्नेहोऽनिलं हन्तीत्यादि । स्नेहपूर्व्वकस्वेद-फलमाह—स्निग्धस्येत्यादि । सूक्ष्मेष्वति सूक्ष्मेष्वपि ॥ ४ ॥

चक्रपाणिः—सम्प्रति स्निग्धस्य वामनीयस्य वमनानुगुणं विरेचनीयस्य च विरेचनानुगुणं भोजनं पृथगाह—ग्राम्यौदकेत्यादि । रसैस्तथेत्यादिना विरेचनीयस्याहारविधानम् । अत्र च उत्क्लेशनीय

श्लेष्मोत्तरश्छर्दयति ह्यदुःखं विरिच्यते मन्दकफस्तु सम्यक्।
अधःकफेऽल्पे वमनं हि गच्छेद् विरेचनं वृद्धकफे तथोर्द्ध्वम्॥
स्निग्धाय देयं वमनं यथोक्तं वान्तस्य पेयादिरनुक्रमश्च।
स्निग्धस्य सुस्विन्नतनोर्यथावद् विरेचनं योग्यतमं प्रयोज्यम्॥

नीयः। कस्मादित्यत आह—श्लेष्मेत्यादि। यतः श्लेष्मोत्तरः पुमानऽदुःखं सुखं छर्दयति तस्मात् श्लेष्मकरग्राम्यादिभिरुत्क्लेशनीयो वम्यः। यतो मन्दकफः सम्यगदुःखं सुखं विरिच्यते तस्मात् कफावृद्धिकरैः स्नेहनीयो विरेच्यो जनः स्यादिति। तत्र कारणमाह—अध इत्यादि। कफेऽल्पे वमनमधो नियच्छेत्। वृद्धकफे विरेचनमूर्द्ध्वं नियच्छेत्। स्निग्धायेत्यादि। वान्तस्य सम्यग्वमितस्याहारेऽनुक्रमेण पेयादिः। स्निग्धस्विन्नस्य विरेचनं प्रयोज्यं सम्यग्विरिक्त पेयादिक

इति यदा सम्बन्धो भवेत्, तदा उत्क्लेशनं पित्तस्यैव ज्ञेयम्। किंवा, उत्क्लेशनीयः इति नानुवर्त्तत एव, तेन कफावृद्धिकरै रसैर्यूषैश्च भोजनीय इति शेषः। एतद् विरेचनार्थं प्रतिभोजनं त्र्यहं ज्ञेयम्, वमनार्थन्तु प्रतिभोजनमेकाहमेव। उक्तं हि—"स्नेहात् प्रस्कन्दनं जन्तुस्त्रिरात्रोपरतः पिबेत्। स्नेहवद् द्रवमुष्णञ्च त्र्यहं भुक्त्वा रसौदनम्। एकाहोपरतस्तद्वद् भुक्त्वा प्रच्छर्दनं पिबेत्" इति। वामनीयस्य श्लेष्मोत्तरत्वे कर्त्तव्ये विरेचनीयस्य चाल्पकफत्वे सम्पाद्य उपपत्तिमाह—श्लेष्मोत्तर इत्यादि। उक्तविपर्यये हेतुमाह—अध इत्यादि। कफेऽल्पे सति वमनं पीतं वमनमकृत्वैवाधो याति, वृद्धे कफे तु विरेचनं प्रयुक्तमूर्द्ध्वं याति वमनाय सम्पद्यत इत्यर्थः। स्निग्धाय देयं वमनमिति वमनपानदिनेऽभ्यङ्गेन स्निग्धाय वमनं देयमित्यर्थः। पानजनितस्नेहस्तु पूर्व्वमेवोक्तत्वान्न पुनरभिधानमर्हति। अन्ये तु उपशान्तस्नेहगुणाय इति वदन्ति। यथोक्तमिति मदनकल्पोक्तविधिना देयम्। वमनानन्तरं कर्त्तव्यमाह—वान्तस्येत्यादि। पेयादिः 'पेयां विलेपीम्" इत्यादिना वक्ष्यमाणः। वमनक्रममभिधाय विरेचनक्रममाह—स्निग्धस्येत्यादि। सुस्विन्नतनोरिति सम्यक्स्विन्नदेहस्य, अयञ्च विरेचनाङ्गस्नेहस्वेदक्रमो वमनानन्तरभाविविरेचनेऽपि पेयादिक्रमोत्तरकालं कर्त्तव्यः, यदुक्तम्,—"विलेप्याः क्रमागतञ्चैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्य विरेचयेत्" इति। स्नेहानन्तरञ्च यत् त्र्यहं विरेचनार्थं प्रतिभोजनम्, तदुपक्रमाभिधानानुषङ्गप्रतिपादितमेवेति न पुनरिह प्रतिपाद्यते। यथावदिति कल्पस्थानोक्तविधिना। योग्यतममिति शरीरदोषाद्यपेक्षया यद् विरेचनं यौगिकं भवति, तद् देयम्॥ ५॥

**पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रिर्द्विरथैकशश्च ।**
**क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः ॥**
**यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण ।**
**महान् स्थिरः सर्व्वसहस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः ॥ ६ ॥**

संस्कृतमसंस्कृतमेकशश्च क्रमेण सेवेत। एवं प्रधानादिमात्रया शुद्धिभ्यां शुद्धः। पेयादिक्रमसेवने हेतुमाह—यथाणुरित्यादि। अणुः सूक्ष्मोऽग्निर्यथा क्रमेणाल्पाल्पकाष्ठयोगेन क्रमेण वृद्धः सन् महान् स्थिरः सर्व्वसहः स्यात्, तथा पेयादिक्रमेणान्तरग्निः क्रमेण वृद्धः सन् महान् स्थिरः सर्व्वसहः स्यादिति ॥ ५। ६ ॥

चक्रपाणिः—सम्प्रति क्रमश्च क इति प्रश्नस्योत्तरमाह। वमनविरेचनोत्तरभाविपेयाक्रममाह—पेयां विलेपीमित्यादि। यवागूर्बहुसिक्था विलेपी विरलद्रवा। उक्तं हि—"सिक्थकैः रहितो मण्डः पेया सिक्थसमन्विता। यवागूर्बहुसिक्था स्याद् विलेपी विरलद्रवा" इति। अत्र अकृतयूपः स्नेहलवणाद्यसंस्कृतः, कृतयूपः स्नेहलवणादिसंस्कृतः। एवं रसेऽपि कृताकृतव्यवस्था। यदुक्तं सूदशास्त्रे—"अस्नेहलवणं सर्व्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्" इति। त्रिरित्यन्नकालत्रयं व्याप्य, द्विरित्यन्नकालद्वयम्, एकश इत्येकान्नकालम्। एतच्च त्रिरित्यादि प्रत्येकं पेयादिभिः सम्बध्यते। एतच्च त्रिरित्यादिपक्षत्रयं प्रधानशुद्धिशुद्धाद्यपेक्षया यथाक्रमं ज्ञेयम्। तेन प्रधानशुद्धिशुद्ध प्रत्येकं त्रिः पेयादि कर्त्तव्यम्, तेनान्नकालत्रये पेया। ततः परेणान्नकालत्रये विलेपी, ततः परेणान्नकालत्रये कृताकृतयूपसहितमन्नम्, ततोऽपि च परेण कृताकृतरसेनान्नमन्नत्रये देयम्। एवं द्वादशभिरन्नकालैर्वमनदिनसायाह्नात् प्रभृति सप्तरात्रेण पेयाक्रमः। अयमेव क्रम उपकल्पनीयेऽपि—"ततः सायाह्ने लोहितशालितण्डुलानाम्" इत्यादिना, यावत् "द्वादशे चान्नकाले" इत्यनेनोक्तः। अत्र तु यूपरसयोस्तु यद्यपि कालविभागो न प्रतिपादितः, तथापि यूपकालत्रये रसकालत्रये च प्रथम अकृतस्य उत्तरकाले च कृतस्य यूषस्य, एवं रसस्यापि काल इति विभागः कथनीय इति। एवं द्विः पेयाक्रमे तथा एकशश्च पेयाक्रमे विभागो वर्णनीय इति। एककाले तु पेयादिक्रमे यद्यपि कृताकृतयूपरसयोः कालविभागो न प्राप्यते, तथाप्येकस्मिन्नेव काले स्तोकसंस्कारेण यूपरसयोस्तत्र कृताकृतत्वं ज्ञेयम्। प्रधानशुद्धौ भूरिदोषागमनक्षोभादग्निमान्द्यं सम्भवति, तेन तत्र पेयादिक्रमश्चिरं क्रियत इति ज्ञेयम्। प्रधानशुद्धयादिलक्षणञ्चाग्रे वक्ष्यमाणम्। पेयादिक्रमस्य विशोधनमन्दीकृताग्नेर्दीपकत्वं दृष्टान्तेन दर्शयन्नाह—यथेत्यादि ॥ ६ ॥

जघन्यमध्यप्रवरेषु वेगाश्चत्वार इष्टा वमने षडष्टौ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥ ७ ॥
पित्तान्तमिष्टं वमनं तथोर्द्ध्वमधः कफान्तञ्च विरेकमाहुः।
द्वित्रीन् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम् ॥८॥

गङ्गाधरः—वमनविरेचनयोः प्रधानादिषु मात्रासु लिङ्गमाह—जघन्येत्यादि। वमने जघन्ये वेगाश्चत्वारो मध्ये षट् प्रवरेऽष्टौ वारा इति। विरेके तु जघन्ये दश वेगा मध्ये द्विगुणा विंशतिर्वाराः प्रवरे त्रिगुणास्त्रिंशद्वारा इति वगिक एकप्रकारस्त्रिविधः। अथ मानिकस्त्रिविधः प्रकार उच्यते प्रस्थस्तथा द्वित्रिचतुर्गुणश्चेति। वमने प्रवरा शुद्धिः प्रस्थो, मध्ये त्रिपात्प्रस्थः, कनिष्ठेऽर्द्ध-प्रस्थ इत्युन्नेयम्। तथा विरेके द्वित्रिचतुर्गुणः प्रस्थो जघन्यमध्यप्रवरशुद्धिषु। इति मानिकी त्रिधा शुद्धिः। अत्र प्रस्थोऽर्द्धत्रयोदशपलमुक्तं तन्त्रान्तरे—'वमने च विरेके च तथा शोणितमोक्षणे। अर्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः' इति अर्द्धेन हीनं त्रयोदशपलं सार्द्धद्वादशपलमिति ॥ ७ ॥

गङ्गाधरः—आन्तिकीं त्रिधा शुद्धिमाह—पित्तान्तमित्यादि। वमनमूर्द्ध पित्तान्तमिष्टम् आदौ कफवमनं ततः पित्तवमनमिति। अधस्तात् कफान्तं

चक्रपाणिः—प्रधानशुद्ध्यादिलक्षणं प्राह—जघन्येत्यादि। चतुर्भिर्वेगैर्यत् शोधनं वमनं तद् जघन्यम्, यत् तु षड्भिस्तन्मध्यमम्, यत् त्वष्टाभिस्तत् प्रवरम्। विरेके जघन्ये दश, मध्ये तु विरेचने दशद्विगुणा विंशतिरित्यर्थः, प्रवरे तु विरेचने त्रिगुणा दश त्रिंशदित्यर्थः। वेगसंख्या-विभेदेन जघन्यादिभेदमभिधाय दोषमानभेदेनापि विरेचनस्य जघन्यमध्यप्रवरतां यथाक्रममाह—प्रस्थस्तथेत्यादि। द्विगुणः प्रस्थो जघन्ये विरेचने, त्रिगुणश्च मध्यमे चतुर्गुणस्तु प्रवरे। अत्र च प्रस्थशब्देन सार्द्धत्रयोदशपलान्युच्यन्ते। उक्तं हि तन्त्रान्तरे,—'वमने च विरेके च तथा शोणितमोक्षणे। सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः' इति ॥ ७ ॥

चक्रपाणिः—पित्तान्तमिष्टं वमनं विरेकादर्द्धमिति विरेके यन्मानं जघन्यमध्यप्रवरविभागे प्रोक्तं यथाक्रमम्, तथा वमनेऽपि जघन्यमध्यप्रवरविभागे तदर्द्धं ज्ञेयम्, परन्तु यत् पित्तान्तत्वं वमनस्य, कफान्तत्वं विरेकस्य, तत् त्रिविधशुद्धावप्यर्थागतं ज्ञेयम्। यदा चतुर्भिर्वेगैः प्रस्थमाने दोषे गते पित्तान्तत्वं सम्यग्वमनशुद्धिजलक्षणमुपलभ्यते तदा जघन्या शुद्धिः, यदा च विरेके दशभिर्वेगैर्द्विप्रस्थमानदोषगमनेन कफान्तत्वं विरेचनसम्यग्योगलक्षणमुपलभ्यते, तदा विरेचनस्य जघन्या शुद्धिर्भवति, एवं मध्यप्रवरशुद्धावपि वमने पित्तान्तत्वं विरेचने च कफान्तत्वं सम्यग्-योगलक्षणं ज्ञेयम्। वेगसंख्या दोषमानाभिधानानन्तरं सम्यक्शुद्धिलैङ्गिकशुद्धेः पित्तान्तत्वादि-

**क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग् वमितः स दृष्टः।**
**हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तथो लघुत्वेऽपि च लक्ष्यमाणे॥**

विरेकमिष्टमाहुः। तत्र मानकरणे क्रममाह—द्वित्रीनित्यादि। विरेचने द्वौ वेगावथवा त्रीन् वेगान् सविट्कानपनीय विहाय मलं मेयम्, वमने तु पीतमौषधमपनीय मेयम् ॥ ८॥

गङ्गाधरः—पित्तान्तं वमनं कफान्तं विरेकमिष्टमाहुरिति यत् तद् विवृणोति। क्रमादित्यादि। व्यतिक्रमे तु यस्यैति सोऽसम्यग्वमितस्तत्र हृदादिशुद्धौ लक्षणप्रतिपादनार्थमिहाभिधानम्, तेन यदुच्यते—आन्तिकी वैगिकी मानिकी लैङ्गिकी च चतुर्विधा शुद्धिरिहोच्यते वमनविरेचनयोः, तदस्माकमसम्मतमेव, किन्तु लैङ्गिकी चैका शुद्धिः; तत्र च 'पित्तान्तम्' तथा 'क्रमात् कफः' इत्यादिग्रन्थवक्ष्यमाणञ्च लिङ्गं वमने, विरेचने च 'कफान्तञ्च' तथा 'स्रोतोविशुद्धीन्द्रिय' इत्यादिग्रन्थवक्ष्यमाणञ्च लिङ्गं ज्ञेयम्। यदत्र दोषागमनकर्म्मणः सम्यग्विशुद्धिलिङ्गं लक्ष्यतेऽथ मानाच्च वेगाच्च दोषागमनाच्चोक्तम्, किमिदं व्यस्तं समस्तं वेत्यादिनाऽऽक्षिप्तम्, तदनभ्युपगमनिरस्तमेव। अन्येषान्त्वत्र परीहारा विस्तरभयान्न लिखिताः। जघन्यादिशुद्धित्रैविध्यञ्चात्र जघन्यमध्योत्कृष्टदोषविषयतया व्यवस्थापनीयम्, जघन्यादिशुद्धिलक्षणेऽपि यद् वेगेन जघन्यादिशुद्धिलक्षणताऽभिधानम्, तत् प्रायोभावितया ज्ञेयम्, दोषमानभेदेन जघन्यादिमानभेदः पारमार्थिकः, तेन यत्र वमनेऽष्टाभिर्वेगैर्द्विप्रस्थदोषस्रुतिर्भवति तत्र प्रवरैव शुद्धिः, यत्र वमने षड्भिरेव वेगैः सार्द्धप्रस्थदोषस्रुतिर्भवति तत्र मध्यैव शुद्धिः, यत्र च चतुर्भिरपि वेगैरेकप्रस्थदोषस्रुतिः तत्र जघन्यशुद्धिरेव, एवं विरेचनेऽप्युदाहार्य्यम्। पित्तप्रवृत्तिरन्ते यस्मिन्, तत् पित्तान्तम्, एवं कफान्तमपि व्याख्येयम्। तेन "क्रमात् कफः पित्तमथानिलश्च" इत्यनेन यत् सम्यक्शुद्धिलक्षणं वक्तव्यम्, तथा 'प्राप्तिश्च विट्पित्तकफानिलानाम्' इत्यनेन च सम्यग्विरेचनलक्षणं यद् वक्तव्यम्, तदनेन सहाऽविरुद्धं भवति, तत्र च यदनिलागमनमन्ते वक्तव्यम्, तत् पित्तान्तस्य कफान्तस्य सूचकतया ज्ञेयम्, निःशेषकृते ह्याशयगते पित्ते कफे च वायुः केवलः सरति। तेन च केवलवायुसरणेन पित्तान्तता कफान्तता च जायते। ननु यदि 'क्रमात् कफः' इत्यादिनैव ग्रन्थेनाऽयमर्थोऽभिहितः तत् कथमिह पित्तान्तञ्च वमनं कफान्तञ्च विरेकमाहुरिति कृतम्? ब्रूमः, वेगसंख्यादोषमानभेदप्रतिपाद्यमानजघन्यादिशुद्धिलये पित्तान्तत्वाद्यनुगतिप्रतिपादनार्थमिहाभिधानम्। एवं तद्वमनविरेचनसम्यग्योगलक्षणाऽभिधाने शिष्यस्य, प्रबलदोषेऽपि पुरुषे अयोगशुद्धावेव जघन्यशुद्धिगतवेगमानोदये सति अथ पित्तान्तत्वाद्यनुदये जघन्यशुद्धिभ्रमः स्यात्। एवमन्यदप्युदाहार्य्यम्। वमने च विरेके च यथा दोषमापनं कर्त्तव्यम्, तदाह—द्वित्रानित्यादि। द्वित्रानित्यव्यवस्थितभाषणेन मलभागस्यामेयतां दर्शयति। वमने च पीतमिति वमने पीतमौषधं वर्जयित्वा शेषो मेयः॥ ८॥

चक्रपाणिः—सम्प्रति "किञ्च कृतेषु" इत्यादिप्रश्नस्योत्तरं यथाक्रममाह—क्रमादित्यादि। क्रमादित्यनेन वचनेन यथोक्तक्रमलङ्घनेन कफाद्यागमनं न सम्यग्योगलक्षणमिति दर्शयति। यतः

दुश्छर्दिते स्फोटककोठकण्डू-हृत्स्वाविशुद्धिर्गुरुगात्रता च।
तृण्मोहमूर्च्छानिलकोपनिद्रा-बलातिहानिं वमितेऽति विद्यात्* ॥ ९
स्रोतोविशुद्धीन्द्रियसंप्रसादौ लघुत्वमूर्जोऽग्निरनामयत्वम्।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग् विरिक्तस्य भवेत् क्रमेण॥
स्यात् श्लेष्मपित्तानिलसंप्रकोपः स्वेदोऽल्पवह्निर्गुरुगात्रता स्यात्।
तन्द्रा तथा छर्दिररोचकश्च वातानुलोम्यं न च दुर्विरिक्ते॥
कफास्रपित्तक्षयजानिलोत्थाः सुप्त्यङ्गमर्दक्लमवेपनाद्याः।
निद्राबलाभावतमःप्रवेशाः सोन्मादहिक्काश्च विरेचितेऽति ॥१०॥

लघुत्वे च लक्ष्यमाणे सम्यग्वमितो दृष्टः। दुश्छर्दित इत्यादि। अयोगयुक्तवमिते स्फोटकादयः स्युः। तृण्मोहादीनि अतिवमिते विद्यात् ॥ ९ ॥

गङ्गाधरः—सम्यग्विरेकलक्षणमाह—स्रोत इत्यादि। ऊर्जोऽग्निर्बलवान् जाठरोऽग्निः सम्यग्विरिक्तस्य भवेत्। विट्पित्तकफानिलानां क्रमेण प्राप्तिश्च सम्यग्विरिक्तस्य लक्षणमिति। स्यादित्यादि दुर्विरिक्तलक्षणम्, न च वातानुलोम्यमिति। कफास्र इत्यादिनाऽतिविरिक्तलक्षणम्। कफादिकोत्थाः सुप्त्यादयः ॥ १० ॥

कफादूर्द्ध्वं गतं यदा पित्तं भवति, तदा तु पित्तागमनेऽपि सति न शुद्धिः, किन्तु यदैवामाशयाधोभागगतं पित्तं वमनमानयति तदैव शुद्धिः, तत् पित्तानयनञ्च कफानयनानन्तरमेव भवति। एवं सम्यक्कृतविरेचनलक्षणेऽपि क्रमादितिपदस्यार्थोऽत्र व्याख्येयः। दुश्छर्दित इत्याद्ययोगकृतवमनलक्षणम्। तृण्मोहेत्याद्यतिकृतवमनलिङ्गम्। अत्र आदिशब्देन वर्णस्वरादिग्रहणम्। निद्रातिहानिश्चात्रानिलकोपकृतैव ॥ ९ ॥

चक्रपाणिः—स्रोतोविशुद्धीत्यादि सम्यग्विरेचनलक्षणम्। ऊर्जोऽग्निरिति पटुरग्निः। अनामयत्वमिति विरेचनजेतव्यदोषजनितविकारव्यपगमः। प्राप्तिश्चेत्यादिग्रन्थार्थः स्थानान्तरे व्याख्यात एव। स्यादित्याद्ययोगकृतविरेकलक्षणम्। न च वातानुलोम्यमित्यर्थः। कफास्रेत्यादि विरेकातियोगलक्षणम्। क्षयशब्दः कफादिभिः प्रत्येकं सम्बध्यते ॥ १० ॥

---

* बलादिहानिर्वमनेऽति च स्यादिति चक्रधृतः पाठः।

संसृज्य भक्तं नवमेऽह्नि सर्पिस्तं पाययेद् वाप्यनुवासयेद् वा ।
तैलाक्तगात्राय ततो निरूहं दद्यात् त्र्यहान्नातिबुभुक्षिताय ॥ ११ ॥
प्रत्यागते धन्वरसेन भोज्यः समीक्ष्य वा दोषबलं यथार्हम् ।
नरस्ततो निश्यनुवासनार्हो नात्यशितः स्यादनुवासनीयः ॥१२॥

गङ्गाधरः—लिङ्गं तथवातिकृतेर्ष्वित्यस्योत्तरमुक्त्वा का संज्ञा किं गुणाः केषु कश्च वस्तिरित्येषामुत्तरमाह—संसृज्येत्यादि । तं सम्यग्वान्तं विरिक्तं पेयादि-क्रमोपसंसृष्टमष्टदिनं यावत् ततो नवमेऽह्नि संसृष्टभक्तं सर्पिः पाययत् । अथ-वानुवासयेदिति । ततः संसृष्टभक्तसर्पिःपीतवतेऽनुवासिताय वा त्र्यहात् परं पुनस्तैलाक्तगात्राय तस्म अनतिबुभुक्षितायाभुक्तवते निरूहं दद्यात् ॥ ११ ॥

गङ्गाधरः—प्रत्यागते तन्निरूहे दोषबलं समीक्ष्य यथार्हं धन्वमांसरसेन

चक्रपाणिः—वमनविरेचनकल्पनाप्रस्तावागतसम्यग्योगादिलक्षणञ्चाभिधाय वस्तिकल्पनामाह—संसृष्टभक्तमित्यादि । सप्तभिर्दिनैः कृतसंसर्जनक्रमस्याष्टमे भुक्तमुपयुक्तस्य नवमे सर्पिःपानमनु-वासनं वा देयम् । अत्र विकल्पद्वये यदि वमनानन्तरं विरेचनं कर्त्तव्यम्, तदा नवमेऽह्नि सर्पिः-पानम्, अथ विरेचनानन्तरं वस्तिर्देयः, तदानुवासनं नवमेऽह्नि देयमिति व्यवस्था, वमनानन्तरं नवमदिवससर्पिःपानं पूर्व्वं नोक्तम्, तेनेदानीं विरेचनानन्तरं कर्त्तव्यं निरूहाङ्गमनुवासनसमान-कालतया सर्पिःपानमपि दर्शितम, तेन न निरूहाङ्गता सर्पिःपानस्य कल्पनीया, नवमश्च दिवसोऽत्र शोधनदिनमारभ्यैव ज्ञेय । उक्तञ्च जतूकर्णे—'शोधनानन्तरं नवमेऽह्नि स्नेहपानमनुवासनं वा", तथा सुश्रुतेऽप्युक्तम्—"विरेचनात् सप्तरात्रे गते जातबलाय च । कृतान्नायानुवास्याय सम्यग-देयोऽनुवासनः" इति । उपकल्पनीये च यः पेयक्रमानन्तरं रससंसर्जनक्रम उक्तः, स सर्व्व-कर्म्मावसाने प्रकृतिभोजनगमनार्थं कर्त्तव्यम्, न वमनविरेचनकर्म्मपरिसमाप्तावेव, तेनेह कृतरस-संसर्गस्यैव नवमे दिने सर्पिःपानमनुवासनञ्चोपपन्नम् । यत् तु भद्रशौनके—' संसृष्टभक्तः सुमनाः स्नेहपीतो दृढानलः । संशुद्धः परतो मासादनुवास्यस्ततो नरः" इत्युक्तम्, ततश्च तत् प्रागनु-वासनविषयं रोगविशेषविषयं वेति नैतद् विरुद्धं भवति । बहूनि चात्र व्याख्यानानि टीकाकृता-मङ्गिरिसैन्धवजेज्जटेश्वरसेनादीनां सन्ति । अन्यैस्तु तद्व्याख्यानानि दोषोद्धारादेव निरस्तानि । तैलाक्तगात्रायेति वचनमभ्यङ्ग नापि स्नेहप्रयोगदर्शनार्थम् । स्वेदस्त्वत्र पञ्चकर्म्मपूर्व्वतया विहितो-ऽनुक्तोऽप्यायात्येव । यदुक्तम्—"अनुपस्थितदोषाणां स्नेहस्वेदोपपादनैः । पञ्च कर्म्माणि कुर्व्वीत" इति । दद्यात् त्र्यहादित्यनुवासनदिनादूर्द्ध्वं त्र्यहात्, तेन यथावक्ष्यमाणक्रमेण, एकाऽहात् त्र्यहा-धिकाद् वा स्नेहाद् तदहाद् वा निरूहो देयः । नातिबुभुक्षितायेत्यनेन अतिबुभुक्षितस्य निरूहोऽतियोगायोर्द्ध्वगमनाय च भवतीति सूचयति । तत्र धन्वरसेन भोजनं विरेचनवदग्नि-मान्द्यभावाद बलाऽपहारकत्वाच्च युक्तमेव । यदुक्तं भोजे—"आ मस्तकाद् विशुद्धस्य निरूहेण

शीते वसन्ते च दिवानुवास्यो
रात्रौ शरद्ग्रीष्मघनागमेषु।
तानेव दोषान् परिरक्षिता ये
स्नेहस्य पानं प्रति कीर्त्तिताः प्राक्॥ १३॥

स नरो भोज्यः। स चेदनुवासनार्हो भवेत् तदा ततः परं निशि नात्यशितोऽल्प भुक्तवाननुवासनीयः स्यात्॥ १२॥

गङ्गाधरः—तत्र केष्वृतिप्रश्नोत्तरमाह—शीत इत्यादि। घनागमः प्रावृट् आषाढ़श्रावणौ। स्नेहस्य पानं प्रति तानेव दोषान् परि ये रक्षिता यतो यतो विहाराहारादितो निवर्त्त्य रक्षयितव्यास्ते प्राक् स्नेहाध्याये प्रकीर्त्तिताः॥ १३॥

रसादिकम्। किमर्थं विहितं भोज्यं संसर्गश्च विरिक्तवत्। विरेकः पावकं हन्ति तदधिष्ठानसंप्लवात्। न तु वस्तिस्तथा तस्मात् समुन्नयति पावकम्" इति। निरूह एव दोषाऽग्निबलापेक्षरसादिना पेया-दिना भोजनं दर्शयन्नाह— समीक्ष्य दोषबलं यथार्हमिति। बलमित्यग्निबलम्। नरस्तत इत्यादिना निरूढ़स्यानुवासनमाह। 'निशि' इत्यनेन निरूहानन्तरं तद्दिने क्रियमाणमनुवासनं निश्येव कर्त्तव्य-मिति दर्शयति, न शीते वसन्तेऽपि सद्यो निरूढ़स्य रात्रावेवानुवासनं देयम्। अन्ये तु निशीत्यनेन तदहरेव निरूढ़ाय सायमनुवासनं देयमिति दर्शयति, यथावक्ष्यमाणविभागेन रात्रौ दिवा वा देयमित्याहुः। अनुवासनार्ह इतिवचनेन यदि सामो मन्दो वा पावको भवति, तदा तदहरनु-वासनं न देयमिति सूचयति। अत एव जतूकर्णे द्वितीयदिवस एवानुवासनमुक्तम् "ततस्त्र्यहान्निरूहे व्युषिते भुक्तवतोऽनुवासनम्" इति। हारीतेऽपि—"व्युष्टं रजन्यां प्रसमीक्ष्य तस्माद् बलाबलं वाप्यनुवासनीयः" इत्युक्तम्। 'सद्यो निरूढ़ोऽनुवास्यः स्यात्' इति वचनं निरूहजनितवातक्षोभपुरुषविषयम्॥ ११।१२॥

चक्रपाणिः—'निशि' इत्यनेन, यन्निशासमीपेऽनुवासनं विहितम्, तदेव कालभेदेन भिन्नकालं दर्शयन्नाह—शीत इत्यादि। शीतशब्देन शिशिरहेमन्तयोरपि ग्रहणम्। दिवेति निशासमीपे दिवाभागे, रात्रावपि च दिनसमीपे रात्रौ। दोषान् परिरक्षितान् दृष्ट्वा अन्तरञ्च दोषवर्ज्जनेन परि-रक्षिता ये स्नेहस्य पाने परिकीर्त्तिताः स्नेहाध्याये "श्लेष्माधिको दिवा शीते" इत्यादिना ग्रन्थेन, त एवाऽकालपीतस्नेहदोषा भवन्ति। त एव यथोक्तकालविपर्य्ययकृतानुवासनेऽपि, समान-न्यायाच्चैकदेशाभिधानेनापरैकदेशानुमानाच्च ज्ञेयाः॥ १३॥

प्रत्यागते चाप्यनुवासनीये दिवा प्रदेयं व्युषिताय भोज्यम्।
सायञ्च भोज्यं परतस्त्र्यहे वा त्र्यहेऽनुवास्योऽहनि पञ्चमे वा ॥
द्व्यहे त्र्यहे वाप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनञ्च।
एकं तथा त्रीन् कफजे विकारे पित्तात्मके पञ्च च सप्त वापि ॥
वाते नवैकादश वा पुनर्वा वस्तीनयुग्मान् कुशलो विदध्यात् ॥१४॥

गङ्गाधरः—अथ दत्ते तदनुवासनीये स्नेहे प्रत्यागते सति निशि व्युषिताय प्रभाते दिवा भोज्यं प्रदेयं परतस्त्र्यहे वा सायञ्च रात्रौ भोज्यं देयम्। त्र्यहे पुनरनुवास्योऽथवा पञ्चमेऽहन्यनुवास्यः। एवं द्व्यहे वा त्र्यहे वा पञ्चमे वा दोषमवेक्ष्य निरूहं दत्त्वा निशि चानुवासनं देयम्। एवं प्रकारेण वस्तिमेकं कफजे व्याधौ विदध्यादथवा त्रीन् वस्तीन्, पित्तात्मके विकारे पञ्च वा सप्त वा वस्तीन्, वाते विकारे नव वस्तीनथवैकादश वस्तीन् विदध्यात्, न तु कुत्रापि युग्मान् वस्तीन् विदध्यात् ॥ १४ ॥

चक्रपाणिः—प्रत्यागते चेत्यादौ अनुवासनीय इत्यनुवासनस्नेहे। व्युषितायेति निर्व्विकारञ्च रात्रिं व्युषिताय दिवा भोज्यं देयम्, तथा सायञ्च भोज्यं देयम्। अनुवासनानन्तरं पुनरनुवासनकालमाह—त्र्यहे वेत्यादि। अत्रापि त्र्यहपञ्चाहव्यवस्था पूर्व्ववत्। अयञ्चानुवासनकालो निरूहदिन एव दातव्यानुवासने परिज्ञेयः। अन्ये तु पठन्ति—यत परतो द्व्यहे वा त्र्यहेऽवानुवास्योऽहनि पञ्चमे वा इति, व्याख्यानयन्ति च—परतो द्व्यहे वा त्र्यहेऽनुवास्योऽहनि पञ्चमे वेति। अत्र तु द्व्यहेऽनुवासनमतिप्रबलस्य वातस्य, अनतिवृद्धवातस्य त्र्यहे, पञ्चमे तु वृद्धकफपित्तस्येति व्यवस्था। द्वितीयदिनानुवासनं हारीतेऽप्युक्तम्, वचनं हि—"दृष्ट्वातिवृद्धं पवनस्य रूपं दिने दिने वस्तिमुदाहरन्ति।" सुश्रुतेऽप्युक्तम्—"रूक्षस्य बहुवातस्य स्नेहवस्तिं दिने दिने। दद्याद् वैद्यस्ततोऽन्येषामग्न्याबाधभयात् त्र्यहात्" इति। इहापि "रूक्षनित्यस्तु" इत्यादिना "उदानावृते वाताग्न्यादौ दिने दिने" इत्यन्तेन द्व्यहे दानं विश्रावयति, तेन 'द्व्यहे वा त्र्यहे वा' इति पाठः साधुः। द्व्यहशब्देन चात्र दिनद्वयसम्बन्धमात्रमुच्यते, न द्व्यहपूरणम्, तेन प्रथमदिवसदत्तानुवासनात् प्रभृति पूरणेन तृतीये दिवसेऽनुवासनं प्राप्नोतीति यदुच्यते, तन्निरस्तम्। एवं त्र्यहेऽपि तृतीयाहसम्बन्ध एव विवक्षितो ज्ञेय इति। सम्प्रति दोषभेदेनानुवासननियममाह—एकं तथा त्रीनित्यादि। एतच्च 'संख्याः कति' प्रश्नस्योत्तरम्, अपरं सङ्ख्याप्रश्नोत्तरं—'त्रिंशन्मता कर्म्म तु' इत्यादिना भविष्यति। कफपित्तयोश्च यद्यप्यनुवासनं न विहितम्, तथापि वातानुगतकफपित्तविषयतयैतद् बोद्धव्यम्। पुनर्वेत्यनेन वाते नव एकादश वा कुर्य्यात्। अयुग्मानित्यनेन द्विचतुःषडादिसंख्यया युग्मदानञ्च निषेधयति। अयुग्मदानं प्रभावादेवात्रोपकारीति महर्षिवचनाद् बोध्यम्।

**नरो विरिक्तस्तु निरूहदानं विवर्ज्जयेत् सप्तदिनान्यवश्यम्।**
**शुद्धो निरूहेण विरेचनञ्च तद्धास्य शून्यं विकृषेच्छरीरम् * ॥१५॥**

गङ्गाधरः—अथ किं वर्ज्जनीयमित्यस्योत्तरमाह—नर इत्यादि। विरिक्तस्तु नरः सप्तदिनं निरूहदानं विवर्ज्जयेत्। तत्र दोषमाह—शुद्ध इत्यादि। विरेचनेन शुद्धश्च नरो निरूहदानं सप्तदिनं विवर्ज्जयेत्। किमर्थम्? तद्धि हि यस्मात् तद् विरिक्तस्य शून्यं शरीरं निरूहो विकृषेत्, निरूढस्य च शून्यं शरीरं विरेचनं विकृषेत्॥ १५॥

यथा—युग्मेष्वहःसु पुत्रकामौ संवसेताम्" इति। उपपत्तिश्चात्राऽतिप्रसङ्गभीत्या न कथिताऽऽचार्य्येण। यत् तु—"त्रीन् पञ्च वा तु चतुरोऽथ षड् वा" इत्यादिना युग्मवस्तिदानं वक्ष्यति, तन्निरूहाङ्गतया स्नेहनार्थक्रियमाणानुवासनविषययुग्मवस्तिदानमिति न विरोधः। एतेन यदुक्तम् आषाढ़वर्म्मणा—निरूहकार्य्यकरणायायुग्मदानमतस्मिन्नोक्तं निषिद्धपूर्व्वञ्च, रोगस्यान्ते क्रमादेकं तथा त्रीनित्यादीन् स्नेहान् प्राह" इति, तन्निरस्तं ज्ञेयम्। किञ्च, 'अयुग्मान्' इत्यनेन 'पुनर्वा' इत्यनेन च यत्रानुवृत्त्यानुवासनं देयम्, तत्रायुग्मकं निरूहान्तरितं कर्त्तव्यमित्यर्थः। तेन यथोक्तसंख्यातनिरूहं दत्त्वा यथोक्तसङ्ख्यया स्नेहो देयः। विषमसंख्योपादानन्तु मध्यविषयापि त्र्यह-चतुरहादिग्राहकं भवति। तेन उत्तरत्र वक्ष्यमाणसमसंख्यानुवासनं न विरोधि ब्रुवते। जतूकर्णेऽप्युक्तम्—"निरूहे व्युषिते भुक्तवतोऽनुवासनं परं द्वितीयेऽहनि पञ्चमे वा तथैकादशाहेऽपकर्षता द्वित्रिचतुरादि वातादिपूच्यते" इति॥ १४॥

चक्रपाणिः—सम्प्रति निरूहविरेचनयोरवश्यपरिहर्त्तव्यकालमाह—नरो विरिक्तस्त्वित्यादि। अवश्यमिति वचनादेकाहसाध्येऽपि व्याधौ अवश्यं सप्तदिनच्छेदः कर्त्तव्य इति दर्शयति। यद्यपि विरेचनानन्तरं निषिद्ध एव निरूहः पञ्चकर्म्मीयायां सिद्धौ तथा निरूढस्य विरेचनं निषिद्धम्, तथापि तत्कालमेव स निषेधः। तेन त्रिचतुरादिदिनेऽपि प्रसक्तिनिरासार्थमिदं वचनम्। यत् तु विरेचनानन्तरं नवमेऽह्नि अनुवासनकालादुत्तरकालमेव निरूहविधानम्, तेन अर्व्वाग्वस्तेरपि न प्रसक्तिः स्यादित्युच्यते, तन्न; यदनुवासनशुद्ध्यपेक्षसंसर्जनक्रमस्येयं विधा। यदावरशुद्ध्या त्र्यहेणैव पेयादिक्रमः समाप्यते, तदा चतुर्थदिनेऽनुवासनदानात् पञ्चमे षष्ठे दिने निरूहः प्रसज्येत, अतस्तन्निरासार्थमेतद्वचनम्। निरूहानन्तरन्तु संसर्जनक्रमो नास्त्येव, तेन त्र्यहं त्र्यहं दत्त्वा विरेचनप्रसक्तिरस्त्येव। सप्ताहादर्व्वाक् सप्ताहं यावत् निरूहविरेचनवर्ज्जने हेतुमाह—तद्धास्येत्यादि। विकर्सेदिति हिंस्यात्, शून्यमिति पूर्व्वशोधनशून्यशरीरं पुनः शोधनात् हिंस्यादिति भावः। "आ सप्ताहाद् विरेको वा ततश्चापि निरूहणम्" इति तन्त्रान्तरे प्रोक्तम्, तच्च संसर्गविधया क्रियमाणसंशोधनक्रमे ज्ञेयम्। अत्रापि च सप्ताहपूरणं संसर्जनस्नेहादीनामनुमतविकल्पपरिहाराद् व्याख्येयम्॥ १५॥

---

* विकर्सेच्छरीरमिति चक्रसम्मतः पाठः।

वस्तिर्व्वयःस्थापन आयुरग्नि-सुखस्वरौजोबलवर्णमेधा- ।
सर्व्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्व्वगदापहश्च ॥
विट्श्लेष्मपित्तानिलमूत्रकर्षी दार्ढ्यावहः शुक्रबलप्रदश्च ।
विश्वक्स्थिरं दोषचयं निरस्य सर्व्वान् विकारान् शमयेन्निरूहः ।
देहे निरूहेण विशुद्धमार्गे संस्नेहनं वर्णबलप्रदश्च ॥ १६ ॥
न तैलदानात् परमस्ति किञ्चित् द्रव्यं विशेषेण समीरणार्त्तेः ।
स्नेहेन रौक्ष्यं लघुतां गुरुत्वादौष्ण्याच्च शैत्यं पवनस्य हत्वा ।
तैलं दधात्याशु मनःप्रसादं वीर्य्यं बलं वर्णमथापि पुष्टिम् ॥१७॥

गङ्गाधरः—किंगुणो वस्तिरितिप्रश्नस्योत्तरमाह—वस्तिरित्यादि। आयुरादिसर्व्वार्थकारीत्येकं पदम्। वस्तेः सामान्यगुणमुक्त्वा विशेषमाह—विडित्यादि। विश्वक् दोषं स्थिरञ्च दोषम्। निरूहदानानन्तरमनुवासनदानगुणमाह—देह इत्यादि। निरूहेण विशुद्धमार्गे देहे संस्नेहनमनुवासनं वर्णादिप्रदम् ॥ १६ ॥

गङ्गाधरः—तत्र स्नेहविशेषमाह—न तैलदानादित्यादि। समीरणार्त्तेस्तैलात् परं किञ्चिद् द्रव्यं विशेषेण नास्ति। यथा समीरणार्त्तिं तैलं विशेषेण शमयति तथाह—स्नेहेनेत्यादि। तैलं स्नेहेन स्निग्धत्वगुणेन वातस्य रौक्ष्यं

चक्रपाणिः—'किंगुणो वस्तिः' इतिप्रश्नस्योत्तरम्—वस्तिर्व्वयःस्थापयितेत्यादि। अयञ्च आस्थापनगुणः, अनुवासनस्य तु "देहे निरूहेण" इत्यादिना ग्रन्थेन गुणं वक्ष्यति। वयःस्थापयतीति वयःस्थापयिता। वयःस्थापनञ्चास्य स्रोतःशुद्धिकरत्वात्। सर्व्वार्थकारीति स्थिरत्वापकर्षादिविरुद्धार्थस्यापि भेषजविशेषयोगात्। शिशुवृद्धयूनां निरत्यय इत्यनेन वमनविरेचनाभ्यामुत्कर्ष उच्यते, ते हि शिशुवृद्धयोर्निषिद्धे। सर्व्वगदापहत्वं शमनेन ज्ञेयम्। सर्व्वान् विकारान् शमयेदित्यनेन दोषसंशोधनद्वारा सर्व्वगदापहत्वमुच्यते इति न पौनरुक्त्यम्। किंवा सर्व्वान् विकारानिति सर्व्वावस्थान् विकारानिति विशेषः। देह इत्यादिनानुवासनगुणमाह। निरूहेण विशुद्धमार्गे इति वचनान्निरूहशोधित एव मार्गे संसर्ज्जदनुवासनं यथोक्तगुणकर्त्तृ भवतीति दर्शयति ॥ १६॥

चक्रपाणिः— तैलदानादित्यत्र तैलशब्देन स्नेहोपलक्षणेन केचिद् घृतमपि ग्राहयन्ति। किन्तु तैलमेवात्र वातहरप्रधानतया ब्रूते इति युक्तं पश्यामः, तथा ह्यत्र 'औष्ण्याच्छैत्यम्' इति, औष्ण्यञ्च न सर्पिषि इति। स्नेहौ तु मज्जवर्ज्जितौ अनुवासनाधिभूतावप्यप्रधानत्वान्नात्र घृतमनुमन्यते। परमस्तीत्यादौ द्रव्यमिति कारणम्, तच्च कारणमनिलप्रशमनेन ज्ञेयम्। 'नान्वसनात्

मूले निषिक्तो हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवाग्रः।
काले महान् पुष्पफलप्रदश्च तथा नरः स्यादनुवासनेन ॥ १८ ॥
( अपत्यसन्तानविवृद्धिकारी काले यशस्वी बहुकीर्त्तिमांश्च। )
स्तब्धाश्च ये सङ्कुचिताश्च केचित् ये पङ्गवो येऽपि च भग्नरुग्णाः।
येषाञ्च शाखासु च वातरोगाः शस्तो विशेषेण हि तेषु वस्तिः ॥
आध्मापिते विग्रथिते पुरीषे शूले च भक्तानभिनन्दने च।
एवं प्रकाराश्च भवन्ति कुक्षौ ये चामयास्तेषु च वस्तिरिष्टः ॥

हत्वा गुरुत्वात् तस्य लघुतां हत्वा औष्ण्यात् तस्य शैत्यं हत्वाशु मनःप्रसादादिकं दधाति ॥ १७ ॥

गङ्गाधरः—तत्र दृष्टान्तमाह—मूल इत्यादि। नीलच्छदो द्रुमो मूले जलेन सिक्तो हि यथा कोमलपल्लवाग्रः सन् काले महान् भूत्वा पुष्पफलप्रदः स्यात्, तथा नरोऽप्यनुवासनेन मूले पायौ सिक्तः सन् मनःप्रसादादिमान् भूत्वा स्वक्रियाकरः स्यात् ॥ १८ ॥

गङ्गाधरः—ये च रोगा अनुवासनेन नश्यन्ति तदाह—स्तब्धाश्चेत्यादि। ये नरा वातेन स्तब्धास्तथा सङ्कुचितादयश्च येषां शाखासु रक्तादिषु वात रोगास्तेषु विशेषेण वस्तिरनुवासनवस्तिः शस्तः। एवमाध्मापितपुरीषादि-

किञ्चिदिहास्ति कर्म्म' इति केचित् पठन्ति। तैलकृत्यमेव सकारणं व्याकरोति स्नेहेनेत्यादि। तैलञ्च स्नेहानुवासने पक्वमेव, अपक्वस्य तु "न चामं प्रणयेत् स्नेहं यदभिष्यन्दयेद् गुदम्" इत्यनेन निषिद्धत्वात्। अत्र तैलानिलयोर्मेलके द्रव्यप्रभावात् तैलमेव वातं हन्ति, न वातस्तैलम्। अणुत्वञ्च यद्यपि तैले वाते चास्ति, तथापीह प्रभावाच्च वातसूक्ष्मावयवसम्बन्धकारकं तैलं स्नेहादिना वातं जयति। तेन समानमप्यणुत्वमिह विरुद्धार्थकार्य्यैवेति। तैलस्य यथोक्तकार्य्यकर्तृत्वे दृष्टान्तमाह— मूल इत्यादि। 'मूल'दृष्टान्तेन चानुवासनेन साक्षात् तर्पणीयस्य गुदस्य देहमूलत्वं दर्शयति। उक्तं हि पराशरे—"मूलं गुदं शरीरस्य शिरास्तत्र प्रतिष्ठिताः। सर्व्वं शरीरं पृष्ठञ्च मूर्द्धानं पादमाश्रिताः" इति। तथानुवासनादपि नरो बलवीर्य्यादियुक्तोऽपत्यवांश्च स्यादित्यर्थः ॥ १७ । १८ ॥

चक्रपाणिः—सामान्येन निरूहानुवासनयोर्गुणमाह— स्तब्धाश्च य इत्यादि। भग्ना इति

याश्च स्त्रियो वातकृतोपसर्गात् गर्भं न गृह्णन्ति नृभिः समेताः ।
क्षीणेन्द्रिया ये च नराः कृशाश्च तेषाञ्च वस्तिः परमः प्रदिष्टः ॥१९
उष्णाभिभूतेषु वदन्ति शीतान् शीताभिभूतेषु तथा सुखोष्णान् ।
तत्प्रत्यनीकौषधसंप्रयुक्तान् सर्व्वत्र वस्तीन् प्रविभज्य दद्यात् ॥२०॥
न बृंहणीयान् विदधीत वस्तीन् विशोधनीयेषु गदेषु वैद्यः ।
कुष्ठप्रमेहादिषु मेदुरेषु ये चापि केचिच्च विशोधनीयाः ॥
क्षीणक्षतानां न विशोधनीयान् न शोषिणां नो भृशदुर्ब्बलानाम् ।
न मूर्च्छितानां न विशोधितानां येषाञ्च दोषेषु निबद्धवायुः* ॥२१॥

प्रकारेषु स्नेहवस्तिरनुवासनवस्तिरिष्टः । याश्चेत्यादि । नृभिः पुंभिः समेताः सङ्गता अपि याश्च स्त्रियो वातकृतोपसर्गान्न गर्भं गृह्णन्ति, ये च नराः क्षीणेन्द्रियादयस्तेषाञ्च वस्तिः परमः प्रदिष्टः ॥ १९ ॥

गङ्गाधरः—वस्तिप्रभेदकरणमाह—उष्णेत्यादि । तत्प्रत्यनीकरुष्णाभिभूतपूष्णप्रत्यनीकैः शीताभिभूतेषु शीतप्रत्यनीकरौषधः प्रयुक्तान् प्रविभज्य वस्तीन् सर्व्वत्र दद्यात् ॥ २० ॥

गङ्गाधरः—वस्तिषु निषेध्यानाह—नेत्यादि । विशोधनीयेषु गदेषु बृंहणीयान् वस्तीन न विदधीत । तद् विवृणोति कुष्ठेत्यादि । क्षीणेत्यादि । विशोधनीयान् वस्तीन् क्षीणक्षतादीनां न विदधीत ॥ २१ ॥

घृष्टकायाः । रुग्ना इति सन्धिमुक्ताः । भक्तानभिनन्दनेऽन्नारोचके । वातकृतोपसर्गा इति वातकृतोपद्रवाः । क्षीणेन्द्रिया इति अतिक्षीणशुक्राः । अत्र शुद्धवातादिष्वनुवासनम्, भक्तानभिनन्दनप्रकारेषु च निरूह इत्याद्यर्थोऽनुसरणीयः ॥ १९ ॥

चक्रपाणिः—सम्प्रति केषु च कश्च वस्तिरिति प्रश्नस्योत्तरम्—उष्णाभिभूतेष्वित्यादि । उष्णाभिभूते तथा शीताभिभूत इति वक्तव्ये, येन सर्व्वत्र इति करोति, तेन स्निग्धरूक्षगुरुलघ्वभिभूतेऽपि तद्विपरीतौषधसम्पादितो वस्तिर्ज्ञेय इति दर्शयति ॥ २० ॥

चक्रपाणिः—नित्यविशोधनीयगदानाह—कुष्ठप्रमेहादिष्वित्यादि । अत्र आदिशब्देनारोचकतन्द्राश्लीपदादीनां ग्रहणम् । मेदुरेष्विति मेदस्विषु । क्षीणक्षतानां नेति राजयक्ष्मप्रभृतयो ज्ञेयाः । विशोधनीयानित्यपकर्षणकारकान् । येषाञ्च दोषेषु निबद्धमायुरिति ये संशोधनहरणमात्रेणैव प्राणान् जहति ॥ २१ ॥

* निबद्धमायुरिति चक्रधृतः पाठः ।

शाखागताः कोष्ठगताश्च रोगाः मर्म्मोर्द्ध्वसर्व्वावयवागताश्च।
ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति॥
विण्मूत्रपित्तादिमलाशयानां विक्षेपसङ्घातकरः स यस्मात्।
तस्यातिवृद्धस्य शमाय नान्यद् वस्तेर्विना भेषजमस्ति किञ्चित्।
तस्माच्चिकित्सार्द्धमिति ब्रुवन्ति सर्व्वां चिकित्सामपि वस्तिमेके॥
नाभिप्रदेशञ्च कटिञ्च गत्वा कुक्षिं समालोड्य पुनश्च पृष्ठम्।
संस्निह्य कायं शिथिलांश्च कृत्वा दोषान् पुरीषं ग्रथितं विमथ्य।
सुसक्तवेगः सपुरीषदोषः प्रत्यागतो वस्तिरिति प्रशस्तः॥२२।२३॥

गङ्गाधरः—शाखागता इत्यादि। ये शाखागतादयो रोगास्तेषां जन्मनि परं हेतुर्वायोरन्यो न कश्चिदस्ति। यस्मात् स वायुर्विण्मूत्रादिविक्षेपसङ्घातकरः। अतिवृद्धस्य तस्य वायोः शमाय वस्तेर्विना किञ्चिद्भेषजं नास्ति। तस्मादित्यादि। तस्मादेके धन्वन्तर्य्यादयश्चिकित्सार्द्धं वस्तिमेकमपरं चिकित्सार्द्धं सर्व्वां चिकित्सां ब्रुवन्ति। कस्मादेवमुत्कृष्टो वस्तिरित्यत आह—नाभीत्यादि। नाभिप्रदेशादिगमनादिपूर्व्वकप्रत्यागमनं वस्तेः प्रशस्ततायां हेतुः॥ २२। २३॥

चक्रपाणिः—वस्तेर्बहुविषयां स्तुतिमाचक्षाणः 'किंगुणो वस्तिः' इति प्रश्नस्यैवोत्तरं पुनराह—शाखागता इत्यादि। शाखाकोष्ठमर्म्मगता इत्यनेन त्रिविधशाखादिरोगमार्गो गृहीतः। मर्म्मजशब्देन हि मध्यमरोगमार्गाश्रयिणां सन्धिजानामपि साहचर्य्याद् ग्रहणम्। इह मर्म्मास्थिसन्धयो हि मध्यमरोगमार्ग उक्तः। ऊर्द्ध्वसर्व्वशब्देन च ऊर्द्ध्वाधस्तिर्य्यग्भेदादप्युक्तरोगमार्गत्रयग्रहणम्। 'अवयवाङ्गज'शब्देन च प्रादेशिकसर्व्वाङ्गभेदादप्युक्तग्रहणम्। वायोः परमिति वायोः परेण कश्चित् श्रेष्ठ इति यावत्। एतेन यद्यपि कफपित्ते अपि रोगेषु कारणे भवतः, तथापि वायुरेव श्रेष्ठः इत्युच्यते। वायोः श्रेष्ठत्व एव हेतुमाह—विण्मूत्रेत्यादि। पित्तादीत्यत्र आदिशब्देन कफस्य ग्रहणम्, न च मलशब्देन कफस्य ग्रहणम्। मलशब्देन चेतरधातुमलानां खमलादीनाञ्च ग्रहणम्। आशयशब्देन मलव्यतिरिक्तप्रसादाख्यानामाशयानां धातूनाञ्च ग्रहणम्। विक्षेपसंहारकर इति वियोगमेलककरः। एतेन यस्माद् वायुरेव दोषमलधातूनां संयोगविभागौ करोति, तेन दोषधातुविण्मलमेलकरूपनिखिलव्याधिकरणे वायुरेव प्रधानं भवतीति भावः। किंवा आशयशब्दः प्रत्येकं विडादिभिः सम्बध्यते, स्थानेन च स्थानिनो लभ्यन्ते, विडादिसंयोगविभागेनैव च सर्व्वव्याधिकरणपरिग्रहो भवति। भवत्येवं वस्तिर्वातहराणाम् वस्तावर्द्धचिकित्सारूपता तथा सर्व्वचिकित्सारूपता।

तत्र वस्तेः कृताकृतलक्षणानि क्रमेणाह नाभीत्यादि। विलोड्येति संक्षोभ्य।

सनाभिदेशं कटिपार्श्वकुक्षिं गत्वा शकृद्दोषचयं निरस्य।
सङ्क्लिप्तवेगः सपुरीषदोषः सम्यक् सुखेनैति च यश्च वस्तिः॥
प्रसृष्टविण्मूत्रसमीरणत्वं रुच्यग्निवृद्ध्याशयलाघवादि।
रोगोपशान्तिः प्रकृतिस्थता च बलं ततः स्यात् सुनिरूढलिङ्गम्॥ २४
स्यात् हृच्छिरोरुग्गुदकुक्षिलिङ्गेष्वर्त्तिः प्रतिश्यायविकर्त्तिके च।
हृल्लासकासारुचिमूत्रसङ्गः श्वासो न सम्यक् च निरूहिते स्यात्॥ २५
लिङ्गं यदेवातिविरेचितस्य भवेत् तदेवातिनिरूहितस्य॥ २६॥
प्रत्येत्यसक्तं सशकृच्च तैलं रक्तादि-*-बुद्धीन्द्रियसंप्रसादः।
†स्वप्नोऽतिदृष्टिर्लघुता बलञ्च सृष्टाश्च वेगाः स्वनुवासिते स्युः॥ २७

गङ्गाधरः—सेत्यादि सम्यङ्निरूढलक्षणम्। यश्च प्रणिहितो वस्तिः सनाभिदेशं नाभिदेशसहितं सुखेन पुनरेति तत् सुनिरूढलिङ्गम्॥ २४॥

गङ्गाधरः—असम्यङ्निरूढलक्षणमाह—स्याद्धृदित्यादि। विकर्त्तिका कर्त्तनवत् पीड़ा। न सम्यङ् निरूढ़िते असम्यङ् निरूढ़िते लिङ्गम्॥ २५॥

गङ्गाधरः—अतिनिरूढलक्षणमाह—लिङ्ग यदेवेत्यादि॥ २६॥

गङ्गाधरः—इत्यतिनिरूढलक्षणमुक्त्वा सम्यगनुवासनलक्षणमाह—प्रत्येतीत्यादि। तत्र यदनुवासने दत्तं तैलं तत् सशकृदसक्तमलग्नं प्रत्येति। स्वनुवासिते सम्यगनुवासिते॥ २७॥

संस्नेह्य कायमिति वीर्य्यरूपेण सारेण कायं व्याप्य। उक्तं हि—"वीर्य्येण वस्तिरादत्ते दोषानापादमस्तकात्" इति। स्नेहशब्देन च सारोऽभिधीयते। यथा—"देहः स्नेहपरिक्षयात्" इति। सम्यगिति निरवशेषेण। सुखेनेति विकारमकृत्वा। तादात्विकवस्तिसम्यग्योगलक्षणमभिधायोत्तरकालभवभावमाह—प्रसृष्टेत्यादि। आशयलाघव नीत्यत्र आमयलाघवानीति पाठे रोगोपशान्तिरित्यनन्तरं वाशब्दो ज्ञेयः, तेन रोगोपशान्तिरिह निरूहसाध्यविकाराणामुपशान्तिः॥ २२—२४॥

चक्रपाणिः—स्यादित्यादि वस्त्ययोगलक्षणम्। न सम्यक् निरूहिते इत्ययोगेन निरूहिते। वस्त्यतियोगलक्षणमतिदेशेनाह—लिङ्गमित्यादि। अनुवासनसम्यग्योगलक्षणमाह—प्रत्येतीत्यादि।

* वक्त्रादि इति क्वचित् पाठः। † स्वप्नानुवृत्तिरिति चक्रसम्मतः पाठः।

अधःशरीरोदरबाहुपृष्ठ-पार्श्वेषु रुक् रूक्षखरञ्च वर्च्चः।
ग्रहश्च विण्मूत्रसमीरणानामसम्यगेतान्यनुवासिते स्युः ॥ २८ ॥
हृल्लासमोहक्लमसादमूर्च्छा विकर्त्तिका चात्यनुवासिते स्युः ॥२९॥
त्रीन् यस्य यामाननुवर्त्तते हि स्नेहो नरः स्यात् स विशुद्धदेहः।
आश्वागतेऽन्यस्तु पुनर्विधेयः स्नेहो न संस्नेहयति ह्यतिष्ठन् ॥३०
द्विःषण्मताः कर्म्मसु वस्तयो हि काले ततोऽर्द्धेन तथा च योगे।
सान्वासना द्वादश वै निरूहा प्राक् स्नेह एकः परतश्च पञ्च ॥

गङ्गाधरः—असम्यगनुवासनलक्षणमाह—अधःशरीरेत्यादि। एतानि लिङ्गान्यसम्यगनुवासिते ॥ २८ ॥

गङ्गाधरः—अत्यनुवासनलक्षणमाह—हृल्लासेत्यादि। मूर्च्छान्तं बहुवचनान्तमेकपदम्। अत्यनुवासितेऽनुवासनातियोगे ॥ २९ ॥

गङ्गाधरः—सम्यगनुवासने स्नेहस्थितिकालमाह—त्रीनित्यादि। यस्यानुवासने दत्तः स्नेहस्त्रीन् यामान् दानादनु वर्त्तते तिष्ठति, त्रियामं स्थित्वा प्रत्येति, स नरो विशुद्धदेहः स्यात्। आश्वागते स्नेहे पुनरनुवासनवस्तिविधेयो देयः। कस्मात्? हि यस्मात् स्नेहोऽतिष्ठन् न स्नेहयति ॥ ३० ॥

गङ्गाधरः—वस्तिसङ्ख्यामाह—द्विःषडित्यादि। द्विःषडिति द्वादश वस्तयः। कर्म्मसु चिकित्सितकर्म्मसु। इति कर्म्मवस्तिः। तथा काले वस्तिस्ततोऽर्द्धेन षड्वस्तयः, योगे च तथार्द्धेन षड् वस्तयः स्युरिति। तद् विवृणोति सान्वासना

असक्तामति सङ्गं विना। रक्तादयो धातवः। स्वप्नानुवृत्तिर्निद्रानुवृत्तिः। सृष्टा इत्यबद्धाः। अध इत्याद्यनुवासनायोगलक्षणम्। रूक्षखरता चात्र शरीरस्यास्नेहनादेव। हृल्लासादि असम्यग्योगलक्षणम् ॥ २५—२९ ॥

चक्रपाणिः—उक्तस्नेहप्रत्यागमनकालमाह—यस्येत्यादि। यामानिति प्रहरान्। स विशुद्धदेह इति 'सः' अनुवासनयोगप्रयोगसम्यग्योगादनुवासनव्यापत्तिरहित इत्यर्थः। आश्वागते इति शीघ्रं प्रत्यागते। अन्यस्तु विधेय इति तदैवान्यः स्नेहो देयः। पुनः स्नेहदानोपपत्तिमाह—स्नेहो न स्नेहयति ह्यतिष्ठन्निति ॥ ३० ॥

चक्रपाणिः—सम्प्रति सङ्ख्याप्रश्नस्योत्तरविशेषमाह—त्रिंशदित्यादि। कर्म्मकालयोगसंज्ञा यथाक्रमं त्रिंशत्षोड़शाष्टवस्तिसमुदयेषु ज्ञेया। कालस्ततोऽर्द्धेनेत्यत्र ऊर्द्धशब्दो न सम-प्रतिवचनः, तेन त्रिंशदर्द्धैः षोड़शभागा भवन्ति। सान्वासना इत्यादिना कर्म्मादीनां निरूहानुवासन-

काले त्रयोऽन्तेऽन्तरितस्तथैकः स्नेहा निरूहैः सहिताश्च षट् स्युः ।
योगे निरुहास्त्रय एव देयाः स्नेहास्तथा षट् च परादिमध्याः ॥३१॥*

इति। सानुवासना निरूहा द्वादश कर्म्मसु प्राक् स्नेह एको निरूहवस्तिः पूर्व्वमेकः स्नेहवस्तिस्ततो निरूहवस्तिरततः परतः पञ्च सानुवासना निरूहा इति कर्म्मसु द्वादश वस्तयः। तथा च—एकोऽनुवासनवस्तिः पूर्व्वं ततो निरूहस्ततोऽनुवासनं ततो निरूहस्ततोऽनुवासनं ततो निरूहस्ततोऽनुवासनं ततो निरूहस्ततोऽनुवासनं ततो निरूहस्ततोऽनुवासनं ततो निरूह इति द्वादश कर्म्मसु वस्तयः। काले इत्यादि। काले सान्वासनास्त्रय इति षट्, तत्र प्राक् स्नेह एको निरूहात् पूर्व्वमेकः स्नेहवस्तिस्ततो निरूहस्ततोऽनुवासनवस्तिस्ततो निरूहस्ततः स्नेहवस्तिस्ततो निरूह इति षट् सानुवासना निरूहा वस्तयः काले। अथ योगे तथार्द्धेन सानुवासनाः षड् वस्तयः। तद् यथा—त्रय एव निरूहा देयास्तथा परादिमध्याः स्नेहाश्च त्रय इति षट्। तथा च—पूर्व्वमेकोऽनुवासनवस्तिस्ततो निरूहस्ततः स्नेहवस्तिस्ततो निरूहस्ततः स्नेहवस्तिस्ततो निरूह इत्येवं षट् योगे स्युरिति। परादिमध्यास्त्रयः स्नेहास्त्रयो निरूहा इति॥ ३१॥

विभागमाह। एकमनुवासनं दत्त्वा दीयन्त इति सान्वसनाः, एवमनुवासनेन प्रत्येकं योगाद् द्वादश निरूहाश्चतुर्व्विंशतिर्वस्तयो भवन्ति। प्रागित्यारम्भे। परत इति द्वादशनिरूहोत्तरकाले। निरूहान्तरिताश्च षट् स्युरिति निरूहेणान्तरीकृताः, एवञ्च द्वादश वस्तयः पूरणीयाः। पञ्चैव परादिमध्या इति पञ्च स्नेहा अन्ते मध्ये आदौ च येषां विभक्तास्ते तथा। अत्र चादौ स्नेहद्वयम्, अन्ते च स्नेहद्वयम्, निरूहत्रयमध्ये चैकमनुवासनम्, एवं पञ्च स्नेहा भवन्ति। ये तु निरूहदिन एवानुवा नं वदन्ति, तन्मते आदावेक एव, अन्तेऽपि दिनान्तरे एकः, एवं पञ्च भवन्ति। एवं कर्म्मकालयोरपि निरूहदिन एव दिनान्तरे अनुवासनं व्याख्येय.। अत्र चैकस्नेहान्तरितानां निरूहदाने वातक्षोभो नाशङ्कनीयः। कर्म्मादिषु निरूहा यापनावस्तिरूपा दीयन्ते, ये स्निग्धाः एवेति कृत्वा न वातक्षोभका भवन्ति। एते च कर्म्मादयो यद्यपि शास्त्रपदेषु न व्यवह्रियन्ते, तथापि तद्विधव्यवहारार्थमेवेयं कर्म्मादिसंज्ञा, यथा ममकमहाममकतैलादिसंज्ञा, तेन कर्म्मादिसंज्ञा शास्त्रे व्यवहारादर्शनात् कर्म्मादिप्रतिपादको ग्रन्थोऽनार्ष इति यदुच्यते, तन्निरस्तम्। कर्म्मादिसंज्ञा च तन्त्रान्तरेऽप्यस्ति, तथाहि जतूकर्णः,—"वस्त्रयस्त्रिंशत् षोड़शाष्टौ च कर्म्मकालयोगा निरूहा स्नेहान्तरिता द्वादश षट् त्रयः एकस्नेहारम्भा पञ्च एकान्ताः" इति।

* त्रिंशन्मताः कर्म्मसु वस्तयो हि कालस्ततोऽर्द्धेन ततश्च योगः। सान्वसना द्वादश वै निरूहाः प्राक् स्नेह एकः परतश्च पञ्च॥ काले त्रयोऽन्तः पुरतस्तथैकः स्नेहा निरूहान्तरिताश्च षट् स्युः। योगे निरूहास्त्रय एव देयाः स्नेहास्तथा पञ्च परादिमध्याः॥ इति पाठान्तरम्।

त्रीन् पञ्च वाहुश्चतुरोऽथ षड् वा
वाताधिकानामनुवासनीयान्।
स्नेहान् प्रदायाशु भिषग् विदध्यात्
स्रोतोविशुद्ध्यर्थमतो निरूहान्॥ ३२॥
विशुद्धकायस्य ततः क्रमेण
स्निग्धन्तु तैः स्वेदितमुत्तमाङ्गम्।
विरेचयेद् द्वित्रिरथैकशो वा
बलं समीक्ष्य त्रिविधं मलानाम्॥ ३३॥

गङ्गाधरः—त्रीनित्यादि। वाताधिकानामनुवासनीयान् स्नेहान् वस्तीन् त्रीनाहुरथवा पञ्चाहुरथवा चतुर आहुरथवा षडाहुः। तान् स्नेहान् वस्तीन् भिषक् स्रोतोविशुद्ध्यर्थं विदध्यात्। अतः परं निरूहान् विदध्यात्॥ ३२॥

गङ्गाधरः—अथ शिरोविरेचनमाह—विशुद्धेत्यादि। एवं प्रकारेणादौ वमनेन ततो विरेचनेन ततोऽनन्तरं सानुवासननिरूहेण विशुद्धकायस्य ततः

हारीतेऽपि—त्रिंशकं कर्म्म बुधा वदन्ति" इत्याद्युक्तम्। कर्म्मादीनां प्रयोगं केचिद् वातादिषु वदन्ति॥ ३१॥

चक्रपाणिः—त्रीन् पञ्चेत्यादिना स्नेहनार्थमनुवासनमाह। अत्र ये वातादिकानामिति पठन्ति, तेषाम् आदिशब्देन पित्तकफयोरपि ग्रहणम्। बहुवचनन्तु तद्गुणसंविज्ञानबहुव्रीहिणा वातस्य ग्रहणाद् बहुत्वसंख्यायोगादुपपन्नम्। यथोक्तं कुष्ठनिदाने—"वातादिषु प्रदुष्टेषु" इति। तथा त्वगाश्रितेऽपि "वातादीनां रसादीनाम्" इति बहुत्वं निर्द्दिष्टम्। अन्ये तु—वाताधिकानाम् इति पठन्ति। अत्र चतुर्णां षण्णां स्नेहानां युग्मरूपाणामपि दानमविरुद्धमेव, एतदनुवासनस्य निरूहाङ्गतया स्नेहनार्थं क्रियमाणत्वात्। अयुग्मादानन्तु "वस्तीनयुग्मान्" इत्यनेन स्वप्रधानतयानुवासनस्य विहितमिति भिन्नविषयतया न विरोधः, यतः स्नेहनप्रयोजनमनुवासनमेतेन स्नेहे भूत एवाऽयुग्मदानेन निवर्त्तनीयम्। किंवा अयुग्मा तन्त्रतो व्याख्यानेन संख्यैवोच्यते। तथाहि—त्रीन्, पञ्च, त्रीन् चतुर इति सप्त, पञ्च चतुर इति नव, पञ्च षडित्येकादश इति पञ्च विकल्पा इह विधीयन्ते। तन्त्रान्तरे स्नेहस्य युग्मदानमुक्तम्, यथा—"रूक्षस्य बहुवातस्य द्वौ त्रीन् वाप्यनुवासनान्। दद्यात् स्निग्धतनुं ज्ञात्वा ततः पश्चान्निरूहयेत्" इति। स्रोतःशब्देन विबद्धशिराऽभिहिता॥ ३२॥

चक्रपाणिः—सम्प्रतिक्रमागतशिरोविरेचनस्य कल्पनामसम्यगयोगातियोगलक्षणञ्चाह—विशुद्धेत्यादि। विशुद्धदेहस्येति, एतच्च पञ्चकर्म्मसम्पादनीयकर्त्तविषयत्वं शुद्धिपूर्व्वकत्वञ्च शिरो-

उरःशिरोलाघवमिन्द्रियाणां
स्रोतोविशुद्धिश्च भवेद् विशुद्धे ।
गलोपलेपश्च शिरोगुरुत्वं
निष्ठीवनञ्चाप्यथ दुर्विरिक्ते ॥ ३४ ॥
शिरोऽक्षिशङ्खश्रवणार्त्तितोदा-
वत्यर्थशुद्धे तिमिरञ्च पश्येत् ।
स्यात् तर्पणं तत्र मृदु द्रवञ्च
स्निग्धस्य तीक्ष्णन्तु पुनर्न योगे ॥
इत्यातुरस्वस्थविधिः * प्रयोगे
बलायुषोर्वृद्धिकृदामयघ्नः ॥ ३५ ॥

क्रमेण पुनरुत्तमाङ्गं मस्तकं ततः पूर्व्वोक्तः स्नेहः स्निग्धं तथा ततः पूर्व्वोक्तः स्वेदः स्वेदितं मलानां बलं समीक्ष्य त्रिविधमुत्तममध्यमाधमं द्विस्त्रिरेकशो वा वारान् विरेचयेत् ॥ ३३ ॥

गङ्गाधरः—तस्य शिरोविरेचनस्य सम्यग्योगलक्षणमाह—उरःशिर इत्यादि। विशुद्धे सम्यक् शुद्धे शिरसि। असम्यग्योगलक्षणमाह—गलोपलेपश्चेत्यादि ॥३४

गङ्गाधरः—अतियोगलक्षणमाह—शिरोऽक्षीत्यादि। तिमिरञ्च पश्येदित्यन्धकारं पश्येत्। तत्रातियोगे प्रतिकारमाह—स्यात् तर्पणमित्यादि। तत्रातियोगे इति शिरोविरेके पुनः स्निग्धस्य तं नरं स्निग्धं कृत्वा मृदु द्रवञ्च तर्पणं विदध्यादिति, न तु तीक्ष्णं तर्पणं विदध्यादिति। इतीत्यादि। इति खल्वेष

विरेचनस्येहोच्यते। अनेन वमनादिना शुद्धस्यापि शिरोविरेचनैकसम्पाद्य पुरुषेऽयं क्रमो ज्ञेयः। स्निग्धमित्यङ्गशिरोवस्तिपाण्यादि। तलस्वेदितमिति हस्ततलस्वेदितम्। त्रिर्द्विरथैकश इति तद्दिनपूर्व दोषाणामुत्कृष्टत्वादि बलत्रैविध्यमपेक्ष्य यथायोग्यतया योज्यम्। लाघवमिन्द्रियाणामिति चक्षुरादीनां स्वविषये पाटवम् ॥ ३३ । ३४ ॥

चक्रपाणिः—तिमिरञ्च पश्येदिति तमोव्याप्तं सर्व्वं पश्येदिति। तस्यातियोगायोगयोश्चिकित्सानुवक्तव्यतयाऽनुषङ्गतामाह—स्यात् तर्पणमित्यादि। मृदु द्रवञ्चेत्यनेनातियोगचिकित्सितम्। तीक्ष्णन्तु पुनर्नयोग इति अयोगशिरोविरेचनस्यैव पुनस्तीक्ष्णशिरोविरेचनं देयम्। उक्तञ्च कर्मप्रयोगमुपसंहरति—इत्यातुरेत्यादि। आतुरस्वस्थसुखः इति वचनेन आतुरे आमयस्याप-

* इत्यातुरस्वस्थसुख इति चक्रधृतः पाठः।

कालस्तु वस्त्यादिषु याति यावान्
तावान् भवेद् द्विः परिहारकालः॥ ३६॥
अत्यासनस्थानवचांसि पानं *
स्वप्नं दिवा मैथुनवेगरोधान्।
शीतोपचारातपशोकरोषान्
त्यजेदकालाहितभोजनञ्च॥ ३७॥
बद्धे प्रणीते विषमे च नेत्रे
मार्गे तथार्शःकफविड्विबन्धे।

पञ्चानां कर्म्मणाम् आतुरस्वस्थविधिः आतुर्य्येविधिः स्वास्थ्यविधिश्च प्रयोगे बलादिकृदामयघ्नश्च॥ ३५॥

गङ्गाधरः—वर्जनीयं कालमाह—कालस्त्वित्यादि। वस्त्यादिषु पञ्चसु कर्म्मसु क्रियमाणेषु यावान् कालो याति, तावान् कालो द्विर्द्विगुणः परिहारस्यापथ्यसेवनत्यागस्य कालः॥ ३६॥

गङ्गाधरः—त्याज्यानाह—अत्यासनेत्यादि। अतिशयेनासनं स्थानं वचनमित्यादि त्यजेत्, अकाले भोजनमहितभोजनञ्च त्यजेदिति कृतवान्तादिः॥३७॥

गङ्गाधरः—प्रणीयमानश्च न याति वस्तिः केनेत्यस्य प्रश्नस्योत्तरमाह—बद्ध इत्यादि। विषमे बद्धे नेत्रे प्रणीतेऽपि वस्तिर्न याति, अर्शःकफविड्विबद्धे मार्गे

हन्तृतया, स्वस्थे च बलायुर्वृद्धिकर्त्तृतया यथोक्तपञ्चकर्म्मप्रयोगः सुखहेतुर्भवतीति ज्ञेयम्। स्वस्थे च पञ्चकर्म्मप्रवृत्तिः 'माधवः प्रथमे मासि' इत्यादिना सूत्रस्थाने प्रोक्तैव ज्ञेया॥ ३५॥

चक्रपाणिः—'कृते कियान् वा परिहारकालः' इत्यस्योत्तरमाह—कालस्त्वित्यादि। तावान् भवेद् द्विः परिहारकाल इति वस्त्यादिप्रयोगे यावान् कालो व्याप्यते, तत्कालद्विगुणकालं यावत् परिहार्य्यत्वेनोक्तं परिहर्त्तव्यम्। अत्र आदिशब्देन वमनविरेचनशिरोविरेचनानां ग्रहणम्। वस्तेस्त्वादौ व्युत्पादनेन प्राधान्यं दर्शयति॥ ३६॥

चक्रपाणिः—'किं वर्ज्जनीयम्' इति प्रश्नस्योत्तरम्—अत्यासनेत्यादि। आसनमुपविष्टावस्थानम्। स्थानमूर्द्ध्वतया स्थानम्। यानं रथाश्वादिना यानम्। एत आविष्कृततमा इहोक्ताः, तेन क्रोधातिचिन्तनादयो येऽप्युपकल्पनीयादौ वमनादिप्रयोगे निषिद्धाः, तेऽपि न सेव्या एव॥ ३७॥

चक्रपाणिः—'प्रणीयमानः' इत्यादि प्रश्नस्योत्तरम्—बद्ध इत्यादि। नेत्रे बद्धं विषमं प्रणीते

* यानमिति चक्रधृतः पाठः।

न याति वस्तिर्न सुखं निरेति
दोषावृतोऽल्पो यदि वाल्पवीर्य्यः ॥ ३८ ॥
प्राप्ते तु वर्च्चोऽनिलमूत्रवेगे
वाते विवृद्धेऽल्पबले गुदे च ।
अत्युष्णतीक्ष्णश्च मृदौ च कोष्ठे
प्रणीतमात्रः पुनरेति वस्तिः ॥ ३९ ॥
मेदःकफाभ्यामनिलो निरुद्धः
शूलाङ्गमर्द्दश्वयथून् करोति ।
स्नेहं नियुञ्जन्नबुधस्तु तस्मै
संवर्द्धयत्येव हि तान् विकारान् ॥ ४० ॥

च वस्तिर्न याति । केन सुचिराद् वस्तिरेतीत्यस्योत्तरमाह । दोषावृतो वस्ति सुखं निरेति चिराच्च निरेति, अल्पो वाल्पवीर्य्यो वा वस्तिर्न सुखं निरेति चिराच्च निरेतीति ॥ ३८ ॥

<u>गङ्गाधरः</u>—केनेति शीघ्रमित्यस्योत्तरमाह—प्राप्ते त्वित्यादि । वर्च्च-आदिवेगे प्राप्ते वाते च विवृद्धे गुदे चाल्पबले मृदौ च कोष्ठेऽत्युष्णतीक्ष्णो वस्तिः प्रणीत-मात्रः पुनः शीघ्रमेति ॥ ३९ ॥

<u>गङ्गाधरः</u>—मेद इत्यादि । अनिलो मेदःकफाभ्यां निरुद्धः सन् शूलादीन् करोति । साध्या गदा इत्यस्योत्तरमाह—स्नेहमित्यादि । अबुधो वैद्यः येषां विकाराणां प्रशमाय यस्य स्नेहं नियुञ्जन् तस्य जनस्य तान् विकारान् संवर्द्धयति ।

गुदावयवबद्धत्वात् न याति, तथा न सुखं निरेतीत्यादिना 'सुचिराच्च केन' इति प्रश्नस्योत्तरम् । न सुखं निरेतीति चिरेण दुःखं क्रुद्धो वाऽऽगच्छतीत्यर्थः । दोषावृत इति दोषेण बलीयसाऽवरुद्धः । अल्प इति अल्पमानः । अल्पवीर्य्य इति उष्णलवणाद्यभावान्मृदुवीर्य्यः ॥ ३८ ॥

<u>चक्रपाणिः</u>—प्राप्त चेत्यनेन शीघ्रागमनहेतुमाह । वातेऽतिवृद्धे स्नेहो गुदे वातेन प्रतिहतत्वान्न यात्याशयम्, ततः शीघ्रमागच्छति । अल्पबले गुदे स्नेहं धारयितुं न शक्नोति पुरुषः, अल्प-बलत्वञ्च गुदस्य सृक्कणीबलीदौर्ब्बल्यात् ॥ ३९ ॥

<u>चक्रपाणिः</u>—'साध्याः' इत्यादि प्रश्नस्योत्तरम् । मेदःकफाभ्यामित्यादि—मेदसा कफेन वेति मेदःकफाभ्याम् । 'अत्र शूलादीन्निरीक्ष्य शुद्धवातभ्रान्त्या स्नेहं प्रयुङ्क्ते, नावरणं जानाति,

रोगास्तथान्येऽपि वितर्क्यमाणाः
परस्परेणापि गृहीतमार्गाः।
सन्दूषिता धातुभिरेव चान्यैः
स्वैर्भेषजैर्न प्रशमं व्रजन्ति॥ ४१॥

सर्व्वाङ्ग-*-रोगप्रशमाय कर्म्म
हीनातिमात्रं विपरीतकालम्।
मिथ्योपचाराच्च न तं विकारं
शान्तिं नयेत् पथ्यमपि प्रयुक्तम्॥ ४२॥

तथान्येऽपि रोगाः परस्परेण गृहीतमार्गाः सन्तो वितर्क्यमाणाः स्युः। अन्यधातुभिश्च सन्दूषिता रोगाः स्वभेषजैः प्रशमं न यान्ति॥ ४०। ४१॥

गङ्गाधरः—अपरञ्च—सर्व्वाङ्गरोगप्रशमाय विपरीतकालमयथाकाले हीनातिमात्रं कर्म्म मिथ्योपचारादयथार्थप्रयोगात् तं तं विकारं शान्तिं न नयेत्, पथ्यमपि प्रयुक्तं शान्तिं न नयेत्॥ ४२॥

अत एव अबुधः इति कृतम्। अन्यत्राप्युक्तम्—"कुपितो मार्गसंरोधान्मेदसो वा कफस्य वा। अतिवृद्धानिलो नादौ शस्तं स्नेहेन बृंहणम्" इति। अवितर्क्यमाणा इति असम्यग्ज्ञायमानाः, असम्यग्ज्ञायमानत्व एव हेतुमाह—परस्परेणेत्यादि। रोगशब्देनात्र दोषोऽभिप्रेतः। परस्परेण प्रतिबद्धमार्गा अतो दुर्ग्रहा भवन्ति, तथा धातुभिश्च रक्तादिभिश्च सन्दूषिताः सम्मूर्च्छिताः सन्तो दुर्ज्ञेया भवन्ति, अविज्ञाताश्च स्वैर्भेषजैर्न प्रशमं व्रजन्ति। स्वैर्भेषजैरिति मार्गावरोधादिकारणदोषधात्वन्तरनिरपेक्षकैरेकदोषभेषजैः। तद्धि तथाभूतानां भेषजं यौगिकं न भवत्येव, अतोऽनुपशमो युक्त एव। एवञ्च दोषाणां परस्परावरोधान् तथा धातुसम्मूर्च्छनविशेषांश्चावगम्यैव व्याधौ प्रपञ्चोऽनुसरणीयः॥ ४०। ४१॥

चक्रपाणिः—अथ विज्ञातेऽपि व्याधौ भिषजाऽसम्यक्प्रयोगादिभिर्वर्द्धमानेऽसिद्धिमाह—सर्व्वञ्चेत्यादि। विपरीतकालमिति अनुचितकालकृतम्। मिथ्योपचाराच्चेति भेषजानां तथाऽकरणात्। यथा—भेषजस्य सम्यक्परिणामे सति भोक्तव्यम्। यद् यौगिकं भेषजम्, तत् सम्यक् प्रयुक्तं सिध्यतीति सिद्धान्तः॥ ४२॥

* सर्व्वञ्चेति चक्रसम्मतः पाठः।

तत्र श्लोकः ।

प्रश्नानिमान् द्वादश पञ्चकर्म्मा-
ण्युद्दिश्य शिष्याय समाहिताय ।
प्रजाहितार्थं भगवान् महात्मा
सम्यग् जगादर्षिवरोऽत्रिपुत्रः ॥ ४३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
कल्पनासिद्धिर्नाम प्रथमोऽध्यायः ॥ १ ॥

गङ्गाधरः—इति सर्व्वप्रश्नोत्तरं समाप्तम्। अथोपसंहरति—तत्र श्लोक इति । प्रश्नानिमानित्यादि । पञ्चकर्म्माण्युद्दिश्य द्वादश प्रश्नान् सम्यग् जगाद प्रत्युवाचेत्यर्थः । यदुपसर्गेणोपसृष्टो धातुर्यमर्थमाह तदर्थवाची स एव हि धातुः, उपसर्गस्तु तद्द्योतक इत्युपसर्गाभावेऽपि तमर्थञ्च स धातुराहेति सिद्धान्तः। प्रतिजगादेत्यर्थः ॥ ४३ ॥

गङ्गाधरः—अध्यायं समापयति अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । अप्राप्ते तु दृढ़बल-प्रतिसंस्कृत एव च ।
सिद्धिस्थानेऽष्टमे स्कन्धे कल्पनासिद्धिनामके । अध्यायेऽत्र जल्प-
कल्प-तरौ गङ्गाधरेण तु । कृते स्कन्धेऽष्टमे सिद्धि-स्थाने तु प्रथमस्य
च । कल्पनासिद्ध्यध्यायस्य शाखा जल्पाभिधेरिता ॥ १ ॥

चक्रपाणिः—प्रश्नानित्यादिनाध्यायार्थं संगृह्णाति । संग्रहश्च व्यक्तः ॥ ४३ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां कल्पनासिद्धिव्याख्या-
नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातः पञ्चकर्म्मीयसिद्धिं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

येषां यस्माच्च कर्म्माणि अग्निवेश न कारयेत् ।
येषाञ्च कारयेत् तानि तत् सर्व्वञ्च प्रवक्ष्यते ॥
पञ्चकर्म्माणि येषान्तु न कुर्य्याद् येन हेतुना ।
येषां यानि च कर्म्माणि तत् सर्व्वं संप्रवक्ष्यते ॥ २ ॥*

चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च ।
सद्राजभिषजां द्वेष्टा तद्द्विष्टः शोकपीड़ितः ॥

<u>गङ्गाधरः</u>—अथाध्यायोद्देशक्रमात् पञ्चकर्म्मीयसिद्धिमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

<u>गङ्गाधरः</u>—यदिहाभिधेयं तदाह—येषां यस्मादित्यादि । यस्मात् कारणाद् येषां सर्व्वाणि चिकित्सितानि कर्म्माणि न कारयेत् येषाञ्च यस्मात् तानि कारयेत् तत् सर्व्वं प्रवक्ष्यते । एवं येषां येन हेतुना पञ्चकर्म्माणि न कारयेत् येषां येन हेतुना तानि पञ्चकर्म्माणि कारयेत् तत् सर्व्वञ्च प्रवक्ष्यते ॥ २ ॥

<u>गङ्गाधरः</u>—चण्ड इत्यादि । चण्डादिः पुरुषो भिषग्विदा वर्ज्जन सर्व्वरेव

<u>चक्रपाणिः</u>—कल्पनासिद्धौ ज्ञातकर्म्मोपयोगस्य कर्म्मप्रवृत्तिनिवृत्तिविषयकजिज्ञासा भवति, ततः तदुपदर्शनार्थं पञ्चकर्म्मीयसिद्धिरुच्यते । पञ्चकर्म्मप्रवृत्तिनिवृत्तिविषयज्ञानार्थमधिकृत्य कृता सिद्धिः पञ्चकर्म्मीया सिद्धिः । येषामित्यादिनाऽध्यायार्थं सङ्कल्प्य प्रतीजानीते । पञ्च कर्म्माणि येषां न कार्य्याणीत्यनेन व्यस्तानि समस्तानि च येषां न कार्य्याणि, तानि पृथग् वक्ष्यन्ते ॥ १ । २ ॥

<u>चक्रपाणिः</u>—अतः चण्ड इत्यादिना सकलपञ्चकर्म्मविषयमाह । यद्यपि च विमाने जनपदोद्ध्वंसनीये रोगभिषग्जितीये वाऽनपवादप्रतीकारादयोऽनुपक्रमणीयत्वेनोक्ता एव, तथापीह प्रकरणागतत्वात् पुनरुच्यते । चण्डादिषु प्रवृत्तिर्भेषजस्याशक्यत्वान्निषिध्यते । कृतघ्नादिषु चाधर्म्मवशादेव भेषजं न सिध्यति । प्रत्युताधार्म्मिकप्रतिक्रिययाऽधर्म्म एव भवतीति निवृत्तिः विधीयते । सतो राजानं भिषजञ्च द्वेष्टीति सद्राजभिषजां द्वेष्टा, किंवा 'सद्' इति राज्ञो भिषजश्च

---

* येषां यस्मात् पञ्चकर्म्माण्यग्निवेश न कारयेत् । येषाञ्च कारयेत् तानि तत् सर्व्वं संप्रवक्ष्यते ॥ इति पाठः समीचीनोऽपि जल्पकल्पतरुटीकाननुगतत्वात् न गृहीतोऽस्माभिः ।

याद्दच्छिको मुमूर्षुश्च विहीनः करणैश्च यः ।
वैरी वैद्यविदग्धश्च श्रद्धाहीनः सशङ्कितः ॥
भिषजामविधेयश्च नोपक्रम्यो भिषग्विदा ।
एतानुपाचरन् वैद्यो बहून् दोषानवाप्नुयात् ॥ ३ ॥
एभ्योऽन्ये समुपक्रम्या नराः सर्व्वरुपक्रमैः ।
अवस्थां प्रविभज्यैषां कार्य्याकार्य्यञ्च वक्ष्यते ॥ ४ ॥

अवम्यास्तु क्षतक्षीणातिस्थूलातिकृशवृद्धबालदुर्ब्बलश्रान्त-पिपासित-क्षुधित-कर्म्मभाराध्वहतोपवास-मैथुनाध्ययनाध्यशन-व्यायामचिन्ताप्रसक्तक्षामगर्भिणीसुकुमारसम्वृतकोष्ठदुश्छर्द्दूर्ध्व-रक्तपित्तप्रसक्तच्छर्द्दूर्ध्ववातास्थापितानुवासित-हृद्रोगोदावर्त्तिनः, मूत्राघातगुल्मप्लीहोदराष्ठीलास्वरोपघाततिमिरशिरःशङ्खकर्णाक्षि-पार्श्वशूलार्त्ताश्च ॥ ५ ॥

कर्म्मभिर्नोपक्रम्य इति। तत्र याद्दच्छिक इति या इच्छा यदृच्छा तया चरति याद्दच्छिकः। वरी तच्चिकित्सकस्य शत्रुः। वैद्यविदग्ध इति य आतुरः स्वयं वैद्यविद्याविदग्ध इव वैद्यविद्याभिमानी। एतेनातुरस्य चिकित्सायां यः कर्त्ता तदुपलक्षणमिदं ख्यापितमिति। भिषजामविधेयश्च अकर्त्तव्यविधिकः। कस्मान्नोपक्रम्य इत्यत उच्यते—एतानित्यादि। एतान् चण्डादीनातुरान् उपाचरन् वैद्यो बहून् दोषानवाप्नुयात् ॥ ३ ॥

गङ्गाधरः—एभ्योऽन्ये चण्डादिभ्य आतुरेभ्योऽन्ये नराः स्वस्थाश्च सर्व्वैरुपक्रमैः समुपक्रम्याः। एषामुपक्रम्याणामवस्थां प्रविभज्य कार्य्याकार्य्य वक्ष्यते। इति सर्व्वोपक्रमे कार्य्याकार्य्यमुक्तम् ॥ ४ ॥

विशेषणम्। तद्द्विष्ट इति सदादिद्वेष्यः। याद्दच्छिको नास्तिकः। विहीनः करणैरित्यकरुणः। वैरी वैद्यापकारकः, वैद्यद्वेष्टा नापकारक इति तु विशेषः। वैद्यविदग्धो वैद्याभिमानी। भिषजामविधेय इति भिषजामनायत्तः। सर्व्वैरिति वमनादिभिरन्यैश्च संशमनादिभिः। एषामिति चण्डादिव्यतिरिक्तानाम् ॥ ३। ४ ॥

चक्रपाणिः—सम्प्रत्युपक्रमणीयानामेव रोगादियोगकृतावस्थाभेदेनाऽकर्त्तव्यपञ्चकर्म्म दर्शयन् आह—अवम्यास्तावदित्यादि। अवम्यादौ 'तावत्' इतिपदं प्राक्प्रस्तुतोपदर्शनार्थम्। प्रसक्तशब्दो मैथुनादिभिः प्रत्येकं सम्बध्यते। सम्वृतकोष्ठो वायुनाल्पीकृतकोष्ठः, वायुव्याप्तकोष्ठ इत्येके ॥ ५ ॥

तत्र क्षतस्य भूयः क्षणनादक्तातिप्रवृत्तिः स्यात्। क्षीणातिस्थूलकृशवृद्धबालदुर्ब्बलानां भेषजबलासहत्वात् प्राणोपरोधः। श्रान्तपिपासितक्षुधितानाञ्च तद्वत्। कर्म्मभाराध्वहतोपवासमथुनाध्ययनाध्यशनव्यायामचिन्ताप्रसक्तक्षामाणां रौक्ष्याद् वातरक्तच्छेदक्षतभयं स्यात्। गर्भिण्या गर्भव्यायामादामगर्भप्रपतनाच्च दारुणरोगप्राप्तिः। सुकुमारस्य हृदयविकर्षणादूर्द्ध्वमधो वा रुधिरातिप्रवृत्तिः। सम्वृतकोष्ठदुश्छर्द्दयोरतिमात्रप्रवाहणाद् दोषाः समुत्क्लिष्टा ह्यन्तःकोष्ठे विसर्पन्तः स्तम्भं जाड्यं वैचित्यं मरणं वा जनयन्ति। ऊर्द्ध्वरक्तपित्तस्योदान ऊर्द्ध्वमुत्क्षिप्य प्राणानाहरेद् रक्तञ्चातिप्रवर्त्तयेत् प्रसक्तच्छर्द्देस्तु तद्वत्। ऊर्द्ध्ववातास्थापितानुवासितानामूर्द्ध्वं वातादिप्रवृत्तिः। हृद्रोगिणो हृदयावरोध उदावर्त्तिनो घोरोदावर्त्तः स्याच्छीघ्रहन्ता। मूत्राघातादिभिरार्त्तानां तीव्रतरशूलप्रादुर्भावस्तिमिरार्त्तानां तिमिराभिवृद्धिः शिरःशूलादिषु शूलातिवृद्धिस्तस्मादेते न वम्याः। सर्व्वेष्वपि खल्वेतेषु विषगरविरुद्धाभ्यवहारामकृतेष्वप्रतिषिद्धं शीघ्रकारित्वाद् दोषाणाम्॥ ६। ७॥

गङ्गाधरः—अथ पञ्चकर्म्मणां कार्य्याकार्य्यमाह—अवम्यास्त्वित्यादि। क्षतक्षीणादयो न वम्या वमनानर्हाः पार्श्वशूलार्त्तान्ताः॥ ५॥

गङ्गाधरः—तत्र दोषमाह—तत्रेत्यादि। तत्र वम्येषु मध्ये क्षतस्य वमनेन भूयः क्षणनादक्तातिप्रवृत्तिः। क्षीणादीनां वमनासहत्वात्। श्रान्तादीनामित्येवमादि स्पष्टम्। अवम्यानामेषामप्यवस्थाविशेषे वमनार्हतामाह—सर्व्वेष्वपीत्यादि। क्षतक्षीणादिषु सर्व्वेषु। दोषाणां विषादिदोषाणाम्॥ ६। ७॥

चक्रपाणिः—तत्र क्षतस्येत्यादिना यथोक्तवमनादाने हेतुमाह। प्राणोपरोधो मरणम्, बलक्षय इत्यन्ये। श्रान्तादीनां विच्छेदपाठेन प्राणोपरोधस्य पूर्व्वापेक्षया हीनमात्रत्वं दर्शयति। वातरक्तच्छेदक्षतभयमित्यत्र रक्तच्छेदो रक्तमोक्षः। सुकुमारस्येति मृदुशरीरस्य। हृदयापकर्षणादिति हृदयहिंसनादिति। तद्वदिति ऊर्द्ध्वरक्तपित्तिनामित्यत्रोक्तः दोषः। अवम्यानामवस्थायां

शेषास्तु वम्याः । पीनसकुष्ठनवज्वरराजयक्ष्मकासश्वास-गलग्रह-गण्डमाला-श्लीपदमेहमन्दाग्निविरुद्धाजीर्णान्नविसूचिका-लसक-विषपीत-दिग्धविषाधोगशोणितपित्त-कफप्रसेक-दुर्नाम-हृल्लासारोचकाविपाकापच्यपस्मारोन्मादातिसार-शोषपाण्डुरोग-मुखपाकदुष्टस्तन्यादयः । श्लैष्मिका व्याधयो विशेषेण महा-रोगाध्यायोक्ताश्च एतेषु हि वमनं प्रधानतममुक्तं केदारसेतुभेदे शाल्यादिशोषविनाशवदिति ॥ ८ ॥

अविरेच्यास्तु सुभगक्षतगुदमुक्तनालाधोगरक्तपित्तविलङ्घित-दुर्ब्बलेन्द्रियाल्पाग्निनिरूढ़कामादिव्यग्राजीर्णनवज्वरमदात्ययिता-

गङ्गाधरः—शेषास्त्वित्यादि । क्षतादिपाश्वेश्वान्तान्तेभ्यः शेषा जना वम-नार्हाः । तत्र प्रधानवम्यानाह—पीनसेत्यादि । विशेषेण महारोगाध्यायोक्ता विंशतिः श्लेष्मिका व्याधयः । कथं प्रधानतममेषु वमनं तदाह—केदारेत्यादि ॥८॥

गङ्गाधरः—अथाविरेच्यानाह—अविरेच्यास्त्वित्यादि । सुभगक्षतगुदादयश्च गभिण्यन्ताः । क्षतक्षीणातिस्थूलातिकृशवृद्धबालदुर्ब्बलश्रान्तापिपासितक्षुधित-

वमनमाह—सर्व्वेष्वपीत्यादि । यद्यपि चास्याध्यायान्ते सर्व्वत्रैव निर्दिष्टेष्ववस्थायां निषिद्धमपि वक्ष्यति, तथापीह विधानेनास्यावश्यकर्त्तव्यता वमन इति बोध्यम् ॥ ७ ॥

चक्रपाणिः—शेषास्तु वम्या इत्यभिधायापि पीनसादीन् पुनर्वमनविषयतया दर्शयिष्यन् तेषु विशेषेण वमनस्य यौगिकतां दर्शयति । एवमुत्तरत्रापि पुनर्विरेचनादिविषयोपदर्शने व्याख्येयम् । प्रधानतममिति महारोगाध्यायेनोक्तम् । केदारसेतुभेदे इत्यादिनैकदेशेन महारोगाध्यायोक्तं प्राधान्यख्यापकं ग्रन्थं ग्राहयति । तेन यदुक्तं तत्र—"वमनं खलु सर्व्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः, तद्ध्यादित एवामाशयमनुप्रविश्य सकलं वैकारिकश्लेष्ममूलमपकर्षति, तत्रावजिते श्लेष्मण्यपि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते, यथा भिन्ने केदारसेतौ शालियवषष्टिकादीन्यनभिष्यन्दमानान्यम्भसा प्रशोषमापद्यन्ते, तद्वत्" इति ग्रन्थखण्डकम्, तदिह सम्बध्यते । एवं विरेचनप्राधान्ये तथा वस्तिप्राधान्ये यदिहैकदेशं महारोगाध्यायोक्तप्राधान्य-ख्यापकग्रन्थखण्डकं वक्ष्यति, तत्र तद्ग्रन्थाध्याहारेण योजनीयम् ॥ ८ ॥

चक्रपाणिः—विरेचनाविषयमाह—अविरेच्यास्त्वित्यादि । सुभगक्षतगुद इति सुभगगुदः

ध्मातशल्यार्द्दिताभिहतातिस्निग्धरूक्षदारुणकोष्ठाः क्षतादयश्च गर्भिण्यन्ताः ॥ ८ ॥

तत्र सुभगस्य सुकुमारोक्तदोषः स्यात्। क्षतगुदस्य क्षते वायुः प्राणोपरोधकारी वरां रुजां जनयेत्। मुक्तनालमतिप्रवृत्त्या हन्यादधोभागरक्तपित्तिनञ्च तद्वद्। विलङ्घितदुर्ब्बलेन्द्रियाल्पाग्निनिरूढ़ा औषधवेगं न सहेरन्। कामादिव्यग्रमनसो न प्रवर्त्तते कृच्छ्रेण वा प्रवर्त्तमानमयोगदोषान् कुर्य्यात्। अजीर्णेन आमदोषः स्यात्। नवज्वरस्याविपक्वान् दोषान् न वहिर्निर्हरेत् वातमेव च कोपयेत्। मदात्ययितस्य मद्यक्षीणे देहे वृद्धो वायुः प्राणोपरोधं कुर्य्यात्। आध्मातस्याध्मायमानस्य वा पुरीषकोष्ठनिचितो वायुर्विसर्पन् सहसानाहं करोति तीव्रतरं मरणं वा जनयेत्। शल्यार्द्दिताभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यादतिस्निग्धस्यातियोगभयं भवेत्। रूक्षस्य वायुरङ्गग्रहं कुर्य्यात्। दारुणकोष्ठस्य विरेचनोद्धता दोषा हृच्छूलपर्व्वभेदानाहाङ्गमर्द्दच्छर्द्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् निहन्युः।

कर्म्मभाराध्वहतोपवासमैथुनाध्ययनाध्यशन-व्यायामचिन्ताप्रसक्तक्षामगर्भिण्यश्च अविरेच्याः ॥ ९ ॥

गङ्गाधरः—तत्र दोषमाह—तत्रेत्यादि। सुभगस्य सौभाग्ययुक्तस्य विरेचनात् सुकुमारोक्तवमनदोषो विकर्षणादूर्द्ध्वमधो वा रुधिरातिप्रवृत्तिः स्यात्। मुक्तनालं गुदस्थनालं यस्य स्रस्तं तं मुक्तनालम्। तद्वदिति अतिप्रवृत्त्या हन्यात्।

क्षतगुदश्च। अन्ये तु सुभगं सुखसम्बन्धिनमाहुः। मुक्तवातो सम्भृतगुदः (?)। क्षतादयश्च गर्भिण्यन्ता इति वमनाविषयमध्यपठिताः ॥ ९ ॥

चक्रपाणिः—रुजां जनयेद् विरेचनमिति शेषः। अधोभागरक्तपित्तिनं तद्वदिति अतिप्रवृत्त्या हन्यादित्यर्थः। कामादीत्यादौ आदिशब्देन शोकक्रोधादीनां ग्रहणम्। अत्र च अप्रवृत्तिः स्तोकप्रवृत्तिश्चायोग एव। उक्तं हि—"अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्त्तनम्"

क्षतादीनां गर्भिण्यन्तानां छर्द्दनोक्तो दोषः स्यादिति । तस्मादेते न विरेच्याः ॥ १० ॥

शेषास्तु विरेच्याः । कुष्ठज्वरमेहोर्द्ध्वरक्तपित्तभगन्दरार्शोब्रध्नप्लीहगुल्मार्ब्बुद-गलगण्डग्रन्थि-विसूचिकालसक-मूत्राघातक्रिमि-कोष्ठविसर्प-पाण्डुरोग-शिरःपार्श्वशूलोदावर्त्तनेत्रास्यदाह-हृद्रोग-व्यङ्गनीलिकाः, श्रवणगुदमेढ्रपाकहलीमकश्वासकासकामलापच्यपस्मारोन्मादवातरक्त-योनिरेतोदोष-तैमिर्य्यारोचकाविपाकच्छर्द्दि-श्वयथूदरविस्फोटकादयः, पित्तव्याधयो विशेषेण महारोगाध्यायोक्ताश्च । एतेषु हि विरेचनं प्रधानतममित्युक्तमग्न्युपशमेऽग्निगृहवत् ॥ ११ ॥

अनास्थाप्यास्त्वजीर्णातिस्निग्धपीतस्नेहोत्क्लिष्टदोषाल्पाग्नियानक्लान्तातिदुर्ब्बल-क्षुत्तृष्णाश्रमार्त्तातिकृश-भुक्तभक्तपीतोदक-वमितविरिक्तकृतनस्तःकर्म्मक्रुद्धभीतमत्तमूर्च्छिताः, प्रसक्तच्छर्द्दि-निष्ठीविका-कासश्वासहिक्का-बद्धछिद्रदकोदराध्मानालसकविसूचिकामप्रजातातिसारमधुमेहकुष्ठार्त्ताश्च ॥ १२ ॥

दारुणकोष्ठत्वमतिक्रूरकोष्ठत्वम् । च्छर्द्दनोक्ताः स्वस्वदोषाः क्षतादीनां स्युरिति ॥ १० ॥

गङ्गाधरः—शेषास्तु विरेच्या इति । तत्र च कुष्ठादयो रोगा विस्फोटप्रकारा आदिना गृह्यन्ते, विशेषेण महारोगाध्यायोक्ताश्चत्वारिंशत्पित्तव्याधयः । एतेषु विरेचनं प्रधानतमम् । कथमित्यत आह—अग्न्युपशमेऽग्निगृहवदिति । यथा अग्निगृहमग्निनोत्तप्तमग्निप्रशान्तौ शान्तं भवतीति ॥ ११ ॥

इति । अयोगदोषाश्च विभ्रंशहिक्कास्तम्भादयो वक्ष्यमाणाः । आमदोष इति आमदोषनिमित्त-विसूचिकादिः । पुरीषकोष्ठ इति पुरीषाद्यासक्तकोष्ठः । दुश्छर्द्दनोक्त इति प्राग्वमनोक्तदोषः स्यात् । विशेषेण विरेच्यानाह—कुष्ठेत्यादि । विसूचिकायां विरेचनमुत्तरकालं विशेषदोषहरणार्थं ज्ञेयम् ॥ १० । ११ ॥

चक्रपाणिः—अनास्थाप्यानाह—अनास्थाप्यास्त्वित्यादि । मधुमेहशब्देन सर्व्वप्रमेहग्रहणम् ।

तत्राजीर्णातिस्निग्धपीतस्नेहानां दूष्योदरं मूर्च्छा श्वयथुर्वा स्यात्। उत्क्लिष्टदोषमन्दाग्न्योररोचकास्तीव्रः। यानक्लान्तस्य क्षोभव्यापन्नो वस्तिराशु देहं शोषयेत्। अतिदुर्ब्बलक्षुत्तृष्णाश्रमार्त्तानां पूर्व्वोक्तो दोषः स्यात्। अतिकृशस्य कार्श्यं पुनर्जनयेत्। पीतोदकभुक्तभक्तयोरुत्क्लिश्योर्द्ध्वमधोवा वायुर्वस्तिमुत्क्षिप्यैव क्षिप्रं वस्तिं घोरान् विकारान् जनयेत्। वमितविरिक्तयोस्तु रूक्षं शरीरं निरूहः क्षतं क्षार इव निर्द्दहेत्। कृतनस्तःकर्म्मणो विभ्रंशं संनिरुद्धस्रोतसं कुर्य्यात्। क्रुद्धातिभीतयोर्वस्तिरूर्द्ध्वमुपप्लवेत्। मत्तमूर्च्छितयोर्भृशं विचलितायां संज्ञायां चित्तोपघातव्यापत् स्यात्। प्रसक्तच्छर्दिनिष्ठीविकाकास सहिक्कार्त्तानां पुनरूर्द्ध्वीभूतो वायुरूर्द्ध्वं वस्तिं नयेत्। बद्धच्छिद्रोदकोदराध्मातानां भृशतरमाध्माप्य वस्तिः प्राणान् हिंस्यात्। अलसकविसूचिकामप्रजातातिसारिणामामकृतदोषः स्यात्। मधुमेहकुष्ठिनोर्व्याधेः पुनर्वृद्धिरिति ; तस्मादेते न स्थाप्याः ॥ १३ ॥

<u>गङ्गाधरः</u>—अथानास्थाप्यानाह—अनास्थाप्यास्त्वित्यादि। अजीर्णादिकुष्ठार्त्तान्ता अनास्थाप्याः ॥ १२ ॥

<u>गङ्गाधरः</u>—तत्र दोषमाह—तत्राजीर्णेत्यादि। पूर्व्वोक्तदोष इति विरेचनोक्तदोषः। दुर्ब्बलानामास्थापनासहत्वात् प्राणोपरोधः। क्षुत्तृष्णाश्रमार्त्तानाञ्च तदसहत्वात् प्राणोपरोधः स्यादिति। क्षिप्रवस्तिं वस्तिरोगविशेषम् ॥ १३ ॥

दूष्योदरमिति सन्निपातोदरम्। यानं रथादियानम्। दहेद् वस्तिरिति शेषः। विभ्रंशमित्यत्र इन्द्रियाणामिति शेषः। ऊर्द्ध्वमुपप्लवेदिति मुखादिभिरुद्गच्छेत्। मत्तमूर्च्छितयोर्व्यापत् स्यादिति मूर्च्छारूपा व्यापत् स्यादित्याहुः। बद्धोदरादावाध्मातानां वस्तिर्निषिध्यते। तेन "स्निग्धाय बद्धोदरिणे" इत्यादिना यावच्च "निरूहं सानुवासनम्" इति ग्रन्थेन निरूहविधानमविरुद्धं भवति। अन्ये तु उदराध्याय एव बद्धोदरिणे सविबन्धोदरविषयं निरूहं वर्णयन्ति, तेनात्र सामान्येन बद्धोदरे निरूहनिषेधो न विरुद्धः ॥ १२ । १३ ॥

शेषास्त्वास्थाप्याः । सर्व्वाङ्गैकाङ्गकुक्षिरोगवातवर्च्चोमूत्र-शुक्रसङ्गबलवर्णमांसरेतःक्षतदोषाध्मानाङ्गसुप्तिक्रिमिकोष्ठोदावर्त्त-स्तब्धाङ्गातिसारसर्व्वाङ्गाभितापप्लीहगुल्मशूल-हृद्रोगगुदभगन्दरो-न्मादब्रध्नशिरःकर्णहृदयपार्श्वकटीग्रहवेपनाक्षेप-गौरवातिलाघव-रजःक्षयार्त्ताः । विषमाग्निस्फिग्जानुजङ्घोरुगुल्फपार्ष्णिप्रपद-योनिबाह्वाङ्गुलिस्तनाङ्गदन्त-पर्व्वास्थिशूलशोथ-स्तम्भान्त्रकूजन-परिकर्त्तिकाल्पाल्पशब्दोग्रगन्धोत्थानादयो ये तु वातव्याधयः विशेषेण महारोगाध्यायोक्ताश्च । एषु ह्यास्थापनं प्रधानतम-मित्युक्तं वनस्पतेर्मूलच्छेदवत् ॥ १४ ॥

य एवानास्थाप्यास्त एवाननुवास्याः स्युर्विशेषतस्त्वभुक्तभक्त-नवज्वर-पाण्डुरोगकामला-प्रमेहार्शोऽरोचक-मन्दाग्नि-दुर्ब्बलप्रति-श्यायप्लीहकफोदरोरुस्तम्भवर्च्चोमेदःपीतविषगरपित्तकफाभिष्यन्द-गुरुकोष्ठश्लीपदगलगण्डापचीक्रिमिकोष्ठिनश्च ॥ १५ ॥

तत्राभुक्तभक्तस्यानावृतमार्गत्वादूर्द्ध्वमतिवर्त्तते स्नेहः । नव-ज्वरपाण्डुरोगकामलाप्रमेहिणां दोषानुत्क्लिश्योदरं जनयेत् ।

गङ्गाधरः—शेषास्त्वास्थाप्या इति अजीर्णादिकुष्ठार्त्तान्तेभ्यः शेषा आस्थाप्या सर्व्वाङ्गेत्यादि । तत्र सर्व्वाङ्गरोगादुग्रगन्धोत्थानादयो ये रोगास्तथा महारोगा-ध्याये विशेषण येऽशीतिर्वातव्याधय उक्ता एषु ह्यास्थापनं प्रधानतममुक्तम् । कथम् ? वनस्पतेर्मूलच्छेदवत् । वृक्षस्य मूलच्छेदेन यथा क्रमेण स्कन्धशाखादयः शुष्यन्ति तथा ॥ १४ ॥

गङ्गाधरः—अथाननुवास्यानाह—य एवेत्यादि । येऽजीर्णादयोऽनास्थाप्या उक्तास्तएवाननुवास्याः स्युः । विशेषतश्चाभुक्तभक्तादयः क्रिमिकोष्ठ्यन्ता अननुवास्याः ॥ १५ ॥

चक्रपाणिः—विशेषेणास्थाप्यानाह—सर्व्वाङ्गेत्यादि । स्फिगादिभिः शूलशोथस्तम्भाः सम्बध्यन्ते । अननुवासनोपदर्शने अनास्थाप्येषु भुक्तभक्तः पठितः, तद्व्युदासार्थं अभुक्तभक्तोपादानम् ।

अर्शसस्यार्शांस्यभिष्यन्द्याध्मानं कुर्य्यात्, अरोचकार्त्तस्यान्नगृद्धिं पुनर्हन्यात्, मन्दाग्निदुर्ब्बलयोर्मन्दतरमग्निं कुर्य्यात्, प्रतिश्याय-प्लीहादिमताञ्च भृशतरमुत्क्लिष्टदोषाणां भूय एव दोषं वर्द्धयेत्। तस्मादेते नानुवास्याः ॥ १६ ॥

य एवास्थाप्यास्त एवानुवास्याः, विशेषतस्तु रूक्षतीक्ष्णाग्नयो येऽन्ये केवलवातरोगार्त्ताश्च। तेषु ह्यनुवासनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदवन्मूले द्रुमाणां प्रसेकवच्चेति ॥ १७ ॥

अशिरोविरेचनार्हास्तु पुनरजीर्णिभुक्तभक्तपीतस्नेहमद्यतोय-पातुकामस्नातशिरःस्नातुकामक्षुत्तृष्णा-श्रमार्त्तमत्तमूर्च्छित-शस्त्र-

गङ्गाधरः—कस्मात्? तदाह—तत्रेत्यादि। अभुक्तभक्तस्य शून्योदरत्वेनानावृतस्नेहगतिपथ इति। तस्मादेतेऽप्यनुवास्या न भवन्ति ॥ १६ ॥

गङ्गाधरः—अनुवास्यानाह—य एवेत्यादि। य एवास्थाप्या इहोक्तास्त एवानुवास्या भवन्ति। विशेषतस्तु रूक्षतीक्ष्णाग्नयः केवलवातरोगार्त्ताः अन्यरोगहीनशुद्धवातरोगार्त्ताश्च ये तेष्वेतेषु अनुवासनं प्रधानतमं भवति। कथम्? वनस्पतिमूलच्छेदवत्, मूले द्रुमप्रसेकवच्च। मूले द्रुमाणां जलोपसेके यथा नवपल्लवाद्युद्गमादि स्यात्, तथा तेषां रोगाणां प्रशोपान्नवधातुपुष्ट्यादि स्यात् ॥ १७ ॥

गङ्गाधरः—अथ शिरोविरेचनानर्हानाह—अथ शिर इत्यादि। अजीर्णिभुक्त-

अनुवासनमभुक्तस्यानावृतत्वादूर्द्ध्वं याति, न तु निरूह इति को विशेषः? ब्रूमः—अनुवासनं स्नेहस्य च सूक्ष्मतया विसरणशीलतया सायञ्च दीयते। तेन तावत्कालमभोजनात् शून्यशरीरस्योर्द्ध्वं याति। अनुवासनञ्च "शूले च भक्तानभिनन्दने वा" इत्यनेन यद्यपि विहितम्, तथापीह भक्तानभिनन्दने त्वन्तर्भूतायामरुचौ तन्निषेधो न विरुद्धः। अनभिनन्दनन्त्वश्रद्धामात्रं वातकृतम्, अरुचिस्तु सर्व्वदा अनिच्छा, केवलवातरोगश्चाश्रद्धा। शुद्धवातरोगयुक्तोऽनुवासनार्हः। अनुवासनप्राधान्यख्यापने वनस्पतिमूलोच्छेदनवदित्यनेन महारोगाध्यायोक्तवस्तिप्राधान्यख्यापनग्रन्थोपदर्शनम्। मूले द्रुमप्रसेकवच्चेत्यनेन उपकल्पनीयोक्तम्—"मूले निषिक्तो हि यथा द्रुमः स्यात्" इत्यादियथोक्तानुवासनप्राधान्यख्यापनग्रन्थग्रहणं करोति ॥ १४—१७ ॥

चक्रपाणिः—अशिरोविरेचनार्हानाह—अशिरोविरेचनार्हा इत्यादि। पातुकामा इति स्नेहादि-

दण्डहतव्यवायव्यायामपानक्लान्तनवज्वरशोकाभितप्तविरिक्तानुवासितगर्भिणीनवप्रतिश्यायार्त्ता अनृतुदुर्द्दिने चेति ॥ १८ ॥

तत्राजीर्णिभुक्तभक्तयोर्दोष ऊर्द्ध्ववहानि स्रोतांस्यावृत्य कासश्वासच्छर्द्दिप्रतिश्यायान् जनयेत् । पीतस्नेहमद्यतोयपातुकामानां कृते च पिबतां मुखनासास्रावाद्युपदेहतिमिरशिरोरोगान् जनयेत् । स्नातशिरसः कृते च स्नातस्य प्रतिश्यायं क्षुधार्त्तस्य वातप्रकोपं तृष्णार्त्तस्य पुनस्तृष्णाभिवृद्धिं मुखशोषञ्च श्रमार्त्तमत्तमूर्च्छितानामास्थापनोक्तदोषं शस्त्रदण्डहतयोस्तीव्रतरां रुजं जनयेत् । व्यवायव्यायामपानक्लान्तानां शिरःस्कन्धनेत्रोरःपीड़नं नवज्वरशोकाभितप्तयोरूष्मा नेत्रनाड़ीरनुसृत्य तिमिरं ज्वरवृद्धिञ्च, विरिक्तस्य वायुरिन्द्रियोपघातमनुवासितस्य कफः शिरोगुरुत्वकण्डूक्रिमिदोषान् जनयेत् । गर्भिण्या गर्भं स्तम्भयेत्, स काणः कुणिः पक्षहतः पीठसर्पी वा स्यात्, नवप्रतिश्यायार्त्तस्य स्रोतांसि व्यापादयेदनृतुदुर्द्दिने च शीतदोषात् पूतिनस्यं शिरोरोगश्च स्यात् । तस्मादेते न शिरोविरेचनार्हाः ॥ १९ ॥

भक्तादयो नवप्रतिश्यायान्ता न शिरोविरेचनार्हाः, अनृतुदुर्द्दिने चेति । तत्राजीर्णिनो भुक्तभक्तस्य च पीतस्नेहस्य मद्यपातुकामस्य तोयपातुकामस्य च शिरोविरेचनार्हाणां कृते शिरोविरेचने जलं पिबतां मुखस्रावादीन् जनयेत् दोष इति पूर्व्वेणान्वयः । एवं स्नातशिरसः । शिरोविरेचनार्हस्य कृते च शिरोविरेचने स्नातस्य दोषः प्रतिश्यायं जनयेत् । सर्व्वत्रोत्तरत्र दोषो जनयेदिति योजना । स गर्भः काणः स्यात् कुणिः कुनखः स्यात् ॥ १८ । १९ ॥

पानकामाः । पानक्लान्तो दिनान्तरेऽपि पानजव्याधिपीड़ितः । अनृतौ शीतग्रीष्मवर्षासु । दुर्द्दिने इति मेघाच्छादितेऽह्नि । कृते पिबतामिति शिरोविरेचने कृते स्नेहान् पिबतामित्यर्थः । कुणिः कुब्जितकरः । पीठसर्पी पङ्गुः । अनृतौ दुर्द्दिने इत्यादौ शीतदोषानित्यनेन शीतकालदीयमानस्य

शेषास्त्वर्हाः, विशेषतस्तु शिरोदन्तमन्याहनुग्रहपीनसगल-शुण्डिकाशालूकशुक्रतिमिरवर्त्मरोग व्यङ्गोपजिह्विकार्द्धावभेदक-ग्रीवास्कन्धांसास्यनासिकाकर्णाक्षिमूर्द्धकपालशिरोरोगार्द्दितापतान-कापतन्त्रकगलगण्डदन्तशूलहर्षचालाक्षिरागनाड्यर्बुदस्वरभेद-वाग्ग्रहगद्‌गदकथनादय ऊर्द्ध्वजत्रुगता वातविकाराः परिपक्वाश्च एतेषु शिरोविरेचनं प्रधानतममित्युक्तम्, तद्ध्युत्तमाङ्गमनुप्रविश्य मज्जपेशीकाभिरासक्तं * दोषं विकारमपकर्षति ॥२०॥

प्रावृट्शरद्वसन्तेष्वितरेष्वात्ययिकेषु रोगेषु नावनं कुर्य्याद्ग्रीष्मे पूर्व्वाह्णे शीते मध्याह्ने वर्षासु दुर्द्दिने वेति ॥ २१ ॥

गङ्गाधरः—शेषास्तु शिरोविरेचनार्हा भवन्ति। विशेषतस्तु शिरोरोगादि-गद्गदकथनाद्यन्ता ये रोगास्तथोर्द्ध्वजत्रुगता ये वातरोगाः परिपक्वाः, एतेषु रोगेषु शिरोविरेचनं प्रधानतमं भवति। कथम्? तद्धीत्यादि। हि यस्मात् तत् शिरोविरेचनम् उत्तमाङ्गं शिरोऽनुप्रविश्य मज्जाद्यासक्तं दोषं विकारकरमपकर्षति ॥२०

गङ्गाधरः—तत्र विशेषमाह—प्रावृडित्यादि। प्रावृडाषाढ़श्रावणौ। आत्ययिकेषु रोगेषु शिरोविरेचनसाध्येषु पुनरितरेष्वपि ग्रीष्मवर्षाशिशिरेषु नावनं कुर्य्यात्। तद् यथा। ग्रीष्मे पूर्व्वाह्ण इत्यादि ॥ २१ ॥

दुर्द्दिने च कृतस्य पूतिनस्यकर्त्तृत्वम्, ग्रीष्मवर्षाकृतस्य तु शिरोरोगकर्त्तृत्वम्। अन्ये तु, 'अनृतु-दुर्द्दिनम्' इत्यनेन अवार्षिकदुर्द्दिनमाहुः ॥ १८ । १९ ॥

चक्रपाणिः—शिरोदन्तेत्यादिना विशेषेण शिरोविरेचनार्हानाह। शिरोदन्तमन्याभिः स्तम्भशब्दः सम्बध्यते। पीनसोऽत्र पक्वप्रतिश्यायः, तरुणे च प्रतिश्याये शिरोविरेकनिषेध इति न विरोधः। अपतन्त्रकोऽपतानकभेद एव निःसंज्ञः। उक्तं हि—"निःसंज्ञः सोऽपतन्त्रकः" इति। शूलहर्षचाला दन्तेन सम्बध्यन्ते। राजी नेत्रराजी नेत्ररोगविशेषः। वातविकारेऽप्यत्र विरेचनं स्थानसम्बन्धागतश्लेष्मवातहन्तृत्वेनैवोपपन्नम्। मुञ्जादीपिकामिवासक्तामिति मुञ्जात् शरावयवाद् यथा ईषिका शरिका आसक्ता आकृष्यते मुञ्जानुपघातेन, तथा शिरसि पक्को दोषो ह्रियत इत्यर्थः ॥ २० ॥

चक्रपाणिः—अनृतौ शिरोविरेचनं निषिद्धमवस्थावशेन विधानमाह—प्रावृडित्यादि। इतरास्विति हेमन्तग्रीष्मवर्षासु। आत्ययिकेष्वितिवचनादनात्ययिकेषु गदेषु निषेधयति। आत्ययिकेऽपि शीतादिप्रतीकारार्थमाह—कृत्रिमगुणोपधानादिति। कृत्रिमगुणोपधानं रोगभिषग्-

* मुञ्जादीपिकामिवासक्तामिति चक्रधृतः पाठः।

तत्र श्लोकाः ।

इति पञ्चविधं कर्म्म विस्तरेण निदर्शितम् ।
येभ्यो यदहितं यस्मात् कर्म्म येभ्यश्च यद्धितम् ॥
न चैकान्तेन निर्द्दिष्टमेकान्तेन समाश्रयेत् ।
स्वयमप्यत्र भिषजा तर्क्यं बुद्धिमता भवेत् ॥
उत्पद्यते हि सावस्था देशं कालं बलं प्रति ।
यस्यां कार्य्यमकार्य्यं स्यात् कर्म्म कार्य्यञ्च गर्हितम् ॥
छर्द्दिहृद्रोगगुल्मानां वमनं स्वे चिकित्सिते ।
अवस्थां प्राप्य निर्द्दिष्टं कुष्ठिनां वस्तिकर्म्म च ॥

जितीयोक्तं कर्त्तव्यम् । ग्रीष्मादिष्वेव कालविशेषे ग्रीष्म्यादिप्रतिक्रियां दर्शयन्नाह—ग्रीष्मेषु पूर्व्वाह्ण इत्यादि ॥ २१ ॥

चक्रपाणिः—अध्यायार्थसंग्रहमभिधाय वमनाद्यविषयत्वेन तथा वमनादिविषयत्वेन च प्रतिपादिते वमनादिनिवृत्तिप्रवृत्तिनिश्चयं निषेधयन्नाह—न चैकान्तेनेत्यादि । अभिनिविशेदिति निश्चयं कुर्य्यात् । तर्क्यमित्यनुक्तमूहनीयम् । बुद्धिमतेतिवचनेन अबुद्धिमतामनुक्तोहं निषेधयति । उक्तं हि—"बुद्धिमतामूहापोहविसर्गोऽल्पबुद्धेस्तु यथोक्तावगमप्रमाणमेव श्रेयः ।" अथ किमर्थं यथोक्तागमप्रमाणमेव श्रेय इति, किमर्थं यथोक्त एकान्ततावधारणं न कर्त्तव्यमित्याह—उत्पद्यते हीत्यादि । देशकालबलं प्रतीति देशादिभेदकृतेत्यर्थः । कार्य्यमकार्य्यं स्यादिति कर्त्तव्यतयोक्तमेव करणीयं स्यादिति तथा वर्ज्जितञ्च यत् कर्म्म, तत् कार्य्यञ्च । अवस्थाविशेषात् तु निषिद्धस्यैवावस्थावशात् क्रियमाणस्य वमनादेरुदाहरणमाह—छर्द्दिहृद्रोगेत्यादि । स्वे चिकित्सित इति छर्द्दिश्चिकित्साध्याये । यस्य चावस्थां प्राप्य निर्द्दिष्टमित्यनेन अवस्थाविशेष एव निषिद्धविधानमुत्सर्गापवादत इत्यविरोधं दर्शयति । एवमन्यत्राप्यपवादविषयवमनादिविधानमवस्था-

तस्मात् सत्यपि निर्द्देशे कुर्य्यादूह्यं स्वयं धिया।
विना तर्केण या सिद्धिर्यदृच्छासिद्धिरेव सा ॥ २२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
पञ्चकर्म्मीयसिद्धिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

गङ्गाधरः—इत्यध्यायार्थमुपसंहर्त्तुं श्लोकानाह—तत्र श्लोका इति। इतीत्यादि ॥ २२ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। सिद्धिस्थानेऽष्टमेऽप्राप्ते यत्नाद् दृढ़बलेन तु।
प्रतिसंस्कृत एवात्र पञ्चकर्म्मीयसिद्धिके। द्वितीयेऽध्यायेऽथ गङ्गाधरेण
रचिते पुनः। जल्पकल्पतरौ सिद्धिस्थाने स्कन्धेऽष्टमेऽत्र तु।
तत्पञ्चकर्म्मीयसिद्धि-जल्पशाखा द्वितीयिका ॥ २ ॥

विशेषपरतया समाधेयम्। न्यायोपपादितमुक्तार्थमुपसंहरन्नाह—तस्मादित्यादि। शास्त्रोपदेशे सत्यपि स्वबुद्ध्यैव शास्त्रानुगतयाऽनुक्तमपि कर्त्तव्यम। यदुक्तम्—"प्रायो वपनमिव कर्षकस्य अल्पमप्यनल्पज्ञानाय भवतीति ॥ २२ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां पञ्चकर्मीयसिद्धिव्याख्या-
नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथातो वस्तिसूत्रीयसिद्धिं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

कृतक्षणं शलवनस्य रम्ये स्थितं वनेशायतनस्य * पार्श्वे ।
महर्षिसङ्घैर्वृतमग्निवेशः पुनर्वसुं प्राञ्जलिरन्वपृच्छत् ॥
वस्तिर्नरेभ्यः किमवेक्ष्य दत्तः स्यात् सिद्धिमान् किम्मयमस्य नेत्रम् ।
कीदृक्प्रमाणाकृति किंगुणञ्च केषाञ्च किंयोनि गुणश्च वस्तिः ॥
निरूहकल्पः प्रणिधानमात्रा स्नेहस्य का वा शमने विधिः कः ।
के वस्तयः केषु हिता इतीदं श्रुत्वोत्तरं प्राह वचो महर्षिः ॥ २ ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमात् वस्तिसूत्रीयां सिद्धिमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—कृतक्षणमित्यादि। शलवनस्य हिमवत्पर्व्वतवनस्य वनेशायतनस्य वनस्पतीनामायतनस्य रम्ये पार्श्वे स्थितम्। यदन्वपृच्छत् तदाह—

चक्रपाणिः—पूर्व्वाध्याये वमनादिविषयमौपोद्घातिकमभिधाय उपकल्पनीयाध्यायाभिहितवस्तिकल्पनायाः प्रपञ्चेनाभिधानार्थं वस्तिसूत्रीयसिद्धिरुच्यते। वस्तेरितिकर्त्तव्यताभिधायकसूत्रमधिकृत्य कृता सिद्धिर्वस्तिसूत्रीयसिद्धिः ॥ १ ॥

चक्रपाणिः—धनेशायतनस्येति हिमालयस्य। वस्तिर्नरेभ्य इत्यादयो दश प्रश्नाः। नेत्रं नलिका। किंयोनिगुणश्च वस्तिरित्यत्र वस्तिर्वस्तिपुटकः, योनिः प्रभवस्थानम्। स्नेहस्य केति अनुवासनस्य का कस्य प्रणिधानमात्रा, अनुवासनस्य चात्र प्रपञ्चोऽप्यभिधातव्यः, तेन अनुवासनस्य का कस्य मात्रेति प्रश्नोऽत्र बोद्धव्यः, यदा तु स्नेहस्य वा कः इति पाठः, तदा स्नेहस्य निरूहदिनदीयमानस्य को विधिरित्यर्थः, स चोत्तरग्रन्थेन सङ्गतार्थ एव। के वस्तयः केषु हिता इति केभ्यः पुरुषेभ्यः किंयोनयो हिता वस्तय इत्यर्थः ॥ २ ॥

---

* शैलवरस्येति धनेशायतनस्येति च चक्रसम्मतः पाठः ।

समीक्ष्य दोषौषधदेशकाल-सात्म्याग्निसत्त्वादिवयोबलानि।
वस्तिः प्रयुक्तो नियतं गुणाय स्युः सर्व्वकर्म्माणि च सिद्धिमन्ति ॥३
सुवर्णरूप्यत्रपुताम्ररीति-कांस्यास्थिलोहद्रुमवेणुदन्तैः।
नालैर्विषाणैर्मणिभिश्च तैस्तैः कार्य्याणि नेत्राणि त्रिकर्णिकानि ॥
षड्द्वादशाष्टाङ्गुलिसम्मितानि षड्विंशतिद्वादशवर्षजाते।
स्युर्मुद्गकर्कन्धुसतीनवाहि-छिद्राणि वर्त्त्या पिहितानि चापि ॥

वस्तिरित्यादि। के वस्तयः केषु हिता इत्यन्तमन्वपृच्छत्। महर्षिरिदं श्रुत्वोत्तरं वचः प्राह—समीक्ष्येत्यादि। दोषादीनि समीक्ष्य प्रयुक्तो वस्तिर्गुणाय नियतं स्यात्। सर्व्वकर्म्माणि च सिद्धिमन्ति स्युः। इति वस्तिर्नरेभ्यः किमवेक्ष्य दत्तः स्यात् सिद्धिमानिति प्रश्नस्योत्तरम् ॥ २। ३ ॥

गङ्गाधरः—किम्मयमस्य नेत्रमित्यस्योत्तरमाह—सुवर्णेत्यादि। वस्तौ नेत्राणि सुवर्णादिभिस्त्रिकर्णिकाणि संवत्सरादिषड्वर्षपर्य्यन्तवयसि जाते षडङ्गुलानि ततः सप्तवर्षादिद्वादशवर्षपर्य्यन्तवयसि त्वष्टाङ्गुलानि त्रयोदशवर्षावधिविंशति-वर्षादियावद्वयसि जाते द्वादशाङ्गुलानि नेत्राणि कार्य्याणि। सुश्रुते विशेषत

चक्रपाणिः—समीक्ष्येत्यादि। अत्र दोषादयो ये दश प्रोक्ताः परीक्षणीयाः, तेष्वेव उपकल्पनीयोक्तदोषभेषजाद्येकादशकस्य तथा रोगभिषग्जितीयोक्तद्वादशकपरीक्ष्यस्य वाऽवरोधो व्याख्येयः, अनुक्तावरोधश्चायं योनिव्यापदिक एवास्माभिरुक्तोऽनुसरणीयः। समीक्ष्येति ज्ञानपूर्व्वकमवेक्ष्य। सर्व्वकर्म्माणि चेति वमनादीनि च दोषादीनवेक्ष्य प्रयुक्तानि गुणकराणि भवन्ति ॥ ३ ॥

चक्रपाणिः—किम्मयमस्य नेत्रं स्यादित्यस्य प्रश्नस्योत्तरम्—सुवर्णेत्यादि। त्रपु सीसकम्, रीतिः पित्तलम्, विषाणैरिति महिषादिश्रृङ्गैः, सुकर्णिकानीति सुसमाहितकर्णिकानीति, त्रिकर्णिकानीति केचित् पठन्ति, त्रिकर्णिकत्वञ्चाग्रे वक्ष्यमाणम्। कीदृक्प्रमाणाकृतीत्यस्योत्तरम्—षडित्यादि। षडङ्गुलमेकवर्षात् प्रभृति द्वादशवर्षं यावत्, द्वादशवर्षस्याष्टाङ्गुलं नेत्रं भवति, विंशतिवर्षस्य द्वादशाङ्गुलं नेत्रं भवति। अत्र व्युत्क्रमाभिधानेन षड्वर्षादर्व्वाग् विंशतिवर्षादूर्द्धं नेत्रविकल्पो नास्ति, षड्वर्षादूर्द्धं नेत्रमानविकल्पोऽस्तीति दर्शयति। तेन षड्वर्षादूर्द्धं प्रत्यब्दं अङ्गुलि-तृतीयभागवृद्धिर्भवति। द्वादशादूर्द्धं प्रत्यब्दमर्द्धाङ्गुलवृद्धिरेव युक्तया मानपूरणं भवति। सुश्रुते नेत्रमानभेद उक्तः, स नातिविरोधकारितया उपेक्षणीय एव। उक्तं हि तत्र—"साम्वत्सरिकाद्द्वादशवर्षाणां षडष्टदशाङ्गुलं नेत्रम्, पञ्चविंशतिवर्षादूर्द्धं द्वादशाङ्गुलम्" इति। मुद्गादिवाहिच्छिद्रत्वं यथासंख्यं षड्द्वादशाष्टाङ्गुलनेत्रेषु ज्ञेयम्। कर्कन्धुशब्देनेह तदस्थि गृह्यते।

**यथावयोऽङ्गुष्ठकनिष्ठकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति।**
**ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुड़िकामुखानि॥**
**स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे ॥४॥**

उक्तम्—'तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षड़ष्टदशाङ्गुलप्रमाणानि' 'पञ्चविंशतेरूर्द्ध्वं द्वादशाङ्गुलं नेत्रम्' इति। तानि नेत्राणि मुद्गादिप्रवेशार्हाग्रच्छिद्राणि वात्तिं तन्मध्ये प्रवेश्य पिहितानि स्थापयेत्। सुश्रुते च—'कङ्कश्येनवर्हिपत्रनाडीतुल्यप्रवेशानि मुद्गमाषकलायमात्रस्रोतांसि विदध्यात् नेत्राणि' इति। यथावय इति। पुरुषस्य यथावयस्तथा तस्याङ्गुष्ठप्रमाणपरिणाहो मूले कनिष्ठाङ्गुलिप्रमाणपरिणाहोऽग्रे नेत्रस्य कार्य्यः। सुश्रुते च—'कनिष्ठिकानामिकामध्यमाङ्गुलिपरिणाहान्यग्रे' सांवत्सरिकाष्टद्विरष्टवर्षाणां यथाक्रममिति। ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णान्यकर्कशानि गुड़िकामुखानि सर्व्वाग्रभागो मसृणवर्त्तुलाकाराणि तानि नेत्राणि कुर्य्यात्। त्रिकर्णिकाणि यथा कुर्य्यात् तदाह—स्यादित्यादि। नेत्रस्याग्रे सर्व्वाङ्गस्य चतुर्थभागे त्वेका कर्णिका कार्य्या, पायोरभ्यन्तरे तावन्मानाधिकप्रवेशनिवृत्त्यर्थम्। नेत्रस्य मूले स्थूलप्रदेशे द्वे कर्णिके कार्य्ये, तत्र वस्तिबन्धनार्थम्। सुश्रुते च—'नेत्रमूले अध्यर्द्धाङ्गुले सार्द्धाङ्गुले त्वेका द्व्यङ्गुले चापरा कर्णिका। नेत्रस्याग्रे अर्द्धतृतीयाङ्गुलसन्निविष्टप्रदेशे पुनरेकेत्यर्थेऽग्र ऽध्यर्द्धाङ्गुलद्व्यङ्गुलार्द्धतृतीयाङ्गुलसन्निविष्टकर्णिकाणि' इति॥४॥

उक्तं हि सुश्रुते—"कोलास्थिमात्रच्छिद्रम्" इति। कर्कन्धुशब्देन च शृगालबदरी स्वल्पा गृह्यते, बृहद्बदरीग्रहणे तु कनिष्ठाप्रमाणाग्रे तद्वहनं नार्हति। केचिदेवं विरोधं पश्यन्तः बदरास्थिमज्जानमिह कर्कन्धुशब्देन ग्राहयन्ति। सतीनो वर्त्तुलकलायः। वर्त्त्याऽपिहितानीति द्रव्यान्तरप्रवेशनिरासार्थं वर्त्त्याऽपिहितमुखानि कर्त्तव्यानि। यथावय इति यस्मिन् वयसि यदेतं विहितम्, तद्वयस्कस्यैवाङ्गुष्ठकनिष्ठाभ्यां यथासङ्ख्यं मूलेऽग्रे च तुल्यपरिणाहं नेत्रं कर्त्तव्यम्। ऋजूनीत्यादिना नेत्रगुणमाह। श्लक्ष्णानीत्यकर्कशानि। गुड़िकामुखानीत्यनेन वर्त्तुलमुखतया अतीक्ष्णमुखतां दर्शयति। कर्णिकाऽग्रे एका कर्त्तव्या नेत्रस्यान्तःप्रवेशनिरासार्थम्। वस्तिनिबन्धने इति वस्तिनिबन्धनप्रयोजनके ॥ ४ ॥

जरद्गवो माहिषहारिणौ वा स्यात् शौकरो वस्तिरजस्य वापि।
दृढस्तनुर्नष्टसिरो विगन्धः कषायरक्तः सुमृदुः सुबन्धः।
नृणां वयो वीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबन्धसूत्रः ॥ ५ ॥
वस्तेरभावे प्लवजो गलो वा स्यादङ्कपादः सुघनः पटो वा।
नेत्रस्य चालाभत एव नाडी हितास्थिजा वंशभवो नलो वा ॥६॥
आस्थापनार्हं पुरुषं विधिज्ञः समीक्ष्य पुण्येऽहनि शुक्लपक्षे।
प्रशस्तनक्षत्रमुहूर्त्तयोगे जीर्णान्नमेकाग्रमुपक्रमेत ॥ ७ ॥

गङ्गाधरः—इति नेत्रकरणमुक्त्वा वस्तिद्रव्यमाह—जरद्गव इत्यादि। जरद्गवस्य वृद्धस्य गोस्तथा माहिषादिर्वा वस्तिर्मूत्राशयचर्म्म दृढस्तथा तनुः पक्षलः नष्टसिरो विगन्धश्च कार्य्यः, पुरुषाणां वयो वीक्ष्य गोमहिषादीनां वृहन्मध्यक्षुद्र-वस्तिः कार्य्यः। सुश्रुते च—'वस्तयश्च वृद्धानां मृदवो नातिबहला दृढाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम्। वस्तिं निरुपदिग्धन्तु शुद्धं सुपरि-मार्जितम्। मृद्वनुद्धतहीनञ्च मुहुः स्नेहविमर्दितम्। वस्त्यलाभे हितं चर्म्म सूक्ष्मं वा तान्तवं घनम्। नेत्रालाभे हिता नाडी नलवंशास्थिसम्भवा' इति ॥ ५ ॥

गङ्गाधरः—वस्तेरभाव इत्यादि। प्लवादीनां चर्म्म तथा घनः पटो वा ग्राह्य इति ॥ ६ ॥

गङ्गाधरः—अथ वस्तिप्रणिधानमाह—आस्थापनार्हमित्यादि। एकाग्र-मेकचित्तम् ॥ ७ ॥

चक्रपाणिः—केभ्यश्च किंयोनिगुणश्च वस्तिरित्यस्योत्तरं—जारद्गव इत्यादि। जारद्गवो वृद्धगोभवः। वस्तिरिति मूत्राशयपुटकम्। नष्टशिर इति समुद्धृतशिरासन्ततिः। विगतो पूतिगन्धो यस्य स विगन्धः। कषायरक्त इति कषायभावनया रक्तीकृतः। वयो वीक्ष्य यथानुरूपमिति वयोभेदेन यथोक्तेन यो वस्तिर्यस्योचितप्रमाणो भवति, स तस्य नेत्रे निबन्धनीयः, एतेन 'केभ्यः को वस्तिः' इत्यस्योत्तरम् भवति ॥ ५ ॥

चक्रपाणिः—वस्त्यप्राप्त्यानुकल्पविधिमाह—वस्तेरलाभ इत्यादि। प्रबली प्रसेवकगलः पक्षी, प्लव इति ख्यातः, अङ्कपादश्चर्म्मचटकः, तस्य चर्म्म ग्राह्यं वस्त्यर्थम् ॥ ६ ॥

चक्रपाणिः—निरूहकर्म्मेत्यादिप्रश्नस्योत्तरम्—आस्थापनार्हमित्यादि। शुक्लपक्ष इति शुक्लपक्षस्य सर्व्वारम्भेषु प्रशस्तत्वात्। हारीतेन तु कृष्णपक्ष एवास्य विहितः, उक्तं हि—'कृष्णपक्ष कार्य्यम्

बलां गुडूचीं त्रिफलां सरास्नां द्वे पञ्चमूल्यौ च पलोन्मितानि ।
अष्टौ पलान्यर्द्धतुलाञ्च मांसाच्छागात् पचेदप्सु चतुर्थशेषम् ॥
पूतं यमानीफलविल्वकुष्ठ-वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुड़क्षौद्रघृतैः सतलैर्युक्तं सुखोष्णैश्च पिचुप्रमाणैः ॥
गुड़ात् पलं द्विप्रसृता तु मात्रा स्नेहाच्च युक्त्या मधुसैन्धवञ्च ।
स्नेहं सुनिर्मथ्य ततोऽनुकल्पं प्रक्षिप्य वस्तौ मथितं खजेन ॥

गङ्गाधरः—आस्थापनमाह—बलामित्यादि। बलादीनि षोड़श द्रव्याणि प्रत्येकं पलोन्मितानि छागान्मांसादष्टौ पलानि तथाऽर्द्धतुलाञ्च सर्व्वेषामष्ट-गुणास्वप्सु पचेत्। चतुर्थभागशेषं पूतं तं क्वाथं यमान्यादिपिप्पल्यन्तानां कल्कः पिचुप्रमाणः प्रत्येकं कर्षप्रमाणैः। गुड़मधुघृततैलैः सुखोष्णयुक्तं तत्र गुड़ात् पलं स्नेहाच्च घृततैलाद् द्विप्रसृता मात्रा घृतस्य द्विपलं तैलस्य द्विपलमिति युक्त्या मधु तथा सैन्धवञ्च दत्त्वा सर्व्वं खजेन मन्थनदण्डेन सुनिर्म्मथ्य यथा सर्व्वमेकीभूतं स्यात् तथा सुन्दरं निर्म्मथ्य सिद्धादास्थापना-दनुकल्पं यस्य यन्मात्रं योग्यं तावन्मात्रं मथितं तं क्वाथं वस्तौ प्रक्षिप्य

जन्मनि सर्व्वरोगा हताः सुहता भवन्तीति वदन्ति शास्त्रज्ञाः, शुक्रे देवा जाताः कृष्णेऽसुराश्च सर्व्वरोगाश्च, तस्माद्रोगचिकित्सा कृष्णे सदैव कर्त्तव्या' इति। एकाग्रमिति वस्तिप्रयोगैक-मनसम्॥ ७ ॥

चक्रपाणिः—बलामित्यादिना वस्तिविधानमाह। भागोदाहरणार्थं बलादिकं वस्तिमाह—बलामित्यादि। पलोन्मितत्वमिह त्रिफलापञ्चमूल्योरपि प्रतिद्रव्यम्। फलानीति मदनफलानि, तानि चाकृत्यैवाष्टाविह। अत्र बलादीनामौषधानामौत्सर्गिकक्वाथविधिनाष्टमदनफलाधिकषट्षष्टि-पलक्वाथः, क्वाथः क्वाथ्यसमः इतिवचनाद् बहुक्वाथो भवति, वस्तौ च पुटत्रयदानमपि प्रतिपुटके दशपलक्वाथदाननियमात् त्रिंशत्पलानि परमुपयुज्यन्ते, शेषस्तु निष्प्रयोजनो यद्यपि तथापि महर्षिवचनादुन्नीयते—यावतैव वस्तेश्च क्रियायोगः क्वाथेन गुणकरो भवति तावन्मात्रो ग्राह्यः, तेन न मीमांस्यमेतत्। उक्तं हि—'यथा कुर्व्वन्ति, स उपायः' किंवा उपयुक्तक्वाथ्यद्रव्यमानविभा-गोदाहरणार्थमेतदुक्तम्, तेन तदनुसारेणोपयुक्तक्वाथसाधनयोग्यमानमेव क्वाथ्यं ग्रहीतव्यम्, यवा या-दीनां प्रत्येकं प्रतिनिरूहं पिचुमानत्वम्, पिचुः कर्षः, स्नेहस्येति घृततैलस्य उक्तत्वात्, एतच्च स्नेहमानं प्रकृतिस्थे पुरुषे वक्ष्यमाणव्यवस्थया ज्ञेयम्, युक्त्या मधुसैन्धवमित्यनेन प्रकृत्याद्यपेक्षया-ऽनियतं मानं दर्शयति। चकारो मांसरसक्षीरगोमूत्रादीनाञ्चानियतं मानं दर्शयति, एषाञ्च मान-

वस्तिं ततः सव्यकरे निधाय सुबद्धमुच्छ्वास्य च निर्व्यलीकम्।
अङ्गुष्ठमध्येन मुखं पिधाय नेत्राग्रसंस्थामपनीय वर्त्तिम्॥
तैलाक्तनेत्रं कृतमूत्रविट्कं नातिक्षुधार्त्तं शयने मनुष्यम्।
समेऽथ किञ्चिन्नतशीर्षके वा नात्युच्छ्रिते वास्तरणोपपन्ने॥
सव्येन पार्श्वेन सुखे शयानं कृत्वर्ज्जु देहं स्वभुजोपधानम्।
निकुञ्च्य सव्येतरदस्य सक्थि सव्यं प्रसार्य्य प्रणयेत् शनैस्तम्॥
स्निग्धे गुदे नेत्रचतुर्थभागं स्निग्धं शनैरृज्वृजुपृष्ठवंशम्।
अकम्पनावेपनलाघवादीन् पाण्योर्गुणांश्चापि हि दर्शयंस्तम्।
प्रपीड्य चैकग्रहणेन दत्तं नेत्रं शनैरेव ततोऽपकर्षेत्॥ ८। ६॥

ततस्तं वस्तिं वामकरे निधाय नेत्रमूले कर्णिकाद्वयमध्येऽन्ते पूर्व्व च दृढ़सूत्रेण सुबद्धं वामाङ्गुष्ठमध्येन नेत्रमुखं पिधाय तन्नेत्राग्रप्रविष्टां वर्त्तिमपनीय व्यस्ततैलाक्तनेत्रं—विण्मूत्रवेगं मुक्तवन्तं नातिक्षुधार्त्तं मनुष्यमातुरं स्वस्थं वा समे शयनेऽथवा किञ्चिन्नतशीर्षके शयने नात्युच्छ्रिते आस्तरणोपपन्ने सुखेन सव्येन पार्श्वेन शयानं स्वभुजोपाधानमृजुदेहमकुटिलशरीरं तस्य सव्येतरत् दक्षिणं सक्थि सङ्कोच्य सव्यं सक्थि प्रसार्य्य घृतादिना स्निग्धे गुदे नेत्रस्याग्र चतुर्थं भागं कर्णिकायाः अधःप्रदेशं घृतादिस्नेहाभ्यक्तं तं शनः प्रणयेत् प्रवेशयेत्। प्रवेश्य च नेत्राग्र शनैर्नातिधीरं नातिद्रुतं मृदुना ऋजुना पृष्ठवंशसमानेन ऋजुभावेन वस्तिं कृत्वा कम्पनवेपनलाघवहीनेन वामपाणिना धृत्वा दक्षिणेन पाणिना एकवारपीड़नेन किञ्चित् सशेषं द्रव्यं यथा प्रविशेत्

व्यवस्थामग्रे कषायमानप्रस्तावे दर्शयामः। उच्छ्वास्येति उच्छ्वासनेन द्रव्याभिघातजनितवातनिर्गममिच्छति। निर्व्यलीकमिति क्रियाविशेषणम्। नेत्राग्रसंस्थामिति प्रथमं द्रवनिर्गमादिप्रतिषेधार्थम्। वर्त्तिमिति नलिकाग्रमुखदत्तां वर्त्तिम्। तैलाक्तगात्रमित्यभ्यङ्गसाहचर्य्यात् स्वेदोऽपि ज्ञेयः, तैलाभ्यक्तस्विन्नमित्यर्थः। उक्तं ह्यन्यत्र—"अनुवासितमास्थापयता अभ्यक्तस्विन्नशरीरम्" इति। प्रस्तावागतशयनविधिमाह— शयने मनुष्यमित्यादि। समेऽथवेषन्नतशीर्षके वेति विकल्पद्वयमातुरेच्छया कर्त्तव्यम्, किंवा उन्नतकटीदेशस्य पुरुषस्य समुन्नतकटीकस्याद्धोंन्नतशीर्षं शयनं विधेयम्, एवं हि तस्य सम्यग् वस्तिर्देहानुसारी भवति। सव्येनेति वामेन, वामपार्श्वशयनप्रयोजनम्—वामाश्रये हि इत्यादिना वक्ष्यमाणम्, मनुष्यं यथोक्तसर्व्वगुणं कृत्वा प्रणयेदिति सम्बन्धः। स्वभुजोपधानं यथा

तथा नातिधीरं नातिद्रुतं प्रपीड्य दद्यात्। ततो वस्तिनेत्रं शनैरपकर्षेत्। इत्या-स्थापनवस्तिदानप्रकारः। सुश्रुते च। अथानुवासितमास्थापयेत्। स्वभ्यक्त-स्विन्नशरीरमुत्सृष्टवहिर्वेगमप्रवाते शुचौ वेश्मनि मध्याह्ने प्रततायां शय्यायामप्रसुपरिग्रहायां श्रोणिप्रदेशव्यूढ़ायामनुपधानायां वामपार्श्वशायिनमाकुञ्चित-दक्षिणसक्थं प्रसारितेतरसक्थं सुमनसं जीर्णान्नं वाग्यतं सुनिषण्णदेहं विदित्वा ततो वामपादस्योपरि नेत्रं कृत्वेतरपादाङ्गुलिभ्यां कर्णिकामुपरि निष्पीड्य सव्यपाणिकनिष्ठिकानामिकाभ्यां वस्तेमुखार्द्धं सङ्कोच्य मध्यम-प्रदेशिन्यङ्गुष्ठैरद्धन्तु विवृतास्यं कृत्वा वस्तावौषधं प्रक्षिप्य दक्षिणहस्ताङ्गुष्ठ-प्रदेशिनीभ्याञ्चानुपिक्तमनायतमबुद्‌बुदमसङ्कुचितमवातमौषधासन्नमुपसंगृह्य पुन-रितरेण गृहीत्वा दक्षिणेनावसिञ्चेत्। ततः सूत्रेणवौषधान्ते द्विस्त्रिर्वावेष्ट्य बध्नीयात्। अथ दक्षिणेनोत्तानेन पाणिना वस्तिं गृहीत्वा वामहस्तमध्यमाङ्गुलि-प्रदेशिनीभ्यां नेत्रमुपसंगृह्याङ्गुष्ठेन नेत्रद्वारं पिधाय घृताभ्यक्ताग्रनेत्रं घृताक्त-गुदाय प्रयच्छेदनुपृष्ठवंशं समयमुन्मुखमाकर्णिकं नेत्रं प्राणवतुस्वेति ब्रूयात्। वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीड़येत्। एकेनवावपीड़ेन न द्रुतं न विल-म्बितम्। ततो नेत्रमपनीय त्रिंशन्मात्राः पीड़नकालादुपेक्ष्योत्तिष्ठत्यातुरं ब्रूयात्। आतुरमुपवेशयेदुत्कटुककं वस्त्यागमनार्थम्। निरूहप्रत्यागमन-कालस्तु मुहूर्त्तो भवति। अनेन विधिना वस्तिं दद्याद् वस्तिविशारदः। द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः। सम्यङ्‌निरूढलिङ्गे तु प्राप्ते वस्तिं निवा-रयेत्। अपि हीनक्रमं कुर्य्यान्न तु कुर्य्यादतिक्रमम्। विशेषात् सुकुमाराणां हीन एव क्रमो हितः॥ इति वस्तिदानक्रमः। तथा तत्रोक्तम्—तत्र द्विविधो वस्तिः—नैरूहिकः स्नैहिकश्च। आस्थापनं निरूह इत्यनर्थान्तरम्। तस्य विकल्पो माधु-तैलिकः। तस्य पर्य्यायशब्दो यापनो युक्तरथः सिद्धवस्तिरिति। स दोष-निर्हरणाच्छारीररोगहरणाद् वा निरूहः। वयःस्थापनादायुःस्थापनाच्चास्था-पनम्। माधुतैलविधानञ्च निरूहोपक्रमाच्चिकित्सिते वक्ष्यामः। तत्र यथा प्रमाणगुणविहितः स्नेहवस्तिविकल्पोऽनुवासनः पादावकृष्टः। अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयते इत्यनुवासनः। तस्यापि विकल्पोऽर्द्धार्द्धमात्राव-

...ति तथा शयनं स्वभुजोपाधानमस्तकम्। सव्येतरं दक्षिणम्। सक्थि जङ्घा, वामं सक्थि प्रसार्य्य ...रि दक्षिणं सक्थि सङ्कोच्य। स्निग्धे गुदे नेत्रचतुर्थभागमिति कर्णिकावच्छिन्नं सर्व्वं चतुर्थ-भागम्। अनुपृष्ठवंशमिति पृष्ठवंशमनुगतं कृत्वा। अकम्पनेत्यादौ कम्पनं चलनं वेपनं वेपथुः

तिर्य्यक् प्रपीडे तु न याति धारा गुदे व्रणः स्याच्चलिते तु नेत्र।
दत्तः शनैर्नाशयमेति वस्तिः कण्ठं प्रधावेदतिपीड़ितस्तु ॥ १० ॥
शीतस्त्वतिस्तम्भकरोऽतिदाहं मूर्च्छाञ्च कुर्य्यादतिमात्रमुष्णः।
स्निग्धोऽतिजाड्यं पवनञ्च रूक्षस्तन्वल्पमात्रालवणस्त्वयोगम्।
करोति मात्राभ्यधिकोऽतियोगं क्षामस्तु सान्द्रः सुचिरेण चैति॥
दाहातिसारौ लवणोऽतिकुर्य्यात्
तस्मात् सुयुक्तं सममेव दद्यात् ॥ ११ ॥

कृष्टोऽपरिहार्य्यो मात्रावस्तिरिति। निरूहः शोधनो लेखी स्नेहनो बृंहणो मतः। इति ॥ ८। ९ ॥

गङ्गाधरः—ततोऽन्यथा वस्तिदाने दोषमाह—तिर्य्यगित्यादि। तिर्य्यक् कृत्वा नेत्रं वस्तिप्रपीड़ने धारारूपेणास्थापनद्रव्यं नवाभ्यन्तरं याति, तस्मादृजुनेत्रं दद्यात्। प्रपीड़नकाले नेत्रे चलिते हस्तकम्पने नेत्राग्रवेधनेन गुदे व्रणः स्यात्। तस्मादकम्पवेपनहस्तेन दद्यात्। दत्त इत्यादि। शनैरतिधीरं दत्तो वस्तिराशयं न याति। अतिप्रपीड़ितस्तु वस्तिः कण्ठं प्रधावेत्। तस्मान्नातिधीरं नातिद्रुतं दद्यात् ॥ १० ॥

गङ्गाधरः—शीतलो वस्तिरतिशयश्चेत् स्तम्भकरः स्यान्न प्रत्यागच्छति। अतिमात्रमुष्णो वस्तिरतिदाहं मूर्च्छाञ्च करोति, तस्मान्नात्युष्णशीतं वस्तिं दद्यात्। स्निग्ध इत्यादि। अतिस्निग्धो वस्तिर्जाड्यं कुर्य्यात्। अतिरूक्षः पवनं कुर्य्यात्। तस्माद् युक्त्या स्नेहं दद्यात्। तनुश्चाल्पश्च मात्रया लवणो यः स वस्तिरयोगं करोति, तस्मान्नातिद्रवं नातिसान्द्रं नात्यल्पलवणं वस्तिं दद्यात्। अभ्यधिकमात्रया वस्तिरतियोगं करोति। तस्मान्नात्यल्पनात्यधिकमात्रया वस्तिं दद्यात्। क्षामः क्षीणः सान्द्रश्च वस्तिः सुचिरेण प्रत्येति तस्मादक्षीणम् असान्द्रं वस्तिं दद्यात्। दाहेत्यादि। अतिलवणो वस्तिर्दाहमतिसारञ्च कुर्य्यात्

लाघवं शीघ्रक्रियता। आदिशब्देन वस्तिग्रहणपीड़नादि गृह्यते। विदर्शयन्निह सम्पादयन्, प्रत्या-चैकग्रहणेन दत्तमित्यनेन विश्रम्य पुनःपीड़नं वायुजनकं निषेधयति ॥ ८ ९ ॥

चक्रपाणिः—तिर्य्यक्प्रणिधानादिदोषमाह—तिर्य्यगित्यादि। न याति धारेति तिर्य्यक् प्रणि-धाने सति गुदवलीरोधान्न याति। अतिस्तम्भकर इति वस्तिर्देहस्य स्तम्भं करोति, जाड्यमिति शरीरजड़ता, तन्वल्पमात्रलवणस्त्वयोगमिति तनुर्वा, अल्पमात्रलवणो वा, सान्द्रस्तनुविपरीतः,

पूर्व्वं हि योज्यं मधुसैन्धवाभ्यां स्नेहं सुनिर्म्मथ्य तथोदकल्कम् ।
विमथ्य संयोज्य पुनर्द्रवैस्तत् वस्तौ निदध्यान्मथितं खजेन ॥१२॥
वामाश्रयोऽग्निर्ग्रहणी गुदश्च तत्पार्श्वसंस्थस्य गुदोपलब्धिः ।
लीयन्त एवं बलयश्च तत्र सव्यं शयानेऽर्हति वस्तिदानम् ॥१३॥
विड्वातवेगो यदि चार्द्धदत्ते निष्कृष्य मुक्ते प्रणयेदशेषम् ।
उत्तानदेहश्च कृतोपधानः स्याद् वीर्य्यमाप्नोति तथास्य देहम् ॥१४

तस्माद् युक्त्या सलवणं दद्यात् । सर्व्वमुपसंहरति—तस्मादिति । समं पूर्व्वोक्त-प्रतिषेधव्यतिरिक्तम् ॥ ११ ॥

गङ्गाधरः—आस्थापनद्रव्ययोगक्रममाह—पूर्व्वं हीत्यादि । पूर्व्व मधुसैन्धवाभ्यां सह स्नेहद्रव्य योज्यम्, ततः परं तथोदकल्कं द्रवद्रव्यं यत् तथा कल्कद्रव्यं ताभ्यां सह योज्यम्, ततः स्नेहं संयोज्य पुनस्तद्द्रवविमथ्य ततस्तस्माद् यथारूपं मात्रया गृहीत्वा खजेन मथितं वस्तिपुटके निदध्यात् ॥ १२ ॥

गङ्गाधरः—अथ वामपार्श्वशयानस्य वस्तिदाने प्रयोजनमाह—वामाश्रय इत्यादि । पुरुषस्य वामभागे जाठराग्निश्च ग्रहणीनाड़ी च गुदश्चेति त्रयम्, तस्मात् तद्वामपार्श्वशयितस्य गुदोपलब्धिः स्यात् । एवं तत्र गुदे तिस्रो गुदवलयो लीयन्ते लीना वर्त्तन्ते । तस्मात् सव्यं शयाने जने वस्तिदानमर्हति ॥ १३ ॥

गङ्गाधरः—विडित्यादि । वस्तावर्द्धदत्ते यदि विण्मूत्रादिवेगः स्यात् तदा वस्तिनेत्रं गुदान्निष्कृष्य तद्विड़ादिवेगे मुक्ते तदवशेषमशेषं प्रणयेत् । दत्ते वस्तौ

क्षमं पुरूपं कुर्य्यात्, लवणोऽतीति अतिमात्रलवणः, तस्मादिति यथोक्तविधानेषु दोषादर्शनात्, सुयुक्तमिति तिर्य्यक्प्रणिधानादिरहितं शीतत्वादिरहितञ्च ॥ १० । ११ ॥

चक्रपाणिः—'पूर्व्वं हि दद्याद्' इति ग्रन्थं केचिदनार्षमाहुः । तन्त्रान्तरेषु तु अस्यार्थस्य दृष्टत्वाद् युक्त एवायं पाठः । उच्यते हि सुश्रुते—'दत्त्वादौ सैन्धवस्याक्षं मधुनश्च पलद्वयम् । पात्रे तलेन मथ्नीयात्' इत्यादि । पुनर्द्रवैस्तमित्यत्र द्रवशब्देन क्वाथस्यावयवस्य च ग्रहणम् ॥ १२ ॥

चक्रपाणिः—वामपार्श्वशयनं यदुक्तम्, तस्य प्रयोजनमाह—वामाश्रये इत्यादि । वामाश्रये यस्माद् ग्रहणीगुदे, तेन वामपार्श्वसुप्तस्य ग्रहणीगुदे प्रकृतिस्थे भवतः, प्रकृतिस्थे च गुदे गुदस्य वस्तिना सम्यगुपलब्ध्या व्याप्तिर्भवति, तथा बलयश्च लीना भवन्ति, तेन सुखं वस्तिर्यातीति ग्रहणी-गुदयोः प्रकृतिस्थतया च वस्तिर्व्याप्य सुखं ग्रहणीं भावयतीति बोद्धव्यम् ॥ १३ ॥

चक्रपाणिः—विड्वातेत्यादौ निष्कृष्य मुक्त इति नलिकामाकृष्य विड्वातवेगे मुक्ते । दत्ते तु वस्तौ उत्तानदेहः कृतोपधानश्च स्यात्, एतत्करणप्रयोजनमाह—वीर्य्यमाप्नोतीत्यादि ॥ १४ ॥

एकोऽपकर्षत्यनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः।
प्रत्यागते चोष्णजलावसिक्तः शाल्यन्नमद्यात् तनुना रसेन ॥१५॥
जीर्णे तु सायं लघु चाल्पमात्रं भुक्तोऽनुवास्यः परिबृंहणार्थम्।
निरूहपादांशसमेन तैलेनाम्लानि लघ्वौषधसाधितेन ॥

यत् कुर्यात् तदाह— उत्तानेत्यादि। दत्तवस्तिः पुमानुत्तानदेहः सन् कृतोपधानः सन् शयीत, तथा सति अस्य वस्तेर्वीर्यं देहमाप्नोति व्याप्नोतीत्यर्थः ॥ १४ ॥

गङ्गाधरः—एक इत्यादि। एको वस्तिर्दत्तः स्वमार्गादनिलमपकर्षति। द्वितीयो वस्तिर्दत्तः पित्तमपकर्षति। तृतीयो वस्तिर्दत्तः कफमपकर्षति। प्रत्यागत इत्यादि। प्रत्यागते वस्तौ पुमानुष्णजलावसिक्तः स्नातः शाल्यन्न तनुना घनभावरहितेन मांसरसेनाद्यात ॥ १५ ॥

गङ्गाधरः—जीर्ण मध्याह्नभुक्ते सायं रात्रौ लघु चाल्पमात्रं भुक्तः स पुमाननुवास्यः परिबृंहणार्थमिति। निरूहेत्यादि। तस्यानुवासनमात्रा तु निरूहपादांश-

चक्रपाणिः—एकोऽपकर्षतीत्यादि। एतद् वातादिभेदेन एकादिवस्तिदानविधानम्, न तु त्रिदोषे प्रथमो वातं जयति, द्वितीयः पित्तं जयति इत्यादि व्याख्येयम्, यतः 'स्निग्धोष्ण एकः पवने समांसः' इत्यादिना पवनादिभेदेनैव संख्यानियमं करिष्यति। एवं स्वमार्गाच्चानिलमेको वस्तिरपकर्षति, पित्तं द्वितीयस्तु स्वमार्गादिति पित्तं द्वावेव जयतः, कफं त्रय एव जयन्ति इत्यादि ज्ञेयम्। स्वमार्गादिति स्वस्थानात्। यद्यपि च वस्तिः पक्वाशयगतमेव दोषं जयतीत्युक्तम्, तथापि पित्तादिस्थानेऽपि विशेषवस्तिविधिसामर्थ्याद् दोषहरणमुच्यते, तेन उत्सर्गतोऽस्मिन् दोषहरणं विशिष्टविधानेन च स्थानान्तरगतदोषहरणं भवति। अयमर्थो जतूकर्णेऽप्युच्यते—'वस्तिः कार्यः सकृद्वस्तिस्थानगुणयानिलादिषु' इति, अत्र द्वितीयः पित्तमपकर्षति, तृतीयः कफमपकर्षतीत्युच्यते। अत्रापि प्रथमस्य पित्तकफापहत्वमस्त्येव, परं द्वितीयेन पित्तापहरणं तृतीयेन च कफापहरणं स्थानाप्रत्यासत्त्या क्रियत इति कृत्वा द्वितीयः पित्तं हरति, तृतीयः कफं हरतीति चोक्तम्। पित्तकफयोश्च यद्यपि मुख्यं चिकित्सितं वस्तिर्न भवति, तथापि वातावरके वातानुबन्धे वा पित्ते कफे चैतद् वस्तिदानं ज्ञेयम्। उक्तञ्च सुश्रुते— 'वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते' इति। शाल्यन्नमित्यादौ जीर्ण इति आस्थापनोपलेपे कोष्ठस्थे जीर्णे, न तु मांसरसादिभोजने। न च निरूहेण मनागुपहतस्य वह्नेः पालनार्थं पेयादिक्रमस्तत्र क्रियते विरेचनवदिहाभावात्। अतएव सुश्रुते पेयादिक्रमं त्यक्त्वा रसादिक्रम उक्तः। अनुवास्यः परिबृंहणार्थमित्यनेन परिबृंहणार्थमनुवासनं क्रियमाणनिरूहे तदहः कर्त्तव्यमिति दर्शयति। अतएवोपकल्पनीयेऽपि 'नरस्तु निरूह्यानुवासनार्हः' इत्यनेन तदहरनुवासनस्यावश्यकत्वमुक्तम्। जतूकर्णेऽप्युक्तम्—'जीर्णे सायं कृतान्नञ्च पुष्ट्यर्थमनुवासयेत्' इति। निरूहपादांशसमेन तैलेनेति निरूहपादप्रमाणेन, चतुर्विंशतिपले निरूहे षट्पलेन स्नेहेनेत्यर्थः, इयञ्चोत्तमा मात्रा अनुवासनस्य। उक्तं ह्यन्यत्र—'उत्तमा षट्पली प्रोक्ता मध्यमा त्रिपली

दत्त्वा स्फिचौ पाणितलेन हन्यात् स्नेहस्य शीघ्रागमरक्षणार्थम्।
ईषच्च पाय्वङ्गुलियुग्ममानम् * उत्तानदेहस्य तनौ प्रमृज्यात्॥
स्नेहेन पार्ष्ण्यग्रङ्गुलिपिण्डिकाश्च ये चास्य गात्रावयवा रुगार्त्ताः।
तांश्चावमृज्यात् स सुखं ततश्च निद्रामुपासीत कृतोपधानः ॥१६॥
भागाः कषायस्य तु पञ्च पित्ते स्नेहस्य षष्ठः प्रकृतौ स्थिते वा।
वाते विवृद्धे तु चतुर्थभागो मात्रा निरूहेषु कफेऽष्टभागः॥

सगेन तैलेन खलाम्लद्रव्यवातघ्नद्रव्यसाधितेन स्नेहेन वस्तिं दत्त्वा पाणितलेन वद्यस्तस्य स्फिचौ हन्यात् ताड़येत्, तथा सति स्नेहो न शीघ्रं प्रत्येति। ईषदित्यादि। पाय्वङ्गुलियुग्ममानं तस्योत्तानदेहस्य तनौ पादाङ्गुलिद्वयपरिमाणं देहावयवं स्नेहेनेषच्च प्रमृज्यात्। पार्ष्ण्यङ्गुलिपिण्डिकाश्च स्नेहेन ईषत् प्रमृज्यात्। ये चास्य रुगार्त्ता वेदनार्त्ता गात्रावयवास्तांश्च स्नेहेनावमृज्यात् प्रमृज्यात्। ततः स पुमान् सुखं कृतोपधानः सन् निद्रामुपासीत इति॥ १६॥

गङ्गाधरः—अथ निरूहकरणे द्रव्यमानमाह—भागा इत्यादि। पित्तपत्तिकरोगे कषायस्य भागाः पञ्च स्नेहस्य षष्ठ इति कषायस्य पञ्चभागैकभागसमः स्नेहः। प्रकृतौ स्थिते पित्ते वा कषायस्य पञ्च भागान् कृत्वा तस्यैकभागसमभागः स्नेहस्य। वाते विवृद्धे स्नेहस्य कषायाच्चतुर्थभागः, कषायस्य चतुरो भागान् कृत्वा तदेकभागसमभागः स्नेहस्य। कफे विवृद्धेऽष्टभागः स्नेहस्येति कषायस्य लष्टौ भागान् कृत्वा तदेकभागसमभागः स्नेहस्येति। अष्टभाग भवेत्। कनीयसी सार्द्धपला त्रिधा मात्रानुवासने' इति। सुश्रुतेऽप्येतावन्मानमेव स्नेहवस्त्यनुवासनमात्रावस्तिविभागेनानुवासन उक्तम्। स्नेहशीघ्रागमनरक्षार्थं विधानमाह—ईषदित्यादि। उत्तानदेहस्यैतच्च पादाङ्गुल्या मात्राशतं स्थापयित्वा कर्त्तव्यम्। निरूहे तु त्रिंशन्मात्राकालं तावदुत्तानस्य स्थापनं मन्यन्ते, युग्ममिति पर्व्वसन्धिः, आच्छेदित्याकर्षेत्, निद्रामुपासीतेति वचनं क्रियान्तरस्य निषेधार्थम्॥ १५। १६॥

चक्रपाणिः—सम्प्रति त्रिविधो यो द्वादशप्रसृतो निरूहः, तस्य कषायस्नेहमात्रां निरूपयन्नाह—भागा इत्यादि। भागाः कषायस्य पञ्चेत्यनेन सर्व्वत्रैव दोषे स्वस्थे च पुरुषे द्वादशप्रसृतभागरूपे निरूहे पञ्चभागाः कषायस्य भवन्ति, तेन पञ्च प्रसृताः कषायस्य। स्नेहस्य च दोषभेदेन स्वस्थे च मानभेदमाह—पित्त इत्यादि। पित्ते स्नेहस्य षष्ठः तथा प्रकृतौ स्थिते च पुरुषे स्वस्थे षष्ठ इत्यर्थः, तथा षण्णां पूरणः षष्ठः, तेन द्वादशप्रसृतस्य षष्ठो भागो द्विप्रसृतं भवति। स्नेहशब्देन घृततैलादि-

* मानमित्यत्राच्छेदिति चक्रधृतः पाठः।

निरूहमात्रा प्रसृतार्द्धमाद्ये वर्षे तथार्द्धप्रसृताभिवृद्धिः।
आ द्वादश स्यात् प्रसृताभिवृद्धिराष्टादश द्वादशतः परं स्युः॥

इत्यष्टमो भागः पूरणार्थस्य लुक्। इति निरूहेषु द्रव्यमात्रा। अथ निरूहस्य वयोभेदे मात्रामाह—प्रसृतार्द्धमित्यादि। आद्ये वयोवर्षे प्रसृतार्द्धं निरूहमात्रा पलग्रहणम्। वाते तु वृद्धे चतुर्थो भागः स्नेहचतुर्थो भागः प्रसृतद्वयम्। अष्टभाग इति सार्द्धः प्रसृतः। अस्मिन्नर्थे हारीतः—"क्राथस्य पञ्चप्रसृता विभागाः स्नेहस्य षष्ठोऽत्रिके तु पित्ते। स्वस्थे च तत्तु पवने चतुर्थः कफेऽष्टमोऽत्यन्तगते विकल्पः" इति। एषा स्नेहमात्रा हीनमात्रेऽपि निरूहे क्राथस्नेहयोरुक्तमात्रानुसारेण योजनीया। शेषाणान्तु मधुकल्कसैन्धवानामिह मात्रा अनियमेनोक्ता, तेषामपि प्रकृत्यादिभेदेनानियतत्वात्। तेन मध्वादीनां प्रकृत्याद्यनुसारेण प्रकृतमानेन द्वादशप्रसृतत्वं पूरणीयम्। तत्र जतूकर्णप्रत्ययात् सर्व्वत्र कल्कपलद्वयं भवति। उक्तं हि तत्र—"चतुर्व्विंशतिके पुटके पेष्याणां द्विपलं किञ्चिच्च मधुसैन्धवात्"। स्नेहो वक्ष्यमाणः। शेषं कषायस्य। वाते तैलषट्पली स्वस्थे च, चत्वारि पित्ते घृतस्य, कफे त्रीणि तैलस्य इति। सैन्धवन्तु कर्षप्रमाणमस्ति। यतः सुश्रुते—"सैन्धवाक्षं समादाय मधुनः प्रसृतद्वयम्" इत्याद्युक्तम्। हारीते तु—"क्षौद्रन्तु देयं प्रसृतप्रमाणं द्वितीयमाहुर्लवणस्य चाक्षम्" इत्युक्तम्। तेन नानावादिनां सैन्धवमधुकल्कानां यथोक्तकषायस्नेहकल्कमधुसैन्धवादीनां पूरितांशपूरणञ्चावापेनैव कर्त्तव्यम्। आवापश्चात्रानुक्तोऽप्युत्तरत्र वक्ष्यमाणो वातादिभेदेन मांसरसक्षीरगोमूत्रादिको ज्ञेयः। वक्ष्यन्ति हि—"स्निग्धोष्ण एकः पवने निरूहो द्वौ स्वादुशीतौ पयसा च पित्ते। त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः" इति। हारीतेऽप्युक्तम्—"स्नेहो गुडो मांसरसः पयश्च, अम्लानि मूत्राणि च सैन्धवञ्च। एतानि सर्व्वाण्यपि योजयीत निरूहयोगे मदनात् फलञ्च" इति। यत्तु तन्त्रान्तरे—द्वादशप्रसृतपूरणं प्रति प्रतिद्रव्यविभागेनोक्तम्, यथा—दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्। विनिर्म्मथ्य ततो दद्यात् स्नेहस्य प्रसृतत्रयम्। एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत्। सम्मूर्च्छिते कषायन्तु चतुःप्रसृतसम्मितम्। वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम्। एवं सुकल्पितो वस्तिर्द्वादशप्रसृतो भवेत्" इति, तद्वातविषयमेव, स्नेहस्य वातघ्नत्वात्। किन्त्वत्र यच्चतुःप्रसृतं कषायस्य मन्यन्ते, तस्मात् तदनुमतमेव। यदन्ये पठन्ति—"मधुस्नेहनकल्काख्य-कषायावापतः क्रमात्। त्रीणि षट् द्वे दश त्रीणि पलान्यनिलरोगिणाम्। पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्। षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्" इति। तदस्मत्तन्त्रानुगतत्वादनुमतमेव। इदानीं वयोभेदेन निरूहप्रमाणं दर्शयन्नाह—निरूहेत्यादि। आद्ये वर्षे बालस्य पलमानं निरूहक्राथादि यथोक्तमानानुसारेण वक्तव्यम्। अर्द्धप्रसृताभिवृद्धिः ततः प्रतिवर्षं भवति। तेन द्वादशवर्षे षट्प्रसृतो वस्तिर्भवति। द्वादशादूर्द्ध्वमष्टादशवर्षपर्य्यन्तं प्रतिवर्षं प्रसृतवृद्ध्या द्वादशप्रसृतपूरणं भवति। द्वादशातः परं स्युः इत्यनेनाधिकप्रमाणवस्तिमानं महात्ययत्वकरत्वादननुगतं निषेधयति। तथा हारीते

**आ सप्ततेरुक्तमिदं प्रमाणमतः परं षोड़शवद् विधेयम् ।**
**निरूहमात्रा प्रसृतप्रमाणा बाले च वृद्धे च मृदुर्विशेषः ॥ १७ ॥**

मानम् । तथार्द्धप्रसृताभिवृद्धिस्तु द्वितीयवर्षादिषु आ द्वादश । द्वादशवर्षवयः पर्य्यन्तमर्द्धप्रसृताभिवृद्धिरुत्तरोत्तरं वर्षे वर्षे पलाभिवृद्धिः । तेन द्वादशवर्षे द्वादश पलानि । द्वादशतो वयोवर्षात् परं त्रयोदशवर्षादपि आ अष्टादश अष्टादशवयोवर्षपर्य्यन्तं प्रसृताभिवृद्धिरेव, आ सप्ततेरेवेदम्, अष्टादशवर्षे चतुर्विंशतिपलं भवति, तत् तु यावन्मानं स्यात् तावन्मानं सप्ततिवर्षपर्य्यन्तं न तु वृद्धिः स्यादिति, तथा च द्वादशप्रसृतमष्टादशवर्षे तावदेव सप्ततिवर्षपर्य्यन्तं मानं न त्वभिवृद्धिः स्यात् । ततः परं षोड़शवर्षवत्, यथा षोड़शे दश प्रसृतं मानं तथा चैकसप्ततौ दशप्रसृतं मानम्, द्विसप्ततौ नवप्रसृतम्, त्रिसप्ततौ अष्टप्रसृतम्, चतुःसप्ततौ सप्तप्रसृतं, पञ्चसप्ततौ षट्प्रसृतं, ततः प्रतिवर्षमेकैकपलह्रासः षड़शीतिवर्षपर्य्यन्तम्, ततः परं पलमात्रं सर्व्वत्र वर्षेषु । विधेयमिति पूर्व्वपूर्व्वयुगप्रहतपुरुषाभिप्रायेण । निरूहमात्रेत्यादि । प्रसृतप्रमाणा निरूहमात्रा बाले च वृद्धे च मृदुर्विशेष एष इति । सुश्रुते च— द्वादशप्रसृतानि निरूहमात्रा तूत्तमा प्रोक्ता । दत्त्वादौ सैन्धवस्याक्ष मधुनः प्रसृतद्वयम् । विनिर्म्मथ्य ततो दद्यात् स्नेहस्य प्रसृतत्रयम् । एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत् । सम्मूर्च्छिते कषायन्तु चतुःप्रसृतसम्मितम् । वितरेच्च तदावापमन्ते द्विप्रसृतोन्मितम् । एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत् । ज्येष्ठायाः खलु मात्रायाः प्रमाणमिदमीरितम् । अपह्रासे भिषक् कुर्य्यात् तद्वत् प्रसृतह्रापनम् । यथावयो निरूहाणां कल्पनेयमुदाहृता । सैन्धवादिद्रवान्तानां सिद्धिकामभिषग्वरैरिति ॥ १७ ॥

एकीयमतं पठ्यते— "अर्द्धाढ़कं परमतं प्रमाणम्" इति । तथा सुश्रुतेऽपि—"द्वादशप्रसृतं किञ्चित् त्रिंशत्पलमथापरे" इत्यादि । वस्तिमानं दर्शयितुमाह— आ सप्ततेरित्यादि । आ सप्ततेरिति द्वादशप्रसृतमानं सप्ततिं यावद् भवति । षोड़शवदिति दशप्रसृतप्रमाणम् । बालवृद्धयोर्यथोक्तप्रसृतमानविषयं दर्शयितुमेवान्यं विशेषमाह—निरूहमात्रेत्यादि । बालवृद्धयोर्यथोक्तैव प्रसृतमात्रा कार्य्या, विशेषेण मृदुस्तयोर्वस्तिः कार्य्यः । तीक्ष्णत्वमार्दवकरञ्च विधानं वक्ष्यति—यत्— "तीक्ष्णत्वं मूत्रविल्वादि-लवणक्षारसर्पपैः । प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्द्दवं तथा" इति ॥ १७ ॥

नात्युच्छ्रितं नाप्यतिनीचपादं सपादपीठं शयनं प्रशस्तम्।
प्रधानमृद्वास्तरणोपपन्नं प्राक्शीर्षकं शुक्लपटोत्तरीयम् ॥ १८ ॥
भोज्यं पुनर्व्याधिमपेक्ष्य सम्यक् प्रकल्पयेद् यूषपयोरसाद्यैः।
सर्व्वेषु विद्याद् विधिमेतमाद्यं वक्ष्यामि वस्तीनत उत्तरीयान् ॥
सम्यक् प्रणीताः खलु वस्तयो ये वातामयघ्नाश्च बलप्रदाश्च ॥१९॥
द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्व्वशेषः।
त्रिस्नेहयुक्तः प्रवरो निरूहः सर्व्वानिलव्याधिहरः प्रदिष्टः ॥२०॥

गङ्गाधरः—नात्युच्छ्रितमित्यादि। दत्तवस्तिकस्य शयनार्थं शयनं नात्युच्छ्रितादिरूपं प्रशस्तं प्रकल्पयेत्। उत्तरप्रच्छदः शुक्लपटेन कार्य्यः ॥ १८ ॥

गङ्गाधरः—भोज्यं पुनस्तस्य व्याधिमपेक्ष्य यूषादिभिः प्रकल्पयेत्। सर्व्वेषु वस्तिदानेष्वेतं विधिमाद्यं विद्यात्, अथोत्तरीयानतः परानपरान् वस्तीन् वक्ष्यामि। ये वातामयघ्ना बलप्रदाश्च ॥ १९ ॥

गङ्गाधरः—तद् यथा—द्विपञ्चमूलस्येत्यादि। सच्छागमांसस्य द्विपञ्चमूलस्य इत्यष्टगुणाम्बुना पक्कस्य सपूर्व्वशेष इत्यष्टभागशेषो रसस्त्रिभागः किञ्चिदम्लयुक्तः त्रिस्नेहस्य घृततैलवसानां मिलितानां चतुर्थभागः, वाते विवृद्धे तु चतुर्थभाग इति वचनात् ॥ २० ॥

चक्रपाणिः—सम्प्रति शयनविधिः क इति प्रश्नस्योत्तरमाह—नात्युच्छ्रितमित्यादि। पूर्व्वं यः शयनविधिरुक्तः, स तात्कालिकः, अयन्तूत्तरकालिक इति विशेषः। प्रधानं महत् मृदु चास्तरणं प्रधानमृद्वास्तरणम्, तेनोपपन्नं युक्तम्। प्राक्शीर्षकमिति "प्राच्यां दिशि स्थिता देवाः, पूजार्थञ्च तेषां प्राक्शिराः शयने भवेत्" इति वचनात् ॥ १८ ॥

चक्रपाणिः—यूषादिभोज्यविधानं यथाक्रमं कफे, पित्ते, वाते। किंवा अग्न्याहारापेक्षं यथायोग्यतया व्याख्येयम्। यथोक्तविधानं वक्ष्यमाणविधिषु कर्त्तव्यतया दर्शयन्नाह—सर्व्वेष्वित्यादि। प्रधानमौत्सर्गिकमिति यावत्। तेन विशेषविधानेनापवादोऽप्यस्य भविष्यतीति सूचयति ॥१९॥

चक्रपाणिः—के वस्तय इत्यादिप्रश्नस्योत्तरम्—द्विपञ्चमूलस्येत्यादि। अत्र मांसं दशमूलसमम्। रसः क्वाथः। अम्लं काञ्जिकादि। सपूर्व्वपेष्यमिति बलाद्यत्ककल्कयुक्तः। त्रिस्नेहयुक्त इत्यनेन मज्जपरित्यागं सर्व्ववस्तिसिद्धं स्फारयति। उक्तं ह्यन्यत्र—"विज्ञेयः त्रिविधः स्नेहः वस्त्यर्थं मज्जवर्जितः" इति ॥ २० ॥

स्थिरादिवर्गस्य बलापटोल-त्रायन्तिकैरण्डयुतैर्यवस्य ।
प्रस्थो रसाच्छागरसार्द्धयुक्तः साध्यः पुनः प्रस्थरसश्च यावत् ॥
प्रियङ्गुकृष्णाघनकल्कयुक्तः सतैलसर्पिर्मधुसैन्धवश्च ।
स्याद्द दीपनो मांसबलप्रदश्च चक्षुर्बलञ्चापि ददाति सद्यः ॥२१॥
एरण्डमूलं त्रिपलं पलानि ह्रस्वानि मूलानि च यानि पञ्च ।
रास्नाश्वगन्धातिबलागुडूची-पुनर्नवारग्वधदेवदारु ॥
भागाः पलांशा मदनाष्टयुक्ता जलद्विकंसे क्वथितेऽष्टशेषे ।
पेष्याः शताह्वा हवुषा प्रियङ्गु सपिप्पलीकं मधुकं वचा च ॥
रसाञ्जनं वत्सकवीजमुस्तमक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो वस्तिर्नृणां दीपनलेखनीयः ॥
जङ्घोरुपादत्रिकपृष्ठशूलं कफावृतं मारुतविग्रहञ्च ।
विण्मूत्रवातग्रहणं सशूलमाध्मातताम् अश्मरिशर्कराञ्च ॥

गङ्गाधरः—स्थिरादीत्यादि। शालपर्ण्यादिपञ्चमूलस्य बलादेरण्डमूलान्त-युतस्य यवस्य चाष्टगुणजले पक्वस्य पादावशिष्टादेव रसात् प्रस्थः छागमांस-रसोऽर्द्धप्रस्थ इत्येतद्द्वयमेकीकृत्य पुनः साध्यः पक्तव्यः प्रस्थो यावत् परिशेषः स्यात्। तत्र प्रस्थे रसे प्रियङ्ग्वादिकल्कं तैलं सर्पिर्मधु च सैन्धवञ्च सुश्रुतोक्त-दर्शनेन युक्त्या दत्त्वा खजेन मथितः सन् वस्तिः सिद्धो भवति, तस्याशीः स्याद्दीपन इत्यादि ॥ २१ ॥

गङ्गाधरः—एरण्डेत्यादि। ह्रस्वानि शालपर्ण्यादीनि पञ्च मूलानि यानि, तेषां पलांशा भागा रास्नादीनां देवदार्वन्तानाञ्च पलांशा भागाः। मदनफल-स्याष्टपलयुक्ताः। एरण्डमूलत्रिपलादि-मदनान्तं सर्वं जलस्य द्विकंसे द्व्याढ़के पक्त्वाष्टांशशेषे क्वथिते पेष्याः कल्काः शताह्वादिमुस्तान्तानां कर्षप्रमाणं सैन्धवस्य

चक्रपाणिः—स्थिरादिवर्गस्येत्यादौ मधुसैन्धवे यद्यपि सामान्येनोक्तवस्तिविधानलब्धे, तथापि तैलादीनामल्पाप्रकर्षार्थं पुनस्तयोरभिधानम्। किंवा सामान्यविधिस्मरणार्थमस्याभिधानम्। एवमन्य-त्रापि सामान्यविधिप्राप्तस्य पुनरभिधाने व्याख्येयम् ॥ २१ ॥

चक्रपाणिः—एरण्डमूलमित्यादौ पलाशा शटी, ह्रस्वानि मूलानीति स्थिरादिपञ्चमूलम्,

आनाहमर्शोग्रहणीप्रदोषानेरण्डवस्तिः शमयेत् प्रयुक्तः।
वैद्येन सम्यक् कुशलेन चैव पुनर्व्वसूक्तः कृपया नराणाम् ॥२२॥
चतुष्पले तैलघृतस्य भृष्टश्छागाच्छताद्धं दधिदाड़िमाम्लः।
रसः सपेष्यो बलवर्णमांस-रेतोऽग्निदश्चान्ध्यशिरोरुजाघ्नः ॥२३॥
जलद्विकंसेऽष्टपलं पलाशात् पक्त्वा रसोऽर्द्धाढ़कमात्रशेषः।
कल्कैर्बलामागधिकापलाभ्यां युक्तः शताह्वाद्विपलेन चापि ॥
ससैन्धवः क्षौद्रयुतः सतैलो देयो निरूहो बलवर्णकारी।
आनाहपार्श्वामययोनिदोषान् गुल्मानुदावर्त्तरुजश्च हन्यात् ॥२४॥
यष्ट्याह्वमूलाष्टपलेन सिद्धं पयः शताह्वाफलपिप्पलीभिः।
युक्तं ससर्पिर्मधु वातरक्त-वैस्वर्य्यवीसर्पहितो निरूहः ॥ २५ ॥

तत् कर्षप्रमाणांशयुक्त मधुतैलगोमूत्राणां युक्त्यानुरूपं दत्त्वा मथित्वा वस्तिः कार्य्यः। एरण्डवस्तिः ॥ २२ ॥

गङ्गाधरः—चतुष्पल इत्यादि। छागमांसाच्छतपलार्द्धं पञ्चाशत्पलमष्टगुणजले पक्त्वा पादावशेषरसः दधिदाड़िमरसाभ्यामम्लः कृतस्तैलघृतस्य मिलितस्य चतुष्पले सम्भृष्टः सपेष्यः सैन्धवमदनफलकल्कयुक्तः बलादिदः आन्ध्यादिघ्नः ॥ २३ ॥

गङ्गाधरः—जलेत्यादि। पलाशादष्टपलं जलस्य द्विकंसे द्व्याढ़के पक्त्वार्द्धाढ़कमात्रावशेषो रसो बलापलमागधिकपलाभ्यां शताह्वाद्विपलेन च कल्कैर्युक्तः युक्त्या सैन्धवक्षौद्रतैलयुक्तः सिद्धो निरूहः बलवर्णकारी ॥ २४ ॥

गङ्गाधरः—यष्ट्याह्वेत्यादि। यष्ट्याह्वमूलस्याष्टपलं कल्कं चतुःषष्टिपले दुग्धे दत्त्वा चतुर्गुणजले पक्त्वा पादावशेषं सिद्धं पक्वं पयः शताह्वामदनफलपिप्पलीभिः कल्कैरनुरूपैर्युक्तं सर्पिर्मधुयुक्तं वातरक्तादौ निरूहः ॥ २५ ॥

कंस आढ़कः, भागाक्षमात्रमिति भागेनाक्षमात्रम्। छागाच्छतार्द्ध इति पञ्चाशत्पलो भवति। सपेष्य इति बलादिकस्य कल्कयुक्तः ॥ २२—२४ ॥

चक्रपाणिः—यष्ट्याह्वयस्येत्यादिकाश्चत्वारः पित्ते। पूर्व्वन्तु पञ्च वाते। अत्र पयःसाधनं क्षीर-

यष्ट्याह्वलोध्राभयचन्दनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्करक्षौद्रघृतं सुशीतं पित्तामयान् हन्ति सजीवनोयम् ॥२६॥
द्विकार्षिकाश्चन्दनपद्मकर्द्धि-यष्ट्याह्वराम्नावृषशारिवास्तु ।
सलोध्रमञ्जिष्ठमथाप्यनन्ता-बलास्थिरादितृणपञ्चमूलम् ॥
निक्वाथ्य तोयेन रसेन तेन शृतं पयोऽर्द्धाढ़कमम्बुहीनम् ।
मेदर्द्धिजीवन्तिशतावरोभिर्वीराद्विकाकोलिकशेरुकाभिः ॥
सितोपला जीवकपद्मरेणु-प्रपौण्डरीकः कमलोत्पलैश्च ।
लोध्रात्मगुप्तामधुकैर्विदारो-मुञ्जातकैः केशरचन्दनैश्च ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन् क्षीरेण वाद्यात् परिषिक्तगात्रः ॥
दाहातिसारौ प्रवरास्रपित्त-हृत्पाण्डुरोगान् विषमज्वरांश्च ।
सगुल्ममूत्रग्रहकामलादीन् सर्व्वामयान् पित्तकृतान् निहन्ति ॥२७॥

गङ्गाधरः—यष्ट्याह्वेत्यादि। यष्ट्याह्वादिभिः कल्कषण्मांशिकैः पयः शृत कमलोत्पलैः कल्कयुतं विमथ्य शर्कराक्षौद्रघृतयुतं सुशीतं निरूहः ॥ २६ ॥

गङ्गाधरः—द्विकार्षिका इत्यादि। चन्दनादितृणपञ्चमूलान्तं प्रत्येकं द्विकार्षिकं सर्व्वमष्टगुणेन तोयेन निक्वाथ्य पादावशेषेण तेन रसेन शृतमर्द्धाढ़कं पयस्तत् क्वाथहीनं दुग्धमात्रं शिष्टं मेदादिभिः कल्कैरनुरूपैर्युक्तं घृतक्षौद्रयुतं ससैन्धवं सुशीतं निरूहं पत्ते दद्यात्। प्रत्यागते परिषिक्तगात्रः सन् धन्वमांसरसेन क्षीरेण वा शाल्यन्नमद्यात्। शेषमाशीः ॥ २७ ॥

परिभाषयैव। यष्ट्याह्वलोध्रेत्यादि-सजीवनीयमित्यन्तेन योगः। जीवनीयान्यत्र कल्कः। सुशीतमिहौत्सर्गिकं मृदुकोष्ठेष्वबाधकं पित्तहितत्वात्। अनया च दिशाऽपरपित्तवस्तावपि शीतत्वं ज्ञेयम् ॥ २५। २६ ॥

चक्रपाणिः—द्विकार्षिकमित्यादौ अनन्ता उत्पलशारिवा। तृणपञ्चमूलम्—"शरेक्षुदर्भकाशानां शालीनां मूलमेव च" इत्यादिनोक्तम्। अम्बुहीनमिति क्षीरावशेषपर्य्यन्तं शृतम्।

द्राक्षादिकाश्मर्य्यमधूकसेव्यैः सशारिवाचन्दनशीतपाक्यैः।
पयः शृतं श्रावणिमुद्गपर्णी-तुगात्मगुप्तामधुयष्टिकल्कैः॥
गोधूमचूर्णैश्च तथाक्षमात्रैः सक्षौद्रसर्पिर्मधुयष्टितैलैः।
पथ्याविदारीक्षुरसैर्गुड़ेन वस्तिं युतं पित्तहरं विदध्यात्॥
हृन्नाभिपार्श्वोदरदेहदाहे दाहेऽन्तरस्थे च समूत्रकृच्छ्रे।
क्षीणक्षते रेतसि चापि नष्टे पित्तातिसारे च नृणां प्रशस्तः॥२८॥
कोषातकारग्वधदेवदारु-दूर्व्वाश्वदंष्ट्रा-*-कुटजार्कपाठाः।
पक्त्वा कुलत्थान् वृहतीश्च तोये रसस्य तस्य प्रसृता दश स्युः॥
तान् सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान्।
क्षौद्रस्य तैलस्य फलाह्वयस्य क्षारस्य तैलस्य च सार्षपस्य॥
दद्यान्निरूहं कफरोगिणे ज्ञो मन्दाग्नये वाप्यशनद्विषे च।
पटोलपथ्यामरदारुभिर्वा सपिप्पलीकैः क्वथितैर्जलाख्यैः॥ २९॥

गङ्गाधरः—द्राक्षादीत्यादि। द्राक्षादीनि दश विरेचनोपगानि, तत्र काश्मर्य्यं पुनश्चेह काश्मर्य्यमिति भागद्वयम्। द्राक्षादिशीतपाक्यन्तैः कल्कैरष्टांशिकश्चतुर्गुणजले पक्त्वावशिष्टं पयः श्रावण्यादिकल्कयुक्तमक्षमात्रगोधूमचूर्णैः क्षौद्रघृतयष्टिमधुतैलस्तथा पथ्यादिभिर्गुड़ेन च युक्तं पित्तहरं वस्तिं विदध्यात्। शेषमाशीः॥ २८॥

गङ्गाधरः—कोषातकेत्यादि। कोषातकीफलादिवृहत्यन्तं सर्व्वमष्टगुणे तोये पक्त्वा पादशिष्टस्य रसस्य दश प्रसृताः स्युः। तान् रसस्य दश प्रसृतान् अक्षप्रमाणैः सर्षपादिभिर्युक्तान् क्षौद्रस्य प्रसृतं तिलतैलस्य प्रसृतं मदनफलकल्कस्य प्रसृतं यवक्षारस्य प्रसृतं सार्षपतैलस्य च प्रसृतमित्येतैः प्रसृतैश्च युक्तान्, निरूहं दद्यात्। शेषमाशीः। पटोलेत्यादि। पटोलपथ्यादेवदारुपिप्पलीक्वाथैर्वा कफरोगिणे मन्दाग्नयेऽशनद्विषे च निरूहं दद्यादिति पूर्व्वेणान्वयः॥ २९॥

राजकशेरुः कशेरुरेव। ससैन्धवमिति ईषत्सैन्धवम्। सशारिवेत्यादौ शातपाक्यं श्रावणीमधुयष्टिसाधितं तैलम्। उत्तमदेहो मस्तकम्॥ २७। २८॥

चक्रपाणिः—कोषातकेत्यादिकाश्चत्वारः कफवस्तयः। शार्ङ्गष्टा गुञ्जा। अत्र क्वाथदशप्रसृतेन तथा कल्केन क्षौद्रादिना च यद्यपि मानमधिकं भवति, तथाप्येवमेव द्रव्यसंयोगं कृत्वा

* शार्ङ्गष्टामूर्व्वेति चक्रधृतः पाठः।

द्विपञ्चमूले त्रिफलां सविल्वां फलानि गोमूत्रयुतः कषायः ।
कलिङ्गपाठाफलमुस्तकल्कः ससैन्धवः क्षारयुतः सतैलः ॥
निरूहमुख्यः कफजान् विकारान् सपाण्डुरोगालसकामदोषान् ।
हन्यात् तथा मारुतमूत्रसङ्गं वस्तेस्तथाटोपमथातिघोरम् ॥ ३० ॥
रास्नामृतैरण्डविडङ्गदारु-सप्तच्छदोशीरसुराह्वविल्वैः ।
श्यामाक-*-भूनिम्बपटोलपाठा-तिक्ताखुपर्णीदशमूलमुस्तैः ॥
त्रायन्तिकाशिग्रुफलत्रिकैश्च क्वाथः सपिण्डीतकतोयमूत्रः ।
यष्ट्याह्वकृष्णाफलिनीशताह्वा-रसाञ्जनश्वेतवचाविडङ्गैः ॥
कलिङ्गपाठाम्बुदसैन्धवैश्च कल्कैः ससर्पिर्मधुतैलमिश्रः ।
अयं निरूहः क्रिमिकुष्ठमेह-ब्रध्नोदराजीर्णकफातुरेभ्यः ॥
रूक्षौषधैरत्यपतर्पितेभ्य एतेषु रोगेष्वपि सत्सु शस्तः ।
निहत्य वातं ज्वलनं प्रदीप्य विजित्य रोगांश्च बलं करोति ॥ ३१ ॥

<u>गङ्गाधरः</u>—द्विपञ्चमूल इत्यादि। दशमूलीत्रिफलाविल्वशलाटुमदनफलान्यष्टगुणे जले पक्त्वा चतुर्थभागावशेषितः क्वथितः कषायोऽनुरूपेण मूत्रेण युतः कलिङ्गादिकल्कयुक्तः ससैन्धवः यवक्षारयुक्तः तैलयुक्तः सन् निरूहमुख्यः स्यात्। कफजानित्याद्याशीः ॥ ३० ॥

<u>गङ्गाधरः</u>—रास्नेत्यादि। रास्नादि-फलत्रिकान्तरष्टगुणजले पक्त्वा पादशिष्टः क्वाथः पिण्डीतकस्य मदनफलस्य कल्कः वालकस्य कल्को गोमूत्रञ्चतः सहितस्तथा यष्ट्याह्वादिसैन्धवान्तैश्च कल्कैः सहितः सर्पिर्मधुतैलमिश्रः सन् निरूहोऽयं क्रिम्यादिभ्यः प्रशस्तः ॥ ३१ ॥

द्वादशप्रसृत एव वस्तिर्देयः, तदधिकमानस्य निषिद्धत्वात्। पटोलेत्यादौ पटोलादिपिप्पल्यन्तैस्तोयं साधयित्वा पूर्ववत् द्वितीयं तैलम्। कफरोगिणे द्विपञ्चमूल्यादिभिः तृतीयः कर्त्तव्यः। क्षारो यवक्षारः ॥ २९ । ३० ॥

<u>चक्रपाणिः</u>—रास्नेत्यादौ शम्पाकश्चतुरङ्गुलः। तिक्ता कटुरोहिणी। अत्र पिण्डीतकक्वाथोऽप्यधयवकल्पो येन प्रविशति। पिण्डीतको मदनः। रूक्षौषधैरत्यपतर्पितेभ्योऽपि एतेषु कुष्ठादिरोगेष्वयं दत्तो बलं करोतीति योजना ॥ ३१ ॥

* शम्पाक इति चक्रधृतः पाठः ।

पुनर्नवैरण्डवृषाश्मभेद-वृश्चीरभूतीकबलापलाशाः।
द्विपञ्चमूलानि पलांशिकानि क्षुण्णानि धौतानि फलानि चाष्टौ॥
बिल्वं यवान् कोलकुलत्थधान्य-फलानि चैकप्रसृतोन्मितानि।
पयोजलाद्धढकयोः * शृतं तत् क्षीरावशेषं कृतवस्त्रपूतम्॥
वचाशताह्वामरदारुकुष्ठ-यष्ट्याह्वसिद्धार्थकपिप्पलीनाम्।
कल्कैर्यमान्या मदनैश्च युक्तं नात्युष्णशीतं गुडसैन्धवाक्तम्॥
क्षौद्रस्य तैलस्य च सर्पिषश्च तथैव युक्तं प्रसृतत्रयेण।
दद्यान्निरूहं विधिना विधिज्ञः स सर्व्वसंसर्गकृतामयघ्नः॥३२॥
स्निग्धोष्ण एकः पवने निरूहो द्वौ स्वादुशीतौ पयसा च पित्ते।
त्रयः समूत्रा कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः॥३३

गङ्गाधरः—पुनर्नवेत्यादि। पुनर्नवादीनि द्विपञ्चमूलान्तानि प्रत्येकं पलांशिकानि। बिल्वं शलाटुरूपमष्टौ फलानि यवांश्चाष्टौ पलानि कोलादिमदनफलान्तानां प्रत्येकं प्रसृतमानम्, तत् सर्व्वं प्रत्येकेन पयोजलाद्धढकयोरर्द्धाढ़के पयसि चार्द्धाढ़के जले च शृतं क्षीरावशेषमष्टशरावक्षीरशेषं कृतं वस्त्रपूतञ्च वचादिमदनफलान्तः कल्कयुक्तं गुडसैन्धवयुक्त क्षौद्रतैलसर्पिषां प्रत्येकं प्रसृत मिलित्वा प्रसृतत्रयेण युक्तं नात्युष्णशीतं निरूहं दद्यात्॥ ३२॥

गङ्गाधरः—स्निग्धेत्यादि। पवने स्निग्धोष्णः एको निरूहो देयः। पित्ते पयसा स्वादुशीतौ द्वौ निरूहौ विधेयौ। कफे कटुकोष्णतीक्ष्णाः समूत्रास्त्रयो निरूहा विधेयाः, नातःपरं विधेयमिति॥ ३३॥

चक्रपाणिः—पुनर्नवेत्यादिकः सर्व्ववातादिकसंसर्गविषयः। वृश्चीरः श्वेतपुनर्नवा। धान्यानि फलानि चेति धान्यफलानि। पयोजलद्व्याढकयोरिति समजलक्षीरद्विप्रस्थयुक्तम्॥ ३२॥

चक्रपाणिः—उक्तानामेरण्डादीनां वातादिहरवस्तीनां संख्याकल्पनां विशिष्टां दर्शयन्नाह—स्निग्धोष्ण इत्यादि। एक इत्येकपुटकः। पयसा चेति पयोयुक्तौ। कटुकोष्णतीक्ष्णत्वं कफहरद्रव्ययोगादेव ज्ञेयम्। न परं विधेया इत्यनेन तन्त्रान्तरविहितं चतुर्थवस्तिदानमत्यर्थशरीरहिंसकं निषेधयति। तेन सुश्रुते—"द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्हतः। सम्यङ्निरूहलिङ्गं तु प्राप्ते वस्तिं निवर्त्तयेत्" इत्युक्तं चतुर्थदानमिति॥ ३३॥

* पयोजलद्व्याढकयोरिति चक्रसम्मतः साधीयान् पाठः।

रसेन वाते प्रतिभोजनं स्यात् क्षीरेण पित्ते तु कफे तु यूषैः।
तथानुवास्येषु च विल्वतैलं स्याज्जीवनीयं फलसाधितञ्च ॥ ३४॥

तत्र श्लोकः।

इतीदमुक्तं निखिलं यथावत् वस्तिप्रदानस्य विधानमग्र्यम्।
योऽधीत्य विद्वानिह वस्तिकर्म्म करोति लोके लभते स सिद्धिम्॥३५

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
वस्तिसूत्रीयसिद्धिर्नाम तृतीयोऽध्यायः ॥ ३ ॥

गङ्गाधरः—निरूहानन्तर प्रतिभोजनमाह—रसेनेत्यादि। तथा तेन प्रकारेणानुवास्येषु विल्वतलं जीवनीयतलं फलसाधितञ्च तलं स्यादिति ॥ ३४ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोक इति। इतीदमित्यादि ॥ ३५ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। सिद्धिस्थानेऽष्टमेऽप्राप्ते यत्नाद् दृढ़बलेन तु।
प्रतिसंस्कृत एवात्र वस्तिसूत्रीयसिद्धिके। तृतीयेऽध्याय एवास्मिन्
वैद्यगङ्गाधरेण तु। कृते जल्पकल्पतरौ सिद्धिस्थानेऽष्टमेऽत्र
तु। स्कन्धे हि वस्तिसूत्रीया सिद्धिजल्पशाखा किल।
तृतीयषा समाप्ताभूदिति यत्नेन धीमता ॥ ३ ॥

चक्रपाणिः—सम्प्रति वातादिभेदेन प्रतिभोजनं विशिष्टं तथानुवासनञ्चाह—रसेन वातइत्यादि। प्रतिभोजनं निरूहानन्तरभोजनम्। वाते विल्वतैलानुवासनम्, पित्ते जीवनीयसाधितम्, कफे च मदनफलसाधितम्। अत्र विल्वतैलादीनि वक्ष्यमाणानि व्याख्यानयन्ति। तेन स्नेहव्यापत्सिद्धौ यद् वक्ष्यति 'दशमूलो' इत्यादिना विल्वतैलम्। जीवनीयञ्च "जीवन्ती मदनम्" इत्यादिना वक्ष्यमाणयमकम्, तथा "मदनैर्वाऽऽम्लसंयुक्तः" इत्यादिना वक्ष्यमाणं तैलं ज्ञेयम् ॥ ३४ । ३५ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां वस्तिसूत्रीयसिद्धिव्याख्यानाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

अथातः स्नेहव्यापदिकां सिद्धिं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

स्नेहवस्तीन् प्रवक्ष्यामि वातपित्तकफापहान् ।
मिथ्याप्रणिहितानाञ्च व्यापदः सचिकित्सिताः ॥ २ ॥
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्येरण्डभूतीक-फञ्जीवृषकरोहिषान् ॥
शतावरीं सहचरं काकनासां पलांशिकाम् ।
यवमाषातसीकोल-कुलत्थान् प्रसृतोन्मितान् ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमात् स्नेहव्यापच्चिकित्सासिद्धिमाह—अथात इत्यादि । स्नेहवस्तिव्यापदिकसिद्धयस्ताः सन्त्यस्मिन्निति, अध्यायानुवाकयोरिति मत्वर्थे छलुक्, तां सिद्धिं व्याख्यास्यामः इति । शेषं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—तद् यथा—स्नेहवस्तीनित्यादि । मिथ्याप्रणिहितानामसम्यक् प्रयुक्तानां वस्तीनां व्यापदस्तासां चिकित्सितानि च प्रवक्ष्यामीति ॥ २ ॥

गङ्गाधरः—दशमूलमित्यादि । भूतीकं यमानी । फञ्जी ब्राह्मणयष्टी । रोहिषं गन्धतृणम् । दशमूलादीनां काकनासान्तानां प्रत्येकं पलांशं यवादीनां पलद्वय

चक्रपाणिः—पूर्व्वसिद्धौ विल्वतैलादीन्यनुवासनार्थं निर्दिष्टानि, तदभिधायिका चेयं सिद्धिरित्यनन्तरं स्नेहव्यापत्सिद्धिरुच्यते । स्नेहेत्यादि—स्नेहानामानुवासिकानां तद्व्यापदाञ्च भेषजानामभिधायिका सिद्धिः ॥ १ ॥

चक्रपाणिः—अध्यायवक्तव्यमाह— स्नेहवस्तीनित्यादि । वस्तिप्रयोज्याः स्नेहा एतच्छ्लोकाभिहिता इत्यर्थः । प्रपञ्चाभिधेया ये त्वपरेऽलार्थाः “स्नेहवस्तिं निरूहञ्च” इत्यादिना वक्तव्याः, ते न प्रपञ्चवाह्या इह, तेन प्रतिज्ञाताः ॥ २ ॥

चक्रपाणिः—दशमूलमित्यादौ भूतीकं करञ्जः, यवानिका वा । काकनासा कायुयाठटी । वासकफलमन्ये तु द्रव्यमेवाहुः । एतद् दशमूलस्थितविल्वेन विल्वतैलमिति वदन्ति ।

चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ।
तैलाढ़कं समक्षीरं जीवनीयैः पलोन्मितैः ॥
अनुवासनमेतद्धि सर्व्ववातविकारनुत् ।
आनूपानां वसा तद्वज् जीवनीयोपसाधिता ॥ ३ ॥
शताह्वायवविल्वाम्लैस्तैलं सिद्धं समीरणे ।
सैन्धवेनाग्निवर्णेन तप्तं वानिलजिद् घृतम् ॥ ४ ॥
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम् ।
पिष्ट्वा तैलं घृतं क्षीरे साधयेत् तच्चतुर्गुणे ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्द्धनम् ।
मूत्ररेतोरजोदोषान् हरेत् तदनुवासनात् ॥ ५ ॥

प्रत्येक सर्व्वमेकीकृत्याम्भसश्चतुर्द्रोणे पक्त्वा द्रोणावशेषः क्वाथः कार्य्यस्तेन क्वाथेन तिलतलस्याढ़कं समक्षीरे क्षीराढ़के पलोन्मितजीवनीयदशभिः कल्कैः पचेत्। एतदनुवासनं सर्व्ववातविकारनुत्। आनूपानामित्यादि। आनूपानां वराहमहिषादीनां वसा तद्वद् आढ़कोन्मिता दशमूलादिक्वाथे समक्षीरे जीवनीयदशकानां कल्कैः पलोन्मितैः साधिता सर्व्ववातविकारनुत् ॥ ३ ॥

गङ्गाधरः—शताह्वायवविल्वाम्लकोलादिभिः कल्कैः पादिकस्तैः पाञ्चे चतुर्गुण-क्वाथे सिद्धं तैलं समीरणे हितम्। सैन्धवेनेत्यादि। सैन्धवमग्नौ दग्धं यदाग्निवर्णं स्यात् तदा घृतमध्ये प्रक्षिपेत्, तेन तप्तं घृतमनुवासनमनिलजित् ॥ ४ ॥

गङ्गाधरः—जीवन्तीमित्यादि। जीवन्त्यादि-वचान्तैः कल्कैः पादिकस्तैल

आनूपानामित्यादौ तद्वदिति पूर्व्वक्वाथेन साधिता। शताह्वेत्यादि योगान्तरम्। सैन्धवे-नेत्यपि योगान्तरम् ॥ ३ । ४ ॥

चक्रपाणिः—जीवन्तीमित्यादि यमकमनुवासनम्। एतद् यमकं पूर्व्वाध्याये 'जीवनीय-'

लाभतश्चन्दनाद्यैश्च पिष्टैः क्षीरचतुर्गुणम् ।
तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ॥ ६ ॥
सैन्धवं मदनं कुष्ठं शताह्वा निचुलं बला ।
ह्रीवेरं मधुकं भार्गी देवदारु सकट्फलम् ॥
नागरं पुष्करं मेदा चविका चित्रकं शटी ।
विडङ्गातिविषे श्यामा हरेणुः किणिही स्थिरा ॥
बिल्वाजमोदे कृष्णा च दन्ती रास्ना च तैः समैः ।
साध्यमेरण्डजं तैलं तैलं वा कफरोगनुत् ॥
ब्रध्नोदावर्त्तगुल्मार्शः-प्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीञ्चैव हन्यात् तदनुवासनात् ॥ ७ ॥
मदनैर्वाम्लसंयुक्तैर्बिल्वाद्येन गणेन वा ।
तैलं कफहरैर्वापि कफघ्नं कल्पयेद्भिषक् ॥ ८ ॥

घृतमेकीकृत्य चतुर्गुणे क्षीरे साधयेत् । लाभत इत्यादि । ज्वरचिकित्सिते यच्चन्दनादितैलद्रव्याणि चन्दनादीन्युक्तानि, तेषां लाभतो यथालाभं चन्दनाद्यैः पिष्टैः कल्कैः स्नेहात् पादिकैस्तैलपादं घृतं शरावकं तिलतैलं घृतं शरावत्रय मिति प्रस्थं स्नेहं क्षीरचतुर्गुणं पचेत्, सिद्धं तत् पित्तघ्नमनुवासनम् ॥ ५ । ६ ॥

गङ्गाधरः—सैन्धवमित्यादि—किणिही खरमञ्जरी । सैन्धवादिरास्नान्तैः प्रत्येकं समैः कल्कस्तेषां चतुर्गुणक्वाथे एरण्डजं तैलं साध्यं तिलतैलं वा साध्यं कफरोगनुत् ॥ ७ ॥

गङ्गाधरः—मदनैरित्यादि—मदनफलैरम्लबदरादिसंयुक्तैः कल्कस्तेषां चतुर्गुणक्वाथे तैलं कफघ्नं कल्पयेत्, अथवा बिल्वादिगणेन बृहत्पञ्चमूलेन कल्केन तेषां चतुर्गुणक्वाथे तैलं कफघ्नं कल्पयेत्, अथवा कफहरैः पिप्पल्यादिभिः कल्कस्तेषां चतुर्गुणक्वाथे तैलं कफघ्नं कल्पयेदिति ॥ ८ ॥

संज्ञया व्यपदिष्टम् । लाभत इति यथालाभं चन्दनाद्यं ज्वरचिकित्सितोक्तम् । तैलं पात्रं यस्मिन् तत् तैलपात्रम् ॥ ५—७ ॥

चक्रपाणिः—मदनैर्वाम्लसंयुक्तैरित्यत्र मदनस्य कल्कत्वम्, काञ्जिकादीनामम्लानां द्रवत्वम् । एतच्च 'मदनतैलम्' इति ख्यातम् । बिल्वाद्यो गणो दशमूलम्, दशमूलञ्च क्वाथकल्कानामपि

विड़ङ्गैरण्डरजनी-पटोलत्रिफलामृताः ।
जातिप्रवालनिर्गुण्डी-दशमूलाखुपर्णिकाः ॥
निम्बपाठासहचर-शम्पाककरवीरकम् ।
एषां क्वाथेन विपचेत् तैलमेभिश्च कल्कितः ॥
फलविल्वत्रिवृत्कृष्णा-रास्नाभूनिम्बदारुभिः ।
सप्तपर्णवचोशीर-दार्व्वीकुष्ठकलिङ्गकैः ॥
लतायष्टीशताह्वाग्नि-शटीचोरकपौष्करैः ।
तत् कुष्ठानि क्रिमीन् मेहानर्शांसि ग्रहणीगदम् ॥
क्लीवत्वं विषमाग्नित्वं मलं दोषत्रयं तथा ।
प्रयुक्तं प्रणुदत्याशु पानाभ्यङ्गानुवासनैः ॥
व्याधिव्यायामकर्म्माङ्ग-क्षीणबलनिरोजसाम् ।
क्षीणशुक्रस्य चातीव स्नेहवस्तिर्बलप्रदः ॥
पादजङ्घोरुपृष्ठांस-कटीनां स्थिरतां पराम् ।
जनयेदप्रजानाञ्च प्रजां स्त्रीणां तथा नृणाम् ॥ ६ ॥
वातपित्तकफात्यन्न-पुरीषैरावृतस्य च ।
अभुक्ते च प्रणीतस्य स्नेहवस्तेः षड़ापदः ॥

गङ्गाधरः—विड़ङ्गेत्यादि । आखुपर्णिका द्रवी । विड़ङ्गादि-करवीरकान्तानां क्वाथेन तैलचतुर्गुणेन तैलमेभिर्वक्ष्यमाणैः फलादिभिर्मदनफलादिभिः पौष्करान्तः कल्कितः पादिकैर्विपचेत् । शेषमाशीः ॥ ९ ॥

गङ्गाधरः—इति स्नेहवस्तियोगानुक्त्वा स्नेहवस्तिव्यापद आह—वातेत्यादि ।

देयम् । उक्तं हि—"क्वाथकल्कावनिर्द्दे शे गणात् तस्मात् समाहरेत्" इति । कफहरैरिति पूर्व्वाध्यायोक्तकफहरभेषजैः, किंवा कटुकपञ्चकोलादिभिः ॥ ८ ॥

चक्रपाणिः—विड़ङ्गेत्यादौ एभिश्च कल्कैरिति वक्ष्यमाणैः । लता मञ्जिष्ठा । गौरी हरिद्रा । स्नेहवस्तिर्बलप्रद इति एतैस्तैलैः कृतवस्तिरित्यर्थः ॥ ९ ॥

चक्रपाणिः—वातपित्तेत्यादिना स्नेहवस्तेर्व्यापदः प्राह । एताश्च व्यापदो मिथ्यायोगेन स्नेहस्य

शीतोऽल्पो वाधिके वाते पित्ते तूष्णः कफे मृदुः।
अतिभुक्ते गुरुर्वर्च्चः-सञ्चयेऽल्पबलस्तथा॥
दत्तस्तैरावृतः स्नेहो न यात्यभिभवादधः।
अभुक्तेऽनावृतत्वाच्च यात्यूर्द्ध्वं तस्य लक्षणम्॥ १०॥
स्तम्भोरुसदनाध्मान-ज्वरशूलाङ्गमर्द्दनैः।
पार्श्वरुग्वेष्टनैर्विद्यात् स्नेहं वातावृतं भिषक्॥
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलकैः।
सौवीरकसुराकोल-कुलत्थरससाधितैः॥

वातावृतस्य पित्तावृतस्य कफावृतस्यात्यन्नावृतस्य पुरीषावृतस्याभुक्ते च प्रणीतस्य दत्तस्य स्नेहवस्तेः षड़ापदः स्युः। कथं स्यात्—शीत इत्यादि। अधिके वाते शीतस्तथाल्पपरिमितः स्नेहवस्तिः, अधिके पित्तेऽत्युष्णः स्नेहवस्तिः, अधिके कफेऽतिमृदुः स्नेहवस्तिः, अतिभुक्तेऽत्यन्ने गुरुः स्नेहवस्तिः, वर्च्चः-सञ्चये पुरीषावृतेऽल्पबलोऽल्पवीर्य्यः स्नेहवस्तिर्दत्तः सन् तैर्वातादिभिरावृतः सन् स्नेहोऽभिभवान्नाधस्तादायाति। अभुक्ते व्यापदमाह—अभुक्त इत्यादि। अभुक्ते शून्योदरे दत्तः स्नेहवस्तिरनावृतत्वादूर्द्ध्वं याति॥ १०॥

गङ्गाधरः—आसां व्यापदां लक्षणमिदं पृथगुच्यते। स्तम्भ इत्यादि। स्तम्भादिभिर्वातावृतं स्नेहं विद्यात्। स्निग्धाम्लेत्यादिना वातावृतव्यापच्चिकित्सामाह। तं वातावृतस्नेहं स्निग्धाम्ललवणोष्णः रास्ना पीतद्रुः सरलद्रुमस्तिलवक्को

क्रियमाणा उच्यन्ते। प्रतिज्ञातं हि मिथ्याप्रणिहितानां व्यापद इति, तेन स्नेहायोगातियोगजन्य-व्यापदामिहानवसर एव। अनुवासनायोगातिजन्याश्च व्यापदः कल्पनासिद्धावेवोक्ताः, तद्भेषजश्चातिस्नेहिते शोधनवस्तिः, अस्नेहिते पुनः स्नेहवस्तिदानमेव ज्ञेयम्। एतच्च "तस्मान्निरूढः संस्नेह्यो निरूह्यश्चानुवासितः" इत्यादिनोक्तत्वात्, प्रसङ्गेनेहोक्तम्। यथाक्रमं षड़्व्यापदां हेतुमाह—शीत इत्यादि। गुरुरिति गुरुत्वयुक्तः। वर्च्चःसञ्चयेऽल्पबल इति सञ्चितमले सति अल्पबलो वर्च्चःसञ्चयप्रवर्त्तनाक्षम इत्यर्थः। तैरावृत इति पदं प्रत्येकं वातादिषु पञ्चसु योजनीयम्। अभिभवादपीति वातादिनाऽऽवृतमार्गत्वान्न याति। तथा तेन वातादिनोल्वणेनाऽभिभूतगुणत्वाच्च न याति। अनावृतत्वादिति अन्नेनाऽनूर्द्ध्वमार्गापिहितत्वात्। तस्य लक्षणमिति यथाक्रमं वाताद्यावृतस्य लक्षणं वक्ष्यमाणस्तम्भादि। वेष्टनैरिति पार्श्ववेष्टनैरेव। एते च स्तम्भादयो वातावृतस्नेहमहिम्नैव जायन्ते, तेन स्नेहप्रयोगात् पूर्व्वं न भवन्त्येव। रास्नातलं

निरूहैर्निर्हरेत् सम्यक् समूत्रैः पाञ्चमूलिकैः।
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत्॥ ११ ॥
दाहरागतृषामोह-तमकज्वरदूषणैः।
विद्यात् पित्तावृतं स्वादु-तिक्तैस्तं वस्तिभिर्जयेत्॥ १२ ॥
तन्द्राशीतज्वरालस्य-प्रसेकारुचिगौरवैः।
संमूर्च्छाग्लानिभिर्विद्यात् श्लेष्मणा स्नेहमावृतम्।
कषायकटुतीक्ष्णोष्णैः सुरामूत्रोपसाधितैः।
फलतैलयुतैः साम्लैर्वस्तिभिस्तं विनिर्हरेत्॥ १३ ॥
छर्दिमूर्च्छारुचिग्लानि-ज्वरशूलाङ्गमर्दनैः।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम्॥

लाद्यैः, एतैः पिष्टैः सौवीरकादिरसैः साधितनिरूहैः सम्यक् निर्हरेत्। समूत्रैः पाञ्चमूलिकैर्हृतपञ्चमूलक्वाथैः समूत्रनिरूहैर्वा सम्यक् तं निर्हरेत्। ताभ्यामेव च तैलाभ्याम्, स्निग्धाम्ललवणोष्णैः रास्नादिभिः कल्कैः सौवीरादिद्रवसाधितेन तैलेन अथवा सगोमूत्रैः पाञ्चमूलिकैः पञ्चमूलकल्कश्चतुर्गुणगोजले साधितेन तैलेनेति ताभ्यामेव तैलाभ्यां सायं भुक्तवन्तं तमनुवासयेत्। इति॥ ११ ॥

<u>गङ्गाधरः</u>—इति वातावृतव्यापदं सचिकित्सितामुक्त्वा पित्तावृतस्नेहवस्तिव्यापदो लक्षणं चिकित्साञ्चाह—दाहेत्यादि। दाहादिभिः पित्तावृतं वस्तिस्नेहं विद्यात्। स्वादुतिक्तनिरूहवस्तिभिस्तं पित्तावृतं स्नेहं जयेत्॥ १२ ॥

<u>गङ्गाधरः</u>—कफावृतलक्षणं सचिकित्सितमाह—तन्द्रेत्यादि। तन्द्रादिभिः श्लेष्मणावृतं वस्तिस्नेहं विद्यात्। तस्य चिकित्सामाह—कषायेत्यादि। कषायकटुतिक्तोष्णद्रव्यैः सुरागोमूत्रसहितैः क्वाथं कृत्वा तत्र मदनफलकल्कतैलवदाद्यम्लं दत्त्वा मथितवकीभूतनिरूहवस्तिभिर्निर्हरेत् तं श्लेष्मावृतं स्नेहमिति॥१३॥

<u>गङ्गाधरः</u>—अत्यन्नावृतस्य लक्षणं सचिकित्समाह—छर्दीत्यादि। छर्द्या-

"रास्नासहस्रनिर्यूहे" इत्यादिनाभिहितं वातव्याधावुक्तम्। पीतद्रु तैलञ्च—पीतद्रु सौवीरकादिद्रवेण साधितम्। ताभ्यामिति रास्नापीतद्रु तैलाभ्याम्॥ १०—१२॥

<u>चक्रपाणिः</u>—फलतैलं पूर्व्वं व्याकृतमेव ज्ञेयम्। आमलिङ्गैरिति आमलक्षणैरालस्यादिभिः।

कटूनां लवणानाञ्च क्वाथैश्चूर्णैश्च पाचनम्।
मृदुर्विरेकस्तत्राम-विहिता च हिता क्रिया॥ १४॥
विण्मूत्रानिलसङ्गार्त्ति-गुरुत्वाध्मानहृद्ग्रहैः।
स्नेहं विड़ावृतं मत्वा स्नेहस्वेदैः सवर्त्तिभिः॥
श्यामाविल्वादिसिद्धैश्च निरूहैः सानुवासनैः।
निर्हरेद् विधिना सम्यगुदावर्त्तहरेण च॥ १५॥
अभुक्ते शून्यपायौ च वेगात् स्नेहोऽतिपीड़ितः।
धावत्यूर्द्ध्वं ततः कण्ठादूर्द्ध्वेभ्यः खेभ्य एत्यपि॥

दिभिरत्यशनावृतं वस्तिस्नेहं विद्यात्। तस्य चिकित्सामाह। कटूनां मरिचादीनां लवणानाञ्च क्वाथश्चूर्णैश्च तदत्यशनस्य पाचनं कार्य्यं मृदुविरेकश्च, तत्रामविहिता खल्वामाजीर्णविहिता क्रिया हिता॥ १४॥

गङ्गाधरः—पुरीषावृतलक्षणं सचिकित्समाह—विण्मूत्रेत्यादि। विट्सङ्गादिभिर्विड़ावृतं वस्तिस्नेहं मत्वा स्नेहस्वेदस्तथा वर्त्तिभिः श्यामात्रिवृद्विल्वादिपञ्चमूलक्वाथसिद्धनिरूहस्तत्क्वाथकल्कसाधितस्तैलैरनुवासनस्तं स्नेहं सपुरीषं निर्हरेत्। उदावर्त्तहरेण भेषजेन च निर्हरेत्॥ १५॥

गङ्गाधरः—अभुक्ते स्नेहवस्तिदाने व्यापदः सलक्षणं चिकित्सितमाह—अभुक्त इत्यादि। अभुक्ते पायौ च शून्ये तत्र स्नेहो वस्तिरतिपीड़ितो वेगादूर्द्ध्वं धावति। ततः कण्ठादूर्द्ध्वं मुखनासिकादिभ्यः खेभ्यश्छिद्रेभ्यो निरेतीति।

आमविहिता क्रियेति "आमप्रदुष्टमलाभिभूतन्तु पुनरुल्लिखेत्" इत्यादिना विहिताऽनुवर्त्तव्या। स्नेहं विड़ावृतमित्यादौ वर्त्तिभिरिति फलवर्त्तिभिः। केचित्तु वस्तिभिरिति पठन्ति। श्यामाविल्वादीनि च श्यामा च विल्वादीनि दशमूलानि च श्यामाविल्वादीनि। किंवा श्यामादीन्यत्र कल्पोक्तान्येव गृह्यन्ते। तैर्निरूहस्य तथानुवासनस्य च साधनमिह ज्ञेयम्। उदावर्त्तहरेणेति त्रिमर्म्मीयोक्तोदावर्त्तचिकित्सितेन॥ १३—१५॥

चक्रपाणिः—अभुक्त इत्यादौ हेतुत्रयं स्नेहवस्तेरूर्द्ध्वगमनकारणं ज्ञेयम्, पूर्व्वञ्च यद्यप्यभोजनदानमेव कारणं प्रतिश्रुतम्, तथाप्येककार्य्यतया चिकित्सितसामान्याच्च शून्यपायावतिपीड़ितेऽभुक्ते च, शून्यपायुत्वञ्चाधोनिरोधाकर्त्तृतया स्नेहमूर्द्ध्वं नयति। ऊर्द्ध्वेभ्यः खेभ्य इति मुख-

मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैलमिष्टोऽत्र निरूहः सानुवासनः ॥ १६ ॥
कण्ठादागच्छतः स्तम्भः कण्ठग्रहविरेचनैः ।
छर्द्दिघ्नीभिः क्रियाभिश्च तस्य कुर्य्यान्निवर्त्तनम् ॥ १७ ॥
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ।
सर्व्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥ १८ ॥

तत्र चिकित्सामाह—मूत्रेत्यादि । अत्राभुक्ते वस्तिस्नेहव्यापदि श्यामारुणमूलत्रिवृद्द्रव्यं यवकोलकुलत्थान् गोमूत्रश्चाष्टगुणे जले पक्त्वा चतुर्थभागशेषे क्वाथे युक्त्या सैन्धवमधुघृतं दत्त्वा मथित्वा सिद्धो निरूहः । तत्कल्कः सिद्धं तत्क्वाथे च चतुर्गुणे पक्वं तैलमनुवासनमिति सानुवासनो निरूह इष्टः ॥ १६ ॥

गङ्गाधरः—कण्ठादित्यादि । कण्ठादागच्छतः स्नेहस्य स्तम्भस्तत्क्षणं कण्ठदेशग्रहणेन कार्य्यः पश्चाद् विरेचनैरेति । तथा च्छर्द्दिघ्नीभिः क्रियाभिश्च तस्य कण्ठादागमनस्य निवर्त्तनं कुर्य्यात् । इति षण्णां व्यापदां लक्षणं चिकित्सितञ्चोक्तम् ॥ १७ ॥

गङ्गाधरः—यस्येत्यादि । यस्य वस्तिस्नेहः सर्व्वो वाल्पो वाप्यनिःसृतो नोपद्रवं कुर्य्यात्, तस्य स आवृतः स्नेहो रौक्ष्यात् रौक्ष्यं कर्म्म प्रकृत्य उपेक्ष्यः स्यात् ॥ १८ ॥

नासादिभ्यः, एतीति निर्गच्छति । अपिशब्दान्मुखादिनिर्गमनस्य कादाचित्कत्वं दर्शयति । तत्सिद्धतैल इति मूत्रश्यामादिसाधिततैलेन युक्तः । सानुवासन इति तत्सिद्धतैलेनैवानुवासनं देयम् । आगच्छत इत्यागमनसमय एव स्तम्भादि कर्त्तव्यम् । स्तम्भो व्यजनोपक्रशीतलजलसेकादिना । कण्ठग्रह ऊर्द्ध्वगमनप्रतिषेधार्थं कण्ठपीडनम् । छर्द्दिघ्नः क्रियाश्छर्द्दिश्चिकित्सिते 'मनोऽभिघाते मनोऽनुकूलाः' इत्यादिना 'सुख एव जेतुम्' इत्यन्तेनोक्ता इहाभिप्रेता ज्ञेयाः ॥१६।१७॥

चक्रपाणिः—वाताद्यावृतस्नेहप्रवर्त्तनमभिधाय अप्रवर्त्तनीयस्नेहमाह—यस्य नोपद्रवमित्यादि । नोपद्रवं कुर्य्यादिति अनिःसृतोऽपि स्तम्भरुगादीनूर्द्ध्वोक्तान्न कुर्य्यात् । अल्पो वावृत इति स्तोकनिःसृतः, स्तोकश्च वृतः । वृतस्यापि स्तम्भाद्युपद्रवाकरणे हेतुमाह—रौक्ष्यादिति तदात्यर्थरूक्षतया शरीरस्य तिष्ठन्नपि स्नेहो न व्यापदमावहतीत्यर्थः । उपेक्ष्य इति न तत्र यथोक्तवाताद्यावृतस्नेहचिकित्सा कर्त्तव्येत्यर्थः । अन्यत्राप्युक्तम्—"अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति । कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत्" इति ॥ १८ ॥

मुक्तस्नेहो * द्रवोष्णञ्च लघु पथ्योपसेवनम्।
भुक्तवान् मात्रया भोज्यमनुवास्यस्त्र्यहात् त्र्यहात्॥
धान्यनागरसिद्धञ्च तोयं दद्याद् विचक्षणः।
व्युषिताय निशाः कल्यमुष्णं वा केवलं जलम्॥ १९॥
स्नेहाजीर्णं जरयति श्लेष्माणञ्च भिनत्ति च।
मारुतस्यानुलोमत्वं कुर्य्यादुष्णोदकं नृणाम्॥
वमने च विरेके च निरूहे चानुवासने।
तस्मादुष्णोदकं सेव्यं वातश्लेष्मोपशान्तये॥ २०॥
रूक्षानित्यस्तु दीप्ताग्निर्भृशं व्यायामपीड़ितः।
वङ्क्षणश्रोण्युदावर्त्त-वातार्त्ताश्च † दिने दिने॥

गङ्गाधरः—अथ मुक्तस्नेह इत्यादि। मुक्तस्नेह आभृतस्नेहस्य क्रियया निःसरणे जाते स तु विनिःसृतवस्तिस्नेहो नरो द्रवोष्णं लघु च भोज्यं पथ्योपसेवनं यथा स्यात् तथा मात्रया भुक्तवान् त्र्यहात् त्र्यहादनुवास्यः स्यात्। तस्य पानार्थं धान्यादिसिद्धं तोयं निशाः व्युषिताय तस्मै दद्यात्, केवलमुष्णं वा जलं दद्यात्॥ १९॥

गङ्गाधरः—तज्जलं स्नेहाजीर्णमजीर्णस्नेहं जरयतीत्यादि कुर्य्यात्। वमने चेत्यादि। तस्मादजीर्णजरणादिकरणाद्धेतोर्वमनादौ वातश्लेष्मोपशान्तये चोष्णमुदकं सेव्यमिति॥ २०॥

गङ्गाधरः—उष्णजलस्यापरगुणमाह—रूक्षेत्यादि। एषां रूक्षनित्यादीनां

चक्रपाणिः—उत्पन्नव्यापत्प्रतीकारमभिधायाऽव्यापन्नानुवासनानुगुणं भोजनमाह—युक्तस्नेहमित्यादि। युक्तस्नेहमित्यव्यापन्नस्नेहमिति भावः। उपसेवनं भोजनम्। त्र्यहादिति विकल्पं प्रायिकम्। धान्येत्यादौ षड़ङ्गविधिना तोयं साधनीयम्। कल्यमिति प्रभाते। स्नेहाजीर्णमिति स्नेहस्याजीर्णं कोष्ठोपलेपकमंशम्॥ १९। २०॥

चक्रपाणिः—प्रत्यहानुवासनीयानाह—रूक्षनित्यास्त्वित्यादि। वङ्क्षणश्रोणिगतश्च तथोदावर्त्तश्च वातो येषां ते वङ्क्षणश्रोण्युदावर्त्तवाताः। अर्हा इत्यनुवासनार्हाः। उक्तञ्चान्यत्र—"रूक्षस्य बहुवातस्य स्नेहवस्तिं दिने दिने। दद्याद वैद्यस्ततोऽन्येषामग्निरोधभयात् त्र्यहात्" इति।

* युक्तस्नेहम् इति चक्राभिमतः पाठः। † वाताश्चार्हा इति चक्रधृतः पाठः।

एषामाशु जरां स्नेहो यात्यम्बुसिकतास्विव ।
अतोऽन्येषां त्र्यहान्तेयं स्नेहं पचति पावकः ॥
न त्वामं प्रणयेत् स्नेहं स ह्यभिष्यन्दयेद् गुदम् ।
सावशेषञ्च कुर्व्वीत वायुः कोष्ठे हि तिष्ठति ॥
न चैति गुदकण्ठाभ्यां दद्यात् स्नेहमनन्तरम् ।
सक्तः स ह्युभयतो वातमग्निञ्च दूषयेत् ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहात् पवनाद् भयम् ॥

नृणां स्नेह आशु जरां याति, यथा सिकतास्वम्बु शीघ्रं जरां यातीति। अत इत्यादि। अतो रूक्षनित्यादिभ्योऽन्येषां येषां नृणां त्र्यहान्तेयं स्नेहं पावको जाठराग्निः पचति, तेषामामस्नेहं न पुनरनुवासनेन प्रणयेत्। कस्मात्? हि यस्मात् स आमः स्नेहो गुदमभिष्यन्दयेत्। कस्मात् तं पूर्व्वदत्तं स्नेहं वायुः सावशेषञ्च कुर्व्वीत? हि यस्मात् कोष्ठे वायुस्तिष्ठति। गुदकण्ठाभ्यां न चैति नागच्छति। स्नेहजीर्णादनन्तर पुनः स्नेहं त्र्यहात् त्र्यहाद् दद्यात्। कस्मात् त्र्यहात् त्र्यहात्? स स्नेहो हि यस्मात् त्र्यहमुभयतः कण्ठतो गुदतश्च सक्तो लग्नः सन् वातमग्निञ्च दूषयेत्। स्नेहेत्यादि। एकं केवलं स्नेहवस्तिमथवैकं निरूहवस्तिं नातिशीलयेत्। कस्मात्? यतः स्नेहाद् वस्तिस्नेहादुत्क्लेशाग्निवधौ स्याताम्, निरूहात् तु पवनाद्

प्रत्यहदानोपपत्तिमाह—एषामित्यादि। त्र्यहात् स्नेहं पचतीति पक्काशयो ह्युपलेपकं स्नेहं वहिर्निःसृतेनोष्मणा पचति। यद्यप्यत्राग्निनोर्द्ध्वस्थितेन तादृशः सम्बन्धः स्नेहस्य नास्ति, तथापि जठरस्य वहिर्निःसृतेनैवोष्मणा पाको वक्तव्यः। प्रायःशब्देन पञ्चाहपाकमपि दर्शयति, न पञ्चाहदानमप्यनुवासन इहापि मन्दाग्निं प्रति प्रागुक्तं ज्ञेयम्। उक्तं हि—"परमतो द्व्यहेऽहनि पञ्चमे वा" इति। आममित्यपक्कम्, प्रणयेदित्यनुवासनं दद्यात्। सावशेषं कुर्व्वीतेति न निःशेषं दद्यात्। गुदकण्ठाभ्यामित्यनुवासनपानाभ्याम्। अनन्तरमित्यनेककालम्। वातमग्निञ्च दूषयेदित्यत्र वातदूषणमजीर्णजनकतया वातावरणाच्च ज्ञेयम्। निरूहानुवासनयोः परस्पराव्यवधानदानदोषमाह—स्नेहवस्तिं निरूहं वेत्यादि। एकमेवेति परस्परानन्तरितम्। उत्क्लेशः कफ-

तस्मान्निरूढ़ः स्नेह्यः स्यान्निरूह्यश्चानुवासितः।
स्नेहशोधनयुक्त्यैवं वस्तिकर्म्म त्रिदोषनुत् ॥ २१ । २२ ॥
कर्म्मव्यायामभाराध्व-कामस्त्रीकर्षितेषु च।
दुर्ब्बले वातभग्ने च मात्रावस्तिः सदा हितः ॥ २३ ॥
ह्रस्वायाः स्नेहमात्राया मात्रावस्तिः समो भवेत्।
यथेष्टाहारचेष्टस्य सर्व्वकालं निरत्ययः ॥
बलं सुखोपचर्य्यश्च सुखं सृष्टपुरीषकृत्।
स्नेहमात्राविधानश्च बृंहणं वातरोगनुत् ॥ २४ ॥

भयं स्यात्। तस्मात् निरूढ़ो जनः पुनरनुवासनेन स्नेह्यः स्यादनुवासितश्च पुनः निरूह्यः स्यात्। एवमनेन प्रकारेण स्नेहशोधनयुक्त्या स्नेहवस्तेः शोधनवस्तेर्निरूहस्य युक्त्या कृतं वस्तिकर्म्म त्रिदोषनुद् भवति ॥ २१ । २२ ॥

गङ्गाधरः—कर्म्मेत्यादि। कर्म्म व्यवहारचेष्टा। एषु मात्रावस्तिः सम्यङ् मात्रया दत्तो वस्तिः सदा हितः ॥ २३ ॥

गङ्गाधरः—ह्रस्वेत्यादि। ह्रस्वायाः स्नेहमात्रायाः समो मात्रावस्तिः स्यात्। यथा ह्रस्वमात्रया वस्तिर्यथेष्टाहारादिरतथा मात्रावस्तिश्च यथेष्टाहारादिनिरत्ययः। तथा च स्नेहमात्राविधानं बलं बलकृदित्येवमादिः स्यादिति ॥ २४ ॥

पित्तोत्क्लेशः। निरूहात् पवनाद् भयमिति निरन्तरनिरूहेण शरीरस्य शोधनातियोगात् पवनाद् भयं भवति। निरूढ़ः संस्नेह्य इति निरूहेण स्रोतःसु शोधितेषु कफपित्तजये कृते स्नेहवस्तिरभ्यस्यः तथाऽनुवासितश्च सम्यगनुवासनेन हि स्निग्धः सन् निरूह्य एव। प्रयुज्यमानस्नेहनिरूहयोस्त्रिदोषहन्तृत्वं स्नेहेन वातजयान्निरूहेण कफपित्तजयाद् भवतीत्याह—स्नेहशोधनेत्यादि। शोधनमिह निरूहोऽभिप्रेतः ॥ २१ । २२ ॥

चक्रपाणिः—अनुवासनविशेषस्य मात्रावस्तेर्विषयं प्रमाणं गुणांश्च यथाक्रममाह—कर्म्मेत्यादि। कर्म्मात्र कन्दुकचालनादि। व्यायामो धनुराकर्षणादिः। वातभग्ने इति वातेन पीड़िते। सदेति प्रत्यहम् ॥ २३ ॥

चक्रपाणिः—ह्रस्वाया इति अर्द्धाहपरिणमनीयायाः, उक्तं हि—"अहोरात्रं यतः कृत्स्नंदिनार्द्धञ्च प्रतीक्षते। उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति॥" तन्त्रान्तरे स्नेहमात्रात्रयं प्रमाणमेवोक्तम्, यथा—"षट्पली तु भवेज्ज्येष्ठा मध्यमा त्रिपली भवेत्। कनीयसी सार्द्धपला त्रिधा मात्रानुवासने" इति। सुश्रुतेनापि वस्तिप्रमाणमुक्तम्, यथा—"तस्यापि विकल्पे अर्द्धार्द्धमात्रावकृष्टो

तत्र श्लोकौ ।

वातादीनां शमायोक्ताः प्रवराः स्नेहवस्तयः ।
तेषाञ्चाज्ञप्रयुक्तानां व्यापदः सचिकित्सिताः ॥
प्राग् भोज्यं स्नेहवस्तैर्यत् ध्रुवं येऽर्हास्त्र्यहाच्च ये ।
स्नेहवस्तिविधिश्चोक्तो मात्रावस्तिविधिस्तथा ॥ २५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने स्नेहव्यापदिकी सिद्धिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोकाविति । वातादीनामित्यादी श्लोकौ द्वौ ॥ २५ ॥

गङ्गाधरः—अध्यायं समापयति । अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । सिद्धिस्थानेऽष्टमेऽप्राप्ते पुनर्दृढबलेन तु ।
प्रतिसंस्कृत एवास्मिंश्चतुर्थाध्याय एव च । स्नेहव्यापत्सिद्धिप्रति-सस्कारे
स्फुटबोधने । वद्यगङ्गाधरकृते जल्पकल्पतरौ पुनः । सिद्धि-
स्थानेऽष्टमे स्कन्धे चतुर्थाध्याय एव च । स्नेहव्यापत्सिद्धि-
जल्प-शाखा तुर्या समापिता ॥ ४ ॥

अपरिहार्य्यो मात्रावस्तिः" इति, अनेन सार्द्धपलमानो मात्रावस्तिरुक्तो भवति । तत्र हि षट्पलः स्नेहवस्तिरुक्तः । अनुवासनन्तु त्रिपलम्, सार्द्धपलो मात्रावस्तिः । सुखोपचर्य्यमिति नियमाभावादेव ॥ २४ ॥

चक्रपाणिः—संग्रहे भोज्यग्रहणेन धान्यनागरजलाद्यपि संग्राह्यम् । ध्रुवं ये अर्हा इति प्रत्यहमनुवासनीयाः । विधिश्चोक्त इति न त्वामं प्रणयेदित्यादिग्रन्थोक्तोऽर्थः ॥ २५ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां स्नेहव्यापत्सिद्धिव्याख्या-नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अथातो नेत्रवस्तिव्यापदिकीं सिद्धिं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

अथ नेत्राणि वस्तींश्च शृणु वर्ज्ज्यानि कर्म्मसु ।
नेत्रस्याज्ञप्रणीतस्य दोषांश्च सचिकित्सितान् ॥ २ ॥
ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम् ।
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्ज्जयेत् ॥
अप्राप्त्यतिगतिक्षोभ-कर्षणक्षणनस्रवाः ।
गुदपीड़ा गतिर्जिह्मा तेषां दोषा यथाक्रमम् ॥ ३ ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमात् नेत्रवस्तिव्यापत्सिद्ध(चिकित्सिता)-ध्यायमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—अथ नेत्राणीत्यादि । वर्ज्ज्यानि नेत्राणि वर्ज्ज्यांश्च वस्तीन् शृणु । अज्ञवद्यप्रणीतस्य नेत्रस्य दोषांश्च तच्चिकित्सितानि च शृणु ॥ २ ॥

गङ्गाधरः—ह्रस्वमित्यादि । ह्रस्वादीन्यष्टौ नेत्राणि वर्ज्जयेत् । कस्माद् वर्ज्जयेत् ? अप्राप्तीत्यादि । अप्राप्त्यादीनष्टौ, तेषां ह्रस्वादिनेत्राणां यथाक्रमं यतो दोषाः । ह्रस्वनेत्रे स्नेहस्याप्राप्तिः, दीर्घनेत्रे वस्तेरतिशयेन गतिः, तनुनेत्रे वस्तेः क्षोभः, स्थूलनेत्रे कर्षणम्, जीर्णनेत्रे क्षणनं गुदे भवति, नेत्रवस्तेः शिथिलबन्धने वस्तिद्रवस्रावः स्यात्, छिद्रपार्श्वच्छिद्रनेत्रे गुदपीड़ा भवेत्, नेत्रे वक्रे वस्तिद्रवस्य जिह्मा कुटिला गतिः स्यादिति ॥ ३ ॥

चक्रपाणिः—स्नेहव्यापत्सिद्ध्यभिधानप्रसङ्गात् स्नेहदानसाधननलिकादिव्यापत्प्रतिकारार्थं नेत्र-वस्तिव्यापत्सिद्धिरुच्यते । नेत्रगता तथा वस्तिगता च तथा नेत्रासम्यक्प्रणिधानजन्या च या व्यापत् तस्याः सिद्धिः सा नेत्रवस्तिव्यापत्सिद्धिः । दुष्टनेत्रवस्तिपुटकयोश्चेयमेव सिद्धिः, तयोः सदोषत्वेन ज्ञात्वा परिवर्ज्जनम् । तदेवाह ह्रस्वमित्यादि । नेत्रदोषकथने अष्टाविति यदुक्तं तत्र अनुक्तकर्कशत्वादिदोषाणां तत्रव अन्तर्भावोऽपि दर्शनार्थं यः कर्कशस्तस्य दीर्घेण कर्त्तृत्वसाम्य-ग्रहणम्, एवमन्यत्रापि संख्यावचने प्रयोग इह वर्णनीयः । अप्राप्त्यादि यथाक्रमं ह्रस्वनेत्रादिषु

मांसलस्निग्धविषम-स्थूलजालकवातलाः ।
स्निग्धक्लिन्नौ च तानष्टौ वस्तीन् कर्म्मसु वर्ज्जयेत् ॥
गतिवैषम्यविस्रत्व-स्रावदौर्गन्ध्यविट्स्रवाः ।
फनिलच्युतधार्य्यत्वं वस्तेः स्याद्‌ वस्तिदोषतः ॥ ४ ॥
सवातातिद्रुतोत्क्षिप्त-तिर्य्यगुत्क्षिप्तकम्पिताः ।
अतिवाह्यगमन्दाति-वेगदोषाः प्रणेतृतः ॥ ५ ॥

गङ्गाधरः—नेत्रवर्ज्जनमुक्त्वा वस्तिवर्ज्जनमाह—मांसलेत्यादि । वस्तिनाम चर्म्मविशेषो मूत्रस्थानम्, स च वस्तिर्यदि मांसयुक्तादिः स्यात् तदा वर्ज्ज्यः स्यादिति । गतिवैषम्येत्यादि । वस्तिचर्म्मणो दोषतो मांसलादिभावात् वस्तेर्वस्तिगतस्य द्रव्यस्य गतिवैषम्यं विस्रत्वं स्रावो दौर्गन्ध्य विट्स्रावः फेनिलत्वं च्युतत्वं धार्य्यत्वं चाष्टमं स्यात् ॥ ४ ॥

गङ्गाधरः—प्रणेतृदोषानाह—सवातेत्यादि । प्रणेतृतो वैद्यस्याक्रियातो भवन्त्येते दोषाः । निःशेषेण वस्तिद्रव्यदाने सवातदानं दोषः । अतिद्रुतोत्क्षिप्त तिर्य्यग्बन्ध उत्क्षिप्तः हस्तकम्पेन कम्पितः अतिवाह्यनेत्रं मन्दवेगः अतिवेगश्चेति दोषा अष्टौ ॥ ५ ॥

ज्ञेयम् । अतिगतिर्दूरे प्रवेशः, क्षोभो गुदप्रविष्टस्य इतस्ततो गमनम्, गुदपीड़ा पार्श्वादिगतेन वस्तिद्रवेण योगात् गुदपीड़ा । जिह्मेति कुटिला ॥ १—३ ॥

चक्रपाणिः—विषमो विषमसंस्थानः । स्थूलो अतिगुणः । जालिकः सूक्ष्मानेकच्छिद्रः । वातलो वातदुष्टः, स च तत्र अभिहितस्नेहादेः फेनिलत्वादिना उन्नीयते । स्निग्धो अतिस्निग्धः । क्लिन्नः शीर्णावयवः । गतिवैषम्यादयो यथाक्रमम् अष्टौ दोषाः वस्तिदोषतो भवन्ति । विस्रत्वं आमगन्धित्वम् । धार्य्यत्वं वस्तेरतिक्लिन्नत्वात् विधारणायोग्यत्वं वस्तिपुटकस्य ॥ ४ ॥

चक्रपाणिः—सवातेत्यादिप्रणेतृदोषा उच्यन्ते । तत्र सवातता वस्तौ दुष्टे भवति । तथा अतिद्रुतत्वमपि प्रणयने निर्गमने च, उत्क्षिप्तम् ऊर्द्ध्वं क्षिप्तम्, तिर्य्यगुत्क्षिप्तं तिर्य्यक् प्रणिधानम्, कम्पितो दोषो यः पीड़ने विच्छेदं कृत्वा पुनः पीड्यते स ज्ञेयः, नेत्रस्य अतिप्रणयनम् अतिवाह्यम्, गुदाप्रविष्टम् औषधं मन्दवेगम्, दूरप्रवेशान्तम् अतिपीड़नं तत्र अतिवेगम् ॥ ५ ॥

अनुच्छ्वास्यानुबन्धे वा दत्ते निःशेष एव च।
प्रविश्य कुपितो वायुः शूलतोदकरो भवेत्।
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च॥ ६॥
द्रुतं प्रणीतनिष्कृष्टे सहसोत्क्षिप्त एव च।
स्यात् कटीगुदजङ्घार्त्ति-वस्तिस्तम्भोरुवेदनाः।
भोजनं तत्र वातघ्नं स्नेहस्वेदाः सवस्तयः॥ ७॥
तिर्य्यग्बन्धावृतद्वारे बन्धेनापि न गच्छति।
नेत्रं तदूर्द्ध्वं निष्कृष्य संशोध्य च पुनर्नयेत्॥

गङ्गाधरः—तत्र क्रमेणाह—अनुच्छ्वास्येत्यादि। वस्तिनेत्रस्य मुखं नोच्छ्वास्य वस्तौ दत्ते तथा वायुपूर्णवस्तिपुटकमुच्छ्वास्य वायुशेषे स्थिते वस्तौ दत्ते निःशेषे च वस्तौ दत्ते वस्तिपुटगतो वायुरुदरं प्रविश्य कुपितः सन् शूलादिकरो भवेत्। तस्य चिकित्सामाह—तत्रेत्यादि॥ ६॥

गङ्गाधरः—अतिद्रुतदोषमाह—द्रुतमित्यादि। द्रुतं प्रपीड्य वस्तिद्रव्ये प्रणीतनिष्कृष्टे तथा सहसोत्क्षिप्ते च कट्यादिगतार्त्तिप्रभृतयः स्युः। तत्र चिकित्सितमाह—भोजनमित्यादि। सवस्तय इति निरूहस्नेहवस्तिसहिताः॥ ७॥

गङ्गाधरः—तिर्य्यगित्यादि। बन्धेन नेत्रे तिर्य्यग्बन्धावृतद्वारे स्नेहो निरूहश्च न गच्छति नान्तः प्रविशति। तत्र तदूर्द्ध्वं नेत्रं निष्कृष्य संशोध्य तिर्य्यग्बन्धनं

चक्रपाणिः—एतद्व्यापदां चिकित्सितानि प्रत्येकमाह—अनुच्छ्वास्येत्यादि। एते च अनुच्छ्वासादयो यद्यपि पूर्व्वमेव निषिद्धास्तथापि प्रमादात् तथा प्रयोगे सति यावद्व्यापच्चिकित्साभिधानार्थम् एतत् प्रकरणम्। द्रुतेत्यादिना उत्क्षिप्तमपि समानव्यापत्तिकतया एकग्रन्थेनैव पठ्यते। निष्कृष्टे सहसेति च्छेदः। उत्क्षेपस्तु असहसापि व्यापत्कर एव। वस्तेर्मूत्राशयस्य स्तम्भो वस्तिस्तम्भः। सवस्तय इति वातवस्तियुक्ताः॥ ६। ७॥

चक्रपाणिः—तिर्य्यक्प्रणिधानदोषे अभिधातव्ये तिर्य्यक्प्रणिहिते नेत्रे वस्त्यावृतद्वारे सति तथा वस्तिद्रव्यगतमूलद्रव्यादिना विबद्धे नेत्रे वस्तिद्रव्यं न याति। तन्नेत्रं तिर्य्यक्प्रणिहितं

पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ।
उरःशिरोऽर्त्तिमूर्व्वोश्च सदनं जनयेद् बली ॥
वस्तिः स्यात् तत्र विल्वादि-फलश्यामादिमूत्रवान् ॥ ८ ॥
स्याद् दाहो दवथुः शोथः कम्पनाभिहते गुदे ।
कषायमधुराः शीताः सेकास्तत्र सवस्तयः ॥ ९ ॥
अतिमात्रप्रवृत्तेन नेत्रेण क्षणनाद् बलेः ।
स्याच्छर्द्दिदाहनिस्तोद-गुरुवर्च्चःप्रवर्त्तनम् ॥
तत्र सर्पिः पिचुः क्षीरं पिच्छावस्तिः प्रशस्यते ॥ १० ॥

मोचयित्वा यथाहबन्धन कृत्वा पुनर्वस्तिं प्रणयेत् । नचेदेवं कृत्वा वस्तिं दद्यात् तत्र दोषमाह—पीड्यमान इत्यादि । वस्तौ पीड्यमानेऽन्तरा सर्व्वद्रव्यगमना-समाप्तावर्व्वाक् मुक्ते निवृत्तेऽनिलो गुदे प्रतिहतः सन् बलवान् भूत्वा उरोऽर्त्तिं शिरोऽर्त्तिं चोर्व्वोः सदनञ्च जनयेत् । तच्चिकित्सामाह—वस्तिः स्यादित्यादि । विल्वादिपञ्चमूलं मदनफल श्यामादि चापामार्गतण्डुलीयोक्तं त्रिवृतां त्रिफला-मित्याद्युक्तं गोमूत्रञ्चाष्टगुणे जले निक्वाथ्य पादावशेषः क्वाथस्तत्र स्नेहलवण दत्त्वा पीड्यमाने वस्तौ निरूहवस्तिर्हितः स्यात् ॥ ८ ॥

गङ्गाधरः—वस्तिप्रपीडनकाले हस्तकम्पनदोषमाह—स्याद् दाह इत्यादि । कम्पनाभिहते गुदे दाहादि स्यात् । तत्र चिकित्सामाह—कषायेत्यादि । कषायमधुरद्रव्यकृतक्वाथेन सेकश्च वस्तिश्च तत्र हितः ॥ ९ ॥

गङ्गाधरः—अतीत्यादि । अतिमात्रप्रवृत्तेनातिशयप्रविष्टेन नेत्रेण बलेर्गुद-बलेः क्षणनात् क्षतभावात् छर्द्द्यादि स्यात् । तत्र चिकित्सामाह—तत्रेत्यादि । सर्पिम्रक्षण पिचुः क्षीरादिश्च ॥ १० ॥

निष्कृष्य ऋजु प्रवेशयेत् । संशोध्य प्रवेशयेदिति योज्यम् ; अन्तरा मुक्ते मध्ये विच्छेदे कृते प्रतिहतो वायुः गुदात् प्रत्याहतः । विल्वादि दशमूलम्, श्यामादि श्यामात्रिवृतादि विरेचन-द्रव्यम् ॥ ८ ॥

चक्रपाणिः—अतिमात्रप्रणीतेनेति पुनःपुनः प्रणीतेन । अन्ये तु दूरप्रवेशनम् अतिमात्रप्रणयनमाहुः । यद्यपि प्रणयनं ग्रन्थितकर्णिकाया उपरि न भवति, तथापि कर्णिकापीडनात् अतिमात्रप्रवेशो ज्ञेयः ।

न वा वहति मन्दस्तु वाह्यश्चाशु निवर्त्तते ।
स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता ॥
अतिप्रपीड़ितः कोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र वस्तिर्विरेकश्च गलपोड़ादि कर्म्म च ॥ ११ ॥

तत्र श्लोकः ।

नेत्रवस्तिप्रणयने दोषानेतान् सभेषजान् ।
विद्वांस्तत्त्वेन मतिमान् वस्तिकर्म्माणि कारयेत् ॥ १२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने नेत्रवस्ति-
व्यापदिकी सिद्धिर्नाम पञ्चमोऽध्यायः ॥ ५ ॥

गङ्गाधरः—मन्दवेगदोषमाह—न वेत्यादि। मन्दोऽल्पेन वेगेन वाह्यस्तु वस्तिर्न वहति तद्गतद्रव्यमाशु निवर्त्तते निःसरति। तच्चिकित्सा—तत्र पुनः स्नेहवस्तिः सम्यक् प्रणेय इति। अतिवेगदोषमाह—अतिप्रपीड़ित इत्यादि। अतिवेगेन प्रपीड़ितो वस्तिः कोष्ठे तिष्ठत्यथवा गलमायाति। तत्र वस्तिर्विरेकश्च गल-पीड़ादिकं कर्म्म कार्य्यमित्यष्टौ वस्तिदोषा उक्ताः ॥ ११ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोक इति। नेत्रवस्तीत्यादि स्पष्टार्थम् ॥१२॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। सिद्धिस्थानेऽष्टमेऽप्राप्ते पुनर्दृढबलेन
तु। प्रतिसंस्कृत एवास्मिन् पञ्चमेऽध्याय एव च। नेत्रवस्तिव्यापत्-
सिद्धौ वद्यगङ्गाधरेण तु। कृते जल्पकल्पतरौ सिद्धिस्थानेऽष्टमे
किल। स्कन्धे तु पञ्चमाध्याये जल्पाख्या पञ्चमीरिता।
नेत्रवस्तिव्यापत्सिद्धौ शाखेयं तु यथार्थवत् ॥ ५ ॥

पिच्छावस्तिर्वक्ष्यमाणः। अतिपीड़ने कोष्ठे वा तिष्ठतीति इयञ्च व्यापत् पूर्व्वाध्याये आहारं विना दत्तानुवासनविषयतया उक्ता, इह तु निरूहस्य अनुवासनस्य अतिपीड़नजन्यतया बोध्यत इति शेषः। तत्र तु कोष्ठस्थ अप्रवर्त्तमाने वस्तिर्विरेको वा गलपीड़ादि कर्म्म ज्ञेयम् ॥ ९—११ ॥

चक्रपाणिः—संग्रहे नेत्रेत्यादिः स्पष्टार्थः ॥ १२ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां नेत्रवस्तिव्यापत्सिद्धिव्याख्या-
नाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः।

**अथातो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः,**
**इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**अथ शोधनयोः सम्यक् विधिमूर्द्ध्वानुलोमयोः।**
**असम्यक् कृतयोश्चैव दोषान् वक्ष्यामि सौषधान् ॥ २ ॥**
**अत्युष्णवर्षशीतानि ग्रीष्मवर्षाहिमागमाः।**
**तदन्तरे प्रावृड़ाद्यास्तेषां साधारणास्त्रयः ॥ ३ ॥**
**प्रावृट् शुचिनभौ ज्ञेयौ शरदूर्ज्जः सहाः पुनः।**
**तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति ॥**

गङ्गाधरः—अथोद्देशक्रमाद् वमनविरेचनव्यापत्सिद्धिमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—अथेत्यादि। ऊर्द्ध्वानुलोमयोः शोधनयोर्वमनविरेचनयोः ॥ २ ॥

गङ्गाधरः—अत्युष्णेत्यादि। अत्युष्णलक्षणो ग्रीष्मः। अतिवर्षलक्षणा वर्षाः। अतिशीतलक्षणो हिमागमः शिशिरः। इति त्रय ऋतवस्तेषामन्तरे त्रय ऋतवः प्रावृड़ाद्याः साधारणाः। नात्युष्णवर्षलक्षणा प्रावृट्। नातिवर्षाशीतलक्षणो हेमन्तः। नातिशीतोष्णलक्षणो वसन्तः ॥ ३ ॥

गङ्गाधरः—तत्र प्रावृट् शुचिराषाढ़ः नभाः श्रावण इति द्वौ मासौ ज्ञेयौ।

चक्रपाणिः—नेत्रवस्तिव्यापत्सिद्धिविधानप्रसङ्गाद् वमनविरेचनयोरपि व्यापत्सिद्धिरुच्यते। वमनविरेचनव्यापत्सिद्धिस्तु वस्तिव्यापत्सिद्धेः पश्चादपि अभिधीयते। पूर्व्वं स्नेहवस्तिव्यापत्सिद्धिविधानेन वस्तेरिह प्राधान्यम् अभिद्योतितम्। वस्तिप्राधान्यम्—"तस्माच्चिकित्सार्द्धमिति ब्रुवन्ति। सर्व्वां चिकित्सामपि वस्तिमेके" इत्यनेन उक्तमेव। वमनविरेचनयोश्च विभ्रियंद्यपि कल्पनासिद्ध्युपकल्पनीयादौ तत्र तत्राभिहितस्तथानुक्तविशेषप्रतिपादनार्थं तत्राप्युक्तोऽर्थः पुनरुच्यते। सर्व्वथा अनुक्ताभिधानञ्च नातिस्निग्धान् विरेचयेदिति ज्ञेयम्। उत्सर्गतः संशोधनयोग्यं कालं दर्शयन्नाह—अत्युष्णेत्यादि। ग्रीष्मादीनां मध्ये, प्रावृड़ाद्या इति प्रावृट्शरद्वसन्ताः, तेषां साधारणा इति उष्णवर्षशीतानि यावत्। ज्ञेयाः साधारणा इति केचित् पठन्ति ॥ १—३ ॥

चक्रपाणिः—प्रावृड़ादीन् मासविभागेन दर्शयन्नाह—प्रावृट्शुचिनभावित्यादि। शुचिनभौ

**एतानृतून् विचिन्त्यैवं दद्यात् संशोधनं नृणाम्।**
**स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥**
**कर्म्माणि वमनादीनि त्वन्तरे चान्तरे पुनः। ***
**स्नेहस्वेदौ प्रयुञ्जीत स्नेहाद्यन्ते प्रयोजयेत् ॥ ४ । ५ ॥**

शरत् पुनरूर्ज्जः कार्त्तिकः सहा अग्रहायण इति द्वौ मासौ ज्ञेयौ। वसन्तस्तु तपस्यश्च फाल्गुनः मधुश्चैत्र इति द्वौ मासौ ज्ञेयौ। शोधनं प्रति वमनविरेचने प्रति त्रय एते ऋतवः ; शेषा वैशाखज्यैष्ठौ ग्रीष्मः, भाद्राश्विनौ वर्षाः, पौषमाघौ शिशिरः, एषु न शोधनमिति ख्यापितम्। एतानित्यादि। स्वस्थवृत्तमभिप्रेत्य खल्वेतानृतून् त्रीनेवं विचिन्त्य नृणां संशोधनं दद्यात्। व्याधौ तु व्याधिवशेन खल्वेषां प्रावृट्शरद्वसन्तानामन्तरेऽन्तरे च वर्षाशिशिरग्रीष्मेषु च पूर्व्वं स्नेह-स्वेदौ प्रयुञ्जीत, स्नेहस्वेदान्ते वमनादीनि कर्म्माणि प्रयोजयेत् ॥ ४।५ ॥

आषाढश्रावणौ, ऊर्ज्जसहौ कार्त्तिकमार्गशीर्षौ, तपस्यः फाल्गुनः, मधुश्चैत्रः। शोधनं प्रतीत्यनेन शोधने कर्त्तव्ये अयं यथोक्तप्रावृडृतुविभागो भवति। स्वस्थवृत्तौ तु तस्याशितीयोक्त एव वर्षाशरद्धेमन्तशिशिरवसन्तग्रीष्मरूपो ऋतुक्रमो भवति। एतान् ऋतूनिति प्रावृडादीन् ऋतून्। विचिन्त्यैवेति यथोक्तमासविभागेन व्यवस्थाप्य संशोधनं दद्यात्। संशोधनक्रमादि न वेगान् धारणीये—"माधवप्रथमे मासि नभस्य प्रथमे पुनः। सहस्य प्रथमे चैव हारयेद् दोषसञ्चयम्" इत्यनेन ग्रन्थेन चैत्रे श्रावणे अग्रहायणे वमनादि संशोधनम् उक्तम्। तथा रोगभिषग्जितीये शिशिरं परित्यज्य प्रावृडादिक्रमः संशोधनाङ्गतया उक्तः, तेन रसबलोत्पत्तौ स्वस्थवृत्तानुष्ठाने च शिशिरादिक्रमो भवति। संशोधनव्यवस्थायान्तु प्रावृडादिक्रमोऽयं शोधनानुकूलतया आचार्य्येण कल्पितो न पारमार्थिकः। ये तु प्रावृडादिक्रमं गङ्गायाः दक्षिणे कूले उत्तरे च शिशिरादिक्रमं वदन्ति, तन्मते शोधनं प्रतीति ग्रन्थोऽनुपपन्नः। ⋯ ⋯ गङ्गायां दक्षिणे कूले। ⋯⋯⋯ऋतू तेषां प्रकीर्त्तितौ" इत्यादिग्रन्थेन देशभेदेनापि ऋतुक्रमः पारमार्थिको विधीयते। यथायमाचार्य्यस्य नाभिमतः। प्रपञ्चितश्चायमर्थः सूत्रस्थान एव। अयं संशोधनकालोपदेशः अनात्ययिके व्याधौ ज्ञेयः। आत्ययिके तु उष्णेऽपि काले संशोधनप्रवृत्तिर्भवत्येव। उक्तोऽयमर्थो रोगभिषग्जितीये—"आत्ययिके पुनः कर्म्मणि कामं ऋतुं विकल्प्य कृत्रिमगुणोपधानेन यथर्त्तुगुणविपरीतेन भेषज्यं संयोगसंस्कारप्रमाणविकल्पेन उपपाद्य प्रमाणवीर्य्यसमं कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेन अवहितः" इत्यनेन ग्रन्थेन। कर्म्मणामित्यादौ अन्तरेषु इति वमनानन्तरं विरेचनानन्तरं वस्तौ च कर्त्तव्ये स्नेह-स्वेदौ यथोक्तविधानेन पुनः कर्त्तव्यौ, न सकृत्प्रयुक्तेन स्नेहेन स्वेदेन पञ्चकर्म्माणि कर्त्तव्यानीत्यर्थः।

* कर्म्मणां वमनादीनामन्तरेष्वन्तरेषु चेति चक्रधृतः पाठः।

विसर्पपिडकाशोफ-कामलापाण्डुरोगिणः ।
अभिघातविघातांश्च नातिस्निग्धान् विरेचयेत् ॥ ६ ॥
नातिस्निग्धशरीराय स्नेहं दद्याद्‌ विरेचनम् ।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्‌ विरेचनम् ॥ ७ ॥
स्नेहस्वेदोपपन्नेन जीर्णे मात्रावदौषधम् ।
एकाग्रमनसा पीतं सम्यग् योगाय कल्पते ॥
स्निग्धात् पात्राद्‌ यथा तोयमयत्नेन प्रणुद्यते ।
कफादयः प्रणुद्यन्ते स्निग्धाद्‌ देहात् तथौषधैः ॥
आर्द्रं काष्ठं यथा ह्यग्निर्विष्कन्दयति सर्व्वशः * ।
तथा स्विन्नस्य भैषज्यं दोषान् हरति सर्व्वशः ॥

गङ्गाधरः—तत्राह—विसर्पेत्यादि। विसर्पादिमतो नातिस्निग्धान् विरेचयेत् वमनविरेचनाभ्यां शोधयेदिति ॥ ६ ॥

गङ्गाधरः—अतिस्निग्धशरीराय स्नेहं विरेचनं न दद्यात्। स्नेहोत्क्लिष्टशरीराय रूक्षं विरेचनं दद्यात् ॥ ७ ॥

गङ्गाधरः—स्नेहस्वेदेत्यादि। स्नेहस्वेदाभ्यामुपपन्नेन नरेण खल्वेकाग्रमनसा पूर्व्वदिनाहारे जीर्णे सति मात्रावदौषधं विरेचनौषधं पीतं सम्यग् योगाय कल्पते। तत्र दृष्टान्तः—स्निग्धादित्यादि। स्निग्धात् तैलघृतादिभिः स्निग्धात् पात्राद् भाण्डादितो यथा तोयमयत्नेन सुखेन प्रणुद्यते प्रेर्य्यते, तथा विरेचनौषधः पीतः स्निग्धाद् देहात् कफादयः प्रणुद्यन्ते सुखेनेति। आर्द्रकाष्ठ-

स्नेहं चान्ते प्रयोजयेदिति संशोधनकर्म्मपरिसमाप्तौ संशोधनजनितग्लानिपरिहारार्थं संशमनीयं स्नेहं प्रयोजयेदित्यर्थः। नातिस्निग्धानिति स्निग्धानाम् अवश्यकर्त्तव्ये विरेचने सति अनतिस्निग्धातिस्निग्धयोः असम्यग्योगकारकं विरेचनं न दद्यादित्यर्थः। अनतिस्निग्धविरेचनातिस्निग्धविरेचनयोगप्रतिषेधार्थं नातिस्निग्धे स्नेहविरेचनं स्नेहोत्क्लिष्टशरीरे रूक्षं विरेचनं देयम् ॥४—७॥

चक्रपाणिः—सम्यग्योगकारिकां संशोधनसामग्रीमाह—स्नेहस्वेदोपपन्नेनेत्यादि। मात्रावदित्यल्पमात्रम्। महावेगमित्यादिना वक्ष्यमाणमात्रावत्त्वं ज्ञेयम्। एकाग्रमनसेति संशोधनैकचित्तेन। व्यग्रमनसां हि अयोगः स्यात्। स्निग्धात् पात्रादिति दृष्टान्तेन स्नेहस्वेदयोरवश्यकर्त्तव्यतां सूचयति। अयत्नेन इति अप्रयासेन। प्रणुद्यत इति विष्यन्दयति। सर्व्वत इति

* तथा स्निग्धस्य वै दोषान् स्वेदो विष्यन्दयेत् स्थिरान् इति वा पाठः।

क्षारोत्क्लिष्टो यथा वस्त्रे मलः संशोध्यतेऽम्बुना।
स्नेहस्वेदैस्तथोत्क्लेश्य शोध्यते शोधनैर्मलः ॥ ८ ॥
अजीर्णे वर्द्धते ग्लानिर्विबन्धश्चापि जायते।
पीतं संशोधनञ्चैव विपरीतं प्रवर्त्तते ॥ ९ ॥
अल्पमात्रं महावेगं बहुदोषहरं सुखम्।
लघुपाकं सुखास्वादं प्रीणनं व्याधिनाशनम् ॥
अविकाराविपन्नञ्च नातिग्लानिकरञ्च यत्।
गन्धवर्णरसोपेतं विद्यान्मात्रावदौषधम् ॥ १० ॥

मित्यादि। अग्निर्यथार्द्र काष्ठं सर्व्वशो विष्कन्दयति विशोषयति, तथा स्विन्नस्य नरस्य दोषान् भैषज्यं विरेचनौषधं सर्व्वशो हरति। क्षारेत्यादि। वस्त्रे क्षारोत्क्लिष्टो मलो यथाम्बुना संशोध्यते, तथा स्नेहस्वेदैः शरीरे उत्क्लेश्य मलः शोधनवमनादिभिः शोध्यत इति। इति शोधनविधिरुक्तः ॥ ८ ॥

गङ्गाधरः—अथ अजीर्णे शोधनौषधपाने दोषमाह—अजीर्ण इत्यादि। अजीर्णे पूर्व्वाहारे शोधनौषधे पीते ग्लानिः प्रवर्त्तते, विबन्धश्च जायते शारीरमलं न निःसारयति ॥ ९ ॥

गङ्गाधरः—संशोधनद्रव्यगुणमाह—अल्पमात्रमित्यादि। यत् संशोधनमौषधं यद्यल्पमात्रं प्रयुक्तं महावेगादि स्यात्, तदा तदौषधं मात्रावद् विद्यात् ॥ १० ॥

सर्व्वतः स्थितं द्रवम् आकर्षति। अग्निदृष्टान्तेन सम्यग्दोषस्य आहरणमुच्यते। तृतीयेन दृष्टान्तेन स्नेहस्वेदयोर्मिलितयोः फलमुच्यते। क्लिष्टमिति मलिनम्। उत्क्लेश्येति क्षीराग्निसम्बन्धात् समुत्क्लेश्य ॥ ८ ॥

चक्रपाणिः—शोधनसम्यग्योगसामग्र्यभिधाने प्रोक्तस्नेहस्वेदयोः फलमभिधाय क्रमप्राप्तस्य जीर्ण पीतमित्यस्य विपर्य्यये दोषमाह—अजीर्णे वर्द्धते ग्लानिरिति। अजीर्णावस्थायां पीते शोधने महती ग्लानिर्भवति। विपरीतं प्रवर्त्तत इति वमनमधो याति विरेचनञ्चोर्द्ध्वं याति ॥ ९ ॥

चक्रपाणिः—मात्रावदिति यदुक्तं तद्विवृणोति—अल्पमात्रमित्यादि। अल्पमात्रं महावेगं अल्पमात्रत्वे सत्यपि महावेगम्। अविकाराविपन्नमिति ईषद्विकारकारी। मात्रावदिति प्रशस्त-

विधूय मानसान् दोषान् कामक्रोधभयादिकान् ।
एकाग्रमनसा पीतं सम्यग् योगाय कल्पते ॥
नरः श्वो वमनं पाता भुञ्जीत कफवर्द्धनम् ।
सुजरं द्रवभूयिष्ठं लघु शीतं विरेचनम् ॥
उत्क्लिष्टाल्पकफत्वेन क्षिप्रं दोषाः स्रवन्ति हि ॥११।१२॥
पीतौषधस्य तु भिषक् शुद्धिलिङ्गानि लक्षयेत् ॥
ऊर्द्ध्वं कफानुगे पित्ते विट्पित्तानुगते त्वधः ।
हृतदोषं वदेत् कार्श्यं दौर्ब्बल्यश्चात्मलाघवम् ॥
वामयेत् तु ततः शेषमौषधं न त्वलाघवे ।
स्तैमित्येऽनिलसङ्गे च निरुद्गारे च वामयेत् ॥

गङ्गाधरः—वमनविरेचनौषधपानक्रममाह—विधूयेत्यादि। तत्काल मानसान् दोषान् रजस्तमोजातान् कामादीन् विधूयोद्रिक्तभावान् निवर्त्त्य वमनमौषधं श्वः परदिने पाता पास्यति यो नरः स पूर्व्वदिन कफवर्द्धनम्, तथा विरेचनं पाता नरः सुजरमित्यादिगुणमाहारं भुञ्जीत। कस्मात् ? हि यस्मात् उत्क्लिष्टाल्पकफत्वेन वमनौषधेन दोषाः क्षिप्रं स्रवन्ति ॥ ११ । १२ ॥

गङ्गाधरः—ततः शुद्धिलिङ्गानि लक्षयेत्। तद् यथा—ऊर्द्ध्वमित्यादि। कफानुगे पित्ते ऊर्द्ध्वं वमनेनोर्द्ध्वमागते हृतदोषं वदेत्। तथा विट्पित्तानुगतेऽध आगते मल विरेचनेन हृतदोष वदेत्। तथा कार्श्यं दौर्ब्बल्यम् आत्मलाघवं देहलघुता च चेत्, ततः शेषं वमनौषधं वामयेत्। न तु गात्रस्यालाघवे शेषमौषधं वामयेत्।

मात्रा ; मात्रायाः प्राशस्त्यं द्रव्यादिसंस्कारविशेषाधीनम्। एवं शोधने मात्रावत्त्वं परिभाषितं ज्ञेयम्। एकाग्रमनसेति यदुक्तं तद् विवृणोति विधूयेत्यादि। वमनविरेचनयोः पूर्व्वदिने यथा भोक्तव्यं तदाह नर इत्यादि। एतत् प्रागुक्तमपि प्रकरणवशात् विशेषाभिधित्सया पुनरभिधानम्। पाता पातुकामः। द्रवभूयिष्ठम् इति च्छेदः। विरेचनं यतो लघु शीतं पातो भुञ्जीतेति सम्बन्धः। एवम्भूतभोजनोपपत्तिमाह—उत्क्लिष्टेत्यादि। उत्क्लिष्टाल्पकफत्वेनेति वमनं प्रति तु उत्क्लिष्टकफत्वेन, विरेचनं प्रति तु अल्पकफत्वेन ॥ १०—१२ ॥

चक्रपाणिः—वमनविरेचनयोः शुद्धिलिङ्गानि यद्यपि प्रागुक्तानि, तथापि इह शेषौषधदानादिविशेषात् पुनरभिधानम्— पीतौषधस्येत्यादिना। कफानुगे पित्ते ऊर्द्ध्वं हृतदोषं वदेत्। विट-

आ लाघवादणुत्वाच्च कफस्याग्निकरं भवेत्।
वमिते वर्द्धिते वह्नौ शमं दोषा व्रजन्ति च ॥
वमितं लङ्घयेत् सम्यग् जीर्णे लिङ्गानि लक्षयेत्।
तानि दृष्ट्वा च पेयादि-क्रमं कुर्य्यान्न लङ्घनम् ॥ १३ ॥
संशोधनाभ्यां शुद्धस्य हृतदोषस्य देहिनः।
यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ॥ १४ ॥

स्तमित्यादौ च वामयेत्, शेषमौषध न वामयेत् आ लाघवाद् देहलाघव यावत् यावच्च कफस्याणुत्वं सूक्ष्मत्वं स्यात् तावद् वमनमग्निकरं भवेत्। वमिते नरे वह्नौ वर्द्धिते सति दोषाः शमं व्रजन्ति। वमितमित्यादि। सम्यग्वमित नरं लङ्घयेत्। औषधे जीर्णे तु लिङ्गानि लक्षयेत्। तानि जीर्णलक्षणानि दृष्ट्वा च पश्चात् तस्य बुभुक्षितस्य पेयादिक्रमं कुर्य्यात्, न लङ्घनं कुर्य्यात् ॥ १३ ॥

गङ्गाधरः—कस्मात् पेयादिक्रमं कुर्य्यात्? तत उच्यते—संशोधनाभ्यामित्यादि। संशोधनाभ्यां वमनविरेचनाभ्याम् ॥ १४ ॥

पित्त अनुकफ दृश्यमाने अधो हृतदोषं वदेदिति नियोजना। एतत् कफानुगत्वं विरेचनस्य, वमनस्य च पित्तान्तत्वं पूर्व्वमेव व्याहृतम्। एतत् पित्तान्तत्वं कफान्तत्वं वा सकृच्छुद्धेऽपि दोषस्य अननुपूर्व्या अवस्थानाद् भवतीति कृत्वा एतयोः साहचर्य्येण कार्श्यदौर्ब्बल्यं चेत् सलाघवमिति। विरेचनप्रयोगे सावशेषे सति कर्त्तव्यमाह— वामयेत् तु ततः शेषमौषधमिति। शुद्धिलक्षणे जाते शेषमौषधं विरेचनातियोगप्रतिषेधार्थं वामयेदित्यर्थः। न त्वलाघवे इत्यनेन लाघवव्यतिरिक्तशेषशुद्धिलक्षणदर्शने सत्यपि न विरेचनशेषौषधवमिः कर्त्तव्या। वमनौषधकर्त्तव्यमाह—स्तैमित्यमित्यादि। वमनौषधप्रयोगे यावत् स्तैमित्ये अनिलसङ्गे निरुद्गारे भेषजे सति वमनं कारयितव्यम्। एतद्वमनावधिमाह— आ लाघवादणुत्वाच्च कफस्येति। अतःपरं क्रियमाणस्य वमनस्य दोषमाह—अग्निकरं भवेदिति। इदमतियोगलक्षणम्। अन्ये तु स्तैमित्यमित्यादिनापि विरेचनौषधस्यैव आवस्थिकं वमनमित्याहुः। यथोक्तवमनफलमाह—वमिते वर्द्धित इत्यादि। सम्यग्जीर्णलिङ्गानि लक्षयन्निति संशोधनभेषजस्य वक्ष्यमाणसम्यग्जीर्णलिङ्गानि लक्षयन्। तानीति जीर्णौषधलिङ्गानि ॥ १३ ॥

चक्रपाणिः—शुद्धस्य पेयादिक्रमोपपत्तिमाह—संशोधनाभ्यामिति। यद्यपि निरूढस्याप्यग्निमान्द्यं भवति, तथापि निरूढस्य तादृगग्निमान्द्यं न भवति येन तस्य पेयादिक्रमो न क्रियते। तस्मान्निरूहव्युदासार्थं संशोधनाभ्यामिति द्विवचनं कृतम्। या तु सम्यग्विरिक्तलक्षणे अग्नि-

कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके।
तर्पणादिक्रमं कुर्य्यात् पेयाभिष्यन्दयेद्धि तान्॥ १५॥
अनुलोमोऽनिलः स्वास्थ्यं क्षुत् तृष्णा सुमनस्कता।
लघुत्वमिन्द्रियोद्गार-शुद्धिर्जीर्णौषधाकृतिः॥ १६॥
क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः॥ १७॥
अकालेऽल्पातिमात्रञ्च पुराणं न च भावितम्।
असम्यक् संस्कृतञ्चैव व्यापदेतौषधं ध्रुवम्॥ १८॥

गङ्गाधरः—पेयादिक्रमापवादमाह—कफेत्यादि। कफपित्ते वमनविरेचनाभ्यां विशुद्धेऽल्पमसम्यग्विशुद्धे तर्पणादिक्रमं कुर्य्यात्। मद्यपे जने सम्यग् विशुद्धे तथा वातपैत्तिके सम्यग् विशुद्धे तर्पणादिक्रमं कुर्य्यान्नतु पेयादिक्रमं कुर्य्यात्। कस्मात्? पेया हि यस्मात् तान् तेषां दोषानभिष्यन्दयेत्॥ १५॥

गङ्गाधरः—औषधजीर्णलक्षणमाह—अनुलोम इत्यादि। इन्द्रियाणामुद्गारस्य च शुद्धिः॥ १६॥

गङ्गाधरः—औषधाजीर्णलक्षणमाह—क्लम इत्यादि। सावशेषेति जीर्णावशेषाजीर्णौषधस्याकृतिः॥ १७॥

गङ्गाधरः—यादृशौषधं पीतं व्यापद्यते तदाह—अकाल इत्यादि। अकाले पीतं गुणवदौषधं व्यापदेत व्यापत्तये सम्भाव्यते। अल्पमात्रमतिमात्रं वा पुराणं वा न च भावित भावनाहीनं असम्यक संस्कृतमसम्यग्भावनया भावितम्॥ १८॥

वृद्धिरुक्ता सा च विरेचनौषधक्षोभातिसङ्गादग्निवृद्धिर्जायते। तेन तस्य यात्यग्निर्मन्दतामिति वचनेन समं न विरोधः॥ १४॥

चक्रपाणिः—तर्पणादिविषयमाह—कफपित्तेत्यादि। अल्पं विशुद्धे इति असम्यग्विशुद्धे तर्पणादिक्रमेण पेयास्थाने लाजसक्तु विलेपीस्थाने च मांसरसोदकं देयम्॥ १५॥

चक्रपाणिः—जीर्णौषधलिङ्गान्याह—अनुलोम इत्यादि। ऊर्ज्जो बलम्। इन्द्रियशुद्धिरिन्द्रियपाटवम्। उद्गारस्य चौषधिगन्धादिरहितत्वमपि शुद्धिः। भेषजातियोगमाह—अकाल इत्यादि। अल्पातिमात्रं अल्पं चातिमात्रञ्च। न च भावितमिति अभावितम्॥ १६—१८॥

आध्मानं परिकर्त्तिश्च स्रावो हृद्‌गात्रयोर्ग्रहः।
जीवादानं सविभ्रंशः स्तम्भः सोपद्रवः क्लमः।
अयोगादतियोगाच्च दशता व्यापदः स्मृताः॥
प्रेष्यभेषज्यवैद्यानां वैगुण्यादापदः स्मृताः।
शुद्धोत्क्लिष्टेन दुर्गन्धमहृद्यमतिबाध्यते॥ १९॥
योगः सम्यक् प्रवृत्तिः स्यादतियोगोऽतिवर्त्तनम्।
अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्त्तनम्॥ २०॥

गङ्गाधरः—व्यापद आह—आध्मानमित्यादि। आध्मानादयो दश व्यापद औषधस्यायोगाद् भवन्त्यतियोगाच्च भवन्ति। कुतः पुनराध्मानादयो जायन्ते? तदाह—प्रेष्येत्यादि। प्रेष्याः परिचारकाः। प्रेष्यादित्रयाणां वैगुण्यादापदः स्मृताः। कस्माद् व्यापदुच्यते? तदाह—शुद्धोत्क्लिष्टेन दोषेण दुर्गन्धमहृद्यञ्च यदा स्यात् तथातिबाध्यते, इत्यतो व्यापदुच्यते॥ १९॥

गङ्गाधरः—योगातियोगायोगलक्षणमाह—योग इत्यादि। अयोगः खलु विरेचनौषधस्य प्रातिलोम्येनोर्द्धभागेन प्रवर्त्तनं न च प्रवर्त्तनमल्पं वा प्रवर्त्तनम् इति॥ २०॥

चक्रपाणिः—संशोधनायोगातियोगजन्या व्यापदः प्राह—आध्मानमित्यादि। आध्मानादयश्चामी अवश्यमयोगातियोगाभ्यां भवन्ति। तत उपद्रवभूतत्वात् पृथगुक्ताः। एताश्च व्यापदः प्रेष्यादिवैगुण्यात् उत्पन्नयोगातियोगाच्च भवन्तीति वाक्यार्थः। तत्राध्मानमयोगाद् भवति परिकर्त्तिश्चातियोगात् स्रावस्तु अयोगात् हृद्गात्रग्रहोऽप्ययोगादेव। जीवादानमतियोगाद् भवेत्। विभ्रंशस्तु द्विविधो वक्तव्यः। तत्र गुदभ्रंशसंज्ञाभ्रंशौ अतियोगजन्यौ, शेषस्तु विभ्रंशो अयोगजन्यः। स्तम्भः क्लमश्चायोगजन्यावेव। एतेषां वा अयोगातियोगजन्यत्वविभाग उत्तरग्रन्थे स्फुटो भविष्यति। यद्यपि त्वायोगातियोगमिथ्यायोगा रोगकारणत्वेनोक्तास्तथापीह वमनविरेचनयोर्मिथ्यायोगं नेच्छन्ति। यतो दोषाणां चतुर्विधा गतिर्भवति। अतिप्रवृत्तिरसम्यक्प्रवृत्तिरप्रवृत्तिरल्पप्रवृत्तिर्वा। तत्राल्पप्रवृत्तिरयोगे गृहीत एव प्रातिलोम्येन। अप्रवृत्तिस्तु दोषस्यापेक्षितस्याप्रवर्त्तकत्वादयोगगृहीत एव। वक्ष्यति हि अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्त्तनम्। योगस्वरूपमाह—योग इत्यादि। अतिवर्त्तनमिति संशोध्यापेक्षया अतिरिक्तं प्रवर्त्तनम्। प्रातिलोम्येनेति वमनस्य विरेचनेन विरेचनस्य वमनेन प्रवर्त्तनम्। एतच्च प्रातिलोम्यप्रवर्त्तने अकृत्स्न-

उत्क्लिष्टश्लेष्म दुर्गन्धमहृद्यमति वा बहु ।
विरेचनमजीर्णं च पीतमूर्द्धं प्रवर्त्तते ॥
क्षुधार्त्तमृदुकोष्ठाभ्यां पीतं स्वल्पकफेन वा ।
तीक्ष्णं स्थिरं संक्षुभितं वमनं स्याद् विरेचनम् ॥
( अयोगे तत्र कर्त्तव्यं समासेनाभिधीयते । )
प्रातिलोम्येन दोषाणां हरणात् तेष्वकृच्छ्रतः ।
अयोगसंज्ञे कृच्छ्रेण न चागच्छति चाल्पशः * ॥ २१ ॥
पीतौषधो न शुद्धश्चेज् जीर्णे तस्मिन् पुनः पिबेत् ।
औषधं न त्वजीर्णेऽन्यद् भयं स्यादतियोगतः ॥

गङ्गाधरः—कथमूर्द्धं प्रवर्त्तते ? उत्क्लिष्टेत्यादि । यत् तु विरेचनौषधमाहारे सत्यजीर्णे पीतं भवति, दुर्गन्धमहृद्यमतिमात्रं वा बहु वा उत्क्लिष्टश्लेष्म वा उत्क्लिष्टः श्लेष्मा येनौषधेन तत् पीयते तदा विरेचनौषधमूर्द्धं प्रवर्त्तते । वमनौषध-प्रातिलोम्यकारणमाह—क्षुधार्त्तेन मृदुकोष्ठेन वा जनेन तथाल्पकफेन जनेन वा पीतं तीक्ष्णं स्थिरगुणं संक्षुभितञ्च वमनं विरेचयतीति विरेचनं स्यादिति । तत्र विधानमाह—प्रातिलोम्येनेत्यादि । उक्तरूपेण विरेचनेन वमनेन च दोषाणां प्रातिलोम्येन हरणात् तेषु प्रतिलोमं गतेषु दोषेषु अकृच्छ्रतः कष्टाभावेऽपि अयोगसंज्ञे विरेचनायोगे वमनायोगे च कृच्छ्रेण दोषो न चागच्छति अल्पशश्च नागच्छति ॥ २१ ॥

गङ्गाधरः—पीतौषध इत्यादि । पीतौषधो नरश्चेन्न शुद्धः स्यात्, तदा तस्मिन औषधे जीर्णे सति पुनर्मात्रां बुद्ध्वा तदौषधं पिबेत् । न तु पूर्व्वौषधेऽजीर्णे सति ।

दोषहरणादयोग इति संज्ञितम् । प्रतिलोमहरणे अकृत्स्नदोषहरणमेव दर्शयन्नाह—कृत्स्नेनेत्यादि । प्रतिलोमहरणे दोषाः अकृत्स्नशो यान्ति, अयोगादल्पशो यान्तीति भावः । तेन अकृत्स्नदोषहरणं प्रतिलोमहरणेनोपपन्नमिति भावः । कृच्छ्रेण यदागच्छति चाल्पश इति वा पाठः ॥ १९—२१ ॥

चक्रपाणिः—चिकित्सामाह—पीतौषधेत्यादि । जीर्णे इति औषधे जीर्णे पुनः पिबेदिति तदह-

* अकृच्छ्रत इत्यत्र अकृत्स्नशस्तथा कृच्छ्रेणेत्यत्र कृत्स्नेन इति चक्रसम्मतः पाठः ।

ज्ञात्वा कोष्ठस्य गुरुतां लघुत्वं बलमेव च।
अयोगे मृदु वा दद्यादौषधं तीक्ष्णमेव च॥
वमनं न तु दुश्छर्द्यं मृदुकोष्ठे विरेचनम्।
पाययेदौषधं भूयो हन्यात् पीतं पुनर्हि तौ॥ २२। २३॥
अस्निग्धास्विन्नदेहस्य रूक्षस्यानवमौषधम्।
दोषानुत्क्लिश्य निर्हर्त्तुमशक्तं जनयेद् गदान्॥
विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं तृषाम्।
पिण्डिकोद्वेष्टनं कण्डूमूर्व्वोः सादं विवर्णताम्॥ २४॥
स्निग्धस्विन्नस्य चाल्पत्वं दीप्ताग्नेर्जीर्णमौषधम्।
शीतैर्वा स्तम्भयेत् सामे दोषानुत्क्लिश्य नावहेत्॥

तदजीर्णे पुनरौषधपानेऽतियोगादपरं भयं स्यात्। ज्ञात्वेत्यादि। पुंसः कोष्ठं ज्ञात्वा गुरुलाघवञ्च ज्ञात्वा बलञ्च ज्ञात्वा तथौषधमयोगे मृदु वा तीक्ष्णं वमनमौषधं दद्यान्नतु दुश्छर्द्दिते दुष्प्रवमिते। तथा विरेचनमौषधमयोगे मृदुकोष्ठं नरं तीक्ष्णं विरेचनं भूयः पुनर्न तु पाययेत्। कस्मात्? पुनर्हि यस्मात् दुश्छर्द्दितेन पुनः पीतं वमनं मृदुकोष्ठेन च पुनः पीतं विरेचनं तौ दुश्छर्द्दित-मृदुकोष्ठौ नरौ हन्यादिति॥ २२। २३॥

गङ्गाधरः—अस्निग्धेत्यादि। स्निग्धास्विन्नभिन्नदेहस्य रूक्षस्यानवं पुराण-मौषधं दोषान् उत्क्लिश्य निर्हर्त्तुं न शक्तं सत् गदान् जनयेत्। कान् गदान्? (विभ्रंशमित्यादि। चित्तस्य) विभ्रंशमित्यादि-विवर्णतान्तान्॥ २४॥

गङ्गाधरः—स्निग्धेत्यादि। स्निग्धस्विन्नस्य नरस्य च भेषजस्याल्पत्व-मथवा दीप्ताग्नेर्नरस्य जीर्णमौषधमथवा सामेऽपक्वे औषधे खल्वजीर्णे शीतरुप-चारः स्तम्भयेत्। तदौषधं दोषानुत्क्लिश्य नावहेद् वमनौषधं न वामयेत्,

रेव। भयं स्यादतियोगत इति पूर्व्वाजीर्णौषधाभ्यामतियोगः स्यात्। मृदु दद्यादिति व्यवस्था। वमनविरेचनादानविषयं प्राह—वमनमित्यादि। पुनःपीतौ भूयो हन्यादित्यत्यर्थं हन्यादित्यर्थः। स्तोकप्रवृत्तिरूपायोगं कारणभेदेनाह—अस्निग्धेत्यादि। अस्निग्धस्येति असम्यक् स्निग्धस्य। रूक्षस्येति मनागप्यस्निग्धस्य॥ २२—२४॥

चक्रपाणिः—स्निग्धस्विन्नस्य अत्यल्पमपि औषधम्। दीप्ताग्नित्वाच्च जीर्णम्। सामे इति

तानेव जनयेद्रोगान् नयोगः सर्व्व एव सः ।
विज्ञाय मतिमांस्तत्र यथोक्तां कारयेत् क्रियाम् ॥
तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ।
पाययेत पुनर्जीर्णे समूत्रर्वा निरूहयेत् ॥
निरूढ़ञ्च रसैर्धन्वैर्भोजयित्वानुवासयेत् ।
फलमागधिकादारु-सिद्धतैलेन मात्रया ॥
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ।
न चातितीक्ष्णेन ततो ह्यतियोगस्तु जायते ॥
अतितीक्ष्णं क्षुधार्त्तस्य मृदुकोष्ठस्य भेषजम् ।
हत्वाशु विट्पित्तकफान् धातून् संस्रावयेद्द्रवान् ॥

विरचनौषध न विरेचयेत्। तानेव विभ्रंशादीन् रोगान् जनयेदिति स एव सर्व्वो नयोग उच्यते। तत्र चिकित्सामाह—विज्ञायेत्यादि। यथोक्तां यस्य व्याधेर्या चिकित्सा क्रिया, तां कारयेत्। तद् यथा—तमित्यादि। तं वमनविरेचनायोगयुक्तं नरं तैललवणाभ्यक्तं प्रस्तरसङ्करैः स्वेदैः स्विन्नं पूर्व्वदिनाहारे जीर्णे प्रातः पुनर्वमनं विरेचनं वा यदयोगयुक्तं तत् पाययेत्। अथवा गोमूत्रयुक्तनिरूहयोगैर्निरूहयेत्। निरूढ़ञ्चेत्यादि। निरूढ़ञ्च तं धन्वमांसरसैः भोजयित्वानुवासयेत्। येनानुवासयेत् तदाह—फलेत्यादि। फलं मदनफलम्, फलादिभिः कल्कश्चतुर्गुणे तेषां क्वाथे पक्वतैलेन मात्रयानुवासयेदित्यन्वयः। एवं स्नेहवस्तिना स्निग्धं तं नरं पुनर्वातहरैः स्नेहैः स्नेहयित्वा तीक्ष्णेन विरेचनेन शोधयेत्। अतियोगहेतुमाह—अतीत्यादि। क्षुधार्त्तस्य मृदुकोष्ठस्य चाति-

अपक्व। दोषान् उत्क्लेश्य न निर्हरेत्, पीतमिति शेषः। एते त्रयः प्रतिपादिताः तानेव व्यापत्-प्रस्तावे पठितानयोगजन्यरोगान् जनयेयुः। एवमतियोगलक्षणतया वक्ष्यमाणेष्वपि वाच्यम्। यथोक्तामिति 'पीतौषधो न शुद्धश्चेद्' इत्यादिनोक्ताम्। किंवा अग्रे तं तैलेत्यादिग्रन्थोक्ताम्। पाययेदिति संशोधनं पाययेत्। धन्वैरिति धन्वमृगपक्षिमांसैः ॥ २५ ॥

चक्रपाणिः—अतियोगस्य हेत्वादिमाह—इयञ्च सामग्री विरेचनातियोगस्यैव। यन्मृदुकोष्ठे

बलस्वरक्षयं दाहं कण्ठशोषं भ्रमं तृषम्।
कुर्य्याच्च मधुरैस्तत्र शेषमौषधमुल्लिखेत् ॥ २५ । २६ ॥
वमने तु विरेकः स्याद् विरेके वमनं मृदु।
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥
कषायमधुरैः शीतैरन्नपानौषधैस्तथा।
रक्तपित्तातिसारघ्नैर्दाहज्वरहरैरपि ॥ २७ ॥
अञ्जनं चन्दनोशीरमजासृक्शर्करोदकम्।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥
वमनस्यातियोगे तु शीताम्बुपरिषेचितः।
पिबेत् फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥
शुङ्गादिभिर्वटादीनां सिद्धां पेयां समाक्षिकाम्।
वर्च्चःसांग्राहिकैः सिद्धं क्षीरं भोज्यञ्च दापयेत् ॥

तीक्ष्णं विरेचनभेषजं विड़ादीन् हत्वाशु द्रवान् धातून् स्रावयेत्, तथा वलक्षयादीन् कुर्य्यात्। तत्र मधुररौषधैः शेषं विरेचनमौषधमुल्लिखेत् वामयेत् ॥ २५ । २६ ॥

गङ्गाधरः—वमन इत्यादि। वमने त्वतिप्रयुक्ते विरेकः स्यात्, विरेके मृदु वमनं स्यात्। सुशीतैः परिषेकाद्यैश्च तं स्तम्भयेत्। तथा कषायमधुरैः शीतैरन्नादिभिः स्तम्भयेत्। रक्तपित्तादिहरैः स्तम्भयेत् ॥ २७ ॥

गङ्गाधरः—अञ्जनमित्यादि। अञ्जन रसाञ्जनं चन्दनोशीरं पिष्ट्वा अजस्य छागस्यासृक् शर्करोदकञ्च मेलयित्वा लाजचूर्णमन्थमालोड़ितं विरेचनस्यातियोगहरं पिबेत्। वमनस्येत्यादि। वमनातियोगे फलरसर्दाड़िमामलकादिफलरसैर्मन्थं लाजादिसक्तुकमालोड़ितं सघृतक्षौद्रशर्करं पिबेत्। विरेकातियोगे भोजनमाह—शुङ्गेत्यादि। वटादीनां पञ्चकषायवृक्षाणां शुङ्गैः कथितः कल्कैर्वा

बुभुक्षिते च विट्पित्तकफहरणक्रमेण विरेचनस्य अतिसेवनं युज्यते, तेन वमनातियोगसामग्री चात्मेवोदाहरणेनोन्नीया। किंवा अतितीक्ष्णमितिपदेनैव वमनस्यापि तीक्ष्णत्वम् अतियोगस्य कारणमुक्तम्। विट्पित्तकफहरणं यथायोग्यतया क्रमेण वमने बोद्धव्यम्। शेषमौषधमुल्लिखेदिति जीर्णावशेषं विरेचनौषधमुल्लिखेत् वामयेत्। मृद्विति पदं वमनेन विरेचनेन च सम्बध्यते ॥२६।२७॥

चक्रपाणिः—वटादीनामिति न्यग्रोधोदुम्बराश्वत्थप्लक्षकपीतनानाम्। वर्च्चःसंग्राहकैरिति

जाङ्गलैर्वा रसैर्भोज्यं पिच्छाबस्तिश्च दापयेत् ।
मधुरैरनुवास्यश्च सिद्धेन क्षीरसर्पिषा ॥ २८ ॥
सोद्‌गारायां भृशं वम्यां मूर्च्छायां धान्यमुस्तयोः ।
समधुकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः ।
स्निग्धाम्ललवणा हृद्या यूपक्षीररसैर्हिताः ॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ।
निःसृतान्तु तिलद्राक्षा-कल्कलिप्तां प्रवेशयेत् ॥
वागग्रहानिलरोगेषु घृतमांसोपसाधिताम् ।
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च बुद्धिमान् ॥ २९ ॥

सिद्धां पेयां समाक्षिकाम्, तथा वर्च्चःसांग्राहिकैः षड्विरेचनशताश्रितीयोक्तैः प्रियङ्ग्वादिभिर्दशभिः पुरीषसंग्रहणीयैः सिद्धं क्षीरञ्च भोज्यं दापयेत् । अथवा जाङ्गलमांसरसभोज्यं दापयेत् । एवं पिच्छाबस्तिञ्च दापयेत् । पिच्छाबस्ति-रुक्तार्शोरोगे । पिच्छाबस्तिदानात् परं मधुरजीवनीयैः सिद्धेन क्षीरोत्थ-सर्पिषानुवास्यश्चातिविरिक्तः ॥ २८ ॥

गङ्गाधरः—सोद्‌गारायामित्यादि । धान्यमुस्तयोश्चूर्णं समधुकाञ्जनं मधु-संयुतं लेहयेत् । अञ्जनं रसाञ्जनम् । वमत इत्यादि । स्निग्धाम्ललवणाः यूषक्षीरमांसरसान्यतमः कवडग्रहा हिताः । तस्य वमतोऽन्तर्निविष्टजिह्वस्य नरस्याग्रतः सम्मुखेऽन्ये नरा अम्लानि फलानि खादेयुः । निःसृतामित्यादि । वमतो निःसृतां जिह्वां तिलादिकल्कलिप्तां प्रवेशयेत् । वागग्रहेत्यादि । तस्य वागग्रहादिषु यवागूं घृतादिसाधितां तनुकामघनां दद्यात् । स्नेहस्वेदौ च दद्यात् ॥ २९ ॥

षड्विरेचनशताश्रितीयोक्तैः — प्रियङ्ग्वनन्ताम्रास्थि-कट्वङ्गलोध्रमोचरस-समङ्गाधातकीपुष्प-पद्मापद्मकेश-राणीत्युक्तैः ॥ २८ ॥

वमितश्च विरिक्तश्च मन्दाग्निश्चापि लङ्घितः।
अग्निप्राणविवृद्ध्यर्थं क्रमं पेयादिमाचरेत्॥ ३०॥
बहुदोषस्य रूक्षस्य मन्दाग्नेरल्पमौषधम्।
सोदावर्त्तस्य चोत्क्लिश्य दोषान् मार्गं निरुध्य च॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजाम्।
श्वासविण्मूत्रवातानां सङ्गं कुर्य्यात् सुदारुणम्॥
अभ्यङ्गस्वेदवर्त्त्यादि सनिरूहानुवासनम्।
उदावर्त्तहरं सर्व्वं कर्म्माध्मानस्य शस्यते॥ ३१॥
स्निग्धेन गुरुकोष्ठेन सामे बलवदौषधम्।
क्षामेण मृदुकोष्ठेन श्रान्तेनाल्पबलेन च॥
पीतं गत्वा गुदं साममाशु दोषं निरस्य च।
तीव्रशूलां सपिच्छास्रां करोति परिकर्त्तिकाम्॥ ३२॥

गङ्गाधरः—वमितश्चेत्यादि। पेयादिं क्रमं मण्डपेयाविलपीः क्रमेणाचरेत्॥ ३०॥

गङ्गाधरः—विरेचनस्य मिथ्यायोगे आध्मानं व्यापदमाह—बहुदोषस्येत्यादि। बहुदोषादेर्जनस्याल्पं विरेचनौषधं दोषानुत्क्लिश्य मार्गं निरुध्य नाभिं भृशमाध्मापयेत्। पृष्ठरुजादिकञ्च दारुणं कुर्य्यात्। तत्र चिकित्सामाह—अभ्यङ्गेत्यादि। आध्मानस्य विरेचनायोगजस्य कर्म्म शस्यते॥ ३१॥

गङ्गाधरः—स्निग्धेनेत्यादिना परिकर्त्तिकां व्यापदमाह। स्निग्धादिना नरेण

चक्रपाणिः—अम्लफलखादनन्तु अन्तःप्रविष्टजिह्वास्तब्धत्वहन्तृ। निःसृतामिति जिह्वाविशेषणम्। अतियोगेऽपि यथा पेयादिक्रमो भवति तदाह—वमितश्चेत्यादि॥ २९। ३०॥

चक्रपाणिः—अयोगातियोगौ। आध्मानादिव्यापदां यथाक्रमं हेतुलिङ्गचिकित्सानिर्द्देशमाह—बहुदोषस्येत्यादि। एताश्च व्यापदो अयोगातियोगयोरेव भवन्ति। अत एवोपकल्पनीये—"तत्र अतियोगायोगनिमित्तानिमानुपद्रवान् विद्यात्। आध्मानं परिकर्त्तिका परिस्रावो हृदयोपसरणं अङ्गग्रहो जीवादानं विभ्रंशः स्तम्भः क्लम उपद्रवः" इति ग्रन्थेन एता दश व्यापदः। पीतं गत्वा गुदमित्यादिना विरेचनातियोगजन्यपरिकर्त्तिका उक्ता। वमनातियोगजन्यपरिकर्त्तिका तु उपकल्पनीये एव वमनातियोगजन्यतया एव उक्ता। तेन अनुक्तापि वमन-

लङ्घनं दीपनं सामे रूक्षोष्णं लघु भोजनम् ।
बृंहणीयो विधिः सर्व्वः क्षामस्य मधुरस्तथा ॥ ३३ ॥
आमेऽजीर्णे तु बन्धश्चेत् क्षारोऽम्लं लघु शस्यते ।
पुष्पकाशीशमिश्रं वा क्षारेण लवणेन च ॥
सदाड़िमरसं सर्पिः पिबेद्‌ वातेऽधिके सति ॥ ३४ ॥
दध्यम्लं भोजने पाने संयुक्तं दाड़िमत्वचा ।
देवदारुतिलानां वा कल्कमुष्णाम्बुना पिबेत् ॥
अश्वत्थोडुम्वरप्लक्ष-कदम्बैर्वा शृतं पयः ।
कषायमधुरं शीतं पिच्छावस्तिमथापि वा ।
यष्टीमधुकसिद्धं वा स्नेहवस्तिं प्रदापयेत् ॥ ३५ ॥

सामे च दोषे वलवद् वमनविरेचनयोरौषधं पीतं तस्य गुदं गत्वा सामं दोषं निरस्य तत्र गुदे सपिच्छास्रां तीव्रशूलां परिकर्त्तिकां करोति ॥ ३२ ॥

गङ्गाधरः—तत्र चिकित्सामाह—लङ्घनमित्यादि । सामे लङ्घनादिकम् । क्षामस्य बृंहणीयो विधिर्मधुरश्च रसः ॥ ३३ ॥

गङ्गाधरः—आमाजीर्णे चेद् बन्धस्तदामविबन्धः, तदा क्षारोऽम्लं लघु च भोजनद्रव्यं शस्यते । तत्र वातेऽधिके सर्पिः पुष्पकाशीशक्षारसैन्धवदाड़िम-रसमिश्रं पिबेत् ॥ ३४ ॥

गङ्गाधरः—भोजने पाने च दाड़िमफलत्वक्चूर्णमिश्रमम्लं दधि पिबेत् । देवदारुतिलकल्कमुष्णाम्बुना वा पिबेत् । अश्वत्थादित्वक्कल्कशृतं पयः पिबेत् । अथवा कषायादिं पिच्छावस्तिं यष्टीमधुकसिद्धं स्नेहवस्तिं वा प्रदद्यात् ॥ ३५ ॥

व्यापत्तौ परिकर्त्तिः निजोदाहरणमेव कल्पनीया । तन्त्रान्तरेऽप्युक्तं या परिकर्त्तिका विरेचने तद्वद् वमने, योऽधः परिस्रावो विरेचने स वमने कफसेकः, तदनया दिशा आध्मानादीनि वमनविरेचनयोरयोगातियोगजन्यतया व्याख्यातव्यानीत्येके । आशु दोषं निरस्येति वमनातियोगजन्येयं व्यापत् । अत्र लङ्घनादिक्रिया अतियोगे सत्यपि आमपाचनार्था । क्षामेण मृदुकोष्ठेनेत्यादि-सम्प्राप्तिजनितस्य क्षामपुरीषप्रभवस्य लङ्घनाद्युपक्रमः । अत एव कर्तव्यमाह—आमेऽजीर्ण इत्यादि । क्षाराम्लं लघु शस्यत इति—अतिसारे यदुक्तं—"चाङ्गेरी कोलदध्यम्ल-नागरक्षारसंयुतम् । घृत-सुतक्कथितं पेयं गुदभ्रंशरुजापहम्" इति ज्ञेयम् । पुष्पकासीसमित्यत्र पुष्पशब्देन केचित् सांग्राहिकाणि धातकीकुसुमादीनि ग्राहयन्ति ॥ ३१—३५ ॥

अल्पश्च बहुदोषस्य दोषानुत्क्लेश्य भेषजम्।
अल्पाल्पं स्रावयेदल्पं शोफं कुष्ठानि गौरवम्॥
कुर्य्याच्चाग्निबधोत्क्लेश-स्तैमित्यारुचिपाण्डुताः।
परिस्रावगतं दोषं शमयेद्‌ वामयेत् तदा॥
स्नेहितं वा पुनस्तीक्ष्णं पाययेच्च विरेचनम्।
शुद्धे चूर्णासवारिष्टान् संस्कृतांश्च प्रयोजयेत्॥ ३६॥
पीतौषधस्य वेगानां निग्रहात् पवनादयः।
कुपिता हृदयं गत्वा घोरं कुर्व्वन्ति निग्रहम्॥
हिक्कापार्श्वरुजाकास-दैन्यलालाक्षिविभ्रमैः।
जिह्वां खादति निःसंज्ञो दन्तान् किटिकिटापयन्॥
न गच्छेद्‌ विभ्रमं यावद्‌ वामयेदाशु तं भिषक्।
मधुरैः पित्तमूर्च्छार्त्तं कटुभिः कफमूर्च्छितम्॥

गङ्गाधरः—अल्पश्चेत्यादिना स्रावं व्यापदमाह। बहुदोषस्य नरस्याल्पं विरेचनौषधं दोषानुत्क्लिश्याल्पाल्पं गुदतः स्रावयेदल्पशोफादिकं कुर्य्यात्। तत्र चिकित्सामाह—परिस्रावेत्यादि। तदा परिस्रावगतं दोषं शमयेत् तथा वामयेत्। पुनश्च स्नेहं कृत्वा तीक्ष्णं विरेचनं भेषजं पाययेत्। तेन शुद्धे सति चूर्णमासवमरिष्टं संस्कृतं प्रयोजयेत्॥ ३६॥

गङ्गाधरः—पीतौषधस्येत्यादिना हृद्ग्रहं व्यापदमाह। पीतविरेचनौषधः पुमानागतपुरीषवेगानां निग्रहञ्चेत् करोति, तदा तस्य पवनादयः कुपिता हृदयं गत्वा हिक्कादैर्घोरं निग्रहं कुर्व्वन्ति, स च निःसंज्ञः सन् दन्तान् किटिकिटापयन् जिह्वां खादति। तत्र चिकित्सामाह—न गच्छेदित्यादि। तत्र यावद्‌ विभ्रमं न गच्छेत् तावदाशु तं नरं पित्तमूर्च्छार्त्तं मधुरद्रव्यैः कफमूर्च्छार्त्तं कटुभिर्द्रव्यैः

चक्रपाणिः—अल्पमित्यादिना परिस्रावमाह। शमयेद्‌ वामयेदित्यादौ अल्पदोषे शमनम्, बहुदोषे ऊर्द्ध्वगतदोषे तु विरेचनमिति व्यवस्था। वामयेदपीत्यत्रापि स्नेहितं पुनरिति सम्बध्यते। चूर्णासवारिष्टग्रहणमर्शश्चिकित्सासु ज्ञेयम्॥ ३६॥

चक्रपाणिः—पीतौषधस्येत्यादिना हृद्ग्रहमाह। न गच्छेद्‌ विभ्रमं तत्रेति हृद्ग्रहपीडितोऽयं म्रियमाणो वायमिति भ्रान्तिं न गच्छेदित्यर्थः। वमतश्चात्र, मूर्च्छिते दुःशकः प्रयोगः, तेन

पाचनीयैस्ततस्तस्य दोषं शेषं विपाचयेत्।
कायाग्निश्च बलश्चास्य क्रमेणाभिविवर्द्धयेत् ॥ ३७ ॥
वमनेनातिवमतो हृदयं यस्य पीड्यते।
तस्मै स्निग्धाम्ललवणं दद्यात् पित्तकफे तथा * ॥ ३८ ॥
पीतौषधस्य वेगानां निग्रहेण कफेन च।
रुद्धोऽति चाविशुद्धस्य गृह्णात्यङ्गानि मारुतः ॥
स्तम्भवेपथुनिस्तोद-सादोद्वेष्टातिमूर्च्छितैः।
तत्र वातहरं सर्व्वं स्नेहस्वेदादि शस्यते ॥ ३९ ॥
अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम्।
दोषान् हृत्वा विनिर्म्मथ्य जीवं हरति शोणितम् ॥ ४० ॥

वामयेत्। ततो दोषशेषं पाचनीयद्रव्यैर्विपाचयेत्। क्रमेण कायाग्न्यादीनभिवर्द्धयेदिति ॥ ३७ ॥

गङ्गाधरः—अथ वमनस्याह—वमनेनेत्यादि। अतिवमतो यस्य वमनेन हृदयं पीड्यते, तस्मै स्निग्धादिकं दद्यात्। तथा पित्तकफे दद्यात् ॥ ३८ ॥

गङ्गाधरः—पीतेत्यादिना गात्रग्रहं व्यापदमाह। पीतवमनौषधश्चेद् वमनवेगं निगृह्णाति, तदा तस्य खल्वविशुद्धस्य तेन वेगनिग्रहेण कुपितेन कफेन चातिरुद्धो मारुतः स्तम्भादिभिरङ्गानि गृह्णाति। तत्र चिकित्सामाह—तत्रेत्यादि ॥ ३९ ॥

गङ्गाधरः—जीवादानमाह—अतीत्यादि। लघुदोषस्य नरस्य मृदौ कोष्ठे

मूर्च्छारम्भे एव वमनं कारयितव्यम्। किंवा मूर्च्छायामपि अङ्गुलिप्रक्षेपणादिना वमनं कारयितव्यम्। पित्तमूर्च्छार्त्तमिति प्रबलपित्तदोषजनितमूर्च्छार्त्तम् ॥ ३७ ॥

चक्रपाणिः—वमनेनातिवमत इत्यादौ—अतिवमतः अतिवमनं कुर्व्वतः। पित्तकफेऽन्यथेति पित्ते कफे वा हृदयपीड़ाकरे स्निग्धाम्ललवणविपरीतं रूक्षतिक्तकटुकादिक्रमं कुर्य्यात्। पीतौषधस्येत्यादिना अयोगजमङ्गग्रहणमाह। वेगानां निग्रहेण रुद्धो वा कफेन मारुतः अतिशुद्धस्य वा अङ्गानि स्तम्भादिभिः निगृह्णाति ॥ ३८ । ३९ ॥

चक्रपाणिः—अतितीक्ष्णमित्यादिना जीवादानमाह। लघुदोषस्येति स्वल्पदोषस्य। विनिर्म्मथ्य इति शोणितमेव क्षोदयित्वा। जीवमिति जीवनहेतु धातुरूपशोणितम्। किञ्चित् रक्तपित्तक्षोदो

* पित्तकफेऽन्यथा इति चक्रसम्मतः पाठः।

तैनान्नं मिश्रितं दद्यात् वायसाय शुनेऽपि वा।
भुङ्क्ते तच्चेद् वदेज्जीवं न भुङ्क्ते पित्तमादिशेत्॥
शुक्लं वा भावितं वस्त्रमाधानं कोष्णवारिणा।
प्रक्षालितं विवर्णञ्चेत् पित्तं शुद्धन्तु शोणितम्॥ ४१॥
तृष्णामूर्च्छामदार्त्तस्य कुर्य्यादामरणात् क्रियाम्।
तस्य पित्तहरीं सर्व्वामतियोगे च या हिता॥
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक्।
पिबेज्जीवाभिसन्धानं जीवं तद्ध्याशु गच्छति॥

अतितीक्ष्णं भेषजं विरेचनौषधं दोषान् हत्वा विनिर्म्मथ्य जीवं शोणितं हरति निर्हरति॥ ४०॥

गङ्गाधरः—सरक्तविरेके जीवरक्तपरीक्षामाह—तेनेत्यादि। यद्रक्तं विरिच्यते तेन रक्तेन मिश्रितमन्नं वायसाय शुनेऽपि वा दद्यात्। तद्रक्तमिश्रितमन्नं चेद् वायसः श्वा वा भुङ्क्ते तदा जीवं रक्तं वदेत्। न चेद् भुङ्क्ते तदा पित्तमादिशेत्। परीक्षान्तरमाह—शुक्लं वेत्यादि। तेन रक्तेन भावितं म्रक्षितं शुक्लं वस्त्रमाधानं कोष्णवारिणा प्रक्षालितं चेद् विवर्णं स्यात् तदा पित्तं वदेत्, चेच्छुद्धमविवर्णं शुक्लमेव तद् वस्त्रं भवेत् तदा शोणितं जीवरक्तं वदेत्॥ ४१॥

गङ्गाधरः—तस्य चिकित्सामाह—तृष्णेत्यादि। तस्य तृष्णादिभिरार्त्तस्य खल्वामरणात् मरणपर्य्यन्तं पित्तहरीं सर्व्वां क्रियां कुर्य्यात्। या चातियोगे हिता क्रिया, ताश्च कुर्य्यात्। तथा मृगादीनां जीवतां सद्यस्कमसृक् पिबेत्। तद्रक्तं हि यस्मात् जीवाभिसन्धानमभि सर्व्वतोभावेन जीवं सन्दधाति

भवति किञ्चिच्च जीवशोणितक्षोदो भवति। तद्विशेषपरीक्षामाह—तेनान्नमित्यादि। पित्तमादिशेदिति शोणितागतं पित्तमादिशेत्, रक्तपित्तमिति यावत्। शुक्लं वा भावितमिति—पित्तमिति रक्तपित्तम्, क्षालितं वस्त्रं विवर्णं भवति। जीवशोणिते तु सति शुद्धं वस्त्रं भवतीति परीक्षा चिकित्साभेदार्थमेव, रक्तपित्तहरी क्रिया कर्त्तव्या— जीवशोणितन्तु दृष्ट्वा तृषामूर्च्छामदार्त्तस्येत्यादिनोक्ता कर्त्तव्या। अतियोगे च या हितेति अनेन पूर्व्वं कषायमधुरैरित्यादिनोक्ता ज्ञेया। जीवं तद्ध्याशु

तदेव दर्भमृदितं रक्तं वस्तिं प्रदापयेत् ।
श्यामाकाश्मर्य्यबदरी-दूर्व्वोशीरैः श्रृतं पयः ॥
घृतं मण्डाञ्जनयुतं वस्तिं शीतं प्रदापयेत् ।
पिच्छावस्तिं सुशीतं वा घृतमण्डानुवासनम् ॥ ४२ ॥
गुदभ्रंशं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ।
सामगन्धर्व्वशब्दांश्च संज्ञानाशे च कारयेत् ॥ ४३ ॥
यदा विरेचनं पीतं विड़न्तरवतिष्ठते ।
वमनं भेषजान्तं वा दोषानुत्क्लेश्य नावहेत् ॥
तदा कुर्व्वन्ति कण्ड्वादीन् दोषाः प्रकुपिताः गदान् ।
सावभ्रंशानतस्तत्र स्याद् यथाव्याधि भेषजम् ॥ ४४ ॥

सञ्श्लषयति, तस्मात् तत् पिबन्नाशु जीवं गच्छति। तदेव मृगादीनां जीवतां सद्यस्कं रक्तं दर्भमृदितं कुशेन मूलेन मर्द्दितं वस्तिं प्रदापयेत्। श्यामादिभिः कल्कैश्चतुर्गुणजले श्रृतं पयः घृतमण्डरसाञ्जनयुतं वस्तिं प्रदापयेत्। पिच्छावस्तिं वा प्रदापयेत्। सुशीतं घृतमण्डानुवासनं वा प्रदापयेत् ॥ ४२ ॥

गङ्गाधरः—अथ गुदभ्रंशं व्यापदमाह—गुदभ्रंशमित्यादि। कषायवटादि-वल्कलक्काथादिभिः स्तम्भयित्वान्तः प्रवेशयेद् गुदम्। तत्र संज्ञानाशे सामशब्दान् गन्धर्व्वशब्दान् सङ्गीतशब्दान् कारयेत् ॥ ४३ ॥

गङ्गाधरः—ननु कुत एव स्यादित्यत आह—यदेत्यादि। यदा विरेचन-मौषधं पीतं ( पित्तं निहन्तुम् ) विड़न्तरवतिष्ठते, वमनमौषधञ्च दोषानुत्क्लिश्य भेषजान्तं पीतवमनौषधान्तं वमनं नावहेत्, तदा कण्ड्वादीन् सविभ्रंशान् गदान् कुपिता दोषाः कुर्व्वन्ति। तत्र यथाकाण्ड्वादि भेषजं कुर्य्यात्। गुदभ्रंश-संज्ञाभ्रंशविधिरिहैवोक्त इति ॥ ४४ ॥

गच्छतीति तदसृक् प्रभावादेव जीवरूपतां याति। श्यामेत्यादौ कल्पान्तरमाह। गुदभ्रंशमित्यादिना विभ्रंशमाह। कषायैरिति कषायरसैः। सामेत्यादिना संज्ञारूपविभ्रंशचिकित्साञ्चाह। साम सान्त्वनम्। गन्धर्व्वशब्दो गीतम्। एतौ च विभ्रंशौ अयोगजन्यौ। यदेत्यादिना तृतीय-मयोगजन्यं विभ्रंशमाह। विड़न्तरवतिष्ठत इति मूत्रमपहृत्यावतिष्ठते। भेषजान्तमिति भेषज-मात्रं वमनं नावतिष्ठते। नावहेदिति नापहरति। अस्याः व्यापदो विभ्रंशसंज्ञा पारिभाषिकी

पीतं स्निग्धेन सस्नेहं तद्दोषैर्मार्दवाद्धृतम्।
न वाहयति दोषांस्तु स्वस्थानात् स्तम्भयेच्च तान्॥
वातसङ्गगुदस्तम्भ-शूलैः क्षरति चाल्पशः।
तीक्ष्णं वस्तिं विरेकं वा दद्याल्लङ्घितपाचिते॥ ४५॥
रूक्षं विरेचनं पीतं रूक्षेणाल्पबलेन वा।
मारुतं कोपयित्वाशु कुर्य्याद् घोरानुपद्रवान्॥
स्तम्भं शूलानि घोराणि सर्व्वगात्रेषु मारुतः *।
स्नेहस्वेदादिकस्तत्र कार्य्यो वातहरो विधिः॥ ४६॥

गङ्गाधरः—अथ स्तम्भं व्यापदमाह—पीतमित्यादि। स्निग्धेन नरेण सस्नेहं विरेचनौषधं पीतं मार्दवात् तदौषधं दोषधृतं सत् न दोषान् वाहयति स्वस्थानान्न प्रेरयति, तांश्च दोषान् स्तम्भयेदिति स्तम्भः स्यात्। वातसङ्गादिभियुक्तमल्पमल्पं क्षरति। तत्र चिकित्सामाह—तीक्ष्णमित्यादि। लङ्घितपाचिते तं स्तम्भितं नरं पूर्व्वं लङ्घयित्वा पाचनदोषं पाचयित्वा तीक्ष्णं वस्तिं निरूहं विरेकं वा दद्यात्॥ ४५॥

गङ्गाधरः—उपद्रवाख्यां व्यापदमाह—रूक्षमित्यादि। रूक्षेण जनेनाल्पबलेन रूक्षं विरेचनमौषधं पीतं मारुतं कोपयित्वा घोरानुपद्रवानाशु कुर्य्यात्। मारुतश्च स्तम्भं कुर्य्यात् (चलानि कम्पमानानि) घोराणि शूलानि च (गात्राणि) कुर्य्यात्। तत्र चिकित्सामाह—स्नेहेत्यादि। तत्र स्नेहस्वेदादिर्वातहरो विधिः कार्य्यः॥ ४६॥

ज्ञेया। स्याद् यथाव्याधि भेषजमिति रूक्षादिविपरीतं भेषजम्। पीतं स्निग्धेनेत्यादिना स्तम्भमाह। मार्दवाद्धृतमिति भेषजस्य मृदुतया दोषैर्धृतम्, स्वस्थानात् च्युतान् स्तम्भयेदिति योजनीयम्। लङ्घनपाचनानन्तरं तीक्ष्णं वस्तिं विरेकं वा तीक्ष्णमर्हतीत्यर्थः॥ ४०—४५॥

चक्रपाणिः—रूक्षमित्यादिना उपद्रवमाह। यद्यप्याध्मानादयोऽपि उपद्रवा एव, तथापि तेषां संज्ञान्तरेण गृहीतत्वात् शूलादय एवोपद्रवशब्देनोच्यन्ते। तथा शूलादयश्चामी प्रधानादुत्तरकालभावित्वादुपद्रवशब्देनोच्यन्ते, यथा धूमः कुर्य्यादुपद्रवानिति। किंवा अयोगाख्यस्य व्याधेरमी उपद्रवा इति ज्ञेयम्॥ ४६॥

* स्तम्भं चलानि घोराणि सर्व्वगात्राणि मारुतः इति क्वचित् पाठः।

स्निग्धस्य गुरुकोष्ठस्य मृदूत्क्लेश्यौषधं कफम् ।
पित्तं वातञ्च संरुध्य सतन्द्रागौरवं क्लमम् ॥
दौर्ब्बल्यश्चाङ्गमर्द्दञ्च कुर्य्यादाशु तदुल्लिखेत् ।
लङ्घनं पाचनं काले तीक्ष्णं स्निग्धञ्च शोधनम् ॥ ४७ ॥

तत्र श्लोकौ ।

इत्येता व्यापदः प्रोक्ताः सरूपाः सचिकित्सिताः ।
विरेचनस्याकुशलैर्दत्तस्य वमनस्य च ॥
धीमान् विज्ञाय तास्तस्मादवस्थाश्चैव तत्त्वतः ।
दद्यात् संशोधनं सम्यगारोग्यार्थं सदा नृणाम् ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने वमन-विरेचनव्यापत्सिद्धिर्नाम षष्ठोऽध्यायः ॥ ६ ॥

गङ्गाधरः—क्लमं व्यापदमाह—स्निग्धस्येत्यादि । स्निग्धस्य तेन स्नेहेन गुरुकोष्ठस्य नरस्य मृदुवीर्य्यमौषधं पीतं कफमुत्क्लिश्य पित्तं वातञ्च संरुध्य सतन्द्रागौरवादिकं क्लमं कुर्य्यात् । तत्राशु तदौषधं वमनेनोल्लिखेत्, ततो लङ्घनं ततः पाचनं काले शोधनं ( भोजनम् ) विदध्यादिति ॥ ४७ ॥

गङ्गाधरः—अथाध्यायार्थमाह—तत्र श्लोकाविति ॥ ४८ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । सिद्धिस्थानेऽष्टमेऽप्राप्ते ततो दृढ़-
बलेन तु । प्रतिसंस्कृत एवास्मिन् व्यापत्सिद्धौ विरेकयोः ।
षष्ठेऽध्याये वैद्यगङ्गाधरेण च कृते पुनः । जल्पकल्पतरौ
सिद्धि-स्थाने स्कन्धेऽष्टमेऽन्तिमे । षष्ठाध्यायस्य
जल्पाख्या षष्ठी शाखा समापिता ॥ ६ ॥

चक्रपाणिः—स्निग्धस्येत्यादिना क्लममाह । कफं पित्तञ्चोत्क्लेश्य वातञ्च संरुध्य भेषजं क्लमं तन्द्रादियुतं करोति । तदुल्लिखेदिति तद् भेषजं पीतञ्चेद् उल्लिखेदित्यर्थः ॥ ४७ ॥

चक्रपाणिः—संग्रहे इत्येता व्यापद इत्यादौ कुर्य्यात् संशोधनं सम्यगिति संशोधनं दद्याद् यथा व्यापदो नोपतिष्ठेयुरित्यर्थः ॥ ४८ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां वमनविरेचनव्यापत्सिद्धि-व्याख्यानाम षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः ।

अथातो वस्तिव्यापत्सिद्धिं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

धीधैर्य्यौदार्य्यगाम्भीर्य्य-शमदमतपोनिधिम् ।
पुनर्व्वसुं शिष्यगणः पप्रच्छ विनयान्वितः ॥
काः कति व्यापदो वस्तेः किंसमुत्थानलक्षणाः ।
काश्चिकित्सा इति प्रश्नान् श्रुत्वा तानब्रवीद् गुरुः ॥ २ ॥
नातियोगौ क्लमाध्माने हिक्का हृद्घट्टकण्ठिका * ।
प्रवाहिका शिरोऽङ्गार्त्तिः परिकर्त्ती परिस्रवः ॥
द्वादश व्यापदो वस्तेरसम्यग्योगसम्भवाः ।
आसामेकैकशो रूपं चिकित्साञ्च निबोधत ॥ ३ ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमाद् वस्तिव्यापत्सिद्धिमाह—अथात इत्यादि । वस्तिर्द्विधा, तस्य स्नेहवस्तेः षड्व्यापदो व्याख्याताः, शेषत्वादिह निरूहवस्तिः । शेषं सर्व्वं पूर्व्ववद् व्याख्येयमिति ॥ १ ॥

गङ्गाधरः—तद् यथा—धीधैर्य्येत्यादि । किं समुत्थानं लक्षणञ्च यासां ताः किंसमुत्थानलक्षणाः । गुरुरात्रेयः पुनर्व्वसुः ॥ २ ॥

गङ्गाधरः—नातीत्यादि । द्विविधस्य वस्तेरसम्यग्योगसम्भवा अयोगातियोगे क्लमादयो द्वादश व्यापदः स्युरसम्यग् योगः सम्भवो यासां ताः । नयोगोऽतियोगश्च ॥ ३ ॥

चक्रपाणिः—वमनविरेचनव्यापत्सिद्ध्यनन्तरं वस्तिव्यापत्सिद्धिरुच्यते । तत्र वस्तिशब्दो निरूह एव वर्त्तते तद्व्यापदामेवात्र वक्तव्यत्वात् । काः कतीत्यादि पञ्च प्रश्नाः ॥ १ । २ ॥

चक्रपाणिः—नातियोग इति । नातियोग इत्यादिना आद्यप्रश्नत्रयस्योत्तरम् । एतद् द्वादशव्यापदां विवरणे एव स्फुटार्थं भविष्यति । असम्यग्योगसम्भवा इति निरूहस्य अयोगातियोगमिथ्यायोगरूपासम्यग्योगसम्भवाः, अनेन च समुत्थानप्रश्नस्य सामान्यकारणाभिधानेनोत्तरं दर्शितं भवति । अत्र वस्तिप्रयोगस्यासम्यग्योगेन निरूहस्यार्थदोषहरणस्य अतियोगायोगौ व्यापत्तिरूपौ साध्येते । क्लमादयोऽपि अतियोगायोगजाता एव विशिष्टहेतुलक्षणचिकित्सिततया इहापि

* हृत्प्राप्तिरुद्धता इति वा पाठः ।

गुरुकोष्ठेऽनिलप्राये रूक्षे वातोल्वणेऽपि वा ।
शीतेऽल्पलवणस्नेहो द्रवमात्रो घनोऽपि वा ॥
वस्तिः संक्षोभ्य तं दोषं दुर्ब्बलत्वादनिर्हरन् ।
करोति गुरुकोष्ठत्वं वातमूत्रशकृद्ग्रहम् ॥
नाभिवस्तिरुजं दाहं हृल्लेपं श्वयथुं गुदे ।
कण्डूगण्डानि वैवर्ण्यमरुचिं वह्निमार्दवम् ॥ ४ ॥
तत्रोष्णायाः प्रमथ्यायाः पानं स्वेदाः पृथग्विधाः ।
फलवर्त्तिस्तथा ज्ञात्वा कालं शस्तं विरेचनम् ॥
विल्वमूलत्रिवृद्दारु-यवकोलकुलत्थवान् ।
सुरादिमूत्रवान् वस्तिः स प्राक् प्रेषितमानयेत् ॥ ५ ॥

गङ्गाधरः—गुरुकोष्ठ इत्यादि । गुरुकोष्ठादौ चाल्पलवणादिर्वा वस्तिस्तं दोषं संक्षोभ्य न निर्हरन् गुरुकोष्ठत्वादिकं करोतीत्ययोगयुक्तवस्तिव्यापत् ॥ ४ ॥

गङ्गाधरः—तस्य चिकित्सामाह—तत्रोष्णाया इत्यादि । संज्ञा प्रमथ्या विज्ञेया योगे दीपनपाचने । पृथग्विधाः स्वेदाः स्वेदाध्यायेऽभिहिताः । फलवर्त्तिरुदावर्त्तोक्ताः । विल्वादीत्यादि । सुरा मूत्रं द्रवम्, तत्र विल्वादीन् कल्कान् दत्त्वा सिद्धो वस्तिर्यः स प्राक् प्रेषितं वस्तिमानयेत् बहिर्निःसारयेत् ॥५॥

पृथगुच्यन्ते । यथा संशोधनातियोगायोगगताः आध्मानादयोऽपि पृथगुक्ताः । केचिन्नातियोगात् क्लमाध्मानेत्यादि तथा दशैता व्यापदो वस्तेरित्यादि पठन्ति, स च पूर्व्वाध्यायोक्तव्याख्यानार्थो ज्ञेयः । किन्तु पूर्व्व एव पाठो निर्व्यूढः । आमामित्यादौ रूपशब्देनैव वक्ष्यमाणहेतुविशेषा अवरुद्धो ज्ञेयः । येन हेतुरपि व्याधिगमकतया रूपमेव । गुरुकोष्ठ इति मलपूर्णकोष्ठे । अल्पशब्दो मात्रान्तैः प्रत्येकं सम्बध्यते ॥ ३ । ४ ॥

चक्रपाणिः—तत्रेत्यादि । उष्णायाः प्रमथ्याया इति अतीसारचिकित्सोक्तप्रमथ्यानां मध्ये उष्णायाः प्रमथ्यायाः प्रयोगः । प्रमथ्येति पाचनकषायस्य आयुर्व्वेदसमयसिद्धा संज्ञेति प्रतिपादितमेवातीसारचिकित्सायाम् । कालं ज्ञात्वेति विरेचनयोग्यामवस्थां ज्ञात्वा । सुरादिमूत्रवानित्यादिशब्देन सौवीरकादीनां ग्रहणम् । स प्राक् प्रेषितमिति वस्तिसूत्रायोक्तो बलादिवस्त्युक्तकल्कयुक्तः । आनयेदित्ययोगकारकं वस्तिमपहरेत् ॥ ५ ॥

स्निग्धस्विन्नेऽतितीक्ष्णोष्णो मृदुकोष्ठेऽतियुज्यते।
तस्य लिङ्गं चिकित्साञ्च शोधनाभ्यां समाचरेत्॥ ६॥
पृश्निपर्णीं स्थिरां पद्मं काश्मर्य्यं मधुकोत्पलम्।
पिष्ट्वा मात्रां मधूकानां क्षीरे तण्डुलधावने॥
द्राक्षायाः पक्वलोध्रस्य प्रसादो मधुकस्य च।
विनीय सघृतं वस्तिं दद्याद्दाहेऽतियोगजे॥ ७॥
आमदोषे निरूहेण मृदुना दोषहारिणा।
मूर्च्छयत्यनिलो मार्गं रुणद्ध्यग्निं हिनस्ति च॥

गङ्गाधरः—इत्ययोगव्यापदं सचिकित्सितमुक्त्वाऽतियोगव्यापदमाह—स्निग्धेत्यादि। स्निग्धस्विन्ने पुंसि मृदुकोष्ठे तीक्ष्णोष्णो वस्तिरतियुज्यते। तस्य लक्षणं चिकित्साञ्च शोधनाभ्यां वमनविरेचनाभ्यामतियोगयुक्ताभ्यां समाचरेत्। अतियोगयुक्ते वमने विरेचने च यल्लिङ्गमुक्तं तद् विज्ञेयम्, तत्र चिकित्सा च योक्ता तां समाचरेत्॥ ६॥

गङ्गाधरः—पृश्निपर्णीमित्यादि। तत्रातिनिरूहयोगे जातदाहे मधूकानां मात्रां पिष्ट्वा, अथवा द्राक्षाया मात्रां पिष्ट्वा तण्डुलधावने क्षीरे स्थापितायाः प्रसादः स्वच्छभागः, एवं क्षीरेण तण्डुलान् धौतान् कृत्वा तण्डुलधावने तस्मिन् क्षीरे लोध्रं दग्ध्वा पक्वं प्रक्षिपेत् तस्य यः प्रसादः स्वच्छभागस्तथा यष्टिमधुकस्य मात्रां पिष्ट्वा तण्डुलान् क्षीरे धौतान् कृत्वा तण्डुलधावने क्षीरे स्थापितस्य यः प्रसादः स्वच्छभागस्तत्र पृश्निपर्ण्यादुत्पलान्तानामन्यतमं विनीय तत् कल्कीकृत्य तद्द्रवं सघृतं वस्तिं दद्यात्॥ ७॥

गङ्गाधरः—आमदोष इत्यादिना क्रमं व्यापदमाह—आमदोषे दोषहारिणा मृदुना निरूहेणानिलो मूर्च्छयति कुप्यति। स कुपितोऽनिलो मार्गं रुणद्धि

चक्रपाणिः—अयोगमभिधाय अतियोगमाह—स्निग्धस्विन्न इत्यादि। अतियुज्यत इति अतियोगकारको भवति। शोधनाभ्यां समाचरेदिति वमनविरेचनातियोगोक्तचिकित्सां समाचरेत्। वस्त्यतियोगज दाहे विशिष्टां चिकित्सामाह—पृश्निपर्णीमित्यादि। अत्र क्षीरादिषु पञ्चद्रवेषु कल्कस्य विलयनम्, द्राक्षादिप्रसादः शीतकषायवत् कृतो ज्ञेयः॥ ६। ७॥

चक्रपाणिः—आमदोष इत्यादिना क्रममाह। आमदोषे सति दत्तेन निरूहेण ईरितो दोष इति योज्यम्। दोषशब्देन चात्र पित्तकफौ आमसहितौ मार्गावरकौ ज्ञेयौ। मार्गं रुणद्धीति देहे

क्लमं सदाहं हृच्छूलं मोहवेष्टनगौरवम् ।
कुर्य्यात् स्वेदैर्विरूक्षैस्तं पाचनैश्चाप्युपाचरेत् ॥ ८ ॥
पिप्पलीकत्तृणोशीर-दारुमूर्व्वाशृतं जलम् ।
पिबेत् सौवर्च्चलोन्मिश्रं दीपनं हृद्विशोधनम् ॥
वचानागरसज्जैर्वा दधिमण्डेन मूर्च्छिताः ।
पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा ॥
दारु त्रिकटुकं पथ्यां पलाशं चित्रकं शटीम् ।
पिष्ट्वा कुष्ठञ्च मूत्रेण पिबेत् क्षारांश्च दीपनान् ॥
वस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम् ।
समूत्रमथवा व्यक्त-लवणं माधुतैलिकम् ॥ ९ ॥

जाठरमग्निश्च हिनस्ति सदाहक्लमादीन् कुर्य्यात् । तत्र चिकित्सामाह—स्वेदः विरूक्षश्च पाचनश्च तं नरमुपाचरेदिति ॥ ८ ॥

गङ्गाधरः—क्लमव्यापदश्चिकित्सान्तरमाह—पिप्पलीत्यादि । पिप्पल्यादिभिः शृतं जलं सौवर्च्चलोन्मिश्रं पिबेत् । वचेत्यादि । सज्जा साज्जिकाक्षारः । वचादीनां चूर्णं दधिमण्डेन दधिमस्तुना मूर्च्छिताः सम्यगालोड़िताः पेयाः पातव्याः, अथवा प्रसन्नयालोड़िताः पेयाः स्युरथवारिष्टेनालोड़िताः पेयाः स्युः, अथवाप्यासवेनालोड़िताः पेयाः स्युरिति । दार्व्वित्यादि । दारुप्रभृतिकुष्ठान्तं पिष्ट्वा गोमूत्रेण पिबेत् । दीपनान् क्षारांश्च पिबेत् । वस्तिमित्यादि । अस्य क्लमव्यापन्नस्य दाशमूलिकं दशमूलक्काथकृतं सगोमूत्रं वस्तिं विदध्याच्चाथवा सगोमूत्रं व्यक्तलवणं माधुतैलिकं वस्तिमस्य विदध्यादिति ॥ ९ ॥

स्रोतांसि रुणद्धि । मूर्च्छयतीति मार्गरोधात् कोपयति । ये तु दोषशब्देनेह कफं ग्राहयन्ति, तन्मते क्लमस्य सविदाहत्वमनुपपन्नम् । वचेत्यादौ मूर्च्छिता इति आलोड़िताः । क्षारांश्च दीपनानिति ग्रहणीचिकित्सितादुक्तान् । दशमूलिकमिति द्विपञ्चमूलेत्यादिनोक्तम् । किंवा दशमूलक्काथकृतम् । मधुतैलिकं वक्ष्यमाणम् ॥ ८ । ९ ॥

अल्पवीर्य्यो महादोषे रूक्षः क्रूराशये कृतः।
वस्तिर्दोषावृतस्तूर्द्ध्वमधो * रुन्ध्यात् समीरणम्॥
स विमार्गोऽनिलः कुर्य्यादाध्मानं मर्म्मपीड़नम्।
विदाहं गुरुकोष्ठस्य मुष्कवङ्क्षणवेदनाम्।
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति॥ १०॥
श्यामाफलाद्यैर्लवण-पिप्पलीकुष्ठसर्षपैः।
धूममाषवचाकिण्व-क्षारचूर्णगुड़ैः कृताम्॥
कराङ्गुष्ठनिभां वर्त्तिं यवमध्यां प्रवेशयेत्।
अभ्यक्तस्विन्नगात्रस्य तैलाक्तां स्नेहिते गुदे।
अथवा लवणागार-धूमसिद्धार्थकैः कृताम्॥

गङ्गाधरः—क्रमव्यापच्चिकित्सामुक्त्वाध्मानव्यापदमाह—अल्पेत्यादि। क्रूराशये क्रूरकोष्ठे महादोषे नरे कृतोऽल्पवीर्य्यो रूक्षो वस्तिर्महादोषेण तेनावृतः सन् समीरणमूर्द्ध्वमधो रुन्ध्यात्। स खलु विमार्गः सन् मर्म्मपीड़नमाध्मानं कुर्य्यात्, विदाहञ्च कुर्य्यात्। गुरुकोष्ठस्य तस्य मुष्कादिवेदनां कुर्य्यात्। हृदयञ्च रुणद्धि। शूलैश्च पुनरितस्ततश्च धावति। इत्याध्मानम्॥ १०॥

गङ्गाधरः—तत्र चिकित्सामाह—श्यामेत्यादि। अपामार्गतण्डुलीयोक्तः श्यामादयस्त्रिवृतां त्रिफलामित्यादुरुक्ताः फलादयोऽपि च तत्रोक्ता मदनं मधुकं निम्बमित्यादयो लवणादिभिर्गुड़ान्तैः कृतां कराङ्गुष्ठनिभां वर्त्तिं यवमध्यामाद्यन्ततनुकां मध्यस्थूलां तैलाक्तामभ्यक्तस्विन्नगात्रस्य तैलाभ्यक्तसर्व्वाङ्गस्य स्नेहिते गुदे प्रवेशयेत्। अथवा सैन्धवलवणागारधूमश्वेतसर्षपैः कृतां वर्त्तिं तथाविधानेन

चक्रपाणिः—अल्पवीर्य्य इत्यादिना आध्मानमाह। रुद्धमार्ग इति निवारिताधोमार्गः, स चानिलं रुणद्धि, अनिलश्च रुद्धमार्गतया आध्मानं करोति। मर्म्मपीड़नमित्याध्मानविशेषणम्। रुणद्धि हृदयमिति हृदयं व्याप्नोति। श्यामाफलादिभिरिति श्यामादिभिर्नवभिः फलादिभिश्च कल्पस्थानोक्तैः। धूमशब्देनेह गृहधूमग्रहणम्। गुड़स्तु तावन्मानं भवति, यावता वर्त्तिः कर्त्तुं युज्यते। भिन्नमानञ्च पल पल गुड़स्य पृथक्पलम्। कराङ्गुष्ठनिभामित्यत्र करग्रहणं पादाङ्गुष्ठनिषेधार्थम्। अथवेत्यादिनोक्तां द्वितीयवर्त्तिमाह। तत्र वर्त्तित्वसिद्ध्यर्थं गुड़ादयो ग्राह्याः।

* रुद्धमार्ग इति चक्रसम्मतः पाठः।

विल्वादिना निरूहः स्यात् पीलुसर्षपमूत्रवान्।
सरलामरदारुभ्यां सिद्धञ्चैवानुवासनम्॥ ११॥
मृदुकोष्ठेऽबले वस्तिरतितीक्ष्णोऽतिनिर्हरन्।
कुर्य्यात् हिक्कादिकं तत्र हिक्काघ्नं वृंहणञ्च यत्॥
बलास्थिरादिकाश्मर्य्य-त्रिफलागुड़सैन्धवैः।
सप्रसन्नारनालाम्लैस्तैलं पक्त्वानुवासयेत्॥
उष्णाम्बुनाक्षः पिप्पल्या हितो लवणसंयुतः।
धूमो लेहो रसः क्षीरं स्वेदश्चान्नञ्च वातनुत्॥ १२॥
अतितीक्ष्णः सवातो वा न वा सम्यक् प्रपीड़ितः।
घट्टयेत् हृदयं वस्तिस्तत्र कासक्षणोत्कटः* ॥

गुदे प्रवेशयेत्। विल्वादीत्यादि। विल्वादिपञ्चमूलक्वाथेन पीलुसर्षपकल्क-गोमूत्रमिश्रितेन निरूहः स्यात्। सरलामरदारुभ्यां कल्काभ्यां चतुर्गुणजले सिद्धं तैलमनुवासनं स्यादिति॥ ११॥

गङ्गाधरः—आध्मानचिकित्सामुक्त्वा हिक्काव्यापदमाह—मृदुकोष्ठ इत्यादि। अबले मृदुकोष्ठे नरेऽतितीक्ष्णो वस्तिर्दोषानतिनिर्हरन् हिक्कादिकं कुर्य्यात्। तत्र चिकित्सामाह—तत्र हिक्काघ्नमौषधं यच्च वृंहणमौषधं तच्च कुर्य्यात्। बलेत्यादि। बलादीन् पादिकान् कल्कान् कृत्वा प्रसन्नाद् द्विगुणाद् द्विगुणञ्चाम्लमारनाल-मिति चतुर्गुणे द्रवे तैलं पक्त्वा तेनैव तैलेनानुवासयेत्। उष्णाम्बुनेत्यादि। पिप्पल्या अक्षः कल्को लवणसंयुत उष्णाम्बुना पीतो हितः स्यात्। वातनुच्च धूमो लेहो रसः क्षीरं स्वेदश्चान्नञ्च सर्व्वं हितं स्यात्॥ १२॥

गङ्गाधरः—अथ हृद्घट्टव्यापदमाह—अतितीक्ष्ण इत्यादि। अतितीक्ष्णो

विल्वादिना च निरूह इति विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवानित्यादिनोक्तः। सरलेत्यादौ सिद्धमित्यत्र तैलमिति शेषः॥ ० । ११॥

चक्रपाणिः—मृद्वित्यादिना—हिक्कामाह। अतिनिर्हरन्निति अतियोगेन दोषान् निर्हरति। हिक्काघ्न-मिति हिक्काचिकित्सितोक्तं भेषजम्। हिक्कायाञ्च यद्यपि प्रसक्तच्छर्द्दिनिष्ठीविकाश्वासहिक्कार्त्तानामूर्द्ध्वी-भूतो वायुरूर्द्ध्वं वस्तिं नयेदित्यनेन वस्तिर्निषिद्धः, तथापि विशिष्टायां हिक्कायामनुवासनस्य हितत्वात् बलास्थिरादीत्यादिना अनुवासनमनवद्यम्। वातनुदिति विभक्तिविपरिणामेन धूमादिभिर्योजनीयम्। तेन वाते हितानामेव धूमादीनामत्र प्रयोगः॥ १२॥

चक्रपाणिः—अतितीक्ष्ण इत्यादिना हृद्गतमाह। सवातत्वं वस्तेर्निःशेषदानादिना ज्ञेयम्।

* काशकुशोत्कटैः इति वा पाठः।

स्यात् साम्ललवणस्कन्ध करीरबदरीफलैः।
शृतैर्वस्तिर्हितः सिद्धं वातघ्नैश्चानुवासनम्॥ १३॥
वातमूत्रपुरीषाणां दत्ते वेगान् निगृह्णतः।
अतिप्रपीड़ितो वस्तिर्मुखेनायाति वेगवान्॥
मूर्च्छाविकारं तस्यादौ दृष्ट्वा शीताम्बुना मुखम्।
सिञ्चेत् पार्श्वोदरश्चाधः प्रमृज्यात् वीजयेच्च तम्॥
केशेष्वाकृष्य चाकाशे धुनुयात् त्रासयेच्च तम्।
गोखराश्वगजैः सिंहैराजप्रश्नैस्तथोरगैः॥
उल्काभिरेवमन्यैश्च भीषयित्वा नयेदधः।
वस्त्रपाणिग्रहैः कण्ठं रुन्ध्यान्न म्रियते यथा॥

वस्तिः निःशेषेण प्रपीड़ितः सवातो वा वस्तिः, यो वस्तिर्न सम्यक् प्रपीड़ितः स वस्तिः प्रविश्य हृदयं घट्टयेत्, स हृद्घट्ट उच्यते। तत्र कासः क्षणः क्षणनम्, तदुत्कटयुक्तं हृदयं घट्टयेदिति योजना। तस्य चिकित्सा। करीरबदरीफलैः शृतः साम्ललवणस्कन्धविमानोक्तैरम्ललवणस्कन्धयुक्तो निरूहवस्तिर्हितः। वातघ्नैः भद्रदार्व्वादिभिः सिद्धं तैलञ्चानुवासनं हितम्॥ १३॥

गङ्गाधरः—अथ कण्ठिकां व्यापदमाह—वातेत्यादि। वस्तौ दत्ते प्रवर्त्तमानान् वातादीनां वेगान् निगृह्णतो जनस्य तथातिप्रपीड़ितो वस्तिर्वेगवान् सन् मुखेनायाति कण्ठं प्रवर्त्तते इति कण्ठिका। मूर्च्छाविकारश्च स्यात्, तं दृष्ट्वादौ शीताम्बुना मुखं सिञ्चेत् पार्श्वोदरञ्चाधश्च प्रमृज्यात्। तञ्च केशेषु गृहीत्वा वीजयेत्। तं केशेषु गृहीत्वाकृष्याकाशे नभसि धुनुयात् भ्रामयेच्च। तथा गवादिभिस्त्रासप्रदानेन राजप्रश्नैस्तथोरगैः सर्पैस्त्रासं जनयित्वा उल्काभिरन्यैर्वा भीषणभयं जनयित्वा अस्योर्द्धगं वस्तिमधो नयेत्। वस्त्रेत्यादि। यथा न म्रियते

असम्यक्पीड़ितमेव अतिप्राप्तिजनकतया ज्ञेयम्। लवणस्कन्धो रोगभिषग्जितीयोक्तः। वातघ्नैरिति दशमूलादिभिः॥ १३॥

चक्रपाणिः—वातमूत्रेत्यादिना ऊर्द्ध्वगमाह। दत्त इति वस्तौ दत्त, ऊर्द्ध्वं गच्छतो वस्तेर्मूर्च्छारूपं विकारं दृष्ट्वा शीताम्बुसेचनादि कर्त्तव्यम्। त्रासयेद् गोखरादिभिरिति ज्ञेयम्। एवमन्यैः

प्राणोदानावरोधाद्धि प्रसिद्धतरमार्गवान् ।
अपानः पवनो वस्तिं तमाशु विनिकर्षति ॥
ततः क्रमुककल्काक्षं पाययेताम्लसंयुतम् ।
औष्ण्याद्रौक्ष्यात् सरत्वाच्च वस्तिं सोऽस्यानुलोमयेत् ॥ १४ ॥
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितः ॥
विल्वादिपञ्चमूलेन सिद्धो वस्तिरुरःस्थिते ।
शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ॥ १५ ॥
स्निग्धस्विन्ने महादोषे वस्तिर्मृद्वल्पभेषजः ।
उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम् ॥

तथा वस्त्रेण कण्ठं रुन्ध्यादथवा पाणिग्रहणेन कण्ठं रुन्ध्यात् । कस्मात् ? ततः आह—प्राणोदानेत्यादि । हि यस्मादपानः पवनः प्राणोदानावरोधात् प्रसिद्धतरमार्गवान् सन् तमूर्द्ध्वं गतं वस्तिमाशु शीघ्रमेवापकर्षति अधस्तादानयति । तत इत्यादि । ततः परमधस्ताद् गते वस्तौ क्रमुककल्कस्य गुवाकस्य कल्कस्याक्षं कर्षमम्लसंयुतं पाययेत् । स क्रमुककल्क औष्ण्याद् रौक्ष्यात् सरत्वाच्च भो सौम्य ! वस्तिमनुलोमयेत् ॥ १४ ॥

गङ्गाधरः—पक्वाशयेत्यादि । ऊर्द्ध्वतोऽधस्ताद् गते वस्तौ पक्वाशयस्थिते सति स्वेदं कृत्वा दाशमूलिको निरूहो विधेयः । यवादिभिर्मूत्रसाधितश्च निरूहो विधेय इति । विल्वादीत्यादि । ऊर्द्ध्वतोऽधस्तादागते वस्तौ पुनरुरःस्थिते वक्षसि स्थिते विल्वादिपञ्चमूलेन कथितेन वस्तिर्विधेयः । शिरःस्थे तदवशेषे नावनं नस्यं विधेयं धूमश्च विधेयः । सर्षपैः शिरः प्रच्छाद्यमिति ॥ १५ ॥

गङ्गाधरः—अथ प्रवाहिकां व्यापदमाह—स्निग्धेत्यादि । महादोषे पुरुषे

इति अनुक्तैरपि त्रासनप्रकारैः । कण्ठावरोधो यथा कर्त्तव्यस्तदाह—न म्रियते यथेति । कण्ठोपरोधप्रयोजनमाह—प्राणोदाननिरोधाद्धि प्रसिद्धतरमार्गग इत्यादि; कण्ठग्रहेण प्राणोदाननिरोधात् प्रसिद्धतरमार्गवानपानो भवति, गुदप्रवर्त्तनस्वरूपो भवतीत्यर्थः । ततश्च वस्तिमूर्द्ध्वक्षिप्तमधो नयति । प्राणोदाननिरोधेन तु प्राणोदानाभ्यां पीड़ितो अपानः सुमार्गगामी भवतीति विज्ञेयम् । केचित् तु यावत्प्राणोपरोधाद् वेति पठन्ति । तत्र प्राणोपरोधो यावत् तावत् कण्ठपीड़नं कर्त्तव्यमित्यर्थः । क्रमुकं पूगफलम् । शिरःस्थ इति वस्त्यैकदेशे शिरसि स्थिते सति । प्रच्छाद्यमित्यालेपनीयम् ॥१४।१५॥

चक्रपाणिः—स्निग्धस्विन्न इत्यादिना प्रवाहिकामाह । प्रवाहिकामतीसारोक्तलक्षणयुक्तां

श्वयथुं वस्तिपार्श्वयोश्च जङ्घोरुसदनं तथा।
विबद्धमारुतो जन्तुरभीक्ष्णं संप्रवाहयेत् ॥ १६ ॥
स्वेदाभ्यङ्गनिरूहांश्च शोधनीयानुलोमिकान्।
विदध्याल्लङ्घयित्वा वा वृत्तिं कुर्य्याद् विरिक्तवत् ॥ १७ ॥
दुर्ब्बले क्रूरकोष्ठे च तीव्रदोषे तनुर्मृदुः।
शीतोऽल्पश्चावृतो दोषैर्वस्तिस्तद्विहतोऽनिलः ॥
गात्राण्यनुसरन् मार्गे ऊर्द्ध्वं मूर्द्ध्नि विधावति।
ग्रीवां मन्ये च संस्तभ्य शिरः कण्ठं भिनत्ति च ॥
वाधिर्य्यं कर्णनादश्च पीनसं नेत्रविभ्रमम्।
कुर्य्यात् तु तैललवणेनोष्णेनैनं यथाविधि ॥
युञ्ज्यात् प्रधमनैर्धूमैर्नस्यैश्चास्य विरेचयेत्।
तीक्ष्णानुलोमिकेनाथ स्विन्नं भुक्तेऽनुवासयेत् ॥

स्निग्धस्विन्ने मृदुल्प (कटुम्ल)-भेषजो वस्तिरुत्क्लिश्य दोषमल्पं हरेत्। प्रवाहिकाश्च जनयेत्। तथा वस्तिपार्श्वयोः श्वयथुं जङ्घोरुसदनं जनयेत्। स च जन्तुः पुमान् विबद्धमारुतः सन् अभीक्ष्णं संप्रवाहयेत् कुन्थनपूर्व्वकं पुनःपुनर्वर्चस्त्यक्तुं गच्छेत्। तत्र चिकित्सामाह—स्वेदाभ्यङ्गेत्यादि। तत्र प्रवाहिकायां शोधनीयानानुलोमिकान् निरूहान् विदध्यात्। अथवा लङ्घयित्वा विरिक्तवद् वृत्तिं कुर्य्यात् ॥१६।१७

गङ्गाधरः—अथ शिरोऽर्त्तिं व्यापदमाह—दुर्ब्बल इत्यादि। क्रूरकोष्ठे दुर्ब्बले पुरुषे तीव्रदोषे तनुर्मृदुः शीतोऽल्पनिरूहवस्तिर्दोषरावृतस्तदावृतवस्तिना च विहतोऽनिलश्च गात्राण्यनुसरन् ऊर्द्ध्वं मूर्द्ध्नि मार्गे विधावति। ग्रीवां मन्ये च संस्तभ्य शिरः कण्ठं भिनत्ति, वाधिर्य्यादिकश्च कुर्य्यादिति शिरोऽर्त्तिनाम निरूह-वस्तिव्यापत्। तच्चिकित्सामाह—तलेत्यादि। कोष्णेन तैललवणेनाक्तं तं नरं यथाविधि प्रधमनधूमरन्यैश्च नस्यैरस्य शिरो विरेचयेत्। अथ स्विन्नमिमं

प्रवाहिकां जनयति। शोधनीयानुलोमिकानित्यत्र शोधनीयान् त्रिवृतादिशोधनद्रव्ययुक्तान्, आनुलोमिकानित्यानुलोमनक्षीरेक्षुरसयुक्तान्। वृत्तिमिति पेयादिक्रमम् ॥ १६। १७ ॥

चक्रपाणिः—दुर्ब्बल इत्यादिना शिरोऽर्त्तिं माह। तद्विहत इति निरूहवस्तिप्रकोपितः। ऊर्द्ध्वं मूर्द्ध्न्युपाहितमिति ऊर्द्ध्वमनुसरन् मूर्द्ध्नि विहन्यते। केचिदूर्द्ध्वं मूर्द्ध्नि विधावतीति पठन्ति। तेन

स्नेहस्वेदैरनापाद्य गुरुतीक्ष्णातिमात्रया।
यस्य वस्तिः प्रयुज्येत नातिमात्रं प्रयुज्यते॥
स्तब्धोदावृत्तकोष्ठस्य रुद्धः स्रोतःसु मारुतः।
प्रपन्नोऽङ्गरुजं कुर्य्यात् तं तैललवणान्वितम्॥
उष्णाम्बुप्रस्तरक्वाथैः स्वेदैस्तमुपपादयेत्।
सविल्वतैललवणो निरूहस्तस्य शस्यते॥
तैलावगाहस्विन्नस्य कारयेदनुवासनम् * ॥ १८। १९॥

भुक्तेऽन्ने सति तीक्ष्णानुलोमिकेन तैलेनानुवासयेदिति। अथाङ्गार्त्तिं निरूहव्यापदमाह—स्नेहेत्यादि। गुरुं स्नेहस्वेदैरनापाद्य स्नेहस्वेदाभ्यामापन्नं न कृत्वा गुरुतीक्ष्णद्रव्याणामतिमात्रया वस्तिर्यस्य प्रयुज्येत, अथवा नातिमात्रं प्रयुज्यते, तस्य स्तब्धोदावृत्तकोष्ठस्य स्रोतःसु रुद्धो मारुतः प्रपन्नः सन्नङ्गरुजं कुर्य्यात्। इत्यङ्गार्त्तिर्नाम निरूहव्यापत्। तत्र चिकित्सामाह—तमित्यादि। तमङ्गार्त्तिमन्तं तैललवणाभ्यक्तमुष्णाम्बुना स्वेदेनाऽथवा प्रस्तरस्वेदेनाथवा क्वाथेन स्वेदेन समुपाचरेत्। विल्वतैललवणान्वितो निरूहश्च तस्य प्रशस्यते। ईषदुष्णतैलद्रोण्यामवगाहेन स्विन्नस्य तस्यानुवासनं कारयेदिति॥ १८। १९॥

अपरयुपरि धावतीत्यर्थः। विरेचयेदिति वा शेषः। अमुं विरेचयेदिति वा पाठः। तीक्ष्णानुलोमिके अन्ने अनुभुक्ते सति अनुवासयेदिति योज्यम्। किंवा तीक्ष्णानुलोमिकेनैवानुवासनं सुस्विन्नस्निग्धदेहस्येत्यादिनाङ्गग्रहमाह। सोऽतिमात्रं प्रवर्त्तयेत् दोषानिति शेषः। ततस्तब्धोदावृत्तकोष्ठस्य स्रोतःसु रुद्धो मारुतः अङ्गरुजां करोति। भुक्तवतो यद्यपि अनुवासनं सर्व्वत्र भवति, तथापि भुक्तवत इति अनेन भोजनानन्तरमेवानुवासनं दर्शयति। साधयामित्यर्थः। स्नेहस्वेदैरनापाद्येति स्नेहस्वेदैः शरीरं नोपपाद्यम्॥ १८। १९॥

---

* अभज्य विधिना सम्यक् स्निग्धं कायं ततः परम्। ** विरेचनै र्निरूहैश्च वस्तिभिश्चानुलोमिकैः॥
सुस्विन्नस्निग्धदेहस्य यस्य वस्तिर्विधीयते। अतितीक्ष्णो गुरुश्चैव सोऽतिमात्रं प्रवर्त्तयेत्॥
स्रुतेषु तस्य रूक्षेषु निरूढस्यातिमात्रशः। स्तब्धोदावृत्तकोष्ठस्य वायुः स प्रतिहन्यते॥
विलोमनसमुद्भूतो रुजत्यङ्गानि देहिनः। गात्रवेष्टननिस्तोदभेद-स्फुरणजृम्भणैः॥
तं तैललवणाभ्यक्तं सेचयेदुष्णवारिणा। एरण्डपत्रनिष्क्वाथैः प्रस्तरैश्चोपपादयेत्॥
यवान् कुलत्थान् कोलानि पञ्चमूले तथोभये। जलाढ़कद्वये पक्त्वा पादशेषेण तेन च॥
कुर्य्यात् सविल्वतैलोष्ण-लवणेनानुवासनम्। निरूहणं समाश्वस्तं द्रोण्यां तमवगाहयेत्॥
ततो भुक्तवतस्तस्य कारयेच्चानुवासनम्। यष्टीमधुकतैलेन विल्वतैलेन वा भिषक्॥१८।१९
इति पाठान्तरम्।

मृदुकोष्ठेऽल्पदोषस्य रूक्षस्तीक्ष्णोऽतिमात्रया ।
वस्तिर्दोषान् निहन्त्याशु जनयेत् परिकर्त्तिकाम् ॥
त्रिकवङ्क्षणवस्तीनां तोदो नाभेरधः रुजम् ।
विबन्धाल्पाल्पमुत्थानं वस्तेर्निर्लेखनं भवेत् ॥ २० ॥
स्वादुशीतौषधैस्तत्र पय इक्ष्वादिभिः श्रृतम् ।
यष्ट्याह्वतिलकल्काभ्यां वस्तिः स्यात् क्षीरभोजिनः ॥
ससर्ज्जरसयष्ट्याह्व-जिङ्गिनीकर्द्दमाञ्जनम् ।
विनीय दुग्धे वस्तिः स्यात् तिक्ताम्लमृदुभोजिनः ॥ २१ ॥
पित्तरक्तेऽम्ल उष्णो वा तीक्ष्णो वा लवणोऽपि वा ।
वस्तिर्गुदं विलिखति तीक्ष्णोऽतिविदहत्यपि ॥
सविदग्धं स्रवत्यस्रं पित्तं चानेकवर्णवत् ।
बहुधा ह्यतिवेगेन मोहं गच्छति वासकृत् ॥ २२ ॥

अथ परिकर्त्तिकां निरूहव्यापदमाह—मृदुकोष्ठ इत्यादि । अल्पदोषस्य पुंसो मृदुकोष्ठे रूक्षस्तीक्ष्णो वस्तिरतिमात्रया दत्त आशु दोषान् निहन्ति, परिकर्त्तिकां गुदे कर्त्तनवत् पीड़ां जनयेत् । त्रिकादितोदनाभ्यधो रुजादिः स्यात् । वस्तेर्निर्लेखनं किञ्चिच्चर्म्मावदरणं निःशेषण भवेत् ॥ २० ॥

गङ्गाधरः—तत्र चिकित्सामाह—स्वाद्वित्यादि । स्वादुशीतौषधद्रव्यैरिक्ष्वादिभिः श्रृतं पयो हितं स्यात् । क्षीरभोजिनश्च यष्ट्याह्वतिलकल्काभ्यां युक्तो वस्तिः हितः स्यात् । ससर्ज्जेत्यादि । तस्मिन् दुग्धे सर्ज्जरसयष्टीमधुसहितमञ्जिष्ठाकर्द्दमरसाञ्जनं कल्कीकृत्य दत्त्वा वस्तिः स्यात् । तिक्ताम्लमृदुभोजिन इति तिक्तादिभोजी स्यादिति ॥ २१ ॥

गङ्गाधरः—अथ परिस्रवं व्यापदमाह—पित्तेत्यादि । पित्तरक्तेऽधिके सति अम्लाद्यन्यतमो वस्तिर्दत्तो गुदं विलिखति ईषद् विदीर्णं करोति तत्र तीक्ष्णो वस्तिः

चक्रपाणिः—मृद्वित्यादिना परिकर्त्तिकामाह । रूक्षतीक्ष्णोऽतिमात्रस्त्वानिति रूक्षेण तीक्ष्णेनातिमात्रेण वस्तिनाकर्षणात् । तिक्ताम्लेति वस्तिविशेषणम् ॥ २० । २१ ॥

चक्रपाणिः—पित्तरक्तेत्यादिना परिस्रवमाह । तीक्ष्णोऽतिविदहत्यपि अतिविदाहं करोति ।

आर्द्रशाल्मलिवृन्तैश्च क्षुण्णैराजं शृतं पयः।
सर्पिषा योजितं शीतं वस्तिं धीरः प्रयोजयेत्॥
वटादिपल्लवेष्वेष कल्पः पञ्चतिलेषु च।
सुवर्च्चलोपोदिकयोः कर्व्वुदारे च शस्यते॥
गुदे सेकाः प्रदेहाश्च शीताः स्युर्मधुराश्च ये।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते॥ २३॥

तत्र श्लोकाः।

इत्येता व्यापदः प्रोक्ता वस्तेः साकृतिभेषजाः।
बुद्ध्वा कार्त्स्न्येन तान् वस्तीन् नियुञ्जन्नापराध्यति॥
तीक्ष्णत्वं मूत्रमस्त्वादि-*-लवणक्षारसर्षपैः।
प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्द्दवं तथा॥

पित्तं रक्तञ्च विदहत्यपि स गुदो विदग्धं पित्तमस्रञ्चानेकवर्णविशिष्टं बहुधा स्रवति। तस्यातिवेगेनासकृत् मोहं गच्छति। इति परिस्रवो व्यापत्॥ २२॥

गङ्गाधरः—तत्र चिकित्सामाह—आर्द्रेत्यादि। आर्द्रैः शाल्मलिवृन्तैः क्षुण्णैः कुट्टितैः कल्कैरष्टांशिकैश्चतुर्गुणजले शृतं सर्पिषा युक्तं वस्तिं प्रयोजयेत्। वटादिपल्लवेष्वेष एव वस्तेः कल्पः। तथा पञ्चविधतिलेषु चैष एव वस्तेः कल्पः। पञ्चविधं तिलं कृष्णादिभेदात्। यथालाभं कल्कीकृत्याजं पयः पक्त्वा वस्तिः कल्प्यः स्यादिति। सुवर्च्चला सूर्य्यभक्ता उपोदिका पोदिना तयोः कल्केनाजं पयः पक्त्वा घृतयुक्तं वस्तिं कल्पयेत्। तथा कर्व्वुदारे रक्तकाञ्चनत्वचि कल्के छागं पयः पक्त्वा घृतयुक्तं वस्तिं कल्पयेत्, स च वस्तिः शस्यते। गुद इत्यादि। ये मधुराः शीताश्च सेकाः प्रदेहाश्च स्युर्या च रक्तपित्तातिसारघ्नी क्रिया सा चात्र प्रशस्यते इति॥ २३॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोका इत्यादि। इत्येता इत्यादि। तीक्ष्णत्वमित्यादि। प्राप्तकालं वस्तेस्तीक्ष्णत्वविधानकाले प्राप्ते मूत्रादिभि-

आर्द्रशाल्मलीवृन्तोक्तक्षीरसंस्कारकल्पः। सुवर्च्चलमिति सुनिषण्णकमाहुः। कर्व्वुदारः काञ्चनालः। इत्येता इत्यादिसंग्रहः। यस्मादेता व्यापदो वस्तिदुष्प्रयोगजन्या भवन्ति, तस्मात् कार्त्स्न्येन वस्तीन्

* पीत्वादीति चक्रधृतः पाठः।

आपादतलमूर्द्धस्थान् दोषान् पक्काशयस्थितान्।
वीर्य्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव॥
यद्वत् कुसुम्भसंमिश्रात् तोयाद्रागं हरेत् पटः।
तद्वत् द्रवीकृतात् कायात् निरूहो निर्हरेन्मलान्॥ २४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
वस्तिव्यापत्सिद्धिर्नाम सप्तमोऽध्यायः॥ ७॥

स्तीक्ष्णत्वं विधातव्यं वस्तेर्मार्दवविधानकाले प्राप्ते क्षीराद्य मार्दवं विधातव्यमिति। वस्तेः प्रभावमाह—आपादेत्यादि। पादतलमारभ्य मूर्द्धदेशस्थान् दोषान् विशेषेण पक्वाशयस्थितान् दोषान् वस्तिर्वीर्य्येणादत्ते यथा खस्थोऽर्को भूरसानादत्ते। एवं यद्वदित्यादि। यथा कुसुम्भसंमिश्रात् तोयाद् रागं पटो हरेत्, तथा निरूहो द्रवीकृतात् कायान्मलान् निर्हरेदिति॥ २४॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। सिद्धिस्थानेऽष्टमेऽप्राप्ते तस्मिन्
दृढबलेन तु। प्रतिसंस्कृत एवात्र वस्तिव्यापत्सिद्ध्याह्वये। अध्याये
सप्तमे वद्य-गङ्गाधरकृते पुनः। जल्पकल्पतरौ स्कन्धे सिद्धि-
स्थानेऽष्टमे किल। वस्तिव्यापत्सिद्धिजल्पाऽऽह्वया
शाखा तु सप्तमी॥ ७॥

वुद्ध्वा नियुञ्जन् नापराध्यति वस्तिव्यापदं नासादयतीत्यर्थः। सम्प्रति वस्तीनां मृदुत्वं तीक्ष्णत्वञ्च तत्र तत्र विहितम्; तद्विज्ञानार्थं मार्द्दवतीक्ष्णत्वकारकद्रव्यगणमाह। पीलु औत्तरापथिकं फलम्। पीलुस्थाने केचिद् विल्वं पठन्ति। प्राप्तकालमिति उक्तावस्थं कार्य्यमाह। पक्वाशये स्थित इति पक्वाशयगत एव, आदत्त वीर्य्येणेति शक्त्या स्वभावसम्भवया, एवम्भूतं वीर्य्यं वस्तावेव। तेन पाचनादिप्रयोगाणां न वस्तिवत् तदहरेव सकलदेहगतदोषविजेतृत्वं भवति। खस्थ इति आकाशगतः। सुश्रुतेऽप्युक्तम्—'वीर्य्येण वस्तिरादत्ते दोषान् आ पादमस्तकात्। पक्वाशयस्थोऽम्बरगो भूमेर्रार्को रसानिव॥' इति। वस्तेः शरीरे मलप्रसादसहितेऽपि यथा मलांशमात्रहारकत्वं भवति, तद् दृष्टान्तेन दर्शयन्नाह—यद्वदित्यादि। द्रवीकृतादिति स्नेहस्वेदार्द्रीकृतात्। मलानिति दोषान् पुरीषञ्च॥२३।२४॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां वस्तिव्यापत्सिद्धिव्याख्या-
नाम सप्तमोऽध्यायः॥ ७॥

# अष्टमोऽध्यायः ।

अथातः प्रसृतयोगीयां सिद्धिं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून् ।
कर्म्मणां विप्लुतानाञ्च वक्ष्यामि प्रसृतैः पृथक् ॥ २ ॥
क्षीराद् द्वौ प्रसृतौ कार्य्यौ मधुतैलघृतात् त्रयः ।
खजेन मथितो वस्तिर्वातघ्नो बलवर्णकृत् ॥ ३ ॥
एकैकः प्रसृतस्तैल-प्रसन्नाक्षौद्रसर्पिषाम् ।
विल्वादिमूलक्वाथाद् द्वौ कौलत्थात् द्वौ स वातनुत् ॥ ४ ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमात् प्रसृतयोगीयसिद्धिमाह—अथात इत्यादि । प्रसृतयोगमधिकृत्य कृता सिद्धिरिति प्रसृतयोगीया सिद्धिः । शेषं पूर्ब्ववत् ॥१॥

गङ्गाधरः—अथेमानित्यादि । प्रसृतः पलद्वयोन्मितः ॥ २ ॥

गङ्गाधरः—क्षीरादित्यादि । क्षीरस्य द्वौ प्रसृतौ कुड़वमितम् । मधुतैलादीनां प्रत्येकमेकप्रसृत इति त्रयाणां प्रसृतास्त्रयः । इति पाञ्चप्रसृतिको वस्तिः ॥ ३ ॥

गङ्गाधरः—एकक इत्यादि । तैलस्यैकः प्रसृतः प्रसन्नाया एकः क्षौद्रस्यैकः सर्पिष एक इति चत्वारः । विल्वादिपञ्चमूलक्वाथस्य द्वौ प्रसृतौ, कौलत्थक्वाथस्य द्वौ प्रसृतावित्याष्टप्रसृतिको वस्तिः । खजेन मथितः कार्य्यः ॥ ४ ॥

चक्रपाणिः—सम्प्रति वस्तिव्यापत्प्रशमकस्याभिधायकतयैव प्रासृतयोगीया सिद्धिरुच्यते । प्रासृतोपलक्षिता योगाः, तानधिकृता सिद्धिः, तेन प्रासृताश्रिता अप्यत्र योगा वक्तव्या एव । इमानित्यग्रे वक्ष्यमाणान् । तेन अध्यायेषु वक्तव्यानामवश्यं प्रासृतोपलक्षितविधानम् । सुकुमाराणामिति तन्वादिगुणसम्बद्धं भवति ॥ १ । २ ॥

चक्रपाणिः—प्रसृतं पलद्वयम् । मधुतैलघृतात् त्रय इति मिलितात् । अत्र यथोक्तैरेव द्रव्यैः वस्तिर्देयः । तेन नेतरवस्तिन्यायेनानुक्तकल्कादिकल्पना । यत्र सामान्यतया मानद्रव्यविभागेन वस्त्यभिधानम्, तत्र सामान्यवस्तिद्रव्यमानावकाशः । यत्र त्वेकदेशकथनम्, तत्र निरूहयोगि-

पञ्चमूलरसात् पञ्च द्वौ तलात् चौद्रसर्पिषोः ।
एकैकः प्रसृतो वस्तिः स्नेहनीयोऽनिलापहः ॥ ५ ॥
सैन्धवार्द्धाक्ष एकैकः चौद्रतैलपयोघृतात् ।
प्रसृतौ हबुषात् चौद्रान्निरूहः शुक्रकृत् परः ॥ ६ ॥
पटोलनिम्बभूनिम्ब-रास्नासप्तच्छदाम्भसः ।
चत्वारः प्रसृता एको घृतात् सर्षपकल्कितः ।
निरूहः पञ्चतिक्तोऽयं महाभिष्यन्दकुष्ठनुत् ॥ ७ ॥
त्रिडङ्गत्रिफलाशिग्रु-फलमुस्ताखुपर्णिका ।
कषायाः पञ्चप्रसृतास्तैलादेको विमथ्य तान् ।
विडङ्गपिप्पलीकल्को निरूहः क्रिमिनाशनः ॥ ८ ॥

गङ्गाधरः—पञ्चेत्यादि । वृहत्पञ्चमूलस्य क्काथात् पञ्चप्रसृतास्तलाद् द्वौ प्रसृतौ क्षौद्रस्यकः सर्पिष एक इति नवप्रसृतिको वस्तिः खजेन मथितः कार्य्यः ॥ ५ ॥

गङ्गाधरः—सैन्धवेत्यादि । सैन्धवस्यार्द्धाक्ष एकतोलकम् । क्षौद्रस्यकः प्रसृतः तलस्यैकः पयस एको घृतस्यकः । हबुषां क्षुद्रां कण्टकारीं क्काथयित्वा तद्धबुषात् क्षौद्रात् क्काथाद् द्वौ द्वौ प्रसृतौ, खजेन मथितो निरूहो वस्तिरिति षट् प्रसृतिकः ॥ ६ ॥

गङ्गाधरः—पटोलेत्यादि । पटोलादीनां पञ्चानां मिलितानां क्काथाश्चत्वारः प्रसृताः । एको घृतात् प्रसृत इति सर्षपकल्केनानुरूपेण युक्तः खजेन मथितो निरूहः पञ्चतिक्त इतिसञ्ज्ञः ॥ ७ ॥

गङ्गाधरः—विडङ्गेत्यादि । विडङ्गादीनि पञ्च प्रत्येक नीत्वाष्टगुणे जले पक्त्वा चतुर्थांशशेषाः पञ्च कषायाः पञ्च प्रसृतास्तत्र त्रिफलाया एकः कषायः स्तलादेकः

तथोक्तद्रव्यमानाधिकारः । सैन्धवप्रवेशस्त्वत्यज्य एव । विल्वादिमूलं दशमूलम् । स वातनुदिति स वस्तिर्वातं हन्तीति ॥ ३—५ ॥

चक्रपाणिः—हपुषाकर्षः । पटोलेत्यादावम्भसः क्काथात् । सर्षपकल्कित इत्यत्र यद्यपि कल्कमानं नोक्तं तथापि द्वादशप्रसृते निरूहे द्विपलकल्कस्य विहितत्वात् इह पञ्चप्रसृते तदनुसाराद् षड् भागोनं पलं भवति । एवमन्यत्राप्युक्तमानकल्कव्यवस्था । विडङ्गेत्यादौ फलं मदनफलम् ।

पयस्येक्षुस्थिरारास्ना-विदारीक्षौद्रसर्पिषाम् ।
एकैकप्रसृतो वस्तिः कृष्णाकल्को वृषत्वकृत् ॥ ९ ॥
चत्वारस्तैलगोमूत्र-दधिमण्डाम्लकाञ्जिकात् ।
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ॥ १० ॥
श्वदंष्ट्राश्मभिदेरण्ड-रसात् तैलात् सुरासवात् ।
प्रसृताः पञ्च यष्ट्याह्वात् कौन्ती मागधिका सिता ॥
कल्को वस्तिस्तु सानाहे मूत्रकृच्छ्रे परो मतः ।
एते सलवणाः कोष्णा निरूहाः प्रसृता नव ॥ ११ ॥

प्रसृतस्तान् खजेन विमथ्यानुरूपेण विडङ्गपिप्पलीकल्कयुतः स निरूहो वस्तिः षट्प्रसृतिकः ॥ ८ ॥

गङ्गाधरः—पयस्येत्यादि। पयस्या क्षीरकाकोली। क्षीरकाकोलीक्काथ एकप्रसृत इक्षुरस एकप्रसृतः शालपर्णीक्काथ एकप्रसृतो रास्नाक्काथ एकप्रसृतः भूमिकुष्माण्डरस एकप्रसृतः क्षौद्रस्यकः प्रसृतः सर्पिष एकप्रसृत इति सप्त प्रसृताः, एकीकृतः कृष्णाकल्कयुतः खजेन मथितो वस्तिः सप्तप्रसृतिकः ॥ ९ ॥

गङ्गाधरः—चत्वार इत्यादि। तैलादीनामेकैकस्यैकैकप्रसृत इति चतुर्णां चत्वारः प्रसृताः सर्षपैः पिष्टैरनुरूपयुक्तो मथितो वस्तिश्चतुःप्रसृतिकः ॥ १० ॥

गङ्गाधरः—श्वदंष्ट्रेत्यादि। श्वदंष्ट्रादीनां त्रयाणां मिलितानां क्काथादेकः प्रसृतस्तैलादेकः सुराया एक आसवादेको यष्ट्याह्वादेक इति पञ्च प्रसृताः, अनुरूपस्तत्र कौन्त्यादीनां कल्क इति सर्व्वं खजेन मथित्वा वस्तिः। अत्रानुक्त-यौगिकद्रव्यमाह—एत इत्यादि। एते नव प्रसृतयोगाः सलवणा अनुक्तसैन्धव-लवणयुक्ताः कोष्णा निरूहा उक्ताः ॥ ११ ॥

आखुपर्णी दन्ती। पयस्येत्यादौ यद्यपि पयस्यादीनां क्काथो न श्रूयते, तथापि अवान्तरेणैकैक-प्रसृतविधानात् प्रत्येकं पयस्यादिक्काथस्य प्रसृतमानत्वम्। वृषत्वकृदिति शुक्रवृद्धिकृत्। श्वदंष्ट्रे-त्यादौ श्वदंष्ट्रादिद्रव्यत्रयक्काथस्य प्रसृतमानत्वम्, एवं तैल-सुरासवाभ्यां सह पञ्च प्रसृताः पूरणीयाः। सुराकृत आसवः सुरासवः ॥ ६—११ ॥

मृदुवस्तिजड़ीभूते तीक्ष्णोऽन्यो वस्तिरिष्यते ।
तीक्ष्णैर्विकर्षिते स्वादु प्रत्यास्थापनमिष्यते ॥ १२ ॥
वातोपसृष्टस्योष्णैः स्युर्गदा दाहादयो यदि ।
द्राक्षादिना * त्रिवृत्कल्कं संपिबेद्द दोषशोधनम् ॥
तच्च पित्तशकृद्वातान् हत्वा दोषादिकान् जयेत् ।
शुद्धश्चापि पिबेच्छीतां यवागूं शर्करायुताम् ॥ १३ ॥
अथवातिविरिक्तस्य क्षीणविट्कस्य दापयेत् ।
माषयूषेण कुल्माषात् पानं दध्यथवा सुराम् ॥ १४ ॥
सामञ्चेदाशयं शूलैरुपवेशैररोचकैः ।
सघनातिविषाः कुष्ठ-नतदारुवचाः पिबेत् ॥

गङ्गाधरः—मृद्वित्यादि । मृदुवस्तिजड़ीभूते जनेऽन्यस्तीक्ष्णो वस्तिरिष्यते । तीक्ष्णवस्तिभिर्विकर्षिते जने स्वादु प्रत्यास्थापनं प्रतिनिरूहवस्तिरिष्यते ॥१२॥

गङ्गाधरः—वातेत्यादि । वातोपसृष्टस्य नरस्य खलूष्णद्रव्यनिरूहे यदि दाहादयो रोगाः स्युस्तदा द्राक्षादिना षड्विरेचनशताश्रितीयोक्तेन द्राक्षाकाश्मर्येत्यादिना दशकेन विरेचनोपगेन कथितेन त्रिवृत्कल्कं मात्रया तद्वत् संपिबेत् । तच्च पानं पित्तादिकान् दोषादिकान् हत्वा जयेदिति । शुद्धश्च तेन सन् शर्करायुतां शीतां यवागूं पिबेत् ॥ १३ ॥

गङ्गाधरः—अथवाऽतिविरिक्तस्य क्षीणविट्कस्य माषयूषेण यवागूं दापयेत् । कुल्माषात् काञ्जिकात् पानं दापयेदथवा दधि अथवा सुरां पानं दापयेत् ॥ १४ ॥

गङ्गाधरः—साममित्यादि । तथातिविरिक्तस्याशयमुपवेशः पुरीषत्यागे शूलः

चक्रपाणिः—एतदुक्तवस्तिप्रयोगेऽनभिमते कर्त्तव्यमाह—मृद्वित्यादि । स्वादु प्रत्यास्थापनमिष्यत इत्यत्र स्वादु द्राक्षादिकृतम् । केचित् तदहरेव प्रत्यास्थापनमिच्छन्ति । आस्थापनं लक्ष्यीकृत्य दीयत इति प्रत्यास्थापनम् ॥ १२ ॥

चक्रपाणिः—वातोपसृष्टस्येत्यादौ उष्णैरिति वस्तिविशेषणम् । दाहादयो दाहमोहतृड़ादयो वातपित्तजन्याः । द्राक्षाम्बुना त्रिवृतपानस्य दाहादिकारके पित्ते वाते च हितत्वं दर्शयन्नाह—तद्धीत्यादि । कुल्माष इति अर्द्धस्विन्नयवादिमयो भक्ष्यः । 'घुघुनी' इति ख्यातम् ॥ १३ । १४ ॥

चक्रपाणिः—वस्तिमिथ्याप्रयोगादीरितानामतीसारभेदानां चिकित्सितमाह—सामञ्चेदित्यादि ।

* द्राक्षाम्बुना इति वा पाठः ।

शकृद्वातमसृक् पित्तं कफं वा योऽतिसार्य्यते ।
पक्वस्तत्र स्ववर्गीयैर्वस्तिः श्रेष्ठं भिषग्जितम् ॥ १५ । १६ ॥
षण्णामेषां द्विसंसर्गात् त्रिंशद्भेदा भवन्ति ते ।
केवलैः सह चेत् त्रिंशद् विद्यात् सोपद्रवा अपि * ॥
शूलप्रवाहिकाध्मान-परिकर्त्यरुचिज्वरान् ।
सतृष्णादाहमूर्च्छान्तांश्चैषां विद्यादुपद्रवान् ॥ १७ ॥

सामं तथारोचकर्जानीयात्, तदा कुष्ठादिकाः सघनातिविषाः पिष्ट्वा जलेन पिबेत् । शकृदित्यादि । शकृद्वातमसृक् पित्तमिति शकृदादिकं योऽतिसार्य्यते तत्र स्ववर्गीयः शकृदाद्यतिसारेऽत्रैव वक्ष्यमाणैः पक्वो वस्तिः श्रेष्ठं भिषग्जितम् ॥ १५ । १६ ॥

गङ्गाधरः—अत्र सूत्रयते । षण्णामित्यादि । एषामामशकृद्वातासृक्पित्तकफानां षण्णां त्रिंशद्भेदा भवन्ति । ते षड़ामादयः केवलस्तैः षड्भिः सह सोपद्रवा अपि द्विसंसर्गाच्चेद् गण्यन्ते तदा त्रिंशद् विद्यात् । तद् यथा । केवलाः षट्, द्विसंसर्गात् पञ्चदश । आमशकृत् । आमवातः । आमासृक् । आमपित्तम् । आमकफ इति पञ्च । शकृद्वातः । शकृदसृक् । शकृत्पित्तम् । शकृत्कफ इति चत्वारः । वातासृक् । वातपित्तम् । वातकफ इति त्रयः । असृक्पित्तमसृक्कफ इति द्वौ । पित्तकफ इत्येकः । इति पञ्चदश सह केवलैः षड्भिरेकविंशतिः । नव चोपद्रवा भवन्ति ततस्त्रिंशद् भेदाः स्युः । तानुपद्रवानाह—शूलेत्यादि । शूलादीन् नवषामुपद्रवान् विद्यात् ॥ १७ ॥

सामं यथा स्यात् तथोपविशेदिति । शकृद्वातादिव्यतिरिक्ताममात्रोपवेशरूपोऽयमतीसारः केवलामशकृद्वातरक्तपित्तकफजन्यानामिह षण्णामतीसाराणां वक्तव्यानां प्रथम उक्तो भवति । कुणपमिति शवगन्धम् । शूलैर्युक्त इति शेषः । घनं मुस्तकम् ॥ १५ ॥

चक्रपाणिः—केवलशकृदादिजन्यांश्चातिसारानाह—शकृद्वातमित्यादि । पक्वमिति निरामम् । आमशब्देनेहाग्निदौर्बल्यादविपक्वाहाररसेन कोष्ठोपलेपक आमो गृह्यते । यदुक्तमन्यत्र—"आमाशयस्थः कायाग्नेर्दौर्बल्यान्न च पाचितः । आद्य आहरधातुर्यः स रस आमसंज्ञितः ।" इति । स्ववर्गीयैरिति पुरीषसंग्रहणवातशोणितास्थापनपित्तकफहरभेषजवर्गैः, किंवा अत्रोक्तैर्वातघ्नैरित्यादिभिः प्रत्येकं शकृदादिवक्ष्यमाणभेषजैः ॥ १६ ॥

चक्रपाणिः—अतीसारभेदानाह—षण्णामित्यादि । एषामिति एतदभिहितानाम् । अन्ये तु

* सोपद्रवानपि इति पाठो बहुषु ग्रन्थेषु दृश्यते ।

तत्रामेऽन्तरपानं स्याद् व्योषाम्ललवणैर्युतम्।
पाचनं शस्यते वस्तिरामे तु प्रतिषिध्यते ॥ १८ ॥
वातघ्नग्राहिवर्गीयैर्वस्तिः शकृति शस्यते।
स्वाद्वम्ललवणैः शस्तः स्नेहवस्तिः समीरणे ॥
रक्ते रक्तेन पित्ते तु कषायस्वादुतिक्तकैः।
सार्य्यमाणे कफे वस्तिः कषायकटुतिक्तकैः ॥ १९ । २० ॥
शकृता वायुना चामे तेन वर्च्चस्यथानले *।
संसृष्टेऽन्तरपानं स्याद् व्योषाम्ललवणैर्युतम् ॥ २१ ॥

गङ्गाधरः—स्ववर्गीयैः पक्वः सिद्धो वस्तिरिति यदुक्तं तान् स्ववर्गानाह—तत्राम इत्यादि। प्रथमं केवलानामामशकृदादीनां भेषजमाह। तत्रातिविरिक्तस्य सामे खल्वाशये व्योषादिभिर्युतं पाचनमन्तरपानं स्यात्। सर्व्वत्र वस्तिः शस्यते, आमे तु प्रतिषिध्यते। तस्माच्छकृदादिपश्चातिसारे स्ववर्गीयः पक्वो वस्तिर्भिषग्जितं श्रेष्ठमिति प्रागुक्तम् ॥ १८ ॥

गङ्गाधरः—वातघ्नेत्यादि पक्वे शकृति वातघ्नबृहत्पञ्चमूलैर्ग्राहिवर्गीयैः षड्विरेचनशताश्रितीयोक्तैः पुरीषसंग्रहणीयैः कथितैर्वस्तिः शस्यते। स्वाद्वित्यादि। स्वाद्वम्ललवणैः स्नेहवस्तिः समीरणे शस्तः। रक्तेऽतिसारे रक्तेन वस्तिः शस्तः। पित्तेऽतिसार्य्यमाणे कषायस्वादुतिक्तकैर्वस्तिः शस्तः। कफेऽतिसार्य्यमाणे कषायकटुतिक्तकैर्वस्तिः शस्तः ॥ १९ । २० ॥

गङ्गाधरः—द्विसंसर्गं त्वाह—शकृतेत्यादि। शकृता संसृष्टे सहयुक्ते आमे

वस्तिविभ्रंशजाः षट्संख्या भवन्तीति वदन्ति, पूर्व्वव्याख्यानमेव साधु। उपद्रवानेषामाह—शूलेत्यादि। यथोक्तातिसारेषु चिकित्सामाह—तत्राम इत्यादि। अन्तरपानं पाचनमाहुः। पाचनमित्यनेनेह पूर्व्वं 'सघनातिविषा' इत्याद्युक्तं गृह्यते। व्योषाम्ललवणैर्युतमिति व्योषाम्ललवणयोगेन कृतम्। वातघ्नैरित्यादौ वातघ्नं दशमूलम्। संग्राहिवर्गश्च षड्विरेचनाश्रितीयोक्त एव। अत्र जतूकर्णः—व्योषाम्ललवणकृताभिः शोफघ्नसंग्राहिभिर्वस्तिरित्याह। शोफघ्नञ्च दशमूलमेव। स्वाद्वम्ललवणः शस्तः स्नेहवस्तिरिति स्वाद्वम्ललवणद्रव्यसाधितस्नेहकृतमनुवासनमित्यर्थः। समीरणे इति केवलवातातीसारे। रक्ते रक्तेनेति रक्तेऽतीसार्य्यमाणे रक्तेन वस्तिर्देयः। पित्ते त्विति पित्तेऽतीसार्य्यमाणे कषायादिकृता वस्तिरेव ॥ १७—२० ॥

चक्रपाणिः—संसर्गे चिकित्सामाह—शकृतेत्यादि। शकृताऽप्रधाने तु संसृष्टे तथा वायुना

---

* वर्च्चस्यथानिले इति पाठान्तरम्।

पित्तेनामेऽसृजा वापि तयोरामेन वा पुनः * ।
संसृष्टयोर्भवेत् पानं सव्योषकटुतिक्तकम् ॥
तथामे कफसंसृष्टे कषायव्योषतिक्तकम् ।
आमे तनुकफे व्योष-कषायलवणैर्युतम् ॥ २२ ॥
वातेन विषि पित्ते वा † विट्पित्तास्रैस्तथानिले ।
स्यात् कषायाम्लमधुरः संसृष्टे वस्तिरुत्तमः ॥ २३ ॥
शकृच्छोणितयोः पित्त-शकृतो रक्तपित्तयोः ।
वस्तिरन्योऽन्यसंसर्गे कषायस्वादुतिक्तकः ॥ २४ ॥

तेन वायुना च युक्त आमे तेन वायुना युक्ते वर्च्चसि अथ वायुना युक्तेऽनले पित्तेऽन्तरपानं वस्तिक्रियादिकरणे मध्ये पिपासायां पानं व्योषादियुतं जलम् ॥ २१ ॥

गङ्गाधरः—पित्तेनेत्यादि । पित्तेन संसृष्टे आमे तथाऽसृजा संसृष्ट आमे तयोः पित्तासृजोः (विषा पुरीषेण वायुना च) संसृष्टयोः आमेन रसेन सव्योषकटुतिक्तकशृतं जलं पानं भवेत् । तथेत्यादि । तथा कफसंसृष्ट आमे कषायव्योषतिक्तकशृतं जलं पानं भवेत् । तनुकफे त्वामे व्योषकषायलवणैर्युतं जलं पानं भवेत् । वातेन संसृष्टे विषि पुरीषे पित्ते वा (अस्रे वा) वा तेन संसृष्टे अनुबद्धे, विट्पित्तास्रैः विषा पुरीषेण संसृष्टे तथा पित्तेन संसृष्टे तथाऽस्रेण संसृष्टेऽनुबद्धेऽनले कषायो अम्लमधुरो वस्तिरुत्तमः स्यात् ॥ २२ । २३ ॥

गङ्गाधरः—शकृदित्यादि । शकृच्छोणितयोः पित्तशकृतोः संसृष्टयोः रक्तपित्तयोः संसृष्टयोरन्योऽन्यसंसर्गे कषायस्वादुतिक्तको वस्तिरुत्तमः ॥ २४ ॥

वाऽऽमे संसृष्ट । तेनेत्यामेनाऽप्रधानेन वर्च्चसि अनिलेन पृथक् संसृष्टे, अत्र तेनेति पूर्व्ववत् व्याख्येयम् । अत्र संसृष्टेषु तृतीयानिर्द्दिष्टमल्पमानतयाऽप्रधानम् । सप्तमीनिर्द्दिष्टं बहुमानत्वात् प्रधानं ज्ञेयम् । तयोरिति पित्तासृजोः संसृष्टयोरित्येकमानेन युक्तयोः । कफे व्योषलवणकषायैर्युतमित्यत्र यावत् 'अन्तरपानम' इत्यनुवर्त्तते ॥ २१ । २२ ॥

चक्रपाणिः—वातेन विशीत्यादौ मधुराम्लकषायो वस्तिरिति कषायादिद्रव्ये कृतो वस्तिर्देय इत्यर्थः । शकृच्छोणितयोरित्यादौ अन्योऽन्यसंसर्गे सति शकृता शोणिते शोणितेन शकृति संसृष्टे ।

* विषानिलेन वा इत्यन्यः पाठः । † पित्तेऽस्रे इति क्वचित् पाठः ।

कफेन विषि पित्ते वा कफे विट्पित्तशोणितैः।
व्योषतिक्तकषायः स्यात् संसृष्टे वस्तिरुत्तमः॥ २५॥
स्याद् वस्तिर्व्योषतिक्ताम्लः संसृष्टे वायुना कफे।
मधुरव्योषतिक्तस्तु रक्ते कफविमिश्रिते॥ २६॥
मारुते कफसंसृष्टे व्योषाम्ललवणो भवेत्।
वस्तिर्वातेन रक्ते तु कार्य्यः स्वाद्वम्लतिक्तकः॥ २७॥
त्रिचतुःपञ्चसंसर्गानेवमेत्र विकल्पयेत्।
युक्तिः सैषातिसारोक्ता सर्व्वरोगेष्वपि स्मृता॥ २८॥

गङ्गाधरः—कफेनेत्यादि। कफेन संसृष्टे विषि पुरीषे पित्ते वा ( अस्रे वा ) तथा विट्पित्तशोणितैः संसृष्टे कफे व्योषादिकृतो वस्तिरुत्तमः॥ २५॥

गङ्गाधरः—स्यादित्यादि। वायुना संसृष्टे कफे व्योषतिक्ताम्लकृतो वस्तिरुत्तमः स्यात्। कफयुक्ते रक्ते मधुरादिर्वस्तिः॥ २६॥

गङ्गाधरः—मारुत इत्यादि। कफयुक्ते मारुते व्योषाम्लकृतक्वाथो लवणयुक्तो वस्तिर्भवेत्। वातेन संसृष्टे रक्ते स्वाद्वम्लतिक्तकृतक्वाथो वस्तिः कार्य्यः॥ २७॥

गङ्गाधरः—द्विसंसर्गमुक्त्वा शेषसंसर्गानाह—त्रीत्यादि। आमादीनां षण्णां त्रिसंसर्गं चतुःसंसर्गं पञ्चसंसर्गं षट्संसर्गं चैवमेतत्प्रकारं प्रकल्पयेत्। तद् यथा। त्रिका दश। चतुष्काः षट्। पञ्चकास्त्रयः। षट्क एक इति विंशतिः। तद् यथा—आमविड्वातजः। आमविडसृग्जः। आमविट्पित्तजः। आमविट्कफजः। विडवातासृग्जः। विड्वातपित्तजः। विड्वातकफजः। वातासृक्पित्तजः। वातासृक्कफजः। असृक्पित्तकफजः। इति त्रिका दश। आमविड्वातासृग्जः। आमविड्वातपित्तजः। आमविड्वातकफजः। विड्वातासृक्पित्तजः। विड्वातासृक्कफजः। वातासृक्पित्तकफजः। इति चतुष्काः

एवं पित्तशकृतोः रक्तपित्तयोश्च द्विविधः संसर्गो व्याख्येयः। विट्पित्तशोणितैरिति प्रत्येकं विडादिभिः कफ संसृष्टे। कफविमूर्च्छित इति कफेनाऽप्रधानेन संसृष्ट इत्यर्थः॥ २५—२७॥

चक्रपाणिः—अनुक्तससर्गचिकित्सां सूचयन्नाह—त्रिचतुरित्यादि—त्रिचतुःपञ्चसंसर्गानिति आमादीनां त्रिचतुःपञ्चसंसर्गरूपान् संसर्गान्। एवमेव विकल्पयेदिति प्रधानादिमेलकेन विकल्पयेत्, तथा भेषजमपि तेषां यथोक्तभेषजानुसारेण कल्पयेदित्यर्थः। एते च भेदा लिख्यमाना

युगपत् षड्रसं सर्व्व-संसर्गे पाचनं * भवेत् ।
निरामाणान्तु पञ्चानां वस्तिः षाड्रसिको मतः ॥ २९ ॥
उडुम्बरशलाटूनि जम्ब्वाम्रोडुम्बरत्वचः ।
शङ्खं सज्जरसं प्राचीं कर्द्दमञ्च पलांशिकम् ॥
पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत् ।
अतिसारेषु सर्व्वेषु पेयमेतद् यथाबलम् ॥ ३० ॥

षट् । आमविड्वातासृक्पित्तजः । आमविड्वातासृक्कफजः । विड्वातासृक्पित्तकफजः । इति पञ्चकास्त्रयः । आमविड्वातासृक्पित्तकफज इति षटक एक इति विंशतिः । अत्र चिकित्सामाह—युक्तिरित्यादि । आमादीनां त्रिचतुःपञ्चषट्संसर्गजेषु सर्व्वेषु रोगेषु अतिसारोक्ता क्रिया स्मृता, सा खल्वेषा युक्तिः सर्व्वरोगेष्वपि ॥ २८ ॥

गङ्गाधरः—तत्र सर्व्वसंसर्गे युगपदेकीकृतं षड्रसद्रव्यं पाचनं ( पारणं भक्षणं ) भवेदिति । अथ निरामाणां चिकित्सामाह—निरामाणामित्यादि । आमवर्ज्जानां पञ्चानां शकृद्वातासृक्पित्तकफानामतिसरणे षाड्रसिको वस्तिः स्मृतः ॥ २९ ॥

गङ्गाधरः—उडुम्बरेत्यादि । उडुम्बरस्यामफलानि जम्ब्वादीनां त्वचः प्राक्षीश्च त्वच सर्व्वं प्रत्येकं पलांशं पिष्ट्वा सर्पिषः प्रस्थं द्विगुणक्षीरे द्विगुणजले पचेत् । यथाबलं पेयम् ॥ ३० ॥

अतिबहुप्रभेदतयाऽत्यन्तगौरवमापदयन्ति, स्वयञ्च बुद्धिमता सुकरविभागा एवेति न लिख्यन्ते । एवमादिसंसर्गकृतरोगभेदमन्यत्रापि बुद्ध्या कर्त्तव्यतयातिदिशन्नाह—सर्व्वरोगेष्वपि स्मृतेति । इयं व्यवस्था सर्व्वरोगेष्वेव यथासम्भवाचार्य्यानुमतेत्यर्थः । तत्र ग्रहणीगदे यत्र सम्भवन्ति, तत्रैवं संसर्गाः प्रकल्प्यन्ते । यत्र यत्र च त्रयो दोषाः सम्भवन्ति, शोणितेन वा समं चत्वारः, तत्र तत्रैवं संसर्गाः प्रकल्प्यन्ते, तेषामेव परस्परसंसर्गो भेषजविभागार्थं कल्पनीयः ॥ २८ ॥

चक्रपाणिः—आमादिषट्कसमुदायरूपसंसर्गे कार्य्यमाह—युगपदित्यादि । युगपदिति एकदैव मिलितानां षण्णामिति यावत् । षड्समिति मिलितषड्सरसंस्कृतम् । निरामाणामिति आमवर्ज्जितानां शकृदादीनां पञ्चानाम् । षाड्सिक इति षड्समेलकेन कृतः ॥ २९ ॥

* पारणमिति क्वचित् पाठः ।

कच्छुराधातकीविल्व-समङ्गारक्तशालिभिः।
मसूराश्वत्थशुङ्गैश्च यवागूः स्याज्जले शृतैः॥ ३१॥
बालोडुम्बरकट्वङ्ग-समङ्गाप्लक्षपल्लवैः।
मसूरधातकीपुष्प-बलाभिश्च तथा भवेत्॥ ३२॥
स्थिरादीनां वटादीनामिक्ष्वादीनामथापि वा।
क्वाथेषु चामृतादीनां नवारिष्टाः पृथक् पृथक्॥ ३३॥
शर्करामृतशाल्यादि-तण्डुलैर्वापि साधिताः।
दधितक्राम्ललवणाः साम्बुक्षाराः प्रसाधिताः॥
सशर्कराः क्षौद्रयुताः सर्व्वातिसारनाशनाः।
ससर्पिर्लवणा योज्या मधुरा लवणापि वा॥ ३४॥

गङ्गाधरः—कच्छुरेत्यादि। कच्छुरा शूकशिम्बी। रक्तशालितण्डुलान् कच्छुरादीनां क्वाथः पक्त्वा यवागूं कुर्य्यात्। सा शकृदाद्यतिसारे भोजनं स्यात्॥ ३१॥

गङ्गाधरः—बालेत्यादि। बाल ह्रीवेरम्, बालादीनां पल्लवमसूरादिभिश्च जले शृतः क्वथितयवागूर्भोजनं स्यात्॥ ३२॥

गङ्गाधरः—स्थिरादीनामित्यादि। पृथक् पृथक् नवसङ्ख्यका अरिष्टाः। तत्र यथा—स्थिरादीनां स्वल्पपञ्चमूलानां पञ्चसु क्वाथेषु पञ्च। वटादीनां जम्ब्वाम्र-प्लक्षवटकपीतनोडुम्बराश्वत्थभल्लातकाश्मान्तकसोमवल्का इत्येषां जम्ब्वाम्रप्लक्षान् वर्ज्जयित्वा वटादीनां क्वाथे षष्ठः। इक्ष्वादीनामिक्षुकाण्डेक्षुक्षुरकवसुकोशीराणां क्वाथे सप्तमः। अमृतादीनाममृताभयाधात्रीत्यादीनां दशानां वयःस्थापनानां क्वाथेऽष्टमः। शर्करामृतवल्लीशाल्यादितण्डुलैः साधितोऽरिष्टो नवम इति नवारिष्टा दधितक्राभ्यामम्लाः सलवणाः सजलयवक्षाराः शर्कराक्षौद्रयुता घृतभाण्डे स्थापिताः काले जातरसाः सर्व्वातिसारनाशनाः निरूहातितोगादामशकृदा-

चक्रपाणिः—सर्व्वातीसारसाधारणभेषजमाह—उडुम्बरेत्यादि। रक्तशालिभिरित्यत्र रक्त-मूलिभिरिति पाठे रक्तमूली रक्तैरण्डमित्यपरे। जले शृतैरिति षडङ्गविधानेन जले शृतैः। बालो-डुम्बरं उडुम्बरशलाटु। तथा भवेदिति यवागूर्भवेत्। इक्ष्वादीनामिति तृणपञ्चमूलपठितानां शर-

तत्र श्लोकाः ।

स्निग्धाम्ललवणमधुरं पानं वस्तिश्च मारुते कोष्णः ।
शीतं तिक्तकषायं मधुरं रक्ते च पित्ते च ॥
तीक्ष्णोष्णकषायकटु श्लेष्मणि संग्राहि वातनुच्छकृति ।
पाचनमामे पानं पिच्छादिवस्तयो रक्तः * ॥
अतिसारं प्रत्युक्तं मिश्रं द्वन्द्वामजेष्वपि † च ।
तत्रोद्रेकविशेषाद् दोषे पृथक् तमविशेषः ॥ ३५ ॥

द्यतिसारनाशनाः । एतेऽरिष्टाः ससर्पिर्लवणा योज्याः, मधुरैर्मधुरीकृता लवणः लवणीकृता वा योज्या इति ॥ ३३ । ३४ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोका इति । स्निग्धेत्यादि । मारुते स्निग्धादिकं भोज्यं पानञ्च वस्तिश्च कोष्णः । शीतादिकं रक्ते च पित्ते च । तीक्ष्णोष्णादिकं श्लेष्मणि संग्राहि वातनुच्च शकृति अतिसारिते । आमे पाचनं

वर्ज्जितानां इक्षुकुशकाशशालिमूलानाम् । शाल्यादितण्डुलैरिति रक्तशालिकलमादितण्डुलैः । दध्यादिभिरत्र जलस्थानीयैः यवागूः साधनीया ॥ ३०—३४ ॥

चक्रपाणिः—प्रपञ्चोक्तं भेषजं संग्रहेणाभिदधाति—भवति चात्रेत्यादि । पानमिति पाचनपानम् । वस्तिश्चेति स्निग्धाम्ललवणमधुर एव वस्तिः । मारुत इति मारुतातिसारे । एवमन्यत्रापि पित्त इत्यादौ पित्तादिजातिसार इति ज्ञेयम् । संग्राहि वातनुदित्यत्र भेषजमिति शेषः । तच्च भेषजं यथोक्तवस्त्यादिरूपमेव । पाचनमामे पानमिति पाचनमिति घनातिविषादिद्रव्यकृतं पानमित्यर्थः । पिच्छावस्तयोऽसृग्वस्तयश्चेति पिच्छासृग्वस्तयः । उक्तमिति साक्षादतिदेशेन च त्रिकादिसंसर्गे प्रोक्तम् । मिश्रमिति एतदेव प्रत्येकं मिश्रीकृतम् । द्वन्द्वादियोगज इति त्रिचतुष्कादिसंसर्गजेऽतिसारे । तत्रोद्रेकादिविशेषादिति संसर्ग एव बलाबलविशेषादुपक्रमस्यापि विशेषो भवति, एतदेव बलापेक्षं बहुदुर्ब्बलाऽप्रत्यनीकवस्त्येकभेषजमिति शेषः ॥ ३५ ॥

* पिच्छासृग्वस्तयो रक्ते इति वा पाठः । † द्वन्द्वादियोगजेऽपीति चक्रधृतः पाठः ।

प्रास्तृतिकाः सव्यापत् क्रिया निरूहास्तथातिसारहिताः।
रसकल्पघृतयवाग्वश्चोक्ता गुरुणा प्रसृतप्रसिद्धौ ॥ ३६ ॥

इत्यग्निवेशकृते तन्त्र चरकप्रतिसंस्कृते सिद्धिस्थाने प्रसृत-
योगीयसिद्धिर्नामाष्टमोऽध्यायः ॥ ८ ॥

पानं पिच्छादिवस्तयश्च रक्तवस्तिश्च। निरूहातियोगजातिसारं प्रत्येतत् सर्व्वमुक्तम्, द्वन्द्वामजेष्वपि मिश्रश्चोक्तम्। तत्रोद्रेकविशेषाद् दोषे पृथक्-तमविशेषः ॥ ३५ । ३६ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। सिद्धिस्थानेऽष्टमेऽप्राप्ते तस्मिन् दृढ़बलेन
तु। प्रतिसंस्कृत एवास्मिन्नष्टमेऽध्याय एव च। प्रसृतयोगीयसिद्धौ
वद्य-गङ्गाधरेण तु। कृते जल्पकल्पतरौ सिद्धिस्थानेऽष्टमेऽत्र तु।
स्कन्धे प्रसृतयोगीय-सिद्धिजल्पाभिधाऽष्टमी। शाखा
समापिता यत्नाद् बुधः कण्ठे विधार्य्यते ॥ ८ ॥

चक्रपाणिः—प्रासृतिका इत्यध्यायार्थसंग्रहः। सव्यापत्क्रिया इति—व्यापदश्च मृदुवस्ति-कृतजाड्यादिका उक्ताः, तथा क्रियाश्च तासामेव व्यापदामुक्ताः। निरूहाश्चातिसारचिकित्सिते प्रोक्ताः, रसकल्पश्चातीसारेषु रसोद्दशत्वेन चिकित्सया कृतः। घृतञ्चोडुम्बरेत्यादिनोक्तम् ॥ ३६ ॥

इति महामहोपाध्यायचरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां प्रासृतयोगीयसिद्धिर्व्याख्या-
नामाष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः ।

## अथातस्त्रिमर्म्मीयां सिद्धिं व्याख्यास्यामः,
## इतिह स्माह भगवानात्रेयः ॥ १ ॥

सप्तोत्तरं मर्म्मशतमस्मिन् शरीरे स्कन्धशाखाश्रितमग्निवेश ! तेषामन्यतमस्य प्रपीड़या समधिका पीड़ा भवति चेतनानिबन्ध-वैशेष्यात् । तत्र शाखाश्रितेभ्यो मर्म्मभ्यः स्कन्धाश्रितानि

गङ्गाधरः—अथाध्यायोद्देशक्रमात् त्रिमर्म्मीयसिद्धिमाह—अथात इत्यादि । सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—सप्तोत्तरमित्यादि । अत्र स्कन्धः शिरोग्रीवमन्तराधिश्च । शाखा पाणिपादं न तु रक्तादयो धातवः । अन्याङ्गपीड़ामपेक्ष्य समधिकपीड़ा भवति चेतनानिबन्धवैशेष्यात् । यत्र यत्राङ्गावयवे चेतनाधातोर्विशेषनिबन्धोऽस्ति तत्र तत्राधिकपीड़ा भवतीति । तत्रेत्यादि । शाखाश्रितमर्म्मभ्यः स्कन्धाश्रितानि

चक्रपाणिः—प्रासृतयोगीयानन्तरं त्रिमर्म्मीयसिद्धिरुच्यते । त्रिमर्म्मजरोगाश्रयिव्यापदां वस्ति-रूपाचिकित्सापदर्शनार्थं व्यापत्प्रतिकारानन्तरं वस्तिप्रयोगाधिकारश्च पूर्व्वाध्यायादनुवर्त्तते । किंवा वस्तिव्यापच्चिकित्सा पूर्व्वाध्यायादिकृता, वस्तिव्यापदश्च त्रिमर्म्मजा अपि रोगा भवन्ति, तेषां ज्ञानपूर्व्वकचिकित्सोपदर्शनार्थं त्रिमर्म्मीयसिद्धिरुच्यते । एतदध्यायवक्तव्याश्च गदास्त्रिमर्म्मीय-चिकित्सितेऽत्यर्थविस्तरभयान्नोक्ताः, त इह प्रतिपाद्यन्ते । अत्रापि मर्म्मशब्देन मर्म्मगता गदा उच्यन्ते, तानधिकृता सिद्धिस्त्रिमर्म्मीया सिद्धिः ॥ १ ॥

चक्रपाणिः—सप्तोत्तरं मर्म्मशतमिति शरीरसंख्याधिकृतम, तच्च मांसशिरास्नाय्वस्थिसन्धिषु निविष्टम् । स्कन्धशब्देनान्तराधिरुच्यते । शाखाशब्देन चेह शाखेव शाखेति कृत्वा बाहुद्वयं जङ्घाद्वयञ्चोच्यते ; नेह शाखाशब्देन रक्तादिधातूनां ग्रहणम्, रक्तादिधातूनां स्कन्धेऽपि विद्य-मानत्वात् । तत्र शाखाश्रितानि चतुश्चत्वारिंशन्मर्म्माणि, शेषं स्कन्धाश्रितम् । यदुक्तं सुश्रुते— 'तेषामेकादशैकस्मिन् सक्थ्नि भवन्ति, एतेनेतरसक्थिबाहू च व्याख्यातौ । उदरोरसोर्द्वादश, चतुर्द्दश पृष्ठे, ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशत्' इति । एतन्मर्म्मणाञ्च प्रत्येकं विभाग उक्तः, एतेषाञ्च 'तत्र हृदये" इत्यादिना प्रपञ्चोऽनुसरणीयः । सप्तोत्तरशतमर्म्मणाममर्म्मशरीरदेशविलक्षणं धर्म्ममाह— तेषामित्यादि । चेतनानिबन्धवैशेष्यादिति यस्मात् मर्म्मसु चेतनाधातुर्विशेषेण निबद्ध इत्यर्थः । चेतनानिबन्धश्च मर्म्मस्वदृष्ट एव मर्म्मपीड़या विशेषपीड़ादर्शनादुन्नीयते । शाखानां तदाश्रितत्वा-दिति यस्माच्छाखा अपि स्कन्धाश्रिताः, तेन स्कन्धाश्रितशाखाश्रितेभ्यः साक्षात् स्कन्धाश्रितं

गरीयांसि, शाखानां तदाश्रितत्वात्। स्कन्धाश्रितेभ्योऽपि हृद्‌-वस्तिशिरांसि तन्मूलत्वाच्छरीरस्य॥ २॥

तत्र हृदये दश धमन्यः प्राणोदानौ मनोबुद्धिश्चेतना महाभूतानि नाभ्यागार * इव प्रतिष्ठितानि। शिरसीन्द्रियाणीन्द्रियप्राणवहानि स्रोतांसि सूर्य्यमिव गभस्तयः संश्रितानि।

मर्म्माणि गरीयांसि, शाखा हि स्कन्धाश्रिताः। स्कन्धाश्रितेभ्योऽपि मध्ये हृदयादीनि त्रीणि गरीयांसि। शरीरं हि तद्धृदयादिमूलम्॥ २॥

गङ्गाधरः—तत्र हृदये दश धमन्यः प्राणादीनि च प्रतिष्ठितानि, यथा नाभ्यागारे प्रतिष्ठितान्यगाराङ्गानि। तथा शिरसीन्द्रियाणि प्राणवहानि च स्रोतांसि संश्रितानि, यथा सूर्य्यं संश्रिताः गभस्तयः। मर्म्म गरीयो भवतीत्यर्थः। स्कन्धाश्रितत्वञ्च शाखानां—स्कन्धोपघातेन तदुपघातात् तथा स्कन्धनिष्पन्नेनैव रसादिना तत्पोषणात्। किञ्च, स्कन्धाश्रितान्येव मर्म्माणि सद्यःप्राणहराणि, न शाखाश्रयाणि। तेन च स्कन्धस्य प्राधान्यम्। यदुक्तं सुश्रुते—"शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरोगुदम्। हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि वै" इति। हृद्वस्तिशिरांसि गरीयांसीति सम्बन्धः। एतद्‌गरीयस्त्वे हेतुमाह—तन्मूलत्वाच्छरीरस्येति। तन्मूलत्वादिति तदाश्रितत्वात्, तथा च हृदयाश्रितत्वं शरीरस्य, 'तत्र हृदये दश धमन्यः' इत्यादिना 'नाभ्यामरा इव' इत्यन्तेन दर्शयिष्यति। यद्यपि च मर्म्मान्तराण्यपि विशेषेण प्राणाश्रयाण्युक्तानि, यथा—"दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः। शङ्खौ मर्म्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्" इत्यनेन, तथापि शङ्खादीनि न शरीराश्रयभूतानि, यथा हृदयादीनि। तेन प्राणायतनत्वे समानेऽपूक्तशरीराश्रयत्वविशेषादिह हृदयादीनामेव प्राधान्यमुच्यते। किञ्च प्राणाश्रयत्वमपि यथा हृदयादीनाम्, तथा शङ्खादीनाम्। उक्तं हि—सप्तोत्तरं मर्म्मशतं यदुक्तं शरीरसंख्यामधिकृत्य तेषु। मर्म्माणि वस्तिं हृदयं शिरश्च प्रधानभूतान्यृषयो वदन्ति। प्राणाश्रयात् तानि हि पीड़यन्तो वातादयोऽसूनपि पीड़यन्ति। अन्ये तु—शङ्खादिप्राणाश्रयाणां हृदयादिष्वेव सामीप्यादायतनत्वं दर्शयितव्यं मुख्यत्वादुपलक्षितम्॥ २॥

चक्रपाणिः—दश धमन्य इति ऊर्जोवहा दश धमन्यः,—"अर्थे दश महामूलाः समासक्ताः" इत्यादिना अर्थेदशमहामूलीये प्रतिपादिताः। प्राणापानावित्युच्छ्वासनिश्वासौ। केचित् तु प्राणापानौ यथोक्तावेव तौ प्राहुः। तत्राऽपानो यद्यपि मेढ्रश्रोण्याश्रय एवेत्याहुः, तथापि हृदयाव्यतिरिक्तानुविधायित्वाद्धृदयाश्रित इत्युच्यते। मनोऽन्तःकरणम्। बुद्धिर्महच्छब्दाभिलप्या। चेतना बुद्धिवृत्तिभेदः। महाभूतानीति आत्मसम्बन्धानि सूक्ष्ममहाभूतानि। एतत् सर्व्वं

* नाभ्यामरा इति द्वितीयः पाठः।

वस्तिस्तु मुष्कस्थूलगुदसेवनीशुक्रमूत्रवहानां नाडीनां मध्ये मूत्राधारोऽम्बुवहानां सर्व्वस्रोतसामुदधिरिवापगानां प्रतिष्ठितो भवति। बहुभिस्तन्मूलमर्म्मसंज्ञकैः स्रोतोभिश्च गगनमिव दिनकरकरैर्व्याप्तमिदं शरीरम् ॥ ३ ॥

तेषां त्रयाणामन्यतमस्यापि भेदादाश्वेव शरीरभेदः स्यात्

गभस्तयः। वस्तिरित्यादि। वस्तिस्तु मुष्कादिवहानां नाडीनां मध्ये मूत्राधारोऽम्बुवहानां स्रोतसां सर्व्वेषां प्रतिष्ठितः सर्व्वापगानामुदधिरिव। बहुभिरित्यादि। तन्मूलमर्म्मसंज्ञकैः वस्तिमूलमर्म्मसंज्ञकैर्बहुभिः स्रोतोभिर्व्याप्तमिदं शरीरम्, यथा गगनं दिनकरकरैर्व्याप्तम् ॥ ३ ॥

गङ्गाधरः—तेषामित्यादि। तेषां हृदयशिरोवस्तीनामन्यतमस्य भेदादाश्वेव

सांख्यदर्शने व्यवस्थापितम करे च व्युत्पादितमनुसरणीयम्। प्रदेशान्तरे चोक्तम्—"षड्ङ्गमङ्ग-विज्ञानमिन्द्रियपञ्चकं तथा। आत्मा च सगुणश्चेतश्चिन्त्यञ्च हृदि संस्थितम्" इति। तेऽर्थो एतच्छ्लोकोक्ताः, अधिकार्थानाञ्च प्रोक्तेऽर्थे एवावरोधो व्याख्येयः। किंवा इह शास्त्रद्वारेणाभिधानम्। यथा हृदये दश धमन्यादीन्याश्रितानि, तद् दृष्टान्तेन दर्शयति—नाभ्यामरा इव प्रतिष्ठितानीति। नाभिश्चक्रनाभिः, अराश्चक्रनेमयः, यथा चक्रनाभ्यां सम्बद्धा अरास्तदुपघातादुपहन्यन्ते, तन्मूलत्वेन तत्सम्बन्धा भवन्ति, एवं धमन्यादयोऽपीत्यर्थः। अरा इव अरा इति व्याख्यानयन्ति। 'नाभ्यामपरा' इति वा पाठः, तेन नाभ्यामपरा अपत्यानीत्यर्थः। एतेन प्रदेशान्तरवर्त्तिनामपि धमन्यादीनां हृदयाश्रितत्वं सिद्धमिति भावः ॥

शिरस आश्रयत्वमाह—शिरसीत्यादि। इन्द्रियप्राणवहानि च स्रोतांसि यद्यपि प्रदेशान्तरेऽपि भवन्ति, तथापि शिरसि विशेषेणैवैतानि प्रबद्धानीति सूर्य्यमिव गभस्तय इति दृष्टान्तेन दर्शयति। शिरआश्रयत्वञ्च यथोक्तस्रोतसां तदुपघातेन विशिष्टोपघातदर्शनादुन्नीयते ॥

वस्तेः शरीराश्रयत्वमाह—वस्तिस्त्वित्यादि। स्थूलगुदादीनां मध्यस्थितत्वप्रतिपादनेनास्य स्थूलगुदादीनां वस्त्याश्रयत्वं दर्शयति। अम्बुवहानां स्रोतसां प्रतिष्ठेति स्थानमित्यर्थः, उदधिर्यथाऽऽपगानां पूरणीयस्थानम्, तथा वस्तिरपि अम्बुवहस्रोतसां विश्रामस्थानम्। तन्मूलैरिति तत्सम्बद्धैर्मर्म्मसंज्ञकैः। न हि स्रोतसां मर्म्मत्वमस्ति। किंवा स्रोतोमर्म्मशब्देन शिरामर्म्मण एव ग्रहणम्। किंवा मर्म्मसम्बन्धानि मर्म्मपोषकाणि वा स्रोतांसि मर्म्मसंज्ञकानि स्रोतांसि।

आश्रयनाशादाश्रितस्य नाशः। तदुपघातात् तु घोरव्याधिप्रादुर्भावस्तस्मादेतानि विशेषेण संरक्ष्याणि वाह्याभिघातादु वातादिदोषेभ्यश्च ॥ ४ ॥

तत्र हृदयेऽभिहते कासश्वासबलक्षयकण्ठशोषक्लोमापकर्षणजिह्वानिष्क्रममुखतालुशोषापस्मारोन्मादप्रलापचित्तनाशादयः स्युः। शिरस्यभिहते मन्यास्तम्भार्दितचक्षुर्विभ्रममोहावेष्टन-चेष्टानाश-कासश्वास-हनुग्रहमूकगद्गदत्वाक्षि-निमीलन-गण्डस्पन्दनजृम्भणलालास्रावस्वरहानिवदनजिह्मत्वादीनि। वस्तौ पुनर्वातमूत्रवर्च्चोनिग्रहवङ्क्षणमेहनवस्तिशूलकुण्डलोदावर्त्तगुल्म ब्रध्नानिलाष्ठीलोपस्तम्भनाभिकुक्षिगुदश्रोणिग्रहादयः। वातादुपसृष्टानाञ्चैषां लिङ्गानि चिकित्सिते सक्रियाविधीन्युक्तानि। किन्त्वेतानि विशेषतोऽनिलाद्रक्ष्याणि, अनिलो हि पित्तकफ

शरीरभेदः स्यादाश्रयनाशादाश्रितस्य नाशस्तस्मात् तदुपघाताद् घोरव्याधिप्रादुर्भावः स्यात् तस्मादेतानि वस्तिहृदयशिरांसि विशेषेण रक्ष्याणीति प्रतिज्ञा ॥ ४ ॥

गङ्गाधरः—तत्रेत्यादि। तत्र हृदयेऽभिहते कासादयः स्युः। शिरस्यभिहते मन्यास्तम्भादयः स्युः। वस्तौ त्वभिहते वातादिनिग्रहादयः स्युः। तत्र वातादुपसृष्टानाञ्चषां लिङ्गानि सक्रियाविधीनि चिकित्सिते स्थाने उक्तानि। किन्तु

आश्रयनाशादाश्रितस्य नाश इति आश्रयनाशादाश्रितस्य नाशो यस्माद् भवति, तस्माद् हृदयादीनामन्यतमस्य नाशाच्छरीरनाशो भवतीति युक्तम्। शरीरस्य हृदयाश्रितत्वं शरीररक्षकप्रधानदशधमन्याद्याश्रयत्वेनैव ज्ञेयम्। उपघातादिति किञ्चिद्वैकृतात् ॥ ३। ४ ॥

चक्रपाणिः—हृदयाद्यभिघातभवान् व्याधीन् क्रमेणाह—तत्रेत्यादि। क्लोमापकर्षणं क्लोमापकर्षणाकारा वेदना। वेष्टनं शिरसि वेष्टनाकारा वेदना। कुण्डलं वस्तौ कुण्डलरूपा वेदना। उपस्तम्भो वस्तेरेव। चिकित्सित इति त्रिमर्म्मीयचिकित्सिते। सक्रियाविधीनीति सचिकित्सितविधानानि। मर्म्मपरिपालने वस्तेः प्राधान्यं सोपपत्तिकमाह—किन्त्वेतानीत्यादि। यस्मात्

समुदीरणहेतुः, प्राणमूलश्च मर्म्म, तच्च वस्तिकर्म्मसाध्यतम, तस्माद्‌ वस्तिकर्म्मसमं नास्ति किञ्चित् कर्म्म मर्म्मपरिपालनम्॥ ५ ॥

तत्र षड़ास्थापनस्कन्धान् विमाने द्वौ चानुवासनस्कन्धाविह च विहितांस्तान् वस्तीन् बुद्ध्या विचार्य्य महामर्म्मपरिपालनार्थं प्रयोजयेद्‌ वातव्याधिचिकित्साञ्चेति। भूयश्च वातोपसृष्टे हृदि हिङ्गुचूर्णलवणानामन्यतमचूर्णसंयुक्तां पेयां मातुलुङ्गरसेनाऽन्येन वाम्लेन हृद्येन वा पाययेत्। स्थिरादिपञ्चमूलरसः सशर्करः पानार्थम्, विल्वादिपञ्चमूलरससिद्धा च यवागूर्हृद्रोग-

खल्वेतानि विशेषतो वातात् संरक्ष्याणि, अनिलो हि तत्र पित्तकफसमुदीरणहेतुः, प्राणमूलश्च मर्म्म। तच्च मर्म्मस्थव्याधिजातम्॥ ५ ॥

गङ्गाधरः—तत्रेत्यादि। तत्र प्राणादिषु वस्तिकर्म्म खलु ये विमाने स्थाने षड़ास्थापनस्कन्धा अभिहिताः। जीवकर्षभकजीवन्त्यादिना मधुरस्कन्धः। आम्राम्रातकेत्यादिनाम्लस्कन्धः। सैन्धवसौवर्च्चलेत्यादिना लवणस्कन्धः। पिप्पलीपिप्पलीमूलेत्यादिना कटुकस्कन्धः। चन्दननलदेत्यादिना तिक्तस्कन्धः। प्रियङ्गनन्तेत्यादिना कषायस्कन्ध इति षड़ास्थापनस्कन्धा अभिहिताः। भूयश्चेत्यादि। भूयः पुनश्चाह। हृदि वातादिभिरुपसृष्टे जलेन संसिद्धां पक्वां पेयां हिङ्गुसैन्धवाद्यन्यतमलवणचूर्णसंयुक्तां मातुलुङ्गरसेनान्येन वा हृद्येनाम्लेन संयुक्तां पाययेत्। पानार्थन्तु स्थिरादिक्काथः शर्करायुक्तः। विल्वादि-

पित्तकफयोर्द्वयोरक्रिययोरीरणेऽनिल एव हेतुः, तेन कफपित्तजेऽपि विकारे वायुर्निमित्तम्, वातजविकारेऽपि वायुः स्वतन्त्र एव कारणम्, अतः सर्व्वविकारेषु मर्म्माणि रक्ष्याणि तत् कारणादपि वातादेव मर्म्माणि रक्षणीयानि, तथा प्राणमूलश्चेति जीवितहेतुश्चाविकृतवायुः, विकृतश्च प्राणोपघातकः। तेन मर्म्माण्यपि प्राणरक्षार्थं वाताद्रक्ष्याणि। वस्तिसाध्यतम इति इतरचिकित्सापेक्षया वस्तिना साध्यतमः। उक्तं हि—"वस्तिर्वातहराणाम्" इति। द्वौ चानुवासनस्कन्धाविति रोगभिषग्जितीयेन—"अनुवासनन्तु स्नेह एव, स्नेहस्तु द्विविधः—स्थावरात्मको जङ्गमात्मकश्च" इत्यनेनोक्तौ द्वावनुवासनस्कन्धौ ज्ञेयौ। इहेति सिद्धिस्थाने। बुद्ध्या विचार्य्य, वातव्याधिचिकित्साञ्च बुद्ध्या विचार्य्य प्रयोजयेदित्यर्थः॥

विशेषेण मर्म्मभेदचिकित्सितमाह—भूयश्चेत्यादि। हृद्युपसृष्टे वातेनेति शेषः। लवणाना-

विहितञ्च कर्म्मेति। मूर्द्धि तु वातोपसृष्टेऽभ्यङ्गस्वेदोपनाहनस्तः-कर्म्मावपीड़नधूमादीनि । वस्तौ कुम्भीस्वेदो वर्त्तयः श्यामादिभिर्गोमूत्रसिद्धो निरूहः विल्वादिभिश्च सुरादिसिद्धः शरकाशेक्षुदर्भगोक्षुरमूलशृतक्षीरैश्च । त्रपुषैर्व्वारुखराश्वावीजयवान् बुद्धा कल्कितो निरूहः। सक्षारयवतिल्वकभृष्टकल्कितो निरूहः स पीतदारुसिद्धतैलानुवासनः। तैल्वकञ्च सर्पिर्विरेकार्थम् । शतावरी-गोक्षुरवृहतीकण्टकारीगुडूचीपुनर्नवोशीरमधुकद्विशारिवा-श्रेयसी-लोध्रकाश्मरीमूलक्वाथचतुर्गुणं बलावृषर्षभकखराह्वोपकुञ्चिका-

पञ्चमूलरससिद्धा यवागूर्हृद्रोगिणे देया। विहितञ्च प्राग् यत् कर्म्म तच्च कार्य्यम्। मूर्द्धि त्वित्यादि । अभ्यङ्गादीनि। वस्तावित्यादि । वस्तौ वातोपसृष्टे कुम्भीस्वेदो वर्त्तयश्चोदावर्त्तोक्ताः। श्यामादिषड्विरेचनशताश्रितीयोक्त-त्रिवृद्विल्वेत्यादिदशकमास्थापनोपगं क्वाथयित्वा समगोमूत्रेण कृतो निरूहः। विल्वादिपञ्चमूलक्वाथः सुरादिमिश्रः सिद्धो निरूहः। शरादिभिश्च क्वथितः निरूहः। त्रपुषादिकल्कितश्च। सक्षारयवो यवक्षारयुक्तः भृष्टलोध्रमूलकल्को निरूहः। पीतदारु सरलकाष्ठं तत्कल्कसिद्धतैलानुवासनसहितो हितः। तैल्वकमित्यादि। तैल्वकं घृतं विरेकार्थमिति। शतावरीत्यादि। शतावर्य्यादीनां

मिति निर्द्धारणे षष्ठी। अन्य एव अन्यतमः, यथा—श्रेष्ठतम इति। हृद्येनेति मनोऽनुकूलेनं। यद्द्वेष्यरसस्य हृदहिततयाऽहृद्यत्वम्, तन्मनोऽननुकूलत्वमेव। हृद्रोगविहितञ्च कर्म्मेति त्रिमर्म्मीय-चिकित्सिते। धूमादीनीति आदिशब्देन परिषेकोपनाहादिग्रहणम्। वस्तौ त्विति प्रदुष्ट वातेनेति प्रकरणाज् ज्ञेयम्। पित्तकफदुष्टौ च वायुरेव प्रधानमिति प्रागेव प्रतिपादितम्; तेन कफपित्तदुष्टिः परिलभ्यते। वर्त्तय इति फलवर्त्तयः। श्यामादिभिरिति श्यामात्रिवृच्चतुरङ्गुल-तिल्वकमहावृक्षदन्तीद्रवन्तीनाम् इत्यादिना प्रागुक्तः श्यामादिः। विल्वादिरिति वृहत्पञ्च-मूलम्। किंवा त्रिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् इत्यनेनोक्तो विल्वादिर्ज्ञेयः। शरादि-मूलशृतक्षीरः। त्रपुषादिकल्कोऽपरः। खराश्वा अजमोदा। पीतदारुसिद्धतैलेन साधितमनुवासनं यस्मिन्निरूहे स तथा। केचित् त्वशीतसाराकृष्टतैलं पीतदारुसिद्धतैलमाहुः। तैल्वकसर्पिस्तैल्वक-

त्रयोभूमदनफलकल्कसिद्धं तलमुत्तरवस्तिनिरूहः स्निग्धस्विन्नस्य शूलमूत्रविकारहर इति ॥ ६ ॥

तत्र श्लोकाः ।

हृदये मूर्द्ध्नि वस्तौ च नृणां प्राणाः प्रतिष्ठिताः ।
तस्मादेषां सदा यत्नात् कुर्व्वीत परिपालनम् ॥
* आघातवर्ज्जनं नित्यं स्वस्थवृत्तानुवर्त्तनम् ।
उत्पन्नार्त्तिविघातश्च मर्म्मणां परिपालनम् ॥ ७ ॥
अत ऊर्द्ध्वं विकारा ये त्रिमर्म्मीये चिकित्सिते ।
न प्रोक्ता मर्म्मजास्तेषां कांश्चिद् वक्ष्यामि सौषधान् ॥ ८ ॥
क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्द्ध्वं प्रपद्यते ।
पीड़यन् हृदयं गत्वा शिरःशङ्खौ च पीड़यन् ॥

त्रयोदशानां क्वाथचतुर्गुणं तलं बलादिकल्कपादिकसिद्धं तदुत्तरवस्तिनिरूहः । स्निग्धस्विन्नस्य शूलमूत्रविकारहर इति । खराह्वा पाराशीययमानीविशेषः ॥६॥

गङ्गाधरः—एषां प्रमाणश्लोकाः । हृदय इत्यादि । एषां हृदयमूर्द्धवस्तीनां परिपालनम् । एषामाघातवर्ज्जनं एषामुत्पन्नार्त्तिविघातश्च मर्म्मणाञ्च परिपालनमिति ॥ ७ ॥

गङ्गाधरः—अत ऊर्द्ध्वमित्यादि । स्पष्टम् ॥ ८ ॥

गङ्गाधरः—क्रुद्ध इत्यादि । स्वैः कोपनैर्व्यायामादिभिः । स्वस्थानादूर्द्ध्वं

कल्पोक्तम् । शतावरीत्यादौ द्विशारिवेति अनन्तमूलशारिवे । श्रयसी रास्ना । उपकुञ्चिका कृष्णजीरकम् । शितिसारकः शालिञ्चः । अश्मभेदकः पाषाणभेदकः । उत्तरवस्तिरिति वक्ष्यमाणोत्तरवस्तिविधानाज् ज्ञेय इत्यर्थः । निरूहे निरूहस्थाने देय इत्यर्थः ॥ ५ । ६ ॥

चक्रपाणिः—यथोक्तमर्द्धश्लोकेन दर्शयन्नधिकमप्याह किञ्चित्, हृदय इत्यादिना । आबाधवर्ज्जनमिति मर्म्मोपघातकहेतुवर्ज्जनम् । स्वस्थवृत्तानुवर्त्तनञ्च हृदयादिपोषकतयैव पालकं भवति । उत्पन्नार्त्तिविघात इत्युत्पन्नमर्म्मरोगप्रतीकारः ॥ ७ ॥

चक्रपाणिः—मर्म्मपरिपालकवस्तिकथनप्रसङ्गादनुक्तमर्म्मगत- रोगान् सचिकित्सितान् दर्शयन्नाह—अत ऊर्द्ध्वमित्यादि । हृद्रोगमपतन्त्रकमाह—क्रुद्ध इति । स्थानादूर्द्ध्वमिति वातस्थानापेक्षया

* आबाधवर्ज्जनमिति चक्रसम्मतः पाठः ।

धनुर्व्वन्नमयेद् गात्राण्याक्षिपेन्मोहयेत् तथा।
कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽथ निमीलकः।
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः॥ ९॥
दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः।
वायुना दारुणं प्राहुरेके तमपतानकम्॥ १०॥
स नरः कफवाताभ्यां रुद्धस्तञ्च विमोचयेत्।
तीक्ष्णैः प्रधमनैः संज्ञां तासु मुक्तासु विन्दति॥

प्रपद्यते, ऊर्द्ध्वञ्च गत्वा हृदयं पीड़यन् शिरःशङ्खौ पीड़यन् गात्राणि धनुर्व्वन्नमयेत्। आक्षिपेद् गजारूढ़स्येव गात्राणि चालयेत् तथा तं नरं मोहयेत्। कृच्छ्रेण चोच्छ्वसिति स्तब्धाक्षश्च स्यादथ निमीलकः मुद्रिताक्षः स्यात्। कपोतः पारावत इव च कूजेत्। निःसंज्ञो भवतीत्यपतन्त्रको नाम वातरोगः हृद्रोग एव॥ ९॥

गङ्गाधरः—तस्यास्यामवस्थायां नामान्तरमन्ये यदाहुस्तदुच्यते। दृष्टिमित्यादि। वायुर्हृदयं गतो दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति कूजयति नरं तेन वायुना मुक्ते त्यक्ते हृदि सति नरः स्वास्थ्यं संज्ञाञ्च याति वायुना पुनर्वृते हृदि मोहं याति, तमपतन्त्रकमीदृशमेकेऽपतानकं दारुणमाहुः॥१०

गङ्गाधरः—अस्य दारुणत्वं दर्शयति—स नर इत्यादि। सोऽपतानकवान्नरः

यथोर्द्धम्। स्तब्धाक्षोऽथ निमीलन इति स्तब्धाक्षो वा भवति निमीलिताक्षो वा भवति। निःसंज्ञ इति व्याधिवेगकाले दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति, निःसंज्ञो भवति। मोहं वृते पुनरिति हृदये वृते पुनर्वायुना मोहं याति। वायुनेति कफयुक्तेन। एके तदपतानकमेवापतन्त्रकमाहुः। अत्र जतूकर्णः—'वातकफाभ्यां हृच्छिरःशङ्खपीड़नानमनाक्षेपप्रमोहादिस्तम्भनिमीलनकृच्छ्रोच्छ्वासकूजनान्यपतन्त्रके" इति। किंवा अपतन्त्रकं द्विविधं वर्णयन्ति—वाता, कफाच्च। तत्र निःसंज्ञः सोऽपतन्त्रकः इत्यनेन कफज उच्यते; 'वायुना दारुणं प्राहुः' इति वायुना जनितमपतन्त्रकमेवाऽपतानकमाहुः। अस्य दारुणत्वं दारुणवातारब्धत्वादिति व्याख्येयम्। तथैव सुश्रुते वातव्याधावपतन्त्रकः पठितः। तास्विति चेतनाध्यासवहासु धमनीषु॥ ८-१०॥

मरिचं शिग्रुबीजानि विडङ्गञ्च फणिज्भकम् ।
एतानि सूक्ष्मचूर्णानि दद्याच्छीर्षविरेचनम् ॥
हिङ्गु तुम्बुरु पथ्या च पौष्करं लवणत्रयम् ।
यवक्काथाम्बुना पेयं हृत्पार्श्वार्त्त्यपतन्त्रके ॥
हिङ्ग्वम्लवेतसं शुण्ठीं ससौवर्च्चलदाड़िमाम् ।
पिबेद् वातकफघ्नञ्च कर्म्म हृद्रोगनुद्धितम् ॥
शोधना वस्तयस्तीक्ष्णा हितास्तस्य च कृत्स्नशः ।
सौवर्च्चलाभयाव्योषैः सिद्धं तस्मै घृतं हितम् ॥ ११ ॥
मधुरस्निग्धदुग्धादि-सेवनातिद्रवश्रमात् ।
शोकाद् व्याध्यनुषङ्गाच्च वायुनोदीरितः कफः ॥
यदासौ समवस्कन्द्य हृदयं हृदयाश्रयान् ।
समावृणोति ज्ञानादींस्तदा तन्द्रोपजायते ॥

कफवाताभ्यां रुद्धस्तं विमोक्षयेत् । कैरित्यत आह—तीक्ष्णैः प्रधमनैः संज्ञावहासु नाड़ीषु मुक्तासु संज्ञां विन्दतीति । मरिचमित्यादि । मरिचादीनि सूक्ष्म चूर्णानि, तस्य शीर्षविरेचनं दद्यादिति । अत्र केचित् पठन्ति । हिङ्ग्वित्यादि । हिङ्ग्वादिलवणत्रयान्तं चूर्णं यवक्काथाम्बुना पेयम् । हिङ्ग्वम्लवेतसादिपञ्चकचूर्णं जलेन पिबेत् । एवमपतानकेऽपतन्त्रके च हृद्रोगनुत् कर्म्म हितम् । शोधना इत्यादि । तस्य च कृत्स्नशः शोधना वस्तयो हिताः, सौवर्च्चलादिकल्कसिद्धं घृतञ्च तस्मै हितमिति ॥ ११ ॥

गङ्गाधरः—अथ तन्द्रामाह—मधुरेत्यादि । मधुरादिसेवनादतिद्रवादित्यति सेवनात् अतिश्रमाच्च शोकादितश्च वायुनोदीरितः कफः । असौ कफो यदा

चक्रपाणिः—यवक्काथाम्बुनेति यवैः षड़ङ्गविधिना शृतपानीयेन । हृद्रोगनुद् वातकफघ्नं च कर्म्म, तद्धितमपतन्त्रके । शोधना इत्यादौ 'कृत्स्नशः शोधना न हिताः' इति वचनेन शोधनार्थस्तोकनिरूहदानम्, भूरिशोधननिरूहदाने तु वातक्षोभः स्यादिति भावः ॥ ११ ॥

हृदयव्याकुलीभावो वाक्यञ्चेन्द्रियगौरवम् ॥ ।
मनोबुद्ध्यप्रसादश्च तन्द्राया लक्षणं मतम् ॥ १२ ॥
कफघ्नं तत्र कर्त्तव्यं शोधनं शमनानि च ।
व्यायामो रक्तमोक्षश्च भोज्यञ्च कटुतिक्तकम् ॥ १३ ॥
मूत्रौकसादं जठरं कृच्छ्रं तत् सङ्गसंक्षयौ ।
मूत्रातीतोऽनिलाष्ठीला वातवस्त्युष्णमारुतौ ॥
वातकुण्डलिकाग्रन्थिर्विड्घातो वस्तिकुण्डलम् ।
त्रयोदशैते मूत्रस्य दोषास्तल्लिङ्गतः शृणु ॥ १४ ॥
पित्तं कफो द्वयं वापि वस्तौ संहन्यते यदा ।
मारुतेन तदा मूत्रं रक्तं पीतं तदा सृजेत् ॥
सदाहं श्वेतसान्द्रं वा सर्व्वैर्वा लक्षणैर्युतम् ।
मूत्रकसादं तं विद्यात् पित्तश्लेष्महरैर्जयेत् ॥ १५ ॥

हृदयं समवस्कन्द्य हृदयाश्रयान ज्ञानादीन् समावृणोति तदा तन्द्रा नाम व्याधिरुपजायते। हृदयेत्यादि तस्या लक्षणम् ॥ १२ ॥

गङ्गाधरः—तस्याश्चिकित्सामाह—कफघ्नमित्यादि। स्पष्टम् ॥ १३ ॥

गङ्गाधरः—मूत्रकसादमित्यादिना वस्तिरोगानाह—मूत्रसादमूत्रजठरादयस्त्रयोदश मूत्रस्य दोषा भवन्ति ॥ १४ ॥

गङ्गाधरः—क्रमेणषां लक्षणान्याह—पित्तमित्यादि। संहन्यते संघातीक्रियते। मूत्रौकसादं जयेत् ॥ १५ ॥

चक्रपाणिः—मधुरस्निग्धेत्यादिना तन्द्रालक्षणं चिकित्सितञ्च केचित् पठन्ति ॥ १२ । १३ ॥

चक्रपाणिः—हृद्रोगमभिधाय वस्तिरोगानाह—मूत्रौकसादमित्यादि। एते च मूत्रदोषा मूत्रकृच्छ्राद् भिन्ना एवेति त्रिमर्मीय एव प्रतिपादितम् ॥ १४ ॥

चक्रपाणिः—पित्तं कफ इत्यादिना मूत्रौकसादमाह। अयञ्च वातकफपित्तैरिति त्रिदोषैर्जन्य इत्युक्तं भवति। संहन्यत इति संहतरक्तपीतवर्णता पित्तेन, श्वेतवर्णता कफेन, कफपित्तलक्षणता कफपित्ताभ्याम्, वायुस्तु सर्व्वानुगत एव। तत्र वायोरावरणकृत एव कोपः। तेन पित्तकफयोरेव चिकित्सोक्ता 'पित्तश्लेष्महरैर्जयेत्' इत्यनेन, वायोस्त्वावरणजयादेव जयो भवतीति भावः ॥ १५ ॥

* वाक्चेष्टेन्द्रियगौरवमिति वा पाठः।

विधारणात् प्रतिहतं वातोदावर्त्तितं यदा ।
पूरयत्युदरं मूत्रं तदा तदनिमित्तरुक ॥
अयं हि मूत्रविट्सङ्गस्तन्मूत्रजठरं वदेत् ।
मूत्रवैरेचनीं तत्र चिकित्सां संप्रयोजयेत् ॥
हिङ्गु द्विरुत्तरं चूर्णं त्रिमर्म्मीये प्रकीर्त्तितम् ।
हन्यान्मूत्रातिसङ्घातं व्याधिञ्च गुदमेढ्रयोः ॥ १६ ॥
मूत्रितस्य व्यवायान्ते रेतो वातोद्धतं च्युतम् ।
पूर्व्वं मूत्रस्य पश्चाद् वा स्रवेत् तत् कृच्छ्रमुच्यते ॥ १७ ॥
खवैगुण्यानिलाक्षेपः किञ्चिन्मूत्रञ्च तिष्ठति ।
मणिसन्धौ स्रवेत् पश्चात् तदरुग् वाथवातिरुक् ।
मूत्रसङ्गः स विच्छिन्नन्तच्छेषं गुरुशेफसः ॥ १८ ॥
वाताकृतिर्भवेत् वातान्मूत्रे शुष्यति सञ्चयः ॥ १६ ॥

गङ्गाधरः—विधारणादित्यादि। मूत्रवेगविधारणात् प्रतिहतं मूत्र यदा वातेनोदावर्त्तितं सदुदरं पूरयति, तदा तदनिमित्तरुगयं मूत्रविट्सङ्गश्च स्यात् तन्मूत्रजठरं वदेत्। तस्य चिकित्सामाह—मूत्रवैरेचनीमित्यादि। हिङ्ग्वित्यादि। त्रिमर्म्मीये यद् द्विरुत्तरं हिङ्गु प्रकीर्त्तितं तत् मूत्रातिसङ्घात हन्यात् ॥ १६ ॥

गङ्गाधरः—मूत्रकृच्छ्रमाह—मूत्रितस्येत्यादि। स्पष्टार्थम् ॥ १७ ॥

गङ्गाधरः—खवैगुण्येत्यादिना मूत्रसङ्गः। खवैगुण्यान्मूत्रद्वारवैगुण्यादनिलाक्षेपश्च मणिसन्धौ शिश्नाग्रस्य सन्धौ किञ्चिन्मूत्रं तिष्ठति तत् तु पश्चादरुगतिरुग वा स्रवेत्, स मूत्रसङ्ग उच्यते। तच्छेषं विच्छिन्नं सद् गुरुशेफसो जनस्य वाताकृति स्यात् ॥ १८ ॥

चक्रपाणिः—अनिमित्तरुगिति अलक्ष्यमाणनिमित्तरुक्। मूत्रवैरेचनीमिति मूत्रविरेचनीयदशकप्रयोगरूपम्। हिङ्गुद्विरुत्तरन्तु 'हिङ्गु वचा' इत्यादिनोक्तं हिङ्ग्वादि द्विरुत्तरं यस्मिन् तद्धिङ्गुद्विरुत्तरम् ॥ १६ ॥

चक्रपाणिः—मूत्रितस्येति मूत्रवेगगतस्य मूत्रवेगयुक्तस्येति यावत्। च्युतमिति स्वस्थानाच्च्युतम्। वातोद्धतमिति वातविक्षिप्तम्। एतल्लक्षणान्तरमुक्तमेव कृच्छ्रम्, मूत्रकृच्छ्रमितोऽन्य-

चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते॥ २०॥
आध्मापयन् वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम्।
कुर्य्यात् तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम्॥ २१॥
मूत्रं धारयतो दुष्टो वायुः क्रुद्धो विधारयेत्।
मूत्ररोधार्त्तिकण्डूभिर्वातवस्तिः स उच्यते॥ २२॥
उष्मणा सोष्मकं मूत्रं शोषयेद् रक्तपीतकम्।
उष्णवातः सृजेत् कृच्छ्रात् वस्त्युपस्थार्त्तिदाहवान्॥ २३॥
गतिसङ्गादुदावर्त्य स मूत्रस्थानमार्गयोः।
मूत्रस्य विगुणो वायुर्भग्नव्याविद्धकुण्डलम्॥

गङ्गाधरः—मूत्रसंक्षयमाह—वाताकृतिरित्यादि। वातान्मूत्रे शुष्यति सति वाताकृतिरेव मूत्रस्य संक्षयो भवेत्॥ १९॥

गङ्गाधरः—मूत्रातीतमाह—चिरमित्यादि। मेहमानस्येत्यात्मनेपद तिङोऽपि तिङमिच्छन्ति परस्मपदिनां क्वचिदित्युक्तेः॥ २०॥

गङ्गाधरः—अनिलाष्ठीलामाह—आध्मापयन्नित्यादि। चलोन्नतां चलाश्चोन्नताश्चाष्ठीलामष्ठीलावद्ग्रन्थिम्॥ २१॥

गङ्गाधरः—वातवस्तिमाह—मूत्रमित्यादि। यो दुष्टो नरो मूत्रमागतं धारयेत् तस्य क्रुद्धो वायुमूत्ररोधादिर्भिर्मूत्रं विधारयेत् स वातवस्तिरुच्यते॥ २२॥

गङ्गाधरः—उष्णमारुतमाह—उष्मणेत्यादि। उष्मणा पित्तोष्मणा सहितः क्रुद्धो वायुः सोष्मकं रक्तपीतकं मूत्रं शोषयेद् वस्त्युपस्थयोरर्त्तिदाहवान् कृच्छ्रात् तन्मूत्रं सृजेदित्युष्णवातः॥ २३॥

गङ्गाधरः—वातकुण्डलिकामाह— गतिसङ्गादित्यादि। स विगुणो वायुर्मूत्रस्य

ष्ठेवाऽतल्लक्षणत्वात्। किञ्चिदिति स्तोकम्। विच्छिन्न उच्छोषो गुरुशेफस इति प्रवृद्धमूत्रावशेषेण स्थितेन गुरुशेफस इति॥ १७। १८॥

चक्रपाणिः—वाताकृतिरित्यादि संक्षयलक्षणम्। वाताकृतिरिति वातलक्षणयुक्तम्। विधारणादिति मूत्रवेगरोधात्। उष्मणेति पित्तोष्मणा। शोषयन्निति उष्मणा सहितो वात एव मूत्रं शोषयन्। गतिसङ्गादित्यादिना वातकुण्डलिकामाह। मूत्रस्य गतिसङ्गादुदावृत्तो वायुर्मूत्रं स-

मूत्रं विहन्ति संस्तम्भ-भङ्गगौरववेष्टनैः।
तीव्ररुङ्मूत्रविट्सङ्गैर्वातकुण्डलिका हि सा ॥ २४ ॥
रक्तं वातकफाद् दुष्टं वस्तिद्वारे सुदारुणम्।
ग्रन्थिं कुर्य्यात् स कृच्छ्रेण सृजेन्मूत्रं तदावृतम्।
अश्मरीसमशूलं तं रक्तग्रन्थिं प्रचक्षते ॥ २५ ॥
रूक्षदुर्ब्बलयोर्वातेनोदावृत्तं शकृद् यदा।
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः।
विड्गन्धं मूत्रयेत् कृच्छ्राद् विड्विघातं विनिर्द्दिशेत् ॥ २६ ॥
द्रुताध्वलङ्घनायासादभिघातात् प्रपीड़नात्।
स्वस्थानाद् वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥
शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि।
पीड़ितस्तु स्रवेद् धारां संस्तम्भोद्वेष्टनार्त्तिमान् ॥

स्थानमार्गयोर्गतिसङ्गात् स्थाने गतिर्मार्गे सङ्गः, तद् उदावर्त्त्य मूत्रस्य भग्नव्याविद्धकुण्डलं मूत्रं संस्तम्भादिभिर्विहन्ति, सा वातकुण्डलिका नाम ॥ २४ ॥

गङ्गाधरः—रक्तग्रन्थिमाह—रक्तमित्यादि। वातकफाद्धेतोर्दुष्टं रक्तं यस्य वस्तिद्वारे सुदारुणं ग्रन्थिं कुर्य्यात्, स जनस्तद्ग्रन्थिनावृतं मूत्रमश्मरीसमशूलं यथा स्यात् तथा कृच्छ्रेण सृजेत्। तं रक्तग्रन्थिं प्रचक्षते ॥ २५ ॥

गङ्गाधरः—विड्घातमाह—रूक्षेत्यादि। यदा रूक्षदुर्ब्बलयोर्नरयोर्वातेनोदावृत्तं शकृत् मूत्रस्रोतोऽनुपद्येत, तदा नरो विट्संसृष्टं विड्गन्धं कृच्छ्रान्मूत्रयेत्। तं वातदुष्टविट्संसर्गाद् विड्विघातं मूत्रं नाम विनिर्दिशेत् ॥ २६ ॥

गङ्गाधरः—वस्तिकुण्डलमाह—द्रुताध्वेत्यादि। द्रुताध्वगमनादितो वस्तिः स्वस्थानादुद्वृत्तः सन् गर्भवत् स्थूलः संस्तिष्ठति। शूलाद्यार्त्तः सन् स पुमान्

स्थानमार्गयोर्भग्नव्याविद्धकुण्डली मूत्रयति। भग्नः प्रतिहतः, व्याविद्धो वक्री, कुण्डलीति आवर्त्तमानतया स्थितः। ईदृशश्च वायोरुपस्थानं मूत्रमार्ग एव भवति। वातकुण्डलिलक्षणमाह—संस्तम्भेत्यादि। भङ्गो भङ्गाकारवेदना। रक्तं ग्रन्थिं कुर्य्यात् वातकफाभ्यां दुष्टमिति योज्यम्। विड्युक्तो विघातो विड्विघातः। द्रुताध्वेत्यादिना वस्तिकुण्डलमाह। उद्वृत्त इव परावृत्त-

वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम्।
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः॥
तस्मिन् पित्तावृते दाहः शूलं मूत्रविवर्णता।
श्लेष्मणा चावृते शोथः स्निग्धं मूत्रं सितं घनम्॥
श्लेष्मरुद्धविलो वस्तिः पित्तोदीर्णो न सिध्यति।
अविभ्रान्तविलः साध्यो न च यः कुण्डलीकृतः॥
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च॥ २७॥
* दोषवेगमवेक्ष्यैतान् मूत्रकृच्छ्रहरैर्जयेत्।
वस्तिमुत्तरवस्तिं वा सर्व्वेषामेव दापयेत्॥ २८॥

विन्दु विन्दु मूत्रस्य स्रवति। ततः शिश्नं पाणिना पीड़ितश्चेत् तदा संस्तम्भार्त्तिमान् धारां स्रवेत, तं वस्तिकुण्डलमाहुः। मारकत्वाच्छस्त्रविषोपमम्। तद्वस्तिकुण्डलं पवनप्रबलमबुद्धिभिः प्रायो दुर्निवारम्। तस्मिन् वस्तौ पित्तावृते दाहादि स्यात्। श्लेष्मणावृते शोथादि स्यात्। तस्यासाध्यतामाह—श्लेष्मणा रुद्धं विलं वस्तिमुखच्छिद्रं यस्य स पित्तोदीर्णश्चेत् तदा न सिध्यति। अविभ्रान्तविलः श्लेष्मादिविभ्रमहीनविलो वस्तिः साध्यः स्यात्, यश्च वस्तिः कुण्डलीकृतो न भवति स च साध्यः स्यात्। कुण्डलीभावे लक्षणमाह—स्याद्वस्तावित्यादि। वस्तौ कुण्डलीभूते तृड़ादयः स्युः॥ २७॥

गङ्गाधरः—एषां चिकित्सामाह—दोषवेगमित्यादि। दोषवेगमवेक्ष्य वश्च एतांस्त्रयोदशमूत्रदोषान् मूत्रकृच्छ्रहरौषधैर्जयेत्। सर्व्वेषां त्रयोदशानां मूत्रदोषाणां वस्तिं दापयेदुत्तरवस्तिञ्च दापयेत्। इति॥ २८॥

मुखः। पीड़ित इति हस्तादिभिः। श्लेष्मरुद्धविलो वस्तिर्न सिध्यति, तथा पित्तोदीर्णश्च न सिध्यति। अविभ्रान्तविल इति अरुद्धद्वारः। कुण्डलीकृत इति वर्त्तुलीकृतः। वर्त्तुलीकृतस्यैव लक्षणान्याह—स्याद् वस्तावित्यादि॥ १९—२७॥

चक्रपाणिः—चिकित्सामाह—दोषाधिक्यमित्यादि। मूत्रहरैः प्रयोगैर्दोषाधिक्यमवेक्ष्य प्रयुक्तैर्जयेदित्यर्थः॥ २८॥

* दोषाधिक्यमपेक्ष्यैतानिति चक्रसम्मतः पाठः।

पुष्पनेत्रन्तु हैमं स्यात् सूक्ष्ममौत्तरवस्तिकम् ।
गोपुच्छवद्‌ वृन्तसमं जात्यश्वहनपुष्पयोः ।
रौप्यं सर्षपच्छिद्रं स्यात् त्रिकर्णं * द्वादशाङ्गुलम् ॥ २९ ॥
तेनाजवस्तियुक्तेन स्नेहसार्द्धपलं नयेत् ।
यथावयो विशेषेण स्नेहमात्रां विकल्प्य वा ॥ ३० ॥
स्नातस्य भुक्तभक्तस्य रसेन पयसापि वा ।
विसृष्टवर्चोमूत्रस्य पीठे जानुसमे मृदौ ॥
रुजः सुखोपविष्टस्य हृष्टे मेढ्रे घृतान्विते ।
शलाकयान्विष्य गतिं यद्यप्रतिहता व्रजेत् ॥

गङ्गाधरः—अथोत्तरवस्तिप्रकारमाह—पुष्पेत्यादि । औत्तरवस्तिकं पुष्पनेत्र हैमं सूक्ष्मञ्च स्यात् । तदाह—गोपुच्छवन्मध्यस्थूलं जात्यश्वहनपुष्पयोर्वृन्तसमं सूक्ष्मच्छिद्रं स्यात् । रौप्यं नेत्रं सर्षपच्छिद्रं स्यात् । सर्व्वं द्वादशाङ्गुलं पूर्व्ववत् त्रिकर्णिकम् ॥ २९ ॥

गङ्गाधरः—अजवस्तियुक्तेन तेन नेत्रेण स्नेहस्य सार्द्धपलं प्रणयेत् । यथावयश्च विकल्प्य वा विशेषेण स्नेहमात्रां प्रणयेत् ॥ ३० ॥

गङ्गाधरः—यथा प्रणयेत् तदाह—स्नातस्येत्यादि । मांसरसेन पयसा वा भुक्तभक्तस्य विसृष्टवर्चोमूत्रस्य जानुसमे मृदौ पीठे रुजस्तद्रोगस्य सुखेनोपविष्टस्य हृष्टे मेढ्रे समुद्गमदृढे मेढ्रे घृतान्विते, शलाकया मेढ्रस्य गतिं मूत्रमार्गच्छिद्रमन्विष्य यदि तत्राप्रतिहता शलाका प्रविशेत् तदा तां शलाकामाकृष्य

चक्रपाणिः—उत्तरवस्तिं दापयेदित्युक्तम्, तत उत्तरवस्तिविधिमाह—पुष्पनेत्रमित्यादि । पुष्पनेत्रमित्युत्तरवस्तिनेत्रस्य संज्ञा । उत्तरमार्गदीयमानतया किंवा श्रेष्ठगुणतया उत्तरवस्तिः । जात्यश्वहनवृन्तेन सममिति जातेरश्वहनस्य च पुष्पयोर्वृन्तेनाग्रे समम्, उक्तं हि हारीते—'कुन्दस्य वृन्तप्रतिमं तथाग्र" इति । अश्वहनः करवीरः । सर्षपच्छिद्रमिति सर्षपवाहिच्छिद्रम् । द्विकर्णमिति नेत्रे वस्तिवन्धनार्थमेकतः कर्णिका, अपराग्रे शेफःप्रमाणा षडङ्गुलादिः कर्णिका कर्त्तव्या । त्रिकर्णिकामिति वा पाठः । यथावयो विशेषण स्नेहमात्रां विकल्प्य चेति यथोक्तस्नेहः पञ्चविंशतिवर्षस्य ततस्तु अर्व्वाक् वयोभेदविकल्पेनापकर्षः कर्त्तव्यः । उक्तं हि सुश्रुते—"स्नेहप्रमाणं परमं प्रकुञ्चश्चात्र कीर्त्तितः । पञ्चविंशतिवर्षाणामर्व्वाग्वुद्धिविकल्पितम्,' इति । हृष्टे

* द्विकर्णमिति चक्रधृतः पाठः ।

ततः शेफःप्रमाणेन पुष्पनेत्रं प्रवेशयेत् ।
गुदवन्मूत्रमार्गेण प्रणयेदनुसेवनीम् ॥
हिंस्याद् वस्तिगतो * वस्तिं मूले स्नेहो न गच्छति ।
सुखं प्रपीड्य निष्क्रम्य निष्कर्षेन्नेत्रमेव च ॥ ३१ ॥
प्रत्यागते द्वितीयं वा तृतीयञ्चापि दापयेत् ।
अनागच्छन्नुपेक्ष्यस्तु रजनीं व्युषितस्य च ॥
पिप्पलीलवणागार-धूमापामार्गसर्षपैः ।
वार्त्ताकुरसनिर्गुण्डी-शम्पाकैः ससहाचरः ॥
मूत्राम्लपिष्टैः सगुड़ं वर्त्तिं कृत्वा प्रवेशयेत् ।
अग्रे तु सर्षपाकारां पश्चाद् द्विमाषसम्मिताम् ॥
नेत्रदीर्घां घृताभ्यक्तां सुकुमारामभङ्गुराम् ।
नेत्रवन्मूत्रनाड़ीन्तु पायौ चाङ्गुष्ठसम्मिताम् ॥ ३२ ॥

शेफःप्रमाणेन पुष्पनेत्र प्रवेशयेत्। यथा गुदे प्रणयनमुक्त नातिद्रुत नातिधीरमकम्पहस्तं तथा अनुसेवनीं मुष्कसेवनीसमानेन मूत्रमार्गेण प्रणयेत्, एवं दत्तः स्नेहो वस्तिगतः मूले वस्तिं मूत्राशयं न हिंस्यादथ गच्छति च वस्तिम्। ततः सुखं प्रपीड्य शिश्नं निष्क्रम्य नेत्र निष्कर्षन्निर्गमयेत् ॥ ३१ ॥

<u>गङ्गाधरः</u>—ततः प्रत्यागते स्नेहे द्वितीयं दापयेत् तृतीयं वा दापयेदिति। अनागच्छन्नित्यादि। अनागच्छंस्तु स दत्तः स्नेह उपेक्ष्यः सन् रजन्यां व्युषितस्य मूत्राम्लपिष्टैः सगुडः पिप्पल्यादिभिर्वर्त्तिं कृत्वा प्रवेशयेत्। यादृशीं वर्त्तिं प्रवेशयेत् तद्वर्त्तिप्रकारमाह—अग्रे त्वित्यादि। मूत्रनाड्यां मूत्रनिर्गमनच्छिद्रनेत्रवत् पुष्पनेत्रवदग्रे सर्षपाकारां पश्चान्मूले द्विमाषसम्मितां नेत्रदीर्घां

इति हृष्ट यद्यप्रतिहता व्रजेत् शलाका, तत्र पुष्पनेत्रं शेफःप्रमाणसमं प्रवेशनायम्। शलाकया प्रथममन्वेषणं मार्गविज्ञानार्थम्। गुदे यथा नेत्रकमानादिगुणयुक्तं प्रवेश्यते, तथा मेढ्रेऽपि। अतिगतं लिङ्गप्रमाणातिरेकप्रविष्टं नेत्रं वस्तिं हिंस्यात्। ऊन इति लिङ्गमानस्तोकप्रविष्टे ॥ २९—३१ ॥

<u>चक्रपाणिः</u>—पिप्पलीत्यादिना व्युषितेऽप्यनागच्छतः स्नेहस्य प्रवर्त्तिकां वर्त्तिमाह। इयञ्च वर्त्तिर्गुडपाकेन कठिना कर्त्तव्या यथा श्लक्ष्णा भवति। पश्चाद् इति मूले। अङ्गुष्ठसन्निभाम्

* वातिगतमिति चक्राभिमतः पाठः ।

स्नेहे प्रत्यागते ताभ्यामानुवासनिको विधिः।
परिहारस्य सव्यापत् सम्यगदत्तस्य लक्षणम्॥ ३३॥
स्त्रीणामार्त्तवकाले तु प्रतिकर्म्मेदमाचरेत्।
गर्भासना सुखं स्नेहं तदादत्ते ह्यपावृता।
गर्भं योनिस्तदा शीघ्रं जिते गृह्णाति मारुते॥ ३४॥
वस्तिरेषु विकारेषु योनिविभ्रंशजेषु च।
योनिशूलेषु तीव्रेषु योनिव्यापत्स्वसृग्दरे॥
अपस्रवति मूत्रे च विन्दुं विन्दुं स्रवत्यपि।
विदध्यादुत्तरं वस्तिं यथास्वौषधसंस्कृतम्॥ ३५॥

पुष्पनेत्रदीर्घां द्वादशाङ्गुलां घृताभ्यक्तां सुकुमारां श्लक्ष्णनिर्म्मलादिरूपाम् अभङ्गुरामृजुं तां वर्त्तिं प्रवेशयेदित्यन्वयः। ताञ्च वर्त्तिं पायौ चाङ्गुष्ठसम्मितां प्रवेशयेदिति॥ ३२॥

गङ्गाधरः—स्नेह इत्यादि। मूत्रमार्गेण दत्ते स्नेहे प्रत्यागते परिहारस्य आनुवासनिको विधिः कार्य्यः। सव्यापत् सम्यगदत्तस्य च लक्षणमानुवासनिकं विद्यात्॥ ३३॥

गङ्गाधरः—अथ स्त्रीणामुत्तरवस्तिमाह—स्त्रीणामित्यादि। स्त्रीणामार्त्तवकाले त्विदं प्रतिकर्म्म खल्वाचरेत्। किमित्यत आह—तदा ह्यार्त्तवकाले गर्भासना गर्भ आसनं यस्याः सा योनिः स्नेहं सुखमादत्ते, हि यस्मादपावृता। तेन जिते मारुते तदा योनिः शीघ्रं गर्भं गृह्णाति॥ ३४॥

गङ्गाधरः—केषु वस्तिर्देय इत्यत आह—वस्तिरित्यादि। एषु विकारेषु स्त्रीणां वस्तिः। मूत्रे त्वपस्रवति विन्दुं विन्दुं स्रवति च मूत्रे उत्तरं वस्तिं विदध्यादिति॥ ३५॥

मिति पायौ स्नेहप्रवृत्त्यर्थं दीयमानाङ्गुष्ठसमाना कर्त्तव्या। ताभ्यामिति मेढ्रगुदाभ्यां दत्तवर्त्तिभ्याम्। उत्तरवस्तेरनुवासनवत् सेव्यपरिहारव्यापत्सम्यग्दत्तलक्षणान्यतिदिशन्नाह—आनुवासनिको विधिरित्यादि॥ ३२। ३३॥

चक्रपाणिः—आर्त्तवकाले त्वौत्सर्गिककालोक्तं स्त्रीणामुत्तरवस्तिदानमार्त्तवकाले विभक्तं। आर्त्तवकालदाने हेतुमाह—गर्भाशनेत्यादि। गर्भाशना गर्भशय्या गर्भाशय इत्यर्थः। अन्ये तु योनिमाहुः। आदत्त इति सम्यग् गृह्णाति। अपावृतेति अपगतसञ्चितरजोरूपावरणा स्त्रीणाम्।

पुष्पनेत्रप्रमाणन्तु प्रमदानां दशाङ्गुलम्।
मूत्रस्रोतःपरिणाहं मूत्रस्रोतोऽनुवाहि * च॥
अपत्यमार्गे नारीणां विधेयं चतुरङ्गुलम्।
द्व्यङ्गुलं मूत्रमार्गे तु बालायास्त्वेकमङ्गुलम्॥ ३६॥
उत्तानायाः शयानायाः सङ्कोच्य समसक्थिनी।
अथास्याः प्रणयेन्नेत्रमनुवंशगतं सुखम्॥
द्वित्रिचतुरिति स्नेहमहोरात्रेण दापयेत्।
वस्तिं वस्तौ प्रणीते तु वस्तिश्चानन्तरो भवेत्॥
त्रिरात्रं कर्म्म कुर्व्वीत स्नेहमात्रां विवर्द्धयन्।
अनेनैव विधानेन कर्म्म कुर्य्यात् पुनस्त्र्यहात्॥ ३७॥

गङ्गाधरः—पुष्पनेत्रेत्यादि। प्रमदानां स्वाङ्गुलिमानेन दशाङ्गुलं न तु द्वादशाङ्गुलं शेषं पुष्पनेत्रप्रमाणं मूत्रस्रोतःसमानपरीणाहं स्थूलं मूत्रस्रोतोऽनुरूपेण वहति च उत्तरवस्तिनेत्रं कुर्य्यात्। योनिनेत्रन्त्वाह—अपत्येत्यादि। नारीणामपत्यमार्गे योनिपथे चतुर ङ्गुलं नेत्रं विधेयम्। बालायास्तु नार्य्याः मूत्रमार्गे द्व्यङ्गुलं नेत्रं कार्य्यम्। अपत्यमार्गे त्वेकाङ्गुलं नेत्रं कार्य्यम्॥ ३६॥

गङ्गाधरः—उत्तरवस्तिदानक्रममाह—उत्तानाया इत्यादि। समे च ते सक्थिनी चेति समसक्थिनी सङ्कोच्योत्तानायाः शयानायाः अस्या नार्य्याः पृष्ठवंशमनु लक्षीकृत्यानुवंशं तद्गतं वस्तिनेत्रं सुखं प्रणयेत्। द्विस्त्रिश्चतुर्वाऽहोरात्रेण स्नेहं वस्तिं दापयेदिति, स्नेहस्य वस्तौ सम्यक् प्रणीते सति पुनः अनन्तरो वस्तिर्दत्तो भवेत्। इत्येवं त्रिरात्रं वस्तिकर्म्म स्नेहमात्रां विवर्द्धयन् त्र्यहः कुर्व्वीत। पुनस्त्र्यहात् परमनेनैव विधानेन स्नेहवस्तिकर्म्म कुर्य्यात्। इत्युत्तरवस्तिविधानं व्याख्यातं भवति॥ ३७॥

पुष्पनेत्रप्रमाणन्त्वित्यादि। मुद्गस्रोतोऽनुपातीति मुद्गवाहिच्छिद्रम्। अपत्यमार्गे विधेयं चतु-रङ्गुलमिति अपत्यमार्गे स्नेहयितव्ये चतुरङ्गुलप्रवेशनं प्राप्तयौवनानामेव नारीणां कर्त्तव्यम्, मूत्र-मार्गे तु स्नेहयितव्ये द्व्यङ्गुलप्रवेशनं प्राप्तवयस्कानामेव कर्त्तव्यम्, बालायाः स्वल्पप्रमाणतया एकाङ्गुलप्रवेशनमेव मूत्रमार्गप्रयोगार्थं कर्त्तव्यम्। बालानान्त्वपत्यमार्गे न दीयत एव, तासां

* मुद्गस्रोतोऽनुपातीति चक्रधृतः पाठः।

अतः शिरोविकाराणां कश्चिद् भेदः प्रवक्ष्यते ।
पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ।
तीव्ररुग्दाहरागं हि शोफं कुर्व्वन्ति दारुणम् ॥
स शिरो विषवद्वेगी रुणद्ध्याशु गलन्तथा ।
त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ॥
त्र्यहाज्जीवति भैषज्यं प्रत्याख्यायास्य कारयेत् ।
शिरोविरेकसेकादि सर्व्वं वीसर्पनुच्च यत् ॥ ३८ ॥
रूक्षाशनात्यध्यशनैः प्राग्वातावश्यमैथुनैः ।
वेगसन्धारणायास-व्यायामैः कुपितो नृणाम् ॥
केवलः सकफो वापि गृहीत्वार्द्धं शिरोऽनिलः ।
गण्डभ्रू-दन्तशङ्खाक्षि-ललाटं परिपीड़यन् ॥
मन्याभ्रूशङ्खकर्णाक्षि-ललाटार्द्धेषु वेदनाम् ।
शस्त्रारणिनिभां तीव्रां कुर्य्यात् सोऽर्द्धावभेदकः ॥

गङ्गाधरः—अतः परं शिरोविकारभेदमाह—अत इत्यादि । शिरोविकाराणां कश्चित् प्रभेद उच्यते । पित्तेत्यादि । यं दारुणं शोफं कुर्व्वन्ति स शोथः खलु विषवद्वेगी शिरस्तथा गलमाशु रुणद्धि । त्रिरात्राज्जीवितं हन्ति यदि त्र्यहाज्जीवति तदा प्रत्याख्यायास्य भैषज्यं कारयेत् । क्रियामाह—शिरोविरेकसेकादीत्यादि ॥ ३८ ॥

गङ्गाधरः—अथार्द्धावभेदकमाह—रूक्षाशनेत्यादि । रूक्षाशनमत्यशनमध्यशनञ्चाति प्राग्वातश्चावश्य इत्यवश्यायो नीहारः । एतद्धेतुभिः कुपितोऽनिलः केवलः सकफो वा शिरसोऽर्द्धं गृहीत्वा मन्याद्यर्द्धेषु शस्त्रारणिनिभां तीव्रां वेदनां

अपत्यमार्गस्यावृतत्वात् । वर्त्तिः पीनतरा भवेदिति स्नेहप्रत्यागमनार्थो वर्त्तिः पीनतरा कर्त्तव्या । स्नेहमात्रा चात्र "स्नेहस्य प्रसृतञ्चात्र स्वाङ्गुलीमूलसम्मितम्" इत्यनेन सुश्रुतोक्ता ज्ञेया ॥३४—३७॥

चक्रपाणिः—क्रमागतशिरोविरेकार्थं त्रिमर्म्मीयान् विस्तृत्य वक्तुमाह—अत इत्यादि । दारुण इत्याशुकारी । पुनस्त्र्यहाज्जीवतीत्यादिकः प्रभावोऽयं शङ्खकस्य । प्रत्याख्याय चरेत् क्रियामित्यनेन उत्पन्नमात्र एव प्रत्याख्यानपूर्व्विका चिकित्सा कर्त्तव्याऽस्य ॥ ३८ ॥

चक्रपाणिः—रूक्षेत्यादिनाऽर्द्धावभेदकमाह । अवश्यायो हिमः । शस्त्रारणिनिभामिति शस्त्र-

नयनं वाथवा श्रोत्रमतिवृद्धो विनाशयेत्।
तस्मात् प्रागेव कर्त्तव्या चिकित्सा तु चिकित्सकैः॥
चतुःस्नेहोत्तमा मात्रा शिरःकायविरेचनम्।
नाड़ीस्वेदो घृतं जीर्णं वस्तिकर्म्मानुवासनम्॥
उपनाहः शिरोवस्तिर्दहनं चात्र शस्यते।
प्रतिश्याये शिरोरोगे यच्चोद्दिष्टं चिकित्सितम्॥ ३९॥
सन्धारणादजीर्णाच्च मस्तिष्कं रक्तमारुतौ।
दुष्टौ दूषयतस्तच्च दुष्टं ताभ्यां विमूर्च्छितम्॥

कुर्य्यात्, सोऽद्धावभेदकः। सोऽतिवृद्धो नयन वा श्रोत्रं वा विनाशयेत्। तत्र चिकित्सामाह—चतुरित्यादि। चतुःस्नेहयोगस्योत्तमा मात्रा शस्यते शिरोविरेचनं कायविरेचनं वमनविरेचनम्। यच्च प्रतिश्याये शिरोरोगे चोद्दिष्टं चिकित्सितं तत् सर्व्वं शस्यते इति॥ ३९॥

<u>गङ्गाधरः</u>—अथ सूर्य्यावर्त्तमाह—सन्धारणादित्यादि। मस्तिष्कं मस्तुलुङ्गं

च्छेदारणिमन्थननिभाम्। अरणिरग्न्युत्थापनस्थानम्, किंवा अग्निकारणेनाग्निरेव लक्ष्यते। चतुःस्नेहस्योत्तमा मात्रा चतुःस्नेहोत्तममात्रा। उत्तमा च मात्रा अहोरात्रपरिणामनीया। जीर्णं दशवर्षस्थितं स्मृतम्। उपनाहं केचिच्छिरोवस्तिभेदमाहुः, यो मस्तिष्क उच्यते। तन्त्रान्तरे हि मस्तिक्य उपनाहः शिरोवस्तिप्रकार उक्तः,—'मस्तिकेऽष्टाङ्गुलं पट्टं वस्तौ तु द्वादशाङ्गुलम्" इत्यादिना। शिरोवस्तिविधानं शालाक्ये ज्ञेयम्, यथा—'द्वादशाङ्गुलविस्तीर्णं चर्म्मपट्टं शिरःसमम्। आकर्णबन्धनस्थाने ललाटे वस्त्रवेष्टिते। चेलवेणिकया बद्ध्वा माषकल्केन लेपयेत्। ततो यथाव्याधिश्रृतं स्नेहं कोष्णं निवेशयेत्। ऊर्द्ध्वं केशभुवो यावदङ्गुलं धारयेच्च तम्। आवक्त्रनासिकाक्लेदात् द्वादशाष्टौ षड् वातादिषु। मात्रासहस्राण्यारुजो द्व्येकं स्कन्धादि मर्द्दयेत्। युक्तस्नेहस्य परमं सप्ताहं तस्य सेवनम्॥" तथा आशिरोव्यायतं चर्म्म कृत्वाष्टाङ्गुलमुच्छ्रितम्। तेनाऽऽवेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत्। निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत्। धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा। शिरोवस्तिः जयत्येष शिरोरोगं मरुद्भवम्" इत्यादि। दहनं वाऽस्येति तन्त्रान्तरप्रत्ययात् द्व्यङ्गुलललाटशङ्खप्रदेशेषु शरकाण्डादिना ज्ञेयम्। यच्चोद्दिष्टं चिकित्सितमिति तच्च वात इति योज्यम्॥ ३९॥

सूर्य्योदयेऽकसन्तापाद् रक्तं विष्यन्दयेच्छनैः ।
ततो दिने शिरःशूलं दिनवृद्ध्या च वर्द्धते ॥
दिनत्त्वये ततः स्त्याने मस्तिष्के संप्रशाम्यति ।
सूर्य्यावर्त्तः स तत्र स्यात् सर्पिरौत्तरभक्तिकम् ॥
शिरःकायविरेकोऽथ मूर्द्धा तु स्नेहधारणम् ।
जाङ्गलैरुपनाहश्च घृतत्तीरैश्च सेचनम् ॥
वर्हि(र्त्ति)तित्तिरिलावादि-श्रृतं त्तीरोत्थितं घृतम् ।
स्यान्नावनं जीवनीय-त्तीराष्टगुणसाधितम् ॥ ४० ॥

रक्तमारुतौ दूषयतः। ताभ्यां विमूर्च्छितं दुष्टन्तु तन्मस्तिष्कं सूर्य्योदयेऽर्क-सन्तापाद् रक्तं समुद्रिक्तं सद् विष्यन्दयेत् शनैर्यथा सूर्य्यसन्तापो वर्द्धते तथोद्रिक्तं रक्तं भवत् क्रमेण विष्यन्दयेत्। ततो दिने शिरःशूलं दिनवृद्ध्या वर्द्धते। ततः क्रमेण दिनक्षये सूर्य्यसन्तापह्रासे रक्तं क्रमेण शान्तं याति मस्तिष्के च स्त्यानतां गच्छति शिरःशूलं प्रशाम्यति। स रोगः सूर्य्यावर्त्तः स्यात्, तत्र औत्तरभक्तिकं सर्पिः शिरःकाययोर्विरेकः। मूर्द्धा तु स्नेहधारणं शिरोवस्तिरिति यावत्। तदुक्तम्—"आशिरो व्यायतं चर्म्म कृत्वाष्टाङ्गुलमुन्नतम्। तेनावेष्ट्य शिरोऽधस्तान्-माषकल्केन लेपयेत्। निश्चलस्योपविष्टस्य तलैरुष्णैः प्रपूरयेत्। धारयेदा रुजः शान्तेर्यामं यामार्द्धमेव वा। शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम्। हनु-मन्याक्षिकर्णार्त्तिमर्दितं मस्तकम्पनम्। तलनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च। तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी। एष एव विधिः कार्य्यस्तथा कर्णाक्षिपूरणे।" वर्हि(र्त्ति)तित्तिरिलावादिमांसरसेन क्षीरोत्थितं घृतं श्रृतं पक्वं स्यात्। तथा जीवनीयदशककल्कक्षीराष्टगुणसाधितं क्षीरोत्थितं घृतं नावनं स्यात् ॥ ४० ॥

**चक्रपाणिः**—मस्तिष्कं शिरःस्थो मज्जा। द्रवमिति द्रवं सत्। विष्यन्दत इति च्यवते। एतच्च सूर्य्यावर्त्तस्य रूपं दोषदूष्ययोर्विकृतिविषमसमवायारब्धं भवति। तेन नान्यो विकार एवम्भूतो भवति। वेदना तथा सूर्य्यंताप एवास्य वर्द्धते, नाग्नितापे। एतदपि प्रभावकृतमेव ज्ञेयम्। त्रिस्नेहधारणमिति पाठात् तैलघृतवसाधारणं वदन्ति। विलनिवासीति विलेशयः। विलेशया-

उपवासातिशोकाति-रूक्षशीताल्पभोजनैः।
दुष्टा दोषास्त्रयो मन्यापश्चाद्घाटासु वेदनाम् ॥
तीव्रां कुर्व्वन्ति नासाक्षि-भ्रूशङ्खे सावतिष्ठते।
स्पन्दनं गण्डपार्श्वस्य नेत्ररोगं हनुग्रहम्।
सोऽनन्तवातस्तं हन्यात् शिरोऽर्द्धावर्त्तनाशनैः * ॥ ४१ ॥
वातो रूक्षादिभिः क्रुद्धः शिरःकम्पमुदीरयेत्।
तत्रामृताबलारास्ना-महाश्वेताश्वगन्धकैः।
स्नेहस्वेदादि वातघ्नं शस्तश्चात्रावपीड़नम् ॥ ४२ ॥
नस्तःकर्म्म च कुर्व्वीत शिरोरोगेषु शास्त्रवित्।
द्वारं हि शिरसो नासा तेन तद् व्याप्य हन्ति तान् ॥ ४३ ॥

गङ्गाधरः—अथानन्तवातमाह—उपवासेत्यादि। उपवासादिभिर्दुष्टास्त्रयो दोषा मन्यापश्चाद्घाटासु तीव्रां वेदनां कुर्व्वन्ति। सा वेदना नासादिष्ववतिष्ठते। गण्डपार्श्वस्य स्पन्दनमित्यादिकं कुर्व्वन्ति। सोऽनन्तवातो नाम। शिरोऽर्द्धावर्त्तनाशनभेषजस्तमनन्तवातं हन्यादिति चिकित्सितम् ॥ ४१ ॥

गङ्गाधरः—अथ शिरःकम्पमाह—वात इत्यादि। रूक्षादिभिः क्रुद्धो वातः शिरःकम्पमुदीरयेत्। तत्र चिकित्सामाह—तत्रेत्यादि। अमृतादिभिः कल्कः चूर्णितवां स्नेहस्वेदादि स्नेहस्वेदपूर्व्वकं सन्तर्पणं नस्यं शस्तं स्यादिति ॥ ४२ ॥

गङ्गाधरः—ननु नस्यं कीदृशमित्यत आह—नस्तःकर्म्मेत्यादि। शिरोरोगेषु कस्मान्नस्तःकर्म्म कुर्व्वीत तत्राह—द्वारं हीत्यादि। हि यस्माच्छिरसो द्वारं नासा

दिभिर्नीवनमिति सम्बन्धः। मन्या ग्रीवा शिराद्वयम्, घाटा ग्रीवायाः पश्चाद्भागः, पश्चात् पृष्ठम्। सा चाक्षिभ्रूशङ्खेष्ववतिष्ठत इति शङ्खादीन् व्याप्य स्थिरा भवति। अनन्तवातमेनं तन्त्रान्तरे अन्यतोवातमाहुः। शिरार्कावर्त्तनाशनैरिति शिराव्यधैः सूर्य्यावर्त्तनाशनैश्च भेषजैः। ४०—४२ ॥

चक्रपाणिः—नस्तःकर्म्म चेति सर्व्वशिरोरोगसाधारणं चिकित्सितम्। शिरोरोगेषु नस्तःकर्म्मकरणे हेतुमाह—द्वारं हीत्यादि। तेन नासारूपेण मार्गेण। तदिति नस्तोदत्तमौषधम्। व्याप्येति

* शिरार्कावर्त्तनाशनैरिति चक्राभिमतः पाठः।

नावनञ्चावपीड़श्च धमनं धूम एव च।
प्रतिमर्षश्च विज्ञेयं नस्तःकर्म्म च पञ्चधा॥
स्नेहनं शोधनञ्चैव द्विविधं नावनं स्मृतम्।
शोधनः स्तम्भनश्च स्यादवपीड़ो द्विधा मतः॥
चूर्णस्याधमापनं तद्धि देहश्लेष्मविशोधनम्।
विज्ञेयस्त्रिविधो धूमः प्राग्भक्त-*-शमनादिकः॥
प्रतिमर्षो भवेत् स्नेहो निर्द्दोष उभयार्थकृत्।
एवं तद्रेचनं कर्म्म तर्पणं शमनं त्रिधा॥ ४४॥

तेन नासाद्वारेण तन्नस्यं शिरो व्याप्य तान् शिरोरोगान् हन्ति। तस्य भेदमाह— नावनञ्चेत्यादि। नावनादिकं पञ्चधा नस्तःकर्म्म विज्ञेयम्। तत्र नावनं द्विविधं स्नेहनं शोधनञ्च, नावनं नस्तम्। अवपीड़ोऽपि द्विविधः शोधनः स्तम्भनश्च, अवपीड्य दीयते यस्मादवपीड़स्ततः स्मृतः। चूर्णस्याधमापनं द्विमुखनलिकया नासापुट फुत्कारेण दानं धमनम्, तद्धि देहश्लेष्मविशोधनमेकविधमेव। धूमस्तु त्रिविधो विज्ञेयः। प्राग्भक्तः शमनः शोधनश्चेति। प्रतिमर्षो भवेत् स्नेह एव स उभयार्थकृत् शोधनश्च शमनश्च निर्द्दोषः स्यात्। तदाह—एवमित्यादि। तत् प्रतिमर्षकर्म्म त्रिधा रेचनं शिरोविरेचनं तर्पणं शमनश्च॥ ४३। ४४॥

शिरो व्याप्य। तानिति शिरोगदान। शिरोरोगदानयस्तावागतानवश्यवक्तव्यनस्तःकर्म्मभेदानाह— नावनमित्यादि। नावनादयश्चिकित्सास्थानोक्ताः। अत सुश्रुते धूमं वर्ज्जयित्वा पञ्चविधं नस्तःकर्म्मोक्तम्—"नस्यं तत् पञ्चविधविकल्पम्, तद् यथा—नस्यं शिरोविरेचनं प्रतिमर्षोऽवपीड़ः प्रधमनञ्च" इति। इह तु नावनशब्देनैव शिरोविरेचनमपि गृहीतम्, यदुक्तम्—'स्नेहनं शोधनञ्चैव नावनं द्विविधं स्मृतम्' इति। तेन सुश्रुतोक्तोऽप्ययर्थो गृहीत एव। शोधनं स्तम्भनश्च स्यादवपीड़ इत्यत्र संशमनमप्यवपीड़स्य कर्म्मेच्छन्ति, तच्च स्तम्भन एवान्तर्भावनीयम्। अवपीड्य यस्य कल्कादीनि दीयन्ते इत्यवपीड़ः, अनेन शिरोविरेचनार्थं दीयमानसैन्धवपिप्पल्यादि कल्कस्याप्यवरोधः। धमापनं देहस्रोतोविशोधनमिति वचनात्, शिरोविरेचनप्रयोजनकमेवेति दर्शयति। शमनादिक इत्यत्र शमनशब्देन प्रायोगिकं गृह्णाति, तेन प्रायोगिकस्नैहिकवैरेचनिक-धूमानां नासादीयमानानामिह ग्रहणम्। मुखपेयस्तु धूमो न नस्यम्। उभयार्थकृदिति स्नेहविरेचनार्थ-कृत्। प्रतिमर्षलक्षणमग्रे "नस्तः स्नेहाङ्गुलिं दद्यात्" इत्यादिना वक्ष्यमाणम्। उक्तपञ्चविध-नस्तःकर्म्मणस्त्रैविध्यमाह—एवमित्यादि। कर्म्मेति नस्तःकर्म्म। शमनेन स्तम्भनस्यापि ग्रहणम्।

---

* प्रागुक्तशमनादिक इत्यन्यः पाठः।

स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिका ये शिरोगदाः।
शिरोविरेचनं तेषु नस्तःकर्म्म प्रचक्ष्यते॥
ये च वातात्मका रोगाः शिरःकम्पार्द्दितादयः।
शिरसस्तर्पणं तेषु नस्तःकर्म्म प्रचक्ष्यते।
रक्तपित्तादिरोगेषु शमनं तस्य चेष्यते॥ ४५॥
ध्मापनं धूमपानञ्च यथायोग्येषु बुद्धिमान्।
दोषादिकं समीक्ष्यैव भिषक् सम्यक् च कारयेत्॥ ४६॥
फलादिकन्तु भैषज्यं प्रोक्तं यद् यद् विरेचनम्।
तत् तु संकल्पयेत् तेन पचेत् स्नेहं विरेचनम्॥

गङ्गाधरः—तेषां विषयानाह—स्तम्भेत्यादि। स्तम्भादिषु गदेषु शिरोविरेचनं नाम नस्तःकर्म्म प्रचक्ष्यते। ये चेत्यादि। वातात्मकाः शिरःकम्पादयो ये रोगास्तेषु शिरसस्तर्पणं नस्तःकर्म्म प्रतिमर्ष उच्यते। अथ शमनप्रतिमर्षविषयमाह—रक्तपित्तेत्यादि। रक्तपित्तादिषु रोगेषु तस्य शमनं प्रतिमर्ष इष्यते॥ ४५॥

गङ्गाधरः—ध्मापनमित्यादि। यथायोग्येषु रोगेषु ध्मापनं प्रधमनं नासया धूमपानञ्च कारयेत्॥ ४६॥

गङ्गाधरः—पञ्चधा नस्यविषयमुक्त्वा त्रिविधप्रतिमर्षसाधनमाह—फलादिकमित्यादि। पूर्व्वं फलमूलादिकं यद् यद्विरेचनं भैषज्यं प्रोक्तं तद् दोषव्याध्यनुसारेण सङ्कल्पयेत्, सङ्कल्प्य च तेन भैषज्येन विरेचनं स्नेहं पचेत्। शिरोविरेचनं

तर्पणे स्नेहनस्यावरोधः। अन्ये ये केचित् प्रभेदास्तन्त्रान्तरे प्रतिपादिताः, तेऽप्यत्रैवान्तर्भवन्ति॥ ४३। ४४॥

चक्रपाणिः—विरेचनादिकर्म्मत्रयस्य विषयमाह स्तम्भेत्यादि। तर्पणमिति स्नेहेन तर्पणम्। यथायोग्येषु शस्यत इति ध्मापनधूमयोग्येषु शस्यते. तत्र धूमयोग्याः सूत्रस्थाने प्रतिपादिताः; ध्मापनयोग्यास्तु ध्मापनगुणकथने देहस्रोतोविशोधनमित्यादिना येऽभिष्यन्दापस्मारादयः शोधनीयस्रोतस उक्ताः, ते ज्ञेयाः॥ ४५। ४६॥

चक्रपाणिः—शिरोविरेचनचूर्णविधिमाह—फलादीत्यादि। फलादिभेषजमिति रोगभिषग्जितीयोक्तम्—फलपत्रमूलकन्दपुष्पनिर्य्यासत्वगभेदात् सप्तविधमुक्तं शिरोविरेचनद्रव्यम्। 'चूर्ण

यदुक्तं मधुरस्कन्ध-भेषजं तेन तर्पणम् ।
साधयित्वा भिषक् स्नेहं नस्तः कुर्य्याद् विधानवित् ॥ ४७ ॥
प्राक्सूर्य्ये मध्यसूर्य्ये वा कुर्य्यात् तर्पणकर्म्म च * ।
उत्तानस्य शयानस्य स्वास्तृते शयने सुखम् ॥
प्रलम्बशिरसः किञ्चित् किञ्चित् पादोन्नतस्य च ।
दद्यान्नासापुटे स्नेहं तर्पणं बुद्धिमान् भिषक् ॥ ४८ ॥
अनवाक्शिरसो नस्यं न शिरः प्रतिपद्यते ।
अत्यवाक्शिरसो नस्यं मस्तुलुङ्गे च तिष्ठति ॥
अत एव शयानस्य शुद्ध्यर्थं स्वेदयेच्छिरः ।
संस्वेद्य नासामुन्नाम्य वामेनाङ्गुष्ठपर्व्वणा ॥

स्नेहं पचेत् । शिरःसन्तर्पणं स्नेहमाह—यदुक्तमित्यादि । विमानस्थाने मधुरस्कन्धभेषजं यदुक्तमास्थापनं तेन द्रव्येण तर्पणं स्नेहं साधयित्वा भिषक् नस्तःकर्म्म प्रतिमर्ष कुर्य्यादिति ॥ ४७ ॥

गङ्गाधरः—कर्म्म प्राक्सूर्य्ये प्रातःकाले मध्यसूर्य्ये वा मध्याह्ने वा प्राक्कृतमावश्यकं कर्म्म मलमूत्रोत्सर्गादिकं यो तस्य उत्तानस्य शयानस्य स्वास्तृते शयने सुखं शयानस्य किञ्चित् प्रलम्बशिरसः किञ्चिदुन्नतपादस्य पूर्व्वं शिरः संस्वेदयेत्, शिरः संस्वेद्य वामेनाङ्गुष्ठपर्व्वणा नासामुन्नाम्य दक्षिणहस्तेनाभयतः समं यथा स्यात् तथा प्रणाड्या पिचुना वा यथाविधि नस्तःस्नेहं कुर्य्यात् । न त्वनवाक्शिरसो नाप्यत्यवाक्शिरसो नस्तःस्नेहं कुर्य्यात् ॥ ४८ ॥

गङ्गाधरः—कस्मादित्यत आह—अनवागित्यादि । अनवागूर्द्ध्वभूतं शिरो यस्य तस्य खलूत्तानशयानस्य दत्तं नस्यं शिरः प्रतिपद्यते । अत्यवागतिनीचं

कल्पयेदिति प्रधमनार्थमवपीडनार्थञ्च चूर्णं कल्पयेत् । मधुरस्कन्धोऽपि रोगभिषग्जितीये पूर्व्वोक्तः ॥ ४७ ॥

चक्रपाणिः—नस्तःकर्म्मविधिमाह—प्राक् सूर्य्ये इत्यादि । ग्रीष्मे प्राक् सूर्य्ये, शीते तु मध्यसूर्य्ये इति व्यवस्था । प्राक्कृतावश्यकस्य चेति प्राक्कृतावश्यकरणीयमलविसर्गादिकस्य । एवं

* प्राक्कृतावश्यकस्य चेति पाठान्तरम् ।

हस्तेन दक्षिणेनाथ कुर्य्यादुभयतः समम्।
प्रणाड्या पिचुना वापि नस्तःस्नेहं यथाविधि॥ ४९॥
कृते च स्वेदयेद् भूयोऽप्याकर्षेच्च पुनःपुनः।
तं स्नेहं श्लेष्मणा सार्द्धं तथा स्नेहो न तिष्ठति॥ ५०॥
स्वेदेनोत्क्लेशितः श्लेष्मा नस्तःकर्म्मण्युपस्थितः।
प्रायः स्नेहस्य शैत्येन शिरसि श्यायते प्रति॥
श्रोत्रमन्यागलाद्येषु विकाराय स कल्पते।
ततो नस्तःकृतो धूमं पिबेत् कफविनाशनम्।
हितान्नभुक् निवातोष्ण-सेवी स्यान्नियतेन्द्रियः॥ ५१॥
विधिरेषोऽवपीड़स्य कार्य्यः प्रधमापनस्य च।
षड़ङ्गुल्याथवा नाड्या धमेच्चूर्णं मुखेन वा॥

शिरो यस्य तस्योत्तानशयानस्य दत्तं नस्यं मस्तुलुङ्गे तिष्ठति। अतएव सममुत्तानशयानस्य शुद्ध्यर्थं शिरः स्वेदयेत्। संस्वेद्य च स्नेहं नस्यं कुर्य्यात्॥४९॥

गङ्गाधरः—नस्ये कृते सति यत् कार्य्यं तदाह—कृते चेत्यादि। कृते च स्नेहनस्ये भूयः शिरः स्वेदयेत् पुनःपुनः शिरोगतं तं स्नेहं श्लेष्मणा सार्द्धमाकर्षेच्च, यथा स्नेहो न शिरसि तिष्ठति॥ ५०॥

गङ्गाधरः—कस्मात् पुनःपुनराकर्षेत्। स्वेदेनेत्यादि। शिरसि श्लेष्मा स्वेदेनोत्क्लेशितो नस्तःकर्म्मणि स्नेहदानेनोपस्थितः पुनः स्नेहस्य शैत्येन ततोऽनन्तरं प्रायः प्रतिश्यायते, श्रोत्रादिषु विकाराय स प्रतिश्यायाय कल्पते। ततो नस्तःकृतः पुमान् कफनाशनं धूमं नाड्या पिबेत् नस्तःकर्म्मत्वात्। नियतेन्द्रियो मैथुनादिवर्जी सन् हितान्नभुक् निवातोष्णसेवी स्यादिति॥ ५१॥

गङ्गाधरः—विधिरित्यादि। एष प्रतिमर्षवद्विधिरवपीड़स्य प्रधमापनस्य च कार्य्यः। प्रधमापनप्रकारमाह—षडित्यादि। षड़ङ्गुल्या द्विमुखया नाड्या मुखेन

शयानस्येति किञ्चिदवनतशिरस्कतया शयानस्य। कुर्य्यादुभय : सममिति उभयनासापुटनादि तुल्यं दद्यात्। प्रणाड़ी नस्यदाननलिका। यथाविधीति प्रमाणादिदोषरहितम्। कृतनस्यस्य धूमपानोपपत्तिवर्णनपूर्व्वकं धूमपानमाह—स्वेदेनेत्यादि। प्रधमापनस्य चोक्तो विधिस्तथा वक्ष्यमाणश्च

विरिक्तशिरसं तूर्णं पाययित्वाम्बु भोजयेत्।
लघु त्रिष्वविरुद्धञ्च निवातस्थमतन्द्रितम्॥ ५२॥
विरेकशून्यो * दोषस्य कोपनं यस्य सेवते।
स दोषो विचरंस्तत्र करोति स्वान् गदान् बहून्॥
यथास्वं विहितां तत्र क्रियां कुर्य्याद् विचक्षणः।
अकालकृतजातानां रोगाणामनुरूपतः॥ ५३॥
अजीर्णे भुक्तभक्ते च तोयपीतेऽथ दुर्द्दिने।
प्रतिश्याये नवे स्नाने स्नेहपानेऽनुवासने॥
नराणां † स्नेहनं रोगान् करोति श्लैष्मिकान् बहून्।
तत्र श्लेष्महरः सर्व्वस्तीक्ष्णोष्णादिविधिर्हितः॥ ५४॥
क्षामे विरेचने गर्भे व्यायामाभिहतेष्वपि।
वातो रूक्षेण नस्येन क्रुद्धस्तान् जनयेद् गदान्॥

चूर्णमोषध धमेत्। तेन विरिक्तशिरसं तं निवातस्थमतन्द्रितं तूर्णमम्बु पाययित्वा भोजयेत्, त्रिषु दोषेषु यदविरुद्धं लघु च भोज्यं भवेत्॥ ५२॥

गङ्गाधरः—कस्मात् त्रिष्वविरुद्धं भोजयेदित्यत आह—विरेकेत्यादि। शिरोविरेकेण शून्यो जनो यस्य दोषस्य कोपनं द्रव्यं सेवते, स दोषः कुपितः सन् तत्र शिरसि विचरन् सन् स्वान् तद्दोषसम्भाव्यान् बहून् गदान् करोति। तच्चिकित्सामाह—तत्र यथास्वं विहितां क्रियां कुर्य्यात्। अकाले नस्तःकर्म्मदोषानाह—अकालेत्यादि। अकालकृतनस्तःकर्म्म बहून् श्लैष्मिकान् रोगान् करोति। तत्र रोगेषु श्लेष्महरः सर्व्वस्तीक्ष्णादिविधिर्हितः॥ ५३। ५४॥

गङ्गाधरः—क्षाम इत्यादि। क्षामादिषु रूक्षेण नस्येन वातः क्रुद्धः सन् तान्

'षडङ्ग स्या' इत्यादिना। विरिक्तशिरसमित्यादि सर्व्वविरेचनसाधारणम्। त्रिष्विति वातादिषु। विरेकशुद्ध इति शिरोविरेकशुद्धः। दोषस्याकोपनं सेवेत इति योज्यम्। अकालकृतजानाञ्च रोगाणामनुरूपत इति अकालकृतशिरोविरेचनजातानां रोगाणामनुरूपतश्चिकित्सां कुर्य्यादित्यर्थः॥ ४८—५३॥

* विरेकशुद्ध इति चक्रधृतः पाठः। † नात्र स्नेहनमिति चक्रसम्मतः पाठः।

तत्र वातहरः सर्व्वो विधिः स्नेहनबृंहणः ।
स्वेदादिः स्याद् घृतं क्षीरं गर्भिण्यास्तु विशेषतः ॥ ५५ ॥
ज्वरकोपादितप्तानां तिमिरं मद्यपस्य च ।
रूक्षैः शीताञ्जनैर्लेपैः पुटपाकैश्च साधयेत् ।
तेन ज्वरादयस्ते तु प्रशमं यान्ति तस्य तु ॥ ५६ ॥
स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते ।
प्रतिमर्षस्तु नस्यार्थं करोति न च दोषवान् ॥ ५७ ॥
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्व्वदा ।
न चोत्सिङ्ग्च देहानां प्रतिमर्षः स दार्ढ्यकृत् ॥ ५८ ॥

वातसम्भाव्यान् गदान् करोति। तत्र सर्व्वो वातहरः स्नेहनबृंहणस्वेदादिविधि-र्हितः स्यात्। गर्भिण्यास्तु विशेषतो घृतं क्षीरं विधिः स्यात्। तथा तद्वातकृत ज्वरकोपादिना तप्तानां नृणां घृतं क्षीरं विशेषतो विधिः स्यात्, मधुपस्य मद्यपस्य तिमिरं रूक्षः शीताञ्जनादिभिः साधयेत्। एवं पित्तकोपेऽप्युन्नेयम् ॥५५।५६॥

गङ्गाधरः—अथ नावनविधिमाह—स्नेहनमित्यादि। प्रागभिहितं स्नेहनं शोधनञ्चैव नावनं द्विविधं स्मृतमिति तन्नावनं नस्यं तन्नस्यार्थं स्नेहनं शोधनञ्च प्रतिमर्षः करोति न च दोषवान् भवति ॥ ५७ ॥

गङ्गाधरः—शमनप्रतिमर्षमाह—नस्त इत्यादि। प्रातर्निशि च सर्व्वदा स्वस्थः

चक्रपाणिः—नावनं स्नेहनमिति स्नेहनार्थं नस्यम्। स्वेदादिरितिच्छेदः। घृतं क्षीरमिति गर्भिण्या एव वातजयार्थं गर्भपुष्टये च। ज्वरेत्यादि। ज्वरादितप्तानां स्नेहनं नावनं तिमिरं कुर्य्यात्, तथा मद्यपस्य तिमिरं कुर्य्यात्। अस्य चिकित्सामाह— रूक्षैरित्यादि। शीताञ्जनं स्रोतोऽञ्जनं वदन्ति। किंवा तिक्तद्रव्यकृतमञ्जनं शीताञ्जनम्। यदुक्तं शालाक्ये—"लेखनं रोपणञ्चैव प्रसादनमथापि च। तिक्तेन रोपणं कार्य्यं मधुरेण प्रसादनम्। कट्वम्ललवणाद्यैश्च लेखनं कारयेद् बुधः। शैत्यान्निर्वापयेत् तिक्तो रौक्ष्याद् रोपयति द्रुतम्" इति। रूक्षैरित्यञ्जनादिभिः सम्बध्यते। लेपो नयनालेपः। पुटपाकोऽक्षितर्पणजविकारहरलेखनः, शमनो वा ज्ञेयः। पुटपाको हि शालाक्ये स्नेहनलेखनप्रसादनभेदात् त्रिविध उक्तः। तद्विभिश्चेहान्याकारेण प्रपञ्चितः ॥५४—५६॥

चक्रपाणिः—प्रतिमर्षस्य नावनसम्पाद्योभयकर्म्मदर्शनार्थं नावनकर्म्म प्रागुक्तमनूद्यते— स्नेहनमित्यादि। अन्ये सर्व्वनस्तःकर्म्मणामेवैतत् कर्म्मद्वयमनूद्यते, तच्च स्नेहनशमनस्य प्रागुक्तस्यावरोध इति वदन्ति। नस्यार्थमिति स्नेहनं शोधनञ्च। न च दोषवानिति न व्यापत्ति-

तत्र श्लोकौ ।

त्रीणि यस्मात् प्रधानानि मर्म्माण्यभिहतेषु च ।
तेषु लिङ्गं चिकित्साश्च रोगभेदाश्च सौषधाः ॥
विधिरुत्तरवस्तेश्च नस्तःकर्म्मविधिस्तथा ।
षड्व्यापद्भेषजं सिद्धौ मर्म्माध्याये प्रकीर्त्तितम् ॥ ५६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
त्रिमर्म्मीयसिद्धिर्नाम नवमोऽध्यायः ॥ ९ ॥

पुमान् यथोक्तशिरोरोगशमनस्नेहेऽङ्गुलिं मज्जयित्वा नस्तो दद्यात् । न चोत्सिङ्घेत् । अतिशयेनोत्सिङ्घनं न कुर्य्यात् । स प्रतिमर्षः खलु देहानां दार्ढ्यकृत् ॥ ५८ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोकाविति । त्रीणीत्यादि । षड्व्यापद्भेषजम् आमशकृद्वातपित्तकफातिसारोऽतियोगनिरूढभेषजम् ॥ ५९ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । सिद्धिस्थानेऽष्टमेऽप्राप्ते तस्मिन् दृढ़बलेन
तु । प्रतिसंस्कृत एवात्र नवमेऽध्याय एव च । त्रिमर्म्मीयसिद्ध्यभिधे
वैद्यगङ्गाधरेण तु । कृते जल्पकल्पतरौ सिद्धिस्थानेऽष्टमेऽत्र तु ।
स्कन्धे त्रिमर्म्मीयसिद्धिर्नवमोऽध्याय एव यः । तस्य
जल्पाभिधा शाखा नवमी तु समापिता ॥ ९ ॥

मान् । प्रतिमर्षविधिमाह—नस्त इत्यादि । स्नेहाङ्गुलामति स्नेहपूरितामङ्गुलिम् । सर्व्वदेति सर्व्वर्त्तुषु । दार्ढ्यकृदिति शिरःकपालादिदार्ढ्यकृत् । अयं प्रतिमर्षः स्वल्पस्नेहप्रमाणोऽनुत्सिङ्घनश्च सार्व्वकालिको ज्ञेयः । यस्तु भूरिस्नेहमात्रः नासौ सार्व्वकालिकः । यदुक्तम्—"ईषदुत्सिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते । नस्तो निषिक्तं तं विद्यात् प्रतिमर्षं प्रमाणतः ॥" तथा "प्रतिमर्षन्तु न पिबेत् कण्ठाश्रयभयान्नरः । यावत्स्नेहो व्रजेदास्यं तत्प्रमाणञ्च तस्य च ॥" इति । त्रीणीत्यादिसंग्रहो व्यक्तार्थः ॥ ५७—५९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां त्रिमर्म्मीयसिद्धिव्याख्या-
नाम नवमोऽध्यायः ॥ ९ ॥

# दशमोऽध्यायः।

## अथातो वस्तिसिद्धिं व्याख्यास्यामः,

## इतिह स्माह भगवानात्रेयः ॥ १ ॥

सिद्धानां वस्तीनां शस्तानां तेषु तेषु रोगेषु।
शृण्वग्निवेश गदतः सिद्धिं सिद्धिप्रदां भिषजाम् ॥ २ ॥
वलदोषकालरोगप्रकृतीः प्रविभज्य योजितः सम्यक्।
स्वैः स्वैरौषधवर्गैस्तांस्तान् रोगान् नियच्छति ॥
कर्म्मान्यद्ध वस्तिसमं न विद्यते शीघ्रसुखविशोधित्वात्।
आश्वपतर्पणतर्पणयोगाच्च निरत्ययत्वाच्च ॥ ३ ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमाद् वस्तिसिद्धिमाह—अथात इत्यादि। सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—सिद्धानामित्यादि। गदतो मत्तः शृणु ॥ २ ॥

गङ्गाधरः—बलत्यादि। बलादीन् प्रविभज्य सम्यग् योजितो वस्तिः। स्वैः स्वैरौषधवर्गैर्निष्पन्नस्तांस्तान् रोगान् नियच्छति। कर्म्मेत्यादि। कस्मात्? वस्तिसममन्यत् कर्म्म नास्ति, शीघ्रसुखविशोधित्वात्, अपतर्पणतर्पणयोगाच्च आशु निरत्ययत्वाच्च ॥ ३ ॥

चक्रपाणिः—त्रिमर्म्मीयायां बहुरोगप्रतिपादनाद् बहुरोगहितवस्तिप्रतिपादनार्थं वस्तिसिद्धिरुच्यते। अत्रैव वस्तिशब्देन सिद्धवस्तयो वक्ष्यमाणा अभिप्रेताः। सिद्धानामिति प्रसिद्धफलानाम्। तेषु तेष्विति वक्ष्यमाणवातगदादिषु। सिद्धिमिति वस्तिनिष्पादकम्, किंवा वस्त्यभिधायकग्रन्थम् ॥ १। २ ॥

चक्रपाणिः—वस्तेरितिकर्त्तव्यतां गुणांश्च प्रतिपादनीयवस्त्यङ्गभूतानाह—बलदोषेत्यादि। अत्र च बलादौ यथाप्रधानमिह गृहीते सर्व्वपरीक्षावरोधो व्याख्येयः। "परीक्षा दोषौषध" इत्यादिनोक्तोऽप्यर्थः पुनः प्रकरणवशादुच्यते। स्वैः स्वैरौषधवर्गैरिति यथाव्याधिप्रक्षिप्तादितैरौषधैः। स्वान् स्वानिति तत्तद्वस्तिविधेयौषधस्य प्रशमनीयान्। आश्वपतर्पणतर्पणयोगादिति अपतर्पणार्थं प्रयुक्तो वस्तिरन्यापतर्पणभेषजेभ्यः शीघ्रमपतर्पणं करोति। एवं तर्पकद्रव्ययुक्तोऽपि वस्तिः शीघ्रमितरतर्पणापेक्षया तर्पणं करोति ॥ ३ ॥

सत्यपि दोषहरत्वे कटुतीक्ष्णोष्णादिभेषजादानात् ।
दुःखोद्गारोत्क्लेशाहृद्यत्वकोष्ठरुजा विरेके स्युः ॥
अविरेच्यौ शिशुवृद्धौ तावच्चाप्राप्तहीनधातुबलौ ।
आस्थापनमेव तयोः सर्व्वार्थकृदुत्तमं कर्म्म ।
बलवर्णहर्षमार्द्दव-गात्रस्नेहं नृणां दधात्याशु ॥ ४ ॥
अनुवासनं निरूहः सोत्तरवस्तिश्च स त्रिविधः ।
शाखावातार्त्तानां सङ्कुचितस्तब्धभग्नसन्धीनाम् ।
विट्सङ्गाध्मानारुचि-परिकर्त्तिरुगादिषु च शस्तः ॥ ५ ॥
उष्णार्त्तानां शीतान् शीतार्त्तानाञ्च तथा सुखोष्णान् ।
तद्योगौषधयुक्तान् वस्तान् संतर्क्य विधिं नियुञ्ज्यात् ॥६॥

गङ्गाधरः—सत्यपीत्यादि। कटुतीक्ष्णादिभेषजादानाद् दोषहरत्वे सत्यपि दुःखोद्गारादयो विरेके ( सदुःखोद्गाराद्धेतोर्विरेके कथमुत्क्लेशकोष्ठरुजाः ) स्युः। अविरेच्यावित्यादि। अविरेच्यौ शिशुवृद्धौ, कस्मात् ? तावदप्राप्तहीनधातुबलौ। शिशुरप्राप्तधातुबलो वृद्धो हीनधातुबल इति। आस्थापनन्तु तयोः शिशुवृद्धयोः सर्व्वार्थकृदुत्तमं कर्म्म सर्व्वेषां नृणामाशु बलादीन्यादधाति ॥ ४ ॥

गङ्गाधरः—स वस्तिस्त्रिविधोऽनुवासनं निरूह उत्तरवस्तिश्च शाखावातार्त्तादिषु शस्तः। उष्णार्त्तानां शीतानित्येवमादीन् वस्तीन् संतर्क्य विधिं नियुञ्ज्यात् ॥ ५ । ६ ॥

चक्रपाणिः—वस्त्यपेक्षया शोभनान्तरे दोषहरणदोषमाह—सत्यपीत्यादि। कटुकादिभेषजविरेकदानाद् दुःखञ्चोद्गारश्चाऽहृद्यत्वञ्च कोष्ठावरोधश्चेते सर्व्वे भवन्ति। तत्र दुःखं कटुकादिना रसेनोद्वेगादेव भवति। एते दोषा वस्तौ न सम्भवन्तीति भावः। विरेकशब्देन वमनविरेकावेव ग्राह्यौ, किंवा वमनं वस्तिना सममत्यन्तभिन्नविषयतया नोदाहृतम्, विरेकस्तु पक्वाशयस्थेऽपि वस्तिविषये भवतीति कृत्वा विरेकमेव प्रति वस्तेः प्राधान्यमिहोच्यते। अविरेकादिविषये वस्तेर्यौगिकतया प्राधान्यमाह—अविरेच्यावित्यादि। तावित्यादौ यथासङ्ख्यं व्याख्येयम्—अप्राप्तधातुरप्राप्तबलश्च बालः, प्रहीणधातुः प्रहीणबलश्च वृद्धः, एवम्भूतत्वाच्चाविरेच्यावेतौ। सर्व्वार्थकृदिति वातादिदोषहरणबृंहणादिकृत् ॥ ४ ॥

चक्रपाणिः—वस्तिभेदानाह—अनुवासनमित्यादि। तद्योग्यौषधयुक्तानिति उष्णार्त्तिहरेण

वस्तीन् वृंहणीयान् दद्याद् व्याधिषु विशोधनीयेषु।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्त्ताः॥ ७॥
क्षीणक्षतदुर्ब्बलमूर्च्छितकृशशुष्कस्तब्धदोषाणाम्।
दद्यान्न विशोधनीयान् दोषनिबन्धायुषो ये च॥ ८॥
वाजीकरणास्तृक्पित्तयोर्मधुघृतपयोयुताः सर्व्वे।
शस्ताः सतैलमूत्रवचा लवणाश्च कफवाते॥ ९॥
युञ्ज्याद् द्रव्याणि वस्तिष्वम्लं मूत्रं पयः सुरा च काथात्।
अविरोधाद् धातूनां रसयोनित्वाच्च जलमुष्णम्॥

गङ्गाधरः—विशोधनीयेषु व्याधिषु वृंहणीयान् वस्तीन् दद्यात्। मेदस्विप्रभृतयो ये च तेषां न वृंहणीयान् दद्यात्। क्षीणक्षतादीनां विशोधनीयान् वस्तीन् न दद्यात्, दोषनिबन्धायुषां यक्ष्मिणां तेषाञ्च। वाजीकरणासृक्पित्तयोस्तु मधुघृतपयोयुताः सर्व्वे वस्तयः शस्ताः। सतैलादयो वस्तयः कफवाते शस्ताः॥ ७—९॥

गङ्गाधरः—युञ्ज्यादित्यादि। वस्तिष्वम्लमूत्रादीनि द्रव्याणि युञ्ज्यात्।

शीतार्त्तिहरेण वा औषधेन कल्पितान्। विशोधनीयान् व्याधीनुदाहरति—मेदस्विन इत्यादि। विशोध्या येऽपीति भूरिदोषत्वेन ये शोधनार्हा इत्यर्थः। दोषनिबद्धायुष इति दोषे मलादिरूपे देहस्थे निबद्धे आयुर्येषां शोष्यतिदुर्ब्बलप्रभृतीनाम्, ते तथा। उक्तं हि—"शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि। अबलश्चातिमात्रञ्च किं पुनर्यो विरिच्यते" इति॥ ५—८॥

चक्रपाणिः—कार्य्यविशेषापेक्षया वस्तीनां संस्कारविशेषानाह—वाजीकरणेत्यादि। मधुप्रक्षेपो वस्तौ पूर्व्वोक्तसामान्यविधानलब्धेऽप्यधिकमात्रया प्रक्षेपार्थतयाऽवश्यप्रक्षेपार्थञ्चेहोच्यते। अविरोधाद् धातूनामिति पूर्व्वेण सम्बध्यते, तेन यस्मिन् संस्कारे अम्लादीनां मध्ये यद् धातुविरोधि न भवति, तद्देयम्, यत् तु धातुविरोधि भवति, न तद्देयम्। व्याधिप्रकृत्यविरुद्धं यद् यस्य भवति, तत् तस्य देयमित्यर्थः। रसयोनित्वाच्च जलमुष्णमिति जलं यस्माद् रसयोनिः, तेन तदुष्णं सर्व्वसर्व्ववस्तिगतरसस्य च पोषणार्थं सर्व्ववस्तिषु देयम्। एतच्च जलं वस्तिषु साक्षात् प्रक्षेपादर्शनात् कल्कादिपेषणे विनियोज्यम्। किंवा अत्र तद्वचनप्रामाण्यादेव ज्ञेयम्। किंवा जलशब्दोऽयं द्रवोपलक्षणात् तैलाम्लादिद्रवदानस्यैवेयमुपपत्तिः। रसयोनित्वं द्रवसम्बन्धादेवाम्लादीनामुपपन्नम्। अन्ये तु—जलमुष्णं प्रतिनियतमेव, चूर्णवस्तावेवेयमुपपत्तिः, रसयोनित्वावच्छिन्नचूर्णवस्तिश्च यः केवलद्रवेण दीयते। तन्त्रान्तरेऽप्युक्तम्, यथा—"रास्नाक्वाथविल्व

सुरदारुशताह्वैला-कुष्ठमधुकपिप्पलीमधुस्नेहाः।
ऊर्द्धानुलोमभागाः सर्षपाः शर्करा लवणम्॥
आपो वस्तीनामतः प्रयोज्यानि तेषु तानि स्युः।
युक्तानि सह कषायैर्यदुत्तरतः प्रवक्ष्यामि॥ १०॥
चिरजातकठिनबलिषु व्याधिषु तीक्ष्णा विपर्य्यये मृदवः।
सप्रतिवापकषाया योज्यास्त्वनुवासननिरूहाः॥ ११॥
अर्द्धश्लोकैरतः सिद्धान् नानाव्याधिषु वर्गशः।
वस्तीन् वीर्य्यसमैर्भागैर्यथार्हानिह तान् शृणु॥ १२॥

जलञ्चोष्णं युञ्ज्यात्, क्वाथादविरोधात् रसयोनित्वाच्च धातूनां सुरदार्व्वादीनि च युञ्ज्यात्। आप इत्यादि। आपो वस्तीनां मध्ये श्रेष्ठतमा अतस्तेषु वस्तिषु तानि द्रव्याणि प्रयोज्यानि स्युः। कषायैः सह यानि युक्तानि तान्युत्तरतः प्रवक्ष्यामि॥ १०॥

गङ्गाधरः—चिरजातेत्यादि। चिरजातादिषु व्याधिषु तीक्ष्णा वस्तयः। विपर्य्यये अचिरमृदुबलवत्सु मृदवो वस्तयः। सप्रतिवापकषाया अनुवासन-निरूहा योज्याः॥ ११॥

गङ्गाधरः—अर्द्धश्लोकैरित्यादि। यथार्हान् तान् वस्तीनिह शृणु॥ १२॥

शताह्वयेलापूतीककृष्णाफलदारुकृष्णैः। ससैन्धवाम्लोष्णजलैः सतैलैः शूलघ्न इष्टः खलु चूर्णवस्तिः॥" इति।

सुरदार्व्वित्यादिना वस्तिष्वयोगाद्यपेक्षया व्यस्तसमस्तविभया प्रक्षेप्यानाह। आवापा वस्तीनामिति वस्तिष्वावाप्या इत्यर्थः। यानीति कषाययुक्तानि। चिरजातकठिनबलेषु तीक्ष्णा इति, तीक्ष्णद्रव्ययोगेन तीक्ष्णाः, विपर्य्यये चेति अचिरजाते अकठिनबले च। अनुवासननिरूहा इति अनुवासने कषाययोगः स्नेहसाधनार्थमेव, आवापस्त्वनुवासनेऽपि शताह्वादीनां कर्त्तव्य एव। सुश्रुतेऽप्युक्तम्—"पिप्पली मदनं कुष्ठं शताह्वा मधुकं वचा। प्रयोज्यान्मात्रया पिष्ठ्वा आवापमनु-वासने॥" इति॥ ९—११॥

चक्रपाणिः—पूर्व्वं सिद्धानां वस्तीनामित्यादिना प्रतिज्ञातार्थांस्तानाह—अर्द्धश्लोकैरित्यादि। व्याधिष्विरयत्र व्याधिशब्दो दोषेऽपि वर्त्तनीयः। बहुश इति एकैकस्मिन् व्याधौ दोष

विल्वोऽग्निमन्थः श्योनाकः काश्मर्य्यः पाटलिस्तथा।
शालपर्णी पृश्निपर्णी वृहत्यौ वर्द्धमानकः ॥
यवाः कुलत्थाः कोलास्थि स्थिरा चेति त्रयोऽनिले।
शस्यन्ते च चतुःस्नेहाः पिशितस्य रसान्विताः ॥ १३ ॥
नलवञ्जुलवानीर-शतपत्राणि शैवलम्।
मञ्जिष्ठा मधुकानन्ता पयस्या मधुकस्तथा ॥
चन्दनं पद्मकोशीरं पैत्तिके तु गदे त्रयः।
सशर्कराघृतक्षौद्र-सौवीरा वस्तयो हिताः ॥ १४ ॥
अर्कस्तथैव चालर्क एकाष्ठीला पुनर्नवा।
हरिद्रा त्रिफला मुस्तं पीतदारु कुटन्नटम् ॥
पिप्पल्यश्चित्रकश्चेति त्रयस्ते कफरोगिणाम्।
सक्षारक्षौद्रगोमूत्रा नातिस्नेहान्विता हिताः ॥ १५ ॥

गङ्गाधरः—विल्व इत्यादि। विल्वादिपञ्चमूलक्काथ एको वस्तिः। शालपर्ण्यादिवर्द्धमानकान्तानां क्काथ एको वस्तिः। यवादिस्थिरान्तानां क्काथ एक इति त्रयोऽनिले वस्तयः। चतुःस्नेहाः पिशितरसान्विताः शस्यन्ते ॥ १३ ॥

गङ्गाधरः—नलत्यादि। नलमूलम्। वञ्जुलस्तिनिशवृक्षः। वानीरो वेतसवृक्षः। नलादीनां शैवलान्तानां क्काथ एकः। मञ्जिष्ठादिमधुकान्तानां क्काथो द्वितीयः। मधुकद्वयमिह ग्राह्यं पुनः पाठात्। चन्दनादीनां त्रयाणां क्काथस्तृतीयः। एते त्रयो वस्तयः सशर्करादयः पैत्तिके गदे हिताः ॥ १४ ॥

गङ्गाधरः—अर्क इत्यादि। अर्कः श्वेतः, अलर्को रक्तार्कः, एकाष्ठीला वकपुष्पवृक्षः। पुनर्नवान्तानां क्काथ एकः। कुटन्नटः श्योनाकः, हरिद्रादिकुटन्नटान्तानां क्काथो द्वितीयः। पिप्पलीचित्रकयोः क्काथस्तृतीय इति त्रयो वस्तयः सक्षारक्षौद्रगोमूत्राः किञ्चित्स्नेहान्विताः कफरोगिणां हिताः ॥ १५ ॥

च बहुश इत्यर्थः। वीर्य्यसमैर्भागैरिति अन्योऽन्यानुपहतसामर्थ्यैर्द्रव्यभागैः। वर्द्धमानक एरण्डः। पिशितस्य रसा इति प्रक्षिप्तमांसरसाः। वञ्जुलो वेतसः। वाणीरस्तद्भेदः। तुङ्गः पुन्नागः। अलर्को मन्दारः। एकाष्ठीला पाठा। कुटन्नटं कैवर्त्तमुस्तकम्, अन्ये तगरमाहुः।

फलजीमूतकेक्ष्वाकु-धामार्गवोड्वत्सकाः ।
श्यामाकस्त्रिवृता चैव तथा दन्ती द्रवन्त्यपि ॥
प्रकीर्य्या चोदकीर्य्या च चक्रिणी नलिनी तथा ।
सप्तला शङ्खिनी लोध्रं फलं कम्पिल्लकस्य च ॥
चत्वारो मूत्रसिद्धास्ते पक्वाशयविशोधकाः ।
व्यस्तैरपि समस्तैश्च चतुर्योगा उदाहृताः ॥ १६ ॥
काकोली क्षीरकाकोली मुद्गपर्णी शतावरी ।
मधुकश्च विदारी च शृङ्गाटककशेरुकम् ॥
आत्मगुप्ताफलं माषाः सगोमूत्रा यवास्तथा ।
जाङ्गलानूपजं मांसमित्येते शुक्रमांसदाः ॥ १७ ॥
जीवन्ती चाग्निमन्थश्च धातकीपुष्पवत्सकौ ।
प्रग्रहं खदिरं कुष्ठं शमी पिण्डीतको यवाः ॥
प्रियङ्गुरक्तमूली च तरुणी स्वर्णयूथिका ।
वटाद्याः किंशुकं लोध्रमिति सांग्राहिका मताः ॥ १८ ॥

गङ्गाधरः—फलेत्यादि । फलं मदनफलं धामार्गवः घोषकः आक्षोड़ः पीलु, फलादिवत्सकान्तानां क्वाथ एकः । श्यामाको श्याममूला त्रिवृत्, श्यामाकादि-द्रवन्त्यन्तानां क्वाथो द्वितीयः । प्रकीर्य्यादिनलिन्यन्तानां क्वाथस्तृतीयः । सप्तलादिकम्पिल्लकान्तानां क्वाथश्चतुर्थः । एते चत्वारो मूत्रसिद्धा गोमूत्रपक्वाः क्वाथाः पक्वाशयशोधकाः ॥ १६ ॥

गङ्गाधरः—काकोलीत्यादि । काकोल्यादिशतावर्य्यन्तानां क्वाथ एकः । मधुकादिकशेरुकान्तानां क्वाथो द्वितीयः । आत्मगुप्तादियवान्तानां क्वाथस्तृतीयः । जाङ्गलानूपजमांसक्वाथश्चतुर्थ इत्येते चत्वारो वस्तयः शुक्रमांसदाः ॥ १७ ॥

गङ्गाधरः—जीवन्तीत्यादि । जीवन्त्यादिवत्सकान्तानां क्वाथ एकः । प्रग्रहादियवान्तानां क्वाथो द्वितीयः । प्रियङ्ग्वादिस्वर्णयूथिकान्तानां क्वाथस्तृतीयः ।

क्ष्वेड़ः कृतवेधनः । द्रवन्ती दन्तीभेदः । प्रकीर्य्या करञ्जः । नीलिनी नीलसमाह्वा, ( नील-बुह्ना ) नीलाञ्जलिकेत्यन्ये । एते शुक्रमांसदा इति अत्रैव इति चत्वारः पूर्व्वोक्ताः । पिण्डीतको

पयः शृतं परि(यः)स्रावे सवृश्चीरपुनर्नवम्।
आखुपर्णिकया वापि तण्डुलीयकयुक्तया॥
कोलकतककाण्डेक्षु-दर्भपत्रीक्षुवालिषु।
दाहघ्नः सघृतक्षीरो द्वितीयश्चोत्पलादिभिः॥ १९॥
कर्व्वुदाराढ़कीनीप-विदुलैः क्षीरसाधितैः।
वस्तिः प्रदेयो भिषजा शीतः समधुशर्करः।
परिकर्त्ते तथा वृन्तैः श्रीपर्णीकोविदारजैः॥ २०॥
मुष्टिः शाल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः।
हितः प्रवाहणे तद्वद्‌ वेष्टैः शाल्मलिकस्य च॥ २१॥

वटाद्याः मूत्रसंग्रहणीयदशानां जम्ब्वाम्रप्लक्षवर्ज्जं वटकपीतनादयः सप्त किंशुकं लोध्रमित्येषां क्वाथश्चतुर्थः। इति चत्वारो वस्तयः सांग्राहिका मताः॥ १८॥

गङ्गाधरः—पय इत्यादि। सवृश्चीरपुनर्नवं शृतं पक्वं पयः परिस्रावे ( पयः-स्रावे जलवत् स्रावे ) वस्तिर्हितः। तण्डुलीययुक्ताखुपर्णीशृतं पयो वा परिस्रावे वस्तिः। कोलेत्यादि। कोलादिकेक्षुवालिकान्तेषु क्वथितेषु सघृतक्षीरो वस्तिरेकः। दर्भपत्री कत्तृणम्। उत्पलादिभिः पद्मोत्पलनलिनेत्यादीनि मूत्रविरजनीयानि दश पद्मवर्ज्जं नवभिः क्वाथः सघृतक्षीरो द्वितीयो वस्तिर्दाहघ्नः॥ १९॥

गङ्गाधरः—कर्व्वुदारेत्यादि। कर्व्वुदारो रक्तकाञ्चनः। कर्व्वुदारादिभिः क्षीरसाधितैः क्वाथः समधुशर्करः शीतो वस्तिः प्रदेयः परिकर्त्ते। तथा श्रीपर्णीकोविदारजवृन्तैः क्षीरसाधितः समधुशर्करः शीतो वस्तिः परिकर्त्ते प्रदेयः। मुष्टिरित्यादि। शाल्मलिवृन्तानां मुष्टिः पलं क्षीरसिद्धो वस्तिर्घृतान्वितः प्रवाहणे हितः। शाल्मलिकस्य वेष्टः क्षीरसिद्धो घृतान्वितो वस्तिः प्रवाहणे तद्वद् हितः॥ २०। २१॥

मदनः। रक्तमूली समाङ्गा। तरुणी रामतरुणी, नवमालिका वा। तण्डुलीयकमित्यन्तेन परिस्राव उक्तौ। काण्डेक्षुर्बृहदिक्षुः। पोटगलो होगलः। उत्पलादिभिरिति उत्पलादयो नलिनसौगन्धिकादयो जलजाः पुष्पविशेषाः। कर्व्वुदारः काञ्चनालः। विदुलो वेतसः। कोविदारजैरित्यन्तेन द्वितीयः—परिकर्त्ते। शाल्मलिवृन्तानामित्यन्तेन द्वितीयः प्रवाहणे॥ १९—२१॥

अश्वावरोहिका काक-नासा राजकशेरुकः ।
सिद्धाः क्षीरे त्रयो योगा क्षौद्राञ्जनघृतैर्युताः ॥
न्यग्रोधाद्यैश्चतुर्भिश्च तेनैव विधिना पुनः ।
वस्तिः प्रवाहणे देयो भिषजा कल्पितो धिया ॥ २२ ॥
वृहती क्षीरकाकोली पृश्निपर्णी शतावरी ।
काश्मरी वदरी दूर्व्वा तथोशीरप्रियङ्गवः ॥
जीवनीयैः शृतैः क्षीरद्वौ घृताञ्जनसंयुतौ ।
वस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥
गोऽव्यजामहिषीक्षीरैर्जीवनीययुतैरपि ।
तेनैव विधिना वस्तिर्देयः सक्षौद्रशर्करः ॥ २३ ॥
शशैणदक्षमार्ज्जार-महिषाव्यजशोणितैः ।
सद्यस्कैर्मृदुभिर्वस्तिर्जीवादाने प्रशस्यते ॥ २४ ॥

गङ्गाधरः—अश्वेत्यादि । अश्वावरोहिका अश्वत्थावरोहत्वचः काकनासा काउयाठुठी राजकशेरुकः इत्येते पृथक् क्षीरे सिद्धाः क्षौद्ररसाञ्जनघृतयुताः त्रयो योगाः प्रवाहणे हिताः स्युः । न्यग्रोधाद्यैरित्यादि । न्यग्रोधोडुम्बराश्वत्थ-प्लक्षश्चतुर्भिः क्षीरे सिद्धैः कृतो वस्तिः क्षौद्राञ्जनघृतयुतो प्रवाहणे हितः ॥ २२ ॥

गङ्गाधरः—वृहतीत्यादि । वृहत्यादिशतावर्य्यन्तकल्को जीवनीयदशकेन क्षीरैः शृतरेकः । क्षीरजीवनीयदशभिः पक्वः काश्मर्य्यादिप्रियङ्ग्वन्तकल्क इत्येक इति द्वौ वस्ती घृतरसाञ्जनयुक्तौ समधुशर्करौ प्रदेयौ । गोऽव्यजेत्यादि । गवादीनां क्षीरजीवनीयकल्कयुतरपि वस्तयः घृतरसाञ्जनयुताः समधुशर्कराः शीताः प्रवाहणे हिताः ॥ २३ ॥

गङ्गाधरः—शशणेत्यादि । शशादीनां सद्यस्कः शोणितमृदुभिर्द्रव्ययुतो वस्तिर्जीवादाने प्रशस्यते ॥ २४ ॥

चक्रपाणिः—अश्वावरोहकोऽश्वगन्धा, अश्वकर्ण इक्षुको वा । न्यग्रोधाद्याश्चत्वारः—न्यग्रोधोडुम्बराश्वत्थप्लक्षाः । तेनैव विधिनेति पूर्व्वयोगविधिना । एतौ द्वावतियोगे । जीवादान इति च शोणित-प्रवृत्तौ । गोऽव्यजेत्यादिना जीवादाने प्रशस्यते इत्यन्तेन जीवादाने तृतीयो वस्तिरुच्यते ।

मधूकमधुकद्राक्षा-दूर्व्वाकाश्मर्य्यचन्दनैः ।
शर्कराचन्दनद्राक्षा-मधुधात्रीफलोत्पलैः ॥
रक्तपित्ते प्रमेहे च कषायः सोमवल्कतः ।
वस्तिर्देयो विधिज्ञेन भिषजा युक्तिकल्पितः ॥ २५ ॥

तत्र श्लोकाः ।

त्रिकास्त्रयोऽनिलादीनां चतुष्काश्च परे त्रयः ।
पक्वाशयविशुद्ध्यर्थं वृष्याः सांग्राहिकास्तथा ॥
परिस्रावे तथा दाहे परिकर्त्ते प्रवाहणे ।
सातियोगे मतौ द्वौ द्वौ जीवादाने तथा त्रयः ॥
द्वे रक्तपित्ते मेहे च एकस्त्रिंशच्च पञ्च च ।
सुलभाल्पौषधक्लेशा वस्तयो गुणवत्तमाः ॥ २६ ॥
गुल्मातिसारोदावर्त्त-स्तम्भसङ्कुचिताद्रिषु ।
सर्व्वाङ्गैकाङ्गरोगेषु रोगेष्वेवंविधेषु च ॥

गङ्गाधरः—मधूकेत्यादि। मधूकादिचन्दनान्तः क्काथ एकः, शर्करादुत्पलान्तः क्काथो द्वितीयः। सोमवल्कतः क्काथस्तृतीयः इति त्रयः कषाया वस्तयो रक्तपित्ते प्रमेहे च हिताः ॥ २५ ॥

अयञ्च यद्यपि श्लोकविहितो वस्तिः, तथापि श्लोकार्द्ध रिति प्रतिज्ञा भूरिप्रयोगाणां श्लोकार्द्धविहितत्वं न ज्ञेया। किंवा अत्रापि गोऽव्यजत्यादिनार्द्धश्लोकविहित एव व्यवस्थितः, पूर्व्वार्द्धेन तु तस्येतिकर्त्तव्यतोच्यते, इतिकर्त्तव्यताभिधानञ्च श्लोकार्द्धादतिरेकेणापि भवतीति नियोगान्तरेष्वपि द्रष्टम्। रक्तपित्ते प्रमेहे इतिच्छेदः। सोमवल्को विटखदिरः। एतौ द्वौ मिलित्वा संग्रहे पठितौ। रक्तपित्ते प्रमेहे चेत्यनेन संग्रहो व्यक्त एव ॥ २२—२५ ॥

चक्रपाणिः—सुलभाल्पौषधक्लेशा इति सुलभा अल्पौषधक्लेशाश्च। अनुक्तवस्तिकल्पनार्थमाह—

यथास्वमौषधैः सिद्धान् वस्तीन् दद्याद् विचक्षणः ।
पूर्व्वोक्तेन विधानेन कुर्य्याद् योगान् पृथग्विधान् ॥२७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
वस्तिसिद्धिर्नाम दशमोऽध्यायः ॥ १० ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोका इति । त्रिकास्त्रय इत्यादि । उक्त-योगाधिकयोगानुपसंहरति । गुल्मेत्यादि ।

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते । सिद्धिस्थानेऽष्टमेऽप्राप्ते तस्मिन्
दृढबलेन तु । प्रतिसंस्कृत एवात्र दशमे वस्तिसिद्धिके । वद्य-
गङ्गाधरकृते जल्पकल्पतरौ पुनः । स्कन्धेऽष्टमे वस्तिसिद्धि-
जल्पाख्या दशमीरिता । सिद्धिस्थाने शाखेयन्तु
वद्यानां हृदयङ्गमा ॥ १० ॥

गुल्मातिसारेत्यादि । यथास्वमौपधैरिति यथास्वव्याधिप्रत्यनीकैर्भेषजैः । कुर्य्याद्योगान् पृथग्विधा-निति यथोक्तविधिना योगान् यथोचितान् गुल्मादिषु कल्पनया वस्तिषु कुर्य्यात् ॥ २६ २७ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां वस्तिसिद्धिव्याख्या-
नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

अथातः फलमात्रासिद्धिं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

भगवन्तमुदारसत्त्वधी-श्रुतविज्ञानसमृद्धमत्रिजम् ।
फलवस्तिवरत्वनिश्चये सविवादा मुनयोऽभ्युपागमन् ॥
भृगुकौशिककाप्यशौनकाः सपुलस्त्यासितगौतमादयः ।
कतमत् प्रवरं फलादिषु स्मृतमास्थापनयोजनास्विति ॥२॥
कफपित्तहरं वरं फलेष्वथ जीमूतकमाह शौनकः ।
मृदुवीर्य्यतया भिनत्ति तत् शकृदित्याह नृपोऽथ वामकः ॥
कटुतुम्बीफलमन्यथोत्तमं वमने दोषसमीरणं तदन्यत् ।
तदवृष्यमसौक्ष्म्यतीक्ष्णता-कटुरूक्षादिति गौतमोऽब्रवीत् ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमात् फलमात्रासिद्धिमाह—अथात इत्यादि । पूर्व्ववत् सर्व्वं व्याख्येयम् ॥ १ ॥

गङ्गाधरः—भगवन्तमित्यादि । उदारसत्त्वादिभिः समृद्धम् । भृग्वादयो मुनयोऽभ्युपागमन् । इतील्यन्तम् ॥ २ ॥

चक्रपाणिः—पूर्व्वसिद्धिषु फलानि आचार्य्येण प्रयोगेण विहितानि, तेन तेषां फलादीनां गुणादीनामवधारणार्थं तथा अनुक्तवस्त्युपदर्शनार्थं फलमात्रासिद्धिरुच्यते । वस्तिविधानकथनं यद्यपि अप्रस्तुतं तथापि यौगिकतया वस्तेरेव मात्रा प्रतिपाद्यते न, फलादौ तथा गुणादौ वस्तिमात्रायाः प्रतिपादिका सिद्धिः फलमात्रासिद्धिः । फलादीनां वस्तियोगेन गुणान् प्रतिपादयितुं पूर्व्ववृत्तमितिहासमाह— भगवन्तमित्यादि । इतिहासश्च संहितायां धर्म्म्यतया ग्रन्थे पूज्यतोपदर्शनार्थम् । फलादीनां वस्तौ वरत्वं फलवस्तिवरत्वं तस्मिन्निश्चये अवधारणे । फलादिष्विति मदनजीमूतकादिषु ॥ १ । २ ॥

चक्रपाणिः—कल्पे जीमूतकस्य यद्यपि पित्तदोषहरत्वमुक्तं तथापि इह वचनात् कफपित्तहरत्वमस्य प्राधान्यादुन्नीयते । मृदुवीर्य्यतया भिनत्तीत्यादिना अत्यर्थं भिनत्ति । दोषसमीरणमिति

कफपित्तनिवर्हणं वरं स च धामार्गवमित्यमन्यत ।
तदमन्यत वातलं पुनर्वड़िशो ग्लानिकरं बलापहम् ॥
कुटजं प्रशशंस चोत्तमं न बलघ्नं कफपित्तहारि च ।
अथ विज्जलमूर्द्धभागिकं पवनघ्नोभि च काप्य आह तत् ॥
कृतवेधनमाह वातलं कफपित्तं प्रबलं हरेदिति ।
तदसाध्विति तत्र शौनक कटुकश्चापि बलघ्नमित्यपि ॥
इति तद्वचनानि हेतुभिः सुविचित्राणि निशम्य बुद्धिमान् ।
प्रशशंस फलेषु निश्चयं परमं चात्रिसुतोऽब्रवीदिदम् ॥ ३ ॥
फलदोषगुणान् सरस्वती प्रति सर्व्वैरपि सम्यगोरिता ।
न हि किञ्चिददोषनिर्गुणं गुणभूयिष्ठमतो विचिन्त्यते ॥४॥
इह कुष्ठहिता खरागरो हितमिक्ष्वाकु तु देह उत्तमम् ।
कुटजस्य फलं हृदामये प्रवरं कोठफलञ्च पाण्डुषु ॥
उदरे कृतवेधनं हितं मदनं सर्व्वगदाविरोधि च ।
मधुरं सकषायतिक्तकं तदरूक्षं सकटूष्णविज्जलम् ॥

गङ्गाधरः—तत्राह—कफपित्तेत्यादि । जीमूतकफलं फलेषु वर शौनक आह । इतीत्यादि । तद्वचनानि तेषां शौनकादीनां वचनानि ॥ ३ ॥

गङ्गाधरः—इदं किमब्रवीत् तदाह—फलदोषेत्यादि । ( फलेषु दोषान्तरं गुणान्तरन्त्वत्ति अतिशयं प्रति सर्व्वैर्भगवद्भिरति साम्ये भाषितम् । ) कस्मात् ? न हीत्यादि । हि यस्मात् किञ्चिदपि द्रव्यं न निर्दोषं निर्गुणं वा वर्त्तते । अतो गुणभुयिष्ठं विचिन्त्यते ॥ ४ ॥

बस्तिना दोषहारकम् । कृतवेधनमित्यादौ आशु कफपित्तं हरेदिति योज्यम् । इह वस्तिविवादका इत्यनेन जीमूतकादीनां गुणदोषाश्च कथिता भवन्तीति तात्पर्य्यं ज्ञेयम् । प्रशशंसेति फलेषु जीमूतकादिषु फलदोषान् लक्ष्यीकृत्य ॥ ३ ॥

चक्रपाणिः—सरस्वतीति वाक् । अदोषनिर्गुणमिति दोषवदेव गुणवदेव वा न किञ्चिदित्यर्थः । तेनात्यपि श्लोके दोषसम्बन्धे यद् गुणभूयिष्ठं तदिह रोगप्रशमप्रयोगेषु विज्ञेयम् । सर्व्वगदाविरोधीति-

कफपित्तजिदाशुकारि चाप्यनपायं पवनानुलोमनम्।
फलनामविशेषतस्ततो लभतेऽन्येषु फलेषु सत्स्वपि॥ ५ ॥
गुरुणा च वचस्युदाहृते मुनिसङ्घेन च पूजिते ततः।
प्रणिपत्य मुदा समन्वितः सहितः शिष्यगणोऽनु पृष्टवान्॥
सर्व्वकर्म्मगुणकृद् गुरुणोक्तो वस्तिरूर्द्ध्वमथवेदिना मतः।
नाभ्यधोगुदगतश्च शरीरात् सर्व्वतः कथमपोहति दोषान्॥६॥
तद् गुरुरब्रवीदिदं शरीरं तन्त्रयतेऽनिलः सङ्गविघातात्।
केवल एव दोषसहितो वा ह्यपगमप्रकोपमुपयाति॥
तं पवनं सपित्तकफविट्कं शुद्धिकरोऽनुलोमयति वस्तिः।
सर्व्वशरीरगश्च गदसङ्घातः प्रकाशनात् प्रशान्तिमुपयाति॥७॥

गङ्गाधरः—इहेत्यादि। खरागरी देवताड़फलं कुटजस्य फलं हृदामये हितम्। कोठफलं कोठोडुम्बरफलम्॥ ५॥

गङ्गाधरः—गुरुणेत्यादि। गुरुणा पुनर्व्वसुना खल्वेवमुदाहृते वचसि मुनिसङ्घेन पूजिते सति ततः शिष्यगणः सहितो युगपत् तं गुरुं प्रणिपत्य मुदान्वितः सन्ननुपृष्टवान्। यत् पृष्टं तदाह—सर्व्वकर्म्म सर्व्वगुणकृद्वस्तिर्गुरुणाथर्वेदिनोद्ध्वमुक्तः। नाभेरधस्ताद् गुदगतो वस्तिः कथं सर्व्वतः शरीराद् दोषानपोहति॥ ६॥

गङ्गाधरः—तदुत्तरं गुरुरब्रवीदिदमित्यादि। शरीरमित्यादि। अनिलः शरीरं सङ्गविघातात् तन्त्रयते। केवल एवानिलो दोषसहितो वाप्यपगमप्रकोपमुपयाति। शुद्धिकरो वस्तिस्तं पवनं सपित्तकफविट्कमनुलोमयति। सर्व्वशरीरगश्च गदसङ्घातः प्रकाशनाच्च शान्तिमुपयाति॥ ७॥

पदेन मदनस्य सार्व्वयौगिकत्वं ब्रूते। आशुकारीत्याशुदोषनिर्हरणकारि अतो लघुतेति। फलेषु प्रकर्षत्वादेव मदनफलं फलमित्युच्यते न जीमूतकादिफलम्॥ ४। ५॥

चक्रपाणिः—सर्व्वकर्म्मगुणकृदिति सर्व्वकर्म्मणां वमनादीनां गुणं दोषहरणादिकं करोतीति सर्व्वकर्म्मगुणकृत्। किंवा सर्व्वकर्म्माणि लङ्घनबृंहणादीनि गुणांश्च बलाग्न्यादीन् करोति। नाभ्यधोगुदमिति अधोगुदं व्रजति। तन्त्रयते धारयते। सङ्गविघातादिति प्रकोपकहेतुसम्बन्धात्। वात एव प्राय

अथाभिगम्याथमखण्डितं धिया गजोष्ट्रगोऽश्वाव्यजवस्तिकर्म्म।
अपृच्छदेनं स तु वस्तिमब्रवीद् विधिश्च तस्याह पुनः प्रचोदितः॥८
अजाविके सौम्य गजोष्ट्रयोर्वा गवाश्वयोर्वस्तिमुशन्ति माहिषम्।
अजाविकादुत्तसुवस्तिमुत्तरं वदन्ति वस्तिं विपरीतरूपम्॥
सुवस्तिमष्टादशषोड़शाङ्गुलं तथैव नेत्रञ्च दशाङ्गुलं क्रमात्।
गजोष्ट्रगोऽश्वाव्यजवस्तिसन्धौ चतुर्थभागे कृतकर्णिकं वदेत्॥ ९ ॥
प्रस्थस्त्वजाव्योर्हि निरूहमात्रा गवादिषु द्वित्रिगुणो यथाबलम्।
निरूह उष्ट्रस्य तथाढ़कद्वयं गजस्य वृद्धिस्त्वनुवासनेऽष्टमः॥ १० ॥

गङ्गाधरः—अथेत्यादि। गजादिवस्तिकर्म्म अपृच्छत्। एनं गुरुम्, स गुरुः। अजेत्यादि। अजाविके अजे चाविके च गजे चोष्ट्रे च गवि चाश्वे च वस्तिं वस्तिकर्म्म उशन्ति माहिषञ्च महिषस्यापि वस्तिकर्म्म उशन्ति, त एव विपरीतरूपं पायुपथेन देयवस्तिविपरीतं मूत्रापत्यपथेन देयरूपं वस्तिमुत्तरवस्ति सुवस्तिं नाम वदन्ति। तस्य नेत्रपरिमाणमाह—सुवस्तिमित्यादि। अष्टादशाङ्गलं षोड़शाङ्गलं दशाङ्गुलञ्च क्रमान्नेत्रम्। गजोष्ट्रयोरष्टादशाङ्गुलं गवाश्वयोः षोड़शाङ्गुलं अव्यजयोर्दशाङ्गुलं तस्य च चतुर्थभागे कृतकर्णिकं गवादिवस्तिसन्धौ वदेत्॥ ८। ९॥

गङ्गाधरः—तत्र मात्रामाह—प्रस्थ इत्यादि। अजाव्योर्निरूहदाने प्रस्थो मात्रा। गवाश्वयोर्द्विगुणप्रस्थो मात्रा, गजोष्ट्रयोस्त्रिगुणप्रस्थो मात्रा। तथा

प्रकोपं व्रजति। यस्तु प्रदेशान्तरे वातप्रकोपः स तन्मूलेनेति भावः। तत्प्रशान्तिमुपयाति पक्वाशयस्थवातमूलप्रशमाद् वस्तिना कृतात् तन्मूलानुबन्धाः शेषस्थानगतविकाराः प्रशाम्यन्ति। एतच्च वनस्पतिमूलच्छेदादिदृष्टान्तेन प्राक् प्रतिपादितमेव। एतेन वस्तिना मूलविजयाद् देशान्तर्गततन्मूलविकारजयो यः क्रियते, स उक्तः। यत् तु वस्तेर्वीर्य्यमापादमस्तकं प्रसरति तच्च वातं हन्तीति प्रागुक्तमेव ज्ञेयम्। यत् तु वीर्य्यवदिति कर्म्मविशेषणं तेन कर्म्म रोगनुदिति रोगहरणे श्रेष्ठं चिकित्सितमित्यर्थः। वस्तिमब्रवीदिति गजादीनां रोगहरणे श्रेष्ठं वस्तिमेवाब्रवीत्। तदनन्तरं तस्य वस्तेर्विधिं पुनः शिष्येण पृष्टः प्राह—अजाविकेत्यादि। जरद्गवो वृद्धवृषः। तदुपायचिन्तका इति गजादिवस्तिसाधने दत्तचित्तकाः। क्रमादिति यथाक्रमम्। गजादिषु नेत्रप्रमाणं चतुर्थभागोपनयमिति नेत्रचतुर्थभागप्रवेशकम्। गवादिष्विति गोप्रकारेषु गोमहिषाश्वानां ग्रहणाद् बहुवचनं

कलिङ्गकुष्ठे मधुकं सपिप्पली वचा शताह्वा मदनं रसाञ्जनम्।
हितानि सर्व्वेषु गुड़ः ससैन्धवो द्विपञ्चमूलस्य विकल्पना त्वियम्॥
गजेऽधिकोऽश्वत्थवटाश्वकर्णजाः सखादिरप्रग्रहशालतालजाः।
तथा च उष्ट्रे धवशिग्रुपाटला मधूकसाराः सनिकुम्भचित्रकाः॥
पलाशभूतीकसुराह्वरोहिणी कषाय उक्तस्त्वधिको गवां हितः।
पलाशदन्तीसुरदारुकत्तृण-द्रवन्त्य उक्तास्तुरगस्य चाधिकाः॥
खरोष्ट्रयोः पीलुकरीरखादिराः शम्पाकविल्वादिगणस्य च च्छदाः।
अजाविकानां त्रिफलापरूषकं कपित्थकर्कन्धुसविल्वकोलजम्॥११॥
अथाग्निवेशः सततोऽन्तरान्तरा हितञ्च पप्रच्छ गुरुस्तदाह च।
सदातुराः श्रोत्रियराजसेवकास्तथैव वेश्याः सह पण्यजीविभिः॥

यथावलं निरूह उष्ट्रस्याढ़कद्वयम्, तथा गजस्य यथावलं वृद्धिः। अनुवासने निरूहस्याष्टमो भागो मात्रा॥ १०॥

गङ्गाधरः—तत्र द्रव्यमाह—कलिङ्गेत्यादि। कलिङ्गादीनि प्रत्येकं काथयित्वा तत्र रसाञ्जन जलेन गोलयित्वा तेषु सर्व्वेषु गुड़सैन्धवञ्च दत्त्वा मथित्वा निरूहं कुर्य्यात्। द्विपञ्चमूलस्य दशमूलस्य निरूहे चयं कल्पना। सर्व्वेषां निरूहमुक्त्वा विशेषमाह—गज इत्यादि। गजेऽधिकोऽश्वत्थादीनां काथः। अश्वकर्णः शालः। खदिरादीनां काथश्च। तथा चोष्ट्रे धवादिकाथः। पलाशेत्यादि। पलाशादि कषायो गवां हितः। पलाशदन्त्यादिकषायोऽश्वस्य हितः। खरेत्यादि। खरोष्ट्रयोः पील्वादिकाथः, शम्पाकादिच्छदाश्च। अजाविकानां त्रिफलादिज काथम्॥ ११॥

गङ्गाधरः—अथात्र प्रश्नः। अन्तरान्तराऽग्निवेशस्ततो हितं गुरुं पप्रच्छ।

साधु। गजस्य वृद्धिरिति द्व्याढ़कद्वैगुण्येन द्रोण इत्यर्थः। अनुवासनेऽष्टम इति यथोक्ताजादिनिरूहमानादजादीनामनुवासनेऽष्टमः स्नेहभागो देयः॥ ६—१०॥

चक्रपाणिः—विकल्पना त्वियमिति विशेषकल्पना गजेऽधिका वक्ष्यमाणा। तालजाः तालफलम्। तथैवेत्यादिना गवां हितमुच्यते॥ ११॥

चक्रपाणिः—वस्तिविषयाणि मतान्तराणि दर्शयन्नाह—अथाग्निवेशइत्यादि। हितञ्चेति

द्विजो हि शिष्याध्ययनव्रताह्निक-क्रियादिभिर्देहहितं न चेष्टते ।
नृपोपसेवी नृपवित्तरक्षणात् परानुरोधाद् बहुचिन्तनाद् भयात् ॥
नृचित्तवर्त्तिन्युपचारतत्परा मृजाविभूषानिरता वराङ्गना ।
सदासनादत्यनुबन्धविक्रयात् क्रयादिलोभादपि * पण्यजीविनः ॥
सदैव ते त्वागतवेगनिग्रहं समाचरन्ते न च कालभोजनम् ।
अकालनिर्हारविहारसेविनो भवन्ति येऽन्येऽपि सदातुराश्च ते ॥ १२
समीरणं वेगविधारणोद्धतं विबद्धसर्व्वाङ्गरुजाकरं भिषक् ।
समीक्ष्य तेषां फलवर्त्तिमादितः सुकल्पितां स्नेहवतीं प्रयोजयेत् ॥ १३
पुनर्नवैरण्डनिकुम्भचित्रकान् सदेवदारुत्रिवृतानिदिग्धिकान् ।
महान्ति मूलानि च पञ्च तद्भवान् विपाच्य मूत्रे दधिमस्तुसंयुते ॥

गुरुश्च तदाह— सदातुरा इत्यादि । श्रोत्रियादयः सदातुराः । तत्र श्रोत्रिया येन कारणेन सदातुरास्तदाह—द्विज इत्यादि । राजसेवका येन सदातुरास्तदाह—नृपोपेत्यादि । वेश्या येन सदातुरास्तदाह—नृचित्तेत्यादि । पण्यजीविनो येन सदातुरास्तदाह— सदेत्यादि । सदा ह्युपविश्य वर्त्तते अत्यनुबन्धविक्रयात् क्रयादिलोभाच्च पण्यजीविनः सदातुराः । एभिः प्रयोजनस्ते श्रोत्रियादयः आगतवेगनिग्रहादीन्याचरन्ति । इत्येवमकालनिर्हारादयो ये तेऽपि सदातुरा भवन्ति । तेषां चिकित्सामाह— समीरणमित्यादि । स्नेहवतीं फलवर्त्तिम् ॥१२।१३

गङ्गाधरः— पुनर्नवेत्यादि । महान्ति पञ्चमूलानि बिल्वादिपञ्चमूली ।

सदातुराणां हितम् । पण्यजीविनो वणिजः । यथोक्तानां सदातुरत्वे हेतुमाह—द्विजो हीत्यादि । देहहितं न चेष्टते इत्यादि पण्यजीविन इत्यन्तं यावदनुवर्त्तनीयम् । परानुरोधादिति नृपानुजीविपुरुषान्तरानुरोधात् । उपचारतत्परा इति पुरुषोपकारतत्पराः । मृजा शरीरमार्जनम् । पण्यं गता वेश्या इत्यर्थः । अत्यर्थं बहुविक्रयादिलोभादिति निरन्तरानुबद्धक्रयविक्रयादेर्लोभात् । अन्यानपि सदातुरानाह— अकालेत्यादि । निर्हारो मलादिनिर्गमः ॥ १२ ॥

---

* अत्यनुबन्धविक्रयक्रयादिलोभादपि इति पाठान्तरम् ।

सतैलसर्पिर्लवणैश्च पञ्चभिर्विमूर्च्छितं वस्तिमथ प्रयोजयेत्।
निरूहितं धन्वरसेन भोजितं निकुम्भतैलेन ततोऽनुवासयेत् ॥१४॥
बलाश्वशाखाफलविल्वचित्रकान् द्विपञ्चमूले कृतमालकोत्पले।
यवान् कुलत्थांश्च पचेज्जलाढ़के रसः सपेष्यैस्तु कलिङ्गकादिभिः॥
सतैलसर्पिर्गुड़सैन्धवो हितः सदातुराणां बलवर्णवर्द्धनः।
तथानुवासान् मधुकेन साधितान् फलेन विल्वेन शताह्वयापि वा ॥१५
सजीवनीयस्तु रसोऽनुवासने निरूहणे वा लवणः शिशोर्हितः।
न चान्यदाश्वङ्गबलाभिवर्द्धने निरूहवस्तिः शिशुवृद्धयोः परः ॥१६॥

पुनर्नवादीन् महापञ्चमूलान्तान् दधिमस्तुसंयुते गोमूत्रे विपाच्य क्वाथं सतैलसर्पिः पञ्चभिर्लवणैश्च युक्तं सर्व्वं खजेन विमूर्च्छितं वस्तिं प्रयोजयेत्। एवं निरूहितं श्रोत्रियादिकं समुद्धतवायुं धन्वरसेन भोजयित्वा निकुम्भतैलेन दन्तीसाधिततैलेनानुवासयेत् ॥ १४ ॥

गङ्गाधरः—बलेत्यादि। अश्वः अश्वगन्धा। बलादीन् जलाढ़के पक्त्वा स रसः कलिङ्गकादिभिः कल्कैर्दशकैर्युतः सतैलादिर्वस्तिर्बलवर्णवर्द्धनः। एतेन निरूहं दत्त्वा येनानुवासयेत् तदाह—तथेत्यादि। मधुकेन साधितान् विल्वफलेन साधितान् शताह्वया साधितान् वा प्रयोजयेत् ॥ १५ ॥

गङ्गाधरः—सजीवनीयस्त्वित्यादि। सजीवनीयस्तु मांसरसोऽनुवासने शिशोर्हितो निरूहणे वा सजीवनीयो लवणो हितः। यूनां नृणां यथा निरूहवस्तिराशु शीघ्रमङ्गबलाभिवर्द्धनो हितः तथा शिशुवृद्धयोः परो निरूहवस्तिः श्रेष्ठः ॥ १६ ॥

चक्रपाणिः—पुनर्नवेत्यादि निरूहः। त्रिवृता दन्ती। महान्ति मूलानि पञ्चेति विल्वादिपञ्चमूलानि। निकुम्भतैलेनेति निकुम्भकाथकल्कसिद्धेन तैलेन। बलामित्यादौ कलिङ्गकादिभिरिति कलिङ्गकुष्ठमधुकपिप्पल्यादिभिरिहोक्तैः। फलेन विल्वेन शताह्वया पिबेदिति तैलत्रयमानुवासनिकम्। सजीवनीयस्तु रसोऽनुवासन इति जीवनीयकषायसाधितः स्नेहोऽनुवासने कर्त्तव्यः। तथा निरूहणे जीवनीयरसः सलवणः शिशोर्हितः। अनुवासनमपि जीवनीयसाधितं शिशोरेव हितम्। अनेन बालवृद्धयोर्निरूहस्य वस्तेरुक्तम्। परं कर्म्मेति श्रेष्ठं फलकर्म ॥ १३—१६ ॥

तत्र श्लोकः ।

फलकर्म्मवस्तिषु वरत्वनिश्चये वस्तयो गवादीनाम् ।
सततान्तराश्चोद्दिष्टाः फलमात्रायां हितञ्चैषाम् ॥ १७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
फलमात्रासिद्धिर्नामैकादशोऽध्यायः ॥ ११ ॥

गङ्गाधरः—अध्यायार्थमाह—तत्र श्लोक इति। फलेत्यादि ॥ १७ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ॥

अग्निवेशकृते तन्त्र चरक-प्रतिसंस्कृते। सिद्धिस्थानेऽष्टमेऽप्राप्ते तस्मिन् दृढ़बलेन
तु। प्रतिसंस्कृत एवकादशेऽध्याये प्रयत्नतः। फलमात्रासिद्धग्रभिधे वैद्य-
गङ्गाधरेण तु। कृते जल्पकल्पतरौ सिद्धिस्थानेऽष्टमे पुनः। स्कन्ध
फलमात्रासिद्धि-जल्पाख्यैकादशी त्वियम्। शाखा समाप्ता
सद्वैद्या अस्याश्छायां श्रयन्तु व ॥ ११ ॥

चक्रपाणिः—संग्रहो व्यक्तः ॥ १७ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां फलमात्रासिद्धिर्व्याख्या-
नाम एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ।

अथात उत्तरवस्तिसिद्धिं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

अथ खल्वातुरं वैद्यः संशुद्धं वमनादिभिः ।
दुर्ब्बलञ्चाममन्दाग्निं मुक्तसन्धानबन्धनम् ॥
निर्हृतानिलविण्मूत्र-कफपित्तं कृशाशयम् ।
शून्यदेहं प्रतीकारासहिष्णुं प्रतिपालयेत् ॥
यथैव तरुणं पूर्णं तलपात्रं तथैव च ।
गोपाल इव दण्डी गाः सर्व्वस्मादपचारतः ॥ २ ॥

गङ्गाधरः—अथाध्यायोद्देशक्रमात् पारिशेष्याच्च उत्तरवस्तिमाह—अथात-इत्यादि। पूर्व्ववत् सर्व्वं व्याख्येयम् ॥ १ ॥

गङ्गाधरः—अथ खल्वित्यादि। वमनादिभिः संशुद्धमातुरं दुर्ब्बलादिञ्च वैद्यः प्रतिपालयेत्। तत्र दृष्टान्तः यथैवेत्यादि। यथा तरुणं तलपूर्णं पात्रं रक्षयेत् तथा, एवं गोपालो यथा दण्डं गृहीत्वा गा रक्षयेत्, तथा सर्व्वस्मादपचारात् निरुक्तमातुरं रक्षेत् ॥ २ ॥

चक्रपाणिः—पारिशेष्यादेवोत्तरवस्तिसिद्धिरभिधीयते। उत्तराणां श्रेष्ठानां वस्तीनां सिद्धिरुत्तरवस्तिसिद्धिः। वक्ष्यमाणवस्तीनां विषयं मिथ्योपचारजव्याधिप्रशमं दर्शयितुं सम्यगुपचारमेव तावदाह—अथ खल्विति। वमनादिभिरिति वमनविरेचनयोः वक्ष्यमाणः सम्बन्धः सम्बध्यते, तेनायं क्रमः एतयोर्न भवति। मुक्तसन्धानबन्धनमिति मुक्तसन्धिबन्धनम्। कृशाशयमिति दोषशून्याशयम्। प्रतिकारासहिष्णुमित्युच्चैर्भाष्यादिक्रियाक्षमं किंवा वमनादिप्रयोगासहिष्णुम्। परिपालयेत् सर्व्वस्मादपचारत इति सम्बन्धः। तरुणादिदृष्टान्ततयाभिधानं कस्यचित् किञ्चित् प्रसिद्धं भविष्यतीत्यभिप्रायेण ॥ १। २ ॥

अग्निसन्धुक्षणार्थन्तु पूर्व्वं पेयादिना भिषक् ।
रसोत्तरेणोपाचरेत् क्रमेण क्रमकोविदः ॥
स्निग्धाम्लस्वादुहृद्यानि ततोऽम्ललवणौ रसौ ।
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥
अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ।
व्यत्यासादुपयोगेन प्रकृतिं गमयेद् भिषक् ॥ ३ ॥

गङ्गाधरः—तत्रायं क्रमः। अग्नीत्यादि। पूर्व्वं पेयादिना परं मांसरसोत्तरेण पेयादिना क्रमेणोपाचरेत्। स्निग्धेत्यादि। पूर्व्वं स्निग्धाम्लादीनि ततोऽम्ल-लवणौ ततः स्वादुतिक्तौ ततः कषायकटुकौ, इत्येवमन्योऽन्यं प्रत्यनीकानां रसानां तथा स्निग्धरूक्षयोर्व्यत्यासात् स्निग्धे व्याधौ रूक्षं रूक्षे स्निग्धमित्येव-मुपयोगात् प्रकृतिमातुरं गमयेद् भिषगिति ॥ ३ ॥

चक्रपाणिः—रसोत्तरेणेति व्यवस्था भवति। रसोत्तरेण पृथगन्तरं यस्मिन् स्नेहोपायादिना रसोत्तरेण, किंवा वमनविरेचनयोरन्तरे पेयादिना क्रमेणोपचरेदिति व्यवस्था। तत्र च निरूहस्या-पेक्षया रसादिरेव क्रमो भवतीति प्रतिपादितमेव प्राक्। किंवा रसाभ्यासक्रमोत्तरकाले यस्मिन् तत्पेयादिक्रमस्य रसान्तरेणाभ्यासक्रममेवाह। स्निग्धाम्लस्वादुहृद्यानीत्यादि पेयाक्रमोत्तरकालं यदा विरेचनादिकर्म्मान्तरं कर्त्तव्यं तदा संशोधनमूलशरीरस्य प्रकृतिभोजनार्थं बलाप्यायनार्थं वायं रसाभ्यासक्रमो ज्ञेयः। अन्ये तु पेयादिक्रमे एव रससंस्कारार्थं स्निग्धाम्लस्वाद्वादिक्रमं वर्णयन्ति। अत्र चाम्लस्वादु प्रथमं पक्काशयस्थितवातसंशमनायोपयुज्यते। तथाम्ललवणौ तदूर्द्ध्वस्थिताग्नि-सन्धुक्षणार्थम्। ततः पित्तप्रशमनार्थं स्वादुतिक्तौ। ततः पित्तोर्द्ध्वस्थितकफप्रशमनार्थं रस-युग्मानामुपयोगो पेयादिक्रमे एव। एवं द्वादशान्नकाले सर्व्वरसभोजनप्राप्तिर्विभिवज्ज्ञेया। अन्योऽन्येत्यादि। अन्योऽन्यप्रत्यनीकानामिति परस्परमभिभावकानाम्। व्यत्यासादुपयोजयेदिति एकयुग्ममुपयुज्यापरस्य युग्मस्योपयोगात् प्रकृतिं गमयेदिति भोजनं गमयेत्। प्रकारान्तररसाभ्यास-माह। स्निग्धरूक्षयोरिति स्निग्धरसमुपयुज्य रूक्षो योज्यः, रूक्षं चोपयुज्य स्निग्ध इत्यनेन क्रमेण प्रकृतिभोजनं गमयेदित्यर्थः। स्निग्धरूक्षौ रसावुदाहरणार्थमुपपन्नौ, तेन गुरुलघ्वादियुग्म-रसव्यत्यासाभ्यासोऽप्यत्र बोद्धव्यः। किंवा कषायकटुकौ ततः इत्यनेन युग्मरसाभ्यासनमुपदर्शितम्।

बलवान् वर्णवान् सर्व्व-रतिः स्वङ्गः स्थिरेन्द्रियः।
प्रसन्नात्मा सर्व्वसहो विज्ञेयः प्रकृतिं गतः ॥ ४ ॥
एतां प्रकृतिमप्राप्तः सर्व्ववर्ज्ज्यानि वर्ज्जयेत्।
महादोषकराण्यष्टावेतानि तु विशेषतः ॥
उच्चैर्भाष्यं रथक्षोभश्चातिचंक्रमणासने।
अजीर्णाहितभोज्ये च दिवास्वप्नश्च मैथुनम् ॥
ऊर्द्ध्वं देहेऽथ सर्व्वाधोमध्यपीड़ामदोषजाः।
श्लेष्मजाः क्षयजाश्चैव व्याधयः स्युर्यथाक्रमम् ॥ ५ ॥
तेषां विस्तरशो लिङ्गमेकैकस्य सभेषजम्।
यथावत् संप्रवक्ष्यामि सिद्धान् वस्तींश्च यापनान् ॥ ६ ॥

गङ्गाधरः—प्रकृतिलक्षणमाह—बलवानित्यादि। सर्व्वरतिः सर्व्वेषु कर्म्मसु रतिर्यस्य सः। स्वङ्गः सुष्ठु अङ्गं यस्य सः। प्रसन्न आत्मा मनो यस्य सः ॥ ४ ॥

गङ्गाधरः—एतामित्यादि। एतां प्रकृतिमप्राप्तः पुमान् सर्व्ववर्ज्ज्यानि यस्य व्याधेर्यानि वर्ज्ज्यानि तानि सर्व्वाणि वर्ज्ज्यानि वर्ज्जयेत्। महादोषेत्यादि। उच्चभाष्यम्, रथक्षोभो रथादियानेन क्षोभः शरीरस्यातिचालनम्, अतिचंक्रमणम्, अत्युपवेशनम्, अजीर्णभोज्यम्, अहितभोज्यम्, दिवास्वप्नः, अतिमैथुनञ्चेत्येतान्यष्टौ महादोषकराणि विशेषतो भवन्ति। कस्मात् को दोषः स्यादित्यत आह—ऊर्द्ध्वमित्यादि। उच्चभाष्येणोर्द्ध्वदेहे जाता व्याधयः स्युः। रथक्षोभेण सर्व्वदेहजाः, अतिचंक्रमणेनाधोदेहजाः, अत्यासनेन मध्यदेहजा पीड़ाः। अजीर्णभोज्येनामजा व्याधयः। अहितभोज्येन दोषजा व्याधयः। दिवास्वप्नेन श्लेष्मजा व्याधयः। अतिमैथुनेन क्षयजा व्याधय इति यथाक्रमं स्युः। तेषामित्यादि ॥ ५। ६ ॥

अन्योऽन्यप्रत्यनीकानामित्यादिना तं प्रत्येकं प्रत्यनीकानामित्यन्योऽन्यव्यत्यासो युज्यते। पेयादिक्रमाभ्यासमुपयुञ्जानस्य स्वस्थस्य पुंसो लक्षणमाह—बलवानित्यादि। सर्व्वसहः सर्व्वाभ्यासस्सहः। निरासङ्ग इति प्रतिनियतविषयपराहतः ॥ ३। ४॥

चक्रपाणिः—एतामिति। उच्चैर्भाष्यादयो देहपीड़ाकरा ज्ञेयाः। उच्चैर्भाष्यादूर्द्ध्वदेहपीडा। रथक्षोभात् सर्व्वदेहपीड़ा। अतिचंक्रमणादधःपीडा। आसनाद् देहमध्यपीडा। अजीर्णभोजनेनामजा। अहितभोजनेन दोषजा। दिवास्वप्नेन श्लेष्मजा। मैथुनेन क्षयजा ॥ ५। ६ ॥

तत्रोच्चैर्भाष्यातिभाष्याभ्यां शिरस्तापशङ्खनिस्तोदश्रोतोऽवरोध-मुखतालुकण्ठशोष-तैमिर्य्य-पिपासाज्वरतमकहनुमन्याग्रह-निष्ठीवनोरःपार्श्वशूलस्वरभेदहिक्काश्वासादयः स्युः। रथक्षोभात् सन्धिपर्व्वशैथिल्यहनुनासाकर्णशिरःशूलतोदकुक्षिक्षोभाध्मानेन्द्रियोपरोध-स्फिक्पार्श्ववङ्क्षणवृषणकटीपृष्ठवेदना-सन्धिस्कन्ध-ग्रीवादौर्ब्बल्याङ्गाभितापपादशोफप्रस्वापहर्षणादयः स्युः। अतिचंक्रमणात् पादजङ्घोरुजानुवङ्क्षणश्रोणीपृष्ठशूलच्छर्द्दिसन्धिसाद-पादसादनिस्तोदपिण्डिकोद्वेष्टनाङ्गमर्द्दांसाभितापशिराधमनीहर्ष-श्वासकासादयः स्युः। अत्यासनाद्रथक्षोभजाः स्फिक्पार्श्व-वङ्क्षणवृषणकटीपृष्ठवेदनादयश्च। अजीर्णाध्यशनाभ्यान्तु मुख-शोषाध्मानशूलनिस्तोदपिपासागात्रसादच्छर्द्यतीसारमूर्च्छाज्वर-प्रवाहणामविषादयः। विषमाशनाहिताशनाभ्यामनन्नाभिलास-दौर्ब्बल्यवैवर्ण्यकण्डूपामागात्रावसादा वातादिप्रकोपजाश्च ग्रह-

गङ्गाधरः—उच्चभाष्यादिक्रमेण व्याधीनां लिङ्गान्याह—तत्रोच्चैरित्यादि। उच्चैर्भाष्यपदेनातिभाष्यश्च विज्ञायते। ऊर्द्ध्वदेहजाः शिरस्तापादयः स्युः। रथक्षोभादित्यादि। सर्व्वाङ्गपीड़ा रथक्षोभात् सन्धिशैथिल्यादयः स्युः। अतिचंक्रमणादित्यादि। अधोऽङ्गपीड़ाः पादादिशूलादयः स्युः। अत्यासनादित्यादि। अत्युपवेशनान्मध्यदेहजपीड़ा य उक्ता रथक्षोभजास्ते च स्फिग्वेदनादयश्च स्युः। अजीर्णेत्यादि। अजीर्णाशनपदेनाध्यशनमपि विज्ञायते। तेनाजीर्णाशनाध्यशनाभ्यामामजा मुखशोषाध्मानादयः स्युः। विषमेत्यादि। अहित-

चक्रपाणिः—तत्रोच्चैर्भाष्यादिग्रन्थः प्रायो व्यक्त एव। अतिभाषितस्योच्चैर्भाष्येण समानत्वादुदाहरणम्। पिण्डिकोद्वेष्टनं जङ्घापिण्डिकायामुद्वेष्टनाकारा वेदना। शिराधमनीहर्षः शिराधमन्योरबलत्वम्। रथक्षोभजा इत्युक्ते सन्धिशैथिल्यादीनामभिसन्धिः स्यादतस्तन्निरासार्थमाह—स्फिक्पार्श्ववङ्क्षणवृषणकटीपृष्ठवेदनादयः स्युः। अजीर्णाध्यशनाभ्यामित्यत्र अजीर्णाशनस्यामज-

रयर्शोविकारादयः। दिवास्वप्नादरोचकाविपाकाग्निनाशस्तैमित्य-पाण्डुत्वकण्डूपामादाहच्छर्द्द्यङ्गमर्द्दहृत्स्तम्भजाड्यतन्द्रानिद्राप्रसङ्ग-ग्रन्थिजन्म-दौर्ब्बल्यरक्ताक्षिता-प्रलेपाः भवन्ति। व्यवायादाशु-बलनाशोरुसाद-वस्तिशिरोमेढ्रगुदवङ्क्षणोरुस्तम्भ-वृषणजानु-जङ्घापादशूल-हृदयनेत्रपीड़ाङ्गशैथिल्य-शुक्रमार्गशोणितागमन-कासश्वासरक्तनिष्ठीवन-बलस्वरावसाद-कटीदौर्ब्बल्यैकाङ्गसर्व्वाङ्ग-रोग-मुष्कश्वयथुवातवर्चोमूत्रसङ्गशुक्रविसर्ग-जाड्यवेपथुबाधिर्य्य-विषादयश्च स्युः। अत्र पाट्यत इव गुदं ताड्यत इव मेढ्रमव-सीदति गमने वेपते हृदयं पीड्यन्ते सन्धयस्तमः प्रविश्यत इव चेत्येवमष्टाभिरेवैभिरपचारैरेते प्रादुर्भवन्त्युपद्रवाः॥ ७॥

तेषां सिद्धिरुच्चैर्भाष्यातिभाष्यजानामभ्यङ्गस्वेदोपनाहधूम-पाननस्योपरिभक्तस्नेहपानरसक्षीरादिभिर्वातहरः सर्व्वविधि-र्मौनञ्च। रथक्षोभातिचंक्रमणात्यासनजानां स्नेहस्वेदादि वातहरं कर्म्म सर्व्वं निदानवर्ज्जितञ्च। अजीर्णाध्यशनजानां निरवशेष-

भोज्यपदेन विषमाशनमपि लक्ष्यते, तेन दोषजा अनन्नाभिलाषादयः स्युः। दिवास्वप्नादित्यादि। दिवास्वप्नात् श्लेष्मजा अरोचकादयः स्युः। व्यवायादित्यादि। अतिव्यवायात् शुक्रक्षयजा आशु बलनाशादयः स्युरिति। अत्राति व्यवायात् क्षयजेषु पाट्यत इव गुदम्, मेढ्रं ताड्यत इव, गमनेऽवसीदति, हृदयं वेपते, सन्धयः पीड्यन्ते, तमः प्रविशत इवेत्येतरष्टाभिरपचारैरुपद्रवा एते प्रादुर्भवन्तीति॥ ७॥

गङ्गाधरः—तेषां सिद्धिरित्यादि। उच्चर्भाष्यादिजानामभ्यङ्गादिभिः सर्व्वो वातहरो विधिर्मौनञ्च सिद्धिः। रथक्षोभादीनां स्नेहस्वेदादि सर्व्वं वातहरं

विकारकर्त्तृत्वादध्यशनस्यासूत्रितस्योपादानम्। एवं विषमाहिताशनजविकारसमानविकारकारि-विषमाशनस्याप्यसूत्रितस्योपादानम्। अवकुप्यत इव छिद्यत इव॥ ६। ७॥

च्छर्द्दनं रूक्षः स्वेदो धूमपानलङ्घनपाचनदीपनौषधावचारणञ्च। विषमाहिताशनजानां यथास्वं दोषक्रिया। दिवास्वप्नजानां धूमपानलङ्घनवमनशिरोविरेचन-व्यायाम-रूक्षाशनादिदीपनीयौषधोपयोगः प्रहर्षणोन्मर्द्दनपरिषेचनादिश्च श्लेष्महरः सर्व्वो विधिः। मैथुनजानां जीवनीयसिद्धयोः क्षीरसर्पिषोरुपयोगस्तथा वातहराः स्वेदाभ्यङ्गोपनाहा वृष्याश्चाहाराः स्नेहाः स्नेहविधयो यापनावस्तयोऽनुवासनञ्च, मूत्रवैकृतवस्तिशूलेषु चोत्तरवस्तिः विदारीगन्धादिगणजीवनीयगणक्षीरसिद्धतैलं स्याद् यापनाश्च वस्तयः सर्व्वकालं देयास्तानुपदेक्ष्यामः ॥ ८ ॥

मुस्तोशीरबलारग्वधरास्ना-मञ्जिष्ठाकटुरोहिणीत्रायमाणा-पुनर्नवाविभीतकगुडूचीस्थिरादिपञ्चमूलानि पलिकानि खण्डशः कृतानि मदनफलानि चाष्टौ प्रक्षाल्य जलाढ़के निकाथ्य पादशेषो रसः क्षीरद्विप्रस्थयुक्तः पुनः शृतः क्षीरावशेषः

कर्म्म निदानवर्ज्जनञ्च। अजीर्णेत्यादि। अजीर्णादिजानां निरवशेषच्छर्द्दनादि दीपनभेषजञ्च। विषमेत्यादि। विषमाद्यशनजानां दोषजानां व्याधीनां यथास्वदोषक्रिया। दिवास्वप्नजानामित्यादि। दिवास्वप्नजानां व्याधीनां धूमपानाद्युपयोगः प्रहर्षणादिश्च श्लेष्महरः सर्व्वो विधिः। मैथुनजानामित्यादि। अतिव्यवायात् क्षयजानां जीवनीयसाधितक्षीरादयः, तान् यापनावस्तीनुपदेक्ष्यामः ॥ ८ ॥

गङ्गाधरः—मुस्तेत्यादि। मुस्तादीनि वृहत्पञ्चमूलान्तानि प्रत्येकं पलिकानि खण्डशः कृतानि मदनफलस्याष्टौ पलानि कुट्टयित्वा जलाढ़के निकाथ्य पाद-

चक्रपाणिः—तेषां सिद्धिरिति तेषामुक्तविकाराणां साधनं भेषजमित्यर्थः। निरवशेषतश्छर्द्दनमिति अजीर्णान्नस्य निरवशेषतः छर्द्दनम्। मूत्रवैकृतेत्यादि मैथुनान्मूत्रवैकृतादि भवति। तदा विदारिगन्धादिजीवनीयगणाभ्यां क्वाथकल्कीकृताभ्यां सक्षीरं तैलं साधयित्वोत्तरवस्तिर्देयः। यापनाश्च वस्तयः सर्व्वकालं देया इत्यनेन पूर्व्वनिरूहाणामसार्व्वकालिकत्वं दर्शयति। एतेषाञ्च सर्व्वस्मिन् काले दानमविरुद्धम्। आयुषो यापनं दीर्घकालानुवर्त्तनं कुर्व्वन्तीति यापना वस्तयः॥ ८ ॥

जाङ्गलरसतुल्यो मधुयुतः * शतकुसुमामधुककुटजफलरसाञ्जन-प्रियङ्गुकल्कीकृतः ससैन्धवः सुखोष्णो वस्तिः शुक्रमांसाग्निवल-जननः क्षीणक्षतकासगुल्मविषमज्वर...कुण्डलोदावर्त्तकुक्षिशूल-मूत्रकृच्छ्रासृग्दरजोविसर्प-प्रवाहिकाकास-शिरोजानूरुजङ्घा-वस्ति-ग्रहक्षयशमय्युन्मादार्शः-प्रमेहाध्मान-वातरक्तपित्तश्लेष्मव्याधिहरः सद्योवलजननो रसायनश्चेति ॥ ९ ॥

शालपर्णी-पृश्निपर्णी-वृहती-कण्टकारिका-श्वदंष्ट्राः पलिकाः खण्डशः कृताः क्षीराढ़के पचेत्। पादावशेषकषाययुतं शत-कुसुमादिकल्कितं घृततैलसैन्धवमधुयुतं सुखोष्णञ्च निरूहमेकं द्वौ त्रीन् वा दद्यात्। सर्व्वेषामेव प्रशस्तो विशेषतो ललित-सुकुमारस्त्रीविहारक्षीणक्षतोरसां चिरार्शसानामपत्यकामानाञ्च॥१०

शेषश्चतुःशरावावशेषो रसः क्षीरस्याष्टशरावयुक्तः पुनः पक्तव्यः क्षीरावशेषः कार्य्यः। स च तुल्यजाङ्गलमांसरसयुक्तः मधुयुतः। शतपुष्पामधुकादीनि कल्कीकृत्य तत्र दत्त्वा सैन्धवञ्चानुरूपं दत्त्वा मथितः सुखोष्णो वस्तिः। शुक्रादिजनन इत्याद्याशीः॥ ९ ॥

गङ्गाधरः—शालपर्णीत्यादि। शालपर्ण्यादीनि पञ्च प्रत्येकं पलिकानि खण्डशः कृत्वा क्षीराढ़के पचेत्। पादशेषकषाययुतं पूर्व्वोक्तशतकुसुमादिकल्क-युक्तं घृतादियुक्तं सुखोष्णं निरूहमेकं द्वौ त्रीन वा दद्यात्। सर्व्वेषामेव निरूहः प्रशस्तः स्यात् विशेषतो ललितसुकुमारादीनां शस्तः॥ १० ॥

चक्रपाणिः—मुस्तेत्यादौ। खण्डशः कृतानीति खण्डं खण्डं कृतानि। जाङ्गलरसमधुघृतः यथोक्तक्षीरकृतक्वाथइत्यादिकजांगलरस इत्यर्थः। तुल्यं मधुना घृतं यस्मिन् स तुल्यमधुघृतः। एतेन पूर्व्वं वस्तौ यथानियमितस्नेहमानेन यावद् घृतं देयं भवति तावन्मानं मध्वप्यत्र देयम्। अस्मिन् पूर्व्वोक्तवस्तिमानविभागेनैव वस्तिः कल्पयितव्यः। अत्र क्षीरं कषायस्थाने भवति। शतकुसुमा शतपुष्पा। ससैन्धवमितीषत्सैन्धवम्॥ ९ ॥

* जाङ्गलरसतुल्यमधुघृत इति चक्रसम्मतः पाठः।

तद्वत् सहचरबलामूर्व्वामूलशारिवासिद्धेन पयसा । तथा बृहतीकण्टकारिकाशतावरीच्छिन्नरुहाशृतेन पयसा मधुकमदनपिप्पलीकल्कीकृतेन पूर्व्ववद् वस्तिः । तथा बलातिबलाविदारीशालपर्णीपृश्निपर्णीबृहतीकण्टकारिकादर्भमूलकाश्मर्य्यविल्वफलसिद्धेन पयसा मधुकमदनकल्कीकृतेन मधुघृतसौवर्च्चलप्रयुक्तेन वस्तिः कासज्वरगुल्मप्लीहार्द्दितस्त्रीमद्यक्लिष्टानां सद्योबलजननो रसायनश्च ॥ ११ ॥

बलातिबलारास्नारग्बधमदनविल्वगुडूचीपुनर्नवैरण्डाश्वगन्धासहचरपलाशदेवदारुद्विपञ्चमूलानि पलिकानि यवकोलकुलत्थद्विप्रसृतं शुष्कमूलकानाञ्च जलद्रोणे सिद्धं निरूहप्रमाणं शेषकषायं पूतं मधुकमदनशतपुष्पाकुष्ठपिप्पलीवचावत्सकरसाञ्जनप्रियङ्गुयमानीकल्कीकृतं गुड़घृततैलक्षौद्रक्षीरमांस-

गङ्गाधरः—तद्वदित्यादि । सहचरादीनां कल्कः सिद्धेन पयसा मधुकादिकल्कयुक्तेन पूर्व्ववद् घृततैलसैन्धवमधुयुक्तो वस्तिस्तद्वत् सर्व्वेषां प्रशस्तो विशेषतो ललितादीनाम् । तथा बृहत्यादिकल्कः शृतेन पयसा मधुकादिकल्कयुक्तेन पूर्व्ववद् घृततैलसैन्धवमधुयुक्तेन वस्तिस्तद्वत् सर्व्वेषां प्रशस्तो विशेषतो ललितादीनाञ्च । तथेत्यादि । बलादिकल्कसिद्धेन पयसा मधुकादिकल्कयुक्तेन मध्वादिप्रयुक्तेन वस्तिः कासज्वरादिक्लिष्टानां सद्यो बलजननः ॥ ११ ॥

गङ्गाधरः—बलातिबलेत्यादि । बलादीनि द्विपञ्चमूलान्तानि पलिकानि । यवादीनां द्विद्विप्रसृत शुष्कमूलानाञ्च द्विप्रसृतं जलद्रोणे चतुःषष्टिशरावे पक्त्वा

चक्रपाणिः—शालिपर्णिकादिर्द्वितीयस्तद्वत् सहचरेत्यादिकस्तृतीयः । तथेति पूर्व्ववस्तिविधानेन बृहतीत्यादिकश्चतुर्थः । अत्र च वस्तौ फलश्रुतिसामान्येन इत्येते वस्तयः स्नेहाश्चोक्ता इत्यादिना वक्ष्यमाणा फलश्रुतिर्ज्ञेया । तथा बलातिबलाविदारीत्यादिकः पञ्चमः । बलातिबलारास्नेत्यादिकः षष्ठः । शुष्कमूलकानाञ्चेत्यत्र द्विप्रसृतमित्यनुवर्त्तते । निरूहप्रमाणं शेषं कषायमिति निरूहपुटकत्रययोग्यप्रमाणं कषायम् एवं पुटकत्रयादयः पञ्चकषायाः प्रसृताः स्थाप्या भविष्यन्ति

रसाम्लकाञ्जिकसैन्धवयुक्तं सुखोष्णं वस्तिं दद्यात्, शुक्रमूत्रवर्च्चसामनिलगुल्महृद्रोगाध्मान-ब्रध्नपृष्ठकटीग्रह-संज्ञानाशबलक्षयेषु वा ॥ १२ ॥

हबुषार्द्धकुडवो द्विगुणोऽर्द्धक्षुण्णयवः क्षीरोदकसिद्धः क्षीरशेषो मधुघृतफलतैलयुक्तो वस्तिः सर्व्वाङ्गविसृतवातरक्तशुक्रविण्मूत्रस्त्रीखेदितहितो वातहरो बुद्धिमेधाग्निबलजननश्चेति। ह्रस्वपञ्चमूलीकषायः क्षीरोदकसिद्धः पिप्पलीमधुकमदनकल्कीकृतः सगुड़घृततैललवणः क्षीणविषमज्वरकर्षितस्य वस्तिः। बलातिबलापामार्गात्मगुप्ताष्टपलार्द्धक्षुण्णयवाञ्जलिकषायः पूर्व्ववद्वस्तिः स्थविरदुर्ब्बलक्षीणशुक्ररुधिराणां पथ्यतमः ॥ १३ ॥

निरूहप्रमाण शेषं कृत्वावतार्य्य पूतं कृत्वा तत्र मधुकादिकल्कं दत्त्वा गुड़ादियुक्तं सुखोष्णञ्च वस्तिं दद्यात्। शुक्रेत्याद्याशीः ॥ १२ ॥

गङ्गाधरः—हबुषेत्यादि। हबुषार्द्धभागं यवमर्द्धक्षुण्णं अर्द्धक्षुण्णयवः हबुषाद्द्विगुणः दत्त्वा क्षीरे समजले पक्त्वा क्षीरावशेषः क्वाथः मध्वादियुक्तो वस्तिः सर्व्वाङ्गविसृतवातादिषु हितः वागबुद्ध्यादिजननश्चेति। ह्रस्वेत्यादि। शालपर्ण्यादिपञ्चमूलस्य कषायः क्षीरोदकसिद्धः समानक्षीरे जलेऽष्टगुणे शालपर्ण्यादिपञ्चमूलं पक्त्वा पादशेषः कषायः पिप्पल्यादिकल्कयुक्तो गुड़ादियुक्तश्च क्षीणादेर्वस्तिः। बलेत्यादि। बलादीनामष्टपलानि अर्द्धक्षुण्णस्य यवस्याञ्जलिः कुड़वं तेषामष्टगुणे जले क्वाथः, कश्चनाह क्षीरोदके सिद्धः कषायः पिप्पल्यादिकल्कयुक्तः गुड़घृततैललवणयुक्तश्चेति पूर्व्ववद् वस्तिः क्षीणविषमज्वरकर्षितस्य स्थविरादीनां पथ्यतमः ॥ १३ ॥

क्वाथपरिभाषयैव कर्त्तव्याः। अत्र च निरूहप्रमाणं शेषं कषायं मधुकमदनादिनोक्तं सिद्धं वस्तिं दद्यात् ॥ १०—१२ ॥

चक्रपाणिः—हपुषेत्यादिकः सप्तमः। क्षुण्णाः शुष्काः पुनः क्वथिताः। अपक्षीणपराजुष्यन्ते इत्यादि अधिकमत्र प्रदेशे काश्मीराः पठन्ति। ह्रस्वपञ्चमूलीत्यादिकोऽष्टमः। बलातिबलापा-

बलामधुकविदारीदर्भमूलमृद्वीकायवैः कषायमाजपयसा पुनः पक्त्वा मधुकानकल्कितं समधुघृतसैन्धवं ज्वरार्त्तेभ्यो वस्तिं दद्यात्। शालपर्णीपृश्निपर्णीगोक्षुरककोलकाश्मर्य्यपरूषक-खर्ज्जूरफलमधुकपुष्पैरजाक्षीरजलप्रस्थाभ्यां सिद्धः कषायः पिप्पलीमधुकोत्पलकल्कितः सघृतसैन्धवः क्षीणेन्द्रियविषमज्वर-कर्षितस्य वस्तिः शस्तः॥ १४॥

स्थिरादिपञ्चमूलीपञ्चपलेन शालिषष्टिकयवगोधूममाष-कषायपञ्चप्रसृतेन छागपयः शृतं पादशेषं कुक्कुटाण्डरसमधुघृत-शर्करासैन्धवसौवर्च्चलयुक्तो वस्तिर्वृष्यतमो बलवर्णजननश्च। यापनावस्तयो द्वादश कल्पश्चैषां शिखिगोनर्दहंसाण्डरसेषु भवति सतित्तिरिः समयूरः शम्पाकहंसपञ्चमूलीसिद्धं पयः शतकुसुमा-

गङ्गाधरः—बलेत्यादि। बलादियवान्तानामष्टगुणे जले पाकात् पादावशेषं कषायं छागपयसा समानेन पक्त्वा पयोऽवशिष्टं मधुकाक्षकल्कितं मधुघृत-सैन्धवयुक्तं ज्वरार्त्तेभ्यो वस्तिं दद्यात्। शालपर्णीत्यादि। अजाक्षीरजलयोः प्रस्थाभ्यां द्वाभ्यां शालपर्ण्यादीनि पक्त्वा पादशेषः कषायः पिप्पल्यादिकल्कयुक्तः घृतसैन्धवयुक्तश्च क्षीणेन्द्रियादेर्वस्तिः॥ १४॥

गङ्गाधरः—स्थिरादीत्यादि। शालपर्ण्यादिपञ्चमूलस्य पञ्चपलानि कल्कीकृत्य शाल्यादीनां पञ्चानां पञ्चकषाया एकैकप्रसृतमिति पञ्च प्रसृत तेन समानं छागपयः शृतं पादशेषं कुक्कुटाण्डरसादियुक्तो वस्तिर्वृष्यतमो बलवर्णजननश्च। यापना वस्तयो द्वादश। कल्पश्चैषामित्यादि। एषां स्थिरादिपञ्चमूलीत्यादीनां कल्पश्च शिखिरसे कुक्कुटरसपरिवर्त्ते चको गोनर्दरसे कुक्कुटरसपरिवर्त्ते चकः गोनर्द्दो वृहत् काकः हंसाण्डस्य रसे कुक्कुटरसपरिवर्त्ते चापर इति दश-रसे त्रयो वस्तयः। सतित्तिरिः समयरश्चेत्यधिकारः। शम्पाकेत्यादि।

मार्गेत्यादिको नवमः। बलामधूकेत्यादिको दशमः। अत्र बलादिकषायस्य क्षीरशेषः पाकः कर्त्तव्यः। शालिपर्णीत्यादिक एकादशः॥ १३। १४॥

चक्रपाणिः—स्थिरेत्यादिको द्वादशः। कल्पश्चेत्यादिना अतिदेशात् कल्पोऽभिधीयते।

मधुकरास्नाकुटजफलपिप्पलीकल्कं घृततैलगुड़सैन्धवयुतो वस्ति-
र्बलवर्णशुक्रजननो रसायनश्च ॥ १५ ॥

द्विपञ्चमूलीकुक्कुटरससिद्धं पयः पादशेषं पिप्पलीमधूकमदन-
रास्नामधुककल्कं शर्करामधुघृतयुक्तं स्त्रीष्वतिकामानां बलजननो
वस्तिः। मयूरमद्गुपित्तपक्षपादास्यान्त्रं त्यक्त्वा स्थिरादिभिः
पलिकैः सह जले पयसि पक्त्वा क्षीरशेषं मदनविदारीपिप्पलीशत-
कुसुमायष्टीमधुककल्कीकृतं मधुघृतसैन्धवयुक्तं वस्तिं दद्यात्
स्त्रीष्वतिप्रसक्तक्षीणेन्द्रियेभ्यो बलवर्णकरः। कल्पश्चैष विष्किर-
प्रतुदप्रसहाम्बुचरेषु स्याद्क्षीरो रोहितादिषु च मत्स्येषु ॥१६॥

शम्पाकहंसमांसबृहत्पञ्चमूलीक्वाथसिद्धं पयः शतपुष्पादिकल्कयुक्तो घृतादि-
युक्तश्च सतित्तिरिस्तित्तिरिमांसरसयुक्त एकः समयूरः मयूरमांसरसयुक्तस्त्वपरो
वस्तिर्बलादिजननो रसायनश्च॥ १५ ॥

गङ्गाधरः—द्विपञ्चमूलीत्यादि। द्विपञ्चमूलीकुक्कुटमांसक्वाथसिद्धं पयः पाद-
शेषं पिप्पल्यादिकल्कयुतं शर्करादियुक्तश्च सतित्तिरिः समयूरश्च वस्तिः
स्त्रीष्वतिकामानां बलजननः। मयूरेत्यादि। मयूरस्य मद्गोश्च पित्तपक्षपादा-
स्यान्त्रं विहाय पलिकैः स्थिरादिपञ्चमूलैः सह जले पयसि समेऽष्टगुणे पक्त्वा क्षीर-
शेषं मदनादिकल्कयुक्तं मधुघृतादियुक्तं सतित्तिरिं समयूरञ्च वस्तिं दद्यादिति।
कल्पश्चैष इत्यादि। एषां मयूरमद्गुपित्तेत्यादीनां मयूरस्थाने विष्किरादिरसेषु
कल्पश्च स्यात्। विष्किरा लावाद्या अष्टौ वर्त्तकादयो द्वादश चेति विंशतिः।
प्रतुदास्तु शतपत्रादयस्त्रिंशत्। प्रसहास्तु एकोनस्त्रिंशत्। जलचरैः सप्तविंशतिः
श्वेतादिभिः। रोहितादिषु क्षीरवर्ज्जं मयूरवर्ज्जश्च कल्पः। तद् यथा। रोहित-
मत्स्यशिशुमारतिमिङ्गिलशुक्तिशङ्खोद्रकुम्भीरचुलुकीमकरमांसरसेषु मयूरवर्ज्ज
मद्गुपित्तादीनां पूर्ववद्वस्तिर्नवधा। इति विंशतिः॥ १६ ॥

सतित्तिरीत्यादिकैकयोगेन वक्ष्यमाणानामेकोनत्रिंशद्वस्तीनां मध्ये त्रयोदशः। द्विपञ्चमूलीत्यादिक-
श्चतुर्दशः। मयूरपित्तपक्षमित्यादिकः पञ्चदशः। कल्पश्चैषेत्यादिनातिदेशेन पञ्चदशाधिकं
शतमाह—तत्र विष्किरैर्लाववर्त्तीत्यादिनोक्तैस्तथावर्त्तकोवर्त्तिकेत्यादिनोक्तैर्विंशतिर्योगा भवन्ति।
मयूरश्चात्र विष्किरपठितोऽपि पूर्व्वोक्तत्वान्नेह गण्यते। प्रतुदादीनां त्रिंशद् भवन्ति। तथा प्रसहाश्च

गोधानकुलमार्जारमूषिकशल्लकमांसानां दशपलान् भागान् सपञ्चमूलान् पयसि पक्त्वा शेषं तत् पयः पिप्पलीफलकल्कसैन्धवसौवर्च्चलशर्करामधुघृततैलयुक्तो वस्तिर्बल्यो रसायनः क्षीणक्षतसन्धानकरः मथितोरस्करथगजहयवातबलाशकप्रवृत्त्युदावर्त्तवातशुक्रमूत्रवर्च्चःशुक्राणां हिततमश्च ॥ १७ ॥

कूर्म्मादीनामन्यतमपिशितसिद्धं पयो गोवृषशुक्रकुक्कुटहंसकुक्कुटाण्डरस-घृतमधुशर्करासैन्धवेक्षुरसमधुकात्मगुप्ताफलकल्कयुक्तो वस्तिर्वृद्धानामपि बलजननः । गोवृषवस्तवराहवृषणकर्कटकशशाण्डसिद्धं क्षीरमुच्चटेक्षुरकात्मगुप्ता-मधुघृतयुक्तं किञ्चिल्लवणं वस्तिः । कर्कटकरसश्चटकाण्डरसयुक्तो समधुघृत-

गङ्गाधरः—गोधेत्यादि । गोधादीनां पञ्चानां वृहत्पञ्चमूलानाञ्च मिलित्वा दशपलान् भागान् प्रत्येकमेककं पलं पयसि चतुर्गुणे पक्त्वा पादशेषं पिप्पल्यादिकल्कयुक्तः सैन्धवादियुक्तश्च वस्तिर्बल्यादिः ॥ १७ ॥

गङ्गाधरः—कूर्म्मेत्यादि । कूर्म्मः कर्कटकी मत्स्यः शिशुमारस्तिमिङ्गिलः । शुक्तिः शङ्खोद्रकुम्भीरचुलुकीमकरादय इत्येते वारिजा दश य उक्तास्तेषामन्यतमस्य पिशितरसे चतुर्गुणे सिद्धं पयः शिष्टं गोवृषादीनां रसेन युक्तं घृतादीक्षुरसान्तयुक्तं मधुकादिकल्कयुक्तं वस्तिर्वृद्धानामपि बलजननः । इति कूर्म्मकल्पेन दश । गोवृषेत्यादि । गोवृषादीनां वृषणकर्कटकाण्डशशाण्डरसः सिद्धं पयः । उच्चटादीनां त्रयाणां कल्कयुक्तं मधुघृतयुक्तं किञ्चित् सैन्धवेन लवणित

गोवराहाश्वेत्यादिनोक्तैरेकोनत्रिंशत् । अम्बुवराश्च हंसादयः सप्तविंशतिरुक्ता एते सप्तविंशतिः भवन्ति । रोहितादिभिर्मत्स्यैरेव एवं पञ्चदशोत्तरं शतं भवन्ति । अक्षीर इति रोहितादिषु सम्बध्यते । गोधानकुलेत्यादिभिः षोड़शः ॥ १५—१७ ॥

चक्रपाणिः—कूर्म्मादीनामन्यतमेत्यादिकः सप्तदशः । अत्र कूर्म्मकर्कटादय एकादश पठिताः । तत्र प्राक् कूर्म्मेण क्रियते कर्कटादिभिर्दश वस्तयो भवन्ति । प्रत्येकं गणनायां प्रति त्रिंशतिः आतिदेशिका ज्ञेयाः । गोवृषवस्तादिरष्टादशः । गोवृषः पुंवृषः । कर्कटादिरेकोनविंशतितमः ।

शर्करो वस्तिरित्येते वस्तयः परमवृष्या उच्चटकेचुरकात्मगुप्ताशृतक्षीरप्रतिभोजनात् स्त्रीशतगामिनं नरं कुर्य्युः ॥ १८ ॥

दशमूलमयूरकुक्कुटहंसक्काथात् पञ्चप्रसृतैर्मधुतैलघृतवसामज्जचतुःप्रसृतसंयुक्तः शतपुष्पाह्वुषाकल्कीकृतः सलवणो वस्तिः पादमुष्कजङ्घात्रिकवङ्क्षणवस्तिवृषणानिलरोगहरः। मृगविष्किरानूपविलेशयानामेतेनैव कल्पेन वस्तयो देयाः। मधुघृतद्विप्रसृतं तुल्योष्णोदकं शतपुष्पार्द्धपलं सैन्धवार्द्धाक्षयुक्तो वस्तिर्वृष्यतमो मूत्रकृच्छ्रपित्तवातहरश्च। सद्योघृततैलवसामज्ज-

वस्तिः। कर्कटेत्यादि। कर्कटस्य रसः चटकाण्डरसयुक्तः समधुघृतशर्करो वस्तिः। इत्येत इत्यादि। इत्येते कूर्म्मादीनामेतदन्तानां वस्तयः परमवृष्याः उच्चटकादिकल्कपक्कक्षीरेण निरूहदानानन्तरं प्रतिभोजनात् स्त्रीशतगामिनं नरं कुर्य्युः ॥ १८ ॥

गङ्गाधरः—दशमूलेत्यादि। दशमूलादीन्यककष्य पक्त्वा क्काथात् पञ्चप्रसृतः मध्वादीनां पञ्चानां मिलित्वा चतुःप्रसृतसंयुक्तैः शतपुष्पादिकल्कीकृतो लवणयुक्तो वस्तिः पादादिगतानिलरोगहरः। मृगेत्यादि। एतेन दशमूल्यादिकल्पेन मृगादीनां मांसरसवस्तयो देयाः। तद् यथा—दशमूलसप्तदशमृगान्यतममृगस्य गोखराश्वतरेत्याद्युक्तस्य मांसक्काथात् पञ्चप्रसृतं मध्वादिचतुःप्रसृतं शतपुष्पादिकल्कयुक्त लवणयुक्तश्च वस्तिरित्येतत्प्रकारेण च दशमूलविंशतिविष्किरेषु मयूरस्योक्तत्वादेकोनविंशतिविष्किरमांसानां क्काथः, दशमूलसृमरादिदशान्यतमानूपमांसक्काथः, दशमूलचतुर्दशान्यतमविलेशयमांसक्काथः, मध्वादियुक्तः शतपुष्पादिकल्कयुक्तः सलवणो वस्तिरिति। मध्वित्यादि। मधुनः प्रसृतं घृतस्य प्रसृतमिति द्विप्रसृतं तुल्योष्णोदकं द्विप्रसृतमुष्णजलं शतपुष्पार्द्धपलं कल्कः सैन्धवस्यार्द्धाक्षयुक्तो वस्तिर्वृष्यतमादिः। सद्य इत्यादि। सद्यस्कचतुःस्नेह

इत्येते वस्तय इत्यनेन कूर्म्मादीनामन्यतमेत्यादिनोक्ता वस्तयः। उच्चटकेत्यादि इक्षुरकः कोकिलाक्षः ॥ १८ ॥

चक्रपाणिः—दशमूलेत्यादिको विंशतितमः। मृगविष्किरेत्यादिना विलेशयान्तेन षष्ट्योगाः।

चतुःप्रस्थघृतं हवुषार्द्धपलं सैन्धवार्द्धाक्षयुक्तो वस्तिर्वृष्यतमो मूत्रकृच्छ्रपित्तव्याधिहरो रसायनः। मधुतैलं चतुःप्रसृतं तुल्योष्णोदकं शतपुष्पार्द्धपलं सैन्धवार्द्धाक्षयुक्तो वस्तिः दीपनो वृंहणो बलवर्णकरो निरुपद्रवो वृष्यतमो रसायनः क्रिमिकुष्ठोदावर्त्तगुल्माशोंब्रध्नप्लीहमेहहरः। तद्वत् सह मधुघृताभ्यां पयस्तुल्यो वस्तिः पूर्व्वकल्पेन बलवर्णकरो वृष्यतमो निरुपद्रवो वस्तिमेढ्रपाकपरिकर्त्तिकामूत्रकृच्छ्रपित्तव्याधिहरो रसायनश्च ॥ १६ ॥

मधुघृताभ्यां मांसरसतुल्यो मुस्ताक्षयुक्तः पूर्व्ववद्वस्तिः बलाशपादहर्षगुल्मजानूरुकुञ्चनवस्तिवृषणमेढ्रत्रिकोरुपृष्ठशूलहरः। सुरासौवीरकुलत्थमांसरसमधुघृततैलसप्तप्रसृतं मुस्तशताह्वाकल्कितं सलवणो वस्तिः सर्व्ववातरोगहरः। द्विपञ्चमूलीत्रिफलाविल्वमदनफलकषायो गोमूत्रसिद्धः कुटजमदनफलमुस्तककल्क-

चतुःप्रस्थं हवुषार्द्धपलकल्कं सैन्धवस्यार्द्धाक्षयुक्तो वस्तिर्वृष्यतमः। मध्वित्यादि। मधुनो द्विप्रसृतं तैलस्य द्विप्रसृतमिति चतुःप्रसृतम्। उष्णोदकं तुल्यं चतुःप्रसृतम्। शतपुष्पार्द्धपलकल्कयुक्तं सैन्धवस्यार्द्धाक्षयुक्तो वस्तिर्दीपनादिः। तद्वदित्यादि। मधुघृताभ्यां द्वाभ्यां तुल्यं पयो यत्र स वस्तिस्तद्वत् पूर्व्वकल्पेन सह च स बलवर्णादिकरप्रभृति ॥ १९ ॥

गङ्गाधरः—मधुघृताभ्यामित्यादि। मधुघृताभ्यां तुल्यो मांसरसो यत्र स वस्तिर्मुस्ताक्षकल्कयुक्तः पूर्व्ववद् बलाशादिहरः। सुरेत्यादि। सुरादीनां सप्तानां प्रत्येकमेकैकप्रसृतमिति सप्तप्रसृतं मुस्तशताह्वाकल्कयुक्तं ससैन्धवलवणो वस्तिः सर्व्ववातहरः। द्विपञ्चेत्यादि। दशमूल्यादीनां कषायो गोमूत्रे पक्त्वा

तत्र मृगैर्वृषेत्यादिनोक्तैः सप्तदश। विष्किरैश्च लावादिभिश्च मयूरकुक्कुटवर्जितैर्विंशतिः। आनूपैश्चमरादिभिर्नव। विलेशयैः श्वेतश्यामादिभिश्चतुर्दश। मधुघृतं द्विप्रसृतमित्यादिक एकविंशतितमः। घृततैलेत्यादिको द्वाविंशतितमः। मधुतैलमित्यादिकस्त्रयोविंशतितमः। तद्वन्मधुघृताभ्यामित्यादिकश्चतुर्विंशतितमः। एतदन्ताः ऊनत्रिंशत्तमाः प्रयोगा उक्ताः। मधुतैल-

संयुक्तः सैन्धवयावशूकक्षौद्रतैलयुक्तो वस्तिः श्लेष्मव्याधिहरो वर्ण्यो वातशुक्रसङ्गाजीर्णविसूचिकालसकेषु देयः ॥ २० ॥

अत ऊर्द्ध्वं वृष्यतमान् स्नेहान् व्याख्यास्यामः। शतावरी-गुडूचीक्षुविदार्य्यामलकद्राक्षाखर्ज्जूराणां यन्त्रपीड़ितानां रसप्रस्थं पृथगेकैकं तद्वद् घृततैलाभ्यां गोमहिष्यजाक्षीराणां द्वौ द्वौ दद्यात्। जीवकर्षभकमेदामहामेदात्वक्क्षीरीशृङ्गाटकमधूलिकामधुकोच्चटक-पिप्पली-पुष्करवीज-नीलोत्पल-कदम्बपुष्पपुण्डरीककेशरकल्कान् पृषतरक्षुमांसकुक्कुटचटकचकोरमत्तालवर्हिजीवञ्जीवककुलिङ्गक-नीलहंसानां रसं वसामज्ज्ञोश्च प्रस्थं दत्त्वा साधयेत्। ब्रह्मघोष-शङ्खपटहभेरीनिह्लादैः सिद्धं सितच्छत्रकृतच्छायं गजस्कन्ध-मारोहयेत्। भगवन्तं वृषभध्वजमभिपूज्य तं स्नेहं त्रिभागमात्रिकं समात्रिकं वा मङ्गलाशीःस्तुतिदेवतार्च्चनैर्वस्तिं गमयेत्। नृणां स्त्रीविहाराणां नष्टरेतसां क्षतक्षीणविषमज्वरार्त्तानां व्यापन्नयोनीनां वन्ध्यानां रक्तगुल्मिनीनां मृतापत्यानामनार्त्तवानाञ्च स्त्रीणां

सिद्धः कृतः कुटजफलादिकषायेणोपकल्पितः समासेन मिलितः सैन्धवादियुक्तो वस्तिः श्लेष्मव्याधिहरादिः। इति यापना वस्तयः उक्ताः ॥ २० ॥

गङ्गाधरः—अत ऊर्द्ध्वमित्यादि। वृष्यतमान् स्नेहाननुवासनान्। शता-वरीत्यादि। शतावर्य्यादीनां सप्तानां प्रत्येकं यन्त्रपीड़ितरसस्यैकैकं प्रस्थं गवादिक्षीराणां प्रत्येकं द्वौ द्वौ प्रस्थौ दद्यात्, तत्र जीवकादीनां कल्कान् यथार्हं दद्यात्। पृषदादीनां मांसं कुक्कुटादीनाञ्च मांसञ्च क्वाथयित्वा रसं वसामज्ज्ञोश्च प्रत्येकं प्रस्थं दत्त्वा साधयेत्। ततः सिद्धं तत् उद्धृतं स्नेहं ब्रह्मघोषवेदशब्दैः स्वस्त्यर्थवचनैः शङ्खादिनिह्लादैः श्वेतच्छत्रेण कृतच्छायं गजस्कन्धमारोहयेत्।

प्रधानत्वान्मधुतैलिका ज्ञेयाः। द्विपञ्चमूलीत्यादिकस्त्रिंशः। त्रिंशत्संख्या वस्तिसूत्रीयसिद्धि-पठितत्वाच्चेह पठनीयाः ॥ १९। २० ॥

क्षीणमांसरुधिराणां पथ्यतमं रसायनमुत्तमं बलीपलितनाशनं विद्यात् ॥ २१ ॥

इति चतुःस्नेहः ।

बलागोक्षुरकरास्नाश्वगन्धाशतावरीसहचराणां श्रृतं शतमायोज्य जलद्रोणशते प्रसाध्यम् । तस्मिन् जलद्रोणावशेषे रसे वस्त्रपूते विदार्य्यामलकस्वरसयोर्वस्तमहिषवराहवृषकुक्कुटवर्हिहंसकारण्डवसारसरसानां घृततैलयोश्चैकैकं पृथक् प्रस्थम् अष्टौ प्रस्थान् क्षीरस्य दत्त्वा चन्दनमधूलिकात्वक्क्षीरीबिसमृणालोत्पलपटोलफलात्मगुप्तान्नपाकितालमज्जखर्ज्जूर-मृद्वीका-तामलकी-कण्टकारी-जीवकर्षभकक्षुद्रसहामहासहाशतावरीमेदा-महामेदापिप्पलीह्रीवेरत्वक्पत्रकल्कांश्च दत्त्वा साधयेत् । ब्रह्मघोषादिना विधिना तत् सिद्धं वस्तिमादद्यात् । तेन स्त्रीशतं गच्छेत् न चैवात्र दत्ते विहाराहारयन्त्रणा क्वचित् । एष वृष्यो वर्ण्यो वृंहण आयुष्यो बलीपलितनुत् क्षतक्षीणमष्टशुक्रविषमज्वरार्त्तानां व्यापन्नयोनीनाञ्च पथ्यतमः ॥ २२ ॥

भगवन्त शिवमभिपूज्य तं स्नेहं तस्य तृतीयभागमाक्षिकयुक्तं समाक्षिकं वा मङ्गलादिपूर्व्वकैर्वस्तिं गमयेत् । शेषमाशीः ॥ २१ ॥          चतुःस्नेहः ।

गङ्गाधरः—बलेत्यादि । बलादीनां श्रृतं शत पलमायोज्य जलद्रोणशते पक्त्वा तस्मिन द्रोणावशेषे रसे वस्त्रपूते विदार्य्यामलकयोः स्वरसयोरेककं प्रस्थं वस्तादीनां सारसान्तानां मांसरसानामेकैकं प्रस्थं घृततैलयोश्च प्रस्थककं क्षीरस्याष्टौ प्रस्थान दत्त्वा चन्दनादीनां कल्कान घृततैलपादिकाम् दत्त्वा साधयेत् स्नेहपाकविधिना पचेत् । मुद्रापाके सति वस्त्रपूतं

चक्रपाणिः—स्नेहवस्तिप्रन्थांशं दर्शयन् स्नेहानाह— अत ऊर्द्ध्वमित्यादि । मत्ताक्षः कोकिलः । जीवञ्जीवो विषदर्शनमृत्युः । ब्रह्मघोषो वेदध्वनिः । ब्रह्मघोषादय अदृष्टद्वारा उपकारकाः ॥२१॥

चक्रपाणिः—बलेत्यादिकं द्वितीयं तैलम् ॥ २२ ॥

सहचरपलशतमुदकद्रोणशते पक्त्वा द्रोणशेषे रसे पूते विदारीक्षुरसप्रस्थाभ्यामष्टगुणक्षीरं घृततैलप्रस्थं बलामधुकमधूकचन्दनमधूलिकाशारिवामेदामहामेदाकाकोलीक्षीरकाकोलीपयस्यागुरुमञ्जिष्ठाव्याघ्रनखशटीसहचरीसहस्रवीर्य्यावराङ्गलोध्राणामक्षमात्रैर्द्विगुणशर्करैः कल्कैः साधयेत् । ब्रह्मघोषादिना विधिना तत् सिद्धं वस्तिं दद्यात्, एष सर्व्वरोगहरो रसायनो ललनानां श्रेष्ठोऽन्तःपुरचारिणीनाम् । क्षतक्षयवातपित्तवेदनाकासश्वासहरस्त्रिभागमाक्षिकोऽकालवलिपलितनुद् वर्णरूपबलमांसशुक्रवर्द्धनः । एते रसायनाः स्नेहवस्तयः सति विभवे शतपाकाः सहस्रपाका वा कार्य्या वीर्य्यबलाधानार्थमिति ॥ २३ ॥

भवन्ति चात्र श्लोकाः ।

इत्येते वस्तयः स्नेहाश्चोक्ताः प्राणिषु संज्ञिताः ।
स्वस्थानामातुराणाञ्च वृद्धानाञ्चाविरोधिनः ॥

कृत्वा स्थापयेत् । अथ सिद्धं तं स्नेहं ब्रह्मघोषादिना विधिना वस्तिमादद्यात्, तेन स्त्रीशत गच्छदित्याद्याशीः । अत्रान्नपाकी नीलझिण्टी ॥ २२ ॥

गङ्गाधरः—सहचरेत्यादि । सहचरस्य पलशतं जलद्रोणशते पक्त्वा द्रोणशेषे रसे पूते सति विदारीरसप्रस्थेनेक्षुरसप्रस्थेन तथाष्टगुणक्षीरमष्टप्रस्थक्षीरं घृततैलयोर्मिलित्वा प्रस्थं बलादीनामक्षमात्रकल्कद्विगुणशर्करैरक्षद्वयमितशर्करायुक्तैः साधयेत् । मुद्रापाकेऽवतार्य्य वस्त्रपूतं कृत्वा स्थापयेत् । ततो ब्रह्मघोषादिना विधिनानुवासनवस्तिं दद्यात् । एष इत्याद्याशीः । त्रिभागेत्यादि । स च स्नेहस्तृतीयभागमाक्षिकयुक्तो वस्तिरकालपलितनुत् । एत इत्यादि । एते शतावरीत्यादुक्ता रसायनस्नेहवस्तयः सति विभवे शतपाकादयः कार्य्या वीर्य्यबलाधानार्थमिति ॥ २३ ॥

चक्रपाणिः—सहचरपलशतमित्यादिकः स्नेहस्तृतीयः । सहस्रवीर्य्या दूर्व्वा, वराङ्गं अमरुत्वक् । शतपाकाश्चेत्यत्र स्नेहापेक्षया शतगुणेन वा द्रवेण एकदैव पाकं मन्यते ॥ २३ ॥

अतिव्यवायशीलानां शुक्रमांसबलप्रदाः।
सर्व्वरोगप्रशमनाः सर्व्वेष्वृतुषु यौगिकाः॥
नारीणामप्रजातानां नराणाञ्चाप्यपत्यदाः।
उभयार्थकरा दृष्टाः स्नेहवस्तिनिरूहयोः॥
व्यायामो मैथुनं मद्यं मध्वाशिशिरमम्बु च।
सम्भोजनं रथक्षोभो वस्तिष्वेतेषु गर्हितम्॥ २४॥
शिखिगोनर्द्द हंसाण्डैर्द्दक्षवद्वस्तयस्त्रयः।
विंशतिर्व्विष्किरैस्त्रिंशत् प्रतुदैः प्रसहैर्नव॥
विंशतिश्च तथा सप्त-विंशतिश्चाम्बुचारिभिः।
नव मत्स्यादिभिश्चैव शिखिकल्पेन वस्तयः॥
दश कर्कटकाद्यैश्च कूर्म्मकल्पेन वस्तयः।
मृगैः सप्तदशैकोन-विंशतिर्व्विष्किरैर्द्दश॥
आनूपैर्द्दक्षशिखिवद्भूशयैश्च चतुर्द्दश।
एकोनत्रिंशदित्येते सह स्नेहैः समासतः।
प्रोक्ता विस्तरशो भिन्ना द्वे शते षोड़शोत्तरे॥

गङ्गाधरः—अत्र प्रमाणश्लोकानाह—इत्येत इत्यादि। स्नेहवस्तिनिरूहयोर्मध्ये एते स्नेहवस्तय उभयार्थकराः। वाजीकरणकरा रसायनकराः। वस्तिषु निषिद्धमाह—व्यायाम इत्यादि। वस्तिष्वेतेषु रसायनेषु व्यायामादिकं गर्हितम् इति॥ २४॥

गङ्गाधरः—अत्र वस्तीनुपसंहरति शिखीत्यादि। शिखिप्रभृतिवस्तित्रयादयः पूर्व्वं स्फुटं व्याख्याताः। ते समासत एकोनत्रिंशत् वस्तयः सह स्नेहरुक्ताः,

चक्रपाणिः—ये केचिदुभयार्थकरा दृष्टा इति स्नेहवस्तिनिरूहयोरपि साध्यमर्थं स्नेहनं शोधनञ्च कुर्व्वत इति भावः। यापनावस्तिषु वर्जनीयमाह—व्यायाम इत्यादि॥ २४॥

चक्रपाणिः—शिखिगोनर्देत्यादिना उक्तवस्तिसंग्रहं करोति। संग्रहार्थश्च एकोनत्रिंशदित्येते

एते माक्षिकसंयुक्ताः कुर्व्वन्त्यतिवृषं नरम्।
नातियोगं न चायोगं स्तम्भितास्तेन कुर्व्वते॥
मृदुत्वान्न निवर्त्तन्ते दृष्ट्वा त्वेते प्रयोजिताः।
समूत्रवस्तिभिस्तीक्ष्णैराप्यश्च क्षिप्रमेव च।
शोथाग्निनाशपाण्डुत्व-गुल्मार्शःपरिकर्त्तिकाः।
ज्वरश्चवातिसारश्च यापनात्यर्थसेवनात्।
अरिष्टक्षीरसीध्वाद्यास्तत्रेष्टा दीपनी क्रिया॥
युक्त्या तस्मान्निषेवेत यापनान् न प्रसङ्गतः।
इत्युच्चैर्भाष्यपूर्व्वाणां व्यापदः सचिकित्सिताः।
विस्तरेण पृथक्प्रोक्तास्तेभ्यो रक्षेत् सदा नरान्।
उच्चैर्भाष्यादितो नृणां जायते हि सदा भयम्॥ २५॥

विस्तरतस्तु तेषां प्रत्येकगणनया षोड़शोत्तरशतद्वयं वस्तिविशेषाः। एते माक्षिकसंयुक्ता नरमतिवृषं करोति। नातीत्यादि। ते वस्तयस्तेन स्तम्भिताः सन्तो नातियोगं न चायोगं कुर्व्वते। एते वस्तयः प्रयोजिता मृदुत्वान्न निवर्त्तन्ते इति दृष्ट्वा समूत्रस्तीक्ष्णवस्तिभिः क्षिप्रमाप्यः प्राप्यः स्यात्। यापनावस्त्यतियोगदोषमाह—शोथेत्यादि। यापनावस्तेरत्यर्थ-सेवनाच्छोथादयः स्युः। तत्र चिकित्सामाह—अरिष्टेत्यादि। दीपनी जाठराग्नि-वर्द्धिनी क्रिया चेष्टा सम्मतेत्यर्थः। तस्माच्छोथादिसम्भवाद् युक्त्या यापनान् वस्तीन् निषेवेत। न प्रसङ्गतो निरन्तरतो न सेवेतेति। उपसंहरति—इत्युच्चै-रित्यादि। उच्चैर्भाष्यादितो हि नृणां सदा भयं जायते॥ २५॥

इति प्रत्येकं निर्द्दिष्टा वस्तयः। स्नेहैः समं एकोनत्रिंशद् भवन्तीत्यर्थः। समाहारसंख्यामाह—द्वे शते षोड़शोत्तरे इति। तच्च यथासमभिव्याख्यानं तथा तत्प्रोक्तमेव पूर्य्यते। अतिवृषमिति शुक्रोपचयवन्तम्। स्तम्भिताश्चेति मधुना स्तम्भिताः। यापनावस्त्यप्रवृत्तौ कर्त्तव्यमाह—मृदुत्वादि। मृदुत्वादियापनावस्त्यनुप्रयोगे दोषमाह—शोथेत्यादि। एतच्छोथादिषु चिकित्सा-माह—अरिष्टेत्यादि। तस्मादिति यापनान्यथाप्रयोगे शोथादिदर्शनात्। न प्रसङ्गत इति अनभ्यासतः। तेभ्यो रक्षेदिति उच्चैर्भाष्यादिजन्यव्यापद्भ्यो रक्षेत्॥ २५॥

कर्म्मणां वमनादीनामसम्यग्योजनापदाम् ।
यत्रोक्तं साधनं स्थाने सिद्धिस्थानं तदुच्यते ॥ २६ ॥
इत्यध्यायशतं विंशमात्रेयमुनिवाङ्मयम् ।
हितार्थं प्राणिनां प्रोक्तमग्निवेशेन धीमता ॥
दीर्घमायुर्यशः स्वास्थ्यं त्रिवर्गञ्चापि पुष्कलम् ।
संसिद्धिमुत्तमां लोके लभते विधिना पठन् ॥ २७ ॥
सङ्क्षिप्तमथ विस्तीर्णं लेशोक्तं विस्तृणाति च ।
संस्कर्त्ता कुरुते तन्त्रं पुराणञ्च पुनर्नवम् ॥

गङ्गाधरः—सिद्धिस्थानपदं व्युत्पाद्यते—कर्म्मणामित्यादि । आदिना-स्थापनादीनां ग्रहणम् ॥ २६ ॥

गङ्गाधरः—संहितामुपसंहरति । इतीत्यादि । अध्यायानां शतं विंशतेः पूरणञ्च विंशम् आत्रेयस्य कृष्णात्रिपुत्रस्य पुनर्व्वसोर्वाङ्मयम् । दीर्घमित्यादि । [illegible]हिताया अस्या विधिना पाठस्याशीर्दीर्घायुर्लाभादिः । सङ्क्षिप्तमित्यादि । [illegible]स्कर्त्ता यत् पुराणं तन्त्रं सङ्क्षिप्तमथ च विस्तीर्णं कस्मात् यतो लेशोक्तं

चक्रपाणिः—सिद्धिस्थानशब्दस्य निरुक्तिं दर्शयन् सिद्धिस्थानाभिधेयं वाक्यार्थसंग्रहणमाह—कर्म्मणामित्यादि । असम्यक्करणापदामिति वमनादीनामसम्यक्प्रयोगे जनितानामापदां वमनादि-व्यापत्प्रतिकारश्च सिद्धिस्थानार्थः प्रधानोपदर्शितः, तेन वमनादिषु कल्पनाद्यभिधानमपि अनागत-वमनादिव्यापन्निषेधप्रयोजनकं सिद्धिस्थाने युक्तमेव ॥ २६ ॥

चक्रपाणिः—सिद्धिस्थानं समाप्य कृत्स्नं तन्त्रमुपसंहरति—इत्यध्यायेत्यादि । आत्रेयमुनि-(श्रुति)वाङ्मयमिति अनुकृतात्रेयवचनमयम् । एतत्तन्त्राध्ययने फलमाह—दीर्घमायुरित्यादि । त्रिवर्गमिति धर्मार्थकामम्, पुष्कलमिति मोक्षम् । किंवा पुष्कलमिति त्रिवर्गविशेषणम् । सिद्धिमिति चिकित्साप्रयोगसाध्यनिष्पादकत्वम् । विधिना पठन्निति रोगभिषग्जितीयोक्तेन पाठविधिना । एतत् सविंशमध्यायशतं पठन् दीर्घायुर्लाभादेवम्भूतपाठजनितधर्म्मवशादेव पाठजनितशास्त्रावबोध-पूर्व्वकशास्त्रानुष्ठानाच्च ॥ २७ ॥

चक्रपाणिः—एतच्छास्त्रसंस्कारोपपत्त्युपदर्शनपूर्व्वकं शास्त्रस्य संस्कारकौ चरकदृढबलौ दर्शयन्नाह—दृढबलः संक्षिपति विस्तारयतीत्यादि । यस्माच्छास्त्रे प्रथममतिविस्तारतया प्रतिपादितेषु

अतस्तन्त्रोत्तममिदं चरकेणाति-(ग्र)-बुद्धिना।
संस्कृतं तनु संसृष्टं विभागेनोपलक्ष्यते॥
तच्छङ्करं भूतपतिं संप्रसाद्य समापयत्।
अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे॥
कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषाच्च बलोच्चयम्।
सप्तदशौषधाध्याय-सिद्धिकल्पैरपूरयत्॥ २८॥
इदमन्यूनशब्दार्थं तन्त्रं दोषविवर्ज्जितम्।
षट्त्रिंशता विचित्रं हि भूषितं तन्त्रयुक्तिभिः॥

विस्तृणाति इत्यत्र पुनर्नवं कुरुते, अतो हेतोरिदं तन्त्रोत्तमं चरकेणातिबुद्धिना संस्कृतं तनु स्वल्पं संश्लिष्टं विभागेनोपलक्ष्यते। तदित्यादि। तच्चरकसंस्कृतं तन्त्रं चिकित्सास्थानस्य शेषसप्तदशाध्यायकल्पस्थानसिद्धिस्थानमप्राप्तं दृढ़बलः पञ्चनदे वाराणसीक्षेत्रे पञ्चनदपुरे कपिलबालाज्जातः शङ्करं भूतपतिं शिवं सम्प्रसाद्य तन्त्रस्याखण्डार्थं खण्डाभावकरणार्थं समापयत्। बहुभ्यस्तन्त्रेभ्यो बलोच्चयं कृत्वा चिकित्सास्थानस्य शेषसप्तदशाध्यायसिद्धिस्थानकल्पस्थानैरपूरयत्॥ २७। २८॥

गङ्गाधरः—इदमित्यादि। तत् पूरणेनेदं तन्त्रमन्यूनशब्दस्यार्थं वाच्यं दोषम सम्यगर्थावगमः, तेन तद्दोषनिरासार्थं संस्कर्त्ता युज्यते। अतः तन्त्रोत्तममिदं चरकेण संस्कृतम्। पूर्व्वग्रन्थस्यातीवविस्तरत्वादिना तन्त्राभिधानं पूर्व्वश्रोतृजनाभिप्रायादेव बोद्धव्यम्। इदानीन्तनश्रोतृपुरुषाभिप्रायेण तु संस्कर्त्तुः संस्कारो ज्ञेयः। उक्तञ्च—"सक्षेपोक्तं प्रतिहन्ति विस्तरोक्तन्तु गृह्यते। संक्षेपविस्तरौ कृत्वा संस्कुर्य्यात तन्त्रमादितः॥" इति। पुराणञ्च पुनर्नवमिति विस्तारसङ्क्षेपादिना पुनर्नवं कुरुते। चरकसंस्कारात् पूर्णतां दर्शयन् दृढबल आह—तत्त्विरयदूरान्तरोक्त्या, तेन दृढबलप्रतिपादितैकचत्वारिंशदध्यायानां विंशाध्यायशतत्रिभागता युज्यते इति नोद्भावनीयम्। आत्मनः पञ्चनदपुरभवत्वेन श्रेष्ठप्रदेशभवत्वं दर्शयति। आत्मनः संस्कारे तन्त्रान्तरादिनार्षेण संस्कारं दर्शयन्नाह—कृत्वा बहुभ्य इत्यादि। तन्त्रेभ्यः सुश्रुतविदेहादितन्त्रेभ्यश्च विशेषस्य चरकोक्तार्थादतिरिक्तरूपस्य उच्चयः विशेषाच्च बलोच्चयः तमन्यतन्त्रेभ्यः कृत्वा सप्तदशौषधाध्यायसिद्धिकल्पैरिदमनन्यूनशब्दार्थं तन्त्रं दोषविवर्ज्जितं षट्त्रिंशत्तन्त्रयुक्तिभूषितमपूरयद् दृढबल इति योजना। तत्र भूमिपतितानामण्नां धान्यादिबीजानां शोधन्या संहरणं युक्तम्। एतेन तन्त्रेषु यत् सारभूतं तच्चरकाचार्य्यैः संगृहीतम्॥ २८॥

चक्रपाणिः—यथानुपूरितमिति दर्शयति अन्यूनशब्दार्थमिति। तन्त्रदोषाश्चतुर्द्दश पुनरुक्तं

**तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ।**
**प्रदेशोद्देशनिर्द्देश-वाक्यशेषाः प्रयोजनम् ॥**

वर्ज्जितं षट्त्रिंशता तन्त्रयुक्तिभिर्भूषितं विचित्रमिति । काः पुनः षट्त्रिंशत् तन्त्रयुक्तयः इत्यत आह—तत्रेत्यादि । तत्र तन्त्रयुक्तिषु तन्त्रसमन्वयार्थं योजनासु षट्त्रिंशत्सङ्ख्यासु मध्ये प्रथमा तन्त्रयुक्तिरधिकरणं नाम । तद् यमर्थमधिकृत्योच्यते ; यथा—दीर्घञ्जीवितमधिकृत्य यावदुक्तं पूर्व्वाध्याये तत् सर्व्वस्य दीर्घञ्जीविताधिकरणमेवं सर्व्वत्र । सुश्रुते च—यमर्थमधिकृत्योच्यते तदधिकरणं यथा रसं दोषं वा ॥०॥ योग इति । योगो नाम तन्त्रयुक्तिः सा, येन वाक्यं युज्यते ; यथा पादावशेषे शीते च पूते तस्मिन् सिताशतम् । दत्त्वा कुम्भे दृढ़े स्थाप्यं मासार्द्धं घृतभाविते । इति घृतभाविते दृढ़े कुम्भे स्थाप्यमिति योगः । सुश्रुते च—येन वाक्यं युज्यते स योगः । यथा—तैलं पिबेच्चामृतवल्लीविल्व-हिंस्राभयावृक्षकपिप्पलीभिः । सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगीति । सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धमिति प्रयुक्तमेवं दूरस्थानामपि पदानामेकीकरणं योगः । इति ॥०॥ हेत्वर्थ इति । हेत्वर्थो नाम तन्त्रयुक्तिः सा, यदन्यदुक्तमन्यार्थसाधकं भवति । यथा—विपरीतगुणर्द्रव्यैर्मारुतः सम्प्रशाम्यतीत्यादुक्त्वा विपरीतगुणदेशमात्राकालोपपादितः भेषजैर्विनिवर्त्तन्ते विकाराः साध्यसम्मता इत्येतदुक्तमदेशकालमात्राभिः

दुष्प्रणीतसूत्रसंग्रहाक्षममित्यादिना रागभिषग्जीतीयोक्तास्तैर्वर्ज्जितम् । तन्त्रयुक्तिभिरिति वक्ष्यमाणतन्त्रयुक्तिभिः । विचित्राभिर्न्याययुक्तिभिः । तन्त्रयुक्तिरेवाह । तन्त्राधिकरणमिति यत्र तन्त्रमधिकृत्य प्रवर्त्तते तत् । अत्र कस्मादधिकृत्यायुर्व्वेदो महर्षिभिः रोगमित्यधिकरणम् । योगो नाम योजना, व्यस्तानां पदानामेकीकरणम् । नवलक्षणं यथा—प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि । तत्र प्रतिज्ञा—मातृजश्चायं गर्भः । हेतुः—मातरमन्तरेण गर्भानुपपत्तेः । दृष्टान्तोपनयौ—यथा कूटागारं नानाद्रव्यसमुदायाद् यथा वा रथो नानाङ्गसमुदायात् । तस्मादेतदवोचाम मातृजश्चायं गर्भ इत्यादि निगमनम् । तस्मात् मातृजश्चायमित्येष प्रतिज्ञायोगः । एवमन्येऽपि योगार्थो व्याख्येयाः । हेत्वर्थो नाम येष्वन्यप्रभावाहितमन्यत्रोपपद्यते, यथा—समानगुणाभ्यासो हि धातूनां वृद्धिकारणमिति वातमधिकृत्योक्तं तत्र वातस्येति वक्तव्ये यदयं समानशब्देन यथा वायोस्तथा रसादीनामपि समानगुणाभ्यासो वृद्धिकारणमिति गम्यते । पदार्थो नाम पदस्य पदयोः पदानां वार्थः । तत्र द्रव्यमितिपदेन खादयश्चेतनाः षष्ठा इति । पदयोरर्थो यथा आयुषो वेद इति पदयोरायुर्व्वेद इत्यर्थः । एवं पदानामप्यर्थ उदाहार्य्यः । प्रदेशो यथा—यद् बहुत्वादर्थस्य कार्त्स्न्येनाभिधातुमशक्यत्वादतिदेशेनाभिधीयते । अर्थानुपात्तैकदेशोऽयमुक्तः । उद्देशः प्रायोगिक······इत्यादि । निर्द्देशो नाम सङ्क्षेपेणोक्तस्य

प्रयुक्तविपरीतगुणभेषजैः साध्यसम्मता विकारा न निवर्त्तन्त इत्यर्थसाधकं भवतीति। सुश्रुते च—यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः। यथा मृत्पिण्डोऽद्भिः प्रक्लिद्यते तथा माषमुद्गप्रभृतिभिर्व्रणः प्रक्लिद्यत इति ॥०॥ अर्थः पदस्य चेति पदार्थो नाम तन्त्रयुक्तिः सा, योऽर्थोऽभिहितः सूत्रे पदे वा। पदार्थस्त्वनेकस्तत्र योऽर्थः पूर्व्वापरयोगसिद्धो भवति सोऽर्थो ग्राह्यः। यथा—गुणाः गुणाश्रया नोक्ता इति। तत्र गुणशब्दः प्रकृतिभूतरूपरसादिषु सप्तदशसु वर्त्तते तत्कार्य्यश्वेतपीतादिषु च वर्त्तते। तत्र गुणा अपि विभाज्यन्ते गुणेनापि। यथा—षड्रसाः पयसोऽधिक इक्षुरसे मधुर इत्येवमादि। प्रकृतिगुणाश्रयाः कार्य्यगुणा दृश्यन्ते। तत्र गुणा गुणाश्रया नेति यदुच्यते तत् कार्य्यगुणाश्रयाः कार्य्यगुणा न भवन्तीति। सुश्रुते च—योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः। अपरिमिताश्च पदार्थाः। यथा—स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते, तत्र योऽर्थः पूर्व्वापरयोगसिद्धो भवति स ग्रहीतव्यः। यथा—वेदोत्पत्तिमध्यायं व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धिः कतमस्य वेदस्यायमुत्पत्तिं विवक्षुरिति। ऋग्वेदादयस्तु वेदास्तत्र पूर्व्वापरयोगमुपलभ्य विद् विचारणे विद् विन्दन्तीत्येतयोश्च धात्वोरनेकार्थयोः प्रयोगः पश्चात् प्रतिपत्तिर्भवति। आयुर्व्वेदोत्पत्तिमयं विवक्षुरित्येवं पदार्थः ॥०॥ प्रदेश इति। प्रदेशो नाम तन्त्रयुक्तिः सा, यत् प्रकृतस्यातिक्रान्तेन साधनम्। यथा—अतिव्यवायशीलानां शुक्रमांसबलप्रदाः। नारीणामप्रजातानां नराणाञ्चाप्यपत्यदाः इति। इत्येते वस्तयः खल्वति व्यवायशीलानां शुक्रादिप्रदास्ते चाप्रजातानां नारीणामपत्यदा इति। सुश्रुते च—प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः। यथा—देवदत्तस्यानेन शल्यमुद्धृतं तस्माद् यज्ञदत्तस्याप्ययमेवोद्धरिष्यतीति ॥०॥ उद्देशो नाम तन्त्रयुक्तिः सा, यत् समासकथनम्। यथा—सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म्म च। समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिता इति। सुश्रुते च—समासकथनमुद्देशः। यथा शल्यमिति ॥०॥ निर्देश इति। निर्देशो नाम तन्त्रयुक्तिः सा, यद् विस्तरेणोच्यते। यथा—खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः। इत्येवमादि। सुश्रुते च—विस्तरवचनं निर्देशः। यथा—शारीरमागन्तु चेति ॥०॥ वाक्यशेष इति। वाक्यशेषो नाम तन्त्रयुक्तिः सा, येन पदेनानुक्तेन वाक्यं

विवरणम्। यथा— हेतुलिङ्गौषधस्य पुनः प्रपञ्चनम्। वाक्यशेषो नाम यस्यार्थेन वाक्येषु यदगम्यमानतया पूर्त्तये पूरणम्। यथा प्रवृत्तिर्हेतुभावानामित्यत्रास्तीति पदं पूर्य्यते। तथा जाङ्गलजै रसैरित्यत्र मांसशब्दः पूर्य्यते। वाक्यवत् पदाः शेषाश्च क्रियन्ते येऽनिवेशिता अपि प्रतीयन्ते। प्रयोजनं नाम—

उपदेशापदेशाति-देशार्थापत्तिनिर्णयाः ।
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्य्ययः ॥

परिसमाप्यते, यथा—अथापरे त्रयो वृक्षाः पृथग् ये फलमूलिभिः। स्नुह्यर्का श्मान्तकास्तेषामिदं कर्म्म पृथक् पृथगित्यत्र शृण्विति पदमनुक्तं वाक्यशेषः। सुश्रुते च—येन पदेनानुक्तेन वाक्यं समाप्यते स वाक्यशेषः। यथा—शिरःपाणि पादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणमपि गम्यते पुरुष एवोक्त इति ॥०॥ प्रयोजनमिति। प्रयोजनं नाम तन्त्रयुक्तिः सा, यदर्थमारभ्यन्त आरम्भा इति विमाने स्वयमुक्तमुदाहृतञ्च तत्रव। नेदं सुश्रुते तन्त्रयुक्तिषूक्तम् ॥०॥ उपदेश इति। उपदेशो नाम तन्त्रयुक्तिः सा, इदमेवमिदं नेवमिति यदुच्यते। यथा—यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत्। तद्द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः इत्येवमादिः। सुश्रुते च—एवमित्युपदेशः। यथा—तथा न जागृयाद् रात्रौ दिवास्वप्नञ्च वर्ज्जयेत् इति ॥०॥ अपदेश इति। अपदेशो नाम तन्त्रयुक्तिः सा, कारणेनानेनेदमिति यदुच्यते। यथा—अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम्। रसादीनां संक्षयाच्च तथवावृष्यसेवनादिति। सुश्रुते च—अनेन कारणेनेत्यपदेशः। यथोपदिश्यते—मधुरेण श्लेष्माभिवर्द्धत इति ॥०॥ अतिदेश इति। अतिदेशो नाम तन्त्रयुक्तिः सा, यत् प्रकृतस्यानागतेन साधनम्। यथा—सद्वाक्यश्च शमं याति ज्वरः क्रोधसमुद्भवः इति। सुश्रुते च—प्रकृतस्यानागतेन साधनमतिदेशः। यथा—अनेनास्य वायुरूर्द्ध्वं उपतिष्ठते, तेनोदावर्त्तः स्यादिति ॥०॥ अर्थापत्तिरिति। अर्थापत्तिर्नाम तन्त्रयुक्तिः सा, यत्रकेनार्थेनोक्तेन परस्यार्थस्यानुक्तस्य सिद्धिः। यथा—नायं सन्तर्पणसाध्यो व्याधिरित्युक्ते

यदर्थं कामयमाना प्रवृत्तिर्यथा—"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्"। उपदेशो नामाप्तानुशासनम्—स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरमित्यादि। अपदेशो नाम यत् प्रतिज्ञातार्थ-साधनाय हेतुवचनम्, यथा—वाताज्जलं जलाद्देशं देशात् कालं स्वभावतः, विद्यादित्यादि। तत् प्रतिज्ञातार्थस्य हेतुवचनं दुष्परिहरत्वादिति। अतिदेशो नाम यत् किञ्चित् प्रकाश्यार्थमनुक्तार्थसाधनायैव-मन्यदपि प्रत्येतव्यमिति परिभाष्यते। यथा—"यच्चान्यदपि किञ्चित् स्यादनुक्तमिह पूजितम्। पूर्णं तदपि वात्रेयः सदैवमनुमन्यते"। अर्थापत्तिर्नाम यदकीर्त्तितमिति मत्वा आपाद्यते सार्थापत्तिः। यथा—नक्तं दधिभोजननिषेधोऽस्त्यर्थाद् दिवा भुञ्जीतेत्यापाद्यते। निर्णयो नाम विचारितस्यार्थस्य व्यवस्थापनम् यथा—चतुष्पदभेषजत्वादिविचारं कृत्वाभिधीयते। यदुक्तं षोड़शकलं पूर्वाध्याये भेषजमुक्तं तद् युक्तियुक्तमारोग्यायेति। प्रसङ्गो नाम पूर्व्वाभिहितस्यार्थस्य प्रकरणागतत्वात् पुनरभिधानम्। यथा—

भवत्यर्थप्राप्तिरपतर्पणसाध्योऽयमिति। सुश्रुते च—यदकीर्त्तितमर्थादापद्यते सार्थापत्तिः। यथा—ओदनं बुभुक्षुरित्युक्तेऽर्थादापन्नं भवति नायं पिपासुर्यवागूमिति ॥०॥ निर्णय- इति। निर्णयो नाम तन्त्रयुक्तिः सा, यत् पूर्व्वपक्षस्योत्तरवचनम्। यथा कतिधापुरुषीये—निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथम्। स्वतन्त्रश्चेदनिष्टासु कथं योनिषु जायते? तत्रोत्तरम्—अचेतनक्रियावच्च मनश्चेतयिता परः। युक्तस्य मनसा तस्य निर्द्दिश्यन्ते विभोः क्रियाः। यथास्वेनात्मनात्मानं सर्व्वः सर्व्वासु योनिषु। प्राणस्तन्त्रयते प्राणी न ह्यन्योऽन्यस्य तन्त्रकः” इति। सुश्रुते च—तस्योत्तरं निर्णयः। यथा—शरीरं प्रपीड्य पश्चादधो गत्वा वसामेदोमज्जानुविद्धं मूत्रं विसृजति वात एवमसाध्या वातजा इति ॥०॥ प्रसङ्ग इति। प्रसङ्गो नाम तन्त्रयुक्तिः सा, यत् प्रकरणान्तरेण समापनम्। यथा—सत्त्वमात्मा शरीरञ्च त्रयमेतत् त्रिदण्डवत्। लोकस्तिष्ठति संयोगात् तत्र सर्व्वं प्रतिष्ठितम्। स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतमिति प्रथमाध्यायेऽभिधाय पुनः कतिधापुरुषीये प्रोक्तं चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः। खादयश्चेतनाषष्ठधातवः पुरुषः स्मृतः। ततश्च धातुभेदेन चतुर्व्विंशतिकः स्मृत इति। सुश्रुते च—प्रकरणान्तरेण समापनं प्रसङ्गः, यद् वा प्रकारान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः। यथा—पञ्चमहाभूतशरीरिसमवायः पुरुषः तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय भूतविद्यायां पुनरुक्त यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुष इति स खल्वेवं कर्म्मपुरुषश्चिकित्सायामधिकृत इति ॥०॥ एकान्त इति। एकान्तो नाम तन्त्रयुक्तिः सा, सर्व्वत्र यदवधारणेनोच्यते। अवधारणं विधेयायोगव्यवच्छेदः। यथा—कटुकः कटुकः पाके वीर्य्योष्णश्चित्रको मतः। तदवद् दन्तीप्रभावाद्धि विरेचयति मानवमिति सर्व्वस्मिन्नेव चित्रके कटुकत्वाद्ययोगव्यवच्छेदः। सर्व्वत्र दन्त्याश्च कटुकत्वाद्ययोगव्यवच्छेदो विरेचकत्वायोगव्यवच्छेदश्चेति। सुश्रुते चोक्तम्—सर्व्वत्र यदवधारणेनोच्यते स एकान्तः। यथा त्रिवृद् विरेचयति, मदनफलं वामयतीति। एतेन विधेयायोगव्यवच्छेद एवावधारणं ख्यापितम्। तथा च पाथ एव सर्व्वतः

तत्रातिप्रभाववता दृशातिमात्रदर्शनमतियोगः। एकान्तो नाम एवमाद्यभिधानम्। नकान्तः पुनरप्युप्रशब्दात् सर्व्वगो न चेदित्यादिनान्यतरपक्षावधारणम्। यथा—ये ह्यातुराः केवलाद् भेषजादृते म्रियन्ते न ते सर्व्व एव भेषजोपपन्नाः। अपवर्गो नाम साकल्येनोद्दिष्टस्यैकदेशापकर्षणम्। यथा—न पर्य्युषितान्नमाददीतान्यत्र मांसहरितशुष्कभक्ष्येभ्य इति। तत्र हि सामान्येन पर्य्युषितभोजननिषेधं कृत्वा मांसादेः पर्य्युषितस्य ग्रहणमपकृष्य विधीयते। विपर्य्ययो नाम निदानोक्तान्यस्योप-

पूर्व्वपक्षविधानानु-मतव्याख्यानसंशयाः।
अतीतानागतावेक्षा-स्वसंज्ञोह्यसमुच्चयाः॥

कृष्टधनुर्द्धर इति पार्थ सर्व्वोत्कृष्टधनुर्द्धरत्वायोगव्यवच्छेदो नकान्तः, सर्व्वत्राभावात्। पार्थादन्यस्मिन् सर्व्वोत्कृष्टधनुर्द्धरत्वयोगव्यवच्छेदश्च नकान्तः सर्व्वत्राभावात् ॥०॥ नकान्त इति। नैकान्तिकं नाम तन्त्रयुक्तिः सा, क्वचित् सजातीये तथा क्वचिदन्यथेति। यथा—सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः, सन्ति चापरे आगमप्रत्ययादेव पुनर्भवमिच्छन्तीति। सुश्रुते च—क्वचित् तथा क्वचिदन्यथेति यः सोऽनकान्तः। यथा केचिदाचार्य्या ब्रुवन्ते द्रव्यं प्रधानं केचिद्रसं केचिद् वीर्य्यं केचिद् विपाकमिति ॥०॥ अपवर्ग इति। अपवर्गो नाम तन्त्रयुक्तिः सा, यत् पुनरभिव्याप्यापकर्षणम्। यथा—सर्व्वमम्लं पित्तकरमन्यत्र दाड़िमामलकात्। सुश्रुते च—अभिव्याप्यापकर्षणमपवर्गः। यथा अस्वेद्या विषोपसृष्टा अन्यत्र कीटविषादिति ॥०॥ विपर्य्यय इति। विपर्य्ययो नाम तन्त्रयुक्तिः सा, यद् यस्य विपरीतम्। यथा—स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः। जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तका इति, तद्विपरीतं लभ्यते कट्वम्ललवणाः पित्तं स्वाद्वम्ललवणाः कफम्। कटुतिक्तकषायाश्च कोपयन्ति समीरणमिति विज्ञायते। सुश्रुते चोक्तं—यद् यत्राभिहितं तस्य प्रातिलोम्यं विपर्य्ययः। यथा—कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढ़ादयः सुचिकित्स्याः स्युरिति ॥०॥ पूर्व्वपक्ष इति। पूर्व्वपक्षो नाम तन्त्रयुक्तिः सा, य आक्षेपपूर्व्वकः प्रश्नः। यथा—निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथमिति। सुश्रुते च—आक्षेपपूर्व्वकः प्रश्नः पूर्व्वपक्षः। यथा—कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति ॥०॥ विधानमिति। विधानं नाम तन्त्रयुक्तिः सा, यत् प्रकरणानुपूर्व्व्याभिधीयते। यथा—उच्चैर्भाष्यं रथक्षोभश्चातिचङ्क्रमणासने। अजीर्णाहितभोज्ये च दिवास्वप्नश्च मैथुनमित्यष्टमहादोषाणां प्रकरणानुपूर्व्व्या लिङ्गं भेषजञ्चोक्तमिति विधानम्। सुश्रुते च—प्रकरणानुपूर्व्व्याभिहितं विधानम्। यथा—सक्थिमर्म्माण्येकादश प्रकरणानुपूर्व्व्याभिहितानि ॥०॥ अनुमतमिति। अनुमतं

शेते न विपरीतानि चोपशेते इति। पूर्व्वपक्षो नाम प्रतिज्ञातार्थवाक्यार्थसन्दूषकं वाक्यम्। यथा—मत्स्यान् न पयसाऽभ्यवहरेदिति प्रतिज्ञातार्थस्य सर्व्वानेव मत्स्यान् न पयसाऽभ्यवहरेदन्यत्र चिलिचिमादित्यत्र। दुष्टिशब्देन मलानां हीनत्वमधिकत्वमाचार्य्यगृहीतमाचार्य्या वर्णयति—'मल-

नाम तन्त्रयुक्तिः सा, यत् परमतमप्रतिषिध्योच्यते। यथा — तत्रातीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं चेत इत्याहुरेके। सुश्रुते च — परमतप्रतिषिद्धमनुमतम्। यथान्यो ब्रूते सप्तरसा इति ॥०॥ व्याख्यानमिति। व्याख्यानं नाम तन्त्रयुक्तिः सा, यदतिशयेन वर्णनम्। यथा — ततस्तु धातुभेदेन चतुर्व्विंशतिकः स्मृतः इति। सुश्रुते च — तत्रातिशयोपवर्णनं व्याख्यानम्। यथेह पञ्चविंशतिकः पुरुषो व्याख्यायते। अन्येष्वायुर्व्वेदतन्त्रेषु भूतादिप्रकृत्यारब्धचिन्ता ॥०॥ संशय इति। संशयो नाम तन्त्रयुक्तिः सा, यदुभयहेतुदर्शनम्। यथा — इतश्च्युताः पुनर्भविष्यामो न वेति संशयः, कस्मात्? सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः, सन्ति चापरे आगमप्रत्ययादेव पुनर्भवमिच्छन्तीति। सुश्रुते च — उभयहेतुदर्शनं संशयः। यथा — तलहृदयाभिघातः प्राणहरः। पाणिपादच्छेदनमप्राणहरमिति ॥०॥ अतीतावेक्षेति। अतीतावेक्षणं नाम तन्त्रयुक्तिः सा, यत् पूर्व्वमुक्तं तदवेक्षणम्। यथा — चिकित्सितस्थाने ज्वरचिकित्सितेऽभिहितम्। निदाने पूर्व्वमुद्दिष्टा या पृथक् च ज्वराकृतिः। संसर्गसन्निपातानां तया चोक्तं स्वलक्षणमिति। सुश्रुते च — यत् पूर्व्वमुक्तं तदतिक्रान्तावेक्षणम्। यथा — चिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति ॥०॥ अनागतावेक्षेति। अनागतावेक्षणं नाम तन्त्रयुक्तिः सा, यदेवं वक्ष्यतीत्यवेक्ष्यते। यथा — षड्विरेचनशतानीति यदुक्तं तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिषद्यनुव्याख्यास्याम इति। सुश्रुते च — एवं वक्ष्यतीत्यनागतावेक्षणम्। यथा श्लोकस्थाने ब्रूयात् चिकित्सिते वक्ष्यामीति ॥०॥ स्वसंज्ञा इति। स्वसंज्ञा नाम तन्त्रयुक्तिः सा, या न शास्त्रान्तरसामान्या संज्ञा।

वृद्धिं गुरुत्वेन लाघवात् मलसंक्षयम। मलायनानां बुध्येत सङ्गोत्सर्गादतीव च।' केचित् तु प्रकरणानुपूर्व्व्यार्थाभिधानं विधानमाहुः। यथा — रसरुधिरमांसमेदोऽस्थिमज्जशुक्राणामुत्पादः क्रमानुरोधेनाभिधानम्। अनुमतं नाम सह एकीयमतस्यानिवारणेनानुमननम्। यथा — गर्भशल्यं जरायुःप्रपातनं कर्म्म समानमित्यादेरेकीयमतं प्रतिपाद्याप्रतिषेधादनुमन्यते। व्याख्यानं नाम यत् सर्व्वबुद्धिविषयं व्याक्रियते, यथा — 'प्रथमे मासि सम्मूर्च्छितः सर्व्वधातुकलुषीकृतः खेटभूतो भवत्यव्यक्तविग्रहः' इत्यादिनास्य वाक्यस्य विदितार्थस्य व्याकरणम्। संशयो नाम विशेषाकाङ्क्षावारितोभयविषयज्ञानम्, यथा — 'मातरं पितरञ्चैके मन्यन्ते जन्मकारणम्। स्वभावं परनिर्म्माणमदृष्टञ्चापरे जनाः' इत्यादिनोक्तः संशयः। अतीतावेक्षणं नाम यदतीतानां पुनरवेक्षणम्, यथा — 'सा कुटी तच्च शयनं ज्वरं संशमयत्यपि' इत्यस्य स्वेदाध्यायविहितकुट्याद्यतीतकर्म्मावेक्ष्यते। अनागतावेक्षणं नाम यदनागतं विधिं प्रमाणीकृत्यार्थसाधनम्, यथा वा तिक्तसर्पिष इत्याद्यनागतावेक्षणेनोच्यते। संज्ञा नाम

निदर्शनं निर्व्वचनं सन्नियोगो विकल्पनम् ।
प्रत्युच्चारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ॥

यथा—असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेत्येतत् तन्त्रकृता संज्ञा नान्यत्रास्ति। दीपनपाचनयोगे प्रमथ्या संज्ञेति। सुश्रुते च—अन्यशास्त्रासामान्या स्वसंज्ञा। यथा—मिथुनमिति मधुसर्पिषोर्ग्रहणमिति ॥०॥ ऊह्यमिति। ऊह्यं नाम तन्त्रयुक्तिः सा, यदनिर्द्दिष्टं तद् बुद्धिमता यन्निर्दिश्यते। यथा—मात्राशी स्यात्। आहारमात्रा पुनर्यावद्ध्यशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां समुपगच्छति तावदस्य मात्राप्रमाणं वेदितव्यं भवतीति, अत्राशनं चतुर्व्विधमशितखादितपीत-लीढभेदेनेत्यूह्यम्। सुश्रुते च—यदनिर्द्दिष्टं बुद्धिमता तदूह्यम्। यथा—अभिहित-मन्नपानविधौ चतुर्व्विधमन्नमुपदिश्यत इति ॥०॥ समुच्चय इति। समुच्चयो नाम तन्त्रयुक्तिः सा, यदिदमिदञ्चेत्युच्यते। यथा—पुनर्नवैरण्डनिकुम्भचित्रकान् सदेवदारुत्रिवृतानिदिग्धिकान्। महान्ति मूलानि च पञ्च तद्बलान् विपाच्य मूत्रे दधिमस्तुसंयुते। इत्येवमादिः। सुश्रुते च—इदञ्चेदञ्चेति समुच्चयः। यथा—मांसवर्गे एणहरिणलावतित्तिरिसारसाः प्रधानमिति ॥०॥ निदर्शनमिति। निदर्शनं नाम तन्त्रयुक्तिः सा, यत्र दृष्टान्तेनार्थप्रसाधनम्। यथा विषं यथा शास्त्रं यथाऽग्निरशनिर्यथा। तथौषधमविज्ञातं विज्ञातममृतं यथेति। सुश्रुते च—दृष्टान्ते-नार्थः प्रसाध्यते यत्र तन्निदर्शनम्। यथाग्निर्वायुना सहितः कोष्ठे वृद्धिं गच्छति,

या तन्त्रकारैर्व्यवहारार्थं संज्ञा क्रियते, यथा—वृन्ताकश्योनाकादिका संज्ञा। ऊह्यं नाम पदनिबन्ध-ग्रन्थे प्रज्ञया तर्क्यत्वेनोपदेश्यते, यथा—'यदुक्तमप्यनुक्तं सत् तदेत्यतापकर्पयेदित्यादि।' समुच्चयो नाम, यदादि तदन्ते च कृत्वा विधीयते, यथा—वर्णश्च स्वरसश्चेत्यादि। निदर्शनं नाम मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः, यथा—विज्ञातमौषधममृतं यथेत्यादि। निर्व्वचनं नाम पण्डितबुद्धि-गम्यो दृष्टान्तः, यथा—'ज्ञायते नित्यगत्यैव कालस्यात्ययकारणम्।' निदर्शननिर्व्वचनयोरयं विशेषः, यत् निदर्शनं मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः। निर्व्वचनन्तु पण्डितबुद्धिवेद्यमेव। किंवा निर्व्वचनं निरुक्तिर्यथा—'विविधं सर्पति यतो विसर्पस्तेन संज्ञितः' इत्यादि। सन्नियोगो नाम अव-श्यानुष्ठेयतया विधानम्, यथा—नन्वेषा स्वेदमूर्च्छापरीतानामित्यादि। विकल्पः पाक्षिकाभिधानम्, यथोदकं वा कुशोदकमित्यादि। प्रत्युच्चारो नाम परनिवारणम्, यथा—वार्य्योविदस्तु नेत्याह नह्येकं कारणं मनः। नर्त्ते शरीराच्छारीर-रोगाणां मनसः स्थितिः। राजसानि तु भूतानि व्याधयश्च पृथग्-विधाः। आपो हि रसवत्यस्ताः स्मृता इत्यादि। हिरण्याक्षो निषेधयति न ह्यात्मा रजसः स्मृत इत्यादि। उद्धारो नाम परपक्षदूषणं दत्त्वा स्वपक्षोद्धरणम्, यथा—'येषामेव हि भावानां सम्पत् सञ्जनयेन्नरम्। तेषामेव हि भावानां विपद्व्याधीनुदीरयेत्' इत्यादिना स्वपक्षोद्धरणम्।

तन्त्रे समासव्यासोक्ता भवन्त्येता हि कृत्स्नशः।
एकदेशेन दृष्टा तु समासाभिहितं यथा ॥

तथा वातपित्तकफदुष्टो व्रण इति ॥०॥ निर्व्वचनमिति। निर्व्वचनं नाम तन्त्रयुक्तिः सा, यन्निश्चितमुच्यते। यथा—तत्रायुर्व्वेदयतीत्यायुर्व्वेद इति। सुश्रुते च—निश्चितं वचनं निर्व्वचनम्। यथा—आयुर्विद्यतेऽस्मिन्ननेन वायुर्विन्दतीत्यायुर्व्वेद इति ॥०॥ सन्नियोग इति। सन्नियोगो नाम तन्त्रयुक्तिः सा, यदिदमेव कार्य्यं नेदं कार्य्यमित्येवं प्रेरणम्। यथा—मात्राशी स्यात्, यथा च—देवगोब्राह्मणगुरुवृद्धसिद्धाचार्य्यानर्च्चयेदित्येवमादिः। सुश्रुते च—इदमेव कर्त्तव्यमिति नियोगः। यथा—पथ्यमेव भोक्तव्यमिति ॥०॥ विकल्पनमिति। विकल्पो नाम तन्त्रयुक्तिः सा यन्नवेति विशेषेण कल्प्यते। यथा—मद्यमल्पं न वा पेयमथवा सुबहूदकमिति। सुश्रुते च—इदञ्चेति विकल्पः। यथा—रसौदनः सघृता यवागूर्वा। इति ॥०॥ प्रत्युच्चार इति। प्रत्युच्चारो नाम तन्त्रयुक्तिः सा, यत् पूर्व्वमुच्चरितं पुनस्तथवोच्चार्य्यते। यथा—षड्विरेचनशतानि भवन्तीति यत् पूर्व्वमुक्तं तत् प्रत्युच्चार्य्यते, यथा—विरेचनशतानीति यदुक्तमिति ॥०॥ अथ संशयः। संशयो नाम सन्दिग्धेष्वर्थेष्वनिश्चय इत्येवमादिः। नेयं सुश्रुतेऽभिहिता, तस्यां संहितायां तथाप्रयोगाभावात्। उद्धार इति। उद्धारो नाम तन्त्रयुक्तिः सा, यदुपदिष्टाथमनुसृत्योद्धार्य्यते। यथा—कटुतिक्तकषायातिरूक्षसन्दुष्टभोजनैरित्युक्त्वा मरिचादिकटु-निम्बादितिक्त-हरीतक्यादिकषाया इत्येवमादिद्रव्यमुद्धार्य्यते ॥०॥ सम्भव इति। सम्भवो नाम तन्त्रयुक्तिः सा, यो यतः सम्भवति स तस्य सम्भव इति प्रागभिहितम्। यथा—दोषा व्याधीनां सम्भवः ॥०॥ इति षट्त्रिंशत्तन्त्रयुक्तय इह तन्त्रे भूषणानि भवन्ति। समासव्यासाभ्यामुक्ता इह तन्त्रे भवन्ति। कथम्? यथा खल्वेकदेशेन दृष्टा कृत्स्नशोऽवयवेषु दृष्टो भवति तथा समासाभिहितं ज्ञात्वा कृत्स्नस्य ज्ञाता स्यात्।

सम्भवो नाम यद् यस्मिन् उपपद्यते स तस्य सम्भवः, यथा—मुखे व्यङ्गनीलिकादयः सम्भवन्तीत्यादि। इत्येताः षट्त्रिंशत् तन्त्रयुक्तयो व्याहृताः। भट्टारहरिश्चन्द्रेण चतस्रस्तन्त्रयुक्तयः परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्या व्याहृताः, ताश्च तन्त्रे अपठितत्वादेतास्वेवान्तर्भावनीयाः। तत्र परिप्रश्न उद्देशेऽन्तर्भवति व्याकरणन्तु व्याख्याने। व्युत्क्रान्ताभिधानं निर्देशभेदः। हेतुशब्देन यानि प्रत्यक्षादीनि प्रमाणान्युक्तानि तानि हेतावन्तर्भवन्ति। चतुर्दश तन्त्रदोषा भवन्ति तदुत्तरतन्त्रे प्रतिपादितत्वान् नेह विलिखिताः। सम्प्रति तन्त्रयुक्तीरुद्दिश्य अनुसरणमाह—तन्त्रे समास-

यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा ।
प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः ॥ २६ ॥
एकस्मिन्नपि यस्येह शास्त्रे लब्धा सदा मतिः ।
स शास्त्रमन्यदप्याशु युक्तिं ज्ञात्वा प्रबुध्यते ॥
अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्यविचक्षणः ।
नाधिगच्छति शास्त्रार्थानर्थान् भाग्यक्षये यथा ॥
दुर्गृहीतं क्षिणोत्येव शास्त्रं शस्त्रमिवाबुधम् ।
सुगृहीतं तदेव ज्ञं शास्त्रं शस्त्रञ्च रक्षति ॥

ननु तन्त्रयुक्तीनां किं प्रयोजनमित्यत आह—यथेत्यादि । अम्बुजवनस्यार्को यथा प्रबोधनार्थः प्रकाशनार्थश्च, एवं वेश्मनो यथा प्रदीपः प्रबोधनार्थः प्रकाशार्थश्च, तथा तन्त्रस्य युक्तयः प्रबोधनप्रकाशार्थाः शास्त्राणामिति ॥ २९ ॥

गङ्गाधर—एकस्मिन्नित्यादि । यस्य जनस्यकस्मिञ्छास्त्रे सदा मतिर्लब्धा, स जनोऽन्यच्छास्त्रमपि युक्तिं ज्ञात्वाशु प्रबुध्यते । अधीयान इत्यादि । शास्त्राण्यधीयानोऽपि तन्त्रयुक्त्यविचक्षणः यस्तन्त्रयुक्तीर्न वेत्ति स शास्त्रार्थान् नाधिगच्छति यथा भाग्यक्षयेऽर्थान्नाधिगच्छतीति । दुर्गृहीतमित्यादि । दुर्गृहीतं शास्त्र खल्वबुधं क्षिणोत्येव दुर्गृहीतं शस्त्रमिव । सुगृहीतं तच्छास्त्रं ज्ञं बुधं रक्षति शस्त्रञ्च

व्यासोक्ता इत्यादि । समासाभिहिता इत्यनेन अतिसङ्क्षिप्ते तन्त्रे सर्व्वास्तन्त्रयुक्तयो भवन्तीति दर्शयति, किंवा समासाभिहिता एकदेशेन दृश्यन्ते इति सम्बन्धः । तन्त्रयुक्तीनां कार्य्यं दृष्टान्तेन दर्शयन्नाह—यथेत्यादि । यथाम्बुजवनस्य सङ्कुचितस्य विस्तारकोऽर्कस्तथा सङ्कुचितस्यार्थस्य विस्तारकास्तन्त्रयुक्तयः प्रबोधनाद् भवन्ति । दीपदृष्टान्तेन तु यथा दीपस्तमसा पिहितं प्रकाशयति, तथा हेत्वादिकास्तन्त्रयुक्तयः सन्तमर्थं गूढं प्रकाशयन्तीति दर्शयति । तदेवार्थद्वयं तन्त्रयुक्तीनां सम्पाद्यमभिप्रेत्योक्तं प्रबोधनप्रकाशार्था इति ॥ २९ ॥

चक्रपाणिः— व्यक्शास्त्राभ्यासफलमाह—एकस्मिन्नपीत्यादि । शास्त्रे दुर्ज्ञानसम्यक्ज्ञानयोर्दोषगुणानाह—दुर्गृहीतमित्यादि । दुर्गृहीतं शस्त्रं यथात्मन एव पदच्छेदादिकमापादयति, तथा दुर्गृहीतं शास्त्रं मिथ्याभेषजप्रयोगादात्मनोऽपि व्यापदमावहति । यथा वा शस्त्रं सुगृहीतं

तस्मादेता प्रवक्ष्यन्ते विस्तरेणोत्तरे पुनः।
तत्त्वज्ञानार्थमस्यैव तन्त्रस्य गुणदोषतः ॥ ३० ॥

तत्र श्लोकाः।

इदमखिलमधीत्य सम्यगर्थान् विमृशति यो विमलः प्रयोगनित्यः।
स मनुजसुखजीवितप्रदानाद् भवति धृतिस्मृतिबुद्धिधर्म्मवृद्धः ॥
यस्य द्वादशसाहस्री हृदि तिष्ठति संहिता।
सोऽर्थज्ञः स विचारज्ञश्चिकित्साकुशलश्च सः ॥
ऊर्द्ध्ववाहुर्विरौत्येवं न स्म कश्चिद् वृणोति मे।
ग्रन्थादर्थं चिकित्साञ्च स किमर्थं न बुध्यते ॥ ३१।३२ ॥

सुगृहीत तच्छस्त्रञ्च रक्षति। तस्मादित्यादि। अस्यैव तन्त्रस्य गुणदोषतस्तत्त्वज्ञानार्थमुत्तरेऽतः सविंशाध्यायशतादुत्तरे चरकस्य प्रतिज्ञातादधिके मया वक्तव्ये त्वेता युक्तयः प्रवक्ष्यन्ते। इति। सुश्रुते चोक्तं प्रयोजनम्। अत्रासां तन्त्रयुक्तीनां किं प्रयोजनमिति? उच्यते, वाक्ययोजनमर्थयोजनञ्च। भवन्ति चात्र श्लोकाः। असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम्। स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तितः। व्यक्ता नोक्तास्च ये ह्यर्था लीना ये चाप्यनिर्म्मलाः। लेशोक्ता ये क्वचित् तन्त्रे तेषाञ्चापि प्रसाधनम्। यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा। प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः ॥ इति ॥ ३० ॥

गङ्गाधरः—अथास्य तन्त्रस्याध्ययनफलमाह—इदमित्यादि। स्पष्टार्थौ द्वौ श्लोकौ। ऊर्द्ध्वेत्यादि। ऊर्द्ध्ववाहुः सन्नेवं विरौति विनदति, मे मम ग्रन्थं कश्चिन्न वृणोति ग्रन्थादस्मादर्थं चिकित्साञ्च किमर्थं न वुध्यते। इति ॥३१।३२

तस्करादिभ्यो रक्षां करोति, तथा सुगृहीतं शास्त्रमातुरस्य रक्षामापादयतीति। तस्मादेता इत्यादिकं श्लोकमुत्तरे तन्त्रे तन्त्रयुक्तिव्याकरणे प्रतिपादितं पठन्ति ॥ ३० ॥

चक्रपाणिः—अग्निवेशतन्त्रस्योत्तरतन्त्रस्यैवानार्षत्वात् तन्त्राध्ययनफलमाह—इदमखिलमित्यादि। विमल इति तन्त्रार्थानविचलितमनाः। प्रयोगनित्य इति नित्यं चिकित्सा कर्त्तव्या। सुखस्य प्रदाता किंवा सुखरूपस्य जीवितस्य प्रदाता सुखजीवितप्रदाता। उपचितधृतिस्मृतिबुद्धिसिद्धिर्यस्य स धर्म्मवृद्धः ॥ ३१ ॥

* धृतिस्मृतिबुद्धिसिद्धिनित्यः इति पाठान्तरम्।

चिकित्सितं वह्निवेश स्वस्थातुरहितं प्रति ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥ ३३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
उत्तरवस्तिसिद्धिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

सिद्धिस्थानं स्वसिद्ध्यर्थं समासेन समापितम् ॥

सिद्धिस्थानस्य श्लोकसंख्याः ८६० ॥

चरकसंहिता समाप्ता ॥

गङ्गाधरः—चिकित्सितमित्यादि । हे वह्निवेश ! स्वस्थातुरहितं प्रति चिकित्सितं यत् खल्विहास्ति तदन्यत्राप्यस्ति, इह यच्चिकित्सितं नास्ति तत् क्वचिदपि नास्ति । इह कायचिकित्साया बाहुल्योक्तितयाऽपरं शालाक्यादिचिकित्साया लेशमात्रं प्रदर्शितम् । तस्मादनुक्तं यत्किञ्चित् क्रियाकल्पं लिखाम्यहम् । तद् यथा सुश्रुते—क्रियाकल्पाध्याये । सर्व्वशास्त्रार्थतत्त्वज्ञस्तपोदृष्टिरुदारधीः । वैश्वामित्रं शशासाथ शिष्यं काशिपतिर्मुनिः । तर्पणं पुटपाकश्च सेकश्चाश्च्योतनाञ्जने । तत्र तत्रोपदिष्टानि तेषां व्यासं निबोध मे । संशुद्धदेहशिरसो जीर्णान्नस्य शुभे दिने । पूर्व्वाह्णे चापराह्णे वा कार्य्यमक्ष्णोश्च तर्पणम् । वातातपरजोहीने वेश्मन्युत्तानशायिनः । आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ । समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोशयोः । पूरयेद् घृतमण्डस्य विलीनस्य सुखोदकैः । आ पक्ष्माग्रात् ततः स्थाप्यं पञ्च तद्वाक्शतानि च । स्वस्थे कफे षट् पित्तेऽष्टौ दश वाते तदुत्तमम् ।

चक्रपाणिः—यस्य द्वादशसाहस्रेत्यादिश्लोकत्रयं केचित् पठन्ति तदप्रस्तुतमिति ॥ ३२ । ३३ ॥

गौडाधिनाथरसवत्यधिकारिपात्र-नारायणस्य तनयः सुनयोऽन्तरङ्गात् ।
भानोरनुप्रथितलोध्रवलीकुलीनः श्रीचक्रपाणिरिह कर्त्तृपदाधिकारी ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां सिद्धिस्थानव्याख्यायां उत्तरवस्तिसिद्धिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

रोगस्थानविशेषेण केचित् काल प्रचक्षते। यथाक्रमोपदिष्टेषु त्रीण्येव पञ्च सप्त च। दश दृष्ट्यामथाष्टौ च वाक्शतानि विभावयेत्। ततश्चापाङ्गतः स्नेह स्रावयित्वाक्षि शोधयेत्। स्विन्नेन यवपिष्टेन स्नेहवीर्य्येरितं ततः। यथास्वं धूमपानेन कफमस्य विशोधयेत्। एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यते परम्। तर्पणे तृप्तिलिङ्गानि नेत्रस्येमानि लक्षयेत्। सुखस्वप्नावबोधत्वं वशद्यं वर्णपाटवम्। निर्वृ त्तिर्व्याधिविध्वंसः क्रियालाघवमेव च। गुर्व्वाविलमतिस्निग्धमस्र कण्डूप दहवत्। ज्ञेयं दोषसमुत्क्लिष्टं नेत्रमत्यर्थतर्पितम्। रूक्षमाविलमस्राढ्यमसह रूपदर्शने। व्याधिवृद्धिश्च तज्ज्ञेयं हीनतर्पितमक्षि च। अनयोर्दोषबाहुल्यात प्रयतेत चिकित्सिते। धूमनस्याञ्जनैः सेकै रूक्षः स्निग्धश्च योगवित्। ताम्यत्यतिविशुष्कञ्च यद्रूक्षं चातिदारुणम्। शीर्णपक्ष्माविलं जिह्म रोगक्लिष्टञ्च यद्भृशम्। तदक्षि तर्पणादेव लभेतोर्ज्जामसंशयम्। दुर्दिनात्युष्णशीतेषु चिन्तायां सम्भ्रमेषु च। अशान्तोपद्रवे चाक्ष्णि तर्पणं न प्रशस्यते। पुटपाकस्तथतेषु नस्यं येषु च गर्हितम्। तर्पणार्हा न ते प्रोक्ताः स्नेहपानाक्षमाश्च ये। ततः प्रशान्तदोषेषु पुटपाकक्षमेषु च। पुटपाकः प्रयोक्तव्यो नेत्रेषु भिषजा भवेत्। स्नेहनो लेखनीयश्च रोपणीयश्च स त्रिधा। हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्यापि च लेखनः। दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत्। स्नेहमांसवसामज्ज-मेदःस्वाद्वौषधः कृतः। स्नेहनः पुटपाकस्तु धार्य्यो द्वे वाक्शते तु सः। जाङ्गलानां यकृन्मांसर्लेखनद्रव्यसम्भृतैः। कृष्णलौहरजस्ताम्र-शङ्खविद्रुमसिन्धुजः। समुद्रफेनकासीस-स्रोतोजदधिमस्तुभिः। लेखनो वाक्शतं तस्य परं धारणमुच्यते। स्तन्यजाङ्गलमध्वाज्य तिक्तद्रव्यविपाचितः। लेखनात् त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः। वितरेत् तर्पणोक्तन्तु धूमं हित्वा तु रोपणम्। स्नेहस्वेदौ द्वयोः कार्य्यौ कार्य्यौ नैव च रोपणे। एकाहं वा द्व्यहं वापि त्र्यहं वाप्यवचारणम्। यन्त्रणस्तु क्रियाकालाद् द्विगुणः काल इष्यते। तेजांस्यनिलमाकाशमादर्श भास्वराणि च। नेक्षेत तर्पिते नेत्रे पुटपाककृते तथा। मिथ्योपचारादनयोर्य्यो व्याधिरुपजायते। अञ्जनाश्च्योतनस्वेदैर्यथास्वं तमुपाचरेत्। प्रसन्नवर्णं विशदं वातातपसहं लघु। सुखस्वप्नावबोधाक्षि-पुटपाकगुणान्वितम्। अतियोगाद् रुजः शोफः पिड़कास्तिमिरोद्गमः। पाकोऽस्र हर्षणश्चापि हीने दोषोद्गमस्तथा। अत ऊर्द्ध्वं प्रवक्ष्यामि पुटपाकप्रसाधनम्। द्वौ विल्वमात्रौ श्लक्ष्णस्य पिण्डौ मांसस्य पेषितौ। द्रव्याणां विल्वमात्रन्तु द्रवाणां कुड़वो मतः। तदैकत्र समालोड्य पत्रैः सुपरिवेष्टितम्। काश्मरीकुमुदैरण्ड-पद्मिनीकदलीभवैः। मृदाव-

लिप्तमङ्गारैः खादिरैरवकूलयेत्। कतकाश्मन्तकैरण्ड पाटलद्रुपवादरैः। सक्षीर-द्रुमकाष्ठैर्वा गोमयैर्वापि युक्तितः। स्विन्नमुद्धृत्य निष्पीड्य रसमादाय तं नृणाम्। तर्पणोक्तेन विधिना यथावदवचारयेत्। कनीनिके निषेच्यः स्यान्नित्य-मुत्तानशायिनः। रक्ते पित्ते च तौ शीतौ कोष्णौ वातकफापहौ। अत्युष्णतीक्ष्णौ सतत दाहपाककरौ स्मृतौ। आप्लुतौ शीतलौ चास्र-स्तम्भरुग्घर्षकारकौ। अतिमात्रौ कषायत्व-सङ्कोचस्फुरणावहौ। हीनप्रमाणौ दोषाणामुत्क्लेशजननौ भृशम्। युक्तौ कृतौ दाहशोफ-रुग्घर्षस्रावनाशनौ। कण्डूनदेहदूषीका-रक्तराजि-विनाशनौ। तस्मात् परिहरन् दोषान् विदध्यात् तौ सुखावहौ। व्यापदश्च यथादोषं नस्यधूमाञ्जनैर्जयेत्। आद्यन्तयोश्चाप्यनयोः स्वेद उष्णाम्बुचैलिकः। तथाहितोऽवसाने च धूमः श्लेष्मसमुच्छितौ। यथादोषोपयुक्तन्तु नातिप्रबल-मोजसा। रागमाश्च्योतनं हन्ति सेकस्तु बलवत्तरम्। तौ त्रिधवोपयुज्येते रोगेषु पुटपाकवत्। लेखने सप्त चाष्टौ वा बिन्दवः स्नेहिके दश। आश्च्योतने प्रयोक्तव्या द्वादशैव तु रोपणे। सेकस्य द्विगुणः कालः पुटपाकात् परो मतः। अथवा कार्य्यनिर्वृत्तेरुपयोगो यथाक्रमम्। पूर्व्वापराह्ने मध्याह्ने रुजाकालेषु चोभयोः। योगायोगान् स्नेहमेके तर्पणोक्तान् प्रचक्षते। रोगान् शिरसि सम्भूताम् हत्वातिप्रबलान् गुणान्। करोति शिरसो वस्तिरुक्ता ये मूर्द्ध-तलिकाः। शुद्धदेहस्य सायाह्ने यथाव्याध्यशितस्य तु। ऋज्वासीनस्य बध्नीयाद् वस्तिकोशं ततो दृढम्। यथाव्याधिशृतस्नेह-पूर्णं संयम्य धारयेत्। तर्पणोक्तदशगुणं यथादोषं विधानवित्। व्यक्तरूपेषु दोषेषु शुद्धकायस्य केवले। नेत्र एव स्थिते दोषे प्राप्तमञ्जनमाचरेत्। लेखनं रोपणञ्चापि प्रसादनमथापि वा। तत्र पञ्च रसान् व्यस्तान् आद्यकरसवर्ज्जितान्। पञ्चधा लेखनं युञ्ज्याद् यथादोषमतन्द्रितः। नेत्रवर्त्मसिराकोश-स्रोतःशृङ्गाटकाश्रितम्। मुखनासाक्षिभिर्दोषमोजसा स्रावयेत् तु तम्। कषायतिक्तकञ्चापि सस्नेहं रोपणं मतम्। तत् स्नेहशैत्याद् वर्ण्यं स्याद् दृष्टेश्च बलवर्द्धनम्। मधुरं स्नेहसम्पन्नमञ्जनन्तु प्रसादनम्। दृष्टिदोषप्रसादार्थं स्नेहनार्थञ्च तद्धितम्। यथादोषं प्रयोज्यानि तानि दोषविशारदैः। अञ्जनानि यथोक्तानि प्राह्णसायाह्नरात्रिषु। गुटिकारस-चूर्णानि त्रिविधान्यञ्जनानि तु। यथापूर्व्वं बलं तेषां श्रेष्ठमाहुर्मनीषिणः। हरेणुमात्रा वर्त्तिः स्याल्लेखनस्य प्रमाणतः। प्रसादनस्य चाध्यर्द्धं द्विगुणा रोपणस्य च। रसाञ्जनस्य मात्रा तु पिष्टवर्त्तिमिता मता। द्वित्रिचतुःशलाका च चूर्णस्याप्यनुपूर्व्वशः। तेषां तुल्यगुणान्येव विदध्याद् भाजनान्यपि। सौवर्णं राजतं

शार्ङ्गं ताम्रं वदूर्य्यकांस्यजम्। आयतानि च योज्यानि शलाकाश्च यथाक्रमम्। वक्त्रयोर्मुकुलाकारा कलायपरिमण्डला। अष्टाङ्गुला तनुर्मध्ये सुकृता साधुनिग्रहा। औडुम्बर्य्यश्मजातापि शारीरी वा हिता भवेत्। वामेनाक्षि विनिर्भुज्य हस्तेन सुसमाहितः। शलाकया दक्षिणेन क्षिपेत् कानीनमञ्जनम्। आपाङ्गं वा यथायोग्यं कुर्य्याच्चापि गतागतम्। वर्त्मोपलेपि वा यत् तदङ्गुल्यैव प्रयोजयेत्। अक्षि नात्यन्तयोरञ्ज्याद् बाधमानोऽपि वा भिषक्। न वा निर्वान्तदोषेऽक्षिण धावनं सम्प्रयोजयेत्। दोषः प्रतिनिवृत्तः सन् हन्याद् दृष्टेर्बलन्तथा। गतदोषमपेतास्रु पश्चाद् यत् सम्यगम्भसा। प्रक्षाल्याक्षि यथादोषं कार्य्यं प्रत्यञ्जनं ततः। श्रमोदावर्त्तरुदित-मद्यक्रोधभयज्वरैः। वेगाघातशिरोदोषश्चार्त्तानां नेष्यतेऽञ्जनमिति॥ ३३॥

गङ्गाधरः—ग्रन्थं समापयति—अग्नीत्यादि॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते। सिद्धिस्थानेऽष्टमेऽप्राप्ते तस्मिन् दृढ़बलेन तु। प्रतिसंस्कृत एवात्र द्वादशाध्याय एव च। स्यादुत्तरवस्तिसिद्धिः समाप्ता तत्र वै पुनः। गङ्गाधरेण वद्येन जल्पकल्पतरौ कृते। सिद्धिस्थानेऽष्टमे स्कन्धे शाखा तु द्वादशी ब्रता। स्यादुत्तरवस्तिसिद्धि-जल्पाख्या सम्प्रपञ्चिता।

इत्युत्तरवस्तिसिद्धि-जल्पाख्या द्वादशी शाखा॥ १२॥

द्वादशाध्यायिकमष्टमं सिद्धिस्थानं समाप्तम्।

अष्टस्थानीचरकसंहितायुर्व्वेदः समाप्तः॥

॥ ओं शिवः ॥

॥ श्रीः ॥